# THE MITĀKSHARA

WITH

## Visvarūpa

and

## Commentaries of Subōdhini and Bālambhatti

EDITED BY

S. S. SETLUR, B.A., LL.B.
Advocate of the High Courts of Bombay and Madras



BRAHMAVADIN PRESS, GEORGETOWN, MADRAS
1912

Dedicated

(with permission)

to

The Hon'ble Sir Lawrence H. Jenkins, Kt., C. I. E.

Chief Justice of Bengal

A man, accomplished and kind,

A friend, affectionate and true,

A judge, fearless and just.

# PREFACE

It is in response to a suggestion made by Sir Lawrence H. Jenkins, soon after he took charge of the High Court of Bombay as Chief Justice, that the members of the Bombay Bar should follow the brilliant example of the Calcutta Bar and contribute their own share to Indian legal literature, that the publication of this work was undertaken. The collation of the manuscript originals had to be done in the midst of professional and other engagements and could be finished only in 1908. Afterwards I was given to understand that the value of the book would be considerably enhanced if both *Subōdhini* and *Bālambhatti*, the two well-known commentaries on the *Mitākshāra*, were included in the publication. But the commentary, *Subōdhini*, does not seem to be available anywhere in so far as it relates to the first and the third books of the *Āchārādhyāya* and the *Prāyschittādhyāya*. Nor is the commentary *Bālambhatti* on these same books available in this part of the country. Consequently, it has been possible to publish these commentaries here only in relation to the second book the *Vyavahārādhyāya*.

Four manuscripts of *Bālambhatti* were at first available. But, before the work of collation could be begun, the one belonging to the High Court of Bombay had to be returned, as it was constantly required for reference by Sir Narayan Chandavarkar, J., whose commendable enthusiasm in the cause of Hindu Law has done so much for the encouragement of its study in the Bombay Presidency. The one from the Dekhan College had also to be returned, as it was wanted by the College authorities. Thus there were only two left with me—one belonging to the Sanskrit College at Benares and the other lent by Mr. Ghanasham Nilkantha Nadkarni, High Court Vakil, Bombay. Then, the kindness of my friend, Mr. Manubhai Nanabhai Haridas, made the manuscript which belonged to his respected father, the late Justice Nanabhai Haridas, available for use in connection with this publication ; and the present edition has been prepared with the help of these three manuscripts and another transcribed in Bombay. For *Subōdhini*, three manuscripts have been used, which are described at length in the Sanskrit preface by its editor Pandit Ganapati Sastriar of Travancore. The discovery of a copy of Visvarupa's commentary on *Vyavahārādhyāya* in the Mysore Oriental Library led to its inclusion herein. As the Mysore manuscript was extremely incorrect, mistakes have crept in which could not be avoided in the absence of other manuscripts. In view of the great juristic value of that commentary, Pandit T. Ganapati Sastriar of Travancore was requested to re-edit it with the help of the manuscripts existing in the Palace Oriental Library

there, of which he is in charge. With his unfailing courtesy, he consented to do so; and that commentary is now in the Press, and will shortly be issued separately with an English translation by Mr. K. S. Ramaswami Sastri, B.A., B.L., the worthy son of the well-known scholar, Professor K. Sundararama Iyer of Kumbakonam, and District Munsiff of Tinnevelly.

News comes from Travancore that the Pandit Editor of the commentary of Visvarūpā has found several copies of this work containing not only the *Vyavahārādhyāya* but also the *Achārādhyāya*. If he should be fortunate enough to procure the *Prāyaschittādhyāya* as well and publish the whole work, he would be conferring a priceless boon on all students of Hindu Law.

The index to this volume was prepared by Mr. V. Ramaswami Iyengar, B.A., B.L., High Court Vakil, to whom my acknowledgments are due, as also to the authorities of the Benares Sanskrit College, to Mr. Ghanasham and Mr. Manubhai for assisting me with their manuscripts, and to Dewan Bahadur P. Rajagopalachariar, the Dewan of Travancore, by whose kind offices the invaluable assistance of the accomplished Pandit T. Ganapati Sastriar was secured. My grateful thanks are in a special degree due to this Pandit and to Mr. S. N. Narharayya of Chennapatna, but for whose indefatigable attention and industry the work would not have so easily seen the light.

Notwithstanding the great care bestowed on proof-reading, mistakes have crept in, owing to the unfamiliarity of Devanagari characters to Madras pressmen. By the kindness of Pandit Ganapathi Sastriar, they have all been carefully noted at the end in the list of errata.

The second volume containing the English translation and notes will soon follow. Its publication has been purposely delayed with a view to revise the translation with the help of this edition of the *Mitākshara*. The time so obtained has been utilised in adding to the translation legal and *Shastraic* notes so as to make the work specially useful to non-Sanskritist lawyers. In an introduction, the principles of Law adopted by the author of the *Mitākshara* will be summarised and explained.

S. S. SETLUR.

HIGH COURT BUILDINGS, MADRAS,
*25th February*, 1912.

॥ ॐ ॥

## ॥ श्रीवेङ्कटेशाय नमः ॥

---

भूमण्डलमण्डनायमानान् भारतवर्षीयान् धर्मप्रधानान् आर्यानार्यी-कृतांश्च चातुर्वर्ण्यक्रमेण संविभज्य, तेषाम् ऐहिकामुष्मिकसंपादनाय तत्रभवान् परमकारुणिको योगिजनाग्रगण्यः भगवान् याज्ञवल्क्यः सामश्रवादि मुनि-बृन्दकृतप्रश्नजातस्योत्तररूपेण वर्णाश्रमधर्मान् विस्तरेणोपादिक्षत्। स चोपदिष्टार्थः श्लोकबद्धः अध्यायत्रयात्मकः याज्ञवल्क्यस्मृतिनाम्ना विख्यातिमगमत् । सा च स्मृतिः विश्वरूपाचार्याद्यनेकपण्डितवर्यैर्व्याख्यायि। तद्व्याख्यातॄणां संप्रदायानुसारेण सकलशास्त्रपारदृश्वा श्रीमान्विज्ञानेश्वराभिख्यो यतीन्द्रो मिताक्षराख्यां व्याख्यामता-नीत्। सा च सुललितपदबद्धा विपुलार्थवती मीमांसादिन्यायगर्भिता पण्डितैर्धर्मजि-ज्ञासुभिः प्रमाणतया सततमङ्गीकृता। व्यवहारविषये च इमामेवव्याख्यां प्रमाणान्तरा पेक्षया मुख्यत्वेन अद्यतनराजकीयाऽङ्गलन्यायाधिपाः सम्मान्य तदनुसारेणैव व्यवहारान् निर्णयन्ति । तस्माद् व्यवहर्तॄणां प्राड्विवाकानां अन्यवादिनाञ्च धर्मशास्त्रनिबन्धेषु मुख्यप्रमाणतया प्रवृत्तामिमां मिताक्षरां तेषामुपयोगाय अने-कदेशानीतादर्शसाहाय्येन संस्कृत्य सम्मुद्र्य तेभ्यस्सविनयं समर्पयामः ॥

मिताक्षराकारः ग्रन्थारम्भे "विश्वरूपविकटोक्तिविस्तृत" मिति विश्व-रूपाचार्यकृतव्याख्यानमुल्लेखयामास । तच्च अधुना न कुत्राऽपि मुद्रितम् । तस्य मातृकां महीशूरपुरस्थ (Mysore) संस्कृतकोशालयात् समासाद्य तामनुसृत्य मि-ताक्षरया साकं तदत्र मुद्रितम् । तस्या अशुद्धप्रायत्वात् अस्मिन्नप्यङ्कनेबहून्यशुद्धा-निदृश्यन्ते । तस्माद् अनन्तशयनस्थसंस्कृतग्रन्थप्रकाशनकार्याध्यक्षाः त. गणपति-शास्त्रिणः पण्डितवर्याः तत्रत्यपुस्तकालयोपलभ्यमानादर्शसाहाय्येन संशोध्येदं संस्क र्तव्यमित्यस्माभिः प्रार्थिताः कृपया ते तथा कर्तुमङ्गीचक्रुः।अविलम्बितमेव तत्संस्का रविशुद्धं विश्वरूपाचार्यकृतं बालक्रीडाख्यं व्यवहाराध्यायव्याख्यानं पृथङ्मुद्रयामः ।

अपि च—व्यवहारनिर्णयप्रवृत्ताना व्यवहाराध्यायो मुख्य इत्याकलय्य तस्याध्यायस्य सुबोधिनीबालम्भट्टीनामके मिताक्षरायाः प्रसिद्धव्याख्याने द्वेऽपि मुद्रिते । ते च मिताक्षरार्थविमर्शने उपयुञ्जीयातामित्याशास्महे ।

मिताक्षरासंशोधनाय अष्टावादर्शाः नानादेशेभ्यः सपादिता. । तच कादि ञान्ताक्षारावलिना चिह्निता·

नासिकाक्षेत्रस्थवैय्याकरणाना " गर्गे " वंशीयाना हरिशास्त्रिणा सकाशाल्लब्ध. समग्र बहुशः शुद्ध प्रथम . . . 'क'

*** अस्मिन्ग्रन्थाय कदावाकेनवालिखित इति निश्चेतु किञ्चदपि दिग्दर्शनन्नो पलभ्यते—किन्तु "डीकरोपनामक. जयरामभट्टस्येदम्पुस्तक"मिति तदुपरिलिखितम् दृश्यते

मुम्बापुरस्थे निर्णयसागराख्ये प्रसिद्धे मुद्रालये मुद्रितो द्वितीयः । . 'ख'

असपुटितपत्ररूपः परिशुद्धतमः सपूर्णः तृतीयः . . 'ग'

*** अस्मिन्नादर्शे इदञ्चोपलभ्यते—"श्रीशके १७०४ शुभकृन्नामसवत्सरे ईषे शुक्लदशम्या श्रीमन्नारायणाधिष्ठितवालवलिक्षेत्रे तत्पौराणिकेन चिक्कणत्यपराभिधानेन अनन्तशर्मणा लिखितमिद पुस्तकम् स्थविरेश्रीलक्ष्मीनारायणप्रीतये भूयात् । श्री आर्यादुर्गाकुलदैवतन्नः प्रियाद् " इति ॥ अनेन अयमादर्श. क्रिस्ताब्दे १७८२ तमे अनन्तशर्मणा दाक्षिणदेशवासिना लिखित इति प्रतीयते। वालवालिक्षेत्र च क्वास्तीत्यस्माभिर्न ज्ञायते ।

मुम्बापुरस्थविश्वविद्यालयादुपात्तः कालिघट्टनगरे क्रैस्तीय १९ शतमानस्यादिभागे मुद्रितः शुद्धप्राय. सपूर्णश्चतुर्थ. 'घ.'

उत्तरदेशलिपिनालिखितः व्यवहाराध्याय अशुद्धप्रायः पञ्चमः . . 'ङ.'

*** अस्य लेखनकालनिर्णयस्य कोऽपिमार्गो न दृश्यते

असमग्रः काशीप्रान्त्याक्षरैर्लिखितः षष्ठः . . . 'च.'

** अस्यलेखनसमयपरिज्ञानायकोऽप्यवकाशोनास्ति ॥

वङ्गदेशीयसंस्कृताक्षरैर्लिखितः असमग्रः (प्रायश्चित्ताध्यायः) सप्तमः 'छ'.

अष्टमश्च असंपुटितपत्त्रात्मकः . . . . . 'ज'

** अस्मिन्नादर्शे एवमुपलभ्यते—"संवत्. १८४६. समै [सौम्य(?)] नाम [सवन्सरे (?)] चैत्रवदि अष्टमीशनिवासरे लिखितं काश्यां मध्ये (?) समाप्तम्". अनेन अयमादर्शो वाराणस्यां क्रैस्ताब्दे १७८९. तमे लिखित इति स्पष्टीयते.

सुबोधिनीव्याख्यापरिशोधनञ्च अनन्तशयनसंस्थानमन्त्रिवर्यश्रीमद्राज-गोपालाचार्यप्रेरितैः तदास्थानपण्डितैर्गणपतिशास्त्रिभिः प्राचीनग्रन्थसमुद्धरणबद्धदीक्षैः कृतम् । तत्कार्योपयुक्तादर्शवर्णनं तैरेव प्रपञ्चितम् । तच्च सुबोधिन्युपोद्धाते द्रष्टव्यम् ॥

बालम्भट्टीव्याख्या च, प. फ. ब. भ. संज्ञाचिह्नितेन आदर्शचतुष्टयसाहाय्येन, श्रीरङ्गवासिभिः अस्मदाचार्यैः गूर्जरदेशस्थ वर्तालनगरवर्त्तिस्वामिनारायणसंस्कृतपाठशालाध्यक्षैः पण्डितवरैः संशोधिता । तेष्वादर्शेषु प्रथमः राव्‌बहदूर् घनश्यामनीलकण्ठनादकर्णीनामकमुम्बापुरस्थप्रासिद्धान्यवादिभि र्दत्तः । द्वितीयः मुम्बापुरन्यायाधीशानां स्वर्गतानां नानाभायि हरिदास नामकानां पुत्रैः मनूभायि नानाभायि नामकान्यवादिभिः प्रदत्तः । तृतीयश्च वाराणसी-राजकयिसंस्कृतपाठशालाध्यक्षसकाशादुपलब्धः । चतुर्थः मुम्बानगरे लिखितः ॥ एते चत्वारो ऽप्यशुद्धप्रायाः ॥ तथापि सा व्याख्या श्रीकृष्णमाचार्यैः समीचनतया परस्परसहायेनपरिशोधिता ॥

मिताक्षरासंशोधनञ्च महीशूरराजकीयास्थानपण्डितानां काशी वेङ्कटाचलशास्त्रिणां तथा निर्णयसागरप्रसिद्धमुद्रालयस्थानां मीमांसाशास्त्रपण्डितानां गोरेनामकाणां साहाय्येनाकारि ।

महीशूरदेशस्थचेन्नपत्तनवासिश्रीनरहरिशास्त्रिणः रात्रिन्दिवमनवरतपरिश्रमंयदिनाकरिष्यद् अस्य मुद्रणस्य परिसमाप्तिर्नाभविष्यत् । तस्मात्तान् तथैवात्यंतोपकारकान् त. गणपतिशास्त्रिवर्यानन्यांश्चोपकर्तॄन् कृतज्ञतापूर्वकं वन्दामहे ।

बेङ्गळूरु, }
१-१२-१९११. }

चेट्लूर् श्रीनिवासशर्मा.

॥ श्रीरस्तु ॥

॥ श्रीः ॥

॥ मिताक्षराव्याख्या ॥

# ॥ सुबोधिनी ॥

श्रीभट्टविश्वेश्वरविरचिताया विज्ञानेश्वरकृतमिताक्षराव्याख्यायाः सुबोधिन्या आदर्शेषु त्रिषु—

प्रथमोऽसम्पुटितपत्रात्मको वयस्वी शुद्धप्रायः त. संज्ञः ।

द्वितीयः (Ghanasham Nilakantha Nadakarani) एतत्सम्बन्धी

अशुद्धप्रायः थ. संज्ञः ।

तृतीयो मैसूर्-राजकीयग्रन्थशालाधिगत आरम्भे किञ्चिदूनोऽशुद्धप्रायः

थ. संपुटानुसारी द. संज्ञः ।

तत्र त. पुस्तकापेक्षया थ. द. पुस्तकयोः पाठभेदा बहवः । त. पुस्तके मुख्याधारे सति थ. द. पुस्तकसकाशात् परम उपकारः सुबोधिनीसंशोधनकर्मण्यधिगन्तु पारित आसीत् । अदृष्टा हि त. पुस्तकेऽनेके हृद्याः पाठभेदाः थ. द. पुस्तकयोरुपलब्धाः । त. पुस्तकेऽपेक्षितानां ग्रन्थांशानां हानिरपि तत्र तत्र दृष्टा थ. द. पुस्तकाभ्यां प्रत्युद्धृतासीत् ।

एभ्यस्त्रिभ्य आदर्शेभ्यः समीचीनाः पाठाः प्रायेण ग्रन्थशरीरे योजिताः । पाठान्तराणि तु प्रतिपृष्ठमधस्तान्निवेशितानि । पाठान्तराणामधस्तात् टिप्पणिका अपि लेशतो निवेशिताः ।

इय सुबोधिनी अतिप्रौढबन्धा गम्भीरगाहिनी मिताक्षराया अपरिमेय गाम्भीर्यदुरवगाहायाः सर्वथानुरूपा व्याख्या ।

एतत्कर्त्ता श्रीभट्टविश्वेश्वरो याज्ञवल्क्यस्मृतिव्याख्याया बालक्रीडायाः कर्तारं "विश्वरूपविकटोक्तिविस्तृतम्" इति मिताक्षराग्रन्थशेषे स्मृतं श्रीविश्वरूपाचार्यम् एकद्विस्थलेषु मिताक्षरास्थितस्याचार्यपदस्यार्थतया नामतो निर्दिशति; नतु तदुक्तिं

क्वचिदपि शब्दतोऽर्थतो वानुवदति । अयं यस्यार्थस्य वक्तृतया मिताक्षरा स्मृतमाचार्यं श्रीविश्वरूपाचार्यं मन्यते, नासावर्थो विश्वरूपकृतौ बालक्रीडाया-मुपलभ्यते । तथाहि—अशीति (८०) तमश्लोकस्थस्य "तदप्याचार्यो नानु-मन्यते" इति मिताक्षरांशस्य व्याख्यायां (Page 50^) "तदप्याचार्य इति । आचार्यो विश्वरूपाचार्य" इति सुबोधिन्यां दृश्यते । विश्वरूपाचार्यबालक्रीडायां तु "अथ मतम्" इत्यादिमिताक्षरोक्तिसमानाभिप्रायो न कश्चिद् व्याख्या-नप्रकारः शङ्कित उपलभ्यते, दूषितो वा । तेन मन्ये—श्रीभट्टविश्वेश्वरो विश्वरूप-व्याख्यानमेव नावलोकितवान्, केवलमनुमानेनैवाचार्यपदस्य विश्वरूपाचार्य इत्यर्थं वर्णितवान् । अत एवाचार्यपदेन विश्वरूपाचार्यग्रहणे लिङ्गत्वेन मिताक्षराया विश्वरूपकृतविस्तृतिसङ्ग्रहरूपत्वं मिताक्षराग्रन्थादौकथितं प्रमाणयतिस्म । यद्ययं स्वयमद्रक्ष्यद् विश्वरूपचार्यग्रन्थं, प्रकृतविषयस्य तत्राप्रतिपादनात् "आचार्यो विश्वरूपाचार्य" इति नैवावक्ष्यत्; तदासादितविश्वरूपव्याख्यानप्रतिपादिते वा प्रकृतविषये सति तदुक्तिप्रकारं लेशतोऽप्यचिन्तयिष्यत् । अपि चायं मनाक्प्रस क्तिमवलम्ब्य ग्रन्थान्तरीयान् विषयान् निपुणं बिचारयति तत्र तत्र । सोऽयं मिताक्ष-राकारमाननीयस्य श्रीविश्वरूपाचार्यस्योक्तिमभिप्रायं वा ग्रन्थेऽस्मिन् क्वचिदपि नानूदितवानिति चित्रीयितव्यमेव भवेद्, यदि विश्वरूपाचार्यग्रन्थस्यैष द्रष्टा स्यात्। आचार्यपदार्थस्तु श्रीकराचार्यः स्यात्; श्रीयाज्ञवल्क्ययोगीश्वर एव वा प्रकृते आचार्यपदेन परामृष्टः स्याद् , यतस्तद्वचनांश एव 'उक्तेऽपि साक्षिभिः' इत्येवंरूप शङ्कितार्थखण्डनहेतुतया मिताक्षरायामुपात्तः—इत्यादि विमर्शनीयं विद्वाद्भिः ॥

अनन्तशयनम्<br>२०-१०-११.

त. गणपतिशास्त्री.



॥ श्री ॥

# ॥ मिताक्षराविषयानुक्रमणिका ॥

## ॥ आचाराध्यायस्य ॥


| | | | |
|---|---|---|---|
| १. | उपोद्घातप्रकरणम् | .... .... | १—१०. |
| २. | ब्रह्मचारिप्रकरणम् | .... .... | ११—२८. |
| ३. | विवाहप्रकरणम् | .... .... | २९—६३. |
| ४. | वर्णजातिविवेकप्रकरणम् | .... .... | ६४—७०. |
| ५. | गृहस्थधर्मप्रकरणम् | .... .... | ७१—९१. |
| ६. | स्नातकप्रकरणम् | .... .... | ९२—१११. |
| ७. | भक्ष्याभक्ष्यप्रकरणम् | .... .... | ११२—१२०. |
| ८. | द्रव्यशुद्धिप्रकरणम् | .... .... | १२१—१३४. |
| ९. | दानप्रकरणम् | .... .... | १३५—१४२. |
| १०. | श्राद्धप्रकरणम् | .... .... | १४३—१७९. |
| ११. | गणपतिकल्पप्रकरणम् | .... .... | १८०—१८८. |
| १२. | ग्रहशान्तिप्रकरणम् | .... .... | १८९—१९४ |
| १३. | राजधर्मप्रकरणम् | .... .... | १९५—२२४ |


## ॥ व्यवहाराध्यायस्य ॥


| | | | |
|---|---|---|---|
| १. | साधारणव्यवहारमातृकाप्रकरणम्। | .... | २२५—२६८. |
| २. | असाधारणव्यवहारमातृकाप्रकरणम्। | .... | २६९—३७४. |
| ३. | ऋणादानप्रकरणम्। | .... .... | ३७५—४६१. |
| ४. | निक्षेपप्रकरणम् | .... .... | ४६२—४६६. |
| ५. | साक्षिप्रकरणम् | .... .... | ४६७—५१४. |
| ६. | लेख्यप्रकरणम् | .... .... | ५१५—५२१. |
| ७. | दिव्यप्रकरणम् | .... .... | ५२२—५८८. |
| ८. | दायविभागप्रकरणम् | .... .... | ५८९—८७२. |

| | | |
|---|---|---|
| ९. | सीमाविवादप्रकरणम् .... .... | ८७३—८९४. |
| १०. | स्वामिपालविवादप्रकरणम् .... .... | ८९५—९०७. |
| ११. | अस्वामिविक्रयप्रकरणम् .... .... | ९०८—९१६. |
| १२. | दत्ताप्रदानिकप्रकरणम् .... .... | ९१७—९२५. |
| १३. | क्रीतानुशयप्रकरणम् .... .... | ९२६—९३२. |
| १४. | अभ्युपेत्याशुश्रूषाप्रकरणम् .... .... | ९३३—९४२. |
| १५. | संविद्व्यतिक्रमप्रकरणम् .... .... | ९४३—९५१. |
| १६. | वेतनादानप्रकरणम् .... .... | ९५२—९६०. |
| १७. | द्यूतसमाह्वयप्रकरणम् .... .... | ९६१—९६८. |
| १८. | वाक्पारुष्यप्रकरणम् .... .... | ९६९—९८६. |
| १९. | दण्डपारुष्यप्रकरणम् .... .... | ९८७–१०१०. |
| २०. | साहसप्रकरणम् .... .... | १०११–१०१९. |
| २१. | साहसे प्रासङ्गिकप्रकरणम् .... .... | १०१९–१०३३. |
| २२ | विक्रीयासम्प्रदानप्रकरणम् .... .... | १०३४–१०४३. |
| २३. | सम्भूयसमुत्थानप्रकरणम् .... .... | १०४४–१०५८. |
| २४. | स्तेयप्रकरणम् .... .... | १०५९–१०८६. |
| २५. | स्त्रीसङ्ग्रहणप्रकरणम् .... .... | १०८७-१११५. |
| २६. | प्रकीर्णकप्रकरणम् .... .... | १११६–११३६. |


---

॥ प्रायश्चित्ताध्यायस्य ॥

---


| | | |
|---|---|---|
| १. | आशौचप्रकरणम् .... .... | ११३७–११८२. |
| २. | आपद्धर्मप्रकरणम् .... .... | ११८३–११८८. |
| ३. | वानप्रस्थधर्मप्रकरणम् .... .... | ११८९–११९५. |
| ४. | यतिधर्मप्रकरणम् .... .... | ११९६–१२४२. |
| ५. | प्रायश्चित्तप्रकरणम् .... .... | १२४३–१४१२. |
| ६. | ग्रन्थाध्ययने फलश्रुतिः .... .... | १४१३–१४१५. |

॥ श्रीः ॥

याज्ञवल्क्यस्मृतेर्मिताक्षरायाश्च

# उपोद्घातः.

---

इमा याज्ञवल्क्यस्मृतिं मिताक्षरां चाधिकृत्य मुम्बयीनिर्णयसागरयन्त्रालयमुद्रितस्य समिताक्षरैतत्स्मृतिपुस्तकस्योपोद्घाते तत्प्रथमावृत्तिसंशोधकैः मोघे इत्युपाह्वबापूशास्त्रिभिर्युक्तिमान् संक्षिप्तश्च विचारः कृतः । किन्तु तत्रैतावदधिकं योजनीयं पश्यामः तद्यथा—

कौटिलीयस्यार्थशास्त्रस्य धर्मस्थीयदायविभागे पुत्रविभागाध्याये प्रतिलोमजपुत्रप्रस्तावे (६४. तमाध्याये) 'क्षत्रियात् सूत' इति वाक्यं क्षत्रियाद् ब्राह्मण्यामुत्पन्नः सूत इत्यर्थकमुक्त्वाभिहितम्—

"पौराणिकस्त्वन्यः सूतो मागधश्च ब्रह्मक्षत्राद् विशेषतः" इति । अत्र पुराणप्रवक्ता रोमहर्षणापरनामा यः सूतः, स उक्तात् प्रतिलोमजातिसूताद् भिन्न इति प्रतिपाद्यते । तच्चैतत् तथ्यम् ; यतः,

"ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति ।
पृषदाज्यात् समुत्पन्नः सूतः पौराणिको द्विजः ॥
वक्ता वेदादिशास्त्राणां त्रिकालामलतत्त्ववित् ।
तीर्थयात्राप्रसङ्गेन नैमिशारण्यमागमत् ॥"

इत्यग्निपुराणप्रथमाध्याये,

"सवान्ते सूतमनघं नैमिशीया महर्षयः ।
पुराणसंहितां पुण्यां पप्रच्छुर्लोमहर्षणम् ॥
त्वया सूत ! महाबुद्धे ! भगवान् ब्रह्मवित्तमः ।
इतिहासपुराणार्थे व्यासः सम्यगुपासितः ॥
तस्य ते सर्वरोमाणि वचसा हृषितानि यत् ।
द्वैपायनस्य भगवंस्ततो वै रोमहर्षणः ॥
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ॥
मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा ॥
त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति ।
सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥"

इति कौर्मपुराणप्रथमाध्याये च व्यासशिष्यपौराणिकसूतस्योत्पत्तिः प्रतिलोमसूतविलक्षणैव वर्ण्यते ; तथा तस्य द्विजत्वं विष्णवंशसंभूतत्वं च कथ्यते । तेन कौटिल्यश्चाणक्यापरनामा पुराणानि, तत्प्रवक्तृसूतोत्पत्तिकथां, पुराणतत्प्रवक्त्रोः प्रामाण्यप्रसिद्धिं च जानातीत्यवगन्तुं शक्यम् । तथाभूतश्चासौ सूतादतिदूरविप्रकृष्टावरकालजन्मैव भवितुं युक्तः ; अन्यथा सूतप्रोक्तेषु ग्रन्थेषु पुरातनत्वार्षत्वनिश्चयनिबन्धनः पुराणत्वसम्प्रत्यय एव तस्य नोदैष्यत् । एवञ्च यथा सूतश्चाणक्यादतिप्राचीनः, तथा सूतसतीर्थ्ययजुर्वेदाचार्यवैशम्पायनशिष्यतया सूतसमकालिको भवितुमर्हन् प्रकृतस्मृतिकर्ता याज्ञवल्क्ययोगीश्वरो ( याज्ञवल्क्यशिष्य एव वा ) चाणक्यादतिप्राचीन इत्यसन्दिग्धमेव । अत एव कौटिल्यः कतिपयसाह दण्डविधानपराणां केषाञ्चिद् याज्ञवल्क्यस्मृतिद्वितीयाध्यायगतानां श्लोकानां छायामर्थतः शब्दतो व्याख्यानतोऽधिकार्थपूरणतश्च स्ववाक्यैरनुविदधान आत्मनो याज्ञवल्क्यस्मृतावस्यां भक्तिबहुमानपूर्तं परिचयमाविष्करोति । तेषु कानिचिदधस्तादुदाहरामः । तत्रैष एकः स्मृतिश्लोकः—

"करपाददतो भङ्गे छेदने कर्णनासयोः ।

मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥" इति, (याज्ञ० अ. २-श्लो. २१९ पु. ९९९.) इदं तत्प्रतिच्छन्दप्रायं कौटिलीयवाक्यं—

"मृतकल्पमशोणितं घ्नतो हस्तपाद ( पाराञ्चिकं ? ) वा कुर्वतः पूर्वः साहसदण्डः । पाणिपाददन्तभङ्गे कर्णनासाच्छेदने ( प्राण ? ) विदारणे चान्यत्र दुष्टव्रणेभ्यः । "

इति । (कौटि. धर्म. अध्या १९.)

एतेऽपरे स्मृतिश्लोकाः—

"स्वच्छन्दं विधवागामी विक्रुष्टेनाभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥ २३४ ॥
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २३५ ॥
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २३६ ॥
पितापुत्रस्वसृभ्रातृ दम्पत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २३७ ॥" इति (याज्ञ अ २ पु. १०१७.) इमान्येतदनुविधायीनि कौटिलीयवाक्यानि—

"विधवां छन्दवासिनीं प्रसह्याधिचरतः, चण्डालस्या(र्या ?) र्यान् स्पृशतः, प्रत्यासन्नमापद्यनभिधावतो, निष्कारणमभिधावनं कुर्वतः शत्याः (दण्डाः)

जीवकादीन् वृषलप्रव्राजितान् देवपितृकार्येषु भोजयतः शत्यो दण्डः ।

शपथवाक्यानुयोगमनिसृष्टं कुर्वतो, युक्तकर्मणि चायुक्तस्य, क्षुद्रपशुवृषाणां पुंस्त्वोपघातिनो, दास्या गर्भमौषधेन पातयतश्च पूर्वः साहसदण्डः ।

पितापुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुलभागिनेययोः शिष्याचार्ययोर्वा परस्परमपतितं त्यजतः स्वार्थाभिप्रयातं ग्राममध्ये वा त्यजतः पूर्वः साहसदण्डः, कान्तारे मध्यमः ।" इति

(कौटि. धर्मस्थीय. अध्या. २०.)

एष स्मृतिश्लोकोऽन्यः—

"अबध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ इति

(याज्ञ अध्या. २ श्लो. २४३. पु. १०१५.)

इदं चैतदनुगामि कौटिलीयवाक्यम्—

"पुरुषमबन्धनीयं बध्नतो बन्धयतो बद्धं वा मोक्षयतो
बालमप्राप्तव्यवहारं बध्नतो बन्धयतो वा सहस्रदण्डाः ।"

(कौटि. धर्म. अध्या. २०)

सर्वेष्वेषु कौटिलीयवाक्येषु, अधोरेखितपदार्थाः परमधिकाः, अन्येतु याज्ञवल्क्यस्मृत्युक्ता एवेति स्पष्टम् । तत्र हि "स्वच्छन्दं विधवागामी" इति स्मृतिवाक्ये स्वच्छन्दमिति क्रियाविशेषणम्; स्वेच्छया, न तु विधवेच्छयापीत्यर्थः । कौटिलीये च्छन्दवासिनीमिति छन्देन स्वेच्छया वसन्तीं तूष्णीं स्थितामकामयमानामिति यावत् ।

"अयुक्तं शपथं कुर्वन्" इत्येतदेव व्याचष्टे कौटिल्यः—"शपथवाक्यानुयोगमनिसृष्टं कुर्वत" इति ; न पुनरन्यदेतदिति शङ्कनीयम् । तद्यथा—आधिकरणिकाः साक्ष्याद्यनुयोगं व्यवहारनिर्णयार्थं शपथवाचनपूर्वं यमनुतिष्ठन्ति, सोऽयं शपथवाक्यानुयोगः । स आधिकरणिकानां निसृष्टो, 'भवत्स्वयमायत्त' इति व्यवहारनिर्णयस्य तेभ्यो राज्ञार्पितत्वात् । निसृष्टश्च तेषां युक्तो भवति स्वाधिकारविषय इति कृत्वा, अनुष्ठानोचित इति कृत्वा वा । अन्येषां तु सोऽनिसृष्टोऽयुक्तः, अधिकाराविषयत्वादनुष्ठानानर्हत्वाद्वा । एवञ्च निसृष्टः, युक्तः, स्वाधिकारविषयः, अनुष्ठानार्ह इत्येकार्थगोचरा भवन्ति। अनिसृष्टः, अयुक्तः, स्वाधिकाराविषयः,' अनुष्ठानानर्ह इति च वैपरीत्येन तथा । स एषोऽयुक्तः शपथवाक्यानुयोगः स्मृतौ शपथशब्देन विवक्षित इति कौटिल्याभिप्रायः। मिताक्षरायां तु व्याख्यान्तरं सम्भवमात्रेण वर्णितं द्रष्टव्यम् ।

तथा "अयोग्यो योग्यकर्मकृत्" "युक्तकर्मणि चायुक्तस्य" इत्यपि वाक्ये एकार्थे एव । योगो हि नियोगोऽधिकारः, तद्वति युक्तशब्दो वर्तते, तदर्हे च योग्यशब्द इति युक्तयोग्यशब्दाभ्यामाश्रयत्वार्हत्वलक्षणरूपभेदेऽपि वस्तुतो योगाश्रयस्यैव प्रतिपादनात् ।

यस्तु "प्राणविदारणे चान्यत्र दुष्टव्रणेभ्यः" इत्युदाहृतकौटिलीयप्रथमवाक्यशेषे पाठः, यस्यैतस्य कञ्चिदर्थमात्महृद्यमुत्प्रेक्ष्य परितुष्यन् महीशूरपुरसंस्कृतग्रन्थावलयन्त

गतकौटिलीयार्थशास्त्रसंशोधकस्तदुपोद्घाते व्रणोच्छेदस्यानपराधतां स्मृतिमतविरुद्धां सर्वलोकस्वभावविरुद्धामेव वा सतीं कौटिलीयतद्वाक्यलभ्यामाह, स्मृतिकारेष्वपि साहसी स्वप्रतिभातार्थाभासविस्रम्भाद् यथावदर्थानभिज्ञतामारोपयति, सोऽयमर्थाप्रतिपत्तिकारी आदर्शग्रन्थलेखकप्रमादकृतोऽपपाठएव। तत्र 'प्रा' इत्यस्यादिमवर्णस्यस्थाने 'व्र' वर्णश्चेत् पठ्येत, तदा समञ्जसः सम्यगर्थप्रतिपत्तिकारी स पाठो भवति, तेन च स्मृत्युक्त एवार्थोऽतिप्रसङ्गपरिहारेण स्थापितो भवति, स्मृत्युक्तव्रणोच्छेदं व्रणविदारणशब्देन गृहीत्वा तत्र दण्डस्य विधानाद् भिषग्भिश्चिकित्सार्थं क्रियमाणे दुष्टव्रणानामावश्यके विदारणेऽपि दण्डः प्रसज्यत इति तस्य दुष्टव्रणातिरिक्तव्रणविदारणविषयत्वस्थापनाच्चेत्यलं प्रसक्तानुप्रसक्तदूरचिन्तया।

तदित्थं सिद्धमेतत्—क्रैस्ताब्दारम्भात् प्राक् तृतीये वर्षशतके यद्वा चाणक्यकाले धर्मशास्त्रसाधारणं प्रामाण्यमस्या याज्ञवल्क्यस्मृते स्थितमिति।

मिताक्षराप्रणेता श्रीपरमहंसविज्ञानेश्वरभट्टारकस्तु श्रीविश्वरूपाचार्यमनुगच्छति; तत्प्रणीतायां हि प्रौढगूढार्थग्रन्थिबहुलायां बालक्रीडायां येऽर्था उपन्यस्ताः, ते मिताक्षरायां सुगमैर्वाक्यैः प्राय आतत्य प्रतिपादिताः। अत एव मिताक्षराया आरम्भे चिकीर्षितप्रतिज्ञा—

"याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम्।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये विविच्यते॥" इति।

अस्य स्थितिसमयचिन्तायां—

"नासीदस्ति भविष्यति क्षितितले कल्याणकल्पंपुरं-
नोदृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः।
विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपमा-
माकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत् त्रयम्॥
आसेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजा-
दाच प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात्।
आच प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः॥"

इति मिताक्षराशेषस्थश्लोकाभ्यां विक्रमादित्यसमकालिकतावगम्यते। परन्त्वयं विक्रमादित्यः, स न भवति, तदर्वाचीनस्य धारेश्वरस्य *मिताक्षराया प्रमाणीकरणात्; एष हि धारेश्वरोऽग्निकुलयपरमारभूमिपालवंश्यो व्याकरणसरस्वतीकण्ठाभरणादिग्रन्थप्रणेता शिष्टपरिगृहीतप्रामाण्यो यो भोजः, स एव सम्भाव्यते, तस्य बहुतन्त्रवेदिनो धर्मशास्त्रेऽपि ग्रन्थकर्तृत्वसम्भावनात्, भोजनामानश्च त्रयः †प्रसिद्धाः—एकः ५७५ तमे

* याज्ञवल्क्यस्मृति प्रायश्चित्ताध्यायचतुर्विंश्शातितमश्लोकस्य "अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्।" इत्यस्य मिताक्षरा ११६८. तम पुटान्ते दृश्यताम्।

† See Tod's Rajasthan.

क्रैस्ताब्दे स्थितः, द्वितीयः ६६५ तमे, तृतीयः १०४४ तम इति ; तेषु चास्मत्सम्भावितो भोजः ७५१ तमक्रैस्ताब्दस्थितेन *राजतरङ्गिण्यां वर्णितस्य जयापीडभूपतेर्व्याकरणगुरुणा क्षीरस्वामिनामरकोशटीकादिषु प्रमाणतयोदाहृतत्वात् तदपेक्षया प्राचीनो भवन् द्वितीयभोजो भवेत्, योग्यतरकालान्तरिततया प्रथमभोज एव वा भवेत्। अनया दिशा विज्ञानेश्वरो धारेश्वरप्रथमभोजादर्वाचीन इति वक्तुं पार्यते। विज्ञानेश्वरसङ्कीर्तितस्तु विक्रमादित्यो विक्रमादित्यान्तरं स्यात्। त्रीन् खलुचालुक्यवंश्यान् विक्रमादित्यान् वर्णयन्ति पुरावृत्तविमर्शकाः—क्रैस्ताब्दीयस्य षष्ठशतकस्यान्ते विक्रमादित्य एकः, एकादशस्यादौ द्वितीयः, तस्यान्ते तृतीय इति। एषु विज्ञानेश्वरसङ्कीर्तितः प्रथमो यदि भवेत्, प्रथमभोजस्यापि तत्समकालिकस्य सतो मिताक्षरायां प्रमाणीकरणानुपपत्तिः। अतस्तृतीयभोजसमकालिको द्वितीयविक्रमादित्यः, तदर्वाचीनस्तृतीयविक्रमादित्यो वा विज्ञानेश्वरोपजीव्य आसीदिति वक्तव्यम्। तथाच विज्ञानेश्वरः क्रैस्ताब्दीयस्यैकादशशतकस्यादिमेऽन्तिमे वा भागे स्थित इति फलति॥

एतेन, यत् किशोरिलालसर्कारेण स्वप्रणीते धर्मशास्त्रसञ्चारितमीमांसान्यायप्रवचनग्रन्थे (Tagore Law Lectures 1905) कथितं—बौद्धराजादरवशाद् मिताक्षरासनाथा याज्ञवल्क्यस्मृतिः कृत्स्नेऽपि भारते मुख्यप्रमाणतां प्रतिपन्नेति, तत् परास्तम्—एकादशे क्रैस्ताब्दशतके तदुत्तरकाले वा बौद्धराजमहाप्रभावस्य कृत्स्नभारतनियमनक्षमस्याभावेन तदादरणरूपस्य हेतोः सम्भावयितुमशक्यत्वात्, वैदिकमतस्यैव तदानीं सर्वतः साम्राज्यात्, श्रीशङ्करभगवत्पादैर्वैदिकमतं सकलविमतवादिविजयेन द्रढयद्भिः सप्तमशतक एव बौद्धमतस्य निराकृतत्वात्, ततस्त्रिचतुरेषु शतकेष्वतीतेषु वैदिकमतमुपासनापद्धत्या समुपोद्बलयद्भिः श्रीरामानुजाचार्यैर्बौद्धमतस्य भारते नामावशेषतानयनाच्च॥

यच्च याज्ञवल्क्यस्मृतौ वीरवैदिकधर्मविधीनां मनुस्मृत्यपेक्षयाल्पत्वं, मिताक्षरायां सामुदायिकस्वत्वाभ्युपगमनं च बौद्धराजानां तदादरणे कारणं सर्कारेण वर्णितं, तदपि नोपादेयम्। न हि मनुस्मृतिमपेक्ष्य श्लोकसङ्ख्याल्पत्वेऽपि तादृशधर्मविध्यल्पत्वं याज्ञवल्क्यस्मृतौ वस्तुतोऽस्ति, येन विमतजनहृदयं मनुस्मृतिपरिहारेण तस्यां प्रवणं भवेत्। अपिच, बौद्धा नाम हिन्दुजातिप्रसूता हिन्दुधर्मशास्त्रं प्रमाणयन्त आचारप्रायश्चित्तविषयौदासीन्येन व्यवहारमात्रे तत् प्रमाणयितुमर्हन्ति, आचारप्रायश्चित्तयोर्वेदानुरोधसाध्यत्वाद् वेदे च तेषां प्रद्वेषात्। व्यवहारे पुनराचारप्रायश्चित्तसहभुवो वीरवैदिकधर्मयन्त्रणविधेर्बौद्धमतविरोधस्य चाभावो मनुस्मृतियाज्ञवल्क्यस्मृत्योरविशिष्ट इति उक्तवैदिकधर्मविध्यल्पत्वबहुत्वविचार एव व्यवहारप्रस्तावे व्यर्थः। सामुदायिकस्वत्वं खल्वपि बौद्धैर्विहारद्रव्याक्षयस्थितिकामिभिः सत्यम्, इष्यते। तत्तु लौकिकमनादिव्यवहारपथप्रथितं च नापूर्वं वस्तु ; न च तस्य धर्मशास्त्रेऽभिधानं मिताक्षरोपक्रमं, यस्मात्—

---

* निर्णयसागरमुद्रिताया राजतरङ्गिण्याश्चतुर्थस्तरङ्गो द्रष्टव्यः।

"पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्तवान्।
न तत् पुत्रैर्भजेत् सार्धमकामः स्वयमर्जितम्॥"

इति मानवनवमाध्यायश्लोकस्य (२०९) भाष्ये "सर्वथा विशेषाभावात् सर्वे पितामहधनभाजः स्वत्वपूर्वकत्वाद् विभागस्य" इति मेधातिथिरपि सामुदायिकस्वत्वमुपक्षिप्तवान्। अमुमेवार्थं

"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चैवहि॥"

इति याज्ञवल्कीयद्वितीयाध्याय (२२१) श्लोकव्याख्याशेषे "अतः स्वत्वे सति विभाग इति सिद्धम्" इति विश्वरूपाचार्यैरनूदितं विज्ञानेश्वरो दायविभागोपक्रमे सम्यगुपपत्तिभिः समर्थयाम्बभूवेति न कश्चिद् मेधातिथिग्रन्थव्यावृत्तौ बौद्धहृदयग्राही मिताक्षरायां विशेषः। कस्तर्हि मिताक्षराया भूयिष्ठभारतव्याप्तौ हेतुरिति चेद्, व्यावहारिकवस्तूनां विविक्तविशदोपपत्तिपरिपूतं मेधातिथ्यादिग्रन्थतात्पर्यनिर्लोडनपूर्वं च ललितमितपदहृद्यया रीत्या तस्यां संग्रथनमिति गृह्यताम्।

यदपि सर्कारस्यानुमानं—विपुलधर्मशास्त्रग्रन्थरचनं प्रति वैमुख्यस्यैव वैदिकभिक्षुशैलीसिद्धत्वात् तथाविधग्रन्थरचनप्रवृत्तोऽयं विज्ञानेश्वरो बैदिकभिक्षुर्न भवितुमर्हति; बौद्धभिक्षुस्तु स कामं स्यादिति, तद् वेदान्तभिन्ने विषये तर्कव्याकरणादावपि यतीनां ग्रन्थनिर्माणसंरम्भोपलम्भात्, वेदानुरोधिधर्मानुशासनप्रधाने धर्मशास्त्रे सुतरां तदौचित्यात्. बहुतरावधानसाध्ये मिताक्षराख्यमहाग्रन्थप्रणयने गार्हस्थ्यव्युपरमसुलभान् क्षणान् प्रतीक्ष्यैव विज्ञानेश्वरस्य लोकार्था प्रवृत्तिरासीदिति सम्भावनाच्चायुक्तं द्रष्टव्यम्। प्रत्युत बुद्धमतप्रवणेन केनचित् सचेतनेन सता बुद्धसिद्धान्तविरुद्धवेदानुरोधिनानाधर्मप्रतिपादनपरायणाया अस्याः स्मृतेः कथमिवेदृशी सर्वाकारानुकूला व्याख्या भक्त्या प्रणीयेतेति चिन्तनीयं विदुषा सर्कारेण न चिन्तितम्॥

यद् ब्रह्मचर्यात् प्रव्रजनं, तद् वेदोदितमेव विज्ञानेश्वरो निरूपयाम्बभूवेति न तदपि बौद्धानुरोधाभ्यूहस्थानं श्रीसर्काराभिमतमुपपद्यते।

वस्तुतत्त्वस्थिताविथं स्मृतिव्याख्यानकारयोः।
चित्रं बुद्धानुयायित्वं सर्कारो यदकल्पयत्॥

अनन्तशयनम्.
1-2-1912.

त. गणपतिशास्त्री.

ॐ

# ॥ याज्ञवल्क्यस्मृतिः ॥

## ॥ मिताक्षराव्याख्यासंवलिता ॥

### ॥ तत्रोपोद्घातप्रकरणम् ॥

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्योनमः ।

*धर्माधर्मौ †तद्विपाकास्त्रयोऽपि ‡क्लेशाः पञ्च §प्राणिनामायतन्ते ।

---

* तत्र तावच्छ्रुतिस्मृतिपुराणादिभिर्मोक्षस्यैव परमपुरुषार्थतां योगस्य च तदसाधारणकारणतां निश्चित्य योगविद्यायामभिनिविष्टयोगीश्वरप्रणीतं योगप्रधानं धर्मशास्त्रं व्याचिख्यासुर्धर्मादेर्भगवदायत्तत्वेन तदनुग्रहमन्तरेण तदुद्बोधाद्यसंभवेन निर्णयासंभवेन तदनुग्रहसूचनाय स्वस्य योगित्वसूचनाय च योगशास्त्रस्थ 'क्लेशकर्म—' 'तस्य वाचकः—' इति सूत्रद्वयप्रतिपाद्यमेव भगवत्स्वरूपमुपवर्णयन्नभिधेयजिज्ञासायामभिधेयं च प्रदर्शयन् विज्ञानेश्वराचार्यः प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकदुरितोपशमनाय स्वेष्टदेवतानतिस्तुत्यन्यतररूपं मङ्गलमाचरञ्छिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति धर्माधर्माविति । (बा. भ.)

"चोदनालक्षणोऽर्थोधर्मः" इति जैमिनिः (१.१.२.) "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति गौतमः । (वै. १.१.२.) तद्विरुद्धोऽधर्मः ।

† "सति मूले तद्विपाको जात्यायुर्भोगाः" (२.१३ यो० सू०)। तद्विपाका इत्यर्थः ।

‡ धर्माधर्मविपाकाः "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति (२.३.) तथा "अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखरूपख्यातिरविद्या।" इति (२.५.) तथा "दृग्दृश्ययोरेकात्मतैवास्मिता" इति (२.६.) तथा "सुखानुशयी रागः" इति (२.७.) तथा "दुःखानुशयी द्वेषः" इति (२.८.) तथा "स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः" इति (२.९.) (पातञ्जलयोगसूत्रे) ।

§ 'प्राणिनां' सामान्यनिर्देशेऽपि तिर्यगधिकरणन्यायेन विशेषपरतया मनुष्याणाम् । (बा. भ.)

यस्मिन्नेतैर्नो परामृष्ट[*] ईशो[†] यस्तं वन्दे [‡]विष्णुमोङ्कारवाच्यम् ॥ १ ॥

याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम् ।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये[1] विविच्यते[§] ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं सङ्क्षिप्य कथयामास यथा मनुनोक्तं भृगुः । तस्य चायमाद्यश्लोकः—

---

* जीवाधीनप्राणिधर्मादेरपि जीवायत्तत्वात्तद्व्यावृत्तये आह—य एतैर्धर्मादिभिर्नो परामृष्टः० । तदपरामर्शे हेतुमाह—य ईशः ईश्वरो नियताऽप्रतिहतेच्छः । (बा. भ.)

† "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषईश्वरः" (१.२४.) इति (योगसूत्रे).

‡ तत्सत्वे मानमुपदर्शयंस्तत्स्वरूपमाह—ॐकारोति प्रणवस्य वाच्यमित्यर्थः तदुक्तं पतञ्जलिना—'तस्य वाचकः प्रणवः' (१. २७.) इति ।

§ अथाभिधेयं प्रतिजानीते—याज्ञेति । मया धर्मशास्त्रं धर्मसम्बन्धिबोधसाधनं तत्प्रतिपादकसंहितारूपं ऋजुभिः स्फुटार्थैः मिताक्षरैः बहुव्रीहिः वाक्यमन्यपदार्थः । तैः विविच्यते स्मृत्यन्तरैकवाक्यतया, सति सभंवे आकाङ्क्षापूरणविरोधपरिहाराभ्यां, तदसंभवे सर्वथा विरोधे विकल्पाभिधानेन च, विशदीक्रियते । तत्रानतिप्रसङ्गायाऽऽह—याज्ञेति । स्वस्य योगित्वेन तस्य योगीश्वरत्वेन तस्यैवेष्टार्थत्वेन तत्रैव श्रद्धोदयादिति भावः मयूरव्यंसकादिः । मुनित्वेन भाषणयोग्यता सूचिता । तत्त्वस्याप्यतिप्रसक्तत्वादाह—मुहुरिति । वारंवारं विश्वरूपाऽऽचार्यस्य विकटा अतिगहनार्था या उक्तयो व्याख्यानानि यस्मिन् तत्, अत एव ताभिर्विस्तृतं बहुलीकृतं, तथा च तद्व्याख्यातमेव व्याख्यायत इति सूचितम् । एवं च योगियाज्ञवल्क्यस्मृत्यव्याख्यानेऽपि न प्रतिज्ञाहानिरिति-बोध्यम् । नन्वेवं तद्व्याख्यानस्वव्याख्यानयोर्वैलक्षण्यलाभेऽपि बुधानां तत एवेष्टसिद्ध्या किमेतत्प्रयासेनात आह—बालेति । तद्ग्रहणाद्यपटूनामष्टवर्षादीनामचिरोपनीतानामनुष्ठानार्थमनुष्ठेयार्थज्ञानप्रवृत्तानां बोधो बुद्धिः असंदिग्धाविपर्यस्तानुष्ठेयार्थधीः तस्या विधि सिद्धिस्तन्निष्पत्तये इत्यर्थः । तथा च तेषां न ततः सेत्स्येतत्प्रवृत्तिः सफला । ऋजुत्वमितत्वाभ्यां वैकल्यविस्तरयोर्निरासेनेतस्तद्बोधस्य सुकरत्वादितिभावः । (बा. भ.)

ननु तदुक्तं तद्विविच्यते इति प्रतिज्ञा न युक्ता याज्ञवल्क्यं संपूज्येति ग्रंथादौ "एवमस्त्विति होवाच" इति ग्रन्थान्ते च निर्देशस्याऽऽत्मन्यनुचितत्वादत आह—याज्ञेति । (बा. भ.)

---

१ क. बालबुद्धिविधये ।

ॐ योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।
*वर्णाश्रमेतराणां नो ब्रूहि †धर्मानशेषतः‡ ॥ १ ॥§

‖योगिनां सनकादीनामीश्वरः श्रेष्ठः तं याज्ञवल्क्यं[1] संपूज्य मनोवाक्कायकर्मभिः पूजयित्वा मुनयः सामश्रवप्रभृतयः श्रवणधारणयोग्या अब्रुवन्

* "आश्रमशब्दो यद्यपि ब्रह्मचारिगृहस्थादिकर्मसु वर्तते। तथाऽपि तत्सम्बन्धिनां धर्माणामभावादाश्रमशब्देनाश्रमिणो लक्ष्यन्ते। केवलाद्वर्णत्वात्केवलाच्चाऽऽश्रमित्वाद्यतिरिक्तानि विशेषरूपाणि यानि तद्विशेषस्था ये वक्ष्यमाणधर्माधिकारिणस्त इहेतरपदेन ग्राह्याः।" इति अप० ३.

† "कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः। तद्धेतुभूतकर्मव्याख्यानमेव धर्मव्याख्यानम्" इति आप० उज्ज्व० २.

‡ "वक्ष्यमाणशास्त्रार्थनिरवद्यनिरवशेषोदीरणक्रियां प्रति 'अशेषत' इति धर्मसामान्याभिप्रायं साकल्यवचनम्। निरवशेषाभिप्रायेह्यस्मिन्नुपनयनादौ गृह्योक्तहोमदि न कार्यं स्यात्। वर्णाश्रमेतरसम्बन्धोपाधिकानि त्रीणि धर्मसामान्यानि धर्मान्ब्रूहीति प्रार्थितस्य च धर्मसंहिताकरणे तन्मध्येऽध्येतृसमवायिधर्मज्ञानमेव प्रयोजकम्। ततश्चाध्येतृणामध्ययनप्रयोजकमपि तदेव। न हि तेषामप्रयोजकमध्ययनं भवितुमर्हति। तस्मान्नशास्त्राध्ययनं धर्मशास्त्रत्वज्ञानप्रयुक्तमेव।" अप० ४."

§ याज्ञवल्क्यप्रणीतेऽप्यत्र श्लोके "याज्ञवल्क्यं संपूज्य" इति वचनं, तथोत्तरश्लोके "योगीन्द्रोऽब्रवीत्" इति प्रथमपुरुषप्रयोगश्च नायुक्तः। दृश्यते हि मानवे ग्रन्थे—"मनुरब्रवीत्" इति प्रयोगः, बोधायने च—"स ह स्माऽऽह बोधायनः" इति। न च "मनुरब्रवीत्" इति भृगोर्वचनमिदं न मनोरिति वाच्यम्। यत एतदुत्तरकालमेव मनुराह "एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः। एताद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः" इति। अधिजगे अधीतवान्। अस्याश्च संहिताया याज्ञवल्क्यः प्रणेतेति व्याख्यातृणां स्मृतिरेव प्रमाणम्। न चार्थमेव याज्ञवल्कीयतया ते स्मरन्तीति वाच्यम्। ग्रन्थे हि प्रणेतृतया तस्यासाधारण्यं संभवति न चार्थे द्रष्टृतया। मुन्यन्तरैरपि तस्य दृष्टत्वात्। असाधारण्येन व्यपदेशो न साधारण्ये घटते। असाधारण्येन हि व्यपदेशा भवन्ति।" इति अप० ४.

‖ "धर्मसंहितामारभमाणस्तस्याः पौरुषेयत्वसामान्याज्जायमानाप्रामाण्यशङ्कां महाजनस्य तदध्ययनधारणादिपरिपन्थिनीमपनेतुमाह—योगीश्वरमिति। योगी संयम-

१ क. बल्क्यसंज्ञं संपूज्य।

उक्तवन्तः धर्मान्नोऽस्मभ्यं ब्रूहीति । कथम्?—अशेषतः कार्त्स्न्येन । केषाम्?—वर्णाश्रमेतराणां, वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचारिप्रभृतयः, इतरे अनुलोमप्रतिलोमजाता[1] मूर्धावसिक्तादयः । इतरशब्दस्य "द्वन्द्वे च"[2] इति सर्वनामसंज्ञाप्रतिषेधः ॥ अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः । तद्यथा — वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति । तत्र वर्णधर्मः नित्यं मद्यं ब्राह्मणो वर्जयेदित्यादिः,[3] आश्रमधर्मः अग्नीन्धनभैक्षचर्यादिः, वर्णाश्रमधर्मः पालाशो दण्डो[4] ब्राह्मणस्येत्येवमादिः, गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः, निमित्तधर्मः विहिताकरणप्रतिषिद्धसेवननिमित्तं[5] प्रायश्चित्तम्, साधारणो धर्मः अहिंसादिः "न हिंस्यात्सर्वभूतानि" इत्याचण्डालं[6] साधारणोधर्मः ॥ [7]"शौचाचारांश्च शिक्षयेत्"[8] इत्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते ॥ तत्र चायं क्रमः — प्रागुपनयनात्कामचारकामवादकामभक्षाः[9] । ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनम् , ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदा-

---

वान् । तत्रापि चेश्वरोऽणिमादिगुणशाली । एषां च गुणानामीश्वरशब्दप्रवृत्तिनिमित्तत्वं गम्यते मार्कण्डेयपुराणे—"अणिमा लघिमा चैव महिमा प्राप्तिरेव च । प्राकाम्यं च तथेशित्वं वशित्वं च तथाऽपरम् ॥ यत्र कामावसायित्वं गुणानेतानथैश्वरान् । प्राप्नोत्यष्टौ नरव्याघ्र परनिर्वाणसूच [illegible]न् ॥ सूक्ष्मात्सूक्ष्मतरोऽणीयाञ्छीघ्रत्वाल्लघिमा गुणः । महिमाऽशेषपूज्यत्वात्प्राप्तिर्नाप्रा[illegible]मस्य यत् ॥ प्राकाम्यमस्य व्याप्यत्वादीशित्वं चेश्वरोयतः । वशित्वाद्वशिता नाम यो[illegible]गिनः सप्तमो गुणः ॥ यत्रेच्छास्थानमप्युक्तं तत्र कामावसायिता । ऐश्वर्यं कारणैरेभिर्यो[illegible]नः प्रोक्तमष्टधा ॥ मुक्तिसंसूचकं रूपं परनिर्वाणचेतसः ॥" इति । एवं चाणिमादिगुणपर एवायमीश्वरशब्दः ॥ ततश्च योगी चासौ ईश्वरश्च योगीश्वर इति मुख्यार्थोभयपदः कर्मधारयः । न तु योगिनामीश्वर इति षष्ठीतत्पुरुषः । षष्ठ्यर्थलक्षणाप्रसङ्गात् । योगीश्वरशब्दप्रयोगवैयर्थ्यप्रसङ्गाच्च । न हि तदा योगिनामणिमादिलक्षणमैश्वर्यं याज्ञवल्क्यस्योक्तं भवति किं तु योगिनः सनकादीन्प्रति स्वामित्वम् । तच्च प्रकृतानुपयोगि । कर्मधारयपक्षे तु योगनिमित्तमणिमाद्यैश्वर्यं ग्रन्थकारस्य गम्यते । ततश्च योगविरोधिनः अज्ञानरागद्वेषा योगिपदेनार्थान्निरस्ताः । " इति अप० २.

---

१ क. लोमजामूर्द्धा । २ अ. १. १. २९ । ३ क. वर्जयेदिति । ४ आप० गृ० प. ४. ख. ११. सू. १५. । ५ क. प्रतिषेधसेवन । ६ क. ख. त्याचाण्डालं । ७ ख. श्रुत्युक्तशौचा । ८ आ. अ. श्लो. १५. । ९ गौतमः—२. १.

ध्ययनम्, ततस्तदर्थजिज्ञासा, ततस्तदनुष्ठानमिति ॥ तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते, तथाऽपि धर्मस्य प्राधान्याद्धर्मग्रहणम् । प्राधान्यं च धर्ममूलत्वादितरेषाम् । न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इत्यविशेष इति । यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना[1] धर्मनिष्पत्तिः, अर्थलेशोऽपि न धर्ममन्तरेणेति । एवं काममोक्षावपीति[2] ॥ १ ॥

एवं पृष्टः—

**मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन्* ।**
**यस्मिन्देशे† मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥ २ ॥**

मिथिलानाम नगरी तत्र स्थितः स याज्ञवल्क्यो योगीश्वरः क्षणं ध्यात्वा कञ्चित्कालं[3] मनः समाधाय एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान् मुनीन् । किम्?—"यस्मिन्देशे मृगः कृष्णस्तस्मिन्ध-

* "स मुनि धर्मान्ब्रूहीति प्रार्थितः मिथिलास्थत्वेन विशेषतः प्रशान्तः क्षणमात्रं वक्ष्यमाणं शास्त्रार्थं मुनीनां तच्छ्रवणयोग्यतां च ध्यात्वा चिन्तयित्वा वक्ष्यमाणान्धर्मानब्रवीत् ॥ याज्ञवल्क्यप्रणीततां शास्त्रे वक्तुं स इत्युक्तं न पुनरहमिति । न पुनरहंशब्दाद्याज्ञवल्क्यसम्प्रत्ययः । स इति शब्दात्तु प्रकृतवाचिनो याज्ञवल्क्य एव प्रकृते बुद्धिरुपैतीति तमेव प्रयुक्तवान् । तत्सामानाधिकरण्याच्चाब्रवीदिति प्रथमपुरुष एवमुच्यते न पुनरब्रवमित्युत्तमः ।" इति अप० ४.

† "कृष्णमृगोपलक्षितश्च देशो ब्रह्मावर्तादिदेशासंभवे धर्मानुष्ठाङ्गमिति मन्तव्यम् ।" यदाहपुराणम् :—"ब्रह्मावर्तः परो देश ऋषिदेशस्त्वनन्तरः । मध्यदेशस्ततोन्यून आर्यावर्तस्त्वनन्तरः" । आर्यावर्तादीनां लक्षणंमनुना (२. १७—२३) उक्तम् । विष्णुश्च आर्यावर्तस्य लक्षणान्तरमाह—"चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तम्लेच्छदेशं जानीयादार्यावर्तमतः परम्" इति । ततश्च यत्र चातुर्वर्ण्यव्यवस्था कृष्णमृगश्च नास्ति स म्लेच्छदेशः । तदन्यो धर्मदेशः । ततश्च ब्रह्मावर्तादिदेशचतुष्टयालाभे यत्र चातुर्वर्ण्यं व्यवतिष्ठते कृष्णमृगश्च विचरति तत्र धर्मेच्छुभिः स्थातव्यम् । तदसंभवे चातुर्वर्ण्यव्यवस्थावतिकृष्णमृगयुक्ते वा देशे' इति ॥ अप० ५.

१ क. जपतीर्थयात्रा । २ घ. प्रथमश्लोकानन्तरं 'जात्यायुर्भोगास्त्रयो विपाकाः । अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः क्लेशाः । सम्यगध्यात्मविद्भिर्दर्शितार्थे विपरीतं ज्ञानमविद्या । अहमस्मि मद्विशिष्टः कोऽपिनास्तीत्यभिमानातिशयोऽस्मिता । विषयेष्वासक्ती रागः दुःखेष्वप्रीतिर्द्वेषः । अननुभूतादेरपि मरणादेस्त्रासोऽभिनिवेशः' इत्यधिकम् । ३. ख. किञ्चित्कालं ।

र्मान्निबोधत" इति। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्द विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः। "शौचाचारांश्च शिक्षयेत्" इत्याचार्यस्य धर्मशास्त्राध्यापनविधिः॥ २॥

शिष्येण तदध्ययनं कर्तव्यमिति कुतोऽवगम्यत इत्यत आह—

***पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश†॥ ३॥**

पुराणं ब्राह्मादि, न्यायस्तर्कविद्या, मीमांसा वेदवाक्यविचारः, धर्मशास्त्रं मानवादि, अङ्गानि व्याकरणादीनि षट्, एतैरुपेताश्चत्वारो वेदाः विद्याः पुरुषार्थसाधनज्ञानानि[1] तासां स्थानानि च चतुर्दश धर्मस्य च[2] चतुर्दश स्थानानि हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि। तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्[3]। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि। क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथा च शङ्खेन विद्यास्थानान्यनुक्रम्योक्तम् "एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषाम्" इति। मनुरपि द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारः, ब्राह्मणस्य प्रवचने नान्यस्य, इति दर्शयति—"निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्"[4]॥ "विदुषा ब्राह्मणेनेदमध्येतव्यप्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित्।"[5] इति॥ ३॥

---

* "ज्ञानपूर्वमनुष्ठानं धर्मस्येति धर्मज्ञानोपायांस्तावदाह पुराणेति।" अप० ६.

† "वेदाः ऋग्वेदादयः। एतानि चतुर्दश ज्ञानानां निमित्तानि, धर्मस्य च ज्ञानद्वारेण। एतदुत्पन्नस्यैव ज्ञानस्य धर्महेतुत्वात्। ततश्च प्रयोगपद्धत्यादि समुत्थितं ज्ञानं धर्महेतुरिति सिद्धम्। "एवं चतुर्दशैतानि विद्यास्थानानि सन्त्यथ। वेदान्तः पञ्चदशकं विद्याषोडशिका भवेत्।" इति ब्रह्मपुराणे यद्वेतान्तविद्ययोर्ग्रहणं तन्मोक्षसाधनस्थानाभिप्रायमिति इहानुपयोगित्वान्नोक्तम्। वेदान्तः शारीरकं। विद्या बृहदारण्यकादि रहस्यम्। यत्तु विष्णुपुराणम्।—"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेतिते त्रयः। अर्थसास्त्रं चतुर्थं च विद्या-अष्टादशैव ताः॥" इति। तत्केवलं विद्यास्थानत्वाभिप्रायं न धर्मस्थानत्वाभावात्। चतुर्दशग्रहणादृतेऽथर्ववेदसंग्रहो न स्यात्।" इति अप० ६.

---

१ क. पुरुषार्थज्ञानानि। २ क. धर्मस्य च स्थानानि। ३ क. धर्मशास्त्रमध्येतव्यम्। ४.—२. १३। ५.—१. १०६।

अस्तु धर्मशास्त्रमध्येतव्यं, याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह—

*मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरा:[१] ।
यमाऽऽपस्तम्बसंवर्ता: कात्यायनबृहस्पती ॥ ४ ॥

पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजका:[२] ॥ ५ ॥

उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भाव: । याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्राय: । नेयं परिसंख्या, किं तु प्रदर्शनार्थमेतत् । अतो बोधायनादेरपि धर्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते । विरोधे तु विकल्प: ॥ ४ ॥ ५ ॥

इदानीं धर्मस्य कारकहेतूनाह[३]—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्† ॥ ६ ॥

देशो "यस्मिन्देशे मृग: कृष्ण:"[४] इत्युक्तलक्षण:, काल: संक्रान्त्यादि:, उपाय: शास्त्रोक्तेतिकर्तव्यताकलाप:, द्रव्यं प्रतिग्रहादिलब्धं गवादि, श्रद्धा आस्तिक्यबुद्धि:, तदन्वितं यथा भवति तथा, पात्रं "न विद्यया"[५] इत्येवमादिवक्ष्यमाणलक्षणम् । प्रदीयते यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यवसानं त्यज्यते । एतद्धर्मस्योत्पादकम् । किमेतावदेव ? नेत्याह सकलमिति । अन्यदपि शास्त्रोक्तं जातिगुणयागहोमादि तत्सकलं धर्मस्य कारकं[६]

*इदानीं धर्मसास्त्राणां तदाभासेभ्यो विवेकाय तत्प्रणेतॄनाह मन्वत्रीति । अप० ६.

"बृद्धमन्वादयश्च वयोवस्थादिभेदेन मन्वादिप्रणेतार एव द्रष्टव्या:। अविरोधित्वाच्छ्रुतिस्मृत्युपबृंहकत्वाच्छिष्टपरिगृहीतत्वादाप्तोक्तत्वाच्चचतुर्विंशति परिशिष्टादयोऽपि धर्मशास्त्रत्वेनैव ज्ञेया: । अप० ७–८.

† "सकलं सर्वसाधनोपेतस्येदम्पर्यन्तविशेषवतो धर्मस्य बोधकं सर्वं धर्मलक्षणं धर्मे प्रमाणं वेदितव्यम् । न पुनः सर्वप्रकारमुक्तस्य धर्मस्य बोधकं धर्मलक्षणम् ।" इति अप० ८.

१ ग. नोङ्गिर: । २ ख. प्रवर्तका: । ३ ख. नेदमवतरणं दृश्यते । ४ आ. २. । ५ आ. २०० । ६ क. धर्मस्य कारणम् ।

जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति । तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम् । श्रद्धा सर्वत्रानुवर्तत एव ॥ ६ ॥

इदानीं धर्मस्य ज्ञापकहेतूनाह—

**श्रुतिः* स्मृतिः† सदाचारः[2]‡ स्वस्य च प्रियमात्मनः।**
**सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥**

श्रुतिर्वेदः । स्मृतिर्धर्मशास्त्रम् । तथा च मनुः—"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।"[3] इति । सदाचारः सतां शिष्टानामाचारः अनुष्ठानं नाशिष्टानाम्[4] । स्वस्य चाऽऽत्मनः प्रियं वैकल्पिके विषये यथा—"गर्भाष्टमेऽष्टमे वाऽब्दे"[5] इत्यादिष्वात्मेच्छैव नियामिका । सम्यक्संकल्पाज्जातः शास्त्राविरुद्धः कामः ।

---

* "वेदा एव मूलप्रमाणं धर्माधर्मयोः । न च नित्येषु निर्दोषेषु वेदेषूक्तोपालम्भसम्भवः । स्वतः प्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणम् । धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैवसाधूनामात्मनस्तुष्टिरेव च।" (२. ६.) इति । गौतमोऽपि—"वेदो धर्ममूलं तद्विदां च स्मृतिशीले" इति । यद्यप्यप्रत्यक्षो वेदो धर्ममूलभूतोऽस्मदादिभिर्नोपलभ्यते, तथाऽपि मन्वादय उपलब्धवन्त इत्यनुमीयन्ते । वक्ष्यति च "तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते" (१—१२—१०) इति उज्ज्वला—आप० ३ ।

† "स्मृतिः धर्मतो वेदमूलं शास्त्रम्" इति अप० ९.

"समीचीनः शास्त्रार्थविषयोऽनेनेदं साधयामीतिमनःकर्म सङ्कल्पः, तज्जः कामो धर्मचिकीर्षा, एतत्सर्वं धर्मनिश्चये मूलं कारणमित्यर्थः ।" इति अप० ९.

‡ "तत्र हि शिष्टस्वरूपमाह बोधायनः—"शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्याः अलोलुपाः दम्भलोभमोहकोपविवर्जिताः । धर्मेणाधिगतो यैश्च वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ।" इति । कुम्भीधान्या इति वृत्तिसङ्कोचोपलक्षणपरम् ।" इति अप० १०.

---

१ क द्रव्यभावार्थ । ग. द्रव्यभवार्थात्मकं चतुर्विद्धर्म । २ "श्रुतिस्मृतिसदाचाराः" इत्यपरार्के । ३.—२. २० । ४ क. ग. नाशिष्टानामिति नास्ति । ५ आ. १४.

यथा मया भोजनव्यतिरेकेणोदकं न पातव्यमिति । एते धर्मस्य मूलं प्रमाणम् । एतेषां[1] विरोधे पूर्वपूर्वस्य[2] बलीयस्त्वम् ॥ ७ ॥

देशादि कारकहेतूनामपवादमाह—

*इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्† ॥ ८ ॥‡

इज्यादीनां कर्मणाम् अयमेव परमो धर्मः यद्योगेन बाह्यचित्तवृत्तिनिरोधेनाऽऽत्मनो दर्शनं याथातथ्यज्ञानम् । योगेनाऽऽत्मज्ञाने देशादिनियमो नास्तीत्यर्थः। तदुक्तं "यत्रैकाग्रता तत्राविशेषात्"[3] इति ॥ ८ ॥

---

*"ननु यदि श्रुतिस्मृत्यो धर्म एव प्रामाण्यं कथं तर्ह्यात्मज्ञानप्रधानयोः श्रतिस्मृत्यो धर्मप्रामाण्यनिर्वाह इति । न ह्यात्मज्ञानं धर्मः । अननुष्ठेयत्वात् । "तत्वमसि" (छान्दोग्योपनिषत्.) इत्यादिशास्त्रावधारणतस्तज्ज्ञायते, न तु वाक्यार्थमवधार्ययागादिवदनुष्ठीयते इत्याशङ्क्याऽऽह—इज्याचारेति । अप० २० ।

"मनसो दमनं दमः । रागप्राप्तहिंसानिवृत्तिरहिंसा । स्वस्वत्वनिवृत्तिः परस्वापत्तिर्दानम् । स्वाध्यायोऽध्ययनम् । कर्मशब्दः काम्यव्यतिरिक्तानामन्येषामपि चोदितकर्मणां परिग्रहार्थः" इति अप० २१.

†"आत्मशब्दोऽयं परमात्मनि वर्तते न जीवात्मनि । तस्येज्यादिकमन्तरेण समाधिं विनैव च प्राप्तत्वात् । "आत्मा वा अरे द्रष्टव्यः" इति (बृहदा०) तत्रोत्पत्तिविधिः । "ब्रह्मविदाप्नोति परम्" (तैत्तिरीयोपनिषत्.) इत्यधिकारविधिः । अत्र हि परशब्देन परमात्माऽभिधीयते । तदाप्तिश्च तदात्मनैव क्षेत्रज्ञस्यावस्थानम् । तत्र ब्रह्मविदितिपदोपात्ता-ब्रह्मविद्याकरणम् । "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृहदारण्य०) इत्यत्र यज्ञेनेत्यादि सकलनित्यनैमित्तिकवर्णाश्रमधर्मोपलक्षणार्थम् । इत्यादिमत्वा उक्तवान्—इज्याचारदमाहिंसेति । रागप्राप्तं कर्माऽऽश्रित्य शास्त्रेण पुरुषाभ्युदयाय विधीयमानोऽर्थ आचारः । यथा "प्राङ्मुखोन्नानि" इत्यादि ।" इति अप० २०.

‡"यद्योगेनाऽऽत्मदर्शनं, न च तद्वाक्यार्थावधारणादेव सिद्ध्यति । किं तु श्रवणमनननिदिध्यासनेभ्य इति कर्माधिकारिणो विदुषोऽपि कुतश्चित्कारणाद्धर्मसंशये पर्षदधीनोनिर्णय इति तां तावदाह" अप० २१.

---

१ क. तेषांवि । २ क. ग. पूर्वपूर्वबलयिस्त्वम् । ३ ब्रह्मसूत्रे—४. १. ११ ।

कारकहेतुषु ज्ञापकहेतुषु वा संदेहे [1]तु निर्णयहेतुमाह—

**चत्वारो वेदधर्मज्ञाः* पर्षत्त्रैविद्यमेव वा ।**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ ९ ॥**

चत्वारो ब्राह्मणाः[2] वेदधर्मशास्त्रज्ञाः पर्षत् । तिस्रो विद्या अधीयन्त इति त्रैविद्याः तेषां समूहस्त्रैविद्यम् । धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते, तद्वा पर्षत् । सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः । अध्यात्मज्ञानेषु निपुणतमो वेदधर्मशास्त्रज्ञश्च एकोऽपि वा यं ब्रूते सोऽपि धर्मः ॥ ९ ॥

[3]इत्युपोद्घातप्रकरणम् ।

* **धर्मज्ञाः धर्मो धर्मशास्त्रं तदर्थज्ञाश्चत्वारो धर्मनिर्णयरूपकार्यकराः पर्षदित्युच्यते। ऋग्यजुस्सामवेदास्त्रैविद्यम् । तेन चात्र तदध्येतारस्त्रयो ब्राह्मणा लक्ष्यन्ते । सैषा त्र्यवरा-पर्षदित्याह मनुः—" ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च । त्र्यवरापरिषज्ज्ञेया धर्मसंशयनिर्णये" इति । आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम् । बहूनां तद्विदां मध्ये सातिशयज्ञानोऽध्यात्मवित्तमः । इति अप० २१.**

**" आचारो नाम लौकिककर्माश्रयः पुरुषनिःश्रेयसोपकारस्य विधिः प्रतिषेधो वा । तत्र श्रुतिविहिता आचारा गोरक्षणप्रभृतयः ।" इत्यपरार्के ( आ.१५४.) १९४ पृ०.**

**तथा च मनुः—"आचाराल्लभते ह्यायु राचारादीप्सिताः प्रजाः । आचाराद्धनमक्षय्यमाचारोहन्त्यलक्षणम् ॥ दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ सर्वलक्षणहीनोऽपि सर्वदाऽऽचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जिवति" (४. १५६—१५८.)**

---

१ ख. सन्देहेनिर्णय । २ क. ख. वेदशास्त्रधर्म । ३ ग. चित्तां प्रकृतासिद्ध्यर्थामुपोद्घातंप्रचक्षते । देशश्चैव तथाऽऽस्थानं प्रश्नः प्रश्नविनिश्चयः ॥ एतच्चतुष्टं यच्च उपोद्घातस्तदुच्यते ।

# अथ ब्रह्मचारिप्रकरणम्—१

एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां[1]
धर्मान्वक्तु प्रथमं तावद्वर्णानाह—

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ १० ॥**

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्षणास्तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्याः द्विजाः, द्विर्जायन्त इति द्विजाः,* तेषां द्विजानां वै एव, न शूद्रस्य, निषेकाद्याः निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः, श्मशानं पितृवनं तत्संबन्धि कर्म अन्तो[2] यासां ताः क्रियाः मन्त्रैर्भवन्ति ॥ १० ॥

†इदानीं ताः क्रिया अनुक्रामति[3] —

**गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा ।**
**षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ ११ ॥**

**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः[4] ।**
**षष्ठेऽन्नप्राशनं मासि चूडाकार्या यथाकुलम् ॥ १२ ॥**

गर्भाधानमित्यनुगतार्थं कर्मनामधेयम् । एवं वक्ष्यमाणान्यपि । तद्गर्भाधानमृतौ ऋतुकाले वक्ष्यमाणलक्षणे । पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम् । षष्ठेऽष्टमे वा मासि सीमन्तः सीमन्तोन्नयनम् । एते च द्वे पुंसवनसीमन्तोन्नयने

---

* आचार्यस्तु पिता प्रोक्तः सावित्री जननी तथा । ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनजन्मनि ॥ शङ्खः—१. ७.

† "गर्भाधानादीन्संस्कारान्गृह्यविहितस्वरूपानपि कालविशेषसम्बन्धितया सार्द्धश्लोकेनाधुना विधत्ते" इति अप०२४.

गर्भं आधीयतेऽनेन कर्मणेति गर्भाधानम् ।

---

१ क वर्णानां । ग. ब्राह्मणादीनां । २ क. कर्म अन्ते यासां । ३ ख. इयमवतरणिका नास्ति । ४ क. ग. निःक्रमः ।

क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्यं न प्रतिगर्भम् । यथाऽऽह देवलः—"सकृत्सुसंस्कृता नारी सर्वगर्भेषु संस्कृता" इति । एते, आ इते, आगते, गर्भकोशात्कुमारे जाते, जातकर्म । एकादशेऽहनि नामकरणम्, तच्च पितामहमातामहादिसंबद्धं कुलदेवतासम्बद्धं वा[1] । यथाऽऽह शङ्खः,—"कुलदेवतासम्बद्धं पिता नाम कुर्यात्" इति । चतुर्थे मासि [2]निष्क्रमलक्षणं कर्म सूर्यावेक्षणं कर्म* । षष्ठे मास्यन्नप्राशनं कर्म । चूडाकरणं† तु यथाकुलम् । कार्यमिति प्रत्येकं सम्बध्यत्वे ॥ ११ ॥ १२ ॥

एतेषां नित्यत्वेऽप्यानुषङ्गिक फलमाह[3]—

**एवमेनः शमं याति बीजगर्भसमुद्भवम्‡ ।**

एवमुक्तेन प्रकोरण गर्भाधानादिभिः संस्कारकर्मभिः कृतैरेनः पापं शमं याति । किं भूतम्?—बीजगर्भसमुद्भवं शुक्रशोणितसम्बद्धं गात्र[4]व्याधिसंक्रान्तिनिमित्तं, न तु पतितोत्पन्नत्वादि ॥

स्त्रीणां विशेषमाह—

**तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥**

एता जातकर्माऽऽदिक्रियाः स्त्रीणां तूष्णीं विनैव मन्त्रैर्यथाकालं कार्याः । विवाहः पुनः समन्त्रकः ॥ १३ ॥

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।§**

---

* "निष्क्रमणं सूर्याचन्द्रमसौ द्रष्टुं बहिः प्रसरणम् ।" इति अप०२४.

† "चूडा शिखा सा येषां कुले यस्मिन्वर्षे यत्संख्यया कार्यतया स्मर्यते तदनतिक्कमेण कर्तव्या ; यथाकुलधर्मं केशवेशान्कारयेत् (आश्व०. १. १७. १७.) इति गृह्यप्रसिद्धा" इति अप०२४.

‡ "बीजं शुक्रशोणितं जठरान्तरस्थितो देह. । तेन जठरवासो लक्ष्यते । एनोऽत्राप्रायत्यं, मातुः पीताशनादेरुत्पन्नमित्यर्थः" इति अप०२५.

§ "उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः" इति आप० ध० १.१.१.९.

---

१ क. तच्च पितामहादिसम्बद्ध देवतासम्बद्धैवा । २ क. ग. निष्क्रमणलक्षणं सूर्यावेक्षणं कर्मेतिनास्ति । ३ ख. इदमवतरणं नास्ति । ४ क. गात्रे व्याधि ।

राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥

गर्भाधानमवधिं कृत्वा जन्मनो वाऽष्टमे* वर्षे ब्राह्मणस्योपनायनम् † उपनयनमेवोपनायनम् । स्वार्थे अण् वृत्त्यनुसारात्, आर्षं वा दीर्घत्वम् । अत्रेच्छया विकल्पः । राज्ञामेकादशे । विशां वैश्यानां सैके एकादशे द्वादश इत्यर्थः । गर्भग्रहणं सर्वत्रानुवर्तते । समासे गुणभूतस्यापि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यम् । "गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" इति स्मृत्यन्तरवचनात् । यथा—"अथ शब्दानुशासनम् । केषां शब्दानां?—लौकिकानांवैदिकानाम्" इति । अत्रापि कार्यमित्यनुवर्तते । कुलस्थित्या केचिदुपनयनमिच्छन्ति ॥ १४ ॥

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥

स्वगृह्योक्तविधिना उपनीय शिष्यं गुरुः महाव्याहृतिपूर्वकं वेदमध्यापयेत् । महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त, पञ्च वा गौतमाभिप्रायेण । किं च शौचाचारांश्च‡ वक्ष्यमाणलक्षणान् शिक्षयेत् । उपनीय शौचाचारांश्च शिक्षये-

* गर्भादष्टमो गर्भाष्टमः । गर्भसहचरितोऽब्दो गर्भस्तमपेक्ष्याष्टम इति ल्यब्लोपे पञ्चमी । उपनयनस्याप्ययमेव कालः शौनकेनोक्तः—"अष्टमे वर्षे ब्राह्मणमुपनयेत् गर्भाष्टमे चैकादशे क्षत्रियं द्वादशे वैश्यम्" इति अप०३१.

† उपनेतारं प्रत्युपनेयस्य प्रयोजकव्यापार उपनायनम् । तच्चोपनयनादन्यदेव । अत एवाऽऽह बुधः—"गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत्" इति । इममेव च विधिमाश्रित्य शौनको मन्त्रं विधत्ते—"जान्वन्वाच्योपसंगृह्याधीहि भोः सावित्रीं भो अनुब्रूहि" इति । इति अप० ३१.

‡ "यथाविध्युपनयनकर्मणा शिष्यमनुशासनीयं प्रत्यासन्नं कृत्वा गुरुराचार्यो व्याहृतिपूर्वकं वेदमध्यापयेच्छौचाचारांश्च ग्राहयेत् । गुरुग्रहणात्पितैवोपनयनादि कुर्यादिति गमयति तस्य योग्यताविरहे चान्य आचार्यः स्यात् । उपनयनेन च शिष्यस्याऽऽचार्यं प्रति सम्बन्धविशेषात्मिका प्रत्यासत्तिः क्रियते न तु देशसंनिकर्षात्मिकैव" इति अप०३२.

१ ख. ग. वृत्तानु । २ क. ग. इदं वाक्यं नास्ति । ३ ख. विशां वैश्यानामित्यस्य स्थाने वैश्यस्येति पाठः । ४ क. ग. यत्रानुव । ५ ख. गर्भाद्धि । ६ क. ग. तरदर्शनात् । ७ महाभाष्ये ८ ग. शासनमिति । क. लौकिकानां वैदिकानामिति नास्ति ।

दित्यनेन प्रागुपनयनात्कामचारो* दर्शितो वर्णधर्मान्वर्जयित्वा । स्त्रीणामप्येतत्समानं विवाहादर्वाक्, उपनयनस्थानीयत्वाद्विवाहस्य ॥ १५ ॥

शौचाचारानाह—

**दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।**
**कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥**

कर्णस्थं ब्रह्मसूत्रं यस्य तथोक्तः । कर्णश्च दक्षिणः, "पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्" इति लिङ्गात् । असावहनि सन्ध्ययोश्च उदङ्मुखो मूत्रपुरीषे कुर्यात् । चकाराद्भस्मादिरहिते देशे । रात्रौ तु दक्षिणामुखः ॥ १६ ॥

किं च—

**गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।**
**गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥**

अनन्तरं शिश्नं गृहीत्वा उत्थाय उद्धृताभिरद्भिर्वक्ष्यमाणलक्षणाभिर्मृद्भिश्च गन्धलेपयोः क्षयकरं शौचं कुर्यात् । अतन्द्रितः अनलसः । उद्धृताभिरिति जलान्तः शौचातिषेधः । अत्र गन्धलेपक्षयकरामिति सर्वाऽऽश्रमिणां साधारणं शौचमिदम् । मृत्संख्यानियमस्त्वदृष्टार्थः ॥ १७ ॥

**अन्तर्जानुः[1] शुचौ देश उपविष्ट उदङ्मुखः ।**
**प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥**

शुचौ अशुचिद्रव्यासंस्पृष्टे[2] देशे[3] इत्युपानच्छयनासनादिनिषेधः, उपविष्टः न स्थितः न शयानः प्रह्वो गच्छन्वा । उदङ्मुखः प्राङ्मुखो वेति दिगन्तरानिवृत्तिः ।

---

*कामचार इति। "प्रागुपनयनात्कामचारवादभक्षः" इति (ध०२.१.४.) गौतमस्मरणम् । ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयम् ।" इति उज्ज्वला—आप०ध० ।

१ ख. ग. अन्तजानुः शु । २ क. संसृष्टे । ३ ख. इत्युपादानादुपा ।

शुचौ देश इत्येतस्मात्पादक्षालनप्राप्तिः । ब्राह्मेण तीर्थेन वक्ष्यमाणलक्षणेन द्विजो न शूद्रादिः नित्यं सर्वकालम् आश्रमान्तरगतोऽप्युपस्पृशेत् आचामेत्* । कथम्?— अन्तर्जानुः जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति ॥ १८ ॥

तीर्थान्याह—

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।**
**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥**

† कनिष्ठायास्तर्जन्या ‡अङ्गुष्ठस्य मूलानि [1]करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रमं वेदितव्यानि ॥ १९ ॥

**त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।**
**अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥**

वारत्रयमपः पीत्वा मुखमङ्गुष्ठमूलेन द्विरुन्मृज्य खानि छिद्राणि ऊर्ध्वकाय-

---

* "आन्तरं स्विद्यते यस्मात्तस्मादाचमनं स्मृतम्" इति अप० ४६ ।

† "कनिष्ठामूलं प्रजापतितीर्थं प्रदेशिनीमूलं पितृतीर्थं अङ्गुष्ठमूलं ब्रह्मतीर्थं हस्ताग्रं देवतीर्थं च जानीयात् । कनिष्ठाह्रस्वाङ्गुलिः । देशिनी तर्जनी । अङ्गुष्ठः प्रसिद्धः । हारीतः— "ब्राह्मेणतीर्थेन चाऽऽचामेत् । आवपनहोमतर्पणानि प्राजापत्येन कुर्यात् । मार्जनाचमनबलिकर्मभोजनानि दैवेन, पित्र्यर्थानि पित्र्येण, प्रतिग्रहमाग्नेयेन" इति । आग्नेयं पाणिमध्ये । आवपनं निर्वापः केशानां मार्जनं, न प्रोक्षणम् ।" इति अप० ३९ । तलमध्यस्य सोमतीर्थमित्यपि नामान्तरेवोक्तम् ।

‡ "भविष्यपुराणे—"अङ्गुष्ठोऽग्निर्महाबाहो प्रोक्तो वायुः प्रदेशिनी । अनामिका तथा सूर्यः कनिष्ठा चन्द्रमाः स्मृतः ॥ प्रजापतिर्मध्यमा तु ज्ञेया भरतसत्तम ।" इति अप० ४१ ।

"यमः—"तावन्नोपस्पृशेद्विद्वान्यावद्वामेन संस्पृशेत् ।" जलमिति शेषः । "वामे हि द्वादशादित्या वरुणाश्चदशेश्वरः ।" व्यासः—अनुद्धृताभिराचामेत्कामं तिष्ठन्नपि द्विजः । आतुरश्चेच्छयानोऽपि पश्यन्भीतो दिशस्तथा" । स्मृत्यन्तरं—"ताम्राश्मनारिकेलाब्जवेणुकालाबुचर्मभिः । स्वहस्तेनापि चाऽऽचामेत्सर्वदा शुचिरेव सः॥" न केवलमनिन्दितेन स्वहस्ते नेत्यपिशब्दार्थः ।" इति अप० ४१ ।

[1] आ. १९ । २ क. कराग्र ।

गतानि घ्राणादीनि अद्भिरुपस्पृशेत् । अद्भिर्द्रव्यान्तरासंसृष्टाभिः । पुनरद्भिरित्य[1]ब्ग्रहणं प्रतिच्छिद्रमुदकस्पर्शनार्थम् । पुनस्ता एव विशिनष्टि—प्रकृतिस्थाभिः गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः फेनबुद्बुदरहिताभिः । तुशब्दाद्वर्ष[2]धारागतानां शूद्राद्यावर्जितानां च निषेधः ॥ २० ॥

**हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।**
**शुद्ध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥**

हृत्कण्ठतालुगाभिरद्भिर्यथाक्रमेण द्विजातयः शुद्ध्यन्ति । *स्त्री च शूद्रश्च अन्ततः अन्तेन तालुना [3]स्पृष्टाभिरपि । सकृदिति वैश्याद्विशेषः । चशब्दादनुपनीतोऽपि ॥ २१ ॥

**†स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥**

‡प्रातः स्नानं यथाशास्त्रम् अब्दैवतैर्मन्त्रैः "आपो हि ष्ठा"[4] इत्यमेवादिभिः मार्जनं, प्राणसंयमः प्राणायामः वक्ष्यमाणलक्षणः, ततः सूर्यस्य चाप्युपस्थानं [5]सौरेण मन्त्रेण, गायत्र्याः "तत्सवितुर्वरेण्यम्" इत्यादेः[7] प्रतिदिवसं जपः कार्यः । कार्यशब्दो यथालिङ्गं प्रत्येकमभिसम्बध्यते ॥ २२ ॥

**§गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।**
**प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥**

---

* "स्त्रीशूद्रौ तु मुखस्यान्तेनौष्ठद्वयेनैकवारं स्पृष्टाभिः । तथा चाऽऽचमनीयं यथाहृदयङ्गमा भवन्ति ।" इति अप० ४० ।

† उपनीतस्य क्रमप्राप्तां मध्यन्दिनसन्ध्यां स्नानसहितामाह...स्नानमिति ।

‡ "१—स्नानमाप्लावनम्, २ अब्दैवतैः "आपो हिष्ठेत्येवमादिभि; मार्जनं स्वशिरःप्रोक्षणं, ३ प्राणायामः ४ सूर्योपस्थानं, ५ गायत्रीजपश्चेति प्रत्यहं मध्यन्दिने कार्यम्" इति अप० ४२ ।

§ "प्राणायामस्वरूपमाह—गायत्रीमि ।

१ क. पुनरद्भिरिति ग्रहणं । २ क. वर्षाधा । ३ क. स्पृष्टाभिः । सकृ । ४ ऋ० अ. ७. अ. ६. व. ५. । ५ क. सौरमन्त्रेण । ६ ऋ० अ. ३. अ. ४. व. १०. ऋ० १०. ७ ग त्यादिकाया ।

गायत्रीं* पूर्वोक्ताम् "आपो ज्योतिः" इत्यादिना शिरसा संयुक्ताम् उक्तव्याहृतिपूर्विकां प्रतिव्याहृति प्रणवेन संयुक्ताम् ॐ भूः, ॐ भुवः ॐ स्वः इति त्रीन् वारान् मुखनासिकासंचारिवायुं निरुन्धन्मनसा जपेदित्ययं सर्वत्र प्राणायामः ॥ २३ ॥

**प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।**
**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । २४ ॥**
**सन्ध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।**

प्राणायामं† पूर्वोक्तं कृत्वा तृचेनाब्दैवतेन पूर्वोक्तेनात्मानमद्भिः सम्प्रोक्ष्य सावित्रीं जपन्प्रत्यक्सन्ध्यामासीत, अर्थात्प्रत्यङ्मुख इति लभ्यते । आ तारकोदयात् तारकोदयावधि, प्राक्सन्ध्यां प्रातः समये । एवं पूर्वोक्तविधिमाचरन् प्राङ्मुखः सूर्योदयावधि तिष्ठेत् । अहोरात्रयोः सन्धौ या क्रिया विधीयते सा सन्ध्या । तत्र अहः संपूर्णोऽदित्यमण्डलदर्शनयोग्यः कालः, तद्विपरीता रात्रिः । यस्मिन्काले खण्डमण्डलस्योपलब्धिः स सन्धिः ॥ २४ ॥

---

*"तत्सवितुरिति गायत्री । अस्या एव तैत्तिरीयारण्यके प्राणायामत्वेनाऽऽम्नानात् । ॐ आपो ज्योतिरित्यादिकेन शिरसा सार्द्धं व्याहृतिपूर्विकां प्रतिप्रणवसंयुक्तां त्रिर्जपेत् । एष प्राणसंयमः प्राणायाम इत्यर्थः । भूराद्याः सत्यान्ताः सप्त पूर्वा यस्याः सा तत्पूर्विका । प्रतिमन्त्रं प्रणवः प्रतिप्रणवः । मन्त्राश्च व्याहृतयः सावित्री शिरश्च । शिरसोऽन्तो यः प्रणवः स शिरोन्तर्मन्त्रान्तर्गत एव" इति अप० ४४.

† "यथाविधि प्राणानायम्य विधिवत् "आपोहिष्ठा" इति तृचेन आत्मानं संप्रोक्ष्य प्रत्यङ्मुखः सावित्रीं पूर्ववज्जपंस्तारकोदयं यावन्नद्यादावासीत । उदयो दर्शनयोग्यता ।

"प्राणायामप्रोक्षणगायत्रीजपा एवंशब्देन गृहीताः । प्राङ्मुखः सावित्रीं जपन्प्रातः सन्ध्यां सूर्यदर्शनकालं यावत्तिष्ठेत् । संध्यामिति कालाध्वनोरिति द्वितीया । तेन सन्ध्याकालः सर्वोऽपि जपेन व्यपनेयः । अत्र च "ॐ पूर्वां गायत्रीं जपेत्" इति श्रुतिविरोधपरिहारार्थं जप एव प्राधान्येन विधेयः । स्थानासने तु तदङ्गतया । तेन जपन्नासीतेति आसीनो जपेदित्यर्थः" इति अप० ४९ ।

१ क. त्र्युचेन । २ ख. प्रोक्ष्य । ३ क. पूर्वोक्तं । ४ क. मण्डलखण्डस्यो ।

अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपि* ॥ २५ ॥

ततः सन्ध्योपासनानन्तरं द्वयोः सन्ध्ययोरग्निकार्यं अग्नौ कार्यं समित्प्रक्षेपादि यत्तत्कुर्यात् स्वगृह्योक्तेन विधिना ॥ २५ ॥

†ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।

‡ तदनन्तरं वृद्धान्गुरुप्रभृतीनाभिवादयेत् । कथम् ? असौ देवदत्तशर्माहमिति स्वनाम कीर्तयन् ।

गुरुं चैवाप्युपासीत§ स्वाध्यायार्थं समाहितः ॥ २६ ॥

आहूतश्चाप्यधीयीत लब्धं तस्मै [1]निवेदयेत् ।

हितं [2]तस्याऽऽचरेन्नित्यं [3]मनोवाक्कायकर्मभिः‖ ॥ २७ ॥

तथा गुरुं [4]वक्ष्यमाणलक्षणमुपासीत तत्परिचर्यापरस्तदधीनास्तिष्ठेत् । स्वा-

---

* " तारकोदयात्सूर्यदर्शनाच्चोर्ध्वं सन्ध्याकाले प्रत्यासन्न एव काले स्वगृह्योक्तविधिना समिद्धोमं कुर्यात् ।" इति अप० ५१ ।

† " ज्यायांसमभिवादयन् " इति चोक्तम् । तत्र " कियता कालेन ज्यायान्भवतीत्यपेक्षिते मनुराह—" दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् । त्र्यब्दपूर्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु " पुरवासिनो दशभिर्वर्षैः पूर्वः सखैव भवति । ततोऽधिकवर्षस्तु ज्यायान् । कलाभृतां शिल्पिनां गायकादीनां पञ्चाब्दपूर्वः सखा । ततोऽधिको ज्यायान् । त्र्यब्दापेक्षमल्पत्वम् । श्रोत्रियाणां त्र्यब्दपूर्वः सखा । ततोऽधिको ज्यायान् । तस्य च तारतम्यं गुणतारतम्यापेक्षम् । अपिशब्द एवकारार्थः । अप० ५३.

‡ " अग्निकार्यं कृत्वाऽसौवहमितिब्रुवञ्ज्यायसोऽभिवादयेत् । असावित्यस्य स्थाने प्रथमान्तं नाम कीर्तयेत् । तथाऽभिवादय इत्युक्त्वा वा । तदाहमनुः—"अभिवादात्परं विप्रो ज्यायांसमभिवादयन्। असौ नामाऽहमस्मीति स्वनाम परिकीर्तयेत् ॥ भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने।"अतश्चैवं प्रयोगो भवति—अभिवादये चैत्रनामाऽहमस्मि भो इति अप०५२.

§ " अप्युपासीत स्वाध्यायप्राप्त्यर्थं परिचरेत् । गुरुमित्यनुवर्तते । समाहितोऽनन्यमनाः" इति अप० ५५.

‖ " मानसवाचिककायिकव्यापारैरतिहितकारी. गुरोरप्रतिलोमयन्वाचेति " इति अप० ५५.

---

१ ग· लब्धं चास्मै। अप० लब्धंचास्मै २ अप० हितं चास्या । ३ अयव्मतोवचनकर्मभिः ।
४ क. वक्ष्यमाणगुण ।

ध्यायार्थमध्ययनसिद्धये समाहितोऽविक्षिप्तचित्तो भवेत्। आहूतश्चाप्यधीयीत गुर्वाहूत एवाधीयीत न स्वयं गुरुं[1] प्रेरयेत। यच्च लब्धं तत्सर्वं गुरवे निवेदयेत्। तथा तस्य गुरोर्हित* माचरेत् नित्यं सदा मनोवाक्कायकर्मभिः न प्रतिकूलं कुर्यात्। अपिशब्दाद्गुरुदर्शने गौतमोक्तं† कण्ठप्रावृतादि वर्जयेत्॥ २६ ॥ २७ ॥

‡कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः[2]।
अध्याप्या[3] धर्मतः साधुशक्ताप्तज्ञानवित्तदाः॥ २८ ॥

कृतमुपकारं न विस्मरतीति कृतज्ञः। §अद्रोही दयावान्। मेधावी ग्रन्थग्रहणधारणशक्तः शुचिः बाह्याभ्यन्तरशौचवान्। कल्यः आधिव्याधिरहितः। अनसूयको

* "हितमायतावनुकूलमिति अप० ५५.

† "गौतमः—वर्जयेन्मधुमांसं गन्धमाल्यं दिवास्वप्नाञ्जनाभ्यञ्जनोपानच्छत्रकामक्रोधलोभमोहवाद्यवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानि। गुरुदर्शने कण्ठप्रावृतावसक्थिकापादप्रसारणानि। निष्ठ्यूतहसितविजृम्भितावस्फोटनानि च। स्त्रीप्रेक्षणालम्बने मैथुनशङ्कायाम्। द्यूतहीनसेवामदत्तादानं हिंसामाचार्यतत्पुत्रतद्दीक्षितानि च। शुक्ता वाचो मद्यं नित्यं ब्राह्मणः" इति। अत्र स्नानं भोगार्थम्। भयं परं प्रति। कण्ठप्रावृतं कण्ठप्रावरणम्। अवसक्थिका जानुनोरुपरि करबन्धः। अवस्फोटनम् अङ्गुल्याद्यङ्गस्फोटनम्। हीनसेवा मूत्रपुरीषावमार्जनादिका। तां गुरोरपि वर्जयेत्। "अङ्गानि प्रक्षालयीताशुचिलिप्तानि गुरोरपि" इति दर्शनात्। शुक्ता वाचः परोद्वेगकराणि वाक्यानि। मद्यं प्रसिद्धम्। एतानि ब्रह्मचारीवर्जयेदिति सम्बन्धः। मद्यं नित्यं ब्राह्मणः। नित्यमिति वचनान्मद्यं कृतयुगादावपि ब्राह्मणेन वर्ज्यम्। क्षत्रियवैश्याभ्यां तु कलावेव।" इति अप० ६३.

‡ प्रसङ्गाद्गुरुं प्रत्यध्याप्यानाह...कृतज्ञेति अप० ५६.

"कल्याणसूचकाः" इति च पाठान्तरम्। अपरार्कस्तु—"कल्याणसूचकः शुभलक्षणः। कल्यानसूयका इति तु पाठे कल्यो नीरोगः। अनसूयकोऽसूयारहितः। गुणेषु दोषाविष्करणमसूया।" (अप० ५६.)

§ "अद्रोही दयावान् अनपराधी"। अप० ५५।

---

१ क. स्वयं प्रेर। २ ख. कल्पानसू. अप० शुचिकल्याणसूचकाः। ३ अप० अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्मतस्त्विमे॥

दोषानाविष्करणेन गुणाविष्करणशीलः । साधुः वृत्तवान् । शक्तः* शुश्रूषायाम् । आप्तो बन्धुः । ज्ञानदः विद्याप्रदः । वित्तदः [१]अपणपूर्वकमर्थदाता । एते गुणाः समस्ता व्यस्ताश्च यथासंभवं द्रष्टव्याः । [२]एते च धर्मतः शास्त्रानुसारेणाध्याप्याः ॥ २८ ॥

†दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।

[३]यथा च स्मृत्यन्तरप्रसिद्धं पालाशादिदण्डं अजिनं च [४]कौष्णादि उपवीतं कार्पासादिनिर्मितं मेखलां च मुञ्जादि ब्रह्मचारी धारयेत् ॥ २९ ॥

**ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**

**आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।**

**ब्राह्मणक्षत्रियविशां [५]भैक्षचर्या[६] यथाक्रमम् ॥ ३० ॥**

पूर्वोक्तदण्डादियुक्तो ब्रह्मचारी ब्राह्मणेष्वनिन्द्येषु अभिशस्तादि[७]व्यतिरिक्तेषु स्वकर्मनिरतेषु [८]भैक्षं‡ चरेत् । आत्मवृत्तये आत्मनो जीवनाय न परार्थम् आचार्यतद्भार्यापुत्रव्यतिरेकेण । निवेद्य गुरवे तदनुज्ञातो भुञ्जीत । "तदभावे तत्पुत्रादौ" इति नियमात् । अत्र च ब्राह्मणग्रहणं संभवे सति [९]नियमार्थम् । यत्तु सार्ववर्णिकं [१०]भैक्षांचरणमिति तत् त्रैवर्णिकप्राप्त्यर्थम् ॥ यच्च "चातुर्वर्ण्यं चरेद्भैक्षम्" इति, तदापद्विषयम् । कथं भैक्ष[११]चर्या कार्या ?—आदिमध्यावसानेषु

* शक्तः ग्रहणादिसमर्थः, आप्तः अप्रतारकः, वित्तदः गुर्वर्थप्रदाता, ज्ञानदः ज्ञानहेतुग्रन्थप्रदः...एते धर्मतः धर्मानतिक्रमेण गुरो रध्याप्याभवन्ति । अर्थप्रदं प्रति अनेनाध्यापनं नाधर्मः । तस्य वृत्तित्वेन विहितत्वात् । भृतिसम्प्रतिपूर्वकमध्यापनं प्रतिषिद्धम् । इति अप० ५६.

† "उपनीतं प्रत्याह—दण्डाजिनेति" दण्डादीनि स्वकार्यधारणीयानि । तत्र दण्डस्यकार्यम् अवलम्बनं गवादिनिवारणं तमोवगाहमप्सु प्रवेशनमित्यादि । अजिनोपवीतमेखलानामदृष्टम् । अतस्तानिनित्यं धार्याणि । अप० ५७.

‡ भैक्षं प्राप्तं चरेत् । भिक्षितमन्नं भिक्षा तासांसमूहो भैक्षम् । अप० ५९.

---

१ ख. अर्पण । ख. र्थप्रदा । क. पूर्वमर्थ । २ क. ग. एतैव धर्मशास्त्रा । ३ ख. क. तथा स्मृतं । ४ ख. ग. च कार्ष्णाजिनादि । ५ क. ग. भैक्ष्यं । ६ क. ग. भैक्ष्यचर्या । ७ ख. स्तादिदोषरहितेषु । ८ क. ग. भैक्ष्यं । ९ ख. सति न नियं । १० क. ग. भैक्ष्यचर । ११ क. चर्या । आदिमध्या ।

भवच्छब्दोपलक्षिता भवति भिक्षां देहि, भिक्षां भवति देहि, भिक्षां देहि भवति, इत्येवं वर्णक्रमेण भैक्षचर्या कार्या ॥ ३० ॥

**कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।**
**[1]आपोशानक्रियापूर्वं* सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥**

पूर्वोक्तेन विधिना भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया कृताग्निकार्यो वाग्यतो मौनी अन्नं सत्कृत्य अकुत्सयन्ननिन्दन् आपोशानक्रियापूर्वम् "अमृतोपस्तरणमसि" [2]इत्यादिकं कृत्वा भुञ्जीत । अत्र पुनरग्निकार्यग्रहणं सायंकाले कथञ्चिदकृताग्निकार्यस्य कालान्तरविधानार्थं न पुनस्तृतीयप्राप्त्यर्थम् ॥ ३१ ॥

**ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।**
**ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥**

†ब्रह्मचर्ये स्थितः एकान्नं नाद्यादनापदि व्याध्याद्यभावे । ब्राह्मणः पुनः श्राद्धेऽभ्यर्थितः सन्काममश्नीयात् व्रतमपीडयन् मधुमांसपरिहारेण । अत्र ब्राह्मणग्रहणं क्षत्रियादेः श्राद्धभोजनव्युदासार्थम् । "राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते" इति स्मरणात् ॥ ३२ ॥

**मधुमांसाञ्जनो[3]च्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।**
**भास्करालोकनाश्लील[4]परिवादादि वर्जयेत् ॥ ३३ ॥**

मधु क्षौद्रं न मद्यं, तस्य "नित्यं ब्राह्मणो मद्यं वर्जयेत्" इति निषेधात्। मांसं छागादेरपि, अञ्जनं घृतादिना गात्रस्य कज्जलादिना चाक्ष्णोः, [5]उच्छिष्टमगुरोः,

*"उपनयनकाले आपोशानप्रैषोक्ता क्रिया आपोशानक्रिया। भैक्षादेकदेशहोमोऽन्नाग्निकार्यम्। तथा चाऽऽपस्तम्बः—"प्रोक्षिताद्भैक्षादग्नौ हुत्वा भुञ्जीत।" अतश्चाऽऽचार्य (र्यो) सन्निधावेतदग्निकार्यम्। सन्निहिते त्वाचार्ये अग्निकार्यस्थाने भैक्षमाचार्यो भोजयितव्य इति तेनैवोक्तम् "हविषा संस्तुतम्" इत्यादिना" इति अप० ६०.

†"ब्रह्मचारी ब्राह्मणश्चेत्तदाऽभ्यर्थितः सन् एकान्नमनापद्यपि भुञ्जीत । स चेच्छ्राद्धे भुञ्जीत तदा व्रतपीडाकरं मधुमांसादि वर्जयित्वाऽश्नीयात् ।" इति अप० ६१.

१ क. अपोशान । ख. अपोशन । २ क. ख. दिकं पूर्वं कृत्वा । ३ अप० च्छिष्टं शु । ४ अप० परिवादाश्च वर्जे । ५ ख. उच्छिष्टं गुरोः ।

शुक्तं निष्ठुरवाक्यं[1] नान्नरसः तस्याभक्ष्यप्रकरणे निषेधात्, *स्त्रियमुपभोगे, प्राणिहिंसनं जीववधः, भास्करस्योदयास्तमयावलोकनम्[2], अश्लीलमसभ्यभाषणम्[3], परिवादः सदसद्रूपस्य परदोषस्य ख्यापनम्, आदिशब्दात्स्मृत्यन्तरोक्तं गन्धमाल्यादि गृह्यते, एतानिब्रह्मचारी वर्जयेत् † ॥ ३३ ॥

गुर्वादिलक्षणमाह[4]—

‡स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय §ददद्वेदमाचार्यः|| स उदाहृतः ॥ ३४ ॥

योऽसौ गर्भाधानाद्या उपनयनान्ताः ¶क्रिया यथाविधि कृत्वा वेदमस्मै ब्रह्मचारिणे प्रयच्छति स गुरुः । यः पुनरुपनयनमात्रं कृत्वा वेदं ददाति स आचार्यः ॥३४॥

* "स्त्रीशब्देन स्त्रीविषये प्रेक्षणालम्बने लक्ष्येते । तदाहगौतमः—"स्त्रीप्रेक्षणालम्बने मैथुनशङ्कायाम्" इति अप० ६२ ।

† प्राक् २८ तमश्लोकव्याख्यायां गौतमोक्तिर्द्रष्टव्या ।

‡ "तथा च देवलः—"उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥ वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः । माता माता-मही गुर्वी पितुर्मातुश्च सोदरा ॥ श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः । इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा॥" इति । तदुपचार इति मन्तव्यम् । अत्र च गुरुवत्तेषु वर्तितव्यमिति फलम् । अत एवानुवर्तनमाह—"अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः" इति अप० ६५.

§ "वेदशब्देनात्र 'विद्यान्तराण्यपि संगृह्यन्ते । तथा च मनुः—उपनीय गुरुः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते"॥ (२.६९.) कल्पशब्देनेह व्याकरणादीन्यङ्गानि मीमांसा न्यायविस्तराश्च प्रतिपाद्यन्ते । कल्पो वेदार्थं कल्पयति । तथा च व्यासः—"न वेदपाठमात्रेण सन्तोषं कारयेद्द्विजः । पाठमात्रावसानस्तु पङ्के गौरिव सीदति॥" । पाठमात्रावसानः अर्थानभिज्ञ इत्यर्थः । इति अप० ६५.

|| "यस्माद्धर्मानाचिनोति स आचार्यः ।" आप० ध० १.१.१.१४.

¶ "गर्भाधानाद्या उपनयनान्ताः क्रियाः संस्कारिका यो यस्य करोति स तस्य गुरुः । एतावदेव गुरुलक्षणम् । तत्प्रसङ्गाद्ब्राह्मणं प्रति वेदमस्मै प्रयच्छतीति विध्यन्तरम् । निषे-

---

१ क. वाक्ये नान्नरसः । २ क. भास्करस्य चोदयास्तमयादावालो । ग. भास्करस्यावलोकनमुदितास्तमितयो नित्यमालोकनम् । ३ ख. ग. ममत्यभाषणम् । ४ ख. इदमवतरणं नास्ति ।

एकदेशमुपाध्याय *ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ ३५ ॥

वेदस्यैकदेशं† मन्त्रब्राह्मणयोरेकम्, अङ्गानि वा, योऽध्यापयति स उपाध्यायः । यः पुनः पाकयज्ञादिकं वृतः करोति स ऋत्विक् । एते च गुर्वाचार्योपाध्यायर्त्विजो यथापूर्वं यथाक्रमेण मान्याः पूज्याः । एभ्यः सर्वेभ्यो माता गरीयसी पूज्यतमा ॥३५॥

वेदग्रहणार्थं ब्रह्मचर्यावधिमाह ‡—

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
§ग्रहणान्तिकमित्येके ||केशान्तश्चैव षोडशे ॥ ३६ ॥

कादिक्रियानुष्ठानस्य वेददानस्य च अर्थप्राप्तपौर्वापर्यानुवादकः क्त्वाप्रत्ययः । परमार्थतस्तु द्वे एवैते वाक्ये । अन्यथा क्षत्रियादेः स्वसुतं प्रति गुरुत्वं न स्यात् । वेददातृत्वाभावात् । इष्यते च क्षत्रियादेरपि स्वसुतं प्रति गुरुत्वम् । अन्यथा क्षत्रियादिसुतस्य पितृभार्यां गच्छतो गुरुतल्पगत्वं न स्यात् । अत एव मनुर्गर्भाधानादिक्रियाकर्तृत्वं वेददाननिरपेक्षं गुरुलक्षणमाह—" निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥" (२.१४२.) इति अप० ६४.

* " यो यज्ञाधिकारिणा स्वयज्ञसिद्ध्यर्थं परिक्रीतः सन् यज्ञकृद्भवति स तस्य ऋत्विगित्युच्यते । मनुः—" अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते"। (२.१४३.)" इति । स च त्रिविधः—यथाऽऽह हारीतः—" क्षीरहोताऽऽहार्यवृतो विशेषवृतः" इति। लक्षणान्याह—"यो यस्याग्नीनादत्ते स तस्य क्षीरहोता"। अस्यार्थः—अग्न्याधेयसम्बन्धिनामृत्विजां मध्ये यः कश्चिदग्निहोत्रे ऋत्विग् भवति स क्षीरहोतेति । तस्यालाभे यमन्यं नित्यार्थं वृणीते स आहार्यवृतः । अथ यमन्यमुत्तरोत्तरेषु क्रतुषु वृणीते स विशेषवृतः" । ऋत्विग्लक्षणमिह प्रासङ्गिकम् । तस्येहानुपयोगात् ।" इति अप० ६६.

† " तथा च मनुः—" एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" (२.१४१.) इति । अप० ६५.

‡ " ब्रह्मचर्यकालस्य परिमाणमाह–प्रतिवेदमिति अप० ६७.

§ " मनुः—" षाट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम् । तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा " (३.१.) इति ।

|| मनुः—" केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्य-

यदा विवाहासंभवे[1] "वेदानधीत्य वेदौ वा वेदं वा" इति मथाक्रमं[2] प्रवर्तते तदा प्रतिवेदं वेदंवेदं प्रति ब्रह्मचर्यं पूर्वोक्तं द्वादशवर्षाणि कार्यम्, । अशक्तौ पञ्च । ग्रहणान्तिकमित्येके वर्णयन्ति । केशान्तः पुनः गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कर्तव्यम् । एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम्। उत्तरास्मिन् पक्षे यथासंभवं[3] द्रष्टव्यम् । राजन्यवैश्ययोस्तूपनयनकालवत् द्वाविंशे चतुर्विंशे वा यथा संभवं द्रष्टव्यम् ॥ ३६ ॥

उपनयनकालस्म परमावधिमाह—

**आ[4] षोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।**
**ब्रह्मक्षत्त्रविशां काल औपनायनिकः परः ॥ ३७ ॥**

**अत ऊर्ध्वं[5] पतन्त्येते सर्वधर्मबहिष्कृताः[6] ।***
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥**

आ षोडशाद्वर्षात्षोडशवर्षं यावत् । आ द्वाविंशात्[7], आचतुर्विंशाद्वर्षात्, ब्राह्मणक्षत्रियविशाम्, औपनायनिकः उपनयनसंबन्धी परः कालः । नातः परमुप[8]-नयनकालोऽस्ति किं तु अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः सर्वधर्मेष्वनाधिकारिणो भवन्ति । सावित्रीपातिताः[9] पतितसावित्रीका भवन्ति सावित्रीदानयोग्या न भवन्ति। व्रात्याः संस्कारहीनाश्च व्रात्यस्तोमात्क्रतोर्विना । कृते तु तस्मिन् उपनयनाधिकारिणो भवन्ति ॥ ३७ ॥ ३८ ॥

---

स्य द्व्यधिके ततः॥" इति । जन्मादिरेषा वर्षसंख्या, गर्भादिश्चेद्विवक्षिता स्यात्तदा गर्भषोडश इत्यवक्ष्यत्। केवलसंख्योपादाने तु जन्मैवावधिः । यथाऽष्टमे चाब्दे इति" इति अप० ६७.

* धर्मशब्दो द्विजातिधर्माभिप्रायः न वर्णधर्मविषयः । व्रात्यानां वर्णत्वानपायात् ।" इति अप० ६८. मिता० १.१५.

१ ख. भवेन वेदा । २ क. ख. यथाक्रममिति नास्ति । ३ ग. यथासंभवमिति नास्ति । ४ क. आषोडशाद्वाविंशाच्चचतु । ५ अप० ऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः । ६ क. बहिःकृताः । ७ क. आ विंशात् । ८ क. पर उप । ९ क. सावित्रीपतिता' इत्यारभ्य संस्कारहीनाश्चेत्यन्तं नास्ति ।

"आद्यास्त्रयो द्विजाः"[1] इत्युक्तम् । तत्र हेतुमाह[2]—

*मातुर्यदग्रे जायन्ते †द्वितीयं [3]मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्त्रियविशास्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥

मातुः सकाशात्प्रथमं जायन्ते, मौञ्जिबन्धनात्[3] द्वितीयं जन्म यस्मात्[4]तस्मादेते ब्राह्मणक्षत्त्रियवैश्या द्विजा उच्यन्ते ॥ ३९ ॥

वेदग्रहणाध्ययनफलमाह[5]—

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां ‡निःश्रेयसकरः परः ॥ ४० ॥

यज्ञानां श्रौतस्मार्तानां तपसां कायसन्तापरूपाणां चान्द्रायणादीनां शुभानां च कर्मणाम् उपनयनादिसंस्काराणाम् अवबोधकत्वेन वेद एव द्विजातीनां परो निःश्रेयसकरः मोक्षकरो नान्यः । वेद एवेति तन्मूलत्वेन स्मृतेरप्युपलक्षणार्थम् ॥ ४० ॥

"व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः । तेन चोद्दालकव्रतादिना कृतप्रायश्चित्ता उपनीता धर्माधिकारिणो भवन्ति । संव्यवहार्याश्चान्येषाम् । यदाह मनुः—"नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मान्यौनांश्चसम्बन्धानाचरेद्ब्राह्मणः सह" इति अप० ६८ ।

* "अत्र द्विजाति धर्मबहिष्कृतत्वे हेतुमाह --मातुर्यदग्र इति ।" इति अप० ६८.

† "अत्र द्वितीयमिति क्रियाविशेषणम् । अतोऽनुपनीतत्वाद्व्रात्या न द्विजाः । तस्माद्द्विजातिधर्मानधिकारस्तेषामुक्तः ।" इति अप० ६८. कौ पुनर्द्वितीये जन्मनि मातापितराविति चेत् सावित्री माता, आचार्यः पितेति स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ ( शङ्खः—१. ७. )

‡ "यज्ञादिभ्यः कर्मभ्यो वेदस्य निर्द्धारणमनुपपन्नमिति वेदशब्देन वेदाध्ययनं लक्ष्यते । तस्य च युक्तं यज्ञादीनां मध्ये परत्वम् निःश्रेयसकरत्वान्निःश्रेयसकरबोधकत्वाच्च । तथा च मनुः—"आ ह वै स नखाग्रेभ्यः परमं तप्यते तपः । यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥" इति अप० ६९.

१ आ० १०. । २ ख. इदमवतरणं नास्ति । ३ ख. ग. मौञ्जीब । ४ ग. यस्मादिति नास्ति । ५ क. ग्रहणाध्यय । ख. इदमवतरणं नास्ति ।

ग्रहणाध्ययनफलमुक्त्वेदानीं काम्यव्रतब्रह्मयज्ञाध्ययनफलमाह—

मधुना पयसाचैव स देवांस्तर्पयेद्द्विजः ।
पितॄन्मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ॥ ४१ ॥

यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥

स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥

योऽन्वहम् ऋचोऽधीते स मधुना पयसा च देवान् पितॄंश्च मधुघृताभ्यां तर्पयति । यः पुनः शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान्पितॄंश्च मधुघृताभ्यां प्रीणाति[2] । यस्तु सामान्यन्वहमधीते स सोमघृतैर्देवान् पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति । ऋगादिग्रहणं सामान्येन ऋगादिमन्त्रप्राप्त्यर्थम् ॥ ४१ ॥ ४२ ॥ ४३ ॥

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन्[3] ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥

वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ॥ ४५ ॥

मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४६ ॥

ते तृप्ता स्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।

---

१ क. व्रतयज्ञा । ग. काम्यब्रह्म । २ ख. भ्यां तर्पयति । ३ क. रसः पठेत् ।

यः पुनः शक्तितोऽन्वहम् अथर्वाङ्गिरसोऽधीते स देवान्मेदसा पितॄंश्च मधुसर्पिर्भ्यां तर्पयति। यस्तु वाकोवाक्यं प्रश्नोत्तररूपवेदवाक्यं[1], पुराणं ब्राह्मादि, चकारान्मानवादिधर्मशास्त्रम्, *नाराशंसीश्च रुद्रदैवत्यान्मन्त्रान्, गाथाश्च यज्ञगाथेन्द्रगाथाद्याः, इतिहासान्महाभारतादीन्, विद्याश्च वारुण्याद्या विद्याः, शक्तितोऽन्वहमधीते स मांसक्षीरौदनमधुसर्पिर्भिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां तर्पयति ॥ ४४ ॥ ४५ ॥ ४६ ॥

ते पुनस्तृप्ताः सन्तो देवाः पितरश्च एवं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति ।

**यं यं क्रतुमधीते च तस्य तस्याप्नुयात्फलम् ॥ ४७ ॥**

**त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।**
**तपसश्च[2] परस्येह नित्यं स्वाध्यायवान् द्विजः ॥ ४८ ॥**

यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते तस्यतस्य क्रतोः फलमाप्नोति। तथा वित्तपूर्णायाः पृथिव्याः त्रिः त्रिवारं दानस्य यत्फलं परस्य तपसश्चान्द्रायणादेर्यत्फलं तदपि नित्यं †स्वाध्यायवान् प्राप्नोति । नित्यग्रहणं काम्यस्यापि[3] सतो नित्यत्वज्ञापनार्थम्‡ ॥ ४७ ॥ ४८ ॥

एव सामान्येन §ब्रह्मचारिधर्मानभिधायाधुना नैष्ठिकस्य विशेषमाह—

**नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।**

---

* "नाराशंस्यः । ऋग्वेदखिलग्रन्थाधीताः "इदं जना उपश्रुत" इत्याद्यास्तिस्र ऋचः । ...विद्याः मधुविद्याद्या। इति अप० ७०. सर्वैः काम्यमानैः फलैस्तर्पयन्ति इति अप० ७०.

† नित्यं स्वाध्यायवान् अनवरतस्वाध्यायवान् इति अप० ७०.

‡ "मधुना पयसेत्यादीनां प्रत्यक्षैव श्रुतिर्मूलम् । सा च ब्रह्मयज्ञाध्ययनविध्यर्थवादभूतेति ब्रह्मयज्ञविधिरत्रकल्प्यः । तेन विनाऽर्थवादानर्थक्यात् । स च ब्रह्मचारिणोऽपीति तत्प्रकरणे वाक्यारम्भः ।" इति अप० ७०.

§ "द्विविधः खलु ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च । तत्रोपकुर्वाणस्य धर्मा उक्ताः । नैष्ठिकस्येदानीमाह—नैष्ठिक इति अप० ७०.

---

१ क. प्रश्नोत्तर वेदवाक्यम् २ ख. धीतेऽसौ त । २ ख. तपसो यत्पर । ३ क. कामस्यापि ।

तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥
अनेन विधिना देहं साधयन्विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥ ५० ॥

[*] अनेनोक्तप्रकारेणात्मानं निष्ठाम् उत्क्रान्तिकालं नयतीति नैष्ठिकः । स यावज्जीवमाचार्यसमीपे वसेत् न वेदग्रहणकालोत्तरं[2] स्वतन्त्रो भवेत् । तदभावे तत्पुत्रसमीपे, तदभावे तद्भार्यासमीपे, तदभावे वैश्वानरेऽपि । [†] अनेनोक्तविधिना देहं साधयन् क्षपयन् विजितेन्द्रियः इन्द्रियजये विशेषप्रयत्नवान् ब्रह्मचारी ब्रह्मलोकममृतत्वमाप्नोति कदाचिदिह न पुनराजायते[3] ॥ ४९ ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम् ॥

* "उपकुर्वाणकब्रह्मचार्याश्रमं यमिच्छेत्तमावसेत् । तत्र यदि ब्रह्मचर्याश्रममिच्छेत्तदा नैष्ठिकब्रह्मचारी भवेत् । निष्ठा शरीरपातः, तदवधिके ब्रह्मचर्ये सङ्कल्पः कृतो येन स नैष्ठिकब्रह्मचारी" इति अप० ७१.

† "अनेन पूर्वोक्तेन ब्रह्मचर्यचरणेन देहं देहवन्तमात्मानं साधयन् ब्रह्मप्राप्तियोग्यं कुर्वन् विजितेन्द्रियो वशी चतुर्मुखलोकमवाप्नोति नेह संसारे पुनराजायते। अपुनरावृत्तिलक्षणं फलं ब्रह्मोपासकस्य सतो भवति न पुनः केवलंकर्मणः । तदुक्तमाश्रमान्प्रकृत्य छान्दोग्ये— "सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति । अस्यार्थः—सर्वे एते ब्रह्मस्कन्धाश्चत्वारोऽप्याश्रमिणः पुण्यलोका भवन्ति । एषां मध्ये यो ब्रह्मसंस्थो ब्रह्मनिष्ठः सोऽमृतत्वमपुनरावृत्तिलक्षणमेतीति" इति अप० ७१.

१ ख. चेह जा । २ ग. वेदग्रहणानन्तरं । ३ ख. पुनर्जायते ।

# अथ विवाहप्रकरणम्—२

य: पुनर्विवाह्यस्तस्य[1] विवाहार्थं स्नानमाह—

**गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया[2] ।**

**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥**

पूर्वोक्तेन प्रकारेण वेदं मन्त्रब्राह्मणात्मकं, व्रतानि ब्रह्मचारिधर्मान् अनुक्रान्तान्वा, उभयं वा, पारं नीत्वा समाप्य, गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्वा स्नायात्[†] । अशक्तौ[‡] तदनुज्ञया अदत्तवरोऽपि । एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥ ५१ ॥

* "सर्वसाधारणत्वेन ब्रह्मचारिप्रकरणमुक्तम् । अधुनाऽवसरप्राप्ता गृहस्थधर्मा उच्यन्ते । ते च—"अपत्नीको नरो भूप कर्मयोग्यो न जायते । ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽपि वा नृप ॥ पत्नी धर्मार्थकामानां कारणं प्रवरं नृणाम् ।" इत्यादिदर्शनाद्भार्यया विना न भवन्ति । सा च स्नानोत्तरकालभाविनीत्याह—गुरवेत्विति । अप० ७३-७४.

† "स्नातकश्च नवधा भिद्यते, सङ्कल्पभेदात् । यथाऽऽह मनुः—

"सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् । गुर्वर्थपितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः॥ नैवतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभैक्षुकान्" इति अप० ७७.

‡ "यदि भिक्षाटनाद्यशक्तो व्याधिततया राजदैविकाद्यभिभवासमर्थः, तदा वेदं केवलं व्रतान्येव वा केवलानि समाप्य स्नायात् । अत एव विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति त्रैविध्यं स्मर्यते । अतस्तस्य स्नानपरिणयनोत्तरकालमध्ययनसमापनं तदर्थज्ञानं वा । अत एव वक्ष्यति—"कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही" इति प्रक्रम्य—"वेदार्थानधिगच्छेत्तु शास्त्राणि विविधानि च" इति । ......"कथं स्नायादित्याह—गुरवे पूर्वोक्ताय वरमभिलषितं कात्यायनाद्युक्तं—"गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्य" इत्यादि गुर्वर्थाहरणशक्तादि विषयम् । तदन्यादि विषयं—"धान्यं वासांसि शाकं वा गुरवे प्रीतिमहारेत् ।" इत्यादि मन्वादि लक्षितं वा दत्वा तदनुज्ञया वा अदत्तवरोऽपि । अत एव गौतमः—"विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञानस्य वा स्नानम्" इति ।" इति । अप० ७४-७६.

---

१ क. यः पुनर्वैवाह्य । २ अप० स्नायाद्वा तदनुज्ञया ।

स्नानानन्तरं किं कुर्यादत आह—

*अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥

अविप्लुतब्रह्मचर्यः अस्खलितब्रह्मचर्यः लक्षण्यां बाह्यान्तरलक्षणैर्युक्ताम् । †बाह्यानि तनुलोमकेशदशनादीनि मनुनोक्तानि, आभ्यान्तराणि ‡ "अष्टौ पिण्डान्कृत्वा§" इत्याद्याश्वलायनोक्तविधिना[1] ज्ञातव्यानि, पूर्वस्यां रात्रौ [2]गोष्ठ-

* ततः किमित्यत आह—अविप्लुतेति । नैव विप्लुतं ब्रह्मचर्यं यस्य, विप्लुतः स्खलनं, तत्सम्भवे तु प्रायश्चित्ती न त्वविवाह्यः। किन्त्वयं विशेषः—यदि स्नानादधो विप्लुतस्तदाऽवकीर्णि प्रायश्चित्तम् (प्रा० २८०) स्नानादूर्ध्वं यदि पुनस्तदा सामान्यम्। "मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् । व्याधिता चाधिवेत्तव्या ॥" तथा "भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्॥" इत्यादिस्मरणदर्शनात्प्राप्तस्य पुनर्विवाहस्य विप्लुतब्रह्मचर्यत्वापत्तेरप्राप्तिर्मा प्रसाङ्क्षीदित्यत्राविप्लुतब्रह्मचर्य इति पदं पूर्वत्र स्नानकर्तुर्विशेषणीयम्" इति अप० ७७—७८.

†"बाह्यानि कायस्वरादिगतानि । यथाऽऽहमनुः—"अव्यङ्गाङ्गीं साम्यनाम्नीं हंसवारणगामिनीम् । तनुलोमकेशदशनां मृद्वङ्गींचारुभाषिणीम् ॥" इति । लक्षण्यामित्येतस्मादेव विपरीता तु त्याज्या यथा—"नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् । नालोमिकां नातिलोम्नीं न वाचाटां न पिङ्गलाम् ॥" इति ॥ तथा नामतोऽपि वर्ज्या, यथा "देवनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् । ऋक्षवृक्षदीनाम्नीं दारार्थे परिवर्जयेत्॥" इति" इति अप० ७८.

‡"यदा पुनरभ्यन्तराणि सूक्ष्माणि भवन्ति तदाऽऽश्वलायनोक्ता परीक्षा कार्या । तत्र "बुद्धिरूपलक्षणसंयुक्ताम्" इत्युक्त्वा स्वयमेव चोद्यं कृतं "लक्षणानि दुर्ज्ञानानि" इति । तस्योत्तरम्—"अष्टौ पिण्डानिति" इति अप० ७८.

§"अष्टौ पिण्डान् कृत्वा, ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यताम् । यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति (१.५.५) ॥ क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजाभविष्यतीति विद्यात् । गोष्ठात्पशुमती । वेदिपुरीषाद्ब्रह्मवर्चस्विनी अविनिनो ह्रदात्सर्वसम्पन्ना । देवनात्कितवी । चतुष्पथाद्द्विप्रव्राजिनी। इरिणादधन्या। श्मशानात्पतिघ्नी।"॥ (१.५.६.)इति आश्वलायनः। अविदासिह्रदोनाम अशोष्यं ह्रदम्" इति तत्रैव गार्ग्यभट्टनारायणः । यद्यपि सर्वेऽष्वप्युपलब्ध

---

१ ग. विधिना वेदितव्यानि । २ ख. गोष्ठवल्मकिकितव क. ख. ग. गोष्ठवल्मीककितवस्थानह्रदेरिणक्षेत्रचतुायथ ।

वेदिकाकितवस्थानह्रदेरिणचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम् । तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवति,[2] द्वितीये पशुमती[3] तृतीयेऽग्निहोत्रशुश्रूषणपरा[4] चतुर्थे विवेकिनी[5] चतुरा सर्वजनार्जनपरा भवति, पञ्चमे रोगिणी[6], षष्ठे वन्ध्या, सप्तमे व्यभिचारिणी, अष्टमे विधवा भवेदित्याश्वलायनस्मरणात्, स्त्रियं नपुंसक[7]निवृत्तये स्त्रीत्वेन परीक्षिताम्, अनन्यपूर्विकां* दानेनोपभोगेन वा पुरुषान्तराऽपरिगृहीतां, कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीं "यस्यां† मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः" इत्यापस्तम्बस्मरणात् । एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे ।

असापिण्डां समान एकः पिण्डो देहो यस्याः सा सपिण्डा, न सपिण्डा असपिण्डा ताम् । सपिण्डता च एकशरीरावयवान्वयेन भवति । तथा हि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह[8] एकपिण्डता, एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्, एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहा-

पुस्तकेषु क्षेत्रस्य षष्ठीत्वं गोष्ठस्य प्राथम्यं परिदृश्यते । तथा तत्फलेष्वपि अयमेवानुक्रमो गृहीतः। तथाऽपि आश्वलायनसूत्रे "क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यति विद्याद्गोष्ठात्पशुमती" (१.५.६.) इति पाठादत्र क्षेत्रस्य प्राथम्यं गोष्ठस्यद्वितीयत्वं च कल्पित मस्माभिः ॥

*"अनन्यपूर्विकां नैवान्यस्मै या पूर्वं दत्ता । एतच्च वाग्दत्ताविषयं वेदितव्यं, न संस्कृता विषयम्, तस्याः पुनर्भूत्वात्, यथाऽऽह मनुः—"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजोविन्देतदेवरः" इतिं । न च तत्र दानं निवृत्तमितिशङ्कनीयम् । "अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि । न च मन्त्रोपनीतास्यात्कुमारी पितुरेव सा॥" इति वसिष्ठस्मरणात् । एवं बलादपहृतायामपि वेदितव्यम् । "बलादपहृता कन्या मन्त्रैरपि न संस्कृता । अन्यस्मै विधिवद्देया यथा कन्या तथैवसा" इति तेनैवोक्तत्वात् । कान्तां स्नातकस्य कमनीयत्वान्मनोनयनानन्दकारिणीम् ।" इति अप० ७८.

† "अथर्द्धिनिश्चये एकीयं मतमाह—"यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरं दाद्रियेतेत्येके" आप० गृह्य० (३.२०.३.२१.) इति । "यस्यां कन्यायां वरस्य मनश्चक्षुषो

---

१ क. देरणक्षेत्र । २ ख. भवेत् । ३ क. ख. द्वितीयस्पृष्टे पशुमतीभवति । ४ ख. भवेत् । ग. पराभवति । ५ क. चतुर्थे विचिकित्मिनीभवति । चतु । ६ क. पञ्चमे रोगिणीति नास्ति । ७ ख. नपुंसकत्वनिवृत्तये । ८ क. पित्रासह एवं पितामह । ख. पित्रा सह सापिण्ड्यम् ।

दिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि एकशरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्यासह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि [1]परस्परमेकशरीरारब्धैः सहैकशरीरारम्भकत्वेन । एवं यत्र यत्र सापिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः । यद्येवं मातामहादीनामपि "दशाहं शावमाशौचं सपिण्डेषु विधीयते ।" इत्यविशेषेण प्राप्नोति,—स्यादेतत् यदि तत्र "प्रत्तानामित्तरे कुर्युः"[2] इत्यादि-विशेषवचनं न स्यात् । अतश्च सपिडेषु यत्र विशेषपचनं नास्ति तत्र दशाहमित्येतद्वचनमवतिष्ठते । अवश्यं चैकशरीरावयवान्वयेन । सापिण्डयं वर्णनीयम् । "आत्मा हि जज्ञे आत्मनः" इत्यादिश्रुतेः । तथा "प्रजामनुप्रजायसे"[3] इति । "तथा स एवायं विरूढः पृथक् प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यम् । देहत्वमेवान्यत् ।" इत्यापस्तम्बचयाच्च । तथा गर्भोपनिषदि—"एतत् षाट्-कौशिकं शरीरं त्रीणि [4]पितृतस्त्रीणिमातृतः । अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृत" इति । तत्र तत्रावयवान्वयप्रतिपादनात्।। [5]निर्वाप्यापिण्डान्व-येन तु सापिण्डये मातृसंताने भ्रातृव्यादिषु[6] च सापिण्डयं न स्यात् । [7]समुदायश-क्तयाङ्गीकारेण[8] रूढपरिग्रहे अवयवशक्तिस्तत्रतत्रावगम्यमाना परित्यक्ता स्यात्। "[9]अस-त्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते । तत्रानन्यगतित्वेन समुदायः प्रसिध्यति" । एवं[10]

---

**र्निबन्धो नितरां बन्धनं यस्यामासक्त्यतिशयेन मनश्चक्षुषी निबद्धे इव तिष्ठत इत्यर्थः, तस्यां जायायां सत्यां धर्मादीनां समृद्धिः, नेतरद्गुणदोषानुरागदर्शनमाद्रियेतेत्येके ब्रुवते । एतदुक्तं-भवति,—अत्र मनश्चक्षुषोर्निबन्ध एवादरणे कारणं, न तु ज्योतिषादिना ज्ञाता गुणाः । तथा तदभाव एव परिवर्जने कारणं, नस्वापादयो दोषा इति उभयोरपि मतयोर्दत्तादीनां निषेध माद्रियेतैव ।" इति आगृह्य० (१.३.२१.) उज्ज्वलाव्याख्यायाम् । "सत्यां रुदन्तीं निष्क्रान्तां वरणे परिवर्जयेत् ॥ (१.३.११.) दत्तां गुप्तां द्योता मृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां साङ्कारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत्" ॥ (आप० गृह्य १.३.१२.) इति तत्रैवोक्ताः स्वापादपोदत्तादयश्चसूत्रे ॥ आप० गृह्य पृष्टे ५९.**

---

१ ग. शरीरारम्भैः सहैक । २ म. ५. ५९ । ३ क. ख. जायत इति च स एवायं विरूढः प्रत्यक्षेणोपलभ्यते इत्याद्यापस्तम्ब०. (आप० ध० २.९.२४.२) । ४ ग. त्रीणिमातृतस्त्री-णिपितृता । ५ ख. निर्वाप्य सपिण्डान्वयेन तु । ६ ख. भातृपुत्रादिषु । ७ ख. शक्तयाङ्गी । ८ ख. रूढिपरिग्रहे । ९ क. ख. एतत्पद्यं नास्ति । १० क. ख. एवमिति नास्ति । ग. एवंपारम्पर्यैक ।

एवं परम्परयैकशरीरावयवान्वयेन सापिण्ड्ये यथा नातिप्रसंगस्तथा वक्ष्यामः। यवीयसीं वयसा प्रमाणतश्च न्यूनाम् उद्वहेत् परिणयेत् स्वगृह्योक्तेन[1] विधिना॥ ५२॥

विशेषान्तराण्याह[2]—

## आरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्* ।

अरोगिणीम् अचिकित्सनयिव्याध्यनुपसृष्टाम् । भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये । अनेनापरिभाषिताऽपि पुत्रिका भवतीति गम्यते । असमानार्षगोत्रजां ऋषेरिदमार्षं नाम प्रवर इत्यर्थः। गोत्रं वंशपरम्पराप्रसिद्धम्, आर्षं च गोत्रं च आर्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा न समानार्षगोत्रजा असमानार्षगोत्रजा ताम्[3]। गोत्रप्रवरौ च पृथक्पृथक्पर्युदासे निमित्तं । तोनास

* "ननु सगोत्रनिराकरणेनैव सपिण्डनिषेधे प्राप्ते किमिति भेदेनाधस्तने श्लोके "असपिण्डां यवीयसीम्" इत्युक्तम् । न । एतत्तत्सन्ततिजाया निराकरणार्थम् । इतरथा असमानार्षगोत्रजा तत्स्त्रीसन्ततिजा परिणेया भवेत्। एषा चासपिण्डता मातृपक्षेऽपि वेदितव्या। यथाऽऽह मनुः—"असपिण्डा च या मातु रसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" । नैव सपिण्डा मातुर्या। चकारात्पितुश्च। "असगोत्रा च या" इत्येतावत्युच्यमाने यत्पितुर्ग्रहणं करोति तत्क्षेत्रिकापुत्राभिप्रायेण। अन्यथा—"यस्यते बीजतो जाता स्तस्य ते नेतरस्यतु" इति तत्सगोत्रायाविवाह्यत्वं स्यात् । सा प्रशस्ता, क्व, दारकर्मणि, यद्दारैर्विना न भवति । तच्च वचनादेव माभूदित्याह—मैथुने मिथुननिर्वर्त्ये यदेकैकस्य निर्वर्त्यं न भवति पाकयज्ञादिकम्। अत एवाऽऽपस्तम्बः—"पाणिग्रहणाद्धिसहत्वं कर्मसु" इति। सहग्रहणं बलीवर्दवत्समानाधिकार इति दर्शनार्थम्। ततश्च भर्त्राऽसौ भर्तव्याऽहं दानादिकं निर्वर्तयामि, त्वमपि सङ्कल्पं कुर्विति, तयाऽपि तथैव कार्यम् । अन्यथा दोष इति सहाधिकारः । अतश्चैकफलभोक्तृत्वं फलान्तरोद्भूतिबाधश्च । "असपिण्डा च या मातुः" इति मातुलादिसुतापरिणयनिषेधः । मातुः सपिण्डत्वात्' इति अप० ८० ।

यद्यपि अयमेव साधारणो निषेधविधिः । कथं तर्हि दाक्षिणात्यैः प्रमथितवेदशास्त्रपयोनिधिभिरपि कतिपयैर्मातुलसुतापरिणयनमाद्रियते इति चेदुच्यते । ब्राह्मादिषु विवाहेषु तस्यास्सापिण्ड्यनिवृत्तेः. गान्धर्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्रसापिण्ड्ययोरनिवृत्तेश्च, य एवार्थोऽभिहितो मार्कण्डेयपुराणे—"ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्। भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रियाः॥ गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्।" इति । यानि यानि मातुलसुतापरिणयनिषेधद्योतकवचनानि तत्र गान्धर्वादिक्रमपरिणीतमातृभ्रातृसुतामपरिणयनमित्यनुसन्धेयम् । अपि च आह वसिष्ठः—"देशकुलाचारा

१ ख. क. ह्योक्तविधिना । २ ख. तरमाह। ग. तरमप्याह। ३ ग. तामिति नास्ति।

मानार्षजां असमानगोत्रजामित्यर्थः । तथा च "असमानप्रवरैर्विवाह" इति गौतमः[१] । तथा च "असपिण्डा च या मातु रसपिण्डा च या पितुः ।" इति मनुः[२] । तथा मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति । "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥" इति प्रायश्चित्तस्मरणात् । अत्र चासपिण्डामित्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः । तथा असगोत्रामित्यनेनासपिण्डाया अपि भिन्नसन्तानजायाः समानगोत्राया निषेधः । असमानप्रवरामित्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः । तथा असपिण्डामित्येतत्सार्ववर्णिकम् । सर्वत्र सापिण्ड्यसद्भावात् । असमानार्षगोत्रजामित्येतत्त्रैवर्णिकविषयम् । यद्यपि राजन्यविशां[३] प्रातिस्विकगोत्राभावात्प्रवराभावः, तथाऽपि पुरोहितगोत्रप्रवरौ वेदितव्यौ । तथा च "यजमानस्यार्षेयान् प्रवृणीते[४]" इत्युक्त्वा "पौरोहित्यान्[५] राजविशां प्रवृणीते" इत्याहाऽऽश्वलायनः । [६]सपिण्डासु समानगोत्रासु समानप्रवरासु भार्यात्वमेव नोत्पद्यते । रोगिण्यादिषु तु[७] भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव ।

आम्नायाविरुद्धाः प्रमाणम्" इति । अङ्गीकृतमयमाचारो दाक्षिणात्यानां बोधायनेन "अथ पञ्चधा विप्रतिपत्तिः, दक्षिणदेशे...मातुलदुहितृपरिणयनमिति ।" इत्यादिवदता । मातुलसुताविवाहमूला चेयं श्रुतिः—

"आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपाम् ॥"
एतत्सर्वं पराशरमाधवीये आचारकाण्डे विवाहप्रकरणे द्रष्टव्यम् ॥

" अरोगिणीमदर्धिरोगोपसृष्टाम् । भ्रातृमतीं पुत्रिकात्वभयात् । यथाऽऽह मनुः—"यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया" इत्यनेन गुप्ताऽपि पुत्रिका भवति न केवलं या परिभाष्य दीयते—"अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इति रतिपुत्रफला भार्या यदि पुत्रोऽन्यस्य भवति तदैकाङ्गवैकल्यम्। पुत्रिकां वक्ष्यति । असमानार्षगोत्रजामित्य [समानार्षजाम] समानगोत्रजामिति च वेदितव्यम् । ततश्च सगोत्रायाः सगोत्रत्वेनैव निषेधो न समानार्षापेक्षया । एवं समानार्षाऽपि न सगोत्रमपेक्षते । अत एव गौतमः—"असमानप्रवरैर्विवाहः" इति । समानता च नामतः संख्यातश्च समुच्चयेन भवति न तद्वैषम्ये । यत्रापि संख्यासाम्य एकस्य द्वयोर्वाऽन्यत्वं तत्राप्यसमानतैव । यत्र पुनराङ्गिरसाम्बरीषयौवनाश्वेति मान्धाताम्बरीषयौवनाश्वेति विकल्पेन ऋषयो भवन्ति तत्रापि वर्ज्या । समत्वस्य पाक्षिकत्वात् । न चासमानार्षग्रहणं गोत्रविशेषणम् ।

---

१.—४. २. २.—३. ३४. क. राजविशां । ४ ख. यान वृणी । ५ ३४ क. पौरोहित्यात् ।
६ सपिण्डासगोत्रासमानप्रवरासु ७ क. दिषु च

असपिण्डामित्यत्रैकशरीरान्वयद्वारेण साक्षात्परम्परया वा सापिन्ड्यमुक्तं तच्च सर्वत्र सर्वस्य यथाकथंचिदनादौ संसारे भवतीत्यतिप्रसंग इत्यत आह—

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥

मातृतो मातुः सन्ताने पञ्चमादूर्ध्वं पितृतः पितुः सन्ताने सप्तमादूर्ध्वम्, सापिण्ड्यं निवर्तत इति शेषः । अतश्चायं सपिण्डशब्दोऽवयवशक्त्या सर्वत्र प्रवर्तमानोऽपि निर्मन्थ्य पङ्कजादिशब्दवन्नियतविषय एव । तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः। सन्तानभेदेऽपि यतः सन्तान-भेदस्तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयम् ॥ तथा च मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चमपुरुषवर्तिनी मातृतः पञ्चमीत्युपचर्यते । एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसन्तानवर्तिनी पितृतः सप्तमीति । तथा च—"भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः । विवाहे द्व्यादिभूतत्वाच्छाखाभेदो-ऽवगण्यते"। यदपि वसिष्ठेनोक्तं—"पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा" इति,

---

" असमानप्रवरैर्विवाह " इति भेदस्मरणात् । " परिणीय सगोत्रां तु समानप्रवरां तथा। त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥" इति पृथक्प्रायश्चित्ताच्च । त्यागश्चोपभोगस्य न तु तस्याः । यथाऽऽह सुमन्तुः—" मातुलसुतां पैतृष्वसेयीं समानगोत्रां च परिणीय चान्द्रायणं चरेत् । परित्यज्यैनां बिभृयात् ।" इति, एतच्चामति पूर्वं बोध्यम् । "सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्प्रजाता चेत्कृच्छ्राब्दपादं चरेत्" इति बोधायनः। मतिपूर्वे गुरुतरम् । यथाऽऽह गौतमः—" मातृपितृयोनिसम्बद्धागस्तेन नास्तिकनिन्दितकर्माभ्यासिपतितात्याग्य पति-तत्यागिनः पतिताः " इति । मनुरपि—" ज्ञातित्वेनानुपेयास्ताः पतति ह्युपपन्नधः" इति । ततश्च पतितोत्पन्नः पतितो भवतीति लभ्यत एव ।" इति अप० ७९—८०.

* ननु " असपिण्डाम् " इत्युक्तमेव, किमर्थं पुनरुच्यते " सप्तमात्पितृतः " इति । सत्यम् । किन्तु बीजिनोऽपि सप्तमादिति नियमार्थम् । यथाऽऽह गौतमः—" ऊर्ध्वं तु सप्तमात्पितृबन्धुभ्यो बैजिनश्च मातृबन्धुभ्यः पञ्चमात् " इति पैठीनसिश्च—" असमानार्षेयीं कन्यां वरयेत् । पञ्च मातृतः परिहरेत् । सप्त पितृतः । त्रीन्मातृतः पञ्च पितृतो वा । " इति । अत्र च समानजातीये पञ्च असमानजातीये त्रीनिति व्यवस्थितो विकल्पः । न च सप्तमे पञ्चमे वा भवति विवाह्या । यथा—"सप्तमे पञ्चमे वाऽपि येषां वैवाहिकी क्रिया । ये च सन्तानजास्तेऽपि पतिताः शूद्रतां गताः" इति विष्णुः ॥ अप० ८१-८२.

---

१ क. क्षात्पारम्पर्येण । २ क शक्त्यावर्तमा । ३ ख. ग. तथा च मातरमारभ्येत्यादि शाखावगण्यतइत्यन्तमधिकं पाठः ।

"त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः" इति च पैठीनासिना, तदप्यर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः ।

एतच्च समानजातीये द्रष्टव्यम्, विजातीये तु विशेषः, यथाऽऽह शङ्खः "यद्येकजाताबहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु" ॥ एकस्मात् ब्राह्मणादेर्जाता एकजाताः, पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः, पृथग्जना समानजातीयासु भिन्नासु स्त्रीषु जाताः, ते एकपिण्डाः सपिण्डाः, किं तु पृथक्शौचाः, पृथक्शौचमाशौचप्रकरणे वक्ष्यामः। "पिण्डस्त्वावर्तते त्रिषु" त्रिपुरुषमेव सापिण्ड्यमिति ॥ ५३ ॥

## दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।

पुरुषा एव पूरुषाः दशभिः पूरुषैः मातृतः पञ्चभिः पितृतः पञ्चभिर्विख्यातं यत्कुलं तस्मात् । श्रोत्रियाणामधीतवेदानाम् । अध्ययनमुपलक्षणं श्रुताध्ययनसंपन्नानाम् । महच्च तत्कुलं च महाकुलं, पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्या आहर्तव्येति नियम्यते ।

एवं सर्वतः प्राप्तौ सत्यामपवादमाह—

## स्फीतादपि न संचारिरोगदोषसमन्वितात्* ॥ ५४ ॥

संचारिणो रोगाः कुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशान्तः, दोषाः पुनः हीनक्रियनिःपुरुषत्वादयो मनुनोक्ताः, एतैः समन्वितात् स्फीतादपि पूर्वोक्तान्महाकुलादपि नाहर्तव्या ॥ ५४ ॥

* "अत एव मनुः—"महान्त्यपि समृद्धानि गोजाविधनधान्यतः । स्त्रीसम्बन्धे दशेमानि कुलानि परिवर्जयेत् ॥" इति । "हीनक्रियं निष्पुरुषं निश्छन्दो लोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च॥" इति । हीनक्रियं यथाविहितगर्भाधानादिक्रियारहितं, निष्पुरुषं कन्याजन्मादिबहुलं, निश्छन्दः वेदाध्ययनरहितं, लोमशम् अत्युल्बणलोमयुक्तम्, अर्शसम् अर्शोव्याधियुक्तम्। हारीतोऽपि—"श्वित्रिकुष्ठघुदरियक्ष्मामयाव्यल्पायुरनार्शस (सा) [नार्षेया] ब्रह्मसमानार्षेयं चेत्येतान्यपतितान्यपि कुलानि वर्जनयानि भवन्ति। कुलानुरूपाः प्रजाः सम्भवन्तीत्यादितः षट् । अयज्ञियत्वादनार्षेयम् । अदैवत्वादब्रह्म । एककुलत्वात्समानार्षेयमिति । तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नाग्निकां श्रेष्ठां भ्रातृमतीं

---

१ क. सपिण्डा इति नास्ति ।

एवं कन्याग्रहणे नियममुक्त्वा कन्यादाने वरनियममाह—

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।**
**यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥ ५५ ॥**

एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति । तस्यायमपरो विशेषः सवर्ण उत्कृष्टो वा न हीनवर्णः, श्रोत्रियःस्वयं च श्रुताध्ययनसंपन्नः, यत्नात्प्रयत्नेन पुंस्त्वेपरीक्षितः । [1]परीक्षोपायश्च नारदेन दर्शितः—"यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्डकः ॥" इति । युवा न वृद्धः । धीमान् लौकिकवैदिकव्यवहारेषु निपुणमतिः । जनप्रियः [2]स्मितमृदुपूर्वाभिभाषणादिभिरनुरक्तजनः ॥ ५५ ॥

भार्यां विन्देत । तस्मात्कुलनक्षत्रविज्ञानोपपन्नां वरयेत्" इति । आमयावि अत्रोक्तेतरसञ्चारिरोगवत् । अत्र च श्वित्र्यादीनि षड्वर्जनीयानि । अत्र हेतुः—कुलानुरूपाः प्रजा भवन्तीति । अनार्षेयमस्मर्यमाणगोत्रप्रवरम् । तस्य च वर्ज्यत्वमयाज्ञियत्वात् । अयज्ञियत्वं च यज्ञेष्वस्मर्यमाणगोत्रप्रवरस्यानधिकारात् । अब्रह्म अविद्यमानवेदाध्ययनम् । तद्वर्ज्यत्वे हेतुः—अदैवत्वादिति । दैवकर्मशून्यत्वात् । "नग्निका दर्शवर्षा" इति भविष्यत्पुराणम् । यमश्च—"चतुर्दशकुलानीमान्यविवाह्यानि निर्दिशेत् । अनार्षेयं ब्राह्मणानामृत्विजां च विवर्जयेत् ॥ अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् । हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ॥ श्वित्रिकुष्ठिकुलादीनां कुर्याद्विपरिवर्जनम् । सदा कामकुलं वर्ज्यं लोमशानां च यत्कुलम् ॥ अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत्" । ऋत्विजोऽत्र निन्द्ययाजकाः । कामकुलं कामप्र[illegible]न कुलम् । अतिवर्णमतिकृष्णमतिगौरं वा" इति अप० ८४-८५.

* परीक्ष्योपायषण्डलक्षणविधाश्च नारदेन दर्शिताः । यथा—

"परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाङ्गलक्षणैः । पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥ सुबद्धजत्रुजान्वास्थिसुबद्धांसाशिरोरुहः । स्थूलघाटस्तनूजत्वगविलम्बगतिस्वरः ॥ रेतोऽस्य प्लवतेवाऽप्सु ह्रादि मूत्रं च फेनिलम् । पुमान्स्याल्लक्षणैरेभिर्विपरीतस्तु षण्डकः ॥ चतुर्दशविधः षण्डश्शास्त्रे दृष्टो मनीषिभिः । चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥ (१) निसर्गषण्डो (२) वध्रश्च (३) पक्षषण्डस्तथैव च । (४) अभिशापाद् (५) गुरोरोगा (६) देवक्रोधात्तथैव च ॥ (७) ईर्ष्याषण्डश्च (८) सेव्यश्च (९) वातरेता (१०) मुखे भगः । (११—१२) आक्षिप्तमोघबीजौ च (१३) शालीनो (१४) ऽन्यापतिस्तथा॥ तत्राऽऽद्यावप्रती-

१.—१२. १०. । २ ख. स्मितपूर्वमृद्वभिभा ।

रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः। तत्र पुत्रार्थो द्विविधः नित्यः काम्यश्च। तत्र नित्ये प्रजार्थे "सवर्णः श्रोत्रियो वरः" इत्यनेन सवर्णा मुख्या दर्शिता। इदानीं काम्ये नित्यसंयोगे चानुकल्पं वाक्तव्य इत्यात आह[1]—

**यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः।**
**नैतन्मम मतं यस्मात्तत्रायंजायते स्वयम् ॥ ५६ ॥**

यदुच्यते "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः" इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे[2], इति द्विजातीनां शूद्रावेदनमिति नैतद्याज्ञवल्क्यस्य मतं, यस्मादयं द्विजातिस्तत्र स्वयं जायते। "तज्जाया जाया-भवति यदस्यां जायते पुनः" इति श्रुतेः। अत्र च "तत्रायं जायते स्वयम्" इति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये, क्षत्रि-यस्य च वैश्याभ्यनुज्ञाता भवति ॥ ५६ ॥

* इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याऽऽश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थानमात्राभिकाङ्क्षिणः परिणयनक्रममाह—

**तिस्रो वर्णानपूर्व्येण द्वे तथैका यथाक्रमम्।**
**ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥ ५७ ॥**

कारौ पक्षाख्यं मासमाचरेत्। अनुक्रमात्त्रयस्यास्य कालः संवत्सरः स्मृतः॥ ईर्ष्याषण्डादयो येऽन्ये चत्वारः समुदाहृताः। त्यक्तव्यास्ते पतितवत्क्षतयोन्याऽपि च स्त्रिया॥ आक्षिप्तमोघ बीजाभ्यां कृतेऽपि पतिकर्मणि। पतिरन्यस्ततो नार्या वत्सरार्धं प्ररीक्ष्य तु ॥ शालीनस्यापि धृष्टस्त्रीसंयोगाद्भ्रश्यति द्विजः। तं हीनविषयं तु स्त्री वर्षं क्षिप्त्वाऽन्यमाश्रयेत्॥ अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति। लभेतसाऽन्यं भर्तारमेतत्कार्यं प्रजापतेः॥ अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः। क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति॥" इति अप० ८५-८६.

* "अनुकल्पक्रममाह—तिस्रइति

१ ख. इत्याह। २ ग. द्वे इति तत्रद्विजा।

*वर्णक्रमेण ब्राह्मणस्य तिस्रः, क्षत्रियस्य द्वे, वैश्यस्यैका, शूद्रस्य तु स्वैव भार्या भवति। सवर्णा पुनः सर्वेषां मुख्या स्थितैव। पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति। अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ। अतश्च ... पुत्रमध्ये परिगणनं, विभागसंकीर्तनं च, तथा "विप्रान्मूर्धावसिक्तो हि"[2] इत्युपक्रम्य "विन्नास्वेषविधिः स्मृतः" इति च, तत्प्रतिकामस्याश्रममात्राभिकाङ्क्षिणो वा नान्तरीयकतयोत्पन्नस्य ॥ ५७ ॥

विवाहानाह

ब्राह्मो विवाह[†] आहूय दीयते शक्त्यलङ्कृता।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥

* "यदा पुनः उक्तलक्षणा सवर्णा नास्ति पूर्वा च विनष्टा न चानाश्रमिणा स्थातव्यं न चाऽऽश्रमान्तरेऽधिक्रियते सामर्थ्यात् बहुधनो बालापत्यश्च तदा तस्यामवस्थायां तिस्रो द्वे एका च ब्राह्मणक्षत्रियविशां भार्या वर्णानुपूर्व्येण स्वा शूद्रस्य सवर्णा पुनश्चतुर्थी मुख्या स्थितैव। यथाऽऽहमनुः—"शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः॥ कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः।" इति। कामतः प्रवृत्तानां न धर्मतः। अत एव ता जघन्याः। क्रमशो न व्युत्क्रमेण। व्युत्क्रमे च दोषो मनुना दर्शितः—"शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः" ॥ अत्रिगौतमयोरिदं मतं शूद्रावेदी पतति वेदनमात्रेणैव। शौनकस्य सुतोत्पत्त्या, तस्यापत्येनेति भृगोः। तच्च व्युत्क्रमेणेति द्रष्टव्यम्। इतरथा—"चतुस्त्रिद्व्येकभागी ना वर्णशो ब्राह्मणात्मजाः" इति भागविभागौ न स्याताम्। न च तत्प्राधान्यं श्राद्धादिदानेषु कार्यम्॥ "दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितरस्तस्य न च स्वर्गं स गच्छति" इति वचनात्।" इति अप० ८७-८८.

† "विवाहशब्दो यद्यपि कन्यायाः सप्तपदातिक्रमणे मुख्यः, तथाऽपि ऋत्विक्प्रयुक्त तत्तद्ब्राह्मादि शास्त्रविहितभार्यात्वसाधके कर्मसमुदाये वर्तते। स च समुदाय उपाधिभेदाद् ब्राह्मादिव्यपदेशं लभते। तदुपाधित्वेनैव दानविवाहशब्दयोः सामानाधिकरण्यम्। यथा "अलङ्कृत्यकन्यामुदकपूर्वं दद्यादेष ब्राह्मोविवाहः।" इति न पुनर्दानमेव विवाहशब्दार्थः। तथा सति हि "उदगयन आपूर्यमाणे पक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहः" इत्युक्त्वा यदुक्तं "तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्" इति। तन्नोपपद्यते। न हि कन्यादानात्पुरस्तादेता आहुतयः सन्ति। तस्माद्दानविवाहयोर्भेदात्तदभिधानयोः पदयोः सामा-

१ ख. यथा। २—आ. ९१.

* स ब्राह्माभिधानो विवाहः यस्मिन्नुक्तलक्षणाय वरायाऽऽहूययथाशक्त्यलंकृता कन्या दीयते उदकपूर्वकम् । तस्यां जातः पुत्रः उभयतः पित्रादीन्दश पुत्रादींश्च दश आत्मानं [1]चैकविंशं पुनाति सद्वृत्तश्चेत् ॥ ५८ ॥

**यज्ञस्थ ऋत्विजे दैव, आदायर्षस्तु गोद्वयम् ।**

**चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥**

† स दैवो विवाहः यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे यथा[2]शक्त्यलंकृता कन्या दीयते । ‡यत्र पुनर्गोमिथुनमादाय कन्या दयिते स आर्षः । प्रथमजो दैव-विवाहजः चतुर्दश पुनाति सप्तावरान् सप्त परान्। उत्तरज आर्षविवाहजः षट् पुनाति त्रीन्पूर्वान् त्रीन्परान् ॥ ५९ ॥

---

नाधिकरण्यमुपचारेणैव व्याख्येयम् । यत एव दानं न विवाहोऽत एव गान्धर्वादिषु विवा-हेषु दानमन्तरेणैवोपयमनं कन्यास्वीकारात्मकं विवाहत्वेनाऽऽह शौनकः—“ मिथः समयं कृत्वोपयच्छेत स गान्धर्वः” । मिथः परस्परं कन्यावरौ अहं ते भर्ता त्वं मे भार्येति सम्प्रति पत्तिं कृत्वा कन्यामुपयच्छेत स्वीकुर्यादिति तस्यार्थः । ततोऽत्र दानं न विद्यते विवाहस्तु भवति। अस्य च विवाहान्तरेभ्यो भेदको धर्मः कन्यावरयोर्मिथः सम्प्रतिपत्तिः । एवं राक्षस-पैशाचयोरपि विवाहत्वं कन्यादानरहितमेव द्रष्टव्यम् । युद्धं छलनं च तयोर्भेदकौ धर्मौ । तदाह—“ हत्वा भित्वा च शीर्षाणि रुदतीं रुदद्भ्यश्च हरेत्स राक्षसः” । तथा पैशाचमपि मनुराह—सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपयच्छति। स पापिष्ठो विवाहानां पैशाचः कथितो ऽष्टमः । ” एवमुपयमनपाणिग्रहणशब्दवत्परिणयनशब्दोऽपि दण्डिन्यायेनैव कर्मसमुदाये शास्त्रेषु प्रयुज्येत ॥” इति अप० ९०-९१.

* “ ब्राह्मो नाम विवाहो ब्राह्मणानामुचित इति तस्मिन्नाहूय पूर्वोक्तलक्षणं वरं वरे वरयितव्येऽर्थित्वे ज्ञाते शक्त्याऽलङ्कृत्य कन्या दीयते । अप० ८८.

† “ विवाह इत्यनुवर्तते, दीयते शक्त्यलङ्कृतेति च । ऋत्विजे यज्ञं कुर्वते दक्षिणा-त्वेन यथाशक्त्यलङ्कृत्य कन्या दीयते एष दैवो विवाहः । इति अप० ८९.

‡ “ वराद्गोमिथुनं गृहीत्वा तस्मै यथाशक्त्यलङ्कृत्य कन्या दीयत इत्येष आर्षो विवाहः । शौनकः—“ गोमिथुनं दत्त्वोपयच्छेत स आर्षः” इति । अप० ८९.

१ क. ग. एकविंशतिं पु । २ ख. यर्थेति नास्ति ।

इत्युक्त्वा *चरतां धर्मं सह[1] या दीयतेऽर्थिने ।
स कायः †पावयेत्तज्जः षट् षट्[2] वंश्यान्सहात्मना ॥ ६० ॥

सह धर्मं चरतामिति परिभाष्य कन्यादानं प्राजापत्यः । तज्जः षट् पूर्वान् षट् परान् आत्मना सहेत्येवं त्रयोदश पुनाति ॥ ६० ॥

आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात्[3] ॥ ६१ ॥

‡आसुरः पुनर्द्रविणादानात् । §गान्धर्वस्तु परस्परानुरागेण भवति । ‖राक्षसो युद्धेनापहरणात् । ¶पैशाचस्तु कन्यकाच्छलात्[4] छद्मना स्वापाद्यवस्थास्व पहरणात् ॥ ६१ ॥

---

* "उभौ सह धर्मं चरतामित्येवं कन्यावरावुक्त्वा यथाशक्त्यलङ्कृत्य कन्या कन्यार्थिने दीयते यत्स कायः पाजापत्यो विवाहः ।" इति अप० ८९.

† "तस्यां जातः षट् पूर्वान् षडपरान्पुरुषानात्मानं च त्रयोदशं पावयेत् । अत्र देवलः—" एते विवाहाश्चत्वारो धर्म्यास्तोयप्रधानिकाः । अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् । चतुर्ष्वेतेषु दत्तायामुत्पन्नास्तनयाः स्त्रियाम् । दातुः प्रतिग्रहीतुश्च पुनन्त्यासप्तमं कुलम् ॥" इति । अप० ८९.

‡ "वराद्द्रविणमादाय आत्मार्थं कन्यार्थं च पित्रादिभिर्यत्कन्यार्पणं क्रियते स आसुरो विवाहः ॥" इति । अप० ८८.

§ "कन्यावरयोरन्योन्यसमयात्त्वं मे भार्या त्वं मे पतिरित्येवं रूपाद्दानानिरपेक्षाद्यः कन्यास्वीकारः स गन्धर्वो विवाहः ।" इति अप० ९० ।

‖ "युद्धे कन्याबन्धूञ्जित्वा यत्कन्याहरणं कन्यास्वीकारः स राक्षसो विवाहः" इति । अप० ९०.

¶ "कन्यकां छलादपहृत्य यत्स्वीकरोति स पैशाचो विवाहः । केचित्पठन्ति "कन्यकाच्छलात्" इति । तस्यायमर्थः--कन्यकाच्छलनात् तत्स्वीकारः पैशाचो विवाह इति" अप० ९०.

---

१ अप० सहोभौ चरतां । २ अप० षड्वंश्यान्सहचात्मना । ३ अप० कन्यकां छलात् । क. ख. कन्यकाछलात् । ४ ख. छलात् छलेन छद्मना । ग. छद्मना छलेन स्वापा ।

सवर्णादिपरिणयने विशेषमाह—

**पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ।**
**वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥**

*सवर्णासु विवाहे स्वगृह्योक्तेन[1] विधिना पाणिरेव ग्राह्यः । क्षत्रियकन्या तु शरं गृह्णीयात् । वैश्या प्रतोदमादद्यादुत्कृष्टवेदने शूद्रा पुनर्वसनस्य दशाम् । यथाऽऽह मनुः—"वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने[2]। इति ॥ ६२ ॥

दातृक्रममाह[3] –

**पिता पितामहो भ्राता सकुल्यो जननी तथा ।**
**कन्याप्रदः पूर्वनाशे प्रकृतिस्थ †परः परः ॥ ६३ ॥**

---

" एषां विवाहानां मध्ये अयमस्य धर्म्यो वर्णस्य अयमधर्म्य इत्याह मनुः— " षडानुपूर्व्या विप्रस्य क्षत्त्रस्य चतुरोऽवरान् । विट्छूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्॥" ब्राह्मादीन्गान्धर्वपर्यन्तान्विवाहान् षड् ब्राह्मणस्य धर्मादनपेतान्विद्यात् । अवरान्पश्चादुक्तानासुरादीन्पैशाचान्तांश्चतुरो विवाहान् क्षत्त्रियस्य । वैश्यशूद्रयोरपि तानेव राक्षसवर्जितान् विद्याज्जानीयादित्यर्थः ॥ एषामपि मध्ये प्रशस्तानाह—" चतुरो ब्राह्मणस्याऽद्यान्प्रशस्तान्कवयो विदुः। राक्षसं क्षत्त्रियस्यैक मासुरं वैश्यशूद्रयोः॥" ब्राह्मो दैव आर्षः प्राजापत्यश्चेति चत्वारो विवाहाः ब्राह्मणस्य प्रशस्ताः । आसुरगान्धर्वौ तु न प्रशस्तौ, न निन्दितौ ॥ क्षत्त्रियस्य पुना राक्षस एकः प्रशस्त : । आसुरगान्धर्वौ तु पूर्ववत् । वैस्य शूद्रयोस्त्वासुर एकः प्रशस्तः गान्धर्वस्तु पूर्ववत् । पैशाचः पुनः सर्ववर्णानां निन्दित एव । " स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः" इत्यविशेषस्मृतेः ॥ यत्तु मनुनैवोक्तं—" ...क्षत्त्रस्य चतुरोऽवरान् । विट्छूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् " इति, तत्पैशाचस्य ब्राह्मणादन्येषां वर्णानामत्यन्तापद्यनुग्रहार्थम् । तस्माद्ब्राह्मणस्याऽऽपद्यपि पैशाचानुग्रहो नास्तीति सिद्धम् " इति । अप० ९१—९२.

* " सवर्णायामुह्यमानायां वरेण तस्याः पाणिर्ग्राह्यः । क्षत्त्रिया ब्राह्मणेनोह्यमाना शरं गृह्णीयात् । यथा तस्या : पाणिमिव तं शरं वर उपाददीत वैश्या तु विप्रेण क्षत्त्रियेण वा परिणीयमाना प्रतोदं बलीवर्दखेदनमाददीत । अग्रजन्मशब्दः उत्कृष्टवर्णमात्रपरः । मनुः— " वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने " इति । अप० ९२.

† " पित्रादीनां क्रमपरिपठितानां पूर्वस्य पूर्वस्याभावे सति, अप्रकृतिस्थत्वे तूत्तरोत्तरः प्रकृतिस्थः कन्याप्रदो भवति । अविप्लुतबुद्धिः प्रकृतिस्थः ।" इति । अप ९२.

---

१ क. विवाहे गृह्यो । ग. विवाहे स्वगृह्योक्ताविधिनैवपाणि । २.—३. ४४. । ३ ख. कन्यादा ।

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ ६४ ॥

एतेषां पित्रादीनां *पूर्वपूर्वाभावे परः परः कन्याप्रदः, प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति । अतो यस्याधिकारः सोऽप्रयच्छन् भ्रूणहत्यामृतावृतावाप्नोति । एतच्चोक्तलक्षणवरसंभवे वेदितव्यं । †यदा पुनर्दातॄणामभावस्तदा कन्यैव गम्यं गमनार्हमुक्तलक्षणं वरं स्वयमेव वरयेत् ॥ ६३ ॥ ६४ ॥

सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ।

---

*" कन्यायाः प्रदाताऽधिकारी तामददद्भ्रूणहत्यां प्रत्युत समाप्नोति । संपूर्णां प्राप्नोति । यत्तु मनुप्रवचनं—" काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि । न त्वेवैनां प्रयच्छेतु गुणहीनाय कर्हि चित् ॥" इति । तद्गुणवद्वरसम्भवे गुणहीनाय न दातव्येत्येवम्परं न तु कन्यर्तुदर्शनमदोष इत्यर्थकम् । तथा हि सति वचनान्तरविरोधः । तथा च काश्यपः—" पितुर्गेहे तु या कन्या रजः पश्येदसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥" वृषली धर्मानधिकारिणी । " यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः । अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ।" कन्यया चाहमृतुमतीति निवेदयितव्यमित्याह नारदः—" कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् । न चेत्प्रदद्युस्तां भर्त्रे ते स्युर्ब्रह्महभिः समाः॥" इति । अत्र संवर्तः—" माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् " इति । अप० ९३.

† " दातॄणां पित्रादीनामभावे स्वयमेव कन्या गम्यं गमनार्हं सवर्णमुत्कृष्टवर्णं वा पातित्यादिदोषरहितं वरं भर्तारं कुर्यात् । एतच्च प्राग्रजोदर्शनात् । दृष्टे तु तस्मिन् पित्रादिषु सत्स्वपि स्वयमेव कन्या वरं कुर्यात्, न पित्रादिशासनमपेक्षेत । यदाह बोधायनः—"त्रीणि-वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् । ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥ अविद्यमाने सदृशे गुणहीनमपि व्रजेत् " । सदृशः गुणवान् । यत्तु विष्णुनोक्तम्—" ऋतुत्रयमपास्यैव कन्या कुर्यात्स्वयं वरम् ।" इति, तद्गुणवद्वरलाभे सति द्रष्टव्यम् । तदलाभे तु वर्षत्रयमुपासनीयम् । अत्र मनुः—" अलङ्कारं नाऽऽददीत पित्र्यं कन्या स्वयंवरा । मातृकं भ्रातृदत्तं वा स्तेयं स्याद्यदि तं हरेत्॥" वरं प्रति स एवाऽऽह—" पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् । स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात्" ॥ शुल्कं मूल्यम् ।" अप० ९३.

*सकृदेव कन्या प्रदीयत इति शास्त्रनियमः, अतस्तां दत्वा अपहरन[1] चोरवद्दन्डयः ।

एवं सर्वत्र प्रतिषेधे प्राप्ते अपवादमाह—

**दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥**

यदि पूर्वस्माद्वरात् श्रेयान् विद्याभिजनाद्यतिशययुक्तो वर आगच्छति, पूर्वस्य च पातकयोगो दुर्वृत्तत्वं वा, तदा दत्तामपि हरेत् । एतच्च सप्तमपदात प्राक् द्रष्टव्यम् ॥ ६५ ॥

**अनाख्याय ददद्दोषं दण्ड्य[2] उत्तमसाहसम् ।**
**अदुष्टां तु त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् ॥ ६६ ॥**

* "पित्रादिना कन्या सकृदेव देया तां दत्वा अपहरन् वक्ष्यमाणेन कन्यास्तेयदण्डेन युज्यते । यस्मै वाचा दत्ता ततोऽन्यश्चेत्प्रशस्ततरो लभ्यते ततस्तस्मै देया न पूर्वस्मै । अत्र गौतमः—"प्रतिश्रुत्याधर्मसंयुक्ताय न देयात् ।" इति । नारदः—"स्त्रीपुंसयोश्चसम्बन्धाद्वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः सम्बन्धोऽयं त्रिलक्षणः" ॥ वरणं पाणिग्रहणमुपभोगश्चेति त्रिविधः सम्बन्धः । "तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात् । पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ॥ तेषां निष्ठा तु विद्वद्भिर्विज्ञेया सप्तमे पदे ।" अस्यार्थः तयोः कन्यावरयोरनियतमनियमः । वृताऽपि न परिणीयते वाग्दत्ताऽपि न प्रदीयत इत्येवं रूपः, तस्य कालं कारणं च वक्तुमुक्तं—वरणाद्दोषदर्शनादिति । वरणादूर्ध्वं कन्यावरयोरन्योन्यदोषदर्शनादनियमो भवति । वरणादिति सावधारणं वचनम् । वरणादेवोर्ध्वं न विवाहादित्यर्थः । अत्र हेतुः—पाणिग्रहणिका मन्त्रा इति । तैर्मन्त्रैरुत्पादितभार्यात्वरूपसंस्कारायाः परित्यागो न युक्त इति । तथा—"प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् । त्रीनृतून्त्समतिक्रम्य कन्याऽन्यं वरयेद्वरं ॥" कात्यायनः—"वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा । रक्तागमां स्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥" वाग्दत्ताविषयमेतद्वाक्यद्वयम् । रक्तागमः रजोदर्शनम् । "प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा । धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥" एतदपि प्राग्विवाहाद्द्रष्टव्यम् । वसिष्ठः—"अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि । न च मन्त्रोपनीतास्यात्कुमारी पितुरेव सा ॥" इति । न च मन्त्रोपनीता मन्त्रवता विवाहकर्मणा उपनीता प्राप्ता संस्कृता न भवतीत्यर्थः । कात्यायनः—"पूर्वं दत्ता तु या कन्या अन्येनोढा यदा भवेत् । संस्कृताऽपि प्रदेया स्याद्यस्मैपूर्वं प्रतिश्रुता ॥" चेद्गुणवत्तर इति शेषः" इति । अप० ९४-९५.

१ क ग. अपहरन् कन्यां चोर । २ ख. दण्ड ।

यः पुनश्चक्षुर्ग्राह्यं *दोषमनाख्याय कन्यां प्रयच्छति असावुत्तमसाहसं दण्ड्यः। उत्तमसाहसं †वक्ष्यते। ‡अदुष्टां तु प्रतिगृह्य त्यजन्नुत्तमसाहसमेव दण्ड्यः। यः §पुनर्विवाहात्प्रागेव द्वेषादिना असद्भिः दोषैर्दीर्घरोगादिभिः कन्यां-दूषयति स पणानां ‖वक्ष्यमाणलक्षणानां शतं दण्ड्यः ॥ ६६ ॥

अनन्यपूर्विकामित्यत्रानन्यपूर्वा परिणेयोक्ता, ¶तत्रान्यपूर्वा कीदृशीत्याह—

**अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।**
**स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ ६७ ॥**

* "व्याध्युपहतापरिणीता यद्यक्षतयोनिः स्यात्परित्यक्तव्या ॥" क्षतयोनिस्तु भर्तव्या पोषणीयैव। यत्तु नारदेनोक्तं---"यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति। तस्यकुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् ॥" इति, एतत्त्यागानिमित्तदोषव्यतिरिक्तविषयम्। पणशतद्वयं सप्तत्याधिकं पूर्वसाहसः अत्र मनुः—"विधिवत्परिगृह्यापि त्यजेत्कन्यामनिन्दिताम्। व्याधितां विप्रदुष्टां च च्छद्मनाचोपपादिताम् ॥" विविधं प्रकर्षेण च दुष्टां विप्रदुष्टाम्। वरत्यागहेतून्दोषानाह नारदः—"उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः। कन्या दोषौ च यौपूर्वौ वेषदोषगणो वरे ॥" दीर्घकुत्सितरोगित्वंव्यङ्गता च पूर्वदोषौ ॥" इति। अप० ९५-९६.

† "सार्शीति पणसाहस्रोदण्ड उत्तमसाहसः। तदर्धं मध्यमः प्रोक्त स्तदर्धमधम स्मृतः ॥" इत्याचाराध्याये ३६६ श्लो० मूले।

‡ "अदुष्टां त्यागदोषरहितां त्यजन्नुत्तमसाहसं वरो दण्ड्यः। अत्र नारदः—"प्रतिगृह्य तु यः कन्यामदुष्टामुत्सुजेन्नरः। विनेयः सोऽन्यकामोऽपि कन्यां तामेव चोद्वहेत् ॥" विनेयः दण्ड्यः" इति। अप० ९६.

§ "अशस्तेयं कन्येति मिथ्याऽवदन् पणशतं दण्ड्यः। यत्तु विष्णुनोक्तम्—"अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसं दण्ड्यः" इति तदपरिणेयत्वापादकदोषाभिधानविषयम्" इति अप० ९६.

‖ "आचाराध्याये ३६५ श्लो. द्रष्टव्यम्।

¶ "पुनर्भूलक्षणमाह—"अक्षता चेति। या कृतविवाहा सती क्षतयोनिरक्षतयोनिर्वा कौमारेण भर्त्रा भर्त्रन्तरेण वा यथाविधि पुनरुह्यते सा पुनर्भूः। यथाऽऽहमनुः—"सा चेदक्षतयोनिःस्याद्गतप्रत्यागताऽपि वा। पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति॥" अस्यार्थः—क्लीबपतितोन्मत्तादिपरिणीतेषु जीवत्सु अदुष्टे वा भर्तरि मृते यमन्यं पतिं विन्दते स पौनर्भवो भर्ता। तेन पुनर्वैवाहिकविधिसंस्कृता पुनर्भूः। यद्वा क्लैब्यादि दोषरहितं पोषणादिसमर्थं कौमारं पतिमुत्सृज्य अन्यैः सह सुरतमाचर्य पुनः पूर्वमेव पतिं परि

अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति । पुनर्भूरपि द्विविधा क्षता चाक्षता च । तत्र क्षता संस्कारात्प्रागेव पुरुषसंबन्धदूषिता । अक्षता पुनः संस्कारदूषिता । या* पुनः कौमारं पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा †स्वैरिणीति ॥ ६७ ॥

एव सर्वप्रकारेणान्यपूर्वापर्युदासे प्राप्ते विशेषमाह—

**अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।**
**सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ ६८ ॥**

**आ गर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।**
**अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ ६९ ॥**

‡अपुत्रामलब्धपुत्रां पित्रादिभिः पुत्रार्थमनुज्ञातो देवरो भर्तुः कनीयान् भ्राता सपिण्डो वा उक्तलक्षणः सगोत्रो वा, एतेषां पूर्वस्यपूर्वस्याभावे परः परः घृताभ्यक्तसर्वाङ्गः, ऋतोवव वक्ष्यमाणलक्षणे इयाद्गच्छेत् आ गर्भोत्पत्तेः । ऊर्ध्वं पुनर्ग

---

गृह्णाति सा गतप्रत्यागता क्षतयोनिश्च, स च भर्ता पौनर्भवः । पुनर्भूर्द्वयस्याचास्य स्वरूपं वसिष्ठ आह—" पुनर्भूर्या कौमारं पतिमुत्सृज्यान्यैः सह चरित्वा पुनस्तस्यैव कुटुम्बमाविशति सा पुनर्भू र्भवति । या वा क्लीबं पतितमुन्मत्तं भर्तारमुत्सृज्यान्यं पतिं विन्दते । मृते वा सा पुनर्भूर्भवति॥" इति । तस्मात्पुनः संस्कृतत्वं पुनर्भूलक्षणम् "इति अप० ९६.

* " या पतिं परित्यज्य सवर्णमन्यं रागतो विवाहं विनैवोपभोगाय आश्रयेम् सा स्वैरिणी । स्वैरिणीग्रहणं तद्वैलक्षण्येन पुनर्भूज्ञानाय । तज्ज्ञानं च पौनर्भवस्य भर्तुः पुत्रस्य च ज्ञापनार्थम् ॥" इति । अप० ९६-९७.

† व्यवहाराध्याये ५१ श्लो. व्या. २९१ श्लो. व्या. स्त्रीसाहसप्रकरणे प्रायश्चित्ताध्याये ३६५ श्लोके चायं विस्तरेण संक्षेपेण च प्रतिपादितोऽशोद्रष्टव्यः ।

‡ " मृते जीवति वा पत्यौ गर्भाधानाक्षमे स्त्रियमनपत्यां पुत्रकामां तदुत्पत्तियोग्यां गुरुभिः प्रजोत्पत्यर्थमनुज्ञातः भर्तुः ज्येष्ठः कनिष्ठो वा भ्राता तदलाभे तत्सापिण्डः सगोत्रो वा तामत्यक्त ( मभ्यक्त ) सर्वाङ्गः ऋतुकाले गच्छेत् " इति अप० ९७.

च्छन् अन्येन वा प्रकारेण पतितो भवति । अनेन विधिनोत्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवति । एतच्च वाग्दत्ताविषयमित्याचार्याः "यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥" इति मनुस्मरणात् ॥ ६८ ॥ ६९ ॥

व्यभिचारिणीं प्रत्याह—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥

या व्यभिचरति तां †हृताधिकारां भृत्यभरणाद्यधिकाररहितां मलिनां अञ्जनाभ्यञ्जनशुभ्रवस्त्राभरणशून्यां पिण्डमात्रोपजीविनीं प्राणयात्रामात्रभोजनां, धिक्कारादिभिः परिभूतां, भूतलशायिनीं, स्ववेश्मन्येव वासयेत्, वैराग्यजननार्थं न पुनः शुद्ध्यर्थम् "यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥" इति पृथक्प्रायश्चित्तोपदेशात् ॥ ७० ॥

‡ तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह—

§सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम् ।
पावकः‖ सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ ७१ ॥

---

* "व्यभिचारिणीं प्रति यत्कार्यं तदाह—हृतेति ।

† "धने च धर्मे च निरस्तैश्वर्यां मलिनशरीरवस्त्रां देहधारणसमार्थान्नमात्रोपजीविनीमवज्ञातां क्षितिशायिनीं च कृत्वा व्यभिचारिणीं गृहैकदेशे वासयोत् । अत्र मनुः—"विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि । यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥" इति । नारदः—"व्यभिचारे स्त्रियामौण्ड्यमधः शयनमेव च ॥" कृतप्रायश्चित्ता तु संव्यवहार्या भवति । "कृतनिर्णेजनां चैव न जुगुप्सेत कर्हिचित्" इति मनुवचनात् इति अप० ९८.

‡ स्त्रीप्रशंसामाह इत्यपरार्केऽवतरणिका.

§ "सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पातिस्तुरीयस्ते मनुष्यजाः ॥" ऋग्वेदे—अ. ८. अ. ३. व. २७. ऋ. ५.

‖ "पावकः सर्वयज्ञार्हत्वम् । अतो हि ता मेध्याः यज्ञार्हाः योषितः" इति । अप० ९८.

---

१ म० ९. ६९. । २ म० ११. १७६

परिणयनात्पूर्वं सोमगन्धर्ववह्नयः स्त्रीर्भुक्त्वा यथाक्रमं तासां शौचमधुरवचनसर्वमेध्यत्वानि दत्तवन्तः । तस्मात्स्त्रियः सर्वत्र स्पर्शनालिङ्गनादिषु मेध्याः शुद्धाः स्मृताः ॥ ७१ ॥

न च तस्यास्तर्हि दोषो नास्तीत्याशङ्कनीयमित्याह—

*[1]व्यभिचारादृतौ शुद्धिर्गर्भे †त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके ॥ ७२ ॥

अप्रकाशितान्मनोव्यभिचारात् पुरुषान्तरसंभोगसंकल्पात् यदपुण्यं तस्य ऋतौ रजोदर्शने शुद्धिः । शूद्रकृते तु गर्भे त्यागः । "ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः। अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः॥" इति स्मरणात् । तथा गर्भवधे भर्तृवधे महापातके च, ब्रह्महत्यादौ आदिग्रहणाच्छिष्यादिगमने च त्यागः । "चतस्रस्तु परित्याज्याः शिष्यगा ‡ गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता

* "व्यभिचारे सत्यासां रजोदर्शने शुद्धिर्भवति । एतच्च मानसे व्यभिचारे । यथाऽऽह मनुः— "रजसा स्त्री मनोदुष्टा" इति । ततश्च रजोदर्शनात्प्रागसंव्यवहार्या, संव्यवहाराय प्रायश्चित्तं कारयितव्या । यदाह वसिष्ठः—"मनसा भर्तुरभिचारे यावकं क्षीरोदनं वा भुञ्जानाऽधः शयीत । ऊर्ध्वं त्रिरात्रादप्सु निमग्ना गायत्र्या अष्टशतेन शिरोभिर्जुहुयात् । पूताभवतीति विज्ञायते" इति" अप० ९८.

† "भर्त्रा बन्धुभिश्चासां त्यागः कार्यः । च कारः शास्त्रान्तरोक्तत्यागहेतुसंग्रहार्थः । अत्र मनुः—"ऋतुस्नाताऽथ या नारी भर्तारं नोपगच्छति । तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् " ।

‡ "शिष्योऽत्र भर्तृशिष्वः । गुरुः पिता । जुङ्गितः पतितः प्रतिलोमजो वा ।......: अथवाऽयमर्थः व्यभिचारे सति यदि रजोदर्शनात्मकऋतुप्रवृत्त्या गर्भाभावनिश्चये शुद्धिः शुद्धिहेतुप्रायश्चित्तक्रिया कार्या । गर्भे तु व्यभिचारनिमित्ते व्यभिचारिण्यास्त्याग एव न प्रायश्चितम् । न केवलं तस्मिन् गर्भे । किं तु स्वकीयस्य यथाकथञ्चिदुपात्तस्य गर्भस्य स्वभर्तृश्च वधे त्यागो न प्रायश्चित्तम् । महापातके तु त्वागोऽभिहितो विशेष ईत । महापातकेषु स्त्रीपुरुषसाधारणेषु सत्सु संभोगसंस्पर्शसंभाषणसहाधिकारविषयस्त्यागः कार्यः न पुनर्गृहान्निर्वासनरूपः यदाह मनुः—"एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि । वस्त्रान्नमासां देयं तु वसेयुस्तु गृहान्तिके " इति । अप० ९९.

१ अप० व्यभिचार ऋतौ ।

या ॥" इति वसिष्ठ[1]स्मरणात्। जुङ्गितः प्रतिलोमजश्चर्मकारादिः। त्यागश्चोपभोगधर्मकार्ययोः न तु निष्कासनं गृहात्तस्याः। "निरुन्ध्यादेकवेश्मनि" इति नियमात्॥ ७२॥

*द्वितीयपरिणयने हेतुमाह —

**सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा॥ ७३॥**

सुरां पिबतीति †सुरापी शूद्राऽपि। "पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्।" इति सामान्येन प्रतिषेधात्। व्याधिता दीर्घरोगग्रस्ता। धूर्ता विसंवादिनी। वन्ध्या निष्फला। अर्थघ्नी अर्थनाशिनी। अप्रियंवदा निष्ठुरभाषिणी। स्त्रीप्रसूः स्त्रीजननी। पुरुषद्वेषिणी सर्वत्राहितकारिणी। अधिवेत्तव्येति प्रत्येकमभिसंबध्यते। अधिवेदनं भार्यान्तरपरिग्रहः॥ ७३॥

किं च —

**अधिविन्ना तु ‡भर्तव्या महदेनोऽन्यथा भवेत्।**
**यत्राऽऽनुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते॥ ७४॥**

* "अधिवेदनीया आह—सुरापीति। अप० ९९.

† "सुरापीप्रभृतयोऽधिवेदनीयाः। एवंविधासु भार्यासु भार्यान्तरं कर्तव्यमिति यावत्। सुरापी मद्यपी। सुराशब्देनात्र मद्यं प्रतिपाद्यते न सुरा। तत्पानं हि महापातकत्वात्त्यागस्यैव हेतुः स्यात् नाधिवेदनमात्रस्य। अत एव मनुः—"मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत्। व्याधिता चाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा॥"।...एतासु विद्यमानास्वपि भार्यान्तरं परिणेयमित्यर्थः। अत्र मनुः—"वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥" तथा "या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। साऽनुज्ञाऽप्याधिवेत्तव्या नावज्ञेया कथञ्चन॥"।..."व्याधितां स्त्रीप्रजां वन्ध्यामुन्मत्तां विगतार्तवाम्। अदुष्टां लभते त्यक्तुं तीर्थतो न तु धर्मतः;"। तीर्थं योनिः; "एतच्चाकामविषयम्।" इति अप० ९९।

‡ "स्वगृहे पितृग्रहे वा वसन्तीति शेषः"। इति अप० १०१।

[1] ख. व्यास. अस्य श्लोकस्यवसिष्ठस्मृतौ (अ. २१ श्लो १०) पठितत्वात्सत्यमेवायं प्रमादः.

साऽधिविन्ना पूर्ववदेव दानमानसत्कारैर्भर्तव्या। अन्यथाऽभरणे महदपुण्यं वक्ष्यमाणो दण्डश्च। न च भरणे सति केवलापुण्यपरिहारः। यतः यत्र दम्पत्योरानुकूल्यं चित्तैक्यं तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिः॥ ७४॥

स्त्रियं प्रत्याह—

**मृते जीवति *वा पत्यौ या नाऽन्यमुपगच्छति।**
**सेह कीर्तिमवाप्नोति मोदते चोमया सह॥ ७५॥**

भर्तरि जीवति मृते वा या चापल्यादन्यं पुरुषं नैवोपगच्छति सेह लोके विपुलां कीर्तिमवाप्नोति। उमया च सह क्रीडते[2] पुण्यप्रभावात्॥ ७५॥

अधिवेदनकारणाभावे अधिवेत्तारं प्रत्याह—

**आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम्।**
**त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः॥ ७६॥**

आज्ञासंपादिनीमादेशसंपादिनीम्। दक्षां शीघ्रकारिणीम्। वीरसूं पुत्त्रवतीम्। प्रियवादिनीं मधुरभाषिणीं यस्त्यजति अधिविन्दति स राज्ञा स्वधनस्य[3] तृतीयांशं †दाप्यः। निर्धनस्तु भरणं ग्रासाच्छादनादि दाप्यः॥ ७६॥

स्त्रीधर्मानाह--

**‡स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।**

* "वाशब्दः समुच्चये। अतिरोहितमन्यत्। नित्यस्यापि पत्यव्यभिचारस्याऽऽनुषङ्गिकं फलमेतदुच्यते। पतिरपि भार्यां न व्यभिचरेदितिमनुराह—"अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः। एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः॥" इति। उभयोरव्यभिचारविधिर्नित्यः। तदतिक्रमे प्रायश्चित्तस्मरणात्" इति अप० १०१।

† "तृतीयांशं तस्यै दाप्यः।...। स्त्रिया इति चतुर्थ्यर्थे षष्ठी" इति। अप० १०२।

‡ "भार्याभिः भर्तृवचसोऽर्थः कार्यः। तत्करणं दृष्टप्रयोजनायोपयोगितां साधयति, स्वयं धर्मश्च भवति। न चान्यैः स्त्रीधर्मैस्तुल्योऽयम्। येन तैर्विकल्पेत। किं तु ततः उत्कृष्टः।

१ ख. केवलमपुण्य। २ ख. क. क्रीडति।

आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥

स्त्रीभिः सदा भर्तृवचनं कार्यं यस्मादयमेव स्त्रियाः उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात्। यदा तु महापातकदूषितस्तदा आ शुद्धेः संप्रतीक्ष्यः *न तत्पारतन्त्र्यम्। उत्तरकालं तु पूर्ववदेव तत्पारतन्त्र्यम् ॥ ७७ ॥

शास्त्रीयदारसंग्रहस्य फलमाह—

†लोकानन्त्यं[1] दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।

यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥ ७८ ॥

तेन एतदनुरोधेनैव अन्यधर्मकरणम्। अत एव तद्विरोधिनोऽधर्मान्निषेधति मनुः—"नास्ति-स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्। पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते॥" इति। भर्तृशुश्रूषणेनाविरुद्धं व्रतादि पत्यनुज्ञया कार्यम् । यदाह शङ्खः—"कामं भर्तुरनुज्ञया व्रतोपवासादीनामारम्भः" इति । एतदप्रोषित भर्तृकाविषयम् । यतः प्रोषितभर्तृकां विष्णुधर्मेषु स्त्रियमधिकृत्य " भर्तर्येवं प्रवसिते त्यक्तव्या पतिता शुभा । कुर्वीताराधनं नारी उपवासादिना हरेः ॥" इति श्रुत्यादि दृश्यते । शुभाऽस्खलितचरित्र " इति अप० १०२ ।

* " महापातकयुक्तो न शुश्रूष्य इत्यर्थः । एतच्च विवाहोत्तरं भर्तुः पातित्ये सति द्रष्टव्यम् । विवाहात्पूर्वं पतितेन ऊढाऽपि न भार्या । शास्त्रीयोद्वाहाभावात्" इति अप० १०२।

†"लोकश्चाऽऽनन्त्यं च द्यौश्चेति समाहारे द्वन्द्वः। ततः षष्ठ्येकवचनम्। तच्च लोकप्राप्त्यानन्त्यप्राप्तिद्युप्राप्तयो यथासंख्यं पुत्रपौत्रप्रपौत्रकैर्भवन्ति। यस्मादेवं तस्मात्पुत्रादिहेतवः स्त्रियः सेव्याः ऋतुकाले, कर्तव्याश्च सुरक्षिताः। व्यभिचारपरिहाराय रक्षाविधानाच्च गमयति व्यभिचारोत्पन्नैनैतत्फलं जन्यत इति । तथा च श्रुतिः—"अप्रमत्ता रक्षथ तन्तुमेतमा वः क्षेत्रे परे बजिान्यवाप्सुः। जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तु मेतम्" इति । द्युशब्दश्चात्र सूर्यलोके वर्तते । तथा च मनुः—" पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्य मश्नुते । अथ पुत्रस्यपौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम्॥" ब्रध्नः सूर्यः। पितरं प्रति विवाहितायाः पुत्रोत्पत्तेः तत्पितृपितामहगामि फलमिदं, श्राद्धस्येव पुत्रं प्रति विहितस्य पित्रादितृप्तिः" इति अप० १०३ ।

" मोक्षो ब्रह्मज्ञस्यैव गृहस्थस्य न सर्वस्येत्यभिप्रायेणोक्तं—त्रिवर्ग इति ।" इति अप० १०१ ।

---

१ अप०. लोकानन्त्यदिवः ।

लोके आनन्त्यं वंशस्याविच्छेदः [1]लोकानन्त्यं, दिवः प्राप्तिश्च, दारसंग्रहस्य प्रयोजनम् । कथमित्याह पुत्रपौत्रप्रपौत्रकैः लोकानन्त्यमग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः । यस्मात्स्त्रीभ्य एव[2] एतद्द्वयं भवति तस्मात् स्त्रियः सेव्याःउपभोग्याः प्रजार्थम्, रक्षितव्याश्च धर्मार्थम् । तथा चाऽऽपस्तम्बेन धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्योक्तं "धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीत" इति वदता । रतिफलं तु लौकिकमेव ॥ ७८ ॥

*पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्त, तत्र विशेषमाह—

**षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्† ।**
**‡ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ ७९ ॥**

---

*"एवं पुत्रस्य श्रेयस्करत्वेऽभिहिते तज्जननोपायमाह—षोडशर्तुरिति इति अप० १०३

† "संविशेत् पुत्रं जनयितुम् । "लक्षण्यं जनयेत्सुतम्" इति वाक्यशेषात् । तथा च मनुः—"युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥" इति । इति अप० १०३.

‡ "ब्रह्मचार्येव मैथुनविमुख एव पर्वणि पञ्चदशीद्वये भवेत् । "ऋतुकालाभिगामी स्यात्" "यथाकामी भवेद्वापि" इति प्रसक्ते स्त्र्युपगमने पर्वपर्युदासोऽयम् । "ब्रह्मचार्येव पर्वणि" इति पर्वग्रहणं तिथ्यन्तराणि शास्त्रान्तरपर्युदस्तानि संगृह्णाति । तत्र मनुः—"अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥" । अत्र अमावास्याशब्दसाहचर्याच्चतुर्दश्यष्टमीशब्दौ सितासितपक्षयोश्चतुर्दश्यष्टम्यावाहतुर्न तु ऋतौ । अपिशब्दादनृतावप्येतास्तिथयो वर्ज्याः । तथा ऋतोराद्याश्चतस्रो रात्रीर्वर्जयेत् । तथा च मनुः—"तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा । त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ॥" एकादशीत्रयोदश्यौ ऋतोर्न पक्षस्य । अत्र शङ्खलिखितौ--"न दिवा मैथुनं व्रजेत्क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च तस्मादेतत्परिवर्जयेत्" इति अनृतावप्येतत् । यदाहाऽऽपस्तम्बः "गृहमेधिनो व्रतम् अहन्यसंवेशनम् । नाष्टमीचतुर्दशीपञ्चदशीषु-स्त्रियमुपेयात् । न श्राद्धे भुक्त्वा, न दत्त्वा, नोपनिमन्त्रितः श्राद्धे, न व्रती, न दीक्षितश्च । न देवायतनश्मशानशून्यालयेषु, न वृक्षमूलेषु, न दिवा, न सन्ध्ययोर्नमलिनां न मलिनो नाभ्यक्तां, नाभ्यक्तो, न रोगार्तां, न रोगार्तो, न हीनाङ्गीं तथैव च वयोधिकाम् । नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः" । व्रतं प्रायश्चित्तम् । गर्भिण्यामिच्छन्त्यां न दोषः । तथा

---

१ ख. ग. लोकानन्त्यं वंशस्याविच्छेदः दिवः । २ ख. एवेति नास्ति ।

स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः। स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्रस्तस्मिन् ऋतौ युग्मासु रात्रिषु, रात्रिग्रहणाद्दिवसप्रतिषेधः, संविशेत् गच्छेत्पुत्रार्थम्। युग्मासु इति बहुवचनं समुच्चयार्थं अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत्। एवं गच्छन्ब्रह्मचार्येव भवति। अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति।[1] किं च पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्।[2] पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम्। यथाऽऽह मनुः[3]।।''—''अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्। ब्रह्मचारीभवेन्नित्यमप्यृतौ स्नातकोद्विजः।।'' इति। अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत्।। ७९।।

किं च—

**एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।**
***सुस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्।। ८०।।**

एवमुक्तेन प्रकारेण स्त्रियं गच्छन् क्षामां गच्छेत्। क्षामता च तस्मिन्काले रजस्वलाव्रतेनैव भवति। अथ चेन्न[4] भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थं अल्पाऽस्निग्धभोजनादिना।[5] 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः' इति वचनात्। यदा युग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्र्येव भवति पुरुषाकृतिः। अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः। कालस्य निमित्तत्वात्। शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात्। तस्मात्क्षामा कर्तव्या। मघामूलनक्षत्रे वर्जयेत्। चन्द्रे चैकादशादिशुभस्थानगते चकारात्पुंनक्षत्रे शुभयोगलग्नादिसंपत्तौ सकृदेकस्यां रात्रौ न द्विस्त्रिर्वा। ततो लक्षणैर्युक्तं पुत्रं जनयति। पुमानप्रतिहतपुंस्त्वः।। ८०।।

---

च वसिष्ठः—''अपि च काठके प्रवचने विज्ञायते, अपि नः श्वो विजनिष्यमाणा। पतिभिः सह शयतामिति स्त्रीणामिन्द्रदत्तो वरः'' इति। अप० १०४.

* ''चन्द्रसौस्थित्येन च ज्योतिः शास्त्र उक्तं पुत्रजन्मप्रदं तत्कालीनं ग्रहसंस्थानं लक्ष्यते।'' इति अप १०५.

---

१ क. ब्रह्मचर्यादौस्खलन। २ क. धाश्चतस्रश्चवर्जे ग. पर्वाण्याद्याश्चवर्जे। ३.—४. १२८.। ४ क. अथ तेननभ। ५ ख. अल्पास्निग्ध।

एवमृतौ नियममुक्त्वेदानीमनृतौ नियममाह—

**यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।**
**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥**

भार्याया इच्छानतिक्रमेण प्रवृत्तिरस्यास्तीति यथाकामी भवेत् । वाशब्दो नियमान्तरपरिग्रहार्थः[1] न पूर्वनियमनिवृत्त्यर्थः । स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् "भव-[2]तीनां कामविहन्ता पातकी स्यात्" इति । यथा "ता अब्रुवन् वर वृणीमहा ऋत्वियात् प्रजां विन्दामहै काममा विजनितोः संभवामेति तस्माद्दात्वियात् स्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वरं वृतँ ह्यासाम्[3]" इति । अपि च स्वदारेष्वेव[4] नितरां निरतः तन्मनस्को भवेदित्यनुषज्जते । एवकारेण स्त्र्यन्तरगमनं निवर्तयति प्रायश्चित्तस्मरणात् । उभयत्रापि दृष्टप्रयोजनमाह "स्त्रियो रक्ष्या यतः स्मृताः" इति । यस्मात्स्त्रियो रक्ष्याः स्मृता उक्ताः "कर्तव्याश्च सुरक्षिता" इति । तच्च सुरक्षण[5] यथाकामित्वेन स्त्र्यन्तरागमनेन भवतीति ।

अत्राह तस्मिन्युग्मासु संविशेदिति, किमयं विधिर्नियमः परिसंख्या वा । उच्यते । न तावद्विधिः प्राप्तार्थत्वात् । नापि परिसंख्या दोषत्रयसमासक्तेः । अतो नियमं प्रतिपेदिरे न्यायविदः । कः पुनरेषांभेद उच्यते[6] । "विधिरत्यन्तमप्राप्तौ निममः पाक्षिके सति । तत्र चान्यत्र च प्राप्तो परिसङ्ख्येति गीयते॥" इति । अत्यन्ताप्राप्तप्रापणं विधिः । यथा "अग्निहोत्रं जुहुयादष्टकाः कर्तव्याः" इति । पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः । यथा "समे यजेत[7]" इति । "दर्शपूर्णमासाभ्यां यजेत" इति यागः कर्तव्यतया विहितः । स च देशमन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः स

---

* "**एवमगच्छतोऽपि स्त्रीरक्षणसामर्थ्यं यस्य असौ ऋतावेव गच्छेत् । तस्य च फलातिशये वसिष्ठ आह—"ऋतौ गच्छान्वधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात्" इति अप० १०६.**

---

१ क. परिग्रहाय । २ क. भवतीनां कामविहन्ता पातकी स्यादिति इति नास्ति । ३ क. वारेवतँह्यसामिति । ४ ख. ष्वेव निरतः नितरां तन्म । ५ ख. तत्र सुरक्षितत्वं । ६ ख. 'उच्यत इत्यादि गीयते इतीत्यन्तं नास्ति । ग. उच्यते इत्येतदस्ति श्लोको नास्ति इति पदेन सह । ७ ख. समे देशे यजे ।

च समो विषमश्चेति द्विविधः, यदा यजमानः समे यियक्ष्यते तदा समे यजेतेति वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात्, यदा तु विषमे देशे यियक्ष्यते "तदा समे यजेत" इति स्वार्थं विधत्ते, स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी, चोदितदेशे नैव यागनिष्पत्तेः। अचोदितदेशोपादानेन यथाशास्त्रं यागोऽनुष्ठितः स्यादिति। तथा "प्राङ्मुखोऽन्नानि भुञ्जीत" इति। इदमपि स्मार्तमुदाहरणं पूर्वेण व्याख्यातम्। एकस्यानेकत्रप्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा—इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः, पुनरश्वाभिधानीमादत्त इत्यनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या निवर्तते। तथा "पञ्च पञ्च नखाभक्ष्याः" इत्यत्र हि यदृच्छया श्वादिषु शशादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तयति। किं पुनरत्र युक्तं। परिसंख्येत्याह तथा हि कृतदारसंग्रहस्य स्वेच्छयैवर्तौ गमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य गृह्यस्मृतिविरोधात्। एवं हि स्मरन्ति गृह्यकाराः दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति तत्र द्वादशरात्रात्संवत्सराद्वा पूर्वमेव ऋतुसंभवे ऋतौ गच्छेदेवेति नियमाद्ब्रह्मचर्यस्मरणं बाध्येत। अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम्। प्राप्ते चर्तौ भार्यागमनमिच्छयैव, अतो यदि गच्छेत्तदा ऋतावेवेतिवचनव्यक्तिर्युक्ता। किं च नैयामिकात्पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। कि च। ऋतौ गन्तव्यमेवेति नियमे असन्निहितस्य व्याध्यादिना असमर्थस्यानिच्छाश्चाशक्योऽर्थ उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथा हि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षे अनुवदति पक्षे तु विधत्ते चेति। तस्मादृतावेव गच्छेन्नान्यत्रेति परिसंख्यैव युक्ता। तदिदं भारुचिविश्वरूपादयो नानुमन्यन्ते यतो नियम एव युक्तः। पक्षे स्वार्थविधिसंभवात्, अगमने दोषश्रवणाच्च। "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥" इति। न च विध्यनुवादविरोधः अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य। तत्र हि विध्यनुवादविरोधः यत्र विधेयावधितया तदेवानुवदितव्यम्, अप्राप्ततयाऽन्योद्देशेन विधातव्यम्

१ क. त्तिश्चार्थात् चोदि। २ ख. ग. दानेन यथाशास्त्रं यागो नानुष्ठितः। ३ ग. निवर्तते। ४ ख. ग. गच्छेदृतावेवेति।

च। यथा *वाजपेयाधिकरणपूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेत" इति वाजपेयलक्षणगुणविधानावधित्वेन यागोनुवेदितव्यः । स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति न चानुवादेनेह कृत्यमास्ति। यत्तु नियमेऽदृष्टं कल्प्यमित्युक्तं, तत्परिसंख्यायामपि समानम्। अनृतौ गच्छतो दोषकल्पनात्। यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति, तदसत् । स एवायं नैयमिकपुत्रोत्पादनविधिः स्यान्मतम् । " एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेद् " इति स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति तन्न । गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदृश्यते एवं गच्छन् लक्षण्यं पुत्रं जनयेदिति अनेन यथाग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति । न चासंनिहितादेरशक्यार्थविधिप्रसंगः सन्निहितशक्तयोरेवोपदेशात् । "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति" इति। "यः स्वदारानृतुस्नातान्स्वस्थः सन्नोपगच्छति" इति विशेषोपादानात् । अनिच्छानिवृत्तिस्तु नियमाविधानादेव। न च विशेषणपरता[1] । पक्षे भावार्थविधिसंभवात् । नापि गृह्यस्मृतिविरोधः । संवत्सरात्पूर्वमेव ऋतुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषैः[2]—यथा श्राद्धादिषु । तस्मात्स्वार्थहानिपरार्थकल्पना[3]प्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता। "पञ्[4]चपञ्चनखा भक्ष्याः" इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः शशादिषु, श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवः । तथाऽपि नियमपक्षे शशाद्यभक्षणे दोषप्रसंगः श्वादिभक्षणे चादोषप्रसंगेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाऽऽश्रिता। एतेन सायंप्रातर्द्विजातीनामशनं श्रुतिनोदितमित्यत्रापि नियमो व्याख्यातः । "नान्तरा भोजनं कुर्यात्" इति च पुनरुक्तं स्यात्परिसंख्यायाम् । एवं च नियमे सति ऋतावृताविति वीप्सा लभ्यते । निमित्तावृत्तौ नैमित्तिकमप्यावर्तते इति न्यायात् । यथाकामी भवेदित्यपि नियम एव । अतृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेवेति । "ऋतावुपेयात्।" "सर्वत्र वा प्रतिषिद्धवर्ज्यम्[7]।" इत्येतदपि गौतमीयसूत्रद्वयं नियमपरमेव । ऋतावुपेयादेवं । अनृतावपि स्त्रीकामनायां प्रतिषिद्धवर्ज्जमुपेयादेवेत्यलमति प्रसंगे नेति[8] ॥ ८१ ॥

* जैमिनीयदर्शने १.४. (६—८). अधि० ६.

१ क. ख. परताऽपि । पक्षे । २ ख. दोषः यथाश्राद्धा । ३ ग. कल्पनप्राप्त । ४ क. एवं "पञ्चपञ्चनखा" । ५ ख. शनंस्मृति । ६—५. १, २. ७ ख. पेयादनृता । ८ क. ख. इतीति नास्ति ।

किं च—

**भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।**
**बन्धुभिश्च स्त्रियः *पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥**

भर्तृप्रभृतिभिः पूर्वोक्ताः साध्व्यः स्त्रियो यथाशक्त्यलङ्कारवसनभोजनपुष्पादिभिः संमाननीयाः । यस्मात्ताः पूजिताः धर्मार्थकामान्संवर्धयन्ति ॥ ८२ ॥

† तथा पुनः समर्पितगृहव्यापारया किं भूतया भवितव्यमित्याह—

**संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।**
**कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥**

संयतः स्वस्थाननिवेशितः ‡उपस्करो गृहोपकरणवर्गो यया सा तथोक्ता । यथा उलूखलमुसलशूर्पादेः कण्डनस्थाने, दृषदुपलयोरवियोगेन पेषणस्थाने, इत्यादि । दक्षा गृहव्यापारकुशला, हृष्टा सदैव प्रहसितानना, व्ययपराङ्मुखी न व्ययशीला,— स्यादिति सर्वत्र शेषः । किं च श्वश्रूश्च श्वशुरश्च श्वशुरौ । "श्वशुरः श्वश्र्वा[1]" इत्येकशेषः । तयोः पादवन्दनं नित्यं कुर्यात् । श्वशुरग्रहणं मान्यान्तरोपलक्षणार्थम् । भर्तृतत्परा भर्तृवशवर्तिनी सती पूर्वोक्तं कुर्यात् ॥ ८३ ॥

* "अस्याकरणे प्रत्यवायमाह मनुः—"यत्र नार्यः प्रपूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥" इति जामयः भगिन्यः । एतच्च स्नुषादुहित्रा-द्युपलक्षणम् । यदाहबृहस्पतिः—"भर्त्रा पत्नी सम्यगर्च्या वस्त्रालङ्कारभूषणैः । उत्सवे पितृमातृभ्यां श्वश्रूश्वशुरबन्धुभिः ॥" । भूषणादीनां समुच्चयो भर्तृविषयः । इतरविषयौ तु विकल्पसमुच्चयौ यथासामर्थ्यम् " इति अप० १०७.

† "स्त्रीधर्मानाह—संयतोपेति" अप० १०७.

‡ "उपस्करः गृहोपकरणं दर्वीपिठरादिः । संयतः संक्षिप्त उपस्करो यया सा संयतोपस्करा, दक्षा शीघ्रकारिणी, हृष्टा यथोत्पन्नेन द्रव्येण सन्तुष्टा, असद्व्ययपराङ्मुखी च भवेत् । ......भर्तृतत्परा भर्तृप्रधाना ( भर्तुरधीना ) अत्र विष्णुः—"अथ स्त्रीधर्माः—भर्तुः समानव्रतचारित्वं श्वश्रूश्वशुरगुरुदेवतातिथीनां पूजनं सुसंयतोपस्करताऽमुक्तहस्तता सुगुप्तभाण्डता

[1] अ. १. २. ७१.

* भर्तृसन्निधावुक्तम्, प्रोषिते भर्तरि तया किं कर्तव्यमित्याह—

† क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ८४ ॥

देशान्तरगतभर्तृका क्रीडां कन्दुकादिभिः शरीरसंस्कारमुद्वर्तनादिभिः, समाजो जनसमूहः उत्सवो विवाहादिः तयोर्दर्शनं, हास्यं विस्रम्भेण, परगृहगमनम् । त्यजेदिति प्रत्येकं संबध्यते ॥ ८४ ॥

किं च—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।

---

मूलक्रियास्वनभिरतिर्मङ्गलाचारतत्परता" । मूलक्रिया वशीकरणम् । तथा पृथ्वीं प्रति लक्ष्मीवाक्यम्—"नारीषु नित्यं सुविभूषितासु पतिव्रतासु प्रियवादिनीषु । अमुक्तहस्तासु सुतान्वितासु सुगुप्तभाण्डासु बलिप्रियासु ॥ सुस्पष्टवेषासु जितेन्द्रियासु कलेर्व्यपेतास्वविलोलुपासु । धर्मव्यपेक्षासु दयान्वितासु स्थिता सदाऽहं जगतां विधात्रि ॥" व्यासः—"द्वारोपवेशनं नित्यं गवाक्षावेक्षणं तथा । असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥" । मनुः—"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहे वासश्च नारीसन्दूषणानि षट् ॥" इति अप० १०७—८.

* "किं च" इत्यप० १०८.

† "क्रीडा द्यूतादिक्रिया, शरीरसंस्कारः स्नानानुलेपनादिः । समाजो जनमेलकः उत्सवः कौमुदीप्रभृतिः तयोः दर्शनं, हास्यं, परगृहे यानम्, एतत्सर्वं प्रवसिते (प्रोषिते) भर्तरि त्यजेत् । अत्र शङ्खलिखितौ—"प्रेङ्खाताण्डवविहारचित्रदर्शनाङ्गरागोद्यानयानविवृतासनोत्कृष्टपानभाजनकन्दुकक्रीडनगन्धमाल्यालङ्कारदन्तधावनाञ्जनादर्शप्रसाधनानामस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामनारम्भः" । "विधाय प्रोषिते वृत्तिं जीवान्नियमसंस्थिता । प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥" जीवनार्थं वृत्तिं विधाय प्रोषिते भर्तरि सति तद्भार्या तया वृत्त्या स्वल्पाहाररूपं नियममास्थाय जीवेत् । तामविविधाय प्रोषिते जीवेच्छिल्पैरगर्हितैरिति । यैर्न गर्हा जायते तैरेव शिल्पैर्जीवेदित्यर्थः ॥ अप० १०८.

---

१ ख. विहास्यं विजृम्भणम् । ग. हास्यं विश्रम्भणम् ।

**अभावे ज्ञातयस्तेषां न *स्वातन्त्र्यं[1] क्वचित्स्त्रियाः ॥ ८५ ॥**

पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत् । तत ऊर्ध्वं भर्ता तदभावे पुत्त्राः, वृद्धभावे च, तेषामुक्तानामभावे ज्ञातयः, ज्ञातीनामभावे राजा "पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः।" इति वचनात् । अतः क्वचिदपि स्त्रीणां नैवं[2] स्वातन्त्र्यम् ॥ ८५ ॥

किं च—

**पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।**
**हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥ ८६ ॥**

†भर्त्रा विना भर्तृरहिता पित्रादिरहिता[3] न स्यात् । यस्मात्तद्रहिता गर्हणीया निन्द्या भवेत् । एतच्च ब्रह्मचर्यपक्षे । "भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा[4]" इति विष्णुस्मरणात् । अन्वारोहणे महानभ्युदयः । तथा च व्यासः कपोतिकाख्यानव्याजेन दर्शितवान्—"पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् । तत्र चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ॥ ततः स्वर्गं गतः पक्षी भार्यया सह संगतः । कर्मणा पूजितस्तत्र रेमे च सह भार्यया ॥" इति । तथा च शङ्खाङ्गिरसौ—"तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे । तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥" इति प्रतिपाद्य तयोरवियोगं दर्शयतः "व्यालग्राही

---

* "कन्यां कुमारीं पिता रक्षेत् पालयेत्, विन्नां परिणीतां पतिः, वार्द्धके तु पुत्त्रः तेषां पुत्त्रादीनामभावे ज्ञातयो बान्धवाः रक्षेयुः। एवमुक्तेऽपि पारतन्त्र्ये यः स्वातन्त्र्यनिषेधः स असत्सु ज्ञातिषु राजपारतन्त्र्यविध्यर्थः । तथा च स्मृत्यन्तरे—"पक्षद्वयावसाने तु राजा भर्त्ता प्रभुः स्त्रियाः । स तस्या भरणं कुर्यान्निगृह्णीयात्पथश्च्युताम् ॥" इति अप १०९.

† "भर्तारं विना वर्तमाना पित्रादीनामन्यतमेन रहिता न स्यात् । यदि स्याच्छिष्टगर्हणीया भवेत् पूर्वेण वाक्येन पित्रादिभिः स्त्रीरक्षा कार्येत्युक्तम् । अनेन भर्तुरसंनिधौ पित्रादिरहिता स्त्री न भवेदिति विधीयते " इति अप० १०९.

---

१ अप० स्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः । अप० ङ. षां न स्वातन्त्र्यं परं स्त्रियाः । २ ग. स्त्रीणां न स्वातन्त्र्यम् । ३ ख. पित्रादिरहिता वा न । ४—२५. १४.

यथा सर्पं बलादुद्धरते बिलात् । तद्वदुद्धृत्य सा नारी सह तेनैव मोदते ॥ तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः । क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥" इति*। तथा "ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः । पुनात्यविधवा नारी तमादाय मृता तु या ॥" तथा हारीतः—"मृते भर्तरि या नारी समारोहेद्धुताशनम् । साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥ यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् । तावन्न[1] मुच्यते सा हि स्त्रीशरीरात्कथंचन ॥" इति । हारीतोऽपि—"मातृकं पैतृकं चापि यत्र चैव प्रदीयते । कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छति ॥" इति । तथा "आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥" इति । अयं च सर्वासां †स्त्रीणामगर्भिणीनामबालापत्यानाम् आचाण्डालं[3] साधारणो धर्मः "भर्तारं याऽनुगच्छति" इत्यविशेषोपादानात् यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि "मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् । इतरेषु[4] तु वर्णेषु तपः परममुच्यते ॥ जीवन्ती तद्धितं कुर्यान्मरणादात्मघातिनी । या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ॥ सा स्वर्गमात्मघातेन नाऽऽत्मानं न पतिं नयेत् ।" इत्येवमादीनि, तानि पृथक्चित्यधिरोहणविषयाणि । "पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ।" इति विशेषस्मरणात् । अनेन क्षत्रियादिस्त्रीणां पृथक् चित्यभ्यनुज्ञा गम्यते ॥ यत्तु कैश्चिदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादतिप्रवृद्धस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः श्येनवत्, यथा "श्येनेनाभिचरन् यजेत[5]" इति तीव्रक्रोधाक्रान्तस्वान्तस्य प्रतिषेधशास्त्रमतिक्रामतः श्येनोपदेश इति[6], तदयुक्तम् । ये

* "यथाऽऽहाङ्गिराः—"सर्वासामेव नारीणामग्निप्रपतनादृते । नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित्॥ यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता । तावन्नमुच्यते नारी स्त्रीशरीरात्कथञ्चन ॥ सद्वृत्तभावाश्रितभर्तृकाणां स्त्रीणां वियोगक्षतकातराणाम् । तासां प्रभावस्तमिते गते कं नाग्निप्रवेशादपरोऽस्ति मार्गः॥"इति।अस्तमिते प्रभौ भर्तरि, कं गते स्वर्गं गते इत्यादि"—अप० १०९.

† अबालापत्यानामिति । गत्यन्तराभवे सतीति शेषः । आबालापत्यानामिति पाठान्त-

१ क. तावन्नोमुच्यते । २ ख. ग. माधवीये इत्यारभ्य संप्लवमित्यन्तो ग्रन्थोनास्ति । ३ ख. आचाण्डालानां ४ क. इतरेष्वित्यादि मरणादात्मघातिनीत्यन्तश्लोको नास्ति । ५ क. श्येनेनाभिचरन्यजेततीति नास्ति । ६ क. श्येनोपदेश इतिवत् तदयु ।

तावत् श्येनकरणिकायां भावनायां *भाव्यभूतहिंसायां विधिसंस्पर्शाभावेन प्रतिषेध-संस्पर्शात् फलद्वारेण †श्येनस्यानर्थत्वं वर्णयन्ति, तेषां मते हिंसाया एव स्वर्गार्थतया अनुगमनशास्त्रेण विधीयमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयवत्स्पष्टमेवानुगमनस्य श्येनवैषम्यम् ‡ ॥ यत्तु मतं हिंसा नाम मरणानुकूलो व्यापारः । श्येनश्च परमरणानु-कूलव्यापाररूपत्वाद्धिंसैव कामाधिकारे च करणांशे रागतः प्रवृत्तिसंभवेन विधेर-प्रवर्तकत्वात् । रागप्रयुक्तहिंसारूपत्वात् श्येनः प्रतिषिद्धः स्वरूपेणैवानर्थक इति । तत्राप्यनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानात् । मरणे यद्यपि रागतः प्रवृत्तिः, तथाऽपि मरणानुकूले व्यापारे अग्निप्रवेशादावितिकर्तव्यतारूपे विधित एव प्रवृत्तिरिति न निषेधस्यावकाशः "वायव्यँ श्वेतमालभेत भूतिकामः" इतिवत् । तस्मात्स्पष्टमेवानुगमनस्य श्येनवैषम्यम् ॥ यत्तु " तस्मादुह न पुरायुषः स्व.कामी प्रेयात्" इति श्रुतिविरोधादनुगमनमयुक्तमिति तच्च न स्वःकाम्यायुषः प्राक् न प्रेयादिति स्वर्गफलोद्देशेनायुषःप्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकलङ्कस्य श्रवणमननिदिध्यासन संपत्तौ सत्यामात्मज्ञानेन नित्यनिरतिशयानन्दब्रह्मप्राप्तिलक्षणमोक्षसम्भवः तस्माद-नित्याल्पसुखरूपस्वर्गार्थमायुर्व्ययो न कर्तव्य इत्यर्थः । अतश्च मोक्षमनिच्छन्त्या अनित्याल्पसुखरूपस्वर्गार्थिन्या अनुगमनं युक्तं इतरकाम्यानुष्ठानवदिति सर्वमनवद्यम् ॥ ८६ ॥

किंच—

## पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।

---

रम् । अत्र गत्यन्तरे सतीति शेषः । एवं च गर्भिणीनिषेधवद्बालमरणतदभावाभ्यां विधिनिषेध योस्तुल्यत्वमिति भावः ।

* भाव्या चासौ भूतहिंसा च तस्याम् । भाव्यं तु फलम् । प्रकृते च भूतहिंसैव फलमित्यर्थः ।

† स्यानर्थकत्वमितिपाठोयुक्तः । "अर्थान्नञः" इति कविधानात् ।

‡ भर्तृमरणे रागात्प्रवृत्तेर्न भर्तृमरणं विधेयम् । किन्तु करणत्वेन श्येनो विधीयते । न चायं श्येनो हिंसा तेन " न हिंस्यात्सर्वाभूतानि " इति श्रुतिर्न बाध्यते, रागतः स्वर्गप्रवृत्तेः करणत्वेनानुगमनं विधीयते । तच्च मरणरूपमेवेत्युक्तश्रुतिरत्र बाध्यते इति वैषम्यमिति भावः।

---

१ ख. कराणिकायां भावनायां भाव्य ।

**सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ ८७ ॥**

*प्रियमनवद्यत्वेन मनोऽनुकूलम्, आयत्यां च यच्छ्रेयस्करं तद्धितं, प्रियं च हितं च प्रियहितं पत्युः प्रियहितं तस्मिन् युक्ता निरता, स्वाचारा शोभनः आचारो यस्याः सा तथोक्ता। शोभनश्चाचारो दर्शितः शङ्खेन—"न गृहान्निर्गच्छेत्। नानुत्तरीया न त्वरितं व्रजेत्। न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः। न नाभिं दर्शयेत्। आ गुल्फाद्वासः परिदध्यात्। नस्तनौ विवृतौ कुर्यात्। न हसेदनप्रावृतम्। न भर्तारं न तद्बन्धून् वा द्विष्यात्। न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्। संसर्गेण हि चारित्रं दुष्यति।" इति। विजितेन्द्रिया विजितानि संयमितानि इन्द्रियाणि श्रोत्रादीनि वागादीनि च मनः सहितानि यया सा इह लोके कीर्तिप्रख्यातिं परलोके चोत्तमां गतिं प्राप्नोति। अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः। "प्रागुपनयनात्कामचारकामवादकामभक्षाः" इति स्मरणात्। "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः।" इति च ॥ ८७ ॥

अनेकभार्यं प्रत्याह।

**‡सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥**

---

* "समनन्तरसुखदं कर्म प्रियम्। परिणतिसुखदं हितम्।" इति अप० १०९.

"उक्तानां स्त्रीधर्माणां फलमाह—पतीति"। अप० १०९.

† "या पत्युः प्रियहितयोः उद्युक्ता स्त्री धर्मचारिणी"...। अत्र मनुः—"दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता। सा भर्तृलोकमाप्नोति यथैवाऽरुन्धती तथा॥" बृहस्पतिः—"आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता"। मृते मरणं तेन सहाग्निप्रवेशनेनैव" इत्यप० १०९. शिष्टमत्रैवाध्याये मिताक्षरायां षडशीतितमे" श्लोकव्या० स्पष्टम्।

‡ "सवर्णायां सत्यां भार्यायामन्यामसवर्णां धर्मकार्यं न कारयेत्। तया सह धर्मं नाऽऽचरेदित्यर्थः। अभावे तु सवर्णाया इतरयाऽपि सहाचरेदित्यर्थसिद्धम्। अत एव शूद्रयैव सह धर्मानुष्ठाननिषेधमाह वसिष्ठः—"कृष्णवर्णा वै रामा रमणायैव न धर्माय" इति कृष्णवर्णा शूद्रा।" इति अप० ११३.

---

१ ख. खेनानुक्ता गृ २ ख. पुरुषं भाषे। ३ ख. हेशेदप्रावृता। भर्तारं तद्बन्धून्वानादिव

सवर्णायां सत्याम् अन्यामसवर्णां नैव धर्मकार्यं कारयेत् *सवर्णास्वपि बह्वीषु धर्म्ये विधौ धर्मानुष्ठाने ज्येष्ठया विना ज्येष्ठां मुक्त्वा इतरा मध्यमा कनिष्ठा वा न नियोक्तव्या ॥ ८८ ॥

प्रमीतपतिकाया विधिमुक्त्वा इदानीं प्रमीतभार्यं प्रत्याह—

†दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥

पूर्वोक्तवृत्तवतीं आचारवतीं विपन्नां स्त्रियमग्निहोत्रेण श्रौतेनाग्निना तदभावे स्मार्तेन दाहयित्वा पतिः भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा आश्रमान्तरेष्वनधिकृतो वा स्त्र्यन्तराभावे पुनर्दारान् अग्नींश्च विधिवदाहरेत् अविलम्बयन् शीघ्रमेव । "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।" इति दक्षस्मरणात् । एतच्चाधानेन सहाधिकृताया एव नान्यस्याः ॥ यत्तु "द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत् ॥" इति, तथा "मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत् । ब्रह्मघ्नं तं विजानीयाद्यश्च कामात्समुत्सृजेत् ॥" इत्येवमादि, तदाधानेन सहानधिकृताया अग्निदाने वेदितव्यम् ॥ ८९ ॥

॥ इति विवाहप्रकरणम् ॥

---

* "सवर्णाऽनेकत्वे तु ज्येष्ठायां चादुष्टायां तया विना नेतरया सह धर्ममाचरेत् । ज्येष्ठया तु सह कनीयस्योऽपि धर्मं कारयितव्याः । तथा चाऽऽपस्तम्बः "धर्मप्रजासम्पन्नेषु दारेषु नान्याकुर्वीतान्यतरापाये तु कुर्वीत। प्रागग्न्याधेयादाधाने हि सती कर्मभिः सम्बध्यते।" इति । बोधायनः—"पत्नीनां सह सन्नहनमिति सह स्माऽऽह बोधायन एकैकामेव संनह्येदेकैकां गार्हपत्यमीक्षयेदेकैकाऽऽज्यमवेक्षयेत्" इत्यादि । कात्यायनः—"नैकयाऽपि विना कार्यमाधान भार्यया द्विजैः । अकृतं तद्विजानीयात्सर्वा नन्वारभन्ति यत् ॥" तस्माऽज्ज्येष्ठैव सहधर्मचारिणी नेतरेति व्याख्यातं कल्पसूत्रधर्मशास्त्रविरुद्धत्वादनादरणीयम्" इति अप० ११३

† "यया सहाग्न्याधानं तामुक्तवृत्तवार्तीं मृतां पतिः वैतानैः अग्निभिः यथाविधि दाहयित्वा असवर्णभार्यश्चेद्विधिवत् दारानाहरेत्, अग्नींश्च अविलम्बयन् । तत्र सवर्णदारालाभे शूद्रावर्जमसवर्णयाऽपि सहाऽऽधानादि कार्यम् । यदाह विष्णुः—"मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् । उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत् ॥" अस्यार्थः—वैदिकैः मृतां पत्नीं संस्कृत्य न तान् परित्यजेत् पुनरादधीत । सवर्णदारालाभविषये उपाधिनाऽपि असवर्णयाऽपि भार्यया यावज्जीवं कर्म समापयेदिति । न पुनरयमर्थो मृतायामपि भार्यायां वैदिकोऽग्निर्नत्याज्यः, न तेन तां दहेदिति" अप० ११४.

# अथ वर्णजातिविवेकप्रकरणम् ३

*ब्राह्मणस्य चतस्रो भार्या भवन्ति क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेत्युक्ता तासु च पुत्रा उत्पादयितव्या इत्युक्तम् । इदानीं कस्या कस्मात् कः पुत्रो भवति इति विवेकमाह—

**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।**
**अनिन्द्येषु विवाहेषु पुत्त्राः सन्तानवर्धनाः ॥ ९० ॥**

सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयो मातृपितृसमानजातीयाः पुत्त्रा भवन्ति "[1]विन्नास्वेषविधिः स्मृतः" इति सर्वशेषत्वेनोपसंहारात् विन्नासु । सवर्णास्विति संबध्यते । विन्नेशब्दस्य[2] संबन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः अतश्चायमर्थः। संपन्नैः[3] उक्तेन विधिना ऊढायां सवर्णायां वोढुः †सवर्णादुत्पन्नास्तत्समानजातीया[4] भवन्ति । अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तं[5] भवति । ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते । "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।" इति स्मरणात् । अपध्वंसजाः व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते ॥ ननु कुण्डगोलकयोरब्राह्मणत्वे श्राद्धे प्रतिषेधोऽनुपपन्नः । न्यायविरोधश्च । यो यज्जातीयात् यज्जातीयायामुत्पन्नः स

---

* "यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥" मनुः ९—१७८. "परं शवाद्ब्राह्मणस्यैष पुत्त्रः शूद्रापुत्त्रं पारशवं तमाहुः" इति महाभारते ।

† "अनिन्द्येषु विवाहेषु ऊढायामुत्पन्नाः पुत्त्राः सन्तानस्यवर्द्धनाः ब्रह्मवर्चसादिगुणवृद्धिहेतवः भवन्ति । अत्र मनुः—"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्त्रा जायन्ते शिष्टसम्मताः । रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः । पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः। इतरेषु च शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः"। ब्राह्मणविषयमेतत् । "अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥" इत्यप० ११६.

"उक्तविवाहासु पतिसवर्णासु तदसवर्णासु चोत्पन्नानां तथा स्वैरिणीषु प्रतिलोमोत्पन्नानां संव्यवहारोपयोगिसंज्ञापरिज्ञानाय प्रकरणमारभते—सवर्णेभ्य इति । अप० ११३.

---

१—आ० ७२. २ ख. विन्नाशब्दस्य । ३ ख. ग. संवृत्तः । ४ ख. ग. त्पन्नस्तस्मात्समा ५ क. ग. सहोढादी ।

तज्जातीय एव भवति, यथा गोर्गवि गौः, अश्वाद्वडवायामश्वः तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम् । तथा कानीनपौनर्भवादीननुक्रम्य "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः[१] ।" इति वचनविरोधश्च । नैतत्सारम् । ब्राह्मणेन ब्राह्माण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः । यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः ॥ न च न्यायविरोधः । यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा । ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथा स्मरणं भवति । यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रं, तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्चैतदेव जातिलक्षणम् ॥ न चानवस्था । अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् । "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि[१]ः ।" इति चोक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते । क्षेत्रजस्तु मातृसमानजातीयः,—नियोगस्मरणात्, शिष्टसमाचाराच्च । यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसंगेन । किं च अनिन्द्येषु ब्राह्मादिविवाहेषु पुत्राः सन्तानवर्धनाः अरोगिणो दीर्घायुषो धर्मप्रजासंपन्ना भवन्ति ॥ ९० ॥

सवर्णानुक्त्वेदानीमनुलोमानाह—

**विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।**
**अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि[४] वा ॥ ९१ ॥**

ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तो नाम पुत्रो भवति । वैश्यकन्यकायां विन्नायामम्बष्ठो नाम भवति । शूद्रायां विन्नायां निषादो नाम पुत्रो भवति । निषादो नाम कश्चिन्मत्स्यघातोपजीवी[५] प्रतिलोमजः, स मा भूदिति पारशवोऽयं निषाद इति संज्ञाविकल्पः । विप्रादिति सर्वत्रानुवर्तते * ॥ यत्तु "ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां[६] वैश्य एव भवति, वैश्येन शूद्रायां[७] शूद्र एव

* "गौतमः—"अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्मन्तपारशवाः । असवर्णभार्योत्पन्ना अनुलोमजाः । ब्राह्मणस्यानन्तराक्षत्रिया, तस्यां तेनोत्पन्नः सवर्णः । क्षत्रियादनन्तरायां वैश्यायामम्बष्ठः । वैश्यात्तदनन्तरायां शूद्रायामुग्रः । ब्राह्मणादे-

१ व्य० १३३. । २ ख. इति तूक्तानु । ३ ख. ग. वर्णानुक्त्वा । ४ क. पांर्शवोऽपि । ग. पारसवोऽपि । ५ क. ख. घातजीवी । ६ ख. वैश्यायामुत्पादितो वैश्य । ७ ख. शूद्रायामुत्पादितः शूद्र ।

भवति " इति शङ्खस्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं, न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं, क्षत्रियादिजातिप्राप्त्यर्थं वा । अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादि कार्यम् । प्रागुपनयनात्कामचारादि[1] पूर्ववद्वेदितव्यम् ॥ ९१ ॥

**वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।**
**वैश्यात्तु करणः शूद्र्यां *विन्नास्वेष विधिः स्मृतः ॥ ९२ ॥**

वैश्यायां शूद्रायां च विन्नायां राजन्यान्माहिष्योग्रौ यथाक्रमं पुत्रौ[2] भवतः । वैश्येन शूद्रायां विन्नायां करणो नाम पुत्रो भवति । एष सवर्णमूर्धावसिक्तादिसंज्ञाविधिः विन्नासूढासु स्मृत उक्तो वेदितव्यः । एते मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः† ॥ ९२ ॥

---

कान्तरायां वैश्यायां निषादः । क्षत्रियादेकान्तरायां शूद्रायां दौष्मन्तः । ब्राह्मणाद्‍द्व्यन्तरायां शूद्रायां पारशवः ।" इति । अत्र च संज्ञाविकल्पे न विरोधः कार्यः । " इति अप० ११७.

* " सवर्णेभ्यः सवर्णासु " इत्यादिना य उक्तो विधिः स विन्नासु परिणीतासु स्मृतो मुनिभिः । अविन्नास्वपि जातानां क्षेत्रजादिपुत्राणां वर्णत्वाभ्युपगमाद्विन्नास्विति शास्त्रविहितपुत्रोत्पत्तिप्रकारोपलक्षणार्थम् । यत एव तेषां ब्राह्मणत्वमस्ति अत एव " ब्राह्मणा ऋत्विजः " इत्यभिधाय " शाबलेयबाहलेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवरान्परिहाप्य " इति बोधायनः परक्षेत्रोत्पन्नानां पर्युदासमाह । यत्तु देवलेनोक्तं— " द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते । अवरी( रे )ट इति ख्यातः शूद्रधर्मा स जातितः ॥" तथा " व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः॥" इति, तच्छास्त्रस्वीकृतक्षेत्रजकानीनसहोढगूढोत्पन्नपौनर्भवव्यतिरिक्तनियोगव्यभिचारोत्पन्नपुत्रविषयम् । एते च मूर्धावसिक्तादयो न क्षत्रियादिभ्यो भिन्नाः । किं तु तत्तद्ब्राह्मणादिजनितोपाधिभेदान्मूर्धावसिक्तादिनामभेदभाजो भवन्ति । तदाहशङ्खः— " ब्राह्मणेन क्षत्रियायामुत्पन्नः क्षत्रिय एव भवति । क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एव इति " इति । अप० ११८.

† अनुलोमजाः—

(१)
क्षत्रिया + ब्राह्मणः +वैश्या. +शूद्रा.
१. मूर्धावसिक्तः. ३. निषादः. २. अम्बष्ठः.

(२)
वश्या + क्षत्रियः +शूद्रा
४. माहिष्यः ५. उग्रः.

(३)
वैश्यः +शूद्रा
६. करणः.

---

१ ग. कामचारवादभक्षा इति पूर्वं । २ ख. पुत्तौ संभवतः ।

प्रतिलोमजानाह—

**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा ।**
**शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥ ९३ ॥**

ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिताः यथाक्रमं सूतवैदेहिकचाण्डालाख्याः पुत्रा भवन्ति । तत्र चाण्डालः सर्वधर्मबहिष्कृतः* ॥ ९३ ॥

किं च—

**क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९४ ॥**

क्षत्रिया योषिद्वैश्यान्मागधं नाम पुत्रं जनयति। सैव शूद्रात्क्षत्तारं, वैश्ययोपिच्छूद्रादायोगवं पुत्रं जनयति[1] । एते च सूतवैदेहिकचाण्डालमागधक्षत्त्रायोगवाः षट् प्रतिलोमजाः‡ । एतेषां च §वृत्तयः औशनसे मानवे च द्रष्टव्याः ॥ ९४ ॥

* " सर्वेषां वर्णानां ये धर्मास्ते सर्वधर्माः, तेष्वन्यधिकारी, न पुनः सर्वेषु धर्मेष्वनधिकारीत्यर्थः । यत एवाऽऽह देवलः— "स्वजातिशोधनं सर्वप्रणामास्तितिक्षा व्यवहारशुद्धिरपरावमा (सा) नं स्वभृत्यपोषणं स्वकर्मानुष्ठानं प्रधानकर्मवर्जनमिति चण्डालधर्माः" ततश्च वर्णधर्मः प्रधानकर्म, स्वकर्म स्वकीयवृत्तिः । " इति । अप० ११८—११९.

" प्रतिलोमजानां नामान्याह—ब्राह्मण्यामिति " (९३ तम श्लोकस्य अवतारिका) अप० ११८.

† " एताभिः संज्ञाभिः शास्त्रान्तरे संव्यवहारः ।" इति । अप० ११९.

‡ प्रतिलोमजाः—

| | (१) | | | (२) | (३) |
|---|---|---|---|---|---|
| क्षत्रियः + | ब्राह्मणी | + वैश्यः. | वैश्यः + | क्षत्रिया | वैश्या |
| | + शूद्रः | | | + शूद्रः | + शूद्रः |
| १. सूतः. | ३. चाण्डालः. | २. वैदेहिकः | ४. मागधः. | ५. क्षत्ता. | ६. अयोगवः. |

§ " तत्रमनुः—" सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम् । वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥ मत्स्यघातो निषादानामायोगव्यस्य लक्षणम् । " तथा " ब्राह्मणार्थे

१ ग. दापोगव । त्वायोगवा ।

संकीर्णसंकरे जात्यन्तरमाह—

**माहिष्येण करण्यां तु रथकारः प्रजायते ।**
**असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ ९५ ॥**

क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः, वैश्येन शूद्रायामुत्पादिता करणी, तस्यां माहिष्येणोत्पादितो *रथकारो नाम जात्या भवति । तस्य चोपनयनादि सर्वं कार्यम्,—वचनात्, यथाऽऽह शङ्खः "क्षत्रियवैश्यानुलोमानन्तरोत्पन्नजो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रियाः अश्वप्रतिष्ठा रथसूत्रवास्तुविद्याध्ययनवृत्तिता च ।" इति । एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरतोपनयनादिप्राप्तिश्च वेदितव्या, तयोर्द्विजातित्वात् । संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः । एतच्च प्रदर्शनमात्रमुक्तं संकीर्णसंकरजातानामानन्त्याद्वक्तुमशक्यत्वात्[1] । अत एतावदत्र विवक्षितम् असन्तः प्रतिलोमजाः सन्तश्चानुलोमजा ज्ञातव्या इति ॥ ९५ ॥

"सवर्णेभ्यः सवर्णासु जायन्ते[2]" इत्यादिना वर्णप्राप्तौ कारणमुक्तमिदानीं कारणान्तरमाह—

**जात्युत्कर्षो †युगे ज्ञेयः सप्तमे पञ्चमेऽपि[3] वा ।**

गवार्थे वा देहत्यागोऽनुपस्कृतेः (तः) । स्त्रीबालाभ्यवपत्तौ च बाह्यानां सिद्धिकारणम् ॥" उपस्करः मूल्यग्रहणम् । अभावपत्तिः अनुग्रहः" इति । अप० ११९.

* "वैदिककर्माधिकारित्वादस्य सङ्कीर्णयोनीनां मध्ये पृथगभिधानम् ।" इति अप०. ११९.

† "युगं जायापत्योर्युग्मम् । तत्र सप्तमे पञ्चमेऽपि वा पितृसमानवर्णभावो ज्ञेयः । एतच्च अनुलोमजस्त्रीविषयम् । तस्यां भार्यात्वसंभवात्, न तु प्रतिलोमजा विषयम् । तस्या वर्णबाह्यत्वेनाजायात्वात् । गुणापेक्षो विकल्प उदाहरणम् । उत्तमवर्णेन हीनवर्णायामुत्पन्ना या स्त्री सा उत्तमवर्णादनिषिद्धमार्गेण स्त्रियं जनयति । साऽप्येवं साऽप्येवमिति सप्तमे स्त्रीपुंसयुगले जातमपत्यं समानवर्णं पित्रा भवति" इति । अप०. ११९—१२०.

१ ख. संकरजातिनामा । २ आ. ७० । ३ ख. ज्ञेयः पञ्चमे सप्तमेऽपि ।

व्यत्यये कर्मणां साम्यं †पूर्ववच्चाधरोत्तरम् ॥ ९६ ॥

जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्मणत्वादिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे, अपिशब्दात्षष्ठे वा, बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च—ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, साऽपि ब्राह्मणेनोढा अन्याम्, इत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा, साऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति। मूर्धावसिक्ताऽपि अनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणं जनयति। एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं क्षात्रियं षष्ठं पञ्चमं जनयति। तथा करणी वैश्योढा पञ्चमं वैश्यमिति। एवमन्यत्राप्यूहनीयम्॥

किं च कर्मणां व्यत्यये वृत्यर्थानां कर्मणां व्यत्यये विपर्यासे यथा ब्राह्मणो मुख्यवृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः। तेनाप्यजीवन् वैश्यवृत्त्या, तयाप्यजीविन् शूद्रवृत्त्या। क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा। वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येतिकर्मणां व्यत्ययः। तस्मिन् व्यत्यये सति यद्या-

*"ब्राह्मणक्षत्रियादीनां यानि वृत्तिरूपाणि कर्माणि तेषां व्यत्यये व्यतिक्रमे यथा ब्राह्मणस्य क्षत्रियवृत्तिं वैश्यवृत्तिं वा उपजीवतो जाताः पुत्रपौत्रादयः यदि तामेव वृत्तिमुपजीवन्ति तदा सप्तमे पञ्चमे वा जातमपत्यमुपजीव्यमानसम्बन्धिवर्णात्मकं भवति" इति॥ अप० १२०.

† "पूर्ववद्वर्णसंकरवद्वृत्तिसंङ्करस्याप्युत्तराधरं वेदितव्यम्। भावप्रधानोऽयं निर्देशः। ततश्चोत्तरत्वमधरत्वं वा वेदितव्यमित्यर्थः। आनुलोम्येन वृत्तिसङ्करस्य उत्तरत्वम्। यथाऽऽह वसिष्ठः—"आजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्" इति। वृत्तिसङ्करे-प्रातिलोम्यमधरम्। यथा वैश्यस्य क्षत्रवृत्त्युपजीवनं, क्षत्रियस्यब्राह्मणवृत्त्युपजीवनम्। अत एव "वृत्तिमातिष्ठेरन्" इत्यनुवृत्तौ वसिष्ठः—"न तु कदाचिज्ज्यायसीं" इति" अप० १२०.

"हीनवर्णेन उत्कृष्टवर्णायां जनिताः प्रतिलोमजाः। उत्तमवर्णेन हीनवर्णायां परिणीतायामुत्पन्नाः अनुलोमजाः। तत्र प्रतिलोमजाः असन्तः असाधवः वर्णबाह्या इत्यर्थः। अनुलोमजास्तु सन्तः साधवः मातृसमानवर्णत्वात्क्षत्रियादिधर्माधिकारिणो भवन्ति" इति अप० ११९.

१ ख. ब्राह्मणत्वादिजातिप्राप्ति। २ क. ग. पञ्चमं च जन।

पद्विमोक्षेऽपि तां वृत्तिं न परित्यजाति तदा सप्तमे षष्ठे पञ्चमे वा जन्मानि साम्यम्। यस्य हीनवर्णस्य कर्मणा जीवाति तत्समानजातित्वं भवति। यथा—ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यं पुत्रमुत्पादयाति सोऽपि तयैव वृत्या जीवन्पुत्रान्तरमित्येवं पुत्रपरम्परया सप्तमे जन्मनि शूद्रमेव जनयति, वैश्यवृत्त्या तु जीवन् षष्ठे वैश्यं क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियं, क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रं, वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्, वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन्पुत्रपरम्परया पञ्चमे जन्मानि शूद्रं [1]जनयति इति ॥

'पूर्ववच्चाधरोत्तरम् ।' अस्यार्थः—वर्णसंकरे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः। इदानीं वर्णसंकीर्णसंकरजाताः प्रदर्श्यन्ते—अधरे [2]च उत्तरे च अधरोत्तरं यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाऽम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणोत्पादिताः माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमजाः। एवमन्यत्राप्यूहनीयम्। एतदधरोत्तरं पूर्ववदसत्सादिति बोद्धव्यम् ॥ ९६ ॥

**इति वर्णजातिविवेकप्रकरणम् ।**

---

१ ख. जनयति । पूर्वं । २ ख. तद्यथा ।

# अथ गृहस्थधर्मप्रकरणम् ४

*श्रौतस्मार्तानि कर्माणि अग्निसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह—

† कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
‡ दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ॥ ९७ ॥

स्मृत्युक्तं वैश्वदेवादिकं कर्म, लौकिकं च यत्प्रातिदिनं पाकलक्षणं तदपि, गृहस्थो विवाहाग्नौ विवाहसंस्कृते कुर्वीत, विभागकाला³हृते वा "वैश्यकुलादग्निमानीय" इत्यादिनोक्तसंस्कारसंस्कृते अपिशब्दात्प्रेते वा गृहपतौ आहृते संस्कृत एव । ततश्च⁴ कालत्रयातिक्रमे प्रायश्चित्तीयते । श्रुत्युक्तमग्निहोत्रादिकं कर्म वैतानिकाग्निषु आहवनीयादिषु कुर्वीत ॥ ९७ ॥

* "सभार्यस्य गृहस्थस्य धर्मेष्वधिकार इति भार्यापरिग्रहं सप्रसङ्गमभिधायाधुना गृहस्थधर्मानाह— कर्मस्मार्तमिति । अप० १२०.

† "स्मार्तं गृह्योक्तं कर्म विवाहाग्नौ विवाहसंस्कृतेऽग्नौ कुर्वीत प्रत्यहं नित्यं गृही गृहवान् ॥ गृहशब्दोऽयं भार्यामाचष्टे न शालाम् । विवाहाग्नौ इति वदन्विवाहकर्मणाऽग्नौ कोऽप्यतिशयो गृह्यकर्मानुकूलो जायत इति दर्शयति । न ह्यन्यथा विवाहाग्नौ कर्मसंपत्तिर्भवति । अग्नेः प्रतिक्षणं प्रध्वंसित्वात् । विवाहसंस्कारस्य स्थायितया तद्विशिष्टो विवाहाग्नि र्भवति स्थायी । ततश्च नष्टोऽसौ वैवाहिककर्मणोत्पाद्य इति सूचितं भवति । विवाहसंस्कारकारणान्याह कात्यायनः— "विवाहाग्निं सभार्यश्चेत्समिामुल्लङ्घ्य गच्छति । होमकालात्यये तस्य पुनराधानमिष्यते ॥ अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः । पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यते ॥" । मरीचिः—" दूरस्थेऽपि यदाकस्माद्धोमलोपः प्रजायते । कर्तव्यं पुनराधानं प्रायश्चित्तं न विद्यते ॥" प्रवसति यजमाने समारूढाग्निविषयमेतत् ।" इति । अप० १२१.

‡ "दायः पितृधनम् । आहृतः आहितः । श्रौतम् अग्निहोत्रादिकर्म वैतानिकेषु गार्हपत्यादिषु अग्निषु कुर्वीत । एतच्च कल्पसूत्रगृह्यशास्त्रेभ्यः प्राप्तमेवानूद्यते, धर्मशास्त्र

---

१ अप० पूर्विकाम् । २ अप० सूर्यंदे (दे) वत्यान । ३ ग. विभागकालाहृतेऽपि वा । ४ क. ततः स्वकालातिक्रमे ।

गृहस्थधर्मानाह—

**शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।**
**प्रातःसंध्यामुपासीत दन्तधावनपूर्वकम् ॥ ९८ ॥**

शरीरचिन्ताम् आवश्यकां "दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः।" इत्याद्युक्तविधिना निर्वर्त्य "गन्धलेपक्षयकरम्" इत्यादिनोक्तेन विधिना कृतशौचविधिर्द्विजः दन्तधावनपूर्वकं प्रातःसन्ध्यामुपासीत । दन्तधावनविधिश्च- "कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम् । कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृ-तकूर्चकम्॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिकां तथा।" इति अत्र वृक्षोत्थमित्यनेन तृण-लोष्टाङ्गुल्यादिनिषेधः। पलाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरोक्तो द्रष्टव्यः। दन्तधावनमन्त्रश्च "आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते॥" इति । ब्रह्मचारिप्रकरणोक्तस्यापि संध्यावन्दनस्य पुनर्वचनं दन्तधावनपूर्वकत्व-प्रतिपादनार्थम् । "दन्तधावननृत्यगीतादि ब्रह्मचारी वर्जयेत्" इति तन्निषे-धात् ॥ ९८ ॥

**हुत्वाग्नीन्सूर्यदैवत्याञ्जपेन्मन्त्रान्त्समाहितः ।**

**पुराणविहितानां गृहयज्ञादिकर्मणां वैवाहिकश्रौताग्निसम्बन्धनिवृत्त्यर्थम् । कात्यायनः— "निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं क्वचित्॥ मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः। उपविश्य शुचिः सर्वं यथाकालमुपाचरेत्॥" इति** अप० **१२१—१२२.**

*"**शरीरचिन्तां शरीरस्य सामयत्वनिरामयत्व विषयां चिन्तां निर्वर्त्य कृतशौचक्रियो द्विजातिर्गृही प्रातः सन्ध्यां दन्तधावनपूर्विकामुपासीत । दन्तानां धावनं शोधनं तत्पूर्वं यस्याः सा दन्तधावनपूर्विका । अत्र ब्रह्मचारिणो विहिता सन्ध्या गृहस्थं प्रत्यपि सा प्राप्ता। "उत्तरेषां चैतदविरोधि" इति ब्रह्मचारिधर्मातिदेशात् । तस्या दन्तधावनपूर्वकत्वमनेन विधीयते" इति अप० १२३.**

१ क. आवश्यकादिका दिवा । ग. आवश्यकादिकीं दिवा । २ आ० १६. । ३ आ० १७.। ४ ख. कण्टकक्षीर ।

* वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ ९९ ॥

प्रातःसन्ध्यावन्दनानन्तरम् अग्नीनाहवनीयादीन् यथोक्तेन विधिना हुत्वा, औपासनाग्निं वा, तदनन्तरं सूर्यदैवत्यान् "उदुत्यंजातवेदसम्[1]" इत्यादीन्मत्रान्जपेत् समाहितः अविक्षिप्तचित्तः। तदनन्तरं वेदार्थान्निरुक्तव्याकरणादिश्रवणेनाधिगच्छेज्जानीयात्, चकारादधीतं चाभ्यसेत्। विविधानि च शास्त्राणि ममींसाप्रभृतीनि धर्मार्थारोग्यप्रतिपादकान्यधिगच्छेत् ॥ ९९ ॥

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥

तदनन्तरमीश्वरमभिषेकादिगुणयुक्तमन्यं[2] वा श्रीमन्तम् अकुत्सितं योगक्षेमार्थम्,—अलब्धलाभो योगः, लब्धपरिपालनं क्षेमः, तदर्थम्—उपेयादुपासीत। उपेयादित्यनेन सेवां प्रतिषेधति। वेतनग्रहणेनाऽऽज्ञाकरणं सेवा,—तस्याः श्ववृत्तित्वेन निषेधात्। ततो मध्याह्ने शास्त्रोक्तेन विधिना नद्यादिषु स्नात्वा देवान्स्वगृह्योक्तान् पितॄंश्च, चकारादृषींश्च, देवादितीर्थेन तर्पयेत्। तदनन्तरं गन्धपुष्पाक्षतैः हरिहर हिरण्यगर्भप्रभृतीनामन्यतमं यथावासनं ऋग्यजुःसाममन्त्रैस्तत्प्रकाशकैः, स्वनाम भिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराधयेत् यथोक्तविधिना ॥ १०० ॥

* "वेदार्थानधिगच्छेत्" इति साध्यस्य निर्देशः। "शास्त्राणि विविधानि च" इति साधनस्य। शास्त्राण्यधिगच्छेद्वेदार्थानधिगन्तुमिति वाक्यार्थो भवति। एवं च वेदार्थाधिगमोपायभूतानामेव निगमनिरुक्तव्याकरणमीमांसादीनां शास्त्राणां परिग्रहो न बौद्धशास्त्राणाम्। अत एव तदधिगममुपपातकत्वेन वक्ष्यति। स्मृत्यर्थो वेदार्थशब्देनैव गृहीतः वेदार्थानुष्ठानार्थत्वात्तदधिगमस्य वेदादिधारणमर्थसिद्धम्। अत एवोपपातकवर्गे "अधीतस्य च नाशनम्" इति वक्ष्यति। दक्षः—"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा॥"। अत एव मनुः—"बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च। नित्यं शास्त्राण्यवेक्षेत नियमांश्चैववैदिकान्॥ वेदस्य पारं गत्वा तु भूयो भूयस्तमभ्यसेत्। शास्त्रं च विमलं कुर्यान्न चाधीत्य यजेत्पुनः॥" निगमाः पदार्थनिर्णयहेतवो निघण्टुप्रभृतयः।" इति। अप० १२६—१२७.

[1] ऋ० अ. १, अ ४, व. ७.—८.। [2] क. गुणयुक्तम् अथ वा अन्यम्।

*वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञार्थसिद्ध्यर्थं विद्यां चाऽऽध्यात्मिकीं जपेत् ॥ १०१ ॥

तदनन्तरं वेदाथर्वेतिहासपुराणानि समस्तानि व्यस्तानि वा आध्यात्मिकीं च विद्यां जपयज्ञसिद्ध्यर्थं यथोक्तेन विधिना यथाशक्ति जपेत् ॥ १०१ ॥

†बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥

बलिकर्म भूतयज्ञः, स्वधा पितृयज्ञः, होमो देवयज्ञः, स्वाध्यायो ब्रह्मयज्ञः, अतिथिसत्क्रिया मनुष्ययज्ञः, एते पञ्च महायज्ञा अहरहः कर्तव्याः नित्यत्वात् । यत्पुनरेषां फलश्रवणं तदेषां पावनत्वख्यापनार्थं, न काम्यप्रतिपादनाय ॥ १०२ ॥

‡देवेभ्यस्तु[2] हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।

* "विद्यामाध्यात्मिकीम् अध्यात्मसम्बन्धिनीम् उपनिषद्ग्रन्थमित्यर्थः । जपयज्ञार्थसिद्ध्यर्थं ब्रह्मयज्ञसिद्ध्यर्थम् । अध्यात्मविद्यायाः पृथगुपादानं प्राधान्यार्थम् । वेदेत्युक्तेऽथर्वग्रहणं वृत्तपूरणार्थम् । तथाऽङ्गिरसामुपलक्षणार्थम् ।" इति अप० १३६.

यदुपरितने अपरार्कीये 'वेदेत्युक्तेऽथर्वग्रहणं वृत्तपूरणार्थं' इत्युच्यते तन्नसाधु । वेदास्त्रय एव, यथाऽऽह भगवानत्रिः—"त्रयोलोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः । एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥" (१. १५.) इति । अथर्वणो वेदशब्दवाच्यतौपचारिकैव । आह च वेदः—"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमम्" इति ।

"ब्रह्मयज्ञमाह"—इत्यस्य श्लोकस्यावतारिकाऽपरार्के.

† "ब्रह्मयज्ञमुक्त्वा महायज्ञानाह"—इत्यपरार्कावतारिकाऽस्य श्लोकस्य.

‡ "लौकिकेऽग्नौ औपासने वा सायं प्रातरत्र होमो देवयज्ञः । स्वाध्यायोऽध्ययनविशेषो ब्रह्मयज्ञः । अतिथिपूजनं मनुष्ययज्ञः । एषामेव संज्ञान्वयमाह मनुः—"अहुतं च हुतं चैव तथा प्रहुतमेव च । ब्राह्मं हुतं प्राशितं च पञ्च यज्ञाः प्रकीर्तिताः ॥ जपोऽहुतो हुतो

१ ख. जपयज्ञप्रसिध्यर्थम् । २ ख. देवेभ्यश्च हुता ।

अन्नं भूमौ* श्वचाण्डालवायसेभ्यश्च[1] निक्षिपेत् ॥ १०३ ॥

स्वगृह्योक्तेन विधिना वैश्वदेवहोमं कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो बलिं हरेत्। अन्नग्रहणमपक्वव्युदासार्थम् । तदनन्तरं यथाशक्ति भूमावन्नं श्वचाण्डालवायसेभ्यो निःक्षिपेत्, चशब्दात्कृमिपापरोगिपतितेभ्यः[2], यथाऽऽह मनुः "शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवि[3] ॥" इति । एतच्च सायं प्रातः कर्तव्यम्—"अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्[4]" इत्याश्वलायनस्मरणात् । इह केचिद्वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वमन्नसंस्कारक

होमः प्रहुतो भौतिको बलिः । ब्राह्मं हुतं द्विजाग्रयार्चा प्राशितं पितृतर्पणम् ॥" इति अप० १४२.

* "श्वादीनामन्नं भूमौ निःक्षिपेत् । चण्डालशब्दः पतितादिपरिग्रहार्थः । तथा च मनुः—"शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां कृमीणां च शनकैर्निःक्षिपेद्भुवि ॥" । अत्र पतितग्रहणं कपालपाण्यादिपरिग्रहार्थम् । तथा च ब्रह्माण्ड (ब्रह्म) पुराणम् — "पूर्वं देवैर्जिता दैत्याः सङ्ग्रामाच्च पराजिताः । कपालपाणयो जग्मुः केचिन्नग्नव्रतास्ततः ॥ केचिन्मुण्डास्त्वजिताक्षाः काषायवसनास्ततः । सान्त्वताश्च दुराचाराः शौचाचारबहिष्कृताः ॥ नरास्थिकेशसञ्छन्नाः केचिद्व्याजेन दानवाः । अनाश्रमी व्रतस्थश्च जटी मुण्डी वृथा च यः ॥ प्रायश्चित्तादिकं यश्च मूल्येन कथयन्नरः । निर्घृणो भिन्नमर्यादो नास्तिको वेदनिन्दकः ॥ रोगिणां व्रतिनां यश्च सत्रिणां वाऽथ निन्दकः । ऋषीणामथ देवानां निन्दत्यात्मानमेव यः ॥ प्रख्यापयति यो विप्रो नाभिमानश्च वेदयेत् । कितवो मद्यपश्चैव क्रतूनां क्रयविक्रयी ॥ वणिग्वार्धुषिको ग्रामप्रेषकः पिशुनस्तथा । अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥ सामुद्रकृच्छिद्रकृच्च तैलिकः कूटकारकः । गुरोश्चालीकनिर्बन्धी गुरोर्वञ्चयिता खलः ॥ मत्तश्चोज्झितवेदश्च घातको गुरुतल्पगः । सङ्करस्त्रीरतो बन्धुर्नारीणां लम्पटस्तथा ॥ निक्षेपहारी मायावी तथा कायचिकित्सकः । क्रीणन्यो निन्दते द्रव्यं विक्रीणंश्च प्रशंसति ॥ स्त्रीबालब्राह्मणानां च हन्ता गोघ्नः प्रपञ्चवान् । वर्णसङ्करकृद्यश्च कारुकश्च विकर्मकृत् ॥ स्वजातिधर्मसन्त्यागी परकर्मरतश्च यः । पिबेच्छुक्रं च यः पुंसां स च दुष्टो मुखेभगः ॥ एते दैत्याः समाख्याताः न तु सृष्टाः स्वयम्भुवा । यज्ञेषु रक्षसां भागो देय इत्येव संस्मरन् ॥ विघ्नेभ्यो मूर्तिमद्भ्यश्च तेभ्यो दद्याद्गृहाद्बलिम् । ब्राह्मणः स्यात्कृतयुगं पितरस्तत्र देवताः ॥ त्रेतायुगं क्षत्त्रियश्च तत्र पूज्याश्च देवताः । विज्ञेयं द्वापरं वैश्यस्तत्र बुद्धस्तु पूज्यते ॥ शूद्रः कलियुगं तत्र पूज्याः पाषण्डिजातयः ।" इति अप० १४३—१४४.

१ अप० वायसाना च नि । २ क. चकारात्कृमि । ख. त्कृमिपापिरोगि । ३.—३. ९२. । ४.—१. २. १.

मेत्वं चेच्छन्ति । "अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् ।" इत्यन्नसंस्कार कर्मता प्रतीयते । "अथाऽतः पञ्च महायज्ञाः ।"[1] इत्युपक्रम्य "तानेतानहरहः कुर्वीत ।"[2] इति नित्यत्वाभिधानात्पुरुषार्थत्वं चावगम्यत इति । तदयुक्तम्,—पुरुषार्थत्वेऽन्नसंस्कारकर्मत्वानुपपत्तेः । तथा[3] हि द्रव्यसंस्कारकर्मत्वपक्षेऽन्नार्थता वैश्वदेवकर्मणः, पुरुषार्थत्वे वैश्वदेवकर्मार्थता द्रव्यस्येति परस्परविरोधात्पुरुषार्थत्वमेव युक्तम्। "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।" इति । तथा "वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्[4] ॥" इति मनुस्मरणात् । पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्तनीयम् । तस्मात् "अथ सायं प्रातः" इत्यादिनोत्पत्तीप्रयोगौ दर्शितौ । "तानेतान्यज्ञानहरहः[5] कुर्वीत ।" इति अधिकारविधिरिति सर्वमनवद्यम् ॥ १०३ ॥

**अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।**
***स्वाध्यायं †चान्वहं कुर्यान्न पचेदन्नमात्मने‡ ॥ १०४ ॥**

प्रत्यहमन्नं पितृभ्यो मनुष्येभ्यश्च यथाशक्ति देयम्। अन्नाभावे कन्दमूलफलादि, तस्याप्यभावे जलं, देयम् । अपिशब्दात्स्वाध्यायं सततं कुर्यात् अविस्मरणार्थम् ।

---

* "स्वशाखाध्ययनं स्वाध्यायो न तु स्वशाखैव, तस्या अकार्यत्वात् । ततश्च स्वशाखाध्ययनमन्वहमनुदिनं कुर्यात् । ब्रह्मयज्ञस्यैतत्पुनर्वचनमन्वहमिति गुणविधानार्थम् ।" इति अप० १४६.

† "अत्रान्वहमिति विधीयते, अन्यदनूद्यते" इति अप० १४५.

‡ "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥" इति मनुः ( ३. ११८. )

"सुवासिनीः कुमारींश्च रोगिणो गर्भिणीः स्त्रियः । अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ॥ ११४ ॥ अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते विचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ ११५ ॥ भुक्तवत्स्वथविप्रेषु स्वेषु भृत्येषु चैव हि। भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥ ११६ ॥" इति मनुः ३. 'सुवासिन्यो नवोढाः" इति कुल्लूकः ।

---

१.—३. १. १. । २.—३. १. ४. । ३ ख. पपत्तेः । यथा हि । ४.—३. १०८. । ५.—ग. तानेतान् महायज्ञानहरहः.

न पचेदन्नमात्मने' इत्यन्नग्रहणं सकलादनीयद्रव्यप्रदर्शनार्थम्। आत्मार्थं च अन्नं न पचेत्। कथं तर्हि? । देवताद्युद्देशेनैव ॥ १०४ ॥

*बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ १०५ ॥

परिणीता पितृगृहे स्थिता स्ववासिनी, शेषाः प्रसिद्धाः। बालादीनतिथिभृत्यांश्च संभोज्य भोजयित्वा दम्पत्योः शेषभोजनं कर्तव्यम् ॥ १०५ ॥

अपोशा[२]नेनोपरिष्टादधस्ता[३]दश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना† ॥ १०६ ॥

भुञ्जानेन द्विजन्मना उपरिष्टादधस्ताच्चापोशा[४]नाख्येन कर्मणाऽऽन्नमनग्नममृतं च कार्यम्। द्विजन्मग्रहणमुपनयनप्रभृतिसर्वाश्रमि[५]साधारण्यार्थम् ॥ १०६ ॥

अतिथित्वेन[६] वर्णानां देयं ‡शक्त्याऽनुपूर्वशः§ ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥

* "बालादीनतिथींश्च भोजयित्वाभुक्तावशिष्टं दम्पतीभुञ्जीयाताम्। असामर्थ्याद्बालः, तथा वृद्धः, परिणीता कन्या पितृगृहे स्थिता स्ववासिनी, गर्भपुष्ट्यर्थं गर्भिणी, क्षीणत्वादातुरः, वचनादतिथिः, गृहव्यापारसाधकत्वाद्भृत्याः।" अप० १४७.

† "तथा—ब्रह्मचारी गृहस्थश्च योऽनश्नंस्तु तपश्चरेत्। प्रायाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः।" इति अप० १४८.

‡ "अत्राऽऽत्मनः कैवल्यं विवक्षितम्। तेन देवादीनामात्मनश्च कृते न दोषाय।" तदाऽऽहमनुः—"देवतातिथिभृत्यानां पितॄणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति॥" इति अप० १४६.

§ "ब्राह्मणादीनां वर्णानामतिथिभावे सति ब्राह्मणादिक्रमेण ते भोजयितव्याः यदि शक्नुयात्। अशक्तस्य ब्राह्मणातिथिभोजनं नियतम्।...अतिथिपूजाया अकरणे निन्दा ब्राह्मणा-

१ ख. न पचेदन्नमात्मार्थम्। अन्न। ख. आत्मार्थमन्नं न पचेदिति नास्ति। २ ख. आपोशनेन। ३ अप० दधस्ताच्चैव भुञ्जता। ४ ख. आपोशनाख्येन। ५ ख. सर्वाश्रमसाधारणार्थम्। ६ अप० अतिथित्वे तु वर्णा।

वैश्वदेवानन्तरं वर्णानां ब्राह्मणादीनाम् अतिथित्वेन युगपत्प्राप्तानां ब्राह्मणाद्यानुपूर्व्येण यथाशक्ति देयम् । सायंकालेऽपि यद्यतिथिरागच्छति तदा असावप्रणोद्यः अप्रत्याख्येय[1] एव । तथाऽऽह मनुः—"तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन[2]॥" इति । यद्यप्यदनीयं किमपि नास्ति तथाऽपि वाग्भूतृणोदकैरपि सत्कारं कुर्यात् ॥ १०७ ॥

**सत्कृत्य भिक्षवे भिक्षा[3] दातव्या[4] सुव्रताय[5] च ।**
**भोजयेच्चागतान्काले सखिसंबन्धिबान्धवान् ॥ १०८ ॥**

भिक्षवे सामान्येन भिक्षा दातव्या । सुव्रताय ब्रह्मचारिणे यतये च सत्कृत्य "स्वस्तिवाच्य भिक्षादानमप्पूर्वम्[6]" इत्यनेन †विधिना भिक्षा दातव्या । भिक्षा च ग्राससंमिता, ग्रासश्च मयूराण्डपरिमाणः,—"ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् । हंतं[7]स्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥" इति शातातपस्मरणात् । भोजनकाले चाऽऽगतान्सखिसंबन्धिबान्धवान् भोजयेत् । सखायो मित्राणि, सबन्धिनो येभ्यः कन्या गृहीता दत्ता वा, मातृपितृसंबन्धिनो ‡बान्धवाः ॥ १०८ ॥

**तिथिपूजाकरणविषयैव ।...अत एव मनुः क्षत्रियादीनामिच्छयाऽतिथ्यं कार्यमित्याह—"यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् । भुक्तवत्सु तु विप्रेषु कामं तमपि भोजयेत् ॥ वैश्य शूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ । भोजयेत्सहभृत्यैस्तावानृशंस्यं प्रयोजयन् ॥" इति (मनुः ३. १११—११२ ।) आनृशंस्यमनैष्ठुर्यम् " इति अप० १५२.**

*** "आसनावसथौ शय्यामनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥" इति मनुः (३. १०७.)**

**†"गौतमः—स्वस्तिवाच्य भिक्षादानमप्पूर्वम् ।" अप्पूर्वमुदकपूर्वम् । यतिविषयमेतत् " इति अप० १५३.**

**‡ " इतरानपि सख्यादीन्सम्प्रीत्या गृहमागतान् । सत्कृत्यान्नं यथाशक्ति भोजयेत्सहभार्यया ॥" इति मनुः (३. ११३.)**

---

१ ख. अप्रत्याख्याय एव । २.—३. १०१. । ३ ख. भिक्षवे भिक्षां । ४ ५ ख. तव्या सुव्र । ६ ग. ख. भिक्षादानमापः पूर्वम् । अस्यामप्पूर्वमित्यनेन विधिना । क. ख. भिक्षादानमपूर्वे मित्यनेन । ७ ग. हन्तेति तैश्चतु । क. हन्तस्तैस्तु चतु ।

*महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९ ॥

महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणायोपकल्पयेत् भवदर्थमयमस्माभिः परिकल्पित इति। तत्प्रीत्यर्थं[1], न तु दानाय व्यापादनाय वा, यथा सर्वमेतद्भवदीयमिति—प्रतिश्रोत्रियमुक्षासंभवात् "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु[2]।" इति निषेधाच्च। तस्मात्सत्क्रियाद्येवं[3] कर्तव्यम्, सत्क्रिया स्वागतवचनासनपाद्यार्घ्याचमनादिदानम्—तस्मिन्नुपविष्टे पश्चादुपवेशनमन्वासनं, स्वादु भोजनं मिष्टमन्नं[4], सूनृतं वचः धन्या वयमद्यभवदागमनादित्येवमादि। अश्रोत्रिये पुनः "अश्रोत्रियस्योदकासने[5]" इति गौतमोक्तं[6] वेदितव्यम्॥ १०९ ॥

प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः॥ ११० ॥

* "महान्तमुक्षाणं बलीवर्दं, तदलाभे अजं, श्रोत्रियाय मधुपर्कार्हाय गृहमागताय उपकल्पयेत् पचेत् संस्कुर्यादिति यावत्। तथा च श्रुतिः—"अतिथिर्वा एष एतस्याऽऽगच्छति यः सोमः क्रीतस्तस्यादेतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदु ह मानुषम्" इति। तथा च बह्वृचब्राह्मणम्—"यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियतेऽग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षादन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः"। ततश्च यः कश्चिदाह—श्रोत्रियायोपकल्पयेद्वाचा प्रतिपादयेन्न तु हिंस्यादिति, तच्छ्रुति विरुद्धम्॥ न "नहिंस्यात्सर्वभूतानि" इति निषेधो मधुपर्काङ्गभूतां हिंसामुपसंक्रामत्यग्नीषोमीय हिंसामिव। अत एव मनुः—"मधुपर्के च सोमे च पितृदैवतकर्मणि। अत्रैव पशवो हिंस्यान्नान्यत्रेत्यब्रवीन्मनुः॥" इति। तथा च गृह्यकृच्छौनकः—"आचान्तोदकाय गां वेदयन्ते हतो मे पाप्मा पाप्मा मे हत इति जपित्वों कुरुतेति कारयिष्यन्माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन्नामांसो मधुपर्को भवति"। अत्र महोक्षोपकल्पनमुखेन मधुपर्को विधीयते। तथा सत्क्रिया पूजा।

१ क. तत्प्रतीत्यर्थम्। २ आ. १५३.। ३ ख. ग. सत्क्रिया कर्तव्या। घ. सत्क्रियाद्येवकर्तव्या। ४ ख. मिष्टमशनम्। ५ क. त्रियस्योदकासने इति "अश्रोत्रियस्यासनोदके" इति पुस्तकान्तरे। ६.—५. ३१.।

स्नातको विद्यास्नातकः, व्रतस्नातकः, विद्याव्रतस्नातक इति । समाप्य[1] वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः, समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः, उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातकः। आचार्य उक्तलक्षणः, पार्थिवो वक्ष्यमाणलक्षणः, प्रियो मित्रम्, *विवाह्यो जामाता, चकारात् श्वशुरपितृव्यमातुलादीनां ग्रहणम्। "ऋत्विजो वृत्वा मधुपर्कमाहरेत्[2]।" "स्नातकायोप†स्थिताय।" "राज्ञे च।" "आचार्यश्वशुरपितृव्यमातु[3]लानां च।" इत्याश्वलायनस्मरणात्। एते स्नातकादयः प्रतिसंवत्सरं गृहमागता अर्घ्याः मधुपर्केण संपूज्याः वन्दितव्याः। अर्घशब्दो मधुपर्कं लक्षयति। ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः ॥ ११० ॥

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।**

**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥**

‡अध्वनि वर्तमानोऽतिथिर्वेदितव्यः। श्रोत्रियवेदपारगावध्वनि वर्तमानौ ब्रह्मलोकमभीप्सतो गृहस्थस्य मान्यावतिथी वेदितव्यौ ॥ यद्यप्यध्ययनमात्रेण श्रोत्रियः।

**अन्वासनं तस्मिन्नुपविष्टे उपवेशनम्। स्वादु भोजनं सर्पिष्मदन्नम्। तथा च वसिष्ठः— "क्षत्रियायाभ्यागताय सर्पिष्मदन्नं पचतीति" सूनृतं वचः कल्याणी वागित्येतानि कर्तव्यानि" अप० १५४—५५.**

*** "विवाह्यः स्नुषाया जामातुश्चपिता" अप० १५५.**

**† "अत्र चोपस्थितग्रहणात् स्नातकादयो गृहमागता एवार्हणीया इति गम्यते। स्नातकपार्थिवादीनां श्रोत्रियत्वे सत्यर्हणम्, अन्यथा—'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।' इति विरोधः स्यात्" इति अप० १५५.**

**‡ "तथा च मनुः—'एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते॥' (३. १०२) यश्च यथाविधि वेदाध्ययनस्य पारंगतवान् स श्रोत्रियः। वेदशब्देनात्र स्वशाखोच्यते। तथा चाऽऽपस्तम्बः—'धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति' (१. ३, ६, ४) इति॥ अध्येतृभेदेनैकैकामिति वीप्सोपपत्तिः। अत**

---

१ क. समाप्येत्यादि स विद्याव्रतस्नातक इत्यन्तं नास्ति। २.—१. २४. १.—४.। ३ क. मातुलादीनां च।

तथाऽपि श्रुताध्ययनसंपन्नोऽत्र श्रोत्रियोऽभिधीयते। एकशाखाध्यापनक्षमो वेदपारगः॥ १११॥

**परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते।**
**वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम्॥ ११२॥**

परपाके रुचिर्यस्यासौ स परपाकरुचिः नैव परपाकरुचिः स्यात्, अनिन्द्येनामन्त्रणं विना—*"अनिन्द्येनाऽऽमन्त्रितो नापक्रामेत्" इति स्मरणम्। वाक्पाणिपादचापल्यं, वाक्च पाणी च पादौ च वाक्पाणिपादं तस्य चापल्यं, वर्जयेत्। वाक्चापल्यं असभ्यानृतादिभाषणं, पाणिचापल्यं वेलनास्फोटनादि, पादचापल्यं लङ्घनोत्प्लवनादि, चकारान्नेत्रादिचापल्यं, वर्जयेत्,—"न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्यात्।" इति गौतमस्मरणात्। अतिभोजनं च वर्जयेत् †अनारोग्यादिहेतुत्वात्॥ ११२॥

**अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत्।**
**अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः॥ ११३॥**

पूर्वोक्तं श्रोत्रियातिथिं वेदपारगातिथिं च भोजनादिना तृप्तं ‡सीमान्तं यावदनु

एव बोधायनः,—'एकां शाखामधीत्य श्रोत्रियो भवति' इति। एतावतिथिश्रोत्रियौ ब्रह्मलोककामेन गृहस्थेन मान्यौ पूज्यौ। नित्यस्याप्यस्यानुषङ्गिकं फलमेतदिति वचनसामर्थ्याद्गम्यते। श्रोत्रियस्य स्नातकपार्थिवत्वादिविशिष्टस्य मधुपर्करूपमर्हणमुक्तम्। श्रोत्रियत्वमात्रेणातिथित्वमात्रेण वा विशिष्टस्यमाननमनेन फलाय विधीयत इत्यनुसंधेयम्॥" इति अप० १५५—६.

* "अनिन्द्येनामन्त्रितो नापक्रामेत्, आमन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात्" इति कात्यायनः।" इति अप० १५६.

† तथा च मनुः—"अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्। अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत्॥" (२. ५७.)

‡ त्रिविधा सीमा—वास्तुसीमा, ग्रामसीमा, क्षेत्रसीमेति। सा चानुव्रजनीयगुणापेक्षया व्यवस्थापनीया। ........ गच्छतोऽनुव्रज्योक्ता। यदि कुतोऽपि हेतोर्निवसति तदा यत्कार्यं तदाह शङ्खः—'सहाऽऽसीत प्रदोषेऽनुज्ञाप्य शयीत पूर्वं प्रतिबुध्येत प्रस्थितमनुव्रजेत् समभ्यनुज्ञातो निवर्तेत॥" इति अप० १५६—७.

---

१ ख. ग. एकशाखाध्ययन०। २ ख. पल्याणस्फोट। ३.—९. ५०.। ४ ख. ग्यहे।

व्रजेत् । ततो भोजनानन्तरमहः शेषं शिष्टैरितिहासपुराणादिवेदिभिः इष्टैश्च काव्यकथाप्रपञ्चचतुरैः बन्धुभिश्चानुकूलालापकुशलैः सहासीत* ॥ ११३ ॥

**उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च ।**
**भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ संविशेत् ॥ ११४ ॥**

†ततः पूर्वोक्तेन विधिना पश्चिमां सन्ध्यामुपास्य, अग्निमग्नीन्वा हुत्वा तानुपास्योपस्थाय, भृत्यैः पूर्वोक्तैः स्ववासिन्यादिभिः परिवृतो नातितृप्तया भुक्त्वा, चकारादायव्ययादिगृहचिन्तां निर्वर्त्य, अनन्तरं संविशेत् स्वप्यात् ॥ ११४ ॥

**ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।**
**‡धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ॥ ११५ ॥**

ततो ब्राह्मे मुहूर्ते उत्थाय पाश्चिमेऽर्धप्रहरे प्रबुद्धयात्मनो हितं§ कृतं, करिष्यमाणं च, वेदार्थसंशयांश्च, चिन्तयेत्, तदानीं चित्तस्याव्याकुलत्वेन तत्त्वप्रतिभासयोग्यत्वात्[1]।

* अत्र दक्षः—'भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् । इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् ॥ अष्टमे लोकयात्रा तु बहिः संध्या ततः परम्।" इति अप० १५७.

† अत्र दक्षः—"होमो भोजनकालश्च यच्चान्यद्गृहकृत्यकम् । कृत्वा चैव ततः पश्चात्स्वाध्यायं किंचिदाचरेत् ॥ प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥" इति अप० १५७.

‡ "परित्यजेदर्थकामौ स्यातां धर्मविवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकसं (वि) क्रुष्टमेव च ॥" इति मनुः.

§ "श्रेयश्च त्रिवर्गात्मकम् । यदाहमनुः—'धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च । अर्थ एवेह वा श्रेयांस्त्रिवर्ग इति तु स्थितिः ॥' [२. २२४.] धर्मार्थकामास्त्रिवर्गः । तथैतच्च श्रेयोऽद्येत्थं मया साधनीयमिति चिन्तयेत्परिभावयेत् । "ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थावनुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ किं नु मे स्यादिदं कृत्वा किं नु मेस्यादकुर्वतः । इति संचिन्त्य कार्याणि धीरः कुर्वीत वा न वा ॥ उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् । दत्तं वा दापितं वाऽपि वाक्सत्या वाऽपि भाषिता ॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् । मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ यस्यां रात्र्यां व्यतीतायां न किंचिच्छुभमाचरेत् । तमेव वन्ध्यं दिवसमिति विद्याद्विचक्षणः॥" अप० १५८.

१ तत्त्वप्रतिपत्तियोग्य ।

*ततो धर्मार्थकामान्स्वोचितकाले यथाशक्ति न परित्यजेत्,—यथासंभवं सेवेतेत्यर्थः पुरुषार्थत्वात्। यथाऽऽह गौतमः—"न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्यात् धर्मार्थकामेभ्यः।" "तेषु धर्मोत्तरः स्यात्।" इति। अत्र यद्यप्येतेषां सामान्येन सेवनमुक्तं, तथाऽपि कामार्थयोर्धर्माविरोधेनानुष्ठानं तयोर्धर्ममूलत्वात्। एवं प्रतिदिनमनुष्ठेयम्॥ ११५॥

†विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्।
एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति॥ ११६॥

विद्या पूर्वोक्ता, कर्म श्रौतं स्मार्तं च, वयः आत्मनोऽतिरिक्तं सप्तत्या वा ऊर्ध्वं, बन्धुः स्वजनसंपत्तिः, वित्तं ग्रामरत्नादिकं,—एतैर्युक्ताः क्रमेण मान्याः पूजानीयाः। एतैर्विद्याकर्मबन्धुवित्तैः प्रभूतैः प्रवृद्धैः समस्तैर्व्यस्तैर्वा युक्तः शूद्रोऽपि वार्धके अशीतेरूर्ध्वं ‡मानमर्हति,—"शूद्रोऽप्यशीतिको वरः" इति गौतमस्मरणात्॥ ११६॥

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम्।
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः॥ ११७॥

* "धर्माङ्गभूते काले धर्मं कुर्यात्। न तद्बाधेनार्थकामौ। एवं धर्माविरुद्धेऽर्थकालेऽर्थमेव। तथा तदुभयानवरुद्धे काले कामम्॥" इति अप० १५८.

† "वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्॥ पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च। यत्र स्युः सोऽपि मानार्हः शूद्रोऽपि दशमीं गतः॥ (मनुः २. १३७.) वर्षशतस्योत्तमो दशमो भागो दशमी। संख्यातो भूयांसि, प्रकर्षतो गुणवन्ति। तेन जातिमनादृत्य बहुविद्योऽल्पविद्येन मान्यः। प्रकृष्टविद्यश्चापकृष्टविद्येन। एवं कर्मादिष्वपि" इति अप० १६०.

‡ "नमस्कारव्यतिरिक्तं मानम्" इति अप० १५९.

१ न पूर्वाह्णपराह्णमध्यन्दिनानफ। २ अप० यथाशक्ति धर्मार्थका। ३.—९. ४६, ४७.। ४ आ. ३। ५ श्रौतं स्मार्तं वयः श्रौतं स्मार्तं वा। ६ एतैः कर्मवयोबन्धु। ७ अशीतिकावर इति च पाठः (६. १०.)। ८ अप० स्तु।

वृद्धः[1] पक्वशरीरः प्रसिद्धः, भारी भाराक्रान्तः, *नृपो भूपतिर्न क्षत्रियमात्रं, स्नातो विद्याव्रतोभयस्नातः, स्त्री प्रसिद्धा, रोगी व्याधितः, वरो विवाहोद्यतः, चक्री शाकटिकः, चकारान्मत्तोन्मत्तादीनां ग्रहणम्,—"बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तस्त्रीस्नातकप्रव्रजितेभ्यः।" इति शङ्खस्मरणात्,—एभ्यः पन्था देयः। एतेष्वाभिमुख्यागतेषु[2] स्वयं पथोपक्रामेत्। वृद्धादीनां[3] राज्ञा सह पथि समवाये राजा मान्य इति तस्मै पन्था देयः। †भूपतेरपि स्नातको मान्यः, स्नातकग्रहणं स्नातकमात्रप्राप्त्यर्थं, न ब्राह्मणाभिप्रायेण,—तस्य सदैव गुरुत्वात् यथाऽऽह शङ्खः,—"अथ ब्राह्मणायाग्रे पन्था देयो राज्ञ इत्येके। तच्चानिष्टं, गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्मै पन्थाः।" इति। वृद्धादीनां परस्परं पथि समवाये वृद्धतराद्यपेक्षया[4] विद्यादिभिर्वा विशेषो द्रष्टव्यः ॥ ११७ ॥

**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥**

वैश्यस्य क्षत्रियस्य, च चकाराद्ब्राह्मणस्य द्विजानुलोमानां च, यागाध्ययनदानानि साधारणानि कर्माणि, ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापनानि। तथेति स्मृत्यन्तरोक्तवृत्त्युपसंग्रहः, यथाऽऽह गौतमः—"कृषिवाणिज्ये वा स्वयंकृते।" "कुसीदं च[5]।" इति। ‡अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति, न स्वेच्छया—"आ-

* "नृपो राजन्यः" इति अप० १६०.

† "नृपस्य स्नातको मान्यः स चेद्ब्राह्मणः।" इति अप० १६०.

‡ "यस्तु पुनः 'अब्राह्मणादध्ययनमापत्काले विधीयते।' इति तत् अध्यापनमात्रकर्तृत्वम ब्राह्मणस्याभ्यनुजानाति न तु वृत्तित्वमपि। अत एवानन्तरमाह मनुः—अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः।' (म. २. २४१)......एवं च 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदा चिज्ज्यायसीम्' इति वसिष्ठवचनं नासमञ्जसं भवति।" अप० १६०—१.

---

१ क. वृद्धः प्रसिद्धः। ग. घ. पक्वकेशः प्रसिद्धः। २ क. एतेष्वभिमुखायातेषु। ३ क. वृद्धानां राज्ञा। ४ क. वृद्धतरापेक्षया। ५.—१०. ५, ६.।

पत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः। अनुगमनं शुश्रूषा। समाप्ते ब्राह्मणो गुरुः।" इति गौतमस्मरणात्। एतान्यनापदि ब्राह्मणस्य षट् कर्माणि। तत्र त्रीणीज्यादीनि धर्मार्थानि, प्रतिग्रहादीनि वृत्त्यर्थानि,—"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥[3]" इति मनुस्मरणात्। अत इज्यादीन्यवश्यं कर्तव्यानि न प्रतिग्रहादीनि। "द्विजातीनामध्ययनमिज्या दानम्।" "ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः।" "पूर्वेषु[4] नियमः।" इति गौतमस्मरणात्॥ ११८॥

## प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।
## कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥ ११९॥

क्षत्रियस्य प्रजापालनं प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि वृत्त्यर्थानि कर्माणि। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः, लाभार्थं क्रयविक्रयौ *वाणिज्यम्, शेषं प्रसिद्धम्,—"शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषी विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः॥[5]" इति मनुस्मरणात्॥ ११९॥

## शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।
## †शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥ १२०॥

शूद्रस्य द्विजशुश्रूषा प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। तत्र ब्राह्मणशुश्रूषा परमो धर्मः,—'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते[6]।' इति मनुस्मरणात्।

---

* वाणिज्यं वणिक्कर्म। ततश्च धान्यादि समर्घं गृहीत्वा महार्घं दीयत इति वाणिज्यम् अप० १६१.

† "अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम्। पुत्रदारात्यये प्राप्ते जीवेत्कारुककर्मभिः" इति मनुः॥ (१०. ९९.)

---

१ आपत्कल्पो इति च पाठान्तरम्। २.—७. १, २, ३.। ३.—१०. ७६.। ४.—१०. १, २, ३. 'नियमस्तु' इति। च पाठः। ५.—१०. ७९.। ६.—१०. १२३।

यदा पुनर्द्विजशुश्रूषया जीवितुं न शक्नोति तदा वणिग्वृत्त्या जीवेत्। नानाविधैर्वा शिल्पैर्द्विजातीनां हितं कुर्वन् यादृशैः कर्मभिः द्विजातिशुश्रूषायामयोग्यो न भवति तादृशानि कर्माणि कुर्वन्नित्यर्थः। तानि च देवलोक्तानि—"शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणकर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि" ॥१२०॥

किं च—

**भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः।**
**नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत्॥ १२१॥**

*भार्यायामेव न साधरणस्त्रीषु परस्त्रीषु वा रतिरभिगमनं यस्य स तथोक्तः, शुचिः बाह्याभ्यन्तरशौचयुक्तः द्विजवत्, भृत्यादेः भर्ता, श्राद्धक्रियारतः,—श्राद्धानि नित्यनैमित्तिककाम्यानि च क्रियाः स्नातकव्रतानि अविरुद्धानि,—तेषुः रतः। नम इत्यनेन मन्त्रेण पूर्वोक्तान्पञ्चमहायज्ञानहरहर्नहापयेत्, अनुतिष्ठेत्। नमस्कारमन्त्रं च केचित्—"देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमोनमः॥" इति वर्णयन्ति, नम इत्यन्ये। तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यं न वैवाहिकेऽग्नावित्याचार्याः॥ १२१॥

*** "भार्यायामेव रतिर्यस्य स तथोक्तः। अनेन च भार्याव्यभिचारपरिहारो धर्मत्वेनास्य विधीयते। शुचिः शास्त्रीयशौचकर्ता स्यात्। भृत्यभर्ता भृत्यानां पुत्रकलत्रादीनां पोषकः। श्राद्धक्रियापरः श्राद्धानुष्ठाननिष्ठः। उक्तान्पञ्चयज्ञान्नमस्कारात्मकेन मन्त्रेण कुर्यात्। न पुनरनधीतमन्त्रत्वेन तान्हापयेत्त्यजेत्। मन्त्रशब्दोऽत्र सकलमन्त्रकार्यनमस्कारविनियोगार्थः। अन्यथा समानार्थतया स्वाहाकारस्वधाकारयोरेव कार्ये स्यात्॥**

**ननु च शूद्रोऽनग्निः कथमग्निसाध्यकर्माधिकारी स्यात्। न चास्य विवाहाग्निरस्तीति वाच्यम्,—शूद्रस्य विवाहहोमाभावात्। न ह्यमन्त्रकोऽस्तिहोमः। न च शूद्रो मन्त्रवान्। नमस्कारश्च पञ्चयज्ञेष्वेव मन्त्रकार्ये विधीयते। न विवाहेऽपि। तस्मादग्निसाध्येषु कार्येषु वक्तव्योऽस्याधिकारः। उच्यते—अनग्नेरपि शूद्रस्य वैश्वदेवादीनि कर्माणि लौकिकेऽग्नौ कार्याणि। तं प्रत्येवेह विहितत्वात्। यथा निषादस्थपतीष्टिः। किंचिद्द्विजातीनामपि वैश्वदेवकर्म न विवाहाग्निनियतं किं पुनः शूद्रस्य। यत्तु गौतमेन शूद्रमधिकृत्योक्तं— "पाकयज्ञैः स्वयं यजेतेत्येके" इति तल्लौकिकाग्निविषयम्।" अप० १६३.**

१ क. वादनानीति। २ ख. भृत्यादिभर्ता।

यथा व्याघ्रचौराद्युपहितदेशाक्रमणादि* । अकस्मान्निष्कारणं किंचिदपि परुषमप्रियं उद्वेगकरं वाक्यं †न वदेत् । न चाहितं, नानृतं वा प्रियमपि, चकारादसभ्यं बीभत्सकरं च,—अकस्मान्न वदेदिति संबध्यते । एतच्च परिहासादिव्यतिरेकेण,—"गुरुणाऽपि समं हास्यं कर्तव्यं कुटिलं विना ।" इति स्मरणात् । न च स्तेनः, अन्यदीयस्यादत्तस्य गृहीता न स्यात् । प्रतिषिद्धवृद्ध्युपजीवी वार्धुषी न स्यात् ॥ १३२ ॥

किं च—

**दाक्षायणी ब्रह्मसूत्री वेणुमान्त्सकमण्डलुः ।**
**कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥**

दाक्षायणं सुवर्णं, तदस्यास्तीति दायक्षायणी । ब्रह्मसूत्रं यज्ञोपवीतं तदस्यास्तीति ब्रह्मसूत्री, वैणवयष्टिमान्, ‡कमण्डलुमान्,—स्यादिति सर्वत्र संबन्धनीयम् । अत्र ब्रह्म चारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्तयर्थम्,—यथाऽऽह वसिष्ठः—"स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् । यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥" इति। अत्र दाक्षायणीति §सामान्याभिधानेऽपि कुण्डलधारणमेव कार्यम्,—"वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले[२] ॥" इति मनुस्मरणात् । तथा देवं देवप्रतिमां, मृदमुद्धृतां, गां, ब्राह्मणं,

---

* "अथ वा निश्चितेऽर्थे संशयमतिशङ्कां न कुर्यात् ।" इति अप० १७३.

† "अत्र यमः—'प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति । प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मना ॥' केनापि प्रमाणेन विदितं पतितं न प्रत्यादिशेत्, न कथयेदित्यर्थः । तत्संयोगादात्मानं रक्षेत् ॥ 'यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान्पशून्घ्नन्ति तूर्णं मिथ्याभिशंसिनाम् ॥" इति अप० १७५.

‡ "बोधायनः—"स्नातकोऽन्तर्वासः सोत्तरीयं वैणवं डण्डं धारयेत्सोदकं च कमण्डलुम् । द्वे यज्ञोपवीते उष्णीषमजिनमुपर्युपानहौ छत्रं चा ।" इति अप० १७६.

§ "अनुपसृष्टं सुवर्णं धारयेत्—" (लोगाक्षिः) । "अनुपसृष्टं कालिकारहितम् ॥" इति अप० १७६.

"वेदो दर्भमुष्टिः ।" इति अप० १७६.

---

१.—१२. १४. । २.—४. ३६. । ३ ख. देवं देवतार्चां । तीर्थात्मृदम् ।

वनस्पतिं च अश्वत्थादिकं प्रदक्षिणं कुर्यात् एतान् दक्षिणतः कृत्वा व्रजेत् । एवं चतुष्पथादीनपि,—" मृदं गां देवतां विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥" इति मनुस्मरणात् ॥ १३३ ॥

**न तु मेहेन्नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु ।**
**न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥**

† नद्यादिषु न मेहेत् न मूत्रपुरीषोत्सर्गं कुर्यात् । एवं श्मशानादावपि,—यथाऽऽह शङ्खः—" न गोमयकृष्टोप्तशाद्वलचितिश्मशानवर्त्मखलपर्वतपुलिनेषु मेहेत् भूताधारत्वात्" इति । तथाऽग्न्यादीन्प्रति अग्न्यादीनामभिमुखं न मेहेत्, नाप्येतान्पश्यन्,—यथाऽऽह गौतमः—" न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत् । न देवताः प्रति पादौ प्रसारयेत् ।" एतद्देशव्यतिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यात् इति,—यथाऽऽह वसिष्ठः—" परिवेष्टितशिराभूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यात् ।" इति ॥ १३४ ॥

---

* ' अस्मिन्नेवावसरे इदमपि वक्ष्यामः—" मनुः—' नाविनीतैर्व्रजेद्धुर्यैर्न चक्षुर्व्याधिपीडितैः । न भिन्नशृङ्गाक्षिखुरैर्नवालधिविरूपितैः ॥ नातिकाल्यं नातिसायं नातिमध्यन्दिने स्थिते ॥ नाज्ञातेन च संगच्छेन्नैको न वृषलैस्सह ॥ गवां च यानं पृष्ठेन सर्वदैव विगर्हितम् ।" (४—६७. ८. ९.) विष्णुः—" न रात्रौ वृक्षमूलमधितिष्ठेत् । न सूनाबन्धनागारौ । न वृथा च नदीं तरेत् । न देवताभ्यः पितृभ्यश्चोदकमप्रदाय कूलमधितिष्ठेत् न कूपमवलोकयेत् । न लङ्घयेत् । नैकोध्वानं प्रपद्येत । नाधर्मिकैस्सार्धं न द्विषद्भिः । न सन्ध्ययोर्नासंनिहितपानीयं नातितूर्णं न संततम्" । बोधायनः—" न पतितेन स्त्रिया चाध्वानं व्रजेत् "।...आपस्तम्बः—" न श्रोत्रियमनभिभाष्य व्यतिव्रजेदरण्यं न स्त्रियम् "..." इति अप० १७३. १७४.

† " नद्यामनुदकायां । सोदकायां पुनरम्बुग्रहणादेव निषेधः सिद्धः । छायायां लोकोपजीव्यायाम् ।" तथा मनुः—" न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे । न फालकृष्टे न जले न चित्यां न च पर्वते ॥ न जीर्णदेवायतने न वल्मीके कदाचन । न ससत्त्वेषु गर्तेषु न गच्छन्न पथि स्थितः ॥ न नदीतीरमासाद्य न च पर्वतमस्तके ।" (४. ४५—७.) पर्वतग्रहणे सत्यपि यत्पर्वतमस्तकग्रहणं तदन्यन्तापादि मस्तकादन्यत्वानुग्रहार्थम् । यमस्तु—तुषाङ्गारकपालानि देवतायतनानि च । राजमार्गश्मशानानि क्षेत्राणि च खलानि च॥" देवलः—"न

---

१—४. ३९. । २—९, १२. । ३ क. रन्तर्द्धायमेहनंकार्यम । यथाऽऽह ।

**नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनां ।**

**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥**

नैवार्कमीक्षेत। यद्यपि सामान्येनोक्तं, तथाऽपि उदयास्तमयराहुग्रस्तोदकप्रतिबिम्बमध्याह्नवर्तिन एवादित्यस्यावेक्षणं निषिद्ध्यते न सर्वदा, यथोक्तं मनुना—“ नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्[1] ॥” इति। *उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत। “न नग्नां स्त्रियमीक्षेताऽन्यत्र मैथुनात्[2]।” इत्याश्वलायनः†। संसृष्टमैथुनां कृतोपभोगां उपभोगान्ते अनग्नामपि नेक्षेत। चकाराद्भोजनादिकमाचरन्तीम्। तथा च मनुः—“ नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतोम्। क्षुवतींजृम्भमाणां च न चासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च तेजस्कामो[3] द्विजोत्तमः[4] ॥” इति । मूत्रपुरीषे च न पश्येत्, तथा अशुचिः सन् राहुतारकाश्च न पश्येत् । चकारादुदके स्वप्रतिबिम्बं न पश्यते। “ न चोदके निरीक्षेत स्वरूपमिति धारणा[5]” इति वचनाम् ॥ १३५ ॥

**अयं मेवज्र इत्येवं सर्वं मन्त्रमुदीरयन् ।**

**वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च॥ १३६ ॥**

वर्षति सति “ अयं मे वज्रः पाप्मानमपहन्तु[6] ” इति मन्त्रमुच्चारयन् अप्रावृतो[7] अनाच्छादितो गच्छेत् इयात्, न धावेत्,—“न प्रधावेच्च वर्षति” इति प्रतिषे-

**चत्वारोपद्वारयोन्मूत्रपुरीषे कुर्यात् न कृष्टक्षेत्रे न सस्यपूर्णे न यज्ञभूमौ न यज्ञियानां वृक्षाणामधस्तात्।” विष्णुः—“नोषरे न पराशुचौ। नोद्यानोदकसमीपयोः । नाऽकाशे मूत्रपुरीषे कुर्यात्। ” शङ्खलिखितौ—“नासंवृते मूत्रपुरीषे उत्सृजेत्। न सान्तर्वासा न निर्वासाः।” इति अप० १७९—१८०.**

*** “हारीतः—“ न नग्नां स्त्रियं पुरुषं वा वीक्षेत । न नोदमयास्तमयौ चन्द्रार्कौ । ” गौतमः—“ न नग्नां परयोषितमीक्षेत । ” इति अप० १८०.**

**“ न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् ” इति यदुक्तमाश्वलायनेन तत्स्वभार्याविषयम् ॥**

**† “ इति सांख्यायनदर्शनात् ” । इति मनुस्मृतिव्या० कुल्लूकभट्टः ४. ५३.**

---

१.—४. ३७. । २.—३. ९. ६. । ३. क. प्रसवन्तीं च श्रेयस्कामो । ४.—४. ४३, ४.। ५ मनुः ४. ३८. । ६ अपहनत् इति अपरार्के । ७ ख. घ. अप्रावृतो गच्छेत् अनाच्छादित इयात् । “ न प्रधा । क. अनाच्छादितोगच्छेत् इयात् । न धावेत् ,—“ न प्रधा ।

धात्। न च प्रत्यक्शिराः स्वप्यात्, चकारान्नग्नो न शयीत, एकश्च शून्यगृहे,—"न च नग्नः शयीतैकः स्वप्याच्छून्यगृहे तथा[1]।" इति च मनुस्मरणात्॥ १३६॥

**ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्।**
**पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत्॥ १३७॥**

ष्ठीवनमुद्गिरणम्, असृग्रक्तम्, शकृत् पुरीषम्, शेषं प्रसिद्धम्,—एतान्यप्सु न निक्षिपेत्। एवं तुषादीनपि, यथाऽऽह शङ्खः—"तुषकेशशर्करीष[2]भस्मास्थिश्लेष्मनखलोमान्यप्सु न निक्षिपेत्, पादेन पाणिना वा जलं नाभिहन्यात्।" इति। अग्नौ च पादौ न प्रतापयेत्। नाप्यग्निं लङ्घयेत्। चकारात् ष्ठीवनादीन्यग्नौ न क्षिपेत्, मुखोपधमनादि चाग्नेर्न कुर्यात्। तथा च मनुः—"नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्। नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्॥ अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत्। न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत्[3]॥" इति॥ १३७॥

**जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत्।**
**नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत्॥ १३८॥**

जलमञ्जलिना* संहताभ्यां हस्ताभ्यां न पिबेत्। जलग्रहणं पेयमात्रोपलक्षणम्। विद्यादिभिरात्मनोऽधिकं शयानं न प्रबोधयेत्,—"श्रेयांसं न प्रबोधयेत्।" इति विशेषात्। अक्षादिभिर्न क्रीडेत्। †धर्मघ्नैः पशुलङ्घ[4]नादिभिर्न क्रीडेत्। व्याधितैर्ज्वराद्यभिभूतैरेकत्र न संविशेत् न शयीत॥ १३८॥

---

* "सव्यदक्षिणौ हस्तौ युक्तावञ्जलिः। तेन जलं न पिबेत्।" इति अप० ९८२.

†"धर्मघ्नैः पतितादिभिर्व्याधितैश्च पुरुषैः सह न संविशेत्। अत्र च संवेशनं संकरोपलक्षणार्थम्। अत एव मनुः—न संविशेत पतितैर्न चाण्डालैर्न पुल्कसैः। न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः॥ (४. ७९.) सहासनं भोजनं च पतितैः सहवर्जयेत्। उपपातकिभिश्चान्यैः कुर्वद्भिः कर्म निन्दितम्॥" क्रीडाग्रहणं व्यसनमात्रोपलक्षणार्थम्। तथा च मनुः—न नृत्येन्नैव गायेच्च न वादित्राणि वादयेत्। नास्फोडयेन्न क्ष्वेडेच्च न च रक्तं विरागयेत्॥" इति अप० ९८२.

---

१.—४. ५७.। २. ख. केशपुरीषभस्मा। ३.—४. ५३, ५४.। ४ ख. पशुलम्भनादि।

**विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।**

**केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥**

[*] जनपदग्रामकुलाचारविरुद्धं कर्म वर्जयेत् । प्रेतधूमं, बाहुभ्यां नदीतरणम्,—वर्जयेदिति संबध्यते । केशादिषु च संस्थितिं वर्जयेत्, चकारादस्थिकार्पासामेध्येषु ॥ १३९ ॥

**नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् ।**

**न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥**

परस्य क्षीरादि पिबन्तीं गां परस्मै नाचक्षीत, न च निवर्तयेत् । अद्वारेण कापथेन क्वचिदपि नगरे ग्रामे मन्दिरे वा न प्रविशेत् । न च कृपणस्य शास्त्रातिक्रमकारिणो राज्ञः सकाशात्प्रतिगृह्णीयात् ॥ १४० ॥

**प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।**

**दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥ १४१ ॥**

[†] प्रतिग्रहेषु[१] साध्येषु सून्यादयः पञ्च पूर्वस्मात्पूर्वस्मात्परःपरो दशगुणं दुष्टः । [‡] सूना प्राणिहिंसा साऽस्यास्तीति सूनी—प्राणिहिंसापरः । चक्री तैलिकः । ध्वजी सुराविक्रयी । वेश्या[§] पण्यस्त्री । नराधिपः अनन्तरोक्तः ॥ १४१ ॥

---

* "आयुरारोग्यादिविरुद्धं कर्म ।...कर्मशब्देनात्र संकल्प उच्यते ।" इति अप० १८३.

† तथा च मनुः—न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः । सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥ (४) ८४ ॥ दशसूना समं चक्रं दशचक्रसमो ध्वजः । दशध्वजसमो वेशो दशवेशसमो नृपः ॥ ८५ ॥ दश सूनासहस्राणि यो वाहयति सौनिकः । तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥ ८६ ॥ यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः । स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥ ८७ ॥ तामिस्रमन्धतामिस्रमित्यादि ॥" इति अप० १८५.

‡ " सूना प्राणिवधस्थानं तद्वान्सूनी प्राणिघातकः " इति अप० १८५

§ " परहृदयं विवशयतीति वेश्या, यद्वा वेशेनजीवतीति वेश्या । वेशः श्रृङ्गारः ।" इति अप० १८६.

---

१ ख. साध्येषु च सून्या । क. प्रतिग्रहे साध्येसून्या ।

अथाध्ययनधर्मानाह—

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।**

**हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ १४२ ॥**

अधीयन्त इत्यध्याया वेदास्तेषामुपाकर्म उपक्रममोषधीनां प्रादुर्भावे सति श्रावणमासस्य पौर्णमास्यां, श्रवणनक्षत्रयुक्ते वा दिने, हस्तेन युक्तायां पञ्चम्यां वा, स्वगृह्योक्तविधिना कुर्यात् । यदा तु श्रावणमासे ओषधयो न प्रादुर्भवन्ति, तदा भाद्रपदे मासे श्रवणनक्षत्रे कुर्यात् । तत ऊर्ध्वं सार्धांश्चतुरो मासान्वेदानधीयीत । तथा च मनुः—"श्रावण्यां* प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि । युक्तश्छन्दां†-स्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥" इति ॥ १४२ ॥‡

**पौषमासस्य §रोहिण्यामष्टकायामथापि वा ।**

**जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥**

---

* "चन्द्रमसा युक्तः श्रवणो नक्षत्रं यस्यां सा श्रावणी । अथ वा श्रवणे नक्षत्रे, सप्तम्यर्थे श्रवणशब्दात् एनप्रत्ययः । अथ वा श्रावणस्य पञ्चम्यां हस्ते नक्षत्रे चोपाकर्म कार्यमोषधिभावे सति । ओषधीनां व्रीहिप्रभृतीनां भावः प्रादुर्भावः अङ्कुरोदय इति यावत् । एतत्र विशेषणं श्रावणी श्रवणयोरपि ग्राह्यम् ।" इति अप० १८५.

† "छन्दोभिस्तदध्ययनं लक्ष्यते । येन प्रकारेणोपाकर्मप्रभृति शुक्लकृष्णपक्षेषु वेदाध्ययनं कृतं तत्प्रकारमिदानीं परित्यजेत् न तु सर्वात्मना । अत एव मनुः—"अतः परं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत् ॥" इति उत्सर्गानन्तरं छन्दोध्ययने प्रकारान्तरमुक्तवान् ।" इति अप० १८६.

‡ "गृहस्थस्याऽपि ग्रहणाध्ययनाधिकारं ज्ञापयितुं तत्प्रकरणेऽध्ययनाविधिः अत एव शौनकः—'समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे । जायोपेयेत्येके" इति अप०. १८६.

§ "रोहिण्यां तस्यैव चाष्टकायां कृष्णाष्टम्यामित्यर्थः ।" इति अप० १८६.

पौषमासस्य रोहिण्यामष्टकायां वा ग्रामात् बहिर्जलसमीपं छन्दसां वेदानां स्वगृह्योक्तविधिनोत्सर्गं कुर्यात् । यदा पुनर्भाद्रपदे मासे उपाकर्म तदा माघशुक्लप्रथमदिवसे उत्सर्गं कुर्यात्, यथोक्तं मनुना—"पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं बुधः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि[2] ॥" इति । तदनन्तरं पक्षिणीमहोरात्रं वा विरम्य शुक्लपक्षेषु वेदान् कृष्णपक्षेष्वङ्गान्यधीयीत, यथाऽऽह मनुः—"यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः । विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् ॥ अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्[3] ॥" इति ॥ १४३ ॥

अनध्यायानाह—

**त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।**
**उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ १४४ ॥**

उक्तेन मार्गेणाधीयानस्य *शिष्यर्त्विग्गुरुबन्धुषु† प्रेतेषु मृतेषु त्र्यहमनध्यायः त्रीनहोरात्रानध्ययनं वर्जयेत् । उपाकर्मणि उत्सर्गाख्ये[4] कर्मणि कृते त्र्यहमनध्यायः । उत्सर्गे तु ‡मनूक्तपक्षिण्यहोरात्राभ्यां सहास्य विकल्पः । स्वशाखाश्रोत्रिये स्वशाखाध्यायिनि च प्रेते त्र्यहमनध्यायः§ ॥ १४४ ॥

---

* "गुरुराचार्यः । तथा च मनुः—"त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।" (५. ८०.)

† "बन्धवोऽत्रासपिण्डाः । सपिण्डेषु दशाहादिविधानात् ।" इति अप० १८७.

‡ "यथाशास्त्रं तु कृत्वैवमुत्सर्जं विधिवद्बहिः । विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येक महर्निशम् ॥" (४. ९७.) इति मनुः.

§ " अत्राऽऽपस्तम्बः—

"श्रावण्यां पौर्णमास्यामनध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत । तथा प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् । तथोपकरणादि । आ उत्सर्जनादध्यापयितुर्नियमो लोभसंहरणं मांसं श्राद्धं मैथुनंवर्जयेत् । ऋतावेव जायां यायात् ॥"

शौनकः—"अध्योयीत समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे । जायोपेयेत्येके प्राजापत्यं तत् " तज्जायोपगमनं प्राजापत्यमित्यर्थः ॥ " इति अप० १८७.

---

१ ख. ग. मनुना—पौषे तु । २.—४. ९६. । ३.—४. ९७. ९८. । ४ ग. उत्सर्गाख्ये च कर्मणि । क. मध्यवर्तिश्लोकयोः सव्याख्ययोः पौर्वापर्यक्रमव्यत्यासो दृश्यते ।

**सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।**
**समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥**

सन्ध्यायां मेघध्वनौ निर्घाते, आकाशे उत्पातध्वनौ, भूमिचलने, उल्कापतने, मन्त्रस्य ब्राह्मणस्य वा समाप्तौ, आरण्यकाध्ययने च, द्युनिशमहोरात्रमनध्यायः॥१४५॥

**पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।**
**ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च[1] ॥ १४६ ॥**

पञ्चदश्याममावास्यायां पूर्णिमायां चतुर्दश्यामष्टम्यां राहुसूतके चन्द्रसूर्योपरागे च, द्युनिशमनध्यायः । यत्तु "त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च[2] सूतके ।" इति, तद्ग्रस्तास्तविषयम् । ऋतुसन्धिगतासु च प्रतिपत्सु श्राद्धिकभोजने तत्प्रतिग्रहे च द्युनिशमनध्यायः । एतच्चैकोद्दिष्टव्यतिरिक्तविषयम् । तत्र तु त्रिरात्रम् ,—"प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यहं न कीर्तयेद्ब्रह्म[3]" इति स्मरणात् ॥ १४६ ॥

**पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।**
**कृतेऽन्तरे* त्वहोरात्रं शक्रपाते† तथोच्छ्रये[4] ॥ १४७ ॥**

अध्येतॄणां पश्वादिभिरन्तरागमने कृते ‡शक्रध्वजस्यावरोपणदिवसे, उच्छ्रयदिवसे चाहोरात्रमनध्यायः । द्युनिशमिति प्रकृते पुनरहोरात्रग्रहणं सन्ध्यागर्जित-

* शिष्योपाध्याययोर्मध्यतो गमनम् । तस्मिन् पशुमण्डूकादिभिः कृते अहोरात्रमनध्यायः । मध्यगमनात्प्रभृतिसूर्योदयं यावदित्यर्थः । " इति अप० १७०.

† "शक्रपाते शक्रोच्छायोपलक्षिते काले । प्रोष्ठपद्यनन्तरं भरण्यां शक्रपातः । " इति अप० १९०.

‡ "पौष्ठपदस्यैव शुक्लद्वादश्यां शक्रोच्छ्रायः तदाह गर्गः—"द्वादश्यां तु सिते पक्षे मासि प्रोष्ठपदे तथा । शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे ॥" इति । विश्वशब्देन वैश्वदेवमुत्तराषाढा नक्षत्रमुपलक्ष्यते । वासवशब्देन वसुदैवतं धनिष्ठानक्षत्रम् । तेन द्वादश्यामेव शक्रोच्छ्रायः । " इति अप० १९०.

१ अपरार्के—प्रतिगृह्य वा । २ मनुः—४. ११०. । ३ मनुः—४. ११०. । ४ क. उच्छ्रयीद । वेदाङ्गानिरहस्यं चेत्यपरार्के ।

निर्घातभूकम्पोल्कानिपातेष्वाकालिकत्वज्ञापनार्थम्,—"आकालिकनिर्घातभूकम्पराहुदर्शनोल्काः।" इति गौतमवचनात्। निमित्तकालादारभ्यापरेद्युर्यावत्स एव कालस्तावत्कालः अकालः, तत्र भव आकालिकोऽनध्यायः। एतच्च प्रातःसन्ध्यास्तनिते, रात्रिसन्ध्यास्तनिते तु रात्रिमेव,—"सायंसन्ध्यास्तनिते रात्रिः, प्रातःसन्ध्यामहोरात्रम्।" इति हारीतस्मरणात्। यत्पुनर्गौतमेनोक्तं "श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासश्च[२]।" इति तत् प्रथमाध्ययनविषयमेव[३] ॥ १४७ ॥

श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने ।
अमेध्यशवशूद्रान्त्य*श्मशानपतितान्तिके ॥ १४८ ॥

श्वा कुक्कुरः, क्रोष्टा सृगालः, गर्दभो रासभः, साम सामानि, बाणो† वंशः, उलूको घूकः, आर्तो दुःखितः,—एषां श्वादीनां निःस्वने तावत्कालमनध्यायः, वीणादिस्वनेऽपि,—"वेणुवीणाभेरीमृदङ्गगन्त्र्यार्त शब्देषु[४]।" इति गौतमवचनात्। गन्त्री शकटम्[६]। अमेध्यादीनां संनिधाने तावत्कालिकोऽनध्यायः ॥ १४८ ॥

देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ १४९ ॥

अशुचौ देशे, अशुचावात्मनि च, तथा विद्युत्स्तनितसंप्लवे, पुनः पुनर्विद्योतमानायां विद्युति, स्तनितसंप्लवे पुनः पुनर्मेघघोषे, तावत्कालिकोऽनध्यायः। भुक्त्वाऽऽर्द्रपाणिर्नाधीयीत। जलमध्ये, अर्धरात्रे महानिशाख्ये मध्यमप्रहरद्वये, अतिमारुते अहन्यपि तावत्कालं नाधीयीत ॥ १४९ ॥

* "अन्त्यः शूद्रान्निकृष्टः।" इति अप० १९१.

† "बाणः वीणाविशेषः" इति अप० १९१.

---

१.—१६. २२.। २.—१. ७९। ३. ख. ग. विषय एव। ४ क. मृदङ्गगर्दार्त शब्देषु। ५. —१६. ७.। ६ क. गर्दः शकटः।

**पांसुप्रवर्षे दिग्दाहे सन्ध्यानीहारभीतिषु ।**
**धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥**

औत्पातिके रजोवर्षे दिग्दाहे यत्र ज्वलिता इव दिशो दृश्यन्ते, सन्ध्ययोर्नीहारे धूमिकायां, भीतिषु चौरराजादिकृतासु तावत्कालमनध्यायः । धावतस्त्वरितं गच्छतोऽनध्यायः । पूतिगन्धे कुत्सितगन्धे अमेध्यमद्यादिगन्धे, शिष्टे च श्रोत्रियादौ गृहं प्राप्ते तदनुज्ञावधिः, अनध्यायः ॥ १५० ॥

**खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।**
**सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥**

यानं रथादि । इरिणमूषरं मरुभूमिर्वा । खरादीनामारोहणे तावत्कालमनध्यायः । एवं 'श्वक्रोष्टुगर्दभ' इत्यस्मादारभ्य सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्निमित्तसमकालान् विदुरनध्यायविधिज्ञाः । विदुरित्यनेन स्मृत्यन्तरोक्तानन्यानपि संगृह्णाति, यथाऽऽह मनुः—"शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीताऽऽमिषं जग्ध्वा सूतकान्नाद्यमेव च[1] ॥" इत्यादि ॥ १५१ ॥

एवमनध्यायानुक्त्वा प्रकृतानि स्नातकव्रतान्याह—

**देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।**
**नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि[2] च ॥ १५२ ॥**

देवानां देवार्चानाम्[3]ऋत्विक्स्नातकाचार्यराज्ञां परस्त्रियाश्च छायां नाक्रामेन्नाधितिष्ठेन्न लङ्घयेत् बुद्धिपूर्वम्, यथाऽऽह मनुः—"देवतानां गुरो राज्ञः स्नातकाचार्ययोरपि । नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च[4] ॥" इति । बभ्रुणो नकुलवर्णस्य यस्य कस्यचित् गोरन्यस्य[5] वा—"सोमादे बभ्रुर्णः[6]" इति नपुंसकलिङ्गनिर्देशात्—रक्तादीनि च नाधितिष्ठेत् । आदिग्रहणात्स्नानोदकादेर्ग्रहणम् । "उद्वर्तनमपः[7] स्नानं विण्मूत्रे रक्तमेव[8] च । श्लेष्मनिष्ठयूतवान्तानि नाधितिष्ठेत कामतः ॥" इति ॥ १५२ ॥

---

१.—४. ११२. । २ ख. द्वर्तनादि च । ३ क. ग. देवार्चानामिति पदं नास्ति । ४.—४. १३०. । ५ ख.गोरश्वस्य वा । ६ ख. सोमादे र्वा बभ्रुणः । ७ ख. तनमलस्ना । ८ ख. ग. विण्मूत्रं रक्त ।

विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।
आ मृत्योः श्रियमाकांक्षेन्न कञ्चिन्मर्मणि स्पृशेत् ॥ १५३ ॥

* विप्रो बहुश्रुतो ब्राह्मणः, अहिः सर्पः, क्षत्रियो नृपतिः,—एते कदाचिदपि नावमन्तव्याः । आत्मा च स्वयं नावमन्तव्यः । आमृत्योर्यावज्जीवं श्रियमिच्छेत् † । न कञ्चिन्मर्मणि स्पृशेत् — कस्यचिदपि मर्म दुश्चरितं न प्रकाशयेत् ‡ ॥ १५३ ॥

दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।
श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् ॥ १५४ ॥

भोजनादुच्छिष्टं विण्मूत्रे पादप्रक्षालनोदकं च गृहाद्दूरात् समुत्सृजेत् । श्रौतं स्मार्तं चाऽऽचारं§ नित्यं सम्यगनुतिष्ठेत् ॥ १५४ ॥

गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।
न निन्दाताडने कुर्यात्पुत्त्रं शिष्यं च ताडयेत् ॥ १५५ ॥

* "विप्रसर्पक्षत्त्रिया आत्मा च नावमन्तव्याः । अत्र मनुः "क्षत्त्रियं चैव सर्पं च ब्राह्मण च बहुश्रुतम् । नावमन्येत वै भूष्णुः कृशानपि कदा चन ॥ १३५ ॥ एतत्त्रयं हि पुरुषान्निर्दहेदवमानितम् । तस्मादेतन्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥ १३६ ॥ नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः । आत्मानं न शपेद्रोषान्नीरुक्को न स्वपेद्दिवा ॥ १३७ ॥ न नक्तं विलिखेद्भूमिङ्गाश्च रात्रौ न संस्पृशेत् ॥" (४) १३७ ॥ तथा —"ब्राह्मणान्नृपतीन्वृद्धान्स्वांश्च-शान्ताञ्छिशूनपि । नाक्रोशेन्नावमन्येत प्रजयेद्दैवतं तथा ॥" इति अप० १९४.

† "यावज्जीवं श्रियमान्विच्छेत् । ततश्च तां दुर्लभां मत्वा तदुपायानुष्ठाने मन्दादरेण न भवितव्यमिति तात्पर्यार्थः ।" इति अप० १९४.

‡ "तथा च कमपि शत्रुमुदासीनं वा मर्मणि न स्पृशेत् । तथा च मनुः—"हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोतिगान् । रूपद्रविणहीनांश्च जातिहीनांश्चनाक्षिपेत् ॥" इति अप० १९४.

§ "तथा आचारो नाम लौकिककर्माश्रयः पुरुषनिःश्रेयसोपकारस्य विधिः प्रतिषेधो वा। श्रुतिविहिता आचारा गोरक्षणादयः" इत्यादिबहुविषयान्विस्तरेणोक्त्वान्ते "श्रुतिस्मृतिभ्यः आचारो वेदितव्यः । सर्वश्च स्नातकेन अवश्यं कार्यः ॥" इति अप० २३१.

गां ब्राह्मणमग्निम् अन्नम्—अदनीयं, विशेषतः पक्वम्—अशुचिर्न स्पृशेत् । पादेन त्वनुच्छिष्टोऽपि । यदा पुनः प्रमादात्स्पृशति तदा आचमनोत्तरकालं मन्त्रं कार्यम्—"स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् । गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु ॥" इति। एवं प्राणादीनुपस्पृशेत् । कस्यचिदपि निन्दाताडने न कुर्यात्। एतच्चानपकारिणि—"अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः । दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः॥" इति । पुत्रशिष्यौ शिक्षार्थमेव ताडयेत्, चकाराद्दासादीनपि। ताडनं च रज्ज्वादिनोत्तमाङ्गव्यतिरेकेण कार्यम्,—"शिष्यशिष्टिरवधेन।" "अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम् ।" "अन्येन घ्नन् राज्ञा शास्यते।" इति गौतमवचनात्, "पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन।" इति वचनात् ॥ १५५ ॥

**कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।**
**अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥ १५६ ॥**

*कर्मणा कायेन यथाशक्तिधर्ममनुतिष्ठेत्तमेव मनसा ध्यायेत् वाचा वदेत् । धर्मं विहितमपि लोकविद्विष्टं लोकाभिशस्तिजननं मधुपर्के गोवधादिकं नाऽऽचरेत्, †यस्मादस्वर्ग्यमग्नीषोमीयवत्स्वर्गसाधनं न भवति ॥ १५६ ॥

* "अत्र यत्नादिति विधीयते । अन्यदनूद्यते । तथा च सति कर्मणेति पदमनुवाचकत्वाद्वाङ्मनः शब्दसाहचर्याच्च लक्षणया शरीरे वर्तते । ततश्चायमर्थो भवति—शरीरेण यं धर्मं तपश्चर्यादिकमाचरेत्, यं च मनसा यागदानादिकं, यं च वाचा वेदाध्ययनादिकं तं यत्नादादरात्समाचरेत् न प्रमाद्येदित्यर्थः; । धर्मस्यसर्वपुरुषार्थहेतुत्वात् । तथा च मनुः—"धर्मं शनैः संचिनुयाद्वल्मीकमिव वम्रिकाः । परलोकसहायार्थं सर्वभूतान्यपीडयन्॥" इति । वम्रिकाः पिपीलिकाविशेषाः । "इति अप० २३२.

† "अस्वर्ग्यमनामुष्मिक मैहिकफलं लौकिकैर्विद्विष्टं निन्दितं धर्म्यमपि शास्त्रविहितमपि नाचरेदभिचारादिकम् । विहितो हिं बोधायनेनाभिचारः क्वचिद्विषये । यथा—षट्सु अनभिचरन् पतति" । इति । मनुरपि—"क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः । धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् । तस्मात्स्वेनैव

१.—४. १४३. । २ मनुः—४. १६७. । ३ ख. वधेन बाधनाशतौ । ४ 'शास्यः ।' इति च पाठान्तरम् । ५.—२. ४२, ३, ४. । ६ मनुः— ८. ३००. । ७ ख. धर्म्यमप्या । अपरार्के मूले च—धर्म्यमप्या । ८ क. जनकं मधु । ९ ख. स्वर्ग्यमग्निष्टोमीय ।

नद्यः, देवखातं देवनिर्मितं पुष्करादि, उदकप्रवाहाभिपातकृतसजलो महानिम्नप्रदेशो ह्रदः, पर्वताद्युच्चप्रदेशात्प्रसृतमुदकं प्रस्रवणम्, एतेषु पञ्च पिण्डानुद्धरणेनैव स्नायात्। एतच्च नित्यस्नानविषयं सति संभवे,—"नदीषु देवखातेषु तटाकेषु *सरस्सु च। स्नानं समाचरेन्नित्यं †गर्तप्रस्रवणेषु च ॥" इति नित्यग्रहणात्। शौचाद्यर्थं तु यथासंभवं परवारिषु पिण्डानुद्धरणे सर्वस्य निषेधः ॥ १५९ ॥‡

**परशय्यासनोद्यानगृहयानानि वर्जयेत्।**

**अदत्तानि**§

शय्या कशिपुः, आसनं पीठादि, उद्यानमम्रावणादि, गृहं प्रसिद्धं, यानं रथादि,—परसंबन्धीनि एतानि अदत्तानि अननुज्ञातानि वर्जयेत्—नोपभुञ्जीत।

अभोज्यान्नान्याह अग्निहीनस्येति—

**अग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥**

अग्निहीनस्य ||श्रौतस्मार्ताग्न्यधिकाररहितस्य शूद्रस्य प्रतिलोमजस्य चाधिकारवतोऽप्यग्निरहितस्यान्नमनापदि न भुञ्जीत, न प्रतिगृह्णीयाच्च तस्मात्,—"प्रश-

* "सरः स्थावरमकृत्रिमं जलम्।" इति अप० २३४.

† "गर्तस्वरूपमाह कात्यायनः—"धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्तास्तो परिकीर्तिताः" इति। अप० २३३.

‡ "अत्र च प्राशस्त्यक्रममाह मार्कण्डेयः—"भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्। ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते। तीर्थतोऽयं ततः पुण्यं गाङ्गं पुण्यं तु सर्वतः।" इति अप० २३५.

§ "अदत्तानीत्यन्तमेव स्नातकप्रकरणसमाप्तिरिति ततोऽग्रे भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणारम्भश्चेतिचापरार्के २३७ पृ० । अत्रैव टिप्पण्यां भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणं "क" पुस्तके नास्तीतिलिखितम्।

|| "सत्यप्यधिकारे श्रौतस्मार्ताग्निपरिग्रहमकुर्वत उत्सृष्टाग्नेश्चान्नम्।" इति अप० २३७.

१ ख. हाभिघातकृतसजलो। २ ग. प्रस्रवणेषु चेतिनारदस्मरणात्। ३ मनुः ४. २०३. । ४ ख. वारिषु पञ्चपिण्डानुद्धरणेऽपि सर्वस्य न निषेधः। ५ क. शय्या प्रसिद्धा आ।

स्तानां स्वकर्मशुद्धजातीनां ब्राह्मणो भुञ्जीत।" "प्रतिगृह्णीयाच्च।" इति गौतम-वचनात् ॥ १६० ॥

कदर्यबद्धचोराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१ ॥

कदर्यो लुब्धः,—"आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्। लोभाद्यः* पितरौ भृत्यान्स कदर्य इति स्मृतः" इत्युक्तः—बद्धो निगाडादिना, वाचा संनिरुद्धश्च, चोरः ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापहारी, क्लीबो नपुंसकः, रङ्गावतारी नटचारणमल्लादिः, वेणुच्छेदजीवी †वैणः, ‡अभिशस्तः पतनीयैः कर्मभिर्युक्तः, §वार्धुष्यो निषिद्धवृद्ध्युपजीवी, गणिका पण्यस्त्री, गणदीक्षी बहुयाजकः,—एतेषामन्नं नाश्नीयादित्यनुवर्तते ॥१६१ ॥

चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ १६२ ॥

¶चिकित्सको भिषग्वृत्त्युपजीवी, आतुरो महारोगोपसृष्टः—"वातव्याध्यमरीकुष्ठमेहोदरभगन्दराः। अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः॥" इति—क्रुद्धः

* "यो लोभाद्विद्यमानमपि धनं न भुङ्क्ते न च ददाति स कदर्यः।" इति अप० २३८.

† "वैणः वीणावादनजीवी वेणुच्छेदनजीवी वा।" इति अप० २३८.

‡ "अभिशस्तः पापकारित्वेनाधिक्षिप्तः।" इति अप० २३८.

§ "आत्मस्तुतिपरनिन्दाकर्ता वा वार्द्धुषिकः। तथा च विष्णुः "यस्तु निन्देत्परं जीव प्रशंसत्यात्मनो गुणान्। स वै वार्द्धुषिके नाम ब्रह्मवादिषुः गर्हितः॥" इति अप० २३८.

|| "गणः सङ्घः तदन्नमन्यस्याऽभोज्यम्। दीक्षी दीक्षितः तस्य च प्रागग्नीषोमीयहोमादभोज्यान्नता। तथा च श्रुतिः "अशितव्यं वपायां हुतायाम्" इति। आपस्तम्बस्तु "पूर्वमपिवपाहोमाद्यज्ञार्थे द्रव्ये पृथक्कृते यदवशिष्टं तद्दीक्षितस्यापि भोक्तव्यम्।" इत्याह।" इति अप० २३८.

¶ "चिकित्सकः असम्यक्चिकित्सकः इतरोऽपि।" इति अप० २३८.

१ ख. ग. स्वकर्मणाशुद्ध। २.—१७. १, २.।

कुपितः, पुंश्चली व्यभिचारिणी, मत्तो विद्यादिना गर्वितः, विद्विट् शत्रुः, क्रूरो दृढाभ्यन्तरकोपः, [1]वाक्कायव्यापारेण उद्वेजक *उग्रः, पतितो ब्रह्महादिः, व्रात्यः पतितसावित्रीकः, †दाम्भिको वञ्चकः, उच्छिष्टभोजी पर[2]भुक्तोज्झिताशी,—एतेषां चिकित्सकादीनामन्नं नाश्नीयात् ॥ १६२ ॥

**अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।**
**शस्त्रविक्रयकर्मारतन्तुवायश्ववृत्तिनाम् ॥ १६३ ॥**

अवीरा स्त्री स्वतन्त्रा,—व्यभिचारमन्तरेणापि पतिपुत्ररहितेत्यर्थः—स्वर्णकारः स्वर्णस्य विकारान्तरकृत्, स्त्रीजितः सर्वत्र स्त्रीवशवर्ती, ग्रामयाजी ग्रामस्य शान्त्यादिकर्ता, बहूनामुपनेता ‡वा, शस्त्रविक्रयी शस्त्रविक्रयोपजीवी, कर्मारो लोहकारः तक्षादिश्च, तन्तुवायः सूचीशिल्पोपजीवी, श्वभिर्वृत्तं वर्तनं जीवनमस्यास्तीति §श्ववृत्ती,—एतेषामन्नं नाश्नीयात् ॥ १६३ ॥

**नृशंसराजरजककृतघ्नवधजीविनाम् ।**
**चैलधाव[3]सुराजीवसहोपपतिवेश्मनाम् ॥ १६४ ॥**
**पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् ।**
**एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥**

* " उग्रः क्षत्रियाच्छूद्रायामुत्पन्नो वा ।" इति अप० २३८.

† " दाम्भिकः ख्यातिलाभादिप्रयोजन धर्मानुष्ठानः। " इति अप० २३८.

‡ " वस्त्रस्यूतस्य कर्ता, पाटितवस्त्रसन्धायको वा ।" इति अप० २३८.

§ " श्ववृत्तवान् सेवकः । यद्वा शुनां वृत्तं वर्तनमस्ति यस्मिन् स श्ववृत्ती, लुब्धक इत्यर्थः । " इति अप० २३८.

१ क. भ्यन्तरकोपः कायव्यापारेण । २ क. भुक्तावशिष्टाशी । ३ चैलधावकेत्यर्धस्याग्रे "एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा । गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः ॥ १६५ ॥ पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् । अनर्चितं वृथामांसं केशकीटसमन्वितम् ॥ १६६ ॥ शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् । उदक्या स्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ॥ १६७ ॥ शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६८ ॥ अत्र पर्युषितं भोज्यमित्येवं क्रमेण मूलपाठोऽपरार्कग्रन्थे उपलभ्यते ।

नृशंसो निर्दयः, *राजा भूपतिः, तत्साहचर्यात्पुरोहितश्च, यथाऽऽह शङ्खः—"भीतावगीतरुदिताक्रन्दितावघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्।" इति, रजको वस्त्रादीनां नीलादिरागकारकः, कृतघ्न उपकृतस्य हन्ता, वधजीवी प्राणिनां वधेन वर्तकः, चैलधावः वस्त्रनिर्णेजनकृत्, सुराजीवो मद्यविक्रयजीवी उपपतिर्जारः सहोपपतिना वेश्म यस्यासौ सहोपपतिवेश्मा, पिशुनः परदोषस्य ख्यापकः, अनृती मिथ्यावादी, चाक्रिकस्तैलिकः शाकटिकश्चेत्येके "अभिशस्तपतितश्चाक्रिकस्तैलिकाः।" इति भेदेनाभिधानात्, वन्दिनः स्तावकाः, सोमविक्रयी सोमलताया विक्रेता,—एतेषामन्नं न भोक्तव्यम्। सर्वे चैते कदर्यादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः, इतरेषां प्राप्त्यभावात्प्राप्तिपूर्वकत्वाच्च निषेधस्य ॥ १६४ ॥ १६५ ॥

"अग्निहीनस्य नान्नमद्यादनापदि[2]" इत्यत्र शूद्रस्याभोज्यान्नत्वमुक्तं तत्र प्रतिप्रसवमाह—

**शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः[3]।**
**भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६६ ॥**

† "दासा गर्भदासादयः, गोपालो[4] गवां पालनेन यो जीवति, ‡कुलमित्रं पितृपितामहादिक्रमायातः, अर्धसीरी हलपर्यायसीरोपलक्षितकृषिफलभागग्राहि, नापितो[5] गृहव्यापारकारयिता नापितश्च[6], यश्च वाङ्मनःकायकर्मभिरात्मानं निवेदयति,—एते दासादयः शूद्राणां मध्ये भोज्यान्नाः, चकारात्कुम्भकारः,—"गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्ना इति वचनात् ॥ १६६ ॥

**इति स्नातकव्रतप्रकरणम्।**

---

* "**राजा भूपः न तु क्षत्त्रियः।" इति अप० २३८.**

† "**दासः क्रीतादिः।" इति अप० २४३.**

‡ "**कुलं स्वक्षेत्रकर्षकः तथा च देवलः—"स्वदासो नापितो गोपः कुम्भकारः कृषीवलः। ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः"। यद्वा कुलस्य मित्रं कुलमित्रम्। कुलं वंशः मित्रे प्रसिद्धम्। अवसूरी संभूय समुत्थायतया सहकर्षकः। यश्चाक्रीत एव द्विजायाऽऽत्मानं वा वाङ्मनः कायकर्माभिर्निवेदयति ददाति। दासादयो यदीयास्तस्यैव ते भोज्यान्नाः।" इति अप० २४३.**

---

१ क. शाकटिकश्च। अभिशस्त। २ आ १६०.। ३—**अपरार्के**—मित्रावसूरिणः। ४ **ख.** गोपालः गवां पालकः गवां पालनेन। ५ **क** नापितः कारयिता। ६ क. नापितश्चेति नास्ति।

# अथ भक्ष्याभक्ष्यप्रकरणम् ६

"न स्वाध्यायविरोध्यर्थम्"[1] इत्यत आरभ्य ब्राह्मणस्य स्नातकव्रतान्यभिधायेदानीं द्विजातिधर्मानाह—

अनर्चितं वृथामांसं केशकीटसमन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६७ ॥

उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः ॥ १६८ ॥

अनर्चितं अर्चार्हाय यदवज्ञया दीयते, वृथामांसं वक्ष्यमाणप्राणात्ययादिव्यतिरेकण देवाद्यर्चनावशिष्टं यन्न भवति आत्मार्थमेव यत्साधितं, केशकीटादिभिश्च समन्वितं संयुक्तं, शुक्तं यत्स्वयमनाम्लं केवलं कालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वाऽऽम्ली भवति तच्छुक्तं दध्यादिव्यतिरेकेण,—"न पापीयसोन्नमश्नीयात्[2], न द्विः पक्वं, न शुक्तं, न पर्युषितं, अन्यत्र रागखौडवचुक्र[3]दधिगुडगोधूमयवपिष्टाविकारेभ्यः।" इति शंखस्मरणात्—पर्युषितं रात्र्यन्तरितं उच्छिष्टं भुक्तोज्झितं, श्वस्पृष्टं शुना स्पृष्टं, पतितेक्षितं पतितादिभिरीक्षितं, उदक्या रजस्वला तया स्पृष्टम्—उदक्याग्रहणं चाण्डालाद्युपलक्षणार्थं, "अमेध्यपतितचाण्डाल पुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेत्।" इति शङ्खस्मरणात्, को भुङ्क्त इति यदाघुष्य दीयते तत्संघुष्टान्नं, अन्यसंबन्धि अन्यव्यपदेशेन यद्दीयते तत्पर्यायान्नं, यथा "ब्राह्मणान्नंददच्छूद्रः शूद्रान्नं ब्रह्मणो ददत्। उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥" इति—पर्याचान्तमिति पाठे परिगतमाचान्तं गंडूषग्रहणं यस्मिन् तत्पर्याचान्तं,—तन्न भोक्तव्यम्,—एतदुक्तं भवति गंडूषग्रहणादूर्ध्वं आचमनात्प्राक् न भोक्तव्यमिति, पार्श्वाचान्तमिति पाठे एकस्यां पङ्क्तौ तु पार्श्वस्थे आचान्ते न भोक्तव्यं भस्मोदकादिविच्छेदेन विना—वर्जयेदितिप्रत्येकं संबध्यते । तथा गोघ्रातं गवा घ्रातं, शकुनेन

१ आ. १२९. । २ क. "ना पर्यान्नमश्नीयात् । ३ ख. खाण्डवचुक्र ।

काकादिना भुक्तमास्वादितं शकुनोच्छिष्टं, पदा स्पृष्टं बुद्धिपूर्वं पादेन स्पृष्टं, वर्जयेत् ॥ १६७ ॥ १६८ ॥

पर्युषितस्य प्रतिप्रसवमाह—

**अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।**
**अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६९ ॥**

*अन्नमदनीयं पर्युषितं घृतादिस्नेहसंयुक्तं चिरकालं संस्थितमपि भोज्यम् । गोधूमयवगोरसविक्रियाः मण्डकसक्तुकिलाटकूर्चिकादयः अस्नेहा अपि चिरकालसंस्थिता भोज्याः यदि विकारान्तरमनापन्नाः,—"अपूपधानाकरम्भसक्तुपाचकतैलपायसशाका[1]नि नाशुक्तानि वर्जयेत्[2] ।" इति वसिष्ठस्मरणात् ॥ १६९ ॥

**संधिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ।**
**औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १७० ॥**

या वृ[3]षेण संधीयते सा संधिनी,—"वशां वन्ध्यां विजानीयाद्वृषाक्रान्ता च संधिनीम् ।" इति त्रिकाण्डीस्मरणात् । या चैकां वेलामतिक्रम्य दुह्यते, या च वत्सान्तरेण संधीयते सा संधिनी, प्रसूता अनतिक्रान्तदशाहा अनिर्दशा, मृतवत्सा अवत्सा, संधिनी च

* "यमः—"शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन । प्रक्षालितानि निर्दोषान्यापद्धर्मो यदा भवेत् ॥ मसूरमाषसंयुक्तं तथा पर्युषितं च यत् । तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम् ॥" तथा—"अपूपाश्च करम्भाश्च धानावटकसक्तवः । शाकं मांसं च यूषं च सूपं कृसरमेव च ॥ यवागूर्यावकं चैव यच्चान्यत्स्नेहसंयुतम् । सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत् ॥ गुडादिद्रव्यसंयुक्तं वर्ज्यं पर्युषितं दधि । तथैव पानकादीनि मध्वाज्यरहितानि च ॥ राजमाषास्स्थूल मुद्गास्तथा वृषयवाशकौ । मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥ सस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित् ।" ब्रह्मपुराणे मसूरस्याप्यभक्ष्यत्वेन निर्देशः । ततश्च श्राद्धे कलायवन्मसूरभक्षणे न विकल्पः ॥ देवलः—"नाश्नीयात्पायसं नक्तं भुक्तं चेन्न स्वपेन्निशि । न क्षीरमुत्सृजेत्प्राशं पवित्रं हि पयः स्मृतम् ॥" इत्यादि अप० २४५.

१ ख. ग. शाकानि शुक्तानि वर्ज । २.—१४. ३७. । ३ ख. गोर्या वृषेण ।

अनिर्दशा च अवत्सा च संधिन्यनिर्दशावत्साः ताश्च गावश्च तासां पयः क्षीरं परिवर्जयेत्। संधिनीग्रहणं यमसुवोरुपलक्षणार्थम्, यथाऽऽह गौतमः—"स्यन्दिनीयमसूसंधिनीनां च[1]।" इति। स्रवत्पयस्स्तनी स्यन्दिनी, यमसूर्यमलप्रसविनी, एवमजामहिष्योश्चानिर्दशयोः पयः परिवर्जयेत्। "गोमहिष्यजानामनिर्दशानाम्[2]।" इति वसिष्ठस्मरणात्। पयोग्रहणात्तद्विकाराणामपि दध्यादीनां निषेधः। न हि मांसानिषेधे तद्विकारणामनिषेधो युक्तः, विकारानिषेधे तु प्रकृतेरनिषेधो युक्तः,—पयोनिषेधात् शकृन्मूत्रादेरनिषेधः। उष्ट्राज्जातमौष्ट्रं पयोमूत्रादि, एकशफा वडवादयः तत्प्रभवमैकशफं, स्त्रीभवं स्त्रैणं,—स्त्रीग्रहणमजाव्यतिरिक्तसकलद्विस्तनीनामुपलक्षणार्थम्,—"सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्ज्यम्।" इति शङ्खस्मरणात्—अरण्ये भवा आरण्याः तदीयमारण्यकं क्षीरं माहिषव्यतिरेकेण,—"आरण्यानां च सर्वेषां मृगाणां माहिषं विना[3]।" इति वचनात्, अवेर्जातमाविकं—वर्जयेदिति प्रत्येकं संबध्यते। औष्ट्रमित्यादिविकारप्रत्ययनिर्देशात्, तद्विकारमात्रस्य पयोमूत्रादेः सर्वदा निषेधः। "नित्यमाविकमपेयमौष्ट्रमैकशफं च[4]।" इति गौतमस्मरणात्॥ १७०॥

**देवतार्थं हविः शिग्रुं[5] लोहितान्व्रश्चनांस्तथा।**
**अनुपाकृतमांसानि विड्जानि कवकानि च॥ १७१॥**

देवतार्थं बल्युपहार[6]निमित्तं साधितं, हविः हवनार्थं सिद्धं प्राक्होमात्, शिग्रुः सौभाञ्जनः, लोहितान् वृक्षनिर्यासान्, व्रश्चनप्रभवान् वृक्षच्छेदनजातान् अलोहितानपि, यथाऽऽह मनुः—"लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा[7]।" इति—लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः—अनुपाकृतमांसानि यज्ञे अहुतस्य पशोर्मांसानि, विड्जानि मनुष्यादिजग्धबीजपुरीषोत्पन्नानि च तण्डुलीयकप्रभृतीनि, कवकानि* छत्राकानि,—वर्जयेदिति प्रत्येकमभिसंबध्यते॥ १७१॥

*** "कवकानि चैत्यसन्निभानि।" इति अप० २४७. तथा च बोधायनः—"अमेध्यभूस्था ये वृक्षा उप्ताः पुष्पफलोपगाः। तेषां नैव प्रदुष्यन्ति पुष्पाणि च फलानि च॥" अनेन चार्थाद्वृक्षव्यतिरिक्तानि अमेध्यभूप्ररूढानि वर्जयेदिति प्रतिपादितं भवति।" इति अप० २४७.**

---

१.—१७. २५. २ 'निर्दशाहानाम्' इति च पाठः—१४. ३५. ३ मनुः—५. ९.। ४.—१७. २४.। ५ अपरार्के शिग्रुलोहि। ६ क. हारादिति। ७.—५. ६.।

क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।
सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः ॥ १७२ ॥

क्रव्यादा आममांसादनशीलाः, पक्षिणो गृध्रादयः, दात्यूहश्चातकः, शुकः कीरः, चञ्च्वा प्रतुद्य भक्षयन्तीति प्रतुदाः श्येनादयः, टिट्टिभस्तच्छब्दानुकारी, सारसो लक्ष्मणः, एकशफा अश्वादयः, हंसाः प्रसिद्धाः, *ग्रामवासिनः पारावतप्रभृतयः,—एतान् क्रव्यादादीन् वर्जयेत् ॥ १७२ ॥

कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।
वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७३ ॥

कोयष्टिकः[1] क्रौञ्चः, †प्लवो जलकुक्कुटः, चक्राह्वश्चक्रवाकः, बलाकाबकौ प्रसिद्धौ, नखैर्विकीर्य भक्षयन्तीति विष्किराः चकोरादय एव गृह्यन्ते, लावकमयूरादीनां भक्ष्यत्वात्, ग्रामकुक्कुटस्य ग्रामवासित्वादेव निषेधात्,—एतान्कोयष्ट्यादीन्वर्जयेत्। वृथा देवताद्युद्देशमन्तरेण साधिताः कृसरसंयावपायसापूपशष्कुलीर्वर्जयेत् । कृसरं तिलमुद्गसिद्ध ओदनः, संयावः क्षीरगुडघृतादिकृतः उत्करिकाख्यः, पायसं पयसा शृतमन्नं, अपूपः[2] अस्नेहपक्वगोधूमविकारः, शष्कुली स्नेहपक्वगोधूमविकारः,—"न पचेदन्नमात्मने" इति कृसरादीनां निषेधे सिद्धे पुनरभिधानं ‡प्रायश्चित्तगौरवार्थम् ॥ १७३ ॥

कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।

* "अत्र ग्राम्या अश्वादयः सप्त। तथा च पैठीनसिः—"गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः ।" इति अप० २४७.

† "प्लवेन वर्तनमस्येति प्लवः वारिप्लवादि ;" "विकीर्यविकीर्यभक्षयन्तीति विष्किराः ।" इति अप० २४७.

‡ "केवलात्मपाकप्रतिषेधेनैव वृथाकृसरादिवर्जने सिद्धे तेषां पृथगुपादानं तद्भक्षणे प्रायश्चित्तविशेषप्राप्त्यर्थम् ।" इति अप० २४८.

१ क. कोयष्टिकः बकः । प्लवो । २ ख. ग. अपूपः स्नेहपक्व ।

**जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥ १७४ ॥**

कलविङ्को ग्रामचटकः,—ग्रामनिवासित्वेन प्रतिषेधे सिद्धे सत्युभयचरत्वात्पुनर्वचनम्—काकोलो द्रोणकाकः, कुरर उत्क्रोशः, रज्जुदालको वृक्ष[1]कुक्कुटः, जालपादाः जालाकारपादाः,—अजालपादा अपि हंसाः सन्तीति हंसानां पुनर्वचनम्—खञ्जरीटः खञ्जनः, जातितो ये अज्ञाता मृगाः पक्षिणश्च,—एतान्कलविङ्कादीन्वर्जयेत् ॥ १७४ ॥

**चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।**
**मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १७५ ॥**

चाषाः किकीदिवयः, रक्तपादाः कादम्बप्रभृतयः, सौनं घातस्थानभवं मांसं भक्ष्याणामपि, वल्लूरं शुष्कमांसम्, मत्स्याः मीनाः—एतांश्चाषादीन्वर्जयेत्। चकारान्नालिकाशणकुसुंभादीन्—"नालिकाशणछत्राककुसुम्भालाबुविड्भवान्। कुम्भीकन्दुकवृन्ताककोविदारांश्च वर्जयेत्॥" "तथाऽकालप्ररूढानि पुष्पाणि च फलानि च। विकारवच्च यत्किञ्चित्प्रयत्नेन विवर्जयेत् ॥" तथा "वटप्लक्षाश्वत्थकपित्थनीपमातुलुङ्गफलानि वर्जयेत्।" इत्यादिस्मरणात्—एतान्सन्धिनीक्षीरप्रभृतीननुक्रान्तान्कामतो भक्षयित्वा त्रिरात्रमुपवसेत्, अकामे त्वऽहोरात्रम्,—"शेषेषूपवसेदहः[2]" इतिमनुस्मरणात्। यत्पुनः शङ्खेनोक्तं "बकबलाकाहंसप्लवचक्रवाककारण्डवगृहचटककपोतपारावतपाण्डुशुकसारिकासारसटिट्टिभोलूकककङ्करक्तपादचाषभासवायसकोकिलशाङ्गलिकुक्कुटहारीतभक्षणे द्वादशरात्रमनाहारः, पिबेद्गोमूत्रयावकम्।" इति तद्बहुकालाभ्यासे मतिपूर्वे समस्तभक्षणे वा वेदितव्यम् ॥ १७५ ॥

**पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।**
**लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥**

पलाण्डुः स्थूलकन्दनालो लशुनानुकारी, विडराहो ग्रामसूकरः, छत्राकं सर्पछत्रम्, ग्रामकुक्कुटः *प्रसिद्धः, ल[3]शुनं रसोनं सूक्ष्मश्वेतकन्दनालम्, गृञ्जनं

---

* "गर्तेनक इति उदीच्यां प्रसिद्धः ।" इति अप० २४९.

१ ख. वृक्षकुद्दकः। क. वृक्षकुक्कुटकः । २.—५. २०. । ३ क. लशुनाकरि ।

लशुनानुकारीलोहितसूक्ष्मकन्दः,—एतानि षट् सकृत्कामतो जग्ध्वा भक्षयित्वा चान्द्रायणं वक्ष्यमाणलक्षणं चरेत्[1]। ग्रामकुक्कुटच्छत्राकयोः पूर्वप्रतिषेधितयोरिहाभिधानं पलाण्ड्वादिसमानप्रायश्चित्तार्थम्। मतिपूर्वे चिरतराभ्यासे तु "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्विजः॥[2]" इति मनूक्तं अमतिपूर्वाभ्यासे "अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्। यतिचान्द्रायणं वाऽपि....[3]" इति द्रष्टव्यम्।[4]अमतिपूर्वानभ्यासे तु शङ्खोक्तं लशुनपलाण्डुगृञ्जनविड्वराह ग्रामकुक्कुटकुम्भीकभक्षणे द्वादशरात्रं पयः पिबेदिति॥ १७६॥

**भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः।**
**शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः॥ १७७॥**
**तथा पाठीनराजीवसशल्काश्च द्विजातिभिः।**

सेधा श्वावित्*, गोधा कृकलासानुकारिणी[5] महती, कच्छपः कूर्मः, शल्लकः शल्लकी, शशः प्रसिद्धः,—पञ्चनखादीनां श्वमार्जारवानरादीनां मध्ये सेधादयो भक्ष्याः। चकारात्खड्गोऽपि, यथाऽऽह गौतमः "पञ्चनखाः शशशल्लकश्वाविद्गोधाखड्गकच्छपाः।[6]" इति। तथा मनुरपि "श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रां चैकतोदतः॥[7]" इति। यत्पुनर्वसिष्ठेन "खड्गे तु विवदन्ति[8]" इत्यभक्ष्यत्वमुक्तं तच्छ्राद्धादन्यत्र,—"खड्गमांसैर्भवेद्दत्तमक्षय्यं पितृकर्माणि।" इति श्राद्धे फलश्रुतिदर्शनात्। तथा मत्स्यानां मध्ये सिंहतुण्डादयो भक्ष्याः। सिंहतुण्डः सिंहमुखः, रोहितो लोहितवर्णः, पाठीनश्चन्द्रकाख्यः, राजीवः पद्मवर्णः, सहशल्कैः शुक्त्याकारैर्वर्तत इति सशल्कः,—एते च सिंहतुण्डादयो नियुक्ता एव भक्ष्याः †"पाठी-

* "स च श्वभक्षको व्याघ्रविशेषः।" "गोधा वल्लीसदृशःप्राणिविशेषः।" इति अप० २५०.

† "सामान्यतः प्रवृत्तोऽयं पञ्चनखभक्षणनिषेधो मत्स्यभक्षणनिषेधश्च न तेषु विद्यत इत्यर्थः।" इति अप० २४९.

---

१ ख. चरेत्। तृतीयाध्यायेवक्ष्यमाणं यति। २.—५. १९.। ३.—मनुः. ५. २०.। ४ ख. अमति पूर्वाभ्यासे तु। ५ क. कृकलानुका। ६.—१७. २७.। ७.—५. १८.। ८.—१४. ४७.।

नरोहितावाघ्रौ नियुक्तौ हव्यकव्ययोः । राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः॥" इति मनुस्मरणात् । द्विजातिग्रहणं शूद्रव्युदासार्थम् ॥ १७७ ॥ १७८ ॥

"अनर्चितं वृथामांसम्[२]" इत्यारभ्य द्विजातिधर्मानुक्त्वेदानी चातुर्वर्ण्यधर्मानाह[३]—

**अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने[४] ॥ १७८ ॥**

मांसस्य प्रोक्षितादेर्भक्षणे तद्व्यतिरिक्तस्य वा निषिद्धस्य वर्जने प्रोक्षितादिव्यतिरेकेण मांसं न भक्षयामीत्येवं सङ्कल्परूपेण[५] विधिं सामश्रवः प्रभृतयः हे मुनयः शृणुध्वम् ॥ १७८ ॥

तत्र भक्षणेविधिं दर्शयति—

**प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।**
**देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक् ॥ १७९ ॥**

*अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमन्तरेण यदा प्राणबाधा भवति तदा मांसं नियमेन भक्षयेत्,—"सर्वत एवात्मानं गोपायेत्" इत्यात्मरक्षणविधानात्, "तस्मादुह न पुरायुषः स्वःकामी प्रेयात्" इति मरणनिषेधाच्च । तथा श्राद्धे मांसं निमन्त्रितो नियमेन भक्षयेत्,—अभक्षणे दोषश्रवणात् "यथाविधिनियुक्तस्तु यो मांसं नात्ति मानवः । संप्रेत्य पशुतां याति संभवानेकविंशतिम्[६] ॥" इति मनुस्मरणात् । प्रोक्षणाख्यश्रौतसंस्कारसंस्कृतस्य पशोर्यागार्थस्याग्नीषोमीयादेर्हुतावशिष्टं मांसं प्रोक्षितं तद्भक्षयेत्, अभक्षणे[७]यागानिष्पत्तेः †द्विजकाम्यया ब्राह्मणभोजनार्थं देवपित्रर्थं च यत्साधितं तेन तानभ्यर्च्यावशिष्टं भक्षयन्न दोषभाग्भवति । एवं भृत्यभरणावशिष्टमपि,—

---

* "तत्र प्राणात्ययादिमांसभक्षणे निमित्तं शाब्दम् वर्जने तु तदभाव आर्थम् ।" इति अप० २५१.

† "द्विजकाम्यया द्विजेच्छया । यं प्रति द्विजास्त्वया मांसं भक्षणीयमितीच्छन्ति स भक्षयेदित्यर्थः ।" इति अप० २५१.

१.—५. १६. । २.—आ. १६७. । ३ क. चातुर्वर्ण्य प्रत्याह । ४ अपरार्के भक्षणवर्जिते । ५ क. सङ्कल्परूपे विधिं । ६.—५. ३५. । ७. क. अभक्षणे यागानि ।

"यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः। भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्तथा॥"[1] इति मनुस्मरणात्। न दोषभागीति दोषाभावमात्रं वदता अतिथ्याद्यर्चनावशिष्टस्याभ्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितम्। एवमप्रतिषिद्धानामपि शशादीनां प्राणात्ययादिव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि मांसप्रतिबद्धसर्वविधिनिषेधाधिकारोऽवगम्यते ॥ १७९ ॥

इदानीं प्रोक्षितादिव्यतिरिक्तस्य वृथामांसमित्यनेन प्रतिषिद्धस्य भक्षणे निन्दार्थवादमाह—

**वसेत्स नरके घोरे दिनानि पशुरोमभिः।**
***संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८० ॥**

अविधिना देवाद्युद्देशमन्तरेण यः पशून्हन्ति स तस्य पशोर्यावन्ति रोमाणि तावन्ति दिनानि घोरे नरके †वसते। हन्तीत्यष्टविधोऽपि घातको गृह्यते, यथाऽऽह मनुः—"अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः॥"[2] इति ॥ १८० ॥

इदानीं वर्जने विधिमाह—

**सर्वान्कामानवाप्नोति हयमेधफलं तथा।**
**गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात्॥ १८१ ॥**

यः प्रोक्षितादिव्यतिरेकेण मया मांसं न भक्षितव्यमिति सत्यसंकल्पो भवति

* "अनेन च पशुवधस्य प्रतिषिद्धस्य नरकवासं प्रति निमित्तता बोध्यते। यथा "योऽपगुरातै शतेन यातयात्" इत्यादिना ब्राह्मणं प्रत्यवगूरणस्य यातनायाश्च साध्यसाधन सम्बन्धः। तेन नेदमर्थवादमात्रं किन्तु विवक्षितश्चार्थं वचनम्।" इति अप० २५१.

† "यावन्तिपशुरोमाणि तावत्कृत्वो ह मारणम्। वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मानि जन्मनि॥" इति मनुः ५. ३८.

१.—५. ३५. । २.—५. ५१.।

स सर्वान्कामान् तत्साधने प्रवृत्तो निर्विघ्नं *प्राप्नोति विशुद्धाशयत्वात्, यथाऽऽह मनुः—"यद्ध्यायते यत्कुरुते रतिं बध्नाति यत्र च। तदवाप्नोत्यविघ्नेन यो हिनस्ति न किंचन[1]॥" इति। एतच्चानुषङ्गिकम्। मुख्यं फलमाह 'हयमेधफलं तथा' इति। एतच्च सांवत्सरिकसंकल्पस्य,—"वर्षेवर्षेऽश्वमेधेन यो यजेत शतं समाः। मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्[2]॥" इति मनुस्मरणात्। तथा गृहेऽपि[3] निवसन् ब्राह्मणादिश्चातुर्वर्णिको मुनिवन्माननीयो भवति मांसस्य त्यागात्। एतच्च न प्रतिषिद्धमांसविषयं, नापि प्रोक्षितादिविषयम्,—पारिशेष्याददतिथ्याद्यर्चनावशिष्टाभ्यनुज्ञातविषयमिति ॥ १८१ ॥

इति भक्ष्याभक्ष्यप्रकरणम् ॥

*"अवाप्नोतीति वर्तमाना विभक्तिर्विधिविभक्तित्वेन परिणामयितव्या । यथारात्रिसत्रे।" इति अ२० २५२.

१.—५. ४७. । २.—५. ५३. । ३ क. गृहे निवसन् । ४ क. नुज्ञाते विज्ञातविषय ।

# अथ द्रव्यशुद्धिप्रकरणम् ७

*इदानीं द्रव्यशुद्धिमाह—

**सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।**
**शाकरज्जुमूलफलवासोविदलचर्मणां ॥ १८२ ॥**

**पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।**

सौवर्णं सुवर्णकृतं, राजतं रजतकृतम्, अब्जं मुक्ताफलशङ्खशुक्त्यादि, ऊर्ध्वपात्रं यज्ञियोलूखलादि—ग्रहादिसाहचर्यात्—ग्रहाः षोडशिप्रभृतयः, अश्मा दृषदादिः, शाकं वास्तुकादि, रज्जुः बल्बजादिनिर्मिता, मूलमार्द्रकादि, फलमाम्रादि, वासो वस्त्रं, विदलं वैणवादि, चर्म अजादीनाम्,—विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवस्त्रादीनामुपलक्षणार्थम्—पात्राणि प्रोक्षणीपात्रप्रभृतीनि, चमसाः होतृचमसादयः,——एतेषां सौवर्णादीनां लेपरहितानामुच्छिष्टस्पर्शमात्रे वारिणा प्रक्षालनेन शुद्धिः ।

*"अधुना द्रव्यशुद्ध्युपायविधिप्रकरणमारभते। द्रव्यस्य दोषापगमः शुद्धिः । अपेतदोषं हि द्रव्यं शुद्धमित्युच्यते। शास्त्रेण च काकादिसंपृक्तं द्रव्यं प्रक्षालनाच्छुद्ध्यतीति कथ्यते । तेन तत्रापि काकादिसंपर्कदोषापगम एव शुद्धिशब्देन वाच्यः । न च प्रत्यक्षगम्यो दोष इति शुद्धिविधानान्यथानुपपत्त्या काकादियोगात्कोऽपि द्रव्ये दोषो भवतीति परिकल्प्यते तदपगमोपायो नानाविधः प्रोक्षणप्रक्षालनादिः शास्त्रेणविधीयत इति । अशुद्धेन द्रव्येण न संव्यवहारः पुरुषेण साध्यः किन्तु शोधितेनैवेति शुद्धिविधिबलादेव कल्प्यते । तच्च कर्पटकपालादिना द्रव्यखण्डेनापि यदि व्यवहारसिद्धिरस्ति तदा तदपि यथाविधिशोध्यम्। एवं च यच्छास्त्रकारैरुच्यते प्रोक्षणादिना द्रव्यं शुचितामियात्प्रयतं भवति शुद्ध्यतीत्यादि तत्र तत्र पुरुषव्यापार एव लाक्षणिको विधेयः । पुरुषस्तथा कुर्याद्यथा द्रव्यं शुचिस्यादित्यर्थः । अशुद्धेन द्रव्येण संव्यवहारः पुरुषस्याशुचिता विहितकर्मकर्तृत्वयोग्यत्वप्रतिबन्धरूपा प्रत्यवायान्तरहेतुभूता च जायते । तस्याश्च प्रत्यवायकरतामाह मनुः —"लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः । सविनाशं व्रजत्याशु सूचकोऽशुचिरेव च॥" इति (४. ७१) तत्र द्विविधा शुद्धिः शरीरशुद्धिर्बाह्यद्रव्यशुद्धिश्च । तत्र बाह्यद्रव्यशुद्धिं तावदाह—"इति अप० २५३.

**चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥**

चरु*श्चरुस्थाली, स्रुक्स्रुवै प्रसिद्धौ, सस्नेहानि पात्राणि प्राशित्रहरणादीनि,—एतानि च लेपरहितान्युष्णेन वारिणा शुद्ध्यन्ति,—" निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति । अब्जमश्ममयं चैव राजतं चानुपस्कृतम्[१] ॥" इति मनुस्मरणात् । अनुपस्कृतमखातपूरितम्, सलेपानां तु " तैजसानां मणीनां च सर्वस्याश्ममयस्य च । भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः[२] ॥" इतिमनूक्तं द्रष्टव्यम् । मृद्भस्मनोरेककार्यत्वाद्विकल्पः, आपस्तु समुच्चीयन्ते । काकादिमुखोपघाते तु कृष्णशकुनिमुखावघृष्टं पात्रं निर्लिखेत् । श्वापदमुखावमृष्टं पात्रं न प्रयुञ्जीतेति द्रष्टव्यम् । एतच्च मार्जारादन्यत्र,—" मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ।" इति मनुस्मरणात् ॥

**स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् ।**

स्फ्यो वज्रः यज्ञांगं, अनः शकटं, शेषं प्रसिद्धम्,—एतेषामुष्णेन वारिणा शुद्धिः । पुनरजिनग्रहणं यज्ञाङ्गाजिनप्राप्त्यर्थम् ।

**प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८४ ॥**

संहतानामुक्तशुद्धिद्रव्यारब्धावयविनां[३] बहूनां धान्यानां[४] वाससां च—वासोग्रहणमुक्तशुद्धीनामुपलक्षणार्थम्—उक्तशुद्धीनां धान्यवासःप्रभृतीनां बहूनां राशीकृतानां प्रोक्षणेनैव शुद्धिः । बहुत्वं च स्पृष्टापेक्षया । एतदुक्तं भवति —यदा धान्यानि वस्त्रादीनि वा राशीकृतानि, तत्र चाण्डालादिस्पृष्टान्यल्पानि, बहूनि अस्पृष्टानि च[५],—तत्र स्पृष्टानामुक्तैव शुद्धिरितरेषां प्रोक्षणमिति । †तथा च स्मृत्यन्तरम्—"वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे[६] । तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥" इति ।

---

* "चरुः मृन्मयं भाण्डम् । स्रुक्स्रुवादिः" अप० २५३.

† "तथा च शङ्खः—"मलं संयोगजं तज्जं यस्य येनोपहन्यते । तस्य तच्छोषणं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥" यस्य शोध्यस्य स्वभावजे संयोगजं वा मलं तस्मादिना द्रव्येणोपहन्यते तस्य तच्छोधकं भवतीत्यर्थः ।" इति अप० २५६.

---

१.—५. ११२. । २.—५. १११. । ३.—क. मुक्तविशुद्धिद्र । ख. शुद्धिद्रव्याणां बहूनां । ४ ग. बहूनां धान्यवाससां । ५ ग. बहूनि वाऽस्पृष्टानि । ६ ख.ग. दूषणात् ।

यदा पुनः स्पृष्टानां बहुत्वं अस्पृष्टानां चाल्पत्वं, तदा सर्वेषामेव क्षालनम्, यथाऽऽह मनुः—[1]"अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते॥" इति। स्पृष्टानामस्पृष्टानां समत्वेऽपि प्रोक्षणमेव—बहूनां प्रोक्षणविधानेनाल्पानां क्षालने[2] सिद्धे पुनरल्पानां क्षालनवचनस्य समेषु क्षालन[3]निवृत्त्यर्थत्वात्। इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव, पाक्षिकस्या[4]पि दोषस्य परिहर्तव्यत्वात्। अनेकपुरुषोद्धार्या[5]णां तु धान्यवासःप्रभृतीनां स्पृष्टानामस्पृष्टानां च प्रोक्षणमेवेति निबन्धकृतः॥ १८४॥

निर्लेपानां स्पर्शमात्रदुष्टानां शुद्धिमुक्त्वेदानीं सलेपानां शुद्धिमाह—

**तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभुवाम्।**
**मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि॥ १८५॥**

दारूणां मेषमहिषादि शृङ्गाणां करिवाराहाद्यस्थ्नाम्—अस्थिग्रहणेन दन्तानामपि ग्रहणम्—उच्छिष्टस्नेहादिभिर्लिप्तानां मृद्भस्मोदकादिभिरनपगतलेपानां "यावन्नापैत्यमे[6]ध्याक्ताद्गन्धो लेपश्च तत्कृतः। तावन्मृद्वारि वा देयं सर्वासु द्रव्यशुद्धिषु[7]॥" इति सामान्यशुद्धिविधानात्, तक्ष[8]णं तावन्मात्रावयवापनयनं शुद्धिः। फलसंभवां बिल्वालाबुनारिकेलादिफलसंभूतानां गोवालैरुद्धर्षणाच्छुद्धिः। यज्ञपात्राणां स्रुक्स्रुवादीनां यज्ञकर्मणि प्रयुज्यमानानां दक्षिणेन हस्तेन *दर्भैर्दशापवित्रेण वा यथाशास्त्रं कर्माङ्गतया मार्जनं कर्तव्यम्। एतच्च श्रौतमुदाहरणम् अन्येषामपि सौवर्णादीनां पात्राणां स्मार्तलौकिककर्मसु कृतशौचानामेवाङ्गत्वमिति दर्शयितुम्। यज्ञाङ्गानां पुनः कृतशौचानामिदं दशापवित्रा[9]दिभिर्मार्जनं संस्कारार्थमितिशेषः॥ १८५॥

इदानीं सलेपानामेव केषांचिल्लेपापकर्षणे विशेषहेतूनाह—

**सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम्।**

* "वस्त्रदशारूपेण पवित्रेण। यथा 'दशापवित्रेण ग्रहं संमार्ष्टि', इत्यत्र।

१.—५. ११८.। २ ख. क्षालनेन शुद्धिः। पुनर। ३ ख. क्षालनवचननिवृ.। ४ क. पाक्षिकव्यापिदोषस्य। ५ ख. पुरुषैर्धार्यमाणानां। ६ ख. त्यमेध्यानां गन्धो। ७.—५. १२६.। ८ क. तक्षणेन तावन्मात्रा। ९ ख. ग. पवित्रादिमार्ज।

सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८६ ॥

*ऊषमृत्तिकासहितेन गोमूत्रेणोदकेन वा लेपापेक्षया आविकमूर्णामयं कौशिकं कोशप्रभवं तसरीपट्टादि प्रक्षालितं शुद्ध्यति । उदकगोमूत्रैरिति बहुवचनं† पश्चादुदकप्राप्त्यर्थम् । अंशुपट्टं वल्कलतन्तुकृतम्, सश्रीफलैः बिल्वफलसहितैः, कुतपः पार्वतीयछागरोमनिर्मितकम्बलः, ‡अरिष्टफलसहितैः उदकगोमूत्रैः शुद्ध्यतीत्यनुवर्तते । एतच्चोच्छिष्टस्नेहादियोगे सति वेदितव्यम् । अल्पोपघाते तु प्रोक्षणादि क्षालनासहत्वात्, सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात् । तथा च देवलः—"उर्णा कौशेयकुतपपट्टक्षौमदुकूलजाः । अल्पशौचाभवन्त्येते शोषणप्रोक्षणादिभिः ॥" इत्यभिधायाऽऽह—"तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः । धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि ॥" इति । क्षौमवदेव शाणस्य—समानयोगत्वात् । ऊर्णादि ग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थम् । अतस्तस्याल्पोपघातेनैव क्षालनं कार्यम् । अमेध्यलेपादन्यत्र,—"तूलिकामुपधानं च पुष्परक्ताम्बरं तथा । शोषयित्वाऽऽतपे किंचित्करैः संमार्जयेन्मुहुः ॥ पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि । तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेत् ॥" इति देवलस्मरणात् । पुष्परक्तानि कुङ्कुमकुसुम्भादिरक्तानि—पुष्परक्तग्रहणमन्यस्यापि हरिद्रादिरक्तस्यक्षालनासहस्य प्राप्तयर्थम्, न माञ्जिष्ठादेः तस्य क्षालनसहत्वात् । शङ्खेनाप्युक्तम्—"रागद्रव्याणि प्रोक्षितानि शुचीनि ।" इति॥ १८६॥

सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम् ।

गौरसर्षपसहितैरुदकगोमूत्रैः क्षौमं—क्षुमा अतसी तत्सूत्रनिर्मितं क्षौमं—शुद्ध्यति §पुनः पाकेन च मृन्मयं घटादि, एतच्चोच्छिष्टस्नेहलेपे वेदितव्यम् ॥ मद्य-

* "ऊषः क्षारमृत्तिका इति" अप० २६१.

† "उदकगोमूत्रैरिति बहुवचनं दोषानिर्घातेऽपि बहुकृत्वोऽपि क्षालनप्राप्त्यर्थम् । उक्तप्रकारेणापेतदोषस्य पुनः केवलोदकेन धावनार्थं च ।" इति अप० २६१.

‡ "अरिष्टं निम्बं ।" इति अप० २६१.

§ "श्वादिस्पृष्टमृन्मयविषयमेतत् ।" इति अप० २६१.

१ क. इंशुपटं । २ ख.—ऊवरमृ । ३ क. टसरीपट्टादि । ४ ख. प्राप्त्यर्थम् । अथ तस्या । ५ ख. कार्यम् । अमे । ६ अप० पाकेन मृन्मयम् ।

मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मयम् ॥" इति स्मरणात् । चाण्डालाद्युपघाते तु त्याग एव, यथाऽऽह पराशरः—"चाण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापिवा । प्रक्षालनेन शुद्ध्येत परित्यागान्महीमयम् ॥" इति ॥

## कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥ १८७ ॥

कारवो रजकचैलधावकसूपकाराद्यास्तेषां हस्तः[1] शुचिः* । शुचित्वम् तत्साध्ये कर्मणि वस्त्रधावनादौ सूतकादिसंभवेऽपि । तथा च स्मृत्यन्तरे—"कारवः शिल्पिनो वैद्या दासीदासास्तथैव च। राजानो रजाभृत्याश्च सद्यःशौचाः प्रकीर्तिताः॥" इति । पण्यं† पणार्हं विक्रेयं यवव्रीह्यादि । अनेकक्रेतृजनकरपरिघट्टितमप्यप्रयतं न भवति, सूतकादिनिमित्ते[2] च वणिजाम् । भिक्षाणां समूहो भैक्षं तद्ब्रह्मचार्यादिगतम्[3] अनाचान्तस्त्रीप्रदानादिना अशुचिरथ्यादिक्रमणादिनाऽपि न ‡दुष्यति । तथा योषिन्मुखं संभोगकाले §शुचि,—"स्त्रियश्च रतिसंसर्गे ।" इति स्मरणात् ॥

* अयं च अशुचित्वापवादः तेनावरजातीयानामपि कारूणां शिल्पक्रियया द्रव्यमुत्पादयतां संस्कुर्वतां वा प्रत्यवायहेतुभावः प्रसक्तोऽनेन निवार्यते । तेन रजकसेवकादिभिः संस्कृतानां वस्त्रादीनां कुविन्दसूपकारादिभिश्चोत्पाद्यमानानां द्रव्याणां शुचित्वमेवेतिवाक्यतात्पर्यम् । ततश्च येनान्नादिना द्रव्येण शिल्पसृष्टेन विना द्रव्योत्पत्तिसंस्कारौ न भवतः, तदपि शुद्धयत्येव । यथा वस्त्रोत्पत्तौ खलिः । अत एव शङ्खः—'कारुहस्तः शुचि स्तथा आकरात्तद्रव्याणि प्रोक्षितानि ॥" इति अप० २६३.

† "पण्यं विक्रेयद्रव्यं तच्च प्रस्तरितमेव शुचिः । तथा च मनुः—'पण्यं यच्च प्रसारितम् ।" इति अप० २६३.

‡ तदाह मनुः—"ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः ।" इति ।

§ "यच्छङ्खः—" नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् । रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचि"॥ यथासङ्ख्यमन्वयः ।" इति अप० २६४.

अपि च—"उभावप्यशुची स्यातां दम्पती शयने गतौ । शयनादुत्थिता नारी शुचिस्यादशुचिः पुमान् ॥" इति यमः ।

---

१ ख. हस्तः सदाशुचिः । २ ख. निमित्तेन च व । ग. निमित्ते तु वणि । ३ ख. चार्यादिहस्तगतं ।

इदानीं भूशुद्धिमाह—

**भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।**
**सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ १८८ ॥**

मार्जन्या पांसुतृणादीनां प्रोत्सारणं मार्जनम्, दाहस्तृणकाष्ठाद्यैः, कालो यावता कालेन लेपादिक्षयो भवति तावान्, गोक्रमणं गवां पादपरिघट्टनं, सेकः क्षीरगोमूत्रगोमयवारिभिःप्रवर्षणं वा, उल्लेखनं तक्षणं खननं वा, लेपो गोमयादिभिः,—एतैः समस्तैर्व्यस्तैर्वा मार्जनादिभिरमेध्या दुष्टा मलिना च भूमिः शुद्ध्यति। तथा च देवलः —"यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा। चाण्डालाध्युषितं यत्र यत्र विष्ठादिसंगतिः ॥ एवङ्कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता। श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥ अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत्।" इति। अमेध्या दुष्टा मलिनेति शोध्यभूमेस्त्रैविध्यमभिधाय शुद्धिविभागं दर्शयति—"पञ्चधा वा चतुर्धा वा भूरमेध्याऽपि शुद्ध्यति। दुष्टान्विता त्रिधा द्वेधा शुध्यते मलिनैकधा ॥" इति। यत्र मनुष्या दह्यन्ते यत्र चाण्डालैरध्युषितं, तयोः पञ्चभिः दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः। यत्र मनुष्या जायन्ते यत्र च म्रियन्ते, यत्र चात्यन्तं विष्ठादिसंगतिः, तासां दाहवर्जितैस्तैरेव चतुर्भिः। श्वसूकरखरैश्चिरकालमध्युषितायाः गोक्रमणसेकोल्लेखनैस्त्रिभिः। उष्ट्रग्रामकुक्कुटादिभिश्चिरकालमधिवासितायाः सेकोल्लेखनाभ्यां शुद्धिः। अङ्गारतुषादिभिश्चिरकालमधिवासिताया उल्लेखनेन शुद्धिः। मार्जनानुलेपने तु सर्वत्र समुच्चीयेते। एवं गृहं मार्जन[1]लेपनाभ्यां शुद्ध्यति। गृहस्य पृथगुपादानं संमार्जनलेपयोः प्रतिदिवसप्राप्त्यर्थम् ॥ १८८ ॥

**गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।**
**सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥**

*गोघ्राते गोनिःश्वासोपहतेऽन्ने अदनीयमात्रे, तथा †केशमक्षिकाकीटदूषिते

* "गवा प्रयत्नत उपात्तगन्धे" इति अप० २६६.

† मक्षिकाशब्देनात्र नीलमक्षिकोच्यते। तथा च बोधायनः—'अथ हविर्दोषान्व्याख्यास्यामः यथैतन्नीलमक्षिकाऽऽशातिकामत्कुणाश्चैलशिरसोयूतिकेति' आशातिकां मक्षिका या विष्ठाकृमिहेतुः। कीटोऽत्रामेध्यस्पर्शी।

[1] क. मार्जनानुलेप।

केशग्रहणं लोमादिप्राप्तयर्थम्—कीटाः पिपीलिकादयः, उदकं भस्म मृद्वा यथासंभवं प्रक्षेप्तव्यं शुद्ध्यर्थं । यत्तु गौतमेनोक्तं—"नित्यमभोज्यं।" "केशकीटावपन्नम्" इति, तत्केशकीटादिभिः सह यत्पक्वं *तद्विषयम्[†] ॥ १८९ ॥

**त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।**
**भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥ १९० ॥**

त्रपुप्रभृतीनि प्रसिद्धानि, तेषां क्षारोदकेनाम्लोदकेन वारिणा चोपघातापेक्षया समस्तैर्व्यस्तैर्वा शुद्धिः कार्या । कांस्यलोहानां भस्मोदकेन,—ताम्रग्रहणाद्रीतिकावृ-

* "एतदकृतसलिलादिप्रक्षेपविषयम्" इति अप० २६६.

† एतच्छ्लोकव्याख्यानावसर एव अपरार्कोद्धृतवचनान्तराणि—

बोधायनः—"केशकीटनखरोमाखुपुरीषाण्यन्ने दृष्ट्वा तन्मात्रमन्नं परित्यज्य अद्भिः संप्रोक्ष्य भस्मना संस्पृश्य पुनः प्रशस्तवचसाऽनुगृह्णीयादों भूर्भुवः स्वरोमित्युपरिष्टाद्ध्यात्वा पुनरेव भुञ्जीत ।"

पराशरः—"श्रृतं द्रोणाधिकस्यान्नं श्वकाकैरुपघातितम् । अत्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत् ॥ कर्तव्यं वचनं तेषामन्नसंस्कारकर्मणि । श्वकाकाद्यवलीढं तु त्यक्त्वा लालासमन्वितम् ॥ गायत्र्यष्टसहस्रेण मन्त्रपूतेन वारिणा । भोज्यं तत्प्रोक्षितं विप्रैः पर्यग्निकृतमेव च ॥"

जमदग्निः—"श्रृतान्नं द्रोणमात्रस्य श्वकाकाद्युपघातितम् । ग्रासमुद्धृत्याग्नियोगात्प्रोक्षणात्तत्र शोधनम् ॥ अन्नमैकाहिकं पक्वं श्वकाकाद्युपघातितम् । केशकीटावपन्नं च तदप्येवं विशुद्ध्यति ॥ क्रीतस्यापि विनिर्दिष्टमेवमेव मनीषिभिः । न द्विः पक्वं पर्युषितं शुक्ताद्येवं कदाचन ॥" द्रोणः पञ्चाशदधिकं पलशतद्वयम् एकाहिकान्नशुद्धिरल्पधनपुरुषविषया ।

पराशरः—काकश्वाद्युपलीढं तु द्रोणान्नं न विवर्जयेत् । ग्रासमुद्धृत्यतन्मात्रं यत्तु लालाकृतं भवेत् ॥ होमोदकेन वाऽभ्युक्षेद्राजतेनाम्बुनाऽथ वा । अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषाम् । विप्राणां मन्त्रघोषेण पूतं भोज्यं च यद्भवेत् । श्ववायसगवाश्वाद्यैर्जग्धमन्नं तु यद्भवेत् ॥ स्नेहो वा गोरसोवाऽपि तत्र शुद्धिः कथं भवेत् । अन्नं परित्यजेत्तत्र स्नेहस्य पचनेन तु ॥ अश्वत्थलतया शुद्धिर्गोरसस्य विधीयते ।"

ऐकाहिकान्नापेक्षयाऽल्पान्नविषयमेतत् । स्नेहगोरसयोर्द्रोणादल्पयोः पाकादिशुद्धिः ॥ इति अप० २६७—८.

१.—१७. ८, ९. । २ ख. रीतिकापित्तलयोर्ग्रहणं । ग. रीतिकावृत्तलोहयो ।

त्तिलोहयोर्ग्रहणम् एकयोनित्वात् । एतच्च ताम्रादीनामम्लोदकादिभिः शुद्ध्यभिधानं न नियमार्थम्, "मलसंयोगजं तज्जं यस्य येनोपहन्यते । तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥" इत्यविशेषेण स्मरणात् । अतो न ताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसंभवे नियमेनाम्लोदकादिना शुद्धिः कार्या । अत एव मनुना सामान्येनोक्तं—"ताम्रायः कांस्यरैत्यानां त्रपुषः सीसकस्य च । शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः[२] ॥" इति । यत्तु "भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति ।" इति तत्ताम्रादेः शौचस्य परां काष्ठां प्रतिपादयितुं, नान्यस्य निषेधाय । यदा तूपघातातिशयस्तदाऽम्लोदकादीनामावृत्तिः । "गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥" इति * स्मरणात् । "शुद्धिः प्लावोद्रव्यस्य तु" इति द्रवस्य द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य श्वकाकाद्युपहतस्य, अमेध्यसंस्पृष्टस्य च, प्लावः प्लावनं समानजातीयेन द्रवद्रव्येण भाण्डस्याभिपूरणम्—यावन्निःसरणं शुद्धिरित्यनुवर्तते । ततोऽल्पस्य त्यागः । बह्वल्पत्वं च देशाद्यपेक्षया[३] कालाद्यपेक्षयाऽपि वेदितव्यं, यथाऽऽह बोधायनः—"देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥" इति । कीटाद्युपहतस्य तु उत्पवनं, यथाऽऽह मनुः—"द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् । " इति । † उत्पवनं चात्र वस्त्रान्तरिते पात्रे प्रक्षेपः, अन्यथा कीटाद्यपगमस्यासंभवात् । शूद्रभाण्डास्थितस्य तु मधूदकादेः पात्रान्तरानयनाच्छुद्धिः,—"मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयने शुद्धाः ।" इति बोधायनस्मरणात् । मधुघृतादेर्वर्णापशदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनः पचनं कार्यम्, यथाऽऽह शङ्खः—"अभ्यवहार्याणां घृतेनाभिघारितानां पुनः पचनम्, एवं स्नेहानां स्नेहवद्रसानाम् ।" इति ‡ ॥ १९० ॥

* आपस्तम्बस्मरणारदित्यपरार्कः ।

† "इयं च शुद्धिः केशादिदोषमुद्धृत्य कार्या । दुष्टद्रव्याणामुत्पवनादिशुद्ध्यन्तरमाह लौगाक्षिः—"पयोदधिविकारादि शुचि पात्रान्तरस्थितम् । प्लावनोत्पवनाभ्यां च पर्यग्निकरणेन च ॥" उत्पवनं वस्त्रादिना गालनम् ।" इति अप० २६९.

‡ अस्य श्लोकस्य व्याख्यानावसरे अपरार्के एतानि वचनान्तराणि दृश्यन्ते—यमः—

१ क. ताम्रायस्कांस्य । २.—५. ११४. । ३ ग. देशाद्यपेक्षया वेदित । ४ क. देशकालाद्यपेक्षया । ६.—५. ११५. । ५ क. पचनं कार्यम् । एवं ।

एवं सौवर्णराजतादीनाम् एतत्प्रकरणप्रतिपादितानां सर्वेषामुच्छिष्टस्नेहाद्युपघाते शुद्धिमुक्त्वेदानीं तेषामेवामेध्योपहतानां शुद्धिमाह—

## अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात् ।

अमेध्याः शरीरजा मला वसाशुक्रादयः । "वसा शुक्रमसृङ्मज्जा मूत्रविट्कर्णविण्नखाः । श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः॥" तथा "मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा । स्वेदोऽश्रुदूषिका श्लेष्म मद्यं चामेध्यमुच्यते॥" इति मनु देवलादिभिः प्रतिपादिताः । तैर्वसादिभिः अक्तं लिप्तम् । *अमेध्याक्तं तस्य मृदा तोयेन च शुद्धिः कर्तव्या गन्धापकर्षणेन । आदिग्रहणाल्लेपस्यापि ग्रहणम्, यथाऽऽह गौतमः—"लेपगन्धापकर्षणे शौचममेध्यलिप्तस्य ।" इति सर्वशुद्धिषु च

"आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः । म्लेच्छभाण्डस्थिता दूष्या निष्क्रान्ताः शुचयः स्मृताः ॥" तथा—"देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च । काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ॥ तन्मात्तमन्नमुद्धृत्य शेषं संस्कारमर्हति ।" देवद्रौणी देवयात्रा । तन्मात्रमुपहतमात्रम् । देवद्रोणग्रिहणं बहन्नोपलक्षणार्थम् । प्रसङ्गादनुग्रहान्तराण्यप्युच्यन्ते—"तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥" तीर्थादिस॰धर्मकर्ममात्रानुग्रहोऽयम् । शातातपः—"गोकुले कन्दशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च॥" वृद्धशातातपः—"तापनं घृततैलानां प्लावनं गोरसस्य च । तन्मात्रमुद्धृतं शुद्ध्येत्कठिनं तु पयो दधि ॥ अविलीनं तथा सर्पिर्विलीनं तापनेन तु ।" इति अप० २६९—७०.

* "अमेध्यमाह स्मृत्यन्तरम्—"दूषितं वर्जितं दुष्टं कश्मलं चेति लिङ्गिताम् । चतुर्विधममेध्यं च सर्वंव्याख्यास्यते पुनः ॥ शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते । अभक्ष्यभोज्यपेयानि वर्जितानि प्रचक्षते ॥ त्यक्तः पतितचाण्डालौ ग्रामसूकरकुक्कुटौ । श्वा च नित्यं विवर्ज्यास्स्युः षडेते धर्मतः समाः ॥ स्रवणः सूतकी सूती मत्तोन्मत्तरजस्वलाः । मृतबन्धुरदुष्टश्च वर्ज्या ह्यष्टौ स्वकालतः ॥ स्वेदाश्रुबिन्दवः फेनो निरस्तं नखरोम च ॥ आर्द्रं चर्मासृगित्येत दुष्टमाहुर्मनीषिणः ॥ मानुषास्थि शवो विष्ठा रेतोमूत्रार्तवानि च । कुणपं पूयमित्येतत्कश्मलं चेत्युदाहृतम् ॥ दूषितैः प्रोक्षितेनापि शुद्धिस्तूक्ता विधानतः । दुष्टैर्माजे नसंस्कारैः कश्मलैः सर्वथा भवेत् ॥" इति अप० २७१.

इदं च "बृहस्पतिः—मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा । अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण शोधयेत् ॥ वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते । पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥" हारीतः—"वापीकूपतडागेषु मानुषं शीर्यते यदि । अस्थिचर्मविनिर्मुक्तं

१ क. गन्धापकर्ष । २.—५. १३६. । ३ ख. मनुष्यास्थि । ४ ख. पकर्षणेः शौचा । 'कर्षणे शौ' इति च पाठः । ५.—१. ४२. ।

प्रथमं मृत्तोयैरेव लेपगन्धापकर्षणं कार्यम्, अशक्तावन्येन,—"तदद्भिः पूर्वं मृदा च[1] ।" इति गौतमस्मरणात् । वसादिग्रहणं च सर्वेषाममेध्यत्वं प्रतिपादयितुं, न समानोपघाताय,—"मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मयम्[2] ॥" इत्युपघाते विशेषाभिधानात् ॥ अमेध्यत्वं[3] "चैषां देहाच्चैव मला श्च्युताः" इति वचनाद्देहच्युतानामेव, न स्वस्थानावस्थितानाम् । पुरुषस्य नाभेरूर्ध्वं करव्यतिरिक्ताङ्गानामन्यामेध्यस्पर्शे स्नानम् , यथाऽऽह देवलः—"मानुषास्थि वसा विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥" "तान्येव स्वानि संस्पृश्य प्रक्षाल्याऽऽचम्य शुद्ध्यति ।" इति । तथा "ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानमधस्तात्तु प्रक्षाल्याऽऽचम्य शुद्ध्यति ॥" इति ।

## वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदाशुचि ॥ १९२ ॥

दूषितं श्वखरादिभिः । उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम् ।" देवलः—"श्वसृगालखरोष्ट्रैश्च क्रव्याद्भिश्च जुगुप्सितम् । उद्धरेदुदकं सर्वं पञ्च पिण्डान्मृदस्तथा ॥" आपस्तम्बः—"उपानच्छ्लेष्माविण्मूत्रस्त्रीरजो मद्यमेव च । एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत् ॥" विष्णुः— "जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥ भूयिष्ठमुदकं पुण्यं वैतृष्ण्यं यत्र गोर्भवेत् । अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥ सोमसूर्यांशुपातेन मारुतस्पर्शनेन च । गवां मूत्रपुरीषेण शुद्ध्यन्त्याप इति स्मृतम् ॥" स्वल्पतरोपघातविषयमेतत् । यमः—"प्रपाश्चरण्ये घटगं च कूपे द्रोण्यां जलं कोशगस्तथाऽऽपः । ऋतेऽपिशूद्रात्तदपेयमाहुरापद्गतः कांक्षितवत्पिबेत्तु ॥" अस्यार्थः—यद्यपि शूद्रव्यतिरिक्तवर्णसंबन्धि प्रपादि, तथाऽपि तद्गतजलमनापद्यपेयम् । आपदि तु पेयमेव । प्रपा जलसत्रशालाः । ताश्चेदरण्यगा गृहादन्यत्रेत्यर्थः । घटगं घटस्थम् द्रोणी अश्मादिमयी सर्वार्थजलपात्री । कोशो दृतिः । मनुः—"अजा गावो महिष्यश्च ब्राह्मणश्च प्रसूतिकाः । दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ॥" ब्रह्मपुराणे—"नवखातजलं गावो ब्राह्मण्यश्छागयोनयः । शुद्ध्यन्ति दिवसैरेव दशभिर्नात्रसंशयः ॥" कात्यायनः—"अपो निशि न गृह्णीयाद्गृह्णन्नपि कदाचन । बिभृयादग्निमुपर्यासां धाम्नोधाम्न इतीरयन् ॥" आपदि रात्रौ यदि गृह्णीयादग्निमुपरि धारयन्धाम्नोधाम्न इति मन्त्रं पठन्गृह्णीयात् । शातातपः—"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥" यमः— "चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति ॥" इति अप० २७२—३.

---

१.—१. ४३. । २ मनुः—५. १२३. । प्रथमार्धे 'ष्ठीवनैः पूयशोणितैः।' इति च पाठः ।
३ ख. अमेध्यत्वं चैवमेतेषां देहा ।

कृतेऽपि यथोक्तशौचे मनसोऽपरितोषाद्यत्र शुद्धिसंदेहो भवति तद्वाक्शस्तं शुचि—शुद्धमेतदस्त्विति ब्राह्मणवचनेन शुद्धं भवतीत्यर्थः। अम्बुनिर्णिक्तं यत्र प्रतिपादिता शुद्धिर्नास्ति तस्य प्रक्षालनेन शुद्धिः, प्रक्षालनासहस्य प्रोक्षणेन। अज्ञातं च सदा यत्काकाद्युपहतमुपभुक्तं न कदाचिदपि ज्ञायते, तच्छुचि। तदुपयोगाददृष्टदोषो नास्तीत्यर्थः न त्वेतद्विरुध्यते "संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः। अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः॥" इत्यदृष्टदोषेऽपि प्रायश्चित्तप्रतिपादनात्। न एतत्प्रायश्चित्तस्य, जग्धिविषयत्वात् दोषाभावस्य चान्योपयोगविषयत्वात्॥ १९१॥

**शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्।**
**तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम्॥ १९२॥**

महीगतं ‡ भूमिस्थमुदकम्, एकगवीतृप्तिजननसमर्थं चाण्डालादिभिरस्पृष्टं प्रकृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं शुचि आचमनादियोग्यं भवति। महीगत मिति अशुद्धभूगतस्याशुचित्वनिषेधार्थं न त्वान्तरिक्षोदकस्य शुद्धत्वव्यावृत्त्यर्थं, नाप्युद्धृतस्य, "उद्धृताश्चापि शुद्ध्यन्तिशुद्धैः पात्रैः समुद्धृताः। एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम्॥" इति देवलवचनात्। तथा चाण्डालादिकृते तडागादौ न दोषः,—"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा। तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते॥" इति शातातपस्मरणात्। तथा मांसं श्वचाण्डालक्र*व्यादादिभिर्निपातितं शुचि, आदिग्रहणात्पुल्कसादेरपि ग्रहणम्। निपातितग्रहणं भक्षितस्य निराकरणार्थम्॥ १९२॥

**रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः।**
**विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवने शुचिः॥ १९६॥**

रश्मयः सूर्यादेः प्रकाशकद्रव्यस्य, अग्निः प्रसिद्धः, रजः अजादिसंबन्धव्य-

---

* "क्रव्यादा व्याघ्रादयः॥" इति अप० २७३.

---

१ ख. न तु तद्विरु। २ क. घ. अशुद्धभूगतस्यशुचित्व। ३ ख. निपातितमितिग्रहणं। ४ अप० श्मिराग्निरज०। ५ अप० प्रस्रवेण।

तिरेकेण,—तत्र "श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपाक्षिणाम्। अजाविरेणुसंस्पर्शाद्‌आयुर्लक्ष्मीश्च हियते ॥" इति दोषश्रवणात् संमार्जनादिकार्यम्, छाया वृक्षादेः, गौः, अश्वः, वसुधा भूमिः, अनिलो वायुः, विप्रुषः अवश्यायबिन्दवः मुखजानां वक्ष्यमाणत्वात्, *माक्षिकाश्च,—एते चाण्डालादिस्पृष्टा अपि स्पर्शे शुचयः। वत्सः प्रस्नवने ऊधोगतदुग्धापकर्षणे शुचिः। वत्सग्रहणं बालस्योपलक्षणार्थम्,—"बालैरनु परिक्रान्तं नित्यं मेध्यमिति स्थितिः ॥" इति वचनात् ॥ १९३ ॥

**अजाश्वयोर्मुखं मेध्यं न गोर्न नरजामलाः।**
**पन्थानश्च विशुद्ध्यन्ति सोमसूर्यांशुमारुतैः ॥ १९४ ॥**

†अजाश्वयोर्मुखं मेध्यं, न गोः। न नरजा मलाः,—नरशब्दो लक्षणया देहमभिधत्ते, तज्जा मला वसादयो—न मेध्या भवन्ति। पन्थानो मार्गाश्चाण्डालादिभिः स्पृष्टा अपि रात्रौ सोमांशुभिर्मारुतेन च शुद्ध्यन्ति, दिवा तु सूर्यांशुभिर्मारुतेन च ॥ १९४ ॥

**मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः।**
**श्मश्रु चाऽऽस्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १९५ ॥**

मुखे जाता मुखजाः श्लेष्मविप्रुषो मेध्या नोच्छिष्टं कुर्वन्ति अनिपातिताश्चेदङ्गे,—"न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निपपन्ति[9]।" इति गौतमवचनात्। तथाऽपि ये आचमनतो, ये बिन्दवः पादौ स्पृशन्ति ते मेध्याः। श्मश्रु

* "मक्षिकाग्रहणमवर्जनीयस्पर्शानां दंशमशकादीनामुपलक्षणार्थम्।" अ० २७४.

† "बृहस्पतिः—"पादौ शुची ब्राह्मणाना मजाश्वस्य मुखं शुचि। गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ॥" यमः—"पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा। गोः पुरीषं च मूत्रं च सर्वं मेध्यमितिस्थितिः ॥" पृष्ठशब्दोऽत्र मुखव्यतिरिक्तविषयः यदाह बोधायनः—"मुखवर्ज्यं तु गौर्मेध्या मार्जारश्चङ्क्रमे शुचिः।" अजाश्वयोर्मुखं संयोगाद्द्रव्यान्तरशोधकत्वेन मेध्यमुच्यते। स्पर्शमेध्यता तु तयोः सर्वाङ्गविषयैव।" इति अप० २७६.

१ क. अजादिरेणु। २ अपरार्के ख. प्रस्रवने ऊधो। ३ क. ऊधोगतदुग्धाकर्षणे। ४ ख. बालैरनु परिक्रान्तं स्त्रीभिराचरितं च यत्। ५ अप० अजाश्वं मुखतो मेध्यम्। ६ क. मारुतेन वा। ७ ख. अनिपातिताः। ८ ख. मुखविप्र ग. मुखविप्लुषः। ९.—१. ४१।

च आस्यगतं मुखप्रविष्टम् उच्छिष्टं न करोति। *दन्तसक्तं च अन्नादिकं स्वयमेव च्युतं त्यक्त्वा शुचिर्भवति, अच्युतं दन्तसमम्, तथा च गौतमः—"दन्तश्लिष्टं तु दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक् च्युतेरित्येके"। "च्युतेष्वास्रावविद्यान्निगिरन्नेव तच्छुचिः।[1]" इति। निगरणं पुनरनेन याज्ञवल्क्योक्तेन त्यागेन विकल्प्यते। निगरन्नेवेत्येवकारः "चर्वणे त्वाचमेन्नित्यं मुक्त्वा ताम्बूलचर्वणम्। ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च॥" इति विष्णूक्ताचमननिषेधार्थः। ताम्बूलग्रहणं फलाद्युपलक्षणार्थम्, यथाऽऽह शातातपः—"ताम्बूले च फले चैव भुक्ते[2] स्नेहावशिष्टके। दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः॥" इति ॥१९५॥

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १९६ ॥**

स्नानपानक्षुतस्वप्नभोजनरथ्योपसर्पण† वासोविपरिधानेषु ‡कृतेषु आचान्तः पुनराचामेत्—द्विराचामेदित्यर्थः—चकाराद्रोदनाध्ययनारम्भाल्पानृतोक्त्यादिषु। तथा च वसिष्ठः "सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा रुदित्वा चाचान्तः पुनराचामेत्[3]॥" मनुरपि—"सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वानृतं वचः। पीत्वाऽऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्[4]॥" इति। भोजने[5] त्वादावपि द्विराचमनम्,—"भोक्ष्यमाणस्तु[6] प्रयतोऽपि द्विराचामेत्"[7] इत्यापस्तम्बस्मरणात्। स्नानपानयोरादौ

* "शङ्खः—"दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्रजिह्वाभिमर्शनात्।" इति।"...... भोजनानन्तरं दन्तलग्नं त्यक्त्वाऽऽचामेद्भोजनादन्यत्र नेतिव्यवस्था। भोजनानन्तरमपि यद्दन्तलग्नमशक्योद्धरणं न तदुद्धरणे पुनः पुनर्यतितव्यम्। यतस्तृणेषीकया दन्तमूले रक्तस्रावादशौचभूयस्त्वम्। अत्रिः—"मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च। नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा॥" इति अप० २७७.

† "पन्थानश्च विशुध्यन्तीति यदुक्तं तच्चण्डालादिस्पृष्टानां तेषां स्प्रष्टुः स्नानादि निवृत्त्यर्थम्। अत्र तु रथ्याप्रसर्पणमात्रे द्विराचमनं विधीयत इत्यविरोधः।" अप० २७७.

‡ वासोविपरिधानं पुनरधोवस्त्रविपरिधानम् तथा च बोधायनः—नीवीं विस्रस्य परिधायाप उपस्पृशेत्।" अप० २७८.

१.—१. ३९, ४०। २.—ख. भुक्तस्नेहा। ३.—३. ३८। ४.—५. १४५। ५ क. भोजनेच्छादावपि। ६ क. भोक्ष्यमाणस्त्वित्यारभ्य यथोक्तं द्विराचमनमित्यन्तं नास्ति। ७.—१. ५. १६. १०।

सकृत्। अध्ययने त्वारम्भे द्विः। शेषेषु अन्ते एव यथोक्तं द्विराचमनम्॥ १९६॥

**रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।**
**मारुतेनैव शुद्ध्यन्ति पक्वेष्टिकाचितानि च॥ १९७॥**

रथ्या मार्गमात्रं, कर्दमः पङ्कः, तोयमुदकं, रथ्यास्थितानि कर्दमतोयानि, अन्त्यैश्चाण्डालादिभिः श्वभिर्वायसैश्च स्पृष्टानि मारुतैनैव शुद्ध्यन्ति शुद्धिमुपयान्ति। बहुवचनं तद्गतगोमयशर्करादिप्राप्तयर्थम्। पक्वेष्टिकादिभिश्चितानि धवलगृहादीनि चाण्डालादिस्पृष्टानि मारुतैनैव शुद्ध्यन्ति। एतच्च "प्रोक्षणं संहतानाम्"[1] इत्युक्तप्रोक्षणनिषेधार्थम्। तृणकाष्ठपर्णादिमयानां तु प्रोक्षणमेवेति[2]॥ १९७॥

इति द्रव्यशुद्धिप्रकरणम्।

१ मनुः—५. ११५. । २ क. प्रोक्षणमेव।

# अथ दानप्रकरणम् ८.

इदानीं दानधर्मं प्रतिपादयिष्यंस्तदङ्गभूतपात्रप्रतिपादनार्थं तत्प्रशंसामाह—

**तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।**
**तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय *च ॥ १९८ ॥**

ब्रह्मा हिरण्यगर्भः कल्पादौ तपस्तप्त्वा—ध्यानं कृत्वा कान्मुख्यान्सृजामीति—पूर्वं ब्राह्मणान् सृष्टवान् । किमर्थम्?—† वेदगुप्तये वेदरक्षणार्थम्, पितॄणां देवतानां च तृप्त्यर्थम्, अनुष्ठानोपदेशद्वारेण धर्मसंरक्षणार्थं च । अतस्तेभ्यो दत्तमक्षयफलं भवतीत्यभिप्रायः ॥ १९८ ॥

**सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः[1] ।**
**तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥ १९९ ॥**

सर्वस्य क्षत्त्रियादेर्विप्राः प्रभवः‡ श्रेष्ठा जात्या कर्मणा च । ब्राह्मणेष्वपि §श्रुताध्ययनशीलिनः श्रुताध्ययनसंपन्ना उत्कृष्टाः, ‖ तेभ्योऽपि क्रियापराः विहि-

* "अत्रिः—" त्रयो लोकास्त्रयो वेदाः आश्रमाश्च त्रयोऽग्नयः । एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥" (१.—२५.)

† "ब्रह्मा......ब्राह्मणान्ससर्ज । अतस्ते विशिष्टकारणोद्भवत्वादनन्यसाध्यवेदगुप्त्यादि प्रयोजनवत्त्वाच्च प्रशस्ताः । तपः सर्वेन्द्रियजयः ।" इति अप० २८१.

‡ "ब्राह्मणो जायमानो वै पृथिव्यामधिजायते । ईश्वरस्सर्वभूतानां धर्मकोशस्य गुप्तये॥ सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् । श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥" मनुः—१. ९९, १००.

§ "श्रुतं गुरुतः साङ्गोपाङ्गश्रुतिस्मृतिवाक्यार्थावधारणम् । अध्ययनं श्रुत्यादिपाठः । श्रुताध्ययने शीलयन्ति सम्यगाचरन्त्येवं स्वभावाः श्रुताध्ययनशीलिनः । शालिन इति पाठे ताभ्यां श्लाघ्यमानाः ।" इति अप० २८२.

‖ "तेभ्यो श्रुताध्ययनमात्रोपक्षीयमाणव्यापारेभ्यः क्रियापराः धर्मानुष्ठानप्रधानाः ।

[1] अप० शालिनः ।

तानुष्ठानशीलाः, तेभ्योऽप्यध्यात्मवित्तमाः *वक्ष्यमाणमार्गेण शमदमादियोगेनात्मतत्त्वज्ञाननिरताः,—श्रेष्ठा इत्यनुषज्यते ॥ १९९ ॥

एवं जातिविद्यानुष्ठानतपसां प्रशंसामुखेनैकैकयोगेन पात्रतामभिधायाधुना तेषां समुच्चये संपूर्णपात्रतामाह—

**न विद्यया केवलया तपसा वाऽपि पात्रता।**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ २०० ॥**

केवलया विद्यया श्रुताध्ययनसंपत्त्या नैव संपूर्णपात्रत्वं, नापि केवलेन तपसा शमदमादिना, अपिशब्दात्केवलेनानुष्ठानेन केवलया जात्या वा, नैव संपूर्णपात्रता। कथं तर्हि?—यत्र पुरुषे वृत्तमनुष्ठानं इमे चोभे विद्या[1]तपसी स्तः, चशब्दाद्†ब्राह्मणजातिश्च, तदेवं मन्वादिभिः ‡संपूर्णपात्रं प्रकीर्तितम्—हि यस्मादतः परमुत्कृष्टं पात्रं नास्ति। अत्र जातिविद्यानुष्ठानतपस्समुच्चयानामुत्तरोत्तरप्राशस्त्येन फलतारतम्यं द्रष्टव्यम् ॥ २०० ॥

**गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम्।**
**नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ॥ २०१ ॥**

पूर्वोक्ते पात्रे गवादिकमर्चितं शास्त्रोक्तोदकदानादीतिकर्तव्यतासहितं देयम्। अपात्रे क्षत्रियादौ, ब्राह्मणे च पतितादौ, विदुषा पात्रविशेषेण फलविशेषं जानता श्रे-

---

क्रियाशब्दोऽत्राधर्मवर्जनार्थोऽपि। अर्थात् एषां श्रुताध्ययनसिद्धिः। न हि तद्रहिताः क्रियापरा भवन्ति। तेभ्यः केवलधर्मिभ्यः ब्रह्मविदः प्रशस्ततमाः।" इति अप० २८२.

* ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः॥" —श्रेष्ठा इत्यनुषज्यते। मनुः १. ९७.

† "वसिष्ठः—"स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम्। स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः॥" इति अप० २८२.

‡ "दातारं पापात्तारयतीति पात्रम्" इति अप० २८२.

---

१ क. विद्यातपसी न स्तः तत्र जातिविद्यानुष्ठान।

यः संपूर्णफलमिच्छता किञ्चिदल्पमपि न दातव्यम् । श्रेयोग्रहणादपात्रदानेऽपि किमपि तामसं फलमस्तीति सूचितम्, यथाऽऽह[1] कृष्णद्वैपायनः—"अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्[2]॥" इति । *अपात्रे न दातव्यमिति वदता विशिष्टदेशकालद्रव्य[3]सन्निधौ, पात्रस्यासन्निधाने, द्रव्यस्य वा, तदुद्देशेन त्यागं, तस्मै प्रतिश्रवणं वा कृत्वा समर्पयेत्, न त्व[4]पात्रे दातव्यमिति सूचितम् । तथा प्रतिश्रुतमपि पश्चात्पातकादिसंयोगे ज्ञाते न देयम्,—"प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्" इति निषेधात् ॥ २०१ ॥

अपात्रे दातुर्निषेधमुक्त्वा प्रतिग्रहीतारं प्रत्याह—

**विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।**
**गृह्णन्प्र[5]दातारमधो नयत्यात्मानमेव च ॥२०२ ॥**

विद्यातपोभ्यां हीनेन प्रतिग्रहः सुवर्णादिर्न ग्राह्यः । यस्माद्विद्यादिहीनः प्रतिगृह्णन् दातारमात्मानं चाधो नरकं नयति प्रापयतीति ॥ २०२ ॥

गवादि पात्रे दातव्यमित्युक्तं, तत्र विशेषमाह—

**दातव्यं प्रत्यहं पात्रे निमित्ते[6] तु विशेषतः ।**
**याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः॥ २०३ ॥**

†प्रतिदिवसं शक्त्यनुसारेण यथोक्तविधिना पात्रे गवादिकं स्वकुटुम्बाविरोधेन

---

* "पात्राय दातव्यमिति विधिसामर्थ्यादेव अपात्रे न देयमिति निषेधे सिद्धे पृथङ्निषेधमारभमाणो मुख्यपात्रासंभवे प्रतिषिद्धवर्जस्य पात्रताऽस्तीति ज्ञापयति । अत्र चापात्रशब्दो न पात्रादन्यदपात्रमाह किं तु पात्रविरुद्धम् । यस्य च पात्रत्वं प्रतिषिद्धं तत्तद्विरुद्धम्"। इति अप० २८५.

† "दाननिमित्तं कालः क्रियार्थमित्युक्तं देवलेन कालापेक्षं क्रियापेक्षमित्यादिना । तत्र कालो विधीयते प्रत्यहमित्यादिना । अहर्मात्रम् । अनेन च रात्रिर्व्युदस्यते ।" इति अप० २९१.

---

१ क॰ यथाऽऽह द्वैपाय । २ भगवद्गीता—१७. २२ । ३ क॰ देशकालसन्निधौ । ४ ख॰ समर्पयेत् नापात्रे । ५ ग॰ गृह्णन् स दातार । ६ अप॰ निमित्तेषु ।

दातव्यम्। निमित्तेषु चन्द्रोपरागादिषु विशेषतोऽधिकं यत्नेन दातव्यम्। याचितेनापि श्रद्धापूतम् अनसूयापवित्रीकृतं शक्त्या दातव्यम्। याचितेनापि दातव्यमिति वदता यथोक्तं पात्रं स्वयमेव गत्वा आहूय वा यद्दानं तन्महाफलमुक्तम्। तथा च स्मरणं "गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम्। सहस्रगुणमाहूय याचिते तु तदर्धकम्॥" इति॥[*] २०३॥

गवादिकं देयमित्युक्तम्। तत्र गोदाने विशेषमाह—

**हेमशृङ्गी शफै[1] रौप्यैः सुशीला वस्त्रसंयुता।**
**सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा॥ २०४॥**

हेममये शृङ्गे यस्याः सा हेमशृङ्गी, शफैः रौप्यैः राजतैः खुरैः संयुता, वस्त्रेण च संयुता कांस्यपात्रसहिता बहुक्षीरा गौर्यथाशक्तिदक्षिणासहिता दातव्या॥२०४॥

गोदानफलमाह—

**दाताऽस्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान्।**
**कपिला चेत्तारयति भूय[2]श्चासप्तमं कुलम्॥ २०५॥**

अस्याः गोः रोमसंमितान् रोमसंख्याकान् वत्सरान् स्वर्गमाप्नोति दाता। सा यदि कपिला तदा न केवलं दातारं तारयति, किं तु कुलमपि आसप्तमं सप्तममभिव्याप्य पित्रादीन्षट् आत्मानं च सप्तमम्। अप्यर्थे भूयःशब्दः॥ २०५॥

**सवत्सारोमतुल्यानि युगान्युभयतोमु[3]खीम्।**
**दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्॥ २०६॥**

सवत्सारोमतुल्यानि—वत्सेन सह वर्तत इति सवत्सा, तस्या रोमतुल्यानि—वत्सस्य गोश्च यावन्ति रोमाणि तावत्संख्याकानि [†]युगानि[4] कृतत्रेतादीनि उभयतोमुखीं ददत्स्वर्गमाप्नोति[5] अनुभवति पूर्वेण विधिना दाता चेत्॥ २०६॥

---

*** दानकालविशेषादि प्रपञ्चोऽपरार्के द्रष्टव्यः।**

**† "युगम्,—देवमानेन चत्वारि वर्षसहस्राणि।" इति अप० २९८.**

---

१ ख. शृङ्गी खुरै राप्यै। २ अप० भूय आ सप्तम। ३ अप० मुखी। ४ क. युगानि त्रेतादीनि। ५ ख. माप्नोति पूर्वेण विधिना चेत्।

का पुनरुभयतोमुखी कथं तावत्तद्दानं महाफलमित्यत आह—

**यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।**
**तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २०७ ॥**

गर्भान्निर्गच्छतो वत्सस्य द्वौ पादौ मुखं च यावत्कालं योन्यां दृश्यते तावत्कालम्, उभयतो मुखमस्या अस्तीत्युभयतोमुखी, यावत्कालं गर्भं न मुञ्चति तावत्सा[2] गौः पृथिवीसमा ज्ञेया । अतः फलातिशयो युक्तः ॥ २०७ ॥

**यथाकथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ।**
**अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ २०८ ॥**

यथाकथञ्चिद्धेमशृङ्गाद्यभावेऽपि यथासंभवं पूर्वोक्तविधिना *धेनुं दोग्ध्रीम् अधेनुं वा अवन्ध्याम् अरोगां रोगरहिताम् †अपरिक्लिष्टाम् अत्यन्तादुर्बलां गां दत्त्वा दाता स्वर्गे महीयते पूज्यते ॥ २०८ ॥

गोदानसमान्याह—

**श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।**
**पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०९ ॥**

श्रान्तस्य आसनशयनादिदानेन श्रमापनयनं श्रान्तसंवाहनम्, रोगिणां परिचर्या यथाशक्त्यौषधादिदानेन, सुरार्चनं हरिहरहिरण्यगर्भादीनां गन्धमाल्यादिभिराराधनम्, पादशौचं द्विजानां समानानामधिकानां च, तेषामेवोच्छिष्टस्य संमार्जनम्,—एतान्यनन्तरोक्तेन गोदानेन समानि[3] ॥ २०९ ॥

**भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।**
**नैवेशिकं[4] स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते ॥ २१० ॥**

---

* "धेनुः नवप्रसूता ।" इति अप० ३०२.

† "अपरिक्लिष्टा अकृशा ।" इति अप० ३०२.

१ क. मुखं योन्यां प्रतिष्ठितम् । तावद्गौः । अपरार्के मूले योन्यां प्रदृश्यते । ताव । २ ख. तावद्गौः पृथि । ३ क. समानीति । ४ क. नैवेशिकस्वर्णधुर्यान्दत्त्वा ।

भूः फलप्रदा, दीपा देवायतनादिषु, प्रतिश्रयः प्रवासिनामाश्रयः, निवेशनार्थं गार्हस्थ्यार्थं यत्कन्या दीयते तन्नैवेशिकं, स्वर्णं सुवर्णं, धुर्यो[1] भारसहो बलीवर्दः, शेषं प्रसिद्धम्,—एतान् भूदीपादीन् दत्त्वा स्वर्गलोके पूज्यते । स्वर्गफलं[2] भूमिदाना[3]दीनां, न फलान्तरव्युदासार्थम्,—"यत्किञ्चित्कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा । अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति ॥" तथा "वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः। तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।" इत्यादिफलान्तरश्रवणात् ॥ *गोचर्मलक्षणं च बृहस्पतिना दर्शितम्—"सप्तहस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनम् । दश तान्येव गोचर्म दत्त्वा[4] स्वर्गे महीयते[5] ॥" ॥ २१० ॥

**गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।**

**यानं वृक्षं प्रियं शय्यां दत्त्वाऽत्यन्तं सुखी भवेत् ॥ २११ ॥**

गृहं प्रसिद्धं, धान्यानि च शालिगोधूमादीनि, अभयं भीतत्राणम्, उपानहौ, छत्रं, माल्यं मल्लिकादेः, अनुलेपनं कुङ्कुमचन्दनादि, यानं रथादि, वृक्षमुपजीव्यमाम्रादिकं, प्रियं यत् यस्य प्रियं धर्मादिकं, शय्यां च दत्त्वाऽत्यन्तम् अतिशयेन सुखी भवति ॥ न च हिरण्यादिवद्धस्ते[6] दातुमशक्यत्वाद्धर्मस्य दानासंभवः,[7]—भूमिदानादावपि समानत्वात्, स्मृत्यन्तरेऽपि धर्मदानश्रवणात्,—"देवतानां गुरूणां च मातापित्रोस्तथैव च । पुण्यं देयं प्रयत्नेन नापुण्य चोदितं क्वचित् ॥" अपुण्यदाने तदेव वर्धते, प्रतिग्रहीतुरपि लोभादिना प्रवृत्तस्य,—"यः पापमबलं ज्ञात्वा प्रतिगृह्णाति दुर्मतिः । गर्हिताचरणात्तस्य पापं तावत्समाश्रयेत् ॥ समाद्विगुणसाहस्रमानन्त्यं च प्रदातृषु ।" इति स्मरणात् ॥ इह च सर्वत्र देशकालपात्रविशेषाद्देयविशेषा-

---

| | | |
|---|---|---|
| * ७ हस्ताः | = | १ दण्डम्, |
| ३० दण्डानि | = | १ निवर्तनम्, |
| १० निवर्तनानि | = | १ गोचर्म. |

---

१ क. धुर्यो बलीवर्दः । २ ख. स्वर्गफलं च भूमि । ३ क. भूमिदानां न फलान्तर । ४ क. गोचर्मदानात्स्वर्गे म । ५ क. महीयत इति । ६ क. हिरण्यदानादिव । ७ ख. द्धर्मादानीमसं ।

दातृविशेषात् "दाने फलं मया प्रोक्तं हिंसायां तद्वदेव हि ।" इति प्रतिग्रहीतृवृत्तिविशेषाच्च दातृप्रतिग्रहीत्रोः फलतारतम्यं द्रष्टव्यम्[१] ॥ २११ ॥

**सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।**
**तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥**

यस्मात्सर्वधर्ममयं ब्रह्म अवबोधकत्वेन, तस्मात्तद्दानं सर्वदानेभ्योऽप्यधिकम् । अतस्तद्ददध्यापनादिद्वारेण ब्रह्मलोकमवाप्नोति* अविच्युतं च्युतिर्यथा न भवति—आभूतसंप्लवं ब्रह्मलोकेऽवतिष्ठते इत्यर्थः । अत्र च ब्रह्मदाने परस्वत्वापादनमात्रं दानं—स्वत्वनिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥

दाने फलमुक्त्वेदानीं दानव्यतिरेकेणापि दानफलावाप्तिमाह[२]—

**प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।**
**ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥ २१३ ॥**

यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नादत्ते न स्वीकरोति असौ[३] यद्यत्प्राप्तं नोपादत्ते तत्तद्दानशीलानां ये लोकाः तान्समग्रानाप्नोति ॥ २१३ ॥

इदानीं सर्वप्रतिग्रहनिवृत्तिप्रसंगेऽपवादमाह—

**कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।**
**मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥**

धानाः भ्रष्टा[४] यवाः, क्षितिर्मृत्तिका, शेषं प्रसिद्धम्,—एतत्कुशादिकं स्वयमुपानीतं न प्रत्याख्येयं, चकाराद्गृहादि,—"शय्यां गृहान्कुशान्गन्धानापः पुष्पं मणी-

---

***"अत्र हेतुः—ब्रह्मणः सर्वधर्ममयत्वेनान्येभ्यः प्रदेयेभ्योऽधिकम् । प्राचुर्ये मयट्प्रत्ययः यथा शालिमया मगधाः, अन्नमयो यज्ञ इति । अभेदे वा यथा 'आनन्दमयं ब्रह्म' इति । अभेदश्चात्र प्रमाणप्रमेययोरभेदोपचारेण ।" इति अप० ३८९.**

---

१ क. दातृविशेषात्प्रतिगृहीतृवृत्तिविशेषाच्च फलतारतम्यं द्रष्टव्यम् । २ ख. दानात्फलमुक्तमिदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतुमाह सर्वधर्मे । ३ क. स्वीकरोत्यसौ यतो यद्दानशी । ४ क. धानाः भृष्टास्तण्डुलाः ।

न्दधि । मत्स्यान्धानाः पयो मांसं शाकं चैव न निर्णुदेत्॥" तथा,—"गन्धोदकं मूलफलमन्नमभ्युद्यतं च यत् । सर्वतः प्रतिगृह्णीयान्मध्वाज्याभयदक्षिणाम् ॥" इति मनुस्मरणात् ॥ २१४ ॥

किमिति न प्रत्याख्येयमित्याह—

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विषः ॥ २१५ ॥

यस्मादयाचितमेतत्कुशाद्याहृतं दुष्कृतकारिणोऽपि संबन्धि ग्राह्यं, किमुत यथोक्तकारिणः । तस्मान्नप्रत्याख्येयम् अन्यत्र कुलटाषण्डपतितेभ्यः शत्रोश्च । कुलात्कुलमटन्तीति कुलटाः—स्वैरिण्यादिकाः, षण्डस्तृतीयाप्रकृतिः ॥ २१५ ॥

प्रतिग्रहनिवृत्तेरपवादान्तरमाह—

देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ।
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥

देवतातिथ्यर्चनादेरावश्यकत्वात्तदर्थमनापत्प्रकरणात् पतिताद्यत्यन्तकुत्सितवर्ज्यं सर्वतः प्रतिगृह्णीयात्* । गुरवो मातापित्रादयः, भृत्या भरणीयाः भार्यापुत्रादयः ॥ २१६ ॥

† इति दानप्रकरणम्

* "सकलावश्यककर्मोपलक्षणं चैतत् आत्मवृत्तिः शरीरधारणमात्रं न तु तृप्तिः ।" इति अप० ४०८.

† अस्मिन्प्रकरणेऽनुक्तेतरविषयप्रपञ्चोऽपरार्के तत्रतत्रावसरे द्रष्टव्यः ।

१.—४. २५०, २४७. । २ ख. यद्यस्मादया । ३ ख. तदर्थमनात्मकारणात् । ४ ख. द्यत्यन्तं कुत्सित । ५ ख. दानधर्मप्रक ।

# अथ *श्राद्धप्रकरणम् ९

इदानीं श्राद्धप्रकरणमारभ्यते । श्राद्धं नामाऽदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः । †तच्च द्विविधं—पार्वणमेकोद्दिष्टं चेति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । पुनश्च त्रिविधं—नित्यं नैमित्तिकं काम्यं चेति । तत्र नित्यं नियतनिमित्तोपाधौ चोदितम् अहरहरमावास्याष्टकादिषु, अनियतनिमित्तोपाधौ चोदितं नैमित्तिकं यथा पुत्त्रजन्मादिषु । फलकामनोपाधौ विहितं काम्यं यथास्वर्गादिकामानां कृत्तिकादिनक्षत्रेषु । पुनश्च पञ्च विधम् अहरहःश्राद्धं, पार्वणम्, वृद्धिश्राद्धम्, एकोद्दिष्टम्, सपिण्डीकरणं चेति । तत्राहरहः श्राद्धं "अन्नं पितृमनुष्येभ्यः" ‡इत्यादिनोक्तम् ॥

अधुना पार्वणं वृद्धिश्राद्धं च दर्शयिष्यंस्तयोः §कालानाह—

**अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।**

---

* "श्राद्धं स्वधनत्यागरूपत्वात् दानेन सदृशमिति दानविधानानन्तर बुद्धिस्थम्, अतो दानप्रकरणानन्तरं श्राद्धकल्पमारभते । (अप० ४१७)

† श्राद्धम्
- १. (१). पार्वणम्.
  - (२). एकोद्दिष्टम्.
- २. (१). नित्यम्.
  - (२). नैमित्तिकम्.
  - (३). काम्यम्.
- ३. (१). अहरहश्राद्धम्
  - (२). पार्वणम्
  - (३). वृद्धिश्राद्धम्
  - (४). एकोद्दिष्टम्.
  - (५). सपिण्डीकरणम्

"‡कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् ॥" इति मनुः ३. ८२.

§ तत्र कालोऽङ्गमप्यनुपादेय इति स्वरूपेणैवाधिकारहेतुः । न हि कालान्तरे वर्तमानः

१ क. देशेन क्रियते तदे । २ ख. यतनियतोपाधौ । ३ ख. ग. इत्यादिनोक्तम् । तथा च मनुः "दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमक्षयाम् ॥" इति पाठः ।

**द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥ २१७ ॥**

**व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।**

**श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ २१८ ॥**

यत्र दिने चन्द्रमा न दृश्यते सा *अमावास्या, तस्यामहर्द्वयव्यापिन्यामपराह्णव्यापिनी ग्राह्या,—"अपराह्णः पितॄणाम् ।" इति वचनात् । अपराह्णश्च पञ्चधा विभक्ते दिने चतुर्थो भागस्त्रिमुहूर्तः । † अष्टकाश्चतस्रः "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इत्याश्वलायनोक्ताः, वृद्धिः ‡ पुत्रजन्मादिः, §कृष्णपक्षोऽपरपक्षः,—अयनद्वयं दक्षिणोत्तरसंज्ञकम्, द्रव्यं कृष्णसारमांसादिकं, ब्राह्मणसंपत्तिर्वक्ष्यमाणा, विषुवद्द्वयं मेषतुलयोः सूर्यगमनम्, सूर्यसंक्रमः आदित्यस्य राशेः राश्यन्तरगमनम्,—अयनविषुवतोः संक्रान्तित्वे सिद्धेऽपि पृथगुपादानं फलातिशयप्र-

---

कर्ताऽङ्गभूतं कालान्तरविशिष्टं कर्म शक्नुयात्कर्तुम् । किं तु तत्काल एवेति युक्तं कालस्याधिकारहेतुत्वम् । विष्णुक्रमादीनां तूपादेयाङ्गानां न स्वरूपमधिकारहेतुः । किं तु तद्विषयाशक्तिः, तस्मात्कालस्याधिकारहेतुत्वादधिकारायत्तत्वाच्चानुष्ठानस्य श्राद्धकालांस्तावदाह (अप० ४१७)

* "अत्रामावास्या कृष्णपक्षस्य पञ्चदशी तिथिः । सा च शिनीवाली कुहूश्चेति द्विविधा । 'दृष्टचन्द्रा शिनीवाली नष्टचन्द्रा कुहूस्तथा' । तत्र साग्निकैः—शिनीवाल्यां श्राद्धं कार्यमितरैः कुह्वाम् । तथा च व्यासः—"दृष्टचन्द्रा शिनीवाली कार्या विप्रैस्तु साग्निकैः । नष्टचन्द्रा कुहूः कार्या शूद्रैर्विप्रैरनग्निकैः ॥" शूद्रैरनग्निकैर्विप्रैश्चेति योज्यम् ।" इति अप० ४१७.

† "अष्टका मार्गशीर्षादिमासत्रयापरपक्षाष्टम्यः । अष्टकाशब्दो यद्यपि कर्मविशेषनाम, तथाऽपि तदङ्गभूतं कालमिह लक्षयति । नान्यथा श्राद्धकालाः प्रकीर्तिता इति युज्यते । तत्र गृह्यकृच्छौनकः—'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इति वदन् अष्टमीचतुष्टयमष्टकाङ्गत्वेनाह । विष्णुस्तु त्रयमेवाह ।......ब्रह्मपुराणे पुनरष्टकाश्चतस्रः" इति अप० ४२२.

‡ "सा च निमित्तत्वादनुपादेयेति कालतुल्यत्वात् श्राद्धकालाः प्रकीर्तिताः इति कालशब्देन शक्या संग्रहीतुम् । ततश्च वृद्धिश्राद्धं नैमित्तिकत्वादावश्यकम् ।" इति अप० ४२२.

§ "तस्य श्राद्धकालत्वं श्राद्धाङ्गभूतापराह्णावच्छेदकतिथिनिरूपणद्वारेण ।" इति अप० ४२२.

---

१.—२. ४. १. । २ ग. द्रव्यं कृसरमांसा ।

तिपादनार्थम्—*व्यतीपातो योगविशेषः, गजच्छाया "यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः। याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता॥" इति परिभाषिता,—हस्तिच्छायेति [1]केचित्, सेह न गृह्यते कालप्रक्रमात्—ग्रहणं सोमसूर्ययोरुपरागः, यदा च कर्तुः श्राद्धं प्राति रुचिर्भवति तदाऽपि, चशब्दाद्युगादिप्रभृतयः,—एते श्राद्धकालाः। यद्यपि "चन्द्रसूर्यग्रहे नाद्यात्" इति ग्रहणे भोजननिषेधः तथाऽपि भोक्तुर्दोषो दातुरभ्युदयः॥ २१७॥ २१८॥

अहरहः श्राद्धव्यतिरिक्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसंपत्तिमाह[2]—

‡अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः॥ २१९॥

सर्वेषु वेदेषु ऋग्वेदादिषु अन्यमनस्कतयाऽप्यस्खलिताध्ययनक्षमः §अग्र्यः, ||श्रोत्रियः श्रुताध्ययनसंपन्नः, वक्ष्यमाणं ब्रह्म यो वेत्ति असौ ¶ब्रह्मवित्, युवा मध्यमवयस्कः—सर्वस्येदं विशेषणं, मन्त्रब्राह्मणयोरर्थं वेत्तीति वेदार्थवित्, ज्येष्ठसाम [3]सामविशेषस्तदध्ययनाङ्गव्रतं च,—तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा, त्रिमधुः ऋग्वेदैकदेशस्तद्व्रतं च—तद्व्रताचरणेन तदधीते इति त्रिमधुः, त्रिसुपर्णं ऋग्यजुषोरेकदेशस्तद्व्रतं च—तद्व्रताचरणेन यस्तद[4]धीते स त्रिसुपर्णकः,—एते ब्राह्मणाः श्राद्धसंपद इति वक्ष्यमाणक्रियासंबन्धः॥ २१९॥

---

* व्यतीपातो योगविशेषः पारिभाषिको वा तत्र वृद्धमनुः—"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते॥" नागदैवतमाश्लेषा। मस्तके प्रथमपादे यदि चन्द्र इत्यर्थः।" इति। अप० ४२६.

† अपरार्केऽप्येवम्। (अप० ४६४).

‡ मनुः ३. १८४, १८५ द्रष्टव्यम्।

§ "अग्र्यो मुख्योऽध्येतॄणाम्, सर्वेषु चतुर्षु वेदेषु।" इति अप० ४३७.

|| "यथाविध्येकशाखाध्यायी" इति अप० ४३७.

¶ "औपनिषत्पुरुषवित्" इति अप० ४३७.

१ अप० तिथिर्वैश्रवणीया च। २ क. ब्राह्मणलक्षणमाह। ३ ख. सामेति सामवि। ४ क. यस्तदध्यायी स त्रि।

**स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।**
**त्रिणाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः*॥ २२० ॥**

स्वस्रीयो भागिनेयः, ऋत्विगुक्तलक्षणः, जामाता दुहितुर्भर्ता, त्रिणाचिकेतं यजुर्वेदैकदेशः तद्व्रतं च—तद्व्रताचरणेन यस्तदध्यायी स च त्रिणाचिकेतः, अन्यत्प्रसिद्धम्, एते च—पूर्वोक्ताग्र्यश्रोत्रियाद्यभावे वेदितव्याः,—"एष[1] वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्त्वयं प्रोक्तः सदा सद्भिरगर्हितः[2]॥[3]" इत्यभिधाय मनुना †स्वस्रीयादीनामभिहितत्वात्॥ २२० ॥

**‡[4]कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।**
**पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदे ॥ २२१ ॥**

कर्मनिष्ठा विहितानुष्ठानतत्पराः, तपोनिष्ठास्तपःशीलाः, सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सन्ति स पञ्चाग्निः—पञ्चाग्निविद्याध्यायी च, ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च, पितृमातृपरास्तत्पूजापराः, चकारात् ज्ञाननिष्ठादयः, ब्राह्मणाः—न क्षत्रियादयः,—श्राद्धसंपदे श्राद्धेष्वक्षय्यफलसंपत्तिहेतवः ॥ २२१ ॥

वर्ज्यानाह—

**रोगी हीनातिरिक्ताङ्गः काणः §पौनर्भवस्तथा ।**
**अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ २२२ ॥**

---

* "वैवाह्याः बान्धवा मातामहप्रभृतयः ।" अप० ४३७.

† "मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ।" इति मनुः ३-१४८.

‡ ज्ञाननिष्ठा अध्यात्मविदः । कर्मनिष्ठा इति पाठे विहितानुष्ठानपराः ।" इति अप० ४३७.

§ "पुनर्भूः पुनरूढा तस्याः पतिस्तस्याः सुतो वा पौनर्भवः । तत्त्वतस्तु सुत एव । अत एव हारीतः—'स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी । सर्वभक्षा च विज्ञेयाः पञ्चैताः

---

१ क. एष इत्यर्धश्लोको नास्ति। २ मनुव्याख्याने कुल्लूकभट्टीये सद्भिरनुष्ठितः इति पाठान्तरम्। ३.—३. १४७. । ४ अप० ज्ञाननिष्ठाः ।

*रोगी महारोगोपसृष्टः, हीनमतिरिक्तं वाऽङ्गं यस्यासौ हीनातिरिक्ताङ्गः, एकेनाक्ष्णा यो न पश्यति स काणः,—एतस्मादेवान्धबधिरविद्धप्रजननखलतिदुश्चर्मप्रभृतयो निरस्ताः—पुनर्भूरुक्तलक्षणा तस्यां जातः पौनर्भवः, अवकीर्णी ब्रह्मचार्येव स्खलितब्रह्मचर्यः, कुण्डगोलौ "परदारेषु जायेते द्वौ सुतौ ‡कुण्डगोलकौ। पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः॥[1]" इत्येवमुक्तलक्षणकौ, §कुनखी संकुचितनखः, श्यावदन्तकः स्वभावात्कृष्णदशनः,—एते श्राद्धेनिन्दिता इति वक्ष्यमाणेन संबन्धः॥ २२२॥

**भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः।**
**मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः॥ २२३॥**

वेतनग्रहणेन योऽध्यापयति स ‖भृतकाध्यापकः, वेतनदानेन च योऽधीते सोऽपि, क्लीबो नपुंसकः, असद्भिः सद्भिर्वा दोषैर्यः कन्यां दूषयति स ¶कन्यादूषी, सताऽसता वा ब्रह्महत्यादिनाऽभियुक्तोऽभिशस्तः, मित्रध्रुक् मित्रद्रोही, परदोषसंकी

---

शूद्रयोनयः॥ एतासां यान्यपत्यानि चोत्पद्यन्ते कदाचन। न तान्पङ्क्तिषु युञ्जीत नैते पङ्क्त्यर्हकाः स्मृताः॥' रेतोधाः कुण्डमाता। कामचारिणी अन्यपुरुषगामिनी। सर्वभक्षा सुरापी।" इति अप० ४४४.

* "दीर्घरोगी" इति अप० ४४४.

† "अवकीर्णिनमाह देवलः—"गूढलिङ्ग्यवकीर्णीस्याद्यश्चभग्नव्रतस्तथा।" गूढलिङ्गी दण्डादिकाश्रमलिङ्गरहिताः।" इति अप० ४४४.

‡ "क्षेत्रजसुतविषयमेतत्। अन्यस्याब्राह्मणत्वादेवाप्राप्तिः।" इति अप० ४४४.

§ "कुनखी स्वभावान्मृतनखः।" इति अप० ४४४.

‖ "अत्र देवलः—"भृतकाध्यापको यश्च भृतकाध्यापितश्च यः। तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात्॥" इति अप० ४४५.

¶ "अङ्गुल्यादिना यः कन्यां क्षतयोनिं करोति स कन्यादूषी; कन्यादोषख्यापको वा।" इति अप० ४४५.

---

१.—मनुः ३. १७४.।

र्तनशीलः पिशुनः, *सोमविक्रयी यज्ञे सोमस्य विक्रेता, परिविन्दकः परिवेत्ता ज्येष्ठे अकृतदारे अकृताग्निपरिग्रहे वा यः कनीयान् दारपरिग्रहमग्निपरिग्रहं वा कुर्यात्स परिवेत्ता, ज्येष्ठस्तु परिवित्तिः, यथाऽऽह मनुः—"दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः[1]॥" इति। एवं दातृयाजकावपि,—"परिवित्तिः परिवेत्ता च यया च परिविद्यते। †सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः[2]॥" इति ॥ २२३ ॥

---

* "सोमविक्रयी सोमलतायाः सोमयागस्य वा विक्रेता।" इति अप० ४४५.

† "शातातपः—"क्लीबे देशान्तरस्थे च पतिते प्रव्रजे तथा। योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ पितृव्यपुत्त्रान्सापत्नान्परनारीसुतांस्तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥" परनारीसुता दत्तकादिभ्रातरः। वसिष्ठः—"अष्टौ दश द्वादश वा वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति।" अनिविष्टमकृतविवाहाग्निहोत्रम्। तत्र श्लोकौ (?) भवतः—"द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः। न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥ उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च। राजयक्ष्मामयावीनां न न्याय्यः स्यात्प्रतीक्षितुम् ॥ खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च। जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥" वृद्धवसिष्ठः—"अग्रजश्च यदाऽनग्निरादध्यादनुजः कथम्। अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥" एतच्च धर्माधिकारिणो ज्येष्ठेऽग्न्याधेयमकुर्वति द्रष्टव्यम्। नानधिकारिणि। हारीतः—"सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत्। दारैस्तु परिवेद्यन्ते नाग्निहोत्रेण नेज्यया ॥" विवाहाधिकारिणाऽनुमतोऽपि नोद्वहेदित्यर्थः। उशना—"पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित्। तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥" यस्य पित्रादयः सन्ति तस्य तदनुज्ञातस्य तपोऽग्निहोत्रादयः परिवेदनहेतवो न भवन्तीत्यर्थः। सुमन्तुः—"पितुर्यस्य तु नाधानं कथं पुत्त्रस्तु कारयेत्। अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा ॥" अनुज्ञातस्येति शेषः। "व्यसनासक्तचित्तो वा नास्तिकोऽप्यथ वाऽग्रजः। कनीयान्धर्मकामस्तु आधानमथ कारयेत् ॥" व्यसनादिनाऽनधिकारित्वमुपलक्ष्यते। अतस्तदनुमतेनैवाधिकारी कनीयानादद्या (ध्या) त्। "ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥" शातातपः—नाग्नयः परिविन्दन्ति न देवा न तपांसि च। न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिता ॥" अनधिकृते ज्येष्ठ इति शेषः। ज्येष्ठेऽधिकारिणि श्राद्धमकुर्वत्यपि कनिष्ठस्तु तत्कुर्वन्न परिविद्यते। विरूपायां ज्येष्ठायामनूढायामपि श्राद्धमकुर्वत्यपि कनिष्ठाविवाहो न दोषाय। योगयाज्ञवल्क्यः "आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते। सोऽनाहिताग्निर्भवति परिवेत्ता

---

१.—३. १७१. । २.—मनुः ३. १७२. ।

मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः।
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४ ॥

*विनाकारणेन मातापितृगुरून्यस्त्यजति स मातापितृगुरुत्यागी—एवं भार्यासुतत्यागी—"वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्॥" इति समाननिर्देशात्, कुण्डस्यान्नं योऽश्नात्यसौ कुण्डाशी, एवं गोलकस्यापि,—"यस्तयोरन्नमश्नाति स कुण्डाशी प्रकीर्तितः।" इतिवचनात्, †वृषलो निर्धर्मस्तत्सुतो ‡वृषलात्मजः, §परपूर्वा पुनर्भूः तस्याः पतिः, अदत्तादायी स्तेनः, कर्मदुष्टाः शास्त्रविरुद्धकारिणः, चकारात्कितवदेवलकप्रभृतयः,—एते श्राद्धे निन्दिताः प्रतिषिद्धाः "अग्र्याः सर्वेषु वेदेषु" इत्यादिना श्राद्धयोग्यब्राह्मणप्रतिपादनेनैव तद्व्यतिरिक्तानामयोग्यत्वे सिद्धे पुनः केषांचिद्रोग्यादीनां प्रतिषेधवचनम् उक्तलक्षणब्राह्मणासंभवे प्रतिषेधरहितानां प्राप्त्यर्थम्॥ २२४ ॥

---

तथोच्यते॥" आवसथ्याधानमपीतराधानवद्भवतीत्याह गार्ग्यः—"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्। आवसथ्यं तथाऽऽधानं पतितस्तु तथा भवेत्॥" ब्रह्मगर्भः—"याजनाध्यापनादानैरनिन्द्येभ्यो धनेन च। औपासनं समादद्या(ध्या)त्स्वे काले परिवेदयन्॥" इति प्रपञ्चः—अप० ४४५, ६, ७.

* "मातापित्राचार्यादीन् विना पातित्यादिना कारणेन यस्त्यजति स मात्रादित्यागी। तथा च मनुः—"अकारणात्परित्यक्ता मातापित्रोर्गुरोस्तथा।" इति अप० ४४७.

† "तदाह मनुः—"वृषो हि भगवान्धर्मः तस्य यः कुरुते त्वलम्। वृषलं तं विदुर्देवाः सर्वधर्मबहिष्कृतम्॥ तस्यात्मजो वृषलात्मजः। अथ वा वृषलः शूद्रः स आत्मजो यस्य सः।" इति अप० ४४७.

‡ "यमः—"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम्। स वै दुर्ब्राह्मणो नाम यश्च वै वृषलीपतिः॥" उशना—"वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा। अपरा वृषली ज्ञेया कुमारी या रजस्वला॥ यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः। अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्॥ दत्त्वाऽनुयोगेनार्थाय पतितान्मनुरब्रवीत्। वेदविक्रयिणो ह्येते नैताञ्छ्राद्धेषु भोजयेत्॥ असंस्कृताध्यापकाश्च भृतकाध्यापकाश्च ये। तमो विशन्ति ते घोरमिति वैवस्वतोऽब्रवीत्॥" इति अप० ४४९—५०.

§ "परपूर्वा पूर्वमन्यस्मै दत्ता।" इति अप० ४४७.

---

१ अप० मातापित्रोर्गुरोस्त्यागी। २ ख. भार्यापुत्रत्याग्यपि। ३.—आ० २१७.। ४ ख. ग. मयोग्यत्वे सिद्धेऽपि पुनः।

एवं श्राद्धकालान् ब्राह्मणांश्चोक्त्वाऽधुना पार्वणप्रयोगमाह—

**निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः ।**
**तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥**

पूर्वोक्तान्ब्राह्मणान् श्राद्धे क्षणः क्रियतामिति *पूर्वेद्युर्निमन्त्रयेत् प्रार्थनया †क्षणमभ्युपगमयेत्, अपरेद्युर्वा,—"पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्यवस्थिते[1] । निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान् यथोदितान्[2] ॥" इति मनुस्मरणात् । आत्मवान्[3] शाकोन्मादादिरहितैश्चेत् दोषवान्न भवति । यद्वा आत्मवान् नियतेन्द्रियो भवेत्, शुचिः ‡प्रयतश्च । तैरपि निमन्त्रितैर्ब्राह्मणैर्मनोवाक्कायव्यापारैः §संयतैर्नियतैर्भवितव्यम् ॥ २२५ ॥

**अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।**
**पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥२२६ ॥**

‖अपराह्णे तूक्तलक्षणे तान्निमन्त्रितान्ब्राह्मणानाहूय स्वागतवचनेन पूजयित्वा कृतपादधावनानाचान्तान् कुशेष्वासनेषु पवित्रपाणिः पवित्रपाणीनुपवेशयेत् । यद्यपि सामान्येनापराह्णे इत्युक्तम्, तथाऽपि कुतपे प्रारभ्य तदादि पञ्चमुहूर्तेषु परिसमापनं श्रेयस्करम् ,—"अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति

---

* "अप्रत्याख्येयो नियोगः निमन्त्रणम् ।" इति अप० ४५५.

† "प्रचेताः—"सवर्णं प्रेषयेदासं द्विजानामुपमन्त्रणे ।" स्वयंनिमन्त्रणासामर्थ्ये एतत् ।" इति अप० ४५६.

‡ "देवलः—अक्रुद्धो निभृतः स्वस्थः श्रद्धावानत्वरः शुचिः । समाहितमनाश्चात्र क्रियायामसक्तसदा ॥" निभृतो मन्दभाषी । स्वस्थः प्रकृतिस्थः । समाहितमनास्तत्परः ।" इति अप० ४५५.

§ "चकारात्कर्त्राऽपि भवितव्यमिति" इति अप० ४५६.

‖ अपराह्णनिर्णयोऽपरार्के ४६६ तमे पृष्ठे विस्तरेण दर्शितः ।

---

१ मनुस्मृ० कर्मण्युपस्थिते । २.—३. १८७. । ३ क. आत्मवांश्चेत् शोक । ४ ख. रहितः सन् दोषवा ।

भास्करः। तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते॥[1]" "ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम्। मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते॥[2]" इति वचनात्। तथाऽन्यदपि श्राद्धोपयोगि कुतपसंज्ञकमुक्तं—"मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः। रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः॥ पापं कुत्सितमित्याहुस्तस्य संतापकारिणः। अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः[3]॥" इति॥ २२६॥

**युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च।**
**परिस्तृते[4] शुचौ देशे दक्षिणाप्रवणे तथा॥ २२७॥**

समान् दैवे आभ्युदयिके श्राद्धे युग्मान् समान् ब्राह्मणान् उपवेशयेत्। कथम्?—यथाशक्ति शक्तिमनतिक्रम्य। तत्र वैश्वदेवे द्वौद्वौ, मात्रादीनां तिसृणामेकैकस्या द्वौद्वौ, तिसृणां वा द्वौ,[5]। एवं पित्रादीनामेकैकस्य द्वौद्वौ, त्रयाणां वा द्वौ,। एवं मातामहादीनां च वर्गत्रयेऽपि वैश्वदेवं तन्त्रं वा, पित्र्ये पार्वणश्राद्धे,—अयुग्मान्विषमानुपवेशयेदिति संबध्यते। एतच्च परिस्तृते सर्वतः प्रच्छादिते शुचौ गोमयादिनोपलिप्ते दक्षिणाप्रवणे दक्षिणतोऽवनते देशे कार्यम्॥ २२७॥

"अयुग्मान्पित्र्ये" इति पार्वणश्राद्धाङ्गभूते वैश्वदेवेऽप्ययुग्मप्रसङ्गे इदमारभ्यते द्वौ दैव इति—

**द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा।**
**मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्॥ २२८॥**

दैवे वैश्वदेवे द्वौ ब्राह्मणौ प्राङ्मुखावुपवेश्यौ। पित्र्ये अयुग्मानित्यविशेषप्रसङ्गे विशेष उच्यते—त्रयः पित्र्ये इति पित्र्ये पित्रादिस्थाने त्रयः उदङ्मुखा उपवेश्याः। पक्षान्तरमाह—एकैकमेव वा, वैश्वदेवे पित्र्ये च एकमेकमुपवेशयेत्। संभवतो विकल्पः। मातामहानामप्येवं श्राद्धे निमन्त्रणादि "द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा।" इत्येवमन्तं[6] पितृश्राद्धवत्कर्तव्यम्। पितृश्राद्धे मातामहश्राद्धे च वैश्वदेविकं

---

१ मत्स्यपुराणे श्राद्धकल्पे २२ अध्याये श्लो० ८४. ८५। २.—तत्रैव. ८८.। ३ तत्रैव ८६, ८७। ४ क. परिश्रिते शुचौ। ५ ग. द्वौद्वौ। ६ ख. त्येवमतं पितृ। ग. त्येवमन्तव्यं पितृ।

पृथक्" *वैश्वदेवं[1]तन्त्रेण वा कर्तव्यम् । तन्त्रशब्दः समुदायवाचक इति । यदा तु द्वावेव ब्राह्मणौ लब्धौ तदा तु वैश्वदेवे पात्रं प्रकल्प्य उभयत्रैकैकं ब्राह्मणं नियुञ्ज्यात् , यथाऽऽह वासिष्ठः—यद्येकं भोजयेच्छ्राद्धे देवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् । प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे[2] ॥" इति ॥ २२८ ॥

**पाणिप्रक्षालनं दत्त्वा विष्टरार्थे कुशानपि ।**
**आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥ २२९ ॥**

तदनन्तरं वैश्वदेवार्थे ब्राह्मणहस्ते जलं दत्त्वा विष्टरार्थे कुशांश्च युग्मान् द्विगुणितानासने दक्षिणतो दत्त्वा विश्वान्देवानावाहयिष्ये इति ब्राह्मणान् पृष्ट्वा तैरावाहयेत्यनुज्ञातो "विश्वेदेवास आगत[3]...." इत्यनया ऋचा "आगच्छन्तु †महाभागा...." इत्यनेन च स्मार्तेन मन्त्रेण तानावाहयेत् । एतच्च यज्ञोपवीतिना सव्येन च प्रदक्षिणं च कार्यम् । "अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्[4] ।" इति पित्र्ये विशेषस्मरणात् ॥ २२९ ॥

**यवैरन्ववकीर्याथ भाजने सपवित्रके ।**
**शं नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ २३० ॥**
**या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।**

ततो वैश्वदेवार्थब्राह्मणसमीपे भूमिं प्रादक्षिण्येन यवैरन्ववकीर्य अनन्तरं तैजसादिभाजने सपवित्रके कुशायुग्मान्तर्हिते "शं नोदेवीरभिष्टये[5]...." इत्यनयर्चापः

* "तत्र वैश्वदेविकब्राह्मणभोजने प्रतिश्राद्धं भेदेन न्यायतः प्राप्तौ विकल्पार्थमिदं वचनं 'तन्त्रं वा वैश्वदेविकम्' इति । सामर्थ्याधीना चात्र व्यवस्था ।' इति अप० ४७७.

† "आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । येह्यत्र विहिताश्श्राद्धे सावधाना भवन्तु ते ॥"

१ क. पृथक्वैश्वदेवं तन्त्रेण । २.—११. ३०, ३१. । ३. ऋ० अ. ४, अ. ८, व. १५, ऋ. २. । ४—आ. २३२. । ५.—ऋ० अ. ७, अ. ६, व. ५, ऋ. ४. ।

क्षिप्त्वा "यवोऽसि * धान्यराजो वा" इत्यादिना मन्त्रेण यवान् ततो गन्धपुष्पाणि च क्षिप्त्वाऽनन्तरमर्घ्यपात्रपवित्रान्तर्हिते[1] ब्राह्मणहस्ते "या दिव्या आपः † पयसा...." इत्यादिना मन्त्रेण विश्वेदेवा इदं वोऽर्घ्यं इत्यर्घ्योदकं विनिक्षिपेत् ॥ २३०॥

**दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ॥ २३१ ॥**

**तथा[2]च्छादनदानं च करशौचार्थमम्बु च ।**

अथ करशौचार्थमुदकं दत्त्वा यथाक्रमं गन्धपुष्पं धूपदीपदानं कुर्यात्, तथाऽऽच्छादनदानं च। गन्धादीनां स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः । "चन्दनकुङ्कुमकर्पूरागरुपद्मकान्युपलेपनार्थम् ।" इति विष्णुनोक्तम् । पुष्पाणि च "श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥" इत्युक्तानि[3] । वर्ज्यानि च "उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च। पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥" "न कण्टकिजं ‡ कण्टकिजमपि शुक्लं सुगन्धि यत्तद्द्यात्, न रक्तं दद्यात् रक्तमपि कुङ्कुमं जलजं च दद्यात्" इत्यादीनि द्रष्टव्यानि । धूपे च विशेषो विष्णुनोक्तः—"प्राण्यङ्गं च सर्वं धूपार्थे न दद्यात् । घृतमधुसंयुक्तं गुग्गुलुं श्रीखण्डागरुदेवदारुसरलादि दद्यात्" इति । दीपे च विशेषः शङ्खेनोक्तः—"घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्[4] ॥" आच्छादनं च शुभ्रं नवमहतं सदशं दद्यादित्येतच्च सर्वं वैश्वदेवानुष्ठानकाण्डमुदङ्मुखः कुर्यात्, पित्र्यं काण्डं दक्षिणामुखः, यथाऽऽह वृद्धशातातपः—"उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः । प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानतः ॥" इति ॥ २३१ ॥ २३१॥

* "यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः । निर्णुदस्सर्वपापानां पवित्रमृषिभिस्स्मृतम् ॥"

† "या दिव्या आपः पृथिवी (पयसा) संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न अपश्शंस्योना भवन्तु ॥"

‡ इदं विष्णुस्मृतौ ६६ तमाध्याये ।

---

१ ख. पवित्रान्तर्हितेषु ब्राह्मणहस्तेषु या दिव्या । २ क. इदं पद्यार्धं नास्ति । अपरार्केऽपि इदं पद्यार्धं नास्ति । ३ ग. इत्युक्तानि उग्रगन्धा । ४ ख. वर्जयेत् । इति आच्छां ।

**अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥ २३२ ॥**

**द्विगुणांस्तु कुशान्दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ।**

**आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥ २३३ ॥**

ततो वैश्वदेवकाण्डानन्तरमपसव्यं यज्ञोपवीतं प्राचीनावीतं कृत्वा—अत्र तत इति वदता काण्डानुसमयो दर्शितः—पित्रादीनां त्रयाणाम् अयुग्मान्कुशान्द्विगुणभुग्नान् अप्रदक्षिणं वामतो विष्टरार्थमासनेषूदकपूर्वकं दत्त्वा पुनरुदकं दद्यात्—"अपः प्रदाय। द्विगुणभुग्नान्कुशान्दत्त्वा। अपः प्रदाय।" इत्याश्वलायनस्मरणात्। एतच्चायन्तयोरुदकदानं वैश्वदेवे पित्र्ये प्रतिपादनार्थं द्रष्टव्यम्। अथ "पितॄन् पितामहान् प्रपितामहान् आवाहयिष्ये" इति ब्राह्मणान्पृष्ट्वा "आवाहय" इति तैरनुज्ञातः "उशन्तस्त्वानिधीमहि........" इत्यनया ऋचा पित्रादीनावाह्य "आयन्तु नः पितरः....."* इत्यादिना मन्त्रेणोपतिष्ठेत् ॥ २३३ ॥

**यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादिपूर्ववत् ।**

यवार्थाः यवसाध्यानि कार्याणि अवकिरणादीनि तिलैः कर्तव्यानि। ततोऽर्घ्यपात्रासादनाद्याच्छादनान्तं पूर्ववत्कुर्यात्। तत्रायं विशेषः—तिलान् "अपहतासुरा रक्षांसि †...." इत्यादिना मन्त्रेण ब्राह्मणान्परितोऽप्रदक्षिणमवकीर्य राजतादिपात्रेषु त्रिष्वयुग्मकुशनिर्मितकूर्चान्तर्हितेषु "शं नो देवी-" इति मन्त्रेणापः क्षित्वा "तिलोसि‡ सोमदैवत्यो...." इत्यादिमन्त्रेण तिलान् पुष्पगन्धांश्च क्षिप्त्वा "स्वधाऽर्घ्याः" इति

* "आयन्तु नः पितरस्सोम्यासोऽग्निष्वात्ता पतिभिर्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान् ॥"

† "अपहतासुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु। अन्यत्रेतो गच्छन्तु। यत्रैषां गतं मनः ॥"

‡ "तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्नस्वधयेहि ॥"

---

१ ग. कुशान्कृत्वा। २ क. पित्रादीनां मध्ये त्रयाणाम्। ३.—४. ७.५, ६, ७.। ४ ख. पित्र्ये च प्रतिपदार्थप्रातिपादनार्थं। ५.—ऋ० अ. ७, अ. ६, व. २२, ऋ. २। ६ ग. कार्याणि अन्ववकिर। ७ ग रक्षांसि वेदिषः इत्यादि। ८ ख. ग. क्षिणमन्ववकीर्य। ९ ख न् पगन्धानिच।

ब्राह्मणानां पुरतोऽर्घ्यपात्राणि स्थापयित्वा "या दिव्या ...." इति मन्त्रान्ते "पितरिदन्तेऽर्घ्यं, पितामहेदन्तेऽर्घ्यं, प्रपितामहेदन्तेऽर्घ्यम्" इति ब्राह्मणानां हस्तेष्वर्घ्यं दद्यात्। एकैकमुभयत्र वेत्यस्मिन्नपि पक्षे पात्रत्रयं कार्यम्।

**दत्त्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥ २३४ ॥**
**पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः*।**

एवमर्घ्यं दत्त्वा तेषामर्घ्याणां संस्रवान् ब्राह्मणहस्तगलितार्घ्योदकानि पितृपात्रे गृहीत्वा दक्षिणाग्रं कुशस्तम्बं भूमौ निधाय तस्योपरि "पितृभ्यः स्थानमसि" इत्यनेन मन्त्रेण तत्पात्रं न्युब्जमधोमुखं कुर्यात्। तस्योपरि अर्घ्यपात्रपवित्राणि निदध्यात्। अनन्तरं गन्धपुष्पधूपदीपाच्छादनानि "पितरयं ते गन्धः, पितरिदं ते पुष्पम्" इत्यादिना प्रयोगेण दद्यात् ॥ २३४ ॥

**अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥ २३५ ॥**
**कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत्।**
**हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥ २३६ ॥**
**यथालाभोपपन्नेषु रौप्येषु च विशेषतः।**

अनन्तरमग्नौ करिष्यन्घृतप्लुतं घृताक्तमन्नमादाय ब्राह्मणान् पृच्छेत् "अग्नौ करिष्ये" इति। घृतग्रहणं सूपशाकादिनिवृत्त्यर्थम्। ततस्तैः "कुरुष्व" इत्यभ्यनुज्ञातः प्राचीनावीत्यग्निमुपसमाधाय मेक्षणेनादायावदानसंपदा जुहुयात् "सोमाय पितृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधा नमः" इति पिण्डपितृयज्ञकल्पेनाग्नौ हुत्वा मेक्षणमनुप्रहृत्य हुतशेषं मृन्मयवर्ज्यं यथालाभोपपन्नेषु विशेषतो

*"अधः भूम्यां न फलकादावित्यर्थः।" इति अप० ४८४.

१ ग. पुरतोऽर्घपात्राणि। २ क. पात्राणि निधायानन्तर। ३ क. प्रयोगैर्दद्यात्। ४ अप० करिष्य आदाय। ५.—मन्नमवदायावदान—इत्येकपुस्तके।

रौप्येषु पित्र्यादिभाजनेषु[1] दद्यात्—न वैश्वदेवभाजनेषु—समाहितोऽनन्यमनस्कः।

अत्र यद्यप्यग्नावित्यविशेषेणोक्तम्, तथाऽप्याहिताग्नेः सर्वाधानपक्षे औपासनाग्नेरभावात् पिण्डपितृयज्ञान्तरभाविनि पार्वणश्राद्धे विहितदक्षिणाग्नेः सन्निधानाद्दक्षिणाग्नौ,[2] —"कर्म स्मार्तं विवाहाग्नौ" इत्यस्यापवाददर्शनात्, यथाऽऽह मार्कण्डेयः—"आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः। अनाहिताग्निस्त्वौपसद अग्न्यभावे द्विजेऽप्सु वा॥" इति। अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहिताग्नेरनाहिताग्नेरप्यौपासनाग्नावेवाग्नौकरण होमः। एवमन्वष्टकादिषु त्रिष्वपि पिण्डपितृयज्ञकल्पातिदेशात्[3]। काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः, यथाऽऽहुर्गृह्यकाराः—"अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम्। काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्॥ चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते। पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि॥" अस्यार्थः "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः।"[4] इत्यष्टकाविहिताः। (१) तत्र नवम्यां यत्क्रियते तदन्वष्टक्यम्, (२) सप्तम्यां तु क्रियमाणं पूर्वेद्युः (३) मासि मासि कृष्णपक्षे पञ्चमीप्रभृतिषु यस्यां कस्यांचित्तिथावन्वष्टक्यातिदेशेन यद्विहितम् (४) अमावास्यायां पिण्डपितृयज्ञानन्तरं यद्विहितं तत्पार्वणम्, (५) स्वर्गादिकामानां कृत्तिकादिनक्षत्रेषु यद्विहितं तत्काम्यम् (६) अभ्युदयेषु पुत्रोत्पत्त्यादिषु तडागारामदेवताप्रतिष्ठादिषु च यद्विहितम् (७) अष्टम्यां च अष्टका[5] विहिता (८) एकोद्दिष्टम्—अत्रैकोद्दिष्टशब्देन सपिण्डीकरणं लक्ष्यते,[6]—तत्रैकोद्दिष्टस्यापि सद्भावात्[7], साक्षादेकोद्दिष्टे तदभावात्। अथ वा गृह्यभाष्यकारमते साक्षादेकोद्दिष्टेऽपि पाणिहोमस्य सद्भावात्साक्षादेकोद्दिष्टमेव[8]। एषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः, उत्तरेषु चतुर्षु पित्र्यब्राह्मणहस्ते[9] एव,—"निराग्निकस्यापि[10] प्रमीतपितृकस्य द्विजस्य पार्वणं नित्यमिति तस्यापि पाणावेव होमः।" "न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः॥" इति वचनात्। एवं काम्याभ्युदयिकाष्टकैकोद्दिष्टेषु[11] पाणावेव,—"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।"[12] इति मनुस्मरणात्। पाणिदत्तस्य पृथग्ग्रासप्रतिषेधश्च दृश्यते,

---

१ क. पित्र्यादिभाजनेषु। २ ख. दक्षिणाग्नौ होमः। कर्म। ३ क. कल्पप्रवेशात् काम्यादिषु। ४ आश्व० २. ४. १। ५ ख. घ. अष्टम्यां या अष्टका। ६ क. ख. ग. सपिण्डीकरणं लक्षयति। ७ ख. सद्भावात्। क. केवलं पार्वणस्य साक्षा। ग. एतेषामाद्येषु। ८ घ. सद्भावादेकोद्दिष्टमेव। ९ एतेषां। १० घ. ब्राह्मणहस्ते। निरग्नि। ११ घ. भ्युदयिकैकोद्दिष्टेषु पाणावेव। १२.—२. २१२।

यथाऽऽहुर्गृह्यकाराः—"अन्नं पाणितले दत्तं पृथगश्नन्त्यबुद्धय । पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥ यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् । एकीभावेन भोक्तव्य पृथग्भावो न विद्यते ॥" इति ॥ २३६॥

**दत्त्वाऽन्नं पृथिवीपात्रमितिपात्राभिमन्त्रणम् ॥२३७॥**
**कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।**

अन्नमोदनसूपपायसघृतादिक[1] भाजनेषु दत्त्वा "*पृथिवीतेपात्रम् " इत्यादिना मन्त्रेण पात्राभिमन्त्रण कृत्वा "इद विष्णुर्विचक्रमे"[2] इत्यनया ऋचा अन्ने द्विजाङ्गुष्ठ निवेशयेत्—तत्र च वैश्वदेवे यज्ञोपवीती "विष्णो हव्य रक्ष" इति, पित्र्ये प्राचीनावीती "विष्णो कव्य रक्ष" इति,—"विष्णो हव्यं च कव्य च ब्रूयाद्रक्षेति वै क्रमात्[3]" इति मनुस्मरणाम् ॥ २३७॥

**सव्याहृतिकां गायत्रीं मधुवाता इति त्यृचम्[4] ॥ २३८ ॥**
**जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि[5] वाग्यताः ।**

अनन्तर "विश्वेभ्यो देवेभ्य इदमन्न परिविष्टं परिवेक्ष्यमाण चातृप्तेः—†" इति यवोदकेन दैवे[6] निवेद्य, तथा पित्रे अमुकगोत्रायामुकशर्मणे इदमन्न परिविष्टं परिवेक्ष्यमाण चातृप्ते... " इति तिलोदकप्रदानेन पित्रे निवेद्य, एव पितामहाय प्रपितामहाय च निवेद्यानन्तरमापोशान दत्त्वा पूर्वोक्ताभिर्व्याहृतिभि साहिता गायत्रीं "मधुवाता ऋताय ते[7] " इति त्यृच "मधुमधुमधु" इति त्रिवार जप्त्वा "यथासुख जुषध्वम्" इति ब्रूयात्,—"सकल्प्य पितृदेवेभ्यः सावित्री मधुमज्जपः । श्राद्धो निवेद्यापोशानं जुषप्रैषोऽथ भोजनम् ॥" तथा "गायत्री त्रिः सकृद्वाऽपि जपेद्व्याहृतिपूर्विकाम् ।

---

* "पृथिवी ते पात्र द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि । स्वाहा (स्वधा) विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मामेक्षेष्ठाऽमुत्रामुष्मिँल्लोके ॥"

† यद्यपि देवानां तुष्टिः, पितृणां तृप्ति इत्येव समयः । अपि तु सर्वेषूपलब्धपुस्तकेषु उभयत्रापि तृप्तिरित्येव पठितत्वात् स एव पाठो गृहीतोऽस्माभिरपि ॥

---

१—घ. घृतादिक भोजनेषु । २.—ऋ० अ १, अ २, व. ७, ऋ २ । ३...... । ४ ख. तृ । ५ क ते च । ६ क. ग. घ तृप्तेरितिनिवेद्य । ७ ऋ० अ १, अ ५ व १८, ऋ, १, २, ३. । ५ क ख श्राद्ध निवेद्य ।

"मधुवाता...." इति त्र्यृचं मध्वित्येतत्त्रिकं तथा ॥" इति पारस्करादिवचनात् । भुञ्जीरंस्तेऽपि वाग्यताः तेऽपि[1] ब्राह्मणा वाग्यता मौनिनो भुञ्जीरन् ॥ २३८ ॥

**अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥ २३९ ॥**

**आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ।**

अन्नं भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पञ्चविधम् इष्टं यद्ब्राह्मणाय प्रेताय कर्त्रे वा रोचते, हविष्यं श्राद्धहविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकमहाश[2]ल्कैलाशुण्ठीमरीचहिङ्गुगुडशर्कराकर्पूरसैन्धवसाम्भारा[3]म्रपनसनालिकेरकदलीबदरगव्य - पयोदधिघृतपायसमधुमांसप्रभृति स्मृत्यन्तरप्रसिद्धं वेदितव्यम् । हविष्यमित्यनेनैवायोग्यस्य स्मृत्यन्तरप्रतिषिद्धस्य कोद्रवमसूरचणककुलित्थपु[4]लाकनिष्पावराजमाषकूष्माण्डवार्ताकबृहतीद्वयोपोदकीवंशाङ्करपिप्पलीवचाशतपु[5]ष्पोषरविडालवणमाहिषचार्म[6] - रक्षीरदधिघृतपायसादीनां निवृत्तिः । अक्रोधनः क्रोधहेतुसंभवेऽपि, अत्वरोऽव्यग्रश्च,—आ तृप्तेर्दद्यादिति संबन्धः । तुशब्दाद्यथा किञ्चिदुच्छिष्यते तथा दद्यात्, उच्छेषणस्य दासवर्गभागधेयत्वात्—"उच्छेषणं भूमिगतमाजिह्मस्याशठस्य च । दासवर्गस्य तत्पित्र्योर्भागधेयं प्रच[7]क्षते ॥" इति मनुस्मरणात् । तथा आ तृप्तेः पवित्राणि पुरुषसूक्तपावमानीप्र[8]भृतीनि जप्त्वा तृप्तान् ज्ञात्वा पूर्वोक्तं जपं च सव्याहृतिकाम् इत्युक्तं जपेत् ॥ २३९ ॥

**अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ॥ २४० ॥**

**तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ।**

अनन्तरं सर्ववर्णमन्नमादाय "तृप्ताः स्थ" इति तान्पृष्ट्वा "तृप्ताः स्मः" इति तैरुक्तः शेषमप्यस्ति किं क्रियताम् इति पृष्ट्वा इष्टैः सहोपभुज्यताम् इत्यभ्युपगम्य तदन्नं पितृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसन्निधौ दक्षिणाग्रदर्भान्तरितायां भूमौ तिलोदकप्रक्षेपपूर्वकं

---

१ क. वाग्यताः । पित्र्यब्राह्मणा । २ क. कालशाकमहाशल्कैला । महाशाकमहाकल्कैला —इति चैकपुस्तके । ३ ख. सैन्धवसाम्भरपनस । सैन्धवसामुद्रपनस । ४ क. कुलित्थपुलकानिष्पापा घ. कुलित्थपुलकनिष्पाव । ५ क. शतपुष्पो षविडलवण । घ. शतपुष्पोषधविडलवणा । ख. शतपुष्पोषरबिडालवण । ६ क. माहिषक्षीर । ७.—३. २४६. । ८. क. मानप्र ८ क. घ. तै । प्रत्युक्तः शेष । ९ ख. प्रकिरेत् । १० ख. ग. सर्वमन्न ।

"ये अग्निदग्धा...." इत्यनया ऋचा निक्षिप्य पुनस्तिलोदकं प्रक्षिपेत् । तदनन्तरं ब्राह्मणहस्तेषु गण्डूषार्थं सकृत्सकृदपो दद्यात् ॥ २४०॥

**सर्वमन्नमुपादाय सातिलं दक्षिणामुखः ॥ २४१ ॥**
**उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै[1] पितृयज्ञवत् ।**

पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादायाग्निसन्निधौ पिण्डान्दद्यात् । तदभावे ब्राह्मणार्थं सार्ववर्णिकमन्न*मुपादाय सतिलं तिलमिश्रं दक्षिणामुखैः उपविष्ट उच्छिष्टसन्निधौ पिण्डपितृयज्ञकल्पेन पिण्डान्दद्यात् ॥ २४१ ॥

**मातामहानामप्येवं दद्यादाचमनं ततः ॥ २४२ ॥**
**स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव च ।**

मातामहानामपि विश्वेदेवावाहनादिपिण्डप्रदानपर्यन्तं कर्म एवमेव कर्तव्यम् । अनन्तरं ब्राह्मणानामाचमनं दद्यात् । ततः "स्वस्ति ब्रूत" इति ब्राह्मणान् स्वस्ति वाचयेत् । तैश्च "स्वस्ति" इत्युक्ते "अक्षय्यमस्त्विति ब्रूत" इति ब्राह्मणहस्ते उदकदानं कुर्यात् । तैश्चास्त्वक्षय्यामिति वक्तव्यम् ॥ २४२ ॥

**दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ २४३ ॥**
**वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ।**

* "अमावास्यायामपराह्णे दक्षिणाग्निसम्बन्ध्येकमुल्मुकं "ये रूपाणि प्रतिमुञ्चमाना" इत्यृचाग्नेय्यां दिशि बहिः प्रणयति । अस्मिन्कर्मण्याग्नेय्येव प्राची भवति दक्षिणाग्निं प्रणीतमग्निं च प्रज्वाल्य दर्भैः परिस्तृणाति । दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वा आग्नेयीसंस्थानि एकैकशः पात्राणि सादयति चरुस्थालीं शूर्पमुलूखलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नेध्मं मेक्षणं कमण्डलुं च । शकटपक्षे शकटस्य दक्षिणं भागमारुह्य व्रीहिभिः पूर्णां चरुस्थालीं निमृज्य बहिः पतितान्व्रीहीनन्यत्र निधाय कृष्णाजिने उलूखलं निधाय स्थालीस्थान् व्रीहीन्

१ अप० दद्याद्धि । २ ख. ग. सर्वं कृतमन्नं । ३ ख. ग. घ. दाक्षिणामुख उच्छिष्टस ।

अनन्तरं यथाशक्ति रजतहिरण्यादिदक्षिणां दत्त्वा "स्वधां वाचयिष्ये" इत्युक्त्वा तैर्ब्राह्मणैः "वाच्यताम्" इत्यनुज्ञातः प्रकृतेभ्यः पित्रादिभ्यः मातामहादिभ्यश्च "स्वधोच्यताम्" इति स्वधाकारमुदाहरेत् ॥ २४३ ॥

**ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥ २४४ ॥**
**विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्तमिदं जपेत् ।**

ते च ब्राह्मणाः "अस्तु स्वधा" इति ब्रूयुः। तैरेवमुक्ते अनन्तरं कमण्डलुना भूमौ उदकं सिञ्चेत् । ततो "विश्वेदेवाः प्रयिन्ताम्" इति ब्रूयात् । ब्राह्मणैश्च "प्रीयन्तां विश्वेदेवाः" इत्युक्ते इदमनन्तरोच्यमानं जपेत् ॥ २४४ ॥

**दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ २४५ ॥**
**श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ।**

दातारो हिरण्यादेः नः अस्माकं कुले अभिवर्धन्तां बहवो भवन्तु । वेदाश्च वर्द्धन्तां अध्ययनाध्यापनतदर्थज्ञानानुष्ठानद्वारेण, सन्ततिश्च पुत्रपौत्रादिपरम्परया,

उलूखले ओप्य पत्नी अविवेचमवहन्ति । ततः सम्पन्नान् तण्डुलान् सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयति । अतिप्रणीताग्नेः पश्चात् "अपहतासुरा" इत्यादिमन्त्रेण स्फयेन लेखां लिखति। ततस्तां लेखां जलेनाभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तीर्य स्थालीपाकमभिघार्य तेषु दर्भेषु सादयति । अनुत्पूतमाज्यमुत्पूतं नवनीतं वा ध्रुवायां कृत्वा ध्रुवामपि तत्र सादयति । दर्भेषु दक्षित आञ्जनाभ्यञ्जनकशिपूपबर्हणानि सादयति । (स्थाल्यां परिपक्व ओदनः स्थाली पाक इत्युच्यते) (आ ईषत् अज्यतेऽनेनेति व्युत्पत्त्या कज्जलादि आञ्जनपदवाच्यम्)। (अभित सर्वमङ्गमज्यतेऽनेनेति व्युत्पत्या अभ्यङ्गसाधनमाज्यादि अभ्यञ्जनपदेनोच्यते) । (कार्पासपूर्णमासनं मृदुतरं कशिपुपदवाच्यम्) । (तथैव कार्पासपूर्णं शिरसोऽधस्ताच्छयनकाले ध्रियते यत्तदुपबर्हणपदवाच्यम्) ततः प्राचीनावीती भूत्वा सकृदाच्छिन्नेध्मं प्रणीतेऽग्नौ अभ्यादधाति । ततश्चरुं मेक्षणेनादायावदानधर्मेण जुहोति सोमाय पितृमत इत्यादिमन्त्रेण, अग्नये कव्यवाहनायेत्यादिमन्त्रेण द्वितीयामाहुतिं जुहोति । विधुरश्चेद्यजमानः होममन्त्रयोः स्वधापदस्थाने स्वाहापदं भवति । मन्त्रयोर्व्यत्यासेनपूर्वोत्तरभावश्च भवति । (पत्नीरहितो यजमानो विधुर इत्युच्यते)। ततो यज्ञोपवीती मेक्षणमनुप्रहरति । (होमसाधन

१ ख. ग. घ. हिरण्यरजतादि—२. क. पुत्रादिपरं परया

श्रद्धा च पित्र्ये कर्मण्यास्था न अस्माकं माव्यगमत् मा अपगच्छत्[1], देयं च हिरण्यादि[2] बहु अपर्यन्तम् अस्माकं भवतु,—इति जपेदित्यर्थः ॥ २४५ ॥

**इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥ २४६ ॥**
**वाजेवाज इति प्रीतः पितृपूर्वं विसर्जनम् ।**

एवं पूर्वोक्तं प्रार्थनामन्त्रं जप्त्वा उक्त्वा च प्रियाः वाचः " धन्याः वयं, भवच्च-

त्वेन गृहीतस्य पदार्थस्य होमानन्तरं कृतकार्यस्य तस्य वह्नौ प्रक्षेपणम् अनुप्रहरणमित्युच्यते ॥ ततः प्राचीनावीती पूर्वं कृताया रेखाया उपरि आस्तीर्णेषु दर्भेषु प्रथमपिण्डनिपातनस्थाने शुन्धन्तां पितर इतिमन्त्रेण जलं सिञ्चति, शुन्धन्तां पितामहा इतिमन्त्रेण द्वितीयपिण्डस्थाने, शुन्धन्तां प्रपितामहा इतिमन्त्रेण तृतीयपिण्डस्थाते । ततस्तस्यां रेखायाम् " एतत्ते पितर्ये च त्वामनु " इतिमन्त्रेण पित्रे प्रथमपिण्डं ददाति । पितृपदस्थाने पितामहेति पदमुक्त्वा प्रथमपिण्डस्याग्नेय्यां दिशि द्वितीयं, प्रपितामहपदमुक्त्वा द्वितीयस्याग्नेय्यां तृतीयम् । (इदं कर्म पिण्डदानमिति पिण्डनिर्वपणमिति चोच्यते ।) अत्र पितरो मादयध्वमितिमन्त्रेण पिण्डान्दत्ताननुमन्त्रयते । ततः सव्येनाङ्गेनोदङ्ङावृत्य शक्त्यनुसारेणोच्छ्वासप्रतिबन्धं कृत्वोच्छ्वस्य पिण्डाभिमुखो भूत्वा "अमी मदन्त पितरः" इत्यादिमन्त्रेण पुनरनुमन्त्रयते। ततः पिण्डचरुशेषं तूष्णीं प्राणभक्षं भक्षयति । (नासिकयाऽवघ्राणमात्रं प्राणभक्ष इत्युच्यते) । ततो यथा-पिण्डदानस्थाने पूर्वं जलसेचनं कृतं तथा पिण्डोपरि पुनः क्रियते "पितः अभ्यङ्क्ष्व" इति मन्त्रेण पितृपिण्डोपरि अभ्यञ्जनं समन्तात् प्राक्षिपति । एवमूहेनेतरयोः पिण्डयोः ततः " पितः अङ्क्ष्व " इति मन्त्रेणाञ्जनं ददाति इतरयो पिण्डयोः पितामहप्रपितामहयोरिति पदयोरूहेन । "एतद्वः पितरो वासः" इतिमन्त्रेण वस्त्रं ददाति । तच्च वस्त्रं दशारूपमूर्णारूपं वा। पञ्चाशद्वर्षताया ऊर्ध्वं हृदयसम्बन्धि लोम वा । "नमो वः पितर इषे" इत्यादि यजुषा "मनोऽन्वाहुवामहे " इति चतसृभिः ऋग्भिः "परेतनापितरः" इत्यृचा पिण्डान्प्रवाहयति । "अग्ने तमद्याश्वं न स्तोमैः " इत्यृचा गार्हपत्यमेति । " यदन्तरिक्षं पृथिवीमुत द्याम् " इत्यृचा गार्हपत्यमुपतिष्ठते । " वीरं मे दत्त पितरः " इतिमन्त्रेण मध्यमं पिण्डं गृहीत्वा "आधत्त पितरो गर्भम् " इत्यृचा पत्नीं प्राशयति । इतरौ पिण्डौ अप्सु अतिप्रणीतेऽग्नौ वा प्रक्षिपति । पैतृककर्मत्वादेकश आसादितानि पात्राणि कर्मसमाप्तौ मङ्गलार्थं द्विवत्पात्राण्युत्सृजति । अन्यस्य पात्रस्यैकत्वे सहायत्वाय द्वितीयं तृणं गृह्यते । दक्षिणाग्न्यतिप्रणयनादिरेतदन्तो विधिः पिण्डपितृयज्ञ इत्युच्यते " इति श्रौतपदार्थनिर्वचने ९३—९६.

---

१ क. विगच्छतु ख. ग. गच्छतु. । घ. मा विगमत् मापगच्छत् न माङ्योगे इत्यङ्भावः ।
२ क. हिरण्यव्रीहिशाल्यादि ।

रणयुगलरजःपवित्रीकृतमस्मन्मन्दिरं, शाकाद्यशनक्लेशमविगणय्य भवद्भिरनुगृहिताः वयम्" इत्येवंरूपाः प्राणिपत्य प्रदक्षिणापूर्वं नमस्कृत्य विसर्जयेत्। कथं विसर्जयेदित्याह, "वाजे वाजेऽवत वाजिनो नो...." इत्यनया ऋचा पितृपूर्वं प्रपितामहादिविश्वेदेवान्तं दर्भान्वारम्भेण "उत्तिष्ठत पितरः" इति प्रीतः सुप्रीतमनाः विसर्जनं कुर्यात्॥ २४६॥

**यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः॥ २४७॥**

**पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत्।**

यस्मिन्नर्घ्यपात्रे पूर्वमर्घ्यदानानन्तरं संस्रवाः ब्राह्मणहस्तगलिताघ्योदकानि निवेशिताः स्थापिताः तत्पितृपात्रं न्युब्जं उत्तानमूर्ध्वमुखं कृत्वा विप्रान्विसर्जयेत्। एतच्चाशीर्मन्त्रजपादूर्ध्वं "वाजे वाजे...." इत्यतः प्राक् द्रष्टव्यम्,—कृत्वा विसर्जयेदिति क्त्वाप्रत्ययश्रवणात्॥ २४७॥

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्॥ २४८॥**

**ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह।**

अनन्तरमासीमान्तं ब्राह्मणाननुव्रज्य तैः "गम्यताम्" इत्यनुज्ञातः तान्प्रदक्षिणीकृत्य प्रतिनिवृत्तः पितृसेवितं श्राद्धशिष्टमिष्टैः सह भुञ्जीत। नियम एवायं न परिसंख्या। मांसे तु यथारुचीति "द्विजकाम्यया" इत्यत्रोक्तम्। यस्मिन्दिने श्राद्धं कृतं तत्संबन्धिनीं रात्रिं भोक्तृभिर्ब्राह्मणैः सह कर्ता ब्रह्मचारी भवेत्। तुशब्दात्पुनर्भोजनादिरहितोऽपि भवेत्, "दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम्। रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत्॥ पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्। दानं प्रतिग्रहो होमं श्राद्धभुक्त्वष्ट वर्जयेत्॥" इति वचनात्॥ २४८॥

एवं पार्वणश्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह—

**एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन्॥ २४९॥**

---

१ क. चरणकमलरजः। घ. चरणकमलयुगरजः। २. —ऋ०. अ. ५, अ. ४, व. ५, ऋ. ८.। ३ क. प्रीतः सुखी। ४ क. अर्घपात्रे। ५ ख. ग. सदुत्तानं। घ. तद्वत्तानं,। ६ क. प्रतिनिवृत्य। ७ आ. १७९.। ८ अप० प्रदक्षिणं कृत्वा।

यजेत दधिकर्कन्धुमिश्रान्पिण्डान्यवैः क्रियाः ।

वृद्धौ पुत्रजन्मादिनिमित्ते श्राद्धे एवमुक्तेन प्रकारेण पितॄन्यजेत पूजयेत् । तत्र विशेषमाह — प्रदक्षिणावृत्कः इति । प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्यस्यासौ प्रदक्षिणावृत्कः प्रदक्षिणप्रचार इति यावत् । नान्दीमुखानिति पितॄणां विशेषणम्। अतश्चाऽऽवाहनादौ "नान्दीमुखान्पितॄनावाहयिष्ये" "नान्दीमुखान् पितामहान्" इत्यादिप्रयोगो द्रष्टव्यः । कथं यजेतेत्याह—दधिकर्कन्धुमिश्रानिति । कर्कन्धुर्बदरीफलं, दध्ना बदरीफलैश्च मिश्रान् पिण्डान्दत्त्वा,—यजेतेति संबध्यते । तिलसाध्याः सर्वाः क्रिया यवैः कर्तव्याः । अत्र च ब्राह्मणसंख्या दर्शितैव "युग्मान्दैवे यथाशक्ति[1]" इत्यत्र। प्रदक्षिणावृत्कादिपरिगणनमन्येषामपि स्मृत्यन्तरोक्तानां विशेषधर्माणां प्रदर्शनार्थम्, यथाऽऽहाश्वलायनः—"*अथाभ्युदयिके युग्मा ब्राह्मणाः अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या[2] नान्दीमुखान् पितॄनिमाँल्लोकान्प्रीणयाहिनः स्वाहेतियवावपनम् । विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इदं वोऽर्घ्यमिति यथालिङ्गमर्घ्यदानम्। पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति। "मधु वाता ऋताय ते...." इति त्यृचः स्थाने "उपास्मै गायत...." इति पञ्च मधुमतीः श्रावयेत्, अक्षं न मीमदन्तेतिषष्ठीम् । आचान्तेषु भुक्ताशयान्

* "अथाऽऽभ्युदयिके नान्दीमुखाः पितर एकैकस्य युग्मा ब्राह्मणा अमूलदर्भाः प्रदक्षिणमुपचारो यवैस्तिलार्थः प्राङ्मुखो यज्ञोपवीती कुर्यादृजून्दर्भानासनं दक्षिणतो दद्यादर्घ्यपात्राणि प्राक्संस्थानि स्युः । यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्यानान्दीमुखानिमाँल्लोकान्प्रीणयाहि नः स्वाहेति यवावपनं नान्दीमुखाः पितरः प्रियन्तामिति यथालिङ्गं सकृदर्घ्यं निवेद्य नान्दीमुखाः पितर इदं वोऽर्घ्यमिति प्रत्येकं विगृह्य दत्त्वाऽनुमन्त्रणं द्विर्द्विर्गन्धादि दद्यात् अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति पाणिषूक्तवद्धोमस्तृप्तेषूपास्मै गायता नर इति पञ्चमधुमतीरक्षन्नमीमदन्तेति श्राव्येदनाचान्तेषु भुक्ताशयानुपलिप्य प्रागग्रान्दर्भानास्तीर्य पृषदाज्यमिश्रेण भुक्तशेषेणैकस्य द्वौ द्वौ पिण्डान्दद्यात् । पूर्वेण मन्त्रेण नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा यथालिङ्गमन्यदुदकेनानुमन्त्रणादीच्छन्ति नेहपिण्ड इत्यन्ये। सर्पिषि दध्यानयति एवमेतत्पृषदाज्यमाह सम्पन्नमितिविसृजेत् ॥" इति (आश्वालायनगृह्यपरिशिष्टे २. १९.)।

---

१ आ. २२७. । २ क. प्रत्तपुष्ट्या । ग. पृक्तः पुष्ट्या । घ. प्रत्तः पुष्ट्या ।

गोमयेनोपलिप्य प्राचीनाग्रान्दर्भान्संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्....'' इत्यादि। यद्यपि पितॄन्यजतेति सामान्येनोक्तम्, तथाऽपि श्राद्धत्रयं क्रमश्च स्मृत्यन्तरादवगन्तव्यः, यथाऽऽह शातातपः—''मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मतामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥'' इति ॥२४९॥

**एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥ २५० ॥**

**आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ।**

*एकोद्दिष्टम् एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोदिष्टमिति कर्मनामधेयम्। ''शेषं पूर्ववदाचेरत्''[3] इत्युपसंहारात् पार्वणसकलधर्मप्राप्तौ विशेषोऽभिधीयते—देवरहितं वैश्वदवरहितम् एकार्घ्यपात्रमेकदर्भपवित्रकं च आवाहनाग्नौकरणहोमेन च रहितम्। अपसव्यवत् प्राचीनावीतब्रह्मसूत्रवत्। अनेनानन्तरश्लोकोक्ताभ्युदयिके यज्ञोपावीतित्वं सूचयति ॥ २५० ॥

किं च—

**उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ॥ २५१ ॥**

**अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ।**

यदुक्तं ''स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव च।[7]'' इति तत्राक्षय्यस्थाने उपतिष्ठतामिति वदेत्। विप्रविसर्जने कर्तव्ये ''वाजे वाजे ....'' इति जपानन्तरं दर्भान्वारम्भेण ''अभिरम्यताम्'' इति ब्रूयात्। ते च ''अभिरताः स्मः'' इति ब्रूयुः, हेति प्रशिद्धौ, शेषं पूर्ववदिति यावत्। एतच्च मध्याह्ने कर्तव्यम्, यथाऽऽह दे-

---

* एकोद्दिष्टमुक्तं तच्च त्रिविधम्—नवं, मिश्रं, पुराणं च। तत्रैकादशाहान्तं नवम्। तदूर्ध्वमासंवत्सरात् मिश्रम्। तत उत्तरं पुराणम्। नवमिश्रादिविषया अपरार्के प्रपञ्चिताः ६२१ तमे पृष्ठे द्रष्टव्याः।

---

१ ख. देव। २ क. त्वपसव्यवत्। ३ आ. २५४.। ४ क. विधीयते। ५ ख. विश्वेदेव। ६ ख. घ. अनेनानन्तरोक्ता। ७ आ. २४३.। ८ ख. ग. घ. प्रासिद्धम्।

वलः—"पूर्वाह्ने दैविकं कर्म अपराह्ने तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥" इति। "भुञ्जीत पितृसेवितम्।" इति एकोद्दिष्टविशेषे निषेधो दृश्यते। "नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत्। दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन"॥ इति। नवश्राद्धं तु दर्शितम्—"प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते॥" ॥ २५१-॥

सपिण्डीकरणमाह—

**गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम्॥ २५२॥**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्[2]।**
**ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्॥ २५३॥**
**एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि *।**

गन्धोदकतिलैर्युक्तं पात्रचतुष्टयम् अर्घ्यसिद्ध्यर्थं पूर्वोक्तविधिना कुर्यात्। तिलैर्युक्तं पात्रचतुष्टयं वदता पितृवर्गे चत्वारो ब्राह्मणा दर्शिताः। वैश्वदेवे द्वौ स्थितावेव। तत्र प्रेतपात्रोदकं किञ्चिदवशेषं त्रिधा विभज्य पितृपात्रेषु सेचयेत्। "ये समानाः समनस...." इति द्वाभ्यां मन्त्राभ्याम्। शेषं विश्वेदेवावाहनादिविसर्जनान्तं पूर्ववत् पार्वणवदाचरेत्। प्रेतार्घ्यपात्रावशिष्टोदकेन प्रेतस्थानब्राह्मणहस्तेऽर्घ्यं दत्त्वा शेषमेकोद्दिष्टवत्समापयेत्। पित्र्येषु त्रिषु पार्वणवदेव। एतत्सपिण्डीकरणमनन्तरोक्तमेकोद्दिष्टं च ततः प्रागुक्तं स्त्रिया अपि मातुरपि कर्तव्यम्। एवं वदता पार्वणे मातृश्राद्धं पृथक्कर्तव्यमित्युक्तं भवति।

अत्र प्रेतशब्दं पितुः प्रपितामहविषयं केचिद्वर्णयन्ति, तस्य त्रिष्वन्तर्भावेन

* गन्धैश्चन्दनादिभिरुदकेन तिलैश्च युक्तं पात्रचतुष्टयं प्रेतादिभ्योऽर्घ्यं दातुं कुर्यात्। तत्र प्रेतायार्घ्यं दत्त्वा तत्पात्रस्थं जलं पितामहादिपात्रेषु त्रिषु 'ये समानाः' इति द्वाभ्यामनुष्टुब्भ्यां, प्रजापतिदृष्टाभ्यां यथाक्रमं पितृजीवदेवताभ्यां प्रसिञ्चेत्। शेषं तु कर्म ब्राह्मणनिमन्त्रणादि पार्वणवदाचरेत्। एतदुक्तप्रकारं पितामहादिदैवत्यं पार्वणं, प्रेतदेवत्यं चैकोद्दिष्टं श्राद्धं सपिण्डीकरणसंज्ञकं वेदितव्यं स्त्रिया अपि चैतत्कार्यम्। न पुनः पुरुषस्यैव।" इति अप० ५२८.

१ आ. २५४.। २ ख. सिञ्चयेत्।

सपिण्डीकरणोत्तरकालं पिण्डदानादिनिवृत्त्युपपत्तेः। समनन्तरमृतस्य तूत्तरत्र पिण्डोदकदानानुवृत्तेरन्तर्भावो[1] न युक्तः। अत एवाऽऽह यमः,—"यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते ॥" इति। प्रकर्षेण इतः गतः[2] प्रेत इति चतुर्थेऽपि प्रेतशब्दोपपत्तेः। प्रेतेभ्य एव निपृणीयात्" इति च प्रयोगदर्शनात्। अपि च "सापिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत्। पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेत् ॥" इति सपिण्डीकरणोत्तरकालं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते। स चानन्तरमृतस्य न संभवति, अमावास्यादौ श्राद्धादिविधानात् "सपिण्डता तु पुरुषे सप्तमे विनिवर्तते[3]।" इत्येतदपि वचनं चतुर्थस्य त्रिष्वन्तर्भाव एव घटते, चतुर्थस्य पिण्डत्रयव्यापित्वं पञ्चमस्य पिण्डद्वयव्यापित्वं षष्ठस्यैकपिण्डव्यापित्वं सप्तमे निवृत्तिरिति, पितृपात्रेष्वित्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे घटते नान्यथा, पितामहप्रमुखत्वात्[4]। तस्मात्पितृपात्रेषु तत्प्रेतपात्रं प्रसेचयेदिति पितुः प्रपितामहपात्रं पित्रादिपात्रेषु सेचयेदिति। तदयुक्तम्। न ह्यत्र पिण्डसंयोजनमुत्तरत्र पिण्डदानादिनिवृत्तिप्रयोजनकम्[5], अपि तु पितुः[6] प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थम्। प्रेतत्वं च क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था, यथाऽऽह मार्कण्डेयः—"प्रेतलोके तु वसतिर्नृणां[7] वर्षं प्रकीर्तिता। क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन ॥" इति। पितृत्वप्राप्तिश्च वस्वादि श्राद्धदेवतासंबन्धः। प्राक्तनैकोद्दिष्टसहितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते,—"यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश। प्रेतत्वं[8] सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥" तथा "चतुरो निर्वपेत्पिण्डान्पूर्वं तेषु समापयेत्[9]। ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥" इत्यादिवचनात्। "यः सपिण्डीकृते प्रेतम्" इत्यनेनापि पृथगेकोद्दिष्टविधानेन पिण्डदाननिषेधात्पार्वणविधानेन सह पिण्डदानमवगम्यते। एतच्च सांवत्सरिकपाक्षिकैकोद्दिष्टविधानेनायोपपाद्यते[10]। यदपि "पुनः प्रेतं न निर्दिशेत्" इति तदपि प्रेतशब्दं नोच्चारयेत्, अपि तु पितृशब्दमेवेत्येवमर्थम्। न च प्रकर्षगमनात्तत्रैव प्रेतशब्दः यतो विशिष्टदुःखानुभवावस्था प्रेतशब्देन रूढ्याऽभिधीयत इत्युक्तम्। योऽपि प्रमीतमात्रे

---

१ क. दानानुपपत्तेरन्त। २ ख. ग. घ. पुस्तकेषु गतः इति नास्ति। ३ मनुः—५. ६०। ४ ख. प्रपितामहप्र०। ग. पितृपितामहप्र०। ५ ख. प्रयोजनं। ६ क. योजकमपि तु प्रेतत्व। ७ क. प्रेतलोकेषु वसति। ८ क. षोडश। पिशाचत्वं स्थिरं। ९ घ. समानयेत्। क. ख. समावसेत्। १० क. विधानेननापाद्यते। ख. विधानायोपपाद्यते। घ. विधानेनोपपद्यते।

प्रेतशब्दप्रयोगः सोऽपि भूतपूर्वगत्या "सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।" इति प्रथमस्य पिण्डस्य चतुर्थव्यापित्वात् द्वितीयस्य पञ्चमव्यापित्वात् तृतीयस्य षष्ठव्यापित्वात् सप्तमे विनिवर्तत इत्येवमपि घटते। अपि च निर्वाप्यपिण्डान्वयेन न सापिण्डयम्—अव्यापकत्वात्, अपि त्वेकशरीरावयवान्वयेनेत्युक्तम्। पितृशब्दश्च प्रेतत्वनिवृत्त्या श्राद्धदेवताभूयङ्गतेषु[1] वर्तत इति पितृपात्रेष्वित्यविरुद्धम्[2]। तस्मादनन्तरमृतपात्रोदकस्य तत्पिण्डस्य च पितृपात्रेषु[3] तत्पिण्डेषु च संसर्जनमिति स्थितम्॥ आचार्यस्तु परमतमेवोपन्यस्तवान्॥

एतच्च पितुःसापिण्डीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यम्। पितरि प्रेते पितामहे प्रपितामहे वा जीवति सापिण्डकिरणं नास्त्येव,—"व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता।" इति वचनात्। यत्तु मनुवचनं—"पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः। पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्॥" इति, तदपि शब्दप्रयोगनियमाय[4] न पिण्डद्वयदानार्थम्। कथम्?—ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।" "पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः।" सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः। पक्षद्वयेऽपि कथं निर्वपेदित्याह—"पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्।" इत्याद्यन्तग्रहणेन सर्वत्र पितृभ्यः, पितामहेभ्यः, प्रपितामहेभ्य इत्येवं प्रयोगः, न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वाऽन्तत्वम्। अतश्च पित्रादिशब्दानां संबन्धवचनत्वात्[5] "ध्रियमाणे पितरि पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति, पितामहे ध्रियमाणे पितामहस्य पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति। अतः पिण्डपितृयज्ञे "शुन्धन्तां पितरः" इत्यादिमन्त्राणामूहो न भविष्यति[6]। यदपि विष्णुवचनं "यस्य पिता प्रेतः स्यात्स पितृपिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्" इति, तस्यायमर्थः—पितामहे ध्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय पितुर्यः पितामहस्तत्पराभ्यां द्वाभ्यां दद्यात्। पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति। प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति। शब्दप्रयोगनियमस्तु[7] पूर्वोक्त एव।

---

१ ख. ग. श्राद्धदेवतात्वमुपगतेषु। २ घ. रुद्धम्। अनन्तराचार्येण पूर्वपक्षद्वारेण परमतं दर्शितामित्यर्थः। मृतपात्रोदकस्य। ३ घ. स्य च तत्पात्रेषु तत्पिण्डेषु च संवर्जनमिति। ४ ख. तदपि पितृशब्दप्रयोग। ५ ख. सम्बन्धिवचन। ६ ख. न भवति। ७ घ. दद्यादिति। यद्वा शब्दप्रयोग।

एवं गोब्राह्मणादिहतस्यापि सपिण्डीकरणाभावो वेदितव्यः, यथाऽऽह कात्यायनः—"ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥" इति गोब्राह्मणहतस्य पितुः सपिण्डी[1]करणसंभवे तमुल्लंघ्य पितामहादिभ्यः पार्वणविधानमनुप[2]पन्नमिति सपिण्डीकरणाभावोऽवगम्[3]यते। [4]स्मृत्यन्तरेऽपि "ये नराः संततिच्छिन्ना नास्ति तेषां सपिण्डता। न चैतैः सह कर्तव्यान्येकोद्दिष्टानि षोडश॥" इति॥ मातुः [5]सपिण्डनादौ गोत्रे विप्रतिपत्तिः भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति—उभयत्र वचनदर्शनात्—"स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे। स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया॥" इत्यादिभर्तृगोत्रविषयं वचनं, "पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः। जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम्॥" इत्यादिपितृगोत्रविषयम्। एवं विप्रतिपत्तावासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव—तत्र तत्र विशेषवचनात् दानस्यानिवृत्तेश्च, ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथन्तरसामवत् विकल्प एव। तत्र च "येनास्य पितरो याता येन याताः पितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति॥" इति वचनात् वं[6]शपरम्परायातसमाचारेण व्यवस्था। एवंविधविषयव्यतिरेकेणास्य वचनस्य विषयान्तराभावात्। यत्र पुनः शास्त्रतो न व्यवस्था, नाप्याचारतस्तत्र "आत्मनस्तुष्टिरेव वा" इति वचनादात्मनस्तुष्टिरेव व्यवस्थापिका—यथा "गर्भाष्टमेऽष्टमे वाब्दे" [7] इति। मातुः सपिण्डीकरणेऽपि विरुद्धानीव वाक्यानि दृश्यन्ते, तत्र पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्। तथा भर्त्राऽपि भार्याया[8]ः स्वमात्रादिभिः सह सपिण्डीकरणं कर्तव्यमिति पैठीनसिराह—"अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥" इति। पत्या सह सपिण्डीकरणं यम आह—"पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः। सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः॥" इति। उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तं "पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः। मातुर्मातामहे तद्वदेषा[9] कार्या सपिण्डता॥" तथा "पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः। माता मातामहे तद्वदित्याह भग-

१ करणासं। २ ग. विधानमुपपन्नम्। ३ क. सपिण्डीकरणाभावो न गम्यते। ४ क. घ. स्मृत्यन्तर इत्यारभ्य षोडशेतीत्यन्तं नास्ति। ५ ख. घ. पिण्डदानादौ। ६ ख. घ. वंशपरंपरया तत्समाचर णेन। ७ आ. १४.। ८ क. तथाऽपि भर्त्रा भार्यायाः। ९ क. तद्वदेष कार्यासपिण्डता।

वान् शिवः ॥" इत्येवंविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्व-मात्रैव सापिण्ड्यं कुर्यात् । अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात् । आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव। ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात् । अत्रापि यदि नियतो वंशसमाचारस्तदानीं तथैव कुर्यात् । वंशसमाचारोऽप्यनियतश्चेत्तदा "आत्मनस्तुष्टिरेव च" इति यथारुचि कुर्यात् । तत्र च येन केनापि मातुः सापिण्ड्येऽपि । यत्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितम् "अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥" इति तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम् । अन्यत्र पतिना सहेति पतिसापिण्ड्ये तदंशभागित्वात् । मातामहसापिण्ड्ये तु तदंशभागित्वात्तेनैव सह, यथाऽऽह शातातपः—"एकमूर्तित्वमायाति सपिण्डीकरणे कृते । पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी ॥" इति । एवं सति मातामहेन मातुः सापिण्ड्ये मातामहश्राद्धं पितृश्राद्धवन्नित्यमेव । पत्या पितामह्या वा मातुः सापिण्ड्ये मातामहश्राद्धं न नित्यम् । कृते अभ्युदयः अकृते न प्रत्यवाय इति निर्णयः ॥ २५३ ॥ २५३· ॥

***अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥ २५४ ॥**
**तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ।**

संवत्सरादर्वाक्सपिण्डीकरणं यस्य कृतं तस्य तदुद्देशेन प्रतिदिवसं प्रतिमासं वा यावत्संवत्सरं शक्त्यनुसारेणान्नमुदकुम्भसहितं ब्राह्मणाय दद्यात् । अर्वाक्संवत्सरादिति वदता सपिण्डीकरणं संवत्सरे पूर्णे प्राग्वेति दर्शितम्, यथाऽऽहाश्वलायनः—"अथ सपिण्डीकरणं संवत्सरान्ते द्वादशाहे वा" इति । कात्यायनोऽ-

---

* "संवत्सरादर्वागिति संबन्धः । वर्षमित्यत्यन्तसंयोगे द्वितीया । यस्यापि प्रेतस्य संवत्सरपूर्तेः पूर्वमेव द्वादशाहादौ सपिण्डीकरणं भवेत्, तस्यापि संवत्सरं यावत् सोदकुम्भमन्नं द्विजे दद्यात् । तस्येति षष्ठी चतुर्थ्यर्थे । द्विजन्मने इति चतुर्थी सम्यक्संप्रदानार्था । दद्यात्संवत्सरं द्विज इति पाठे सप्तमी यथार्था । श्राद्धे ब्राह्मणस्याहवनीयार्थत्वात् । संवत्सरमिति चात्यन्तसंयोगे द्वितीया । अतः संवत्सरं यावत्प्रत्यहमन्नं देयम् ।" इति अप० ५४२.

---

१ ख. घ. त्येवं विविधेषु । २ ग. मृतायाम् । ३ क. मृते । ४ अप० दद्याद्वर्षं द्विजन्मने । ५.—१. ३. ११. ।

प्याह—"ततः संवत्सरे पूर्णे सपिण्डीकरणं[1] त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते तदा।" इति द्वादशाहे त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वेति चत्वारः पक्षा दर्शिताः। तत्र द्वादशाहे पितुः सपिण्डीकरणं साग्निकेन कार्यम्। सपिण्डीकरणं विना पिण्डपितृयज्ञासिद्धेः,—"साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान् भवेत्। द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः॥" इति वचनात्। निरग्निकस्तु त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वा कुर्यात्। यदा प्राक्संवत्सरात्सपिण्डीकरणं, तदा षोडश श्राद्धानि कृत्वा सपिण्डीकरणं कार्यम्, उत सपिण्डीकरणं कृत्वा स्वस्वकाले तानि कर्तव्यानि इति संशयः। उभयत्रापि[2] वचनदर्शनात्—"श्राद्धानि षोडशा दत्त्वा नैवं[3] कुर्यात्सपिण्डताम्[4]। श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्॥" इति। षोडशश्राद्धानि च—"द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके। श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः॥" इति दर्शितानि। तथा "यस्यापि वत्सरादर्वाक्सपिण्डीकरणं भवेत्। मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्॥" इति। तत्र सपिण्डीकरणं कृत्वा स्वकाल एव तानि कर्तव्यानीति प्रथमः कल्पः—अप्राप्तकालत्वेन प्रागनधिकारात्। यदपि वचनं "षोडश श्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात्प्रागपि कर्तव्यम्" इति सोऽयमापत्कल्पः। यदा त्वापत्कल्पत्वेन प्राक्सपिण्डीकरणात् प्रेतश्राद्धानि करोति, तदैकोद्दिष्टविधानेन कुर्यात्। यदा तु मुख्यकल्पेन स्वकाल एव करोति तदाब्दिकं श्राद्धं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात्,—"सपिण्डीकरणादर्वाक्कुर्वञ्छ्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥ सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि॥" इति स्मरणात्॥

एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वप्येकेनैव कृतेनालं न सर्वैः कर्तव्यम्,—"नवश्राद्धं सपिण्डत्वश्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥" इति मनुस्मरणात्। इदं च प्रेतश्राद्धसहितं सपिण्डीकरणम्। असन्यासिनां पुत्रादिभिर्नियमेन कर्तव्यम्, प्रेतत्वविमोक्षार्थत्वात्। संन्यासिनां तु न कर्तव्यम्, यथाऽऽहोशना[5]—"एकोद्दिष्टं न कुर्वीत

१ ख. ग. करणं भवेत्। त्रिपक्षे वा यदा चार्वाग्वृद्धिरापद्यते तदेति। २ उभयथा व। ३.—३.११.। ३ क. शा दत्त्वा न तु कुर्या। ४ क. र्यात्सपिण्डनम्। श्राद्धा। ५ यथाऽऽहशङ्खः—"एकोद्दिष्टं न कुर्वीत।

यतीनां चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः । त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥ " इति ।

पुत्रासंनिधाने येन सगोत्रादिना दाहसंस्कारः कृतस्तेनैवाऽऽदशाहात्प्रेतकर्म[1] कर्तव्यम् ,—"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा[2] पुमान् । प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥" इति स्मरणात् । शूद्राणामप्येतत्कर्तव्यममन्त्रकं द्वादशेऽह्नि "एवं सपिण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽह्नि ।" इति विष्णुस्मरणात् । सपिण्डीकरणादूर्ध्वं सांवत्सरिकपार्वणादीनि पुत्रेण[3] नियमेनैव कार्याणि अन्येषामनियतानि ॥ २५४- ॥

एकोद्दिष्टकालानाह[4]—

## मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ॥ २५५ ॥
## प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ।

मृतेऽहनि प्रतिमासं संवत्सरं यावदेकोद्दिष्टं कार्यम् । सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरमेवम् एकोद्दिष्टं[5] कर्तव्यम् । आद्यं सर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्टमेकादशेऽहनि ॥

मृतदिवसापरिज्ञाने तच्छ्रवणदिवसे अमावास्यायां वा कार्यम् ,—" अपरिज्ञाते मृतेऽहनि अमावास्यायां श्रवणदिवसे वा ।" इति स्मरणात् । अमावास्यायामिति गमनमाससंबन्धिन्यमावास्यायाम् ,—" प्रवासदिवसे देयं तन्मासेन्दुक्षयेऽपि वा ।" इति स्मरणात् । मृतेऽहनीत्यत्राहिताग्नेर्विशेषो जातूकर्ण्येनोक्तः—" ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृतेऽहन्येव तद्भवेत् । अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥" इति । तत्र त्रिपक्षादर्वाग्यत्प्रेतकर्म तद्दाहदिवसादारभ्याऽऽहिताग्नेः कार्यं, त्रिपक्षादूर्ध्वं यच्छ्राद्धं तन्मरणदिवस एवेत्यर्थः । अनाहिताग्नेस्तु सर्वं मृताह एव । " आद्यमेकादशेऽहनि" इत्याशौचोपलक्षणमिति केचित् ,—" शुचिना कर्म कर्तव्यम्" इति शुद्धेरङ्गत्वात् ,

---

१ ख. ग. आदशाहान्तं तत्प्रेतकर्म । २ ख. घ. सगोत्रो वा स्त्री दद्याद्यदि । ३ ख. घ. पुत्रस्य नियमेनैव । ४ ख. ष्ट कालमाह । ५ ख. ष्टमेव ।

"अथाऽऽशौचापगमे...." इति सामान्येनोपक्रम्यैकोद्दिष्टस्य विष्णुना विहितत्वाच्च । तदयुक्तम्,—"एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् । चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् ॥" इति पैठीनसिस्मरणविरोधात्, "आद्य श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥" इति शङ्खवचनविरोधाच्च । सामान्योपक्रमं विष्णुवचनं दशाहाशौचविषयमपि घटते । "प्रातिसंवत्सरं चैवम्" इति प्रतिसंवत्सरं मृतेऽहनि एकोद्दिष्टमुपदिष्टं योगीश्वरेण । तथा च स्मृत्यन्तरम्,—"वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत् ॥" इति । यमोऽप्याह—"सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥" इति । व्यासस्तु पार्वणं प्रतिषेधयति—"एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद्भवेच्च पितृघातकः ॥" इति । जमदग्निस्तु पार्वणमाह—"आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥" इति । शातातपोऽप्याह—"सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः ॥" इति ।

एवं वचनविप्रतिपत्तौ दाक्षिणात्या ह्येवं व्यवस्थामाहुः—"औरसक्षेत्रजाभ्यां मातापित्रोः क्षयाहे पार्वणमेव कर्तव्यं, दत्तकादिभिरेकोद्दिष्टम्" इति, जातूकर्ण्यवचनात्—"प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश॥" इति ॥ तदसत् । न ह्यत्र क्षयाहवचनमस्ति, अपि तु प्रत्यब्दमिति । सन्ति च क्षयाहव्यतिरिक्तानि प्रत्यब्दश्राद्धानि अक्षय्यतृतीयामाघीवैशाखीप्रभृतिषु । अतो न क्षयाहविषयपार्वणैकोद्दिष्टव्यवस्थापनयाऽलम् ।

यत्तु पराशरवचनं "पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेकगोत्राणामेकस्यैव मृतेऽहनि ॥" इति, तदपि न व्यवस्थापकं, यस्मादयमर्थः—देवत्वं गतस्य सपिण्डीकृतस्य पितुः सर्वत्रौरसेन त्रिपौरुषं पार्वणं कार्यम्, अनेकगोत्राणां भिन्नगोत्राणां मातुलादीनां क्षयेऽहनि यच्छ्राद्धं तदेकस्यैवैकोद्दिष्टमेवेति । किं च स-

१ वि.—२१, १. । २ ख. सामान्येन सर्वेषां वर्णानामुपक्रम्य । ३ क. विष्णवभिहितत्वा । ४ ख. प्रतिसंवत्सरं सुतः । मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं । ५ क. कुरुते तु यः । अ । ६ क. आपाद्य सहापिण्डत्वं ।

पिण्डीकरणादूर्ध्वमप्येकोद्दिष्टमेव कर्तव्यमौरसेनापीत्युक्तं पैठीनसिना—" एकोद्दिष्टं हि कर्तव्यमौरसेन[1] मृतेऽहनि । सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम् ॥ " इति ॥

उदीच्याः पुनरेवं व्यवस्थापयन्ति—"अमावास्यायां भाद्रपदकृष्णपक्षे त्वामृ[2]-ताहे पार्वणम्, अन्यत्र मृताहे एकोद्दिष्टमेव" इति,—"अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा यदि[3]। पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन ॥" इति स्मरणात् ॥ तदपि नाद्रियन्ते वृद्धाः—अनिश्चितमूलेनानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनानाममावास्याप्रेतपक्षमृताहविषयत्वेनातिसंकोचस्यायुक्तत्वात् सामान्यवचनानर्थक्याच्च । तत्र हि सामान्यवचनस्य विशेषवचनेनोपसंहारः, यत्र सामान्यविशेषसंम्बन्धज्ञानेन वचनद्वयमर्थवत् । यथा " सप्तदशसामिधेनीरनुब्रूयात् " इ[4]त्यनारभ्याधीतस्य विकृतिमात्रविषयस्य सप्तदशवाक्यस्य सामिधेनीलक्षणद्वारा सं[5]बन्धेनार्थवतः मित्रविन्दादिप्रकरणपठितेन साप्तद[6]श्यवाक्येन मित्रविन्दाद्यधिकारापूर्वसम्बन्धबोधना[7]र्थवता मित्रविन्दादिप्रकरणम् उपसंहारः । इह तु द्वयोर्मृताहमात्रविषयत्वान्नार्थवत्त्वेति । अतोऽत्र पाक्षिकैकोद्दिष्टनिवृत्तिफलकतया पार्वणनियमविधानं युक्तम्, न चैकोद्दिष्टवचनानां मातापितृक्षयाहविषयत्वेन पार्वणवचनानां च तदन्यक्षयाहविषयत्वेन व्यवस्था युक्ता, उभयत्रापि मातापितृसुतग्रहणस्य विद्यमानत्वात्,—"सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥" इति, तथा "आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥ " इति ।

यदपि कैश्चिदुच्यते—"मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यान्निरग्निरेकोद्दिष्टम्" इति,—" वर्षे वर्षे सुतः कुर्यात्पार्वणं योऽग्निमान् द्विजः । पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि ॥" इति सुमन्तुस्मरणात् ॥ तदपि सत्प्रतिपक्षत्वादुपेक्षणीयम्—"बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव[8] च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् ॥ " इतिस्मरणात् ।

तत्रैवं निर्णयः,—संन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम्,—

---

१ क. रसेनऽक्षयेऽहनि । २ ख. कृष्णपक्षे वा मृता । ३ ख. थ वा पुनः । पार्वणं । ४ क. दित्यारभ्याधीतस्य । ५ ख. लक्षणद्वारसम्बन्धेना । ६ क. साप्तदश्य वाक्यस्य । ७ ख. बोधेनार्थवत्तामित्रविन्दा । ८ क. काग्नय एव वा । तेषां ।

"एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह। सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ॥" इति प्रचेतस्स्मरणात्। अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव,—"अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनः।" इत्यादिवचनस्योक्तरीत्या नियमपरत्वात्। अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव। तत्रापि[1] वंशा वंशसमाचारव्यवस्थायां सत्यां व्यवस्थिते[2], असत्यामैच्छिक इत्यलमतिप्रसङ्गेन ॥ २५५ ॥

नित्यश्राद्धव्यतिरिक्तसर्वश्राद्धशेषविधिरारभ्यते[3]—

**पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥ २५६ ॥**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्।**

पूर्वदत्तानां पिण्डानां पिण्डस्य वा *प्रतिपत्तिरियं—गवे, अजाय, ब्राह्मणाय वा तदर्थिने पिण्डान्दद्यात्, अग्नावगाधे जले वा प्राक्षिपेत्। किं च सत्सु विप्रेषु भोजनदेशावस्थितेषु द्विजोच्छिष्टं न मार्जयेत् नोद्वासयेत् ॥ २५६ ॥

भोज्यविशेषेण फलविशेषमाह—

**हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥ २५७ ॥**
**मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः।**
**ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ॥ २५८ ॥**
**मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः।**

† हविष्यं हविर्योग्यं तिलव्रीह्यादि, यथाऽऽह मनुः—"तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा। दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम्[4]॥" इति। तदन्नं ह-

---

* "फलशून्यकर्माङ्गविशेषः प्रतिपत्तिः। तथा च श्राद्धादौ दत्तद्रव्यस्य जलादौ निक्षेपः प्रतिपत्तिः।" इति न्यायकोशे ४८९ पृष्ठे।

† "हविष्यमाह मनुः—"मुन्यन्नानि पयःसोमौ मांसं यच्चानुपस्कृतम्। अक्षारलवणं चैव प्रकृत्या हविरुच्यते॥" अप० ५५१.

---

१ ख. तथा वंशसमाव्यवस्थायां। २ ख. व्यवस्थितो विकल्पः असत्यां। ३ क सर्वश्राद्धविशेषमिद। ख. घ. सर्वश्राद्धशेषमभिधीयते। श्राद्धविशेषमिद। ४.— ३, २६७.।

विष्यान्नं तेन मासं पितरस्तृप्यन्तीत्यनागतेनान्वयः। पायसेन गव्यपयःसिद्धेन संवत्सरम्,—"संवत्सरं तु गव्येन पयसा पायसेन वा।" इति[1] स्मरणात्। मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं मात्स्यं, हरिणस्ताम्रमृगः एणः कृष्णः,—"एणः कृष्णमृगो[2] ज्ञेयस्ताम्रो हरिण उच्यते।" इत्यायुर्वेदस्मरणात्—तस्येदं हारिणकम्, अविः उरभ्रस्तत्संबन्धि[3] औरभ्रं, शाकुनं भक्ष्यपक्षिसंबन्धि, छागः अजस्तदीयं छागं, पृषच्चित्रमृगस्तन्मांसं पार्षतं, एणः कृष्णमृगस्तत्पिशितमैणं, रुरुः शंबरस्तत्प्रभवं रौरवं, वराहः आरण्यसूकरस्तज्जं वाराहं, शशस्येदं शाशम्,—एभिर्मांसैः पितृभ्यो दत्तैः "हविष्यान्नेन वै मासम्" इत्युक्तत्वात्तत ऊर्ध्वं यथाक्रमम्, एकैकमासवृद्ध्या[4] पितरस्तृप्यन्ति ॥ २५७ ॥ २५८ ॥ २५८ ॥

किं च—

**खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ॥ २५९ ॥**
**लोहामिषं महाशाकं[5] मांसं वार्ध्रीणसस्य[6] च।**
**यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥ २६० ॥**
**तथा[7] वर्षात्रयोदश्यां मघासु च विशेषतः।**

खड्गो गण्डकस्तस्य मांसं, महाशल्को मत्स्यभेदः, मधु माक्षिकं, मुन्यन्नं सर्वमारण्यं नीवारादि, लोहो रक्तच्छागः तदामिषं लोहामिषं, महाशाकं कालशाकं वार्ध्रीणसो* वृद्धः श्वेतच्छागः—"त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्। वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥" इति याज्ञिकप्रसिद्धः[8] त्रिपिबः—पिबतः कर्णौ जिह्वा च यस्य जलं स्पृशाति सः, त्रिभिः पिबतीति त्रिपिबः—तस्या वार्ध्रीणसस्य मांसं, यद्ददाति गयास्थश्च यत्किञ्चिच्छाकादिकमपि गयास्थो द-

* "तथा—"कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः। स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः॥" तस्य मांसं वा" इति अप० ५५३.

१.—मनुः ३. २७१.। २ क. एणः कृष्णस्तयोर्ज्ञेयः। ३ क. तत्सम्बद्धमौरभ्रं। ४ क. एकैकशो मास। ५ अप० कालशाकम्। ६ क. ग. वार्ध्रीणसस्य च। ७ अप० वर्षास्वेवं त्रयोदश्यां मघासु च न संशयः। ८ घ. याज्ञिकप्रसिद्धेः। त्रिपिबः।

दाति, चशब्दाद्गङ्गाद्वारादिषु च " गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे । संनिहत्यां[1] गयायां च श्राद्धमक्षय्यतां व्रजेत् ॥" आनन्त्यमश्नुते अनन्तफलहेतुत्वं[2] प्राप्नोति, आनन्त्यमश्नुते इति प्रत्येकं संबध्यते । तथा *वर्षत्रयोदश्यां भाद्रपदकृष्णत्रयोदश्यां विशेषतो मघायुक्तायां यत्किञ्चिद्दीयते तत्सर्वमानन्त्यमश्नुत इति गतेन सम्बन्धः ।

अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धयोग्यानि दर्शितानि, तथाऽपि पुलस्त्योक्ता व्यवस्था आदरणीया—" मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥" इति । अस्यायमर्थः—मुन्यन्नं नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदं, यच्च मांसमुक्तं तत्क्षत्रियवैश्ययोः प्रधानं । यत्क्षौद्रमुक्तं तच्छूद्रस्य, एतत्त्रितयव्यतिरिक्तं यदविरोधि तदप्रतिषिद्धं वास्तुकादि यच्च विहितं हविष्यं कालशाकादि तत्सर्वेषां समग्रफलदमिति ॥ २५९ ॥ २६० ॥ २६०~ ॥

तिथिविशेषात्फलविशेषमाह—

**कन्यां कन्यावेदिनश्च पशून्[3]वै सत्सुतानपि ॥ २६१ ॥**

**द्यूतं कृषिं च वाणिज्यं[4] द्विशफैकशफं[5] तथा ।**

**ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ॥ २६२ ॥**

**[6]ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ।**

**प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥ २६३ ॥**

**शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ।**

कन्यां रूपलक्षणशीलवतीं, कन्यावेदिनो जामातरः बुद्धिरूपलक्षणसंपन्नाः, पशवः क्षुद्राः अजादयः, सत्सुताः सन्मार्गवर्तिनः, द्यूतं द्यूतविजयः, कृषिः कृषिफलं,

* " वर्षासु या त्रयोदशी याश्च मघाः तस्यां तासु च यत्पितृभ्यो ददाति तदपि तृप्तिलक्षणस्य फलस्यानन्त्यमश्नुते । अनन्तां पितृतृप्तिं साधयतीत्यर्थः । अत्र च प्रोष्ठपद्यपरपक्षे या त्रयोदशी याश्च मघाः, ता एव गृह्यन्ते । " इति अप० ५५५.

१ अप० संनिहित्यां । २ ख. आनन्त्यफलहे । ३ अप० पशून्मुख्यान् सुतानपि । ४ घ. कृषि वणिज्यां च द्विशफै । ५ अप० शफांस्तथा । ६ ख. जातिश्रयैष्ठयं ।

वाणिज्यं वाणिज्यलाभः, द्विशफा गवादयः, एकशफा अश्वादयः, ब्रह्मवर्चस्विनः पुत्राः—वेदाध्ययनतदर्थानुष्ठानजनितं तेजो ब्रह्मवर्चसं तद्वन्तः, स्वर्णरूप्ये हेमरजते तद्व्यतिरिक्तं त्रपुसीसादि कुप्यकं, जातिश्रैष्ठ्यं जातिषूत्कृष्टत्वं, सर्वकामाः—काम्यन्त इति कामाः—स्वर्गपुत्रपश्वादयः,—एतानि कन्यादीनि चतुर्दशफलानि कृष्णप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशीवर्जितासु चतुर्दशसु तिथिषु श्राद्धदो यथाक्रममाप्नोति। ये केचन *शस्त्रहतास्तेभ्यः कृष्णचतुर्दश्यामेकोद्दिष्टविधिना[1] श्राद्धं दद्यात्, यदि ब्राह्मणादिहता न भवन्ति,—"समत्वमागतस्यापि पितुः शस्त्रहतस्य वै। एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये॥" इति स्मरणात्। समत्वमागतस्य सपिण्डीकृतस्य पितुः महालये भाद्रपदकृष्णचतुर्दश्यां शस्त्रहतस्यैव श्राद्धं नान्यस्येति नियम्यते, न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति। अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धम्, न च भाद्रपदकृष्णपक्ष एवायं विधिरिति मन्तव्यम्,—"प्रौष्ठपद्यामपरपक्षे मासि मासि चैवम्" इति शौनकस्मरणात्॥ २६१॥ २६२॥ २६३॥ २६३-॥

नक्षत्रविशेषात्फलविशेषमाह—

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा॥ २६४॥**

**पुत्रं[2] श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभम्।**

**प्रवृत्तचक्रतां चैवं[3] वाणिज्यप्रभृतीनपि॥ २६५॥**

**अरोगित्वं यशो वीतशोकतां परमां गतिम्।**

**धनं वेदान्[4] भिषक्सिद्धिं कुप्यं गा अप्यजाविकम्॥ २६६॥**

**अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति।**

---

* "शस्त्रहतग्रहणं शास्त्रान्तरोक्तदुर्मरणप्रदर्शनार्थम्।" इति अप० ५५९.

१ क. एकोद्दिष्टविधानेन श्राद्धं। २ अप० ज्ञाति श्रयैष्ठ्यम् इति च। ३ अप० पुत्रान्। ४ अप० विद्यां।

**कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ॥ २६७ ॥**

**आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ।**

कृत्तिकामादिं कृत्वा भरण्यन्तं प्रतिनक्षत्रं यः श्राद्धं ददाति[1] स यथाक्रमं स्वर्गादीनायुःपर्यन्तान्कामानवाप्नोति यद्यास्तिकः श्रद्दधानश्चेत्[2] व्यपेतमदमत्सरो भवति[3]। आस्तिको विश्वासवान्, श्रद्दधानः आदरातिशययुक्तः, व्यपेतमदमत्सरः—मदो गर्वः मत्सर ईर्ष्या ताभ्यां रहितः, स्वर्गं निरतिशयसुखम्, अपत्यमविशेषेण, ओजः आत्मशक्त्यतिशयः, शौर्यं निर्भयत्वं, क्षेत्रं फलवत्, बलं शारीरं, पुत्रो गुणवान्, श्रैष्ठ्यं ज्ञातिषु[4], सौभाग्यं जनप्रियता, समृद्धिर्धनादेः, मुख्यता अग्रयता, शुभं सामान्येन, प्रवृत्तचक्रता अप्रतिहतज्ञाता, वाणिज्यप्रभृतयः वाणिज्यकृषिकुसीदगोरक्षाः, अरोगित्वम् अनामयत्वं[5] यशः प्रख्यातिः, वीतशोकता इष्टवियोगादिजनितदुःखाभावः, परमा गतिः ब्रह्मलोकप्राप्तिः, धनं सुवर्णादि, वेदा ऋग्वेदादयः भिषक्सिद्धिः औषधफलावाप्तिः, कुप्यं सुवर्णरजतव्यतिरिक्तं ताम्रादि, गावः प्रसिद्धाः, अजाश्च, अवयश्च, अश्वाश्च, आयुर्दीर्घजीवनम् ॥२६४॥२६५॥ २६६ ॥ २६७ ॥ २६७॥

"मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहा[6]।" इत्यनेन पितॄणां श्राद्धेन तृप्तिर्भवतीत्युक्तं, तदनुपपन्नम्। प्रातिस्विकशुभाशुभकर्मवशेन स्वर्गनरकादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात्, संभवेऽपि स्वयमात्मनाऽप्यनीशाः कथं स्वर्गादिफलं प्रयच्छन्तीत्यत आह—

**वसुरुद्रादितिसुताः पितरः *श्राद्धदेवताः ॥ २६८ ॥**

**प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः[7] ।**

**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥ २६९ ॥**

**प्रयच्छन्ति तथा राज्यं प्रीता नॄणां पितामहाः ।**

* "यथाश्रुतग्राहिणः पूर्वश्लोकाद्वस्वादिदैवत्यमेव सर्वं श्राद्धं, न पुनः पित्रादिदैवत्यमिति कस्यचिद्बुद्धिरुत्पद्यते तन्निवृत्तिद्वारेण श्राद्धस्यायुरादिफलत्वप्रतिपादनपरोऽयं श्लोकः। अत्र च पितामहग्रहणं पित्राद्युपलक्षणार्थम्। ततश्च श्राद्धकर्तॄणां मनुष्याणां श्राद्धे देवताभा

१ क. दद्यात्। २ क. घ. श्रद्दधानो व्य०। ३ क. घ. मत्सरश्च। ४ ख. श्रैष्ठ्यं ज्ञातिषु अप० ज्ञाति श्रैष्ठ्यम्। ५ ख. घ. अनामययोगित्वम्। ६ आ २५९.। ७ घ. श्राद्धेषु तर्पिता।

न ह्यत्र देवदत्तादय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते, किं त्वधिष्ठातृवस्वादिदेवतासहिता एव यथा देवदत्तादिशब्दैर्न शरीरमात्रं, नाप्यात्ममात्रं, किं तु शरीरविशिष्टा आत्मान उच्यन्ते, एवमधिष्ठातृदेवता सहिता एव देवदत्ताद-यः पित्रादिशब्दैरुच्यन्ते। अतश्चाधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनान्नपानादि-ना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति, कर्तॄंश्च पुत्रादिफलेन संयोजयन्ति। यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठर-गतमपत्यं तर्पयति, दोहदान्नादिप्रदायिनश्च प्रत्युपकारफलेन संयोजयति तद्वद्वसवो रुद्रा अदितिसुताः आदित्या एते पितरःपितृपितामहप्रपितामहशब्दवाच्याः न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रदानभूताः,—किमर्तैः मनुष्याणां पितॄन्देवदत्तादीन्स्वयं श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्त्यतिशययोगेन।

किं च न केवलं पितंस्तर्पयन्ति, अपि तु श्राद्धकारिभ्यः आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि राज्यं च—चकारात्तत्रतत्र शास्त्रोक्तमन्यदपिफलं, स्वयं प्रीताः पितामहा वस्वादयः प्रयच्छन्ति ॥ २६८ ॥ २६९ ॥ २६९' ॥

इति श्राद्धप्रकरणम् ॥

वेन संबध्यमानाः पित्रादयः आयुरादिफलप्रदा भवन्तीत्युक्तं भवति। यद्यप्यपूर्वफलप्रदातृत्वं न देवतायास्तथाऽपि सर्वाङ्गोपेतकर्मानुष्ठानात् फलदाऽपूर्वोदय इति युक्ताऽङ्गभूतपित्रादिदेव-तायाः फलहेतुत्वोक्तिः, आयुरादीनां च प्रत्येकं फलत्वं, प्रत्येकं द्वितीयायोगात्।" इति अप० ५६१.

१ ख. देवदत्तादय एव पित्रादिशब्दैरुच्यन्ते अतश्चाधिष्ठातृ। २ ख. पुत्रादीन्फलेन। ३ ख. ख. आदित्या एव ते पितरः। ४ ख. किं तु मनुष्या।

## अथ गणपतिकल्पप्रकरणम् १०

दृष्टादृष्टफलसाधनानि कर्माण्यभिहितानि[1], अभिधायिष्यन्ते[2] च तेषा स्वरूपनिष्पत्तिः फलसाधनत्व चाविघ्नेन भवतीत्यविघ्नार्थं कर्म विधास्यन् विघ्नस्य कारकज्ञापकहेतूनाह—

**विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ॥ २७० ॥**

**गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ।**

[3]विनायकः कर्मविघ्नसिद्ध्यर्थमित्यादिनोभयविधहेतुपरिज्ञानाद्विघ्नस्य प्रागभाव-परिपालनायोपस्थितस्य प्रध्वंसाय वा प्रेक्षापूर्वकारिणः प्रवर्तन्ते,—रोगस्येवोभयविध-हेतुपरिज्ञानात् । विनायको विघ्नेश्वरः पुरुषार्थसाधनानां कर्मणां विघ्नसिद्ध्यर्थं स्वरूपफलसाधनत्वविघातसिद्ध्ये विनियोजितः नियुक्तः रुद्रेण ब्रह्मणा—चकारद्वि-ष्णुना च, गणानां पुष्पदन्तप्रभृतीनामाधिपत्ये स्वाम्ये च ॥ २७० ॥ २७०- ॥

एवं विघ्नस्य कारकहेतुमुक्त्वा ज्ञापकहेतुप्रदर्शनार्थमाह—

**तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ॥ २७१ ॥**

**स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ।**
**काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ २७२ ॥**

**अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ।**
**[4]व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुगतं परैः ॥ २७३ ॥**

तेन *विनायकेनोपसृष्टो गृहीतो यस्तस्य लक्षणानि ज्ञापकानि निबोधत

---

* **"अत्र बैजवापगृह्यम्—अथ विनायकाः । चत्वारः खलु विनायका भवन्ति। मितश्च संमितश्च शालकटङ्कटश्च कूष्मांडराजपुत्रश्चेत्येतैः विनायकैरुपसृष्टलक्षणा ब्राह्मणाः स्वाध्या-यवन्तोऽप्याचार्यत्वं न लभन्त इत्यादि ।" इति अप० ५७३.**

---

१ ख. हितान्यप्यभिधा । २ ख. अभिधास्यन्ते च । ३ क. विनायकः कर्मेत्यारभ्य परिज्ञा-नादित्यन्तं नास्ति । ४ अप० व्रजन्तं च तथात्मानम् ।

जानीध्वं हे मुनयः । पुनर्मुनीनां प्रत्यवमर्शः शान्तिप्रकरणप्रारम्भार्थः । स्वप्ने स्वप्नावस्थायां जलमत्यर्थमवगाहते, स्रोतसा ह्रियते, निमज्जति वा मुण्डितशिरसः पुरुषान्पश्यति, काषायवाससो रक्तनीलादिवस्त्रप्रावरणांश्च, *क्रव्यादान् आममांसाशिनः पक्षिणो गृध्रादीन्मृगांश्च[1] व्याघ्रादीन् अधिरोहति तथाऽन्त्यजैश्चाण्डालादिभिः गर्दभैः खरैरुष्ट्रैः—क्रमेलकैः—सह परिवृतस्तिष्ठति[2], व्रजन् गच्छन्नात्मानं परैः शत्रुभिः पृष्ठतो धावद्भिरनुगतमभिभूयमानम् आत्मानं मन्यते ॥ २७१ ॥ २७२ ॥ २७३ ॥

एवं स्वप्नदर्शनान्युक्त्वा प्रत्यक्षलिङ्गान्याह—

**विमना विफलारम्भः संसीदत्यनिमित्ततः ।**
**तेनोपसृष्टो लभते न राज्यं राजनन्दनः ॥ २७४ ॥**

**कुमारी च न भर्तारमपत्यं गर्भमङ्गना ।**
**आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥ २७५ ॥**

**वणिग्लाभं न चाऽऽप्नोति कृषिं चापि कृषीवलः ।**

विमना विक्षिप्तचित्तः, विफलारम्भः—विफलाः आरम्भा यस्य स तथोक्तः न क्वचित्फलमाप्नोति, संसीदत्यानिमित्ततः विनाकारणेन दीनमनस्को भवति । राजनन्दनो राजकुले जातः श्रुतशौर्यधैर्यादिगुणयुक्तोऽपि राज्यं न लभते । कुमारी रूपलक्षणाभिजनादिसंपन्नाऽपीप्सितं भर्तारम्, अङ्गना गर्भिण्यपत्यम्, ऋतुमती गर्भम् अध्ययनतदर्थज्ञाने सत्यपि आचार्यत्वं श्रोत्रियः विनयाचारैर्युक्तोऽपि[3] शिष्योऽध्ययनं श्रवणं वा,—न लभते इति सर्वत्र संबध्यते । वणिक् वाणिज्योपजीवी तत्र कुशलोऽपि धान्यादिक्रयविक्रयादिषु लाभं, कृषीवलः[4] कर्षकः तत्राभियुक्तोऽपि कृषिफलं नाऽऽप्नोति । एवं यो यया वृत्त्या जीवति स तत्र निष्फलारम्भश्चेत्तेनोपसृष्टो वेदितव्यः ॥ २७४ ॥ ॥ २७५ ॥ २७५ ॥

---

* " क्रव्यमाममांसं तददन्ति ये ते क्रव्यादाः ।" इति अप० ५६२.

१ क. गृध्रादीन् सृगालव्याघ्रादींश्च । घ. दीन्मृगादींश्च व्याघ्रा । २ क. वृत्तास्तिष्ठन्व्रजन् । ३ घ. विनयादिपुक्तोऽपि । ४ क. कर्षकः कृषिकृत् ।

एवं कारकज्ञापकहेतूनभिधाय विघ्नोपशान्त्यर्थं कर्म विधातुमाह—

**स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥ २७६ ॥**

तस्य विनायकोपसृष्टस्याऽनागतविनायकोपसर्गपरिहारार्थिनो वा स्नपनमभिषेचनं कर्तव्यं पुण्ये स्वानुकूलनक्षत्रादियुक्तेऽह्नि दिवसे न रात्रौ विधिपूर्वकं शास्त्रोक्तेतिकर्तव्यतासहितम् ॥ २७६ ॥

स्नपनविधिमाह—

**गौरसर्षपकल्केन साज्येनोत्सादितस्य च ।**
**सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥ २७७ ॥**

**भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः ।**

गौरसर्षपकल्केन सिद्धार्थपिष्टेन साज्येन घृतलोलीकृतेनोत्सादितस्योद्वर्तिताङ्गस्य तथासर्वौषधैः प्रियङ्गुनागकेसरादिभिः सर्वगन्धैश्चन्दनागरुकस्तूरिकादिभिर्विलिप्तशिरसो वक्ष्यमाणभद्रासनोपविष्टस्य द्विजाः ब्राह्मणाः शुभाः श्रुताध्ययनवृत्तसंपन्नाः शोभनाकृतयश्चत्वारः "अस्य स्वस्ति भवन्तो ब्रुवन्तु" इति वाच्याः । अस्मिन्त्समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्यादित्यर्थः ॥ २७७ ॥ २७७॥ ॥

किं च—

**अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ २७८ ॥**

**मृत्तिकां रोचनां गन्धान्गुग्गुलं चाऽप्सु निक्षिपेत् ।**
**या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ २७९ ॥**

**चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ।**

अश्वस्थानगजस्थानवल्मीकसरित्संगमाशोष्यह्रदेभ्यः आहृतां पञ्चविधां मृदं गोरोचनां गन्धान् चन्दन[2]कुङ्कुमागरुप्रभृतीन् गुग्गुलुं[1] च तास्वप्सु विनिक्षिपेत् । या आपः

१ अप० च विनिक्षिपेत् । २ क. गन्धानगरुकुङ्कुमप्रभृतीन् ।

आहृता एव वर्णैः समानवर्णैः चतुर्भिः कुम्भैः शुभैरव्रणास्फुटिताकारकैः ह्रदादशोष्यात् संगमाद्वा, ततश्च आनडुहे चर्मणि रक्ते लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवे भद्रं मनोरममासनं श्रीपर्णीनिर्मितं स्थाप्यम् । ततः उक्तोदकमृत्तिकागन्धादि सहितांश्चूतादिपल्लवोपशोभिताननान् स्रग्दा[1]मवेष्टितकण्ठान् चन्दनचर्चितान् नवाहतवस्त्राविभूषितान् चतसृषु पूर्वादिदिक्षु स्थापयित्वा शुचौ विलिप्ते स्थण्डिले रचितपञ्चवर्णे स्वस्तिके लोहितमानडुहं* चर्मोत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्र[2]प्रच्छादितमासनं स्थापयेदित्येतद्भद्रासनमिति एतस्मिन्नुपविष्टस्य स्वस्तिवाच्याः द्विजाः[3]। ॥ २७८ ॥ २७९ ॥ २७९॥

किं च—

**सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ २८० ॥**

**तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ।**

स्वस्तिवाचनानन्तरं जीवत्पतिपुत्त्राभिः रूपगुणशालिनीभिः सुवेषाभिः कृतमङ्गलं पूर्वदिग्देशावस्थितं कलशमादायानेन मन्त्रेणाऽभिषिञ्चेद्गुरुः । सहस्राक्षमनेकशक्तिकं शतधारं बहुप्रवाहमृषिभिर्मन्वादिभिर्यदुदकं पावनं पवित्रं कृतम् उत्पादितं तेनोदकेन त्वां विनायकोपसृष्टं विनायकोपसर्गशान्तये अभिषिञ्चामि पावमान्यश्चैता आपस्त्वां पुनन्तु ॥ २८० ॥ २८० ॥

तदनन्तरं दक्षिणदेशाव[4]स्थितं द्वितीय कलशमादायानेन मन्त्रेणाभिषिञ्चेत्—

**भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥ २८१ ॥**

**भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ।**

भगं कल्याणं ते तुभ्यं वरुणो राजा भगं सूर्यो भगं बृहस्पतिः भगमिन्द्रश्च वायुश्च भगं सप्तर्षयश्च द[5]दुरिति ॥ २८१ ॥ २८१ ॥

---

* "अनः शकटं यो वहति सोऽनड्वान् बलीवर्दः।" इति अप० ५६५

१ क. शोभिताननानास्रग्दाम । २ क. श्वेतवस्त्राच्छादित । ३ क. द्विजाः शुभाः । ४ क. दक्षिणदिशावस्थितं । ५ ख. ग. सत्पर्षयश्च ददुरिति ।

ततस्तृतीय कलशमादायानेन मन्त्रेणाभिषिञ्चेत्—

यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ॥ २८२ ॥

ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा ।

ते तव केशेषु यद् दौर्भाग्यम् अकल्याणं सीमन्ते मूर्धनि च ललाटे कर्णयोरक्ष्णोश्च तत्सर्वमापो देव्यो घ्नन्तु उपशमयन्तु सर्वदेति । ततश्चतुर्थं कलशमादाय पूर्वोक्तैस्त्रिभिर्मन्त्रैरभिषिञ्चेत् । "सर्वैर्मन्त्रैश्चतुर्थम्" इति मन्त्रलिङ्गात् ॥ २८२ ॥ २८२॰ ॥

स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥ २८३ ॥

जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य तु ।

उक्तेन प्रकारेण कृताभिषेकस्य मूर्धनि सव्यपाणिगृहीतकुशान्तर्हिते सार्षपं तैलम् उदुम्बरवृक्षोद्भवेन स्रुवेण वक्ष्यमाणैर्मन्त्रैर्जुहुयादाचार्यः ॥ २८३ ॥ २८३॰ ॥

मितश्च संमितश्चैव तथा शालकटङ्कटौ ॥ २८४ ॥

कूश्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ।

नामभिर्बलिमन्त्रैश्च नमस्कारसमान्वितैः ॥ २८५ ॥

दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ।

कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥ २८६ ॥

मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु ।

पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥ २८७ ॥

मूलकं पूरिकापूपां स्तथैवोण्डेरकास्रजः ।

---

१ ख. केशेषु दौर्भाग्यं । २ क. सर्वमन्त्रैश्चतु । ख. चतुर्थमितिमन्त्रलिङ्गात् । ग. चतुर्थमितिस्मृतिलिङ्गात् । ३ अप० क. परिगृह्य च । ४ अप० शालकटंकटः । कूश्माण्डराजपुत्रश्च ।

मितसंमितादिभिर्विनायकस्य नामभिः स्वाहाकारान्तैः प्रणवादिभिर्जुहुयादिति-गतेन संबन्धः । स्वाहाकारयोगाच्चतुर्थी विभक्तिः । अतश्च ॐमिताय स्वाहा, ॐसंमिताय स्वाहा, ॐशालाय स्वाहा, ॐकटङ्कटाय स्वाहा, ॐकूश्माण्डाय स्वाहा, ॐराजपुत्राय स्वाहा इति * षट् मन्त्रा भवन्ति । अनन्तरं लौकिकेऽग्नौ स्थालीपाकविधिना चरुं श्रपयित्वा एतैरेव षड्भिर्मन्त्रैस्तास्मिन्नेवाग्नौ हुत्वा तच्छेषं बलिमन्त्रैरिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिश्चतुर्थ्यन्तैर्नमोऽन्वितैस्तेभ्यो बलिं दद्यात् ॥ २८४ ॥ २८५ ॥ २८६ ॥ २८७ ॥ २८७॥

अनन्तरं कि कुर्यादित्यत आह—

**दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् ॥ २८८ ॥**

**एतान्सर्वान्समाहृत्य[2] भूमौ कृत्वा ततः शिरः ।**

**विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम्[3] ॥ २८९ ॥**

कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य सन्निधानाज्जनन्याश्च शिरसा भूमिं गत्वा "तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ।" इत्यनेन मन्त्रेण विनायकं "सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥" इत्यनेनाम्बिकां च नमस्कुर्यात् । तत उपहारशेषमास्तीर्णकुशे शूर्पे निधाय चतुष्पथे निदध्यात्—"बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ[4] रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचोरगमातरः[5] ।

* "पूर्वोक्तेन प्रकारेण स्नातस्य शिरसि सव्येन पाणिना कुशान्परिगृह्य इतरपाणिगृहीतेनौदुम्बरवृक्षमयेन स्रुवेण सर्षपतैलं मिताय स्वाहा, संमिताय स्वाहा, शालकटङ्कटाय स्वाहा, कूश्माण्डराजपुत्राय स्वाहेति गुरुर्जुहुयात् । तैरेव मितादिभिश्चतुर्भिर्नामभिश्चतुर्थ्यन्तैर्नमस्कारसमन्वितैश्चतुष्पथे शूर्पं स्थापयित्वा तत्र च सर्वतः सर्वदिगग्रान् कुशानास्तीर्य कृताकृततण्डुलादिरूपं बलिं दद्यात् । नामभिर्बलिमन्त्रैश्चेति विशेषेण निर्देशान्पितादिनामभिश्चतुर्थ्यन्तैर्नमस्कारमन्त्रैः बलिमन्त्रतामापन्नैःबलिर्देय इति गम्यते । अवघातादिना येषां व्रीहीणां तण्डुलीभावः प्रारब्धापरिसमाप्तश्च एते कृताकृतास्तण्डुलाः ।" इति अप० ५६६.

१ क. मितसंमितादिभिर्विनायकस्येत्यारभ्य अनन्तरं किं कुर्यादित्याहेत्यन्तं नास्ति । २ क. उपाहृत्य । अपरार्के एतानित्यादि श्लोकार्धं नोपलभ्यते । ३ अप० तदाम्बि । ४ क. तोऽथाश्वि । ५ ग. घ. पिशाचा मातरो नगाः ।

शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृम्भकाः सिद्धगन्धर्वा नागा विद्याधरा नराः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं मा सन्तु परिपन्थिनः ॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥" इत्येतैर्मन्त्रैः । कृताकृताः सकृदवहतास्तण्डुलाः पललं तिलपिष्टं तन्मिश्र ओदनः पललौदनः मत्स्याः पक्वा अपक्वाश्च मांसमेताव-देव च पक्वमपक्वं च, पुष्पं चित्रं रक्तपीतादिनानावर्णं चन्दनादिसुगन्धिद्रव्यं, सुरा त्रिविधा गौडी माध्वी पैष्टी च, मूलकं कन्दाकारो भक्ष्यविशेषः, पूरिका प्रसिद्धा, अपूपः अस्नेहपक्वो गोधूमविकारः, उण्डेरकस्रजः उण्डेरकाः पिष्टादि-मय्यस्ताः प्रोताः स्रजः, दध्यन्नं दधिमिश्रमन्नं, पायसं पयः शृतं, गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टं, मोदकाः लड्डुकाः अनन्तरं विनायकं तज्जननीमम्बामाम्बिकां वक्ष्य-माणमन्त्रेणोपतिष्ठेत् ॥ २८८ ॥ २८९ ॥

किं कृत्वेत्यत आह—

**दूर्वासर्षपपुष्पाणां दत्त्वाऽर्घ्यं पूर्णमञ्जलिम् ।**

सकुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाणां पूर्णमञ्जलिं दत्त्वा उपतिष्ठेदिति गतेनान्वयः ॥ २८९ ॥

उपस्थानमन्त्रमाह—

**रूपं देहि यशो देहि भगं भवति देहि मे ॥ २९० ॥**

**पुत्रान्देहि धनं देहि सर्वकामांश्च देहिमे ।**

विनायकोपस्थाने भगवन्नित्यूहः ॥ २९० ॥ २९० ॥

**ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ २९१ ॥**

**ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ।**

ततोऽभिषेकानन्तरं यजमानः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणा-

१ ख. माया । घ माला । २ ख. मा विघ्नं मा चमे शोको मा सन्तु । ३ क. पायसं प्रसिद्धं, गुड ।

न्भोजयेत् । यथाशक्ति गुरवे श्रुताध्ययनवृत्तसंपन्नाय विनायकस्नपनविधिज्ञाय वस्त्र-युग्मं दद्यात् । अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च । तत्रायं प्रयोगक्रमः,—चतुर्भिर्ब्राह्मणैः सार्धमुक्तलक्षणो गुरुर्मन्त्रज्ञो भद्रासनरचनानन्तरं तत्सन्निधौ विनायकं तज्जननीं चोक्तमन्त्राभ्यां गन्धपुष्पादिभिःसमभ्यर्च्य चरुं श्रपयित्वा भद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः कलशैरभिषिच्य[1] सार्षपं तैलं शिरसि हुत्वा, चरुहोमं विधायाभिषेकशालायां चतुर्दिक्षु इन्द्रादिलोकपालेभ्योबालिं दद्यात् । यजमानस्तु स्नानानन्तरं शुक्लमाल्यान्बरधरो गुरुणा सहितो विनायकाम्बिकाभ्यामुपहारं दत्त्वा शिरसा भूमिं गत्वा[2] कुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाञ्जलिं च दत्त्वा विनायकमम्बिकां चोपतिष्ठेत् । गुरुरुपहारशेषं शूर्पे कृत्वा चत्वरे निदध्यात् । अनन्तरं वस्त्रयुग्मं[3] दक्षिणां ब्राह्मणेभ्यो भोजनं च दद्यादिति ॥ २९१ ॥ २९१- ॥

॥ इति विनायकस्नपनविधिः ॥

अस्यैव विनायकस्नपनस्य उक्तोपसंहारेण संयोगान्तरं दर्शयितुमाह—

**एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥ २९२ ॥**

**कर्मणां फलमाप्नोति श्रियं[4] चाप्नोत्यनुत्तमाम् ।**

एवमुक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमविघ्नेनाप्नोतीत्युक्तोपसंहारः । संयोगान्तरमाह —श्रियं चोत्कृष्टतमामाप्नोतीति । श्रीकामश्चानेनैव विधानेन विनायकं पूजयेदित्यर्थः । आदित्यादिग्रहपीडाशान्तिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन् ग्रहपूजामुपक्षिपति—"ग्रहांश्चैव विधानतः" इति । ग्रहानादित्यादीन् वक्ष्यमाणेन विधिना संपूज्य कर्मणां सिद्धिमाप्नोति श्रियं चाप्नोतीति ॥ २९२ ॥ २९२- ॥

नित्यकाम्यसंयोगानाह—

**आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ॥ २९३ ॥**

---

१ क. षिच्य शिरसि हुत्वा । २ क. ग. गत्वा सकुसुमो । ३ ग. वस्त्रयुग्मं दत्त्वा दक्षिणां च दत्त्वा ब्राह्मणेभ्यो भो । ४ अप० श्रियमाप्नो० ।

महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ।

आदित्यस्य भगवतः सदा प्रतिदिवसं रक्तचन्दनकुङ्कुमकुसुमादिभिः पूजां कुर्वन् स्कन्दस्य महागणपतेश्च नित्यं पूजां कुर्वन् सिद्धिं मोक्षमात्मज्ञानद्वारेण प्राप्नोतीति नित्यसंयोगः । आदित्य[1]स्कन्दमहागणपतीनामन्यतमस्य सर्वेषां वा तिलकं स्वर्ण[2]निर्मितं रूप्यनिर्मितं वा कुर्वन् सिद्धिमभिलषितामाप्नोति । तथा चक्षुषी चेति कामसंयोगः ॥ २९३ ॥ २९३^ ॥

॥ इति महागणपतिकल्पः समाप्तः ॥

१ ख. आदित्यस्कन्दगणपती । २ ख. घ. स्वर्णादिनिर्मितरौप्य । ग. स्वर्णनिर्मित रौप्यनिर्मितं च कुर्वन् ।

# अथ ग्रहशान्तिप्रकरणम् ११.

"एवं विनायक पूज्य ग्रहांश्चैवविधानतः। कर्मणा फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम्।" इत्यनेन ग्रहपूजायाः कर्मणामाविघ्नेन फलसिद्धिः श्रीश्च फलमित्युक्तम्। इदानी फलान्तराण्याह—

**श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥ २९४ ॥**

**वृष्ट्यायुः पुष्टिकामो वा तथैवाऽभिचरन्नपि[2] ।**

श्रीकाम इति पूर्वोक्तस्यानुवादः, शान्तिकाम आपदुपशान्तिकामः सस्यादिवृद्ध्यर्थं प्रवर्षणं वृष्टिः, आयुरपमृत्युजयेन दीर्घकालजीवनं, पुष्टिरनवद्यशरीरत्वं, एतान्[3] कामयत इति वृष्ट्यायुः पुष्टिकामः। एते श्रीकामादयो ग्रहयज्ञं ग्रहपूजां समाचरेयुः। तथाऽभिचरन्नपि—अदृष्टोपायेन परपीडा अभिचारः तत्कामश्च—ग्रहयज्ञं समाचरेत् ॥ २९४ ॥ २९४॥ ॥

ग्रहानाह—

**सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः॥ २९५ ॥**

**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः[4] स्मृताः।**

एते सूर्यादयो नव ग्रहाः ॥ २९५ ॥ २९५॥ ॥

ग्रहाः पूज्या इत्युक्तं, किं कृत्वेत्याह—

**ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ॥ २९६ ॥**

**र[5]जतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ।**

**स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु[6] वा ॥ २९७ ॥**

सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः, तदलाभे स्ववर्णैर्वर्णकैः पटे

---

१ आ॰ २९३। २ अप॰ रिपून्। ३ क॰ त्वं तान् कामयते। ४ क॰ केतुश्चैव ग्रहाः। ५ ख॰ ग॰ घ॰ राजतादयसः। ६ अप॰ केऽपि। ७ ब॰ सूर्यादीनामित्यारभ्य मण्डलकेषु वेत्यन्तो नास्ति ग्रन्थः।

लेख्याः मण्डलकेषु वा, गन्धैः रक्तचन्दनादिभिर्यथावर्णं लेख्या इत्यन्वयः। द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः,—यथा "पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः। सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः॥ श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः। चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः। खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ। दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः। बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा॥ करालवदनः खड्गचर्मशूली वरप्रदः। नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते॥ धूम्रा द्विबाहवः सर्वे गादिनो विकृताननाः। गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः। स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा॥" इति। एतेषां स्थापनदेशश्च तत्रैवोक्तः—"मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु। उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु॥ पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे॥ पश्चिमोत्तरतः केतून् स्थाप्या वै शुक्लतण्डुलैः॥" इति॥ २९६॥ २९७॥

पूजाविधिमाह—

**यथावर्णं प्रदेयानि वासांसि कुसुमानि च।**
**गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः॥ २९८॥**
**कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम्।**

यथावर्णं यस्य ग्रहस्य यो वर्णः तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि, बलयश्च। धूपश्च सर्वेभ्यो गुग्गुलुर्देयः। चरवश्च प्रतिदैवतं अग्निप्रतिष्ठापनान्वाधानादिपूर्वकं "चतुरश्चतुरो मुष्टीन्निर्वपति" "अमुष्मै त्वा जुष्टं निर्वपामि" इत्यादिविधिना कार्याः। अनन्तरं सुसमिद्धेऽग्नाविध्माधानाद्याघारान्तं कर्म कृत्वा आदित्याद्युद्देशेन यथाक्रमं

---

१ ख. ग. सप्ताश्वरथसंस्थोऽपि। २ क. स्थापने देशश्च शङ्खेनोक्तः। ३ क. ग. स्थापयेच्छुक्ल। ४ घ. गुग्गुलः।

वक्ष्यमाणमन्त्रैर्वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारेण हुत्वा *चरवो होतव्याः ॥२९८॥ २९८‑ ॥

मन्त्रानाह—

**आकृष्णेन[1] इमं देवा[2] अग्निर्मूर्धादिवः ककुत्[3] ॥ २९९ ॥**

**उद्बुध्यस्वेति[4] च ऋचो यथासङ्ख्यं प्रकीर्तिताः ।**

**बृहस्पते[5] अतियदर्यस्तथैवान्नात्परिस्रुतः[6] ॥ ३०० ॥**

**शं नो[7] देवीस्तथाकाण्डात्[8] केतुं कृण्वन्निमांस्तथा[9] ।**

"आकृष्णेन रजसा वर्तमान...." इत्यादयो नव †मन्त्राः यथाक्रममादित्यादीनां वोदितव्याः ॥ २९९ ॥ ३०० ॥ ३००‑ ॥

इदानीं समिध आह—

**अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ॥ ३०१ ॥**

**औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ।**

अर्कपलाशादयो यथाक्रमं सूर्यादीनां समिधो भवन्ति । ताश्च[10] आर्द्रा[11] अभग्नाः सत्वचः प्रादेशमात्राः कर्तव्याः ॥ ३०१ ॥ ३०१‑ ॥

किं च—

**एकैकस्य[12] त्वष्टशतमष्टाविंशतिरेव वा[13] ॥ ३०२ ॥**

**होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः[14] ।**

---

* "अनवस्रावितो विशदोऽन्तरूष्मपक्व ओदनश्चरुः ।" इति अप० ५७३.

† एतेषां ऋषिछन्द आदयोऽपरार्के विस्तरेण ५७४ पृष्ठे द्रष्टव्याः ।

१. ऋ० अ. १, अ. ३, व. ६, ऋ. २. । २.—इमं देवा इति देवाः सोमो यजुः । ३ ऋ० अ. ६, अ. ३, व. ३७, ऋ. १. । ४ उद्बुध्यश्चेति परमेष्ठी बुधास्त्रिष्टुप् । ५ ऋ० अ. २, अ. ६. व. ३१, ऋ. ५. । ६ अन्नात्परिस्रुत इति अश्विसरस्वतीन्द्राः शुक्रोऽतिजगती । ७ ऋ० अ. ७, अ. ६, व. ५, ऋ. ४. । ८ काण्डात्काण्डादित्यग्नी राहुरनुष्टुप् । ९ ऋ० अ. १, अ. १, व. ११, ऋ. ३. । १० अप० इमा अपि । ११ ख. ग. ताश्चसार्द्राः । १२ अप० स्याष्टशतक । १३ ख. रवे च । १४ अप० सयुताः ।

आदित्यादीनामेकैकस्याष्टशतसंख्याता अष्टाविंशतिसंख्याता वा यथासंभवं मधुना सर्पिषा दध्ना क्षीरेण वा युता आक्ताः अर्कादिसमिधो होतव्याः ॥ ३०२ ॥ ३०२॥

इदानीं भोजनान्याह—

**गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ॥ ३०३ ॥**

**दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ।**

**दद्याद्ग्रहक्रमादेव द्विजेभ्यो भोजनं द्विजः ॥ ३०४ ॥**

**शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ।**

गुडमिश्र ओदनो गुडौदनः, पायसं पायसान्नं, हविष्यं मुन्यन्नादि, क्षीरषाष्टिकं क्षीरमिश्रः *षाष्टिकौदनः, दध्ना मिश्र ओदनो दध्योदनः, हविर्घृतौदनः, चूर्णं तिलचूर्णमिश्र ओदनः, मांसं भक्ष्यमांसमिश्र ओदनः, चित्रौदनः नानावर्णौदनः,—एतानि गुडौदनादीनि यथाक्रममादित्याद्युद्देशेन भोजनार्थं द्विजेभ्यो ब्राह्मणेभ्यो दद्यात् । ब्राह्मणसंख्या यथाविभवं द्रष्टव्या । गुडौदनाद्यभावे तु यथालाभमोदनादि पादप्रक्षालनादिविधिपूर्वकं सत्कृत्य सम्मानपुरःसरं दद्यात् ॥ ३०३ ॥ ३०४ ॥ ३०४॥

दक्षिणामाह—

**धेनुः शंखस्तथानड्वान्हेम वासो हयः क्रमात् ॥ ३०५ ॥**

**कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ।**

धेनुः दोग्ध्री, शंखः प्रसिद्धः, †अनड्वान्भारसहो बलीवर्दः, हेम सुवर्णं, वासः पीतं, हयः पाण्डुरः, कृष्णा गौः, आयसं शस्त्रादि, छागः प्रसिद्धः,—एता धे-

* "षष्टिको व्रीहिविशेषः ।" इति अप-५७५ "षाष्टिकाः षष्टिरात्रेण पच्यन्ते" अ० ५. १. ७७.

† "अनसो वोढा गौरनड्वान् ।" इति अप० ६७५.

१ क. ष्टशतमष्टाविंशतिसंख्या वा । २ क. पायसं क्षैरेयं हाविष्यं ।

न्वादयो यथाक्रममादित्याद्युद्देशेन ब्राह्मणानां दक्षिणाः स्मृताः—उक्ता मन्वादिभिः। एतच्च सम्भवे सति, असंभवे तु यथालाभं शक्तितोऽन्यदेव यत्किंचिद्देयम् ॥३०५॥३०५॥

शान्तिकामेनाविशेषेण सर्वे ग्रहाः पूजितव्या[1] इत्युक्तम। तत्र विशेषमाह—

**यश्च यस्य यदा दुष्टः[2] स तं यत्नेन पूजयेत् ॥ ३०६ ॥**

**ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ।**

यस्य पुरुषस्य यो ग्रहो यदा दुष्टोऽष्टमादिस्थाने स्थितः स तं ग्रहं तदा यत्नेन विशेषेण पूजयेत्, यस्मादेषां *ग्रहाणां ब्रह्मणा पूर्वं वरो दत्तः पूजिताः सन्तो यूयमिष्टप्रापणेनानिष्टनिरसनेन च पूजितारं[3] पूजयिष्यथेति ॥ ३०६ ॥ ३०६ ॥

अविशेषेण द्विजानधिकृत्य शान्तिकपौष्टिकादीनि कर्माण्यनुक्रान्तानि, तत्राभिषेक[4]गुणयुक्तस्य राज्ञो विशेषेणाधिकार इति दर्शयति[5]—

**ग्रहाधीना नरेन्द्राणा[6]मुच्छ्रायाः पतनानि च ॥ ३०७ ॥**

**भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ।**

नरेन्द्राणामभिषिक्तक्षात्रियाणां ग्रहाः पूज्यतमा[7] इत्यनेनान्येषामपि पूज्यतमा इति गम्यते । उभयत्र कारणमाह—प्राणिनामभ्युदयविनिपाताः ग्रहाधीनाः यस्मात्तस्मादधिकारिभिः पूज्याः । किं च जगतः स्थावरजङ्गमात्मकस्य भावाभावावुत्पत्तिनिरोधौ ग्रहाधीनौ । तत्र यद्येते पूजिताः तदा स्वकाले[8] उत्पत्तिनिरोधौ भवतः । अन्यथा उत्पत्तिसमये तस्य नोत्पादः । न[9] काले निरोधश्च जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षे-

---

* "यद्यपि धर्माधर्मौ सुखदुःखानुभवहेतू, तथाऽपि कालविशेषमनपेक्ष्य न तद्धेतू भवतः। न च ग्रहाणां गतिविशेषमन्तरेण कालविशेषः शक्यो निरूपयितुमिति भवति ग्रहाधीनत्वं नरेन्द्रोच्छ्रयादेरतो विरुद्धं ग्रहस्थानं दृष्ट्वा तत्सूचितागामिदुःखसंघातविघाताय ग्रहयज्ञः कार्यः।" इति अप० ५७६.

---

१ ख. पूजयितव्याः। २ ख. अपरार्के च—दुःस्थः। ३ ख पूजयितारं। ४ ख. भिषेकयुक्तस्य। ५ ख. "इति दर्शयति" इत्यस्य स्थाने "इत्याह" इति पाठः। ६ क. द्राणां सिद्धयः पत। ७ क. पूज्यतमाः। अनेनान्ये। ख. घ. पूज्यतमाः। अथ चान्येषामपि पूज्या इति। ८ ख. स्वकाल एवोत्पाते। ९ ग. न निरोधकाले।

मकारिणां पूज्यतमा ग्रहा इति तेषां विशेषेण शान्तिकादिष्वधिकारः। तथा च गौतमेन "राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्[1]।" इति राजानमधिकृत्य "वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत्[2]।" "चलतश्चैतान्स्वधर्मे स्थापयेत्[3]।" इत्यादीन्कांश्चिद्धर्मानुक्त्वा "यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत[4]।" "तदधीनमपि ह्येके योगक्षेमं प्रतिजानते[5]।" इति शान्तिकपौष्टिकाद्यनुष्ठानहेतुमभिधाय "शान्तिकपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणस्तम्भनाभिचारद्विषद्वृद्धियुक्तानि च शालाग्नौ कुर्यात्[6]।" इति शान्तिकादीनि दर्शितानि ॥ ३०७ ॥ ३०७ ॥

इति ग्रहशान्तिप्रकरणम् ॥

---

१.—११. १। २.—११, ९। ३.—११. १०.। ४.—११. १५। ५.—११. १६. ६.—११. १७.

# अथ राजधर्मप्रकरणम् १२

[1]साधारणान्गृहस्थधर्मानुक्त्वेदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह*—

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः॥ ३०८ ॥**

**विनीतः सत्वसंपन्नः कुलीनस्सत्यवाक्शुचिः ।**

**अदीर्घसूत्रः[3]स्मृतिमानक्षुद्रोऽपरुषस्तथा ॥ ३०९॥**

**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ।**

**स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ॥ ३१० ॥**

**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ।**

पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः,—† महानुत्साहो यस्यासौ महोत्साहः, बहुदेयार्थदर्शी स्थूललक्षः, परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः‡ तपोज्ञानादिवृद्धानां सेवको वृद्धसेवकः, विनयेन युक्तो विनीतः,—विनयशब्देनाविरुद्धः पूर्वोक्तस्नातक[4]धर्मकलाप उच्यते—'न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्[5] ।' इत्यादिनोक्तः, § सत्वसंपन्नः संपदापदोर्हर्षविषादरहितः, मातृतः पितृतश्चाभिजनवान्कुलीनः,

* "उक्ता वर्णधर्माः ब्रह्मचारिगृहस्थधर्माश्च इदानीं राज्ञो गृहस्थस्यापि गुणवतः जनपदपरिपालनादिधर्मान्वक्तुं यैर्गुणैर्युक्तः प्रजापालनयोग्यो भवति तान्स्तावदाह।" इति अप० ५७६.

† "महोत्साहो महोद्यमः । महाविषयत्वमविहन्यमानत्वं चोत्साहस्य महत्त्वम्।" इति अप० ५७७.

‡ "यः प्रत्युपकारायोपकारिणं स्मरति स कृतज्ञः ।" इति अप० ५७७.

§ "दुर्दशामापन्नोऽपि न न्यायादपैति यः स सात्विकः ।" इति अप० ५७७.

---

१ क. साधारणासाधारणान् ०। २ ग. धर्मानभिधाय ० ३ अप० सूत्री । ४ क. कर्मधर्म । ५ आ. १३२ ।

सत्यवाक्सत्यवचनशीलः । शुचिर्बाह्याभ्यन्तरशौचयुक्तः, अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बतेऽसावदीर्घसूत्रः, * अधिगतार्थाविस्मरणशीलः स्मृतिमान्, †अक्षुद्रोऽसद्गुणद्वेषी, अपरुषः परदोषाकीर्तनशीलः, धार्मिकः वर्णाश्रमधर्मान्वितः, न विद्यन्ते ‡ व्यसनानि यस्यासौ अव्यसनः,—व्यसनानि चाष्टादश, यथाऽऽह मनुः "मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाघार्तः[1] कामजो दशको गणः॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽथ दूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥[2]" इति । तत्र च सप्त कष्टतमानि, यथाऽऽह— " पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणम् । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं[3] सदा ॥[4]" इति—प्राज्ञो गम्भीरार्थावधारणक्षमः, शूरो निर्भयः, § रहस्यवित् गोपनीयार्थगोपनचतुरः[5], स्वरन्ध्रगोप्ता स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत्स्वरन्ध्रं—तस्य गोप्ता प्रच्छादयिता, ‖ आन्वीक्षिक्यामात्मविद्यायां ¶ दण्डनीत्यामर्थयोगक्षेमोपयोगिन्यां, वार्तायां कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायां, ** त्रय्यां ऋग्यजुःसाममय्यां[6] च विनीतः तत्तदभिज्ञैः प्रावीण्यं नीतः, यथाऽऽह मनुः—" त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च तद्विदः । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥[7]" इति,—नराधिपो राज्याभिषिक्तः,—स्यादिति सर्वत्र संबन्धः ॥ ३०८ ॥ ३०९ ॥ ३१० ॥ ३११ ॥

* " प्रमितेऽर्थे निराशङ्कः । " इति अप० ५७७.

† " अक्षुद्रः अनल्पहृदयः । योऽल्पापकारोपकाराभ्यां कोपप्रसादवान् सोऽल्पहृदयः । " इति अप० ५७७.

‡ "पुरुषार्थविक्षेपकं द्यूतादिकं व्यसनं तद्रहितः अव्यसनः।" इति अप० ५७७.

§ "आत्मज्ञो मन्त्रज्ञः पररन्ध्रज्ञो वा । " इति अप० ५७७.

‖ "आन्वीक्षिकीवेदाद्यविरुद्धन्यायविद्या ।" इति अप० ५७७.

¶ तच्छास्त्रविषयविभागादि महाभारते शान्तिपर्वणि ५६ तमे अध्याये द्रष्टव्यम् ।

** "त्रयीग्रहणात् तत्परिकरभूतानि व्याकरणाद्याङ्गानि मीमांसापुराणधर्मशास्त्राणि गृह्यन्ते । " इति अप० ५७७.

---

१ क. वृथात्यागः । मनुस्मृतौ—' वृथाट्या च' । २.— ७. ४७, ४८ । ३ क. मेतत्त्रयं सदा । ४.—७. ५०, ५१ । ५ क गोपनकुशलः । क ६ .ग. ऋग्यजुः सामाख्यायां च । ७.— ७४३. ।

एवमभिषेकगुणयुक्तस्यान्तरङ्गान्धर्मानभिधायेदानीं बहिरङ्गानाह—

स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिराञ्शुचीन् ॥३११॥

तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः परम् ।

महोत्साहादिगुणैर्युक्तो राजा मन्त्रिणः कुर्वीत । कथंभूतान् ?—प्राज्ञान् हिताहिताविवेककुशलान्, मौलान्स्ववंशपरम्परायातान्, * स्थिरान्महत्यपि हर्षविषादस्थाने विकाररहितान्, शुचीन्धर्मार्थकामभयोपधाशुद्धान् । ते च सप्ताष्टौ वा कार्याः, यथाऽऽह मनुः—"मौलाञ्छास्त्रविदः शूरान् लब्धलक्षान्कुलोद्भवान् । सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान् ॥[१]" इति । एवं मन्त्रिणः पूर्वं कृत्वा तैः सार्धं राज्यं सन्धिविग्रहादिलक्षणं कार्यं चिन्तयेत समस्तैर्व्यस्तैश्च[२] । अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन ब्राह्मणेन पुरोहितेन सह कार्यं विचिन्त्य ततः स्वयं बुद्ध्या[३] कार्यं चिन्तयेत् ॥ ३११ ॥ ३११½ ॥

कीदृशं पुरोहितं कुर्यादित्याह—

पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ॥ ३१२ ॥

दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ।

पुरोहितं च सर्वेषु दृष्टादृष्टार्थेषु कर्मसु पुरतो[४] निहितं दानमानसत्कारैरात्मसंबद्धं †कुर्यात् । कथं भूतम् ?—‡ दैवज्ञं ग्रहोत्पाततच्छमनादेर्वेदितारं उदितोदितं

*"स्वामिहितेऽव्यवचञ्चलान् ।" इति अप० ५७७.

† "पुरोहितं प्रकुर्वीत वृण्वीत, वरणेन हि पुरोहितत्वमुत्पद्यते यथाऽध्वर्युत्वादिकम् ।" इति अप० ५७८.

‡ "दैवज्ञो ज्योतिश्शास्त्रवित् । तेन हि शास्त्रेण प्राणिनां दैवं कर्मविपाको ज्ञायते ।" इति अप० ५७७.

---

१.—७. ५४. । २ क. समस्तैर्व्यस्तैर्वा अनन्तरं । ३ क. ततः स्वबुद्ध्या कार्यं । ४ ख. पुरतो हितं । च. पुरो निहितं ।

विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैः *उदितं समृद्धं दण्डनीत्यामर्थशास्त्रे कुशलम् अथर्वाङ्गिरसे च शान्त्यादिकर्मणि ॥ ३१२ ॥ ३१२ऽ ॥

**श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ॥ ३१३ ॥**

**यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ।**

श्रौताग्निहोत्रादिस्मार्तोपासनादिक्रियानुष्ठानासिद्ध्यर्थं ऋत्विजो वृणुयात् । यज्ञाश्च राजसूयादीन्विधिवद्यथाविधानं भूरिदक्षिणान्बहुदक्षिणानेव कुर्यात् ॥ ३१३ ॥ ३१३ऽ ॥

कि च—

**भोगांश्च दद्या[१]द्विप्रेभ्यो वसूनि विविधानि च ॥ ३१४ ॥**

**अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ।**

ब्राह्मणेभ्यो भोगान् सुखानि तत्साधनदानद्वारेण दद्यात्, वसूनि च सुवर्णरूप्यभूप्रभृतीनि विविधानि नानाप्रकाराणि दे[२]यानि,—यस्मादेष राज्ञां †अक्षयो निधिः शेवाधिः यद्ब्राह्मणेभ्यो दीयते । साधारणधर्मत्वेन दानप्राप्तौ सत्यां राज्ञां दानप्राधान्यप्रतिपादनार्थं पुनर्वचनम् ॥ ३१४ ॥ ३१४ऽ ॥

किं च—

**अस्कन्नमव्य[३]थं चैव प्रायश्चित्तैरदूषितम् ॥ ३१५ ॥**

**अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ।**

* "ये मन्त्रिणामुदिता उक्ताः प्रज्ञादयो गुणाः ते यस्योदिता भूताः स उदितोदितः ।" इति अप० ५७८.

† "आत्मोपकारकत्वेन निधितुल्यत्वात् निधिरयं राज्ञां यद्विप्रेषूपपादितं विप्रेभ्यो दत्तम् । लौकिको निधिरुपभोगाच्चौरादिवशात् कदाचित्क्षीयते दत्तं तु न तथेति विशेषोऽयमिति वक्तुमुक्तमक्षय इति । भूमौ निहितं सुवर्णादिकं निधिः । न केवलं निधेरुत्कृष्टं दानमपि त्वग्निहोत्रादेरपि । न हि दाने कस्यचिद्विषः स्कन्नं स्कन्दनं व्यथनं वा विद्यते, येन विगुणं सदग्निहोत्रादिवदफलं स्यात् ।" इति अप० ५७८.

१ ख. दत्त्वा विप्रेभ्यो । २ ख. देयानीति नास्ति । ३ ख. मव्ययं चैव ।

अग्नेः सकाशादग्निसाध्यात् भूरिदक्षिणात् राजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमिहोच्यते,—यत् एतदस्कन्नं क्षरणरहितं, अव्यथं पशुहिंसारहितं, प्रायश्चित्तैरदूषितं प्रायश्चित्तायासरहितम् ॥ ३१५ ॥ ३१५ ॥

वसूनि विप्रेभ्यो दद्यादित्युक्तम्, कया परिपाट्या दद्यादित्याह—

**अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ॥ ३१६ ॥**

**पालितं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ।**

अलब्धलाभाय धर्मशास्त्रानुसारेण यतेत । यत्नेन [1]लब्धं तत्परतया रक्षेत् । [2]पालितं नीत्या [3]वणिक्पथादिकया वृद्धिं नयेत् । वृद्धं च पात्रेषु* त्रिविधे[4]षु धर्मार्थकाम[5]युक्तेषु निक्षिपेत् दद्यात् ॥ ३१६ ॥ ३१६ ॥

पात्रे निक्षिप्य किं कुर्यादित्याह—

**दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ॥ ३१७ ॥**

**आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ।**

यथोक्तविधिना भूमिं दत्त्वा स्वत्वनिवृत्तिं कृत्वा †निबन्धं वा एकस्य भाण्डभर[6]कस्येयन्तो रूपकाः, एकस्य पर्णभरकस्येयन्ति पर्णानीति वा, निबन्धं कृत्वा लेख्यं कार[येत्] । किमर्थम्?—आगामिन एष्यन्तो ये भद्राः साधवो नृपतयो भूपास्तेषामनेन [दत्त]मनेनप्रतिगृहीतमिति परिज्ञानाय । पार्थिवो भूपतिः । अनेन भूपतेरेव भूमिदाने निबन्धदाने वाऽधिकारो न भोगपतेरिति दर्शितम् ॥ ३१७ ॥ ३१७ ॥

लेख्यं कारयेदित्युक्तम्, कथं कारयेदित्याह—

**[प]टे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ॥ ३१८ ॥**

* "विद्यातपोवृत्तसंपन्नेषु" इति अप० ५७८.

† "अस्मिन्ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्येव मा[र्ग]नियमो निबन्धः ।" इति अप० ५७८.

१ ख. लब्ध तत्परिपालयेत् । स्वयमवेक्षया रक्षेत् । घ. तत्परिपालयेत् । स्वयमवेक्षया तद्रक्षेत् । पालितं तत्परतया रक्षेत् । २ क. रक्षितं नीत्या । ३ ग. नीत्या वाणिज्यादिकया । क. वणिक्क्रियया । ४ घ. पात्रेषु धर्मार्थे । ५ क. ख. घ. धर्मार्थकामपात्रेषु नि । ६ घ. इयन्तोऽकूपका ।

**अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः ।**

**प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ॥ ३१९ ॥**

**स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ।**

कार्पासिके पटे ताम्रपट्टे[1] ताम्रफलके वा आत्मनो वंश्यान्प्रपितामहपितामहपितॄन् बहुवचनस्यार्थवत्त्वात्[2] वंशवीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्याऽऽत्मानं,—च शब्दात्प्रतिग्रहीतारम्, प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं चाभिलेख्य—प्रतिगृह्यत इति प्रतिग्रहो निबन्धस्तस्य—रूपकादिपरिमाणं—दीयते इति दानं—क्षेत्रादि तस्य छेदः—छिद्यते अनेनेति छेदः—नद्याद्याघाटो निवर्तनपरिमाणं[3] च तस्योपवर्णनं अमुकनद्या दक्षिणतोऽयं ग्रामः क्षेत्रं वा पूर्वतोऽमुकग्रामस्य, एतावन्निवर्तनमित्यादिनिवर्तनपरिमाणं च लेख्यमेव, आघाटस्य नदीनगरवर्त्मादेः संचारित्वेन भूमेर्न्यूनाधिकभावसंभवात्तन्निवृत्त्यर्थम् । स्वहस्तेन स्वहस्तलिखितेन मतं मे अमुकनाम्नः[4] अमुकपुत्रस्य यदत्रोपरि लेखितमित्यनेन संपन्नं संयुक्तं कालेन च द्विविधेन शकनृपातीतसंवत्सररूपेण च दानकालेन चन्द्रसूर्योपरागादिना संपन्नं स्वमुद्रया गरुडवाराहादिरूपयोपरि[5] बहिश्चिह्नितम् अङ्कितं स्थिरं दृढं *शासनम्—शिष्यन्तो भविष्यन्तो नृपतयः अनेन 'दानाच्छ्रेयोऽनुपालनम्' इति शासनं—कारयेत् महीपतिर्न भोगपतिः। सन्धिविग्रहादिकारिणा[6] केनचिल्लेख्यम्,—"सन्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः। स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥" इति स्मरणात् । दानमात्रेणैव दानफले सिद्धे शासनकारणं तत्रैव भोगाभिवृद्ध्या फलातिशयार्थम् ॥ ३१८ ॥ ३१९ ॥ ३१९ ॥

इदानीं राज्ञो निवासस्थानमाह—

**रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ॥ ३२० ॥**

**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ।**

---

* "शिष्यन्ते दानापहारान्निवर्त्यन्ते भाविनो भूपतिप्रभृतयो येन तत् शासनम् ।" इति अप० ५७९.

१ क. 'ताम्रपट्टे' इति नास्ति ख. घ. ताम्रपट्टे फलके । २ ख. घ. अर्थवत्त्वाय । ३ ग. नद्यादौ निवर्तनम् । ४ क. 'अमुकनाम्नः' इति नास्ति । ५ क. रूपेण । ६ ख. ग. घ. सन्धिविग्रहादिकारिणा न येन केनचित् ।

रम्यं रमणीयं अशोकचम्पकादिभिः, पशव्यं पशुभ्यो हितं पशुवृद्धिकरम्, आजीव्यमुपजीव्य कन्दमूलफलपुष्पादिभिः,[1] * जाङ्गलं—यद्यप्यल्पोदकतरुपर्वतो देशो जाङ्गलः, तथाऽप्यत्र समजलतरुपर्वतो[2] देशो जाङ्गलशब्देनाभिधीयते—तं देशमावसेत् अधिवसेत्[3]। तत्रैवंविधे देशे जनानां कोशस्य सुवर्णादेरात्मनश्च रक्षणार्थं दुर्गं कुर्वीत। तद्दुर्गं च षड्विधम्, यथाऽऽह मनुः—"धन्वदुर्गं महीदुर्गमब्दुर्गं[4] वार्क्ष्यमेव च। नृदुर्गं गिरिदुर्गं च समावृत्याऽऽवसेत्पुरम्॥[5]" इति॥ ३२०॥ ३२०॥

किं च—

**तत्र तत्र च निष्णातानध्यक्षान्कुशलान्शुचीन्॥ ३२१॥**

**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान्।**

तत्र तत्र धर्मार्थकामादिषु[6] अध्यक्षान् योग्यानधिकारिणः प्रकुर्यान्नियुञ्जीत, यथाऽऽहुः—"धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान्। स्त्रीषु क्लीबान्नियुञ्जीत नीचान्नीचेषु[7] कर्मसु॥" इति। कीदृशान्?—निष्णातान् अनन्यव्यापारान्, कुशलान् तत्तद्व्यापारचतुरान्, शुचीन् चतुर्विधोपधाशुद्धान्, आयकर्मसु सुवर्णाद्युत्पत्तिस्थानेषु, व्ययकर्मसु सुवर्णादिदानस्थानेषु च, उद्यतान् अनलसान्, च शब्दात्प्राज्ञत्वादिगुणयुक्तान्। उक्तं च—"प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता। कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता॥[8]" इति॥ ३२१॥ ३२१॥

'भोगाश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च।' इति सामान्येन स्वस्यदानमुक्तम्। इदानीं नृपाणां विक्रमार्जितस्य दाने फलातिशयमाह—

**नातः परतरो धर्मो नृपाणां यद्रणार्जितम्॥ ३२२॥**

**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा[9]।**

* "जाङ्गलः स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च।" इति अप० ५८०.

१ क. कन्दमूलादिभिः। २ क. समृद्धजल०। ३ क. तिष्ठेत्। ४ घ. मृद्दुर्गं। ५.—७. ७०.। ६ क. धर्मार्थशास्त्रादिषु० घ. धर्मादिस्त्र्यादिषु०। ७ ख. निन्द्येषु०। ८ आ. ३१५.। ९ क. तथा।

नास्मादुत्कृष्टतमो धर्मो नृपाणां विद्यते यद्रणार्जितं द्रव्यं विप्रेभ्यो दीयते, यच्च प्रजाभ्योऽभयदानम् ॥ ३२२ ॥ ३२२॰ ॥

रणार्जितं देयमित्युक्तम् द्रव्यार्जनाय रणे प्रवृत्तस्य विपत्तिरपि संभवतीति न धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रेयसी[1]त्यतआह—

**य* आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ॥ ३२३ ॥**

**अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ।**

ये भूम्याद्यर्थमाहवेषु प्रवृत्ता अपराङ्मुखा अभिमुखा वध्यन्ते मार्यन्ते ते स्वर्गं यान्ति† योगाभ्यासरता यथा यद्यकूटैरविषादिग्धादिभिरायुधैर्योद्धारो भवन्ति ॥ ३२३ ॥ ३२३॰ ॥

किं च—

**पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् ॥ ३२४ ॥**

**राजा सुकृतमादत्ते हतानां विपलायिनाम् ।**

स्वबलेषु करितुरगरथपदातिषु भग्नेष्वनिवर्तिनां परबलाभिमुखयायिनां पदानि क्रतुतुल्यानि अश्वमेधतुल्यानि । विपर्यये दोषमाह— विपलायिनां पराङ्मुखानां हतानां राजा सुकृतमादत्ते ॥ ३२४ ॥ ३२४॰ ॥

अपि च—

**तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम् ॥ ३२५ ॥**

**न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ।**

* "ननु पाक्षिकानर्थशङ्कया प्रेक्षावतां रणे प्रवृत्तिरनुपपन्नेति विधिरयं न घटते इत्यत्राह—" इति अप॰ ५८०

† "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥"

---

१ क. ज्यायसी ।

तत्राहमिति यो वदति तं, क्लीबं नपुंसकं, निर्हेतिं निरायुधं, परसंगतमन्येन सह युद्ध्यमानं, विनिवृत्तं[1] युद्धाद्विनिवृत्तं, युद्धप्रेक्षणको[2] युद्धदर्शी तम्,— न हन्यादिति सर्वत्र संबन्धः । आदिग्रहणादश्वसारथ्यादीनां ग्रहणम् , यथाऽऽह गौतमः— 'न दोषो हिंसायामाहवे ।'[3]" "अन्यत्राश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः।" इति । शङ्खोऽप्याह—"न पानीयं पिबन्तं, न भुञ्जानं, नोपानहौ प्रमुञ्चन्तं, नावर्माणं सवर्माणो, न स्त्रियं, न करेणुं, न वाजिनं, न सारथिं, न दूतं, न ब्राह्मणं, न राजानमराजा, हन्यात्" इति ॥ ३२५ ॥ ३२५ ॥

**कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ॥ ३२६ ॥**

**व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ।**

कृतरक्षः पुरस्याऽऽत्मनश्च रक्षां विधाय प्रतिदिनं प्रातःकाल उत्थाय स्वयमेवाऽऽयव्ययौ पश्येत् । ततो व्यवहारान् दृष्ट्वा मध्याह्नकाले *स्नात्वा कामतो यथारुचि भुञ्जीत ॥ ३२६ ॥ ३२६ ॥

**हिरण्यं व्यापृतानीतं भाण्डागारेषु निक्षिपेत् ॥ ३२७ ॥**

**पश्येच्चारांस्ततो दूतान्प्रेषयेन्मन्त्रिसंगतः ।**

तदनन्तरं हिरण्यादिकं †व्यापृतैर्हिरण्याद्यानयननियुक्तैरानीतं स्वयमेव निरीक्ष्य ‡भाण्डागारेषु निक्षिपेत् । ततश्चारान् विश्वस्तान्प्रत्यागतान्पश्येत् । ये परराज्ये वृत्तान्तपरिज्ञानाय परिव्राजकतापसादिरूपेण गूढचारिणः प्रेषितास्तांश्च दृष्ट्वा क्वचिन्निवेशयेत् । तदनन्तरं दूतांश्च पश्येत् । दूताश्च ये प्रकटमेव राज्यान्तरंप्रति

* "स्नानग्रहणं सकलमाध्याह्निकोपलक्षणम्।" इति अप० ५८१.

† "व्यापृतैः करादिदानाधिकृतैरानीतं ।" इति अप० ५८२.

‡ "भाण्डागारे धननिधानशालायां क्षिपेत्" इति । अप० ५८२.

१ विनिवर्तिनम् । २ घ. युद्धप्रेक्षणकं युद्धदर्शिनं न हन्या० । ३ "अन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिः" इति च पाठः । ४.—१०. १७, १८. । ५ क. न यायिनमित्यधिकम् ६ ख. कालं । ७ अप० भाण्डागारे न्यसेत्ततः । ८ क. स्वकान्; घ. स्पृशान्० । ९ ख. राजा० ।

गतागतमाचरन्ति । ते च त्रिविधाः—निसृष्टार्थाः संदिष्टार्थाः शासनहराश्चेति । तत्र निसृष्टार्थाः राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः, उक्तमात्रं ये परस्मै निवेदयन्ति ते संदिष्टार्थाः, शासनहरास्तु राजलेखहारिणः । तान्पूर्वप्रेषितानागतान्मन्त्रिसंगतः पश्येत्, दृष्ट्वा तद्वार्तामाकलय्य पुनः प्रेषयेत् ॥ ३२७ ॥ ३२७½ ॥

**ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ॥ ३२८ ॥**

**बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ।**

तदनन्तरमपराह्णे स्वैरं यथेष्टमेकोऽन्तःपुरविहारी स्यात्, * मन्त्रिभिर्वा विश्वासिभिः कलाकुशलैः परिहासवेदिभिः परिवृतः स्त्रीभिश्च रूपयौवनवैदग्ध्यशालिनीभिः, "भुक्तवान् विहरेच्चैव स्त्रीभिरन्तः पुरे सह । विहृत्य च यथाकामं पुनः कार्याणि चिन्तयेत् ॥" इति मनुस्मरणात् । ततो विशिष्टैर्वस्त्रकुसुमविलेपनालङ्कारैरलङ्कृतः हस्त्यश्वरथपदातिबलानि दृष्ट्वा सेनान्या सेनापतिना सह तद्रक्षणादि देशकालोचितं चिन्तयेत् ॥ ३२८ ॥ ३२८½ ॥

**संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥ ३२९ ॥**

**गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ।**

ततः सायंकाले संध्यामुपास्य—सामान्येन प्राप्तस्यापि पुनर्वचनं कार्याकुलत्वादविस्मरणार्थम्—अनन्तरं ये पूर्वदृष्टाः क्वचित्स्थाने निवेशितास्तेषां चाराणां गूढभाषितमन्तर्वेश्मनि शस्त्रपाणिः शृणुयात् । उक्तं च—"सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् । रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥" इति । ततो नृत्यगीतादिभिः कंचित्कालं क्रीडित्वा कक्षान्तरं प्रविश्य भुञ्जीत,—"गत्वा

* "भुक्त्वा यथेच्छमङ्गनाभिः सह क्रीडेत् । कार्यवशान्मन्त्रिसमागतो वा भवेत् ।' इति अप० ५८३ ।

१ क. घ. हस्ता । २.—७. २२१. । ३ क. वस्त्रालङ्कारैर्विलेपनकुसुमाद्यैः । ४ क. पूर्वं दृष्ट्वा । ५ क. निवासिताः । ६. मनुः— ७. २२३. ।

कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं जनम् । प्रविशेद्भोजनार्थं च * स्त्रीभिरन्तःपुरं सह ॥" इति स्मरणात् । ततोऽविस्मरणार्थं यथाशक्ति स्वाध्यायं पठेत् ॥ ३२९ ॥ ३२९ ॥

**संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च ॥ ३३० ॥**

**शास्त्राणि चिन्तयेद्बुध्वा सर्वकर्तव्यतास्तथा[2] ।**

तदनन्तरं तूर्यशङ्खादिघोषेण संविशेत्स्वप्यात् । तथैव तूर्यादिघोषेण प्रतिबुध्येत् । प्रतिबुध्य च शास्त्रविद्भिर्विश्वासिभिः सह, एकाकी वा पश्चिमे यामे शास्त्राणि चिन्तयेत्, सर्वकर्तव्यताश्च सर्वकार्याणि च । एतच्च स्वस्थं प्रत्युच्यते । अस्वस्थः पुनः सर्वकार्येषु अन्यं नियोजयेत्, यथाऽऽह मनुः—"एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः । अस्वस्थः सर्वमेवैतन्मान्त्रिमुख्ये निवेशयेत्[3] ॥" इति ॥ ३३० ॥ ३३० ॥

**प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरान्[4] ॥ ३३१ ॥**

**ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।**

**दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गां[5] काञ्चनं महीम् ॥ ३३२ ॥**

**नैवेशिकानि च ततः[6] श्रोत्रियेभ्यो[7] गृहाणि च ।**

अनन्तरं तत्रस्थ एव विश्वस्तान्स्वान् चारान् दानमानसत्कारैः पूजितान् स्वेषु सामन्ताद्यधिकारिषु अन्येषु महीपातिषु प्रेषयेत् तच्चिकीर्षितपरिज्ञानाय । ततः प्रातःसन्ध्यामुपास्याग्निहोत्रं हुत्वा, पुरोहितर्त्विगाचार्यादिभिराशीर्भिरभिनन्दितो ज्योतिर्विदो दृष्ट्वा तेभ्यश्च ग्रहादिस्थितिं विदित्वा, शान्तिकादीनि च पुरोहितायादिश्य वैद्यांश्च दृष्ट्वा तेभ्यश्च स्वशरीरस्थितिं निवेद्य प्रतिविधानं चादिश्य, गां दोग्ध्रीं[8] काञ्चनं महीं च नैवेशिकानि विवाहोपयोगीनि कन्यालङ्कारादीनि गृहाणि च सुधाधवलितादीनि—श्रोत्रियेभ्योऽधीतवेदेभ्यो ब्राह्मणेभ्यो दद्यादिति प्रत्येकं संबध्यते ॥ ३३१ ॥ ३३२ ॥ ३३२ ॥

* "स्त्रीभिः परिचारिकाभिः..." इति मेधातिथिः । "परिचारिकस्त्रीवृतः..." इति कुल्लूकः । तस्मात्पूर्वोक्तं स्त्रिया सह भोजनं न बाधितम् ।

---

१ मनुः—७. २२४. । २ क. ब. कर्तव्यतां० । ३.—७. २२६. । ४ अप० सादरम् । ५ क. अप० गाः । ६ अप० तथा । ७ अप० श्रोत्रियाणां । ८ क. ब. गाः दोग्ध्रीः ।

किं च—

**ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ॥ ३३३ ॥**

**स्याद्राजा भृत्यवर्गेषु[1] प्रजासु च यथा पिता ।**

ब्राह्मणेष्वधिक्षिपत्स्वपि क्षमी क्षमावान्, स्निग्धेषु स्नेहवत्सु मित्रादिष्वजिह्मः अवक्रः, अरिषु क्रोधनः, भृत्यवर्गेषु प्रजासु च हिताचरणेनाहितनिवर्तनेन च पितेव दयावान्,—स्यादिति प्रत्येकं संबध्यते ॥ ३३३ ३३३॰ ॥

**पुण्यात्षड्[2]भागमादत्ते न्यायेन परिपालयन् ॥ ३३४ ॥**

**सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ।**

यस्मान्न्यायेन शास्त्रोक्त[3]मार्गेण प्रजाः परिपालयन् परिपालितप्रजोपचितपुण्यात् षड्भागं षष्ठं भागमादत्ते यस्माच्च सर्वेभ्यो भूम्यादिदानेभ्यः प्रजानां परिपालनमधिकफलम्,—तस्मात्प्रजासु यथा पिता तथैव स्यादिति गतेन संबन्धः ॥ ३३४ ॥ ३३४॰ ॥

**चाट[4]तस्कर[4]दुर्वृत्तमहासाहसिकादिभिः ॥ ३३५ ॥**

**पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ।**

*चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति, प्रच्छन्नापहारिणस्तस्कराः, दुर्वृत्ताः ऐन्द्रजालिककितवादयः, सहो बलं सहसा बलेन कृतं साहसं महच्च तत्साहसं च महासाहसं तेन वर्तन्ते इति †महासाहसिकाः प्रसह्यापहारिणः, ‡आदिशब्दान्मौलिककुहकवृत्तयः—एतैः पीडयमानाः बाध्यमानाः प्रजा रक्षेत् । कायस्था

* "चाटाः पिशुनाः" इति अप० ५७४.

† "महासाहसिकः मनुष्यमारणबन्दिग्रहादिकारी ।" इति अप० ५७४.

‡ "आदिशब्देन कूटमानकूटसुवर्णादिकारिणो लक्ष्यन्ते ।" इति अप० ५७४.

---

१ क. अप० वर्गे च० । २ पुण्यषड्भागम् । ३ क. धर्मशास्त्रमार्गेण । ४ क. बकवृत्ताद्याः । घ. कुहकदुर्वृत्तयः ।

गणका लेककखाश्च—तैः पीडयमानाः विशेषतो रक्षेत्, तेषां राजवल्लभतयाऽतिमायावितयां च *दुर्निवारत्वात् ॥ ३३५ ॥ ३३५॰ ॥

**अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ॥ ३३६ ॥**

**तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ।**

अरक्ष्यमाणाः प्रजाः यत्किंचित्किल्बिषं चौर्यपरदारगमनादि कुर्वन्ति तस्मात्पापादर्धं नृपतेर्भवति यस्मादसौ राजा रक्षणार्थं प्रजाभ्यः करान् †गृह्णाति ॥ ३३६ ॥ ३३६॰ ॥

**ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ॥ ३३७ ॥**

**साधून्संमानयेद्राजा विपरीतांश्च[2] घातयेत् ।**

**उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ॥ ३३८ ॥**

**सदानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ।**

राष्ट्रे राजा अधिकारेषु ये नियुक्तास्तेषां विचेष्टितं चरितं चारैरुक्तलक्षणैः सम्यक् ज्ञात्वा साधून् सुचरितान् संमानयेत् दानमानसत्कारैः पूजयेत् । विपरीतान्दुष्टचरितान्[3] सम्यग्विदित्वा घातयेत् अपराधानुसारेण । ये ‡ पुनरुत्कोचजीविनस्तान् द्रव्यरहितान् कृत्वा स्वराष्ट्रात्प्रवासयेत् । श्रोत्रियान् सदानमानसत्कारान् दानमानस[4]त्कारैः§ सहितान् कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत् ॥ ३३७ ॥ ३३८ ॥ ३३८॰ ॥

**अन्यायेन नृपो राष्ट्रात्स्वकोशं [5]योऽभिवर्धयेत् ॥ ३३९ ॥**

**सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ।**

* "पूर्वश्लोकैः स्वयं न पीडयेदित्यर्थादुक्तम् । अत्र तु यथा परो न पीडयेत्तथा कुर्यादित्युच्यते ।" इति अप० ५७४.

† "अत्रापि पापार्धसंमितं पापं राज्ञो भवतीति मन्तव्यम्, न ह्यन्यकृतमदृष्टमन्यस्य भवति ।" इति अप ५७४.

‡ "कार्यार्थं कार्यिणो धनादानमुत्कोचः ।" इति अप ५७४.

§ सत्कारः साधुत्वख्यापको व्यापारः ।" अप० ५७६.

१ ख. त्वाच्च० । २ अप० स्तु । ३ क. दुर्वृत्तान्; ख. घ. दुष्टचरित्रान्० । ४ घ. सद्दानमानसत्कारैः सहि० । ५ अप० योऽभिरक्षति ।

योऽसौ राजा स्वराष्ट्रादन्यायेन धनमादाय[1] स्वकोशं विवर्धयेत् सोऽचिराच्छीघ्रमेव विगतश्रीको विनष्टलक्ष्मीकः बन्धुभिः सह नाशं प्राप्नोति ॥ ३३९ ॥ ३३९८ ॥

**प्रजापीडनसंतापात्समुद्भूतो हुताशनः ॥ ३४० ॥**
**राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा[2] न निवर्तते ।**

*प्रजानां तस्करादिकृतपीडनेन यः संतापस्तस्मादुद्भूतः—हुताशन इव संतापकारित्वादपुण्यराशिर्हुताशनशब्देनोच्यते—स राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा नाशमनीत्वा न निवर्तते नोपशाम्यति ॥ ३४० ॥ ३४०८ ॥

**य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ॥ ३४१ ॥**
**तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ।**

न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणन्यायेन परराष्ट्रं वशं नयन् आत्मसात्कुर्वन्नाप्नोति धर्मषड्भागं च ॥ ३४१ ॥ ३४१८ ॥

किं च—

**यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ॥ ३४२ ॥**
**तथैव परिपाल्योऽसौ यदा वशमुपागतः ।**

यदा परदेशो वशमुपागतः तदा न स्वदेशाचारादिसंकरः कार्यः । किं तु †यस्मिन्देशे य आचारः कुलस्थितिर्व्यवहारो वा यथैव प्रागासीत्तथैवासौ परिपालनीयः, यदि शास्त्रविरुद्धो न भवति । यदा वशमुपागत इत्यनेन वशोपगमनात्प्रागानियम इति दर्शितं, यथोक्तम्—"उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्[3] ॥" इति ॥ ३४२ ॥ ३४२८ ॥

* प्रजानां पीडनात् अन्यायेन धनादानात्" इति अप० ५८५.

†"यस्मिन्परराष्ट्रे य आचारो होलाकादिर्यश्चव्यवहारो नाणकादिनिबन्धनो या च कुलस्थितिरेतावद्धनं रज्ञाऽनेन कुलेन देयमित्येवमादिरूपा स राष्ट्रो वशमुपागतस्तथैव तेनैवाचारादिना युक्तः परिपालनीयः । " अप० ५८५.

१ ख. द्रव्य० । २क. ग. नादग्ध्वा विनिवर्तते । घ. प्राणानदग्ध्वा न० । ३ मनुः—७. १९५. ।

**मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ॥ ३४३ ॥**
**कुर्याद्यथाऽस्य न विदुः कर्मणामाफलोदयात् ।**

यस्मात् "तैः सार्धं चिन्तयेद्राज्यम्[2]" इत्याद्युक्तं मन्त्रमूलं राज्यं तस्मान्मन्त्रं यत्नेन तथा सुरक्षितं कुर्यात्, यथाऽस्य राज्ञः कर्मणां सन्धिविग्रहादीनामाफलोदयात्फलनिष्पत्तेः प्राग्यावदन्ये मन्त्रं न जानन्ति ॥ ३४३ ॥ ३४३ ॥

किं च—

**अरिर्मित्रमुदासीनोऽनंतरस्तत्परः परः॥ ३४४ ॥**
**क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ।**

अरिः शत्रुः, मित्रं सुहृत्, उभयविलक्षण उदासीनः—ते च त्रयस्त्रिविधाः

* जनः
- अरिः
  - शहजः
    - सापत्नः
    - पितृव्यः
    - तत्पुत्राः
    - इत्यादयः
  - कृत्रिमः
    - यस्यापकृतम्
    - येनापकृतम्
  - प्राकृतः —अनन्तरदेशाधिपतिः
- मित्रम्
  - सहजम्
    - भागिनेयः
    - पैतृष्वस्त्रीयः
    - मातृष्वस्त्रीयः,
    - इत्यादयः
  - कृत्रिमम्
    - येनोपकृतम्
    - यस्योकृपतम्
  - प्राकृतं —मित्रदेशान्तरितदेशाधिपतिः
- उदासीनः
  - सहजः
    - नसहजं मित्रम्
    - नकृत्रिमं मित्रम्
  - कृत्रिमः
    - न सहजः शत्रुः
    - न कृत्रिमः शत्रुः
  - उदासीनः —द्व्यन्तरितदेशाधिपः

१ ख. ग. न्तस्मात्० । २ आ. ३१२. ।

सहजाः कृत्रिमाः प्राकृताश्चेति । तत्र सहजोऽरिः सापत्नपितृव्यतत्पुत्रादिः, कृत्रिमोऽरिः यस्यापकृतं येनचापकृतम्, प्राकृतस्त्वनन्तरदेशाधिपतिः, सहजं मित्रं भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादि, कृत्रिमं मित्रं येनोपकृतं यस्य चोपकृतम्, प्राकृतं मित्रमेकान्तरितदेशाधिपतिः । सहजकृत्रिममित्रशत्रुलक्षणरहितौ सहजकृत्रिमोदासीनौ, प्राकृतोदासीनो द्व्यन्तरितदेशाधिपतिः । *अरिः पुनः चतुर्विधः घातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन । तत्र घातव्योऽनन्तरभूपतिः, व्यसनी हीनबलो विरक्तप्रकृतिर्विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्यः, पीडनीयो मन्त्रबलहीनः, प्रबलमित्रबलयुक्तः कर्शनीयः । "निर्मूलनाशमुच्छेदं[1] पीडनं बलनिग्रहम् । कर्शनं तु पुनः प्राहुः कोशदण्डापकर्षणात् ॥" इति । †मित्रं द्विविधं बृंहणीयं कर्शनीयमिति । कोशबलहीनं बृंहणीयम् । कोशबलाधिकं कर्शनीयम् । 'अनन्तरस्तत्परः परः' इति प्राकृतारिमित्रोदासीनानाह—अनन्तरः प्राकृतोऽरिः, तत्परः प्राकृतं मित्रं, तस्मात्परः प्राकृत उदासीनः । शेषाः पुनः प्रसिद्धत्वान्नोक्ताः । एतद्राजमण्डलं क्रमशः पूर्वादिक्रमेण चिन्त्यं तेषां चेष्टितं ज्ञातव्यं ज्ञात्वा च सामादिभिरुपायैर्वक्ष्यमाणैरभिसंधेयम्[2]‡ ।

---

***अरिः**
- **घातव्यः —अनन्तरभूपतिः,**
- **उच्छेत्तव्यः**
  - **व्यसनी,**
  - **हीनबलः,**
  - **विरक्तप्रकृतिः,**
  - **विदुर्गः,**
  - **मित्रहीनः,**
  - **दुर्बलः**
- **पीडनीयः —मन्त्रबलहीनः**
- **कर्शनीयः —प्रबलमित्रबलयुक्तः**

† **मित्रम्**
- **बृंहणीयम्—कोशबलहीनम्**
- **कर्शनीयम्—कोशबलाधिकम्**

‡ **"तत्र हीनो दण्डेन, समः साम्ना, अधिको दानेन, ततोऽप्यधिको भेदेन साध्यः । अथ वा शत्रुं दण्डेन, मित्रं साम्ना, उदासीनं दानेन, सर्वेऽपि भेदेन साध्याः ।" इति अप० ५८६.**

---

१ ख. निर्मूलनात्समुच्छेदम्०। २ ख. अनु० ।

एवं पुरतः पृष्ठतः पार्श्वतश्च त्रयस्त्रय आत्मा चैक इति * त्रयोदशराजकमिदं राजमण्डलं पद्माकारम् । पार्ष्णिग्राहाक्रन्दासारादयस्त्वरिमित्रोदासीनेष्वेवान्तर्भवन्तीति संज्ञाभेदमात्रं तन्त्रान्तरे दर्शितमिति योगीश्वरेण न पृथगुक्ताः ॥ ३४४ ॥ ३४४ ॥

" सामादिभिरुपक्रमैः " इत्युक्तम्, इदानीं तानुपायानाह—

**उपायाः साम दानं च भेदो दण्डस्तथैव च ॥ ३४५ ॥**

**सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ।**

साम प्रियभाषणं, दानं सुवर्णादेः, भेदो भेदकरणं[1] तत्सामन्तादीनां, परस्प-

* त्रयोदशराजकम् (दिङ्मात्रं दर्श्यते)—




१ क. घ. भेदनम् ।

रतो वैरस्योत्पादनेन[1] । दण्ड उपांशुप्रकाशाभ्यां धनापहारादिर्वधपर्यन्तोऽपकारः । एते सामादयः परिपन्थ्यादिसाधनोपायाः । एते च देशकालाद्यनुसारेण सम्यक्प्रयुक्ताः सिद्ध्येयुः । तेषां च मध्ये 'दण्डस्त्वगतिकागतिः'—उपायान्तरसंभवे सति न * प्रयोक्तव्यः । एतच्च पीडनीयकर्शनीयाभिप्रायेण, घातव्योच्छेत्तव्ययोर्दण्ड एव मुख्यः। एते सामादयो न केवलं राजव्यवहारविषयाः, अपि तु सकललोकव्यवहारविषयाः, यथा—"अधीष्व पुत्रकाधीष्व दास्यामि तवमोदकान् । यद्वाऽन्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते॥" इति ॥ ३४५ ॥ ३४५॰ ॥

किं च—

**सन्धिं च विग्रहं यानं[2]मासनं संश्रयं तथा ॥ ३४६ ॥**

**द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ।**

† सन्धिर्व्यवस्थाकरणं, विग्रहोऽपकारः, यानं परंप्रति यात्रा, आसनमुपेक्षा, संश्रयो बलवदाश्रयणं, द्वैधीभावः स्व[3]बलस्य द्विधाकरणं, एतान् सन्धिप्रभृतीन् गुणान् यथावत् देशकालश[4]क्तिमित्रादिवशेन कल्पयेत् ॥ ३४६ ॥ ३४६॰ ॥

यानकालाँ[5]नाह—

**यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ॥ ३४७ ॥**

**परश्च हीन आत्मा च हृष्टवाहनपूरुषः ।**

यदा परराष्ट्रं सस्यैर्व्रीह्यादिभिर्गुणैश्च समजलेन्धनतृणादिभिरुपेतं संपन्नं शत्रुश्च हीनो बलादिभिः, आत्मा च हृष्टवाहनपूरुषः—वाहनानि हस्त्यश्वादीनि, तानि च पूरुषाश्चवाहनपूरुषाः, हृष्टाः वाहनपूरुषा यस्य स तथोक्तः—तदा परराष्ट्रमात्मसात्कर्तुं व्रजेदिति ॥ ३४७ ॥ ३४७॰ ॥

* "तस्य धनशरीरव्ययशरीरायाससाध्यत्वात् ।" इति अप० ५८६.

† "सन्धिः नावाभ्यामन्योन्यमपकर्तव्यमिति व्यवस्थापरिग्रहः ।" इति अप० ५८६.

१ ख. उत्पादनम् । २ ख. ग. चैव यानमासनसंश्रयौ । ३ क. स्तु बलस्य । ४ क. युक्ति । ५ क. कालम् ।

प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा स्वयमेव परराष्ट्रादि वशीभविष्यति अथ नास्ति कृतेऽपि पौरुषे न भविष्यति, अतो व्यर्थ एवायं यात्राप्रयास इत्यत आह—

**दैवे* पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ॥ ३४८ ॥**

**तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम्[3] ।**

कर्मसिद्धिः फलप्राप्तिः इष्टानिष्टलक्षणा । सा न केवलं दैवे व्यवस्थिता, अपि तु पुरुषकारेऽपि,—लोके तथा दर्शनात्, चिकित्सकादिशास्त्रवैयर्थ्याच्च । अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह, 'तत्र दैवमिति,' यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते अल्पपुरुषकारानन्तरं महाफलोदयाभिव्यक्तम् । तस्मात्पुरुषकाराभावे न दैममस्तीति पुरुषकारे यत्नो विधातव्यः ॥ ३४८ ॥ ३४८′ ॥

इदानीं मतान्तराण्याह—

**†केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ॥ ३४९॥**

केचिदिष्टानिष्टलक्षणं फलं दैवादेवेच्छन्ति । केचित्स्वभावात्स्वयमेव भवति न कारणमपेक्षत इति । केचित्कालात्केचित्पुरुषकारत एवेति ॥ ३४९ ॥

* "न च यात्राया अनियतफलत्वेन पुरुषेण प्रवर्तितव्यमित्यत्र हेतुमाह—'दैवे पुरुष—' दैवे पुरुषकारे च सति कर्मणः कर्मफलस्य सिद्धिर्व्यवस्थिता नियता । सत्यपि पुरुषकारे दैवाभावे न फलं सिद्ध्यति । न च प्राक्प्रवृत्ते दैवाभावाः शक्यः परिच्छेत्तुम् । अतोऽर्थसंशयाद्यात्रादौ प्रवृत्तिरुपपद्यत इत्यभिप्रायः । तत्र दैवं नाम पूर्वदेहप्रभवं पौरुषं पुरुषस्य व्यापारः प्रयत्नाख्यो पूर्वपर्यन्तः । तत्र पौर्वदेहिकमिति बाहुल्याभिप्रायम् । कारीर्यादीनामनुष्ठाने फलोपभोगे च देहैक्यात् । "इति अप० ५८७

† "एवं तर्हि पुरुषकारापेक्षणीयं दैवमेवास्तु फलसाधकम् । किं पुरुषकारेणेत्यत आह—"केचिद्दैवाद्धठात्केचित्केचित्पुरुषकारतः । सिद्ध्यन्त्यर्था मनुष्याणां तेषां योनिस्तु पौरुषम् ॥" वृष्टिमहापातविद्युत्पातादयो मनुष्यादीनां प्राणिनामुपकारका अपकारका वा दैवाद्भवन्ति। हठात् परकीयपुरुषकारात् केचित् । यथाऽनिच्छन्तमपि सुतं माता पयः पाययति पिताऽध्यापयति। व्याघ्रः सर्पो वा देहिनो व्यापादयति । केचित्पुनरर्थाः स्वकीयादेव यत्नात्सिद्ध्यन्ति यथाऽग्निहोत्रादयो हिंसा स्तेयादयश्च तेषां सर्वेषां पौरुषं प्रयत्नो योनिः कारणम् । केषु चिदन्वयव्यति

१ क. घ. दैवाधीनत्वात् । २ अप० देहिकम् । ३ ग. अन्यथा । ४ ख. ग. व्यक्तमित्यस्यानन्तरं 'पौरुषं पौर्वदेहिकं कर्म' इत्यधिकम् ।

इदानीं स्वमतमाह—

**संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ।**

दैवादीनां संयोगे समुच्चये फलं भवतीति कुशलबुद्धयो मन्वादयो मन्यन्ते ॥ ३४९ ॥

एकैकस्मात्फलं न भवतीत्यत्र दृष्टान्तमाह—

*यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ॥ ३५० ॥

एवं पुरुषकारेण विना दैवं न सिद्ध्यति ।

नात्र तिरोहितमस्ति ॥ ३५० ॥ ३५० ॥

लाभाय परराष्ट्रं गन्तव्यमित्युक्तम् । लाभश्चात्र[1] त्रिविधः, हिरण्यलाभो भूलाभो मित्रलाभश्चेति तेषु मित्रलाभो ज्यायान् । अतस्तत्[2]प्राप्त्युपाये यत्नो विधातव्यः ।

तत्प्राप्त्युपायश्च सत्यवचनमित्याह—

**हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ॥ ३५१ ॥**

**अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ।**

यस्मात् हिरण्यभूमित्रलाभेभ्यो मित्रलब्धिर्वरा उत्कृष्टा तस्मात्तत्प्राप्त्यै यतेत

रेकाभ्यामेव प्रयत्नस्य कारणत्वमवगम्यते । येषां तु विद्युत्पातादिक्षरणतया प्रयत्नो न प्रमाणान्तरादवगम्यते तेषां वेदादेव तदवगतिः । कारार्थादिप्रयत्नो वृष्टिहेतुतया वचनसिद्ध एव । विद्युत्पातादयस्तु दुःखहेतुत्वेनाधर्मप्रयत्नजन्यतया सामान्यतः शास्त्रादेवावगम्यते । तस्माद्यात्रादौ यतितव्यमेव । " इदि अप० ५८७.

* " यथा रथगतिकारणत्वेन प्रमितमपि रथादिचक्रमेकमेकाकिचक्रान्तरीवधुरं रथं न गमयति एवं सुखदुःखानुभवात्मककार्यजननतया प्रमितमपि दैवं न पुरुषकारेण सहकारिणा विना कार्यप्रयत्नेन रूपेण सिद्ध्यति । विद्युन्निपाताद्यपि साधयतो दैवस्यदेश विशेषे पुरुषस्यावस्थानापादकं पौरुषं भवत्येव सहकारि । तस्मात्फलार्थिना न केवलं दैवपरेण भवितव्यम् ॥" इति अप० ५८८.

१ ख. ग. घ. अत्रेति नास्ति । २ ख. ग. ततः ।

यत्नं कुर्यात् सामादिभिः, * सत्यं च रक्षेत् समाहितः सावधानः—सत्यमूलत्वान्मित्रलाभस्य ॥ ३५१ ॥ ३५१´ ॥

इदानीं राज्याङ्गान्याह—

**स्वाम्यमात्या[1] जनो दुर्गं[2] कोशो दण्डस्तथैव च ॥ ३५२ ॥**

**मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ।**

महोत्साह[3] इत्याद्युक्तलक्षणो महीपतिः स्वामी, अमात्या मन्त्रिपुरोहितादयः, जनो ब्राह्मणादिप्रजाः, दुर्गं धन्वदुर्गादि, कोशः सुवर्णादिधनराशिः, दण्डो हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गबलं, मित्राणि सहजकृत्रिमप्राकृतानि,—एताः स्वाम्याद्याः राज्यस्य प्रकृतयो मूलकारणानि एवं राज्यं सप्ताङ्गमुच्यते† ॥ ३५२ ॥ ३५२´ ॥

**तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ॥ ३५३ ॥**

**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ।**

तदेवंविधं राज्यं प्राप्य दुर्वृत्तेषु वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु नृपो दण्डं ‡पातयेत् प्रयोजयेत्—हि यस्माद्धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः । अस्य[4] च दण्ड इति यौगिकी संज्ञा,—'दण्डो दमनादित्याहुः स्तेनादान्तान्दमयेत् ।'[4] इत्यादि गौतमस्मरणात्[5] ॥ ३५३ ॥ ३५३´ ॥

* एतच्च सामादिसाध्यात् हिरण्यभूमिलाभादधिकलाभहेतोर्मित्रस्य प्राप्तौ वेदितव्यम् । अन्यथा तु हिरण्यलाभ एव बलवान् ।" अप० ५८८.

† "राज्ञः कर्म जनपदपालनं, राज्यं तत् सप्ताङ्गम् । सप्तास्याङ्गानि भवन्ति । कानि तानीत्यपेक्षिते स्वामीत्यादिना मित्राणीत्यन्तेन तद्विशेषो निर्दिष्टः । कुतस्तेषामङ्गत्वमित्याकाङ्क्षिते उक्तमेताः प्राकृतय इति । यतः कार्यमुत्पद्यतेऽवतिष्ठते नियमेन भवति सा प्रकृतिः, यथा हिरण्यं कुण्डलम् । राज्यं च विनास्वाम्यादिभिर्नोत्पद्यते । उत्पन्नमपि न तैर्विना चिरकालमनुवर्तते ततो भवन्ति स्वाम्यादयो राज्याङ्गानि ।" इति अप० ५८८.

‡ "धनशरीरपीडनविषयम् ।" इति अप० ५८९.

---

१ ग. अमात्यो । अप० स्वाम्यमात्यौ । क. स्वाम्यमात्यजना । २ अप० दुर्गः । ३ आ. ३०९. । ४ ग. तस्य । ४.—११. २८. । ५ क. ग. घ. वचनात् ।

**स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ॥ ३५४ ॥**

स पूर्वोक्तो दण्डो लुब्धेन कृपणेनाकृतबुद्धिना चञ्चलबुद्धिना न्यायतो न्यायानुसारेण नेतुं प्रयोक्तुं शक्यो न भवति ॥ ३५४ ॥

कीदृशेन तर्हि शक्य इत्याह—

**सत्यसंधेन शुचिना सुसहायेन धीमता ।**

सत्यसंधेनाप्रतारकेण शुचिना जितारिषड्वर्गेण सुसहायेन पूर्वोक्तसहायसहितेन धीमता* नयानयकुशलेन स दण्डो न्यायतो धर्मानुसारेण नेतुं शक्यः॥३५४॥

**यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ॥ ३५५ ॥**

**जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ।**

स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितमिदं सर्वं जगदानन्दयेत् हर्षयेत् । अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्प्रकोपयेत्॥ ३५५ ॥ ३५५ ॥

न केवलमधर्मदण्डेन जगत्प्रकोपः, अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह—

**अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ॥ ३५६ ॥**

**सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ।**

†यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृतः धर्महेतुत्वात्स्वर्गकीर्तिजयानां हेतुर्भवति ॥ ३५६ ॥ ३५६ ॥

---

* "अधिगतार्थानुचिन्तनवता ।"

† "दण्डस्यासम्यक्प्रणयनं प्रागनुष्ठितधर्मवशादुपार्जितस्य स्वर्गस्य कीर्तेरस्य च लोकस्य विनाशकं भवति । सम्यक्प्रणयनं तु धर्मान्तरार्जितं स्वर्गं कीर्तिं जयं च विघ्नानि वारणद्वारेणावहति । तस्मात्सम्यगेव धर्मः प्रणेयः ।" इति अप० ५९०.

---

१ अप० स नेतुं न्यायतः शक्योऽलब्धेन कृतबुद्धिना । २ क. क्रमणेन । ३ अप० तु प्रको० । ४ ख. ग स्वर्गं कीर्तिं लोकांश्च नाशयेत् । ग. धर्महेतुत्वादिति नास्ति । ५ घ. अपापहेतुत्वात् ।

**अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा॥ ३५७॥**

**नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्।**

अर्घ्योऽर्घ्यार्ह आचार्यादिः, शेषं प्रसिद्धम्,—एते भ्रातृसुतप्रभृतयोऽपि स्वधर्माच्चलिता दण्डयाः, किमुतान्ये, यतः स्वधर्माच्चलितः[1] अदण्डयो नाम राज्ञः कोऽपि नास्ति। एतच्च मातापित्रादिव्यतिरेकेण। तथा च स्मृत्यन्तरम्—"अदण्ड्यौ मातापितरौ स्नातकपरिव्राजकपुरोहितवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः।" इति* ॥ ३५७॥ ३५७ ॥

किं च—

**यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्॥ ३५८॥**

**इष्टं स्यात्क्रतुभिस्तेन †समाप्तवरदक्षिणैः।**

यस्तु राजा दण्डयान् स्वधर्मचलनादिना दण्डयोग्यान् सम्यक् शास्त्रदृष्टमार्गेण धिग्धनदण्डादिना दण्डयति वध्यान् वधार्हान् घातयति तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति—बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः। न च फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम् अकरणे प्रायश्चित्तस्मरणात्, यथाऽऽह वसिष्ठः—"दण्डयोत्सर्गे राजैकरात्रमुपवसेत्" "त्रिरात्रं पुरोहितः" "कृच्छ्रमदण्डयदण्डने पुरोहितः।" "त्रिरात्रं राजा।"[2] इति‡ ॥ ३५८॥ ३५८ ॥

---

* तत् स्वल्पापराधविषयं न सर्वात्मना दण्डाभावाभिप्रायम्। अत एव दक्षः—"पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति। श्वपादेनाङ्कयित्वा तं राजा शीघ्रं विवासयेत्॥" इति अप० ५९०.

† "सम्यगाप्ता लब्धा वरा दक्षिणा यैस्तैः।" इति अप० ५९०.

‡ "तथा 'एनो राजानमृच्छत्युत्सृजन्तं वै सकिल्बिषम्। तं चेद्घातयते राजा घ्नन् धर्मेण न दुष्यति॥' इति अप० ५७०.

---

१ क. धर्मचलिताः। २.—१९. ४०, ४१, ४३, ४४.।

दुष्टे सम्यग्दण्डः प्रयोक्तव्य इत्युक्तम्, दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह—

**इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ॥ ३५९ ॥**

**व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ।**

इत्येवमुक्तप्रकारेण क्रतुतुल्यं फलं दण्ड्यदण्डने, स्वर्गादिनाशं चादण्ड्यदण्डने सम्यग्विचिन्त्य *पृथक्पृथग्वर्णादिक्रमेण, सभ्यैर्वक्ष्यमाणलक्षणैः परिवृतः, प्रतिदिनं व्यवहारान्वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत् ॥ ३५९ ॥ ३५९-॥

**कुलानि जातीः श्रेणीश्च गणान् जानपदानपि[2] ॥ ३६० ॥**

**स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ।**

कुलानि ब्राह्मणादीनां, जातयो मूर्धावसिक्तप्रभृतयः[3], †श्रेणयस्तांबूलिकादीनां, गणा हैलेबुकादीनां[4], जानपदा कारुकादयः, एतान् स्वधर्माच्चलितान् प्रच्युतान् राजा विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत् ।

दण्डं दुर्वृत्तेषुनिपातयेदित्युक्तम् । स च दण्डो द्विविधः शारीरोऽर्थदण्डश्चेति, यथाऽऽह नारदः—"शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः । शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥" इति ॥ द्विविधोऽप्यपराधानुसारेणानेकधा भवति । आहस्म—"शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ।" इति ॥ ३६० ॥ ३६०-॥

तत्र कृष्णलमाषसुवर्णपलादिशब्दैरर्थदण्डा वक्तव्यास्ते च प्रतिदेशं भिन्नपरिमाणार्था इत्येकरूपापराधेऽपि देशभेदेन न्यूनाधिकदण्डो माभूदिति कृष्णलादिशब्दानां नियतपरिमाणविषयत्व दण्डव्यवहारे दर्शयितुमाह-—

**जालसूर्यमरीचिस्थं त्रसरेणूरजः स्मृतम् ॥ ३६१ ॥**

---

* "**पृथक् कार्यान्तरासंकरेण ।" इति अप० ५९१.**

† "**श्रेणीः सुवर्णकाराद्याः, गणान् मठब्राह्मणादीन् ।" इति अप० ५७२.**

---

१ **ख.** दण्डेन । **ग.** दण्डनेन । **२ अप०** जनपदा० । ३ **क.** मूर्धावसिक्तादयः । ४ **क. ग.** हैतुकादीनाम् ।

**तेऽष्टौ लिक्षा तु[1] तास्तिस्रो राजसर्षप उच्यते ।**
**गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु[2] ते त्रयः ॥ ३६२ ॥**

**कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ।**
**पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम् ॥ ३६३ ॥**

*जालकान्तरप्रविष्टादित्यरश्मिस्थितं यद्रजस्तत् त्रसरेणुरित्युक्तं[3] योगीश्वरादिभिस्तत्वदर्शिभिः । ते च त्रसरेणवोऽष्टौ लिक्षाः स्वेदजयूकाण्डम् । ता लिक्षास्तिस्रो राजसर्षपो राजिका । ते राजसर्षपास्त्रयो गौरसर्षपः सिद्धार्थः । गौरसर्षपाः षट् यवो मध्यः मध्यमो न स्थूलो न सूक्ष्मः । एतेन गौरसर्षपा अपि मध्यमा इति गम्यते । तथा राजसर्षपा अपि, मध्यशब्दादेव । सर्षपादिशब्दाः न केवलमुन्मानवचनाः किं तु तदुन्मितद्रव्यवचना इति गम्यते, यथा प्रस्थपरिमिता यवाः प्रस्था उच्यन्ते । एवं सर्षपाद्युन्मितं द्रव्यं सर्षपादिशब्दैः । सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरेणूनुपसंहृत्योन्मातुमशक्यत्वात्तद्द्वारेण कृष्णलादिव्यवहारो न स्यात् । तत्र स्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदेन प्रतिदेशं व्यवहारभेदे स्थिते दण्डव्यवहारे मध्य[4] इति नियम्यते । ते मध्यमा यवास्त्रय एकः कृष्णलः । ते कृष्णलाः पञ्चैको माषः । ते माषाः षोडशैकः सुवर्णः । ते सुवर्णाश्चत्वारः पल-

* **सुवर्णोन्मानम्—**

८ त्रसरेणवः = १ लिक्षा
३ लिक्षाः = १ राजसर्षपः
३ राजसर्षपाः = १ गौर सर्षपः
६ गौरसर्षपाः = १ यवः[1]
३ यवाः = १ कृष्णलः
५ कृष्णलाः = १ माषः
१६ माषाः = १ सुवर्णः
४ सुवर्णाः } = १ पलम्
५ ,, }

१ सर्वेऽप्येते मध्यमा ग्राह्याः न स्थूला नापि सूक्ष्मा यवाः सर्षपा वा

१ क. ऽथ । २ क. त्रयस्तु ते । ३ क. इति स्मृतम् । ४ क- ग. मध्यम ।

मिति संज्ञाः[1] कथिता इति । पञ्च वाऽपि पलं प्रकीर्तितं नारदादिभिः । तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशांशः कृष्णलो भवति । तैः पञ्चभिर्माषः माषैः षोडशभिः सुवर्णः स च व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति । ते चत्वारः पलमिति । निष्काणां विंशतिः पलम् । यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते[2] तदा व्यावहारिक[3]निष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति। तस्मिन् पक्षे सुवर्णः सार्धं निष्कद्वयं भवति, पलं च दशनिष्कम् । यदा तु मध्यमयवैः कृष्णलपरिकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः सुवर्णश्चतुर्निष्कः षोडशनिष्कं पलम् । पञ्चसुवर्णं पलमितिपक्षे विंशतिनिष्कं पलम् । एवमन्यदपि निष्कस्य[4] चत्वारिंशो भागः कृष्णलः द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्या-*दिलोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयम् ॥ ३६१ ॥ ३६२ ॥ ३६३ ॥

एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं राजतस्याह—

**द्वे कृष्णले रूप्य[5]माषो धरणं षोडशैव ते ।**

**शतमानं तु दशभिर्धरणैः पलमेव तु ॥ ३६४ ॥**

**निष्कं सुवर्णा[6]श्चत्वारः**

द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबन्धी माषः । ते रूप्यमाषाः षोडश धरणं, पुराण इत्यस्यैव संज्ञान्तरम्—"ते षोडश स्याद्धरणं पुराणश्चैव राजतः।" इति मनुस्मरणात् । दशभिर्धरणैः शतमानं पलमिति चाभिधीयते ॥ ३६४ ॥

पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति ।

---

* **राजतोन्मानम्—**

**२ कृष्णलौ = १ माषः**

**१६ माषाः = १ धरणम् = पुराणम्**

**१० पुराणानि = धरणानि = १ शतमानम् = पलम्**

**४ सुवर्णाः = १ निष्कम्**

---

१ क. सज्ञाः कथिता इति नास्ति । २ क. काल्पितः । ३ क. व्यवहार० । ४ ग. निष्केति नास्ति । ५ अप० रौप्य० । ६.—८. १३६.

इदानीं * ताम्रस्योन्मानमाह—

**कार्षिक स्ताम्रिकः पणः ।**

पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः, कर्षेणोन्मितः कार्षिकः,ताम्रस्य विकारस्ताम्रिकः कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च,—"कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकःपणः ।" इति मनुवचनात् । पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति । तथा सति 'माषो विंशतिमो भागः पणस्य परिकीर्तितः ।' इत्यादिव्यवहारः सिद्धो भवति । चतुःसुवर्णपलपक्षे तु पोडशमाषः पणो भवति । अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दौ ताम्रविषयावेव । एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तम्, दण्डव्यवहारोपयोगित्वात् । कांस्यरीतिकादीनामपि लोकव्यवहाराङ्गभूतानामेवोन्मानं द्रष्टव्यम् ॥३६४॥३६४-॥

स्वशास्त्रपरिभाषामाह—

**साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ॥ ३६५ ॥**

**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ।**

पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः । अशीत्या सह वर्तत इति साशीतिः । †अशीत्यधिकपणसहस्रपरिमितो यो दण्डः स उत्तमसाहससंज्ञो वेदितव्यः । तदर्धं मध्यमः तस्य साशीतिपणसहस्रस्यार्धं चत्वारिंशदधिकपणपञ्चशतपरिमितो दण्डो मध्यमसाहससंज्ञितः तदर्धमधमः तस्य चत्वारिंशदधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डोऽधमसाहससंज्ञः स्मृत उक्तो मन्वादिभिः । यत्तु—"पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः प-

---

*ताम्रोन्मानम्—

$\frac{1}{4}$ पलम् (राजतस्वर्णयोः) = १ कर्षः = पणः = कार्षापणः

१०८० पणाः = उत्तमसाहसदण्डः †
५४० " मध्यमसाहसदण्डः
२७० " अधमसाहसदण्डः = प्रथमसाहसः

---

१. —८. १३६.

श्च विज्ञेयः सहस्रं चैव चोत्तमः ॥ "इति मनुनोक्तं तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम् ॥ ३६५ ॥ ३६५ ॥

दण्डभेदानाह—

**धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ॥ ३६६ ॥**

**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ।**

धिग्दण्डो धिक्धिगिति कुत्सनं, वाग्दण्डस्तु परुषशापवचनात्मकः, धनदण्डो धनापहारात्मकः, वधदण्डः शारीरोऽवरोधादिजीवितान्तः—एते चतुर्विधा दण्डाः व्यस्ता एकैकशः समस्ताः द्वित्राः त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः। उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः, यथाऽऽह मनुः—"धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डन्तु वधदण्डमतः परम् ॥[1]" इति ॥ ३६६ ३६६ ॥

दण्डव्यवस्थानिमित्तान्याह—

**ज्ञात्वाऽपराधं देशं च कालं बलमथाऽपि वा ॥ ३६७ ॥**

**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ।**

यथापराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनं कुर्वीत एवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्डार्हेषु दण्डप्रणयनं *कुर्यात् । तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च ।

यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथाऽपि वर्णान्तरस्यापि विषयमण्डलादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः† । "राजधर्मान्प्रवक्ष्यामि

* "अत्र च पूर्ववाक्यप्राप्तत्वादपराधज्ञानमनूद्यते । देशादिज्ञानं तु विधीयते । क्वचिद्धि देशे स्वल्पेनैव शीतेनाऽऽतपेन वा स्वल्पकालीनेन भोजननिवारणेन अधिका पीडा भवति । केचित्तु महताऽपि न तावती। तथा काले शरदादौ तथा दण्डनीयबलं विदित्वा ताडनादिदण्डो विधेयः । तथा वयः कर्मवित्तानि । अन्यथा तत्स्वरूपनाशोऽग्निहोत्रादिकर्मलोपो वित्ताप्राप्तिश्च स्यात् । देशादिविदित्वा तु दण्डप्रणयने योगक्षेमावुपपद्येत इति ।" इति अप० ५७३.

† "तत्कार्यापत्त्या तद्धर्मलाभ' इति न्यायात् । करादानप्रयुक्तत्वाच्च प्रजापालनस्य ।

१.—८. १२९. । 'वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।' इति च पाठः ।

यथावृत्तो भवेन्नृपः[1] ।" इत्यत्र पृथङ्नृपग्रहणात्करग्रहणस्य रक्षार्थत्वात् रक्षणस्य च दण्डप्रणयनायत्तत्वादिति ॥ ३६७ ॥ ३६७ ॥

इति श्रीपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ प्रथमोऽध्यायः समाप्तः ।

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥[2] *

अस्मिन्नध्याये प्रकरणानि—

(१). उपोद्घातप्रकरणम् .
(२). ब्रह्मचारिप्रकरणम् १.
(३). विवाहप्रकरणम् २.
(४). जातिविवेकप्रकरणम् ३.
(५). गृहस्थधर्मप्रकरणम् ४.
(६). स्नातकप्रकरणम् ५.
(७). भक्ष्याभक्ष्यप्रकरणम् ६.
(८). द्रव्यशुद्धिप्रकरणम् ७.
(९). दानधर्मप्रकरणम् ८.
(१०). श्राद्धप्रकरणम् ९.
(११). गणपतिकल्पप्रकरणम् १०.
(१२). ग्रहशान्तिप्रकरणम् ११.
(१३). राजधर्मप्रकरणम् १२.

एवं त्रयोदशप्रकरणानि ॥

---

सर्वो हि धनं प्रयच्छन्नात्मसमवायि प्रयोजनमुद्दिशति । न च करदानस्य स्वगुप्तेरन्यत्प्रयोजनमस्ति । तस्मात्करमाददानेन प्रजापालनं विधेयमिति सिद्धम् ।" इति अप० ५७३.

* 'क' पुस्तकेऽत्र 'गंभीराभिः प्रसन्नाभिर्वाग्भिर्नाम्ना मिताक्षरा। अनल्पार्थाभिरल्पाऽपि विवृतिर्विहिता मया' ॥ इत्ययमधिकः श्लोको दृश्यते ।

---

१. मनुः—७. १. । २ घ. अयं श्लोको नोपलभ्यते ।

इति

याज्ञवल्क्यमुनिशास्त्रगता
विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षराऽपि विपुलार्थवती
परिषिञ्चति श्रवणयोरमृतम् ॥

॥ श्रीरस्तु ॥



# अथ व्यवहाराध्यायः

## व्यवहारमातृकाप्रकरणम् १

अभिषेकादिगुणयुक्त[१]स्य प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न

## विश्वरूपव्याख्या

श्रीगुरुभ्यो नमः ॥ अथ विश्वरूपकृतविवरणबालक्रीडाव्याख्याप्रारम्भः ॥ शुभमस्तु ॥

## सुबोधिनी

नमः सकलकल्याणभाजनाय पिनाकिने ।
नमो लक्ष्मीनिवासाय देवतायै गिरां नमः ॥ १ ॥
पेद्दिभट्टात्मजः श्रीमान् भट्टविश्वेश्वरः सुधीः ।
व्याख्यां मिताक्षराख्यायाः कुरुतेऽयं सुबोधिनीम् ॥ २ ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परा शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥ ३ ॥

पूर्वाध्यायान्ते राजधर्मकथनप्रस्तावे[२]न दुष्टेषु दण्डविधानाच्छिष्टेषु परिपालनविधानाद-न्वयव्यतिरेकाभ्यां प्रजापा[३]लनाधिकारिणाऽहरहर्व्यवहारदर्शनं कर्तव्यमित्युक्तम् । तस्य व्यव-हारस्य [४]स्वरूपेतिकर्तव्यताकाङ्क्षायामुत्तराध्याय आरभ्यते [५]अभिषेकादिगुणयुक्तस्येति ।

## बालंभट्टी

श्रीगणेशाय नमः ॥ पूर्वतन्त्रान्ते दुष्टदण्डस्य शिष्टरक्षणस्य विधानादन्वयव्यतिरेकाभ्यां पालनाधिकारिणाऽहरहर्व्यवहारदर्शनं कर्तव्यमित्युक्तम् । तस्य व्यवहारस्य स्वरूपप्रकारेति कर्तव्यताकांक्षायामयमध्याय इत्याह—अभिषेकादीति । यद्वा व्यवहारान् स्वयमित्या-

---

१ ख. ग. ज. पुस्तकेषु 'राज्ञः' इत्यधिकम् । २ त. 'न' कारो नास्ति । ३ त. 'परिपाल'। ४ त. 'स्वरूपप्रकारे'। ५ त. 'अभिषेकादीति'।

संभवति। दुष्टपरिज्ञानं च न व्यवहारदर्शनेन [1]विनेति संभवति। तद्व्यवहारदर्शनमहरहः[2] कर्तव्यमित्युक्तम्—"व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्।"[3] इति। स च व्यवहारः कीदृशः, कति विधः, कथं चेतीतिकर्तव्यताकलापो नाभिहितः, तदभिधानाय द्वितीयोऽध्यायः प्रारभ्यते व्यवहारानिति,—

5 **व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः॥ १॥**

श्रियस्समुदयं प्राप्तुमिच्छता विजिगीषुणा...समृद्ध्यै राज्ञा प्रयत्नादमित्रराज्यान्याच्छिद्य स्वराज्यं विवर्द्धनीयमित्युक्तम्। तत्रापि कष्टतमाः खल्वरयः, कापटिककुयन्त्रप्रहारिणो दस्यवः,—तेभ्योऽपि राष्ट्रं रक्षणीयमित्येतदप्युक्तम्। अथेदानीं तदुद्धरणप्रकारविवेकार्थं व्यवहारनिरूपणं प्रस्तौति—**व्यवहारान्नृप इत्यादि॥ १॥**

---

## सुबोधिनी

[4]अथ वा "व्यवहारान् स्वयं पश्येत्" इत्यादिना प्रयोगविधिना साङ्गोपाङ्गो व्यवहारः कर्तव्य इति विहितः पूर्वाध्याये। [5]अत्राङ्गाकाङ्क्षायां [6]तदर्थमुत्तराध्याय[7] इति। अयमभिप्रायः—अनयोरध्याययोर्हेतुहेतुमद्भावः सम्बन्ध इति। तत्र व्यवहारो नाम कीदृश इत्याशङ्क्य

## बालंभट्टी

दिना प्रयोगविधिना सांगोपांगो व्यवहारः कर्तव्यतया विहितः पूर्वतन्त्रान्ते। तत्रांगाद्याकाङ्क्षायामाह—अभीति। हेतुहेतुमद्भावरूपसम्बन्धोऽनयोरध्याययोः सङ्गतिर्बोध्यः। उक्तहेतुमाह—व्येति। चस्त्वर्थे वाक्यालंकारे वा। कीदृश इति स्वरूपप्रश्नः, कति विध इति प्रकारप्रश्नः, कथं चेतीति इतिकर्तव्यताप्रश्नः—इतिकर्त्तव्यतेति। इत्याकाङ्क्षायामवश्यं वक्तुमुचित इत्यादिः,—स्वरूपप्रकारेतिकर्तव्यताकलाप इत्यर्थः, अङ्गादिकलाप इत्यर्थो वा॥

---

१ ख. दर्शनमन्तरेण। च. झ. व्यवहारदर्शने। कात्यायनः व्यव। २ ङ. मन्वहं। ३ आ. ३६०.। ४ त. 'यद्वा' इति। ५ त. 'तत्र' इति। ६ त. 'तदर्थम्' इति नास्ति। ७ 'यारम्भः'। ८ त. 'वलक्षणः'।

अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः, यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति अन्योऽपि तद्विरोधेन मदीयमिति। तस्यानेकविधत्वं दर्शयति बहुवचनेन। नृप इति न क्षत्रियमात्रस्यायं धर्मः, किं तु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति। पश्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः। विद्वद्भि-

---

ननु चैतत्प्रागेवोक्तमिति नृपतिरित्यत्र। सत्यम्,—गुणार्थस्त्वयमारम्भः—न कोशसंचितार्थप्रधानो भवेत्, धर्मशास्त्रानुसारेण व्यवहारान्नृपः पश्येदित्यर्थः। किञ्च, विद्वद्भिर्ब्रा-

---

## सुबोधिनी

'व्यवहारान्' इत्यत्र प्रातिपदिकोपात्तं व्यवहारस्वरूपं निर्वक्ति—अन्यविरोधेनेति, तमेवोदाहृत्य दर्शयति—यथा कश्चिदिति। प्रातिपदिकोद्दिष्टस्य व्यवहारस्य प्रत्ययेन द्वितीयाबहुवचनेन भेदो दर्शित इत्याह—तस्यानेकविधत्वमिति। नृपशब्दोपादानस्याभिप्रायमाह—नृप इति नेति। व्यवहारान् स्वयं पश्येदित्यनेन पौनरुक्त्यं परिहरति—पश्येदिति पूर्वोक्तस्यानुवाद इति। अत्रैषा वचनव्यक्तिः—'व्यवहारान् नृपः पश्येत्' इति यत् तद् वक्ष्यमाणधर्मेण सहेति। तमेव धर्मविशेषमाह—विद्वद्भिर्वेदव्याकरणधर्मशास्त्राभिज्ञैरिति। विद्वद्ब्राह्मणसा-

## बालंभट्टी

आद्यश्लोकेन त्रयाणामप्युत्तराणीति ध्वनयन् स्वरूपप्रश्नस्य प्रकृत्योत्तरमभिहितमिति प्रतिपादयन् तत्स्वरूपमाह--अन्येति। अनेन भावे घञ् तत्र सूचितः। धातूनामनेकार्थत्वात्तदर्थलाभः। स्पष्टत्वाय तमुदाहरति—यथेति। द्वितीयोत्तरमाह—तस्येति,--प्रातिपदिकोदितव्यवहारस्य प्रत्ययेन द्वितीयाबहुवचनेन भेदो दर्शित इत्यर्थः। पूर्वमनुवाक्येन प्रतिपादितमर्थं स्वयमित्येव सिद्ध्या अधिकनृपपदोक्तिस्वारस्येन प्रतिपादयति—नृप इति। यौगिकोऽयं न रूढ इति भावः। इतिना कारणत्वं तत्र तस्योच्यते—क्षत्रियेति,---अभिषिक्तस्य तस्यैवेत्यर्थः। अपिनाऽस्यैव समुच्चयः। "व्यवहारान् स्वयम्" इत्यस्य विधित्वेन पश्येदिति पुनर्विधिवैयर्थ्यं परिहरति--पश्येदितीति। धर्मेति विद्वद्ब्राह्मणसाहित्यादिरूपधर्मविशेषः इत्यर्थः। तथा च व्यवहारान्नृपः पश्येदिति यत्तद्विद्वद्भिर्ब्राह्मणैः सह धर्मशास्त्रानुसारेण तादृशः स इति योजना बोध्या। एतेनास्य वैयर्थ्यं परिहृतम्, अन्यथा तेनैव सिद्धेऽस्य वैयर्थ्यं स्पष्टमेव। तमेव धर्मविशेषमाह--विद्वद्भिरित्यादिना। स एव धर्म इतिकर्तव्यता, स चाङ्गानुष्ठानप्रकारः,--एवं

---

१ त. 'दृश्यते'।

वेदव्याकरणादिधर्मशास्त्राभिज्ञैः ब्राह्मणैर्न क्षत्रियादिभिः। ब्राह्मणैः सहेति तृतीयानिर्देशा-त्तेषामप्राधान्यम्,—" सहयुक्तेऽप्रधाने "[1] इति स्मरणात्। अतश्चादर्शनेऽन्यथादर्शने च राज्ञो दोषो न ब्राह्मणानाम्, यथाऽऽह मनुः—"अदण्ड्यान्दण्डयन्राजा दण्ड्यां-

---

ह्मणैस्सह। प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपयोगितैव, द्रष्टा तु निग्रहानुग्रहसामर्थ्याद्रा-जैव। अत एवोक्तम् 'क्रोधलोभविवर्जितः' इति। समर्थेनापि धर्मशास्त्रानुसारिणाभाव्यम्,—न क्रोधादिवशेनान्यथा व्यवहर्तव्यमित्यर्थः। एकत्वेऽपि व्यवहारस्य स्वकीयविशेषापेक्षया

---

## सुबोधिनी

हित्यरूपधर्मविधानमित्यर्थः। स एव च[2] धर्म इतिकर्तव्यता। इतिकर्तव्यता नामाङ्गानुष्ठान-प्रकारः। एवं[3] च द्वितीयाध्यायादिश्लोकस्यैव प्रपञ्चः सकलोऽध्यायशेष इति गम्यते। ननु किं विद्वद्ब्राह्मणानां नृपस्य च व्यवहारदर्शने समप्राधान्यमेव? इत्याशङ्का नेत्याह—ब्राह्मणैः सहेति। तेषां ब्राह्मणानामित्यर्थः। ननु तृतीयानिर्देशाप्राधान्यं कुतः इत्यत आह—सहयुक्त इति। "सहयुक्तेऽप्रधाने" अस्यार्थः—सहार्थेन युक्तेऽप्रधाने तृतीया विभक्तिर्भवतीति, यथा पुत्त्रेण सहागतः पितेत्यादिषु। एवं प्रकृतेऽपि[4] ब्राह्मणैः सहेति सहयोगे तृतीयाविधानात् ब्राह्मणाप्रधान्यमित्यर्थः। राज्ञः प्राधान्ये ब्राह्मणानां चाप्राधान्ये[5] फलमाह—अतश्चादर्शने इति। अयमभिप्रायः—राज्ञः प्राधान्यादधिको दोषः ब्राह्मणानां तु तादृश

## बालंभट्टी

चास्य श्लोकस्यैव प्रपञ्चः सकलोऽध्यायशेष इति भावः। ब्राह्मणैरित्यस्य फलमाह—नेति। धर्मविधानार्थत्वेनास्य प्राप्तव्यवहारदर्शने नृपस्य ब्राह्मणानां च समप्राधान्यं निराचष्टे—ब्राह्मणैः सहेतीति। तेषां ब्राह्मणानां। ननु तावता कथं तत्त्वमत आह—सहयुक्ते इति। सहार्थेन योगे ऽप्रधाने तृतीयेति तदर्थः। यथा पुत्त्रेण सहाऽऽगतः पितेत्यादौ शाब्दक्रियाद्यनन्वयित्वरूप-प्राधान्यं पुत्त्रादेस्तथा प्रकृतेऽपीति तदर्थत्वेऽपि न तथेतिभावः। एतत्फलमाह—अतश्चेति। न ब्राह्मेति—राज्ञो दोषो य उक्तः स ब्राह्मणानां नेत्यर्थः—उक्तहेतोः, न तु सर्वथा दोषाभावो-ऽभिप्रेतः,—"सभा वा न प्रवेष्टव्या" इत्यनेन विरोधापत्तेरिति बोध्यम्। तेषां तत्र कथनेनैव

---

१ अ० २. ३. १९.। २ त. 'च' इति स्ति। ३ त. 'एवम्'। ४ त. 'प्रकृतेऽपि इति नास्ति। ५ थ. ब्राह्मणानां चापसर्जनत्वे फलमाह'

श्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैवगच्छति[2]॥[3]"इति। धर्मशास्त्रानुसारेण—नार्थशास्त्रानुसारेण। देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य[4] धर्मशास्त्रविषयत्वान्न पृथगुपादानम्, यथा च वक्ष्यति—"निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च[6] यः॥"[7] इति। धर्मशास्त्रानुसारेणेति सिद्धे क्रोध-लोभविवर्जित इति वचनमादरार्थम्। क्रोधोऽमर्षः लोभो लिप्सातिशयः॥ १॥

बहुवचनम्, यथाऽऽहमनुः 'तेषामाद्यमृणादानम्' इत्यादि। नारदश्च 'चतुष्पादश्च-

सुबोधिनी

दोषाभावो, न तु सर्वात्मना दोषाभावः। तथा च "सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्। अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्बिषी॥[10]" इत्यनेन न विरोधः॥ १॥

बालंभट्टी

तल्लाभे शास्त्रान्तरस्यासम्भवेनैव निरासे तदुक्तिफलमाह—नार्थेति। न्यूनतां परिहरति देशादीति। आदिना देवगृहादिपरिग्रहः (?)। पारिभाषिकधर्मेण व्यवस्थानं समयः,—तत्सिद्ध देशादि संबन्धि धर्मस्येत्यर्थः। विरुद्धस्य त्याज्यावश्योक्तत्वादाह—धर्मेति। वक्ष्यतीति सम्विद्व्यतिक्रमप्रकरणे योगीश्वर इति भावः। क्रोधेति प्रतीकम्, सिद्धे इति। तयोस्तत्र निषिद्धत्वात् सामान्येन सर्वलेति भावः।आदरेति।—अत्र विशेषेण तत्त्यागार्थमित्यर्थः।मनुर-पि,—"व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः।मन्त्रज्ञैर्मन्त्रिभिः सार्धं विनीतः प्रविशेत् सभां॥ तत्रासीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम्। विनीतवेषाभरणः पश्येत् कार्याणि कार्यिणां॥ प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः। अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्॥"[11] "धर्माश्रयमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्॥"[12] इति। व्यवहारान् अर्थिप्रत्यर्थिनोर्विवादविषयोक्तीः, दिदृक्षुः नि-र्णिनीषुः, पार्थिवः पृथिवीपतिः, क्षत्रियादन्योऽपि,—मन्त्रज्ञैः देशकालाद्युचितकार्याकार्यनि रूपणाभिज्ञैः,—एतच्च ब्राह्मणैरित्यस्य विशेषणम्, अमंत्रज्ञा हि ब्राह्मणा देशकालाद्यननुरूपं धर्ममपि सहसा ब्रुवन्तो राज्ञः कथंचिदनर्थमापादयेयुः,—मन्त्रिभिः बुद्धिसचिवैः, विनीतः सहजाहार्योभयविनययुक्तः, पाणिमुद्यम्य उत्तरीयादुद्धृत्य—वस्त्रोपसंव्यानं कृत्वेति यावत्,

---

१ ख. चाधि। २ ग. पश्यति। ङ. गच्छति॥" व्यवहारदर्शनं च धर्म०। ३—८. १२८.। ४ ख.'कथं इत्यधिकम्। ५ च. छ. झ. धर्मशास्त्राविरुद्धस्येति नास्ति। ६ क. ग. राज्ञा कृत०। ७ व्य. १८६.। ८ ख. ग. च. ज. झ. 'क्रोधलोभविवर्जितः' इति प्रतीकमधिकम् अनूक्तं च बालं भट्टीव्याख्यायाम्। ९ छ. 'धर्मशास्त्रानुसारेण सिद्धे' इति नास्ति। १० मनुः—८. १३.। ११ मनुः—८. १, २, ३.। १२ मनुः—८. २३.।

किं च[1]—

**श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥**

श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन वेदाध्ययनेन[2] च संपन्नाः
5 धर्मज्ञाः धर्मशास्त्रज्ञाः, सत्यवादिनः सत्यवदनशीलाः[3], रिपौ मित्रे च ये समाः द्वेषरा[4]-
गरहिताः—एवं भूताः सभासदः सभायां संसदि यथा सीदन्ति उपविशन्ति तथा
दानमानसत्कारैः राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तम्, तथाऽपि
ब्राह्मणा एव, यथाऽऽह कात्यायनः—"स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।

तुर्व्यापी' इत्यादि ॥ १ ॥

यतश्च धर्मशास्त्रप्रामाण्यं प्राधान्यं व्यवहारदृष्टौ अतः—श्रुताध्ययनेत्यादि ॥२॥

## सुबोधिनी

पूर्वोक्तेभ्यो ब्राह्मणेभ्यः पृथक् सभासदः कर्तव्या इत्याह—किं चेति । ते च
सभासदो ब्राह्मणा एवेत्याह—यद्यपीति । स तु सभ्यैरिति—स राजा, स्थिरैरचञ्चलैः,

## बालंभट्टी

पश्येत् निश्चिनुयात्, कार्याणि ऋणादानादीनि, देशदृष्टा हेतवः देशविशेषव्यवस्थितानि
निर्णयसाधनानि, यथोदीच्यमध्यमानां कन्यां याचमानाय भोजनं यदि दीयते (न) तुभ्यं दे-
येत्यनुक्तेऽपि प्रतिश्रुता भवतीति ॥ १ ॥

शास्त्रदृष्टाः साक्षिप्रभृतयः प्रागुक्तब्राह्मणेभ्यः सभ्याः पृथक्कार्या इत्याह—
किं चेति । श्रुतेत्यस्य वेदशास्त्रसंपन्ना इति शाब्दोऽर्थः । तत्फलितमाह—श्रुतेनेति ।
अत्र द्वावपि भावप्रत्ययान्तौ क्रियापरौ, अन्यथा धर्मज्ञानस्यानुपयोगात् । धर्म
शब्दो लक्षणया शास्त्रपर इत्याह—धर्मशास्त्रेति । ताच्छील्ये णिनिरित्याह—शीला इति ।
एतानुद्दिश्य सभासत्त्वं विधीयत इत्याह—एवं भूताः सभेति । विधेयार्थमाह—स-
भायामिति, तदर्थमाह—संसदीति । सीदन्तीत्युक्तस्य व्याख्या यथा उपेति,—धातू-
नामनेकार्थत्वादिति भावः । बलात्कारनिरासायाऽऽह—दानेति । एते सभासदोऽपि ब्राह्मणा
एवेत्याह—यद्यपीति, तस्य वितयसाधारणत्वादितिभावः । स त्विति[5],—"विनीतवेषो

१ ख. छ. ज. किं चेति नास्ति । २ घ.ङ. च. छ. ज. झ. 'वेदाध्ययनेन' इति नास्ति ।
३ ख. वचन । ४ ख. ग. द्वेषरागादिर० । घ. द्वेषरागविवर्जिताः । ५ त. स त्विति । ६ त. सभ्यैः ।

धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥" इति । ते च त्रयः कर्तव्याः—बहुवचन-स्यार्थवत्त्वात्, "यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः। [1]" इति मनुस्मरणाच्च[2]। बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह--"लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयो-

---

निगदोक्तः श्लोकः दृष्टमूलत्वाच्च राज्ञस्स्वयं व्यवहारदर्शनस्मृतेरदृष्टार्थत्वेऽपि च

---

## सुबोधिनी

प्राज्ञैर्बुद्धिमद्भिः, मौलैः पितृपितामहागतैः, अर्थशास्त्रमौशनसादि। ते च त्रय इति—ते सभासदः। पक्षान्तरमाह—बृहस्पतिस्त्विति। व्यवहारान् नृपः पश्येदित्यत्रोपात्तविद्वद् ब्राह्मणोद्देशेन श्रुताध्ययनसम्पन्नत्वादिरूपो धर्मो विधीयते। तथा[3] च विद्वद्ब्राह्मणविशेष णत्वाच्छ्रुताध्ययनसम्पन्नत्वादेर्न पूर्वोक्तेभ्यः पृथग्भूताः सभासद इत्यभिप्रायेणाशङ्क्य परिह-

## बालंभट्टी

नृपतिः सभां गत्वा समाहितः। आसीनः प्राङ्मुखो भूत्वा पश्येत् कार्याणि कार्यिणां॥" इति इतःपूर्वश्लोकः, स राजा स्थिरैरचञ्चलैः प्राज्ञैः बुद्धिमद्भिः मौलैः पितृपितामहादिपरंपरायातैः द्विजोत्तमैः ब्राह्मणैः—सप्तमीतत्पुरुषः—धर्मशास्त्रं मानवादि, तस्य योऽर्थः सिद्धांतस्तत्र निष्णातैः, अर्थशास्त्रमौशनसादि तत्र तथा—ते चेति सभासद इत्यर्थः। त्रय इत्यस्य त्रय एवेत्यर्थः। एतेन पूर्वापरको द्यौर्निरासः। तत्राद्ये हेतुमाह—बहुवचनेति, द्वितीये हेतुमाह—यस्मिन्निति। इतोऽपि तत्र ब्राह्मणा एवेत्यपि बोध्यम्। एवमग्रेऽपि बोध्यम्। मतान्तरमाह-बृहस्पतिस्त्विति। उत्तमादिभेदेनाऽऽह-सप्तेति। वेदशब्दः शास्त्रस्याप्युपलक्षणं, लोकशब्दो देशकालादिपरः। यद्वा एतदन्यसर्वपरः धर्मशब्दः शास्त्रपरः, प्राधान्यात्तस्य पुनरुक्तिः। यत्र सभायां, यज्ञेति—यज्ञसभासदशीत्यर्थः। यदि तु एतदनुरोधेन मानवे त्रय इत्युपलक्षणं, धर्मपक्षपरं वा, तदैकवाक्यतैव न पक्षान्तरम्। अत्र पक्षे ते च त्रय इत्यपि तथेति न भेद इति बोध्यम्। ननु व्यवहारान्नृप इत्यत्रोपात्तविद्वद्ब्राह्मणोद्देशेन श्रुताध्ययनसम्पन्नत्वादिरूपो धर्मोऽनेनाविधीयतां, तथा च विद्वद्ब्राह्मणविशेषणत्वात्। श्रुताध्ययनसम्पन्नत्वादेर्न प्रागुक्तेभ्य एते सभासदो भिन्ना इति किं चेत्यवतरणासंति (?) रित्याश-

---

१.—८. ११. । २ ख. वचन । ३ त. 'ततश्च'।

ऽपि वा। यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥[१]" इति। न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां "श्रुताध्ययनसंपन्नाः" इत्यादि विशेषणमिति मन्तव्यम्, तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात्, विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च। तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः—"सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः॥" इति। तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः। अत एवोक्तम्—"नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति।" इति। तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजा अन्यथा करोति तदाऽसौ निवारणीयः, अन्यथा दोषः। उक्तं च कात्यायनेन—"अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः। तेऽपि

---

प्रयोजनानुसारात् ॥ २ ॥

---

## सुबोधिनी

रति—न च ब्राह्मणैः सहेत्यादिना। कात्यायनेन पूर्वोक्तब्राह्मणेभ्यः पृथक्त्वेन सभासदां दर्शितत्वात् त एव सभासद इति वक्तुं न शक्यते। अतस्तद्वचनाविरोधात् विशेषणविशेष्यभावाभावाच्च तदुद्देशेन विधिर्न घटत इत्यर्थः। सप्राड्विवाक इति—राजप्रतिनिधिः प्रा-

## बालंभट्टी

येनाशंकते—न चेति। समानविभक्तिकनामार्थयोरभेदान्वयः इति व्युत्पत्तेराह—तृतीयेति। वचनक्रमेणेदमुक्तम्। अभेदस्य संसर्गत्वाभावादाह—विशेषणेति। नन्वध्याहारेण तत्संभवोऽत आह—विद्वद्भिरिति। ननु विद्वद्भिरित्यस्यैव विवरणपरमिति न पुनरुक्तिप्रसङ्गः अत आह-चेति। तेन यच्छब्दोक्तिवैयर्थ्यापत्तिसमुच्चयः, स हि विधेयत्वप्रतिबन्धकस्तथा च तद्बलादत्रैव मिथ उद्देश्यविधेयभावः स्वरसतः प्रतीयते तत्र च प्राप्त्याप्राप्तविवेकन्यायेन लोकादिसिद्धश्रुताध्ययनसम्पन्नादिकमुद्दिश्य सभासत्त्वं विधीयते इति भावः। कात्यायन विरोधरूपदोषान्तरमपि सूचयन्नाह—तथा चेति। तथा च तदुद्देशेन तद्विधिर्न घटत इति। त एव सभासद इति वक्तुं न शक्यत इति भावः—स इति। प्रागुक्ताग्रिमोऽयम्। प्राड्विवाकेन सहितः—प्राड्विवाको राजप्रतिनिधिः "प्राड्विवाकाक्षदर्शकौ"[३] इत्यमरः। अमात्या बुद्धिसचिवास्तत्सहितः ब्राह्मणाश्च पुरोहिताश्च तैः सहितः—सभ्यैः सहितः—अनेन सर्वेषामागमत्वमुक्तं, धर्मतस्तत् शास्त्रतः प्रेक्षक इत्यर्थः। तत्र सभ्यब्राह्मणयोर्मध्ये

---

१.—१. ११.। २ त. 'इति भावः'। ३.—२. क्ष० ४६१.।

तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥" इति । अनियुक्तानां पुनरन्यथाऽभिधाने अनभिधाने वा दोषो न तु राज्ञः अनिवारणे—"सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषी ॥"[1] इति मनुस्मरणात् । रिपौ मित्रे चेति चकाराल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम्, यथाऽऽह कात्यायनः—" कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥" इति ॥ २ ॥ 5

'व्यवहारान्नृपः पश्येत्' इत्युक्तं, तत्रानुकल्पमाह—

**अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥**

---

कार्याणां गुरुलघुत्वे समीक्ष्य—**अपश्यता इत्यादि ॥ ३ ॥**

---

## सुबोधिनी

द्विवाकः। अमात्या बुद्धिसाचिवाः। ब्राह्मणानामनियुक्ततया भेदमाह— तत्र ब्राह्मणा अनियुक्ता इत्यादिना । अत्र नियोगे नृपोऽ[3]धिकारी तेन नियुक्तानियुक्तश्चेत्यर्थः। तेऽपि[4] तद्भागिन इति तत्पापभागिन इत्यर्थः । मूलवचनस्थचशब्दद्योत्यमर्थमाह—रिपौ मित्रे चेति, चकारादिति ॥ २ ॥

**ननु नृपालस्य प्रतिदिनं व्यवहारदर्शनं कर्तव्यतया विहितं, तथा शान्तिकादीनि कर्तव्या-**

## बालंभट्टी

अनीति—राज्ञेति शेषः। एवमग्रेऽपि तथा मूलानुक्तेः। सभेति—तथा मूलोक्तेः। तथा भेदोक्तेः फलभेदमाह–तत्रेति, प्राग्वत्। तं राजानम्। तद्भागिन इति–राजसम्बन्धिदोषभागिन इत्यर्थः। एवं च प्रागुक्तदोषशब्दो विशेषपरो बोध्यः, पुनस्त्वर्थे। न्यूनतामज्ञाननिरासाय सर्वथा नावश्यकमूलस्य चशब्देन परिहरति—रिपाविति । वित्तान्तपञ्चानां द्वन्द्वान्मतुप् । तत्र कुलवत्त्वं कुलीनत्वम्, कुलभूतैरित्यस्य [5]परम्परायातैरित्यर्थः ॥ २ ॥

**ननु राज्ञां प्रतिदिनं व्यवहारदर्शनवत् कार्यान्तराण्यपि कर्तव्यत्वेन विहितानि**

---

१.—८. १३. 'सभां वा न प्रवेष्टव्यं...', 'सभां वा न प्रवेष्टव्यो...' इति पाठौ च। २ क. सह प्रकर्तव्यम् । ३ ब्राह्मणोऽधि०—इत्येकस्मिन् कोशे । ४ पीति०—५ 'परस्प०' इति च ।

कार्यान्तरव्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह सर्वधर्मवित्—सर्वान्धर्मान् शास्त्रोक्तान् सामयिकांश्च धर्मान्वेत्ति[1] विचारयतीति स सर्वधर्मवित्—ब्राह्मणो न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनोक्तगुणविशिष्टं कुर्यात्, यथाऽऽह[2]—"दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्र भीरुं धर्मिष्ठमुद्युक्तं
5 क्रोधवर्जितम्॥" इति। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम्, यथाऽऽह कात्यायनः—"ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥"इति। नारदेन त्वयमेव मुख्यो दर्शितः—"धर्मशास्त्रं

सुबोधिनी

न्तराण्यपि विहितानि, तत्र दैववशादुभयसमवाये किं कर्तव्यमित्याशङ्क्य (आह)—दान्तमिति। गुणयुक्तं सभासदादिभ्यः पृथग्भूतं ब्राह्मणं, तदभावे तादृशं क्षत्रियं, तस्याप्यभावे वैश्यं वा व्यवहारदर्शने नियोजयेदित्याह—व्यवहारान् नृपः पश्येदित्युक्तमित्यादिना। योगीश्वरोक्तमनुकल्पमेव मुख्यं मन्यते नारद इत्याह—नारदेन त्वयमेवेति। राज्ञो बहुकार्यव्याकुलत्वेनावकाशाभावात्स्वप्रतिरूपकपूर्वोक्तपुरुषान्तरद्वारेणैव व्यवहारदर्शनस्योचितत्वादसावेव पक्षो मुख्यो ज्यायानित्यर्थः। धर्मशास्त्रं पुरस्कृत्येत्यत्र प्रस्तुतत्वाद्राजनियुक्तपुरुष एव व्यवहारदर्शनेऽ-

बालंभट्टी

तत्र दैवात् समवाये किं कार्यमित्याशङ्कायामाह—त्र्यवेति। अत एव तुः। तेन तत्त्यागसूचनद्वारा तस्याप्यावश्यकत्वं सूचितम्। कार्यवशादित्यस्य व्याख्या कार्यान्तरेति—शान्तिकाद्यावश्यकोक्तभिन्नकार्येत्यर्थः। सह सहितः। अनेन प्रागुक्तेभ्यः सर्वेभ्यो भिन्नोऽयमिति सूचितम्। सर्वपदस्वारस्यादाह—समेति,— देशादिसमयधर्मानित्यर्थः। वेत्ति विचारयतीति पाठः। वेत्तीति पाठे वेत्तीत्यस्य तत्पूर्वकं जानातीत्यर्थः। प्रकरणात्तल्लाभे तदुक्तिफलमाह—न क्षत्रेति। यतोऽयं सर्वतो भिन्नोऽत एव विशेषमाह—तं चेति,— ब्राह्मणं चेत्यर्थः। यथाऽऽहेति—कात्यायन इति भावः। मध्येति पक्षपातरहितमित्यर्थः। परत्र परलोकविषये उद्युक्तं अनलसं मुख्यपक्षोक्तिपरतया मूलस्य न न्यूनतेति सूचयन् स्मृत्यन्तरानुरोधेन अनुकल्पमाह—एवंभूतेति ब्राह्मणा इति,—उक्तगुणविशिष्टा इत्यर्थः। अन्यथा स्वोक्तिवैयर्थ्यमेव स्यादिति बोध्यम्। यत्नेनेति—तस्य धर्मशास्त्रादावनधिकारादिति भावः। मतान्तरमाह—नारदेन त्विति। अयमेवेति—योगीश्वरोक्तब्राह्मणरूपानुकल्प एवेत्यर्थः। राज्ञो बहुकार्यव्या

१ ग. वेत्ति चित्ते विचा। २ क. ज. झ. यथा "दान्तं०। ३ तया—इति च पाठः। ४ रानअ्दि·ा—इति च। ५ दनति—इति च।

पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥"[1] इति । प्राड्विवाकमते स्थितो न स्वमते स्थितः, राजा चारचक्षुषा परसैन्यं पश्यतीतिवत् । तस्य चेयं यौगिकी[2] संज्ञा। अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट्, तयोर्वचनं विरुद्धमविरुद्धं विविधं च सभ्यैः सह विविनक्ति विवक्ति[3] वा विवेचयति वेति विवाकः, प्राट् चासौ विवाकश्चेति प्राड्विवाकः । उक्तं च—"विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः *स्मृतः॥" इति ॥ ३ ॥ 5

सोऽपि राजस्थानीयत्वात् क्रोधरहित एव स्यात्। अत एव च— रागात् इत्या-

सुबोधिनी

धिकारीति गम्यते । प्राड्विवाकमते स्थित इति धर्मशास्त्रानुसारेण कृतस्य प्राड्विवाकनिर्णय स्यानुकूलत्वेन न तु नियन्तृत्वेन यथाकथंचित्स्वेच्छया नयनमित्यर्थः । पृच्छति विविनक्ति चेति प्रा[illegible]ड्वि[illegible]स्य यौगिकी संज्ञा न त्वश्वकर्णादिवद्रूढिरित्याह—तस्य[4] चेयं यौगिकीति । पृच्छतीति प्राट्, 'क्विप् वचिप्रच्छि' इत्यादिना क्विप्, दीर्घोऽसंप्रसारणं च। विविनक्ति विचा[illegible]ति विवक्ति विशेषेण कथयतीत्यर्थः इति ॥ ३ ॥

बालंभट्टी

कुलत्वेनावकाशाभावादिति भावः । पुरस्कृत्येति—अत्र प्रस्तुतत्वात् राजनियुक्तोक्तपुरुष एव तत्र कर्ता बोध्यः। अत एव "सप्रतिष्ठः स्मृतो धर्मो धर्ममूलो नराधिपः। सह सद्भिरतो राजा व्यवहारान्विशोधयेत् ॥"—इत्यग्रे तेनैवोक्तम् । व्यवहारानिति युक्तः पाठः। मते बुद्धौ धर्मशास्त्रानुसारणेति भावः। तस्य सत्वेनैव तल्लाभे पुनस्तदुक्तिफलमाह —न स्वेति। नन्वेवं प्राड्विवाकेन कृतस्य श्रवणेऽपि तस्य तद्दर्शनाभावेन कथं संपश्येदित्यत आह—राजेति । तथा च स्वप्रतिरूपकप्रागुक्तपुरुषद्वारेण तद्दर्शनस्यौचित्येनायमेव पक्षो ज्यायानिति बोध्यम्। धर्मशास्त्रानुसारेण कृतस्य तस्य यौगिकीयं संज्ञा नाश्वकर्णादिवद्रूढिरित्याह—तस्येति,—प्राड्विवाकस्येत्यर्थः । संज्ञेति अन्वर्थं नामेत्यर्थः । प्राडिति क्विब्वचीत्यादिनिष्पन्नोऽयं क्विबन्तः । तयोः अर्थिप्रत्यर्थिनोः विविनक्ति विवेचयति विचारयति । अत्र पक्षे औणादिकत्वं कार्यम्, अत आह—विवक्तीति,—विविच्य विचार्य कथयतीत्यर्थः । एतेन विशेषणवत्कथयतीति

* तदाह बृहस्पतिः—" विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकोऽभिधीयते ॥" नारदोऽपि—"अष्टादशपदाभिज्ञः षड्भेदाष्टसहस्रवित् । आन्वीक्ष

१.—१. ३५. । २ छ. यौगिकसंज्ञा । ३ क. च. छ. विवक्तीतिपदं नास्ति । ४ तस्येति ।

अपि च प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह[1]—

**रागाल्लोभाद्भयाद्वाऽपि[2] स्मृत्यपेतादिकारिणः।**

**सभ्याः पृथक् पृथग्दण्ड्या विवादाद्द्विगुणं दमम्॥ ४॥**

5 पूर्वोक्ताः सभ्या रजसो निरङ्कुशत्वेन तदभिभूता रागात्स्नेहातिशयाल्लोभाल्लि-

---

दि॥ ४॥

---

सुबोधिनी

अज्ञानभ्रान्त्यादिव्यतिरिक्तै रागद्वेषादिभिरुपाधिभिर्धर्मशास्त्रविरुद्धमाचरन्तः सभ्यास्तत्तद्व्यवहारपराजयनिमित्तदण्डात् द्विगुणदण्डेन प्रत्येकं दण्ड्या इत्याह—अपि चेत्यादिना।

बालंभट्टी

व्याख्यानमपास्तम्। "हलश्च..." इति घञ्। स चार्षत्वात् कर्तरि। यद्वा भावघञन्तादर्शाद्यच्। मूलन्तु फलितार्थपरतया नेयं। यद्वा करणे बाहुलकाल्ल्युडभावे घञ्। अत एव एतेनेत्यग्रे उक्तम्। मूलं तु प्राग्वदेव। तत् तदुक्तं वचनम्॥ ३॥

अपिना द्वेषसमुच्चयः। तथा चाज्ञानभ्रांत्यादिरूपोपाधिभिर्धर्मशास्त्रविरुद्धमाचरतां तेषां न दण्डोऽयमिति भावः। सभ्या इति—नियुक्ता इत्यर्थः, तेषामेव तत्त्वस्य प्रागुक्तत्वात्। अत एवानियुक्तानां तदपेक्षया न्यूनदण्डपरिकल्पना। युक्तं चैतत्—नियुक्तानामभियुक्तत्वेन धर्मशास्त्रविरुद्धाचरणादधिकापराधस्ताद्भिन्नानां तत्तदभावादल्पापराधः। आद्ये राजाज्ञाभङ्गस्मृत्युल्लङ्घनमेवोति यावत्। तदेतदभिप्रेत्याह—पूर्वोक्ताः सभ्या इति। रागादौ हेतुं पूरयति—रजस इति। यत्किंचिद्रागादेः साधारणत्वादाह—स्नेहादित्यादि। वाशब्दस्य प्रत्येकं विकल्पबोधकत्वादाह—लोभाद्वेति संत्रासाद्वेति च। विवादपदस्य यथा श्रुतार्थ

---

क्यादिकुशलः श्रुतिस्मृतिपरायणः॥ विवादसंश्रितं धर्मं पृच्छति प्रकृतं मतम्। विवेचयति यस्तस्मात्प्राड्विवाकस्तु स स्मृतः॥ यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः॥" इति। प्राड्विकस्य गुणाः स्मृत्यन्तरे दर्शिताः—"अक्रूरो मधुरः स्निग्धः क्रमायातो विचक्षणः। उत्साहवानलुब्धश्च वादे योज्यो नृपेण तु॥" इति पराशरमाधवीये व्य० पृ० २१—२२)।

---

१ ख. इदमवतरणमत्रैव नान्यत्र क्वापि दृश्यते। २ वि. रागाद्द्वेषाद्भयाद्वाऽपीति पाठः। ३.—अ० ३. ३. १२१.।

प्सातिशयाद्भयात्संत्रासात्स्मृत्यपेतं स्मृतिविरुद्धम्, आदिशब्दादाचारापेतं कुर्वन्तः पृथक्पृथक् एकैकशो पिवादात् विवादपराजयनिमित्ताद्दमाद्[1] द्विगुणं दमं दण्ड्याः, न पुनर्विवादास्पदीभूताद्द्रव्यात्। तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसंगः। रागलोभभयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम्।। न च 'राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्[2]' इति गौतमवचनात्, न ब्राह्मणा दण्ड्या इति मन्तव्यम्—तस्य प्रशंसार्थत्वात्।।यत्तु,'षड्भिः परिहार्यो राज्ञा।''अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च[3]' इति तदपि'स एष बहुश्रुतो भवति।''लोकवेदवेदाङ्गवित्।''वाको- 5

---

स्मृत्युक्तार्थान्यथाकारिणो रागादिभिस्तद्द्विगुणं धनमेकैकशो दण्ड्याः। आदिग्रहणात् स्मृत्यर्थं वाऽन्यथा निरीषव (?) इत्याभिप्रायः। सर्वसभ्यदण्डाद्द्विगुणं च राजा तत्स्थानीयो वा दण्ड्यः—तदधीनत्वान्निर्णयस्य। अत एव च पृथक् पृथगिति वीप्सा। सभ्याः पृथक् पृथक् वि

सुबोधिनी

सभ्या इति नियुक्ताभिधानम्। अत एवानियुक्तानां नियुक्तापेक्षया न्यूनदण्डः परिकल्पनीयः। नियुक्तानामभियुक्तत्वे सति धर्मशास्त्रविरुद्धाचरणादधिकोऽपराधः। अनियुक्तानां तु तदभावादल्पोऽपराध इति युक्तमेवैतत्। तथा हि नियुक्तेषु स्मृत्युलङ्घनं नृपाज्ञाभङ्गश्च,

बालंभट्टी

त्वे तद्द्वैगुण्यस्य दमेऽसम्भवात्। लक्षणार्थमाह-विवादपराजयेति। ननु अन्यथाऽपि लक्ष्यार्थस्य सम्भवादेवमेवव्याख्याने किं बीजमत आह--न पुनरिति। तथा हि सतीति पाठः। हि हेतौ रागाद्युक्तिमूलमाह—रागेति। इदमुपलक्षणं द्वेषस्यापि, ईष्टे नियच्छति, कर्मणः शेषत्वविवक्षायां षष्ठी, वर्जमिनि णमुलन्तम्,--तथा च नियुक्तानां तेषामल्पदण्डोऽपि कथमिति भावः।तस्य गौतमवाक्यस्य विधेरभावात् तस्य वधातिरिक्तदण्डप्रतिपादकवाक्यानामानर्थक्यापत्तेश्चेति भावः। तथा सति तद्विरोधान्तरं परिहरति यत्त्विति,—षड्भिः प्रकारैस्त्याज्य इत्यर्थः। ब्राह्मण इति प्रकरणप्राप्तं, तत्प्रकरणत्यागमेवाह—अवध्य इत्यादि। अदण्ड्य इत्यनेन धनदण्डाभावः, अपरिवाद्य इत्यनेन धिग्वाग्दण्डयोरभावः, अपरिहार्य इत्यनेन सर्वस्वहरणाभावः, अन्यत् स्पष्टम्। वाक्यम् उक्तिमद्वाक्यम्, इतिहासो भारतादिः, तदपेक्षः तन्मननशीलः, तद्वृत्तिस्तदुक्तानुष्ठाता। अष्टाचत्वेति—ते च गौतमेनोक्ताः—"गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम्[4]।"—अत्र समाहारद्वन्द्वः, "चत्वारि वेदव्रतानि[5]।"—प्रतिशाखं गृह्येषूक्तानि,—"स्नानं" समावर्तनाख्यं, विवाहाख्यं "सहधर्म-

१ क. 'दमात्' इति नास्ति। २.—११. १.। ३.—८. १२, १३.। ४.—८. १४.। ५.—८. १५.।

वाक्येतिहासपुराणकुशलः" "तदपेक्षस्तद्वृत्तिश्च" 'अष्टाचत्वारिंशत्संस्कारैः*संस्कृतः।' "त्रिषु वादद्विगुणं तद्विगुणं च राजा। तथा च वक्ष्यति—अथ किं राजा स्वपुरुषै (वा०८(२) न्विष्य

## सुबोधिनी

अनियुक्तेषु तु स्मृत्युल्लङ्घनमेवेति। अष्टाचत्वारिंशत्संस्कारैरिति, ते च संस्कारा गौतमे नोक्ताः—"गर्भाधान—पुंसवन—सीमन्तोन्नयन—जातकर्म—नामकरणा—न्नप्राशन—चौलो-पनयनानि" "चत्वारि वेदव्रतानि" "स्नानं—" "सहधर्मचारिणीसंयोगः" "पञ्चानां-यज्ञानामनुष्ठानं देव—पितृ—मनुष्य—भूत—ब्रह्मणाम्" "एतेषां च" इति। एतेषां संस्कारा-णां च कृते देवयज्ञानां च कृते पञ्चयज्ञानुष्ठानं भवतीत्यर्थः। "अष्टका—पार्वणः—श्राद्धं—श्रावणी—आग्रहायणी— चैत्री— आश्वयुजीति सप्त पाकयज्ञसंस्थाः।" "अग्न्या-

## बालंभट्टी

चारिणीसंयोगः, "पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्राह्मणानाम्[२]।"—एते पृथक् पञ्चसंस्कारा न तु समुदायः—"एतेषां च[३]।"—वक्ष्यमाणानामनुष्ठानमित्यर्थः—"अष्टकाः पार्वणः"—पर्वणिभवः पार्वणस्थालीपाकः—"श्राद्धम्"—अमावास्यादिः,—"श्रावणी"—तत्र कर्तव्यं श्रावणं कर्म—"आग्रहायणी" तत्र कर्तव्यं प्रत्यवरोहणं, "चैत्री" तत्र कर्तव्यः शूलगवः, "आश्वयुजी"—तत्र कर्तव्यमाश्वयुजी कर्म अनाहिताग्नेराग्रयणं चेति द्वयमाश्वयुजी शब्दग्राह्यमिति हरदत्तः—"इति सप्त पाकयज्ञ-संस्थाः[४]।"—पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा—'तं पाकेन मनसा' 'यो मा पाकेन मनसा' इत्यादौ पाकशब्दप्रयोगस्य प्रशंसायां दर्शनादिति वृत्तिकृन्नारायणः[५]'—आख्या चेयं गृह्याणां कर्मणामिति हरदत्तः, तथा चापस्तम्बः—"लौकिकानां पाकयज्ञशब्दः"[६] इति।

| | |
|---|---|
| *अष्टौ गर्भाधानादयस्संस्काराः, | (८) |
| चत्वारी वेदव्रतानि, | (४) |
| द्वौ स्नानसहधर्मचारिणीसंयोगौ, | (२) |
| पञ्च देवपितृमनुष्यभूतब्रह्मयज्ञाः, | (५) |
| सप्त अष्टकपार्वणादयः, | (७) |
| सप्त पाकयज्ञसंस्थाः, | (७) |
| सप्त सोमसंस्थाः, | (७) |
| अष्टौ सर्वभूतदयादिगुणाः, | (८) |
| एतेऽष्टाचत्वारिंशत्संस्काराः. | (४८) |

"देवतां प्रति स्वद्रव्यस्य उत्सर्जनं यज्ञः" इति हरदतः।

१ ज. चत्वारिंशितासं. २.—८. १६.। ३.—८. १७.। ४.—८. १८.।. ५ आश्व. १. १. २. भट्टनारायणवृत्तौ। ६.—२. ९.।

स्वाभिरतः ।[१] 'षट्सु वा ।' 'सामयाचारिकेष्वभिविनीतः ।'[२] इति प्रतिपादितबहुश्रुत

---

कार्याणां व्यवहारयितव्याः? न, प्रतिषेधात्, यथाऽऽह मनुः—"नोत्पादयेत्स्वयं कार्यं राजा

---

## सुबोधिनी

धेय— मग्निहोत्रं— दर्शपूर्णमासौ— चातुर्मास्यानि आग्रयणेष्टि— निरूढपशुबन्धः— सौत्रामणीति सप्त हविर्यज्ञसंस्थाः ।" "अग्निष्टोमोऽ — त्यग्निष्टोम — उक्थ्यः षोडशी— वाजपेयो—ऽतिरात्रो— ऽप्तोर्याम इति सप्त सोमसंस्थाः ।" इति चत्वारिंशत् संस्काराः[३] ।" द्विविधः संस्कारो भवति ब्राह्मो दैवश्च । गर्भाधानादिःस्नानान्तो ब्राह्मः । पाकयज्ञाः हविर्यज्ञाः सौम्याश्चेति दैवः, पाकयज्ञादीनां च संस्कारत्वं शङ्खलिखित[४]वचनात्— "पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च । संस्कारा ह्यग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः ॥

## बालंभट्टी

संस्था विधाः, पाकयज्ञविधाः सप्तेत्यर्थ इति हरदत्तः—"अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रायणं चातुर्मास्यानि रूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः[५] ।"—एतेऽग्न्याधेयादयः श्रुतिप्रसिद्धाः । दर्शपौर्णमासाविति समुदाय एकः संस्कारः सप्तग्रहणात् । सोमसंबंधाभावादेते हविर्यज्ञाः । "अग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम उति सप्त सोमसंस्थाः[६] ।"—अग्निष्टोमो राजन्यस्य, षोडशी ग्रहो गृह्यते सोऽप्यग्निष्टोमः, ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यमिति हरदत्तः । गच्छति गच्छतीति द्विरुक्तिरष्टमाध्यायसमाप्त्यर्थं बोध्यम् । एते च धनादयो गृहस्थस्य नित्या इत्याद्यन्यत् स्पष्टम्—" इति चत्वारिंशत्संस्काराः ।"[७] संस्कारो द्विविधः ब्राह्मो दैवश्च तत्र गर्भाधानादिस्नानांतो ब्राह्मः । अग्निष्टोमो दैवः पाकयज्ञादीनां संस्कारत्वं च शङ्खलिखिताभ्यामुक्तम्— "पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च । संस्कारास्त्वग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः ॥ संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः । नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः ॥ ब्राह्म्यं पदमवाप्नोति तस्मान्नच्यवते पुनः।" इति । ब्रह्मलौकिको ब्रह्मलोकार्हः । अष्टगुणाश्च सर्वभूतदया क्षांतिरनसूया शौचमनायासो मांगल्यमकार्पण्यमस्पृहेति । एवमष्टाचत्वारिंशत् संस्कारास्तैः संस्कृत इत्यर्थः । त्रिषु अध्ययनेज्यादानेषु । षट्सु अध्यापनयाजनप्रतिग्रहसहितेषु तेषु ॥ सामयिकेति—पौरुषेयी व्यवस्था समयः । स च त्रिविधः— विधिर्नियमः प्रतिषेधश्च,

---

१ क. घ. च. झ. समया० २.—गौतमः ८. ४—११. । ३ इति संस्कारा इति च पाठः । ४ त. 'तोक्तेः ।' ५.—८. १९. । ६.—८. २०. । ७.—८. २१. ।

विषयं कर्म न ब्राह्मणमात्रविषयम् ॥ ४ ॥

व्यवहारविषयमाह[1]—

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥**

5 धर्मशास्त्रसमाचारविरुद्धेन[2] मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति, चेद्यदि, तदावेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयः। तस्य चेदं सामान्यलक्षणम्। स च द्विविधः शङ्काभियोगस्तत्त्वाभियोगश्चेति, यथाऽऽह नारदः—"अभियोगस्तु

नाप्यस्य पूरुषः[3] ।" इति ॥ ४ ॥

कथं तर्हि व्यवहारप्रवृत्तिः? उच्यते—श्रुत्याचारव्यपेतेनेत्यादि ॥ ५ ॥

तदेव हि व्यवहारपदं यत् स्मृत्याचारव्यपेतेन......मार्गेण सस...मलीकृत इत्येवं

सुबोधिनी

संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः । नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः ॥ ब्राह्मं[4] पदमवाप्नोति तस्मान्न च्यवते पुन ।" इति । ब्राह्मलौकिको ब्रह्मलोकार्हः । अष्टगुणाश्च सर्वभूतदया—क्षान्ति—रनसूया—शौच—मनायासो—मङ्गल्य[5]—मकार्पण्य—मस्पृहेति । एवमष्टाचत्वारिंशत् संस्काराः ॥ ४ ॥

प्रत्यर्थिप्रतिकूलतया नृपादिषु कथनं व्यवहारः,कथ्यमानं तद्विषय इत्याह—व्यवहार[6]विषयमाहेत्यादिना। 'आवेदयति चेद्राज्ञे' इत्यत्र राजशब्दः पूगश्रेण्यादीनामुपलक्षणार्थः। व्यवहारविषयस्य द्वैविध्यं दर्शयति—स च द्विविध इत्यादिना । शङ्कारूपोऽभियोगो[7] य-

बालंभट्टी

तन्मूला आचारा स्समयाचाराः—तेषु कुशल इत्यर्थः ॥ ४ ॥

व्यवहारविषयमिति—प्रत्यर्थ्यादिप्रतिकूलतया नृपादिषु कथनं व्यवहारः—कथ्यमानस्तद्विषयस्तमित्यर्थः। व्यपेतेन रहितेन । राज्ञे इति—इदं त्वधिकृतादेरप्युपलक्षणम् । तदाऽन्वयमाह—यदीति । उपलक्षणत्वादेवाह—प्राडिति । चेदर्थो यदीति । व्यवहारपदमित्यस्यार्थमाह—प्रतिज्ञोत्तरेति। तस्य विषयस्य अत एव तस्य विषयस्य द्वैविध्यमाह—स चेति शङ्केति। शङ्कारूपोऽभियोगो यस्मिन् विषये तत्स्वरूपोऽभियोगो यस्मिन् विषये इत्यर्थः। अभियोग इति। सुबर्थांतर्भावेण बहुव्रीहिः विषयोऽन्यपदार्थः। असतां—चौरादीनां संसर्गो-

१ अप० व्यवहारदर्शननिमित्तमाह—२ ख. समयाचार० । ३.—८. ४३. । ४ त. 'ब्राह्मम्' इत्यादि 'कार्हः' इत्यन्तं नोपलभ्यते । ५ 'मा.' ६ 'व्यवहारेत्यादिना।' ७ त. 'भियोगस्तत्स्वरुपश्च यस्मिन्'।

विज्ञेयः शंकातत्त्वाभियोगतः । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् ॥" इति॥ होढा[2] लोप्त्रम्—लिङ्गमिति यावत्—तेन दर्शनं साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात् । [3]तत्त्वाभियोगोऽपि द्विविधः—प्रतिषेधात्मको विध्यात्मकश्चेति, यथा —मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति, क्षेत्रादिकं ममायमपहरतीति च[4]॥ उक्तं च कात्यायनेन—"न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः।" इति । [5]पुनश्चाष्टादशधा भिद्यते, यथाऽऽह मनुः—"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः । संभूय च समुत्थानं दत्तस्यानपकर्म च ॥ वे[6]तनस्यैव चादानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥ स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥"[8] इति । एतान्यपि साध्यभेदेन पुनर्ब-

---

कश्चित्कथयेत्, न तु स्वयं कार्यारम्भक इत्यभिप्रायः । तथा च नारदः —"स्वनिश्चितबला-

---

## सुबोधिनी

स्मिन् विषये, तत्त्वरूपोऽभियोगो यस्मिन् विषये इति विग्रहः । होढा लोप्त्रमिति । लुप्यत इति लोप्त्रं चौर्यधनम् । "चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम् ।" इत्यमरः । [9]एतान्यपि साध्यभेदेनेति अवान्तरसाध्यभेदेनेत्यर्थः । [10]नं च प्रेरितमन्ये-

## बालंभट्टी

च्चौरत्वादिसम्भावना भवतीत्यर्थः । होढालोप्त्रमिति—लुप्यत इति लोप्त्रम्, उणादिः, चौर्यधनम् "चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम् ।"[7]इत्यमरः। लिङ्गमिति—व्यभिचरितं चिह्नमित्यर्थः(?)। इदमुपलक्षणमित्याह—साक्षाद्वा दर्शनमिति। विषयस्य भेदान्तरमाह—पुनश्चेति। पुनर्भेदमाह— एतान्यपीति । साध्येति अवान्तरसाध्यभेदेनेत्यर्थः । एषां ऋण-

---

१.—१. २७. । २ क. घ. च. झ. होढो । ३ स तत्वा० । ४ क. ख. ग. च छ. ज. झ. वा । ५ ख. ग. स पुनश्चा । ६ क. भावितस्यैव । ७.–८. ४, ५, ६, ७. । ८.–२. शू. २५. । ९ त. 'एतान्यपि' इति नास्ति। १० थ. 'न चेति । प्रापितमन्येन' ।

हुत्वं गतानि, यथाऽऽह नारदः—" एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम्[1] । क्रियाभेदान्मनुष्याणां[2] शतशाखो निगद्यते॥"[3] इति । 'आवेदयति चेद्राज्ञे' इत्यनेन स्वयमेवागत्यावेदयति न राजप्रेरितस्तत्पुरुषप्रेरितो वेति दर्शयति, यथाऽऽह मनुः—"नोत्पादयेत्स्वयं[4] कार्यं राजा वाऽप्यस्य पूरुषः । न च प्रापितमन्येन ग्रसेतार्थं कथञ्चन॥"[5]
5 इति । पौरैरिति[6] परेण पराभ्यां पौरैरित्येकस्यैकेन[7] द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति

धानस्त्वर्थी स्वार्थप्रचोदितः । लेखयेत्पूर्ववादं तु कृतकार्यविनिश्चयः ॥[8]" इति । स्मृत्युक्त-आचारः स्मृत्याचारः,—कुलधर्माद्यभिप्रायं चैतत् । पौरैरिति गुरुशिष्यनिवृत्त्यर्थम् । तथा च

## सुबोधिनी

नेति—अन्यायेनान्येन प्रापितं न गृह्णीयादित्यर्थः । अर्थं[9] वाऽन्येन प्रापितं निवेदितं कार्यं न ग्रसेत नोपेक्षेत । 'न चाप्रापितमन्येन[10]' इत्यपि पाठः, तत्रायमर्थः—अन्येन विवदमानेन तत्सम्बन्धिना वा अप्रापितमनिवेदितं कथञ्चिदवगम्य रागादिना न ग्रसेत न ग्राहयेदिति । मूलवचनस्थ[11]परशब्दस्थितं तृतीयाबहुवचनमविवक्षितम् । अतश्चै[12]कस्यैकेन वा द्वाभ्यां वा बहुभिर्वा विवादो घटत इत्याह—पौरैरिति ।

## बालंभट्टी

दानादीनां। चेदित्यंतेन सूचितमाह—आवेदेति । अन्यथा तत्प्रेरणोल्लंघने दंडापत्त्या चेदित्यस्यैच्छिकावेदनबोधकस्यासङ्गतिः स्पष्टैव । अस्य राज्ञः । न च प्रापितामिति—कथंचन अन्यायेनान्येन प्रापितमर्थं न गृह्णीयादित्यर्थः । यद्वा अन्येन प्रापितं निवेदितं कार्यं न ग्रसेत नोपेक्षेतेत्यर्थः । न चाप्रापितमिति पाठे तु अन्येन विवदमानेन तत्संबन्धिना वा अप्रापितमनिवेदितं कथंचिदवगम्य रागादिना न ग्रसेत न ग्राहयेदित्यर्थः । मूले पौरैरित्यत्र पैरश्च[13] परौ च परे चेत्येकशेष इत्याशयेनाह—पौरैरितीति परेण.त्याद्यर्थकं पौरैरिति बहुवचनान्तं पदमिति दर्शयतीत्यर्थः । बहुवचनाविवक्षया योजनं तु परेणेत्यादिग्रंथस्वरस्वविरुद्धम् ।

---

१ ख. भवेत् । 'द्वात्रिंशदधिकं शतम्' इति च पाठो दृश्यते । २ घ. क्रियाभेदा मनु । ३.—१. २० । ४ घ. छ. त्पादयेत्स्वकं कार्यं । ५.—८. ४३. । ६ घ. इति । अनेन पौरैरिति । ७ च. ज. एकस्येति पदं नास्ति । ८.—२. २१. । ९ त. 'यद्वा' । १० त. 'तमिति पाठेऽन्येन' । ११ त. 'मूलस्थपौरैरिति बहुत्वम्' । १२ क. तेन च' इति पाठः । १३ पौरैरित्यत्रेत्यस्यानन्तरं 'स्वरितात्संहितायामनुदात्तानाम्' इति । सूत्रभाष्योक्तरीत्या' इत्यधिकः पाठः क्वचिद्दृश्यते ।

दर्शयति ॥ यत्पुनः—"एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥" इति नारदवचनं,[1] तद्भिन्नविषयसाध्यम्[2] । 'आवेदयाति राज्ञे' इत्यनेनैव राज्ञा पृष्टो विनीतवेष आवेदयेत्, आवेदितं च युक्तं चेत् मुद्रादिना प्रत्यर्थ्याह्वानमकल्यादीनां[3] चानाह्वानमित्याद्यर्थसिद्धमिति

नारदः—"गुरुशिष्यपितापुत्त्रदम्पत्योस्स्वामिभृत्ययोः । एतेषां समवेतानां व्यवहारो न वि

## सुबोधिनी

तद्भिन्नसाध्यविषयमिति । भिन्नसाध्यानि पृथक्साध्यानि भिन्नव्यवहारविषया इति यावत्। एतदुक्तं भवति—यदा[4] ह्येकैनैकः पुमानभियुक्तो मह्यमसौ धारयतीति, तदा तस्मिन् व्यवहारेऽनिष्पन्ने अपरेणापरेण च पूर्वमभियुक्तो नाभियोज्य इत्येवमेकस्य बहुभिः सार्धं विवादाभावः । न त्वेवमेते मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभाव इति[5] । इत्याद्यर्थसिद्धमिति—अविनीतस्यावेदनमेव न घटते उद्धतत्वेन राज्ञां[6] निकटे गन्तुम-

## बालंभट्टी

एकस्येत्यस्य सर्वत्रान्वयः । एवं सति प्राप्तविरोधं परिहरति—यत्पुनरिति । न्यायेति—धर्मेति पाठान्तरम् । ताद्भिन्नेऽपि--पृथग्व्यवहारविषयामित्यर्थः । यदैकेनैकोऽभियुक्तो मह्यमसौ धारयतीति तदेतस्मिन् व्यवहारेऽनिष्पन्नेऽन्येनान्येन चान्यथा नामाभियोक्तव्यः । निष्पन्ने तु क्रमेण तथेत्येवमेकस्य बहुभिर्विवादाभावो न त्वेते मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभाव इति भावः । इदं च मत्तोन्मत्तेति व्याख्यानावसरे सबीजं सकलैतत् पद्यव्याख्यानं स्फुटीभविष्यति । न्यूनतां परिहरति—आवेदेति । तृतीयान्तमित्यस्यार्थसिद्धमित्यत्रान्वयः[7] । द्वितीयां प्राह—आवेदितं चेति । तृतीयमाह—अकल्येति—आधिव्याधिसहितादीनामित्यर्थः। अर्थसिद्धमिति—अन्यथाऽविनीतस्यावेदनमेव न घटेत—उद्धतत्वेन

१ अयं श्लोक उपलब्धनारदीयकोशे न दृश्यते । स्यादेतत्कात्यायनवचनं यथाऽऽह विश्वरूपः । २ ख. छ. ज. तद्भिन्नसाध्यविषयम् । ३ घ. ग. दिना तत्प्रत्यर्थ्या । ४ त. 'यद्येके' । ५ त. 'इति' इति नास्ति । ६ थ. द. 'राज्ञां परिसरमेव गन्तुमशक्यत्वाद्' । ७ "अर्थसिद्धमित्यत्रान्वयः' इति वर्तते । इदमशुद्धम् । प्रकरणार्थस्त्वेवं—आवेदयति राज्ञे इत्यनेन विनीतवेष आवेदयेदिति, आवेदितं च युक्तं चेत्प्रत्यर्थ्याह्वानमित्येकम्, अकल्यादीनामनामाह्वानमित्येकम्, आहत्य त्रितयमर्थसिद्धमिति । अत एवं पाठकल्पने अशुद्धिपरिहारो भवेत् । स च पाठ इति शब्दस्य निवेदयेदित्यत्र आह्वानमित्यत्र च अनाह्वानमित्यत्र च संबन्धः—इति त्रितयस्य अर्थसिद्धमित्यनेनान्वयः—इति ।" इति केषांचिच्छास्त्रविदामाशयः । विद्वदाशय इति दत्तोयमत्रास्माभिः ।

नोक्तम् । * स्मृत्यन्तरे तु स्पष्टार्थमुक्तम्, यथा—"काले कार्यार्थिनं पृच्छेत्[1]प्रणतं पुरतः स्थितम् । किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥ केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभा[2]गतम् । एवं[3] पृष्टः स यद्ब्रूयात्तत्स[4]भ्यैर्ब्राह्मणैः सह ॥ विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥
5 अकल्यबालस्थविरविषम[5]स्थक्रियाकुलान् । कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥

ब्रते ॥[6] " इति, "एकस्य बहुभिस्सार्धं स्त्रीणां प्रेष्यकरैस्तथा ।" इत्यादिकात्यायनवचनश्च,

## सुबोधिनी

शक्तेः । आवेदनानन्तरं च[7] प्रत्यर्थिनोऽनाह्वाने आवेदनमेव निष्प्रयोजनमिति न कोऽप्यावेदयेत् । तथा च प्रजापालनमेव न सिद्ध्यतीत्या[8]दिभिर्हेतुभिः पूर्वो[9]क्तानां धर्माणामर्थसिद्धत्वमूह्यम् । किं कार्यं का च ते पीडेति । अर्थकृतो मन्युकृतश्च प्र[10]श्नभेदः । [11]अकल्येत्यादि—

## बालंभट्टी

राजसमीपे गन्तुमशक्यत्वात् । आवेदनानन्तरं च तस्य युक्तत्वेऽपि यदि प्रत्यर्थिनोऽनाह्वानं तर्ह्यावेदनमेवनिष्फलमिति न कोऽप्यावेदयेत् । तथा च प्रजापरिपालनस्यैवासिद्धिरिति तेषामर्थसिद्धत्वमित्यर्थः । इदं प्रमाणयति—स्मृत्यन्तरे त्विति, नारदीयेत्वित्यर्थः । किं कार्य्यं का चेति । अर्थकृतो मन्युकृतश्च प्रश्नभेदः केन कर्त्रा, कस्मिन्देशे, कदा काले, कस्मात् कारणात् । तयोर्भेदस्योक्तत्वादाह - ससभ्यैर्ब्राह्मणैरिति । मुद्राग्रहणं लेख्यस्याप्युपलक्षणम् । एवं प्रत्यर्थिन आह्वाने निषेधमाह—अकल्येत्यादि । अकल्यः व्याधितः, विषमस्थः उत्पन्नसंकटः, क्रियाकुलः नित्यनैमित्तिकादिक्रियाव्यग्रः, कार्यातिपाती यस्यागच्छतो गुरुतरकार्यहानिः, व्यसनी इष्टवियोगादिदुःखवान्, व्यसनी नृपकार्यासक्तः, उत्सवासक्तः,

* "स्मृत्यन्तरे कात्यायनस्मृतौ" इति पराशरमाधवीये व्य० पृ—४१ ।

१ ख. पृच्छेद्गुणन्तं पु० । २ घ. समागतम् । ३ घ. एवं हि पृष्टः स ब्रूया । ४ क. घ. च. तसदस्यैर्ब्रा । पराशर माधवीये व्य०—तत्सभ्यैर्ब्राह्म (पृ. ४३) । ५ विषयस्थ० । ६.—७. थ. 'त्ययुक्तत्वे प्रत्यर्थ्यनाह्वाने' । द. च युक्तत्वे प्रत्यर्ध्यनाह्वाने' । ८ त. 'दिहे' । ९ त. 'क्तधर्माणाम्' । द. 'क्तानां तु धर्माभाम्' १० त. 'प्रश्न' इति नास्ति । ११ त. इदं प्रतीकं नास्ति ।

मत्तोन्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः । न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।। सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः । तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।। निष्कुलायाश्च पतितास्तासामाह्वानमिष्यते । कालं देशं च विज्ञाय कार्याणां च बलाबले ।। अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः । ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।। तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ।" इति । 5

आसेधव्यवस्थाऽप्यर्थसिद्धैव नारदेनोक्ता—"वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ।। स्थानासेधः कालकृतः

"यश्च राष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः। अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति।।" इत्यादि।।

## सुबोधिनी

अकल्यो व्याधितः, विषमस्थ उत्पन्नसङ्कटः, क्रियाकुलो नित्यनैमित्तिकादिक्रियाव्यग्रः, आगच्छतो यस्य गुरुतरकार्यहानिः स कार्यातिपाती, इष्टवियोगादिदुःखवान् व्यसनी, मत्तो मदनीयद्रव्येण[2], उन्मत्तो ग्रहादिभिः, सर्वदावधानरहितः[3] प्रमत्तः, आर्तो विपदादिना । हीनपक्षामिति—अनाथां सर्वजनशोच्यामिति यावत् । स्त्रीणामाह्वाने निषिद्धे तत्प्रतिप्रसवमाह—तदधीनकुटुम्बिन्य इति। पूर्वमकल्याद्याह्वानं निषिद्धं, तत्रापि प्रतिप्रसवमाह—कालं[4] देशं च विज्ञायेति । स्थानासेध[5] इत्यादि–अस्मात् प्रदेशान्न गन्तव्यमिति स्थानासेधः, आसन्ध्यं न गन्तव्यमित्यादिः कालासेधः, ग्रामं प्रति[6] न गन्तव्यमिति प्रवासासेधः, असौ

## बालंभट्टी

मत्तो मादकद्रव्येण, उन्मत्तः उन्मादेन पञ्चविधेन—वातपित्तश्लेष्मसन्निपातग्रहसम्भवेनोपसृष्टः, प्रमत्तः सर्वदावधानहीनः[7], आर्त्तो विपदादिना पीडितः। स्त्रीणां तन्निषेधमाह—अ-हीनेति[8]-अनाथां सर्वजनशोच्यामिति यावत् । सर्वेति—ब्राह्मणीम्, तत्र हेतुमाह—ता इसि,—एताः अहीनपक्षादयः ज्ञातिस्वामिका इत्यर्थः । एवं स्त्रीणामाह्वाने निषिद्धे प्रतिप्रसवमाह—तदधीनेति—तस्याधीनं तादृशं यत् कुटुंबं तदस्यास्तीति–इनिः,—एकदेशीतिवत् प्रयोगः, स्वैरिण्योऽन्याभिचाररताः, गणिका वेश्या, निष्कुलाः हीनकुलाः। एतत्प्रसंगादकल्याद्याह्वाने पूर्वं निषिद्धेऽपि प्रतिप्रसवमाह—कालमिति । तत्र प्रकारद्वयं शनैर्यानैरिति एतत्प्रसङ्गादाह—ज्ञात्वेति । क्षुद्रकार्येषु तथा नेत्याह—गुर्विति । वेषमाहात्म्यात्तत्रापि विशेषमाह—कोपेति। इत्यादीत्यादि पदग्राह्यमेवाह–आसेधेति निरोधेत्यर्थः ।आसेधयेदिति—विवादार्थी वादी आह्वानदर्शनपर्यन्तं तादृशं प्रत्यर्थिनं निरोधयेदित्यर्थः। तच्चातुर्विध्यमाह—स्थानेति ।

१ च. झ. श्रुतका॰ क. पुरका० । २ त. 'मद्यादिना' । ३ त. 'हीनः'। ४ त. 'कालमिति'। ५ त. इदं प्रतीकं नास्ति । ६ त. प्रति इति नास्ति । ७ " सर्वदावदानहीनः " इत्येव प्रायः उपलब्धेषु स्तकेषु पाठः । ८ अहीनेतिमिताक्षरायां न दृश्यते ।

प्रवासात्कर्मणस्तथा । चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ आसेधकाल आसिद्ध आसेधं योऽतिवर्तते । स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत् ॥ नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥ निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथाऽन्येन
5 राजकार्योद्यतस्तथा ॥ गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥" इति । असेधो राजाज्ञया अवरोधः । अकल्यादयः पुत्रादिकमन्यं वा सुहृदं प्रेषयिष्यन्ति, न च ते परार्थवादिनः ॥ "यो न भ्राता न च पिता न पुत्रो न नियोगकृत् । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥" इति नारदवचनात् ॥ ५ ॥

व्यवहारः प्रदर्शनीयो निरूपणीयतयेत्यऽर्थः ॥ ५ ॥

## सुबोधिनी

व्यापारो न कर्तव्य इति कर्मासेध इति विवेकः । अन्यथा कुर्वन्नासेद्धेति--अनासेधकाल आसेधं कुर्वन्नित्यर्थः। निर्वेष्टुकाम इति—आश्रमान्तरं गन्तुकामः विवाहोद्यत इति यावत्॥५॥

## बालंभट्टी

कृतः आसेधः,—तद्विषयत्वात्तत्कृतम् । एवमग्रेऽपि[८] । अग्रे उभयत्र कृत इति शेषः आसेध इति प्रकृतम् । अस्मात् प्रदेशान्नगन्तव्यमितिस्थानासेधः, आसन्ध्यं न गन्तव्यमिति कालासेधः, देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः, असौ व्यापारो न कर्तव्य इति कर्मासेधः । आसिद्धः निरुद्धःतमासेधं । विनेयः शिक्षणीयः—अन्यथा कुर्वन्निति अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः । नासिद्धस्तं विलङ्घयेदित्यस्य प्रतिप्रसवमाह—नदीति । नदीसन्तारादिनिमित्तचतुष्टयम् । निर्वेष्टुकाम इति- आश्रमान्तरं गन्तुकामः विवाहादावुद्यत इति यावत्, यियक्षुर्यष्टुमिच्छुः, आयुधीयाः आयुधजीविनो योद्धारः, विग्रहे संग्रामे निर्वेष्टुकामादयोऽपि तदुल्लंघनेनापराधिनो न तत्रेत्यर्थः । सामान्यविरोधस्यातत्त्वादाह—राजेति । ननु येषामकल्यादीनां दानैर्यानैरपि आगमनं दुर्घटं तत् किं कार्यमत आह—अकल्यादय इति । ते पुत्रादयः, नियोगकृत् आज्ञाकारी

१ घ. सेधो नासेध्यस्तं विल० । क. सेधो नासिध्यस्तं विल० । पराशर माधवीये व्य०—सेधस्तमासेधं न ल । २ च. झ. आसेद्धस्त्वन्तरासेधं । घ. आसिद्धं च परासे । पराशर मा० व्य० आसिद्धश्च परा । ३ ख.ङ. झ. निर्वेष्टुकामो । ४ घ. सस्यारम्भे । च. झ. सस्यावापि कृषी । छ. सस्यादौ च कृषी । ५ नारदः—१. ४७, ४८, ५१, ४९, ५२, ५३. । ६ क. रेऽपि । ७.—२. २३. । ८ "तद्वि...पि"—इदंक्वचिन्नास्ति ।

प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्याह[1]—

**प्रत्यर्थिनोऽग्रतो लेख्यं यथाऽऽवेदितमर्थिना ।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥**

अर्थ्यत इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी, तत्प्रतिपक्षः प्रत्यर्थी, तस्याग्रतः पुरतो लेख्यं लेखनीयं[2] यथा[3] येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा, न पुनरन्यथा- अन्यथावादित्वेन[4][5] भङ्गप्रसङ्गात् । "अन्यवादी क्रियाद्वेषी नोपस्थाता[6] निरुत्तरः । आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः ॥" इति[7] । आवेदनकाल एवार्थिवचनस्य लिखित- त्वात्पुनर्लेखनमनर्थकमित्यत आह—समामासेत्यादि । संवत्सरमासपक्षतिथिवारादिना[8]-

एवं चार्थिभिरावेदिते निर्व्याजं प्रत्यर्थिनं तथैवाहूय राज्ञाऽर्थिप्रत्यर्थिसभानुमतेन लेखके

सुबोधिनी

हीनः पञ्चविधः स्मृतः—इति वचनादिति शेषः । अथ वा इति शब्दो हेत्वर्थे— अतो हेतोरित्यर्थः । पूर्वावतारितवचनस्यैवोत्तरार्धं शङ्कोत्तरपरत्वेनावतारयति आवेदनकाल[9] एवेति । [10]तिथिवारादिनेति—तिथिः प्रतिपदादिः, दिनमहः । क्षमा[11]लिङ्गादीनीति—

बालंभट्टी

एतदन्यः, परार्थवादी, सव्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन् दण्ड्य इत्यर्थः॥ ५ ॥

अर्थशब्दस्याभिधेयपरत्वनिरासद्वारा प्रयोजनपरत्वमाह—अर्थ्यत इति । भूतनिष्ठा- लब्धमर्थमाह—पूर्वमावेदनेति । क्रिया कार्यं, नोपस्थाता समीपे न तिष्ठन् प्रपलायी प्रप- लायनं प्रपलायः सोऽस्यास्तीति प्रपलायी । स्मृत इति –इति वचनादिति शेषः । इतिशब्दो हत्वर्थो वा,--अतो होतोरित्यर्थः। पूर्वावतारितैतद्वचनोत्तरार्द्धमेव शङ्कांतरनिरासपरमित्याशये- न शङ्कते—आवेदनेति । समाशब्दार्थः संवत्सरेति, तदर्द्धशब्दार्थः पक्षेति, अहर्ग्रहणमुप- लक्षणमित्याह—तिथीति, प्रतिपदादिरित्यर्थः । अहःपदार्थो दिनेति— न तु रात्रि-

१ क. ग. ज. दित्यत आह । २ च. लेखनीयमिति नास्ति । ३ झ. लेखनीयं " यथा येन प्रकारेण पूर्वमावेदयन्नरः । आवेदितं यथा काले तथा न पुनरन्यथा॥ " इति श्लोकः पठ्यते । ४.—क. ख. ग. घ. ज. अन्यथावादि० । ५ ख. त्वेन व्यवहारस्य भङ्ग० । ६ घ. ज. आ- पटेकृतसंस्कृतांग्लेयनिघंट्वामपि--नोपस्थायी । ७ नारदः—२. ३३ । ८ क. ख. तिथिवारादिना अर्थिप्रत्यर्थिनाम ब्राह्मण० । ङ. स्यावदर्थिप्रत्यर्थि । ९ त. आवेदनेति । १० त. इदं प्रतीकं नास्ति । ११ त. क्षमेति ।

र्थिप्रत्यार्थिनामब्राह्मणजात्यादिचिह्नितम्[1] । आदिशब्देन द्रव्यतत्संख्यास्थानवेलाक्षमालि-ङ्गादीनि[2] गृह्यन्ते, यथोक्तम्[3]—"अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यव-द्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च निश्चितं साधने क्षमम् । संक्षिप्तं

न—प्रत्यर्थिन इत्यादि ॥ ६ ॥

यथावेदितमित्यनुबन्धप्रयोजनातिविशिष्टापराधज्ञापनार्थं समा संवत्सरं, मासः स्पष्टं,

---

## सुबोधिनी

प्रत्यर्थिविषये आसेधाद्यकरणं क्षमा सहिष्णुता । तत्र लिङ्गानि कारणानि बाल्यजडत्वादीनि। अर्थवद्धर्मसंयुक्तमित्यादि—अर्थवत् प्रयोजनवत् , धर्मसंयुक्तं धर्मो गुणः अल्पाक्षरत्व-प्रभूतार्थत्वादिकस्तेन संयुक्तम् , परिपूर्णमध्याहारानपेक्षम् , अनाकुलमसन्दिग्धाक्षरम् , साध्यवत् सिषाधयिषितार्थसहितम् , वाचकपदं गौणलाक्षणिकपदरहितम् , प्रकृतार्थानु-बन्धि पूर्वावेदितार्थाविरोधि , प्रसिद्धं लोकप्रसिद्धवस्तुविषयम् , अविरुद्धं पुरराष्ट्राद्यविरुद्धं पूर्वापराविरुद्धं प्रत्यक्षादि प्रमाणाविरुद्धं व्यवहारिकधर्माविरुद्धं च , निश्चितमर्थान्तरसंशयर-हितम् । साधनक्षमं साधनार्हम् । संक्षिप्तमनतिविस्तृतं निखिलार्थमनवशेषितवक्तव्यम् ।

## बालंभट्टी

रित्यर्थः । नाम्नः सकांक्षत्वेन प्रकृतत्वादाह—अर्थीति । वेलेति---दिनमध्ये प्रातरादिर्मुहूर्त-रूपो वा कालविशेष इत्यर्थः । क्षमेति – प्रत्यर्थिविषये आसेधाद्यकरणं क्षमा सहिष्णुता, तत्र यानि लिङ्गानि कारणानि बाल्यजडत्वादीनीत्यर्थः। तत्र मानमाह-तथोक्तमिति । यथोक्तमिति पाठान्तरं–नारदेनेत्यर्थः । अर्थवत् प्रयोजनवत् , धर्मसंयुक्तं—धर्मो गुणः अल्पाक्षरत्वप्रभू-तार्थत्वादिकस्तेन संयुक्तं, परिपूर्णमध्याहारानपेक्षम् , अनाकुलमसंदिग्धाक्षरं, साध्यवत्—सिषाधयिषितार्थसहितं, वाचकपदबहुव्रीहिः—गौणलाक्षणिकादिपदरहितं । प्रकृतार्थानुबंधि पूर्वावेदितार्थाविरोधि । प्रसिद्ध लोकप्रसिद्धवस्तुविषयम् । अविरुद्धं पुरराष्ट्राद्यविरुद्धं, पूर्वा-पराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिकधर्माविरुद्धं च । निश्चितं—अर्थान्तरसंशय रहितं, साधनक्षमं साधनार्हं, संक्षिप्तं अनतिविस्तृतं, निखिलार्थं अनवशेषित वक्तव्यम्

---

१ घ. त्यादिविचिह्नि । २ ङ. क्षमालिङ्गचङ्गादीनि । ३ क. ज. तथोक्तम्—"अ० । स्मृतिसंग्रहस्था एत श्लोकाः इति परशरमाधवीये व्य० ।

निखिलार्थं च देशकालविरोधि च ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथ-साध्याख्या जात्याकारवयोयुतम्॥ साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत्[1] । परात्मपूर्व-जानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयते॥" इति । भाषा प्रतिज्ञा पक्ष इति अनर्थान्तरम्[2] । आवेदनस-

तदर्धमर्धमासः, आदिग्रहणं स्मृत्यन्तरानुसारेण भाषाप्रपञ्चनिरूपणार्थं, यथाऽऽह कात्या-यनः—"निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा । प्रदेशं विषयं स्थान......जात्या कृतीश्च याः ॥ साध्यार्थमानं द्रव्यं च......संज्ञा तथाऽऽत्मनः । राज्ञां च क्रमशो नाम निवा

---

## सुबोधिनी

देशकालाविरोधि—मध्यदेशीयं क्रमुकक्षेत्रं शरत्कालीनमाम्रफलसहस्रं मदीयमपहृतमित्येव-मादिशून्यम्[3]; अहः—प्रतिपदादिर्दिनं वा ; वेला—प्रातरादि ; देशो—मध्यदेशादिः ; प्रदेशः-

## बालंभट्टी

देशकालाविरोधि—मध्यदेशीयक्रमुकक्षेत्रं शरत्कालीनाम्रफलसहस्रं मदीयमपहृतमित्येवमा-दिशून्यं,—वर्षेत्याद्येकं पदं—प्रदेशान्तद्वन्द्वान्मतुप् । अहः—प्रतिपदादिर्दिनं च; वेला—प्रातरादि-र्मुहूर्तरूपा च; देशो मध्यदेशादिः;प्रदेशःक्षेत्रादेः स्थलविशेषः;—स्थानेत्याद्यपि एकं पदम् ,वयः-शब्दान्तद्वन्द्वस्य तृतीयातत्पुरुषः—स्थानं वाराणस्यादि ; आवसथो ग्रामादिः हट्टादिरूपस्थलवि-शेषो वा ; साध्याख्या विवादास्पदीभूतवस्तुनाम ; जातिः ब्राह्मणत्वादिः ; आकारो ग-वाश्वादिगतो वर्णादिविशेषः, गृहक्षेत्रादेः संस्थानविशेषश्च ; वयः गवादेर्वयःपरिमाणं, बाल्याद्यवस्थाविशेषः । साध्यप्रमाणसंख्यावत्,—प्राग्वत्, साध्यप्रमाणं क्षेत्रादेर्निवर्त्तनादिकं संख्यारूपकादीनां । आत्मप्रत्यर्थीनामवत् स्पष्टम् । परेति —प्राग्वत् —परः प्रतिवादी, आत्मा वादी,—तयोर्ये पूर्वजाः पित्रादयस्ते च अनेके राजानश्च—अनेके राजानो भुक्तिकालिकाः —ते-षां नामभिश्चिह्नितम्। क्षमालिंगानि व्याख्यातानि, आत्मपीडा स्वदुःखं तद्वत् । कथितेति—प्रतिग्रहादिनाऽधिगन्ता आहर्ता, दाता दायकः, कथितावाहर्तृदायाकौ यस्मिन् वचने तत्, कथितप्रत्यर्थिसम्बंधामिति वा, एतादृशं यद्राज्ञे कथ्यते तदित्यर्थः । भाषा-पदार्थमाह—भाषा प्रतीति । उत्तरतात्पर्यमाह—आवेदनेति । मात्रपदेन वर्षादिव्यवच्छेदः,

---

१ घ. स्यावदर्थिप्रत्यर्थि । २ ख. नार्थान्तरम् । ग. छ. अर्थान्तरम् । ३ त. शून्यम् । वेला ।

मये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यत इति विशेषः। संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते, तथाऽप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते,—"आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा।" इति वचनात्। अर्थव्यवहारोऽपि एकस्मिन्संवत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च
5 पुनरन्यास्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो, यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति[1], वत्सरान्तरे गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे[2] इत्युपयुज्यते। एवं मासाद्यपि योज्यम्। देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते—"देशश्चैव तथा स्थानं संनिवेशस्तथैव च। जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च॥ पितृपैतामहं चैव पूर्वराजानुकीर्तनम्। स्थावरेषु विवादेषु दशैतानि [3]निवेदयेत्॥" इति

सं साध्यनाम च॥ क्रमात्पितॄणां नामानि पीडां चाहर्तृदायकौ। क्षमालिङ्गान्यादिकालं पक्षं

## सुबोधिनी

**क्षेत्रादेः स्थलविशेषः; स्थानं–[4]वाराणस्यादि; आवसथो–ग्रामादि हट्टादिरूपस्थलविशेषो वा; साध्याख्या–विवादास्पदीभूतवस्तुनाम; जातिर्ब्राह्मणत्वादिः[5]; आकारो–[6]गवादिगतो वर्णभेदो गृहक्षेत्रादेः संस्थानविशेषश्च; वयः—अश्वादेर्वयः परिमाणम्; साध्यप्रमाणसंख्यावत्—सा-**

## बालंभट्टी

**अत एवाह**—समेति। **एतद्व्यवस्थामाह**—संवत्सरेत्यादिना। **संवत्सररूपविशेषणमित्यर्थः**—आधाविति। **तत्र पूर्वत्वादिज्ञानाय तदावश्यकत्वमितिभावः। इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृकाप्रकरणे*। अन्यत्रापि तस्य फलमाह**—अर्थव्यवहारेऽपीति, **उपयुज्यते इत्यत्रान्वयः। द्रव्यस्वामी आह**—वत्सरान्तर इति। **इति एवमर्थे, एवं संवत्सरविशेषणवत्, पुनस्त्यर्थे, तत्रैव वाराणस्यादावेव, निविष्टः निष्पादितः,**—संज्ञा चेति।

* **इदमेव साधारणासाधारणव्यवहारमातृकाप्रकरणम्।**

१ घ. चेति वत्सरान्ते गृही। क. चेति वत्सरान्तरगृही। २ घ. तं तस्मिन्वत्स। ज. झ. तं न तस्मिन्वत्स०। ३ ङ. च. छ. निवेशयेत्। ४ त. मथुरादि। ५ थ. ब्राह्मणविशेषः। गृहक्षेत्रादेः ६ द. गवाश्वादि।

*स्मरणात्। देशो—मध्यदेशादिः, स्थानं—वाराणस्यादि, संनिवेशः—तत्रैव पूर्वापरदिग्विभागपरिच्छिन्नः सम्यङ्निविष्टो गृहक्षेत्रादिः, जातिः—अर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः, संज्ञा च—देवदत्तादिः, अधिवासः—समीपदेश[1]निवासी जनः, प्रमाणं—निवर्तनादि †भू[2]परिमाणम्, क्षेत्रनाम—शालिक्षेत्रं अमुकक्षेत्रम्, कृष्णभू[3]मः पाण्डुभू[3]मः इति,

संकीर्त्य कल्पयेत् ॥" इति । एतानि च न्यायानुसारेणाऽऽलोच्य व्यस्तानि समस्तानि वा

## सुबोधिनी

ध्यप्रमाणं क्षेत्रादेर्निवर्तनादिकम्; संख्या—रूपकादीनाम्; आत्मप्रत्यर्थिनामवत्—स्पष्टम्; परात्मपूर्वजानेकराजनामभिरङ्कितम्-परः प्रतिवादी, अत्राऽऽत्मा वादी, पूर्वजास्त्वनयोः पित्रादयः, अनेके राजानो भुक्तिकालीनाः,-एषां नामानि तैश्चिह्नितम्; क्षमालिङ्गात्मपीडावत्—व्याख्यातानि क्षमालिङ्गा[4]नि। आहर्ता-प्रतिग्रहादिना अधिगन्ता, दायको दाता,—कथिताहर्तृदायकौ य[5]स्मिन् वचने त[6]त् तादृक्, अ[7]थ वा कथिताहर्तृदायकमिति कथितप्रत्यर्थिसम्बन्धमिति यावत्। कृष्णभूमः पाण्डुभूम इति अच्प्रत्ययान्तावेतौ शब्दौ—"कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययस्स्मृतः। गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि॥" इति वार्तिककारस्मर-

## बालंभट्टी

अर्थिप्रत्यर्थिनोरेवेति भावः। अधिवसतीति अधिवासः, अधि समीपे इत्याह—समीपेति। तन्नामान्तरमाह—कृष्णभूम इति, कृष्णोदक्पांड्वित्यच्प्रत्ययो बहुव्रीहेः। पित्रिति—

*कात्यायनस्मरणादिति पराशरमाधवीये।

†भूपरिमाणम्—

| | | | |
|---|---|---|---|
| ८ यवोदराणि | = | १ अङ्गुलम्, | |
| २४ अङ्गुल्यः | = | १ हस्तः, | |
| २०० हस्ताः | = | १ निवर्तनम्। | |

मतान्तरेषु—

| | | | |
|---|---|---|---|
| १०० हस्ताः | = | १ निवर्तनम् | |
| ८०० ,, | = | ,, | ,, |
| ६० ,, | = | ,, | ,, |

१ देशे निवा०। २ भूमिप्रमा०। ३ ख. घ. ङ. भूमिः। ४ त. क्षमेत्यादि०[illegible]तम्। ५ त. यत्र। ६ थ. तत्त्वीदृक्। ७ त. यद्वा।

पितुः पितामहस्य च नाम अर्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणां राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयामिति तात्पर्यार्थः ॥ एवं पक्षलक्षणे स्थिते पक्षलक्षणराहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ताः। अन्यैस्तु विस्पष्टार्थमुक्तम्—"अप्रसिद्धं निरा-
5 बाधं निरर्थं निष्प्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥"
इति। अप्रसिद्धं–मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि; निराबाधम्–अस्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि; निरर्थम्—अभिधेयरहितं कचटतपजडदगबेत्यादि; निष्प्रयोजनं—यथाऽयं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि; असाध्यं—यथाऽहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि,–एतत्साधनासंभवादसाध्यम्;
10 अल्पकालत्वान्न साक्षिसंभवः, लिखितं दूरतः, अल्पत्वान्न दिव्यमिति; विरुद्धं—यथाऽहं

---

लेखनीयानि । पूर्वं च भूमौ आलिख्य प्रतिज्ञां शोधयित्वा पश्चात् पत्रारोपणं कार्यं, यथाऽऽ-

---

सुबोधिनी

णात् । अप्रसिद्धादीनां पक्षाणां यथा पक्षाभासत्वं तथा 'अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति।' इत्यत्रापि प्रातीतिकार्थानुसारेणेदृशस्यापि पक्षस्य पक्षाभासत्वमेवेति प्रतीयते। तन्निराकर्तुं

बालंभट्टी

लुप्तषष्ठ्यन्तमित्याह—पितुरिति । एवमेव तत्र पाठो वा, नामेत्यस्य संबन्धः। पित्रादेः साकांक्षत्वादाह–अर्थीति। गुणानुकीर्तनानुपयोगात् प्रकृतत्वाच्चाह–नामेति। अनुगतं फलितमाह–समेति। समेति निर्धारणे षष्ठी, एवं अर्थवदित्यादिना उक्तप्रकारेण। उक्तमिति पक्षाभासलक्षणमित्यर्थः। निराबाधमिति स्वपीडारहितमित्यर्थः। तदाह–अस्मादिति। निष्फलत्वस्य पृथगुक्तत्वादाह–अभिधेयेति । तत्र मानुषप्रमाणासंभवमादावाह–अल्पेति। अयमुभयत्र हेतुः भुक्तेस्तुसम्भव एव नेतिभावः । अत एव दिव्याभावमाह—अल्पेति । द्वितीये मानमाह—

---

१ ख. उक्ताः। अप्रसिद्धादेः साधयितुमशक्यत्वादनिराकरणम् "अप्र०। २ ख. विवर्जयेत्।" अप्र०। ३ क. घ. प्रदीपप्रकाशनेन । स. प्रदीपप्रकाशनाय । ४ क. व्यवहारयतीत्यादि । छ. व्यवहार इत्यादि। ५ च. झ. पं सजडदबम् । क. जगडदबम्. । घ. गजडदबम् ।

मूकेन शप्त इत्यादि; पुरराष्ट्रादिविरुद्धं वा "राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत्। राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥ अन्ये वा ये पुराग्राममहाजनविरोधकाः। अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥" इति ॥ यत्तु "अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति।" इति, तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते तदा न दोषः,-मदीयमनेन हिरण्यं वासो रूपकादि वाऽपहृतमित्येवंविधस्यादुष्टत्वात्। ऋणादानादिपदसंकरे पक्षाभास इति 5 चेत्तदपि न। मदीया रूपका अनेन वृद्ध्या गृहीताः, सुवर्णं चास्य हस्ते निक्षिप्तम्,

ह—"अधिकाच्छेदयेदर्थान्न्यूनांश्च प्रतिपूरयेत्। भूमौ निवेशयेत्तावद्यावत्पक्षः प्रतिष्ठितः ॥' प्रतिज्ञादोषनिर्मुक्तं साध्यं तत्कारणान्वितम्। निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः॥'

## सुबोधिनी

मुपादत्ते—यत्त्वनेकपदेति। अनेकपदैः सङ्कीर्णो यः पूर्वपक्षः प्रतिज्ञा, सा न सिद्ध्यति। आ*-भासेति प्रातीतिकार्थः। तत्र पदशब्दः पद्यते ज्ञायत इति किं वस्तुपरः उत ऋणादानादिरूप व्यवहार[3]पर इति विकल्प्य न तावदाद्यपक्षे पक्षाभासत्वमित्याह—यद्यनेकेति। अस्तु द्वितीय इत्याशङ्क्य परिहरति-[4]ऋणादानादीति। [5]अधुना अनेकपदैः सङ्कीर्ण इत्यस्य योऽर्थोऽभिप्रेतस्तम-

## बालंभट्टी

राज्ञेति। यत्पदार्थो व्यवहारः, प्रकृतीनां जनानां नगरस्थानां। उपसंहरति—अन्ये इति। इती-ति प्राग्वद्व्याख्येयं। अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसंकीर्णपूर्वपक्षस्यापि तत्त्वमेव। अनेकैः पदैः संकीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिद्ध्यति आभासरूपा भवतीति तदर्थप्रतीते-स्तन्निराकरोति — यत्त्वित्यादिना। तत्र पदशब्दः पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तु-परः, उत ऋणादानादिरूपव्यवहारविषयपरः? न तावदाद्ये पक्षाभासत्वमित्याह—तत्रेति। उ-क्तवचने इत्यर्थः। द्वितीयेऽपि तदभावमाह—ऋणादानादीति। स मयेति शेषः। मत इति

* आपाततो भासत इत्याभासा।

१ ख. वा [1]एतेषां स्वभावेनैव निराकरणमिति न निराक्रियते। तत्र च अप्रसिद्धादीनां व्युत्पत्त्यर्थमुपादानम्। तदप्यनेकपदसंकीर्णस्य निराकरणं न क्रियते। राज्ञा। २ ख. वा.। वा यद्गृहीत-मि०। ३ थ. द. रविषयपर। ४ त. ऋणेति। ५ त. अथ अनेक (पद) सङ्कीर्ण०।

मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव। किं तु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत्, यथाऽऽह कात्यायनः—"बहुप्रतिज्ञं यत्कार्यं व्यवहारे[1] सुनिश्चितम्। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया॥" इति। तस्मादनेकपदसंकीर्णः[2] पूर्वपक्षो युगपन्न सिद्ध्यतीति तस्यार्थः। अर्थिग्रहणात्पुत्रपित्रादीनां[3] ग्रहणं—तेषामेकार्थत्वात्, नियुक्तस्यापि नियोगेनैव तदेकार्थत्वाक्षेपात्—"अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा। यो यस्यार्थे[4] विवदते तयोर्जयपराजयौ॥" इति स्मरणात्[6]। नियुक्तजयपराजयौ मूलस्वामिनोरेव। एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा इत्यादि। प्रतिज्ञादोषस्तु यथाऽऽह—"अप्रसिद्धं[9] सदोषं च निरर्थं निष्प्रयोजनम्। असाध्यं वाऽविरुद्धं वा पक्षं राजा विवर्जयेत्॥ न्याय्यं मे नेच्छते कर्तुमन्याय्यं वा करोति च। न लेख-

## सुबोधिनी

र्थमाह—किं तु क्रियाभेदादिति। तमेवार्थमुपसंहारव्याजेन द्रढयति—तस्मादनेकेति। तस्यार्थः तस्य वचनस्यार्थः। "यथावेदितमर्थिना" इत्यत्र प्रत्यर्थिपदद्योत्यानाह—अर्थिग्रहणादिति। आर्थिनः पुत्रोऽप्यर्थी तत्पिताऽपि आदिशब्दादर्थिनियुक्तादयोऽपि अर्थिन इत्यर्थः। तत्रार्थिपुत्रादीनां तदेकार्थत्वं युक्तम्। अर्थिनियुक्तस्य तु कथं तदेकार्थत्वमित्यत आह-नियुक्तस्यापीति॥ ६॥

## बालंभट्टी

शेषोऽन्ते बोध्यः, वचनानर्थक्यपरिहाराय तस्याभिमतार्थमाह—किं त्विति। क्रियेति साध्येत्यर्थः। एतावत्—तत्रोच्यते इति शेषः। अत्र मानमाह—यथाऽऽहेति। बहुप्रतिज्ञं बहुपूर्वपक्षकं, अन्यथैतस्यैव वैयर्थ्यं स्पष्टमेव। तस्मादुक्तैव वचनयोर्व्यवस्था तदेव द्रढयन्नुपसंहारव्याजेनाह—तस्मादिति। तस्यार्थ इति—उक्तवचनस्यार्थ इत्यर्थः। "यथावेदितमर्थिना"इत्यत्रार्थिपदस्वारस्येन लब्धमर्थमाह-अर्थीति। अर्थिनः पुत्रोऽप्यर्थी तत्पिताऽप्यर्थी, आदिशब्दादर्थिनियुक्तादयोऽप्यर्थिन इत्यर्थः। अत एव तेषामन्यथावादित्वं निरस्तं प्राक् 'यो न भ्राता...' इत्यनेन वचनेन। ननु तत्पुत्रादेस्तदेकार्थत्वात्तत्त्वं युक्तं,तन्नियुक्तस्य तु तदभावात्कथं तत्त्वमत आह—नियुक्तस्यापीति। तत्र मानमाह—अर्थिनेति।तस्येति वाच्ये तयोरित्यस्य तात्पर्यार्थमाह-नियुक्तेति। मूलानुक्तं विशेषमाह—एतच्चेति,अर्थिवदितमित्यर्थः। पाण्डुलेखेति

१ च. छ. झ. व्यवहारं सु०। क. व्यवहारेषु। २ ख. च. झ. यस्मा०। ३ ख. ग. पौत्रा०। घ. झ मित्रा० ४ ख. दिग्र०। ५ क. च. झ. स्यार्थे। ६ घ. मनुस्मरणात्। ७ त. त्रार्थिपद०। ८ त. आदिपदात्। ९ अप्रसिद्धमदोषं च—(?)

आवापोद्धारेण [1]विशोधितं पश्चात्पत्रे निवेशयेत्,—"पूर्वपक्षं[2]स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधितम्॥" इति कात्यायनस्मरणात्। शोधनं च यावदुत्तरदर्शनं कर्तव्यं,नातःपरम्—अनवस्थाप्रसंगात्। अत एव नारदेनोक्तम्—"शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम्। अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्॥" इति। पूर्वपक्षमशोधयित्वैव य[3]दुत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति ॥ ६ ॥ 5

एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमित्याह[4]—

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।**

श्रुतो भाषार्थो येन प्रत्यर्थिनासौ श्रुतार्थः तस्योत्तरं—[5]पूर्वपक्षादुत्तरत्र भवतीत्यु-

यति यस्त्वेवं तस्य पक्षो न सिद्ध्यति ॥" इत्यादि। नारदश्च—"भाषायामुत्तरं यावत्प्रत्यर्थी न निवेशयेत्। अर्थी विशोधयेत्तावद्यावद्वस्तु विवक्षितम् ॥[6]" इति नात्र छलजादीनामवसर इत्यभिप्रायः ॥ ६ ॥

एवं पूर्ववाद्युक्तं पत्रारूढं श्रावयेत्। **श्रुतार्थस्योत्तरमित्यादि ॥**

बालंभट्टी

—खडीति भाषाप्रसिद्धः। आवापेति—न्यूनाधिक्यपरिहाराय प्रक्षेपनिष्कासनाभ्यामित्यर्थः। युक्तं चैतत्,-अन्यथा तत्राप्रामाण्यप्रसङ्गायत्तेः। तत्र मानमाह- पूर्वेति। स्वभावेनोक्तं न तु छलादिना। ततः तदनन्तरं तथाविशोधितं पत्रेऽभिलेखयेदित्यर्थः। शोधने विशेषमाह-शोधनमिति। अत एवेति—उत्तरेणावष्टब्धस्य प्रतिबद्धस्य पूर्ववादस्य शोधनं निवृत्तं भवेदित्यर्थः। शोधयेदिति विधिसूचितमर्थमाह—पूर्वपक्षमिति। रागादिति प्रागुक्तमिदम्। इतीत्यस्य बोध्यमिति शेषः ॥ ६ ॥

प्रत्यर्थिनो वचनस्य उत्तरत्वे बीजमाह—पूर्वेति। उत्तरत्र अग्रे तदीययथाकथंचिद्वंचन-

१ घ. शाधितम्। २ छ. पूर्वपक्षस्वभा०। प. मा. पूर्वपक्षस्य भा०। ३ ख. घ. यदोत्त०। ४ ख. ग. ज. त्यत आह। ५ घ. पूर्वपक्षादुत्तरत्र भवतीति नास्ति। छ., पक्षादुत्तरं प्रभवतीत्युत्तरं पूर्वपक्षादुत्तरं प्रभवति। ६.—२. ७.।

त्तरं—लेख्यं लेखनीयम्। पूर्वावेदकस्यार्थिनः संनिधौ समीपे उत्तरं च यत्पूर्वोक्तस्य[1] निराकरणं तदुच्यते, यथाऽऽह*—"पक्षस्य व्यापकं सारमसान्दिग्धमनाकुलम्। अव्याख्यागम्यामित्येतदुत्तरं तद्विदो विदुः॥" इति। पक्षस्य व्यापकं—निराकरणसमर्थम्; सारं—न्याय्यं न्यायादनपेतम्; असंदिग्धं—सन्देहरहितम्; अनाकुलं—पूर्वापराविरुद्धम्;
5 अव्याख्यागम्यम्—अप्रसिद्धपदप्रयोगेण दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यत् व्याख्येयार्थं न भवति तत्सदुत्तरम्। तच्च चतुर्विधम्—संप्रतिपत्तिः, मिथ्या, प्रत्यवस्कन्दनं, पूर्वन्यायश्चेति; यथाऽऽह[2]—कात्यायनः—"सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा। पूर्वन्यायविधिश्चैवमुत्तरं

---

**श्रुतश्चासावर्थश्च श्रुतार्थः। तस्य यदनुरूपमुत्तरं भवति तथा लेख्यम्। अन्यथा परा-**

---

## सुबोधिनी

अश्लिष्टविभक्तिसमासेति[3]–श्लिष्टं सम्बन्धयुक्तम्[4] अदुष्टमिति यावत्। (अ) श्लिष्टं दुष्टम्–विभक्तिश्च समासश्च; अध्याहारेण सहवर्तत इति साध्याहारम्[5];—अश्लिष्टविभक्तिसमासा

## बालंभट्टी

स्यानुत्तरत्वाय विशेषमाह—उत्तरं चेति। तद्विदः व्यवहारविदः सारमित्यस्यार्थो न्याय्यं, तदर्थो—न्यायादिति। तृतीयान्तत्रयाणां यद्व्याख्येयार्थमित्यत्रान्वयः–दुःश्लिष्टेति। अश्लिष्टेति पाठान्तरं, श्लिष्टं सम्बन्धयुक्तं अदुष्टमितियावत्। न श्लिष्टमश्लिष्टम् असंबद्धं दुष्टमिति यावत्।। विभक्तिश्च समासश्च विभक्तिसमासौ अश्लिष्टौ दुष्टौ च तौ विभक्ति समासौ च तौ, अध्याहारेण सहवर्तत इति साध्याहारं, तौ च तच्च तानि तैरभिधानं तेनेत्यर्थः। दुश्लिष्टेति पाठेऽप्येवम्। दुश्लिष्टौ दुःखेन सम्बद्धौ यौ, ताभ्यामित्यर्थत्वाद्दुष्टत्व एव पर्यवसानात्। अदेशेति—अन्यदेशेति पाठान्तरम्। उत्तरपदार्थमाह–तत् सदुत्तरमिति। प्रत्यवेति—कारणोत्तरमित्यर्थः। मह्यमिति धारेरुत्तमर्ण इति संदानत्वम्। सत्योति—सत्यत्वोक्तिरित्यर्थः। प्रतिपत्तिरिति—प्रतिपत्तिः संप्रतिपत्तिः। सत्योत्तरमित्यनर्थान्तरम् नाहमिति वाद्युक्तिः पूर्ववत्। एव

---

* प्रजापतिरिति—प. मा.

---

१ क. पूर्वोक्तनिरा०। २ क. छ. यथा का०। ३ मिताक्षरायां 'दुश्लिष्ट' इत्येव उपलब्धपुस्तकेषु सर्वत्र दृश्यते। ४ थ. सबद्धम्। ५ द. श्र विभाक्तिसमासौ। अश्लिष्टौ च तौ विभक्तिसमासौ च।

स्याच्चतुर्विधम् ॥" *इति। तत्र सत्योत्तरं यथा—रूपकशतं मह्यं धारयतीत्युक्ते सत्यं धारयामीति। तथा च कात्यायनः†—"अभियुक्तोऽभियोगस्य[1] यदि कुर्यादपह्नवम्। मिथ्या तत्तु[2] विजानीयादुत्तरं व्यवहारतः ॥" इति। तच्च[3] मिथ्योत्तरं चतुर्विधं—"मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः। अजातश्चास्मि तत्काल इति मिथ्या-चतुर्विधम् ॥"‡ इति। प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण 5 लब्धमिति वा, यथाऽऽह नारदः—"अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयात्प्रत्यवस्न्दनं स्मृतम् ॥" इति। प्राङ्न्यायोत्तरं तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थे अनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण परा-जित इति। उक्तं च कात्यायनेन[4]—"आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते॥" इति। एवमुत्तरलक्षणे स्थिते उत्तर- 10

---

जय एवेत्यभिप्रायः। संनिधाविति सद्यो निर्णयार्थम्। एतच्चात्यधिककार्यविषयं द्रष्टव्यम्॥

---

सुबोधिनी

भ्यां साध्याहारेण च यदभिधानं तत् तादृशं तेनेति समासः। प्रत्यवस्कन्दनमिति—कारणो-त्तरमित्यर्थः। प्रतिपत्तिरुदाहृतेति—प्रतिपत्तिः सम्प्रतिपत्तिः, सत्योत्तरमित्यनर्थान्तरम्। आचारेणावसन्नोऽपीति—व्यवहारेण पराजित इत्यर्थः, श्रुतार्थस्योत्तरं लेख्यमित्यत्रोत्तरमित्ये

बालंभट्टी

भग्रेऽपि। द्वितीयभेदानाह-तच्चेति। मिथ्यैतत् नाहं धारयामीत्येकं, नाभिजानामि नैव जानामी-ति द्वितीयम्, तदेति-तस्मिन्काले तस्मिन्देशे मम सान्निध्यमेव न स्थितमिति तृतीयम्,अजात इति-तत्काले ममोत्पत्तिरेव न स्थितेति चतुर्थम्—एवं प्रकारेण मिथ्योत्तरं चतुर्विधमित्यर्थः। अत्र स्पष्टत्वात् स्मृतिरेवोक्ता पृथक्संकीर्तनं न कृतमिति बोध्यम्। नाम त्वर्थे। विनिगमनाविरहा-दाह—प्रतिग्रहेणेति। लेखितः ण्यन्तस्य रूपं, प्रत्यर्थी यदि तं पत्रारूढीकृतमर्थं तथा प्रपद्य तथेवाङ्गीकृत्येत्याद्यर्थः। आचारेणेति—व्यवहारेण पराजितोऽपीत्यर्थः। जितः– पूर्वमित्येवं-

* नारदोऽपि—'मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कंन्दनं तथा। प्राङ्न्यायश्चोत्तराः प्रा-क्ताश्चत्वारः शास्त्रवेदिभिः"॥ इति

† बृहस्पतिरिति प. मा.—५६।

‡ इदं प्रजापतिवाक्यमिति प. मा व्य. ५७।

---

१ क. नियोगस्य। २ क. तं तु। ज. तत्र। ३ घ. तत्तु. १६.—२. २२.। ४ उक्तं च बृहस्पतिनेति प. मा. व्य. पृ. ५६। क उक्तं कात्या।

लक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धम् । स्पष्टीकृतं च*स्मृत्यन्तरे "संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च । पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् । व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥" इति । तत्र संदिग्धं—सुवर्णशतमनेन गृहीतमित्युक्ते, सत्यं गृहीतं सुवर्णशतं 5 माषशतं [3]वेति; प्रकृतादन्यद्यथा—सुवर्णशताभियोगे पणशतं धारयामीति ; अत्यल्पं—सुवर्णशताभियोगे पञ्च धारयामीति; अतिभूरि—सुवर्णशताभियोगे द्विशतं धारयामीति; पक्षैकदेशव्यापि—हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति; व्यस्तपदं—ऋणादानाभियोगे पदान्तरेणोत्तरं , यथा—सुवर्णशताभियोगे अनेनाहं ताडित इति; अव्यापि—देशस्थानादिविशेषणाव्यापि , 10 यथा,—मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते क्षेत्रमपहृतमिति; निगूढार्थं यथा—सुवर्णशताभियोगे किमहमेवास्मै धारयामीति,--अत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढार्थम् ; आकुलं—पूर्वापरविरुद्धम्, यथा—सुवर्णशताभियोगे कृते, सत्यं गृहीतं न

सुबोधिनी

कवचननिर्देशात् सङ्कीर्णोत्तरस्यानुत्तरत्वमित्याह–उत्तरमित्येकवचननिर्देशादिति। एवं चतु-

बालंभट्टी

स वाच्य इत्यर्थः । सः तथोक्तिरूपः । स्मृत्यन्तरमाह—यद्व्यस्तमिति । तत्र —एकादशानां मध्ये। पंचाशदिति—अर्द्धन्यूनतयाऽत्यल्पत्वम्, अत एव द्वैगुण्येनातिभूरित्वमाह—द्विशतमिति । समाहारे द्विगुः,—पात्रादित्वात् स्त्रीत्वाभावः। पक्षैकेतिश्लोके तथा शब्दश्चार्थे, अन्यत्पक्षैकदेशव्यापि चेत्यर्थः, पक्षैकदेशनिराकरणसमर्थेत्यर्थः । व्यस्तेति—असंबद्धपदरूपमित्यर्थः। पक्षैकदेशव्यापिनोऽनुत्तरत्वे सकलपक्षाव्यापिनोऽनुत्तरत्वमर्थसिद्धमेवेत्यन्यथा व्याचष्टे —देशेति । मध्येति—विन्ध्यहिमाचलयोर्मध्ये इत्यर्थः। लिखिते इति अन्तर्भावितण्यर्थमिदं । गुप्तार्थमाह—अत्रेति। ध्वनिना किमादिबोध्येन, तथाऽऽकुलमिति पाठो न तु निराकुलमित्यभिप्रेत्याह -आकुलमिति । दुःश्लिष्टेति प्राग्वत् । आद्योदाहरणमाह—यथेति । पित्रिति

* नारदवचनमिदमिति मयूखादयः ।

१ क. निरूढार्था । २ क. निराकुलम् ३ क. घ. च. छ. झ चेति । ४ ग. 'शताद्यभि' ५ ङ च. छ. ज. झ. पञ्चाशतं । ६ घ. च भूरि द्विश० । ज. भूरि शताभियोगे पञ्चशतं धारयामि । ७ क. ङ. छ. ज. झ. विशेषेणा' । ८ क. गृहीतमिति नास्ति ।

धारयामीति; व्याख्यागम्यं—दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन व्याख्या-
गम्यम् अदेशभाषाभिधानेन वा, यथा—सुवर्णशतविषये पितृऋणाभियोगे,
'गृहीतशतवचनात् सुवर्णानां पितुर्न जानामि' इति,—अत्र गृहीतशतस्य पितु-
र्वचनात् सुवर्णानां शतं गृहीतमिति न जानामीति; असारं—न्यायविरुद्धम्,
यथा—सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे 'सत्यं 5
वृद्धिर्दत्ता न मूलं गृहीतम्' इति। उत्तरमित्येकवचननिर्देशादुत्तराणां संकरो निर-
स्तः, यथाऽऽह कात्यायनः—"पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्। मिथ्या
चैवैकदेशे च संकरात्तदनुत्तरम्॥" इति। अनुत्तरत्वे च कारणं तेनैवोक्तम्—"न
चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। न चार्थसिद्धिरुभयोर्न चैकत्र क्रिया-
द्वयम्॥" इति। मिथ्याकारणोत्तरयोः संकरे अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति,— 10
"मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि।" इति स्मरणात्। तदुभयमेकस्मि-
न्व्यवहारे विरुद्धम्, यथा—सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे 'सुवर्णं

बालंभट्टी

पितुर्यो ऋणाभियोगस्तत्रेत्यर्थः। उत्तरमाह—गृहीतेत्यादीत्यन्तेन। अस्य तात्पर्यार्थं
माह—अत्रेति। गृहीतेति बहुव्रीहिः तथा च गृहीतशतवचनादित्यत्र दुःश्लिष्टसमासः,
सुवर्णानामित्यस्याध्याहारः इत्युभयोरेकमेवोदाहरणम्, इतीत्यस्य विवक्षितमिति शेषः।
गृहीतमिति—अत्रेति शेषः। ईदृशं यदुत्तरं तत् स्वार्थसिद्ध्ये नेति द्वितीयश्लोकार्थः। तथा च
तस्य सदुत्तरत्वमेव नेति पूर्वश्लोकैकवाक्यतेति बोध्यम्। अभिमतार्थसूचकतया न न्यूनते-
त्याह--उत्तरमिति। "श्रुतार्थस्योत्तरं लेख्यम्" इत्यत्र तथा निर्देशात् संकीर्णोत्तरस्यानुत्तर-
त्वमित्यर्थः। ननु त्रिभिर्मिलित्वा पक्षस्य निराकरणेन तत्समर्थत्वात् कुतोऽनुत्तरत्वमत आ
ह—अनुत्तरत्वे चेति। तेनैव कात्यायनेनैव। न चेति न हीत्यर्थः। स्यादिति संभाव-
नायां लिङ्। वादिनोः अर्थिप्रत्यर्थिनोः। एकत्र—अन्यतरस्मिन्, संभवतीति शेषः। सङ्क-
रस्यानेकत्वादादौ द्वयोः सङ्करे। आद्योदाहरणमाह—मिथ्येति। वादिनोरित्यस्यार्थमाह—
अर्थीति। मिथ्येति—अव्ययमिदं, मिथ्योत्तरेत्यर्थः पूर्ववादे कर्मण्यनुवादिनीत्यर्थः।
कारणे कारणोत्तरे, विरुद्धमिति तथा च कर्तुमशक्यत्वादुभयोर्नार्थसिद्धिरिति भावः। न चा-

---

१ छ. अत्रेत्यारभ्य न जानामीत्यन्तं नास्ति। २ ग. सुवर्णशतं।

न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं च' इति । कारणप्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम्;— "प्राङ्न्यायकारणोक्तौ[1] तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।" इति, यथा—सुवर्णं गृहीतं प्रतिदत्तं, रूपके व्यवहारमार्गेण पराजित इति । अत्र प्राङ्-न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम् , कारणोत्तरे तु साक्षिलेख्यादि-
5 भिर्भावयितव्यमिति विरोधः । एवमुत्तरत्रयसंकरेऽपि द्रष्टव्यम् , यथा—अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे 'सत्यं सुवर्णं गृहीतं प्रतिदत्तं, रूपकशतं न गृहीतं,वस्त्रविषये तु पूर्वन्यायेन पराजितः' इति । एवं चतुःसंकरेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन तस्य[2] तस्यांशस्य तेन[3] तेन विनाऽसिद्धेः—क्रमेणोत्तर-त्वमेव । क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । यत्र[4] पुन-
10 रुभयोः संकरे[5] यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तयितव्यः[6],

---

सुबोधिनी

स्सङ्करेऽपीति । अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे सुवर्णं

बालंभट्टी

र्थेति चोक्त एवेत्यर्थे न चैकत्रेत्यस्य तत्रैवोदाहरणमाह—कारणेति । तयोर्मिथः सङ्करे त्वित्यर्थः। एवेना र्थिव्यवच्छेदः,। प्राङ्न्यायेति—तयोरुक्ताविस्यर्थः । नेदं प्रत्येकपरं कारणांशे "कारणे-प्रतिवादिनि"इति सिद्धत्वात् । तस्मात्तत् साङ्कर्यपरमेवेदम् । अत एव समासनिर्देशसङ्गतिरपि प्रागवत् । इति-स्मरणादिति शेषः । नन्वत्रैकस्यैव क्रिया न द्वयोरिति प्रागवत् विरोधोऽत आह—अत्र चेति । द्वितीयसंकरे त्वित्यर्थः । भावेति—साधयितव्यमेतैः कृत्यैरित्यर्थः । आ-दिना दिव्यपरिग्रहः । उत्तरत्रयेति—मिथ्याकारणप्राङ्न्यायरूपेत्यर्थः । एवं चतुरिति, यथा अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे सुवर्णं धारयामि, रूपकश-तं न गृहीतं, वस्त्राणि प्रतिग्रहेण लब्धानि,धान्यविषये पूर्वन्यायेन पराजित इति । एवं मि-थ्याप्राङ्न्यायमात्रसङ्करेऽपि द्रष्टव्यम्।, नन्वत्र सर्वत्र क्रमेण क्रियाद्वयस्य सुकरत्वात्कात्यायनो-क्तमसम्भवरूपतत्कारणकथनमयुक्तमतस्तदाशयमाह—एतेषां चेति । असिद्धेरिति छेदः, अत एवैतत्फलितमाह—क्रमेणेति, क्रमेणोत्त्वित्यर्थः । तत्र नियामकाभावादाह—क्रमश्चेति । चेति प्राड्विवाकादेः समुच्चयः। एवं प्राप्ते क्वचिन्नियामकमाह—यत्रेति यत्र त्वित्यर्थः । उभयो-रिति—मिथ्याकारणोत्तरयोरित्यर्थः । इदमुपलक्षणं त्र्यादेरपि । यस्य उत्तरस्य । तत्क्रियो-

---

१ क. ख. कारणोक्तौ । २ ख. तस्यांशस्य । ३ क. ङ. शस्य तेन विना। ४ झ. अत । ५ ख. ग. संकरः तत्र । ६ ख. प्रवर्तनीयः ।

पश्चादल्पविषयोत्तरोपादानेन[1] । यत्र तु[2] संप्रतिपत्तेः उत्तरान्तरस्य च संकरस्तत्रो-
त्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः,—संप्रतिपत्तौ क्रियाभावात् , यथा
हारीतेन—" मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे । सत्यं चापि[3]
सहान्येन तत्र ग्राह्यं किमुत्तरम्॥" इत्युक्त्वोक्तम्—"यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रि-
याफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥ " संकीर्णं भवतीति शेषः । 5
ऐच्छिकक्रममपेक्षाक्रमं भवतीत्यर्थः[4] । तत्र प्रभूतार्थे यथा—'अनेन सुवर्णं

---

सुबोधिनी

धारयामि रूपकशतं न गृहीतं वस्त्राणि प्रतिग्रहेण लब्धानि धान्यविषये पूर्वं पराजित इत्येवं क्रमादुत्तरचतुष्टय[5]सङ्करो द्रष्टव्यः । अतोऽन्यथा सङ्कीर्णं भवतीति—यत् प्रभूतार्थ-विषयमुत्तरं न भवति, अपि तु समानार्थाविषयम् । यत्रोत्तरे उभयत्र क्रियाफलं भवति, तदतः पूर्वोक्तादन्यथा प्रकारान्तरम् । सङ्कीर्णमिति शेषपूरणेन[6] प्रकारान्तरत्वस्यैव कथनम् । सङ्कीर्णं किमनुत्तरमेवेत्याशङ्क्य युगपन्नोत्तरं, किं तु वादिप्रतिवादिनोः सभ्यानां चापेक्षाक्रमेण क्रमादुत्तरं भवतीति पूर्वोक्तार्थमेवात्रापि स्मारयति—ऐच्छिकः क्रमः अपेक्षा क्रमो भवती-

बालंभट्टी

पेति—तत्साधकक्रियाग्रहणेनेत्यर्थः । सत्योत्तरसंकरस्य पूर्वमनुपन्यासबीजं ध्वनयन् नियामकान्तरमाह-यत्र चेति । फलाभावेन पश्चादपि तदभावादत्र पूर्वमिति नोक्तम् । तदाह—संप्रेति। उक्तनियामकद्वये मानमाह-यथेति, उक्तमित्यत्रान्वयः। द्वितीयमाह-सत्यं वाऽपीति । यदुत्तरं द्वितीये आह—यत्र वेति, उत्तरे इत्यर्थः । तत्र तदुत्तरमसंकीर्णं ज्ञेयमित्यर्थः । अतोऽन्य-थेति यत् प्रभूतार्थविषय उत्तरं न भवति, अपि तु समार्थविषयकं यत्र चोत्तरे क्रियाफलमुभ-यत्र भवति तदतः पूर्वोक्तादन्यथा, प्रकारान्तरमित्यर्थः । तत्त्वमेव कथयन् तदर्थमाह -संकीर्णमिति। वाक्यपूर्तये आह--भवतीति शेष इति । अत्रापि संकीर्णत्वादनुत्तरत्वमेव सर्व-था नाभिमतं किं तु यौगपद्येन तत्त्वम् अर्थ्यादीच्छाक्रमेण तु तत्त्वमेवेति प्रागुक्तमेवाह-ऐच्छिकक्रमामिति । तदर्थमाह--अपेक्षाक्रमामिति । अर्थ्याद्यपेक्षाक्रमकं भवतीत्यर्थः । पुँल्लिङ्ग-पाठे तत्पुरुषः तत्रेति शेषः। तत्र तयोर्मध्ये । द्वितीयोदाहरणमाह— तथेति । तस्मिन्नेवेति

---

१ क. ख. ग. घ. नेन च व्यवहारो द्रष्टव्यः । २ ग. घ. च. । ३ क. ङ. वा । ४ ख. ग. शेषापेक्ष्या ऐच्छिकः क्रमो भव । च. ज. ऐच्छक्रमं भव । क. इच्छाविशेषापेक्षः क्रमो भवतीत्यर्थः व्य । ५ त. 'चतुष्टय' इति नास्ति । ६ त. 'शेषपूरणं । तेन प्रकारान्तरसं-कीर्णम् । ख. ग. संकरः तत्र ।

रूपकशतं वस्त्राणि च गृहीतानि' इत्यभियोगे 'सत्यं सुवर्णं गृहीतं, रूपकशतं च न गृहीतं, वस्त्राणि तु गृहीतानि प्रतिदत्तानि च' इति । अत्र मिथ्योत्तरस्य प्रभूत विषयत्वात् अर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः । पश्चाद्वस्त्रविषयो व्यवहारः । एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् । तथा
5 तस्मिन्नेवाभियोगे 'सत्यं सुवर्णं रूपकशतं च गृहीतं दास्यामि, वस्त्राणि तु न गृहीतानि, गृहीतानि प्रतिदत्तानीति वा, वस्त्रविषये पूर्वं पराजितः' इति चोत्तरे[3] संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्त-

---

## सुबोधिनी

त्यर्थः इति । तस्मिन्नेवाभियोग इति—अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीति पूर्वोक्त[4] एवाभियोग इत्यर्थः । अत्र सुवर्णं रूपकशतं च गृहीतं वस्त्राणि च न गृहीतानीति सत्य-मिथ्योत्तरयोः सङ्करः। गृहीतानि प्रतिदत्तानि चेति सत्येन सह कारणस्य सङ्करः। वस्त्रविषये पूर्वं पराजित इति सत्येन सह प्राङ्न्यायस्य सङ्कर इति विवेकः । सङ्कीर्णोत्तरे विषयसाम्ये एच्छिकः क्रमः । विषयवैषम्ये त्वधिकविषयोपादानेन प्रथमतो व्यवहार इत्युक्तम् , तत्र प्रथमतोऽधि-काविषयोपादानस्यापवादमाह–सम्प्रतिपत्तेर्भूरिविषयत्वेऽपीति[5] । एवं तर्हि सङ्कीर्णोत्तरं सर्वदा

## बालंभट्टी

अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानि इति पूर्वोक्त एवाभियोगे इत्यर्थः । तानि इत्य-स्येति शेषः। दास्यामीति—इत्युत्तरस्येति शेषः । हीनानीत्यस्येति शेषः । इति चोत्तरे इत्यन्य-तमोत्तरेण सांकर्य्ये । तथा चात्रप्रकृतमाह–संप्रतीति । एतदर्थमेव तस्मिन्नेवाभियोगे इत्युक्तम्। अन्यथाऽभियोगान्तरमेव वदेत् । अत्र दास्यामीत्यन्तस्य सत्योत्तरस्य यथाक्रमं मिथ्योत्तरेण कारणोत्तरेण प्राङ्न्यायोत्तरेण च संकरो बोध्यः । संकीर्णोत्तरे विषयसाम्ये ऐच्छिकः क्रमः, तद्वै षम्येऽधिकविषयोपादानेन प्राग्व्यवहार इत्युक्तं तत्र द्वितीयस्यापवादोऽपि प्रसङ्गात्सूचितः ।

---

१ तत्र० । २ क. छ. झ. विषये । ३ क. वोत्तरे । घ. चोत्तरं प्रतिपन्ने भूरि । ४ त. 'क्त. इत्यर्थः' । ५ त. 'सम्प्रतीति' ।

यितव्यः । यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वम्, यथा—शृङ्गग्राहिकतया कश्चिद्वदति 'इयं गौर्मदीया, अमुकस्मिन्काले नष्टा अस्य गृहे दृष्टा' इति । अन्यस्तु 'मिथ्यैतत्, एतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता वा' इति वदति । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरं, नापि मिथ्यैव—कारणोपन्यासात्, नापि कारणम्,—एकदेशस्याभ्युपगमाभावात् । तस्मात्सकारणं मिथ्योत्तरमिदम् । अत्र च प्रतिवादिनः क्रिया,—"कारणे प्रतिवादिनि" इति वचनात् । ननु "मिथ्या क्रिया पूर्ववादे" इति पूर्ववादिनः कस्मात्क्रिया न भवति,—तस्य शुद्धमिथ्याविषयत्वात् । "कारणे प्रतिवादिनि" इत्येतदपि कस्माच्छुद्धकारणविषयं न भवति । नैतत्, सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वात्, शुद्धकारणोत्तरस्याभावात् । प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमेनैकदेशस्य मिथ्यात्वम्, यथा—सत्यं रूप- 10

---

## सुबोधिनी

यौगपद्येन किमनुत्तरमेवेत्याशङ्क्य नेत्याह—यत्र तु मिथ्याकारणोत्तरयोरित्यादिना । परिहरति—तस्य शुद्धमिथ्याविषयत्वादिति । प्रसिद्धकारणोत्तर इति—सत्यं गृहीतं प्रतिदत्तं

## बालंभट्टी

एवं तादृशसंकीर्णोत्तरस्य यौगपद्येन सर्वथानुत्तरत्वे प्राप्ते क्वचित् प्रतिप्रसवमाह—यत्र त्विति । कयेति तत्पापेनेत्यर्थः । कश्चिद्वादी अन्यः प्रतिवादी, उत्तरमिदम् । आदावुत्तरत्वं साधयति—इदमिति । तावत् आदौ, तत्वस्यैवोत्तरत्वस्य प्रागुक्तत्वादाह—पक्षेति । साङ्कर्यं प्रतिपादयति—नापीति । एवेनान्यवच्छेदः । तथा च साङ्कर्यं कारणं कारणमेव, एकदेशस्येति पक्षस्येति ग्रहणस्य । साङ्कर्यमुपसंहरति—तस्मादिति, सकारणमिति । अत्र कारणस्यापि अप्राधान्यं मिथ्योत्तरप्राधान्यं तस्य तदुपपादकत्वात् । अत एव तत्र सहयोगे तृतीया कृता । प्रतिवादिनं तस्यैव उक्तमभिप्रेत्य प्रधानन्यायादरेण शङ्कते—नन्विति । परिहरति नेति । तत्र हेतुमाह—तस्येति—वचनस्येत्यर्थः, तुल्ययुक्तयाशङ्कते—कारणे इति । एवं चानुत्तरत्वमेवैतस्येति भावः । ननु शुद्धकारणोत्तरं प्रागुदाहृतं प्रसिद्धमेवेति तदभावोक्तिरयुक्ताऽत आह—प्रसिद्धेति ।

---

१ ख. द्वाद्यास्य । ग. द्याधास्य० । २ घ. वादिनः । घ. देशस्यमिथ्यात्वं यथा । ३ त. 'यत्र त्वित्यादिना' । ४.—त. तस्येति । ५.—त. गृहीतं च ।

कशतं गृहीतं न धारयामि प्रतिदत्तत्वा[1]दिति। प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्या-भ्युपगमो[2] नास्तीति विशेषः। एतच्च हारीतेन स्पष्टमुक्तम्––"मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम्।" इति। यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वम्, यथा––'रूपकशतं धारयति' इत्यभियोगे 'मिथ्यैतदास्मिन्नर्थे पूर्वमयं पराजितः' इति। 5 अत्रापि प्रतिवादिन एव क्रिया "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।" इति वचनात्। शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात् संप्रतिपत्तेरपि साध्यत्वे

## सुबोधिनी

चेत्येवंरूपे। प्रकृतोदाहरण इति अन्यस्तु 'मिथ्यैतदेतत्प्रदर्शितकालात्' इत्येवं पूर्वोक्ते। ननु पक्षनिराकरणसमर्थमुत्तरं भवति। सम्प्रतिपत्तेरङ्गीकारात्मकत्वे तदभावादनुत्तरत्वमेवेत्याशङ्क्याह––सम्प्रतिपत्तेरपीति[3]। सङ्कीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति नक्वचिदिति॥ ७॥

## बालंभट्टी

सत्यं गृहीतं प्रतिदत्तं चेत्येवंरूपे प्रागुक्तेऽपीत्यर्थः––प्रतिज्ञातार्थैकेति। ग्रहणस्येत्यर्थः नैकेति। असाधारणस्येत्यर्थः। उदाहरणेनेदं विशदयति–यथेति। प्रकृतोदेति। अन्यस्तु मिथ्यैतत् एतत्प्रदर्शितकालादित्यादिं पूर्वोक्ते इत्यर्थः–देशस्येति––तस्यापीत्यर्थः। क्वचित्तथा पाठ एव, विशेष इति। मिथ्या सहचरितरूपत्वं तूभयत्र समानमिति भावः। एवं सिद्धेऽर्थे मानमप्याह–एतच्चेति। वाऽपीति––अनेन त्रिभिरपि संकरे कारणमेव ग्राह्यमितिदर्शितम्। प्रतिप्रसवान्तरमाह––यत्रेति। यत्रेचेत्यर्थः एवमुत्तरत्वे साधिते तन्निर्वाहोपायमाह-अत्रापीति। मिथ्याक्रियेत्यस्य शुद्धमिथ्याविषयत्वादाह––प्रतीति। एवेन वादिव्यवच्छेदः, अत एवाह––प्राङ्न्यायेति। नन्विदं संकरविषयतया पूर्वमुक्तमिति कथमत्र प्रवृत्तिरत आह––शुद्धेति, अत्रेति शेषः। तथा च संकीर्णोत्तत्वप्रसंगो न च तद्युक्तं पक्षव्यापित्वादिति भावः। यद्वा शुद्धस्य प्राङ्न्यायस्याभावाद्वचने क्रियाबोधकेऽपाठात्तत्रकस्यापि क्रियाया अभावेन सर्वस्य प्राङ्न्यायस्यानुत्तरत्वप्रसंगो न चतद्युक्तं तत्र तस्य गणनात् तथा च यथा

---

१ झ. याभिदत्तत्वात्। २ ख. घ. ज. स्याभ्यु। क. स्याप्युप। ३ तं. संप्रति।

नोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणादेवोत्तरत्वम् । यदा तु कारण-प्राङ्न्यायसङ्करः यथा,—'शतमनेन गृहीतम्' इत्यभियुक्तः प्रतिवदति 'सत्यं गृहीतं प्रतिदत्तं चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजितः' इति । तत्र प्रतिवादिनो यथारुचीति । न क्वचिद्वादिप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः ॥

एवमुत्तरे पत्रे निवेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षिते आह— 5

## ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७ ॥

तत उत्तरानन्तरमर्थी साध्यवान् सद्य एवानन्तरमेव [1]प्रतिज्ञातार्थसाधनं लेखयेत्। प्रतिज्ञातः साध्यः स चासावर्थश्[2]च प्रतिज्ञातार्थः तस्य साधनं [3]साध्यतेऽनेनेति साधनं प्रमाणम् । अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमप्यङ्गीकृत- 10 मिति गम्यते । तच्चोत्तरत्र विवेचयिष्यते । अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति

---

अतश्चैवं—ततोऽर्थी लेखयेदित्यादि ॥ ७ ॥

---

### बालंभट्टी

तयोः तस्य प्रवृत्तिः तथा कारणस्य मिथ्यासहचरितरूपत्वात्तत् सांकर्ये प्राङ्न्यायस्य प्रवृत्तिरिति भावः । ननु पक्षनिराकरणसमर्थस्यैवोत्तरत्वे संप्रतिपत्तेरनुत्तरत्वप्रसंगस्तदभावादत आह—संप्रेति । उत्तरत्वमित्यत्रान्वयः— नापेति । प्रत्यर्थिनेति भावः । एवं यत्र प्रतिप्रादिनः एकक्रियास्थले उक्त्वा तस्यैव क्रियाद्वयप्रसंगो यत्र प्रागुक्तस्तत्र विशेषं प्रतिपादयन् प्रतिप्रसवांतरमाह—यदा त्विति यदाऽपीत्यर्थः । तत्र तत्रापि यथारुचि तस्यैव तयोर्मध्येऽन्यतरक्रियेत्यर्थः। संकीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति—इति न क्वचिदिति ॥ ६ ॥

निवेशिते लिखिते । प्रागुक्तव्युत्पत्तेराह—साध्यवानिति । अर्थासङ्गतेरिष्टासिद्धेश्चाह—साध्यत इति। प्रमाणं लिखितादिवक्ष्यमाणम्। न्यूनतां निराचष्टे—अत्रेति । मिथ्याक्रियेत्यादि प्रागुक्तस्यार्थस्य मूलारूढत्वं सूचयन्नर्थिशब्दस्य यौगिकत्वं न योगरूढत्वमिति सूचनद्वारा न्यूनत्वाभावं प्रतिपादयति—अर्थीति । वर्तमानसत्तोपाधिकान्मतुबादिव्युत्पत्तेराह—

---

१ क. ख. ग. ङ. च. छ. झ. प्रतिज्ञातार्थसाधनं इति नास्ति । २ ख. श्चेति । ३ क. झ. साध्यतेऽनेनेति नास्ति ।

वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तम्। अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी जात[2] इति स एव साधनं लेखयेत्। कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति स एव लेखयेत्। मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत्। तथाऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्य इत्युक्तम्।
5 अतश्च संप्रतिप्रत्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यत इति गम्यते। एतदेव हारीतेन स्पष्टमुक्तम्—"प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥" इति॥ ७॥

ततः किमित्यत[3] आह—

10 **तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा।**

तस्यै[4] साधनस्य[5] प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं साध्यस्य जयलक्षणां प्राप्नोति[6]। अतोऽस्मात्प्रकारादन्यथा प्रकारान्तरे

---

न कालं हरेदित्यर्थः अकस्मात्पुनः प्रतिज्ञातार्थसाधनाभिधान इत्यर्थः॥ ७॥

यत्न यस्मात्—**तत्सिद्धावित्यादि**॥ ८॥

उक्तं च—"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता। तद्धानौ हीयते वादी तरं

---

बालंभट्टी

--अस्तीति। अपिशब्दः समुच्चये तेन साम्यम्; तु वैलक्षण्ये; निर्दिशेत् लेखयेत् ण्यर्थान्तर्भावः। प्राग्वदन्यदप्याह—तथेति। अर्थ्येवेति आक्षेपादेव कर्तृलाभे तदुक्तिर्नियमार्थेति भावः। अतश्चेति गम्यते इत्यत्रान्वयः। तावतैव तादृशोत्तरदानेनैव। अत्र सर्वत्र मानमाह—एतदेवेति। अर्थीत्यादिनोक्तमेव इत्यर्थः। प्राङ्न्यायेति अस्याशय उक्तः। वादी तु क्रियां निर्दिशेत्। सा क्रिया॥ ७॥

---

१ घ. वदतेत्यारभ्य लेखयेदित्यन्तं नास्ति। २ च. ङ झ. जायते। ३ क. ङ. च. छ. ज. झ. मित्याह। ४ झ. तस्येत्यारभ्यनिर्वृत्तौ इत्यन्तं नास्ति। ५ ङ. साधनस्य प्रमाणलक्षणस्य सिद्धौ। ६ छ. ज. प्राप्नोतीति संबन्धः। एवं व्य०।

साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणामाप्नोतीति संबन्धः ।

एवं व्यवहाररूपमभिधायोपसंहरति—

**चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥**

"व्यवहारान्नृपः पश्येत्" इत्युक्तो व्यवहारः सोऽयमित्थं चतुष्पाच्चतुरंशकल्पनयां[1] विवादेषु ऋणादानादिषूपदर्शितो वर्णितः। तत्र, "प्रत्यर्थिनोऽग्रतो लेख्यम्" इति भाषापादः प्रथमः, "श्रुतार्थस्योत्तरं लेख्यम्" इत्युत्तरपादो द्वितीयः "ततोऽर्थी लेखयेत्सद्यः" इति क्रियापादस्तृतीयः, "तत्सिद्धौ सिद्धिमाप्नोति" इति साध्यसिद्धपादश्चतुर्थः; यथोक्तम्—"परस्परं[2] मनुष्याणां स्वार्थविप्रतिपत्तिषु। वाक्यान्न्यायाद्[3]व्यवस्थानं व्यवहार उदाहृतः ॥ भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः। आक्षिप्तचतुरंशस्तु[4] चतुष्पादभिधीयते[5] ॥" इति। संप्रतिप्रत्युत्तरे तु साधनानिर्देशाद्भाषार्थस्यासाध्यत्वाच्च न सा- 5 10

---

स्तामुत्तरो भवेत् ॥" इति। अत एव च तामिकैः[6] (?) प्रतिज्ञावचनस्यानङ्गत्वमुक्तम्। तदपि प्रत्युक्तं यस्मात्—"चतुष्पाद्व्यवहारोऽयमित्यादि ॥ ८ ॥

---

बालंभट्टी

ततः साधनलेखनोत्तरम्। प्रकारान्तरे इत्यस्य व्याख्या—साधनासिद्धाविति ॥ ७ ॥

एवं व्यवहारतद्विषयादिकथनप्रकारेण रूपं स्वरूपव्यवहारपदार्थमाह—व्यवहारेति। सोऽयं व्यवहारोऽयं; इत्थं उक्तप्रकारेण। मुख्यपादत्वासंभवादाह—चतुरंशेति। ऋणादानादिषु वक्ष्यमाणेषु विषये तानेवांशान् विभज्य दर्शयति—तत्रेति तेषां मध्ये इत्यर्थः। तेषु सतीषु अस्य न सार्वत्रिकत्वमित्याह—संप्रतीति। अनिर्देशे हेतुमाह—भाषार्थेति। चोक्तलक्षण इत्यग्रे प्रयोज्यः तेन साधनपादसमुच्चयः। यद्वा चो हेतुसमुच्चये लक्षणः, लक्षणोऽपि

---

१ क. कल्पनायां। २ क. परस्परमनु०। ३ ख. घ. वाक्यन्याया०। ४ क. चतुरङ्गस्तु०। ५ ज. छ. चतुःपादभि०। ६ 'तदभिज्ञैः' इति भवेत्। मातृकान्तराभावान्न स्पष्टीकृतः।

ध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात्त्वमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य * प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानात् व्यवहर्तृसंबन्धाभावाच्च न व्यवहारपदत्वामिति स्थितम्॥ ८ ॥

॥ इति व्यवहारमातृका ॥

---

न्यायागमाभ्यामिति शेषः । पतिज्ञा, उत्तरं, साधनं, निर्णयश्चेत्येवं चतुष्पात् । अन्यथा त्वन्यः स्यात् । प्रतिज्ञाक्रमेणैव विवादयेदित्यभिप्रायः ॥

---

## सुबोधिनी

प्रत्याकलितस्येति—पौनःपुन्येन विचारणं प्रत्याकलितम् ॥ ८ ॥ इति भट्टविश्वेश्वरविरचितायां मिताक्षराव्याख्यायां सुबोधिन्यां साधारणव्यवहारमातृकाप्रकरणम् ॥

## बालंभट्टी

क्वचित् तथा पाठ एव । अत एवाह—द्विपादत्वमेवेति । न्यूनतां निराचष्टे—उत्तरेति । अर्थिनोः मध्ये इति शेषः । प्रत्येति--पौनःपुन्येन विचारणस्येत्यर्थः । अस्य व्यभिचरितत्वादाह—व्यवेति, अर्थ्यादिसम्बन्धिन एव तत्त्वमिति भावः ॥ ८ ॥ इति साधारणव्यवहारमातृका ॥

---

*प्रत्याकलितं नाम भाषोत्तरयोः अर्थिप्रत्यर्थिभ्यां लेखितयोः क्रियोपन्यासं अनयोर्मध्ये कस्य स्यात्, का चास्मिन् पदे क्रिया स्यात्, हीनपादी वा अनयोर्मध्ये कः, इत्यादिः ससभ्यप्राड्विवाकस्य सभापतेः—सभ्यस्य प्राड्विवाकस्य वा-- परामर्शः उच्यते । तथा च बृहस्पतिः—"ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना । कलयित्वोत्तरं सभ्यैर्दोतव्यैकस्य वादिनः ॥" इति वीरमित्रोदये—पृ० ७२ ।

---

१ ख. व्यवहर्तुः सं० । २ ज. व्यवहारापादकत्वं । ३ च. छ. झ. स्थितम् ॥ एवं सर्व० । ४ क. इति व्यवहारमातृकाप्रकरणम् । ख. साधारणव्यवहारमातृकाप्रकरणम् । ५ प्रकरणमित्यधिकं सर्वसाधारण्येन मुखलेखने दत्तमस्माभिः । एवं द्वितीयप्रकरणादावपि । ६ त. इदं प्रतीकं तद्व्याख्यानं च नास्ति ।

# साधारणासाधारणव्यवहारमातृकाप्रकरणम् २

एवं सर्वव्यवहारोपयेगिनीं व्यवहारमातृकामभिधायाधुना क्वचिद्व्यवहारविशेषे कंचिद्विशेषं दर्शयितुमाह—

**अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।**

**अभियुक्तं च नान्येन नोक्तं[1] विप्रकृतिं नयेत् ॥ ९ ॥**

अभियुज्यत इति अभियोगोऽपराधः, तमभियोगमनिस्तीर्य अपरिहृत्य एन- 5
मभियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत् । यद्यपि प्रत्यवस्कन्दनं

ननु च यदा तु ममानेन पराभियोगमनिस्तीर्यैव तमेव पत्यभियुङ्क्ते तदाऽयं क्रमो नोपपद्यते । सत्यं तेनैव—अभियोगमनिस्तीर्येत्यादि ॥ ९ ॥

---

सुबोधिनी

असाधारणव्यवहारमातृकाप्रकरणम् ॥ नन्वभियुक्तस्य प्रत्यभियोगनिषेधे[2] गृहीतं प्रतिदत्तमित्येवं प्रत्यभियोगात्मकं कारणोत्तरमेव न स्यादित्याशङ्क्याह— यद्यपि प्रत्यवस्कन्दनमिति । अयमत्रार्थः—स्वाभियोगनिवारकं प्रत्यभियोगमपि कुर्यात् । अन्यथा "सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा । पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम्" ॥ इति

बालंभट्टी

प्रकृते योगरूढत्वमर्थान्तरनिरासायाह—अभियुज्यत इति, दोषविषयीक्रियते इत्यर्थः । येनेति शेषः करणे घञः सौलभ्यात्, यथाश्रुतं वा संबध्यत इति तदर्थात् । एन मित्यत्र कथितानुकथनसत्वेनैनां[3] देशविषयत्वादेनादेश: । अपराधेनेत्यस्य विशेषपरत्वाय शङ्कते—यद्यपीति । सत्यं गृहीतं प्रतिदत्तं चेति कारणोत्तरस्यानेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वमित्यर्थः। विषय इति। तथा च अभियोगनिवारकमेव प्रत्यभियोगं कुर्यादेव न तदनिवारकम्, अन्यथा सत्यं मिथ्योत्तरमित्यादिना चातुर्विध्यकथनस्यैवासंगत्यापत्तेरे-

---

१ घ. नोक्तं च विकृतिं नयेत् । २.—त. 'अभियोगविषये गृहीते प्रतिदत्तमित्येवं प्रत्यभियोगं कुर्यादेव, अन्यथ....' ३ फ. सत्वेनान्वादेनादेशः ।

प्रत्यभियोगरूपं, तथाऽपि स्वापराधपरिहारात्मकत्वात् नास्य[1] प्रतिषेधस्य विषयः। अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः।

इदं[2] प्रत्यर्थिनमधिकृत्योक्तम्, अथ अर्थिनं प्रत्याह "अभियुक्तं च नान्येन" इति। अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योऽर्थी नाभियोजयेत्। किं च 5 उक्तमावेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धभावं न नयेत् न प्रापयेत्। एतदुक्तं भवति—यद्वस्तु येन रूपेणाऽऽवेदनसमये निवेदितं तद्वस्तु तथैव भाषाकालेऽपि लेखनीयं नान्यथेति। ननु "प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना[3]।" इत्यत्रैवेदमुक्तं, किमर्थं पुनरुच्यते "नोक्तं विप्रकृतिं नयेत्" इति? उच्यते; "यथावेदितमर्थिना" इत्यनेनावेदनसमये यद्वस्तु निवेदितं तदेव भाषास-

---

स्वाभियोगमनिस्तीर्याऽभियोक्तारं नाभियुञ्जति, अनवस्थाप्रसंगेन व्यवहारासमाप्तेः।

---

## सुबोधिनी

चातुर्विध्यकथनमेवानुपपन्नमिति। अयं निषेध इति॥ नैनं प्रत्यभियोजयेदित्ययं निषेधः॥

## बालंभट्टी

तन्निषेधवैयर्थ्यापत्तेश्च, तदाह—अत इति। अनुपेति—करणे ल्युट्। निषेध इति—नैनं प्रत्यभीति निषेध इत्यर्थः। तथैव संभवादाह—इदमिति। भूते कर्मणि निष्ठायां तन्निस्तारे [4]जाते तस्येष्टत्वेनासंगतिं परिहरति—अनिस्तीर्णेति। भावनिष्ठान्तान्मत्वर्थीयोजिति भावः। अन्येन इत्यस्य पूर्वाभियोगसंबद्धात् योग्यतया शेषमाह—अन्योऽर्थीति। प्रतीत्यस्य सम्बद्धायोग्यत्वात् तमपहायाह—नाभीति। नोक्तमित्याद्युक्तिरप्यर्थिनं प्रत्येवेत्याह—किं चेति। प्रकृतिशब्दः स्वभावार्थको दुस्त्यज्यप्रकृतिरित्यादौ दृष्टः। शङ्कितुमेतत्तात्पर्यार्थमाह—एतादिति। तथैवेति। अन्यथाऽन्यथावादित्वेन भंगप्रसंगादिति भावः। इदं प्रतिपादितमधस्तात्। अपि तस्यैव समुच्चयः, एवमग्रेऽपि। अत एवाह—नन्विति। तदेवेति। तथा वस्त्वन्तरकथननिवृत्तिस्तेन क्रियते एकस्मिन्नपि पदे ऋणादानादिव्यवहारविषये इत्यर्थः।

---

१ ख. नास्य प्रतिषेधविषयत्वम्। २ क. इदं च प्रत्य०। ३ ४.—व्य० ६। ४ फ. याते।

मयेऽपि तथैव लेखनीयं, एकस्मिन्नपि पदे न वस्त्वन्तरमित्युक्तम् ; यथा—'अनेन रूपकशतं वृद्धया गृहीतम्' इत्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये 'वस्त्रशतं वृद्धया गृहीतम्' इति न वक्तव्यम् । तथा सति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति । "नोक्तं विप्रकृतिं नयेत्" इत्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिद्धयते;—यथा—'रूपकशतं वृद्धया गृहीत्वाऽयं न प्रयच्छति' इत्यावेदनकालेऽभिधाय भाषाकाले 'रूपकशतं बलादपहृतवान्' इति वदतीति। तत्र वस्त्वन्तरगमनं निषिद्धम्, इह तु पदान्तरगमनं निषिद्धयत इति न 5

---

**अत एव चान्याभियुक्तोऽप्यनभिनोज्यः, न च स्वयमुक्तार्थोपलापः कर्तव्य इति ॥ ९ ॥**

---

## सुबोधिनी

एकस्मिन्नपि पद इति । एकस्मिन्नपि ऋणादानादिव्यवहार[1]विषये वस्त्वन्तरोक्ति निषेध इत्यर्थः । तदुदाहृत्य दर्शयति—[2]यथाऽनेनेति। रूपकशतस्य वृद्धया दानमावेदनसमये अभिधाय प्रत्यर्थिनः पुरस्तात् भाषाकाले वस्त्रशतस्य वृद्धया दानेऽभिधीयमाने यद्यपि ऋणादाने रूपकमेव व्यवहारविषयो भवति, तथाऽपि रूपकशतस्थाने वस्त्रशतस्योपन्यासात् वस्त्ररूपवस्त्वन्तरस्योपादानं यत् तन्निषिद्धयते "यथावेदितमर्थिना" इत्यनेनेत्यर्थः। तथा सति पदान्तरागमनेऽपीति विषयान्तरं प्रत्यगमनेऽपीत्यर्थः । अस्मिन् प्रकरणे पदशब्दो विषयवाचीति विज्ञे[3]यम् । यथा [4]रूपकशतं वृद्धया गृहीत्वाऽयमिति—आवेदनसमये वृद्धया

## बालंभट्टी

एवं व्यवच्छेद्यमेवाह—न वस्त्वन्तरामिति । तदेवोदाहरणकथनेन विशदयति —यथेति । यद्यपि ऋणादाने रूपकमेव व्यवहारविषयो भवति; तथाऽपि रूपकशतस्थाने वस्त्रशतोक्त्या वस्त्वंतरोपादानमिति तन्निषेधस्तेन क्रियते इति भावः । एतेन शतरूपस्य विषयस्यैकत्वादयुक्तमिदमित्यपास्तम्। प्रागुक्तं दाढर्याय स्मरति—तथा सतीति । पदान्तरागमेति विषयान्तरं प्रत्यगमनेऽपीत्यर्थः। अत्र प्रकरणे पदशब्दो विषयवाची ; इत्यनेन—इत्यनेन तु। यथेति—अत्र रूपकशतरूपवस्तुन एकत्वेऽपि ऋणादानापहरणरूपयोर्व्यवहारविषययोर्भिन्नत्वेन तत् गमनमनेन नोक्तमित्यनेन निषिद्धयत इत्यर्थः । उक्तमेव स्पष्टार्थमुपसंहरति-तत्रेति। प्रत्यर्थिन इत्यत्रायमर्थः । वैपरीत्यशङ्का तु न। "यथा वेदितं" "नोक्तं विप्रकृतिम्"

---

१ त. रे व । २ त. यथेति । ३ त. यः । ४ त. रूपकेति ।

पौनरुक्त्यम् । एतदेव स्पष्टीकृतं नारदेन—"पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥" इति हीनवादी दण्ड्यो भवति, न प्रकृतार्थाद्धीयते अतः प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायम् "अभियोगमनिस्तीर्य" इत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः । अत एव वक्ष्यति—
5 "छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।" इति । एतच्चार्थव्यवहारे द्रष्टव्यम् । मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव । यथाऽऽह नारदः—
"सर्वेष्वर्थविवादेषु वाक्छले नावसीदति । परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्नहीयते ॥"

---

## सुबोधिनी

रूपकशतग्रहणमभिधाय प्रतिज्ञाकाले रूपकशतस्य बलादपहरणेऽभिहिते रूपकशतरूपवस्तुन एकत्वेऽपि ऋणादानरूपापहरणरूपव्यवहारविषययोर्भिन्नत्वेन यत् पदान्तरगमनं तत् "नोक्तं विप्रकृतिं नयेत्" इत्यनेन निषिद्ध्यत इत्यर्थः । यदुक्तं "हीनवादी दण्ड्य *एव न प्रकृतादर्थाद्धीयते" इति, तदेतदुक्तविषयव्यवहार एवेत्याह—एतच्चार्थव्यवहार इति । मन्युकृत

## बालंभट्टी

इत्येतत्स्वारस्यात् । तत्राऽऽद्ये मानस्योक्तत्वात् द्वितीये तमाह—एतदेवेति । द्वितीयमुक्तमेवेत्यर्थः । पदसंक्रेति । पदान्तरं प्रतिगमनादित्यर्थः । वादेति पाठान्तरं । तत्र साधारण्यमस्य बोध्यम् । आद्येति । प्रकृतपरत्वमेति तत्त्वम् 'हीनवादी दण्ड्यः स्यात्' इत्युक्तं सविशेषं विशदयति—हीनेति । दण्ड्य एवेत्यर्थः, अत एवाह—न प्रेति । वचनस्थक्रमेणाह—प्रत्येति । सिद्ध्यसिद्धीति । हीनवादित्वे प्रकृतार्थासिद्धिरतथात्वे सिद्धिरित्यर्थः । अत्र मानमाह—अत एवेति । मूलकृदिति शेषः । अस्यार्थोऽग्रे एव स्फुटः । इदमपि न सार्वत्रिकमित्याह—एतच्चेति । हीनवादी दण्ड्य एव न प्रकृतार्थाद्धीयते इत्येतदित्यर्थः ।

---

*एवस्थाने 'भवति' इति मिताक्षरायां पठ्यते । तेन हीनवादीत्यादिर्मिताक्षरोक्तेरर्थतोऽनुवादो भवेत् ।

---

१ ख. पादं । २ बा. भ. पादसं । ३ क. पदसंक्रमणो ज्ञेये हीन । ४ झ. ङ. च. त. प्रकृतादर्था । ५ ग. ङ. ज. परिहारार्थं एव । ६ छ. प्रकृतार्थसिद्धि । ७ व्य० १९ । ८ त. दुक्तव्यव० ।

इति । अस्यार्थः—सर्वेष्वर्थविवादेषु न मन्युकृतेषु वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते, न प्रकृतादर्थाद्धीयते इत्यर्थः । अत्रोदाहरणं—परस्त्री-त्यादि। परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्डयोऽपि यथा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति । अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृताद-प्यर्थाद्धीयत इति गम्यते, यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमये अभिधाय 5 भाषाकाले हस्तेन पादे ताडित इति वदन्न केवलं दण्डयः पराजीयते च ॥ ९ ॥

"अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।" इत्यस्यापवादमाह—

## कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।

कलहे वाग्दण्डपारुष्यात्मके साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु

---

अस्यापवादः—कुर्यादित्यादि ॥ १० ॥

---

### सुबोधिनी

इति—वाक्पारुष्यदण्डपारुष्यादिके[२] व्यवहार इत्यर्थः । एतदुक्तं भवति—एवंविधे वाक्छले सति व्यवहारहानिर्दण्डश्चेति । न तु मन्युकृतेष्विति, —[३]अमन्युकृतेष्विति यावत् ॥ ९ ॥

### बालंभट्टी

अर्थेति। उक्तविषयव्यवहार एवेत्यर्थः-मन्युकृते त्विति । वाक्पारुष्यदण्डपारुष्यादिव्यवहा-रे इत्यर्थः । अपिना दण्डसमुच्चयः । तथा चैवंविधे वाक्छले व्यवहारहानिर्दण्डश्चेति भावः । उक्तार्थस्य स्पष्टतयाऽभासादाह अस्यार्थ इति । अर्थपदव्यावर्त्यमाह—न मन्युकृतेष्विति । अन्यत्र तस्य स्पष्टत्वादेवाऽऽह-प्रमेति । नावेत्यस्य व्याख्या-नं पेति। तद्व्याख्यानं–प्रेति। उत्त-रार्धस्यासंबद्धत्वं पुनरुक्तत्वं च परिहरति–अत्रोदेति । सामान्योक्तौ विशेषोक्तिर्दृष्टान्त इति भावः । तत्त्वं योजयति—परेति–शास्यपदार्थौ दण्ड्येऽपीति। उदाहरणत्वादेवाऽऽह–यथेति । शेषपूरणमनयोरिति भावः । अत एव वाक्छले इति सप्तम्यन्तच्छेदो न तृतीयान्त इति बोध्यम्। अत एव च वैपरीत्यशंका नेति गूढाकूतम्[६] । एवं शाब्दमाद्यार्थमुक्त्वा द्वितीयमर्थपद-ध्वनितमाह—अर्थेति। धनेति—तृतीयान्तं प्राग्वत् सप्तम्यन्तं, सूचितस्योदाहरणमाह—यथाऽऽहमिति ॥ ९ ॥

संगतिमाह—अभीति । इत्यस्येति, अंशस्येत्यर्थः । तथा च प्रत्यर्थिविषय

---

१ ख. झ. हस्तेन पादेन वा । च. हस्ते न पादेवाता । २ त. 'के छलव्य'। ३ त. 'स्यात्'। ४ ष्वपि इति त. पुस्तकेऽपपाठः अनन्वितार्थत्वात् । ५ त. 'अमन्युकृतेष्विति यावत् इति त. पुस्तके नास्ति । १ त. 'ना त्वेवम्' । ६.—'गूढं कूतम्' इति च पाठः ।

प्रत्यभियोगसंभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् । नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्याभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासंभवः

---

अनिस्तीर्य स्वाभियोगं साहसान्न पत्यभियुङ्क्ते । अयमेव हि तत्र निर्णयप्रकार इत्यर्थः।

---

## सुबोधिनी

प्रत्यभियोगसम्भवे साहसादिष्वेवापराधेषु स्वयमभियुक्तोऽपि प्रत्यभियोजयेत् प्रत्यर्थिनम् । असति(?) तु नेत्याह-अभियोगमनिस्तीर्य इत्यादिना । नन्वेवं विधस्थले त्वाभियोगः(?) किमुत्तरं सत् सार्थकः, उत प्रतिज्ञान्तरं सत् सार्थक इति विकल्पे न तावदुत्तरत्वेन सार्थकत्वं पूर्वपक्षनिराकरणासमर्थत्वेनानुत्तरत्वात् । नापि प्रतिज्ञान्तरत्वेन । पूर्वाभियोग एका प्रतिज्ञा प्रत्यभियोगश्चान्या । ततश्च यथा सङ्कीर्णोत्तरे युगपद् व्यवहारासम्भवादनुत्तरमेव तत् तथा-प्रतिज्ञान्तरेऽपि युगपद् व्यवहारासम्भवस्य समानत्वादप्रतिज्ञात्वेन प्रत्यभियोगविधिरेव व्यर्थं इत्यनेनाभिप्रायेणाक्षिपति नन्वत्रापीति ॥ ९ ॥

## बालंभट्टी

एवायमितिभावः। निमित्तेति बहुव्रीहिः । ननु साहसादावपि प्रत्यभियोगासंभवेऽभियुक्तस्य कथं तत्करणविधिः ? अत आह—प्रत्यभीति । तथा च तदसंभवे नैवकुर्यादिति संभवाभिप्रायकमेवैतद्वचनमिति भावः । स्वाभीति-- स्वयमभियुक्त इत्यादिः तथा चेदं साहसादावेवेति तदन्यविषयकं तदिति भावः । न चैवंविधस्थले प्रत्यभियोगः । किमुत्तरं सत्सार्थक: उत प्रतिज्ञान्तरं सत् ? नाद्यः पूर्वपक्षनिराकरणासमर्थत्वेनानुत्तरत्वात् ; नान्त्यः अभियोगे एका प्रतिज्ञा प्रत्यभियोगे चान्या । ततश्च संकीर्णोत्तरे यथा युगपद्व्यवहारासंभवादनुत्तरत्वमेवं प्रतिज्ञान्तरेऽपि तदसंभवस्य तुल्यत्वादप्रतिज्ञात्वेन प्रत्यभियोगविधेरेव वैयर्थ्यादेवं च वचनार्थो दुर्वच इत्याशयेनाशङ्कते। नन्वत्राऽपीति द्वितीयपक्षमाश्रित्य समाधत्ते–

---

१ क. च. नुमर्दन । घ. पूर्वपक्षानुरूपत्वेनानुवर्तनत्वात्प्र । २ असति त्विति । अयमपपाठोऽर्थासङ्गतेः । 'अन्यत्र तु' इति युक्तः पाठो भवेत् । ३ त्वभियोग इति । अयं पाठः 'तत्वाभियोग' इति द. पुस्तकपाठश्च न समञ्जसो । तस्मात् 'प्रत्यभियोगः' इति युक्तं पठितुम् । ४ प. विषयके । ५ फ. प्रत्यवियोगश्चान्या ।

समानः । सत्यम्, नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः; अपि तु न्यूनदण्ड-प्राप्तये अधिकदण्डनिवृत्तये वा[1] । तथा हि । अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दण्डाल्पत्वम्; यथाऽऽह नारदः "पूर्वमाक्षारयेद्यस्तु[2] नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥[3]" इति ॥ यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः[4] । 5
"पारुष्ये साहसे वाऽपि युगपत्संप्रवृत्तयोः । विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः ॥" इति । एवं युगपद्व्यवहारप्रवृत्त्यसंभवेऽपि[5] कलहादौ प्रत्यभियोगोऽर्थवान्, ऋणादिषु[6] तु निरर्थक एव ॥ ९ ॥

अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह—

## उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥ 10

उभयोरर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु—निर्णयस्य कार्यं कार्यनिर्णयः, आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः; निर्णयस्य च कार्यं[7] साधितधन[8]-

---

**सर्वविवादेषु च यदाह सद्य एव निर्णयः स्यात् । तत उभयोरपि कार्ययोः प्रतिभूः**

---

### बालंभट्टी

नात्रेति। तत्राऽऽद्योदाहरणमाह-अनेनेति। दण्डेति—प्रत्यभियोक्तुरितिभावः । एवमुक्ततात्पर्ये मानमाह—यथाऽऽहेति। आक्षारयेत्—कायेन वाचा वा क्षीणं कुर्यात्। नियतं निश्चयेन नेयो दण्डः । द्वितीयोदाहरणमाह—यदा पुनरिति, यदा त्वित्यर्थः । पारुष्ये इति वाग्दण्डेत्यादिः । अत एव सामान्योक्तिः। इदमेव तत्र कलहपदेनोक्तम् । एवं चैतदेकवाक्यतया तस्योक्त एवाशयस्तदेतदभिप्रेत्य प्रागुक्तमुपसंहरति—एवमिति, उक्तप्रकारद्वयेनेत्यर्थः । एवं सतीति पाठान्तरम्, उक्तवचनस्यैवं तात्पर्यकत्वे सतीति तदर्थः ॥ ९ ॥

विशेषाभावादाह—सर्वेष्विति । कार्यस्य निर्णय इत्यर्थेऽर्थासङ्गतेराह-निर्णयस्येति ।

---

१ क निवृत्तये च । २ ज. पूर्वमाक्षेपये । झ च पूर्वमाख्यापये । ३.—१५. ९.। ४ क. झ. प्रवृतिस्तदातप्रा । ज. प्रवृत्ति सूत्राधि । ५ क. ग. एवं सातियुग । ६ ख. ऋणादानादिषु । क. घ. ऋणादिषुतुनि । ७ ख निर्णयस्यकार्यं च सा । छ. ज. निर्णयस्य कार्यधन । ८ क. साधिनाधन । क. साधितधनप्रदानं ।

दानं च; तस्मिन्समर्थः—प्रतिभूः—प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूः—ग्राह्यः ससभ्येन सभापतिना। तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः। तेभ्यश्च ताभ्यां प्रतिदिनं[1]वेतनं देयम्, यथा[2]ऽऽह कात्यायनः—"अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्॥" इति॥१०॥

5 अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम्; किं तन्निर्णयकार्यं[3] यस्मिन्प्रतिभूर्गृह्यत इत्यपेक्षित आह—

**निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।**
**मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्॥ ११॥**

अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनाऽपह्नवे कृते यदाऽर्थिना साक्ष्यादिभि-

---

कार्यनिर्णयक्षमो ग्राह्यः॥१०॥

यदा तु न्यायेनान्यतरकार्यपराजितः तदा निह्नवे भावित इत्यादि॥११॥

---

## सुबोधिनी

कार्ययोग्यस्तु वादिन—इति अर्थिप्रत्यर्थिनोः समासेन ग्रहणम्॥ १०॥

## बालंभट्टी

तस्मिन् समर्थ इति। द्विविधदाने समर्थ इत्यर्थः। मालजामिन इति भाषया प्रसिद्धोऽयम्। अनेनाताद्दशस्यातत्त्वमुक्तम्। प्रति भूशब्दो योगरूढ इत्याह—प्रतीति। प्रतिनिध्यर्थक इत्याह—तद्वदिति। प्रकृतत्वादाह—ससभ्येनेति। शेषोऽयं, ग्राह्यपदान्यथानुपपत्तेः। अनुक्तं विशेषद्वयमाह—तस्येति, प्रतिभुव इत्यर्थः। उभयत्र मानमाह—यथेति इति। अथेति पक्षान्तरे तत्र समर्थ इत्यर्थमाह—कार्येति। वादिन इति द्वयोरेकशेषः, जातावार्षं वा एकवचनम्। तेन वादित्वेनाप्रत्यर्थिनोः समासेन ग्रहणम्, एवमग्रेपि। रक्षितः भृत्येन इदमुपलक्षणं, तस्यापि इति केचित्। वादित्वमुभयोरपीति प्रत्येकाभिप्रायम्, एकवचनमित्यपरे, तुश्चार्थे, व्युत्क्रमे च वादिनश्चेत्यर्थः, तेन तत्संग्रह इति परे॥ १०॥

निर्णयकार्यमुक्तरूपं स्वयमुक्तं समूलयति—अर्थीति, किमिति, तत्रेत्यादि—

---

१ क. प्रतिदिनंदेयम्। २ ख. तथा। ३ क. कार्यं कस्मिंश्चि। ४ फ. यथाऽऽहेति।

र्भावितोऽङ्गीकारितः प्रत्यर्थी तदा दद्याद्धनं प्रकृतमर्थिने राज्ञे च तत्सममपलापदण्डम् । अथार्थी भावयितुं न शक्नोति तदा स एव मिथ्याभियोगी जात इत्यभियोगादभियुक्तधनाद्द्विगुणं धनं दद्याद्राज्ञे । प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम्। तत्रार्थ्येवापह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात्, अर्थिने च प्रकृतं धनम्॥ संप्रतिपत्त्युत्तरे तु दण्डाभाव एव। 5

---

निह्नवोऽपलापः । तत्र स्पष्टीकृते......तावद्देयं राज्ञे च तत्तुल्यमन्यत् । यदा तु

---

## सुबोधनी

उक्तन्यायमन्यत्राप्यतिदिशति–प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव–इत्यादिना। योजनाप्रकारस्त्वेवम्—अस्मिन्नर्थे पूर्वं पराजित इति प्राङ्न्यायोत्तरे, गृहीतं प्रतिदत्तमिति च कारणोत्तरे दत्ते पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाद्येवापलपतीति वाद्येवापलापवादी । तत्र च प्रतिवादिना साधिते प्राङ्न्याये पराजये प्रतिदाने वा, राज्ञे प्रकृतधनसमं दण्डमेव वादी दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं प्रतिदानं वा न साधयति, तदा तस्य मिथ्यावादित्वेन प्रकृतधनद्विगुणं दण्डं राज्ञे प्रकृतधनं च वादिने दद्यादिति । संप्रतिपत्त्युत्तरे तु दण्डाभाव

## बालंभट्टी

योग्यतयोपस्थितत्वाच्चाऽऽह—प्रकृतमर्थिने इति । तत्सममिति । प्रकृतधनसममपलापनिमित्तकदण्डमित्यर्थः । जात इतीति स इति शेषः । अभियोगादित्यत्र कर्मणि घञित्याह—अभियुक्तेति । वहेदित्यस्यार्थः–दद्यादिति । योग्यतया तदनुषङ्गेनाऽऽह—राज्ञे इति मिथ्योत्तरविषये उक्तन्यायमन्ययोरप्यतिदिशति—प्राङ्न्याये इति । तत्प्रकारमाह—तत्रार्थ्ये वेति । तस्मिन्नर्थेऽयं पूर्वं पराजित इति प्राङ्न्यायोत्तरे गृहीतं प्रतिदत्तमिति कारणोत्तरे च दत्ते, पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाद्येवापलपतीति स एवापलापवादीत्यर्थः। भावित इति—पराजयरूपप्राङ्न्यायस्य प्रतिदानस्य च सधनादङ्गीकारितो वादीत्यर्थः दण्डं—दण्डमेव, अन्यस्य—देयस्याभावात् । मिथ्याभियोगीति—मिथ्यावादीत्यर्थः । इति हेतौ, मिथ्यावादित्वेनेत्यर्थः। द्विगुणमिति—प्रकृतधनेत्यादि, धनं दन्डरूपम्। अवशिष्टतुर्योत्तरे तु नैवमतिदेश इत्याह–संप्रेति। दंडाभावेति—निह्नवाभावात्, तदीयं तु देयत्वे-

---

१ ख. त्राप्यर्थ्येऽप० । २ क. ग. प्रकृतसाधितधन० । घ. राज्ञे द्विगुणं धनं दद्यादर्थिने च प्रकृतधनसमं दण्डं वा । ज. राज्ञे द्विगुणधनं देयात् प्रकृतधनसमं द्विगुणं दण्डं तथात् । ३ क. ग. च. वा इति नास्ति । ४ क. धनमिति नास्ति । ५ नात्वेवम् । ६ फ. अस्मिन्न० ।

एतच्च ऋणादानविषयमेव । पदान्तरेषु तत्र तत्र दण्डाभिधानात्, अधनव्यवहारेष्वस्यासंभवाच्च न सर्वविषयत्वम् । "राज्ञाऽधमर्णिको दाप्यः" इत्यस्य ऋणादानविषयत्वेऽपि, तत्रैव विशेषं वक्ष्यामः ॥

मिथ्यैवाभियुङ्क्ते तदाऽभियोगात्प्रागर्थिताद्द्विगुणं राज्ञे एवं धनं देयमित्यर्थः ॥ ११ ॥

## सुबोधिनी

इति । निह्नवाद्यभावे दण्डाभावः । अधनव्यवहारेषु इति । वाक्पारुष्यदण्डपारुष्यादिषु व्यवहारेषु प्रकृतधनसमं दण्डदानं तद्द्वैगुण्यदानं वा यतो न सम्भवति तस्मादित्यर्थः । ननु पूर्वोक्तदण्डस्य ऋणादानमात्रविषयत्वे "राज्ञाऽधमर्णिको दाप्यः" इत्यत्र पुनरभिधानमनुपपन्नं स्यादित्याशङ्क्य परिहरति—राज्ञाऽधमर्णिक इति। " निह्नवे भावितो दद्यात्" इत्येतदृणादान-

## बालंभट्टी

नाभ्युपगतमेवेति भावः । विशेषमाह—एतच्चेति । निह्नवे भावितो दद्यादित्येतदित्यर्थः । पदान्तराणि द्विविधानि सधनान्यधनानि च तत्र सधनेष्वाह—पदान्तेति, सधने त्वित्यर्थः । तत्र तत्रेति—एवं च विशिष्यविधानादेतस्य सामान्यस्य तत्र बाधादवृत्तिरिति भावः । अधनेष्वाह— अधनेति । दण्डवाक्पारुष्यादिव्यवहारेषु प्रकृतधनसमदण्डदानस्य तद्द्वैगुण्यदानस्य संभवाच्चेत्यर्थः । उपसंहरति—न सर्वेति । अत इत्यादिः । यद्वा एव व्यवच्छेद्यमाह—न सर्वेति । ननूक्तदण्डस्य ऋणादानमात्रविषयत्वमपि तत्रापि राज्ञाऽधमर्णिक इत्यनेन विशिष्यदण्डस्य वक्ष्यमाणत्वात्, अन्यथा तस्य पौनरुक्त्यापत्तेः । वचनद्वयप्रामाण्यात् विकल्पाङ्गीकारे तु तद्वत्सर्वविषयताऽपि अस्य स्यादितीदम् अवस्थापनमयुक्तमत आह—राज्ञेति । तत्प्रकरणात् प्रतिपन्नार्थसाधनविषयम्, इदं तु तदभावादप्रतिपन्नार्थसाधनविषयमिति न कोऽपि दोष इत्यर्थः । ननु अन्यत्र दण्डस्याभिधानेऽपि द्वैगुण्यस्यानभिहितत्वादुत्तरार्धोक्तस्य विधानं संभवतीत्येतत् प्रवृत्तेरावश्यकतया पूर्वार्द्धस्यानुवादपरतया एकवाक्यतया योजनसंभवादृणादानमात्रविषयतया व्यवस्थापित-

१ व्य०. ४२. । २ त. 'अधनेति' । ३ त. 'तस' । ४ त. 'न त' । ५ फ. सधने चाऽऽह।

एतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम्। कथम्? अभियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्त्रा साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा तत्समं तत्र तत्र प्रतिपदोक्तमेव —चशब्दोऽवधारणे— धनं दण्डं दद्यात् राज्ञ इत्यनुवादः। अथाभियोक्ता अभियोगं भावयितुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते। अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥ 5

---

## सुबोधिनी

मात्रविषयमित्यभिहितं पूर्वत्र। अधुना तस्यैव सकलव्यवहारविषयतामाह—एतदेव सर्वव्यवहारविषयत्वेन इत्यादिना। प्रतिपदोक्तमेव धनं दण्डं दद्यादित्यन्वयः। प्रतिपदोक्तमेवेत्यवधारणं कुत उपलभ्यत इत्याह—चशब्दोऽवधारण इति। मूलवचनस्थश्चशब्द इत्यर्थः। इत्यनुवाद इति—श्रृङ्गग्राहिकया तत्तद्व्यवहारपदेषु दण्डस्य विहितत्वात् प्राप्तत्वेनानुवादः। दद्यादिति विधीयत इति द्विगुणदण्डस्याप्राप्तत्वात् ॥ ११ ॥

## बालंभट्टी

मुक्तन्यायमन्यत्राप्यतिदिशति—एतदेवेति। शब्दमर्यादया तथा प्रतीभावादाह—कथमिति। अत एव सामान्यशब्देन व्याचष्टे—अभियोगस्येति। तत्सममिति—व्यवहारतुल्यमित्यर्थः। यत्र यत्र व्यवहारे यो य उक्तः स तत्तुल्यो भवति। अन्यस्तु विरुद्धत्वाद्विसदृश इति भावस्तदाह—तत्र तत्र प्रतीति। धनमित्यग्रिमेणास्यान्वयः। एवः कुतो लक्ष्य इत्यत आह—च शब्द इति—मूलवचनस्थ इत्यर्थः। पूर्वार्धेण कस्यैव वाक्यार्थस्य सत्वेन वाक्यार्थद्वयाभावेन समुच्चयाभावात्तदर्थकत्वासम्भवेन निपातानामनेकार्थत्वात्तदर्थकत्वमितिभावः। योग्यतया धनशब्दार्थमाह—दण्डमिति। इत्यनुवाद इति श्रृङ्गग्राहिकतया तत्तद्व्यवहारे- दण्डस्य विशिष्यविहितत्वेन प्राप्तत्वाद्विध्यसम्भवेन पूर्वार्द्धेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थः। वैयर्थ्यं तु अस्य न तत्रैवोत्तरार्द्धेन विशेषस्य विधीयमानत्वादिति भावः। तदेव तथैवाऽऽह-अथेति। तत् सममित्यस्यानुषङ्गेणानुवादमाह- प्रतीति। प्राग्वदाह—दंडमिति। विधेयमाह—द्विगुणमिति। द्विगुणदण्डस्याप्राप्तत्वादिति भावः। पूर्ववदाह—अत्रापीति॥ ११॥

---

१ ख. वक्तुं। २ त. 'सर्वव्य'। ३ त. 'वेत्या।' ४ त. 'यः एवे' इति। ५ त. 'च शब्द इति'। ६ 'लस्थः'।

" ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।" इति वदतोत्तरपादलेखने कालप्रतीक्षण दर्शितम् ;

तत्रापवादमाह—

**साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।**

**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥**

5 साहसं विषशस्त्रादिनिमित्तं प्राणिव्यापादनादि, स्तेयं चौर्यम्, पारुष्यं वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम्, गौर्दोग्ध्री, अभिशापः पातकाभियोगः, अत्ययः प्राणधनातिपातः तस्मिम्—द्वन्द्वैकवद्भावादेकवचनम्—स्त्रियां कुलस्त्रियां दास्यां च—कुलस्त्रियां चारित्रविवादे, दास्यां स्वत्वविवादे—विवादयेदुत्तरं दापयेत् सद्य एव न कालप्रतीक्षणं कुर्यात् । अन्यत्र विवादान्तरेषु काल उत्तरदानकालः इच्छयाऽर्थि-
10 प्रत्यर्थि सभ्यसभापतीनां स्मृत उक्तः ॥ १२ ॥

---

किं पुनः सर्वैव सद्योव्यवहारस्मृतिः? सद्य एव युक्तं तथाऽपि तु—**साहस-स्तेयपारुष्य इत्यादि ॥ १२ ॥**

निर्वहणमनिरूप्यैव स्वबलावष्टम्भेन सहसा पसह्य यत्क्रियते तत्साहसम् । स्तेय पारुष्यं च वक्ष्यति । गोः अभिशापः गोभिशापः । गोग्रहणमुदाहरणार्थम्—सर्वपशूनां शृङ्गिणां वा अभिशापः । अत्ययः काल पतीक्षणासमर्थं कार्यं स्त्रियश्चात्राभियुज्यन्तेऽत्र कालपतीक्षणे विरोधात् सद्य एव विवादयेत्, विवादं समापयेदित्यर्थः । अन्यत्र तु ऋणा-

---

बालंभट्टी

प्रागुक्तं प्रतिज्ञासाधनं तत्रेत्यादि वक्तुं अव्यवहितसंगत्यभावात् व्यवहित संगतिमाह-- ततोऽर्थीति । स्तेयपारूष्ययोर्गवादेश्च द्वन्द्वं कृत्वा पुनः साहसेन समाहारद्वंद्वः; अत एवार्थ-मात्रानाह—साहसमित्यादि । विषेति—बहुव्रीहिः । प्रागनुक्तत्वादाह--वक्ष्येति । तदभा वेऽन्यत्र बाधाभावादाह दोग्ध्रीति । विनिगमनाविरहादाह—प्राणेति । प्रागुक्तनिमित्तान्य-निमित्तकोऽत्रप्राणनाशो ग्राह्यः, अत एव सामान्येनाह—द्वंद्वैक इति । विनिगमकाभावा-दाह—कुलेति । उभयत्र निमित्ते आह—चारित्रेति । विरुद्धभाषणं नार्थं इत्याह—उत्तर-मिति । प्राग्वदाह—अर्थीति पूर्वात्राऽपीदं स्मृतं इत्यर्थः । उक्त इति । अन्यथेत्यनेन नार-दीयेनोक्त इत्यर्थः ॥ १२ ॥

दुष्टलक्षणमाह—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो[1] विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४ ॥ 5
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽर्थे[2] साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ १५ ॥

मनोवाक्कायकर्मभिर्यः स्वभावादेव न भयादिनिमित्ताद्विकृतिं विकारं याति गच्छति असावभियोगे साक्ष्ये वा दुष्टः परिकीर्तितः । तां विकृतिं विभज्य दर्शयति—

दानादौ कालप्रतीक्षणमपि कार्यं वाधिकरणेश्च या वा[3] (?) भवति, यथाऽऽह नारदः—"गहनत्वाद्विवादानां क्षणिकत्वात्स्मृतेरपि । ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया ॥" (मा० १. ४४) इति ॥ १२ ॥

नन्वनेकप्रकाराः पुंसां पवृत्तयः; तत्र यदि कश्चिद्व्यवहारानुगुणवाक्यप्रवृत्त्यकुशलः, तदा सत्येऽप्यर्थे मिथ्यावादीव लक्ष्यते ; अन्यस्तु कश्चित्कपटव्यवहारचतुरो मिथ्याभूतेऽप्यर्थे सत्यवादीव लक्ष्यते;—तत्र तद्व्यवहारनिरूपणप्रयासवैयर्थ्यमेव। सत्यमिदं यदि विवेकावधृतिप्रकारो न स्यात्। स्यात्खल्वपायः—देशाद्देशान्तरमित्यादि त्रयः श्लोकाः ॥१३॥१४॥१५॥

सुबोधिनी

देशात् देशान्तरं याति........अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तित

बालंभट्टी

अर्थोपयुक्तमाह—दुष्टेति । हीनवादिप्रसंगात् पूर्वत्रोक्तस्य तन्मात्रस्येत्यर्थः । "स परिकीर्तितः" इत्यन्तेनेतिभावः । विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात् पाठक्रमादार्थक्रमो बलीयानिति न्यायेन व्युत्क्रमेण व्याचष्टे—मनोवागिति । "यद्धि मनसा" इति श्रौतक्रमेण मनसः पूर्वनिपातः, सर्वं वाक्यमिति न्यायेनोक्तिसामर्थ्येन चाह—स्वभावादेवेति । दोषस्वभावादेवेत्यर्थः । तेनाजन्मस्वभावनिरासः तद्व्यावर्तमाह—न भयादिति । आदिना क्रोधादिपरिग्रहः 'भावे क्तिन्' इत्याह विकारमिति । लिङर्थो न विवक्षित इत्याह —याति गच्छतीति । गच्छति यातीत्यर्थः । अत एव स इत्यस्यार्थमाह—असाविति । वा

१ क. द्रलद्वा० । २ ख. च साक्ष्ये । ३ 'बोधकरणं च यदा वा' इति स्यात् ।

देशाद्देशान्तरं याति, न क्वचिदवतिष्ठते; सृक्किणी ओष्ठपर्यन्तौ परिलेढि जिह्वाग्रेण घट्टयतीति कर्मणो विकृतिः; अस्य ललाटं स्विद्यते स्वेदबिन्दुचितं भवति; मुखं च वैवर्ण्यं विवर्णत्वं पाण्डुत्वं कृष्णत्वं वा एति गच्छतीति कायस्य विकृतिः; परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः; विरुद्धं पूर्वा-
5 परविरुद्धं बहु भाषत इति वाचो विकृतिः; परोक्तां वाचं प्रतिवचनदानेन न पूजयति; चक्षुर्वा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम्; तथा ओष्ठौ निर्भुजाति वक्रयतीत्यपि कायस्य विकृतिः;—एतच्च दोषसंभावनामात्रमुच्यते, न दोषनिश्चयाय।

सद्यः व्यवहारमार्गनिपुणतया कुतश्चिद्वा सहायाद्यवष्टम्भात् साधुतरभासं प्रत्ययमुत्पादयति; तथाऽपि यस्यैवमादीनि स दुष्टः परिकीर्तितः। परिकीर्तितवचनं दौष्ट्यनिश्चयख्यापनार्थम्। स्फुटावगतश्चातुर्यैश्चैवमादिभिर्लिङ्गैरध्यवसेयः। अन्यस्य त्वप्रतिभयाऽपि धूर्तजनसंत्रासितस्य वा भवत्येव। अतश्चैवं विविच्यैतानि लिङ्गानि व्यवस्थापनीयानीत्यनवद्यम्। सृक्किणी ओष्ठसन्धि। वाक् चक्षुः पूजयति नो—इति छेदः—वाचश्चक्षुषो वा पूजां न

## बालंभट्टी

चार्थे, तथा च श्लोकेऽथवेत्यन्वयेनाथ चेत्यर्थो बोध्यः। एकदेशसंग्रहाय तात्पर्यार्थमाह—न क्वचिदिति। ननु मनोवाक्कायकर्मभिरित्युपदेशाद्देशान्तरमित्यादिना व्युत्क्रमेण कर्मादिविकारप्रदर्शनमयुक्तम्। न च सान्निध्यात् व्युत्क्रमेणैवान्वयोऽभिमतः। एतदर्थमेव तथोक्तमिति वाच्यम्। तथोष्ठौ इत्यनेन कायविकारेण व्यवहितत्वात् तस्यैवान्ते उक्तेरत एव व्याख्यात्रा यथावस्थितमेव व्याख्यातमिति चेन्न। तदुद्देशक्रमेणोत्तरोत्तरस्य पूर्वपूर्ववाच्यत्वेनात्यन्तस्थूलत्वेनस्थूलतरप्रक्रमेण विकारदर्शने तात्पर्यात्। एवं सति तथोष्ठावित्यस्यापि वैवर्ण्यमेति चेत्यत्रैव वक्तव्यत्वेनान्ते भेदेन तदुक्तिस्तु तद्विकारस्य सार्वत्रिकत्वेन प्राधान्यसूचनार्थे बोध्यम्। पर्यन्तौ प्रान्तौ योग्यतया आह—जिह्वेति। इति इत्युभयमित्यर्थः, अत एव समुच्चायकश्चो मूले। एवमग्रेऽपि बोध्यम्। तृतीयश्च परीतिवाक्ये योज्यः एतीत्यस्य व्याख्या गच्छतीति। वाक्यस्य वास्तवशोषणासम्भवादाह—सगेति। अत एव स्खलादित्यन्यथा व्याचष्टे—व्यत्यस्तमिति पूर्वापरेति। इदमुपलक्षणं देशादिविरुद्धस्यासकृदुक्तौ तथात्वनिरासायाह—बह्विति। भाषते भाषते च वाक्चक्षुरिति समाहारद्वन्द्वः। तदर्थमाह—परोक्तामिति। पूजाप्रकारभेदमाह—प्रतिवचनेत्यादि। अस्य स्वतो विकृतित्वाभावादाह—विकृतेर्लिङ्गमिति। तथा चाऽऽरोपितं तत्त्वमिति न प्रागुक्तासंगतिः उक्तहेतोरेवान्ते व्याचष्टे—तथेति, वैवर्ण्यादिवदित्यर्थः। अस्य वचनस्य तात्पर्यार्थं प्रतिपादयन् विशेषमाह—एतच्चेति।

१ क. ग्रेण आस्वादयति। ख. ग्रेण स्पर्शयति। घठयति। २ ख. ग. द्रङ्कितं। घ. युतं। क. युक्तं। ३ क. परिशुष्यत्स्खलद्गद्गदं स्खलस्द्व्यस्तं वा वाक्यम्। ४ ख. न प्रपू। ५ फ. वाक्कायकर्मभित्युपदे०।

स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य दुर्ज्ञानत्वात्[1] । अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत, तथाऽपि न पराजयनिमित्तं कार्यं भवति,—न हि मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति । एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः॥ १३॥ १४॥ १५॥

किं च—

5

**संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्[2] ।**
**न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥ १६ ॥**

संदिग्धमर्थमधमर्णेनानङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासे-

---

कुरुत इत्यर्थः । वाक्पूजा स्वोक्तनिश्चयावष्टम्भः; चक्षुषश्च दर्शनावष्टम्भः; ओष्ठनिर्भुजनमनेकयोर्विकारः; जिह्वया वा परिलेहनम्; स्पष्टमन्यत् ॥ १३ ॥ १४ ॥ १५ ॥

यदा पुनर्द्वयोर्व्यवहारविप्रतिपत्तौ स्वबलावष्टम्भेनैव—अन्तरेणापि राजावेदनं—साधयितुं सामर्थ्यं स्यात्, तदाऽपि किमवश्यं राज्ञ एव निवेदनीयम्? सत्यमेवं युक्तं, यतः—

**सन्दिग्धार्थमित्यादि ॥ १६ ॥**

---

सुबोधिनी

इति । अत्र "मनोवाक्कायकर्मभिः" इत्युद्दिश्य "देशात् देशान्तरं याति" इत्यादिना व्युत्क्रमेण कर्मकायवाङ्मनसां विकृतिं दर्शयतो योगीश्वरस्यायमभिप्रायः—उद्देशक्रमेणोत्तरोत्तरस्य बाह्यत्वेनात्यन्तस्थूलत्वेन स्थूलतमप्रक्रमेण[3] विकारदर्शनमिति ॥ १३ ॥ १४ ॥ १५ ॥

एते वक्ष्यमाणास्त्रयो न केवलं दुष्टाः, अपि त्वर्थादपि हीना दण्ड्याश्चेत्याह—किञ्च, सन्दिग्धार्थम् इत्यादिना ॥ १६ ॥

यत्र द्वावपि प्रतिज्ञावादिनौ, तद्विषयत्वेन पूर्वोक्तं वचनं स्वयं व्याख्याय

बालंभट्टी

स्वाभेति, जन्मस्वभावकृतेत्यर्थः। विवेकस्य भेदस्य निमित्तमिति बहुव्रीहिः। एवमग्रेऽपि। अत्र हेतुं सूचयन् सदृष्टान्तमिदं विशदयति—न हीति । लिङ्गात्यत्किंचित् विकारात्—न परेति। तथा च तत्संभावनामात्रप्रतिपादने तात्पर्यम् । अस्य वचनस्य प्रागुक्तवक्ष्यमाणदण्डादिप्रतिपादने तद्रीत्या ईदृशस्थलेऽपि तथा पसङ्गोऽन्यथा स्यादिति तन्निवारणतात्पर्यकमिदं वचनम् । एवं च दुष्टः संभावितदोष एवेत्येवं व्याख्येयमिति बोध्यम् ॥ १३ ॥ १४ ॥ १५ ॥

अत एवाग्रे पुनः पाग्वदेव सविशेषमुक्तमित्याह — किञ्चेति । साधकस्य संदेहाभावात् यथाश्रुतार्थानुपपत्तेः प्रपन्नस्थले दोषाभावस्य प्रपन्नं साधयन्नर्थमित्यनेन वक्ष्यमाणत्वात् तत्तात्पर्यार्थमाह—अधमर्णेति । स्वतन्त्र इत्यस्य व्याख्या—साधनेति । लेख्यादित्यर्थः । उपायमाह—आसेधादीति । अप्रतिपन्नादौ

---

१ क. ख. दुर्ज्ञेयत्वा । २ क. च. ङ. निःपतेत् । ३ थ. 'तमप्र'।

धादिना स हीनो दण्डयश्च भवति। यश्च[1] स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो निष्पतेत्पलायेत; यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति, सोऽपि हीनो दण्ड्यश्च स्मृत इति संबध्यते। "अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः।" इति प्रस्तुतत्वा[2]द्धीनपरिज्ञानमात्रमेव माभूदिति दण्ड्यग्रहणम्। दण्ड्य-
5 स्यापि "शास्योऽप्यर्थान्न हीयते" इत्यर्थादहीनत्वदर्शनादत्र तन्माभूदिति हीन-ग्रहणम्॥ १६॥

अथ[3] यत्र द्वावपि युगपद्धर्माधिक[4]रण प्राप्तौ भाषावादिनौ, तद्यथा—कश्चित्प्रतिग्रहेण क्षेत्रं लब्ध्वा कञ्चित्कालमुपभुज्य कार्यवशात्सकुटुम्बो देशान्तरं गतः; अन्योऽपि तदेव क्षेत्रं प्रतिग्र-हेण लब्ध्वा कञ्चित्कालमुपभुज्य देशान्तर गतः; ततो द्वावपि युगपदागत्य मदीयमिदं क्षेत्रं म-
10 दीयमिदं क्षेत्रमिति परस्परं विवदमानौ धर्माधिक[4]रणं प्राप्तौ—तत्र कस्य क्रियेत्याकांक्षित आह—

## साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः।

यथैव राजाहूतो निष्पतेत्, यो वा राजान्तिकं गतः संभावितप्रतिभावानपि न किंचिद्वदेत्, स यथा पराजितो दण्ड्यश्च स्यात्। एवं योऽपि प्रत्यर्थिसंदिग्धं न्यायेन निश्चय-मकृत्वैव हठात् स्वतन्त्रः साधयेत् सोऽपि पराजितो दण्डयश्चेत्यभिप्रायः॥ १६॥

एवं तावत्। तत्साक्षिणः स्युः; तत्र तदधीनैव निर्णीतिः, तदभावे विपर्ययो वा।

सुबोधिनी

कैश्चिदुत्तरवशादेव पूर्ववादिन उत्तरवादिनश्च साक्षिणः प्रष्टव्या इत्यन्यथा व्याख्या

बालंभट्टी

दोषाभावादाह—प्रतीति। अर्थमिति शेष उभयत्र। अभियोगं विना आह्वानासम्भवादाह—अभियुक्त इति। अन्यत्र दोषाभावादाह—सदसीति। तुर्यपादस्य सर्वत्र सम्बन्ध इत्याह सोऽ-[6]पीत्यादि सम्बध्यते इत्यन्तेन। आद्ये स्मृत इत्यस्यानक्तिस्तु निष्फलत्वसूचनाय-तं विनाऽपि नि-र्वाहात्। एते त्रयो न केवलं दुष्टाः, अपि तु प्रकृतार्थादपि हीना दण्ड्याश्चेति समुदायार्थः। इदमेव विशदयति—अभीति हीनेति, दुष्ट इत्यर्थः। सम्भवत्येकरूप्येवैरूप्यस्यान्याय्यत्वात् तदुत्तर-मस्य कथनेन दुष्टस्यापि अनुषङ्गात्तस्यापि समुच्चयो बोध्यः॥ १६॥

उत्तरसंगतिव्यवहितेन कथयन् तदवतरणमाह--अथेति। द्वितीयप्रत्यर्थीति भ्रमनिरासा-याह—भाषेति। तयोर्युगपत्संभवमुपपादयति तद्यथेत्यादि पाप्तावित्यन्तेन,--देशान्तरमिति। कार्यवशात् सकुटुंब इत्यादिः,—युगपदिति। दैववशात्,--धर्मेति, धर्मास्थानमित्यर्थः। तत्र—

१ क. यः स्वयं। २ क. प्रकृतत्वात्। ३ च. अत्र यदि द्वावपि। ४ ख. धिकारिणं। ५ ग. 'ख्यातं नि'। ६ 'सोऽपीति' च पाठः।

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥

उभयतः उभयोरपि वादिनोः साक्षिषु संभवत्सु साक्षिणः पूर्ववादिनः पूर्वस्मिन्काले मया प्रतिगृहीतम्[1] उपभुक्तं चेति यो वदत्यसौ पूर्ववादी—न पुनर्यः पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः । यदा त्वन्य एवं वदति सत्यमनेन पूर्वं प्रतिगृहीतमुपभुक्तं च, किं तु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तं अनेन[2] वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन् पूर्वपक्षेऽधरीभूते "भवन्त्युत्तरवादिनः" उत्तरकालं प्रतिगृहीतमुपभुक्तं चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति । इदमेव व्याख्यानं युक्ततरम् । मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति । प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानं[3] न युक्तम् । अस्यार्थस्य " ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्[4] ।" इत्यनेनोक्तत्वात्पुनरुक्तिप्रसङ्गात्[5] । पूर्वव्याख्यानमेव स्पष्टीकृतं नारदेन—" मिथ्याक्रिया

---

देशान्तरगमनादिभिर्लिङ्गैर्यत्र तर्हि द्वयोरपि साक्षिणोर्लिङ्गानि देशान्तरगमनादीनि लिङ्गानि तत्र कथम्? उच्यते—साक्षिषूभयत इत्यादि ॥ १७ ॥

---

सुबोधिनी

तम् । तन्निराकर्तुम्[6]अनुभाषते । मिथ्योत्तरे[7] पूर्ववादिन इति । प्रतिज्ञा[8]तार्थसाधनमित्यनेनोक्तत्वादिति । अर्थ्यत इति अर्थी साध्यवान् । एवं च मिथ्योत्तरे पूर्ववादी साध्यवान् ।

बालंभट्टी

तयोर्मध्ये, क्रियासाधनम्। षष्ठ्यन्तात् सार्वविभक्तिकस्तसिरित्याह—उभयोरिति। सत्सु इत्यस्य व्याख्या सम्भवत्स्विति। सामानाधिकरण्यभ्रमनिरासाय प्रतीकपूर्वकं पूर्ववादिन इत्यस्यार्थान्तरं निराकुर्वन् व्याचष्टे—साक्षिण इति। न पुनरिति। तावताऽपि निर्णयासम्भवादिति भावः, योग्यं शेषमाह—प्रष्टव्या इति । उत्तरार्धमाह—यदा त्विति । अन्यः उक्तपूर्ववादिभिन्नः अनेन ब्राह्मणेन ;—असाध्येति । अनेनोत्तरेणाङ्गीकृत्य निराकृतत्वादिति भावः, अनुषङ्गादिनाह—साक्षीति । व्याख्यानन्तरं खण्डयितुमुत्कर्षयति—इदमेवेति । यत्र द्वावपि भषावादिनौ तद्विषयतया स्वयंकृतमित्यर्थः । यत्तु उत्तरवशादेवार्थिप्रत्यर्थिभेदेन क्रमेण पूर्ववादिन उत्तरवादिनश्च साक्षिणः प्रष्टव्या इत्यस्यार्थ इति कश्चित् ; तत्खण्डयति—मिथ्योत्तरे इति । मिथ्याक्रियापूर्ववादे इति प्रागुक्तत्वात्—कारणोक्तौ त्विति । तत्रार्थादेव पूर्वपक्षनिरासः संपन्न इत्याह—पूर्वेति प्रतिज्ञातार्थ इति । अर्थ्यत इत्यर्थः साध्यं, स यस्यास्तीति अर्थी,

१ ङ गृहीतं भुक्तं । २ क. च.ज. ग० अन्येन । ३ क. व्याख्यानमयुक्तम् । ४.—व्य० ७. । ५ ख. नैवोक्तत्वात् । ६ ङ. प्रसङ्गाच्च । ७ त. 'माह' । ८ त. 'त्तरे' । ९ त. 'ज्ञातेति।'

पूर्ववादे कारणे प्रतिवादिनि। प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्॥" इत्युक्त्वा "द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥" इति वदता। एतस्य च पूर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः॥ १७॥

---

क्व पुनर्विषये साक्षिसंभवः?—यत्रोत्तरवादी प्रत्यवस्कन्दनेन व्यवहारमाक्षिपति, यथा—केनाप्युक्ते 'ममानेनामुष्मिन् काले देशे चैवं द्रव्यं गृहीतम्' इति, अथापरो वदति 'सत्यं यद्येवम्; अहं पुनस्तस्मिन् काले निर्दिष्टदेशाद्देशान्तरस्थमात्मानं साक्षिभिस्साधयामि' इति; तत्र द्वयोः साक्ष्यभ्युपगमे पूर्ववादिन एव साक्षिणः स्युः—तत्प्राधान्याद्व्यवहारप्रवृत्तेः। यत्र त्वप्रमाणीकृतः पूर्वपक्षः तत्रोत्तरवादिन एव साक्षिणः स्युः; यथा—'सत्यं यथैवायमाह; तत्तु मयाऽद्य प्रतिनिर्यातित; तदेवं च साक्षिभिः साधयामि' इति॥ १७॥

यदा तु प्रत्यवस्कन्दनमनेन मार्गेण पुनः पूर्ववाद्यधरीकुर्यात्, तदा कथम्? मैवम्; एवमौत्तराधर्यकरणे सत्यवस्थैव स्यात्। का तर्हि गतिः अभ्यधिकपणोपन्यासेन यदि परं

---

## सुबोधिनी

कारणप्राङ्न्याययोस्तु उत्तरवाद्येव साध्यवान्। यस्य साध्यवत्ता तस्यैव साधनोपन्यास इत्यभिप्रायत उक्तत्वादित्यर्थः॥ १७॥

## बालंभट्टी

साध्यवान्। एवं च मिथ्योत्तरे पूर्ववादी साध्यवान्, कारणप्राङ्न्याययोस्तु उत्तरवाद्येव साध्यवान्, इति यस्य साध्यवत्ता तस्यैव साधनोपन्यास इत्यभिप्रायकार्थस्य प्राक् तत्रैवोक्तत्वादितिभावः। अत्र विरोधं सूचयन् ऋष्यन्तरसंवादोऽपि पूर्वव्याख्याने इत्याह—पूर्वेति। एवन द्वितीयव्यवच्छेदः। कृतं कृतं च, मिथ्या मिथ्योत्तरम्।—प्राङ्न्यायेति—पूर्वन्यायकारण निश्चये त्वित्यर्थः। जयपत्रं, तत्प्रदर्शनं, तथा च प्रतिवादिन्येव क्रियेति भावः। शुद्धप्राङ्न्यायविषयमिदमिति स्पष्टमेव। अर्थे एकार्थविषये। पूर्वपक्ष इति—पूर्वत्र काले प्रतिगृहीतमुपभुक्तं चेतीत्यर्थः। उक्तपूर्वपक्षो निरस्तो येन भवेदिति तदप्यर्थः, अत एव न न्यूनता प्रकृतैकवाक्यता च अत्र अर्थे विवदतोरित्यनेन स्पष्टमेवेदमुक्तम्। साधकान्तरमप्युक्तार्थे ध्वनयन्नत एवाह—एतस्य चेति पूर्वेति। प्रागुक्तार्थिप्रत्यर्थिविषयकेत्यर्थः। सर्वेति पाठे प्रागुक्तसर्वेत्यर्थः॥ १७॥

---

१ क. ख. ग. ङ. च. छ. झ. सर्वव्यवहार। २ क. छ. व्यवहारलक्षणत्वात्।

अपि च—

**सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।**
**दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥**

यदि विवादो व्यवहारः सपणः—पणनं पणस्तेन सह वर्ततइति सपणः—स्यात्तदा तत्र तस्मिन् सपणे व्यवहारे हीनं पराजितं पूर्वोक्तं दण्डं स्वकृतं च पणं राज्ञे अर्थिने च विवादास्पदीभूतं धनं दापयेद्राजा । यत्र पुनरेकः कोपावेशवशाद्य-द्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किंचि-त्प्रतिजानीते, तत्रापि व्यवहारः प्रवर्तते । तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावदी यदि हीयते तदा स एव सपणं[1] दण्डं दाप्यः[2] । अन्यस्तु पराजितो दण्डं दाप्यः न पणम् ।

---

व्यवहार परावृत्तिः ; अन्यथाऽनवस्थैव स्यात् । अतश्च **सपणश्चेदित्यादि** ॥ १८ ॥

दण्डस्वपणौ राज्ञे देयौ । स्ववतः पणः स्वपणः धनिनां व्यवहारं स्वपरावर्तयितुं

---

बालंभट्टी

व्यवहारविशेषं मूलकृदाह—अपि चेति । चेदर्थमाह—यदीति । विवादो न प्रसिद्ध इत्याह—व्यवेति । पारिभाषिकपणग्रहणे न्यूनतापत्तेराह पणनमिति—व्यवहाराणामि-त्यर्थः । स्वोक्तिसत्यतासूचनाय यथासम्भवं द्रव्यदानाङ्गीकरणमिति यावत् । तत्रेत्यस्य व्याख्या—तस्मिन्निति । वक्ष्यमाणविशेषविषयित्वादाह—पूर्वोक्तमिति । प्रकृतार्थसममिति निह्नवे भाविते इत्यत्रोक्तमित्यर्थः। स्वपणमित्यस्य अर्थः, स्वकृतं पणमिति । अत एव योग्य तया शेषमाह—राज्ञे इति । प्राड्विवाकादिरिति शेषः। न्यूनाधिकत्वनिरासायाह विवेति। राज्ञे इत्युपलक्षणमन्यस्यापि । इदमुभयकृतसपणविषयकमेवेति भ्रमो न कार्यः । तत्रैव गम-काभावात्। किन्त्वन्यतरकृतो विषमश्चोभयकृतस्तद्विषयकमपीति। अनेनस्वपदघटितेन सूचित-मेव विशेषमाह—यत्र पुनरित्यादि दाप्य इत्यन्तेन । पुनस्त्वर्थे । तत्रापीति—निमित्तसत्वा-दप्रवृत्तो मानाभावाच्चेति भावः। दण्ड दण्डमेव, अत एवाह—न पणमिति। स्वपणस्यैवाभा-

---

[1] क. सपणं । [2] छ. प्राप्यः ।

"स्वपणं च" इति विशेषोपादानात् यत्र त्वेकः शतम्, अन्यस्तु पञ्चाशतं प्रति-जानीते, तत्रापि पराजये स्वकृतमेव पणं दाप्यौ। "सपणश्चेद्विवादः स्यात्" इति-वदता पणरहितोऽपि विवादो दर्शितः ॥ १८ ॥

किं च—

5 छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥

छलं प्रमादाभिहितं निरस्य परित्यज्य भूतेन वस्तुतत्त्वानुसारेण[२] व्यवहारान्न-येदन्तं नृपः। यस्माद्भूतमपि वस्तुतत्वमपि अनुपन्यस्तमनभिहितं हीयते हानिमुप-गच्छति व्यवहारतो व्यवहारेण साक्ष्यादिभिः तस्माद्भूतानुसरणं कर्तव्यं यथाऽर्थिप्रत्य-

पणः कुत इत्यर्थः। धनं तु धनिन एव राज्ञा दापयेत् च। शब्दो दण्डादिसमुच्चयार्थः॥१८॥

एवं तावत् साक्षिसङ्करे नियम उक्तः। ललाटस्वेदादिलिङ्गसङ्करे कथम् तत्राप्यनु-मान मूलत्वात्? लैङ्गिकादिस्मृतीनां सम्यगनुमान निरूपणाधीन एव व्यवहारनिर्णयः। सर्वथा तु छलं निरस्येत्यादि ॥ १९ ॥

सुबोधिनी

यस्मात् भूतमपीत्यादि (ना?)। भूतमपि वस्तुतत्त्वमपि साक्ष्यादिभिरनुपन्यस्तं सत्

बालंभट्टी

वादिति भावः तदाह—स्वपणं चेतीति परेति। अन्यतरस्येति भावः, एवेनान्यकृतव्यव-च्छेदः, दण्डस्तु वर्तत एवेति भावः। चेत्स्यादिति सूचितं विशेषान्तरमाह–सपण इति॥१८॥

व्यवहारे विषयान्तरमाह मूलकृत्—किं चेति। नयेदिति अन्तमिति शेषः। क्वचित्तथापाठ एव तस्यावश्यकत्वमुत्तरार्धेन हेतुपरेण सशेषपूरणेन प्रतिपादयति—यस्मादिति। अनभिहि-तमिति अर्थिप्रत्यर्थिभ्यामिति शेषः। हीयमाणपापयोगाच्चेति, करणतृतीयान्तार्था रित्याह—व्यवहारेणेति। अत्र साधनं पूरयति—साक्ष्यादिभिरिति। तथा च साक्ष्यादिभिः क्रियमाणे न व्यवहारेण तद्धीयत इत्यर्थः। एतेन व्यवेत्यस्यार्थः साक्ष्यादिति भूतमपि वस्तुतत्वमपि साक्ष्यादिभिरनुपन्यस्तं सत् व्यवहारतो हीयत इत्यन्वय इति च व्याख्यानमपास्तम्,—भ्रममूलकत्वात्। साकाङ्क्षत्वादाह—तस्मादिति। अस्य तात्पर्यार्थमाह--यथेति। तत्फल-

१ ख ग दर्शित इति। २ नुसमणेन इति क्वचित् च.छ. निरपेक्षेणव।

र्थिनौ सत्यमेव वदतस्तथा ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः। तथा सति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवति। अथ सर्वथाऽपि भूतानुसरणं न शक्यते कर्तुं, तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः; यथोक्तम्—"भूतच्छलानुसारित्वाद्द्विगतिः समुदाहृतः। भूतं तत्त्वार्थयुक्तं यत्प्रमादाभिहितं छलम्॥" इति। तत्र भूतानुसारी व्यवहारो मुख्यः, छलानुसारी त्वनुकल्पः। साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्वस्त्वनुसरणं भवति, कदाचिन्न भवति, साक्ष्यादीनां व्यभिचारस्यापि संभवात्॥ १९॥ 5

---

व्यवहारो हि नासानृतप्रभवो व्याजैकनिबन्धनः। तथा चोक्तं नारदेन—"धर्मैकतानाः पुरुषाः यदाऽऽसन् सत्यवादिनः। तदा न व्यवहारोऽभूत् न द्वेषो नापि मत्सरः॥ नष्टे धर्मे मनुष्येषु व्यवहारः प्रकीर्तितः। द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः॥" (मा० १—२) इति॥ अधर्मप्राधान्यं व्यवहारेष्वित्यर्थः। यतश्चैतदेवम् अतश्च—"भूतमप्यनुपन्यस्तं हीयते व्यवहारतः।" व्यवहारमार्गेणान्यथाक्रियते। तथा चोक्तम्—"अचोरश्चोरतांप्राप्तो माण्डव्यो (?) व्यवहारतः।" इति। अतश्च प्रयतो निराकृतश्च वादी सत्यैकप्रवणो राजा व्यवहारेषु कृती स्यादित्यर्थः॥ १९॥

---

## सुबोधिनी

व्यवहारतो हीयत इत्यन्वयः। द्विगतिरिति— द्विप्रकार इत्यर्थः॥ १९॥

## बालंभट्टी

माह—तथेति। निर्णय इति यथार्थनिर्णय इत्यर्थः। अनेन सूचितं पक्षान्तरमाह—अथेति। पूर्वोक्तस्य मुख्यत्वादाह—इत्यनुकल्प इति। स्पष्टमस्यैतोऽप्रतीतेऽत्र मानं नारदमाह—यथोक्तमिति। भूतेति—भूतच्छलैरनुसरतीति तच्छीलस्तत्त्वादित्यर्थः। द्विगतिरिति—द्विप्रकार इत्यर्थः। संयुक्तं—प्रतियुक्तं यस्येति पाठान्तरम्। अत्रानुक्तं प्रागुक्तस्यानुरोधेनाह—तत्रेति। नन्वस्यापि मुख्यत्वं कुतो नात आह—साक्षीति। व्यभीति। अयथार्थवादित्वस्यापीत्यर्थः॥ १९॥

---

१ क. निरपक्षमेव। २ क. तथोक्तम्। ३ ग. ङ. समुदता। ४ 'स्मृतः' इति पाठान्तरम्।

"भूतमप्यनुपन्यस्तं हीयते व्यवहारतः।" इत्यत्रोदाहरणमाह—

निह्नुते लिखितं नैकमेकदेशविभावितः[1]।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥

नैकमनेकं सुवर्णरजतवस्त्रादि लिखतमभियुक्तमार्थिना प्रत्यर्थी यदि सर्वमेव
5 निह्नुते अपजानीते तदाऽर्थिनैकदेशे हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः
सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण[2]। "न ग्राह्यस्त्वनिवेदितः" पूर्वं भाषा-
काले अनिवेदितः पश्चादर्थिना 'पूर्वं मया विस्मृतः' इति निवेद्यमानो न ग्राह्यो

---

यदि तु अनेकत्रार्थेऽभियुक्तः सर्वमादौ नेत्युक्तं किंचित्कथंचिदभ्युपगच्छेत् । अत्र
तन्मात्रमेव किमसौ दाप्यः ? नेत्युच्यते—निह्नुते लिखितमित्यादि ॥ २० ॥

## सुबोधिनी

"निह्नुते लिखितं[3] नैकम्" इति।अस्मिन् वचनेपादत्रैयेणषाऽर्थः प्रतीयते —प्रतिज्ञाकले
वादिनाऽभिहितस्य सकलस्यार्थस्य प्रतिवादिना निह्नवे कृते यदि वादी पूर्वोक्तार्थे एकदेश
मपि साधयति, तदा प्रतिवादी सकलं[4] पूर्वोक्तार्थं दाप्य इति । चतुर्थपादे त्वयमर्थः प्रतीय-
ते—प्रतिज्ञाकालेऽनभिधाय पश्चात् कमप्यर्थमधिकं निवेद्य मानो[5] (?) वादी नादर्तव्य इति ।
एवमंशद्वयेन प्रतिज्ञाकालेऽभिहित एवार्थो व्यवहारतः प्राप्यत इत्यन्वयः, अनभिहितो न
प्राप्यत इति व्यतिरेकश्च दर्शितः । यतोऽन्वयव्यतिरेकाभ्यां "भूतमप्यनुपन्यस्तं हीयते"

## बालंभट्टी

पादत्रयस्यैक्त सशेषमर्थमाह—नैकमिति। नशब्देन समासः। अत एवाऽऽह—अनेकमिति।
लिखितमित्यस्य व्याख्या—अभीति, प्रतिज्ञाकालेऽर्थिनाभियोगत्वेनाभिहितमित्यर्थः। निह्नुते इ-
त्यत्र कर्मत्वे नान्वयोऽस्य, अग्रे सर्वपदोक्तेः। सामान्येनोक्ते श्चस्वारस्यादाह—सर्वमेवेति। एकदेशे
वेति "सुप्सुपा" इति सप्तमीसमास इत्याह—एकदेशे इति। पूर्वोक्तार्थैकदेश हिरण्यविषयेत्यर्थः।
सुवर्णस्याङ्गीकृतत्वादाह—रजताद्यर्थमिति । अनतिप्रयाहसंगा—पूर्वेति । तुर्यपादार्थं सप्रर्ता-
कमाह—न ग्राह्य इति । निष्ठालब्धपूर्वमित्यस्यार्थो भाषेति तत् श्रवणस्य दुष्परि

---

१ ख. देशे विभावितः। २ क. अर्थितो नृपेण। ३ त. तमिति। ४ त. सर्वं। ५ निवे-
दयमानः इति स्यात्।

[1]नादर्तव्यो नृपेण। एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चया-देकदेशान्तरेऽपि मिथ्यावादित्वसंभवात्, अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशा-न्तरेऽपि सत्यवादित्वसंभवात्। एवं तर्कापरनामसंभावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात्सर्वं दापनीयं नृपेणेति निर्णयः। एवं च तर्कवाक्या[2]नुसारेण निर्ण-ये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः। तथा च गौतमः— 5
"न्यायाधिगमे तर्कोऽभ्युपायः।" "तेनाभ्यूह्य यथास्थानं गमयेत्" इत्यु[3]क्त्वा "त-

अनेकार्थप्रलापकत्वेन लिखितः राज्ञे कथितः यदि निह्नुते पुनश्चैकदेशे स दाप्यते।

## सुबोधिनी

इत्येतत् दृढीकृतम्, अतस्तदुदाहरणमित्यर्थः। तर्कापरनामेति—तर्कज्ञानस्य सञ्ज्ञान्तरं-सम्भावनाज्ञानमिति। तज्ज्ञानसहकृतात् "निह्नवे लिखितम्" इत्यस्माद्योगीश्वरवचनादित्य-र्थः। न्यायाधिगमे तर्क इति। अस्यार्थः। न्यायज्ञाने तर्क उपायः। तेन [4]तर्केण न्यायम-[5]भ्यूह्य यस्मिन् विषये न्यायो योजनीयस्तत्स्थानं गमयेत्। अथवा यथास्थानं न्यूनातिरेक-

## बालंभट्टी

हरत्वादाह—नादेति। एवमंशद्वयेन प्रतिज्ञाकालेऽभिहित एवार्थो व्यवहारतः प्राप्य इत्य-न्वयो नाभिहितो न प्राप्य इति व्यतिरेकश्च दर्शितो यतो इतीत्यन्वयव्यतिरेकाभ्यां भूत-मप्यनुपन्यस्तं हीयते इत्येतत् दृढीकृतमिति तदुदाहरणत्वमस्येत्यर्थः। विशेषमाह-एतच्चेति। किं तु युक्तिसिद्धमपीत्यर्थः पर्यवसितमाह—एवमिति, उक्तप्रकारेणेत्यर्थः। तर्कापरेति—प्रत्ययो ज्ञानं तर्कज्ञानस्य नामान्तरं सम्भावनाज्ञानामिति। एवं च तर्कापरनामको यः सम्भा-वनाप्रत्ययस्तत्। सहकृतात् निह्नुते इति योगीश्वरवचनादित्यर्थः। एतदुक्तिफलमाह—एवं चेति। अस्य तदनुगृहीतत्वे, चेत्यर्थः तर्केति तयोरत्र मानमाह—तथा चेति। उपसंहरती-त्यत्रान्वयः—न्यायाधीति। न्यायज्ञाने तर्क उपायः तर्केण न्यायमभ्यूह्य निश्चित्य यस्मिन्-विषये न्यायो योजनीयः तत्स्थानं गमयेदित्यर्थः। यद्वा यथास्थानं न्यूनातिरेकरहितं यथा

१ क. न हर्तव्यो नृपेणार्थिने। ङ. च. छ. ज. न दाप्यो नृपेण। ख. न दापयितव्यो। २ ङ. नुसरणेन। च. तर्कानुसरणे वस्तुनो। क. तर्कानुसरणे क्रियमाणे। ३.—११. २३, २४। ४ द. तर्कोपायेन न्या। ५ अभ्यूह्येति मातृकासु लेखकस्य प्रमादो दीर्घस्यासाधुत्वात्। अभ्युह्य इति तु साधु "उपसर्गाद्ध्रस्व ऊहतेः" (७. ४. २३.) इति ह्रस्वविधानात्।

स्माद्राजाचार्यावनिन्द्यौ।" इत्युपसंहरति। न चैकदेशभावितोऽनुपादेयवचनः प्रत्यर्थी-त्येतावदिह गम्यते—एकदेशविभावितो नृपेण सर्वं दाप्य इति वचनात्। यत्तु कात्या-यनेनोक्तम्—"अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितं धनम्॥" इति तत्पुत्रादिदेयपित्रादृणविषयम्। तत्र हि बहूनर्थानभियुक्तः पुत्रा-
5 दिर्न जानामीति प्रतिवदन्निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवा-दीति "निह्नुते लिखितं नैकम्" इति शास्त्रं तत्र न प्रवर्तते। निह्नवाभावादपेक्षित-

ततोऽप्यसर्वान् स दण्डकान् अर्थान् यदि तु न लिखितः तदा एवंभूतोऽप्यदण्ड्यः। यद्वा

## सुबोधिनी

रहितं यथा तथा गमयेदिति। ननु भाषासमयेऽनिवेद्य पश्चात् अभिधीयमानो (?) वादी यथाऽनादरणीयः, एवमेकदेशविभावितः सन्नपि प्रत्यर्थी अनादरणीय एव भवतु। किमिति सर्वं दाप्य इत्यनेनाभिप्रायेणाशङ्क्य स्यादेवं यदि वचनं नास्ति, अस्ति तु तदित्याह—न चैकदेशविभावितोऽनुपादेयवचन इत्यादिना। प्रतिवदन्निह्नववादी न भवति—इति। ऋणस्यान्यकृतत्वेनाज्ञानस्यापि तत्र सम्भवादपलापाभावादित्यभिप्रायः। अनेकार्था-भियोगेऽपीति कात्यायनवचनमिति। सामान्यविषयं कात्यायनवचनं कर्तृविशेषशास्त्रस्य

## बालंभट्टी

तथा गमयेदित्यर्थः। एवंसति तर्केणैव सिद्धे मूलवचनवैयर्थ्यं परिहर्तुं शङ्कते —न चैकेति। यथा भाषासमयेऽनिवेद्य पश्चादभिधीयमानोऽर्थो नादर्तव्यस्तथा एकदेशविभावितः सन्नपि। प्रत्यर्थी नादर्तव्य इति तावताऽपि न दाप्य इत्येव पादत्रयार्थोऽस्तु किमिति सर्वं दाप्य इत्यर्थ इ-ति भावः। एकदेशेति—यत्र वचनं नास्ति तत्र तद्दृष्टान्तमूलस्तथैव तर्कः स्यादत्र तु वचन-सत्वात्तथा तर्कासम्भवेनैवमेव तर्कसम्भवेन तदर्थतया वचनं सफलमिति भावः। एवं निश्चिते प्रसक्तविरोधं परिहरति—यत्त्विति। योगेऽपीति। तेषां मध्ये इति शेषः; साक्षिभिरित्यस्य मध्यमणिन्यायेनान्वयः उपलक्षणं चैतदन्यस्यापि। एवेनाधिकांशव्यवच्छेदः। असौ धनी—पुत्रेति, तत्कृतेत्यर्थः अत्र हेतुमाह तत्र हीति, न भवतीति। ऋणस्यान्यकृतत्वेन-ज्ञानस्यापि तत्र सम्भवेनापलापाभावादिति भावः। इति हेतौ, क्वचित् क्वापि। अज्ञान संभवात्। तदेवाऽऽह—निह्नवेति। कात्यायनवचनन्तु इदं कर्तृसामान्यविषयमुक्तकात्यायन

१.—११. ३२.। २ च. भिधानेन। ३ क. ख. साधयत्। ४ ख. पुत्राद्यृणयिषयम्। ५ व्य० १९.। ६ अभिदधानः इति पाठो युक्तः। ७ त. प्रतिवदन्निति। ८ त. अनेकेति कात्यायनेति।

तर्काभावाच्च "अनेकार्थाभियोगेऽपि" इति कात्यायनवचनं सामान्यविषयम्। विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्य अज्ञानोत्तरे प्रवर्तते। ननु "ऋणादिषु विवादे स्थिरप्रायेषु निश्चितम्। ऊने वाऽभ्यधिके वाऽर्थे प्रोक्ते साध्यं न सिध्यति॥" इति वदता कात्यायनेनानेकार्थाभियोगे साक्षिभिरेकदेशे भाविते ऽधिके वा भाविते साध्यं सर्वमेव न सिद्ध्यतीत्युक्तम्। तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्स्यात्? उच्यते—लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृ- 5

## सुबोधिनी

विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्तत इत्यन्वयः। निह्नवो ज्ञात्वाऽपलापः; अज्ञानं ज्ञानाभावः। स्थिरप्रायेष्विति लिङ्गदर्शनमात्रेणादृढहेतुना स्त्रीसङ्ग्रहणादिरूपस्य साध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम्। ऋणादानादिरूपस्य तु साध्यस्य दृढसाधनेनैव सिद्धेः स्थिरप्रायत्वमित्यर्थः। उच्यते—लिखितसर्वार्थसाधनतयेति। अयमभिप्रायः—सुवर्णं रजतं वस्त्राणि चानेन गृहीतमित्यभियोगे न मया गृहीतमिति निह्नवे कृते तत्रोक्तसकलवस्तुग्रहणे साधनत्वेन कथितैः साक्षिभिः सुवर्णादिष्वन्यतमस्य ग्रहणे वा, सुवर्णं

## बालंभट्टी

वचनन्तु विशेषशास्त्रस्य निह्नुते इत्यस्य विषयम्। निह्नवोत्तरं ज्ञात्वाऽपलापो निह्नवस्तद्रूपमुत्तरं परिहृत्य परित्यज्य अज्ञानोत्तरे ज्ञानाभावेनोत्तरे, न प्रवर्तत इत्यर्थः। तथा च सामान्यविशेषशास्त्रयोरनयोरुत्सर्गापवादवद्व्यवस्थेति भावः। विरोधान्तरं परिहरति—नन्विति। ऋणादिषु ऋणादानादिषु,—स्थिरेति। लिङ्गदर्शनमात्रेण दृढहेतुनाऽपि स्त्रीसंग्रहणादिरूपसाध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम्। ऋणादानादिरूपसाध्यस्य तु दृढसाधनेनैव सिद्धेस्तेषां स्थिरप्रायत्वमित्यर्थः। तथा चेदृशास्थिरप्रायत्वं नाकाशादिवदिति भावः, निश्चितमिति क्रियाविशेषणं योगे सतीति शेषः,। साक्षीति। इति तेषां मध्य इत्यादिः एकेति ऊन इत्यर्थः। अधिके इति—प्रोक्त इत्यस्य उक्तसर्वापेक्ष इत्यादिः, सामान्योक्त्या साध्यमित्यस्य साध्यत्वेनावच्छिन्नमित्यर्थः। तत्फलितमाह—सर्वमेवेति। तथा सति—सर्वसाध्यासिद्धत्वे सति सिद्धिः मूलतात्पर्यविषयभूता। एकेति—एकदेशान्तरेत्यर्थः। लिखितेति। सुवर्णादित्रयं गृहीतमित्यभियोगे कृते न मया गृहीतमिथ्यैतदिति निह्नवे कृते

१ क. चाभ्यधि। ख. ग. वाऽप्यधि। २ त. उच्यत इति।

त्स्नमेव साध्यं न सिद्ध्यतीति तस्यार्थः। तत्रापि निश्चितं न सिद्ध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव—"छलं निरस्य" इति नियमात्। साहसादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव, तावतैव साहसादेः सिद्धत्वात्कात्यायनवचनाच्च—" साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत्। स्त्रीसंगे साहसे चौर्ये यत्साध्यं परिकीर्तितम् इति ॥२०॥

न ग्राह्यस्त्वनिवेदित इत्यस्यान्या व्याख्या...धनिने राज्ञा सर्वमर्थं दाप्यः, न तु दण्ड्यस्तंदनभिप्रेतोऽपीत्यर्थः ॥ २० ॥

## सुबोधिनी

रजतं वस्त्राणि धान्यं च गृहीतमिति पूर्वनिर्दिष्टवस्तुभ्योऽधिकवस्तुग्रहणे वा निर्दिष्टे सकलमपि साध्यं न सिद्ध्यतीत्येतत्परं कात्यायनवचनम्। याज्ञवल्क्यवचनं तु सुवर्णं रजतं वस्त्राणि च धारयतीत्यभियुक्तः प्रत्यर्थी न धारयामीति यदि निह्नुते, तदा सुवर्णग्रहणे साक्षिणः सन्तीत्युपन्यस्य तावन्मात्रे साक्षिभिः साधिते प्रत्यर्थी पूर्वोक्तं सर्वं दाप्य इत्येतत्परमित्येवं परस्पराविरोध इति। कात्यायनवचनाच्चेत्युक्तं तदेव वचनं दर्शयति साध्यार्थांशेऽपीति। स्त्रीसङ्ग्रहादिके विवादपदे प्रतिज्ञावादिना योऽर्थः साध्यत्वेन कथितः, तत्र [3]सकलसाध्यसाधनत्वेनाभिहितैरपि साक्षिभिः साध्यार्थस्यैकदेशेऽपि कथिते सकलं साध्यं संभवेत् [4] सिद्ध्येदित्यर्थः ॥ २० ॥

## बालंभट्टी

सर्ववस्तुग्रहणसाधनतया कथितैः साक्षिभिः सुवर्णाद्यन्यतमग्रहणे सुवर्णादिधान्यं च गृहीतमित्यधिकवस्तुग्रहणे वा निर्दिष्टे सर्वमपि साध्यं न सिद्ध्यतीत्येतत् परं कात्यायनवचनम्। निह्नुते इति वचनन्तु उक्तरीत्याभियोगेऽनिह्नवे च कृते सुवर्णग्रहणे साक्षिणः सन्तीत्युक्ते तैस्तावन्मात्रेऽपि साक्षिभिः साधिते पत्यर्थी सर्वं दाप्यः। पूर्वोक्तमित्येतत्परमिति न विरोधो मिथ इति भावः। तस्य कात्यायनवचनस्य। नन्वेयं तादृशे किं व्यवहारो नैवात आह—तत्रापीति। तदुक्तस्थलेऽपीत्यर्थः—नियमादिति। आरब्धस्यान्तगमनमिति न्यायेन प्राप्तस्य विधानेन नियामकत्वं तस्येति भावः। स्थिरप्रायेष्वित्यस्य प्रत्युदाहरणमाह—साहसादौ त्विति। उद्दिष्टैः कथितैः, उद्दिष्टैरिति पाठान्तरम्। एवं साधिते ऋष्यन्तरसंवादमप्याह—कात्यायनेति। तदेव वचनमाह—साध्यार्थांशेऽपि इति। स्त्रीसंग्रहादिके विवादपदत्रये भाषावादिना यदनेकार्थरूपं साध्यत्वेन कथितं तत्तत्र सकलसाध्यसाधनतयाऽभिहितैः साक्षिभिः साध्यार्थस्यैकदेशेऽपि साधिते सकलं भवेत् सिध्येत् इत्यर्थः॥ २० ॥

१ क. सत्साध्यम्। २ तं. साध्यार्थेति। ३ त. सर्व। ४ त. ध्यं भवेत्।

"ननु निह्नुते लिखितं नैकम्" इतीयं स्मृतिस्तथा "अनेकार्थाभियोगेऽपि" इतीयमपि स्मृतिरेव। तत्रानयोः स्मृत्योः परस्परतो[1] विरोधे सतीतरेतरबाधनादप्रामाण्यं कस्मान्न भवति विषयव्यवस्था किमित्याश्रीयत इत्यत आह—

**स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः।**

यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान्समर्थः। स च न्यायः कुतः प्रत्येतव्य इत्यत आह— "व्यवहारत।" इति। व्यवहारात् वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते। अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता। एवमन्यत्रापि विषयव्यवस्थाविकल्पादि[2] यथासंभवं योज्यम्॥ २०॥ 5

नन्वसौ तदनभिप्रेतत्वेऽप्यपराधित्वेदण्ड्य एव। एवमादीन्येव हि नृपस्यार्थोत्पत्तिस्थानानि अन्यथा तु क्वचिदेव राज्ञो दण्ड्यः स्यात्। मैवं—**स्मृतेर्विरोध इत्यादि**॥२१॥

## सुबोधिनी

उत्सर्गापवादादिलक्षण[3] इति। सामान्यस्य विशेषं बाधकमित्येवं सामान्यापवादलक्षणो[4] न्यायः। आदिशब्दात्[5] सविषयनिर्विषययोर्निर्विषयं बलवदित्यादिकं गृह्यते - विकल्पादि[6] यथासम्भवमिति। आदिशब्दात्[7] प्रबलप्रमाणविरोधेऽर्थवादत्वमाश्रित्य यथोचितं न्यायानुसारेण योज्यमित्यभिधीयते॥ २०॥

## बालंभट्टी

तथोक्तव्यवस्थानिर्व्यूहेति सिद्धम्। वक्ष्यमाणश्लोकस्य तदाक्षेपनिवारकत्वमिति तमाक्षिपति—नन्विति। तत्र तथा सति अप्रामाण्यं तदेव। एवं व्यवच्छेद्यमेवाऽऽह— विषयेति। परस्परतः—परस्परं—परीति अविरोधे सम्भवति विरोधोऽन्याय इति भावः। आदिना विकल्प परिग्रहः। अत एवाग्निमादिना तुल्यार्थोऽस्त्विति न्यायस्य सविषयनिर्विषययोर्निर्विषयं बलवदित्यस्य च परिग्रहः। उत्सर्गेति—सामान्यस्य विशेषाऽबाधक इत्येवं सामान्यापवादलक्षणो न्यायस्तन्त्रान्तरे प्रसिद्ध इत्यर्थः। पञ्चम्यन्तात् सार्वविभक्तिकस्तसिरित्याह—व्यवहारादिति। प्रकृतव्यवहारभ्रमनिरासाय तदर्थमाह—वृद्धेति। तत्स्वरूपमाह—अन्वयेति। एतौ च साफल्यासाफल्याभ्यामुपपाद्यौ समाधितात्पर्यार्थमाह—अतश्चेति। एतेनाप्रामाण्यव्यवच्छेदः नेदं प्रकृतमात्रविषयम्, अपि तु सार्वत्रिकमित्याह—एवमिति। अविकल्पादीति।

---

१ ख. ङ. च. परस्परविरो। २ क. विकल्पादिच। ३ त. सर्गेति। ४ त. रूपः। ५ त. आदेः स। ६ त. 'विकल्पादि' इति नास्ति। ७ त. आदेः प्र।

एव सर्वत्र च प्रसंगेऽपवादमाह—

## अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ २१ ॥

धर्मशास्त्रानुसारेणेत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे 5 अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थितिः मर्यादा । यद्यपि समानकर्तृक-

---

यद्यर्थशास्त्राऽनुसारिता स्यात् ततः स्यादप्येवं यदा तु धर्मशास्त्रमेव बलवत्तदविरुद्ध एवार्थसञ्चयो ज्यायान् । तत्त्वे सति अत्राऽसत्येव वस्तुनि सत्यता प्रतिभाति । तत्राऽपि राज्ञो दोषप्रसङ्गः यथा माण्डव्यवधादौ स्मृत्या सम्यगपराधिनामेव दण्डविधानात् । तत्र

### सुबोधिनी

नन्वेकविषयप्राप्तयोर्विरुद्धार्थयोर्हि स्मृत्योः परस्परविरोधः, न तु भिन्नविषययोरविरुद्धार्थयोर्वा । सति तु विरोधे प्रबलदुर्बलभावचिन्ता । एवञ्च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादि नीतिशास्त्रं न व्यवहारमुपस्पृशति । अत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोर्दूरे विरोधः। तथा चानयोः प्रबलदुर्बलभावाचिन्तैव न घटत इत्यभिप्रायेणाक्षिप्य,—सत्यमेवम् , नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोः प्रबलदुर्बलभावचिन्ता, अपि तु धर्मशास्त्रान्तर्गतार्थशास्त्रस्य धर्मशास्त्रस्य च प्रबलदुर्बलभावकथनमिति समाधत्ते-धर्मशास्त्रानुसारेणेत्यनेनैव इत्यादिना । एवं तर्हि एवंविधार्थशास्त्रधर्मशास्त्रयोर्मन्वादिरूपैककर्तृनिष्पन्नत्वेन वचनस्वरूपगतविशेषाभावादनयोरपि न प्रबलदुर्बलभावचिन्तावकाश इत्याक्षिपति यद्यपि समानकर्तृकतयेति । न स्वरूपगतविशे-

### बालंभट्टी

आदिना प्रबलप्रमाणविरोधेऽर्थवादत्वमाश्रित्य यथोचितन्यायानुसारेण योज्यमिति परिगृह्यते ॥ २०८ ॥

धर्मशास्त्रेति।एकविषययोर्विरुद्धार्थयोर्धर्मस्मृत्योर्मिथो विरोधो न तु भिन्नविषययोरविद्या (?) र्थयो र्वा।सति च विरोधे प्रबलदुर्बलचिन्ता । एवं च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादिनीतिशास्त्रस्य न व्यवहारविषये प्रवृत्तिरत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोः सुतरां विरोधाभावादनयोः प्रबलदुर्बलभावचिन्तनमेव तावदयुक्तमिति शंकाशयः । नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोस्तच्चिन्ताऽपि तु धर्मशास्त्रान्तर्गतयोरेवानयोस्तच्चिन्तेति एकविषयतया विरोधसम्भवात् तच्चिन्तनं युक्तमित्युत्तराशयः । अर्थार्थमाह—अर्थेति । अत एवाऽह—स्मृत्योरिति। स्थितिरित्यस्य व्याख्या—मर्यादेति । यद्यपीति—ईदृशार्थ-

१ क च. ज. वौशनसाद्यर्था । २ ज. विवक्षितं । यद्यपि ।

तया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति, तथाऽपि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः । धर्मस्य च[1] प्राधान्यं शास्त्रादौ दर्शितम्; तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव,

---

च न्यायतोऽपराधापादनेऽपि परमार्थतः तदभावादपराधीनैव न चान्ये व्यवहारनिर्णितिहेतुः। अतस्संकटमेतत् । नात्र सङ्कटम्—"स्मृतेर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।" अन्यथा व्यवहारप्रवृत्त्यभावप्रसङ्ग इत्यर्थः । अवस्मृतिन्यायविरोधे स्मृतिरेव ज्यायसी, न तु न्यायव्यवहारतो हि न्यायप्रवृत्तेः । विविधमवहणं (?) व्यवहारः ·न्याजभूयिष्ठ इत्यर्थः । न चासौ शास्त्रविरोध्यप्यङ्गीकर्तव्यः । यस्मादर्थशास्त्रधर्मशास्त्रस्यैव बलीयस्त्वमिति स्थितिः, अन्यस्त्वपरमार्थ इत्यर्थः । इयमेव च व्याख्या ज्यायसी यथावस्तुप्रमाणप्रवृत्तिः । न प्रमाणवृत्त्यनुरोधिना वस्तुनः स्थिते वस्तुनि तदनुसारिणा प्रमाणावगतिरित्यनवद्यम् । अन्ये त्वन्यथेमं श्लोकं वर्णयन्ति । स्मृतिद्वयविरोधे न्यायो बलवान् । व्यवहारस्तु प्रवृत्त्यानुगुण्यात् यत्र त्वर्थशास्त्रधर्मशास्त्रयोर्विरोधं तत्र धर्मशास्त्रं बलीयः। अर्थशास्त्रे व्यवहारप्रकरणमुक्तम्—"नाततायिवधे दोषो हन्तुर्भवति कश्चन।" इति। पुनर्धर्मशास्त्रे प्रायश्चित्तप्रकरणे—"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते।"

---

## सुबोधिनी

पात् प्रबलदुर्बलभावः, अपि तु धर्मशास्त्रप्रमेयस्य षड्विधस्यापि धर्मस्य मुख्यत्वेनार्थशास्त्रप्रमेयस्यार्थस्य[2] नीतेरमुख्यत्वादुपसर्जनत्वेन च प्रमेयगतविशेषसम्भवात् प्रबलदुर्बलभावो घटत इति परिहरति—तथाऽपि प्रमेयस्येति। शास्त्रादौ दर्शितमिति—आचाराध्यायस्यादावित्य-

## बालंभट्टी

शास्त्रधर्मशास्त्रयोर्मन्वादिरूपैककर्तृनिष्पन्नत्वे वचनस्वरूपगतविशेषभावादनयोरपि न तच्चिन्तनं युक्तमिति भावः । प्रमेयस्येति—न तद्विशेषात्तच्चिन्ता, अपि तु धर्मशास्त्रस्य प्रमेयस्य षड्विधस्यापि धर्मस्य मुख्यतया प्रधानत्वादर्थशास्त्रप्रमेयस्यार्थस्य नीतिलक्षणस्यामुख्यतयोपसर्जनत्वात् प्रमेयगतविशेषसम्भवात्तच्चिन्तायुक्तैवेति भावः । हेत्वासिद्धिं परिहरति,—धर्मस्य चेति । शास्त्रादौ आचाराध्यायस्यादौ । वचनार्थमुपसंहरति—तस्मादिति ।

१ ख. चेति नास्ति । २ त. स्यार्थस्य नान्तरीयत्वेनाप्तु ।

न विषयव्यवस्था, नापि विकल्पः। किमत्रोदाहरणम्? न[1] तावत् "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाऽविचारयन्॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रच्छन्नं वा प्रकाशं वा मन्युस्तं[2] मन्युमृच्छति[3]॥" तथा[4]—"आततायिनमायान्तमपि वेदान्तपारगम्[5]। 5 जिघांसन्तं जिघांसीयान्न तेन ब्राह्महा भवेत्॥" इत्याद्यर्थशास्त्रम्[6], "इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥" इत्यादि धर्मशास्त्रम्; तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम्। अनयोरेकविषयत्वा-

इति। तत्र धर्मशास्त्रबलीयस्त्वादाततायिवधे दोषप्रसङ्ग इति। तत्पुनः प्रकृतानुपयोगाच्छिष्टप्रमाणकत्वान्नातीव सम्यक्॥ २१॥

## सुबोधिनी

र्थः। अन्यैरुक्तमुदाहरणमनूद्य दूषयति—न तावद् गुरुं वेत्यादिना धर्मशास्त्रं बलवदिति युक्तमित्यन्तेन। अत्र 'इति न तावद्युक्तम्' इति व्यवहितान्वयः[7]। उक्तवचनानामनुदाहरणत्वे हेतुमाह—अनयोरेकविषयत्वासम्भवेनेति। "गुरुं वा बालवृद्धौ वा" इत्यस्यार्थवादत्वेन स्वा-

## बालंभट्टी

उदाहरणाभावप्रयुक्तं तच्चिन्तनवैफल्यं परिहर्तुं शङ्कते—किमत्रोदेति। अन्योक्तमुदाहरणमनूद्य खण्डयति,—न तावदित्यादियुक्तमित्यनेन। अत्र इति न तावदादौ युक्तमिति व्यवहितेनान्वयः। अदोषत्वे हेतुमाह—प्रच्छन्नमिति। यतो मन्युरेव प्रकाशमप्रकाशं वा तं मन्युं हिनस्तीत्यर्थः। तथा च मन्योरेव कर्तृत्वादि न त्वादेरिति न दोष इति भावः। अत एव "मन्युरकार्षीत्" इति श्रुतिः संगच्छते। मनुमुक्त्वास्मृत्यन्तरमाह—तथेति। वेदान्तगमपीत्यर्थः। अपि वेदान्तपारगमिति पाठान्तरम्। तेन तादृशब्राह्मणवधेन। मनुमेवाऽऽह—इयमिति, प्रमाप्येति। अकामतो द्विजं हिंसित्वा स्थितस्येयं इत्युक्तेति पूर्वतना विशुद्धिः कथितेत्यर्थः। तेषामनुदाहरणहेतुमाह—अनयोरिति। यत इत्यादिः गुरुं वेत्यादेरर्थवादत्वे यस्यार्थे प्रामाण्याभावादेकविषयत्वाभावेन विरोधाभावात् तच्चिन्ताया असम्भवेन नो-

१ ङ. तत्र तावत्। झ. तावत् गुरु। २ क. हन्युस्तं। ङ. मन्युस्त मृत्युमिछति। ३.—म० ८. ३५०.। ४ च. अथ। ५ ख. न्तगं रणे। ६.—व० ३. १७.। ७ त. तेनान्वयः।

सम्भवेन विरोधाभावान्न बलाबलचिन्तावतरति । तथा हि—"शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।" इत्युपक्रम्य "आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥" इत्यात्मरक्षणे, दक्षिणादीनां यज्ञोपकरणानां च रक्षणे, युद्धे च, स्त्रीब्राह्मणहिंसायां, चाततायिनमकूटशस्त्रेण घ्नन्न दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते—"गुरुं वा बालवृद्धौ वा" इत्यादि । 5
गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति,—वाशब्दश्रवणात् । "अपि

---

सुबोधिनी

र्थे प्रामाण्याभावादेकविषयत्वाभावः । तेन विरोधाभावान्नोदाहरणत्वमित्यर्थः । "आत्मनश्च परित्राणे" इत्येतद्वचनं व्याचष्टे—आत्मरक्षणे दक्षिणादीनामिति । "गुरुं वा बालवृद्धौ वा" इत्यस्यार्थवादत्वप्रकारमेव दर्शयति—गुर्वादीनत्यन्तावध्यानपीति । अयमर्थः—कैमुतिकन्यायेन गुर्वादिव्यतिरिक्तानां हननमीदृशि स्थले प्रशस्तमिति स्तूयते । अतः स्तावकत्वे नार्थवादत्वमिति । नन्वेतावतेदमुक्तं स्यादत्र गुर्वादिहनने न तात्पर्यमस्तीति । तत् कुतोऽवगम्यते इत्यत आह—वाशब्दश्रवणादित्यादिना । अयमभिप्रायः—यथा लोके अत्र पिशाचो-

बालंभट्टी

दाहरणत्वमित्यर्थः । तदेवाऽऽह—तथा हीति । शास्त्रमिति पाठे इतः पूर्वमिति शेषः पाठे तु न शेषोपयोगः—उपक्रम्येति । "द्विजातीनां च वर्णानां विप्लवे कालकारिते ।" इति मध्ये उक्तम् । इति इत्यनेन अस्य व्याख्यानमाह—आत्मरक्षणे इति । बहुवचनादाद्यः धर्मलाभ इत्याह—दक्षिणादीनामिति । अत एव सामान्येनार्थमाह—यज्ञोपेति । परित्राणे इत्यस्य मध्यमणिन्यायेनान्वय इत्याह—रक्षणे इति । सङ्गरे इत्यस्यार्थमाह—युद्धे चेति । चस्याग्रेऽन्वयोऽनेन सूचितः । एवं प्रागपि स्त्रीविप्रेत्याद्यर्थमाह—स्त्रीति । धर्मेणेत्यस्यार्थः अकूटेति । न दुष्यतीत्यस्य न पापाभावपरत्वमित्याह—न दण्डेति । इतीति । इत्यर्थकमुक्त्वेत्यर्थः । इदमर्थमेवाऽऽह—गुरुमिति । तस्यार्थवादत्वप्रकारमेवाऽऽह—गुर्वादीनिति । तथा च कैमुतिकन्यायेन गुर्वादिभिन्नानामीदृशस्थले हननं प्रशस्तमिति स्तूयते अतस्तावकत्वे नार्थवादत्वमिति भावः । नन्वेतत् गुर्वादिहननविषयकमेवास्तु, तदसंभवे एव तत्वाङ्गीकारात् । अत आह—वाशब्देति । स्मृत्यन्तरेऽप्ययमर्थ इत्याह—अपि वेदान्त-

---

१ क. बलचिन्ता । २ ङ. शास्त्रं । ३ क. ग. छ. धर्मेण घ्नन्न दुष्यति । ख. घ्नन्धर्मेण न दण्डभाक् । ४.—म० ८. ३४९. । ५ क. तावध्यतयाततायिनो । ६ त. दश ।

वेदान्तपारगम्[1]" इत्यत्रापिशब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिः,—"नाततायिवधे दोषोऽन्यत्र गोब्राह्मणावधात्" इति सुमन्तुवचनाच्च। "आचार्यं च प्रवक्तारं मातरं पितरंगुरुम्। न हिंस्याद्ब्राह्मणान्[2] गाश्च सर्वांश्चैव तपस्विनः॥" इति[3] मनुवचनाच्च। आचार्या-

सुबोधिनी

ऽस्तीत्युक्ते पिशाचो वा राक्षसो वा भवतु भूतमपि प्रेतोऽपि भवत्वित्यादौ[4] प्रौढिप्रतिपादने तात्पर्यम्,—एवमत्रापि वाशब्दापिशब्दयोः प्रौढिप्रकर्षे तात्पर्यम्। अतस्तद्विशिष्टवाक्यजातस्यापि न गुर्वादिहनने तात्पर्यम्। तथा वेदेऽपि "वायुर्वै क्षेपिष्ठा देवता" "इति प्रक्षितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यादौ, वैशब्दवाशब्दप्रभृतीनां शब्दानां विधिशक्तिप्रतिबन्धकत्व[5]दर्शनात् न गुर्वादिहननविधिः। अतश्च गुर्वादिरूपे विषये "गुरुं वा बालवृद्धौ वा" इत्यनेन वचनजातेन हननविधेः तन्निमित्तस्य प्रायश्चित्तविधेश्च "इयं विशुद्धिरुदिता" इत्यनेन च अप्राप्तत्वान्नानयोः परस्परविरोधो येन प्रबलदुर्बलभावकथनस्योदाहरणं स्यादिति। किञ्च सुमन्तुमनुभ्यां गोब्राह्मणाचार्यादिव्यतिरिक्तानामेवाततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमित्याह—नाततायिवधे दोषोऽन्यत्र इत्यादिना। ननु "आचार्यं च प्रवक्तारम्" इत्यत्र मनुवचने आचार्याद्युपादानं प्रदर्शनमात्राय। तथा च हिंसामात्राप्रतिषेधे तात्पर्यादस्य वचनस्य नाततायिनामाचार्यादीनां वधनिषेधपरत्वं येन "गुरुं वा बालवृद्धौ वा" इत्यस्यैतन्मनुवचनविरोधः स्यादित्याशङ्क्य परिहरति—आचार्यादीनामातता-

बालंभट्टी

गामिति। अयं भावः—यथा लोकेऽत्र पिशाचोऽस्तीत्युक्तेपिशाचो वा भवतु राक्षसो वा भवतु भूतमपि भवतु प्रेतोऽपि भवत्विति उत्तरे प्रौढिप्रतिपादने तात्पर्यमिति तद्विशिष्टवाक्यजातस्य गुर्वादिहनने न तात्पर्यम्। तथा वेदेऽपि—"वायुर्वैक्षेपिष्ठा प्रतितिष्ठन्ति ह वा यत्र ताः" तदस्मादपि वध्यं प्रयत्नेन, इत्यादौ वैशब्दवाशब्दाऽप्यादीनां विधिशक्तिप्रतिबद्धकत्वस्य दर्शनात् प्रकृतेऽपि वापिशब्दाभ्यांतद्विधिशक्तेः प्रतिबन्धकत्वात्; न गुर्वादिहननजातेन हननविधेस्तन्निमित्तप्रायश्चित्तविधेरियं विशुद्धिरित्यनेनाप्राप्तत्वादनयोरेकविषयत्वाभावात्। मिथो विरोधाभावात् कथं तदुदाहरणत्वमिति, वचन सिद्धेऽप्ययमर्थ इत्याह—नाततायीति। आचार्यं चेति च। आभ्यां हि ब्राह्मणाचार्यादिभिन्नानामेव वाऽऽततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमिति भाव। ननु आचार्यं चेति मनुवाक्ये आचार्याद्युपादानं प्रदर्शनमात्रतात्पर्यकम्; तथा च हिंसामात्रकनिषेधे तात्पर्यादस्य वचनस्य नाततायिनामाचार्यादीनां विधिनिषेधपरत्वं येन गुरुमित्यस्यैतद्वचनविरोधः स्यादत आह—आचार्यादीनामिति। हिंसेति—

१ ख. वेदान्तगामि०। २ छ. ब्राह्मणं। ३.—४. १६२.। ४ थ. रूढि ५ थ. द. न्धनत्व।

दीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवन्नान्यथा—हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । "नाततायिवधे दोषो हन्तुर्भवति कश्चन ।" इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः—"अग्निदो गरदश्चैव *शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः॥"[2] यथा—"उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्प- 5

सुबोधिनी

यिनां हिंसाप्रतिषेधेनेति । अयमभिप्रायः—हिंसामात्रप्रतिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन्वचने आचार्यादिपदानां स्वार्थविवक्षाकारणाभावाद्धिंसाविशेषनिषेधेनैवैतद्वचनं सप्रयोजनकं हिंसामात्रनिषेधपरत्वे वचनान्तरेणैव तन्निषेधस्य प्राप्तत्वात् पुनरुक्तत्वेनास्य निष्प्रयोजनकत्वमिति । इदं वचनम्—"आचार्यं च" इत्येतत् मनुवचनमिति यावत् । नन्वेवं तर्हि "आचार्यं च प्रवक्तारम्" इत्यनेनाततायिनामाचार्यादीनां हिंसा निषिद्ध्यते । "नाततायिवधे दोषः" इत्यनेन त्वाततायिहिंसायां दोषाभावप्रतिपादनादाततायिनां वध्यत्वप्रतीतेरनयोर्वचनयोः परस्परविरोधः स्यादित्यत आह—"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।"इत्येतदपीति। भिन्नविषयत्वेन विरोध इत्यर्थः। ब्राह्मणादिव्यतिरिक्तविषयत्वमेव दर्शयति यतोऽग्निद इत्यादिना। एतदुक्तं भवति सामान्येनैवाततायिनः प्रदर्शनात् "नाततायिवधे दोषः" इ-

बालंभट्टी

विशेषेण हिंसानिषेधेत्यर्थः । अन्यथा तेषामुपादानमफलमेव स्यादिति भावः, । इदं आचार्यं चेत्येतत्—हिंसेति । हिंसामात्रनिषेधस्येत्यर्थः। तत् सामान्यनिषेधस्येति यावत्-सामान्येनेति। न हिंसादिवचने नैवेत्यर्थः । तथा च तत्सामान्यनिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन् वचने आचार्याद्युक्तेः स्वार्थविवक्षाकारणाभावात् हिंसाविशेषनिषेधेनैव एतद्वचनं सफलम् । सामान्यनिषेधपरत्वे तु वचनान्तरेणैव तन्निषेधस्य प्राप्तत्वात् पुनरुक्ते निष्फलत्वं स्यादिति भावः । नन्वेवं आचार्यं चेत्यनेनाततायिनामथाऽऽचार्यादीनां हिंसानिषेधप्रतिपादनात् नाततायिवधे दोष इत्यनेन तु आततायिहिंसायां दोषाभावप्रतिपादनेन तेषां वध्यत्वप्रतीतेरनयोर्वचनयोर्मिथो विरोधापत्तिरत आह—नाततायीति । तथा च भिन्नविविषयत्वेनाविरोध इति भावः । तदन्यविषयत्वमेव द्रढयन् तत्र हेतुमाह—यत इति । सामान्येनाततायिनो दर्शिता इत्यत्रान्वयः । स्मृत्यन्तरमाह-तथेति । असिविषाग्नीनां द्वन्द्वं

*सप्तस्वपि मनुटीकासु शस्त्रमितिपाठो दृश्यतेऽतः स वास्माभिरादृतः ।

१ क. छ. क्षेत्रदारापहारी च । २.—वसिष्ठस्मृतौ—३. १६. । ३ ख. उद्यतासीविर्षि० ।

रः। एवमाद्यान्विजानीयात्सर्वानेवाऽऽततायिनः॥" इति सामान्येनाततायिनो दर्शिताः। अतश्च ब्राह्मणादयः आततायिनश्च आत्मादित्राणार्थं हिंसानभिसंधिना[1] निवार्यमाणाः प्रमादाद्यदि विपद्येरन्, तत्र लघु प्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः। तस्मादन्यादिहोदाहरणं वक्तव्यम्, तदुच्यते[2]—"हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः।
5 अतो यतेत तत्प्राप्तौ"[3] इत्यर्थशास्त्रम्, "धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः।"[4] इति धर्मशास्त्रम्, तयोः क्वचिद्विषये विरोधो भवति, यथा—चतु-

---

## सुबोधिनी

त्यभिहितत्वात् सामान्यशास्त्रमिदं "नाततायि" इत्यादिकं विशेषशास्त्रस्य "आचार्यं च प्रवक्तारम्" इत्यस्य विषयं ब्राह्मणादिकं परिहृत्यैतद्व्यतिरिक्तविषये प्रवर्तेत इति। एवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे प्रमादाद्यद्याततायिनां ब्राह्मणादीनां हननं स्यात् तदा प्रामादिकत्वाद्धननस्य सर्वात्मना हन्तुः किं दोषाभाव एव स्यादित्याशङ्क्य नेत्याह—अतश्च ब्राह्मणादय इत्यादिना। स्वाभिमतमुदाहरणमाह — तदुच्यते

## बालंभट्टी

कृत्वोद्यतशब्देन बहुव्रीहिः, शापोद्यतेत्यत्र बहुव्रीहिद्वयम्। आद्ये आहिताग्न्यादित्वात् परनिपातः, आथर्वणेन—तद्वेदप्रतिपादिताभिचारिककर्मणा। पिशुनः सूचकः। दर्शित इति—अत्र सामान्येनैवाततायिनां प्रदर्शनात्तत्रापि नाततायीति सामान्यपदेनैवोल्लेखोन्नाततायीत्यादि सामान्यशास्त्रम् आचार्यं चेत्यादि विशेषशास्त्रस्य विषयं ब्राह्मणादिकं परिहृत्यान्यत्र प्रवर्तेत इति भावः। नन्वेवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे सति प्रमादात् यदि तेषां हननं स्यात् तदा तस्य प्रामाणिकत्वात् किं हन्तुर्दोषाभाव एवेति चेन्नेत्याह—अतश्चेति। यदि विपद्येरन् मृत्युं प्राप्नुयुः, तस्मात् तदुदाहरणासंभवात्,-- स्वाभिमतमुदाहरणमाह—तदुच्यते इति। हिरण्येति अभ्यर्हितत्वात् पूर्वनिपातः। प्रागुक्तं मौलमाह—धर्मशास्त्रेति। चतुष्पादिति।

---

१ ज. क. नभिसंधिता न। २ ख. उच्यते। ३ आ० ३५१.। ४ व्य०. १.।
५ थ. षये व। ६ द. स्थिते। ७ त. णानां च हननं इति अपपाठः।

ष्पाद्व्यवहारे प्रवर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति, न धर्मशास्त्रमनुसृतं भवति; अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति, मित्रलब्धिर्विपरीता; तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत्। अत एव "धर्मार्थसन्निपाते अर्थग्राहिण एतदेव"[1] इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते ॥ २१ ॥ 5

"ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्।" इत्युक्तम्; किं तत्साधनमित्यपेक्षिते आह—

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥**

---

न चावश्यं तत्त्वाभिनिवेशिनामपि परमार्थावगत्युपायाभावा एव। यस्मात्—
प्रमाणं लिखितं भुक्तिरित्यादि ॥ २२ ॥

---

## सुबोधिनी

इत्यादिना। अत एव धर्मार्थसन्निपाते इति। यतो धर्मशास्त्रं प्रबलम् अत एवास्माद्धेतोरित्यर्थः ॥ २१ ॥

## बालंभट्टी

तस्य तत्त्वं च प्रागेवप्रतिपादितं—विषयेति। न भवतीत्यर्थः। अत्र मानमाह—अत एवेति। यतो धर्मशास्त्रं प्रबलमस्मादेव हेतोरित्यर्थः दर्शितमित्यत्रान्वयः—धर्मेति। धर्मार्थयोः सन्निपाते—एकत्र एतत् शास्त्रयोः प्रसङ्गे। अर्थेति—अर्थशास्त्रग्राहिण इत्यर्थः। अन्यथा-तदसङ्गतिः स्पष्टैवेति भावः। गुरुत्वमेव दर्शयति—एतादिति। इति इत्यनेन पूर्वं तस्यैव प्रक्रान्तत्वादिति भावः ॥ २१ ॥

---

१.—ध० १. १४,२३.।२.—व्य० ७।

प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम्* । तच्च द्विविधं—मानुषं दैविकं चेति । तत्र मानुषं प्रमाणं त्रिविधं—लिखितं, भुक्तिः, साक्षिणश्चेति—कीर्तितं महर्षिभिः । तत्र लिखितं द्विविधं—शासनं चीरकं चेति । शासनमुक्तलक्षणम्[1], चीरकं तु वक्ष्यमाणलक्षणम्[2] । भुक्तिरुपभोगः । साक्षिणो वक्ष्यमाणस्वरूपप्रकाराः ।

## सुबोधिनी

शासनमुक्तलक्षणमिति—"दत्त्वा[3] भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।" इत्यत्रोक्तस्वरूपमित्यर्थः । वक्ष्यमाणस्वरूपप्रकारा इति, प्रकारो भेदो दृष्टसाक्षिणः श्रुतसाक्षिण इत्येवमादिः । स्वरूपं च प्रकारश्च (स्वरूपप्रकारौ) वक्ष्यमाणौ स्वरूपप्रकारौ येषां ते तथाविधाः । ननु प्रत्यक्षादिष्वन्तर्भूतमेव प्रमाणं, नेतरत् । एवञ्च पत्रस्य स्वस्मिन् लिखितशब्दसन्दर्भे

## बालंभट्टी

अव्यवहितेन सङ्गत्यभावा अवहितेन सङ्गतिमाह — ततोऽर्थीति । अपेक्षितः आकाङ्क्षितः—प्रमितिव्यवच्छेदाय साधनपरत्वाय चाह—प्रमीयते इति । कीर्तितमित्यत्र शेषमाह--महर्षिभिरिति । पूर्वत्र तदुक्तयनुरोधेनात्रानुक्तमप्याह--तत्रेति, तेषां त्रयाणां मध्ये इत्यर्थः । उक्तेति-पूर्वाध्यायान्ते दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेदित्यादिना इति भावः । वक्ष्यमाणेति--तत्रैवाध्याये लेख्यप्रकरणे यःकश्चिदित्यादिना इति भावः । भोजनस्य साध-




१.—आ० ३१८. । २.—व्य० ८४—८८. । ३ त. 'दत्त्वा' इत्यादि । प्रकारा इति' इत्यन्तं न पठ्यते ।

ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्दे[1]ऽन्तर्भावाद्युक्तं प्रामाण्यम्; भुक्तेस्तु कथं प्रामाण्यम्? उच्यते—भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा क[2]ल्पयन्तीत्यनुमाने वाऽर्थापत्तौ वाऽन्तर्भवती-

---

यदा हि दृष्टैरेव लिखितादिभिः तत्त्वावगतिः तदा सर्वं सुस्थमेव । अथ तु तानि

---

## सुबोधिनी

द्वारा प्रामाण्यं साक्षिणां त्वभिवदनरूपशब्दद्वारा प्रामाण्यं भोगस्य क्व प्रामाणान्तर्भावो येन प्रामाण्यं स्यादित्याक्षिपति—ननु लिखितस्य साक्षिणां चेति। प्रमाणान्तर्भावमाह—उच्यते भुक्तिरपि कैश्चिदि[3]त्यादिना। विशेषणान्यनुमानरचनवेलायां स्फुटीभविष्यन्ति। अयमभिप्रायः—अनुमाने अर्थापत्तौ वा[4]ऽन्तर्भवन्ती भुक्तिः प्रमाणमिति इदं क्षेत्रादिकमस्य क्रयादिप्राप्तं भवितुमर्हति आसेधरहितत्वे सति चिरकालोपभोगयोग्यत्वात् सं[5]प्रतिपन्नवदित्येवम्

## बालंभट्टी

नस्य च व्यवच्छेदायाह--उपेति, वक्ष्यमाणस्वरूपेति। स्वरूपश्च प्रकारश्च तौ वक्ष्यमाणौ स्वरूपप्रकारौ येषामित्यर्थः। तत्र प्रकारो भेदः दृष्टसाक्षिणः श्रुतसाक्षिण इत्येवमादिः। ननु प्रत्यक्षाद्यष्टप्रमाणान्तर्गतमेव प्रमाणं नान्यदिति द्वयोः कथंचित्तत्त्वसम्भवेऽपि भुक्तेर्न तदन्तर्भाव इति कथं तत्वमित्याशयेनाऽऽह—नन्विति। लिपिर्न शब्दः। स च नित्य इत्याशयेनाऽऽह—शब्दादि व्यक्तीति। लिपेः स्फोटव्यञ्जकत्ववत् साक्षिणां ध्वनिद्वारा तदभिव्यञ्जकत्वात् स्वरूपतस्तेषामतत्त्वेऽपि तत्वात्तत्त्वमिति भावः। तस्यापि तदन्तर्भावमाह--भुक्तिरिति। प्रमाणमेवेत्यत्रान्वयः। कैश्चिदिति—आसेधरहितत्वादिविशेषणैरित्यर्थः। अव्येति—अनेनानुमितिसामग्री उक्त यथासंख्यमत्रान्वयः। यन्तीति—शत्रन्तप्रकृतिकं क्षेत्रादिकं अस्य क्रयादि प्राप्तं आसेधरहि-

---

१ ख. शाब्देन्तर्भा०। ङ. शब्दान्तर्भावा०। २ ङ. च. छ. कल्पयतीत्यनु०। ३ त. श्चिद्विशेषणैरित्या। ४ त. चान्त। ५ यथा संप्रतिपन्नक्षेत्रादावेिति वा आसे।

ति प्रमाणमेव। एषां लिखितादीनां त्रयाणामन्यतमस्याऽप्यभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते। मानुषाभाव एव दिव्यस्य

---

व्यस्तानि समस्तानि न सन्ति, विद्यमानान्यपि वा न परितोषक्षमाणि, तदा वक्ष्यमाणदिव्यानामन्यतमेन तत्त्वावगमादविरोधः ॥ २२ ॥

---

## सुबोधिनी

अनुमानम्, असौ देवदत्त एतत्क्षेत्रादिविषयक्रयादिमान् आसेधरहितचिरकालोपभोगवत्त्वात् यथा सम्प्रतिपन्नक्षेत्रादाविति वा । आसेधरहितचिरकालोपभोगान्यथानुपपत्त्या क्रयादिकं परिकल्प्यत इत्यर्थापत्तिः । एवमनुमानार्थापत्तिभ्यां सिद्धे क्रयादिके "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इत्यादिभिर्वचनोपात्तैर्नियतकारकहेतुभिः स्वत्वं सिद्धं भवति, "एषामन्यतमाभावे दिव्यान्यतममुच्यते ।" इत्यत्र मानुषप्रमाणाभावमात्रे दिव्यावसर इति प्रतीयते। न च तथा। अपि तु मानुषप्रमाणस्याभावनिर्णये दिव्यं प्रमाणीकर्तव्यमित्याह-मानुषाभाव एवेति। मानुषप्रमाणस्याभावनिर्णये सत्येव दिव्यं प्रमाणमित्येतत् कुतोऽवगम्यत इत्यत

## बालंभट्टी

तत्वे सति चिरकालोपभुक्तत्वात् तदीयगृहादिवत् इत्यनुमानप्रयोगः। तादृशी भुक्तिः स्वतोऽनुपपद्यमाना तादृशं तत् कल्पयतीत्यर्थापत्तिर्बोध्या । एवं क्रयादिसिद्धे स्वामीरिक्थेत्यादिवचनोपपत्तेर्नियतकारकहेतुभिः स्वस्वत्वं सिद्धं भवति । उत्तरार्द्धार्थमाह—एषामिति मध्ये इति शेषः। अप्यर्थान्तर्भावेन समास इत्याह—अन्यतमस्याप्येति । अपिनोभयादिसमुच्चयः। वक्ष्येति—प्राग्वत् । तेषां तत्त्वं च नैच्छिकं किन्तु व्यवस्थितामित्याह—जातीति । प्रमाणमित्यस्यात्रापि सम्बन्ध[3] इत्याह—प्रमाणमिति। उक्तरीत्या महर्षिभिरिति शेषः। मानुषप्रमाणाभावमात्रे दिव्यावसर इति यथाश्रुतप्रतीयमानो न तदर्थः । किन्तु तदभावनिर्णये सत्येव तदवसर इत्याह—मानुषेति । अत्र गमकमिदमेवोपस्थितमाह

---

१ ख. 'आसेध' इत्यादि 'क्षेत्रादाविति वा' इत्यन्तं नोपपद्यते।

प्रामाण्यमस्मादेव वचनादवगम्यते,—दिव्यस्य स्वरूपप्रामाण्ययोरागमैगम्यत्वात्[1]। अतश्च यत्र परस्पराविवादेन युगपद्धर्माधिकारिणं प्राप्तयोरेको मानुषीं क्रियाम् अपरस्तु दैवीमवलम्बते, तत्र मानुष्येव ग्राह्या । तथा च कात्यायनः—"यद्येको मानुषीं ब्रूयादन्यो[2] ब्रूयात्तु दैविकीम्। मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः॥"

## सुबोधिनी

आह—अस्मादेव वचनादिति। अस्मादेव वचनादवगम्यत इत्युक्तम्; तत्र हेतुमाह—दिव्यस्य स्वरूपप्रामाण्ययोरिति । अयमर्थः—दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वात् दिव्यस्वरूपस्य तत्प्रामाण्यस्य च शास्त्रैकसमधिगम्यत्वेनालौकिकत्वेनादृष्टत्वात् यावत् दृष्टप्रमाणसम्भावना तावददृष्टप्रमाणस्यावसराभावात् "एषामन्यतमाभावे" इत्यत्र दृष्टप्रमाणस्याभावनिर्णये सत्येव दिव्यं प्रमाणीकर्तव्यमिति तात्पर्यार्थः सिद्धो भवतीति । यत्र सकलसाध्यसाधनत्वेन मानुषी दैवी च क्रियोपन्यस्ता तत्र भवतु मानुष्येव क्रिया ग्राह्या । यत्र पुनः साध्यैकदेशे साधनं मानुषी क्रिया, दैवी

## बालंभट्टी

—अस्मादिति। अन्यथा एषामन्यतमाभावे इत्यस्यानर्थक्यं स्पष्टमेव ग्राह्यमिति[3]। शेषकेन प्रमाणमित्यनेनावगम्यते इत्येवं न चास्यैवार्थस्याभिमतत्वात् । ननु[4] यथाश्रुतार्थबोधकमेवेदं वचनमिति न व्यर्थमतस्तत्र हेतुमाह—दिव्यस्येति । दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वात् दिव्यस्य तयोः शास्त्रैकगम्यत्वेनालौकिकत्वेनादृष्टत्वान्न तथा सत्यानर्थक्यादिति भावः । एतत्फलमाह—अतश्चेति। स्पष्टोऽर्थः । क्रियामित्यस्याग्रेऽवलम्बते इत्यस्य पूर्वत्रानुषङ्गः । ननु यत्र सर्वसाधकं क्रियाद्वयं तत्र भवतु मानुष्येव ग्राह्येति, यत्र त्वेकदेशसाधकभूता मानुषी सर्वसाधनभूता दैवी तत्र का ग्राह्येत्यत-

१ क. आगमावगम्यत्वात्। २ क. ब्रूयात्क्रियामन्यस्तु। ३ "ग्राह्यमिति शेषकेनेत्यादि तिसृष्वपि मातृकास्वेकरूपोऽयमपपाठः। मम तु अवगम्यत इति ग्राह्यमिति शेषकेन प्रमाणमित्यनेन एवमेव वचनार्थस्याभिमतत्वात् इति पाठः प्रति भाति। आशयस्तु प्रमणमिति मूले लिखितादीनां त्रयाणामेव परिगणनात् दिव्यस्य प्रमाणकोटाविनिवेशेन तस्य प्रमाण्यं न स्यादित्याशङ्कायां सत्यं क्वचिदेव तु तस्यप्रामाण्यं यत्र मानुषप्रमाणाभावः इति । स्थलविशेषेति प्रामाण्यविधानार्थोऽयमुत्तरार्धः। प्रमाणमित्यस्य अनुषंगः ग्राह्यमति शेषः दिव्यान्यतमं एषामन्यतमाभावे प्रमाणं ग्राह्यमित्यन्वयः। प्रमाणं ग्राह्यं प्रमाणतया ग्राह्यमित्यर्थः। दिव्यान्यतममुद्दिश्य स्थलबिशेषे प्रामाण्यं विधीयत इति यावत् इति।" इति केषांचिद्विदुषामाशयः। ४ "ननु यथाश्रुतार्थेति। अयमाशयः—ननु मूले लिखितादीनां त्रयाणामेव प्रमाणत्वेन परिगणनात् यत्रैतेष्वन्यतममपि नोपलभ्येत तत्र प्रमाणाभावेन अर्थपरिच्छित्तेरनवकाश इत्याशंकायां तत्र दिव्यं प्रमाणं सुलभम् इत्याह—एषामन्यतमाभाव इति । यथाक्रममन्वयः। तथा च तत्र दिव्यप्रमाणसंभवेन नार्थपरिच्छेदानवकाशः एवं च यथासंभवं मानुषामानुषयोः प्रामाण्यमुररीकृतं भवति—तदिदं दूषयति दिव्यस्येत्यादिना इति।" इति केषांचिद्विदुषामाशयः।

इति । यत्रापि प्रधानैकदेशसाधनं मानुषं सम्भवति[1] तत्रापि न दैवमाश्रयणीयम्; यथा—रूपकशतमनया वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यभियोगापह्नवे 'ग्रहणे साक्षिणः सन्ति नो—संख्यायां वृद्धिविशेषे वा—अतो दिव्येन भावयामि' इत्युक्ते[2] तत्रैकदेशवि- भावितन्यायेनापि संख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः । उक्तं च कात्यायनेन—
5 "यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी । सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥" इति । यत्तु "गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।" इति, तदपि मानुषासंभवकृतनियमार्थम्[3] । यदपि नारदेनोक्तम्—"अरण्ये निर्जने रात्रावन्तर्वेश्म- नि साहसे । न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥" इति[4], तदपि मानुषासंभव एव । तस्मान्मानुषाभाव एव दिव्येन निर्णय इत्यौत्सर्गिकम् । अस्य[5] चापवादो
10 दृश्यते—"प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके । बलोद्भवेषु[6] कार्येषु साक्षिणो

सुबोधिनी

तु सर्वस्मिन् साध्ये साधनम्, तत्र का ग्राह्येत्यपेक्षायामाह—यत्रापि प्रधानैक- देशसाधनमित्यादिना । वृद्धिव्यतिरेकेण यन्मूलभूतं स्वं तत् प्रधानमित्युच्यते । तस्यैकदे- शः । रूपकशतमनया वृद्ध्या गृहीतमित्यत्र रूपकशतग्रहणं प्रधानम् । रूपकग्रहणमात्रमे- कदेशः । एकदेशान्तरं सङ्ख्या । अस्य चापवादो दृश्यते इति—मानुषाभाव एव दिव्येन

बालंभट्टी

आह—यत्रापीति । तद्दैवमिति उक्तहेतोरेवेति भावः । उदाहरति—यथेति इत्यभियोगेति । इति योऽभियोगस्तस्यापह्नवे परेण कृते सतीत्यर्थः । ग्रहणे इति—मूलभूतं द्रव्यं पधानं तस्यै कदेशो ग्रहणं संख्यावृद्धिश्चाभिमतवृद्धिकरूपकशतग्रहणं प्राधान्यं, इत्युक्ते स्थलविशेषे पूर्वान्वयीदम् । नन्वेवं कथं सर्वसाध्यसिद्धिरत आह—तत्रैकेति । तदविषयत्वादाह—न्याये नेति, तद्रीत्येत्यर्थः । अपि दिव्यसमुच्चये । संख्येति—संख्यावृद्धिविशेषयोः सिद्धेरित्यर्थः । व्याप्ता तन्मात्रसाधका, सर्वसाधिका ग्राह्येति किमुवक्तव्यमित्यपेरर्थः । सा सैव । अत आह—न त्विति । वदतां वादिनां मध्ये इत्यर्थः । एवं स्थिते कात्यायनविरोधं परिहरति—यत्त्वि- ति, गूढेति । कर्मधारयान्मत्वर्थीयः । च त्वर्थे ; त्वित्येव पाठान्तरम् । प्राप्तं योग्यम् । असम्भवे[6] एव नीति । सम्भवकृतनीतिपाठान्तरम् । प्राग्वदाह—यदपीति । साहसे तदा ख्ये वादे । उपसंहरति—तस्मादिति । अस्य उक्तस्यौत्सर्गिकस्यार्थस्य । प्रक्रान्त इति—

१ क. भवति । २ ज. त्युक्तं । च. त्युक्तौ । ३ क. निर्णयार्थम् । ४ ना० २. २७. । ५ क. अस्यापवादो । ६ ख. बलोद्भूतेषु । ६ नियमेत्यत्र नीत्येकाक्षरग्रहणेन प्रतीकग्रहणम् ।

दिव्यमेव च ॥" इति । तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते ; यथा—"पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता । तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥" । अतो बृहस्पतिः—"द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया । भुक्तिरेव तु गुर्वीस्यान्नदिव्यं न च साक्षिणः ॥" तथा—"दत्तादत्तेऽथ भृत्यानां स्वामिनां निर्णये सति । विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥ द्यूते समाह्वये चैव विवादे समुपस्थिते । साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥" इति ॥ २२ ॥ 5

## सुबोधिनी

निर्णय इति यदुक्तं सामान्येन, अस्य साक्षिदिव्ययोर्विकल्पविधानात् पूर्वोक्तनिर्णयस्यापवा दः। तथा लेख्यादीनामपीति—आदिशब्देन भुक्तिसाक्षिणौ गृह्येते । तथा द्वारमार्गक्रियाभोगेति। अस्यार्थः–द्वारक्रिया मार्गक्रिया चेति क्रियाशब्दस्य प्रत्येकमभिसम्बन्धः,–द्वारकरणं मार्गकरणं चेत्यर्थः। तत्र च आभोगे च आभोगः परिणाहः । तेन परिणाहवदङ्गणादिकं लक्ष्यते । जलवाहादिषु च जलवाहो जलनिर्गममार्गः । आदिशब्दात् गृहादिषु प्रमार्जितरजः पुञ्जप्रक्षेपणस्थानमवस्करादिकं गृह्यते । एतेषु पूर्वोक्तेषु भुक्तिरेव क्रिया प्रमाणं, न दिव्यं, नापि साक्षिणः प्रमाणामिति । तथा दत्तादत्त इति—दत्तं चादत्तं च दत्तादत्तम् ; तस्मिन्

## बालंभट्टी

अस्य सर्वत्रान्वयः । अत्र साक्षिदिव्ययोर्विकल्पविधानात् तदपवादत्वं । कात्यायनोक्तिरियम् । एवमग्रेऽपि त्रिषु प्रसङ्गात् मूलानुक्तमन्यदपि किंचित् सिद्धान्तभूतमाह—तथेति । आदिना भुक्तिसाक्षिणोः परिग्रहः । एवं च तत्रैच्छिकत्वं नेति भावः । तत्रादौ लेख्यस्याह —यथेति। पूगादेरर्थः स्फुटीभविष्यति, स्थितिर्मर्यादा तस्याः स्थितेः भुक्तेराह—तथेति। क्रियाशब्दस्य द्वंद्वान्ते श्रूयमाणस्य प्रत्येकं सम्बधः। क्रिया करणं ; आभोगः परीणाहः ; तेन च परीणाहवदङ्गणादिकं लक्ष्यते । अर्शआद्यच्वा । जलवाहो जलनिर्गमनमार्गः । आदिना गेहादिपरिमार्जितरजःपुञ्जप्रक्षेपस्थानावस्करादिग्रहणम् । अत्र द्वंद्वोत्तरपदकद्वंद्वघटितबहुव्रीहिः । साक्षिणामाह—तथा दत्तेति । बहुवचनान्तयोर्द्वंद्वः दत्तादत्तेषु दत्ताप्रदानिकाख्यविवादपदेषु—दत्ते चेति । दत्तेऽथेति वा पाठान्तरम् । स्वामिभृत्यनिर्णयाख्ये तत्र । विक्रयेति—अर्थेति नैकं विक्रीयासंप्रदानाख्ये, तत्र । धनं मूल्यं दातुमितिशेषः। तत्र यस्तत्

१ क. च. च। छ द्वारमार्गेत्यादिश्लोक एव नास्ति। २ ख. स्वामिना। ३ थ. द. तत् सामा। ४ 'परिणाहवदङ्गणादिकम्' इत्येव त. पुस्तके स्थितः समीचीनः पाठः 'परिणाहेन तदङ्गणादिकम्' इति परिवर्तितो लक्ष्यते। ५ 'तथा' इति मिताक्षराया ख. संज्ञितायां न पठ्यते। अ० ७. २. १२७.।

उभयत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्वापरयोः कार्ययोः कस्य बलीयस्त्वमित्यत आह—

**सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।**

ऋणादिषु[1] सर्वेष्वर्थविवादेषु उत्तरा क्रिया—क्रियत इति क्रिया—कार्यं बलवती । 5 उत्तरकार्ये साधिते तद्वादी विजयी[2] भवति, पूर्वकार्ये सिद्धेऽपि तद्वादी पराजीयते । तद्यथा—कश्चिद्ग्रहणेन धारणं साधयति, कश्चित्प्रतिदानेनाधारणम् । तत्र ग्रहणप्रतिदानयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदानवादी जयति । तथा—पूर्वं द्विकं शतं गृहीत्वा कालान्तरे त्रिकं शतमङ्गीकृतवान्, तत्रोभयत्र प्रमाणसद्भावेऽपि त्रिकशतग्रहणं बलवत्,—पश्चाद्भावित्वात् पूर्वाबाधेनानुत्पत्तेः[3] । उक्तं च—"पूर्वाबाधेन नोत्पत्तिरुत्तरस्य[4] हि सेत्स्यति ।" इति । 10

---

किं च—**सर्वेष्वेवेत्यादि ॥ २३ ॥**

सर्वविवादेष्वनिर्णीतेषूत्तरक्रिया दिव्यलक्षणैव निर्णयव्यभिचारात् बलीयसी । आ-

---

## सुबोधिनी

दत्ताप्रदानिकाख्ये स्वामिभृत्यनिर्णयाख्ये विक्रयासम्प्रदानाख्ये—द्यूतं च समाह्वयं च द्यूतसमाह्वयम्[5]—तदाख्ये च विवादपदे प्राप्ते साक्षिण एव साधनं नान्यदित्यस्यार्थः । एतानि च विवादपदान्युत्तरत्र स्फुटीभविष्यन्ति ॥ २२ ॥

"सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया।" इत्यत्रोदाहरणान्तरमाह—तथा पूर्वं द्विकं शतमिति । निष्काणां शतस्य निष्कद्वयं वृद्धिरिति प्रथमं गृहीत्वा कालान्तरे स्वकार्यवशात्

## बालंभट्टी

सम्बन्धस्तत्रेत्यर्थः । द्यूते समाह्वयाख्ये तत्र समुपस्थिते प्राप्ते, तानि च विवादपदान्यग्रे स्फुटीभविष्यन्ति ॥ २२ ॥

उभेति—वादिप्रतिवाद्युक्तयोः बलाबलेति प्रागुक्तम् इत्यर्थः । कार्ययोः साध्ययोः करणरूपाऽर्थनिरासायाह—क्रियत इति । तात्पर्यमाह—उत्तरेति, प्रमाणान्तरेणेति भावः । सिद्धेऽपीति—पूर्वप्रमाणेनेति भावः । अस्य लक्ष्यान्तरमाह—तथेति । द्वे वृद्धि-

---

१ च. ऋणादिष्वित्यारभ्य उत्तराक्रियेत्यन्तं नास्ति । २ क. च. छ. जयी भवति। ग. विजयी भवेत् । ३ क. ग. बाधेनानुपपत्तेः। ४ क. छ. स्येह । ५ अस्मात् समस्तपदोपादानात् मिताक्षरायां "द्यूते समाह्वये चैव" इति व्यस्तपाठोऽप्रामाणिकः ।

अस्यापवादमाह—

**आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ २३ ॥**

आध्यादिषु त्रिषु पूर्वमेव कार्यं बलवत्। तद्यथा—एकमेव क्षेत्र[1]मेकस्याऽऽधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति ; तत्र पूर्वस्यैव तद्भवति नोत्तरस्य। एवं प्रतिग्रहे, क्रये च। नन्वाहितस्य तदानीमस्वत्वात्पुनराधानमेव न 5 सम्भवति। एवं [2]दत्तस्य क्रीतस्य च दानक्रयौ नोपपद्येते तस्मादिदं वचनमनर्थकम्। उच्यते—अस्वत्वेऽपि[3]मोहात्कश्चिल्लोभाद्वा पुनराधानादिकं करोति तत्र पूर्वं बलवदिति न्यायमूलमेवेदं वचनमित्यचोद्यम् ॥ २३ ॥

---

ध्यादिषु तु पूर्वलेख्यादिका दिव्यक्रियायाः स्मृतिसंभवात्। अतो देवदत्तेन यज्ञदत्तस्याहितं तत्पुत्रैरपि भुज्यते। न च तेषां दिव्यप्रवृत्यवष्टम्भः स्वानुभवाभावात्। अथवा लेख्यविषय

---

## सुबोधिनी

तस्य वै निष्कशतस्य निष्कत्रयं वृद्धिरित्यङ्गीकारे तदेव परं बलवत् विरुद्धस्वभावत्वेन पूर्वा बाधेनोत्पत्त्यभावादित्यर्थः ॥ २२- ॥

न्यायमूलमेवेदं वचनमिति—एकत्राहितस्य दत्तस्य विक्रीतस्य वा पुनरन्यत्राध्या-

## बालंभट्टी

यैस्य तत् द्विकम्, [4]तदस्मिन्निति कन्। निष्कशतस्य प्रतिमासं निष्कद्वयं वृद्धिरिति प्रथमं गृहीत्वा कालान्तरे तद्दातुमसमर्थस्य कार्यवशात्तस्यैव निष्कशतस्य निष्कत्रयं वृद्धिरित्यङ्गीकारे तदेव परं बलवत् विरोधेनोत्तरसंख्यायाः पूर्वसंख्याबाधकत्वेन पूर्वसंख्यां अनुपपत्तेरित्यर्थः। [3]ननु व्याकरणे सति विरोधे परस्य पूर्वबाधकत्वं दृष्टमनूदितं सूत्रे भाष्ये च। उक्तं गौणी मुख्या चोत्तरा संख्या पूर्वसंख्यां बाधत इति। तत्प्रतिषेधशास्त्रमूलकं किन्तु तद्बाधेनैव परस्योत्पत्तेरित्यर्थः। तद्वदत्र किं मूलम्? अतस्तन्यायेनैवोभयत्र बीजमाह—पश्चादिति। एकस्य, निकटे। एवमग्रेऽपि। प्रागुक्तहेतोरस्वत्वमहेतोः सत्त्वं सूचयन्नाह—नन्वित्यादिना। पूर्वं तत्स्वत्वादेवाऽऽह—तदानीमिति। न्यायेति बहुव्रीहिः पष्ठी-

---

१ ख. क्षेत्रमन्यस्य। २ छ. एवं दत्तस्य च दानक्रियानोपपद्यते। ख. दत्तस्य च क्रीतस्य दानक्रयौ। ३ क. ग. अस्वत्वेऽपि यदि मोहा। ४.—अ० ५. १. ४७.।

भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्यान्तरमाह—

**पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।**
**परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥**

---

एवायं श्लोकः, सर्वेष्वेव विवादेषूत्तरोत्तरसंक्रमणादुत्तरोत्तरलेख्यक्रिया बलीयस्त्वं,—परीक्षाबाहुल्येन व्यांजकरणापनोदनात्। आध्यादिषु तु परसंस्थत्वा (?) न्मूललेख्यप्राधान्येन पूर्वक्रियैव ज्यायसीत्यर्थः ॥ २३ ॥

भुक्तौ तु—पश्यत इत्यादि ॥ २४ ॥

पश्यन्नपि यः परैरसंबद्धैर्भुज्यमानेन किंचिन्नयता काले नापि ब्रूयात् नूनं तदीयं न भवेदित्यभिप्रायः । काले नियमस्तु वेदमूलतयैव द्रष्टव्यः । नन्वेतदयुक्तम् । यदनभि... वर्थनाशः (?) । एवं तर्ह्येतदविवादादवापेक्षयाऽपि द्रव्यनाशो भवति अतो द्रष्टव्यम् । परैर्भुज्यमानं नोपेक्षणीयमित्यभिप्रायः। अथेतरस्य किं स्वत्वसम्बन्धोऽस्ति ? पूर्वस्य ताव...

---

## सुबोधिनी

दिकरणे स्वत्वमेव न सम्भवतीत्यसावेव न्यायः । एतन्मूलमेवेदं वचनम् । एतन्न्यायसिद्धमेवार्थं सौकर्याय अनुवदतीत्यर्थः। अथवा न्यायस्यैव मूलमेतद्वचनम् । अनेन वचनेनाध्यादिषु पूर्वबलीयस्त्वे विहिते तद्बलादेकत्राहितादेर्वस्तुनः अन्यत्राधानादिकं न घटते स्वत्वाभावादित्यसौ न्यायो निष्पन्न इत्युभयथाऽपि न्यायमूलमेवेदं वचनमित्युक्तिरनुसन्धेया ॥ २३ ॥

भुक्तेः कैश्चिद्विशेषणैर्युक्ताया इति आसेधराहित्यचिरकालत्वादीनि विशेषणानि,

## बालंभट्टी

तत्पुरुषो वा एकत्राहितादेरन्यत्राधानकरणादौ स्वस्वत्वमेव नास्तीत्ययमेव न्यायः। तत्सिध्यार्थ एव स्फुटत्वायानूद्यतेऽनेन। यद्वाऽनेन तथार्थे बोधिते तद्बलात्तस्य पुनस्तत्र स्वत्वाभावादिति। स न्यायो निष्पन्न इति । उभयथाऽपि प्रकृतोक्तिर्निर्बाधैवेति भावः ॥ २३ ॥

भुक्तेः—प्रागुक्तप्रमाणान्तर्गतायाः। कैश्चिदिति—आसेधरहितत्वचिरकालत्वादिविशेषणैर्युक्ताया इत्यर्थः। कार्यान्तरमिति—पूर्वत्र क्रियाशब्दस्य कार्यपरत्वस्योक्तत्वेन तदुभयान्यतरकालसाध्यासिद्धिरूपकार्यातिरिक्तकार्यमित्यर्थः। अनेन व्यवहित संगतिरुक्ता एकदेशिमतेन व्याचष्टे

परेणासंबद्धेन[1] भुज्यमानां भुवं धनं वा पश्यतः अब्रुवतः मदीयेयं भूः न त्वया भोक्तव्येति अप्रतिषेधयतः[2] तस्या भूमेर्विंशतिवार्षिकी अप्रतिरवं विंशतिवर्षोपभोगानिमित्ता हानिर्भवति। धनस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः। नन्वेतदनुपपन्नम्; न ह्यप्रतिषेधात्स्वत्वमपगच्छति,--अप्रतिषिद्धस्य दानविक्रयादिवत् स्वत्वानिवृत्ति-

रीत्याचार्योभिप्रायः। इतरस्यापि स्वत्वं नैव,—परस्वबुद्ध्यैव भोगप्रवृत्तेः। यद्येव तर्हि राज्ञ स्तदा दोषम्। तदपि सत्यम्, अथ किम्। नृपस्यैव तद्भवतु,—स्वामिनो हान्युपदेशात्, तथा

## सुबोधिनी

तैर्युक्तायाः। पश्यतोऽब्रुवत इत्येतद्वचनमेकदेशिमतमादाय व्याचष्टे—परेणासम्बन्धेन भुज्यमानामित्यादिना। अनासेधात् स्वामिनः स्वत्वानपगमात् विंशतिवर्षोपभोगादिभिश्चोपभोक्तुः स्वत्वाप्राप्तेर्विंशतिवार्षिकी[3] दशवार्षिकी च हानिरनुपपन्नेत्याक्षिपति—नन्वित्यादिना। अनासेधात् स्वत्वानपगममाह—न ह्यप्रतिषेधादिति। तत्र हेतुमाह—अप्रतिषेधस्येति। यथा दानविक्रयादेः स्वत्वापगमहेतुत्वं[4] लोके शास्त्रे च सिद्धं तथा प्रतिषेधस्य नास्तीत्यर्थः।

## बालंभट्टी

—परेणेति। सम्बन्द्धे सति दानक्रियादिरूपे हान्यभावादाह--असम्बन्धेनेति। कर्माकांक्षायां प्रत्यासत्तेराह--भुज्यमानां भुवमिति। पश्यतः वादिन इत्यर्थः। अब्रुवत इति छेदेनाह—अब्रुवत इति। तत्र कर्माकाङ्क्षाशान्तये तदर्थमाह मदीयेयमिति। अप्रतिषेधयतः षष्ठीम्। तस्या इति—तत्सम्बधिन्याः परेण भुज्यमानाया इत्यर्थः। स्पष्टत्वाय पुनराह—अप्रतीति—अशब्दं यथा तथेत्यर्थः। विंशतिवर्षशब्दः तदुपभोगे लाक्षणिकः कृतशब्दे त्वर्थे "कालाठ्ठञ्[5]" वर्षस्य भविष्यतीति उत्तरपद वृद्धिः। एवमग्रेऽपि। तदाह—भोगनिमित्तेति। अनुपपत्तौ हेतुमाह—न हीत्यादिना। अप्रतिषेधात् स्वामिनः स्वत्वानपगममुक्त्वा तावत्पर्यन्तं

१ ख. परेणासंबन्धेन। छ. परेणेत्यारभ्य वार्षिकीत्यन्तं नास्ति। २ क. अप्रतिरवमिति नास्ति। ङ. च. छ. ग. अप्रतिरवविंशति। ३ त. त्वाप्रतीतेर्वि। ४ थ. द. गमे हे। ५ अ० ४. ३. ११।

हेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् । नापि विंशतिवर्षोपभोगात् स्वत्वम्,—उपभोगस्य स्वत्वे प्रमाणत्वात्, प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्, रिक्थक्रयादिषु स्वत्वकरणहेतुषु अपाठाच्च । तथा हि—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु

विधस्य राजगामित्वात् । अथवा पूर्वस्वामिन एव तदर्पणीयम्; तत्स्वत्वापाये हेत्वभावस्मृतिस्तु दृष्टमूलतयाऽप्युपपद्यत एव। उपेक्षानिषेधमात्रं चैतत् । हानिवचनं तु निन्दामात्रत्वे-

## सुबोधिनी

उपभोगादुपभोक्तुस्स्वत्वाभावमाह—नापि विंशतिवर्षोपभोगादिति । तत्र हेतुमाह—उपभोगस्य स्वत्वेऽप्रमाणत्वादिति । अयमभिप्रायः—यथा धूमानुमानस्य पर्वतेऽग्निज्ञापकत्वं नोत्पादकत्वं तथोपभोगस्यापि स्वप्रमेयभूतस्वत्वज्ञापकत्वेनोत्पादकत्वम् । अतो नोपभोगात् स्वत्वोत्पत्तिरिति । उपभोगात् स्वत्वाभावे हेत्वन्तरमाह—रिक्थक्रयादिष्विति । कारकहेतुषु मध्ये भोगस्य पाठाभावात् तस्योत्पादकहेतुत्वं नास्तीत्यर्थः । कारकहेतुष्वपाठमेव दर्शयति—तथा हि स्वामी रिक्थक्रयेति। गौतमवचनस्यायमर्थः—रिक्थक्रयसंविभागपरिग्रहाधिगमेषु सत्सु स्वामी भवतीति सर्वसाधारणस्वत्वकारकहेतुपरिगणनम् । अप्रतिबन्धो दायो रिक्थम्; साप्रतिबन्धो दायः संविभागः; परिग्रहोऽरण्यादिष्वनन्यपारिगृहीततृ

## बालंभट्टी

तादृशोपभोगेन स्वत्वानुत्पत्तिमाह–नापीति। स्वत्वमिति, उत्पद्यत इति शेषः। अत्र हेतुमाह–उपभोगस्य स्वत्वे प्रमाणत्वादिति,—तस्य स्वत्वविषयकप्रमितिजनकत्वादित्यर्थः। क्वचित्समस्तपाठः, यथाधूमस्य पर्वतादावग्निज्ञापकत्वं न तदुत्पादकत्वं तथोपभोगस्यापि स्वप्रमेयभूतस्वत्वज्ञापकत्वं नोत्पादकत्वमतो न तदुत्पत्तिरिति भावः। तदाह—प्रमाणेति । ननूपभोगस्य न तत् प्रमाणत्वं,—मानाभावात्; किन्तूत्पादकत्वमेवेति चेत् आह—रिक्थेति। तत्र तस्यापाठान्नतस्य तत्त्वमित्यर्थः । तत्रापाठमेव दर्शयति—तथा हीति । गौतमवाक्यमाह—स्वामीति । रिक्थादिषु पञ्चसु सत्सु स्वामी भवतीति सर्वस्य साधारणस्वत्वकारकहेतुपरिगणनम्। अप्रतिबन्धो दायो रिक्थम्; सप्रतिबन्धो दायः संविभागः; क्रयः प्रसिद्धः; अरण्यादिष्वनन्यपरिगृहीततृणकाष्ठादिस्वीकरणं परिग्रहः; निध्यादिप्राप्तिरधिगमः। असाधारणहेतूनाह—

१ थ. त्पादकत्वमतो । २ थ. द. स्वत्वोपपत्ति ।

ब्राह्मणस्याधिकं लब्धम् । क्षत्रियस्य[1] वर्जितम् । निर्विष्टं वैश्यशूद्रयोः ।” इत्यष्टावेव[2] स्वत्वकारणहेतून् गौतमः पठति न भोगम् । न चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वापत्तिहेतुत्वं[3] प्रतिपादयतीति[4] । युक्तम्—स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात् । एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते ।

**नोपेक्षस्य व्यवहारप्रवृत्त्ययोग्यतामात्रज्ञप्तिफलं तदेव चात्र युक्तम् । अन्यथा श्रुतहानिरश्रुतकल्पना च स्यादित्यलं प्रसङ्गेन ॥ २४ ॥**

## सुबोधिनी

**णकाष्ठादिस्वीकरणम् ; अधिगमो निध्यादिप्राप्तिः । असाधारणकारक[5]हेतूनाह—ब्राह्मणस्याधिकं लब्धमिति । ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदधिकमसाधारणम् । “निर्वेशो भृति[8]भोगयोः ।” इत्यमरः । ननु “पश्यतोऽब्रुवत” इतीदमेव योगीश्वरवचनं विंशतिवर्षोपभोगस्य[6] दशवर्षोपभोगस्य च स्वत्वहेतुत्वविधायकं भविष्यतीत्यत आह—न चेदमेव वचनमिति । तत्र हेतुः स्वत्वस्य स्वत्वहेतूनां चेति । अयमभिप्रायः—विधेरत्यन्ताप्राप्तप्रापणस्वभावत्वेन लोकप्रसिद्धेऽर्थे प्रवृत्त्यभावादिति । एतच्च[7] विभागप्रकरणे इति । स्वत्वस्य स्वत्वहेतूनां च लोकसिद्धत्वमिति ( वचनात्?) एतत् । एवं तर्हि गौतमवचनस्य का गतिरित्याशङ्क्य शास्त्रपरिगणितैरेव हेतुभिः स्व-**

## बालंभट्टी

**ब्राह्मेत्यादिना । ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणमित्यर्थः । वैश्यस्य भोगरूपेण भृतिरूपेण वा यल्लब्धं शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदधिकमसाधारणं स्वत्वजनकम् । “निर्वेशो भृतिभोगयोः” इत्यमरः । ननु एवमपि पश्यत इति वचनं तादृशोपभोगस्य स्वत्वहेतुत्वविधायकमस्तु इत्याशयेन शङ्कते—न चेदमिति । आपत्तिः प्राप्तिः । तत्र हेतुमाह— स्वत्वस्येति । एकशब्दो मात्रार्थः । विधेरत्यन्ताप्राप्तप्रापणस्वभावत्वेन लोकप्रसिद्धार्थे प्रवृत्त्यभावादिति भावः । एतच्चेति—तस्य तेषां च लोकसिद्धत्वमित्येतदित्यर्थः ।**

१ क. क्षत्रियविजितम् । ख. क्षत्रियस्य विनिर्जितम् । २.—१०. ३९—४२. ३ छ. स्वत्वोपपत्ति स्वत्वोत्पत्तिहे । ४ क. यतीत्युक्तम् । ५ थ. ‘कारक’ इत्यादिः ‘समक्षभोगे च हानिकरणाभावेनेति’ प्रतीकान्तो ग्रन्थो न पठ्यते । ६ त. गस्य स्वत्वहेतुत्वे वि । ७ द. ‘एतच्च’ इत्यादि ‘एतत्’ इत्यन्तं नास्ति । ८.—३. नानार्थव० २१५. ।

गौतमवचनं तु नियमार्थम्। अपि च—"अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः॥" इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुद्ध्यते। न च "अनागमं तु यो भुङ्क्ते" इत्येतत्परोक्षभोगविषयम्। "पश्यतोऽब्रुवत" इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम्,—"अनागमं तु यो भुङ्क्ते" इत्यविशेषाभि-

## सुबोधिनी

त्वमुत्पादयितव्यं नापरिगणितैः, यतो नियमाददृष्टं जायत इत्येवं नियमार्थं, न तु स्वत्वं कारकहेतवो वा शास्त्रसमधिगम्या इत्येवमर्थमित्याह—गौतमवचनं त्विति। अनागमोपभोगस्य स्वत्वहेतुत्वे विरुद्ध्यत इति। अनागमोपभोगेन स्वत्वोत्पत्तौ उपभोक्तुर्दण्डविधानमनुपपन्नम्। विधीयते च दण्डः। अत एतद्वचनविरोधादपि स्वत्वमुपभोगान्नोत्पद्यत इत्यर्थः। ननु विरोधे सर्वात्मना उपभोगात् स्वत्वानुत्पत्तिः। न च विरोधः। तथा हि "अनागमं तु यो भुङ्क्ते" इत्यनेनैतद्विधीयते—स्वामिनोऽसमक्षं बहुकालोपभोगेऽपि स्वत्वानुत्पादादुपभोक्ता चोरवद् दण्ड्य इति। पश्यतोऽब्रुवत इत्येतत् तु अमुमर्थं विधत्ते—स्वामिनः समक्षमनासेधोपभोगे विंशतिवर्षाद्यनन्तरं हानिर्भवति। उपभोगादुपभोक्तुः स्वत्वमुत्पद्यत इति। एवञ्च परोक्षापरोक्षविषयत्वेनानयोर्न परस्परविरोधो, येन पश्यतोऽब्रुवत इत्यत्रोपभोगात् स्वत्वप्रतीतिर्न स्यादित्याशङ्क्य परिहरति—न चानागमं तु यो भुङ्क्त इत्येतदिति। न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य हेतुमाह-अनागमं तु योभुङ्क्ते" इतीति। अयमाशयः—

## बालंभट्टी

न चैवमुक्तगौतमवाक्यस्य का गतिरत आह —गौतमेति। नियमार्थं शास्त्रपरिगणितैरेव हेतुभिः स्वत्वमुत्पाद्यम्, नापरिगणितैः चौर्यादिभिरपीति नियमाय, न तु स्वत्वादिशास्त्राधिगम्यमित्येतदर्थमित्यर्थः। यद्वा तैः स्वत्वमेव मास्वत्वमिति तथा नियमः स्मृतिविरोधरूपं दोषामित्याह—अपि चेति। द्वौ ब्राह्मणावितिवत् बहूनीति प्रयोगः। विरुध्यत इति—अनागमोपभोगेन स्वत्वोत्पत्तावुपभोक्तुर्दण्डविधानमनुपपन्नं,विहितस्तु दण्डः,अत एतद्वचनविरोधादपि न स्वत्वमुपभोगात् स्वत्वानुत्पत्तिः स एव नेत्याशयेनाऽऽह—न चेति। स्वाम्यसमक्षं बहुकालोपभोगेऽपि स्वत्वानुत्पादादुपभोक्ता चौरवद्दण्ड्य इति तदर्थः। पश्यत इति स्वामिनः समक्षमनासेधोपभोगे विंशतिवर्षादूर्ध्वं तद्धानिर्भवतीति उपभोगादुपभोक्तुः स्वत्वमुत्पद्यत इति तदर्थः। एवं च परोक्षत्वापरोक्षत्वरूपविशेषपरत्वेन मिथो विरोधो येन तदभावः स्यादिति भावः। प्रतिज्ञामात्रेणार्थसिद्धेरत्र हेतुमाह—अनागमामिति। उक्तविशेषं विना सामान्येन तादृशोपभो-

---

१ ख. च ये। २ द. पपद्यते।

धानात्; "नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः॥" इति कात्यायनवचनाच्च ; समक्षभोगे च हानिकरणाभावेन हानेरसंभवात् । न चैतन्मन्तव्यम्—आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यो-

## सुबोधिनी

परोक्षत्वापरोक्षत्वरूपविशेषमन्तरेण सामान्येन योऽनागमं तु भुङ्क्ते स दण्ड्य इति निर्देशान्न परोक्षविषयत्वेन व्यवस्थापनं युक्तम्, तेन विरोध इति। नोपभोगे बलं कार्यमिति--उपभोगमात्रबलादेव न स्वत्वसिद्धिरित्यर्थः । समक्षभोगे च हानिकरणाभावेनेति—अनासेधे च स्वत्वानपगमादुपभोगेन च स्वत्वाप्राप्तेरिति पूर्वोक्तानुसन्धानेन हानिकरणाभावो द्रष्टव्यः । न तु "पश्यतोऽब्रुवत" इत्यस्य माभूत् पूर्वोक्तोऽर्थः। "आधौ प्रतिग्रहे क्रीते" इत्यत्राध्यादिषु पूर्वक्रियाप्राबल्यमभिहितम्। तदपवादेन भूमौ विंशतिवर्षोपभोगसहिता उत्तरक्रिया धने तु दशवर्षोपभोगसहिता उत्तरक्रिया च बलवती । अत एवंविधस्थले आध्यादिष्वपि उत्तरा क्रियैव प्राबल्येवंरूपोऽर्थोऽस्त्वित्याशङ्क्य परिहरति—न चैतन्मन्तव्यमित्यादिना ।अत्र-क्रिया नाम करणं, कृतिरिति यावत् । भूमौ विंशतिवर्षोपभोगरहितस्थले धने च दशवर्षोपभोगरहितस्थले पूर्वकृताध्यादिकमेव बलवत् । एतदभावस्थले तु पूर्वकृताध्यादिकापेक्षयोत्तरकालकृतमेवाध्यादिकं बलवदिति शङ्कावादिनोऽभिप्रायः । परिहारवाद्यभिप्रायस्तु उत्त-

## बालंभट्टी

त्कुर्दण्डानिर्देशात् न तथा व्यवस्था युक्तैवेति भावः। ननु तत्र सामान्योक्तावप्यत्र विशेषोक्त्या एतदन्यपरत्वं तस्येति युक्तैव व्यवस्था।अत आह—नोपेति। उपभोगमात्रबलादेव न स्वत्वसिद्धिरित्यर्थः।तथा च कथं समक्षभोगेऽपि तन्मात्रात्स्वत्वहानिस्तदुत्पत्तिश्च यदि तथा स्वीक्रियते तर्हि-सामान्येनैतत् वचनविरोध इति भावः । नन्विदमपरोक्षभोगविषयकमेवास्तामुक्तवचनैकवाक्यतया ; अत आह—समक्षेति। चोऽन्ते योज्यः; अनासेधेन स्वत्वानपगमात् उपभोगेन स्वत्वानिष्पत्तेश्च प्रागुक्तरीत्या हानिकारणाभाव इति भावः। तस्मादेतदनुपपत्तिस्तदवस्थेति सिद्धम् । नन्वेवं मास्त्वस्य प्रागुक्तोऽर्थः किन्त्वन्य एवेत्याह—न चैतन्मन्तव्यमिति। इतीत्यन्तं वक्ष्यमाणमित्यर्थः। प्राबल्येति आध्यादिषु तदपवादत्वेन यत् पूर्वक्रियायाः प्राबल्यमुक्तं तदपवादतया भूमौ विंशतिवर्षोपभोगसहितोत्तराक्रिया प्रबला। धने तद्दशवर्षोपभोगसहिते तादृशस्थले

---

१ ख. हानिकरणाभा० । २ ख. प्राबल्यादपवा० । छ. पूर्वस्याः क्रियायाः प्राबल्यमनेनोच्यते । ३ द. दपरोक्षापरोक्षवि । ४ त. मभिप्रेतम्। ५ त. त्ये वा ।

पवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्तायाः, [१]उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यत इति । यतस्तेषूत्तरैव क्रिया तत्त्वतो नोपपद्यते, स्वमेव ह्याधेयं देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । [२]अस्वत्वदाने प्रतिग्रहे च दण्डः स्मर्यते—"अदेयं यश्च गृह्णाति
5 यश्चादेयं प्रयच्छति । उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥" इति । तथा आध्यादीनां त्रयाणामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो नोपप-

## सुबोधिनी

रक्रियाया एवाभावात् पूर्वक्रियापेक्षयोत्तरक्रियाप्राबल्यं न घटते, यतः सति हि धर्मिणि धर्मचिन्तनमिति । [३]किञ्चैवं च सति पूर्वोक्तवक्ष्यमाणयोगीश्वरवचनयोः परस्परविरोधादानर्थक्यमपि स्यादित्याशङ्क्याऽऽह—तथाध्यादीनां त्रयाणामिति । अयमभिप्रायः— विंशतिवर्षोपभोगसहितं दशवर्षोपभोगसहितं चोत्तरकालकृतमाध्यादिकं बलवत्, एतदपेक्षया पूर्वकालकृतं दुर्बलमिति "पश्यतोऽब्रुवत" इत्यनेनाभिधीयत इति पूर्वपक्षिण आशयः । एवं स्थिते "अधिसीमोपनिक्षेपजरबालधनैर्विना ।" इति पूर्वोक्तापवाद

## बालंभट्टी

आध्यादिष्वप्युत्तरैव क्रिया प्राह्येत्येवार्थ इत्यर्थः। अत्र क्रिया कृतिः। भूमौ विंशतिवर्षोपभोगाभावे धने च तादृशतदभावे पूर्वकृताध्यादिकमेव प्रबलम्, ततोऽन्यत्र तदपेक्षयोत्तरकालकृतमेव तत् प्रबलमिति व्यवस्थेति भावः। हेतुमाह--यत इति । तेषु आध्यादिषु उत्तरक्रियाया एवाभावात् पूर्वक्रियापेक्षया प्राबल्यं न संभवति,सति धर्मिणि धर्मचिन्तनमितिभावः। तत्राऽऽह— स्वमेव हीति । स्वत्वविशिष्टमेव हीत्यर्थः। तत्र हेतुमाह—न चेति। न हीत्यर्थः । वार्थाय प्रतिग्रहे युक्त्यन्तरमप्याह—स्वत्वेति। अभ्युपेत्य एवं सति याज्ञवल्क्यपूर्वापराविरोधादानर्थक्यापत्तिरपि दोषान्तरमित्याह—तथेति । अस्य श्लोकस्येत्यस्य मध्यमणिन्यायेनोभयत्रान्वयः। अपवादो अपवादत्वम्।आद्यौ पूर्वं उत्तरप्राबल्येऽनेन बाधितेऽग्रिमवचनेनाधत्ते तदपवादतयोत्तर कार्यप्राबल्यबोधने विपरीताभिधानेन मिथो विरोधादानर्थक्यमिति भावः। उपसंहरति—

---

१ ख. उत्तरविषयक्रियायाः । २ ख. ङ. अस्वत्वस्य । क. च. अस्वत्वस्य दाने । ३ थ. द. एवं च । ४ द. यैव पू.

द्यते । तस्माद्भूम्यादीनां हानिरनुपपन्नैव, नापि व्यवहारहानिः । यतः "उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति ॥" इति नारदेनोपेक्षायां लिङ्गाभावकृता व्यवहारहानिरुक्ता, न तु वस्त्वभावकृता । तथा मानुनाऽपि–"अजडश्चेदपौगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति॥"[1] इति व्यववहारतो भङ्गो दर्शितो न वस्तुतः । व्यवहारभङ्गश्चैवम्– 5 भोक्ता किल वदति 'अजडोऽयमपौगण्डोऽबालोऽयमस्य सन्निधौ विंशतिवर्षाण्य-

## सुबोधिनी

केनोत्तरवचनेनाधावुत्तरकार्यं बलवन्न भवतीति विधीयते । तथा च पूर्वेण वचनेनाधावुत्तरकार्यबलीयस्त्वविधानादुत्तरेण वैपरीत्याभिधानाच्च परस्परविरोधादानर्थक्यमिति । ननु माभूत् स्वरूपहानिर्भूम्यादीनामासेधाद्यकरणे विंशतिवर्षाद्यनन्तरं, व्यवहारस्य तद्विषयस्य च हानिर्भवत्विवितीत्यत आह–नापि व्यवहारहानिरिति । तत्र हेतुः–यत उपेक्षां कुर्वत इति । अस्य वचनस्य पूर्वोक्तार्थे हेतुत्वमेवोपपादयति । इति नारदेनोपेक्षा लिङ्गाभावकृतेति । उपेक्षायां यानि लिङ्गानि जडत्वबालत्वादीनि, तेषामभावः, तत्कृता

## बालंभट्टी

तस्मादिति । हानिरिति स्वत्वहान्या स्वरूपहानिरित्यर्थः । ननु माभूत्स्वत्वरूपहानिः ; किंतु तदनन्तरं तद्विषयव्यवहारहानिरनेन प्रतिपाद्यते इत्यत आह–नापीति । तावत्पर्यन्तं परोपभोगे वस्तुनो नष्टत्वात् तदभावनिमित्तकनृपादिकृतवास्तवव्यवहारहानिरित्यर्थः । तत्र हेतुमाह–यत इति । उक्तः इत्यत्रान्वयः। तस्य वादिनः उपेक्षामित्यनेन शारीरव्यापारशून्यत्वं, तूष्णीमित्यनेन वाग्व्यापारशून्यत्वं, तेनाब्रुवत इत्यर्थलाभः, तिष्ठतः विद्यमानस्य, अनेन द्विविधा विद्यमानत्वव्यवच्छेदः । तेन पश्यत इत्यर्थलाभः। विपन्ने पूर्णे समाप्ते इति यावत् । पूर्वोक्ते सङ्केतिते । व्यवहारहानौ मुख्यहेतुमाह–उपेक्षालिङ्गेति । अन्यथा तद्विशेषणानर्थक्यमेवेति भावः । तथा चोक्तार्थे हेतुत्वमेवास्य वचनस्यानेन उपपादितमिति बोध्यम् । उपेक्षायां यानि लिङ्गानि जडत्वबालत्वादीनि तेषां योऽभावस्तत्कृता तन्निमित्तैवेत्यर्थः । उपेक्षालिङ्गेष्वसत्सु एतावत्पर्यन्तविपन्नवस्तुनः स्वीयत्वे किमित्यनेन व्यवहारो न कृत इति प्रत्यर्थिनोक्ते वादी निरुत्तरो भवतीत्येव प्रकारेण व्यवहाराभावो नारदेनोच्यते । उपेक्षां कुर्वत इत्युक्तेः अन्यथा तदानर्थक्यं स्पष्टमेव । अतो न वस्तुतो व्यवहाराभावो वक्तुं शक्य इति तात्पर्यम् । साधकान्तरमाह–तथेति । विषयश्चास्य भुज्यते इति । विषये चास्येति पाठान्तरम् । विषये चास्य भुञ्जत इति तृतीयः पाठः। विषयो देशः अस्य धनिनः । अजडश्चेदित्यादि-

१.–– ८. १४८. । २ प. अथेति ।

प्रतिस्वं मया भुक्तं; तत्र बहवः साक्षिणः सन्ति; यद्यस्य स्वमन्यायेन मया भुज्यते तदाऽयं किमित्येतावन्तं कालमुदास्ते' इति ; तत्र चायं निरुत्तरो भवतीति । एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव,—"छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः॥"[1]इति नियमात् । अथ मतम्—यद्यपि न वस्तुहानिः, नापि व्यवहारहानिः,
5 तथाऽपि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं न स्था-

## सुबोधिनी

तन्निमित्ता । एतदुक्तं भवति—उपेक्षालिङ्गेष्वसत्स्वपि व्यवहारोऽनेन किमिति न कृतो विप्रतिपन्नवस्तुनः स्वकीयत्वे इति प्रत्यर्थिनाऽभिहिते वादी निरुत्तरो भवतीत्येवंप्रकारेण व्ययहाराभावो नारदेनाभिधीयते,—उपेक्षां कुर्वत इत्यभिधानात् । अतो न वस्तुतो व्यवहाराभावो वक्तुं शक्यत इति । "पश्यतोऽब्रुवत" इत्येतद्वचनं प्रकारान्तरेण व्याचष्टे—अथ मतमित्यादिना । अयमर्थः—अनासेधविंशतिवर्षोपभोगात् तादृशदशवर्षोपभोगाच्च भूम्यादिकस्य वस्तुनो हानिर्वा तद्विषयस्य व्यवहारस्य वा हानिरनेन वचनेन न प्रतिपाद्यते । अपि तु स्वसमक्षमेव स्ववस्तुन्युपभुज्यमाने सत्यासेधं यदि स्वामी न करोति, तदा कालान्तरे व्यवहारहानिशङ्का भवेदिति व्यवहारहानिशङ्कानिवृत्त्यर्थमासेधो विधेय

## बालंभट्टी

"यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी । भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति॥" इति पूर्वस्य शेष इति मेधातिथिः। तद्धनं तद्धनिकस्य तदुत्पन्नफलरूपम् । इतीति—एवंप्रकारेण प्रथमपक्षं निराचष्टे । न वस्तुत इति । अस्य वचनस्यार्थं प्रतिपादयन्नाह—व्यवहारेति । भवतीति इत्यन्तेनान्वयः । वदतीत्यस्य स्ते[4] इतित्यत्रान्वयः । अजड इत्यादि उपलक्षणमन्येषामपीत्याह—अबाल इति । अस्येति सूचितमाह—सन्निधाविति । वनस्तुत इत्यस्य फलमाह—एवमिति । अथास्यान्यथा व्याख्यानमाह—यथामतमिति । तादृशोपभोगात् न भूम्यादेस्तद्विषयस्य न व्यहारस्य च हानिः, किं तु तस्य तादृशस्य व्यवहारस्य च हानिशङ्कस्यादिति तन्निवृत्त्यर्थम् आसेधो विधेय इत्यासेधस्यावश्यकर्त्तव्यतां विधत्ते इदं-

---

१.—व्य० १९ । २ त. द. सतो हा । ३ म०. ८. १४७. । ४ स्त इति उदास्ते इत्यस्य प्रतीकम् ।

तव्यमित्युपदिश्यत इति । तच्च न,— स्मार्तकालाया भुक्तेर्हानिशङ्काका-[1]
रणत्वाभावात् । तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां[2] विंशति-

## सुबोधिनी

इत्यासेधस्यावश्यकर्तव्यतां विधत्त इति । तदपि व्याख्यानं दूषयति—तच्च नेत्यादिना । किमयं तूष्णीं न स्थातव्यमित्युपदेशोऽदृष्टार्थ उत दृष्टार्थः?[3] न तावत् दृष्टार्थः । तथा हि —व्यवहारहानिशङ्कायां सत्यां तन्निवृत्त्यर्थमयमुपदेशो वक्तव्यः । सा च शङ्का[4] कारणे सत्येवोत्पद्यते नासति । तच्च कारणं विंशतिवर्षपरिमिता[5] भुक्तिराहोस्विदन्यत्? न तावदन्यत्, वचनेऽनुपादानात् असम्भवाच्चेति बहिरेव परिहृत्य नापि तादृशी भुक्तिरित्याह— स्मार्तकालाया भुक्तेरिति । अयमर्थः—असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिक-मन्तरेणोपभुङ्क्त इति स्मरणयोग्यकालीना या भुक्तिः तादृशभुक्त्या व्यवहारहानि-शङ्कैव नोत्पद्यते साक्ष्यादिसम्भवादिति । नाप्यदृष्टार्थ इत्याह—तूष्णीं न स्थातव्यमितीति । अत्र 'एतावन्मात्राभिधित्सायामाविवक्षितं स्यात्' इत्युत्तरेणान्वयः । अविवक्षितम-'

## बालंभट्टी

वचनमित्यर्थः । तदपि व्याख्यानं दूषयति—तच्च नेति । ननु तूष्णीं न स्थातव्यमित्युप देशः किमदृष्टार्थः, उत दृष्टार्थः । न तावदन्त्यः,—असंभवात् । व्यवहारहानिशङ्कायां सत्यां तन्निवृत्त्यर्थमुपदेशो वाच्यः। सा च कारणे सत्येव भवति नासति । तच्च कारणं विंशतिवर्ष परिमिता भुक्तिरुतान्यत् । तत्र नान्त्यः वचनेऽनुक्तेः । नाद्य इत्याह—स्मार्तेति । स्मरण-विषयतायोग्यकालिकभुक्त्या व्यवहारहानिशङ्कैव नोत्पद्यते साक्ष्यादिसंभवादिति भावः । नाप्यदृष्टार्थ इत्याह—तूष्णीमिति । दोषद्वयप्रतिपादकोऽयं ग्रन्थः । अविवक्षितं स्यादि-त्यस्योभयत्रान्वयः । तथा चैतावन्मात्राभिधित्सायां अविवक्षितमनुपपन्नं स्यादित्याद्यर्थः तूष्णीं नेत्युपदेशस्यादृष्टं फलं विधिबलात् कल्प्यं यद्यपि, तथाऽपि कल्पनैव तावत् गरीयसी। किंचादृष्टसत्वमेव न "वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः।" इति न्यायात् । किं च वक्ष्यमाणप्रकारेण गत्यन्तरसम्भवे तदभावमूलकतत्कल्पनाऽसंगता । एवं चादृष्टकल्पनयैवा स्य सार्थक्यं कल्पनाया बीजाभावान्नास्यादृष्टार्थत्वमिति भावः । अस्योपदेशस्यादृष्टार्थत्व-मभ्युपेत्याप्याह—विंशतीति। अत्र तदविवक्षितमनर्थकं स्यादित्यर्थः । अस्योपदेशस्यादृष्टफ-

१ क. हानिशङ्काकारणत्वात्; करणत्वात् । २ क. मात्रविधित्सायां । ३ द. 'उत दृष्टार्थ' इति नास्ति थ. 'न तावत् दृष्टार्थः' इति नास्ति । ४ थ. द. हानिशङ्का । ५ थ. द. वर्षादिप ।

ग्रहणमविवक्षितं स्यात् । अथोच्यते—विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावनानि-

---

## सुबोधिनी

नुपपन्नमिति यावत् । अयमभिप्रायः—तूष्णीं न स्थातव्यमित्यस्योपदेशस्यादृष्टं फल-मिति वक्तव्यम्। तच्च फलं विधानबलात् कल्प्यम् । कल्पना च गरीयसी । अदृष्टं[1] तावन्नास्तीत्येव प्रतीयते, "बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः।" इति न्यायात्। सा च कल्पना सम्भवत्यसत्यां गतौ । वक्ष्यमाणानुसारेण चास्य वचनस्य गत्यन्तरसम्भवाद-वश्यमदृष्टकल्पनयैवास्य वचनस्य सार्थकत्वकल्पनाया हेत्वभावात् तूष्णीं न स्थातव्यमि-त्ययमप्युपदेशो[2] नादृष्टार्थः इति । अस्योपदेशस्यादृष्टार्थत्वमङ्गीकृत्यापि दोषमाह—विंशतिग्रहणमविवक्षितं स्यादिति। अविवक्षितं स्यादिति पदं पूर्वग्रन्थशेषत्वेन[3] इदं[4] ग्र-न्थशेषत्वेन चान्वेति[5] । अयमर्थः—तूष्णीं न स्थातव्यमित्युपदेशः अदृष्टार्थः । आसेधनेन किमप्यदृष्टफलं जायते। अतस्तूष्णीं न स्थातव्यमित्युपदेश इत्युक्तं स्यात् । तथा च[6] तत्फलं विंशतिवार्षिकीति विंशतिवर्षरूपमर्यादाभावेऽपि तूष्णीं न स्थातव्यमिति निषेधमात्रेणापि सेत्स्यतीति विंशतिपदमविवक्षितमनर्थकं स्यादिति । *अथ वा

## बालंभट्टी

लकत्वे तत्फलस्य विंशतिवर्षरूपमर्यादानुक्तावपि तूष्णीं न स्थातव्यमिति निषेधमात्रेणापि सिद्धिरिति तदुपादानमनर्थकं स्यादिति भावः। यद्वा तदपि व्याख्यान दूषयति—तच्च नेत्यादिना। असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिकं विनोपभुङ्क्त इति स्मरणयोग्यका-लिकी या भुक्तिस्तस्या व्यवहारहानिशङ्कां प्रति कारणत्वाभावात्तन्निवृत्त्यर्थं तस्यैतदुपदेशस्या-संभवात् तूष्णीं नेत्येतावन्मात्र उपदेशे वाच्ये विंशतीत्यनर्थकं स्यात् , दृष्टफलाभावेनादृष्टफल-कल्पनाया विंशतिवर्षरूपमर्यादानुक्तावापि संभवात् इति भावः। विंशतीत्यस्योक्तमानर्थ क्यं निराचष्टे—अथोच्यत इत्यादिना। ऊर्ध्वं विंशतेरिति शेषः। पश्यत इत्यनेन तूष्णीमित्ये-

* 'तच्च न' इत्यादिपरिहारग्रन्थस्य 'तदपि' इत्यादिना करिष्यमाणं व्याख्यानं कृत-गहनव्याख्यानबोधासमर्थानाम् अभिमुखीकरणाय प्रतिजानीते—'अथवा सकल' इत्या-दिना 'व्यारव्यायते' इत्यन्तेन ।

---

१ थ. द. ष्टं प्रथमं ता। २ द. मुप। ३ थ. 'पूर्व' इति नास्ति। ४ थ. एतदग्रे। ५ त. न नान्वे। ६ थ. द. च फलं।

राकरणार्थम् ; यथाऽऽह कात्यायनः—"शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते । विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम् ॥" इति । तदपि न—आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादा-

## सुबोधिनी

सकललोकमनःप्रसादसम्पादनासुगमेन मार्गेण तच्च नेत्यादिपरिहारग्रन्थसन्दर्भोऽभिप्रायतो व्याख्यायते । तदपि व्याख्यानं दूषयति तच्च नेत्यादिना । अयमर्थः—असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिकमन्तरेणोपभुङ्क्त इति स्मरणयोग्यकालीना या भुक्तिः तस्या व्यवहारहानिशङ्कां प्रति कारणत्वाभावात् तन्निवृत्त्यर्थमसावुपदेश इति न घटते, अत एवं वक्तव्यं तूष्णीं न स्थातव्यमित्येतावन्मात्रमुपदिश्यत इति । तथा च विंशतिपदमविवादितमनर्थकं स्यात् । कुतः ? दृष्टप्रयोजनाभावादस्योपदेशस्यादृष्टं प्रयोजनं कल्पनीयम् । अदृष्टप्रयोजनस्य विंशतिवर्षरूपमर्यादाभावेऽप्युपपत्तेः । अतो विंशति पदमविवक्षितमिति विंशतिपदस्यानर्थक्यं परिहरति—अथोच्यत इत्यादिना। अयमाभिप्रायः—"पश्यतोऽब्रुवतः" इत्यनेन तूष्णीं न स्थातव्यमित्येतावन्मात्रमेवोपदिश्यते नाधिकम् ; तथाऽपि विंशतिपदं सार्थकम् । तथा हि । विंशतिवर्षपर्यन्तं यदि स्वामी नासेधयति, प्रत्यर्थी चासेधरहितं तावन्तं कालमुपभुङ्क्ते वस्तुतः कपटकृतलेख्यपूर्वकमपि, तदा विंशतौ वर्षेष्वप्यतिक्रान्तेषु तत्पत्रं निर्दोषमिति पत्रगतदोषोद्भावननिराकरणार्थत्वेन विंशतिपदं सार्थकमिति । अनासेधे विंशतिवर्षोपभोगेन विंशतिवर्षानन्तरं पत्रं निर्दोषमित्यत्र कात्यायनवचनं प्रमाणयति—शक्तस्य सन्निधावर्थ इति । निराकरोति—तदपि न आध्यादिष्वपीति । अयमभिप्रायः—पत्रे

## बालंभट्टी

वोपदिश्यते नाधिकम्। तथाऽपि विंशतीति सार्थकम्। तथा हि—यदि विंशतिवर्षपर्यन्तं स्वामिकृतासेधाभावेन तद्रहितं तावत्कालं वस्तुतः कपटकृतलेख्यकमपि प्रत्यर्थिनोपभुक्तं तदा विंशति वर्षोत्तरं तत्पत्रं निर्दोषमिति पत्रदोषोद्भावननिराकरणार्थत्वेन तत् सार्थकमिति भावः । अत्र प्रमाणमाह-यथाऽऽहेति।शक्तस्य निराकरणे समर्थस्य सान्निधावित्यनेनासान्निध्य व्यवच्छेदः। लेख्येन कपटकृतेन । विंशद्वर्षाणीत्यार्षम् । इदमपि निराकरोति—तदपि नेति । तथा [illegible]

१ ख. विंशतिवर्षी । च. विंशतिवर्षोति । २ थ. द. दिना । ३ थ. स्यते ४ थ. तदपीति । 'अथ मतम्' इत्यादिना यद् व्याख्यानमुद्भावितं तदपीत्यर्थः । ५ द. प्युपत्तेर्वि । ६ 'अदः' इति स्यात् । ७ द. अनासेधविंशतिवर्षानन्तरम् । 'अनासेधविंशतिवर्षोपभोगानन्तरम्' इति पठितुं युक्ततरम् ।

संभवात् ; यथाऽऽह कात्यायनः—"अथ विंशतिवर्षाणि आधिर्भुक्त सुनिश्चितः। तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता॥" तथा—"सीमाविवादे निर्णीते सीमापत्रं विधीयते। तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः॥" इति।

## सुबोधिनी

दोषोद्भावननिराकरणार्थत्वेन विंशतिपदस्य सार्थकत्वेऽस्य न्यायस्याध्यादिपत्रेष्वपि तुल्यत्वात्। उपरितनयोगीश्वरवचने[1] "आधिसीमोपनिक्षेपजडबालधनैर्विना।" इत्यसावाध्यादिष्वपवादो विरुध्येतेति। ननु "पश्यतोऽब्रुवतः" इत्यनेनासेधरहितं विंशतिवर्षोपभोगानन्तरं सामान्येन सर्वत्र पत्रदोषोद्भावननिराकरणे[2] प्राप्ते "आधिसीमोपनिक्षेप" इत्यनेन विशेषवचनेनाध्यादिविषये तथा न, किन्तु विंशतिवर्षानन्तरमपि पत्रदोषोद्भावनमस्त्येवेति पूर्वोक्तापवादे कुतो न विरोध इत्याशङ्का न योगीश्वरवचनयोरेव परस्परविरोधः, अपि तु कात्यायनवचनाभ्याम् "आधिसीमोपनिक्षेप" इति योगीश्वरवचनस्य विरोध इति द्योतयितुं कात्यायनवचनमुदाहरति—अथ विंशतिवर्षाणीति। एतदुक्तं भवति—आधिपत्रे सीमापत्रे च विंशतिवर्षानन्तरं दोषोद्भावनं नास्ति, अपि त्वदुष्टमेव तत्पत्रमिति कात्यायनवचनाभ्यां प्रतीयते। योगीश्वरवचनेन त्वेतद्विपरीततया आधौ सीमनि च विंशतिवर्षानन्तरमपि दोषोद्भावनमस्तीति। तथा च विरोधः। न चैतद्युक्तं वक्ष्यमाणप्रकारेणाविरोधेनैवोप-

## बालंभट्टी

सार्थक्ये आध्यादिष्वपि त्रिषु उक्तन्यायस्य तुल्यत्वेनाद्ये[3] आधिसीमोपेत्यादिमूलवचनेनापवादत्वोक्त्यसंगत्यापत्त्या मूलयोर्मिथो विरोधापत्तेरिति भावः। ननूक्तरीत्या पश्यत इत्यनेन सामान्यतो विंशतिवर्षोपभोगोत्तरं सर्वत्र पत्रेषु दोषोद्भावननिराकरणे प्राप्ते आधिसीमोपेत्यनेन विशेषवचनेन तद्विषये तथा न, किं तु तदुत्तरमपि तदुद्भावनं कर्तव्यमेवेति बोध्यते इति। प्रागुक्तापवादत्वसम्भवेन तस्य कुतो विरोधो मिथ इति चेन्न। वचनान्तरविरोधेनैव व्यवस्थाया दुर्वचत्वादेतदभिप्रेत्य तद्वचनमाह—यथाऽऽहेति। तथा च तथाऽङ्गीकारे कात्यायनादिविरोधोऽन्यथा मिथो विरोधः, सेयमुभयतः पाशरज्जुरिति भावः। अथेति—आधिसीमापत्रयोरपि तदुत्तरं दोषोद्भावनं न। अपि तु अदुष्टमेवेत्यस्यैतत् प्रतिपाद्यत्वेनैतद्वि-

---

१ त. परियो। २ त. पत्रेषु दो। ३ तुल्यत्वे आधीति च पाठः।

एतेन "धनस्य दशवार्षिकी" इत्येतदपि प्रत्युक्तम् । तस्मादस्य श्लोकस्य सभ्यो[1]ऽर्थो वक्तव्यः । उच्यते—भूमेर्धनस्य च फलहा[2]निरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः । तथा हि—निरा[3]क्रोशं विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते;तथाऽपि फलानुसरणं न लभते,--अप्रतिषेधलक्षणात् स्वापराधात्,अस्माच्च वचनात् । प[4]रोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव—"पश्यतः" इति 5 वचनात् । प्रत्यक्षभोगे च साक्रोशे–"अब्रुवतः" इति वचनात् । विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते, विंशतिग्रहणात् । ननु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानि-

## सुबोधिनी

पत्तेरिति । स्वाभिप्रेतमर्थमाह—'उच्यते' इत्यादिना । प्रत्यक्षभोगे च साक्रोश इति । फलानुसरणं लभत इत्यनुषङ्गः । अत्र हेतुः—अब्रुवत इति वचनादिति । यतोऽब्रुवत एव फलहानिरतो ब्रुवाणस्याक्रोशं कुर्वतः फलमस्तीत्यर्थः । प्रत्यक्षे निराक्रोशे च लभत इति । अत्रापि फलानुसरणमित्येव । अ[5]स्तु स्वत्वं, तथाऽपि विषयविशेषे

## बालंभट्टी

परीततया मूलवचनयोर्व्यवस्थायामेतद्विरोधो न चैतद्युक्तं वक्ष्यमाणप्रकारेणा विरोधेनैवोपपत्तेरिति भावः । सभ्योऽर्थ इति । निर्दुष्टोऽर्थ इत्यर्थः। अन्योर्थ इति पाठान्तरम्। तमेव स्वाभिमतमाह—उच्यते इति । इह–पश्यत इत्यत्र वचने । विवेति,—तात्पर्येत इति भावः । अत एवोपपादयति—तथा हीति । निराक्रोशम् इति उपभोगक्रियाविशेषणं—फलेति । तावत्पर्यन्तं ततस्तेन लब्धेत्यादिः । ननु स्वल्पापराधे महदनिष्टमनुचितमत आह—अस्मादिति । पश्यत इति वाक्याच्चेत्यर्थः; अन्यथैतस्य वैयर्थ्यं स्पष्टमेव। आ[6]क्रोशे इति,—फलानुसरणं लभत एवेत्यस्यानुषङ्गः । अत्र हेतुमाह—अब्रुवत इति । यतोऽब्रुवत एव फलहानिरतोऽब्रुवत आक्रोशं कुर्वतः फलमस्तीति भावः—क्रो[7]शे चेति । फलानुसरणमित्यस्यानुषङ्गः। इदमप्ययुक्तमिति शङ्कते—नन्विति । फलस्येति फलस्यापि इत्यर्थः । तद्धानिरिति ।

ख. ग. स्यान्यार्थो० । २ क. हानिर्विव० । ३ क. ज. निराक्रोशविंश । ४ क. परोपभोगे तु । ज. परोक्षभोगे। ५ त. स्तु (फलं) । ६ साक्रोशे इति च पाठः । ७ निरेत्येतत्परित्यज्य क्रोशे च इति प्रतीकग्रहणं च ।

रनुपपन्नैव । बाढं तस्य स्वरूपाविनाशेन[1] तथैवावस्थाने; यथा—तदुत्पन्नपूगपनस-वृक्षादीनाम्, यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशादेव स्वत्वनाशः ॥ "अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः"॥ इत्यनेन[2] वचनेन निष्क्रयरूपेण गणयित्वा चोरवत्तत्समद्रव्यदानं प्राप्तं, हानिर्विंशति-

## सुबोधिनी

फलहानिरुपपुन्नेत्यर्धाङ्गीकारेण परिहरति—बाढमिति । क्व विषये फलहानिर्नास्ति क्व वा फलहानिरित्याकाङ्क्षायां यत्र फलं विद्यमानं, तत्र हानिर्नास्तीत्याह—तस्य स्वरूपाविनाशेनेत्यादि । तस्य फलस्य । यत्र पुनः फलमुपभोगात्[3] स्वरूपतो नष्टं[4], तत्र सम्बन्धिनः स्वरूपस्याभावात् सम्बन्धात्मके स्वत्वे निवृत्तेऽपि 'अनागमोपभोक्तारं चोरवद्दण्डयेत्' इति वचनाच्चोरेणापहृतं द्रव्यं स्वामिनेऽर्पयित्वा यथा दण्डो गृह्यते तद्वदुपभोक्तारं स्वामिने फलं दापयित्वा दण्डयेत् इति विधानाद्वचनबलात् फलमूल्यदाने प्राप्ते फलहानिर्विधीयत इत्याह—यत्र[5] पुनस्तदुत्पन्नमित्यादिना ॥ २४ ॥

## बालंभट्टी

फलहानिरपीत्यर्थः । अस्तु स्वत्वं, तथाऽपि विषयविशेषे फलहानिरुपपन्नैवेत्यर्द्धाङ्गीकारेण परिहरति—बाढमिति। क्व फलहानिर्नास्ति क्वास्तीत्याकांक्षायां यत्र फलं विद्यते तत्र हानि र्नेत्याह—तस्येति[6], फलस्येत्यर्थः । स्वरूपपदं[7] स्पष्टार्थम् । यद्वा स्वरूपतः सर्वांशेनेत्यर्थः । तदिति,—क्षेत्रेत्यर्थः। पूगः क्रमुकः। एवं चायं पूर्वपक्षविषय इति भावः। प्रकृतवचनविषय माह—यत्पुनरिति । यत्त्वित्यर्थः। यत्र पुनरिति पाठान्तरम्। स्वत्वनाश इति,—संबन्धिनः स्वरूपस्याभावात् सम्बन्धात्मकस्वत्वस्य निवृत्ताविर्[8]त्यर्थः । वचनेनेति,—चोरेणापहृतं द्रव्यं स्वामिने दापयित्वा ततो यथा राज्ञा दण्डो गृह्यते तद्वत्तादृशोपभोक्तारं पापिष्ठं तं स्वामिने तद्दापयित्वा स्वयं राजा दण्डेन निगृह्णीयादिति तत्पूर्वकं दण्डविधायकेन कात्यायनवचनेने।

१ क. छ. विनाशे तथ० । २ ना० १. ८३. । ३ त. गः स्वं । ४ त. न दृष्टः । ५ 'यत्पुनस्तद्रुत्पन्नम्' इति तु मिताक्षरापाठः । ६ अस्येति--इति च पाठः । ७ स्वरूपपदस्य स्पष्टोर्थः । ८ निवृत्तावपीत्यर्थः ।

वार्षिकीति अपोद्यते[3]। राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि, अनागमोपभोगा-दपवादाभावाच्च। तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्माच्च[2] वचनाद्विंशतेरूर्ध्वं फलं[3] नष्टं न लभत इति स्थितम्। एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् ॥२४॥

अस्यापवादमाह -

**आधिसीमोपनिक्षेपजडबालधनैर्विना।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥** 5

आधिश्च सीमा च उपनिक्षेपश्च आधिसीमोपनिक्षेपाः; जडश्च बालश्च जड-

---

किमुपेक्षया सर्वत्रैव व्यवहारप्रवृत्त्ययोग्यता स्यात्? सत्यम्—**आधिसीमोपेत्या-दि ॥ २५ ॥**

---

**बालंभट्टी**

त्यर्थः। अपोद्यते बाध्यते,—उक्तवचनबलात्फलमूल्यदाने प्राप्ते केवलं फलहानिस्तत्रानेन विधीयत इति तदपवादत्वमस्येति भावः। अत एवाऽऽह—राजदण्ड इति। तद्वचनबोधित इत्यर्थः। अनागमेति,—स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः वचने[4] तत् क्रियाविशेषणम्। अपेति,—तद्वदेतद्विषयेऽपवादाभावाच्चेत्यर्थः। स्वोक्तमुपसंहरति—तस्मादिति। अन्योपेक्षा नापराध इति सूचयन्नाह—स्वाम्युपेति। नष्टमिति,- स्वरूपत इति भावः। व्याख्यातमिति,—उक्तवत्तस्यापि फलहानिपरतया सुयोज्यत्वात् ॥ २४ ॥

यथाश्रुतप्रकारद्वयेऽप्यनुपपत्तेराह—आधिश्चेत्यादिना। लघ्वक्षरत्वाज्जडस्य पूर्वनिपातः। अत्र द्वन्द्वस्वरूपप्रतिपादने तात्पर्यं न तत्क्रमे[5]। तथा च जडेत्यादि संसाध्य[6], तेन सहोपनिक्षेपादिभिर्व्युत्क्रमेण त्रिवारं द्वन्द्वः कार्यः। यथाश्रुते तु आधेर्घ्यन्तत्वात्

---

१ छ. अपोह्यते। क. कीत्यनेनापोद्यते। क. २ क. लक्षणत् स्वा प०। ३ क. नष्टं फल। ४ अनागमेतुयो भुंक्ते इतिवचने इति च पाठः। अनागममित्येतत् इति च पाठः। ५ फ नं तु क्रमे पूर्वनिपातस्स्यादति भावः। ६ जडश्च बालश्च तयोर्धने जडबालधने, उपनिक्षेपश्च जडबालधने च उपनिक्षेपजडबालधनानी सीमा च उषनिक्षेपजडबालधनानि च सीमोपनिक्षेपजडबालधनानि आधिश्च सीमोपनिक्षेपजडवालधनानि च अधिसीमोपनिक्षेपजडबालधनानि इति द्वंद्वः कार्य इति भावः।

बालौ तयोर्धने जडबालधने; आधिसीमोपनिक्षेपाश्च जडबालधने च आधिसीमोप-
निक्षेपजडबालधनानि, तैर्विना। उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्षणार्थं
परस्य हस्ते निहितं द्रव्यम्; यथाऽऽह नारदः—"स्वं द्रव्यं यत्र विस्रंभान्निक्षिपत्य-
विशङ्कितः। निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः॥" इति। उपनिधानमुपनिधिः।
5 आध्यादिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेः[२], धनस्य दशभ्यो वर्षेभ्य ऊर्ध्वमप्युप-

आध्यादिषु भुक्तिर्नैवापहारकारणमित्यभिप्रायः। आधिस्तावत् भोगार्थैव क्रियते। सीमा च प्रतिजागर्तृदोषादनेकधा भुज्यते, निक्षेपं च समर्पितत्वात्, जडबालयोरसामर्थ्यात्, उपनिधिं वक्ष्यति, राजधनमनेकगामित्वात्, स्त्रीधनं चास्वातन्त्र्यात्, श्रोत्रियाणां व्यापारा-न्तरापेक्षया। तथेति प्रकारार्थः। यत्रैव स्वामित्वाद्दतेऽपि भुक्तिः संभाव्यते तत्कृतोपभोगे-

## सुबोधिनी

उपनिक्षेपस्योप[३]निधेश्च भेदं[४] दर्शयति—उपनिक्षेपो नामेति। एतदुक्तं भवति—रूपसङ्ख्ये प्र[५]दर्शयित्वा यत् दीयते, असावुपनिक्षेपः, अप्रदर्शयित्वा रक्षणार्थं यत् दीयते असावुपनिधिरिति। नारदवचने विस्रम्भादिति पदेन रूपसङ्ख्याप्र[६]दर्शनं द्योत्यते। उप[७]चयहानि

## बालंभट्टी

पूर्वनिपातसम्भवेऽपि तृतीयद्वन्द्वे जडेत्यादेः पूर्वनिपातः स्यात्। अनित्यत्वं त्वग तिका गतिः। अत उक्तैव गतिर्न्याय्या। उपनिधित उपनिक्षेपस्य भेदं दर्शयन् तद-र्थमाह—उपनिक्षेपो नामेति। तथा च रूपसंख्येऽप्रदर्शयित्वा रक्षणार्थं यद्दीयते स उपनिधिरिति बोध्यम्। विस्रम्भात् विश्वासात्। अनेन रूपसंख्याप्रदर्शनं सूच्यते। अविशङ्कित इत्यनेन रक्षणार्थत्वं सूच्यते। तथाऽपि निधीति भिन्नं वाक्यं सामान्ये नपुसकं—विना योगे द्वितीयैकवचनान्तम्। तद्विना चेत्यर्थः। तद्व्यर्थस्तु उक्तः। योगार्थमाह—उपनिधानमिति। अभ्यर्हितत्वविवक्षया राजशब्दस्य पूर्वनिपातः। धनैरपीत्यत्र विनेत्यस्यानुषङ्गो बोध्यः। इदं च पूर्ववाक्येन पश्यत इत्यनेनान्वेति। तथा च तदेकवाक्यता शाब्दी। अथ तात्पर्यार्थमाह-आध्यादिष्विति। अब्रुवत इति छेदः। अपिना अन्यसमुच्चयः। अग्रिमापिना प्राक्त्वसमुच्चयः। उपचयेति फलहानिर्न भवतीत्यर्थः।

१ क. ङ. छ. विश्रम्भा०। २ ख. विंशतेरूर्ध्वं धनस्य। ३ थ. मपि हानिर्न। त. उप इति नास्ति। ४ थ. द. पनिधेर्भेदं। ५. द 'प्रदर्शयित्वा' इत्यादिः। 'क्षेपः' इत्यन्तो नास्ति ६ द. ख्ययोरप्रः। 'प्रदर्शयित्वा' इति लेखकप्रमादः, 'समासेऽनञ्पूर्वेक्त्वोल्यप् (७-१-३९) इति क्त्वोल्यपि प्रदर्श्येतिरूपस्य साधुत्वात्। एवमदर्शयित्वेत्यत्रापि द्रष्टव्यम्। ७ उपचयहानिरिति मिताक्षरायां त पठ्यते। ८ फ. एतदर्थं।

चयहानिर्न[1] भवति,—पुरुषापराधस्य तथाविधस्याभावात्, उपेक्षाकारणस्य[2] तत्र तत्र संभवात्। तथा हि। आधेराधित्वोपाधिक एव भोग इत्युपेक्षायामपि न पुरुषापराधः। सीम्नश्चिरकृततुषाङ्गारादिचिह्नैः सुसाध्यत्वादुपेक्षा[3] संभवति। उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात्[4] प्रतिषेधातिक्रमोपभोगे च सोदयधनलाभादुपेक्षोपपत्तिः[5]। जडबालयोर्जडत्वाद्बालत्वादुपेक्षा युक्तैव; राज्ञो बहुकार्यव्याकुलत्वात्; स्त्रीणामज्ञानात्, अप्रागल्भ्याच्च; श्रोत्रियस्याध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षा युक्तैव। तस्मादाध्यादिषु सर्वत्रोपेक्षाकारणसंभवात्समक्षभोगे निराक्रोशे च न कदाचिदपि फलहानिः॥ २५॥

आध्यादिषु दण्डविशेषप्रतिपादनार्थमाह—

**आध्यादीनां विहर्तारं धनिने दापयेद्धनम्।**
**दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा॥ २६॥**

नापहारकारणमित्यर्थः॥ २५॥

यतश्चाध्यादिषु निमित्तान्तराद्भुक्तिः ततः—**आध्यादीनामिति॥ २६॥**

## सुबोधिनी

र्नभवतीति। फलहानिर्न भवतीत्यर्थः॥ २५॥

## बालंभट्टी

अत्रा हेतुमाह—पुरुषेति। स्वामीत्यर्थः। स्वल्पसत्वेऽपि न दोष इत्याह—तथाविधेति। येनेदृशं फलं तादृशःइत्यर्थः। अत्र हेतुमाह—उपेक्षेति। तत्र तत्र,—आध्यादिषु। आधित्वोपाधिका एवेति,-आधित्वनिमित्तका एवेत्यर्थः। चिरकृतेति पूर्वतरंकृतेत्यर्थः। चिरधृतेतिपाठान्तरम्[6]। सुसाध्यत्वादिति पाठः। मौलक्रमबोधने तात्पर्यादाह—उपनिक्षेपोपेति। अन्यथाऽल्पाच्त्वात् पूर्वानिपाते वैपरीत्यं स्यात्। प्रतिषिद्धत्वादित्यस्योपेक्षोपपत्तिरित्यत्रान्वयः। प्रतिषेधमुल्लङ्घ्य भोगे क्रियमाण अह—प्रतीति। षष्ठीतत्पुरुषपूर्वकतृतीयातत्पुरुषः। चो व्युत्क्रमे—लाभाच्चेत्यर्थः—व्याकुलत्वादिति। उपेक्षायुक्तैवेत्यस्यानुषङ्गः। एवमग्रेऽपि। तदर्थेति। विचारानुष्ठानयोर्द्वन्द्वं कृत्वा तदर्थशब्देनषष्ठीतत्पुरुषं कृत्वा पुनः त्रयाणां द्वंन्द्वं कृत्वा तृतीयातत्पुरुषः इति भावः। उपसंहरति—तस्मा-

१ क. हानि भवति। क. २ स्य तत्र संभवात्। ३ ख. ग. साध्यत्वा०। ४ क. प्रतिषेधात्। ५ ज. सुसाधनत्वादुपेक्षोपपत्तिः ख. सोदयफललाभ०। ग. सोदयफलाभावाद्। ६ ब. मृतेति।

[1]यः आध्यादीनां श्रोत्रियद्रव्यपर्यन्तानां चिरकालोपभोगबलेनापहर्ता[2] तं[3] विवादास्पदीभूतं धनं स्वामिने दापयेदित्यनुवादः । दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः । यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न संभवति तथाऽपि

**धनिने धनं दत्त्वा अनन्तरं राज्ञे तत्समं देयम् । अपि वा शक्त्युपेक्षमित्यर्थः; यस्माच्च भुक्तमात्रेण नार्थनाशः ॥ २६ ॥**

## सुबोधिनी

विवादास्पदीभूतं द्रव्यं स्वामिने दापयेदित्यनुवाद इति । "निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।" इत्यत्रास्यार्थस्य विहितत्वादित्य[4]भिप्रायः । दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति। नन्वत्र विधिरनुपपन्नः,—"राज्ञे च तत्समम्" इत्यत्रैव प्रकृतधनसमदण्डस्यापि विहितत्वात् । उच्यते । "राज्ञे च तत्समम्" इत्यत्र ऋणा[5]दानमात्रे विधिः न सर्वत्र[6] विषयेषु। भवतु वा सर्वविषयत्वम् ; तथाऽपि न तत्र विधिः। तत्र तत्र विहितस्य "राज्ञे च तत्समम्" इत्यत्रानूद्यमानत्वान्न काचिदनुपपत्तिः । ननु सर्वेष्वपि विवाद[7]पदेषु तत्समदण्डविधिर्न युक्तः गृहादिविवादेषु गृहान्तरादिरूपदण्डदानस्याशक्यत्वादित्याशङ्क्य सत्यमेवं, तादृशे[9] स्थले "तत्समम्[10]" इति तत्र तत्र वक्ष्यमाणदण्डो विधीयते इत्याह—यद्यपि गृहक्षेत्रादिष्विति। ननु तर्ह्यत्र वक्ष्यमाणस्थले चासावेवार्थो विधीयत

## बालंभट्टी

दिति । कदाचिदिति विंशतेः पूर्वं तदनन्तरं चेत्यर्थः ॥ २५ ॥

आध्यादि अपह्रियमाणेषु संकोचे मानाभावादाह—श्रोत्रियेति। अपहारे निमित्तमाह—चिरेति । धनमित्यस्यार्थमाह—विवादेति। अनुवाद इति। "निह्नवे भावितो दद्यात्" इत्यनेनैवास्यार्थस्य विहितत्वात्तत्र दानस्य विहितत्वेन दानेनैव दापनस्याप्याक्षिप्तत्वादिति भावः। तृतीयपदार्थमाह—दण्डं चेति। तत्सममित्यस्य व्याख्या—विवेति । अनुषङ्गेणाऽऽह—दापयेदिति। विधिरिति । प्राड्विवाकादिरिति शेषः। न[11]न्वयमपि विधिर्ननिह्नवे इत्यत्र राज्ञे च तत्सममित्यनेनैव प्रकृतधनसमदण्डस्यापि विहितत्वादिति चेन्न । तस्य ऋणादानमात्रविषयत्वेनासर्वविषयत्वेन प्रकृतेऽप्राप्तेः । सर्वविषयत्वेऽपि तत्र तत्र विहितदण्डस्य राज्ञे च तत्सममित्यनेनानुवादात् । अतो न दोषः। प्रतिपादितमिदं तत्रैव । तदेतत् ध्वनयन्नेवाह—यद्यपीति ।

१ ख. ग. ज. 'यः' इति नास्ति। २ ख. ग. ज. हर्तारं विं । ३ त. थ. तं विवा । ४ थ. 'इत्यभिप्रायः' इत्यादि 'विहित्वाद्' इत्यन्तो नास्ति। ५ त. द. त्र दान। ६ थ. द. सर्ववि । ७ थ. देषु । ८ थ षयेषु । ९ त. थ. शस्थले । १० थ. द. ति च तः । ११ फ. न न्वयमपि।

" मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा ।" [1]इत्यादिवक्ष्यमाणो दण्डो द्रष्टव्यः । अथ तत्समदण्डेनापहर्तुर्दमनं न भवति बहुधनत्वेन, तदा शक्त्यपेक्षं धनं दापयेत्—यावता तस्य दर्पोपशमो भवति तावद्दापयेत् । " दण्डो दमनादित्याहुः, तेनादान्तान् दमयेत् । " इति[2] दण्डग्रहणस्य दमनार्थत्वात् । यस्य तु तत्सममपि द्रव्यं नास्ति सोऽपि यावता पीड्यते तावद्दाप्यः । 5 यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना दमनीयः । तथा च

## सुबोधिनी

इत्यन्यतरस्याविधित्वं स्यादिति चेन्न । वक्ष्यमाणस्थले दण्डस्वरूपविधिः, अत्र तु तत्र प्राप्तदण्डानुवादेन दापनविधिरित्युभयत्र[3]विधेयसम्भवान्नान्यतरस्याविधित्वम् । 'ननु धिक्कारस्य दण्डत्वमेव कथम्? सिद्धे वा दण्डत्वे तद्विधानं कुतोऽवगम्यते?'—इत्याशङ्क्योभयत्र मनुवचनं

## बालंभट्टी

गृहान्तरादिरूपदण्डदानस्यासम्भवेनाशक्यत्वात्।तथा चाध्यादिसर्वविषयत्वमेव तस्यानुपपन्नमिति भावः । आदिना " क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः।" इत्युत्तरार्धपरिग्रहः—दण्ड इति । तत्रेति शेषः । तथा च तत्सममित्यनेन तादृशे स्थले वक्ष्यमाण एव दण्डो विधयित इति भावः। नन्वेवमत्राग्रे चैकस्यैवार्थस्य विधानादन्यतरस्याविधित्वं स्यादिति चेन्न। वक्ष्यमाणस्थले दण्डस्वरूपविधिरत्र तु प्राप्तदण्डानुवादेन दापनविधिरित्येवमुभयत्र विधिसंभवात् । तुर्यपादार्थमाह—अथेति । बह्विति पूर्वान्वयि । शक्त्यपेक्षत्वस्य मर्यादामाह—यावतेति । एतल्लाभोपायमाह--दण्ड इति । तेन दण्डेन " दण्डेति" इत्यत्र गौतमीये दण्डग्रहणस्य दमनार्थत्वस्योक्तत्वात्।तथा च तस्य योगरूढत्वेन योगवशेन तल्लब्धमिति भावः। अनेनैवाधिकस्येव न्यूनस्यापि विनिगमका भावात्तथोक्त्या संग्रहः इत्याह—यस्य त्विति। एवमेवानेनैव लब्धं विशेषान्तरमाह—यस्य पुनरिति,--यस्य त्वित्यर्थः।ननु धिग्दण्डादेर्दण्डत्वमेवादावसिद्धं, सिद्धेऽपि वा दण्डत्वे तद्विधिः कुतोऽवगम्यत इत्यत आह—तथा चेति । धिग्दण्डो [4]धिगिति कुत्सनं, वाग्दण्डः परुषशापवचनात्मकः, धनदण्डो धनापहारः, वधदण्डः शारीरो बंधरोधादिर्जीवितान्तः, एते च चतुर्विधा दण्डा व्यस्ता एकैकशः समस्ता द्वित्रा स्त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः।तदुक्तं मनुना"वधेनापि यदा त्वेतान्निगृहीतुं न शक्नुयात्।तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम्॥" इति। वधेनापि ताडनेनापि।अपिरन्यसमुच्चये। उक्तक्र-

---

१ व्य०, १५५.। २.—गौ० ११.२८. । ३ थ. 'विधेय' इत्यादि 'न्नोभयत्र' इत्यन्तं नास्ति । मतस्ये इति च पाठः । ४ धिक् धिगिति च पाठः ।

मनुः—" धिग्दण्डं* प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डमतः

## सुबोधिनी

प्रमाणयति—धिग्दण्डं प्रथमं कुर्यादिति। अत्र प्रथमतदनन्तरतृतीयादयः शब्दा धिग्दण्ड वाग्दण्डधनदण्डवधदण्डानां मध्ये पूर्वपूर्वापेक्षयोत्तरोत्तरस्याधिक्यप्रतिपादकाः, न पुनः

## बालंभट्टी

मेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः। तथा चात्र प्रथमतदनन्तरतृतीयातः परशब्दाः धिग्दण्डधनदण्डवधदण्डानां मध्ये पूर्वपूर्वापेक्षयोत्तरोत्तरस्याधिक्यप्रतिपादकाः न तु सर्वेष्वप्यपराधेषु प्रथमादिक्रमेण कर्तव्यता प्रतिपादका इति बोध्यम्। अयं पाठः प्रागुक्तस्य "धिग्दण्डस्त्वथ" इति मूलस्य संवादी । मेधातिथिना तु आद्ययोर्व्यत्ययेन पाठं कृत्वा यो गुणवानापत् प्रथममेवापराधं कृतवान् स वाचा निर्भर्त्स्यः । साधुगुणवानसि मा पुनरेवं कार्षीरिति । तथोच्यमानो यदि ततो न निवर्तते तदा धिग्दण्डेन कुत्साविशिष्टैः परुषवचनैर्निर्भर्त्स्यः । एवमग्रेऽपीति व्यातम्। नारदेन तु दण्डद्वैविध्यमुक्तम्। तथा हि—"शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः। शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः । काकिन्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च॥" इति । द्विविधोऽप्यपराधानुसारेणानेकधा भवतीत्याहस्म स एव, "शारीरो दशधा प्रोक्तः अर्थदण्डस्त्वनेकधा।"इति इदञ्च ब्राह्मणादिसर्वविषयम्। न च "राजा सर्वस्येष्टे ब्राह्मण वर्जम्।"इति गौतमान्न ब्राह्मणा दण्ड्या इति वाच्यम्।तस्य प्रशंसार्थत्वात्।न च "षड्भिःपरिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिःकार्यश्चापरिवाद्यश्चा परिहार्यश्च।" इति तस्य स्वोक्तिविरोधस्तथासतीति वाच्यम्। अस्यैतदव्यवहितपूर्वतनेन स्वेनैव स एष बहुश्रुतो भवति लोकवेदवेदांगविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृतिश्चाष्टाचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयिकाचारिकेष्वभिविनीत इत्यनेन प्रतिपादित बहुश्रुतविषयत्वेन ब्राह्मणमात्रविषयत्वाभावात् प्रतिपादितमिदमधस्तात् व्याख्यातं च । तदतत् ध्वनयन्

* "वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम्" इति सर्वैर्मनुस्मृतिटीकाकारैरादृतः पाठः ।

परम् ॥" इति । वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानां नवधा दर्शितः । तथाऽऽह मनुः—"दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् । त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥ उपस्थमदुरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥" इति । एतेषां यन्निमित्तापराधस्तत्रैवोपस्थादौ निग्रहः

## सुबोधिनी

सर्वेष्वप्यपराधेषु प्रथमादिक्रमेण कर्तव्यताप्रतिपादकाः । दशस्थानानिदण्डस्येति । त्रिषु वर्णेषु क्षत्रियवैश्यशूद्रेषु । यानि दण्डस्थानानि तानि दशेत्यन्वयः । एतेषां च यन्निमित्त इति । एतेषामुपस्थादीनां मध्य इत्यर्थः । अकिञ्चनं धिग्दण्डं दण्डयेदित्युक्तम् । तत्रैव पक्षान्तरे

## बालंभट्टी

विशेषमाह—वधदण्डोऽपीति । णानां णानान्त्वं क्वचित् तथैव पाठः । तत्र मानमाह—यथाऽऽहेति । त्रिषु क्षत्रियवैश्यशूद्रेपु वर्णेषु यानि दण्डस्य स्थानानि दश स अब्रवीदित्यर्थः । इदमुपलक्षणमनुलोमादेरपि । तदेतत् ध्वनयन्नाह—अक्षत इति । शारीरसकलविध-दण्डरहित इत्यर्थः। व्रजेत् राजगृहात् पुराद्वा, पञ्चमं स्थानं—अव्यवहितेनान्वेति स्थानशब्दोऽत्र विषयपरः। तत्तत् प्रदेशे पीडनीय इति तात्पर्यम् । न च धनदण्डस्य पृथग्विहितत्वात् शारीरभेदमध्ये तदुक्तिः पुनरयुक्ता संबद्धा चेति वाच्यम् । धनकृतापराधे तद्दण्ड एव नान्य इत्येतदर्थः। पुनस्तदुक्ते तन्मध्ये लेखस्तु तुल्यत्वप्रतिपादनाय। यद्वा तत् पीडया शारीरपीडा परोऽयमन्य एव ततो धनदण्डादिति प्रकारान्तरमत्र मेधातिथिनोक्तम् तत्तदेव बोध्यम् । अव्यवस्थानिरासायोक्तेस्तात्पर्यमाह—तेषां चेति। उपस्थादीनां मध्ये इत्यर्थः। उपस्थमत्रस्त्रीपुंसयोःप्रजोत्पादकम्। यत्र च दण्डविशेषो नाम्नातस्तत्र यस्य यत् कृतापराध स्स तत्रैव पीडनीयः तत्रागम्यागमने उपस्थनिग्रहः, अभक्ष्य भक्षणे उदरनिग्रहः, आहारनिवृत्यादिना, वाक्पारुष्ये जिह्वायाः, स च छेदः, चौर्ये हस्तयोः, पादजबलवद्व्यतिक्रमात्पादयोः, राजदारदिदृक्षायां चक्षुषोः, तदनुलेपनाद्याजिघ्रतो नासिकाया., राजादिरहस्यं भित्त्याद्यन्तरे शृण्वतः कर्णयोः, महापातकिनो मारणं देहस्येतिबोध्यः । ननु आध्याद्यापहारे महादोषे अकिंचनस्य धिग्दण्डाद्युक्तमयुक्तं, तस्य अस्वल्पाराधविषयत्वात्रतः तत्रैव पक्षान्तरेऽप्याह—क्रमेति।

१.—८. १२९.। २.—८. १२४—५.। 'नवधा दर्शित इति । ३ नवधा नवप्रकारेण प्रसिद्ध-धनव्यतिरेकेण नवप्रकार इत्यर्थः' इति अधिकपाठो 'दश' इत्यतः प्राक् ख. ग. पुस्तकयोर्दृश्यते । किन्त्वत्र पाठे नवप्रकारत्वोपपादनक्लेशः स्पष्टः । ४ लेखस्तु तत्तु इति च पाठः । ५ फ. तत्तत एव फ. प्रजननोत्पादकं । ६ पादजो यो बलवद्व्यतिक्रमः इत्यर्थः ।

कार्य इति द्रष्टव्यम् । कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः; यथो-क्तं कात्यायनेन—"धनदानासहं बुध्वा स्वाधीनं कर्म कारयेत् । अशक्तौ बन्ध-नागारं प्रवेश्यो ब्राह्मणादृते॥" इति। ब्रह्माणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि प्रयो-ज्यानि; यथाऽऽह गौतमः—"कर्मवियोगविख्यापननिर्वासनाङ्ककरणान्यवृत्तौ—" इति[1] । नारदेनापि—"वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो 5 दण्ड उत्तमसाहसः॥ अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः।" इत्युक्त्वोक्तम्—"वधा-दृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥ शिरसो मुण्डनं दण्डस्तस्य निर्वासनं

## सुबोधिनी

अप्याह—कर्म वा कारयितव्य इत्यादिना । यथाऽऽह गौतमः—कर्मवियोगेत्यादि । अस्यार्थः—अवृत्तावन्यायिनि ब्राह्मणे (व्यापारनिरोधा) न्यायत् प्रख्यापनादीनि कर्तव्या-नीति ॥ २६८ ॥

विशिष्टभोगस्य स्वत्वे प्रामाण्यमभिधारयन् स्वत्वोत्पादकहेतोरागमस्य प्राबल्यं दर्श

## बालंभट्टी

अत्र क्रमोऽप्येवमेव बोध्यः,-मेधातिथ्युक्तेः, अग्रे शक्ताविल्युक्तेश्च । अत्र मानमाह—यथोक्त-मिति । धनेति । सर्वथा धनदानाक्षमं ज्ञात्वा स्वाधीनं कर्मकारयेत् इत्यर्थः । अशक्तौ कर्मकरणाशक्तौ—ब्राह्मणादृते इत्युभयोः शेषे इति ध्वनयन्नाह—ब्राह्मेति । पुनः तु। अधिकरणस्य शेषत्वविवक्षया षष्ठी । प्रयोज्यानीत्यस्य कर्त्तव्यानीत्यर्थो वा। अवृत्ताविति । अवृत्तौ दुराचारे अन्यायिनि ब्राह्मणे स्वव्यापारनिरोधो न्यायप्रख्यापनादीनि कर्त्तव्यानीत्यर्थः । ब्राह्मणे इति प्रकृतत्वाल्लब्धम्—नापीति । उक्त्वोक्तमित्यत्रान्वयः । वधः प्राणवियोगानु-कूलव्यापारः । निर्वासनेत्यस्य नित्यसापेक्षत्वेन पुरादिति विशेषणान्वितत्वेऽपि समासः—तदङ्गेति । यदङ्गकृतोऽपराधस्तदङ्ग इत्यर्थः । वधादृते इति । "एष दण्डविधिस्स्मृतः" इत्यस्यानुषङ्गः । तदेव विशदयति—नवामिति । वधानुकल्पमाह—शिरस इति । अत एव मनुः "अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति । मौण्ड्यं प्राणान्तिको दण्डो ब्राह्म-

१.—१२. ४७—८. । २.—१४. ८. । ३ त. द.दिना । ४ द. पापप्रकाराख्या' । ५ ब. धोन्या । ६ नारदेनापीत्यत्र नापीति प्रतीकग्रहणम् ।

पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च[१] ॥" इति[२] । अङ्कने च व्यवस्था दर्शिता—"गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कार्यं

## बालंभट्टी

णस्य विधीयते ॥ इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् । न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ॥ राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् । न ब्राह्मणवधात् भूयानधर्मो विद्यते भुवि॥तस्मादस्य वधं राजा मनसाऽपिन चिन्तयेत्।"इति। यमोऽपि—"सर्वेषामेव वर्णानाम् अन्योन्यस्यापराधिनाम् । शारीर धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥ जगत्सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् । तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत्॥ अवध्यान् ब्राह्मणान्प्राहुः सर्वपापेष्ववस्थितान् । यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत्॥"इति। सुमन्तुरपि—"नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्। " इति। बृहस्पतिरपि—"महापातकयुक्तोऽपि न विप्रो वधमर्हति । निर्वासनाङ्कनं मौण्ड्यं तस्य कुर्यान्नराधिपः॥"इति। "वधादृते ब्राह्मणस्य दण्डो भवति कर्हिचित् । अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकीस्मृतिः ॥" इति स्मृत्यन्तरमपि । पुरादिति । अत एव मनुः—"असंभोज्या असंयाज्या असंपाद्या विव हनाः। चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥ ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः । निर्दयानिर्नमस्कारास्तन्मनोरनुशासनम् ॥" इति । ललाटे चेति । अत एव बृहस्पतिः—"हस्तांघ्रिलिङ्गनयनं जिह्वाकर्णौ च नासिका । ग्रीवा पादार्द्धसंदंशं[३] ललाटोष्ठं गुदं कटिः ॥ स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश । ललाटेऽङ्क ब्राह्मणस्य नान्यो दण्डो विधीयते ॥" इति । प्रयाणमिति । अत एव यमः "ब्राह्मणस्यापराधेषु चतुर्ष्वेवं[४] विधीयते । शिरसो[५] मुण्डनं दण्डः पुरान्निर्वासनं तथा ॥ प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च । ललाटे चाङ्ककरणं कुर्याद्राजा यथाविधि ॥" इति—दर्शितेति,—मनुनेति शेषः । गुर्विति । "ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः । एते सर्वे पृथक् ज्ञेया महापातकिनो नराः॥ चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वतां । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥" इत्यादिः— सुरेति । सुरासंबन्धी यो ध्वजः स कार्य इत्यर्थः । श्वपदं शुनः पदं । अशिराः कबन्धः "ब्राह्मणस्य च ब्रह्महत्या गुरुतल्पसुवर्णस्तेयसुरापानेषु कबन्धभगश्वपादध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा विषयान्ते निर्वासनम् । " इति बोधायनः । "ब्राह्मणस्यापराधेषु[६] चतुर्ष्वेव विधीयते। गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने॥ गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कृत्वा शिखिपिण्डेन पूरयेत् ॥ विशिराः पुरुषः कार्यो ललाटे द्विजघातनः । असंभाष्यस्तु कर्त्तव्यस्तन्मनोरनुशासनम् ॥ " इति नारदः । अस्यापवादोऽपि मनुनो-

१ क ज. वा। २ ना० १४. ९.—१०. । ३ फ संदर्श । ४ ब. प्रमाणयति । ५ चतुर्थेव । ६ ब. णेष्व ।

ब्रह्महर्[1]ण्यशिराः पुमान् ॥" [2] इति । यत्तु " चक्षुर्निरोधो ब्राह्मणस्य " [3]इत्यापस्तम्बवचनम् , ब्राह्मणस्य पुरान्निर्वासनसमये वस्त्रादिना चक्षुर्निरोधः कर्तव्य इति तस्यार्थो न चक्षुरुद्धरणम् , "अक्षतो ब्राह्मणो व्रजेत्[4] ।" "न शारीरो ब्राह्मणे दण्डः ।" [5]इत्यादिमनुगौतमवचनविरोधात्। इत्यलं प्रसङ्गेन ॥ २६॥

बालंभट्टी

क्तः—"प्रायश्चित्तं तु कुर्वाणाः ९वें वर्णायथोदितम् । नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तम साहसम् ॥ आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः । निर्वास्यो वा भवेत्द्राष्टात्सद्रव्यः सपारिच्छदः ॥ " इति । परिच्छदशब्देन पुत्रदारभृत्यहस्त्यश्वादिसम्पदुच्यते । सपरिग्रह इति पाठान्तरेऽप्येवं तदङ्गच्छेदोऽपि ब्राह्मणस्य नास्तीति प्रतिपादयन् विरोधं परिहरति—यत्त्वि ति । स्तम्बेनोक्तमिति—स्तम्बवचनमिति पाठान्तरम् । न चक्षुरुद्धेति । न चक्षुषो-रुद्धरणं तस्य इत्यर्थः । क्वचित्तथैव पाठः । मनुं प्रागुक्तमाह—अक्षत इति । गातममाह—न शारीरो ब्राह्मणे दण्ड इति । प्रथमादिना प्रागुक्तमनुगौतमवचनान्तरपरिग्रहः । द्वितीयादिना—" न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः । तपसा चेज्यया चैव ब्राह्मणः पूज्यते सदा ॥ " इति हारीतस्य । " सर्वत्र त्रयाणां वर्णानां धनहारको वधबन्धक्रियारू-पयोगो महत्स्वपि पातकेषु विवासकरणं ब्राह्मणस्य प्रायश्चित्तानि विशोधनमपीज्यो हिं ब्राह्मण" इति शङ्खलिखितयोः, प्रागुक्तस्मृतीनां च परिग्रहः। सर्वस्वहरणमपि ब्राह्मणस्य ना-स्ति—" सद्रव्यः सपरीच्छदः " इत्यग्रे " इतरे कृतवन्तस्तु पापान्येतान्यकामतः । सर्वस्व हारमर्हन्ति कामतस्तु प्रवासनम्॥ " इति मनूक्तेस्त्रयाणां वर्णानां धनापहार वधबन्धनक्रिय विवासनाङ्ककरणं ब्राह्मणस्येति शङ्खोक्तेश्च। तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसा-हचर्यात् शारीरस्त्ववरोधादिरिति प्रागुक्तनारदीये वधसर्वस्वहरणयोः पाठादिति । तस्मात् ब्राह्मणस्य शारिरः सर्वोऽपि दण्डो नास्ति कदाचिदपि प्रागुक्तस्मृतिकदम्बात्—" आचार्यं च प्रवक्तारं पितरं मातरं गुरुं । न हिंस्यात् ब्राह्मणं चैव सर्वांश्चैव तपस्विनः ॥" इति मनूक्तेश्च धनदण्डमध्येसर्वस्वहरणं नास्ति तदन्यधनदण्डस्त्वस्त्येव । समग्रधनामिति त्वकृतसाहस-

१ क. ग. ब्रह्महन्याशिराः । २.—९. २३७. । ३.—२. २७. १७. । चक्षुनिरोध स्त्वेतेषु ब्राह्मणस्य इति च पाठः । 'चक्षुनिरोधः' इति रेफलोपश्छान्धसः । ४.—८. १२३. । ५.—१२. ४६.। ६ 'ब्राह्मणदण्ड' इति च पाठः। ७ ब. निर्वासोभावयेत् । ८ ब. पूतये। ९ फ. ब. हारण हरण ।

स्वत्वाव्यभिचारित्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम्[1]। भोगमात्रस्य स्वत्वव्यभिचारित्वात् कीदृशो भोगः[2] प्रमाणमित्यत आह—

**आगमोऽभ्यधिको भोगाद्विनापूर्वक्रमागतात् ।**

---

**आगमोऽभ्यधिक इत्यादि ॥ २८ ॥**

---

### बालंभट्टी

विषयम्। "ब्राह्मणे साहसःपूर्वः" इति मनूक्तमप्येवम्। तथा च धिग्दण्डवाग्दण्डौ विवासनाङ्ककरणगर्दभप्रयाणानि च पर्यवसितानि। इदमपि प्रायश्चित्तानिच्छोः। तदिच्छोस्तु तदेव नैतत्। एवं बहुश्रुतस्यापि न किंचित्, किन्तु स्वयमेव निष्कृतं कुर्यात्। साऽपि स्वल्पा प्रायश्चित्तप्रकरणे स्फुटीभविष्यति। अत एवान्यत्रापि साक्षिप्रकरणे मूले उक्तम् "पृथक्पृथक्दण्डनीयाः कूटकृत्साक्षिणस्तथा। विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ यः साक्ष्यं[3] श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः। स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥" इति। स्तेयप्रकरणेऽपि "सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्।" इत्युक्तम्। मनुनाऽप्युक्तम् "कौटसाक्ष्यन्तु कुर्वाणान् त्रीन् वर्णान् धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥" इति। अस्यार्थोऽग्रे स्फुटीभविष्यति। अत्र प्रवास ओष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं चेति यथायथं बोध्यम्। विवासो निष्कासनं नग्नीकरणं वा गृहभङ्गो वेति यथायथं बोध्यम्। तत्रेयं व्यवस्था,—लोभादिकारणविशेषपरिज्ञानेऽनभ्यासे च[4] ब्राह्मणस्यापि तत्र तत्रोक्तार्थदण्ड एव। अभ्यासे त्वर्थदण्डो विवासनं च। तत्रापि जातिद्रव्यानुबंधाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या। लोभादिकारणविशेषपरिज्ञाने नाध्यासे चाल्पविषये कौटसाक्ष्ये ब्रह्मणस्यापि क्षत्रियादिवदर्थदड एव। महाविषये तु देशान्निर्वासनमेव। अत्राप्यभ्यासे सर्वेषामेव मनूक्तं बोध्म्। न च समग्रधनमित्याद्युक्त्या-ब्राह्मणस्यार्थदण्डो नास्तीति वाच्यम्। अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे नग्नीकरणगृहभङ्गकरणविप्रवासनं दण्डाभावो वा प्रसज्येत। यतः चतुर्णामपीति प्रागुक्तस्मृतेः "सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां[5] बलात् व्रजन्।" इति स्मृतेश्चेति दिक्। कर्मकारण बन्धनागारप्रवेशावपि ब्राह्मणस्येति सिद्धम्। तदेतदभिप्रेत्याह—इत्यलं प्रसङ्गेनेति ॥२६॥

अव्यवहितेन संगत्यभावात् व्यवहितेन संगतिमाह--स्वत्वेति। "पश्यतोऽब्रुवतः" इत्य

१. ग. ज. प्रमाणत्वमुक्तम्। २. क. भोगः स्वत्वे प्रमाणं। ३. यस्साक्ष्याश्रावितो। ४ क. ज्ञानेऽभ्यासे च। ५ क. गुप्तां विप्र।

स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः। स भोगादप्यधिको बलीयान्,-स्वत्वबोधने भोगस्यागमसापेक्षत्वात्; यथाऽऽह नारदः—"आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामण्यं नैव गच्छति॥" इति[2]। न च भोगमात्रात्स्वत्वागमः, परकीयस्याप्यपहारादिनोपभोगसंभवात्। अत एव "भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः॥" इति[3] स्मर्यते। अतश्च सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति

---

आगमो लेख्यं तद्भुक्तेः बलीयः—निश्चितत्वात्, अन्यथाऽपि भुक्त्युपपत्तेः। पूर्वक्रमे तु सति भुक्तेर्बलीयस्त्वं—लेख्यान्तरनिरस्तस्यापि लेख्यप्रमादतः स्थितिसंभवात्। त्रिपूरुष-

---

## सुबोधिनी

यति—स्वत्वहेतुः प्रतिग्रहक्रयादिरिति। आगमस्य भोगापेक्षया बलीयस्त्वे हेतुमाह—स्वत्वावबोधने भोगस्येति। अयमर्थः—भोगः स्वत्वे प्रमाणं भवितुं प्रतिग्रहादिकमपेक्षते। प्रतिग्रहादिकं तु भोगं नापेक्षते। एवं च सापेक्षनिरपेक्षयोर्निरपेक्षं बलीय इति न्यायेनाग-

## बालंभट्टी

श्चेति भावः। भोगमात्रस्य केवलभोगस्य। एवमग्रेऽपि। आद्यपार्दार्थे[4] शाब्दम्। स्वत्वोपपादक हेतोरागमस्य भोगात् प्राबल्यरूपं विशिष्टभोगस्य सत्वे प्रामाण्यमभिप्रायतोऽभिधास्यन्नाह—सत्वेति[5]। तत्र हेतुमाह—स्वत्वेति[6]। भोगस्य स्वत्वप्रामाण्ये प्रतिग्रहादिसापेक्षतया प्रतिग्रहादेस्तु भोगानपेक्षतया सापेक्षनिरपेक्षयोर्निरपेक्षं बलीय इतिन्यायेन अगमस्य प्रतिग्रहाद्यात्मकस्य ततो बलीयस्त्वमिति भावः। अत्र मानमाह—यथाऽऽहेति। यथाकथंचिदागमस्यापि न तद्धेतुत्वमित्याह—विशुद्धेनेति। कारणरहितेनेत्यर्थः[7]। इदमेव व्यतिरेकमुखेन द्रढयति—न चेति। न हीत्यर्थः एवं चेदमयुक्तमेवेति शङ्काशयः। अत्रापि नारदमेवाऽऽह—अत एवेति। स्मर्यत इत्यत्रान्वयः। केवलतः केवलं—सार्वविभक्तिकस्तसिः। अस्यैव व्यवच्छेद्यमाह—नागममिति। क्वचित्—क्वचिदपि। यद्वा क्वापि व्यवहारविषये—भोगेति। भोगच्छलस्य उपदेशेन[8] कथनेनेत्यर्थः। फलितमाह—अतश्चेति। तस्य ततो बलवत्त्वाच्चे-

---

१ क. स्वत्वे हेतुः। २.—१. ८५.। ३.—नारदः १८, ६.। ४ ब. अर्थशाब्द। फ. अर्थे शब्द। ५ फ. सत्वेति। ६ ब. स्वत्वे प्रमाण्यप्रतीत्यादिन्यायेनेत्यंतः पाठो न दृश्यते। ७ ब. कामगर्हितेनेत्यर्थः। ८ अपदेशेनेति मिताक्षरामूलपाठः।

पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तो भवति । तथा च स्मर्यते—"सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः । प्रत्यर्थिसंनिधानश्च परिभोगोऽपि पञ्चधा ॥" इति । क्वचिच्चागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह—"विना पूर्वक्रमागतात्" इति । पूर्वेषां पित्रादीनां त्रयाणां क्रमः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना । आ-

भुक्तिः पूर्वक्रमः यतश्च नाशादिव्याजेन लेख्यस्योपहतादिबाधितस्यापि स्थितिसंभवात्तत्र—

## सुबोधिनी

मस्य प्रतिग्रहाद्यात्मकस्य बलीयस्त्वमिति । विच्छेदापरवोज्झित[1] इति—अपरव आ-क्रोशः विच्छेदेनापरवेण चोज्झितस्त्यक्तः । विच्छेदापरवरहित इति यावत् । एतदुक्तं भवति । विच्छेदरहितो निरन्तरः अपरवरहितो निराक्रोश इति पूर्वावतारित-वचनस्यैवावयवमभिप्रायतो व्याख्यातुमुपक्रमते—क्वचिच्चागमनिरपेक्षस्यापीति । स

## बालंभट्टी

त्यर्थः । स्वागमः विशुद्धागमसहितः। दीर्घेति बहुव्रीहिः। एवमग्रेऽपि। अविच्छेदः निरन्तरः। अ-परवोज्झितः निराक्रोशः। विच्छेदापरवोज्झित इति पाठे विच्छेदश्चापरवश्च ताभ्यामुज्झितः र-हितः। अपरव आक्रोशः। विच्छेदरहितो निरन्तरः अपरवरहितो निराक्रोशः। प्रत्यर्थीति व्यधिकर-णपदो बहुव्रीहिः। अपिः प्रकृतान्यसमुच्चायकः। पूर्वावतारितवचनस्यैव द्वितीयपादमभिप्रायतो व्याख्यातुमवतरणमाह—क्वचिच्चेति । कपिञ्जलाधिकरणन्यायेनाऽऽह[2]—त्रयाणामिति । नित्यसापेक्षत्वात् वृत्तिः सम्भवत्येकवाक्यत्वे इति न्यायेनाऽऽह—आगम इति । तात्प-

---

१ 'अविच्छेदोऽपरवोज्झित' इति तु मिताक्षरायां पाठो दृश्यते । २ अश्वमेधे "वसन्ताय कपिञ्जलानालभते" इत्यत्र कपिञ्जलानिति बहुवचने त्रित्वचतुष्ट्वादिसंख्यानां बहुत्वसाम्यात् त्रित्वादिषु या काचित् बहुत्वसंख्या इच्छया स्वीकार्येत्याशंक्य चतुष्ट्वादिसंख्यापरिग्रहे तदन्तर्गतत्रित्वसंख्याया अवर्जनीयत्वात् त्रित्वसंख्योपादाने तदन्तर्भूतचतुष्ट्वसंख्यानुपस्थितेरावश्यकप्रथमोपस्थितत्रित्वसंख्या-परिग्रहणेनैव कपिञ्जलानिति बहुवचनघटितशास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायात् त्रित्व-संख्यैव तत्र बोध्येति मीमांसयां एकादशाध्याये प्रथमपादे अष्टमाधिकरणे समर्थितम् । तथा च जैमिनीयन्यायमालयां कारिका,—"कपिञ्जलेषु त्रित्वाद्याः पाक्षिकास्त्रित्वमेव वा । आद्यो बहुत्व-साम्यान्न त्रित्वेनैव कृतत्वतः ॥" इति तन्न्यायेनेह पूर्वक्रमागतादिति मूले पूर्वेषामिति षष्ठीबहुवचनेन त्रित्वसंख्यैव बोध्यते इति अभिप्रेत्य पूर्वेषां पित्रादीनां त्रयाणामिति व्याख्यातमिति भावः ॥

गमोऽभ्यधिक इति सम्बन्धः। स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः। तत्राप्यागमज्ञाननिरपेक्षो न सत्तानिरपेक्षः। सत्ता तु तेनैवावगम्यत इति बोद्धव्यम्।

## सुबोधिनी

पुनरागमादभ्यधिक इति। स पूर्वक्रमागतो भोगः आगमनिरपेक्षः प्रमाणमित्युक्तम्। तत्र कीदृशं नैरपेक्ष्यमित्या[1]काङ्क्षायामागमज्ञाने नैरपेक्ष्यं न तु सत्तायामित्याह— तत्राप्यागमज्ञाननिरपेक्ष इति। एतदुक्तं भवति—कश्चनागमोऽस्तीत्यागमस्य सद्भावमपेक्षते, अयमसौ वा मम इति शृङ्गग्राहिकया आगमज्ञानं नापेक्षत इति। एवं तर्ह्यपेक्षितसत्ता सद्भावे किं प्रमाणमित्यत आह—सत्ता तु तेनैवेति। तेनैव विशि[2]ष्टभोगेनैव। नन्वेतदनुपपन्नम्,—अन्योन्याश्रयप्रसङ्गात्। तथा हि। प्रमाणभूतेन भोगेनाऽऽगमसत्तावगतिः [3]सत्तायां चावगतायां [4]तद्भोगस्य प्रामाण्यमिति। उच्यते। चिरकालोपभोगानुपपत्तिरूपयाऽर्थापत्त्या आगमसत्तावगतिः। सत्तायां चावगतायां पश्चात् भोगस्य प्रामाण्यनिश्चय इति साक्षात् प्रमाणभूतेन भोगेनाऽऽगमसत्ताया अनवगमान्नान्योन्याश्रयः। तर्हि सत्ता तु तेनैवेत्युक्तिः कथमिति चेत् तद्द्वारकार्थापत्त्यावगमादुपचारेण तेनेत्युक्तिरिति द्रष्टव्यम्। "आगमोऽभ्यधिको भोगात्" इत्यत्र द्विविधो भोगः प्रमाणमित्यभिप्रेतं योगीश्वरस्य। स्मार्तकालीनोऽस्मार्तकाली-

## बालंभट्टी

[5]योर्थमाह—स पुनरिति। स पूर्वक्रमागतो भोगस्त्वित्यर्थः। आगमादेस्तात्पर्यार्थमाह— आगमेति। शब्दस्तु प्राग्वत्। आगमनैरपेक्ष्यं तज्ज्ञाननैरपेक्षकृतं, न तु तत्सत्तनैरपेक्ष्य कृतमिति विशेषमाह—तत्रापीति। आगमनिरपेक्ष इत्यत्रापीत्यर्थः। बोद्धव्यमित्यत्रान्वयः। कश्चिदागमोऽस्तीत्यागमसद्भावापेक्षा। न त्वयमागम इति शृङ्गग्राहिकया तत् ज्ञानापेक्षेति भावः। 'नन्वेवमपेक्षितसत्तासद्भावे किं मानमत आह—सत्ता त्विति। तेनैव विशिष्टेनोपभोगेनैव। नन्वेवमन्योन्याश्रयप्रसङ्गः; तथा हि–प्रमाणभूतेन तादृशभोगेनागमसत्तावगतिः। आगमसत्तावगतौ तत्सहकृतस्य भोगस्य प्रामाण्यमिति। अत्राहुः—" चिरकालोपभोगानुपपत्तिरूपार्थापत्त्यागमसत्तावगतिः। तस्यामवगतायां तत्सहकृतभोगस्य प्रामाण्यनिश्चय

---

१ थ. द. त्याकाङ्क्षागम। २ थ. ष्टेन भो। ३ थ. आगमसत्ता। ४ध. द. तत्सहकृतस्य भोग। ५ फ. क्रमागतोपभोग।

"विना पूर्वक्रमागतात्" इत्येतच्च स्मार्तकालप्रदर्शनार्थम्।"आगमोऽभ्यधिको भोगात्" इति च स्मार्तकालविषयम्। अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयसंभवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम्। अस्मार्ते तु काले योग्यानु-

## सुबोधिनी

नश्चेति। तदुभयं विभज्य दर्शयति—विना पूर्वक्रमागतादित्येतच्चेत्यादिना। एतदुक्तं भवति—अस्मार्तकालीनो भोग आगमज्ञाननिरपेक्षः। स्मार्तकालीनस्तु भाग आगमज्ञानसापेक्ष इति। नन्वेकस्यैव भोगप्रमाणस्य क्वचिदागमसापेक्षत्वं क्वचिन्नेति कुतोऽवगम्यत इत्याशङ्क्य सापेक्षत्वे हेतुमाह—अतश्च स्मरणयोग्ये काल इति। स्मरणयोग्ये काले प्रतिग्रहक्रयादिरूपस्यागमस्य प्रमितियोग्यत्वे सत्यपि प्रमित्यभावादागमाभावनिश्चयो जायते। सिद्धे चाभावनिश्चये केवलभोगस्य बलात्कारेणापि सिद्धेरप्रामाण्यप्रसङ्गादागमसापेक्षत्वमित्यर्थः। इदानीं भोगस्य क्वचिदागमनिरपेक्षत्वे हेतुमाह—अस्मार्ते तु काल इति। योग्यत्वे सत्यनुपलब्धिर्योग्यानुपलब्धिः। स्मरणायोग्ये काले प्रतिग्रहादिकस्य प्रमितियोग्यत्वाभावादेव योग्यानुपलब्ध्यभावः। तेनागमो नास्तीति निश्चेतुं न शक्यते,—अभावग्राहकप्रमाणस्य योग्यानुपलब्धेरभावात्। एवं चागमाभावनिश्चय

## बालंभट्टी

इति साक्षात्प्रमाणभूतेन भोगेनागमसत्ताया अनिश्चयात् नान्योन्याश्रयः। तेनैवेत्यस्य तु तद्द्वारकार्थापत्तिरूपप्रमाणेनैवेत्यर्थ इति नासङ्गतिः। आगमोऽभ्यधिक इत्यत्र पादभेदेन द्विविधभोगस्य प्रामाण्यमभिमतं मुनेः। स्मार्तकालिकः अस्मार्त्तकालिकश्च सः। तदुभयं विभज्य व्युत्क्रमेणाऽऽह—विनेति। पदेति विषयमित्यर्थः। आद्यस्तर्ह्यर्थे[1], द्वितीयस्त्वर्थे। स्मार्तेति स्मरणयोग्येत्यर्थः। अस्मार्तकालिको भोगः आगमज्ञाननिरपेक्षः स्मार्तकालिकस्तु आगमज्ञानसापेक्ष इति भावः। नन्वेकस्यैव भोगरूपप्रमाणस्य क्वचित् तत्सापेक्षत्वं क्वचिन्नेति कुतोऽवगतमित्यतो द्वितीयमेव सहेतुमाह—अतश्चेति। उभयोर्विषयभेदाच्चेत्यर्थः। वस्तुतः स्मृत्यभावेऽपि तत्त्वस्येष्टत्वादाह-योग्य इति। आभावप्रत्यक्षे[3] योग्यानुपलब्धेः कारणत्वस्य तत्रान्तरे प्रसिद्धत्वादाह-योग्यानुपेति। स्मरणयोग्ये काले प्रतिग्रहादिरूपस्यागमस्य प्रमितियोग्यत्वे सत्यपि तदभावादागमाभावनिश्चयः, सिद्धे च तस्मिन् केवलभोगस्य बलात्कारेणापि सम्भवेनाप्रामाण्यप्रसङ्गात् तत्सापेक्षत्वमवश्यकमिति भावः। अथाद्यन्तादृशमाह—अस्मार्ते त्विति।

१ थ. द. क्वचिच्च ने। २ फ. आद्यचः। ३ ब. अभावपक्षे।

पलब्ध्यभावेनाऽऽगमाभावनिश्चयासंभवादागमज्ञाननिरपेक्ष एव संततो भोगः प्रमाणम्। एतदेव स्पष्टीकृतं कात्यायनेन—"स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते । अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता ॥" इति। स्मार्तश्च कालो वर्षशतपर्यन्तः,—"शतायुर्वै पुरुषः" इति श्रुतेः। अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभाव-

## सुबोधिनी

एव भोगो न प्रमाणम्,—मूलशैथिल्यात्। प्रकृते त्वाऽऽगमाभावनिश्चयाभावान्मूलशैथिल्याभावेनागमज्ञाननिरपेक्षो भोगः प्रमाणमित्यर्थः। स्मार्ते काले क्रियेति—क्रिया प्रमाणमित्यर्थः। सर्वे गत्यर्था ज्ञानार्था इति गत्यर्थो गमिर्ज्ञाने वर्तते। अतोऽनुगमो नाम निश्चयज्ञानम्, तदभावोऽनुगमाभावः। क्व तदभाव इति साकाङ्क्षत्वाद्योग्यानुपलब्ध्यभावेनाऽऽगमाभावनिश्चयाभाव इत्याकाङ्क्षां पूरयन् कात्यायनवचनस्थमनुगमाभावपदं व्याचष्टे—अनुगमाभावादिति योग्येति। यतोऽनागमस्मृतिपरम्परायां सत्यामपि भोगो न प्रमा-

## बालंभट्टी

अस्मरणयोग्य इत्यर्थः। एतद्विशेषणाभावेऽपि विशेषणान्तरसत्ता अपेक्षितैवेत्याह—सन्तत इति,—निरंतर इत्यर्थः। इदमुपलक्षणं दीर्घकालादेरपि योग्यत्वे सत्यनुपलब्धिर्[1]योग्यानुपलब्धिः। स्मृत्य[2]योग्यकाले प्रतिग्रहादिरूपस्य प्र[3]माणयोग्यत्वाभावादेव योग्यानुपलब्ध्यभावः। अतस्तेनागमो नास्तीति निश्चेतुं न शक्यते—अभावग्राहकप्रमाणस्य योग्यानुपलब्धेरभावात्। एवं चागमाभावनिश्च[4]ये भोगो न प्रमाणं—मूलशैथिल्यात्। प्रकृते तु आगमाभावनिश्चयाभावात् मूलशैथिल्यभावेन तन्निरपेक्षत्वमिति तादृशो भोगः प्रमाणमित्यर्थाक्रिया प्रमाणम्। अनुगमेति,—निश्चयज्ञानाभावादित्यर्थः। ये गत्यर्थास्ते ज्ञानार्था इति भावः। क्रमात् पित्रादिक्रमेण। स्मार्तकालस्य प्रमाणावधिमाह—स्मार्तश्चेति। अनुगमाभावस्य साकाङ्क्षत्वात् तां पूरयन् प्रागुक्तैकवाक्यतायै सप्रतीकं तत्पदं व्यचष्टे—अनुगमेति। इतीत्यस्यार्थ इति शेषः।

१ ब. सत्यनुपलब्धेः। २ ब. स्मृति। फ. स्मृतियोग्ये काले। ३ फ. ब. प्रमायोग्य। ४ फ. निश्चयेत।

निश्चयासंभवादिति । अतश्च वर्षशताधिको भोगः संततोऽप्रतिरवः प्रत्यक्ष-श्चागमाभावे वाऽनिश्चिते अव्यभिचारादाक्षिप्तागमः स्वत्वं गमयति । अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् । अत एव—"अनागमं तु

## सुबोधिनी

णमिति मनुनाऽनागमभोगे विशेषेण दण्डो विहित इत्याह—अत एवाऽऽनागमं त्विति। ननु"बहून्यब्दशतान्यपि"इत्यत्र अपिशब्दः समुच्चये वर्तते,—"अपिः सम्भावननिवृत्त्यपेक्षा-समुच्चयगर्हाशीस्समर्थभूषणसम्प्रश्नेषु" इति । तथा चैवमर्थः सम्पद्यते—बह्वब्दानाभि-व्याप्य य उपभुङ्क्ते स दण्ड्यः इति । यत एककर्तृकानेकवर्षोपभोगे एवं समुच्चयो घटते, नान्यथा । एवं चापिशब्दबलात् उपभोक्तुर्यथैकत्वं प्रतीयते, तथा य इत्येकवचननिर्देशादपि । तथा च यद्येकश्चिरकालमनागममुपभुङ्क्ते, स दण्ड्य इत्येकस्यैव दण्ड्यत्वं न बहूनाम् । पितृपरम्परायातभोगे तु भोक्तृणामनेकत्वादेवंविधैकभोक्तुरभावेन प्रथममनागमेनोपभोक्तुरेक-त्वेन प्रथमस्यानागमोपभोक्तुः पुरुषस्य चोरसदृशदण्डो, न द्वितीयस्य तृतीयस्य वा दण्डः,—तेन तत्र भोगस्य प्रामाण्यप्रतीतेः । यदुक्तमनागमस्मृतिपरम्परायां भोगो न प्रमाणमिति

## बालंभट्टी

विशेषं वक्तुं विनापूर्वेत्यस्य विषयं सविशेषमुपसंहरति—अतश्चेति । उक्तहेतोश्चेत्यर्थः । वर्षेति—अनेन दीर्घकालत्वमुक्तम् । सन्ततो निरन्तरः । अप्रतिरवः निराक्रोशः—प्रत्येति । प्रत्यर्थिन इत्यादिः । आगमेति उक्तरीत्येत्यादिः । आक्षिप्तेति बहुव्रीहिः । तं विशेषमेवाऽऽह—अस्मार्तेऽपीति । अत्र मानं मनुमाह—अत एवेति । तस्यां सत्यां तस्याः प्रमाणत्वादेवे-त्यर्थः । अन्यथाऽनागमोपभोगे विशेषेण दण्डविधानं मनूक्तमयुक्तं स्यादिति भवः। ननु बहू-न्यब्देत्यत्र अपिः समुच्चये । तथा चोक्तम् "अपिस्सम्भावननिवृत्त्यपेक्षासमुच्चयगर्हाशीः समर्थभूषणप्रश्नेषु"इति । तथा च बहून्यब्दशतान्यभिव्याप्य य उपभुङ्क्ते स दण्ड्य इत्यर्थेन एककर्तृकानेकवर्षोपभोग एव समुच्चयस्य सम्भवो नान्यथेत्यपिशब्दबलादुपभोक्तुरेकत्वं प्रती-येत । तथा य इत्याद्येकवचननिर्देशादपि । तथा च यत्रैकश्चिरकालमनागममुपभुङ्क्ते स दण्ड्य इत्येकस्यैव दण्ड्यत्वं न बहूनां । पितृपरम्परायाते भोगे तु भोक्तृणामनेकत्वादीदृशैक भोक्तुरभावेन प्रथममनागमेनोपभोक्तुरेकत्वेन तस्यैव चोरसदृशदण्डो न द्वितीयादेरिति तत्र भोगस्य प्रामाण्यप्रतीत्या अनागमस्मृतिपरम्परायां भोगो न प्रमाणमिति यदुक्तं तदयुक्तमि-

१ ख. ग, ङ. निश्चयाभावात् । २ ख. ग. प्रत्यर्थिपत्यक्षश्चा॰ । ३ थ. द. त्रोपभो ।

यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः॥"इत्युक्तम् । न च "अनागमं तु यो भुङ्क्ते" इत्येकवचननिर्देशात्, "बहून्यब्दशतान्यपि" इति अपिशब्द-प्रयोगात् प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानमिति मन्तव्यम्। द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात् न चैतदिष्यते,—"आदौ तु

## सुबोधिनी

तदयुक्तमित्यभिप्रायेणाक्षिप्य परिहरति–न च "अनागमं तु यो भुङ्क्ते" इत्येकवचननिर्देशादित्यादिना । अथ वा अपिशब्द समर्थवाची समर्थवाचित्वं च तेनैव सूत्रेण प्रतीयते । एतदुक्तं भवति–अनागमचिरकालोपभोगे यः समर्थः, स एव दण्ड्य इति । समर्थश्च प्रथम एव न द्वितीयतृतीयौ,—तयोः परम्परायातभोगत्वेन तादृशसामर्थ्याभावात् । अतः प्रथम एव दण्ड्य इत्याशयेनाशङ्क्य परिहरति—न चानागमं तु यो भुङ्क्त इत्येकवचननिर्देशादित्यादिना । परिहाराभिप्रायस्तु—"आदौ तु कारणं दानं मध्ये भुक्तिश्च[1] सागमा ।"इति। मध्येऽपि सागमभुक्तेः प्रामाण्यविधायकवचनबलात् "अनागमं तु यो भुङ्क्ते" इत्यत्र "यः" इत्युद्देश्यगतत्वेनैकवचनस्य विवक्षितत्पाच्च सर्वत्र सागमाया भुक्तेः प्रामाण्यम् । अतो द्वितीयतृतीययोरपि पुरुषयोर्निरागमोपभोगे दण्डो दुर्निवार इत्यनागमस्मृतिपरम्परायां सत्यां भोगो न प्रमाणमेवेति। एवञ्च अपि शब्दोऽपि सम्भावनायां वर्तते,न समुच्चये सामर्थ्ये वा। ततश्चैतदुक्तं भवति—बह्वब्दशतव्यापित्वेनापि यस्य भोगः सम्भाव्यते स भोगश्चेन्निरागमः,तादृशोपभोगवानपि पुरुषो दण्ड्यः, किमुतानागमाल्पोपभोगवानिति । ननु चास्मरणयोग्यकालीनस्य पूर्वक्रमायातस्यैव भोगस्यागमज्ञाननैरपेक्ष्येण प्रामाण्यमिति यदुक्तं तदनुपपन्नम् "अन्यायेनापि यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिः।" इत्यस्मिन् वचनेऽन्यायेनापि पित्रा यद् भुक्तं, तथा पूर्वतरैस्त्रिभिर्यद् भुक्तं, तत्रोभयत्रापि प्रत्यपहारो न शक्यत इत्यभिधानादनागमोपभोगस्य

## बालंभट्टी

त्याशयेन शङ्कते—न चानागमं त्विति । यद्वा अपिशब्दः समर्थवाची—उक्तहेतोः । तथा चानागमचिरकालोपभोगे यः समर्थः स एव दण्ड्यो नान्य इत्यर्थेन प्रथमस्यैव समर्थत्वेन द्वितीयादेः परम्परायातभोगत्वे तादृशसामर्थ्याभावात् प्रथम एव दण्ड्य इत्याशयेनाशङ्कते—न चेति । प्रयोगात्--प्रयोगाच्च । प्रथमस्य–तस्यैव । इदं परम्परायातभोगविषयम् । अपिनैकमात्रकर्तृकानेकवर्षोपभोगसमुच्चयः । इष्टापत्तिं निराचष्टे—न चैतदिति । न हि

१ थ. द. स्तु सा ।

कारणं दानं मध्ये भुक्तिस्तु सागमा।" इति[1] नारदस्मरणात् । तस्मात्सर्वत्र निरागमोपभोगे "अनागमं तु यो भुङ्क्ते" इत्येतत् द्रष्टव्यम् । यदपि "अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्॥" इति, तदपि पित्रा सह

---

## सुबोधिनी

स्मरणयोग्यकालीनस्यापि प्रामाण्यप्रतीतेरित्याक्षिपति—यदप्यन्यायेनापि यद्भुक्तमिति । अत्र अन्यायेनापीति निरागमभोगस्य प्रामाण्यप्रतिपादकम् । पित्रेति स्मरणायोग्यकालीनस्य। तेन स्मार्तकालीनोपभोगस्यागमनिरपेक्षस्य न प्रामाण्यमिति परिहरति—पित्रा सहेति। अयमर्थः—अत्र पित्रा यद्भुक्तमिति न पृथगन्वयः, येन पितृभोगस्य स्मार्तकालीनत्वेन तादृशस्य निरागमोपभोगस्य प्रामाण्यं स्यात् । अपि तु सहयोगे इयं तृतीया

## बालंभट्टी

त्यर्थः । कारणं क्रिया, प्रमाणमिति यावत् । नारदेति,—मध्येऽपि सागमाया एव भुक्तेः [2]प्रामाण्यबोधकनारदवचनादित्यर्थः। य इत्यत्रोद्देश्यगतत्वेनैकत्वस्याविवक्षितत्वाच्चेति बोध्यम्। तथा च सर्वत्र सागमभुक्तेः प्रामाण्यमिति द्वितीयादावपि निरागमोपभोगे दण्डो दुर्निवार इत्यनेनागमस्मृतिपरम्परायां सत्यां भोगेनैव प्रमाणमिति सिद्धम्। तदुपसंहरति—तस्मादिति। सर्वत्र आदौ मध्येऽन्ते चेत्यर्थः । एवं च अपिः संभावनेऽत्र न समुच्चये, नापि समर्थे, इति वह्वब्दशतव्यापित्वेन यस्य भोगः सम्भाव्यते स चेन्निरागमस्तर्हि तादृशोपभोगवानपि पुरुषो दण्ड्यः किमुतानागमाल्पभोगवानिति तात्पर्यार्थः । नन्वस्मरणयोग्यकालिकस्य पूर्वक्रमायातस्यैव भोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमिति यत् सिद्धान्तितं तदयुक्तम् । अन्यायेनापीति वाक्येऽन्यायेनापि पित्रा यद्भुक्तं तथा पूर्वतरैस्त्रिभिर्यद्भुक्तं तत्रोभयत्रापि प्रत्यपहारो न शक्य इत्युक्तम्, अनागमोपभोगस्य स्मरणयोग्यकालिकस्यापि प्रामाण्यप्रतीतेरित्याशयेनाह — यदप्यन्यायेनापीति। अत्रान्यायेनापीति निरागमभोगस्य प्रामाण्यप्रतिपादकं पित्रेति स्मरणयोग्यकालिकस्येति भावः। स्मार्तकालिकोपभोगस्य तन्निरपेक्षस्य न प्रामाण्यमिति प्रागुक्तरीत्यैव परिहरति—तदपि पित्रा सहेति। अयं भावः,—पित्रा यद्भुक्तमिति न पृथगन्वयो येन पित्रुपभोगस्य स्मार्तकालिकत्वेन तादृशनिरागमोपभोगस्य प्रामाण्यं स्यात्, अपि तु सहार्थयोगे इयं तृतीया । तथा च पित्रा सह पूर्वतरपुरुषत्रयोपभोगे क्रमेणाविछिन्ने तादृशे जाते तत् क्षेत्रादिकं तस्मा-

---

१.—२. ८७ । २ ब. प्रामाण्यमित्यादि भुक्तेरित्यन्तः पाठो न दृश्यते ।

पूर्वतरैस्त्रिभिरिति योज्यम् । तत्रापि " क्रमात् त्रिपुरुषागतम् " इत्यस्मार्तकालोपलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसम्भवात्, द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गः । तथा सति "स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।" इति स्मृतिविरोधः । "अन्यायेनापि यद्भुक्तम्" इत्येतच्चान्यायेनापि
5 भुक्तमपहर्तुं न शक्यम्, किं पुनरन्यायानिश्चय इति व्याख्येयम्,–अपिशब्दश्रवणात् ।

---

## सुबोधिनी

पित्रेति । तथा च तेन सह पूर्वतरपुरुषत्रयोपभोगे क्रमेणाविच्छेदेन जाते[1] क्षेत्रादिकं तस्मादपहर्तुं न शक्यत इत्येकवाक्यत्वेऽनेकपुरुषोपभोगस्य चिरतरकालमन्तरेणासम्भवादस्मार्तकालीनोपभोगस्य प्रामाण्यमित्युक्तं स्यात् । अतो न निरागमस्य स्मार्तकालीनोपभोगस्य प्रामाण्यमिति । ननु " त्रिपुरुषागतम् " इत्यनेनानेकपुरुषोपभोगे[2] कथमस्मार्तकालोपभोगो लक्ष्यत इत्याशङ्क्योपलक्षकमेतदित्याह—तत्रापि क्रमादिति । ननु भवत्वस्मार्तकालोपभोगः[3] प्रमाणम्, सोऽप्यागमसत्तामपेक्षते, अतोऽन्यायेनाप्युक्तिः कथमित्यत आह—अन्यायेनापि यद्भुक्तमित्येतच्चेति । नन्वस्मार्तकालीना भुक्तिराग

## बालंभट्टी

दपहर्तुं न शक्यमिति प्रागुक्तैकवाक्यतया सम्भवतीति न्यायेन[4] चैकवाक्यत्वे अनेकपुरुषोपभोगस्य चिरतरकालं विनाऽसम्भवेनास्मार्तकालिकोपभोगस्य प्रामाण्यमुक्तमिति न[5] निरागमस्य स्मार्तकालिकोपभोगस्य प्रामाण्यमिति । ननु त्रिपुरुषागतमित्यनेनानेकपुरुषोपभोगलाभेऽपि कथमस्मार्तकालोपभोगलाभो अत आह—तत्रापि क्रमादिति । लक्षणेति भावः। शक्यार्थत्यागे बीजमाह—त्रिपुरुषेति । पात्रादित्वात् स्त्रीत्वाभावः । तत्रात्र च एवं पूर्वकातृतीयेऽपि प्रसङ्गादिति पाठः । प्रसङ्ग इति पाठे यत इत्यादि इष्टापत्तिं निराचष्टे—तथा सतीति । नन्वस्तु अस्मार्तकालिको भोगः प्रमाणमिति, तथाऽपि तस्यापि आगमसत्तासापेक्षत्वेनान्यायेनापीत्युक्तिः कथम्? अत आह—अन्यायेनापीति। चस्त्वर्थे । तत्र बीजमाह—अपीति । अन्यथा तदानर्थक्यं स्पष्टमेव । नन्वस्मार्तकालिकी[6] भुक्तिरागमज्ञानं नापेक्षते तत्सत्तां त्वपेक्षत एवेत्युक्तमयुक्तम् । यद्विनाऽऽगममिति वाक्येऽत्यन्तमित्यु-

---

१ त. जनित । २ थ. द. गे वा क । ३ थ. द. कालीनोप । ४ सम्भवत्येकवाक्यत्वे भिन्नवाक्यत्वमप्रामाणिकमिति न्यायः॥ ५ नेत्यारभ्य प्रामाण्यमित्यन्तः पाठः इति क्व चिन्नास्ति । ६ ब. ननु स्मार्त ।

यच्चोक्तम्—"यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥" इति, तत्राप्यत्यन्तमागमं विनेति अत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयम्, न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम् । क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थम् ।

---

## सुबोधिनी

मज्ञानं नापेक्षते अपि तु तत् सत्तामपेक्षत इत्युक्तम् । तदसङ्गतम् । 'यद्विनागममत्यन्तं भुक्तम्' इत्यस्मिन् वचनेऽत्यन्तमिति सर्वात्मनाऽऽगमनैरपेक्ष्येण भुक्तेः प्रामाण्यप्रतीतेरित्यनेनाभिप्रायेणाक्षिपति—यच्चोक्तं यद्विनागममित्यादिना । परिहरति—तत्राप्यत्यन्तामिति । अयमभिप्रायः—सर्वात्मनाऽऽगमज्ञानस्यास्मार्तकालीनोपभोगे अपेक्षाभावादत्यन्तमागमज्ञानं विनाऽप्यस्मार्तकालीनोपभोगे सति भुक्तं तद्वस्तु अपहर्तुं न शक्यत इत्येव । न तु वस्तुत आगमसत्तां विनाऽप्युपभोगे स्वत्वमस्तीति । येन पूर्वोक्तविरोधः स्यादिति । अत्र हेतुमाह—आगमस्वरूपाभावे इति । अत्र यत इति शेषः । एतदुक्तार्थमिति । अस्मार्तकालोपलक्षकत्वेनोक्तार्थमित्यर्थः । अस्मार्तकालीन उपभोग

## बालंभट्टी

क्त्या सर्वात्मया भुक्तेस्तन्नैरपेक्ष्येण प्रामाण्यप्रतीतेरित्याशयेन शङ्कते—यच्चोक्तमिति[1] । यदप्युक्तमित्यर्थः । अत्यन्तमागमं विनेत्यन्वयः । प्रागुक्तरीत्या परिहरति—तत्रापीति । उक्तवाक्येऽपीत्यर्थः । इति वाक्यम् । अत्यन्तम् अतिशयेन[2] । उक्तहेतोः शेषमाह—नेति । पुनरप्यर्थे । आगमस्य रूपमपि विनेत्यर्थः । व्याख्येयमित्यस्यानुषङ्गः । अत्र हेतुमाह—आगमेति । यत[3] इत्यादिः । अयं भावः—सर्वात्मनाऽगमज्ञानस्यास्मार्तकालिकोपभोगेऽपेक्षाया आभावादत्यन्तं सर्वात्मना आगमज्ञानं विना अस्मार्तकालिकोपभोगे सति यदुक्तं वस्तु तदपाहर्तुं न शक्यमित्येव वाक्यार्थो न तु वस्तुत आगमसत्तां विनाऽप्युपयोगात् स्वत्वमस्तीति न प्रागुक्तविरोधः स्यादिति । उक्तत्वात् विरोधमत्रापि परिहरति—क्रमादिति । उक्तार्थमिति । अस्मार्तकालोपलक्षकत्वेनोक्तार्थमित्यर्थः । तत्सिद्धम् । अस्मार्त-

---

१ ख. यच्चोक्तं हारीतेन यद्विना। ङ. यथोक्तं यद्विना। २ फ. अतिशये वा अत्यन्त उक्तहेतोः। ३ फ. अत इत्यादिः ।

ननु स्मरणयोग्ये काले भोगस्याऽऽगमसापेक्षस्य प्रामाण्यमनुपपन्नम् । तथा हि— यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम्। अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम्? उच्यते

---

## सुबोधिनी

आगमज्ञाननिरपेक्षः प्रमाणं, स्मार्तकालीनस्त्वागमज्ञानसापेक्षः प्रमाणमित्युक्तम् । तत्र स्मार्तकालीनस्यागमज्ञानापेक्षत्वेन[1] प्रामाण्यमनुपपन्नमित्याक्षिपति—ननु[2] स्मरण-योग्य इति । तमेवोपपादयति — तथा हीत्यादिना । यमागमेपक्षते भोगः, स किं प्रमाणान्तरेणावगत उत नेति विकल्प्य, कस्मिन् सति किं स्यादित्याशङ्क्याऽऽद्ये दोषमाह —यद्यागम इति । अयमर्थः—प्रमाणान्तरावगतागमेनैव स्वत्वे ज्ञाते भोगस्य स्वत्वज्ञाने आगमज्ञाने चानुपयुक्तत्वेन प्रमाणान्तरप्रमिते स्वत्वे आगमे वा प्रमित्यनुत्पादकत्वेनाप्रामाण्यादागमज्ञानसापेक्षो भोगः प्रमाणमिति वक्तुं न[3] शक्य-मिति । द्वितीयेऽपि दोषमाह—अथेति । अनवगतागमेन वैशिष्ट्यासम्भवादित्यर्थः । समाधत्ते—उच्यत इत्यादिना । एतदुक्तं भवति—प्रमाणान्तरेणैवागमोऽवगम्यते ।

## बालंभट्टी

कालिक उपभोग आगमज्ञाननिरपेक्षः प्रमाणम् , स्मार्तकालिकस्तु तत्सापेक्षस्तथेति तत्रा-ऽस्यमाक्षिपति—नन्विति । प्रामाण्येति,—प्रामाण्यं यदुक्तं तदनुपपन्नमित्यर्थः । अनुपपत्तेः स्फुटतयाभासात्तामुपपादयति—तथा हीति । यमागममपेक्षते भोगः स किं प्रमाणान्तरेणावगतोऽथवा नेति विकल्पं हृदि निधायाऽऽद्ये दोषमाह—यद्यागम इति । प्रमाणान्तरेण भोगान्येन प्रत्यक्षादिना। तेनैव मानान्तरावगतागमेनैव। मानान्तरावगतत्वेनानु-पयुक्तत्वादाह—आगमे वेति। तथा च मानान्तरप्रमिते उभयत्र ज्ञापकत्वासम्भवेनानुत्पाद-कत्वेन चाप्रामाण्यात्तत्सापेक्षो भोगः प्रमाणमिति दुर्वचमिति भावः। द्वितीये दोषमाह— अथेति । अनवगतागमेन वैशिष्ट्यासम्भवादिति भावः । प्रथमपक्षादरेऽपि कालविशेषे तदुपयोग इत्याह-प्रमाणान्तरेणेति । मानान्तरेणैवागमावगमो यद्यपि, तथाऽपि तादृशागम-विशिष्ट एव भोगः प्रतिग्रहाद्युत्तरभाविनि कालान्तरेऽपि स्वत्वबोधक इति भावः। ननु तथा-

---

१. थ. नसापे । २ त. थ. षानु। ३. थ. द. शक्यं नेति ।

—प्रमाणान्तरेणावगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति। अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयितुमलम्। मध्ये दानविक्रयादिना स्वत्वापगमसंभवादिति सर्वमनवद्यम् ॥ २६- ॥

आगमसापेक्षो भोगः प्रमाणमित्युक्तम्; आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह—

**आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ॥२७॥** 5

यस्मिन्नागमे स्वल्पापि भुक्तिर्नो नास्ति तस्मिन्नागमे बलं संपूर्णता[1] नैवास्ति। अयमभिसन्धिः,—स्वत्वनिवृत्तिः[2] परस्वत्वापादनं च दानम्; परस्वत्वापादनं च परो यदि स्वीकरोति तदा संपद्यते नान्यथा। स्वीकारश्च त्रिविधः—मानसो, वाचिकः, कायिकश्चेति[3]। तत्र मानसो ममेदमिति संकल्परूपः; वाचिकस्तु ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः[4] प्रत्ययः; कायिकः[5] पुनरुपादाना- 10

"आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो।" न स्यात् विना लेख्यं प्रतिष्ठा न स्यादित्यमर्थः ॥ २७ ॥

## सुबोधिनी

**तादृशागमविशिष्ट एव भोगः प्रतिग्रहाद्युत्तर[6]भाविनि कालान्तरे स्वत्वबोधक इति। ननूक्तं स एवागमः स्वत्वं बोधयिष्यति किमनेन[7] भोगेनेत्यत आह—**अवगतोप्यागम **इत्यादिना ॥ २६- ॥**

वाचिकस्तु ममेदमिति। **ममेदमित्यभिवदनोल्लेखि यत्[8] सविकल्पकं ज्ञानं स**

## बालंभट्टी

**वगतागमेनैव स्वत्वावबोधे[9] किं भोगेनेत्युक्तमेवात** आह—अवगतोऽर्थ इति। **अलं समर्थः।** कुत इत्यत आह—मध्ये इति। **उपसंहरति**—इतीति। **प्रमाणमित्यस्य स्यादिति शेषः॥२६-॥**

**स्तोकापीत्यस्य व्याख्या,**—स्वल्पापीति। **बलमित्यस्य व्याख्या** संपूर्णतेति **ननु अस्यो-**दाहरणं किमत आह—अयमिति। **द्वितीयचस्त्वर्थे। तत्र तेषां मध्ये।** सविकल्प इति,—

१ क. पूर्णता। ख. संपूर्ण। २ ख. स्वस्वत्वनिं० ३ क. कश्च। ४ क. सविकल्पकप्रत्ययः। ५ ख. कायिकस्तु पुनः। ६ द्यन्तर इति च पाठः। ७ थ. द. किमनेनेत्य'। ८ क. यत्र विकल्पज्ञानं। ९ ब सत्वावबोधे।

भिमर्शनादिरूपोऽनेकविधः । तत्र च नियमः स्मर्यते—" दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे । केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥" इति । आश्वलायनोऽप्याह—" अनुमन्त्रयेत्प्राण्यभिमृशेदप्राणि कन्यां च " इति । तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसंभवात् त्रिविधोऽपि स्वीकारः संपद्यते । 5 पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासम्भवात् स्वल्पेनाप्युपभोगेन भवितव्यम्, अन्यथा दानक्रयादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहितादागमात् । एतच्च द्वयोः पूर्वापरकालापरिज्ञाने । पूर्वा-

---

## सुबोधिनी

वाचिकः स्वीकार इत्यर्थः । तत्र च नियमः स्मर्यत इति । तत्र कायिकस्वीकारे—अनुमन्त्रयेत् प्राण्यभिमृशेदिति । अस्यार्थः—प्रतिग्राह्यः पदार्थश्चेत् प्राणी बलवान् वक्तुं समर्थः, तदा तं प्रतिग्राह्यं प्रतिगृहीता अनुमन्त्रयेत 'अमुकस्त्वं मदीयोऽसीति'। सोऽपि ब्रूयात् 'अहं भवदीयोऽस्मि ' इति । प्रतिग्राह्यमप्राणि अभिवेदनामाभिज्ञं गवादि प्राणिष्वपि कन्या वा, तदुभयं प्रतिग्रहीताभिमृशेदिति । तत्सहितागमादिति । कायिकस्वीकारसहितागमापेक्षये

## बालंभट्टी

स तु स्वीकारो मदीयमेतदित्याद्यभिवदनविषयकस्तज्जन्यो वा सविकल्पज्ञानरूप इत्यर्थः । यद्वा स इति भिन्नं पदम् । वाचिकस्तु स स्वीकारो यस्तादृशो विकल्पकज्ञानरूप इत्यर्थः। पुनःतु । तत्र च उक्तरूपकायिकस्वीकारेऽपि। करे शुण्डादण्डे। दापयेत् दद्यात्। स्वार्थे णिच्। निवृत्तः प्रेषणादिति प्रकारो वा—अनुमन्त्रयेदिति। प्रतिग्राह्यो यदा प्राणी बलवान् वक्तुं समर्थस्तदा तं प्रतिग्राह्यं प्रतिगृहीता अनुमन्त्रयेत् 'अमुकः त्वं मदीयोसि इति । सोऽपि ब्रूयाद् अहं भवदीयोऽस्मि इति। यदा प्रतिग्राह्यमप्राणि, अभिवादनानभिज्ञं गवादि, प्राणिष्वपि कन्या च, तदुभयं प्रतिग्रहीताभिमृशेत् स्पृशेदुक्तस्थले इत्यर्थः। प्रकृतमाह—तत्रेति। तेषां मध्ये इत्यर्थः। ननूपभोगसहितागमापेक्षयोपभोगरहितस्यागमस्य दुर्बलत्वे यत्रैकमेकस्याधीकृत्य पुनरन्यस्याप्याधीकरोति तत्र यदि दैवात् पूर्वस्य भोगाभावः उत्तरस्य तु भोगोऽस्ति तत्रापि भोगरहितागमस्य दौर्बल्यं स्यात् । तथा चाऽधौ प्रतिग्रह इति वचनविरोधः स्यात्। अत आह—एतच्चेति । सिद्धान्तितमुक्तरूपमित्यर्थः । इतीत्यस्य बोध्यमिति शेषः । यद्यपि " आगमो

---

१ क. अनुमन्त्रयीत । २ अनुमन्त्रयेत । ङ. ज. तत्सहितादागमाभावात् ३ फ. विकल्पक ४ फ. ब. पुनस्तु, तत्सहितादिति । कायिकस्वीकारसाहितीादित्यर्थः ।

परकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति ।

अथवा—लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधमित्युक्तम्, एतेषां समवाये कुत्र यस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते—"आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् । आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥" इति । अयमर्थः—आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान् पूर्वक्रमागताद्भोगाद्विना । स पुनः पूर्वक्रमागतो भोगश्चतुर्थे पुरुषे लिखितेन भावितादागमाद्बलवान् । 5

---

## सुबोधिनी

त्यर्थः । ननूपभोगसहितागमापेक्षया भोगरहितागमस्य दुर्बलत्वे यत्रैकमेव क्षेत्रमेकस्याधीकृत्यान्यस्याप्याधीकरोति, तत्र यदि दैवात् पूर्वस्य भोगाभाव उत्तरस्य च भोगोऽस्ति, तादृशेऽपि स्थले भोगरहितागमस्य दौर्बल्यं स्यात् । तथा च "आधौ प्रतिग्रहे क्रीते" इत्यादिवचनविरोधः स्यादित्याशङ्क्य परिहरति—एतच्च द्वयोरित्यादिना । आगमोऽभ्यधिको भोगादित्येतद्वचनं प्रकारान्तरेण व्याचष्टे—अथवेत्यादिना । एतेषां समवाय इति । एतेषां साक्ष्यादीनां समवाये मेलने सर्वसम्भव इति यावत् । पूर्वक्रमागतात् भोगाद्विनेति । क्रमायातभोगव्यतिरिक्तभोगापेक्षयाऽऽगमो बलीयानित्यर्थः। पूर्वक्रमागतभोगस्यागमापेक्षया[2] क्वचित् बलीयस्त्वं दर्शयति—स पुनरिति । आगमेऽपि बलं नैवेति द्वितीयार्धं तात्पर्यतो

## बालंभट्टी

भ्यधिकः"इत्यस्य पूर्वमीषद्व्यवहितसङ्गत्या व्याख्यानं कृतम् । तथाऽपि तन्न युक्तम्--व्याख्याकृदुक्तार्थसङ्गतिलाभेऽपि मूलसङ्गत्यलाभात् । किं च प्रतिपादितार्थस्य तात्पर्यविषयतया यथा कथंचित् योजनेऽप्यशाब्दत्वेन स्वारस्यानावहत्वादतस्तत्प्रकारान्तरेण ततोऽपि व्यवहितसङ्गत्या शाब्दमर्यादया व्याचष्टे—अथवेति । समवाये एतेषां लिखितादीनां समवाये मेलने इत्यर्थः । सर्वेषां सम्भवे इति यावत् । इदमर्थमाह—आगम इति । प्राग्वत् द्वितीयपादार्थमाह—पूर्वेति । पूर्वक्रमायातभोगाय[3] अन्यभोगापेक्षयाऽऽगमो बलवानित्यर्थः । पूर्वक्रमागतभोगस्य विजातीयागमापेक्षया कुचित् बलवत्त्वम् । तत्तात्पर्यविषयमाह—स पुनरिति । स त्वित्यर्थः । अत एव वचनेऽन्यथाक्रमसत्वेऽपि अत्रानुवादेऽन्यथापठितम् ।

---

१ चतुर्थपुरुषे । २ त. मागतं भोगस्यागमापे (?) । ३ थ. क्षया भोग । ४ ब. भोगान्यभोगा ।

मध्यमे तु भोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवानिति । एतदेव नारदेन स्फुटीकृतम्—" आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका संतता या चिरन्तनी ॥" इति ॥ २७ ॥

*" पश्यतोऽब्रुवत " इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम् । तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशंक्य पुरुषव्यवस्थया प्रमाणव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह—

**आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।**
**न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ २८ ॥**

---

यस्मात्क्रमभुक्तिरागमाद्बलीयसी तस्मात्—आगमस्त्वित्यादि ॥ २८ ॥

---

### सुबोधिनी

व्याचष्टे—मध्यमे तु भोगरहितादिति । कारणं[१] भुक्तिरेवैकेति, एतच्चतुर्थपुरुषविषयम् ॥२७॥

### बालंभट्टी

एतद्वचनक्रमेण [२]द्वितियार्धं तात्पर्यतो व्याचष्टे—मध्यमे त्विति । अपिर्बहुभोगसहितपरिग्राहकः।प्रतियोग्यन्तराभावने स्वापेक्षया केवलं स्वस्य प्राबल्यासम्भवेन च योग्यतयाऽभुक्तितो भुक्तेः प्राबल्यमनेन बोध्यत इति भावः । पूर्वार्द्धस्यैव समवायविषयतेति तात्पर्यम् । इति व्याख्यानसमाप्तौ। अत्र[३] मानमाह—एतदेवेति । एवेन प्रागुक्तव्यवच्छेदः । चतुर्थपुरुषविषयमाह—कारणं भुक्तिरिति । एवेन प्रागुक्तागमव्यवच्छेदः । सन्तता निरन्तरा । चिरन्तनी दीर्घकाला । चिरन्तनेति पाठे आर्षत्वात्[४] टाप् ॥ २७ ॥

तस्य तत्संगतत्वादेव । तेन [५]उत्तरसंगतिमाह—पश्यत इति उक्तमिति । सिद्धांतित

---

* " स्तोकभुक्तिरेषा, न सर्वभुक्तिरागमापेक्षेत्याह—" इति अप० ६३५,

---

१ द. भुक्तिरेवेति । ध. भुक्तिरेकेति । २ ब. द्वितीयार्धतात्पर्यविषयमाह—सपुनरिति ३ ब. समाप्तौ । अनुमानमाह ४ ब. आर्षत्वादाह । ५ फ. तेन उत्तरसंगतिमाह ।

* येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः स पुरुषः कुतस्ते क्षेत्रादिकमित्यभियुक्तस्तमागमं प्रतिग्रहादेरिति[1] लिखितादिभिरुद्धरेत् भावयेत् । अनेन चाद्यस्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति । तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत् , किं तु अविच्छिन्नाप्रतिरवसमक्षभोगम् । अनेन चागममनुद्धरतो द्वितीयस्य न दण्डो-

लेख्यकर्तुः पुत्त्रः न लेख्यदोषानपाकुर्यात् । न ह्यसौ पितृवल्लेख्यरूपज्ञो यतः धनं तु म ...तस्य तु यतः पुत्त्रः तस्य तस्य धनमपि न स्यात् , यस्माद्भुक्तिः तत्र गरीयसी । लेख्यादि-

## सुबोधिनी

दण्डव्यवस्थां दर्शयितुमाह—आगमस्तु कृतो येनेति । नन्वेतदनुपपन्नम् अस्मिन् वचने दण्डव्यवस्थाविधानाभावादिति चेत् , मैवम् । आद्येन पुरुषेण प्रतिग्रहादिकमेवो-

## बालंभट्टी

मनेनेति भावः । तत्र फलेत्यन्वयदृष्टं[2] तं दर्शयितुं अनेनैव तात्पर्यतः प्रतिपादयितुम् । अयं भावः-आद्येन पुरुषेण पतिग्रहादिकमेवोपन्यसनीयं, द्वितीयेन विच्छिन्नाप्रतिरवसमक्षत्वादिविशेषणविशिष्टो भोग एवोपन्यसनीयः । तृतीयेन समक्षत्वादिविशेषणवैशिष्ट्यं विनाऽपि क्रमागतभोगमात्रमुपन्यसनीयमिति नियमस्यानेन विधेर्नियमातिक्रमे दण्डविधानमप्यर्थसिद्धमेवेति दण्डव्यवस्थाप्रतिपादकत्वमुपपन्नमेव । एतेनात्र वचने दण्डव्यवस्थाविध्यभावादिदमयुक्तमित्यपास्तमिति । स्वीकार इति , — प्रतिग्रहादिनेति भावः । युक्तः पैरेणाभियुक्तः[3] । तथा च प्रतिग्रहादेरिति तस्योत्तरमुक्त्वा तथा कार्यमिति भावः । प्रतिग्रहादेरितीति पाठे इत्युक्त्वा तमागममर्थात्पतिग्रहादिकमित्यर्थः । यथाश्रुतार्थासंभवादाह—भावयेदिति,—प्रतिपादयेदित्यर्थः, अंगीकारयेदिति वा । अस्य तात्पर्यार्थमाह—अनेन चेति । न तत्सुत इत्यंशं शेषपूरणेन सानुषङ्गेण व्याचष्टे—तत्सुत इति । अत्र प्रागुक्तविशेषणचतुष्टयमध्ये दीर्घकालत्वमत्र तद्भिन्नमात्रमाह—अवीति । भोगमिति

* येनाऽगमः क्रयादिः कृतः सोऽभियुक्तस्तमागमं लिखितादिप्रमाणेनोद्धरेत्साधयेत् । तस्यागमकर्तुः सुतः प्रेतो वाऽभियुक्तो नागममुद्धरेत्, यतस्तयोर्भुक्तिरेव गरीयसी गुरुतरा । " इति अप० ६३५.

१ क. ग. ज. प्रतिग्रहादिकं । २ फ. ब. तत्र तथा सति अन्व[illegible] दृष्टान्तं दर्शयितुं । ३ फ. युक्तः परेणादिकं ।

ऽपि तु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम् । तत्सुतस्तृतीयो नागमं ना-
पि विशिष्टं भोगमुद्धरेदपि तु क्रमागतं भोगमात्रम् । अनेनापि तृतीयस्य क्रमायात-
भोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम् । तत्र तयो-
र्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी, तत्रापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्त
5 व्यम् । त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव, दण्डे तु विशेष इति तात्पर्यार्थः ।
उक्तं च—"आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतो वा
भोग्यहानिस्तयोरपि ॥" इति ॥ २८ ॥

---

युक्तमेवेत्यभिप्रायः। लेख्यकृत्पुत्रस्तद्धनभाक् न भवति यस्मात्—"आगमेन विशुद्धेन भोगो
याति प्रमाणताम् । अपि शुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥" लेख्यस्वरूपानपाक-
रणत्वात् । न तद्दोषानपाकरणमेव स्यात् । न तु प्रमाणरहितं स्वामिस्वमपीत्यभिप्रायः ।
प्रामाण्यं च विशुद्धागमस्यैव भोगस्य, न तु भुक्तिमात्रस्येत्यर्थः ॥ २८ ॥

---

## सुबोधिनी

पन्यसनीयम्। द्वितीयेनाविच्छिन्नाप्रतिरुद्धसमक्षत्वादिविशेषणविशिष्टो भोग एवोपन्यसनीयः।
तृतीयेनापि समक्षत्वादिविशेषणवैशिष्ट्यमन्तरेणापि क्रमागतभोगमात्रमुपन्यसनीयमिति नि-
यमविधेर्नियमातिक्रमे दण्डविधानमप्यर्थसिद्धमेवेति सर्वमनवद्यम्।भोग्यहानिस्तयोरपीति,-
भोग्यहानिरर्थहानिरित्यर्थः ॥ २८ ॥

## बालंभट्टी

उद्धरेदित्यस्यानुषङ्गः।एवमग्रेऽपि । विशिष्टं भोगं स्वोक्तम् । तत्सुतो वेत्यत्र वा चार्थे इत्याश-
येन तमंशं व्याचष्टे—तत्स्तुत इति । न वाविशिष्टेति । वाऽप्यर्थे । नापिविशिष्टमिति क्व-
चित् पाठः । तुर्यपादमव्यवहितोभयशेषत्वेन व्याचष्टे—तत्रेति । अस्य व्याख्या त-
योरिति तद्व्याख्या द्वितीयेति । सर्ववाक्यमिति न्यायेनाऽऽह—भुक्तिरेवेति । प्रकर्षस्य
प्रतियोगिसापेक्षत्वेन तत्स्वारस्येन लब्धमाह—तत्रापि इति । तयोर्मध्येऽपीत्यर्थः । परम-
तात्पर्यमाह—त्रिष्वपीति । अस्य पूर्वतः स्वरसतो लब्धत्वादत्र मानमाह—उक्तं चेति ।
पादत्रयस्योक्त एवार्थः—भोग्यति । अथ हानिस्तदनुद्धरणे द्वितीयतृतीययोरपीत्यर्थः ।
अपिना आद्यस्य समुच्चयः ॥ २८ ॥

---

१ द् न सः । २ फ. ब. रेण च ।

* अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं विनापूर्वक्रमागतादित्यत्र, तस्यापवादमाह—

**योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।**
**न तत्र कारणं भुक्तिरागमेन विना कृता ॥ २९ ॥**

यदा पुनराहर्त्रादिभिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतः परलोकं गतो भवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत् , [1]यस्मात्तत्र तस्मिन्व्यवहारे भुक्तिरागमरहिता साक्ष्यादिभिः साधिताऽपि न प्रमाणम्,—पूर्वाभियोगेन भोगस्य सापवादत्वात् । नारदेनाप्युक्तम्—“ [2]तथारूढविवादस्य प्रेतस्य व्यवहारिणः । पुत्रेण सोऽर्थः [4]संशोध्यो न तं भोगो निवर्तयेत् ॥” [3]इति ॥

---

किं च—**योऽभियुक्त इत्यादि ॥ २९ ॥**

यदि हि लेख्यदोषादिकरणादियुक्तः परेतो मृतः स्यात् तदा तदीयं धनग्राह्यपाकुर्यात्

सुबोधिनी

नन्वारूढविवादस्येति । अस्यार्थः—आरूढविवादस्य व्यवहारिणः प्रेतस्य सम्बन्धिना पुत्रेण सोऽर्थो विवादास्पदीभूतः संशोध्य आगमेन । तमर्थं [5]न भोगो निवर्तयेत् न प्रत्यावर्तयेत् । तत्र भोगो न प्रमाणं भवतीति यावत् ॥ २९ ॥

बालंभट्टी

सङ्गतिमाह—अस्मार्तेति । पुनः तु यदर्थमाह । अहर्त्रादिभिरिति । अभियोगनिमित्तसूचनयाऽऽहर्तुरुपादानम् , अन्यथा तदसम्भवात् । आदिना तत्पुत्रादिग्रहणम् । आर्थिकमाह—कृतेति । परेत इत्यस्य परमित इति व्युत्पत्तिलभ्यमर्थमाह—परेति । तदः प्रकृतबुद्धिस्थपरामर्शित्वादाह—आगममिति । अत्रोत्तरार्द्धं हेतुरिति यस्मादिति शेषेण व्याचष्टे—यस्मादिति । तत्रेत्यस्य व्याख्या तस्मिन्नित्यादि । आगमेन विनेत्यस्य व्याख्या आगमेति । कृतेत्यस्य व्याख्या साक्ष्यादीति—न प्रमाणमिति। अत इति शेषः । यस्मादित्यस्यार्थमाह—पूर्वेति । एवं चात्रागमज्ञानसापेक्षस्य तस्य प्रामाण्यमिति भावः । तथारूढेति । तथाशब्दः पूर्वसमुच्चये । आरूढविवादस्य प्राप्त-

---

* “ न तत्सुतस्तत्सुतो वेत्यस्यापवादमाह— ” इति अप० ६३६.

---

१ क. तस्मात् । २ ख. नवारूढ । ३—१. ९३. । ४ संसाध्यः । ५ थ. द. भोगो न.

* अनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तते इति स्थितम् । निर्णीतेऽपि व्यवहारे, स्थिते च व्यवहर्तरि, व्यवहारः क्वचित्पुनः प्रवर्तते क्वचिन्न प्रवर्तत इति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह—

**नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।**
**पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥**

† नृपेण राज्ञा; अधिकृताः व्यवहारदर्शने नियुक्ताः "राज्ञा सभासदः कार्याः"

---

एतच्च लेख्यकर्तृविषयम् । इतरस्य द्रव्यापहार एव स्यात् । यस्मान्नो (?) तत्र स्वामित्वे भुक्तिरागमशून्या करणं भवति । कृताऽपि तु व्यभिचारिणीत्यर्थः ॥ २९ ॥

यदि तु दुष्टोऽपि लेख्यादौ तत्कर्ता दोषानपाकुर्यात् तदा कथं स्यात्? तादृशे विषये राजावेदितं—"स्मृत्याचारव्यपेतेन मार्गेण..." इत्यत्र। अत एव च—**नृपेणाधिकृता इत्यादि** ३० ॥

---

## सुबोधिनी

व्यवहर्तरि प्रेते व्यवहारो न निवर्तत इति। न निवर्तते नापगच्छति। प्रवर्तत

## बालंभट्टी

विवादस्य व्यवहारिणः प्रेतस्य मृतस्य पुत्रेण सोऽर्थः विवादास्पदीभूतः संशोध्यः आगमेन। यतस्तमर्थं भोगो न निवर्त्तयेत् न प्रमापयेत् । भोगस्तत्र प्रमाणं न भवतीति यावदित्यर्थः ॥ २९ ॥

अव्यवहितेन संगतिमाह—अनिर्णीतेति। अनिर्वृत्तसंसाध्य इति पाठान्तरम्। न विवर्तते नापगच्छति प्रवर्तत एवेत्यर्थः । व्यवेति । पुनरित्यादिः। क्वचित्तथा पाठ एव। अथ वाक्यार्थे नृपेणाधिकृता इति भिन्नमित्याशयेन वाक्यार्थज्ञानोपयोगितया आदौ पदार्थानाह—नृपेणेति। प्रकृतयोग्यतयाऽऽह—व्यवेति। ते के इत्यत आह—राज्ञे-

---

* "व्यवहारद्रष्टॄणां पबलदुर्बलभावमाह" अप० ६३८.

† "नृपेणाधिकृता राज्ञा व्यवहारदर्शने नियुक्ताः, पूगाः समूहाः, एकशिल्पोपजीविनः श्रेणयः, कुलानि कृषीवलाः। एषां पाठक्रमानुसारेण पूर्वं पूर्वं उत्तरोत्तरापेक्षया गुरु नृपाणां व्यवहारदर्शने बलीयः। तेन कुलदृष्टे व्यवहारे कुलदृष्टत्वशङ्कायां श्रेण्या परीक्षणं युक्तम्। श्रेणिदृष्टे पूगैः, पूगदृष्टे नृपाधिकृतैः, न तु विपरीतकृतम्।" अप० ६३८.

---

१ क. स्थितेऽपि व्यव० । २ इति व्यवहारव्यवस्थासिद्धये । ३ क. ङ. छ. राज्ञेति नास्ति। ४ फ. मृतसंबंधिना पुत्रेण। ५ फ. ब. प्रमावर्तयेत्। ६ ब. तथा पाठ अत एवार्थे।

इत्यादिनोक्ताः; पूगाः समूहाः, भिन्नजातीनां भिन्नवृत्तीनां एकस्थाननिवासिनां,—यथा ग्रामनगरादयः ; श्रेणयो नानाजातीनामेकजातीनामप्येकजातीयकर्मोपजीविनां संघा-ताः,—[1]यथा हेडाबुकादीनां ताम्बूलिककुविन्दचर्मकारादीनां च ; कुलानि ज्ञातिसंब-न्धिबन्धूनां स[2]मूहाः ;—एतेषां नृपाधिकृतादीनां चतुर्णां पूर्वं पूर्वं यद्यत्पूर्वं पठितं तत्तद्गुरु बलव[3]त् ; ज्ञेयं वेदितव्यम् ; नृणां व्यवहर्तॄणां ; व्यवहारविधौ व्यवहारदर्श[4]नकार्ये। 5
एतदुक्तं भवति—नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसन्तोषः कु[5]दृष्टबु-द्धया भवति, तथाऽपि [6]न पूगादिषु पुनर्व्यवहारो भवति । एवं पूगनिर्णीतेऽपि न

---

नृपो हि बलवान् व्यवहारं कारयितुं समर्थ इति व्यवहारविधौ स एव ज्यायान् । इतरेऽपि सामर्थ्यापेक्षया दुर्बला बलीयांसश्च भवन्ति । अतश्च कुलादिक्रमेणैव व्यवहाराणां

---

## सुबोधिनी

एवेत्यर्थः । यथा हेडाबुकादीनामिति । देशात् देशान्तरं गत्वा प्रस्थाप्य वा अश्वविक्रेतारो

## बालंभट्टी

ति । आकांक्षाशान्तयेऽसांकर्याय चाह—भिन्नेति । नानेति । उभयोः संघाताः इत्यत्रान्वयः। इदमुभयं स्वरूपकीर्तनमिति सूचयन् आवश्यकं उभयशेषमाह—एकजाती-येति । तत्राद्योदाहरणं—हेडेति । देशाद्देशान्तरं गत्वा प्रस्थाप्य वाऽश्वविक्रेतारो हेडाबू-काः । गुर्जरदेशे प्रसिद्धोऽयं तत्र शाँब्दः—द्वितीयोदाहरणं ताम्बुलिकेति । तत्र विक्रेतेत्य-र्थः। कुविंदस्तन्तुवायः। आदिनातक्षादयः। संघात इत्यस्यानुषङ्गः। सम्बन्धी जामात्रादिः। मूले-ऽथशब्दश्चार्थे। अथवाक्यार्थमाह —एतेषामिति । चतुर्णां मध्ये इति शेषः। पूर्वत्वं न कारण-त्वादिकृतं किं तु पाठकृतमित्याह—यद्यत् पूर्वं पठितमिति । कुत्रेत्याह—नृणामिति । प्रकृतत्वादाह—व्यवेति । योग्यतया व्यवहारशब्दो दर्शनपरः । कर्मकृत्प्रत्ययान्तो विधि-शब्द इत्याह—व्यवहारेति । अवतरणोक्तं तं स्पष्टयितुं तात्पर्यार्थमाह—एतदिति ।

---

१ क. यथामांसविक्रयिणां ताम्बू० । क. ज. हेडातुकादी० : बा, भ, हेडाबूकादीनां । २ छ. संघाताः । ३ क. छ. विज्ञेयं । वेदितव्यम् । ङ. ज. बलवद्वेदितव्यम्। च. बलवद्विज्ञेयम् । नृणां । ४ छ. दर्शनकाले । ५ ख. कुदृष्टिबुद्दया । ६ ग. तथाऽपि पूगादिषु पुनर्व्यवहारो न भवत्येव । एवं पूगादिनि० । ७ सिद्ध इति क्वचित् ।

श्रेण्यादिगमनम् ; तथा श्रेणिनिर्णीते कुलगमनं न भवति । कुलनिर्णीते तु श्रेण्यादिगमनं भवति ; श्रेणिनिर्णीते पूगादिगमनम् । पूगनिर्णीते नृपाधिकृतगमनं भवतीति । नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवतीत्युक्तम्—
"कुलानि श्रेणयश्चैव गणाश्चाधिकृता नृपाः । प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥" इति । तत्र च नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सभ्यैः सह सपणव्य- 5

---

राजगामिता द्रष्टव्या । ब्राह्मणादिसमूहाः पूगाः, स्पष्टमन्यत् । प्रभुत्वादेव च तदर्थाधिकृतो वा प्राड्विवाकादिः ॥ ३० ॥

---

## सुबोधिनी

हेडाबुका इति गुर्जरेषु प्रसिद्धोऽयं शब्दः । *गणाश्चाधिकृता इति । गणाः पूगाः, स्वोत्तरसभ्येनेति । अधिकसभ्ययुक्तेनेत्यर्थः ॥ ३० ॥

## बालंभट्टी

कुदृष्टेत्यनेन नासन्तोषबीजनिरासः । जातव्यवहारस्य यथार्थत्वं च सूचितं व्युत्क्रमेण व्यतिरेकमाह—कुलेति । विशेषं स्वल्पमाह—नारेति । पुनस्तु । यद्यत्र गणा इति पठितं,मूले च पूगा इति, अस्ति च तयोर्भेदस्तत्र पूगस्वरूपं व्यक्तं—सैवषां हीनवर्णानां संघातो गणः, अत एव पूगश्रेणिगणादीनामिति प्राक् उक्तम् ;तथाऽपि तत्स्थाने मुनिद्वयप्रामाण्यादुभयो र्विकल्पेन ग्रहणम् । अत एव चतुर्णामिति व्याख्याकृदुक्तिसंगतिः। यद्वा गणाश्चेति चेन तदग्र पूगानां समुच्चयः । मूलेऽथशब्दस्य चार्थस्य पूगा इत्यत्रान्वयेन तदग्रेऽनेन तेषां समुच्चय इति एक वाक्यतयैव नारदेन पुनरित्यादि वदता व्याख्याकृता प्रागुक्तचतुष्टयं नाभिमतमिति सूचितमेवेति बोध्यम् ।नृप इति पाठः—प्रतिष्ठा इति । व्यवहारदर्शनानां स्थानानीत्यर्थः। तथा सति विशेषमाह—तत्र चेति । तेषां मध्ये इत्यर्थः—सोत्तरेति । सभायां साधुः सभ्यः उत्तरश्चासौ सभ्यश्च तत्सहितेनेत्यर्थः । पूर्वसभ्यतो भिन्नोत्कृष्टसभ्ययुक्तेनेति यावत् । सपणे इति,—उभयकारितपणसहितेत्यर्थः । अयमेव पूगाद्यर्थः पूर्वमुभयत्रापि यथासम्भवं ज्ञेयः ॥ ३० ॥

---

* 'पूगाश्चाधिकृताः' इत्येव तु मिताक्षरायां खसंज्ञितायां पाठः ।

---

१ ख. पूगाश्चा । २ क. सर्वेषां । पूर्वेवां । ख. षैवषामु० । ३ ख. स्वोत्तरसभ्येन । ङ. च. छ. सोत्तग सभेन । ४ क. सपणेव्यव० । ५ नारदेनेति । ६ फ. यद्यप्यत्र ।

वहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदाऽसौ दण्ड्यः । अथासौ जयति तदाऽधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते; प्रबलदृष्टस्तु न निवर्तेत इत्युक्तम् । इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तेत इत्याह—

**बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।** 5

**स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥**

* बलेन बलात्कारेण उपाधिना भयादिना विनिर्वृत्तान्निष्पन्नान्व्यवहारान्निवर्तयेत् । तथा स्त्रीभिः, नक्तं रात्रावस्त्रीभिरपि, अन्तरागारे गृहाभ्यन्तरे, बहिर्ग्रामादिभ्यः, शत्रुभिश्च,—कृतान्व्यवहारान्निवर्तयेदिति सम्बन्धः ॥ ३१ ॥

---

**बलोपाधिविनिर्मुक्तानित्यादि ॥ ३१ ॥**

स्पष्टार्थश्लोकः ॥ ३१ ॥

---

बालंभट्टी

उपसंहरन्नव्यवहितसङ्गतिमाह—दुर्बलैरिति । कश्चित् न सर्वः । बलं चोपाधिश्च ताभ्यां विनिर्वृत्तानिति व्युत्पत्तेराह—बलेनेति । उपधीति पाठान्तरम् शत्रुशब्दान्तद्वन्द्वस्य कृतशब्देन शेषषष्ठ्या समासे आद्यन्तयोस्तत्र कर्तृत्वेनान्वयो मध्यमानामधिकरणत्वेन। फलतीत्याह—तथा स्त्रीभिरिति । अपौनरुक्त्यायाह—अस्त्रीभिरपीति । मध्ये इत्यर्थकान्तारशब्देन षष्ठीसमासे राजदन्तादित्वात् परनिपात इत्याह—गृहाभ्यन्तरे इति । तथार्थमाह—चेति,—कृतांश्चेत्यर्थः। मध्यमणिन्यायेनान्वयादाह—निवर्तेति ॥ ३१ ॥

---

* बलं हठः । उपाधिः लोभद्वेषादिः । स्त्रीणां कर्तृत्वं द्रष्टृतयाऽर्थिप्रत्यर्थितया वा नक्तंकृता रात्रिकृताः...शत्रुकृताः शत्रुदृष्टाः ।" अप० ६३८.

---

१ क. ग. ङ च. बलोपधि० । २ छ. शत्रुकुलांस्तथा ३ क. ग. ङ. च. उपधिना । ४ ङ. च. छ. ज. भयेन । ५ क. ज. निर्वृत्तान् । ६ क. स्त्रीभिः ।२४.—व्य० २. ।

अपि च—

**मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।**
**असम्बन्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥ ३२ ॥**

मत्तो मदनीयद्रव्येण, उन्मत्त उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्र-
5 हसम्भवेनोपसृष्टः, आर्तो व्याध्यादिना[1], व्यसनमिष्टवियोगा[2]ऽनिष्टप्राप्तिजनितं दुःखं, तद्वान् व्यसनी*, बालो व्यवहारायोग्यः, भीतोऽरातिभ्यः, आदिग्रहणात्पुरराष्ट्रादि विरुद्धः। "पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः।अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः"॥ इति मनुस्मरणात्[3]। एतैर्योजितः कृतो व्यवहारो न सिद्ध्यति। अनियुक्तासम्बद्धकृतोऽपि

---

किं च—**मत्तोन्मत्तेत्यादि ॥ ३२ ॥**

**मत्तोऽतिहर्षितः, आर्तो वा; उन्मत्तो वा ग्रहगृहीतादिः; स्पष्टमन्यत् । किं च—**

---

सुबोधिनी

**असम्बद्धकृत इत्यमुमंशमनियुक्तपदाध्याहारेण व्याचष्टे**—अनियुक्तासम्बद्धकृतोऽपीति । **अनियुक्तत्वेनासम्बद्धः अप्रेषितत्वेन प्रकृतव्यवहारासम्बद्ध इत्यर्थः ।**

बालंभट्टी

अपि चेति,—**अन्योऽपि कश्चित्तादृशो व्यवहारो निवर्त्तेत इत्याहेत्यर्थः।वाक्यार्थबोधायादौ पदार्थानाह**— मत्त इत्यादि। **अर्त्तादिभीतान्तद्वन्द्वं कृत्वा पुनस्तेन मत्तोन्मत्ताभ्यां कृत्वा बहुव्रीहि तत्पुरुषौ कार्यौ। करणेऽनीयर्। पंचविधेनेत्यस्य व्याख्या**–वातेतिसम्भवेनेति। **ग्रहान्तपंचकजन्येनेत्यर्थः। कारणभेदेन कार्यभेदात्तस्य पंचविधत्वं**—जनितमिति। **एतदन्यतरजनितमित्यर्थः**—व्यवेति। **न तु स्तनंधयादिरेवेति भावः। राष्ट्रादीत्यादिपदग्राह्यं वचने एव स्फुटम्।** पुरेति,—**पुरविरुद्धो राष्ट्रविरुद्धश्चेत्यर्थः। य एवं सवादस्तैरनादेय उदाहृतः कथितोभवेदित्युराद्धार्थः। एवं च तस्यार्थिकी निवृत्तिर्बोध्या। वाक्यार्थमाह**—एतैरिति। **असंबद्धकृत इत्यंशमनियुक्तत्वपदाध्याहारेण व्याचष्टे** — अनियुक्तासंभवद्वेति—अनि-**युक्तत्वेनाप्रेषितत्वेन प्रकृतव्यवहारसम्बद्धो यस्तत्कृत इत्यर्थः।** चार्थ माह—आपीति।

---

* **कितवादिः पुत्रवियोगमान्वा" अप० ६३७,**

---

१ **क. ग. ङ. च.** व्याधिना । २ **ख.** मिष्टवियोगतेनिष्टप्राप्तिस्तज्जनितं । ३ **ख. ग** मनुस्मरणात् । ४ **क.** अनियुक्तपदाध्याहारेण ।

व्यवहारो न सिद्ध्यतीति सम्बन्धः । यत्तु स्मरणम्—"गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः । विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यति॥" इति तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति,—तेषा-

"कुलानि जातयः श्रेणीः गणान् जनपदानपि । स्वधर्माच्चलितान्राजा विनीय स्थापये-

## सुबोधिनी

ननु मत्तोन्मत्तादिकर्तृको व्यवहारो न सिध्यतीत्युक्तं पूर्वत्र । तत्र किं मत्तादि ग्रहणमुपलक्षणम् ? तथा च न केवलमेतद्वचनोपात्तमत्तादिकर्तृकव्यवहारासिद्धिः । अपि तु गुरुशिष्यादिकृतोऽपि व्यवहारो न सिध्यतीत्येवम्, उत मत्तादिग्रहणं नोपलक्षणम् । ततश्च मत्तादिभिरेव कृतो व्यवहारो न सिध्यतीति नियमार्थम् इति विकल्पे न तावदाद्यः "असम्बन्धकृतश्चैवेति" एवकारेण मत्तादिभिरेव कृतो व्यवारो न सिध्यतीति नियमप्रतीतेरिति बहिरेव परिहृत्य, नापि द्वितीयः "गुरोः शिष्य" इत्यादिवचनेन नियमनिष्पत्तेरित्याह—यत्तु स्मरणं गुरोः शिष्य इत्यादिना । अयमभिप्रायः—गुरुशिष्यादिकृतव्यवहाराणामसिद्धिकथनेन मत्तोन्मत्तादिकृतव्यवहारव्यतिरिक्तानामपि गुरुशिष्यादिकृतव्यवहाराणामासिद्धेः पूर्वोक्तनियमेन सिध्यभावात् पूर्वोक्तमत्तादिव्यवहाराणामेवा-

## बालंभट्टी

इतिरर्थसमाप्तौ । ननु मत्तादिकृतव्यवहारो न सिद्ध्यतीत्यत्र मत्तादिग्रहणमुपलक्षणम् । न वा आद्येऽन्यकृतव्यवहारासिद्धेरपि संग्रह इति न स्मृत्यन्तरविरोधो यद्यपि; तथाऽप्येवकारासंगतिः। द्वितीये एवकारबलेनास्य नियामकत्वलाभेनैवकारसंगतिरूपफलसत्वेऽपि वचनान्तरविरोध इति संशये श्रुतैवकारबलेनाद्यस्य दुर्वचत्वेन द्वितीयमेव वाच्यम् । यद्यप्याद्ये आदिश्रुतिरस्ति । तथाऽपि सर्वथा अनन्यगतिकसंग्रहेणैव तत्साफल्ये सगतिकसंग्रहणे न तात्पर्यम् । तथासति वचनान्तरविरोधस्तेनान्यकृतव्यवहारस्यासिद्धिप्रतिपादनेन नियमस्य दुर्वचत्वादित्याशयेन शंकते—यत्त्विति । विरोधे इति पूर्वान्वयि । मिथ इत्युत्तरान्वयि। गुरोः शिष्ये विरोधे त्वित्यादौ सति तेषां गुरुशिष्यादीनां मिथो व्यवहारो न सिद्ध्यतीत्यर्थः । अपि नैतज्जातीयस्मृत्यन्तरसमुच्चयस्त्वर्थवादः। आत्यन्तिकत्वप्रतिषेधविशेषेण कथंचित्केनचित्प्रकारविशेषेण तथा च तत्र चार्थस्तुन सिद्ध्यतीत्यग्रे योज्यः। तेन सिद्धिसमुच्चयः। तयोर्व्यवस्था च-

---

१ द. उन्मत्ता (?) । त. उतोन्मत्ता (?) २ ख. एतदादिनसिध्यतीत्यन्तोनास्ति. ३ क. ख. निवृते द्वितीयपक्षश्रयणे । ४ फ. आद्येऽथादि । ५ फ. संग्रहोपणेनति ।

मपि कथंचिवद्व्यहारस्येष्टत्वात्। तथा हि-"शिष्यादिशिष्टिरवधेन। अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः॥" इति[1] गौतमस्मरणात्। "नोत्तमाङ्गे कथंचन" इति[2] मनुस्मरणाच्च। यदि गुरुः कोपावेशवशान्महता दण्डेनोत्तमाङ्गे ताडयति, तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति, तदा भवत्येव व्यवहारपदम्॥ तथा "भूर्या पितामहोपात्ता" इत्यादिवचनात्पितामहोपात्ते भूम्या-

5

---

त्पथि॥" कुलानि कुटुंबानि, जातयो ब्राह्मणाद्याः, वर्णश्रेणयः, कारिकसमुदायगणा

---

## सुबोधिनी

सिद्धिरिति नियमो न घटत इति गुरुशिष्ययोर्व्यवहारस्थलं[3] दर्शयति—तथा हि शिष्यशिष्टिरवधेनेति। अस्यार्थः—शिष्यस्य शिक्षाऽवधेन अताडनेन[4]। अताडनेन शिक्षाया अशक्तौ रज्जुवेणुविदलाभ्यां सूक्ष्माभ्यां कृत्वा ताडयेत्। अन्येन रज्जुवेणुव्यतिरिक्तेन करादिना[5] स्थूलया रज्ज्वा स्थूलेन वेणुविदलेन वा घ्नन् ताडयन् राज्ञा शिक्षणीयो गुरुरिति। भूर्या पितामहोपात्तेत्यादिवचनादिति।

## बालंभट्टी

क्ष्यमाणप्रकारेण। यद्वा तु मिथ इत्यस्याग्रे योज्यम्। मिथस्तु मिथ एव न सिद्ध्यति, किन्तु व्यवहारदर्शिभिः सिद्ध्यतीत्यर्थः। यद्वा एतद्वैलक्षण्यसूचकस्तुः यथाश्रुत एव। तथा च मूलवाक्यस्थैवकारस्य न सिद्ध्यतीत्यग्रे योजनं कृत्वा मत्तादिकृतो व्यवहारः सर्वात्मना न सिद्ध्यत्येवेत्यर्थः। अयं तूक्तरीत्या क्वचित् सिद्ध्यतीत्यर्थः। यद्वा यथा श्रुत एव सः तदन्तरावृत्त्या भिन्नं वाक्यम्। यद्यपि वक्ष्यमाणरीत्या न सिद्ध्यति, तथाऽपि प्रबलविरोधपूर्वकदुराग्रहे तु सिद्ध्यत्येवेत्यर्थ इति न कोऽपि दोष इति भावः। ननु अयोग्यत्वादेतेषां व्यवहार एव नोचितोऽसंभवश्च। तस्मात्तमुपपादयति—तथा हीति। तत्र तावत् गुरुशिष्ययोर्व्यवहारस्थलमाह—शिष्येति। स्मृतिव्यपेतमार्गप्रदर्शनाय हेतुद्वयमिदम्। शिष्यस्य शिष्टिः शिक्षा अवधेन ताडनेन। अशक्तौ तथाकर्तुं शक्यते। न चेत् तथा सूक्ष्मेण रज्जुखंडेन वेणुखंडेन च तच्छिक्षा कार्या। अन्येन उक्तभिन्नेन स्थूलेन वेणुखंडेन घ्नन् ताडयन् गुरुः राज्ञा शास्यः शिक्षणीय इत्यर्थः। यदीत्यनेनान्यथाव्यवहारपदत्वाभावस्सूचितः। एवमग्रेऽपि। पितापुत्रयोस्तदाह-तथेति। भूरिति; "भूर्या पितामहोपात्ता निबद्धो द्रव्यमेव वा। तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चैवहि॥" इति वक्ष्यमाणमूलवचनादित्यर्थः। साम्ये हेतुरयम्। समाने सतीति

---

१.—२. ४२—४। २.—८. ३००। ३ थ मूलं। ४ थ. द. अताडनेनेति नास्ति। ५ त. करादिनेति नास्ति।

दौ पितापुत्रयोः स्वाम्ये समाने, यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रवेशयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः॥ यथा "दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके। गृहीतं स्त्रीधनं भर्ता नाकामो* दातुमर्हति॥" इति स्मरणात्, दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि याच्यमानो[2] न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः।तथा भक्तदासस्य स्वामिना सह व्यवहारं[3] वक्ष्यति। गर्भदासस्यापि,—गर्भदासादीनधिकृत्य—"यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभागं लभेत च॥" इति नारदोक्तत्वात्, तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते। तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं शिष्यादयो निवारणीयाः राज्ञा ससभ्येनेति "गुरोः शिष्य" इत्यादि श्लोकस्य तात्पर्यार्थः। अत्यन्त-

सुबोधिनी

"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात् सादृशं[4] स्वाम्यं पितुः पुत्रस्य चैव हि॥" इति वचनादित्यर्थः। सम्प्रतिरोधक इति। दुर्गादौ परबलैर्निरोधः सम्प्रतिरोधकम्। नाकामो दातुमर्हतीति। पूर्वोक्तस्थलेषु गृहीतं पुनर्दातुमनिच्छु-

बालंभट्टी

शेषः। धर्मेति;—धर्मनिर्णयस्थानमित्यर्थः। दम्पत्योस्तदाह—तथेति। सम्प्रतीति। सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोधकरणं संप्रतिरोधकम्।नाकाम इति। प्रागुक्तस्थलान्यतमे गृहीतं स्त्रीधनं पुनस्तस्यै दातुमनिच्छुश्चेन्न दद्यादित्यर्थः। व्यतिरेके हेतुरयम्। विद्यमानेत्यादिविशेषणद्वयेन तदभावे तदभावः सूचितः। अपिः मिथस्समुच्चये। दासभेदा वक्ष्यन्ते भक्तदासा गर्भदासादयस्तथाऽऽद्ये तयोस्तदाह—तथेति। भक्तमन्नं। भक्तमन्धोऽन्नमित्यमरः[5]। द्वितीये तयोस्तदाह—गर्भेति। अयं द्विविध इत्यन्यत्र स्पष्टं स्वामिना सहेत्यग्रतनेनान्वयः— यश्चैषामिति। एषां गर्भदासादीनां मध्ये यःकश्चिदित्यर्थः। विमुच्येत मोचनीयः। लभेत प्रापयेत्। अंतर्भावितण्यर्थः। तत् तस्माद्दासत्वात्। नन्वेवं तस्य का गतिरत आह—तस्मादिति। प्रथममित्युक्तिस्वारस्यादाह—अत्यन्तेति। अश्रे-

* चतुर्थचरणः 'न स्त्रियैदातुमर्हति' इत्येतावन्मात्रभेदेन (याज्ञ० व्य० १४७.) पठ्यते।

१ न स्त्रियै दा०। २ क. याच्यमानोऽपि। ३ ख. व्यवहारान्। ४ व्य० १२१। ५.—२. वै. ४८.।

निर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः । यदपि "एकस्य बहुभिस्सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयोऽभवेद्वादो धर्मविद्भिरुदाहृतः॥" इति नारदवचनम्, तत्रैकस्यापि—"गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।" तथा "एकं घ्नन्तं बहूनां च" इत्यादिस्मरणादेकार्थैर्बहुभिः सार्द्धं व्यवहार इष्यत एवेति भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो न भवतीति द्रष्टव्यम् । स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्यवहारो भवत्येवेति, तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पार-

---

## सुबोधिनी

श्चेन्न दद्यादित्यर्थः । गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च य इति;—सर्वस्वहरणं कृत्वा तं राष्ट्रात् विप्रवासयेत्'।इत्युत्तरार्धम् । एकं घ्नतां बहूनां चेत्यादि । "यथोक्तात् द्विगुणो दमः" इति वचनशेषः । व्यवहार इष्यत एवेति । गणद्रव्यहारिणः सर्वस्वहरणादिविधानम् एकहन्तॄणां बहूनां द्विगुणदण्डविधानं च विद्यते । एतदुभयमपि व्यवहारमुखेन तादृशापराधवतामेव भवतीति व्यवहारोऽस्तीत्यर्थः । 'एकस्य बहुभिः सार्धम्' इत्यस्य नारदवचनस्याभिप्रायमाह—भिन्नार्थैर्बहुभिरिति । पृथक् साध्यवद्भिर्बहुभिस्सार्धमेकस्य

## बालंभट्टी

यस्करत्वे क्रोधादिना इष्टापत्त्यङ्गीकारे त्वित्यर्थः । एवमन्यविरोधं परिहरति—यद्यप्येकस्येति । वाद इत्यस्य त्रिभिरन्वयः । प्रागुक्तैकवाक्यतया तत्राद्यस्यार्थमाह—तत्रैकेति । तेषां त्रयाणां मध्ये इत्यर्थः । अपिनाऽनेकसमुच्चयः । एकार्थैरित्यग्रिमेणान्वयः । गणेति । "सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्।" इत्युत्तरार्धम् । व्यवहारद्रष्टेति शेषः। स्मृत्यन्तरमाह —तथेति । एकमिति । "यथोक्तात् द्विगुणो दमः" इति वचनशेषः । गणद्रव्यहार्यादेः सर्वस्वहरणादिविधानमेकहर्तॄणां बहूनां च द्विगुणदण्डविधानं स्मृतावुक्तं इदमुभयमपि व्यवहारमुखेन तादृशापराधवतामेव भवतीति व्यवहारोऽस्तीति भावः । विशेषमाह—एकार्थैरिति । अत एवोक्तनारदाभिप्रायमाह—भिन्नार्थैरिति । प्रागुक्तयुक्तेराह— युगपदिति । किन्त्वीदृशस्थले क्रमात्सिद्ध्यतीति भावः । द्वितीयतात्पर्यं प्रागुक्तमाह—स्त्रीणामिति । इति व्याख्येयमित्यत्रान्वयः। गोपशौण्डिकेत्यत्र वक्ष्यमाणयुक्तेराह—गोपेति । तत्रापि विशेषं सूचयन् हेतुमाह—पतिष्विति । तथा च

तन्व्यादनादेयो व्यवहार इति व्याख्येयम्। प्रेष्यजनस्य चेत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात् स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति योजनीयम् ॥३२॥

परावर्त्यव्यवहारमुक्त्वा इदानीं परावर्त्यं द्रव्यमाह —

**प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।**
**विभावयेन्नचेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥** 5

प्रनष्टं हिरण्यादि शौल्किकस्थानपालादिभिराधिगतं राज्ञे समर्पितं यत्तद्राज्ञा

ब्राह्मणादिसमूहाः जनपदः दुर्गाश्रयः । अत्र जनोऽभिहितः । सोऽपि राजा । स्वधर्माच्चलिता दण्ड्या इत्यभिप्रायः ॥ ३२ ॥

यस्माच्च राजा व्यवहारविधावग्रे दण्डधरः तस्मात्—**प्रणष्टादिगतमित्यादि ॥ ३३ ॥**

## सुबोधिनी

युगपद्व्यवहारो न सिध्यति, अपि तु क्रमात् सिध्यतीत्यभिप्रायः । उपसंहरति—इति योजनीयमिति[1] । अयं[2] भावः—उन्मादादिकृतो व्यवहारः सर्वात्मना न सिध्यत्येव, गुरुशिष्यादिकृतस्तूक्तरीत्या सिध्यत्येवेति ॥ ३२ ॥

## बालंभट्टी

तदभावे तत्रापि व्यवहार उपादेय एवेति भावः। अयं च तस्याः पत्या साकं न, किं त्वन्येनेति बोद्धयम् । एवमग्रेऽपि । तृतीयतात्पर्यमाह—प्रेष्येति । इति योज्य इत्यग्रिमेणान्वयः । स्वार्थेति,—भृत्यार्थेत्यर्थः । अपिना तदर्थव्यवहारसमुच्चयः। तस्मादुक्त एवाशय इति न कोऽपि दोष इति तत्वम् ॥ ३२ ॥

प्रसंगसंगतिमाह—परेति । प्रनष्टेति कर्मधारयो न तु पंचमीसमास इत्याह—प्रनष्टमिति । धनमित्यस्यार्थमाह—हिरण्यादीति । शौल्किकेति द्व·द्वं कृत्वा बहूव्रीहिः कार्यः । असमर्पणे तेषां दण्डसत्वादाह—राज्ञे इति । उत्तरार्थसूचितमार्थिकं

१ थ· द· रति योज। २ त· मिति । उन्मा । ३ द. अयमभिप्रायः ।

धनिने दातव्यम् यदि धनी रूपसंख्यादिभिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समं दण्ड्यः,—असत्यवादित्वात् । अधिगमस्य स्वत्वनिमित्तत्वात् स्वत्वे प्राप्ते तत्परावृत्तिरनेनोक्ता । अत्र च कालावधिं वक्ष्यति—"शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् । अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥" इति । मनुना पुनः
5 संवत्सरत्रयमवधित्वेन निर्दिष्टम्—"प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।

---

कस्य चित्प्रनष्टं यदि राजन्येवागतं लब्धं यद्यपि धनिनं प्राथ्यर्ते—ततः किं तत्; कि

---

## सुबोधिनी

यदि न भावयति तदा तत्समं दण्ड्या इति । पूर्वं मदीयमेतदिति निवेद्य पश्चाद्यदि न साधयति, तदा दण्ड्य इत्यर्थः । ननु प्रनष्टाधिगतद्रव्यस्य[1] परकीयत्वेनावश्यदेयत्वात्[2] 'प्रनष्टाधिगतं देयम्' इत्यसावुपदेश एवानर्थक[3] इत्यत आह—अधिगमस्य स्वत्वनिमित्तत्वादिति । अत्र[4] च कालावधिं वक्ष्यतीति । अत्र प्रनष्टाधिगतस्य[5]

## बालंभट्टी

पूर्वशेषमाह — यदीति । उत्तरार्द्धार्थं कथयन् चेदर्थमाह—यदीति । लिङ्गर्थोऽविवक्षित[6] इत्याह—भावयतीति । तत्समं प्रनष्टाधिगतद्रव्यसमम् । पूर्वं मदीयमेतदिति निवेद्य पश्चात् यदि न साधयति तदा स दण्डय इत्यर्थः। तदेव ध्वनयन्नाह—असत्येति । ननु प्रनष्टाधिगतस्य परकीयत्वेन आदेयत्वात् देयमित्युपदेशो व्यर्थ एव। अत आह-अधिगमस्येति। द्रव्यनाशानन्तरं तदलब्ध्वा स्वामिनो देशान्तरगमने विशेषमाह-अत्र चेति। प्रनष्टाधिगतस्य प्रतिदानविषये इत्यर्थः।अत्र सर्वत्र प्रनष्टेतिदंत्यपाठः।नाशदिति तन्निषेधात्। तदेव मूलोक्तमाह शौल्किकैरिति। शुल्कं गृह्णन्ति ये ते शोल्किकाः, स्थानपालाः ततस्तन्मात्ररक्षकाः।नष्टेति;—नष्टं सदधिगतं राज्ञे समर्पितमित्यर्थः । यद्वा नष्टमपहृतं चाधिगत्य राज्ञे समर्पितमित्यर्थः। अत्र विशेषमाह—मनुना पुनरिति । मनुना त्वित्यर्थः। मनुमेवाऽऽह—प्रनष्टेति । स्वामिनः सकाशात् प्रनष्टं प्रनष्टस्वामिकं राजदन्तादि । स्वार्थे कः। अत एव पूर्वैकवाक्यतोत्तरार्द्धसंगतिश्चेति भावः । यद्वोक्तरीत्या तदनन्तरं देशान्तरगतस्वामिकं इति

---

१ त. मित्यस्य (?) २. त. नदे । ३ द. सार्थकः । ४ थ द. त्रका । ५ थ. द. तद्रव्यस्य । ६ फ. लिङविवक्षित ।

अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्॥" इति । तत्र वर्षत्रयपर्यन्तमवश्यं रक्षणीयम् । तत्र यदि संवत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात् । यदा पुनः संवत्सरादूर्ध्वमागच्छति, तदा किंचिद्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्, यथाऽऽह—"आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः[2] । दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन्॥" इति[3]। तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात्; द्वितीये द्वादशं भागं तृतीये दशमं चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात् । राजभागस्य चतुर्थोंऽशोऽधिगन्त्रे दातव्यः। स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थ 5

## सुबोधिनी

प्रतिदाने । राजभागस्य चतुर्थोंऽशोऽधिगन्त्रे दाप्य इति । यः पुनः प्रनष्टद्रव्यं प्राप्य राज्ञे समर्पयति शुल्कस्थानाद्यधिकृतः, तस्मै शुल्कस्थानाद्यधिकर्त्रे राज्ञो यो भागः षष्ठादिरूपस्तच्चतुर्थांश उद्धृतषष्ठादिभागाद्धनाद्दातव्यो, न राज्ञोंऽशात् । तथासति आददी

## बालंभट्टी

यथाश्रुतार्थः[4] । एवं सति प्रसक्तविरोधपरिहाराय व्यवस्थां कथयन्नादौ मनुतात्पर्यमाह—तत्रेति । तथा सतीत्यर्थः—अवश्यमिति;—तन्मध्ये व्ययं न कुर्यादित्यर्थः । निधापयेदित्युक्तिस्वारस्यादिति भावः । तत्र तावत्पर्यन्तरक्षणीये तस्मिन्सति मूलतात्पर्यमाह—यदीति । पुनः तु । अत्र मानमाह—यथाऽऽहेति । अस्य पक्षत्रयस्य व्यवस्थां कथयितुमादौ मूलोक्तमेवाऽऽह—तत्रेति । तेषां मध्ये इत्यर्थः । अन्यथा तदानर्थक्यं स्पष्टमेव। तादृशभागमित्यादेर्गृहीत्वेत्यादिना अन्वयः। विशेषमाह-राजभागेति। चतुर्थोंशइति;—अयं च विशेषो द्वितीयादौ न वाच्ये,—तत्र राजभागस्यैवाभावात्। एतदर्थमेवैवमुक्तम्, अन्यथा चतुर्थोंऽश इत्येव वदेत् राजभागसम्बन्धिचतुर्थांशदानमित्यर्थे तु "आददीताथषड्भागम्" इति वचनविरोधस्स्यात् । तथा च प्रनष्टाधिगतं द्रव्यं यः शौल्किकादीराज्ञे समर्पयति तस्मै राज्ञो यो भागः षष्ठादिरूपस्तच्चतुर्थांशस्तत्तुल्य उद्धृतषष्ठादिभागाद्धनादवशिष्टाद्दातव्यो दापनीयो, न तु राज्ञोऽशात्तद्विरोधापत्तेरित्यर्थो बोध्यः । अत्र विशेषमाह-

---

१.—८. ३०. । २ क. धिगमा० । ३.—मनुः ८. ३३. । ४ फ. यथाश्रुत एवार्थः । ५ "प्र नष्टं च लभ्यते इति वत् प्रयोगे न कोऽपि दोष" इति अधिकः पाठः । ६ फ. द्वादश भागमित्यादेः ।

मंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात् । तथाऽऽह[१] गौतमः—"प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थोंऽशो राज्ञः शेषम् ।" इत्यत्र[२] संवत्सरमित्येकवचनमविवक्षितम् ,—"राजा त्र्यब्दं निधापयेत्" इति स्मरणायेत् ।

## सुबोधिनी

ताथ षड्भागमित्यादि वचनविरोधस्स्यादित्यभिप्रायः । ऊर्ध्वमधिगन्तुश्चतुर्थांशो राज्ञः शेषामिति । वत्सरान्तर स्वामिन्यागतेऽनागते वाऽधिगन्तुश्चतुर्थांशो दातव्यः । शेषं राज्ञो भवति । तत्राधिगन्तुश्चतुर्थांशे[३]दाने इयान् भेदः। स्वामिन्यागते पूर्वोक्तरीत्या राज्ञः षष्ठांशमुद्धृत्यावशिष्टे[४]धनात् * (राज्ञः?) चतु[५]र्थभागः । अनागते तु स्वामिनि सर्वस्माद्धनाच्चतुर्थांश[६] इति पूर्ववदत्रापि विवेकः । 'राज्ञः शेषमित्यत्राप्येष विवेकः, यदा स्वाम्यागतस्तदा पूर्वोक्तरीत्या राज्ञः षष्ठादिभागम् अनागते तु तस्मिन् सर्वस्माद्धनाच्चतुर्थमंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयादित्येवं गौत[७]मीयेऽनुसन्धेयम् । गौतमवचनस्थं संवत्सरमित्येकवचनमविवक्षितमित्याह—अत्र संवत्[८]सरमित्येकवचनमिति । अर्वाक्संवत्सरा-

## बालंभट्टी

स्वाम्यनेति। अधिगन्त्रे शौल्किकप्रभृतये। अत्र सर्वत्र मानमाह-यथाऽऽहेति । प्रनष्टेति पूर्ववत्। ऊर्ध्वं अधिगन्तुरिति;—संवत्सरादिति शेषः । तथा च संवत्सरानन्तरं स्वामिन्यागतेऽनागतेवाऽधिगन्तुश्चतुर्थोंऽशो भवति शेषं राज्ञो भवतीत्यर्थः । तत्राधिगन्त्रे चतुर्थांशदाने इयान्भेदः । स्वामिन्यागते प्रागुक्तरीत्या राज्ञः षष्ठाद्यंशमुद्धृत्या अवशिष्टधनात् राज्ञश्चतुर्थांशसमभागो देयः । अनागते तु तस्मिन्सर्वस्य धनस्य चतुर्थांशो देय इति । एवं राज्ञः शेष मित्यत्रापि तस्मिन्नागते पूर्वोक्तरीत्या षष्ठादिभागरूपम् अनागते तु तस्मिन्सर्वधनं दत्तचतुर्थांशकमिति भेदो बोध्यः । एवं च राज्ञ इत्यस्य मध्यमणिन्यायेनान्वयो बोध्यः । मनुतात्पर्ये विरोधं परिहरति – अत्रेति । गौतमीये इत्यर्थः । उद्देशविशेषणत्वादिति भावः । तथासत्यनतिप्रसङ्गाय तन्मूलं तदुक्तमेव हेतुमाह — राजेति । नन्वेवं सर्ववचनानां व्यवस्थायां पादत्रयार्थलाभेऽपि मनुमूलयोस्तुर्यपादार्थस्य निर्विषयत्वापत्तिरेव चतुर्थादिष्वपि अवशिष्टदानस्य स्वामिने प्रतिपादितत्वात् , इत्यत आह—हरेतेति । अपिना मनूक्ततुर्यपादसमुच्चयः। यद्यप्यत्र संवत्सरादिति प्रक्रान्तं, तथाऽप्युक्तरीत्या मन्वेकवाक्यतयैवाऽऽह—त्र्यब्दादिति । तथा चात्र परत इत्यत्र त्र्यब्दादिति शेषो

* 'अधिगन्तुः इति' समञ्जसं स्यात् ।

१ क. ङ. च. यथाऽऽह। २.—१०. ३७, ३८. । ३ द. श इति तस्य (?) ४ थ. द. ष्टाद्धनात् (राज्ञां ?) चतुः । ५ थ. तुर्भा । ६ त. शदान भेदः (?)। ७ द. तमीयमः । थ. तीमायमप्यनुः । ८ त. रमिति । अत्रापि स (?) ।

"हरेत परतो नृपः" इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञानपरम्। आगते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात्। एतच्च हिरण्यादिविषयम्। गवादिविषये वक्ष्यति—" पणानेकशफे दद्यात् " इत्यादिना ॥ ३३ ॥

यत्संख्येवेत्येवं पृष्टाऽपि संवादकस्यान्विष्यार्पणीयम्। न चेदेवं विभावयेत्समं दण्ड्यः॥३३॥

## सुबोधिनी

दित्यत्रापि समानन्यायेनैकत्वस्याविवक्षितत्वे बुद्धिस्थत्वेन। तच्चतुर्थपादस्याभिप्रायमाह—हरेत परतो नृप इत्येतदपीति। राजा स्वांशमवतार्य तत्समं दद्यादिति,—स्वांशं षष्ठांशमवतार्य तत्समं यावदधिगन्तृहस्तात् गृहीतं तत्संख्याकं राजा दद्यात् स्वामिने। तत्रापि न तज्जन्यवृद्धिं दद्यात्, किन्तु मूलमात्रमेव। परतो नृपतिर्हरेदिति *व्यवहारा(?) भ्यनुज्ञानादिति तात्पर्यार्थः। एतच्च तत्समत्वं स्वकोशद्रव्येणैव, न त्वधिगते दत्तो यश्चतुर्थांशः तद्ग्रहणेनापि तस्मै भृतिरूपेण दत्तत्वात्। भृतिरूपस्याप्यादाने कालान्तरे प्रनष्टाधिगतप्रत्यर्पणादिकं न स्यात्, स्वांशमवातार्येति विशेषोपादानाच्च ॥ ३३ ॥

## बालंभट्टी

बोध्यः। ननु व्ययीकरणानन्तरं तदा प्रदाने कथं प्रागुक्तदानसम्भवोऽत आह—आगते त्विति। अवतार्य पृथक्कृत्य तस्मिन्प्रक्षिप्य तत्समं अवशिष्टं तत्तुल्यम्। तथा च राजा स्वांशषष्ठाद्यंशं तथा कृत्वा तत्समं यावदधिगन्तृहस्तात् गृहीतं तत्संख्याकं स्वामिने दद्यादित्यर्थः। तत्रापि न तज्जन्यवृद्धिं दद्यात्, अपि तु मूलमात्रमेव,—हरेत परत इत्यनेन व्ययवत् व्यवहारस्यानुज्ञानात्। तथा च व्ययीकरणे व्यवहारे सति वृद्धिद्रव्येण तत्समत्वं तदभावे स्वांशप्रक्षेपेण, ततोऽप्यपूर्तौ तत्समत्वं स्वकोशद्रव्येणैवं न त्वधिगन्त्रे यश्चतुर्थांशो दत्तस्तद्ग्रहणेनापि,— तस्मै प्रतिरूपेण दत्तत्वात्। भृतिरूपस्याप्यादाने कालान्तरे प्रनष्टाधिगतप्रत्यर्पणादिकं न स्यात्। स्वांशमवतार्येति विशेषोक्तेश्चेति बोध्यम्। विशेषमाह—एतच्चेति। अत एव प्राक् तथैव व्याख्यातम् सङ्कोचमानमाह—गवादीति। मूलकृदेवेति भावः ॥ ३३ ॥

---

* 'अपहारा' इति पाठः समञ्जसः स्यात्।

---

१ ख. भ्यनुज्ञा। ततः पर। ज. अभ्यनुज्ञापरम्। २ द. ('तद्राज्ञे वृ?)। ३ थ. द. स्यादा। ४ ब. 'तदभावे स्वांशप्रक्षेपेण ततोऽप्यपूर्तौ तत्समत्वम्' इति नास्ति। ५ फ. ब. द्रव्येणैवंमपित्व.धि।

रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह—

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥ ३४॥

5 इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च॥ ३५॥

उक्तलक्षणं निधिं राजा लब्ध्वा अर्धं ब्राह्मणेभ्यो दत्त्वा शेषं कोशे निवेशयेत्। ब्राह्मणस्तु विद्वान् श्रुताध्ययनसंपन्नः सदाचारो यदि निधिं लभेत[1] तदा सर्वमेव गृह्णीयात्, यस्मादसौ सर्वस्य जगतः प्रभुः। इतरेण तु राजविद्वद्ब्राह्मणक्षात्रि-

---

यत्तत्सन्नस्वामिकं तत्र का कथा ? उच्यते—राजा लब्ध्वेत्यादि॥ ३४॥

स सर्वस्य प्रभुरित्यनेन प्रतिग्रहाद्यभावेऽपि॥ ३४॥

इतरेणेत्यादि॥ ३५॥

---

## बालंभट्टी

अव्यवहितसंगतिप्रसङ्गरूपामाह—रथ्येति। इदं नष्टपदव्याख्यानम्, एतेन प्रनष्टपदमपि व्याख्यातम्। एवम् उक्तप्रकारेण। उक्तेति—भूमौ चिरनिखातं सुवर्णादीत्यर्थः। तुर्यपादबलाद्द्विजपदं ब्राह्मणपरमित्याह—ब्राह्मणेभ्य इति। एवमग्रेऽपि। फलितमाह—शेषमिति। पुनःशब्दार्थमाह—त्विति। विद्वानित्यस्य व्याख्या—श्रुतेति। न केवलं मन्वादिस्मृत्यन्तरादिदमुपलक्षणमित्याह—सदेति। पुनः शब्दानुषङ्गेण द्वितीयपद्यार्थमाह—इतरेण त्विति। इतरत्वमुभयापेक्षमित्याह—राजेति। यद्यप्यषष्ठांशमिति छेदेन वाक्यपूर्तिः सिद्धा, तथाऽपि उक्तक्रमे वासिष्ठे च दद्यादित्युक्तया दानशब्दात्तस्यैवेष्टत्वेनात्राप्येकत्वे तद्विरोधापत्तेः। शेषपूरणापत्तेर्विद्वदन्यविषये सर्वस्येति हेतूक्त्या न विषये राज्ञः प्रभुत्वसूचनेन तत्रापि तदा हरणेऽस्यार्थसिद्धत्वेन विद्वद्यनुपयोगात्; अत एव विवि-

---

[1] क. ङ. लभते।

णादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमाहरेत्[1] ,—यथाऽऽह वसिष्ठः—"अप्रज्ञायमानं[2] वित्तं योऽधिगच्छेद्राजा तद्धरेत् अधिगन्त्रे षष्ठमंशं[3] प्रदद्यात्।"[4] इति । गौतमोऽपि—"निध्यधिगमो[5] राजधनं भवति । न ब्राह्मणस्याभिरूपस्य । अब्राह्मणोऽप्याख्याता[6] षष्ठमंशं लभेतेत्येके।" इति[7]। अनिवेदित इति कर्तरि

इतरेण ब्राह्मणेनैवानभिरूपेणेत्यर्थः । गौतमीयं तु ब्राह्मणविषयम् । निध्यधिगमो राजधनमिति यावत् । निध्यधिगमः सर्वो राजधनमित्यर्थः । तथा च न ब्राह्मणेत्यनभिरूप

## सुबोधिनी

निध्यधिगमो राजधनमिति,—अस्यार्थः—निध्यधिगमो निधेः प्राप्तिः; तया[8] प्राप्तं धनं लक्ष्यते । तत् राज्ञो धनं नाधिगन्तुः । अभिरूपस्य श्रुताध्ययनसम्पन्नस्य ब्राह्मणस्य निध्यधिगमो न राजधनम्, अपि तु तस्यैव । अब्राह्मणो ब्राह्मणव्यतिरिक्तः आख्यता निध्यधिगमस्य कथयिता चेत्, तदा स्वेन प्राप्तनिध्यागमस्य कथयिता षष्ठमंशं लभेत इत्येके । एक इति निध्यधिगमो राजधनमिति सर्वग्रहणेन सह षष्ठांशप्रदानस्य विकल्पदर्शनार्थमिति। ननु "अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च।" इत्येतदनुपपन्नम्। निध्यधिगन्त्रा

## बालंभट्टी

दितेत्यनेन विप्रस्यापि वैपरीत्योक्तेः ; अत एव च दानपूर्वकाहरणस्यैव विवक्षितत्वे तदीयलाभापरोक्षश्च । अत एवोपक्रमवाक्यं तथा व्याख्यातम् । अत "इग्यण"[11] इति सूत्रादिभाष्यसिद्धान्तमूलकेन "प्रविश पिण्डीम्" इत्यादि तद्वाक्यैकदेशन्यायेन नञा विना द्वितीयपादस्य शब्दमर्थमाह —राजेति । यथाश्रुतार्थत्यागेन तद्व्याख्यानबीजमाह—यथाऽऽहेति । अग्रेति चिरनिखातमित्यर्थः । अनेन वित्तस्य निधित्वं सूचितम् नतु ततो निध्यधिगम इति अधिगम इति कर्मणि घञ् । कर्मधारयः कडारादिः अधिगम्यमानो निधिः। राजधनं नाधिगन्तुः। अभिरूपस्य श्रुताध्ययनादिसम्पन्नस्य ब्राह्मणस्य तु स न राजधनमपि तु तस्यैव एवं चेदं वाक्यत्रयं यथासम्भवं शेषानुषंगाभ्यां इति बोध्यम् । अब्राह्मणोऽपि विद्वद्ब्राह्मणभिन्नोऽप्याख्याता तत्कथयिता यदि तथा दानस्य षष्ठमंशं लभेतेत्येवेत्यर्थः । एवं च राजधनं नेत्यस्य मध्यमणिन्यायेनान्वयः । अपिना विद्वद्ब्राह्मणसमुच्चयः । तथा च तस्यापि षष्ठांशमात्रप्राप्तौ विरोधोऽत आह— एके

१ ख. स्वयमेवाहरेत् । २ क. अप्रजायमानं । ३ ख. षष्ठमंशमधिगंत्रे । ४ ख. ङ. दद्यात् । ५ क. निध्यधिगमे । ६ क. अब्राह्मणे व्याख्याता। ङ. अब्रह्मा । ७.—१०. ३३—५. । ८ थ. द. या प्राप्त्या प्रा । ९ थ. प्राप्तदा । १० त. गन्तुरन्येनानि । ११ अ० १. १. ४५ ।

निष्ठा । अनिवेदितश्चासौ विज्ञातश्च राज्ञेऽप्यनिवेदितविज्ञातः, यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा स सर्वं निधिं दाप्यो दण्डं च शक्त्य पेक्षया । अथ निधेरपि स्वाम्यागत्य रूपकसंख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्त्वा षष्ठं द्वादशं वा अंशं स्वयमाहरेत्, यथाऽऽह मनुः—"ममायमिति
5 यो ब्रूयान्निधिं सत्येन मानवः । तस्याददीत षड्भागं राजा द्वादशमेव वा॥" इति[1] । अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः ॥ ३४ ॥ ३५ ॥

स्येत्युक्त्वाऽऽह—"अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके" इति । अनाख्यातस्तु स सर्वस्य प्रभुरिति वचनादनाख्याय गृह्णन् न दोषभागित्यर्थः ॥ ३५ ॥

---

## सुबोधिनी

चान्येन वा अनिवेदने राज्ञो ज्ञानाभावादित्यत आह—अनिवेदित इति कर्तरि निष्ठेति । अयमभिप्रायः—यदि निध्यधिगन्ता स्वयं निवेदने कर्ता प्रयोजको वा न भवति अपि त्वन्यैर्निवेदितः सन् राज्ञो विज्ञातो भवति तदा स तमर्थं दण्डं च दाप्य इति ॥३४॥३५॥

## बालंभट्टी

इति । अनेन तदीयसर्वग्रहणेन सह षष्ठांशग्रहणस्य तस्य पुरुषभेदेन विकल्पः सूचितः इति बोध्यम् । नन्वनिवेदितविज्ञात इत्युक्तं कर्मनिष्ठायां निध्याधिगन्त्राऽन्येन वाऽनिवेदने राज्ञो ज्ञानाभावात् किं च दाप्य इत्यनेनान्वयासंभावादत अह—अनिवेदित इतीति गत्यर्थाकर्मकेत्यनेनेतिभावः। यदि निध्यधिगन्ता स्वयं निवेदनकर्ता प्रयोजको भवति अपि त्वन्यैर्निवेदितःसन्राज्ञो विज्ञातो भवति तदा स तं निधिं दण्डं च यथाशक्तिदाप्य इति तात्पर्यम् । पदार्थमुक्त्वा वाक्यार्थमाह—यः कश्चिदिति। ब्राह्मणस्तद्भिन्नो वा इत्यर्थः। तमित्यस्यार्थमाह—सर्वं निधिमिति । विशेषानुक्तेः केवलार्थकैकशब्दस्वरसाच्चाह—शक्त्यपेक्षेति । इतरेणेत्येतत् सूचितमेव । विशेषमाह —अथेति । अपि प्रागुक्तप्रनष्ट समुच्चायकः । भावयति साधयति । अत्र मानमाह—यथाऽऽहेति । ममायमिति,—अनेन कर्मणा द्विकर्मणा द्विकर्मकत्वं ब्रूमः । सत्येन रूपसंख्यादिकथनेन तस्येति अवधेः सवधत्वविवक्षया षष्ठी । प्राग्वद्व्यवस्थामाह—अंशेति । वर्णेति,—सदसद्वर्णचिराचिरकालाद्यपेक्षयेत्यर्थः ॥ ३५ ॥

---

* 'वान्येन' इति पठितुं युक्ततरम् ।

---

१.—८. ३७ ।

चोरहृत प्रत्याह—

**देयं चोरहृतं द्रव्यं राज्ञा जानपदाय तु ।**

**अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ३६ ॥**

चोरैर्हृतं द्रव्यं चोरेभ्यो विजित्य जानपदाय स्वदेशनिवासिने यस्य तत द्रव्यं तस्मै राज्ञा दातव्यम् । हि यस्मात् अददत् अप्रयच्छन् यस्य तदपहृतं द्रव्यं तस्य किल्बिषमाप्नोति तस्य चोरस्य च, यथाऽऽह मनुः—"दातव्यं सर्ववर्णेभ्यो राज्ञा चोरैर्हृतं धनम् । राजा तदुपयुञ्जानश्चोरस्याऽऽप्नोति किल्बिषम् ॥" इति । यदि चौर- 5

यतश्च निध्यादिषु अस्वामिकेषु राज्ञः प्रभुत्वं तत एव—**देयं चोरहृतमित्यादि ॥ ३६ ॥**

## सुबोधिनी

चौरैरपहृतद्रव्यस्याप्रतिदाने यस्य तद्धनं यश्च चोरस्तयोरुभयोः किल्बिषं राजा प्राप्नोतीत्युक्तम् । तदेव विभज्य दर्शयति—यदि चौरहस्तादादायेत्यादिना ।

## बालंभट्टी

चौरेति,—प्रनष्टप्रसगादित्येवेति भावः । स्वयमलब्धं कथं देयमत आह—चौरेभ्य इति । ततः शासनपूर्वं गृहीत्वेत्यर्थः । जनपदे भवो जानपदः । अनतिप्रसङ्गाय तस्य च संबद्धिशब्दत्वं तथा स्वदेशेति । तथाऽनतिप्रसंगायाऽऽह—यस्येति । अनेन वर्णसामान्यपरामर्शः । अत एवमनेकवाक्यता । तुः पादपूरणे । यस्येत्यन्तं भिन्नं वाक्यं, तस्येति च भिन्नं तादित्यस्यो भयत्रान्वयः, तदाह—हीति । अस्यार्थमाह—यस्मादिति । तादित्यस्य व्याख्याऽपहृतं द्रव्यमिति । यत्तदोर्मिथः साकांक्षत्वात् शेषं पूरयति—तस्येति । द्वितीयवाक्यार्थमाह—चौरस्य वेति । किल्बिषमित्यादेरनुषंगः । यथाश्रुतेऽति विरुद्धमुक्तमतो मन्वेकवाक्यतायै-मूलस्य संभवान् वैपरीत्या सम्भवात् द्वेधाव्याख्यानं कृतमिति तस्याप्रतिदाने राजा तयोरुभयोः किल्बिषमाप्नोति इत्युक्तम् । तथासति मनुवचने प्राप्तन्यूनता निरासाय विषयव्यवस्थामाह—यदीति । अनेन मनुविषयः प्रदर्शितः । मूलविषयमाह—अथेति । एवमपि मूलोत्तरार्द्धस्य सुयोजत्वात् तस्य व्यवस्थितत्वाद्वेति भावः । मनुमूलपूर्वार्द्धतात्पर्यार्थे-

---

१ ज. चोरहृते प्र । २ क. तद्धृतं । ज. यस्य यद्धृतम् । ३.—८. ४० ।

हस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्बिषमाप्नोति । अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्बिषम् । अथ चौरहृताहरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा तावद्धनं स्वकोशाद्दद्यात्, यथाऽऽह गौतमः—"चौरहृतमवजित्य यथास्थानं गमयेत्। कोशाद्वा दद्यात् ।"[1] इति । कृष्णद्वैपायनोऽपि—"प्रत्याहर्तुं न शक्तस्तु धनं चौरै-
5 र्हृतं यदि । स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षिता ॥" इति ॥ ३६ ॥

॥ इति असाधारणव्यवहारमातृका[2] ॥

---

पालकत्वेन हि राजगामिता निध्यादेः । पालकश्चेत् किमिति चोरानपहृतं परकीयं न प्रयच्छेदित्यभिप्रायः । जनपदग्रहणं स्पष्टार्थम् न ब्राह्मणायेत्यर्थः । तथा च बृहस्पतिः— "चोरापहृतं तु सर्वेभ्योऽन्विष्यार्पणीयम्" इति । अलाभे स्वकोशाच्च । अददच्चोरकिल्बिषः स्यादिति ॥ ३६ ॥

---

## सुबोधिनी

यथास्थानं गमयेदिति,—यस्य तद्धनं तं प्रापयेदित्यर्थः॥ ३६ ॥ इति श्रीभट्टविश्वेश्वरविरचितायां मिताक्षराव्याख्यायां सुबोधिन्याम् असाधारणव्यवहारमातृका अथवा साधारणासाधारणव्यवहारमातृका ॥

## बालंभट्टी

माह—अथेति। तावदित्यनेन न्यूनाधिकभावो निरस्तः । अत्र मानमाह—यथाऽऽहेति । यथास्थानमिति, — यस्य तद्धनं तं प्रापयेदित्यर्थः । कृष्णेति,—व्यासोऽप्याहेत्यर्थः । अशक्तस्तु अशक्त एव राजा भवेदिति शेषः। हि तदाद्धिवर्द्धनमिति (?) न्यायेन सत्यां शक्तौ तथा न कार्यमिति । स्पष्टार्थमाह—शक्तेनेति । महीति—महीं क्षयति निवासयति गमयति यः क्षिणोति हिनस्ति शास्ते दण्डयति वा महीक्षितेनेत्यर्थः ॥ ३६ ॥

इत्यसाधारणव्यवहारमातृकेति । इति। साधारणासाधारणव्यवहारमातृकेति पाठान्तरम् । तस्य च पूर्वं तथापाठाभावो वक्ष्यमाणप्रकारो वाऽभिप्रायः । पूर्वोत्तरयोर्ग्रन्थसंदर्भयोः संगतिमाह—साधारणासाधारणेति । प्रथमप्रकरणे साधारणमातृका विहिता द्वितीयप्रकरणेऽसधारणमातृका ॥

---

१.—१०. ४६.—७. । २.—ख. मातृकाप्रकरणम् ।

# अथ ऋणादानप्रकरणम् ३

साधारणासाधारणरूपां व्यवहारमातृकामभिधायाधुनाष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति । "अशीतिभागो वृद्धिः स्यात्" इत्यादिना "मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने।" इत्येवमन्तेन । तच्च ऋणादानं सप्तविधम्—ईदृशमृणं देयम् , ईदृशमदेयम् , अनेनाधिकारिणा देयम् , अस्मिन् समये देयम् , अनेन 5

## सुबोधिनी

अथ ऋणादानप्रकरणम्॥ पूर्वोत्तरयोर्ग्रन्थसन्दर्भयोः सङ्गतिं दर्शयति—साधारणासाधारणरूपामित्यादिना। अयमभिप्रायः--प्रथमप्रकरणे साधारणमातृकाभिहिता; द्वितीयप्रकरणेऽसाधारणमातृकाऽभिहिता। एवञ्च प्रकरणद्वयस्योत्तरग्रन्थोपयोगित्वेन ताभ्यामुत्तरग्रन्थसङ्गतिः। अथ वाऽनन्तरप्रकरणमेव साधारणासाधारणात्मकम्। तथा हि--"देशाद्देशान्तरं याति" इत्यादि दुष्टलक्षणं सर्वसाधारणम् । तथा " छलं निरस्य भूतेन " इत्यादिकमपि। इतरद साधारणमित्युभयात्मकेनानन्तरप्रकरणेनैवोत्तरस्य सङ्गतिरिति । अनेनैवाभिप्रायेण पूर्वं प्रकरणसमाप्तावुभयात्मकत्वेन प्रकरणसमापनम् । ईदृशमृणं देयमित्यादि,—अस्वतन्त्रै-

## बालंभट्टी

एवं च प्रकरणद्वयनिरपेक्षस्योत्तरग्रन्थोपयोगित्वेन ताभ्यामुत्तरग्रंथसंगतिरिति भावः । यद्वाऽनन्तरप्रकरणमे साधारणासाधारणात्मकं "देशाद्देशान्तरं याति" इत्यादि दुष्टलक्षणं सर्वसाधारणं "छलं निरस्य भूतेन" इत्यादिकमपि इतरद् साधारणं समासावुभयात्मकत्वेन प्रकरणसमापनमिति भावः । पदानां मध्ये इति शेषः । तत्र तावदृणस्यादानं आदानं वा यस्मिन्निति व्युत्पत्तावपि योगरूढोऽयं ऋणादानशब्दः । तदेतदभिप्रेत्याह—तच्चेति । तत्रादावधमर्णसंबन्धिभेदानाह—ईदृशमिति । याचनापूर्वकत्वादृणस्य चाधमर्ण निष्ठत्वात् मल्लग्रामादिवत्वेति भावः । एतेन सूचीकटाहन्यायेन वैपरीत्यमुचितमित्यपास्तम् ,

---

१ क· एवं साधार । २ व्य० ६४· ।

प्रकारेण देयम्, इत्यधमर्णे पञ्चविधम्; उत्तमर्णे दानविधिरादानविधिश्चेति द्विविधमिति। एतच्च नारदेन स्पष्टीकृतम्—"ऋणं देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्माश्च ऋणादानमिति स्मृतम्॥" इति। तत्र प्रथममुत्तमर्णस्य दानविधिमाह तत्पूर्वकत्वादितरेषाम्—

## सुबोधिनी

रपि स्त्र्यादिभिः कुटुम्बरक्षणार्थं गृहीतमृणं देयम्, उक्तवैपरीत्ये तु न देयम्। पुत्रपौत्रादिरूपेणाधिकारिणा देयम्, यद्यधमर्णो ब्राह्मणः क्षीणवृत्तिः तदा "शनैर्दाप्यो यथोदयम्" इतीत्युदयवति समये देयम्, क्वचित् सवृद्धिकं देयं क्वचिदवृद्धिकं देयमित्यनेन प्रकारेण देयमिति क्रमेणाधमर्णे पञ्च प्रकाराः, उत्तमर्णे द्वैविध्यमिति मिलित्वा ऋणादानं सप्तविधमित्यर्थः। ऋणं देयमदेयमिति। अत्र यद्दणं देयं यच्चादेयमित्यन्वयः। येनेत्यधिकारिणो निर्देशः। यत्रेति कालस्य। यथेति प्रकारस्य। एवमृणादानस्य स्मृत्यन्तरानुसारेण सप्तविधत्वं प्रतिपाद्याधुना मूलवचनमवतारयति—तत्र प्रथममिति।

## बालंभट्टी

नारदवचनाच्च। अस्वतन्त्रैरपि स्त्र्यादिभिः कुटुम्बरक्षणार्थं यद्दणं गृहीतं तद्देयम्। उक्तवैपरीत्ये तु न। पुत्रपौत्रादि रूपेणाधिकारिणा देयम्। अस्मिन्काले देयं, क्वचित् सवृद्धिकं देयं, क्वचित् अवृद्धिकमित्येतदन्यतरदित्येव स धर्मेण देयं यं च प्रकार उत्तमर्णोद्विविधमिति मिलित्वा ऋणादानसप्तविधमित्यर्थः। एतच्चेति,--उक्तेऽन्यदकथननास्य योगरूढत्वं वेत्यर्थः। येनेति येन देयमित्यधिकारिनिर्देशः, यत्र देयमिति कालनिर्देशः, तद्दणं यथा चेति प्रकारनिर्देशः। देयमित्यस्या सर्वत्रान्वय। धर्मश्चेति पाठः द्वंद्वान्तेश्रूयमाणत्वात् प्रत्येकं सम्बन्धः। तदिति पाठे यदिति शेषः। वैपरीत्ये वैपरीत्यं इति यत्तद्दणादानमित्यन्वयः। एवं स्मृत्यंतरानुरोधेनास्य सप्तविधत्वमग्रिमोपयुक्तप्रतिपाद्याधुना मूलवचनमवतारयति,--तत्रेति। तेषां मध्ये इत्यर्थः। द्वयोरेवेति भ्रमनिरासाय वीप्साद्विवचनेनाह प्रतीति। प्रयोगे दाने अत्रविशेषोल्लेखेऽनुपयोगात्फलेऽविशेषा-

---

१ क. द्विविधमिति नास्ति। २ ख. च. छ. धर्मांश्च। ३.—१. १। ४.—थ. द. रम्। ५ त. देयमिति। ६ यत्र च य। ७ त. यथा देयमिति।

**अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।**
**वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ३७ ॥**

मासि मासि प्रतिमासं—बन्धकं विश्वासार्थं यदाधीयते, आधिरिति यावत्, बन्धकेन सह वर्तत इति सबन्धकः प्रयोगस्तस्मिन्—सबन्धके प्रयोगे प्रयुक्तस्य[1] द्रव्यस्य अशीतितमो[2] भागो वृद्धिर्धर्म्या भवति । अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्विकं शतं, क्षत्रिये त्रिकं[3], वैश्ये चतुष्कं[4], शूद्रे पञ्चकम् । मासि मासीत्येव । द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चाः, अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुः 5

एवं तावत् सामान्येन न्यायस्वरूपमभिधायेदानीमृणादानादिव्यवहारक्रमेण विशेषतः प्रस्तौति । तत्राद्यता मन्वादिभिः ऋणादानस्योक्ता, अतस्तावदेव (?) तावदुच्यते—
**आशीतिभाग इत्यादि ॥ ३७ ॥**

### सुबोधिनी

मासि मासीत्येवेति । मासि मासीत्यनुवर्तते । तथा च प्रतिमासं वर्णक्रमात् द्वित्रिचतुः पञ्चकं शतं भवतीत्यर्थः । द्वित्रिचतुःपञ्चकमित्ययं शब्दः कन् प्रत्ययान्त इत्याह

### बालंभट्टी

चाह--द्रव्यस्येति। अशीतिपदं तत्सङ्ख्यापूरके लाक्षणिकं भागपदसाहचर्यादित्याह--अशीतितम इति। तथा च तत्र कर्मधारयो बोध्यः। शास्त्रविहितत्वादेवाऽऽह-धर्म्येति। लिङ्गार्थाविवक्षयाऽऽह--भवतीति। उत्तरार्द्धं व्याचष्टे—अन्यथेति। अस्य व्याख्या बन्धकेति सामान्येनोक्तं, स्पष्टार्थं विशिष्याऽऽह-ब्राह्मणे इति। शतमित्यस्याग्रे सर्वत्रानुषङ्गः। एवं सम्भवतीत्यस्यापि। मासि मासीत्यनुवर्त्तेत इत्याह—मासीति । तथा च प्रतिमासं ब्राह्मणादिक्रमात् तथा भवतीत्यर्थः। ननु कथमुक्तार्थलाभस्तत इत्यत आह--द्वौवेति। संख्याव्ययेति बहुव्रीहिरिति भावः। तदस्मिन्नाति—

---

१ ङ. प्रयुक्तद्रव्यस्य। २ ख. अशीतिभागो । ३ क. ङ. त्रिकं शतम् । ४ क. ङ. चतुः कं ।

पञ्चकं शतम् । " तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते " इति[1] । इयं च[2] वृद्धिर्मासि मासि गृह्यते इति कालिका । इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति । तथा च नारदेन,—" कायिका कालिका चैव कारिता च तथा परा । चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥" इत्युक्त्वोक्तम्[3],—
5 कायाविरोधिनी शश्वत्पणपादादि कायिका । प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता ॥ वृद्धिः सा कारिता याऽधर्मर्णिकेन[4] स्वयंकृता । वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥" इति[5] ॥ ३७ ॥

यद्यप्यविशेषेणाशीतिभागोऽभिहितः, तथाऽपि ब्राह्मणस्यैवायम् ; अन्येषां तु पादवृद्ध्या वृद्धिकल्पना । तथा च बृहस्पतिः। पादोपचयात् क्रमेण, इतरेषां तु अन्यथा बन्धकरहिते द्विकत्रिकत्वं वृद्धिरित्याभिप्रायः ॥ यच्चैतद्वृद्धिपरिमाणमुक्तम् अत ऊर्ध्वं न गृह्णीयात्, न त्वर्वाग्ग्रहणे विरोधः ॥ ३७ ॥

## सुबोधिनी

—तदस्मिन् वृद्ध्यायेति। पूर्वोक्ताया वृद्धेरुपाधिभेदानाऽऽह—इयं च वृद्धिरित्यादिना। कायाविरोधिनी शश्वदिति । शश्वन्मुहुर्मुहुः प्रतिदिनमिति यावत् ॥ ३७ ॥

## बालंभट्टी

तथा च कनः सर्वत्र संबन्ध इति भावः। उक्तवृद्धेरुपाधिभेदान् मूलानुक्तं द्वैविध्यं (?) कथयन्नाह-इति पंचेति,-मूलोक्तैवेत्यर्थः।मूलानुक्तमाह-इयमेवेति,-मूलोक्तैवेत्यर्थः। विशेषमाह—दिवसेति ; मासस्येति भावः। अत्र मानमाह-तथा चेति। उक्त्वोक्तमित्यत्रान्वयः। तस्य ऋणस्य उक्तेति शेषः। कायेति,--तदविरोधिनी तदनुकूला यथा तस्य प्रतिदिनं वृद्धिस्तथा शरीरसत्वे प्रतिदिनं वृद्धिरिति तथा दीयमानेत्यर्थः।यद्वा यया खेदेन शारीरनाशो न भवति तादृशी स्वल्पेत्यर्थः। अधिकदाने खेदेन देहस्यारक्षणेन नाशसंभवात्।शश्वत् मुहुर्मुहुः,-प्रतिदिनमिति यावत्। पणेति,-पणस्य पादश्चतुर्थांशेत्यर्थः। तथा च पणपादादिरूपा तदविरोधिनी प्रतिदिनं स्रवन्ती कायिके-

१.—अ० ५. १. ४७. । २ ख. च. छ. इयं चेत्यतः प्राक् 'वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका । इच्छाकृता कारिता स्यात्कायिका कायकर्मणा ॥' इत्याधिकमुपलभ्यते टीकायां चास्य प्रतीकं नोपलभ्यते । ३—१. १०२ । ४. क. ग. ङ. च. छ. नामाथर्णिकेन । ख. नामाधमर्णेन । ५—१. १०३—४ ।

*ग्रहीतृविशेषेण वृद्धेः प्रकारान्तरमाह--

## कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।

कान्तारमरण्यं तत्र गच्छन्तीति कान्तारगाः ये वृद्ध्या धनं गृहीत्वाऽधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युर्ये च समुद्रगास्ते विंशकं शतम् । मासि मासीत्येव । एतदुक्तं भवति,—कान्तारगेभ्यो दशकं शतं, सामुद्रेभ्यश्च विंशकं शतं, उत्तमर्ण आदद्यात् । मूलनाशस्यापि शङ्कितत्वादिति॥ 5

चातुर्वर्ण्यातिरेकेण तु **कान्तारगास्त्वित्यादि ॥ ३९ ॥**

कान्तारगा अरण्यनिवासिनः तद्गामिनो वा, सामुद्राः समुद्रव्यवहारिणः-ते प्रतिमासं दशकं विंशकं च शतं दद्युः । यद्वा कान्तारं वर्णापशदत्वं ये गच्छन्ति ते कान्तारगाः—वर्णापशद इत्यर्थः । सह मुद्रया नियमेन वर्तन्त इति समुद्रो वर्णाश्रमविषयः, तमति लङ्घयन्ति ये ते विपरीतलक्षणया वा सामुद्राः—विकर्मस्था इत्यर्थः । दद्युर्वा स्वपरिभाषितां वृद्धिं सर्वे ब्राह्मणादयोऽपि, सर्वापशदजातिष्वपीत्यर्थः । आपत्कल्पश्चायं ब्राह्मणादीनामित्ये तद्वाशब्देन द्योतयति ॥ ३९ ॥

### बालंभट्टी

त्यर्थः।स्रवन्ती आगछन्ती। उभयत्र मत्वर्थीयष्ठन् अधमर्णिके बह्वच इत्यनुकम्पादौ ष्ठच् ।अधमर्णिकेनेति पाठान्तरम् । तदा मत्वर्थीयष्ठन् ॥ ३७ ॥

ग्रहीत्रेति । ग्रहीत्रेति अथेत्यादिः दशकमिति पूर्ववत् । विंशकमिति धनं तं प्रकरणाद्विशेषपरत्वमित्याह--आरण्यमिति । कर्मणोऽधिकरणत्वविवक्षया सप्तमी । तत्रेति तमित्यर्थः। परिखेतिवत् डः (?) अत एव तथैव पदार्थानुक्त्वा वाक्यार्थमाह-य इति । तत्रापि अरण्यसामान्यं न विवक्षितमिति सूचयन्नाह--अतीति। अभ्यर्हितत्वात् प्राणस्य पूर्वनिपातः वस्तुतोविनाशस्थानेऽपि आह-शंकेति। तत्रापि प्रकर्ष इत्याह-प्रेति।अपकर्षेणाह--दद्युरिति । ये च ये सामुद्रा इत्यत्रेदमर्थे णिचि सूचयन्नाह—समुद्रगा इति । दद्युरित्यस्यानुषङ्गः। मासिमासीत्यनुवर्त्तते। सामर्थ्यादित्याह—मासीति । ननु तथा सति यदि विनाशस्तावत्तद्दानमपि कथम्? अतः तात्पर्यार्थमाह—एतदिति। आदावेवेति भावः । इदं चानन्तर्यादबन्धकप्रयोगविषयम्॥

* "दुर्गस्थलगन्तारो' वस्त्रादिक्रयकारिणः ।" वीरमि० २९७. ।

१ क. गृहीतविशेषेण ।

इदानीं कारितां वृद्धिमाह—

**दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु॥ ३८ ॥**

सर्वे[1] ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः । क्वचिदकृताऽपि वृद्धिर्भवति ; यथाऽऽह नारदः—"न 5 वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् । अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते॥"

अनयैव वृद्ध्या,—**सन्ततिस्त्वित्यादि[3] ॥ ३८ ॥**

## सुबोधिनी

सर्वे[2] वा ब्राह्मणादयोऽधमर्णा इति । अत्र ब्राह्मणादीनामधमर्णत्वं *मूर्धावसिक्तादिजातीनामुत्तमर्णत्वं च प्रदर्शनमात्रम् । हीनोत्तमभावमपरिगणय्य व्यत्ययेन यथाकथञ्चिदुत्तमर्णत्वमधमर्णत्वं च भवतीत्यर्थः। "न वृद्धिः प्रीतिदत्तनां स्यादनाकारिता क्वचित्।" इति,—वृद्धिं कुर्वन्तमधमर्णमुत्तमर्णः प्रयुङ्क्त इति णिचि कृते निष्ठान्तः(?) शब्दः कारितेति। स चाङ्पूर्वः । न आकारिता अनाकारिता, अकृतेत्यर्थः । अकृता वृद्धिः प्रीत्या त्वं व्यवहरेति-दत्तानां क्वचिदपि न स्यात् । एतादृश्यपि स्थले वत्सरार्धादूर्ध्वं षण्मासानन्तरमनाकारितमपि

## बालंभट्टी

अत एवाऽऽह मूले—कारितामिति । अत एव मूले वाशब्दो विकल्पार्थः । तदाह—सर्वे[4] इति । अस्य व्याख्या—ब्राह्मेति । तत्र च ब्राह्मणानामधमर्णत्वं मूर्धावसिक्तादीनामुत्तमर्णत्वं च प्रदर्शनमात्रं हीनोत्तमभावमपरिगणय्य यथा कथञ्चिदुत्तमर्णत्वमधर्णत्वं च भवतीत्यर्थः। संकोचे मानाभावादाह—अबन्धके इति । प्रयोगे इति शेषः । यथाश्रुतासङ्गतेराह—स्वाभ्युपेति । विशेषमाह—क्वचिदिति । न वृद्धिरिति । वृद्धिं कुर्वन्तमधमर्णमुत्तमर्णः प्रयुङ्क्ते इति णिचि निष्ठायामाङाकारिताशब्दस्य समासे ततो नञा तस्य समास इति कश्चित् अकृतेति स्वारस्यात् प्रार्थयन्तीतिवत् णिजिति[5] तु तत्त्वम् । एवंरीतिः कारीतेत्यत्रापि बोध्या। अत एवं स्वकृतामित्येव ततोक्तम् । एवं चाकृतवृद्धिस्त्वं यथेच्छं व्यवहरेति

* मूर्धावसिक्तादिजातीनामित्येतत् मिताक्षरागतस्य 'जातिषु' इति पदस्यार्थविवरणम् ।

१ ख. वृद्धिमिति नास्ति। २ ख. सर्वे वा ब्राह्म०। ३ वृद्धिपरमावधिं वक्तुमारभ्यतत्प्रकरणगतोऽयं श्लोकः पूर्वं तावत् व्याख्यातो विश्वरूपाचार्यैरिति भाति। मातृकान्तराभावादुपलब्धमातृकायां यथा पठ्यते तथैव दीयतेऽस्माभिश्च । ४ त. थ. सर्वे ब्रा ०। ५ स्वार्थेणिच् इति भावः ।

इति[1] । यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेनोक्तम् —"यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥"इति । यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशान्तरं याति[2] तं प्रति तेनैवोक्तम्—"कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥" इति । यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याचितकालादारभ्य[3] वृद्धिं दापयेद्राजा, यथाऽऽह—"स्वदेशेऽपि स्थितो यस्तु न दद्या- 5

सुबोधिनी

धनं वर्धेत इत्यस्यार्थः । वर्धनप्रकारस्तु संबन्धकाबन्धकभेदात्[4] पूर्वोक्तो द्रष्टव्यः । यस्तु याचितकमिति । "याच्ञयाऽऽप्तं याचितकम्" इत्यमरः। कृत्वोद्धारमदत्वाय इति । याचि-

बालंभट्टी

दत्तानां क्वचिदपि न स्यात् । अत्र प्रीतिदत्तेत्यनेन ग्रहीतुर्याचनाभावः सूचितः । अत एव तत्र विशेषं वक्ष्यति ईदृशेऽपिस्थले । हिस्त्वर्थे । वत्सरार्द्धाद्वत्सरार्द्धात्तु ऊर्द्धं षण्मासोत्तरं तु अनाकारितमपि,—अर्शआद्यजन्तं, धनं वर्द्धेत इत्यर्थः । विवर्द्धेत इति पाठान्तरं—कश्चिन्मतेऽकृतेत्यर्थः स्वोक्ताविरुद्ध इति बोध्यम् । वर्द्धनप्रकारस्तु सबन्धकोऽबन्धकप्रकारभेदकृत प्रागुक्तो द्रष्टव्यः। विशेषान्तरमाह—यस्त्विति । "याच्ञाप्राप्तं याचितकम्" इत्यमरः[6] । वृद्धिं विना प्रार्थनागृहीतमित्यर्थः तं तादृशमर्थम् । विना याच्ञामिति शेषः । अत एव तत्र विशेषं वक्ष्यति । तृतीयविशेषमाह–यश्चेति । योऽपीत्यर्थः । यानीति वर्तमानसामीप्ये इति भूते लट् । तेनैव कात्यायनेनैव । कृत्वोद्धारमिति—याचितकरूपेणोद्धारमादायेत्यर्थः । कृतोद्धारमिति पाठे कर्मधारयः । उद्धार इति भाषाप्रसिद्ध उद्धारः । कर्मणि घञ् । उदित्यस्य वृद्धिमुल्लङ्घ्येत्यर्थः । तु—अपि । यद्वा याचित इत्यग्रे योज्यः । यथाश्रुत एव याचित इत्यत्रापीति शेषः । चतुर्थं विशेषमाह—यः पुनरिति,— यस्त्वित्यर्थः । यचितः याचितोऽपि । याचनेति अधमर्णयाचनेत्यर्थः । स्वेति;—यस्तु

१.—१. १०८. । २ ख. व्रजति । ३ क. म्य कारितां । घ. ङ. म्य आकारितां वृ । च. ततोऽकारितां । ४ ग. सबन्धकभे । ५ फ. तत्संबंधाऽबंधक । ६ अ० २. वै. ४. ।

द्याचितः क्वचित्। तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत्॥" इति। अनाकारित-वृद्धेरपवादो नारदेनोक्तः—"पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः। वृथादानाक्षिकपणाः वर्धन्ते नाविवक्षिताः॥" इति। अविवक्षिता अनाकारिता इति॥३८॥

## सुबोधिनी

तकरूपेणोद्धारं कृत्वेत्यर्थः। प्रीतिदत्ते वत्सरार्धादिरूपकालानन्तरमकृताऽपि वृद्धिः प्राक् प्रदर्शिता तदपवादो नारदेनोक्त इत्याह—अनाकारितवृद्धेरपवाद इति। विश्वस्ते पुरुषे रूपसंख्याप्रदर्शनेन द्रव्ये न्यस्ते, स यदि 'मयैतद् व्यवह्रियते कालान्तरादेतत्संख्याकमेतज्जातीयं च द्रव्यं दास्यामि' इति स्वामिनः पुरस्तात् कथयति, स च स्वामी तथैवाङ्गीकुरुते, तादृशि न्यासे अकृता वृद्धिर्नास्तीत्यर्थः। न्यासमात्रे वृद्ध्यभावस्य सिद्धत्वात् स्वामिने कथयित्वैव व्यवहारे कृते सोदयस्य देयत्वाच्च। वृथादानं नाम वन्दिचारणेभ्यो दत्तम्। आक्षिकं द्यूतजीतम्, पण्यं विक्रेयवस्तु। न्यासव्यतिरेकेण पण्यमूल्या-

## बालंभट्टी

स्वदेशे स्थितः सन् याचितोऽपि क्वचित्कदाचित्तन्न दद्यादित्यर्थः। क्वचिदिति देश-विशेषणं वा। अनिच्छन्तं च तं तमपि। अकारितामकृतामपि वृद्धिं प्रागुक्तरीत्या ततोऽधमर्णयाचनकालादारभ्य राजा दापयेदित्युत्तरार्द्धार्थः। अनाकारितेति। न वृद्धिः प्रीति,—नारदेनैव षण्मासानन्तरं प्रीतिदत्ते उक्ताया इत्यर्थः। नारेति,—तेनैवेत्यर्थः। पण्यं विक्रेयं, वस्तु मूल्यं धान्यादिः; भृतिः वर्तनम्। वृथादानेति,—त्रयाणामितरेतरद्वन्द्वः। वृथादानं वन्दिचारणादिभ्यो दानम्; आक्षिकं द्यूतजितम्; पणः व्यवहारे क्रियमाणनिर्बन्धः न्यासान्यपण्यादिषु दास्यामीति दृढप्रतिज्ञायां कृतायां सत्यां तावतैषां पण्यादिनां परकीयत्वेनादानेऽनाकारितवृद्धेः प्राप्तावनेनापोद्यते इति भावः। न्यासपदेन तु न्यासविशेषो ग्राह्यः। तथा हि। यत्र विश्वस्ते पुरुषे रूपसंख्याप्रदर्शनेन द्रव्ये न्यस्ते सपदि मयैतद्व्यवह्रियते कालान्तरे तु तत्संख्याकमेतज्जातीयं च द्रव्यं दास्यामीति स्वामिनः पुरस्तात्कथयति, स च स्वामी तथैवाङ्गीकुरुते। तादृशे न्यासेऽकृता वृद्धिः नास्तीत्यर्थः।

अधुना द्रव्यविशेषेण वृद्धिविशेषमाह—

## सन्ततिस्तु पशुस्त्रीणां

* सन्ततिरेव वृद्धिः। पशूनां स्त्रीणां च पोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः संभवति। ग्रहणं च क्षीरपरिचर्यार्थिनः।

पशुस्त्रीणां वृद्धिः फलभोग्यत्वेनार्पितानां या प्रसूतिः सा धनिकस्य स्यात्। तुशब्दात्सन्ततिरेव नापरा वृद्धिरित्यर्थः। पशुस्त्रीणामिति पुम्पशुसन्तानव्यवच्छेदार्थम्। अथ वा पशूनां स्त्रीणां च दासीनामिति योज्यम्। इक्ष्वादिरसस्याष्टगुणा परा वृद्धिः; वस्त्राणां चतुर्गुणा; सस्यानां त्रिगुणा। तच्चाशीतिभागाद्यनुसारेण यावता कालेन हिरण्यं द्विगुणं तावतैव धान्यादेः स्वपरिमाणयोगः॥ ३८॥

---

### सुबोधिनी

दिषु दास्यामीति दृढीभूतवाग्व्यवहारे कृते तावतैवैषां पण्यमूल्यादीनां परकीयत्वेनादानेऽनाकारितवृद्धिप्राप्तावपोद्यत इति तात्पर्यार्थः॥ ३८॥

पशूनां स्त्रीणां च सन्ततिरेवेति। स्त्रीणां दासीनां न

### बालंभट्टी

षण्मासं वृद्ध्यभावस्य सिद्धत्वात् स्वामिनेऽकथयित्वैव व्यवहारे कृते सोदयस्य देयस्य देयत्वाच्चेति बोध्यम्। अविवक्षिता इत्यादावर्श आद्यच्॥ ३८॥

तदाह—अधुनेति। स्त्रीणां चेति। दासीनां न कुलस्त्रीणामित्यर्थः। त्वर्थमाह—एवेति। एतत् प्रसंगमाह— पशूनामिति। पुष्टीति,— द्वन्द्वोत्तरं बहुव्रीहिः। इदं दातुरुक्तम्। अथ प्रतिग्रहीतुराह—ग्रहणं चेति। क्षीरेति—द्वन्द्वोत्तरं तत्पुरुषः। यथासंख्यमुभयत्र बोध्यम्॥

*"पशुस्त्रीणां महिषीप्रभृतीनां वृद्ध्यर्थं प्रयुक्तानां तदीया संततिरेव वृद्धिः।' अप० ६४३।

अधुना प्रयुक्तस्य[1] द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह—

**रसस्याष्टगुणा परा ।**

**वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ३९ ॥**

5 रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्धमानस्याष्टगुणा वद्धिः परा ; नातः पर वर्धते । तथा वस्त्रधान्यहिरण्यानां यथासङ्ख्यं चतुर्गुणा त्रिगुणा द्विगुणा च वृद्धिः परा । वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तम्— "द्विगुणं हिरण्यं, त्रिगुणं धान्यं," "धान्येनैव रसा व्याख्याताः" "पुष्पमूलफलानि च", "तुलाधृतं त्रितयमष्टगुणम् ।" इति[2]। मनुना तु धान्यस्य पुष्पमूलफलादीनां च

## सुबोधिनी

कुलस्त्रीणाम् । कियती परावृद्धिरिति । वृद्धेः परा काष्ठा कियतीत्यर्थः ।

## बालंभट्टी

प्रयुक्तेति,— वृद्धिलोभेनेति भावः । अत एवाऽऽह— वृद्धीति । ग्रहणं ननु करणम् । स्थितस्येति,—विषये तेषां मध्ये इति शेषः । स्थितत्वे इति पाठेऽपि तेषां मध्ये इति शेषः। अन्यथा निर्द्धारणे बहुवचनौचित्येन यथाश्रुतसंबद्धत्वं स्पष्टमेव। परा उत्कृष्टा चरमेति यावत् । तैलेति,—घृततैलादेरित्युचितः शाकपार्थिवादिर्वा । तस्य लघ्वक्षरत्वात् कारितवृद्ध्यभिप्रायेणाऽऽह —स्वेति । परेत्यस्य तात्पर्यार्थमाह—नातः परमिति । उत्तरार्द्धार्थमाह—तथेति । हिरण्यशब्देन[3] धनं द्रव्यपर्यायसर्वं पक्षान्तरम् ।रसे आह-वसिष्ठेन त्विति ;—परत्ववृद्धेरिति शेषः । अतिदिशति—धान्येनैवेति। नि चेति-व्याख्यातानीति शेषः।तुलेति,-तुलायां धृतं निहितम् त्रितयं हिरण्यधान्यरसात्मक मदत्तं चिरकालस्थितमित्यर्थः । धान्यपुष्पाद्यंशे पक्षान्तरमाह- -मनुना त्विति । प्राग्वत् । आदिग्राह्यं वचने स्पष्टं, पूर्वनिपातप्रकरणानित्यत्वात् । पुष्पस्य पूर्वनिपातः। बलीवर्दस्याभ्य-

---

१. ब. दत्तस्य ।२.—२. ४४—७. । ३ फ. ब. शब्देनात्र ।

पञ्चगुणत्वमुक्तम्—"धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम्।"इति। शदः क्षेत्रफलं पुष्पमूलफलादि; लवो मेषोर्णाचमरीकेशादिः ; वाह्यो बलीवर्दतुरगादिः ; धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामतीति । तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च[1] व्यवस्था द्रष्टव्या ॥ एतच्च सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम् । पुरुषान्तरसङ्क्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे अनेकशः रेकसेकाभ्यां 5

## सुबोधिनी

एतच्च सकृत्प्रयोगे सकृदाहरणे चेति । एकस्मिन् ऋणादानप्रयोगे एकदैव सवृद्धिकमूलग्रहणे चेत्यर्थः । एतदुक्तं भवति— एकस्मिन्नृणप्रयोगे दशसु[2] रूप्यकेषु दत्तेषु प्रतिमासं प्रतिसंवत्सरं वा वृद्धेरग्रहणे कालविलम्बवशात् वृद्धेर्द्वैगुण्यदि[3]क्रमेणाभिवृद्धिर्जाता । तत्र सवृद्धिकमूलमेकदैव गृह्णन्नुत्तमर्णो मूलेन सह द्विगुणं विंशतिरूप्यकपरिमितं द्रव्यं गृह्णीयात् । यदि तदेव द्विगुणं द्रव्यं पूर्वं यस्मै दशरूप्यकपरिमितं दत्तं तस्मायेव प्रयोगान्तरं कृत्वा दीयते अन्यस्मै वा दीयते, तदा

## बालंभट्टी

र्हितत्वात् सः । संभवात् तस्य दुष्टत्वाच्च ; इतीत्यस्यार्थ इति शेषः । पदार्थानुक्त्वा वाक्यार्थमाह—धान्येति । सर्वत्र विषयसप्तमीत्याह—विषयेति । पञ्चतामित्यस्य लक्ष्यार्थमाह—पञ्चगुणत्वमिति,—इतीत्यस्यार्थ इति शेषः । एवं सति विकल्पान्यप्रकारेण विरोधं परिहरति—तत्रेति । तेषु[4] पक्षेष्वित्यर्थः । परकीययोग्यतायाः तथ्यतः स्पष्टमज्ञानादाह—दुर्भिक्षेति । विशेषमाह—एतच्चेति । एकस्मिन्नेव ऋणादानप्रयोग एकदैव च स वृद्धिकमूलग्रहणे च इत्यर्थः । एकस्मिन् ऋणादानप्रयोगे दशरूपकेषु दत्तेषु प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्धेरग्रहणे कालविलम्बवशात् वृद्धेर्द्वैगुण्यादिक्रमेणाभिवृद्धिः प्राप्ता, तत्र सवृद्धिकमूलमेकदैव गृह्णन्नुत्तमर्णो मूलद्विगुणं तेन सह विंशतिरूपकं परिमितं गृह्णीयात् इत्यभिप्रायः। आद्यस्य प्रत्युदाहरणमाह—पुरुषान्तरेति । अन्यस्मै पुरुषाय दानेनेत्यर्थः । प्रयोगान्तरकरणं द्वेधा । तत्रैकमुक्त्वा द्वितीयमाह—तस्मिन्नेवेति । अनेकशः पुनः पुनः । अनेकश इत्यत्र

---

१ क. शेन च द्रव्यव्यवस्था । २ शरूपकेषु प्र । ३ 'द्वैगुण्यातिक्रमेण' इति स्यात् । ४ फ. 'तेषु पक्षेष्वित्यर्थः' इति नास्ति ।

प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्धते । सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यासंभवात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्धत एव ; यथाऽऽह मनुः "कुसीदवृद्धिर्द्वैगुण्यं नात्येति

## सुबोधिनी

पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा अधुना क्रियमाणे प्रयोगान्तरे न[1] वर्धेत इति न मन्तव्यम् ; तदा दीयमानस्य तस्यैव मूलत्वेन वृद्धेरिष्टत्वादिति । अत एव प्रथमप्रयोग एव द्वैगुण्याति[2] क्रमेणाभिवृद्धिर्नास्ति । द्वितीयादिप्रयोगान्तरेषु द्वैगुण्यमप्यत्येतीति[3] मन्तव्यम्[4] ; अधमर्णदेयस्य द्वैगुण्यासम्भवादिति ;—द्वैगुण्यासम्भवस्त्वेवं द्रष्टव्यः—प्रतिमासं प्रतिसंवत्सरं वा यस्मिन् दिने वृद्धिर्दीयते, तस्माद्दिनात् पूर्वमभिवृद्धस्य विच्छेदः । पुनरपि नूतनत्वेन वृद्धिः । एवं च वस्तुतः प्रयोगान्तरमिव भवतीति यावद्द्वैगुण्यं प्राप्नोति

## बालंभट्टी

रेकसेकाभ्यामिति पाठे—प्रयुक्तद्रव्यैकदेशग्रहणेन ऋणीकरणं रेकः, तत्रैव प्रक्षेपेणाधिकीकरणं सेकः। रिच वियोजनसपर्वनयोः षिच क्षरणे । तत्रैतेन सर्वग्रहणादाह—सुवर्णेति । पूर्ववत् अशीतिभाग इत्याद्युक्तप्रकारेण । अयं भावः—यदा तदेव विंशतिसंख्याकं द्विगुणद्रव्यम् अन्यस्मै दीयते पूर्वं यस्मै दत्तं तस्मायेव वा दीयते प्रयोगान्तरेण तथा व. क्रियते तदा पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा पुनः क्रियमाणे प्रयोगान्तरे न वर्द्धेत इति,—न तदा दीयमानस्यैव मूलत्वेन वृद्धेरिष्टत्वात् । अतः एवं प्रथमप्रयोग एव द्वैगुण्यव्यतिक्रमेण वृद्धिर्न । द्वितीयादि प्रयोगे तु द्वैगुण्याद्युत्पत्येतीति सकृदाहरणे चेत्यस्य प्रत्युदाहरणमाह—सकृदिति । देयस्य मूलस्य असंभवस्त्वेवं प्रतिदिनादि क्रमेण तद्दाने यस्मिन्दिने या वृद्धिर्दीयते तद्दिनात् पूर्वमभिवृद्धस्य धनस्य विच्छेदः पुनरपि नूतनत्वेन वृद्धिः। एवं च वस्तुतः प्रयोगान्तरमिव भवतीति यावद्द्वैगुण्यं प्राप्नोति तावदविच्छेदेन वृद्धस्य स्थित्यभाव इति । अत्र उभयत्र मानमाह—यथाऽऽहेति । हितेत्यस्येतीति शेषः । क्वचिद्गाथापाठ

---

१ एतदादि 'द्वितीयादिप्रयोगान्तरे' इत्यन्तं थ. पुस्तके न लिखितम् । २ त. ण्यादिक्र (?) ३ त. प्यनेनेति (?) ४ थ. द. अमितव्यम् (?) ।

सकृदाहिता।" इति। सकृदाहृतेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं, तस्य वृद्धिः कुसीदवृद्धिः, द्वैगुण्यं नात्येति नातिक्रामति यदि सकृदाहिता सकृत्प्रयुक्ता; पुरुषान्तरसङ्क्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति। सकृदाहृतेति पाठे तु शनैः शनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृता द्वैगुण्य-मत्येतीति व्याख्येयम्। तथा गौतमेनाप्युक्तम् "चिरस्थाने द्वैगुण्यं प्रयोगस्य" 5
इति। प्रयोगस्येत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः। चिर-स्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः॥ ३९ *॥

## सुबोधिनी

तावदविच्छेदेन वृद्धस्य द्रव्यस्य स्थित्यभावादिति। सकृदाहृतेति तु पाठे शनैः शनैरिति;— यदि सकृदाहृता मूलसहिता वृद्धिरेकदैव गृहीता तर्हि द्वैगुण्यं नात्येति। अन्यथा शनै-श्शनैर्गृहीता सती द्वैगुण्यमत्येतीत्यर्थः। चिरस्थाने द्वैगुण्यं प्रयोगस्येति,--स्थानं स्थितिः। ऋणादानप्रयोगस्य प्रतिमासं ग्रहणमन्तरेण चिरस्थितौ सत्यां द्वैगुण्यं भवति॥ ३९॥

## बालंभट्टी

एव। पाठभेदेन द्वयोर्लाभो नैकस्मादित्याह---सकृदिति। तथाऽऽद्यपाठे नाद्यलाभ इत्याह-- यदीति। एतद्विशेषणतात्पर्यमाह—पुरुषान्तरेति। आदिना प्रागुक्तद्वितीयपरिग्रहः। द्वितीयेन द्वितीयलाभ इत्याह—सकृदिति। तेतितु पाठेति पाठः। यदि सकृदाहृता मूलसहि-ता वृद्धिरेकदैव गृहीतेत्याद्यर्थः। एतत् तात्पर्यार्थमाह—शनैः शनैरिति। अन्येनेत्यादिः। शनैरित्यस्यैव व्याख्या प्रतीति। मानान्तरमाह—तथेति,— तद्वदित्यर्थः। अत एवापिना पौनरुक्त्यम् न। स्थानं स्थितिः। प्रयोगस्य प्रयुज्यमानऋणस्य प्रतिदिनादिक्रमेण वृद्धिग्रहणं विना चिरकालस्थितौ सत्यां द्वैगुण्यं भवतीत्यर्थः। उक्तमित्यस्य ध्वनितमित्यर्थः इति सूचयन्नाह—प्रयोगेति। अनेनाद्यार्थलाभ उक्तः द्वितीयस्य तमाह —चिरेति शनै-रिति। उक्तरीत्येति भावः। दर्शितः अभिप्रेतः॥ ३९॥

* "किण्वकार्पाससूत्रचर्मवर्मायुधष्टकाङ्गारकाणामक्षया। अनुक्तानां हि द्विगुणा" (विष्णुः) अप० ६४४.

१.—८. १५१.। २ क. द्वैगुण्यं नात्येति। ३ थ. द. वतीति। ४ फ. ध्वनितत्वे-नास्पष्टत्वात्।

ऋणप्रयोगधर्मा उक्ताः; सांप्रतं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनम् ॥ ४० ॥

प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिर्भावितं वा साधयन्प्रत्याहरन् धर्मादिभिरुपायैरुत्तमर्णो नृपतेः वाच्यो निवारणीयो न भवति । धर्मादयश्चोपाया मनुना दर्शिताः—"धर्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च॥" इति । धर्मेण प्रीतियुक्तेन सत्यवचनेन; व्यवहारेण साक्षिलेख्याद्युपन्यासेन; छलेन उत्सवादिव्याजेन भूषणादिग्रहणेन; आचरितेन अभोजनेन; पञ्चमेनोपायेन बलेन निगडबन्धनादिना; उपचयार्थं प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कुर्यादिति । "प्रपन्नं

---

अनया वृद्ध्या प्रपन्नं साधयेदित्यादि ॥ ४० ॥

---

बालंभट्टी

संगतिमाह— ऋणप्रयोगेति, ऋणदानेत्यर्थः । प्रपन्नमित्यस्य व्याख्या —अभ्युपगतमधमर्णेनेति । अर्थपदार्थोधनमिति व्याख्यानान्तरमाह—साक्ष्यादीति । अत एवान्यथा शेषं पूरयति—धर्मादिभिरिति । कतीति तानेवाह—धर्मादयश्चेति । तावित्यर्थः । प्रकृतोपयोग्यानर्थानाह — प्रीतीत्यादिना । तैर्भावितत्वादाह — उपन्यासेनेति । यथाश्रुतार्थासंभवात् लक्ष्यार्थमाह—उत्सवेति । अभोजेति तद्दानेनेत्यर्थः। पक्षान्तारे एतेषां सर्वेषामपायत्वं सूचयन्नाह—उपायेनेति । बलेनेत्यस्य व्याख्या निगडेति । एवं पदार्थानुक्त्वा वाक्यार्थमाह—उपेति । एतैः पञ्चभिर्व्यस्तैर्वा यथासंभवम् । इती त्यस्य अर्थ इति शेषः । ध्वनितमाह—प्रपन्नामिति । सम्प्रतिपन्नं अङ्गीकृतादि साधयन्प्रत्याहरणे तैरुपा-

---

१ ख. ग. नृपतेर्न वाच्यो । २—८. ४९. । ३ ख. ग. लेख्याद्युपायेन बलेन ४ छ. क. झ. ग्रहणेव आचरि० ।

साधयन्नर्थं न वाच्य" इति वदन् अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति। एतदेव स्पष्टीकृतं कात्यायनेन—"पीडयेद्यो धनी कश्चिद्दणिकं न्यायवादिनम् । तस्माद्-र्थात्सहीयेत तत्समं चाप्नुयाद्दमम् ॥" इति । यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्य-मानो याच्यमानो नृपं गच्छेद्राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्ड्यो भवति शक्त्यनुसारेण, धनिने तद्धनं दाप्यश्च । राज्ञा दापने च प्रकारा दर्शिताः—"राजा* तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्तु दुष्टान् संपीडय दा-पयेत् ॥ रिक्थिनं सुहृदं वाऽपि छलेनैव प्रदापयेत् ॥" इति । "साध्यमानो नृपं

प्रपन्नं न्यायेन स्पष्टीकृतं यदृच्छया साधयन्नऽर्थं न राज्ञा किंचिद्वक्तव्यः । यदि तु

## सुबोधिनी

अप्रातिपन्नं साधयन् राज्ञा निवारणीय इतीति । अप्रतिपन्नमनङ्गीकृतं साधयन्

## बालंभट्टी

यैरिति शेषः,—ध्वनितत्वेन स्पष्टत्वात् । ऋणिके मत्वर्थीयष्ठन् । न्यायेति,—यथार्थानङ्गी-कारादिभाषिणमित्यर्थः । दमं दण्डम् उत्तरार्द्धार्थमाह—यस्त्विति । उपायैरित्यस्य साध्येत्यत्रान्वयः । कर्मणि लडित्याह—याच्येति । गमनमात्रेण नानिष्टमतस्तस्य लक्ष्यार्थमाह—राजानमिति । लिङर्थाविवक्षया आह—अभीति । अनेन गच्छन्नि त्यपपाठ इति सूचितम् । विशेषाभावादाह—शक्त्येति । प्रपन्नसाधने उत्तमर्णस्य प्रागुक्तप्रकारवदत्रापि । शेषसूचनाय तामाह — दापने चेति । मनुनैवेति भावः । अधमर्णविशेषणात्र प्रकारभेद इत्याह—विप्रमिति । एवं प्रागपि बोध्यम् । सान्त्वेन प्रीतियुक्तसत्यवचनेन। एतेनेतरव्यवच्छेदः। एवमग्रेऽपि । देशेति—साक्षिलेख्याद्यु पन्यासरूपेण व्यवहारेण भोजनादिरूपेण च विमान्यानित्यर्थः । अनेन प्रागुक्तद्वयसंग्रहः । तत्रैव विशेषमाह—दुष्टानिति । अयं प्रागुक्तपञ्चमप्रकारः । तृतीयमाह—रिक्थिनमिति । विषयद्वयमत्र । एवं च सामादयो नीतिशास्त्रोक्ता उपाया एवात्रशब्देन त्वत्र व्यवहाराभावे-न कथं दण्डादिदापनं राजकृतमत आह—साध्येति। अयं भावः स्मृत्याचारेत्यनेन तादृशस्य

* कात्यायनवचनमेतदित्यपरार्कः ।

१ ङ. क. तत्समं प्राप्नुया। २ ख. चापि । ३ अपरार्कः—छलेननचदापयेत् । ४ प्रपन्नधने ।

गच्छेत्'' इत्येतत् "स्मृत्याचारव्यपेतेन" इत्यस्य प्रत्युदाहरणं च बोद्धव्यम् ॥ ४० ॥

बहुषूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षिते आह—

**गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।**

5 **दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥**

समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥ ४१ ॥

साध्यमानो राजन्यावेदयेत् ततो दण्ड्यो दाप्यश्च ;—राज्ञैव तद्धनं धनिकस्येति शेषः ॥४०॥

अथ यद्येकमृणिनं युगपद्धनिनः प्रार्थयेयुः तदा यथाक्रमं **गृहीतानुक्रमाद्द्यादित्यादि ॥ ४१ ॥**

ग्रहणानुक्रमादेवाधमर्णिकेनर्णमेकजातीयेभ्यो देयम् ; जातिभेदे ब्राह्मणादिक्रमेणैव । तुशब्दात्तुल्यजातीयत्वेऽपि । गुणाद्यपेक्षं गुणं द्योतयति । विप्रतिपन्नस्त्वृणिको राजन्यावेद्य साध्यः ॥ ४१ ॥

---

## सुबोधिनी

प्रत्याहरन्नित्यर्थः । प्रत्युदाहरणं बोद्धव्यमिति। अयमभिप्रायः "स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद् राज्ञे व्यवहारपदं हि तत् ॥ " इत्यनेनैतदुक्तं भवति— स्मृत्याचारविरुद्धेन मार्गेणाभिभूतस्सन् यदि राज्ञे निवेदयति, तदावेद्यमानं व्यवहारपद

## बालंभट्टी

व्यवहारपदत्वमुक्तम् ; अनेन तु तदविरुद्धमार्गेणाधर्षितत्वात् राज्ञे न निवेदनीयं, यदि निवेदयति तदा तन्निवेद्यमानं व्यवहारपदं न भवति । अत एव दण्डादिमात्रे विधीयते तत्रा प्याद्यौ दण्डस्य पश्चात् तस्येति निःशंकमविचार्य तथा कार्यमिति तद्विपरीतोदाहणमेतदित्यर्थ इति । उत्तमर्णिके बह्वृच इति अनुकल्पादावच् एवमधमर्णिकेऽपि बोध्यम् । अव्यवहितसंगतिऽरनेनोक्ता ॥ ४० ॥

गृहीतेति,—ग्रहणानुक्रमादित्यर्थः । धनिनामिति,—उद्देशस्य सम्बन्धत्व-

---

१ व्य० ११. । २ क. बहूत्तमर्णिकेषु । ३ थ. 'मार्गेण' इत्यादि 'स्मृत्याचाराविरुद्धेन' इत्यन्त नास्ति । ४ फ. तद्वदविरुद्ध ५ न निवेदनीयं ।

यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन्राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह—

**राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।**

**पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥ ४२ ॥**

अधमर्णिको राज्ञा प्रतिपन्नार्थात्साधिताद्दशकं शतं दाप्यः । प्रतिपन्नस्य साधितार्थस्य दशममंशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः । उत्तमर्णस्तु प्राप्तार्थः 5

तत्र च **राज्ञाऽधमर्णिको दाप्य इत्यादि ॥ ४२ ॥**

## सुबोधिनी

मिति । "साध्यमानो नृपं गच्छेत्" इत्यनेनैतदभिहितं स्यात्—स्मृत्याचाराविरुद्धेन मार्गेणाधर्षितो राज्ञे न निवेदयेत् । यदि निवेदयति, तन्निवेद्यमानं व्यवहारपदं न भवतीति । अत एव [1]दण्डो विधीयते "दण्ड्यो दाप्यश्च तद्धनम्" इति । तद्विपरीतोदाहरणमित्यर्थः ॥ ४० ॥

राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थ इति । नन्वत्र [2]दण्डरूपेण ग्रहणमनुप-

## बालंभट्टी

विवक्षया षष्ठी । धनमिति शेषः । तुरुक्तवैलक्षण्ये । तथा च भूपतेरित्युपलक्षणमग्निमस्यापि ॥ ४१ ॥

अवतारणसङ्गतिमाह—यदा पुनरिति ;—यदा त्वित्यर्थः । अशक्तौ हेतुं सूचयन्नाह—दुर्बल इति । चस्त्वर्थे। व्युत्क्रमेण समुच्चये वा भृतिदानं—शब्दानुशासनमाचार्यस्येतिवत् प्रयोगः । शाब्दमर्थमाह—अधमर्णेति । साधितादित्यस्य साकाङ्क्षं प्रकृतं शेषमाह—प्रतीति । कर्मधारयः-दशकमिति । पञ्चदशतो वर्गे वेति पक्षे परिमाणार्थककन्नन्तं शतमित्यत्र प्रतीतिः शेषः। शतस्य दशमं भागमित्यर्थः। एवं पञ्चकं शतमित्यत्रापि बोध्यम् । तत्र शतग्रहणमुपलक्षणमिति प्रतीत्यत्र कर्मधारयमन्यस्मै दापनाविवक्षां च सूचयन्नस्य तद्दशमांशत्वसम्भवात् फलितमर्थमाह—प्रतीति।प्राग्वदर्थद्वयमाह--क्रमेण उत्तमर्णादित्यादिना (?)। तुर्व्युत्क्रमे इत्याह—त्विति । प्राप्तेति । अनेन अतथात्वे नैवमिति सूचितम् । एतत्

---

[1] थ. दण्डोऽभिधी । [2] दण्डादिरू ।

पञ्चकं शतं भृतिरूपेण दाप्यः। साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः। अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितो "निह्नुते भावितो दद्यात्" इत्यादिना ॥ ४२ ॥

ऋणिको राज्ञा सर्वं धनिकाया[1] दाप्यः। स्वयं च तस्मादेव अधमर्णिकाद्दशकं शतं गृह्णीयात्। धनिकोऽपि साधितार्थसंख्यया पारितोषिकं राज्ञे पञ्चकं शतं दद्यात्। उत्तमर्णिको धनिकः। स्पष्टमन्यत् ॥ ४२ ॥

## सुबोधिनी

पन्नम्। "राज्ञाऽधमर्णिको दाप्यः" इति योगीश्वरवचने अधमर्णात् दशमांशग्रहणमात्रस्यैव प्रतीतेः [2]उत्तमर्णात् पञ्चमांशग्रहणस्य च प्रतीतेरिति चेत् —नैवम्। ग्रहणं तावत् प्रतीयते न तत्र विवादः। तत्र को हेतुरित्यपेक्षायां दृष्टसम्भवे अदृष्टं न कल्पनीयम्,—दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्। दृष्टो हेतुश्चाधमर्णेऽङ्गीकृतार्थादानरूपोऽपराधः। उत्तमर्णे तु न कोऽप्यपराधः। अपि त्वशक्तिरेव। अत एव यथाक्रममपराधेनाशक्तया चाधमर्णात् दण्ड उत्तमर्णात् भृतिरिति सर्वमनवद्यम्। ननु प्रतिवादिनाऽङ्गीकृते धने प्रत्याहरणप्रकारो दण्डविभागश्च दर्शितः"प्रपन्नं साधयन्नर्थम्"इत्यादिना। प्रतिवाद्यनङ्गीकृते तु धने कथं साधनप्रकारः, कथं वा दण्डविभाग इत्यत आह—अप्रतिपन्नार्थसाधने त्विति ॥ ४२ ॥

## बालंभट्टी

सूचक एव हिः। भृतिर्वेतनम्। अत्र तस्य तत्त्वासम्भवादेतस्यैव सम्भवादाह—विंशतीति। नन्विदमुभयमयुक्तं भृतिदण्डयोरित्यानुक्तया राज्ञस्तु तदंशग्रहणमात्रप्रतीतेरिति चेत्—न, ग्रहणप्रतीतेर्निर्विवादत्वेन तत्र हेतुपरामर्शे दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वेन तत्सम्भवे तदभावेनाधमर्णे अङ्गीकृतार्थादानरूपापराधरूपस्य दृष्टहेतोः सम्भवेनोत्तमर्णेऽपराधाभावेन केवलाशक्ति[3]सत्त्वेन गुरुत्वलघुत्वतारतम्येनाधमर्णादपराधेन दण्डस्य ग्रहणमुत्तमर्णादशक्तया भृतेरिति तात्पर्यार्थः। ननु प्रपन्नार्थसाधने इदं सर्वमुक्तम्, अप्रतिपन्ने तु का गतिरत आह—अप्रतीति दण्डेति। साधनप्रकार इत्यादिः तत्रापि वक्ष्यते इत्युक्तं

---

१. व्य०. ५.। २ थ. 'उत्तम' इत्यादि 'कल्पनीयम् इत्यन्तं नास्ति। ३ शक्तिमत्त्वेन।

सधनमधमर्णिकं प्रत्युक्तम् ; अधुना निर्धनमधमर्णिकं प्रत्याह—

**हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ॥**
**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४३ ॥**

ब्राह्मणादिजातिरुत्तमर्णो[1] हीनजातिं क्षत्रियादिजातिं परिक्षीणं[2] निर्धनमृणार्थं ऋणनिवृत्त्यर्थं कर्म[3] स्वजात्यनुरूपं कारयेत् तत्कुटुम्बाविरोधेन । ब्राह्मणः पुनः परि- 5 क्षीणो निर्धनः शनैः यथोदयं यथासंभवमृणं दाप्यः । अत्र च हीनजातिग्रहणं समजातेरप्युपलक्षणम् । अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं श्रेयोजाते[4]रुपलक्षणम् । अतश्च क्षात्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम् । एतदेव मनुना स्पष्टीकृतम्—

एवं तावत्समृद्धं दापयेत् असमृद्धं तु—**हीनजातिं परिक्षीणमित्यादि ॥ ४३ ॥**

---

**बालंभट्टी**

स्थितम् तदत्रोक्तमेवेति बोध्यम् ॥ ४२ ॥

हीनजातिमित्यत्र शूद्रादिरेव न विवक्षितः । उत्तरार्धस्वारस्यादित्याह—ब्राह्मेति । योग्यतयाऽऽह—उत्तमेति । परिक्षीणमित्यस्य व्याख्या—निर्धनमिति । मशकार्थो धूम इतिवदृणार्थमितीत्याह—ऋणनिवृत्तीति । अनतिप्रसंगायाऽऽह—स्वेति । नन्वेवं तत्र कुटुंबविनाशः स्यात् रक्षणाभावादत आह—तदिति । तदुपयोगिसंपाद्यावशिष्टकाले इदं तेन कार्यमिति भावः । उत्तरार्धार्थमाह—ब्राह्मेति । त्वर्थमाह—पुनरिति । शनैरित्यत्र वीप्सान्तर्भाव इत्याह—शनैः शनैरिति । यथोदयमित्यस्य प्रसिद्धार्थो नेत्याह—यथेति । विशेषद्वयमाह—अत्र चेति,—मूलवचने इत्यर्थः । अपिना तस्यापि संग्रहः तेन सर्वथाऽन्यून जातिमपि

---

१ ख. ब्राह्मणादिरुत्त० । च. ब्राह्मणजातिरुत्त० । २ ज. परिक्षिणं यथोचितं कर्मकारयेत् निर्धन० । ३ ख. कर्म स्वकर्म स्वजात्य० । ४ ख. श्रेष्ठजातेन ।

"कर्मणाऽपि समं कुर्याद्धनिकेनाधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥" इति । उत्तमर्णेन समं निवृत्तोत्तमर्णाधमर्णव्यपदेशमात्मानमधमर्णः कर्मणा कुर्यादित्यर्थः ॥ ४३ ॥

किं च—

**दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।**
5 **मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम् ॥ ४४ ॥**

---

स्पष्टार्थः श्लोकः ॥

यथोत्पत्त्या च ददतः—दीयमानं नेत्यादि ॥ ४४ ॥

---

## सुबोधिनी

कर्मणाऽपि समं कुर्यादिति । समाऽपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धमात्मानं कर्मणाऽपि समं कुर्यात् । श्रेयांस्तु तद्धनं शनैर्दद्यादित्यन्वयः । अस्यैव श्लोकस्य तात्पर्यार्थमाह—उत्तमर्णेन सममिति ॥ ४३ ॥

## बालंभट्टी

ब्राह्मणादिकं प्राग्वत् । कर्मेति—समोऽपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धमात्मानं कर्मणाऽपि समं तुल्यं कुर्यात् ; श्रेयांस्तु तद्धनं शनैर्दद्यादित्यर्थः । अपिनोक्तसमुच्चयः । तत्र स्पष्टांशमाह—उत्तमेति । कर्मणा धनादिकृततुल्यत्वासंभवात् सममिति व्याचष्टे—निवृत्तोत्तेति । अयमुत्तमर्णनिरूपिताधमर्णव्यपदेशस्तत्र यथा नास्ति एवं स्वस्मिन्नपीत्यर्थः। यद्वा दृष्टान्तार्थमुत्तमर्णग्रहणम् ,—तयोर्मिथस्ससम्बन्धिकत्वादन्यतरनिवृत्तावपरस्यापि निवृत्तेः ॥ ४३ ॥

किं चेति—उत्तमर्णेऽन्यदप्युच्यते इत्यर्थः । उत्तरार्धानुरोधेनाऽऽह—

---

१.—८. १७६. ।

उपचयार्थं प्रयुक्तं धनं अधमर्णेन दीयमानमुत्तमर्णो वृद्धिलोभाद्यदि न गृह्णाति तदाऽधमर्णेन मध्यस्थहस्ते स्थापितं यदि स्यात्तदा ततः स्थापनादूर्ध्वं न वर्धते। अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववद्वर्धत एव ॥ ४४॥

इदानीं देयमृणं यदा येन च देयं तदाह—

**अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।** 5

**दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥**

स्वकं धनमिति वचनात् आत्मनेपदयोगाच्च संनिहितधनिकविषयमेतत्। अन्यथा वर्धत एवेत्यभिप्रायः ॥ ४४ ॥

एवं तावत् पैतृकमृणं देयम्। भ्रात्रादिकृतं तु कथम्? तत्रापि—
**अविभक्तैः कुटुंबार्थैर्यदित्यादि** ॥ ४५ ॥

## बालंभट्टी

उपेति। स्वकमित्यत्र स्वार्थे कनित्याह--स्वयमिति। योग्यतया आह--अर्थेति। य इत्यस्यार्थः—उत्तेति। अग्रहणे हेतुं पूरयति—वृद्धीति। तथैवाऽऽह—यदीत्यादि। मध्यस्थपदं लाक्षणिकमित्याह—हस्तेति। तद्धनं तत इत्यस्य व्याख्या—स्थापनादिति। परमिति पदं व्याचष्टे—ऊर्ध्वमिति। तुल्यमुक्त्वा—विशेषमाह—अथेति। याच्येति—उत्तमर्णेनाधमर्ण इत्यर्थः। ततः तस्मात् पूर्ववत् स्थापनतः प्राग्वत् ॥ ४४ ॥

एवमुत्तमर्णे प्रकारद्वयमुक्तम्; अथाधमर्णे आह—इदानीमिति। यदेति कालनिर्देशात् येनेत्यधिकारिनिर्देशः। तद्वितयं अविभक्तैरित्यत्र बहुवचनबलात् बहुत्वं विवक्षितम्, तथा च समस्तैर्व्यस्तैर्वा तैरित्यर्थः। तुरुक्तवैलक्षण्ये तत्फलितमाह—अवीति।

अविभक्तैर्बहुभिः कुटुम्बार्थमेकैकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात्। तस्मिन्प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः ॥ ४५ ॥

येन देयमित्यत्र प्रत्युदाहरणमाह—

न योषित्पतिपुत्त्राभ्यां न पुत्त्रेण कृतं पिता।

---

कुटुंबं भरन्कुटुंबी भ्रात्रादिः; तेन कुटुंबनिमित्तं यदृणं कृतं तत्सर्वैरेव तस्मिन् प्रेते प्रोषिते वा रिक्थभाग्भिर्विभक्तैर्देयम् ॥ ४५ ॥

## सुबोधिनी

अविभक्तैर्बहुभिः कुटुम्बार्थमिति। बहुभिरेकेन वा कुटुम्बार्थं यदृणमिति देयर्णकथनम्। कुटुम्बी दद्यादित्यधिकारिवर्णनम्। तस्मिन् प्रेते प्रोषिते वेति कालाभिधानम्। तद्रिक्थिन — इत्यप्यधिकरिण एवोक्तिः ॥ ४५ ॥

येन देयमित्यत्र प्रत्युदाहरणमिति—"अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।"

## बालंभट्टी

कुटुंबार्थे, इत्यव्ययम् तत्रेत्याह— अर्थमिति । तस्य मध्यमणिन्यायेन उभयत्रान्वयः तथा च बहुभिस्तैरेकैकेन वा कुटुम्बरक्षणार्थं यदृणं कृतमित्यर्थः । अनेन देयत्वं कथितम् , उत्तरार्धस्वारस्येन शेषं पूरयति—तदृणं कुटुम्बी दद्यादिति । अधिकारिकथनम्, तस्मिन् कुटुम्बिनि। तदिति—तस्य कुटुम्बिनो ये रिक्थग्राहका इत्यर्थः। बहुवचनलभ्यमाह—सर्वे इति । अत्र प्रेते प्रोषिते वेति कालाभिधानं तद्रिक्थिन इत्यपि अधिकारिप्रदर्शकमेवेति भावः ॥ ४५ ॥

प्रत्युदेति—पूर्ववचनेन कुटुम्ब्यादिभिरधिकारिभिः ऋणं देयमिति येनेत्यंशो-

---

१ .........

दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥

पत्या कृतमृणं योषिद्भार्या नैव दद्यात् । पुत्रेण कृतं योषिन्माता न दद्यात् । तथा पुत्रेण कृतं पिता न दद्यात् । तथा भार्याकृतं पतिः न दद्यात् । कुटुम्बार्थादृत इति सर्वशेषं । अतश्च कुटुम्बार्थे येन केनापि कृतं तत् कुटुम्बिना देयं, तदभावे तद्दायहरैर्देयमित्युक्तमेव ॥ ४६ ॥ 5

विभक्तानामपि रिक्थभाजां संभवादविभक्तैरित्युक्तम् । विभक्तत्वे तु —
न योषित्पतिपुत्राभ्यामित्यादि ॥ ४६ ॥

सुबोधिनी

इत्यस्मिन् योगीश्वरवचने कुटुम्ब्यादिभिरधिकारिभिः ऋणं देयमिति । येनेत्ययमंशो विवृतः। तत्र कुटुम्ब्यादिभिरपि योषिदाद्यधिकारिभिर्विषयविशेषे ऋणमदेयमिति पूर्वमभिहितमृणस्य देयत्वंव्यावर्त्यत इति प्रत्युदाहरणत्वमित्यर्थः ॥ ४६ ॥

बालंभट्टी

विवृतः तत्र योषिदादीनामपि कुटुम्ब्यादित्वेऽधिकारित्वेन तस्य देयत्वं यद्यपि प्राप्तं, तथाऽपि विषयविशेषे देयमिति पूर्वाभिहितं ऋणस्य देयत्वं व्यावर्त्यत इति प्रत्युदाहरणत्वमित्यर्थः । तथा चानेनादेयमृणमुच्यते इति भावः । कृतमित्यस्य पूर्वत्रापि सम्बन्धः। योषित्पदं योग्यतयाद्व्यर्थमिति पृथक् व्याचष्टे—पत्येति । पूर्वतोऽनुवृत्तेराह—ऋणमिति । सर्वमिति न्यायेनाऽऽह—नैवेति । द्वितीयपादार्थमाह—भार्येति । नदद्यादित्यस्यानुषङ्गः । अव्यवहितसंम्बन्धभ्रमनिरासायाऽऽह—कुटुम्बेति। सर्वशेष इति पाठः "मजजयाः पुंसीत्युक्तेः शेषमिति पाठस्तस्य प्रायो वादत्वेन यद्वा सर्वस्य शेषः शेषत्वं यस्य तत् । अत एव तत्प्रत्युदाहरणतया पूर्वैकवाक्यतेत्याह—अतश्चेति । कृतं ऋणमिति

१ ख. ग. झ. भार्याकृतं पतिर्नदद्यात् । २. सर्वं वाक्यं सावधारणं इति न्यायः ।

" पुत्रपौत्रैर्ऋणं देयम् " इति वक्ष्यति । तस्य पुरस्तादपवादमाह—

**सुराकामद्यूतकृतं दण्ड[1]शुल्कावशिष्टकम् ।**
**वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥**

सुरापानेन यत्कृतमृणं कामकृतं स्त्रीव्यसने[2]निमित्तं द्यूते पराजयनिमित्तं दण्डशु-

अस्यापवादः—**सुराकामद्यूतकृतमित्यादि ॥ ४७ ॥**

## सुबोधिनी

तस्य पुरस्तादपवादमाहेति—"पुत्रपौत्रैर्ऋणं देयम्" इत्येतद्वचनं सुराकामद्यूतकृतामि

## बालंभट्टी

शेषः । हरै[3]र्यैः कश्चित् । नारदोऽपि —"न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा । अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत् ॥ दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा । यो[3] वा तद्रिक्थमादद्याद्यत्र रिक्थमृणं ततः ॥" इति । कात्यायनोऽपि—" भर्त्रा पुत्रेण वा-सार्द्धं केवलेनाऽऽत्मना कृतम् । ऋणमेवं विधं देयं नान्यथा तत्कृतं स्त्रिया ॥ मर्तुकामेन वा भर्त्रा उक्तं देयमृणं तया । अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं तया ॥" इति ॥ ४६ ॥

तस्येति,-अदेयप्रक्रमादिति शेषः। तथा चैतदर्थमेवमुक्तौ इतःपरस्यापि पा[4]ठक्रमादिति न्यायेनार्थक्रमतः पूर्वभावादपवादत्वमिति न काचिदसंगतिरिति भावः । द्यूतान्तद्वन्द्वस्य कृतशब्देन तृतीयातत्पुरुषःतस्य च प्रत्येकं सम्बन्धः। सु[5]रापानेनेति,-विभाषया णत्वविकल्पः। कामो स्त्र्यभिलाष इत्याह--स्त्रीति । बहुव्रीहिः एवमग्रेऽपि । द्यूते द्वैविध्यसत्वेऽपि जये तदभावादाह —परेति । लक्षणेति भावः । दण्डेत्यत्र द्वन्द्वोत्तरं षष्ठीतत्पुरुषः । स्वार्थे

---

१ क. दण्डं शुच्का २. ब. फ. तथेति योग्यतया स्त्रीपदार्थमाह—इत्येवमधिकः पाठो । ३. यैः ब. कैश्चित्—३. फ. योवातद्धनमादद्यात्—४ पाठ क्रमादर्थक्रमोबलीयान्—इतिन्यायः— ५ सुरापदंचतत्पानेलाक्षणिकं । साहचर्यादित्याह—अयमधिकः पाठः । फ. पुस्तकेदृश्यते— सुरापानेनेतीत्यादिः षष्ठीतत्पुरुषइत्यन्तः पाठः पपुस्तकेनास्ति ।

ल्कयोरवशिष्टं वृथादानं धूर्तवन्दिमल्लादिभ्यो यत्प्रतिज्ञातम्,—"धूर्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे। चाटचारणचौरेषु दत्तं भवति निष्फलम्॥" इति स्मरणात्। एतदृणं पित्रा कृतं पुत्रादिः शौण्डिकादिभ्यो न दद्यात्। अत्र दण्डशुल्कावशिष्टकमित्यवशिष्टग्रहणात्सर्वं दातव्यमिति न मन्तव्यम्। "दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा। न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम्॥" इत्यौशन-   5

स्वस्थपितृकृतं अस्वस्थे तस्मिन् रिक्थभाग्भिः देयं न पुनरस्वस्थकृतमपीत्यभिप्रायः। अस्वस्थप्रकारप्रपञ्चार्थश्चायं श्लोकः। दण्डशुल्कावशिष्टं तु वचनाददेयं सुरां पीत्वा यन्मूल्यं न दत्तं यश्च कामसंयोगेन स्त्रीणां प्रतिज्ञातं द्यूतहारित दण्डाद्यवशिष्टं वृथादानं च तथैवेह यस्यैव फलं नामुत्रेति निश्चितम्। तत्पुत्रादिभिरदेयं; शुल्कं; पथि राजभाव्यं दानम्, अशास्त्रचोदितं वृथादानम्। स्पष्टमन्यत्॥ ४७॥

## सुबोधिनी

त्याद्यपवादवचनापेक्षया यद्यपि पाठक्रमापेक्षया परं, तथाऽप्यर्थक्रमतः पूर्वभावीत्यपवाद इत्यर्थः। धूर्तवन्द्यादिभ्यो दत्तस्य वृथादानत्वं प्रतिपादयति—धूर्ते वन्दिनि मल्ले चेति।

## बालंभट्टी

कन् इत्याह—दण्डेति। रक्षानीशे राजभागः शुल्कम्। स्वार्थे कनिति भावः। वृथेति,—वृथादानमित्यस्य वृथादीयमानमित्याद्यर्थे शब्दबाधात् पूर्ववत्तदवशिष्टमित्यर्थासंभवाच्चाऽऽह—धूर्तेति। तथा च तदनुकूलो व्यापारोऽत्र प्रतिज्ञारूप एवेति भावः। धूर्तादिभ्यो दत्तस्यवृथादानत्वं समूलयति—धूर्ते इति। कितवे द्यूतकारिणि,चाटे विदूषके। अत्र निष्फलमित्युक्त्या पारलौकिकफलाभावात् वृथादानात्वं विवक्षितं न तु दृष्टफलाभावात् इति भावः। पदार्थानुक्त्वा वाक्यार्थमाह—एतदिति। पैतृकमिति व्याचष्टे—पित्रेति। अयं फलितार्थः। आगत इत्यधिकारेऽपि तुर्यचेति टाब्विधानात्। उत्सर्गानुरोधेन पुत्रपदमुपलक्षणमित्याह—पुत्रादिरिति। इहेति व्याचष्टे—शौण्डीति। तस्याधिकरणत्वविवक्षया तत्र सप्तमी। विशेषमाह—अत्रेति। वचने इत्यर्थः। पुत्रेण पौत्रेण च—व्यावेति।

सस्मरणात् । गौतमेनाप्युक्तम्—"मद्यशुल्कद्यूतदण्डा न पुत्त्रानधिभवेयुः ।" इति;—न पुत्त्रस्योपरि भवन्तीत्यर्थः । अनेनादेयमृणमुक्तम् ॥ ४७ ॥

"न पतिः स्त्रीकृत तथा" इत्यस्यापवादमाह—

**गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।**

5 **ऋणं दद्यात्पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया ॥ ४८ ॥**

गोपो गोपालः, शौण्डिकः सुराकारः, शैलूषो नटः, रजको वस्त्राणां रञ्जकः, व्याधो मृगयुः, एतेषां योषिद्भिर्यदृणं कृतं तत्पतिभिर्देयं यस्मात्तेषां वृत्तिर्जीवनं तदाश्रया योषिदधीना । "यस्माद्वृत्तिस्तदाश्रया" इति हेतुव्यपदेशादन्येऽपि ये योषिदधीनजीवनास्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते ॥ ४८ ॥

---

अस्यापवादः—**गोपशौण्डिकशैलूषेत्यादि ॥ ४८ ॥**

---

## सुबोधिनी

**निष्फलं भवतीति वचनबलात् वृथादानत्वं, न तु दृष्टफलाभावादित्यर्थः। मद्यशुल्कद्यूतदण्डा**

## बालंभट्टी

**न कुटुंबोपयोगीत्यर्थः । मद्येति,— अत्र मद्यादिदण्डान्तपदैस्तत्तदर्थव्ययीकृतानि द्रव्याणि लक्ष्यन्ते तानि पितृसम्बन्धानि पुत्त्रान्नाभिभवेयुरित्यर्थः। अधिभवेयुरिति पाठान्तरम्, —पराभवेयुरिति उभयार्थः । तात्पर्यार्थमाह—न पुत्त्रेति । तथा च दण्डशुल्कावेत्यत्र द्वयोः समाहारद्वन्द्वः । कन्स्वार्थे एव । अवशिष्टं चोपस्थितत्वात्तयोरेवेत्यविवक्षितम् । ननु प्रागुक्तमिति अनेन सूचितमिति बोध्यम् । उपसंहरति—अनेनेति । उभयेनेत्यर्थः ॥ ४७ ॥**

**गोपेति। अभ्यर्हितत्वात् पूर्वनिपातः व्याधान्तद्वन्द्वे योषिद्भिस्तत्पुरुषः । आदौ पदार्थमाह— गोप इति । अथ वाक्यार्थमाह—एतेषामिति । अनेन द्वन्द्वः सूचितः । पतिरिति जाता वेकवचनमित्याह—पतिभिरिति । तत्र बीजमाह—यस्मादिति । तेषां तत्पतीनाम्। अनेनतासा मित्यनेनैव सूचितमित्याह—यस्मादिति। अन्येऽपि एतद्भिन्नाः सर्वे ब्राह्मणादयोऽपि ।आद्यपादा·**

---

१ नाभिभवेयुः ब । २ थ· नाध्यविरिनि । ता । ३ पुत्रव्याधा···फ ४ मित्यपपाट इति सूचितं। ने दं षारिगण नं किं तूपलक्षणमित्यनेनैव अयमधिकः पाटः...फ...ब...पुस्तकयो र्दृश्यते ।

पतिकृतं भार्या न दद्यादित्यस्यापवादमाह—

**प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।**
**स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥ ४९ ॥**

मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने यत्प्रतिपन्नं तत्पतिकृतमृणं देयम् । यच्च पत्या सह भार्यया ऋणं कृतं तदपि भर्त्रभावे भार्यया अपुत्रया देयम् । यच्च स्वयमेव कृतम् ऋणं तदपि देयम् । ननु प्रतिपन्नादित्रयं स्त्रिया　5

गोपो गोपालः, शौण्डिकः सुराकारः, शैलूषो नटः, रजकः वस्त्रनिर्णेजनकृत् रजकश्च, व्याधो लुब्धः--एते स्त्रीकृतमप्यृणं दद्युः,—स्त्रीप्रधानत्वादेतेषां । तथा च नारदः—"तेषां तत्प्रत्यया वृत्तिः कुटुंबं च तदाश्रयः ।" इति हेत्वभिधानं च ॥ ४८ ॥

अन्येऽप्येवं प्रकारा उक्ता यथा स्युरिति । पुरुषमात्राविशेषेण तु—**प्रतिपन्नं स्त्रिया देयमित्यादि ॥ ४९ ॥**

## सुबोधिनी

इति,—अत्र मद्यशुल्कद्यूतदण्डपदैस्तत्तदर्थे व्ययीकृतानि द्रव्याणि लक्ष्यन्ते । [3]तेन मद्यादयः पुत्राणामधिभवेयुरित्यन्वयः । तात्पर्यार्थस्तु ग्रन्थ एव स्पष्टः ॥ ४७ ॥

मुमूर्षुणा प्रवत्स्यता वेति,—मुमूर्षुणा प्रवत्स्यता देशान्तरं गन्तुमिच्छता वा पत्या भर्त्रा ऋणदाने नियुक्तया भार्यया यत् प्रतिपन्नमङ्गीकृतं तद्देयमित्यर्थः । ननु "भार्यापुत्रश्च" इत्यनेन ऋणिनो वचनेन निर्धनत्वे प्रतीयमाने सति "प्रतिपन्नं स्त्रिया देयम्" इत्यादि-

## बालंभट्टी

र्थं मुक्तक्रमेण स्मृत्यन्तरानुरोधेनाऽऽह—मुमूर्षुणेति। परलोकं गन्तुं इच्छता देशान्तरं गमिष्यमाणेन वा भर्त्रा ऋणदानविषये नियुक्तया प्रेरितया भार्यया यत्प्रतिपन्नं यद्दानमङ्गीकृतं तदृणं तया देयमित्यर्थः। द्वितीयपादार्थमाह—यच्चेति। अनेन वा चार्थे इति सूचितम्। एवमग्रेऽपि। अत्र पत्या सहेत्युक्त्या तस्याः प्राधान्यं सूचितम्। एवमप्युक्तरीत्या उभयोरभावे तस्या दानाधिकारादाह—भर्त्रभावे इत्यादि । तृतीयपादार्थमाह—यच्चेति। मध्यमतो भेदाय सेंवैमिति न्यायेनाऽऽह-स्वयमेवेति।तथा च नारदः-"न स्त्री पतिकृतंदद्यादृणं पुत्रकृतं तथा। अभ्यु·

---

१ इदं पदं त पुस्तके नास्ति। २ द. दण्डादिशब्दैः। ३ थ. द. एते म। ४ सर्ववाक्यं सावधारणं इति ।

देयमिति न वक्तव्यम्—संदेहाभावात् । उच्यते । "भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥" इति वचनान्निर्धनत्वेन प्रतिपन्नादिष्वदानाशङ्कायामिदमुच्यते—"प्रतिपन्नं स्त्रिया देयम्" इत्यादि । न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते,—पारतन्त्र्यमात्रप्रतिपादनपरत्वात् । एतच्च विभागप्रकरणे स्पष्टीकरिष्यते। "नान्यस्त्री दातुमर्हति" इत्येतत्तर्हि
5

स्वयंकृतमृणं वा......नान्यस्त्रीदातुमर्हति ॥ दंपत्योरविभक्तत्वेऽप्यभ्युपेतादिव्यतिरेकेण स्त्रिया न देयमित्यभिप्रायः । कुतः पुनः स्त्रीणामस्वातन्त्र्ये ऋणप्रसङ्गः? कुतो वा दान

## सुबोधिनी

वचनशतैरपि देयत्वे विधीयमाने कथं स्त्रिया ऋणं देयं निर्धनत्वादित्यत आह—न चानेन वचनेन स्त्र्यादीनामिति ॥ ४८ ॥

## बालंभट्टी

पेताद्दते यद्वा सह पत्या कृतं भवेत्॥ दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा। या वा तद्रिक्थमादद्यात् यत्र रिक्थमृणं ततः॥"इति॥ कात्यायनोऽपि—"भर्त्रा पुत्त्रेण वा सार्द्धं केवलेनात्मना कृतम्। ऋणमेवं विधं देयं नान्यथा तत्कृतं स्त्रिया॥ मर्तुकामेन वा भर्त्रा उक्ता देयमृणं तया । अप्रपन्नाऽपि तत् दाप्या धनं यद्याश्रित स्त्रिया॥"इति। त्रय एवेति-एवोऽप्यर्थे । एते त्रयोऽपि आर्जितधना अपि अधना एव। अस्वामिनो धने,-स्मृता इत्यर्थः। यत्ते इति—भार्यादयो यत् किंचित् समधिगच्छन्ति धनमार्जयन्ति तद्धनं यस्य ते भार्यादयस्तस्य भवतीत्यर्थः। यस्य ते इति पाठः। यस्यैते इति पाठान्तरम्[1]। नन्वनेन तस्यानिर्धनत्वे प्रतीयमाने सति प्रतिपन्नमित्यादिवचनशतैर्देयत्वोक्तावपि कथं तया देयं निर्धनत्वादत आह—न चेति, न हीत्यर्थः। अनेन मनुवचनेन अत एवाशंकायामिति प्रागुक्तं-पारतन्त्र्येति। तत्पारतन्त्र्यप्रतिपादन तात्पर्यकत्वादित्यर्थः। तथा चाज्ञां विना नाधिकारः स्वातन्त्र्येण यत्रकुत्रचिद्विनियोगे। सत्यां तु तस्यां[2] सोस्तीति भावः नन्वत्र किं नियामकं, तथैवार्थः कुतो न, अयमपूर्वो विधिरस्तु तथा चैतदन्यविषयत्वं तस्येति व्यवस्थाऽसंभवादतआह—एतच्चेति । एवं सति तुर्यपदांशे एव शंकते—नान्यादिति ।

१ क. ख. च. घ. यस्यैते । २ तस्यां आज्ञायां सः अधिकारः...

न वक्तव्यम्—विधानेनैवान्यत्र प्रतिषेधसिद्धेः । उच्यते । "प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।" इत्यनयोरपवादार्थमुच्यते । अन्यत्सुराकामादिनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमिति ॥ ४९ ॥

पुनरपि यदृणं दातव्य येन च दातव्यं यत्र च काले दातव्यं तत्त्रितयमाह—

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा । 5

पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ ५० ॥

पिता यदि दातव्यमृणमदत्त्वा प्रेतः, दूरदेशं गतः, अचिकित्सनीयव्याध्याद्यभि-

मिति स्त्रीणामपि हि स्वातन्त्र्येण धनं वक्ष्यति भर्त्रा प्रीतेन यद्दत्तमित्यत्र स्वशरीरोपभोगार्थं स्त्रीणामृणप्रसंगोऽविरुद्धः, अत्रैव स्त्रीणामृणसंबन्धः ॥ ४९ ॥

अन्यत्रापि तु—पितरि प्रोषिते इत्यादि ॥ ५० ॥

पुत्रादिभिर्देयं पितरि मृते प्रोषिते वा विंशतिवर्षाणि प्रतीक्ष्य व्यसनाभिभूते वा पुत्रादिभिः ऋणं देयम् । अपि वेति च प्रकारार्थं अन्यस्मिन्नप्येवं प्रकारेऽप्याध्यादौ चिन्त्य

## बालंभट्टी

सिद्धेरिति—अर्थादिति शेषः । प्राप्तेरेवाभावादिति भावः । यथाकथंचित्स्वयं कृतस्याव श्यदेयत्वादाह—अनयोरिति । सुरेति,—सुरापाणादिव्यसनेनोपात्तं कृतमित्यर्थः । इति रर्थसमाप्तौ ।

एतेनैतच्छेषविषयता प्रागुक्तनिषेधस्येति ध्वनयितुं पुनरुक्तं नान्यदिति इति व्याख्यानमपास्तम् । तथा शिष्टेरभावात् सिंहावलोकनन्यायादरेणाऽऽह—पुनरपीति । किंचिद्विशेषवक्तुमिति भावः । वक्ष्यमाणक्रममाह—पितेति । प्रागुक्तक्रमेणाऽऽह—प्रेत-इति । प्रोषिते इत्यस्यार्थो—दूरेति । सुरापाणादिव्यसनाक्रान्तऋणस्य देयत्वस्योक्तत्वात् व्यसनेत्यस्य व्याख्या—अचिकित्सेति । आदिनाऽऽधिः। देयमित्यस्य व्याख्या—

---

१ ख. यने च दातव्यमिति नास्ति । २ क. व्याध्यभि० ।

भूतो वा तदा तत्कृतमृणमवश्यापनेयम्। पुत्रेण पौत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन च। तत्र क्रमोऽप्ययमेव पित्रभावे पुत्रः, पुत्राभावे पौत्र इति। पुत्रेण पौत्रेण वा निह्नवे कृते अर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः। अत्र पितरि प्रोषित इत्येतावदुक्तम्, कालविशेषस्तु नारदेनोक्तो द्रष्टव्यः,—"नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः। ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा॥" इति। प्रेतेऽप्यप्राप्तव्यवहारकालो न दद्यात्, प्राप्तव्यवहारकालस्तु दद्यात्। स च कालस्तेनैव दर्शितः—"गर्भस्थः सदृशो ज्ञेयः अष्टमाद्वत्सराच्छिशुः। बाल आ षोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते॥ परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते॥" इति।

---

वैकल्य हेतावुत्पन्न इत्यर्थः। तथा निह्नवे यदि च पिता विप्रतिपन्नः तदा साक्षिभावितं

---

## सुबोधिनी

पौगण्डश्चेति शब्द्यत इति। पौगण्ड इति बालस्यैव संज्ञान्तरम्। स्वतन्त्रः पितरावृत इति—ऋते पितरौ पित्रोरभावे षोडशवर्षानन्तरं स्वतन्त्रो भवतीत्यर्थः। नापि

## बालंभट्टी

अवश्येति। आवश्यके कृत्य इति भावः। द्वन्द्वेनोभाभ्यां युगपद्देयमिति प्रतीयमानार्थनिरासायाऽऽह—पुत्रेणेति। बहुवचनं व्यक्त्यभिप्रायम्। तत्त्वादेवाऽऽह— पित्रेति। निह्नवेत्यर्थमाह—पुत्रेणेति। वक्ष्यमाणरीत्या साक्षिपदमुपलक्षणमित्याह—साक्ष्यादीति। सर्वस्यानुषङ्गः इत्याह—ऋणमिति। अयंछन्दोनुरोधेण यथाश्रुतोक्त क्रमेण आद्ये विशेषमाह—अत्रेति। विंशात् विंशतेः पूरणात्ययप् पितरीत्युपलक्षणमिति सूचयन्नाह—पितृव्ये इति। कनिष्ठनिरासायाऽऽह—ज्येष्ठ इति। इदं चाविभक्तत्वे तदीयधनग्रहणे चेति बोध्यम् द्वितीये विशेषः। तेनैव नारदेनैव। अष्टमात्,-आङभिव्याप्तौ। एवमग्रेऽपि तत्साहचर्यात्तस्यैव नामशिशुरिति। षोडशादिति उटन्तः पौगण्ड इति बालस्यैव संज्ञान्तरं शब्दयते कथ्यते। परतःषोडशवर्षादूर्ध्वं पितरावृते तौ विना, तत उर्ध्वं स तयोरभावे स्वतन्त्र इत्यर्थः। ननु षोडशवर्षानन्तरं तस्य तत्वे वक्तव्येतदभावे

---

१ क. अवश्यमपनेयं । ग. अवश्यं देयं २ क.च. छ. शस्यते।३ आवश्यकं कृत्यमिति पाठः समीचीनः।

यद्यपि पितृमरणादूर्ध्वं बालोऽपि स्वतन्त्रो जातः, तथाऽपि नर्णभाग्भवति ; यथाऽऽह—"अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक्। स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम्॥" इति। तथा आसेधाह्वाननिषेधश्च दृश्यते—"अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती। विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः॥"इति। तस्मात्—"अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः। ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत्॥" 5

## सुबोधिनी

पित्रभावे षोडशवर्षानन्तरं स्वातन्त्र्यमिति नियमोऽनुपपन्नः षोडशभ्यो वर्षेभ्यः प्रागपि पितृमरणे स्वातन्त्र्यसिद्धेः ; तथा चाप्राप्तव्यवहारस्याप्यृणं देयं स्यादित्यत आह—यद्यपि पितृमरणादूर्ध्वमिति। अप्राप्तव्यवहारश्चेदिति,—अप्राप्तव्यवहार आषोडशवर्षदेशीयश्चेद्यदि, तदा स्वतन्त्रोऽपि हि ऋणभाङ्न भवतीत्यर्थः। यस्माद् एवमप्राप्तव्यवहारो नर्णभाक् तस्माद्वक्ष्यमाणं वचनमेवं व्याख्येयमित्याह—तस्माद् अतः पुत्रेण जातेनेति। न जात-

## बालंभट्टी

स्वातंत्र्यमिति नियमो वचनवेद्योऽयुक्तः। ततः पूर्वमपि पित्रोर्मरणे स्वातन्त्र्यसिद्धेस्तथा च तद्वचनस्यापि तद्दानाधिकारित्वमित्यप्राप्तव्यवहारस्यापि ऋणं देयं स्यादित्यन्यथा प्रागुक्तमित्यत आह—यद्यपीति। अपिना शिशुसमुच्चयः। व्युत्क्रमेणोक्तिरियं-यथाऽऽहेति।यतः स एवाऽऽहेत्यर्थः। अप्राप्तेति—अप्राप्तव्यवहारश्चेत् षोडशवर्षातिक्रमरहितो यदि तदाऽनयोरभावात् स्वतन्त्रोऽपि ऋणभाक् न भवतीत्यर्थः। अपिना अस्वतन्त्रसमुच्चयः। तत्र हेतुमाह—स्वातन्त्र्येति। ननु तत्र तद्वत् स्वातन्त्र्यमपि मास्तु; अत आह— स्वातन्त्र्यमिति। ननु यत्र स्वातन्त्र्यं ज्येष्ठे स्मृतं न तु तत्रैव इत्यर्थः। [1]नन्वतत्त्ववत्तदा तदपि न, अत आह—ज्यैष्ठ्यमिति। तथा च तयोरभावादुभयकृतज्यैष्ठ्याभावात्तस्मिन्तत्त्वेनतत्त्वेऽपि वचनान्नतत्त्वमित्युक्तवचने तयोरभावाद्यस्स्वतन्त्रः स परतो व्यवहारज्ञ इत्यन्वयो न तु परत इत्यस्याग्रेऽपीति न कोऽपि दोषः। अत एव तथैव प्रतिज्ञातं तथाऽप्राप्तव्यवहारत्वदृढीकरणेनोक्तार्थे युक्त्यन्तरमपि सूचयन्नन्यदप्याह—तथेति। उक्तनिषेधवदित्यर्थः। आसेधेति,—आसेधाह्वानयोर्निषेधेऽपीत्यर्थः। विषमेति—संकटस्थाश्चेत्यर्थः। अत्र पञ्चानां निषेधः। एवं सति प्राप्तस्मृत्यन्तरविरोधं परिहरति—तस्मादिति। यतोऽप्राप्तव्यवहारो न ऋणभागुक्तवचनात् तस्मात् इति वचनमित्येवं व्याख्येयमित्यर्थः। अन्यथा विरोधो दुष्परिहर इति भावः। अतः पुत्रत्वात् यत्नतः यत्नेन तदेवाऽऽह—यथेति। तथा च जातमात्रेण पुत्रेण स ऋणा-

---

१ ख. नरके। २ फ. ननुतद्वत्तदा।

इति । पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्याप्यधिकारः,—"न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्।" इति गौतमस्मरणात् । पुत्रपौत्रैरिति बहुवचननिर्देशाद्बहवः पुत्रा यदि विभक्ताः तेस्वांशानुरूपेण ऋणं दद्युः

## सुबोधिनी

मात्रेण पिता ऋणान्मोचनीयः, अपि तु व्यवहारज्ञतया जातेन षोडशवर्षदेशीयत्वेन जातेन पुत्रेण ऋणात् पिता मोचनीय इत्यर्थः । न ब्रह्माभिव्याहारयेदिति,—अस्यार्थः— ब्रह्म वेदं नाभिव्याहारयेत् न प्रयोजयेद् अन्येन । स्वधाकारः प्रणीयतेऽस्मिन् श्राद्ध इति स्वधानिनयनं श्राद्धं, तस्मादन्यत्र । श्राद्धव्यतिरिक्तस्थले नाभिव्याहारयेदिति । एतदुक्तं

## बलंभट्टी

न्मोच्य इति नार्थः । किन्तु व्यवहारज्ञतया जातेनैव तदर्हवार्षिकेण तेन स ततो मोच्य इत्यर्थः । न त्वेवं तस्य श्राद्धेऽप्यधिकारो न स्यात् [1]उक्तव्यवहारानभिज्ञत्वस्य सुतरां सत्वादत आह—श्राद्धे त्विति । तु रुक्तवैलक्षण्ये, अपिः प्राग्वत् । न ब्रह्मेति—ब्रह्म वेदं नाभिव्याहारयेत् , नाभिभाषयेदन्येन । बालः स्वधा स्वधाकारः निनीयते प्रणीयतेऽस्मिन् श्राद्धे तत् स्वधानिनयनं ततोऽन्यत्र श्राद्धादन्यत्र नाभिभाषयेदित्यर्थः । अयं भावः श्राद्धे वेदोच्चारणं कारयेत् यदि स्वयमनुपनीतः । उपनीतस्य स्वयमेवोच्चारणेऽधिकारात् एवं च बालस्यापि प्रयोजककर्तृत्वप्रतीति बलात् अत्र यजमानता प्रतीतेरधिकारोऽस्तीति । वस्तुतस्तु ब्रह्म वेदम्, अन्यः ऋत्विगादिः प्रयोजककर्ता अनुपनीतं बालं नाभिव्याहारयेत् वेदोच्चारणे न प्रयोजयेत् स्वधानिनयनादन्यत्रेत्यर्थः । मनुरपि "न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् । नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते ॥" इति । एवं च कृतचूडस्यानुपनीतस्यापि श्राद्धेऽधिकारस्तस्य मुख्यत्वात् । एवं च तस्य तदुपयोगिमन्त्रपाठोऽपि भवत्येवेति बोध्यम् । "कृतचूडस्तु कुर्वीत उदकं पिण्डमेवच । स्वधाकारं प्रयुंजीत मन्त्रोच्चारं न कारयेत् ॥" इति व्याघ्रनाम्ना लिखितं वचनं यदि समूलं तदा मन्त्रविषये विकल्पो द्रष्टव्यः। व्यक्त्यभिप्रायेण कृतबहुवचनस्य फलमाह—पुत्रपौत्रैरिति। पञ्चम्यन्तस्य ते इत्यत्रान्वयः । विभक्ता इति—

---

१ फ. उक्तव्यवहारानभिज्ञतया वैदिकव्यवहारानभिज्ञत्वस्य सुतरां.

अविभक्ताश्चेत्संभूयसमुत्थानेन। गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव वा दद्या-
दिति गम्यते; यथाऽऽह नारदः—"अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः।
अविभक्ता विभक्ता वा यस्तावद्वहते[1] धुरम्॥" इति[13]। अत्र च यद्यपि[2] "पुत्रपौत्रैर्ऋणं
देयम्" इत्यविशेषेणोक्तम्, तथाऽपि पुत्त्रेण यथा पिता सवृद्धिकं ददाति तथैवं[3] देयम्।

## सुबोधिनी

भवति – श्राद्धे वेदोच्चारणं कारयेद् यदि स्वयमनुपनीतः—उपनीतस्य स्वयमेवोच्चारणेऽधि-
कारात्। एवञ्च बालस्यापि प्रयोजककर्तृत्वबलाद्यजमानताप्रतीतेरधिकारोऽस्तीति। यद्वा ब्रह्म
वेदम् अन्यः ऋत्विगादिः प्रयोजककर्ता अनुपनीतं बालं नाभिव्याहारयेत् बालं वेदोच्चारणे
न प्रयोजयेदित्यर्थः। स्वधानिनयनादन्यत्र। सम्भूयसमुत्थानेनेति,—अंशकल्पनामन्तरेण
मिलित्वैवेत्यर्थः। अविभक्ताः सम्भूयसमुत्थानेन ऋणं दद्युरित्युक्तम्। तत्र तात्पर्यार्थमाह—
गुणप्राधानभावेनेति। प्रधानभूतो मुख्यो दद्यादित्यर्थः। अत ऊर्ध्वं पितुः पुत्रा इति।
यतः पुत्त्रपौत्रैर्ऋणं देयम्, अतः पितुरूर्ध्वमविभक्ता विभक्ता वा पुत्त्रा ऋणं दद्युः।
अविभक्तानां पुत्त्राणामृणदानप्रकारमाह—यस्तां वोद्वहते धुरमिति। अविभक्तानां मध्ये
यस्तां धुरं कुटुम्बभारमुद्वहति स दद्यादित्यभिप्रायः। अत्र "तां वा" इति वाशब्द एवकारार्थः।
अत्र विभक्तानां दानप्रकारमाह—यथांशत इति। अत्र च यद्यपीति-अत्र "पुत्त्रपौत्रैर्ऋणं

## बालंभट्टी

तदेति शेषः। क्वचित् पाठ एव। एवमग्रेऽपि। संभूयेति,—मिलित्वा देयमिति सङ्केतेनेत्यर्थः।
मिलित्वा एकीकरणेन वा अंशतो दानमत्रापि। पूर्वं भेदेन दानमत्रा तु मेलनेनेति विशेषः। अत
एव नारदैकवाक्यता। दद्युरित्यस्यानुषङ्गः। इदमपि समप्रधानभावविषयमत एवाऽऽह
— गुणेति —प्रधानेति,—मुख्येत्यर्थः। उक्तत्रये मानमाह—यथाऽऽहेति।
अतः पुत्त्रत्वात्—ऊर्ध्वं पितुः, तन्मरणाद्यनन्तरम् विभक्ता वेत्यन्त एकोऽन्वयः। यथांशत
इत्यस्योभयत्रान्वयः। अनेन प्रकारद्वयमुक्तं, तृतीयप्रकारमाह—य इति। विशेषमाह—
अत्र चेति। पुत्रपौत्रैरित्यस्मिन् वचने इत्यर्थः। समं गृहीतसदृशं मूलमेवेत्येवकारव्यवच्छेद्य

१ घ. यस्तामुद्वहते। यस्तांवोद्वहते। १३....१. १४ २ अपि च यद्यपि पुत्र। ३ ख.
तथैव ऋणं दे। ङ. तथैव द्रव्यं दे।

पौत्रेण तु समं मूलमेव दातव्यं न वृद्धिरिति विशेषोऽवगन्तव्यः,—"ऋणमात्मीय वत्पित्र्यं देयं पुत्त्रैर्विभावितम्। पैतामहं समं देयमदेयं तत्सुतस्य तु ॥" इति बृहस्पतिवचनात्। अत्र विभावितमित्यविशेषोपादानात्साक्षिभिर्भावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम्। समं यावद्गृहीतं तावदेव देयं न वृद्धिः तत्सुतस्य प्रपौत्रस्यादे-
5 यमगृहीतधनस्य। एतच्चोत्तरश्लोके स्पष्टयिष्यते ॥ ५० ॥

पुत्त्रादिभिर्देयम्॥ सोऽपि हि प्रकृतिविपर्ययादसामर्थ्येनायोग्य एव ऋणवांश्चास्ववस्थासु पैतृकं रिक्थमपि पुत्त्रादिभिर्ग्राह्यमित्यवगन्तव्यम् ॥ ५० ॥

## सुबोधिनी

देयम्" इत्यस्मिन् वचने। अत्र विभावितमित्यविशेषोपादानादिति अत्र बृहस्पतिवचने विभावितमिति सामान्येनोपादानात् "पुत्त्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्।"इति योगीश्वरवचने साक्षिभावितमिति पदं प्रमाणमात्रमुपलक्षयति। अतश्च येन केनापि प्रमाणेन साधितमृणं पुत्त्राद्यैर्दातव्यमित्यर्थः। एवञ्च योगीश्वरबृहस्पतिवचनयोर्न विरोध इत्यभिप्रायः ॥ ५० ॥

## बालंभट्टी

माह—न वृद्धिरिति। एवमग्रेऽपि। अत्रमानमाह—ऋणमिति। अर्थात् पौत्रेण—तत्सुतेति। पौत्रसुतस्य प्रपौत्रस्येत्यर्थः। पुत्त्रपौत्रैरिति विशेषस्यानेन गुरुवाक्येन सामान्यपरेण सह प्राप्तविरोधपरिहारः सामान्यस्य विशेषे उपसंहार इति न्यायेन तत्रानन्तरसिद्धेन कर्तुं यद्यप्युचितम्तथाऽपि सामान्यस्याधिकसंग्राहकत्वेन प्रबलत्वात्तद्विशेषस्य न्यूनत्वेन दुर्बलत्वेन तथा प्रकृते दुर्वचमिति वैपरीत्येन विरोधं परिहरति—अत्रेति। बृहस्पतिवाक्ये इत्यर्थः। अवीति—सामान्येनेत्यर्थः। इत्यत्र मूलवाक्ये--प्रमाणोपेति। प्रमाणमात्रेणेत्यर्थः। तथा च येन केनापि प्रमाणेन साधितमृणं पुत्त्रादिना देयमित्यर्थेन न वचनयोर्मिथो विरोध इति भावः। अत एव प्राक् तथा व्याख्यातम्। अस्योत्तरार्द्धार्थमाह—सममित्यादि। विशेषान्तरमाह— तत्सुतेति। विशेषान्तरमाह—अगृहीतेति। ननु अत्र किं मानमत आह—एतच्चेति ॥ ५० ॥

---

१ च. ङ. झ. ण तु समं मूल्यमेव। ङ. ण तु सममूल्यमेव। २ ब सफलत्वन प्रबलत्वात्।

ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शितास्तेषां च समवाये क्रमोऽपि दर्शितः। इदानींकर्त्रन्तरसमवाये च क्रममाह--

**रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।**
**पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥ ५१॥**

अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति तद्रिक्थम्। विभागाद्रिक्थं गृह्णातीति रिक्थग्राहः स ऋणं दाप्यः। एतदुक्तं भवति—यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिरिति, योषितं भार्यां गृह्णाति योषिद्ग्राहः स तथैव ऋणं दाप्यः। यो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्यः 5

---

**रिक्थग्राह ऋणमित्यादि॥ ५१॥**

ऋणिके सत्ययं दानक्रमः, तदभावे तु "रिक्थग्राह ऋणं दद्याद्योषिद्ग्राहस्तथैव च। पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥" रिक्थानुसारित्वादृणानां रिक्थ

---

## सुबोधिनी

ऋणापाकरणे ऋणी तत्पुत्रः इति,—ऋणी ऋणग्राही। ननु रिक्थग्राह इत्येव वक्तव्यं न योषिद्ग्राह इति तस्य योषितोऽपि द्रव्यत्वेन रिक्थरूपत्वादित्यत आह—योषितोऽविभाज्यद्रव्यत्वेनेति। अयमर्थः—यद्यपि योषिद्द्रव्यं भवति, तथाऽपि रिक्थ

## बालंभट्टी

सङ्गतिं प्रसङ्गरूपामाह—ऋणापेति, ऋणनिवारणे इत्यर्थः। ऋणी ऋणग्राही च। सेति—समवाये चेत्यर्थः। कर्त्रन्तरेति। उक्तादन्येषां समवाये क्रमं चेत्यर्थः। अन्यदीयमिति--अन्यस्वामिकमित्यर्थः। अत एव च व्यतिरिक्तप्रकारमेवाऽऽह--विभागेति। एवमाद्यपादार्थमुक्त्वा तत्तात्पर्यार्थमाह—एतदिति, न चौरेति। तस्य स्तेयादिना तद्ग्राहकत्वेऽपि रिक्थग्राहकत्वाभावादिति भावः। द्वितीयपादार्थमाह—योषितमिति। अस्याभिमतार्थविशेषमाह — भार्यामिति। तथैव चेत्यस्य व्याख्या — ऋणमिति। यद्वा तद्वदेव इत्यर्थः तस्यानुषङ्गः। अस्यापि तात्पर्यार्थमाह—य इति। ननु योषितोऽपि द्रव्यत्वेन रिक्थरूपत्वात् रिक्थग्राहइत्यनेनैवेष्टसिद्धेः इदं न वाच्यमत आह—योषित इति। यद्यपि योषित् द्रव्यं भवति, तथाऽपि

योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः। पुत्रश्चानन्याश्रितद्रव्यः ऋणं दाप्यः, अन्यमाश्रितमन्याश्रितं अन्याश्रितं मातापितृसंबन्धि[1] द्रव्यं यस्यासावन्याश्रितद्रव्यः। न अन्याश्रितद्रव्यः अनन्याश्रितद्रव्यः, पुत्रहीनस्य रिक्थिनः ऋणं दाप्या इति संबन्धः। एतेषां समवाये क्रमश्च पाठक्रम एव। रिक्थग्राह ऋणं दाप्यः, तदभावे
5 योषिग्द्राहः, तदभावे पुत्र इति ॥

नन्वेतेषां समवाय एव नोपपद्यते। "न भ्रातरो न पितरः पुत्रा[2] रिक्थहराः

---

ग्राहिण एव निर्विचिकित्सं दद्युः। निर्धनस्य तु नियोगाद्विना योऽस्य भार्याम् संगृह्णीयात् स दद्यात्। एतच्चाब्राह्मणविषयम् — तद्योषितामेवान्यगामित्वसंभवात्। तथैव चेति

---

## सुबोधिनी

शब्दवाच्यत्वं नास्ति तस्यां विभागार्हद्रव्य एव लोके रिक्थशब्दप्रयोगात्, योषितश्च विभागानर्हत्वादिति। एतेषां रिक्थग्राहादीनां समवाये मेलने केन क्रमेणैते ऋणं दाप्या इत्याकाङ्क्षायां "रिक्थग्राह ऋणं दाप्यः" इत्येतद्वचनपाठक्रमेणैव दाप्या इत्याह—एतेषां समवाय इति। रिक्थग्राहादीनां सति हि समवाये क्रमचिन्ता। स एव समवायो नास्तीत्याक्षिपति—नन्वेतेषामिति। समवायाभावमेवोपपादयति—न भ्रातरो न पितर इति।

## बालंभट्टी

रिक्थशब्दवाच्यत्वं नास्ति तस्याः, विभागार्हद्रव्ये एव लोके रिक्थशब्दप्रयोगात्; योषितश्च विभागानर्हत्वादिति भावः। अविभाज्येति पाठः ण्यन्तत्वात्। तृतीयपादार्थमाह—पुत्रश्चेति। न अन्योऽनन्य इत्याद्यर्थान्तरनिरासाय तत्पदार्थमाह— अन्यमिति। तदर्थमाह—मातेति। तुर्यपादार्थमाह—पुत्रहीनेति। रिक्थिन इति प्रथमाबहुवचनान्तमित्याशयेन सवचनविपरिणामेनानुषङ्गेणाऽऽह-ऋणमिति। एवं कर्तन्तरे उक्तेऽपि क्रमो नोक्त इत्येतेषां रिक्थग्राहादीनां मेलने केन क्रमेणैते ऋणं दाप्या इत्याकाङ्क्षाया अशान्तिरित्यवतरणासंगतिरत आह—एतेषामिति। तमेवाऽऽह—रिक्थेति। असति बाधके उपात्तवचनपाठक्रमत्यागे मानाभावादिति भावः। ननु रिक्थग्राहादीनां सति समवाये क्रमचिन्ता स एव नास्तीत्याह—नन्वेतेषामिति। तमेव तदभावं क्रमेणोपपादयति—न भ्रातर इति। पितुः भ्रातरः पितरश्च न रिक्थहराः, अपि तु पुत्रा एव तथेति मनूक्तत्वात्

---

१ ख. ग. मातृपितृसं०। २ क. पुत्रोरिक्थहरः पितुः।

पितुः।" इतिपुत्रे सत्यन्यस्य रिक्थग्रहणासंभवात्। योषिद्ग्राहोऽपि नोपपद्यते,— " न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते।" इति स्मरणात। तदृणं पुत्रो दाप्य इत्यप्ययुक्तम्,—" पुत्रपौत्रैर्ऋणं देयम्" इत्युक्तत्वात्। " अनन्याश्रितद्रव्यः" इति विशेषणमप्यनर्थकम्,—पुत्रे सति द्रव्यस्यान्याश्रयणासंभवात्,

---

धनग्राहिवदविकल्पयन् योषिद्ग्राह्यपि दद्यादित्यर्थः। तदेव हि द्रव्यं द्रव्यहीनस्येत्यभिप्रायः। एतस्मादेवातिदेशाद्रिक्थभाक्च योषिद्ग्राहादयः प्रत्येतव्याः। "पुत्रोऽनन्याश्रितद्रव्यः" इति

## सुबोधिनी

न भ्रातरो न पितरो रिक्थहराः। अपि तु पितूरिक्थहराः पुत्रा एवेति मनुना प्रतिपादितत्वात् पुत्रे विद्यमानेऽन्यस्य रिक्थहारित्वासम्भवात् रिक्थग्राहपुत्रयोर्मेलनं नास्तीत्यर्थः। ननु मा भूत् रिक्थग्राहपुत्रयोः समवायः योषिद्ग्राहपुत्रयोः समवायोऽस्तीत्याशङ्क्य योषिद्ग्राहाभावादेव नानयोः समवाय इत्याह- योषिद्ग्राहोऽपि नोपपद्यत इति। अत्र हेतुः,— न द्वितीयश्चेति। द्वितीयभर्तृनिषेधादेव योषिद्ग्राहाभाव इत्यर्थः। "पुत्रोऽनन्याश्रितद्रव्यः" इत्यत्र पुत्रः ऋणं दाप्य इत्युक्तम्। असावप्युपदेशोऽनर्थक इत्याह—तदृणं पुत्रो दाप्य इति। तत्र हेतुः—पुत्रपौत्रैरिति।"पुत्रपौत्रैर्ऋणं देयम्"इत्येतस्यार्थस्य प्रतिपादितत्वेन पौनरुक्त्याद त्र पुनः कथनमयुक्तमित्यर्थः। " पुत्रोऽनन्याश्रितद्रव्यः" इत्यत्रैवानन्याश्रितद्रव्य इति पुत्रविशेषणमुपात्तम्। तदप्यनर्थकमित्याह--अनन्याश्रितद्रव्य इति। तत्रोपपत्तिमाह—पुत्रे सतीति। त्रे विद्यमाने पितृद्रव्यस्यान्यगामित्वाभावादनन्याश्रितद्रव्यः पुत्रः ऋणं

## बालंभट्टी

पुत्रेसत्यन्यस्य तत्त्वासम्भवात् पुत्ररिक्थग्राहयोर्मेलनं नास्तीत्यर्थः। ननु मास्तु तयोस्समवायः पुत्रयोषिद्ग्राहयोस्तु संभवत्येवेति चेन्न तदभावादेव तयोस्तस्य दुर्वचत्वादित्याह—योषिदिति। अत्र हेतुमाह—न द्वीति। द्वितीयभर्तृनिषेधादेव योषिद्ग्राहाभावात् इति भावः। पुत्र इत्यपि व्यर्थं पुनरुक्तं चेत्याह—तथर्णमिति। तत्र हेतुमाह—पुत्रेति। तथा चास्यार्थस्य तेनैवोक्तत्वेन पौनरुक्त्यादत्र पुनः कथनमयुक्तमिति भावः। एवं विशेष्यानर्थक्य मुक्त्वा विशेषणानर्थक्यं भेदेनाप्याह—अनन्येति। अत्रोपपत्तिमाह—पुत्रे सतीति। अन्यानाश्रयणेनेत्यर्थः। तथा च तस्य सत्त्वे तस्यान्यागामित्वात्तद्व्यर्थमिति भावः। सत्यपि तस्मिन्तत्त्वम्

---

१ तथर्णं ङ. तच्चर्णं। २ एतस्मादेवातिदेशान्नरिक्थभाजो योषिद्ग्राहादयः प्रत्येतथा इति पाठश्चेत्सम्यग्भाति।

संभवे च रिक्थग्राहीत्यनेनैव गतार्थत्वात्। "पुत्रहीनस्य रिक्थिनः" इत्येतदपि न वक्तव्यम्। पुत्रे सत्यपि "रिक्थग्राही ऋणं दाप्यः" इति स्थितम्। असति पुत्रे रिक्थग्राही सुतरां दाप्य

---

अन्यस्मिन्ननाश्रितं द्रव्यं यस्यासौ अनन्याश्रितद्रव्यः पुत्रो दद्यान्न चेद्द्रव्यमन्येन गृहीतमित्यर्थः॥ ननु द्रव्येसत्येवें पुत्रो दद्यात्। ऋणस्य द्रव्यगामित्वादित्येतत्प्रागेव ज्ञापितम्।

---

## सुबोधिनी

दाप्य इति व्यर्थं विशेषणमित्यर्थः। सत्यपि पुत्रे पितृद्रव्यस्यान्यगामित्वमङ्गीकृत्यापि दोषमाह—सम्भवे चेति। अयमाशयः—यदा पुत्रे विद्यमानोऽपि रिक्थग्राह्यन्तरं सम्भवति, तदा न पुत्रः ऋणं दाप्यः, अपि तु यदा पुत्रोऽनन्याश्रितद्रव्यः स्वयमेव रिक्थग्राही, तदा ऋणं दाप्य इत्येतदर्थमनन्याश्रितद्रव्य इत्येतद् विशेषणं सार्थकमित्येवं वक्तव्यम् अस्मिन् पक्षे। तथा च रिक्थग्राहित्वमेव ऋणदाने हेतुः, न पुत्रत्वमित्युक्तं स्यात्। एवञ्चैषोऽर्थः सिद्धो भवति,—रिक्थभाग् ऋणं दाप्यः इति। अस्यार्थस्यं " रिक्थग्राह ऋणं दाप्यः" इत्यनेनैवांशेनोक्तत्वात् पुनरपि "पुत्रोऽनन्याश्रितद्रव्यः" इत्यभिधानमनुपपन्नमिति मूलवचनस्य चतुर्थपादमाक्षिपति—पुत्रहीनस्य रिक्थिन इत्येतदपीति। आक्षेपाभिप्रायमेव विवृणोति—पुत्रे सत्यपीति। एवं पुत्रे[2] विद्यमानेऽपि रिक्थग्राह ऋणं दाप्यः। तदा किमुताऽविद्यमाने पुत्रे रिक्थग्राह ऋणं दाप्य इति कैमुतिकन्यायेनैवार्थतः सिद्धत्वात्

## बालंभट्टी

अभ्युपेत्यापिदोषमाह—सम्भवे चेति। तत्र सत्यपि यदि रिक्थग्राहोऽन्यः संभवति तदा केवलं पुत्रो न ऋणं दाप्यः, किंत्वनन्याश्रितद्रव्यः स्वयमेव तद्ग्राहस्तेदत्येवमत्र पक्षे तद्विशेषणसार्थक्यमिति भावः। मूले यद्यप्यणिन्यन्तं तथाऽप्यविशेषात् णिन्यन्तेनाऽऽह—रिक्थग्राहीति। वासरूपन्यायेनेति भावः। रिक्थभागृणं दाप्य इति पाठान्तरम्। उक्तरीत्याऽत्र पक्षे विशेषणसाफल्येऽपि अस्यार्थस्याद्यपादेनैवोक्तत्वात् विशिष्टं निष्फलं पुनरुक्तं चेति भावः। तुर्यपादानर्थक्यमप्याह—पुत्रेति। तदाशयमाह —पुत्रे इति। पुत्र इत्यादिवचन पाठक्रमस्य प्राबल्यात् तत्र सत्यपि स दाप्यस्तदा किमु वाच्यमसति। तत्र स दाप्य इतीत्येवं कैमुतिकन्यायेनैवास्यार्थस्य सिद्धत्वादिदमपि व्यर्थमिति भावः। एवं वचनमाह

---

१ त. कं कर्तव्यम् अस्मिन् पक्षे रिक्थीऋणम् दाप्यः। २ थ. द. सत्यन्यस्य रिक्थिनः सत्वे।

इति सिद्धमेवेति। अत्रोच्यते;—पुत्त्रे सत्यप्यन्यो रिक्थग्राही संभवति। क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रिक्थहरत्वाभावात्। तथा च क्लीबादीननुक्रम्य "भर्तव्यास्तु निरंशकाः" इति वक्ष्यति। तथा "सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषाम्" इति गौतमस्मरणात्। अतश्च क्लीबादिषु पुत्त्रेषु सत्सु अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रादिः। योषिद्ग्राहो यद्यपि शास्त्रविरोधेन न संभवति तथाऽप्यतिक्रान्तनिषेधः 5

किमिदं पुनरनन्याश्रितद्रव्य इति चेत्,— मैवं प्रागप्येतत् पदानुसारादेवं व्याख्यानम्। अतिदेशादभ्युच्चय एव। अथ वा बहुपुत्त्रस्य यद्येकः पितृधनमितरानुमतोऽनुगृह्णीया-

## सुबोधिनी

पुत्त्रहीनस्य रिक्थिनः" इत्ययमुपदेशोऽनर्थक इत्याक्षिप्य परिहरति— अत्रोच्यत इत्यादिना। पुत्रे सत्यन्यस्य रिक्थग्रहणासम्भव इति यदुक्तमाक्षेपदशायां तत्राऽऽह—पुत्रे सत्यप्यन्यो रिक्थग्राही सम्भवतीत्यादिना। क्लीबादिपुत्त्राणां रिक्थहरत्वाभावे हेतुमाह—क्लीबादीननुक्रम्येति। योषिद्ग्राहसद्भावमाह—योषिद्ग्राहो यद्यपीति। अयमभिप्रायः—शास्त्रे भर्त्रन्तरनिषेधात् स्त्रीणां यद्यपि शास्त्रीयः पतिर्द्वितीयो नास्ति, तथाऽपि शास्त्रनिषेधोल्लङ्घनकारिणो योषिद्ग्राहित्वसम्भवात् तादृशस्तत्पतिकृतर्णापाकरणेऽधिकारीति। संभवतु नामैवं विधो योषिद्ग्राहः शास्त्रातिक्रमकारी। तस्याः स्मृत्यन्तरोक्तलक्षणानुसारेणानेकविधत्वादनियमेन किं सर्वे योषिद्ग्राहा ऋणापाकरणेऽधिकारिण इत्याकाङ्क्षायां निय-

## बालंभट्टी

क्षिप्य क्रमेण परिहरति—अत्रोच्यते इत्यादिना। पुत्त्रे सत्यन्यस्य रिक्थग्रहणासंभव इति यदुक्तं तत्राऽऽह—पुत्रे इति। अत्रमानमाह—तथा चेति। वक्ष्यति मूलकृत्। अन्यथाऽपि सम्भवं प्रदर्शयन् तत्र मानान्तरमाह—तथेति। एकेषां मते यद्वा एकेषां साधुवृत्तानां पितॄणां, यद्वा एकेषां साधुवृत्तानामन्येषां असवर्णापुत्राणां समवाये। उपसंहरति—अतश्चेति। उक्तदोषस्य दृढत्वात्। योषिद्ग्राहसद्भावस्य क्लिष्टत्वसूचनाय तत्सद्भावं शङ्कापूर्वकमाह—योषिदिति। शास्त्रेण भर्त्रन्तरनिषेधात् यद्यपि स्त्रीणां द्वितीयः शास्त्रीयो नास्ति, तथाऽपि शास्त्रोल्लङ्घनकृतो योषिद्ग्राहत्वसम्भवः। तादृशः स तत्पतिकृतर्णनिवारणेऽधिकारी भवत्येवेत्यर्थः। नन्वेवंप्रकारेणास्तु तत्संभवः, तथाऽपि तस्य स्मृत्यन्तरानुरोधेन तस्यानेकविधत्वादनियमेन समवाये किं ते तत्राधिकारिण इत्याशंकायां

क. छ. ङ. व्याश्रनिं।

पूर्वपतिकृतर्णापाकरणाधिकारी भवत्येव यश्चतसृणां[1] स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भुवां तिसृणां प्रथमाम्; यथाऽऽह नारदः--"परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्तायथाक्रमम्। पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा। कन्यैवाऽक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा नाम पुनःसंस्कारकर्मणा। देशधर्मानवेक्ष्य स्त्री गुरुभिर्या

5 प्रदीयते। उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता॥" उत्पन्नसाहसा उत्पन्नव्यभिचारा। "असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते। सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता॥ स्त्री प्रसूताऽप्रसूता वा पत्यावेव[2] तु जीवति। कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा॥ कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं

---

त्तदा धनग्राहिण इतरेषां च तुल्यमृणभाक्त्वं यतोऽन्यैरपि स्वस्वांशोत्संकलनं कृतम्। तामाशंकां निरस्यति। पुत्रोऽनन्याश्रितद्रव्य इति। येनैव पुत्रेण द्रव्यमाश्रितं स एव

---

## सुबोधिनी

ममाह—यश्चतसृणामिति। स्वैरिणीनां चातुर्विध्यं पुनर्भुवां च त्रैविध्यं तत्र च यथाक्रमेणान्तिमप्रथमयोषिद्ग्राहयोरेवर्णापाकरणाधिकारित्वमित्येतत् सर्वं नारदवचनैः प्रतिपादयति—यथाऽऽह नारदः परपूर्वाः स्त्रिय इत्यादिना। परः पतिः पूर्वो यासां तास्तादृश्यः। देवरादी-

## बालंभट्टी

नियममाह— यश्चतसृणामिति। निर्धारणे सर्वा षष्ठी। गृह्णातीत्यनुषज्यते स्वैरिणीनां चातुर्विध्यं, पुनर्भुवां च त्रैविध्यं, तत्र चैतद्ग्राहकयोरेवाधिकार इत्येतत् सर्वं नारदोक्त्या प्रकाशयति—यथाऽऽहेत्यादि श्रित इतीत्यन्तेन[4]। परेति—परः पतिः पूर्वो यासां ता इत्यर्थः तासां सप्तानां। कन्यैवेत्यस्य व्याख्या—अक्षतेति। एवेन व्यभिचारकृतदोषनिरासः। तर्हि किंप्रयुक्तोऽस्या दोष अत आह—पाणीति। तेनैव दूषितानान्येनेत्यर्थः। तथा च तदेवास्यादूषकताबीजं नान्यत्। तदपि नाद्यं किन्तु द्वितीयमित्याह—पुनः समिति। ईदृशी या सा तेन पुनर्भूः प्रथमोक्तेत्यर्थः। देशेति-- दानसम्बन्धिन इत्यर्थः। अन्यस्मै सवर्णायसपिण्डाय प्रकृतेऽन्यसाहसासंभवादाह—व्यभीति। अग्रेऽकारप्रश्लेषे[5] पत्यौजीवत्येव स्वकामात् स्वेच्छायाः एवमग्रेऽपि। अन्यं यंकंचित्। कौमारमिति— अपूर्वपतिं

---

१ ख. ग. 'यश्चतसृणां' इत्यस्मात्प्राक् 'योषिद्ग्राह इत्यधिकम्। २ क. पत्यौ चैव। ३ थ. द. त्वं चस्य। ४ उपाश्रित इत्यंतेन। ५ अकारप्रश्लेषे इति—च—पाठः व्यक्तः। एवकारेति पाठश्चेत्साधुः प्रतिभाति। पत्यावेव तु जीवतीति मूले, एवकारस्य जीवतीत्यग्रे प्रश्लेषेण पत्यौ जीवत्येवेत्यर्थलाभ इति तदाशयः॥ कामादित्यस्य स्वकामादिति व्याख्या।

यायात्सा द्वितीया प्रकीर्तिता ॥ मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या । उपगच्छे-
त्परं कामात्सा तृतीया प्रकीर्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥ अन्तिमा स्वैरिणीनां या प्रथमा च पुन
र्भुवाम् । ऋणं तयोः पतिकृतं दद्याद्यस्ता उपाश्रितः" इति । तथाऽन्योऽपि योषिद्ग्राह
ऋणापाकरणेऽधिकारी तेनैव दर्शितः—"या तु सप्रधनैव स्त्री सापत्या वाऽन्यमाश्र-　5
येत् । सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥" प्रकृष्टेन धनेन सह वर्तते
इति सप्रधना, बहुधनेति यावत् । तथा "अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रि-

दद्यात् । नान्योऽनुमन्ताऽपीत्यर्थः । तत एव च ज्ञायते भागशः पुत्रा ऋणं दद्युरि-
ति ज्येष्ठो वा भूयो दद्यात्,—रिक्थविभागे विशेषदर्शनात् । इत्येषा दिक्
सर्वथा धनप्राप्तिसंबंधानुसारेणैव ह्यणसंगतिः । तथैवापुत्रस्यैवाप्यन्यै रिक्थभाज एव

## सुबोधिनी

नपास्येति—नियोगविधिना प्राप्तान् देवरादीन् परित्यज्येत्यर्थः । प्राप्ता देशादिति—
अस्यार्थः—देशाद् देशान्तरं प्राप्ता सती धनक्रीता भवति या स्त्री, सा क्षुत्पिपासातुरा सती
तवाहमिति प्राप्ता भवेत् सा चतुर्थी स्वैरिणीति कथिता । अन्तिमा स्वैरिणीनामिति ।
स्वैरिणीनां मध्ये या अन्तिमा, पुनर्भुवां च मध्ये या प्रथमा, ते य उपाश्रितः स तयोः

## बालंभट्टी

कुमारमुपपन्नमित्यर्थः । प्राप्तानिति —नियोगविधानप्राप्तान् देवरादीन् परित्यज्येत्यर्थः ।
परं—अन्यं यंकंचित् । प्राप्ता देशादिति । देशाद्देशान्तरं प्राप्ता धनक्रीताभवति सा, या च
क्षुत्पिपासातुरा सती तवाहमित्येवं प्राप्ता भवति सा च स्त्री चतुर्थस्वैरिणी कथितेत्यर्थः ।
अन्तिमेति–तासां मध्ये याऽन्तिमा तासां मध्ये च या प्रथमा ते यावुपाश्रिते तौ तयोः पतिकृतं
ऋणं दद्यातामित्यर्थः। तथा तद्वत् उभयवत् अन्यः--उभयान्योऽपि तेनैव नारदेनैव। वा चार्थे।
क्वचित् च पाठ एव । अनेन विशेषणद्वयेनान्याश्रयणे आत्मादेर्धनस्य च रक्षणमात्रंनिमित्तं न
तु कामादिरिति सूचितम् । पत्यौ मृते इति शेषः।अस्या भर्तुरित्यन्वयः। व्यवहारानभिज्ञतया
तया ऋणं न दत्तमिति भावः । तथैव यथा समागता तथैव । तामिति सर्वथास्पृष्टा[२]
मिति यावत् । प्रगतधनसहितेत्यर्थनिरासायाह–प्रकृष्टेनेति । अन्यमुचितमाह—तथेति ।

१ ख· द्यस्तामु० । २ स्पृ इति–अ–पाठः ।

यम् । ऋणं वोढुः स भजते सैव चास्य धनं स्मृतम् ॥" इति । पुत्त्रस्य पुनर्वचनं क्रमार्थम् । "अनन्याश्रितद्रव्यः" इति बहुषु पुत्त्रेषु रिक्थाभावेऽप्यंशग्रहणयोग्यस्यैव

---

ऋणभाक्त्वमपि प्रतिपाद्यत इत्यभिप्रायः। तथा च कात्यायनः—"रिक्थहर्त्रा ऋणं देयं तदभावे च योषितः । पुत्रैश्च तदभावेऽन्यैः रिक्थभाग्भिर्यथाक्रमम् ॥ " इति । बृहस्पतिश्च—"धनस्त्रीहारिपुत्राणां पूर्वाभावे यथोत्तरम् ॥" अधमर्णे तदभावे क्रमशोऽन्येषां रिक्थभाजामिति।

## सुबोधिनी

पतिकृतमृणं दद्यादित्यन्वयः ।ऋणं वोढुः स भजत इति--वोढुः पत्युः। "पुत्त्रोऽनन्याश्रित द्रव्यः" इत्यत्र पुत्त्रग्रहणं रिक्थग्राहयोषिद्ग्राहयोरभावे पुत्रेणर्णं देयमित्येवंविधक्रमप्रतिपादनार्थम्। नतु अणापाकरणे पुत्रस्याधिकारप्रदर्शनाय येन पौनरुक्त्यं स्यादित्याह—पुत्त्रस्य पुनर्वचनमिति। अनन्याश्रितद्रव्य इत्येतदपि विशेषणं सार्थकमित्याह—[1]अनन्याश्रितद्रव्य इतीति । अनन्याश्रितद्रव्यत्वेन पितृकृत[2]र्णापाकरणाधिकारी नान्धबधिरादिः, इत्येवमर्थपरत्वेनानन्याश्रितद्रव्य इति विशेषणं सार्थकमिति । एतदुक्तं भवति अन्धबधिरादयोऽन्याश्रितद्रव्याः—अन्धत्वादिदोषयुक्तत्वेन पितृरिक्थांशग्रहणायोग्यत्वात् । अनन्धादयः पुत्त्रा अनन्याश्रितद्रव्याः—अन्धत्वादिदोषरहितत्वेनांशग्रहणयोग्यत्वात् । अतोऽन्धादिपुत्रा अन्याश्रितद्रव्यत्वेन न[3] पितृऋणापाकरणेऽधिकारिणः । अन्धत्वादिदोषरहितास्त्वधिकारिणः

## बालंभट्टी

तदुक्तिरेवेयमपि वोढुः पत्युः । अत्र हेतुमाह—सैवेति । चो ह्यर्थे । अस्य पत्युः तृतीयपादे दत्तदोषद्वयमुद्धर्तुमादौ विशेष्यसाफल्यमाह—पुत्रस्येति। पुत्त्रोऽनन्येत्यत्र पुत्त्रग्रहणमुक्तयोरुभयोरभावे तेन ऋणं देयमित्येवंविधक्रमबोधनार्थम्। नतु तत्र तस्याधिकारप्रदर्शनार्थं येन पौनरुक्त्यं स्यादित्यर्थः । विशेषणस्यापि सार्थक्यमाह —अनन्येति । तस्य तत्त्वेन तत्राधिकारो न पुत्त्रत्वमात्रेणेति । अन्धादीनामाश्रितद्रव्यत्वेनान्धत्वादिदोषयुक्तत्वेन तदयोग्यत्वेन नाधिकारस्तत्र, किन्त्वनन्धादीनामेव तत्त्वेनाधिकार इत्येतदर्थतया विशेषणसार्थक्यमिति भावः । तथा च योग्यपुत्रत्वेन तत्राधिकारो न[4] पुत्रत्वमात्रेणेति सूचनार्थं तदिति तत्त्वम् । एवं च पुत्त्रत्वेनेत्यादि यत् पुत्त्रपौत्रैरित्यत्रोक्तं तदप्येवं परतया व्याख्येयमिति न प्रागुक्तविरोध इति बोध्यम् । तुर्यपादेदत्तदोषमुद्धरति — पुत्रेति

---

१ त. इदं प्रतीकं नास्ति । २ थ. द. र्णेणऽधिकारिणो नान्धबधिरादयः। ३ थ. द. त्वेनपितृ ऋणापाकरणेऽनधि । ४ फ. पुत्रत्वेन ।

ऋणापाकरणेऽधिकारो नाऽयोग्यस्यान्धादेरित्येवमर्थम्। पुत्रहीनस्य रिक्थिन इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णन्ति तदा ऋणं दाप्याः नान्यथेत्येवमर्थम्। पुत्रपौत्रौ तु रिक्थग्रहणाभावेऽपि दाप्यावित्युक्तम्; यथाऽऽह नारदः—"क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥" इति सर्वं

---

यद्वा अनन्याश्रितद्रव्य इत्यस्य अन्योऽर्थः—पितरि यस्य पैतृकं रिक्थं केनापि परिक्षिप्तादिहेतुनाऽन्यस्मिन्नाश्रितं सोऽन्याश्रितद्रव्यः, न तदप्राप्त्यैव पैतृकं ऋणं दद्यादित्यत्रैव

---

## सुबोधिनी

ऋणापाकरणेऽनन्याश्रितद्रव्यत्वेनेति अस्य विशेषणस्य सार्थकत्वमिति । "पुत्रहीनस्य रिक्थिनः" इत्यस्य सिद्धान्ताभिप्रेतमर्थमाह—पुत्रहीनस्य रिक्थिन इत्येतदपीति। पुत्रपौत्राभावे प्रपौत्रोऽपि यदि[3] रिक्थग्राही तदा प्रपितामहर्णदानेऽधिकारी । अन्यथा[4] रिक्थग्रहणाभावे प्रपौत्रः प्रपितामहर्णापाकरणे नाधिकारीत्यर्थः । रिक्थभाजः प्रपौत्रस्य प्रपितामहर्णदानेऽधिकारप्रतिपादकत्वेन पुत्रहीनस्य रिक्थिन इत्ययमंशः सार्थक इति तात्पर्यार्थः । पुत्रहीनस्य

## बालंभट्टी

पुत्रग्रहणं तत्रोपलक्षणमित्याह— पौत्रेति । पूर्वत्र द्वयोरेवोपात्तत्वान्नातिप्रसङ्गः । रिक्थिन इति—प्रथमाबहुवचनान्तमेवेत्याह—प्रपौत्रादय इति। तदर्णमिति—तदा प्रपितामहर्णमित्यर्थः । नान्यथा तदीयरिक्थग्रहणाभावे । रिक्थभाज एव प्रपौत्रादेस्तादृशप्रपितामहादेः ऋणदानेऽधिकारो नान्यस्येत्येतत् प्रतिपादकतयेदमपि सफलमिति तात्पर्यार्थः। तद्धीनस्येति[6] वैषम्यफलमाह—पुत्रपौत्रौ त्विति, योग्यावित्यर्थः। अत एव तत्र नातिप्रसङ्ग इत्युक्तमनुपदमेव—इत्युक्तमिति । पुत्रपौत्रै ऋणं देयमितीत्यर्थः । अत्र नान्यथेत्यत्र संवादमाह —यथाऽऽहेति । अव्याहतं निष्कपटं क्रमात् प्राप्तमित्यस्यैव व्याख्या— पुत्रैरिति । तत् ऋणं । चतुर्थादिति—रिक्थग्राहिण इत्यर्थः; आरभ्येति शेषः। ननु स्वरसतो न ततस्तदर्थप्रतीतिः । किं च नारदतः सामान्येनैव निषेधः प्रतीतिस्तत्संकोचे दृढतर-

---

१ ख. पुत्रपौत्रौ चारीक्थ । २—१. ४. । ३ त. 'यदि' इति नास्ति । ४ थ. 'अन्यथा' इति नास्ति । ५ थ. द. त्यप्यय । ६ पुत्रहीनस्येति वैषम्यफलमिति यावत् ।

निरवद्यम् । यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम्, पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते, "पुत्रहीनस्य रिक्थिनः" इति रिक्थशब्देन योषिदेवोच्यते,—"सैव चास्य धनं स्मृतम्" इति स्मरणात्, "यो यस्य हरते दारान् स तस्य हरते धनम् ।" इति च ।

---

हेतुः । पुत्रहीनस्य रिक्थिनः अन्येऽपि तु भवन्तीति शेषः । यावदसावन्याय्यमपि पैतृकं नाप्नुयात् तावतैव ऋणं दद्यात् इत्यभिप्रायः ॥ अधमर्णिकस्यैतानि स्मृत्यन्तरात्

## सुबोधिनी

रिक्थिन इत्यमुमंशं प्रकारान्तरेण व्याचष्टे—यद्वा योषिद्ग्राहाभावे इति । अयमर्थः—रिक्थग्राहाभावे योषिद्ग्राह ऋणं दाप्यः, तदभावे अनन्याश्रितद्रव्यः पुत्र ऋणं दाप्य इति "पुत्रोऽनन्याश्रितद्रव्यः" इत्येतेनोक्तम्[1] । अधुना पुत्राभावे याषिद्ग्राह ऋणं दाप्य इत्युच्यते "पुत्रहीनस्य रिक्थिनः" इत्यनेनेति । अस्मिन् पक्षे रिक्थिन इति पञ्चमी । रिक्थिनः सकाशादृणं दाप्यमित्यर्थः । नन्वत्र "पुत्रहीनस्य रिक्थिनः" इत्येव, न तु "पुत्रहीनस्य योषिद्ग्राहः" इति । अतः पुत्राभावे योषिद्ग्राहो दाप्य इतीयं व्याख्या कथमित्यत आह—रिक्थशब्देन योषिदेवेति । स तस्य हरते धनमिति चेति—अत्र यो यस्य दारान्

## बालंभट्टी

मानान्तराभावश्च अतस्तं चतुर्थांशमन्यथा[2] व्याचष्टे —यद्वेति । पुत्रः तादृशः—उक्तमिति । त्रयाणाम् क्रमः प्रागुक्त एवेतिभावः । तत्र द्वितीयतृतीययोः वैपरीत्यमपीत्याह—पुत्राभावे इति । अत्रपक्षे तेषां बहुत्वासंभवात् तद्बहुवचनासंगतेः रिक्थिन इति पंचम्यन्तम् । विभक्तिलिङ्गविपरिणामेन ऋण दाप्य इत्यस्यानुषङ्गात्तस्य यो रिक्थी तस्मादृणं दाप्यमित्यर्थः । तदेतत् ध्वनयन् फलितमाह—योषिद्ग्राह इति । ननु रिक्थिन इत्यतः कथमुक्तार्थलाभः ? अत आह—रिक्थेति ; प्रकृते इति शेषः । अतो न पूर्वविरोधः । अन्यथाऽनुपपत्तिस्तु न उक्त वक्ष्यमाणप्रकाराभ्यां व्याख्यानसम्भवादतोऽत्र साधकतरं प्रागुक्तनारदमेवादावाह— सैव चेति । साधकान्तरमाह —य इति । अत्र यो यस्य दारान् हरते स तस्य धनमपि हरेदिति न विधिः—बोधकाभावात् ; किं तु यतो दारा एव धनमतो यद्दारान् हरन् तद्व्यपदेशभागिव तद्धनहारीति व्यपदेशभागपि भवतीत्यर्थः। अस्य चो-

---

१ अ. द. इत्यनेनो । २ तुर्यांशं ।

ननु योषिद्ग्राहाभावे पुत्रः ऋणं दाप्यः, पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम्[1], —उभयसद्भावे न कश्चिद्दाप्य इति । नैष दोषः। अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भू-

## सुबोधिनी

हरते स तस्य धनमपि हरेदिति न विधिः; अपि तु यस्माद् दारा एव धनं तस्माद् दारान् हरंस्तद्धनहारीति व्यपदेशभाग् भवतीत्यर्थः । परस्परविरुद्धमिति—अत्र हि द्विविधो विरोधः। तथा हि—योषिद्ग्राहाभावे पुत्रेण ऋणं देयमिति पूर्वोक्तः[2] क्रमः प्रतीयते "योषिद्ग्राहस्तथैव च। पुत्रोऽनन्याश्रितद्रव्यः" इत्यनेन । "पुत्रहीनस्य रिक्थिनः"इत्यनेन तु पुत्राभावे योषिद्ग्राहेण ऋणं देयमिति पूर्वोक्तविपरीतः क्रमः प्रतीयते । एवं च क्रमे परस्परं विरोध इत्येको विरोधः। यदा योषिद्ग्राहः पुत्रश्च द्वावपि स्तः, तदोभयसद्भावे परस्पराभावोपलक्षितयोरेव ऋणदेयत्वनियमादुपलक्षकाभावे सति[3] न कस्याप्यृणं देयमिति कृत्वा, "यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः। तदा दद्याद् द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥" इत्याद्यवश्यर्णदेयत्वप्रतिपादकवचनविरोध इत्यपरो विरोधः । एतद्द्वयमपि सूचितम् परस्परं विरुद्धमित्यनेन, "उभयसद्भावे" इत्यनेन च । पूर्वोक्तमाक्षेपं परिहरति—नैष दोष इति। अनेके हि योषिद्ग्राहिणः। तत्र द्वे कोटी । अन्तिमस्वैरिणीग्राही, प्रथमपुनर्भूग्राही, प्रकृष्टधनयुक्तस्त्रीहारीत्येका कोटिः । निरपत्यनिर्धनयोषिद्ग्राहीत्यन्या कोटिः । एवं स्थिते प्रथमकोटियोषिद्ग्राहाभावे[4] पुत्रः ऋणं दाप्य इत्यभिधीयते "पुत्रोऽनन्याश्रितद्रव्यः" इत्यनेनेत्याह[5]— अन्तिमस्वैरिणीग्राहिण इति । पुत्राभावे द्वितीयकोट्यन्तर्भूतो योषि-

## बालंभट्टी

पयोगः प्रायश्चित्तादौ बोध्यः पुत्रस्तादृशः।ग्राह इति—ऋणं दाप्य इत्यस्यानुषङ्गः।विरुद्धमिति—द्वितीय तृतीययोर्यः क्रमः प्रागुक्तस्तद्विपरीतक्रम एवं व्याख्यायां प्रतीयत इति मिथः क्रमे विरुद्धमित्यर्थः । दोषान्तरमाह—उभयेति । द्वयोस्सत्वे मिथः अभावोपलक्षितयोरेव तयोः स्वल्पपदत्वानियमेनोपलक्षकाभावे सति केनापि ऋणं न देयं स्यादित्यर्थः । इष्टापत्तिस्तु न; "यदा तु न सकुल्याः स्युर्न च संबधिबान्धवाः। तदा दद्याद्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥" इति तस्यावश्यदेयत्वप्रतिपादकस्मृतिविरोधापत्तेरिति भावः । नैष इति— जातावेकवचनम्। प्रागुक्ताः प्रकृतोपयुक्ता अपि योषिद्ग्राहा अनेके यद्यपि; तथाऽपि कोटिद्वयं तेषां कार्यम् अन्तिमस्वैरिणीग्राही प्रथमपुनर्भूग्राही,सप्रधनस्त्रीग्राही,चेत्येका कोटिः। निर्धननिरपत्यस्त्रीग्राहीतीत्यन्या कोटिः। एवं सति व्यवस्थासम्भवान्न दोषः इत्याशयेनाद्यकोट्याशयेनाद्यपक्षमाह—अन्तिमेति। पुत्र इत्यादि—एवं चैतत् कोट्यन्तर्भूतयोषिद्ग्राहाभावे पुत्रो ऋणं दाप्य इति

---

१ छ क ङ. परस्परविरोधः उभयस। ग. ज. परस्परं विरुद्धम्। २ थ. द. एकः क्र। ३ त. 'सति' इति नास्ति। ४. थ. द. मकोट्यन्तर्भूते या। ५. त. ति आद्ये त्वा (?)।

ग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः; पुत्राभावे तु निर्धननिरपत्ययोषिद्ग्राही दाप्य इति । एतदेवोक्तं नारदेन—"धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः॥" इति । धनस्त्रीहारिपुत्राणां समवाये यो धनं हरेत्स ऋणभाक्, पुत्रोऽसतोः स्त्रीधनिनोः—स्त्री च धनं च स्त्रीधने, ते
5 विद्येते ययोस्तौ स्त्रीधनिनौ, तयोः स्त्रीधनिनोरसतोः—पुत्र एव ऋणभाक् भवति ।

## सुबोधिनी

ग्राह ऋणं दाप्य इत्यभिधीयते पुत्रहीनस्य रिक्थिन इत्यनेनेत्याह—"पुत्राभावे तु निर्धने"इति। एतदुक्तं भवति—न हि सामान्येन योषिद्ग्राहाभावे पुत्रो दाप्यः, पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते येन विरोधः स्यात् । किन्तु योषिद्ग्राहेषु कोटिद्वयाऽवलम्बनेनैवंविधयोषिद्ग्राहाभावे पुत्रस्तदभावे पूर्वोक्तविलक्षणयोषिद्ग्राहो दाप्य इत्यवान्तरभेदाङ्गीकरणेन न क्रमविरोधो नाप्यवश्यमृणस्य देयत्वप्रतिपादकवचनसन्दर्भेण सह विरोध अवश्यमन्यतमेन देयत्वादिति न कश्चिद् विरोध इति । "पुत्रहीनस्य रिक्थिनः" इत्यस्य पूर्वोक्तव्याख्यानान्तरेणायमर्थः सिद्धः, योषिद्ग्राहाभावे पुत्रो दाप्य ऋणं, तदभावे योषिद्ग्राहो दाप्य इति । अत्र नारदवचनं प्रमाणयति—एतदेवोक्तमित्यादिना। "धनस्त्रीहारि" इत्येतन्नारदवचनं व्याचष्टे—धनस्त्रीहारिपुत्राणां समवाय इति ।"पुत्रहीनस्य रिक्थिनः" इत्यस्य व्याख्यान्तरं वक्तुमुपक्रमते

## बालंभट्टी

तस्यार्थ इति भावः। द्वितीयकोट्याशयेन द्वितीयपक्षमाह—पुत्राभावे त्विति ।तथा च तदभावे एतद्योषिद्ग्राहो ऋणं दाप्य इति तदर्थः । तथा च यदि सामान्येन तदभावे स प्रदाप्य इत्युक्तं स्यात्तदा उक्तदोषः स्यात्; तदेव न, किं तूक्तरीत्या अवान्तरभेदपुरस्कारेणेति न क्रमविरोधो नापि तद्वचनविरोधोऽवश्यदेयत्वस्यैवानेन प्रतिपादनादिति भावः । ननु विनिगमकाभावः कुतो न अत आह—एतदेवेति । एतेन तद्व्यवच्छेदः । एवं च तदनुरोधेनैवमेवोक्तं, न त्वन्यथा तद्विरोधापत्तेरिति भावः । अभ्यर्हितत्वात् धनस्य पूर्वनिपातः। धनस्त्रीहारिणौ च पुत्रश्चेति द्वन्द्व इत्याशयेन व्याचष्टे—धनेति । शेषमाह—समेति। लिङर्थाविवक्षया आह—हरते इति । क्वचिदत्रापि हरेदित्येव पाठः स्त्रीधनिनोरिति अभ्यर्हितत्वाविवक्षयाल्पाच्तरत्वेन (?) स्त्रीशब्दस्य पूर्वनिपातः। धन्यन्तेन द्वंद्वेन द्वयोरेकशेषे इष्टार्थालाभादाह—स्त्री चेति। सर्वं वाक्यमिति न्यायेन सानुषङ्गेणाऽऽह—पुत्र एवेति। एवमग्रेऽपि। अत्रापि प्रसक्तं

१.—१. २३. ।

धनिपुत्रयोरसतोः स्त्रीहार्येवर्णभाक् । स्त्रीहार्यभावे पुत्र ऋणभाक्, पुत्राभावे स्त्री हारीति विरोधप्रतिभासपरिहारः पूर्ववत् ॥

"पुत्रहीनस्य रिक्थिनः" इत्यस्यान्या व्याख्या । एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इति विवक्षायां उत्तमर्णस्य दाप्याः, तदभावे तत्पुत्रादेः, पुत्राद्यभावे कस्य दाप्या-इत्यपेक्षायामिदमुपतिष्ठते—"पुत्रहीनस्य रिक्थिनः" इति । पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनो दाप्याः । तथा च नारदेन  5

## सुबोधिनी

पुत्रहीनस्य रिक्थिन इत्यस्यान्या व्याख्येति । तदेव व्याख्यान्तरमभिधातुमाकाङ्क्षापूर्वकमर्थसिद्धं किञ्चिदाह-एते धनस्त्रीहारिपुत्रा इति । अयमर्थः —"रिक्थग्राह ऋणं दाप्यः" इत्यादिना "पुत्रोऽनन्याश्रितद्रव्यः" इत्यन्तेनोक्ता धनस्त्रीहारिपुत्रा ऋणं दाप्या इत्युक्तम्। कस्य त ऋणं दाप्या इत्याकाङ्क्षायां सत्यां प्रथमतो यस्माद्दणं गृहीतं तस्योत्तमर्णस्य दाप्याः, तस्मिन्नसति तत्पुत्रस्य पौत्रस्य चेत्येष एव चार्थसिद्धोऽर्थ इत्यर्थसिद्धमभिधायाधुना "पुत्रहीनस्य रिक्थिनः" इत्यमुमंशमवतारयति—पुत्राद्यभाव इति । अस्मिन् पक्षे रिक्थिनः इति षष्ठी । अमुमेवार्थं विवृण्वन् व्याचष्टे--पुत्राद्यन्वयहीनस्येति । तस्य सपिण्डादिरूपस्य रिक्थि-

## बालंभट्टी

प्राग्वत् विरोधं प्रागुक्तरीत्यैव परिहरति—स्त्रीति । नन्विदमपि व्याख्यानमयुक्तम्—उक्तस्मृतिभ्यां स्त्रियो धनत्वलाभेऽपि रिक्थत्वालाभात्, तत्रैव द्रव्ये तत्प्रयोगात्, लोकप्रसिद्धितः शास्त्रप्रसिद्धेः प्राबल्यात्;अत आह—पुत्रहीनस्येति। प्रतिज्ञातव्याख्यानान्तरमेवाभिधातुमादावाकाङ्क्षापूर्वकमर्थसिद्धं किंचिदाह —एत इति । रिक्थेत्यादि द्रव्य इत्यन्तेनोक्ता इत्यर्थः। ऋणं दाप्या इत्युक्तेराकाङ्क्षोदयादिति भावः। अत्र पक्षे रिक्थिन इत्यस्य षष्ठ्यन्तत्वविवक्षया तदनुरोधेनाऽऽह-कस्येति। एवमग्रेऽपि। पुत्रेति। आदौ तस्यैवोपस्थितेः योग्यत्वाच्च। आदिना पौत्रादिग्रहणम् । एवमर्थसिद्धमुक्तं तदाह-पुत्राद्यभावे इति । पुत्रपदमुपलक्षणमिति सूचयन्नर्थमाह—पुत्राद्येति । अन्वयो वंशपरंपरा । ननु न सामानाधिकरण्यं बाधितार्थकत्वादत आह—यो रिक्थीति ।तदसत्त्वेऽपि निर्वाहार्थमाह—योग्य इति । तस्येति—तादृशस्य सपिण्डानाम् एते रिक्थग्राहादयः पूर्वोक्तक्रमेण ऋणं दाप्या इत्यर्थः।वचनविपरिणामेनाऽऽह – दाप्या इति । अत्र सर्वत्र मानमाह—तथा चेति । अग्रेऽन्वयः।तस्य तु यद्देयं तत् सान्व-

---

१ ख. झ. पुत्रादेः तत्पुत्रा । २ थ. वाऽर्थ ।

—"ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः। निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु॥" इत्यभिहितम्। "यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः। तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥" इति॥ ५१॥

---

सम्यग्व्याख्यातानीत्यवगन्तव्यम्; यथाऽऽह कात्यायनः—"यावन्न पैतृकं द्रव्यं विद्यमानं लभेत्सुतः। सुसमृद्धोऽपि दाप्यः स्यात्तावन्नैवाधमर्णिकः॥" इति॥ ५१॥

## सुबोधिनी

नः ते रिक्थग्राहादयः पूर्वोक्तक्रमेणर्णं दाप्या इत्यर्थः। ब्राह्मणस्य तु यद्देयमिति—यस्य ब्राह्मणस्य यदृणं देयं स चेद् ब्राह्मणो नास्ति, तदा तत्सकुल्येषु तदृणं निर्वपेत्। तदभावे अस्य ब्राह्मणस्योत्तमर्णस्य बन्धुषु निर्वपेदित्यन्वयः। सकुल्याः सगोत्रत्वे सति सपिण्डाः। बन्धवोऽसगोत्रत्वे सति सपिण्डाः। पुत्राद्यन्वयाभावे रिक्थग्रहणयोग्यसपिण्डाद्यभावे चैते पूर्वोक्ताः कस्य कृते ऋणं दाप्या इत्याकाङ्क्षानिवृत्तये नारदवचनमेव दर्शयति—तदा तु न सकुल्याः स्युरिति। एवञ्च नारदवचने व्यवस्थापनीये "एते धनस्त्रीहारिपुत्राः" इत्यादिना "तदभावे तत्पुत्रादेः" इत्यन्तेन योऽर्थोऽभिहितः, तत्र नारदीयं "ब्राह्मणस्य तु यद्देयम्" इति श्लोकपूर्वार्धं प्रमाणयति—ब्राह्मणस्य त्विति।" पुत्राद्यभावे कस्य दाप्याः" इत्यादिना तस्य रिक्थिनो दाप्या इत्यन्तेन योऽर्थो दर्शितः तमर्थं नारदवचनेनैव सार्धश्लोकेनान्वयव्यतिरेकाभ्यां द्रढयति—"निर्वपेत्तत्सकुल्येषु" इत्यादिना। तत्र निर्वपेदित्यनेनान्वयः—अन्वयाभावे तत्सकुल्यादिषु निर्वपेदित्यन्वयमुखेनाभिधानात्। "यदा तु न सकुल्याः स्युः" इति व्यतिरेकः,—सकुल्या भाव एव द्विजादौ निक्षिपेदित्यभिधानेन सत्सु सकुल्येषु द्विजादावृणदाननिषेधद्वारा पूर्वोक्तार्थस्य दार्ढ्यात्॥ ५१॥

## बालंभट्टी

यस्येत्यर्थः। स यस्य देयं स सान्वयो ब्राह्मणः। च; चेदर्थे; तदेति शेषः। निर्वपेत् सकुल्येषु तत् सकुल्येषु। तदृणमिति शेषः। अस्य ब्राह्मणस्योत्तमर्णस्य। एवं प्रागपि निर्वपेदित्यस्यानुषङ्गोऽग्रे। सगोत्राः सपिण्डाः सकुल्याः।असगोत्रसपिण्डाः बन्धवः।सम्बन्धी उक्त एव।अनेन पुत्राद्यन्वयाभावे च कस्य ते दाप्यास्तदित्यप्याकाङ्क्षाशान्तिः कृता। अत्र एते धनेत्यादि तत् पुत्रादेरित्यन्तेनोक्तार्थेऽर्द्धश्लोकः किंचिन्न्यूनो मानं, पुत्राद्यभावे इत्यादि दाप्या इत्यन्तेनोक्तार्थे श्लोकद्वयं तावन्मात्रन्यूनं मानं स चाथस्तेनान्वयव्यतिरेकाभ्यां दृढीकृतः। तत्र निर्वपेदित्यनेनान्वयः–तद-

---

१ ख. छ. चनास्ति चेत्। २.—१. ११२.। ३.—१. ११३.। ४ त भावे (च) ते। ५ प्रागुक्त किं चिन्न्यूनार्धश्लाकन्यूनं।

अधुना पुरुषविशेषे ऋणग्रहणप्रतिषेधप्रसंगादन्यदपि निषेधति—

**भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥**

---

ऋणस्य प्रतिनिर्यातनप्रकार उक्तः, को नु खल्वृणगृहीतेत्येतन्निरूपयितुमाह—
**भ्रातृणामथ दंपत्योरित्यादि ॥ ५२ ॥**

## सुबोधिनी

अधुना पुरुषविशेष इति—"पुत्रहीनस्य रिक्थिनः" इत्यस्यान्तिमव्याख्यानेनायमर्थस्सिद्धः । पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थं गृह्णाति सपिण्डादिः तस्य रिक्थिनः त एते पूर्वोक्ता ऋणं दाप्या इति एतेन रिक्थ्येवर्णं गृह्णीयान्नान्य इति नियमाद्रिक्थग्रहणायोग्यस्य पुरुषविशेषस्य ऋणग्रहणमप्यर्थान्निषिद्धं स्यात् । एवन्त्वार्थिकात् पुरुषविशेषे ऋणग्रहण

## बालंभट्टी

न्वयाभावे तत्सकुल्यादिषु निर्वपेदित्यन्वयमुखेनाभिधानात् । यदा तु न सेति व्यतिरेकः तथा च सकुल्याद्यभावे एव द्विजादौ निक्षिपेदित्युक्त्या सत्सु तेषु द्विजादावृणदाननिषेधध्वननद्वारा प्रागुक्तार्थदृढीकरणमिति भावः ॥५१ ॥

सङ्गतिमाह — अधुनेति । तुर्यपादस्य चरमव्याख्यानेन रिक्थ्येव ऋणं गृह्णीयात् नान्य इति नियमलाभेन रिक्थग्रहणायोग्यपुरुषविशेषस्य ऋणग्रहणनिषेधस्याप्यर्थात् लाभेनाऽऽर्थिक (?) ऋणग्रहणप्रतिषेधप्रसंगेन पुरुषविशेषे वक्ष्यमाणेऽन्यदपि प्रातिभाव्यादिकमपि अवान्तरप्रकरणभेदं वक्तुं प्रतिषेधतीत्यर्थः । अपिना ऋणग्रहणस्यापि समुच्चयः । अन्यथैतत् प्रकरणे एतदसंगतिः स्पष्टैवेति भावः। इदं च ऋणग्रहणप्रतिषेधप्रसंगादिति क्वाचित्कासम्बन्धपाठाभिप्रायेण व्याख्यातम् । वस्तुतस्तु ऋणग्रहणं प्रतिषेधयन् प्रसंगादिति प्रचुरः पाठो युक्तश्चेति बोध्यम् । तदा अधुना अधमर्णाय पंचविधग्रहणधर्मादिकथनानन्तरं वक्ष्यमाणे पुरुषविशेषे ऋणग्रहणस्य प्रतिषेधं कुर्वन् तत्प्रतिषेधतीत्यर्थः । अपिः प्राग्वत् तदासंगतिः स्पष्टैवेति भावः। अथेति—सर्वादौ योज्यम् ;

---

१ ङ. ऋणग्रहणं प्रतिषेधयन्प्रसङ्गादन्यदपि प्रतिषेधयति ।

प्रतिभुवो भावः प्रातिभाव्यम्। भ्रातॄणां दम्पत्योः पितापुत्रयोश्चाविभक्ते द्रव्ये द्रव्यविभागात्प्राक्प्रातिभाव्यमृणं साक्ष्यं च न स्मृतं मन्वादिभिः, अपि तु प्रतिषिद्धम्—साधारणधनत्वात्, प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यावसानत्वात्, ऋणस्य चावश्यप्रतिदेयत्वात्। एतच्च परस्परानुमतिव्यतिरेकेण। परस्परानुमत्या त्वविभक्ता-

भ्रात्रादीनामविभक्तानां परस्परमृणसाक्ष्यप्रातिभाव्यानि न विद्यन्ते। तेनैव च विभक्ता-

## सुबोधिनी

प्रतिषेधप्रसङ्गादन्यदपि निषेधतीत्यर्थः। अपि तु प्रतिषिद्धं साधारणधनत्वादिति—साधारणं समुदितं धनं येषां भ्रात्रादीनां ते तादृग्विधाः, तेषां भावस्तत्त्वमिति समासः। दम्पत्योर्विभागात् प्राक् परस्परानुमतिव्यतिरेकेण प्रतिभाव्यादिकं नास्तीति यदुक्तं

## बालंभट्टी

उच्यते इति शेषः। एतदर्थ एवाधुनेत्यादिनोक्तः। पदार्थमुक्त्वा वाक्यार्थमाह—भ्रातॄणामिति। चः पिता पुत्रयोः समुच्चायक इत्याह—पितापुत्रयोरिति। सर्वसमुच्चायकश्चार्थमाह—चेति। अवीत्यस्य भावप्रत्ययान्तस्य न भ्रात्रादिधर्मपरत्वं तस्य स्वत एव सिद्धत्वात् द्रव्यद्वारकविभागग्रहणे क्लिष्टत्वमिति सूचयन् कर्मधारयेणाऽऽह--द्रव्ये इति। सति सामीप्ये स्पष्टत्वायैतदर्थं माह—द्रव्येति। ऋणं तद्ग्रहणं नैवेति अन्वयः। अत्र तु सूचितव्यवच्छेद्यतात्पर्यार्थबोधक वाक्यान्तरमाह— अपि त्विति। तैरेवेति भावः। तत्र हेतुमाह—साधेति। कर्मधारये हेतोर्वैय्यधिकरण्यापत्तिरतः साधारणं समुदितं सर्वस्वत्वाक्रान्तं धनं येषां भ्रात्रादीनां तेषां भावस्तत्वं तस्मादित्यर्थः। नन्वेतावताऽपि कुतस्तदभावोत्त्ववतं (?) आह—प्रातीति। क्रमे तात्पर्यात् पूर्वनिपातः। पक्षे—अधमर्णकृतदानाभावपक्षे। द्रव्येति—द्रव्यस्य तद्दानस्य अवसानं पर्यवसानं ययोस्तत्त्वादित्यर्थः। तत्र यद्यपि दानप्रतिभाव्ये निस्सान्दिग्धमिदं, तथाऽपि वक्ष्यमाणरीत्या दर्शनप्रत्ययाप्रतिभुवोरिव साक्षिणोऽपि तदस्तीति स्फुटीभविष्यति। साधारणेन धनेन तु इदमेकेन कर्तुमशक्यमिति तात्पर्यम्। अत एव विशेषमाह—एतच्चेति। अवि-

१ द. द्रव्यव्ययाव (?) २ अविभक्त इत्यत्र भावेकप्रत्ययाश्रयणे इति यावत्। ३ तस्य—विभागस्य। ४ साक्षित्वापेक्षया प्रातिमाव्यत्वस्य अधिकान्त्वेऽपि इति भावः।

नामपि प्रातिभाव्यादि भवत्येव । विभागादूर्ध्वं तु परस्परानुमतिव्यतिरेकेणापि भवति ।

ननु दम्पत्योर्विभागात्प्राक्प्रातिभाव्यादिप्रतिषेधो न युज्यते,—तयोर्विभागाभावेन विशेषणानर्थक्यात् । विभागाभावस्त्वापस्तम्बेन दर्शितः—"जायापत्योर्न विभागो विद्यते" इति[1] । सत्यम् । श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु विभागाभावो न पुनः सर्वकर्मसु द्रव्येषु वा । तथा हि । "जायापत्योर्न विद्यते" इत्युक्त्वा किमिति न विद्यते इत्यपेक्षायां हेतुमुक्तवान्—"पाणिग्रहणाद्धि सहत्वं कर्मसु।" "तथा पुण्यफलेषु च" ।इति[2] । हि यस्मात्पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते

5

## सुबोधिनी

तदाक्षिपति—ननु दम्पत्योरिति । तत्र हेतुः—तयोर्विभागाभावेनेति । विभागाभावादेव विभागात् प्रागित्यत्र विभागपदवैयर्थ्यात् विशेषणानर्थक्यमित्यर्थः । अर्धाङ्गीकारेण परिहरति—सत्यमित्यादिना । एवं श्रौतस्मार्ताग्निसाध्येषु कर्मसु सहाधिकारविधि-

## बालंभट्टी

भक्तानामपि—भ्रात्रादीनां नन्वेवमविभक्ते इति विशेषणं व्यर्थमत आह--विभागादिति । अपिना तस्या[3] अपि समुच्चयः । एतद्विशेषबोधकमेव तदिति भावः । दंपत्यंशे यत् प्रागुक्तं तद्विशेषणांशे आक्षिपति—नन्विति । निषेधः प्रागुक्तः, अत्र हेतुमाह—तयोरिति । तयोर्विभागस्यैवाभावेन तदंशे अविभक्ते इति वाक्यार्थविशेषणानर्थक्यादित्यर्थः । तथा च तयोः सार्वकालिकतन्निषेधे वाच्ये तथा निषेधोक्तिरयुक्तेत्यर्थः । ननु तत्रैव किं मानमत आह—विभेति । अर्द्धाङ्गीकारेण परिहरति—सत्यमिति । आपस्तम्बार्थमाह—श्रौतेति । न पुनः न तु । विभागेत्यस्यानुषङ्गः। ननु तथैवार्थः कुतो न ? अतो हेतुमाह—तथा हीति । हि यतः। तथा उक्ताशयेनैव तमुक्तवानित्यर्थः । पाणीत्यादिव्याचष्टे—यस्मादिति । ह्यर्थोऽयं क्वचित्। हि यदित्येव पाठः । पञ्चम्युपपत्तये आह--आरभ्येति । सहत्वं—साहित्यं । श्रुतिमाह—-

१. ध० २. १४. १६. । २. ध.० २. १४. १७—१८. । ३ ब. तस्याः ...परस्परानुमतेः ।

"जायापती अग्निमादधीयाताम्" इति, तस्मादाधाने सहाधिकारादाधानसिद्धाग्निसाध्य कर्मसु सहाधिकारः[1] । तथा "कर्म स्मार्तं विवाहाग्नौ"[2] इत्यादिस्मरणाद्विवाहसिद्धाग्निसाध्येषु कर्मसु सहाधिकार एव । अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसु पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते । तथा पुण्यानां फलेषु स्वर्गादिषु जायापत्योः सहत्वं
5 श्रूयते—"दिवि ज्योतिरजरमारभेताम्" इत्यादि । येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यं, न पुनः पूर्तानां भर्त्रनुज्ञयाऽनुष्ठितानां फलेष्वपि ।

---

## सुबोधिनी

बलादर्थसिद्धमर्थमाह—अतश्चेति । "पूर्तं खातादिकर्मणि"इत्यमरः। पुण्यफलेषु चेत्यमुमंशं व्याचष्टे—तथा पुण्यानामिति । दिविज्योतिरिति, अस्यार्थः—दिवि द्युलोकादावजरं कारणभूतसुकृतनाशपर्यन्तमविनश्वरं ज्योतिः तेजः प्रधानं कलेबरमारभेतामिति । निष्कृष्टमर्थं दर्शयति--येषु पुण्यकर्मास्विति । यद्याधाने सहाधिकारविधिबलात् तत्साध्याग्निनिष्पाद्यस्वर्गादिफलेषु सहत्वं विभागाभावश्च, तर्हि द्रव्यस्वाम्ये[3]ऽपि सहत्वविधायकवचनबलात् सहत्वसिद्धेर्द्रव्यसाध्यपुत्रादिफलेष्वपि दम्पत्योः सहत्वं;सहितयोरेव द्रव्यस्वाम्यात् द्रव्यस्यावि

## बालंभट्टी

जायेति। आकाङ्क्षाशान्तये पूरयति—तस्मादिति सहेति । तच्छ्रवणादित्यर्थः । कार इति—सिद्ध इति तयोस्तु विभागो नास्तीति शेषः । श्रौते उक्त्वा स्मार्ते आह—तथेति । कर्मेति—कर्मसु कर्मस्वपीत्यर्थः । एवेन विभागव्यवच्छेद इति तल्लाभः । एवमुभयत्र सहाधिकारविधिबलादर्थात्सिद्धमर्थमाह—अतश्चेति। पूर्तेषु तटाकादिषु " पूर्तं खातादिकर्मणि " इत्यमरः । तथा पुण्येति व्याचष्टे—तथेति। चार्थोऽयम् । तत्रत्यतथेत्यस्य तु तद्वदित्यर्थः । कर्मधारयनिरासायाह—पुण्यानामिति । दिवि—द्युलोकादौ । अजरं कारणभूतसुकृतनाशपर्यन्तमविनश्वरं जरारहितं वा । ज्योतिः तेजःप्रधानं कलेबरं आरभेतामित्यर्थः । नन्वेवं सर्वत्र तत्त्वे सर्वकर्मसु तत्त्वापत्त्या पूर्तेष्वपि प्रागुक्तपृथगधिकारो न सिद्ध्येदतो निष्कृष्टार्थमाह—येष्विति । पुनः तु । द्रव्येषु वेत्यंशं द्रढयितुमाह—

---

१ झ. ङ. धिकार एव । २ आ०. ९७. । ३ त. स्यापि । ४ त. त्वत्व ।

ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तं "द्रव्यपरिग्रहेषु च" "न हि भर्तृविप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति" इति[1]। सत्यम्, द्रव्यस्वामित्वं पत्न्याः दर्शि-

## सुबोधिनी

भाज्यत्वमपि स्यात्। तथा च द्रव्येऽपि दम्पत्योर्विभागाभावात्, यदुक्तं विभागात् प्राक् प्रातिभाव्यादिकं नास्तीति तत् व्यर्थविशेषणत्वादेव पूर्ववदसङ्गतमित्यभिप्रायेणाऽऽक्षिपति— ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तमिति। सहत्वोक्तिमेव दर्शयति—द्रव्यपरिग्रहेषु चेति। अस्याऽऽपस्तम्बवचनस्यायमाक्षेपवाद्यभिमतोऽर्थः[1]। पाणिग्रहणाद्धि सहत्वमित्यनुवर्तते। द्रव्य-[2] परिग्रहेष्वार्जनेषु[3] च सहत्वमेव दम्पत्योः। एतदुपपादयति—न हि भर्तुरिति। भर्तुर्विप्रवासे सति भार्याया नैमित्तिकदाने न हि स्तेयं चौर्यमुपदिशन्तीति। एवं द्रव्यस्वाम्येऽपि सहत्ववि-धानात् श्रौतस्मार्ताग्निसाध्यकर्मादिष्विव द्रव्ये विभागो नास्तीत्यर्थः। द्रव्यस्वाम्यमात्रमुपदि-शति एतद्वचनं। न तत्र सहत्वं येन विभागाभावः स्यादित्यर्धाङ्गीकारेण परिहरति—सत्यं द्रव्यस्वामित्वमित्यादिना। "द्रव्यपरिग्रहेषु च" इत्यादिवचनस्यायं सिद्धान्तसंमतोऽर्थः— द्रव्यार्जनेष्वपि सहत्वं दम्पत्योः। एतच्च सहत्वमौपचारिकं न मुख्यम्। तथा हि—यथाऽऽ-धानादिषु पतिपत्न्योरन्यतराभावे आधानादिस्वरूपासिद्धिः। एवं द्रव्यार्जने न, अपि तु पति-

## बालंभट्टी

ननु द्रव्येति। यथा तद्बलादुक्तस्थले सहत्वं विभागाभावश्च; तथा द्रव्यस्वाम्येऽपि सहत्व-विधायकवचनबलात् सहत्वसिद्धद्रव्यसाध्यपुत्रादिफलेष्वपि दम्पत्योः सहत्वापत्तिसहि तयोश्च द्रव्यस्वाम्यात् द्रव्याविभाज्यतापत्तिरपि। तथा च द्रव्येऽपि दंपत्योर्विभागात् प्रागित्युक्तो दोष एवेति भावः। उक्तम् आपस्तम्बेन। तमेवाह— द्रव्येति। पाणिग्रहणा-द्धि सहत्वमित्यनुवर्तते। तत आरभ्य द्रव्येषु परिग्रहेषु पुत्रादिजनेषु च सहत्वमेव दम्पत्योरित्यर्थः। अत्र हेतुमाह—न हीति। भर्तुर्विप्रवासे विशेषेण प्रवासे सति भार्यायाः नै मित्तिकदानविषये हि यतो न स्तेयं चौर्यमुपदिशन्तीति। द्रव्यस्वाम्येऽपि सहत्वविधानात्तद्वत्त-या च तन्मात्रविभागो नास्तीत्यर्थः। अर्द्धाङ्गीकारेण परिहरति—सत्यं द्रव्येति। स्वामित्वं तन्मात्रं तथा च तन्मात्रमनेनोक्तं, न तु तत्र सहत्वं येन विभागाभावः स्यादिति भावः।

---

१. आप० ध० २. १४. १८—२०.। १. थ. द. भिप्रेतो। २ थ. द. द्रव्ये परिग्रहेषु जने (?)। ३ 'अथार्जनेषु' इति युक्तं स्यात्। २ आपस्तम्बधर्मे ६ पटले १३ खण्डिकायामेष सूत्रक्रमः—'जायापत्योर्न विभागो विद्यते'॥ १६॥ 'पाणिग्रहणाद्धि सहत्वं कर्मसु'॥ १७॥ 'तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च'॥ १८॥ 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति वृद्धाः'॥ १७॥ इति। द्रव्यसाम्येऽपि।

तमनेन, न पुनर्विभागाभावः; यस्मात् "द्रव्यपरिग्रहेषु च" इत्युक्त्वा तत्र कारणमुक्तम्— भर्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्तव्ये दानेऽतिथिभोजनभिक्षाप्रदानादौ हि यस्मान्न स्तेयमुपदिशन्ति मन्वादयस्तस्माद्भार्याया[1] अपि द्रव्यस्वामित्वमस्ति, अन्यथा स्तेयं स्यादि-

## सुबोधिनी

रर्जयिता पत्नी चार्जितं रक्षतीति योगक्षेमावुभाभ्यां क्रियेते इत्युभयानुसन्धानसिद्धत्वेन सहत्वमेव । एवं यत्राऽऽधानादिषु सहत्वं तत्र स्वत्वमेव । एवं यत्राऽऽधानादिषु सहत्वं तत्र स्वत्वमस्तीति अत्रापि द्रव्यपरिग्रहेषु सहत्वप्रतीतेः स्वत्वमस्तीति । तदेतद् गूढाभिसन्धिराह—यस्माद् द्रव्यपरिग्रहेषु चेत्युक्त्वेति । अयमभिप्रायः—न सहत्वं विधत्ते, अपि तु लोकसिद्धमेव तत् स्यात् सहितयोरेव स्वाम्यात् । अथैवं ब्रूषे विवाहात् प्रागर्जिते द्रव्ये पुरुषस्यैव स्वत्वं, तत ऊर्ध्वमार्जिते तु पतिपत्न्योरिति । तदपि न, तथा सति पुत्रस्यापि स्वजन्मनः प्राक् पित्रार्जिते द्रव्ये स्वत्वमेव न स्यात् इत्यलमतिप्रपञ्चेन । अन्यथा स्तेयं स्यादिति—अन्यथा स्वत्वाभावे ॥ ५२ ॥

## बालंभट्टी

इदमेव विशदयति—यस्मादित्यादि इतीत्यन्तेन । यस्मादित्यस्य उक्तमित्यत्रान्वयः । द्रव्येति, —अत्र मतेऽस्यायमर्थः—द्रव्यार्जनेष्वपि सहत्वं दम्पत्योरिति हेतुस्वरससिद्धोऽयमेवार्थो न प्रागुक्तः । एतच्च सहत्वमौपचारिकं न मुख्यः । तथा हि—यथा आधानादिषु तयोरन्यतराभावे आधानादिस्वरूपासिद्धिर्नैवं, द्रव्यार्जनेऽपि तु पतिरार्जयति पत्नी चार्जितं रक्षतीति योगक्षेमावुभाभ्यां क्रियत इत्युभयानुसन्धानसिद्धत्वेन सहत्वमेव । एवं च यत्राऽऽधानादिषु सहत्वं तत्र स्वत्वमस्तीत्यत्रापि द्रव्यपरिग्रहेषु सहत्वप्रतीतेः स्वत्वमस्तीति तदेतत् ध्वनयन्नेवाऽऽह--उक्त्वा तत्रेति । वचनं स्वरूपेणोक्तमित्यर्थेत आह—भर्तुरिति । नित्यसंग्रहायाऽऽह–अवश्येति । तथा च एतदुपलक्षणमिति न न्यूनता प्रथमस्य[2] त्यागे इति भावः । यद्वा तत्रापि तत्त्वसत्वात् तस्य लक्षणार्थमाह[3]--अवश्येति । काकेभ्यो दधीत्यादाविवेति भावः । वचनस्थहेतोर्व्याख्या–यस्मादिति । क्वचित् हि यस्मादित्येव पाठः । प्राग्वदाह—तस्मादिति । अन्यथा भपीति पाठान्तरम्; अन्यथा द्रव्यस्वामित्वाभावे तदा च नेद सहत्वं विधत्ते ऽपितु लोकासि-

१ ख. भार्यायामपि । २ प्रथमं नित्यं प्रथमस्यागश्चेति । ३ लक्ष्यार्थमाह ।

ति। तस्माद्भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव, न स्वेच्छया ; यथा वक्ष्यति—"यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः।" इति[1] ॥ ५२ ॥

अधुना प्रातिभाव्यं निरूपयितुमाह—

**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।**
**आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५३ ॥** 5

प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः। तच्च विषयभेदात्त्रिधा

विभक्तसंशये साक्ष्यादिभिः निर्णयः। दम्पतिवचनं चात्र विभागासंभवादन्येषामपि रिक्थभाजामविभक्तानां साक्ष्याद्यभावप्रदर्शनाद्यर्थम् ॥ ५२ ॥

क्व पुनर्विविधप्रातिभाव्यम् ?—**दर्शने प्रत्यये दाने इत्यादि** ॥ ५३ ॥

अपसर्पणाशङ्कायां दर्शनार्थम् गृहीतं, ददतो दापयतो वा विविच्य अविश्वासेऽपि विश्वासार्थं, सिद्धार्थं प्रतिदानेन च प्रातिभाव्यम् विधीयत इति विचिकित्सानिवृत्त्यर्थम्।

## बालंभट्टी

द्धमेव—ततः द्रव्ये तयोरेव स्वाम्यात्। न च विवाहात्प्रागार्जितद्रव्ये पुरुषस्यैव स्वत्वं तत ऊर्ध्वमार्जिते तु पतिपत्न्योरिति वाच्यं; तथा सति पुत्रस्यापि स्वजन्मतः प्राक् पित्रार्जिते द्रव्ये स्वत्वाभावापत्तेरिति भावः। अत्र नैमित्तिके इत्युक्त्याऽन्यत्र स्तेयमस्त्येवेति सूचितम्। एतदेव तत्साम्येऽपि[2] वैषम्यं यत् पतिर्यथेष्टं विनियुंक्ते जायात्वेतावदेवेति। न च पत्युर्जायानुमत्यपेक्षा-स्वतन्त्रत्वात् ;यथा राजा राष्ट्रे तद्वदसौ गृहे।अत एव तस्या एव स्तेयशंका न भर्तुः।एवं पुत्रादावपीति बोध्यम्। सविशेषमुपसंहरति—तस्मादिति । एवेन तदभावव्यवच्छेदः। भर्तुरित्यस्य कृत्यमाह—न स्वेच्छेति। अत्र मानमाह—यथेति । कुर्यादित्यतस्तदिच्छाया एव प्रतीतेरिति भावः ॥ ५२ ॥

इदं तत्रैव स्फुटीभविष्यति—अधुनेति । तन्निषेधकथनप्रसंगादिति भावः । तथा च तदवान्तरप्रकरणमिदमिति तात्पर्यनिरूपणं च लक्षणविशेषाभ्यां भवति तत्रादौ मूलानुक्तं लक्षणमाह—प्रातीति, उत्तमर्णाधमर्णान्येनेत्यर्थः। अर्थात्तयोरिति भावः। समयः संकेतः। स चार्थात्तत्कृत एवेति नातिप्रसंग इति बोध्यम्। अथ मूलोक्तभेदानाह—तच्चेति।विष-

१ व्य०. ११५. । २ तत्स्वाम्ये इति च पाठः ।

भिद्यते;—यथा दर्शने 'दर्शनापेक्षायाम् एनं दर्शयिष्यामि' इति; प्रत्यये विश्वासे 'मम प्रत्ययेनास्य धनं प्रयच्छ, नायं त्वां वञ्चयिष्यते, यतोऽमुकस्य पुत्रोऽयम्, उर्वराप्रायभूरस्य ग्रामवरोऽस्ति' इति; दाने 'यद्ययं न ददाति तदानीमहमेव दास्यामि' इति। "प्रातिभाव्यं विधीयते" इति प्रत्येकं संबन्धः। आद्यौ तु दर्शनप्रत्ययप्रातिभुवौ वितथे अन्यथाभावे 5 अदर्शने विश्वासव्यभिचारे च दाप्यौ राज्ञा प्रस्तुतं धनमुत्तमर्णस्य, इतरस्य दानप्राति-

---

अगृहीते ददतो दापयतो वा विचिकित्सा माभूत्। तत्र दर्शनप्रत्ययप्रातिभुवौ वितथे विसंवादिते का...दाप्यौ स्वयं; न तु तत्पुत्राः। इतरस्य तु दानप्रतिभुवः पुत्रा अपीत्यभिप्रायः। अपिशब्दोऽन्येषामपि रिक्थभाजां प्राप्त्यर्थः। ननु च दर्शनप्रतिभूरपि प्रत्ययार्थ एव। नैवं प्रत्यायितस्यापि निमित्तान्तरात् भवत्येवादर्शनम्। यद्वा मृतेका...णि दातृत्वार्थं दर्श-

---

## सुबोधिनी

उर्वराप्रायभूरिति,—"उर्वरा सर्वसस्याढया"इत्यमरः। "इतरस्य सुता अपि"इत्यत्रापि

## बालंभट्टी

येति—अनेन त्रिषु विषयसप्तमी[3] इति सूचितम्। ममेति—अस्मदिति वा पाठान्तरम्। अस्येति—प्राग्वत्। एवमग्रेऽपि। "उर्वरासर्वसस्याढ्या" इत्यमरः। उर्वरायाः प्रायो बाहुल्यं अस्यां तादृशी भूरस्येत्यर्थः। तस्या दुर्लभत्वात् स्वस्य निश्चयाच्च। प्रायेति— तत्कृतमप्युत्कर्षमाह। वर इति—श्रेष्ठग्राम इत्यर्थः। ददातीति वर्तमानसामीप्ये इति लट्, दास्यतीत्यर्थः। समुदायसंबन्धोत्तरसबन्धयोः निरासायाह—प्रति इति। उत्तरार्धार्थमाह—आद्यौ त्विति। तात्पर्यार्थमाह—अन्यथेति। क्रमेण तस्यार्थद्वयमाह— अदर्शनेति। शेष माह—राज्ञेति। इत्येवेति तत्पदमत्रानुवर्तेत एवेत्यर्थः। तदर्थं तदसंभवादाह—शाठ्येनेति दौर्जन्येन धनाभावेन वाऽधमर्णे उत्तमर्णाय धनम् अप्रयच्छति सति दानप्रतिभूर्दाप्य इत्यर्थः।

---

१ क. च. अस्मत्प्रत्यै० ग. ख. घ. छ. ज मत्प्रत्ययेन। २ ज. सव्याढ्यामयभूरव्य ग्रामवरोस्ति। ३ मूले—दर्शने—प्रत्यये—दाने—इत्यत्र। ३ फ. ब. सप्तम्यः।

भुवः सुता अपि दाप्याः ; वितथ इत्येव, शाठ्येन निर्धनत्वेन वाऽधमर्णेऽप्रतिकुर्वेति। "इतरस्य सुता अपि"इति वदता पूर्वयोः सुता न दाप्या इत्युक्तम्; सुता इति वदता न पौत्रा दाप्या इति दर्शितम् ॥ ५३ ॥

एतदेव स्पष्टीकर्तुमाह—

**दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।　　5**
**न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥५४॥**

यदा दर्शनप्रतिभूः प्रात्यायिको वा प्रतिभूर्दिवंगतः तदा तयोः पुत्राः प्राति-

---

नप्रातिभाव्यवचनं द्रष्टव्यम्। तथा च बृहस्पतिः—"उपस्थाप्यविपत्तौ उपस्थाप्यस्य पुनः प्रतिभूर्दाप्यः" इति। एतच्चार्थार्पणेनोपविश्वास्य यत्र दर्शनप्रातिभाव्यं क्रियते तद्विषयमेव। तथा च नारदः—"ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वा विवादिते। प्रतिभूस्तदृणं दद्यात् अनुपस्थापयेत्तथा॥" इति[1]। यदोपस्थानं संभवतीति शेषः। मृतस्य चोपस्थानासंभवाज्जीवदधिकार इति नारदाभिप्रायः ॥ ५३ ॥

विकल्पप्रसङ्गे विषयव्यवस्थोक्तैव। पूर्वश्लोकार्थमेव स्पष्टयति—**दर्शनप्रतिभूर्यत्रेत्यादि**॥ ५४ ॥

---

## सुबोधिनी

वितथपदमनुवर्तत इत्याह—वितथ इत्येवेति। वैतथ्यमेव दर्शयति—शाठ्येनेति। दौर्जन्येन धनाभावेन वाऽधमर्णो यदोत्तमर्णस्य धनं न ददाति, तदा दानप्रतिभूर्दाप्य इत्यर्थः ॥ ५३ ॥

## बालंभट्टी

सूचितं विशेषद्वयमाह—इतरेति न पौत्र इति। अत्रापि एतत् समुच्चायक इति भावः ॥ ५३ ॥

पौनरुक्त्यं निराचष्टे—एतदिति। इतरस्येत्यादिनोक्तमेवेत्यर्थः। यत्रेति व्याचष्टे—यदेति। अपि सं[2]मुच्चयमाह—प्रतीति। मृत इत्यस्य व्याख्या दिवंगत इति। दिष्टं गत इति पाठान्तरम्। तत्र कालंगत इत्यर्थः। "कालो दिष्टोप्यनेहापि" इत्यमरः। तथा चेदं न भोगते इति बोध्यम्। तत् पुत्रा इत्यत्र द्विवचनान्तेन समास इत्याह—तयोरिति। तयोरधमर्णत्वेन[3] प्राप्तस्यानिषेधमाह—प्राती-

---

१.—१.११९.। २ फ. समुच्चेयमाह। ३ व. आधमर्ण्येन।

भाव्यायातं पैतृकमृणं न दद्युः। यस्तु दानाय स्थितः प्रतिभूर्दिवंगतः तस्य पुत्रा दद्युर्न पौत्राः। ते च मूलमेव दद्युर्न वृद्धिम्,—"ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः। समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः॥" इति व्यासवचनात्। प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद्गृहीतं तावदेव दद्यान्न वृद्धिम्। तथा सुतोऽपि प्राति-
5 भाव्यागतं पित्र्यमृणं सममेव दद्यात्। तयोः पौत्रपुत्रयोः सुतौ प्रपौ-त्रपौत्रावप्रातिभाव्यायातं प्रातिभाव्यायातं च ऋणं यथाक्रममगृहीत[2]धनौ न

## सुबोधिनी

दानप्रतिभुवः पुत्रा मूलमेव दद्युरित्याह—ते च मूल्यमेवेति। मूलमेव मूल्यम्। व्यासवचनं व्याचष्टे—प्रातिभाव्यव्यतिरिक्तमित्यादिना। अत्र प्रातिभाव्यव्यतिरिक्तमित्येतत्पदमर्थसिद्धम्। "प्रातिभाव्यागतं सुतः" इत्यमुमंशं व्याचष्टे—तथा सुतोऽपीति। "तत्सुतौ तु न दाप्यौ" इत्यमुमंशं व्याख्यास्यन् तत्सुताविति पदं निर्वक्ति-- तयोः पौ[3]त्रपुत्रयोः सुतावित्यनेन। तौ काविल्याकाङ्क्षायां विवृण्वन्नाह—प्रपौत्रपौत्रावित्यनेन। अधुना तत् सुतौ न दाप्यावित्यस्य वाक्यस्यार्थमाह--अप्रातिभाव्यायातमिति। पौत्रसुतः प्रपौत्रोऽप्रातिभाव्या-

## बालंभट्टी

ति। तेन प्राप्तमित्यर्थः। अनुषंगेण तुर्यपादं व्याचष्टे—यस्त्विति। अत्रैकवचनान्तेन समास इत्याह—तस्येति। पुत्राः ते एव। अत एवाऽऽह—न पौत्रा इति। विशेषं मनूक्तमाह—ते चेति। दानप्रतिभुवः पुत्राश्चेत्यर्थः। व्यासवचनं क्रमेण वाक्यत्रयेणोभयपरत्वेन क्लिष्टत्वात् व्याचष्टे—प्रतीति। इदं विशेषणमर्थसिद्धार्थकथनपरं, तत्र तेषामनधिकारात् सममित्युभयशेष इत्याह—सममिति। शेषमाह—दद्युरिति। पौत्रा इत्युक्तेरिति भावः। क्वचित् मूले व्याख्याने च एकवचनान्तपाठ एव पौत्र इति। तदा समं दद्यादित्युभयशेष इति न कोऽपि दोषः। अपिः समदानांशे पौत्र पुत्रासमुच्चायकः। एवेन वृद्धिव्यवच्छेदः। तत्सुतावित्यत्रापि द्विवचनान्तेन समास इत्याह—तयोरिति। तयोः स्वरूपे आह—प्रपौत्रेति। उक्तवाक्यार्थमाह—प्रातीति। समुच्चयवारणायाऽऽह—यथाक्रममिति। पौत्रसुतः प्रपौत्रः अप्रातिभाव्यागतं तन्न दद्यादित्यर्थः सूचितम्। विशेषमाह—अगृहीतेति। व्यासवाक्यस्या-

---

१ ख. तथा तत्सुतौ। २ ग. अगृहीतवित्तौ। ३ 'तत्सुतोऽपि' इति तु मिताक्षरायां ख. संज्ञितायां पाठः।

दाप्याविति । यदपि स्मरणम्—" खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि । मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥" इति तदपि,—लग्नकः प्रातिभूः, खादकोऽधमर्णः—लग्नको यदि वित्तवान्मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम् । यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातः,

## सुबोधिनी

यातम् , पुत्रसुतः पौत्रः प्रातिभाव्यायातं चर्णमगृहीतरिक्थौ द्वावपि न दद्यातामित्यर्थः । "ऋणं पैतामहम्" इत्यनेन व्यासवचनेन सह विरोधमाशङ्कते वचनान्तरस्य-यदपि स्मरणं खादको वित्तहीन इति । व्यासवचनेन दानप्रतिभूपुत्रस्य मूलदानं प्राप्तम् ; अत्र तु लग्नकस्य प्रतिभुव एव मूलदानमिति विरोधः । विरोधं परिहरति—तदपीति । तदपि व्याख्येयमित्युत्तरेणान्वयः । दानप्रतिभुवः पुत्रा ऋणं दाप्या इत्यभिधानात् दर्शनप्रत्ययप्रतिभुवोः सुता न दाप्या इत्युक्तम् । तत्र क्वचिदपवादमाह—यत्र दर्शनप्रतिभूरित्यादिना ।

## बालंभट्टी

न्यविरोधं परिहरति—यदपीति । व्यासवाक्ये दानप्रतिभूपुत्रस्य मूलदानमुक्तमनेन तु लग्नकस्य प्रतिभुव एव मूलदानमुक्तमिति विरोधः तं परिहरति—तदपीति । व्याख्येय मित्यत्रान्वयः। अप्रसिद्धत्वात्पदार्थमाह—लग्नक इति । अथ वाक्यार्थमाह—लग्नक इति । तदा तदैव पादशेषद्वयमाह —मृत इति पुत्रेणेति । अनेन वृद्धिमित्यत्र तस्येत्यस्यानुषङ्गः । पुत्र इति शेष इति सूचितं—मूल्यमिति। मूलेन समं मूल्यं "नौ वयो धर्म"[3]इत्यादिना यत्, न देयेत्यर्थः—क्वचित् उभयत्र मूलमित्येव पाठः। तयोः सुता न दाप्या इत्युक्तस्यापवादं क्वाचित्कविशेषमाह—यत्रेति । अन्यत्र त्वित्यर्थः । क्वचित्तथापाठ एव एवेनादानव्यवच्छेदः । अत्र तस्मादेवेत्यनेन बन्धकस्य कालवशेन ऋणापर्याप्तत्वेऽपि यावत्बन्धकं तावदेव देयं, न ततोऽधिकं यावदृणं तावत् स्वयमर्पयति[4] । तस्मात् तत एव धनात् बन्धकात् । न्यूनतया प्रतिज्ञातार्थासिद्धेराह—दर्शनेति । युक्तेस्तुल्यत्वादिति भावः। प्रत्येति—तस्यापीत्यर्थः । अभि

---

१ क. घ. मृतः पुत्रेण । २ द. इदं पदं नास्ति । ३ अ० ४. ४. ९१. । ४ स्वीयमपीति सूचितम् ।

तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव ; यथाऽऽह कात्यायनः—" गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् । विना पित्रा धनात्तस्माद्दाप्यः स्यात्तदृणं सुतः॥" इति । दर्शनग्रहणं प्रत्ययस्योपलक्षणम् । "विना पित्रा" —पितरि प्रेते दूरदेशं गते वा॥ ५४ ॥

5 यस्मिन्ननेकप्रतिभूसंभवस्तत्र कथं दातव्यमित्यत आह—

**बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।**
**एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥**

यद्येकस्मिन्प्रयोगे द्वौ, बहवो वा, प्रतिभुवस्तदृणं संविभज्य स्वांशेन दद्युः ।

श्लोकान्तरारम्भसामर्थ्यान्मृतवचनाच्च जीवतः पुत्रैः शक्तितोऽन्वेषणं कार्यमित्यभिप्रायः । एकस्यैव तु यदा कार्यिणः बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ॥

**एकच्छायास्थितेष्वेषु धनिकस्य यथारुचि** ॥ ५५ ॥

बहवः प्रतिभुवो यदि स्युः अंशतो धनं दद्युः । एकच्छायास्थितेष्वेषु धनिकस्येच्छया

सुबोधिनी

अत्र तस्मादेव बन्धकादृणं दाप्या इत्यभिधानात् तस्य बन्धकस्यर्णापर्याप्तत्वेऽपि यावत् बन्धकमर्हति, तावदेव देयं न ततोऽधिकमिति गम्यते ॥ ५४ ॥

बालंभट्टी

प्रेतमर्थं प्रक्रान्तमाह—पितरीति । अनेन पूर्वं मृत इत्युपलक्षणमिति सूचितमिति केचित् अत्रैव तथोक्तिस्वारस्यात्तथेत्यपरे ॥ ५४ ॥

अनेकेति — तेच सजातीया विजातीया वेति भाव इत्याह । तत्र उत्तरार्द्धानुरोधेन विजातीयस्थले आह— यद्येकस्मिन्निति । बहुत्वमनेकत्वोपलक्षणमित्याह — द्वाविति स्वांशेनेति । स्वस्वांशेनेत्यर्थः । क्वचित्तथैव पाठः; अत एव स्वांशेति बहुवचनोपपत्तिः । सजातीयस्थले उक्तम् एकछायाश्रितेष्विति तत्प्रतीकं

१ ख. भुवः स्युस्त० । २ थ. तस्य ऋणायाप । स्यर्णायाप । ३ तत्रादैः ।

एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिताः एकच्छाया-श्रिताः । अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितः तथा दानप्रतिभुवोऽपि प्रत्येकं कृत्स्नदानाय स्थिताः । एवं दर्शने प्रत्यये च ॥ तेष्वेकच्छायाऽऽश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम् । अतश्च धनिको वित्ताद्यपेक्षया स्वार्थं यं प्रार्थयते स एव कृत्स्नं दद्यान्नांशतः ॥ एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं 5 गतस्तत्पुत्रश्च संनिहितस्तदा धनिकेच्छया स सर्वं दाप्यः । मृते तु कस्मिंश्चित्तत्सुतः स्वपित्रंशमवृद्धिकं दाप्यः; यथाऽऽह कात्यायनः—"एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते समम् ॥" इति ॥ ५५ ॥

व्यस्तसमस्तत्वेन कृत्स्नं धनं दापयेत् । एकच्छायकाः समानग्राहकत्वेन प्रतिभुवः न द्रव्यो-पभोक्तारः। एतदेव चैष्विति सर्वनाम्ना स्पष्टीकृतम्, द्रव्यानुपभोक्तृत्वाच्च ॥

## सुबोधिनी

अतश्च धनिको वित्ताद्यपेक्षयेति—आदिशब्दात् सत्यवाक्त्वाभिजात्यादयः । मृते तु कस्मिंश्चिदिति—एकच्छायाश्रितेषु मध्ये कस्मिंश्चित् प्रतिभुवीत्यर्थः । एकच्छाया-प्रविष्टानामिति । एकच्छायाप्रविष्टानां मध्ये यस्तत्र दृश्यते, स धनिकेच्छया दाप्यः। एकच्छा-

## बालंभट्टी

धृत्वा पदार्थकथनपूर्वकं व्याचष्टे—एकेति । सादृश्यं विशदयति—अधमर्ण इति । एव-मिति—स यथा दर्शनाय विश्वासाय च स्थितः एवं तेऽपीत्यर्थः । एष्वित्यस्य व्याख्या—प्रतीति काममिति दद्यादिति शेषः । रुचिबीजं कथयन् तात्पर्यार्थमाह—अतश्चेति । आदिना सत्यवाक्त्वाभिजात्यादि। स्वार्थं स्वधनम्। विशेषमाह-एकेति। तेषां मध्ये इत्यर्थः। सः -सोऽपि। सर्वं सवृद्धिकम्। मृते तु कस्मिंश्चिदिति-तेषां मध्ये कस्मिंश्चित् प्रतिभुवि मृते इत्यर्थः। वैलक्षण्यसूचकस्तुः। अंशमिति—अवशिष्टं त्वर्थादवशिष्टानां मध्ये यथारुचि दाप्यम् इति भावः। एकेति— तेषां मध्ये स दाप्यः यस्तत्र दृश्यते—यो धनिकेच्छाविषयत्वेन ज्ञायते । जातावेक-वचनम् । तेषां मध्ये कस्मिंश्चित् देशान्तरं गते सति तत्सुतः तदिच्छया सर्वं दाप्यः। तेषां मध्ये कस्मिंश्चिन्मृते तु तत्सुतः स्वपित्र्यमंशमेव दाप्यो न सर्वम् तत्रापि समं अवृद्धिकमेवेत्यर्थः। पित्रंशमिति पाठः । पित्र्यंशमिति पाठे शकन्ध्वादित्वं बोध्यम् ॥ ५५ ॥

---

१ घ. स कृत्स्नं । २ ख. तेष्वेक । ३ क. नारदः । ४ ग. पित्र्यमंशम्मृते। ५ थ. द. भुविमृते । ६ ख. यद्यप्येक । थ यद्येक ।

प्रातिभाव्ये ऋणदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—

**प्रतिभूर्दापितो यत्तु[1] प्रकाशं धनिनां[2] धनम् ।**

**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ ५६ ॥**

यद्द्रव्यं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीडितः प्रकाशं सर्वजनसमक्षं राज्ञा
5 धनिनं दापितो न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम् ; यथाऽऽह नारदः—"यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः । ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेत्[3] ॥" इति । ऋणिकैः अधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात् । तच्च[4] कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम्—वचनारम्भसामर्थ्यात् ॥ एतच्च हिरण्य-

---

**प्रतिभूर्दापितो यत्त्वित्यादि** ॥ ५६॥

---

## सुबोधिनी

याश्रितेष्वेव यस्मिन् कस्मिंश्चित् प्रोषिते देशान्तरगते तत्सुतोऽपि धनिकेच्छया सर्वं दाप्यः । तेष्वेवैकच्छायाश्रितेषु कस्मिंश्चिन्मृते तत्सुतः स्वपित्र्यमंशमेव दाप्यो न सर्वमित्यस्यार्थः॥५५॥

एतच्च हिरण्यविषयमिति— न वस्त्रधान्यादिविषयमित्यर्थः। कालविशेषमनपेक्ष्य

## बालंभट्टी

स्येतिभावः।यत्त्विति पाठं सूचयन्नाह—यदिति। धनमित्यस्य व्याख्या— द्रव्यमिति।ऋणमिति पाठान्तरम्। प्रतिभूग्रहणमुक्तरीत्योपलक्षणमित्याह—तत्पुत्र इति। विशेषमाह— धनिकेनेति। धनिनामिति प्राग्वत्। विशषोक्तिव्यवछेद्यमाह—न पुनरिति, न तु इत्यर्थः। विशेषमानमाह-- यथाऽऽहेति।ऋणिकं मत्वर्थीय इन्। राजेति शेषः।उत्तरार्द्धार्थमाह-ऋणिकैरिति। भवेदित्यस्य व्याख्या—स्यादिति । विशेषमाह—तच्चेति। तच्च द्विगुणमित्यन्वयः। सद्य एवेति कालेत्यस्य व्याख्या । वचनेनेति —प्रतिभूरिति वचनेत्यर्थः । अन्यथैतदानर्थक्यं स्पष्टमेव, तथा तस्य प्रागेवोक्तत्वादिति भावः । अनुपद वस्त्रादौ विशेषस्य वक्ष्यमाणत्वादाह—एतच्चेति । न वस्त्रधान्यादिविषयकमित्यर्थः । वचनस्यान्यविषयतया तच्चेत्याद्युक्तविशेषमाक्षिपति

---

१ क. यस्तु । २ ख. धनिनो । ३ छ. प्रतिपादयेत् । २२.—१. १२१. । ४ क. ग. एतच्च ।

विषयम् । ननु इदं वचनं द्वैगुण्यमात्रं प्रतिपादयति । तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते ; यथा जातेष्टिविधानं शुचित्वाबाधेन ।

## सुबोधिनी

सद्य एव द्विगुणं दातव्यमिति यदुक्तं तदाक्षिपति—नन्विदं वचनमिति । "द्विगुणं प्रतिदातव्यम्" इति द्वैगुण्यमात्रं प्रतिपाद्यते । तच्च द्वैगुण्यं पूर्वोक्ते मासादिरूपे काले यत्कला वृद्धिः, तस्य यः क्रमः तमबाधित्वैवोपपद्यत इत्यर्थः । एतदुक्तं भवति — स्वकृतवृद्ध्यनुसारेण यदा कालान्तरे द्वैगुण्यं[1] प्राप्नोति धनं, तदैव दत्तद्रव्याय प्रतिभुवे द्विगुणं द्रव्यं दातव्यमधमर्णेन । अथवा[2] यावती वृद्धिस्तत्सहितं मूलधनं देयं न द्विगुणं द्रव्यमिति सद्यो द्वैगुण्यदानमयुक्तमिति । पूर्वोक्तकालकलाक्रमाबाधेनापि द्वैगुण्यमुपपद्यत इत्युक्तम् । तत्राबाधेनाप्युपपत्तौ दृष्टान्तमाह —यथा जातेष्टिविधानमिति । चतुर्थतृतीयपा

## बालंभट्टी

—नन्विदमिति, उक्तवचनमित्यर्थः । मात्रपदेनोक्तविशेषव्यवच्छेदः । पूर्वोक्तेति । पूर्वोक्ता काले म सादौ कलावृद्धिस्तस्ययः क्रमस्तदबाधेनापीत्यर्थः स्वकृतवृद्ध्यनुसारेण यदा कालान्तरे द्वैगुण्यमेति धनं तदैव दत्तद्रव्याय प्रतिभुवे द्विगुणं दातव्यमधमर्णेनेति द्वैगुण्यमात्रप्रतिपादकेनानेन वचनेन बोध्यते । अन्यदा तु यावती वृद्धिस्तत्सहितं मूलधनं देयं न द्विगुणमिति सद्यो द्विगुणदानमयुक्तमिति भावः । अबाधेनोपपत्तौ दृष्टान्तमाह—यथेति।

चतुर्थे तृतीयपादे प्रथमाधिकरणं[3] फलसंयोगस्त्वचोदितेन स्यात् संयोगस्याशेषभूतत्वादिति "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्यादि श्रूयते। तत्र संशयः। पुत्रजन्मानन्तरमेवेयमिष्टिः कार्या न जातकर्मानन्तरमेवेति, पुत्रजन्मनो[3] नियोज्य विशेषणत्वेन निमित्तानन्तरमेव कार्येति जातकर्मणः प्रागेवेति पूर्वपक्षः। सिद्धान्तस्तु न केवलं जन्म विशेषणं नियोज्यस्य, अपि तु पुत्रगतपूतत्वादिकमपि । एवं च पुत्रजन्मपूतत्वरूपनिमित्तयोः संवलितयोरेव नियोज्यविशेषणत्वम्[4]। पुत्रगतपूतत्वादिकं च पुत्रे जीवत्यभिलषितं पितुः। न[6] तद्वैपरीत्ये

---

१ थ. द. ण्यमेति। २ थ. द. अन्यथा या। ३ जातेष्टिन्याये इदं अधिकरणं प्रथममिति अभिप्रेत्य प्रथमेति तत्र हि अधिकरणद्वयं प्रवृत्तं । तथा च शाबरभाष्ये इतः पभृति अधिकरणद्वयं जातेष्टिन्यायः इति ॥ जैमिनीयन्यायमालाविस्तरे च इदं परं अधिकरणत्रयमारचितम् ॥ तत्र पथमं वेश्वानरेष्टेः पुत्रगतफलकत्वनिश्चायक, द्वितीयं च जातकर्मोत्तरकालकर्तव्यता निश्चायकं, तृतीयम् आशौचापगमोत्तरकालतानिश्चायकम् । मीमांसायां--४.३. १७.सू. ३८। ४ फ. ब. गतस्य। ५ फ. नियोज्यात्मविशेषणत्वम्। ६ नाजीवतीत्यर्थः।

## सुबोधिनी

देऽन्तिमाधिकरणम्। "फलसंयोगस्त्वचोदिते न स्याद्शेषभूतत्वात्" "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्यादि श्रूयते। तत्र संशयः—पुत्रजन्मानन्तरमेवेयं जातेष्टिः कर्तव्या, उत जातकर्मानन्तरमेवेति। पूर्वपक्षस्तु पुत्रजन्मनो निमित्तस्य नियोज्यविशेषणत्वेन निमित्तानन्तरमेवेष्टिः कर्तव्या। अतो जातकर्मणः प्रागेवेति। सिद्धान्तस्तु न केवलं जन्म नियोज्यस्य विशेषणम्, अपि तु पुत्रगतपूतत्वादिकमपि। एवञ्च पूतत्वनिमित्तयोः संवलितयोरेव नियोज्यविशेषणत्वम्। पुत्रगतपूतत्वादिकं च पुत्रे

## बालंभट्टी

सङ्गतिमाह—प्रातीतिदत्तस्य प्रतिक्रियाविधिमिति—पलायनं कृत्वा पुनः परावृत्तस्याधमर्ण जीवनं च स्तन्यपानादेव, स्तन्यपानं च जातकर्मणः प्राक्निषिद्धम्, अतो जातकर्मानन्तरमेवेष्टिः। एवं च जन्मानन्तरभाविन्या इष्टेः जातकर्मानन्तरमुत्कर्षे आशौचानन्तरमेव कार्या, न जातकर्मानन्तरं कालशौचरूपाङ्गत्यागे मानाभावात्, "शुचिना कर्म कर्तव्यम्" इत्यस्यापवादाभावादिति। इदं च गुरुमतेनोक्तम्। भट्टमते तु संशयस्तु प्राग्वत्। निमित्तानन्तरं नैमित्तिकस्यावश्यंभावित्वात् जन्मन एव निमित्तत्वाज्जन्मानन्तरमेवेति पूर्वपक्षः।सिद्धान्तस्तु वाक्य[२]शेषश्रुतपुत्रगतपवित्रत्वादि फलकामनावान् वैश्वानरेष्टावधिकरी। तच्च फलं जीवत्येव पुत्रेभी(?) च जीवनं च शिशोर्जातमात्रस्य स्तन्यपानायत्तमेव,तच्च स्तन्यपानं जातकर्मानन्तरमेव,न ततः प्राक्, अतः पुत्रगतपवित्रत्वादिफलावरोधेन जातकर्मानन्तरमेवेष्टिरिति। एवं स्थिते तृतीयवर्णकन्योचिन्ता जातकर्मानन्तरमेवेष्टिरुक्ता शौचानन्तरं उत्कर्षे प्रयोजनाभावात् जातकर्मानन्तरमेवेति पूर्वपक्ष[३] उच्यते। निमित्तान्तर्यमिष्टेस्तावत् बाधितमेव तद्गतोक्तप्रयोजनवशात्। बाधिते च निमित्तानन्तर्ये शुद्धकालाप्रतीक्षया आशौचापगमे पौर्णमास्यादिके कालो कार्या शुद्धकालस्याप्यङ्गत्वात्, शुचिना कर्मेत्यस्यापवादाभावादिति।यथा च शुद्धकालरूपाङ्गमबाधित्वैव जातेष्टिविधानं तथा अशीतिभाग इत्यादिना प्रागुक्तो यः कालक्रमेण वृद्धिक्रमस्त मबाधित्वैव द्वैगुण्यविधानमिति सद्यो न द्वैगुण्यमिति भावः। अत्र सद्यो द्वैगुण्यदानपक्षेऽग्रे-

---

१ त. स्यात् संयो गस्याशे। २ फ. वर्णकं पक्षान्तरव्याख्यानं ३ यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यत् नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधाति यत् दशकपालोविराजैवास्मिन्नन्नाद्यं ददाति यदेकादशकपालोत्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्वादशकपालो-जगत्यैवास्मिन्पशून् दधाति यस्मिन् जाते एतां इष्टिं निर्वपतिपूत एवस तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति। ४ फ. पुनरत्र तथा।

अपि च सद्यस्सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः सन्तत्यभावान्मूलदानमेव

## सुबोधिनी

जीवत्यभिलषितं पितुः, न तद्वैपरीत्ये। जीवनं च स्तनपानादेव। स्तनपानं च जातकर्मणः प्राक् निषिद्धम्। अतो जातकर्मानन्तरमेवेष्टिः। एवं जन्मानन्तरभाविन्या इष्टेर्जातकर्मानन्तरमुत्कर्षे आशौचानन्तरमेव कर्तव्या न जातकर्मानन्तरम् कालशौचरूपाङ्गहाने प्रमाणाभावात् "शुचिना कर्म कर्तव्यम्" इत्यस्यापत्राद्भावादिति। एतच्च गुरुतन्त्रानुसारेण। भट्टमते तु "फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात्।" "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्यादि श्रूयते। तत्र संशयः पुत्रजन्मानन्तरमेवेष्टिरुत जातकर्मानन्तरमेवेति। निमित्तानन्तरं नैमित्तिकस्यावश्यम्भावित्वाज्जन्मन एव निमित्तत्वात् जन्मानन्तरमेवेति पूर्वपक्षः, वाक्यशेषश्रुतपुत्रगतपावित्र्यादिफलकामनावान् वैश्वानरेष्टावधिकारी। पुत्रगतपूतत्वादिकं च फलं जीवत्येव पुत्रेऽभीष्टम्। जीवनं च जातमात्रस्य शिशोः स्तनपानायत्तमेव। तच्च स्तनपानं जातकर्मणि निर्वृत्त एव, न प्राक्। अत्र पुत्रगतपवित्रत्वादिफलानुरोधेन जातकर्मानन्तरमेवेष्टिरिति राद्धान्तः। एवं स्थिते तृतीयवर्णकेऽन्या चिन्ता। जातकर्मानन्तरमेवेष्टिरुताशौचापगमे[३] इति। तत्र पुत्रगतपवित्रत्वादिरूपप्रयोजनवशाज्जननरूपनिमित्तानन्तरमपि प्राप्तेयमिष्टिर्जातकर्मानन्तरमुत्कृष्टा। एवमुत्कृष्टायाः पुनराशौचानन्तरमुत्कर्षे प्रयोजनाभावाज्जातकर्मानन्तरमेव कर्तव्येति प्राप्तेऽभिधीयते। निमित्तानन्तर्यं तावत् बाधितमिष्टेः पवित्रत्वादिरूपप्रयोजनवशात्। बाधिते च निमित्तानन्तर्ये शुद्धकालप्रतीक्षया शौचापगमे पौर्णमास्यादिकाले कर्तव्या शुद्धकालस्याप्यङ्गत्वात् शुचिना कर्म कर्तव्यमित्यस्यापवादाभावादिति। प्रकृते त्वेवमुपयोगः। यथा शुद्धकालरूपमङ्गमबाधित्वैव जातेष्टिविधानं, तथा अशीतिभागो वृद्धिः स्यादित्यादिना पूर्वोक्तो यः कालक्रमेण वृद्धिक्रमस्तमबाधित्वैव द्वैगुण्यविधानम्। अतश्च न सद्यो द्वैगुण्यमिति। सद्यो द्वैगुण्यपक्षेऽनुपपत्तिं[४] दर्शयति—अपि च सद्य इति। अयमर्थः—सद्यो द्वैगुण्यं नाम सद्य एव वृद्ध्या सह द्वैगुण्यं, न स्वरूपतः, वृद्धिस्तु पशुस्त्रीणां सन्ततिः[४]—"सन्ततिस्तु पशुस्त्रीणाम्" इत्युक्तत्वात्। तथा सद्यो द्वैगुण्यपक्षे[५] पशुस्त्रीषु सद्यः सन्तत्यभावान्मूलमात्रमेव देयं स्यात्, न द्विगुणम्।

## बालंभट्टी

नुपपत्तिमप्याह — अपि च सद्य इति। द्विगुणवृद्धिसहितेत्यर्थः। सद्यो द्वैगुण्यं नाम स्वस्य वृद्ध्या सह द्वैगुण्यं न स्वरूपतः। वृद्धिस्तु पशुस्त्रीणां सन्ततिरेव "सन्ततिस्तु पशुस्त्रीणामि-

१ घ. मुल्य०। २ थ. द. पवित्रत्वादि। ३ थ. द. सिद्धा। ४ थ. द. पत्तिमपि द। ४ थ. द. न्ततिरेव ५ थ. द. ण्यदानप।

प्राप्नोतीति । तदसत् । "वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ।" इत्यनेनैव कालकलाक्रमेण द्वैगुण्यादिसिद्धेर्द्वैगुण्यमात्रविधान इदं वचनमनर्थकं स्यात् । पशुस्त्रीणां तु कालक्रमपक्षेऽपि सन्तत्यभावे स्वरूपदानमेव । यदा प्रतिभूरपि द्रव्यदानानन्तरं कियताऽपि कालेनाधमर्णेन संघटते तदा सन्ततिरपि 5 संभवत्येव।यद्वा पूर्वसिद्धसन्तत्या सह पशुस्त्रियो दास्यतीति न किंचिदेतत्।। अथ प्राति-

---

## सुबोधिनी

अतश्चाननुस्यूतत्वेन सद्योद्वैगुण्यमनुपन्नमिति। परिहरति—तदसदित्यादिना। एतदुक्तं भवति—"वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा।" इत्येतद्वचनारम्भसामर्थ्येनैव कालक्रमेण द्वैगुण्यादेः प्राप्तत्वात् पुनश्च कालक्रमायातद्वैगुण्यविधानमनुपपन्नं स्यात् । अतश्च पूर्वाप्राप्तं यत् सद्योद्वैगुण्यं तदेवावश्यं विधेयम् । जातेष्टिविधायकवाक्यस्यानर्थक्याभावात् शुचिना कर्म कर्तव्यम् इत्येतदबाधेनाप्युपपत्तिरिति विशेष इति । "प्रतिभूर्दापितोयत्तु" इत्यस्यैव वचनस्य विषयाविशेषपर्यवसानद्वारा कालक्रमेणैव द्विगुणदानविधिपरत्वं वक्तुमाक्षेपवादी तदुपयुक्तं किञ्चिदाह—अथ प्रातिभाव्यमित्यादिना । अधुना कालक्रमेणैव द्विगुणदानविधिपरत्वं दर्श-

## बालंभट्टी

त्युक्तत्वात् । तथा च सद्यस्तथा द्वैगुण्यदानपक्षे पशुस्त्रीषु सद्यः सन्तत्यभावान्मूलमात्रमेव देयं स्यादिति संततिः स्त्रीपशुष्वेवेति वक्ष्यमाणमनुपपन्नमित्यर्थः। वस्त्रेति—यत् इत्यादिः । वस्त्रेत्यादि वचनारम्भसामर्थ्येनैव तत्र क्रमेण द्वैगुण्यादेः प्राप्तौ पुनस्तथा तद्विधिर्व्यर्थेति पूर्वाप्राप्तं सद्यो द्वैगुण्यमेवागत्याऽवश्यं विधेयम्। दृष्टान्ते तु तद्विधिवाक्यस्यानर्थक्याभावाच्छुचिनेत्येतदबधेनाप्युपपत्तिरिति विशेष इति तद्वैषम्यमिति भावः । एवमाद्यदोषमुद्धृत्य द्वितीयदोषमुद्धरति —पशुस्त्रीणां त्विति । तथा च तत्संभवापेक्षं, न तु नियतमिति भावः । अभ्युपेत्येदम् । वस्तुतस्तदयुक्तमिति सूचयन् तदा तत्संभवमप्याह—यदेति । तावता कालेनेति पाठः । संघेति—तेन सह सङ्गतो भवतीत्यर्थः । सद्यः संघटनपक्षे आह —यद्वा पूर्वेति। प्रतिभूकर्तृकद्रव्यदानात् पूर्वम् अधमर्णस्य पलायनदशायां विद्यमानतादशायां वा जातेत्यर्थः । अथास्य वचनस्य विषयविशेषपर्यवसानद्वार कालक्रमेणैव द्विगुणदानविधिपरत्वाक्षेपाय तदुपयुक्तं किंचिदाह—अथेति । उच्यते इति

१ थ. द. वैमप्रा ।

भाव्यं प्रीतिकृतम्, अतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव । न च प्रीतिदत्तस्य याचनात्प्राग्वृद्धिरस्ति; यथाऽऽह—"प्रीतिदत्तं तु यत्किंचिद्वर्धते न त्वयाचितम् । याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥"[1] इति । अतश्चास्य[2] प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यते इति तदप्यसत् । अस्यार्थस्यास्माद्वचनादप्रतीतेर्द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते । तस्मात्काल- 5 क्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यादिति सुष्ठूक्तम् ॥ ५६ ॥

---

प्रकाशवचनाद्यत्प्रतिभुवो हस्तनिर्गतं तदेव द्विगुणं देयम् ,न तु धनिकाय यावद्देयमित्यभिप्रायः । हिरण्यविषयश्चायं श्लोकः ॥ ५६ ॥

---

## सुबोधिनी

अधुना कालक्रमेणैव द्विगुणदानविधिपरत्वं दर्शयति—अतश्चास्येति[3] । अयमर्थः—प्रीति दत्तस्यायाचितस्य वृद्ध्यभावेन प्रतिभूदत्तस्यापि पूर्वोक्तरीत्या प्रीतिदत्तत्वेनायाचितस्यापि वृद्ध्यभावे प्राप्ते तदपवादत्वेनायाचितस्यापि प्रतिभूदत्तस्य दानदिवसादारभ्य कालक्रमेण वृद्ध्या सह द्विगुणं दातव्यमिति । निराकरोति[4]—तदप्यसदिति। वाक्यार्थो हि वाच्यो व्यङ्ग्यो वा भवेत्। न त्वसावर्थोऽभिधीयते वा व्यज्यते वा अतो नायमर्थोऽपि त्वसावुक्त एवार्थो ग्राह्य इत्यर्थः ॥ ५६ ॥

## बालंभट्टी

शेषः । वचनं हि नारदमाह—यथाऽऽहेति । यत्किंचित् प्रतिभूदत्तं धनिकदत्तं वा—पञ्चकमिति। प्राग्वत् तमेवाऽऽक्षेपमाह—अतश्चेति । अस्य प्रतिभूसम्बन्धिनः । यावद्द्विगुणमित्यव्ययीभावः। प्रीतिदत्तस्थले अयाचिते तदभावस्योक्तत्वेन प्रतिभूदत्तस्यापि तादृशस्योक्तरीत्या तथा वृद्ध्यभावे प्राप्तेऽपवादत्वेन अयाचितस्यापि तस्येदं प्रतिपाद्यत इत्यर्थः; । —अस्यार्थस्येति ।वाक्यार्थो हि वाच्यो लक्ष्यो व्यङ्ग्यो वा भवेत्। तत्रायं नाद्यः-अप्रतीते ; न द्वितीयः मानाभावात् ; अत एवानन्त्य इत्यर्थः । तदाह—द्विगुणमिति । उपसंहरति—तस्मादिति ॥ ५६ ॥

---

१ ना० १. १०९. । २ ग. अत: प्रीति० । ३ त. श्च यस्ये । ४ थ. परा ।

प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह—

**सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।**
**वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ ५७ ॥**

हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्धया दाप्याः । श्लो-
5 कस्तु व्याख्यात एव।यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन
तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः । यदा तु दर्शन-
प्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थः तदा तदन्वेषणाय तस्य पक्षत्र-
यं दातव्यम् । तत्र यदि दर्शयाति तदा मोक्तव्योऽन्यथा प्रस्तुतं[1] धनं दाप्यः,—"न-
ष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम् । यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥
10 काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् । निबन्धं दापयेत्तत्तु प्रेते चैष विधिः स्मृतः ॥"
इति कात्यायनवचनात् । लग्नकविशेषनिषेधश्च तेनैवोक्तः—"न स्वामी न च वै
शत्रुः स्वामिनाऽधिकृतस्तथा ।निरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित् ।।नैव रिक्थी न
मित्रं च न चैवात्यन्तवासिनः। राजकार्यनियुक्तश्च ये च प्रव्राजिता नराः।। नाशक्तो धनिने

---

**संततिस्तु पशुस्त्रीणाम् इत्यादि ॥ ५७ ॥**

तथाशब्दः सत्काराद्यर्थः । यस्य यावती परा वृद्धिरुक्ता तस्य तद्वृद्धियुक्तं स सत्का-

---

### बालंभट्टी

सर्वत्र वस्त्रदावपि—अल्पाक्षरत्वात् स्त्रियः पूर्वनिपातः । तेषु सन्ततिरेवेत्यर्थः । प्रा-
गुक्तेत्येवाऽऽह—कालानादेति । वृद्ध्या सह आधिवर्ज्यं सामान्यतः सर्वं तात्पर्यार्थमाह—
यस्येति । विशेषमाह—यदा त्विति । संप्रेति—प्रतिज्ञाते प्राप्ते इत्यर्थः। तत्र पक्षत्रये । एव-
मग्रेऽपि। अत्र मानमाह-तस्येति। परम् अधिकं । काले इति—परस्मिन्नपि काले यदि स न
तथा कुर्यात् तदा तस्मिन् काले व्यतीते तु सति तं निबन्धं तमर्थं दापयेदित्यर्थः ।
प्रेते चेति—अधमर्णे इत्यर्थः। विशेषान्तरमाह—लग्नकेति । प्रतिभूविशेषे निषेधोऽपीत्यर्थः।
केषांचित् प्रतिभूत्वनिषेध इति यावत् । तेनैव कात्यायनेनैव । अत्र स्वामित्वादिकं खनिरू

---

१ क. प्रतिश्रुतं ।

दातुं दण्डं राज्ञे च तत्समम् । जीवन्वाऽपि पिता यस्य तथैवेच्छाप्रवर्तकः।। नाविज्ञाय गृहीतव्यः प्रतिभूः स्वक्रियां प्रति ।।" इति।। सन्दिग्धोऽभिशस्तः; अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः ।। इति प्रतिभूविधिः ।।

धनप्रयोगे द्वौ विश्वासहेतू प्रतिभूराधिश्च; यथाऽऽह नारदः, —"विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च।" इति । तत्र प्रतिभूर्निरूपितः, इदानीमाधिर्निरूप्यते । आधिर्नाम 5 गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते;—आधीयत इत्याधिः। स च

---

रप्रतिभुवो देयमित्यर्थः ॥ ५७ ॥

विस्रंभहेतू द्वावाधिप्रतिभुवौ । तथा चोक्तम्—" विस्रंभहेतू द्वावत्र प्रति

## सुबोधिनी

निबन्धं दापयेत् तमिति,—तमर्थं दापयेदित्यर्थः॥ इति ऋणादानप्रकरणे प्रतिभूविधिः॥

## बालंभट्टी

पितं ग्राह्यम्। क्वचित् क्वापि। रिक्थी पुत्रादिः। दातुं धनमिति शेषः। जीवन्निति-यस्य पिता जीवन् जीवति व्यत्ययेन शता आस्ता इति शेषो वासोऽपि चेत्यर्थः।तथैवेच्छेति-स्वेच्छाचरणाशील इत्यर्थः । त्वेति —प्रतिभूत्वकरणमभिसमीक्ष्येत्यर्थः । प्रतिभूस्वाक्रियेति इति पाठान्तरम् । अत्र धनिकेन स्वदानक्रियामभिसमीक्ष्येत्यर्थः । अन्यथा पौनरुक्त्यं स्पष्टमेव ॥ इति प्रातिभूविधिः ॥

प्रसक्तसाक्षिनिरूपणमकृत्वाऽऽधिनिरूपणे संगतिमाह — धनेति । तद्दाने इत्यर्थः । विस्रम्भो विश्वासः । अधनप्रयोगे । तत्र तयोर्मध्ये—इदानीमिति । तत्प्रसङ्गेऽपि ततोऽस्यान्तरङ्गत्वादिति भावः । निरूपणस्योभयरूपत्वेनात्र मूलानुक्तमुभयं वक्तुं तस्यादौ सामान्यलक्षणमाह—आधिर्नामेति । स्योपेति— उत्कृष्टविश्वासेत्यर्थः । यद्वा उपरीति लोकोक्तिस्तत्प्रतिनिधित्वेनेत्यर्थः । अधीति—स्थाप्यत इत्यर्थः । एवं रूढिमुक्त्वा योगमाह—अधीति । अर्थस्स एव। अत एव नारदवाक्ये तथोक्तम् । तेनोभयप्रदर्शनम् । अत एव तत्र तथोक्तम्। अथ भेदमाह—स चेति ।

---

१.—१. ११९. । २ फ. ततोऽप्यन्तरङ्गत्वादिति भावः ।

द्विविधः—कृतकालोऽकृतकालश्च ; पुनश्चैकैकशो द्विविधः गोप्यो भोग्यश्च ; यथाऽऽह नारदः—"अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। कृतकालोपनेयश्च यावद्देयोद्यतस्तथा॥ स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च।" इति[1]। कृते काले आधानकाल एवामुष्मिन्काले दीपोत्सवादौ मयाऽयमधमर्णिको मोक्तव्योऽन्यथा तवैवाऽऽधिर्भविष्यतीत्येवंनिरूपिते काले उपनेयः आत्मसमीपं नेतव्यो मोचनीय इत्यर्थः। देयं दानं, देयमनतिक्रम्य यावद्देयम्, उद्यतो नियतः स्थापित इत्यर्थः; यावद्देयमुद्यतः यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः। गोप्यो रक्षणीयः॥ ५७॥

---

## सुबोधिनी

"अधिक्रियत इत्याधिः" इत्यादिनारदवाक्यं व्याचष्टे—कृते काल आधानकाल इत्यादिना। तत्र कृतकालाधिस्वरूपं निरुच्याकृतकालाधिस्वरूपं निर्वक्ति—देयं दानमित्यादिना। गोप्याधिस्वरूपमाह—गोप्यो रक्षणीय इति। भोग्यस्तु प्रसिद्धः॥ ५७॥

एवञ्च चातुर्विध्यमाधेरुक्तं भवति। तत् यथा—कृतकालगोप्यः कृतकालभोग्यश्चेति द्वेधा।

## बालंभट्टी

द्विधेति। द्विस्वरूपि इत्यर्थः। स द्विविधोऽपि सन्दिग्धत्वात् कृतेत्यादि पदत्रयं तत्रत्यक्रमेण व्याचष्टे—कृते इत्यादिना य इत्यन्तेन। काले इति—अनेन कर्मधारयोत्तरं "कृत्यैर्ऋण" इति[2] सप्तमी समासः सूचितः। अस्यार्थमाह—धनेत्यादि काले इत्यन्तेन। एवेनानन्तरकालव्यावृत्तिः। उपार्थमाह—आत्मेति। विशिष्टतात्पर्यार्थमाह—मोचेति। अयमेव कृतकालः, एतत्स्वरूपमुक्त्वाऽकृतकालाख्यद्वितीयस्वरूपं निर्वक्ति—देयमिति। बहुलग्रहणात् भावे कृत्य इत्याह—दानमिति। अव्ययीभावः पदार्थानिवृत्ताविल्याह[3]—देयमनेति। उद्यतपदार्थमाह—नियत इति। उभयोरन्तर्भावितण्यर्थत्वसूचनायाऽऽह—स्थापित इति। सुप्सुपेति समासमाह—यावदिति। तात्पर्यार्थमाह—गृहीतेति। प्रत्यर्पणं दानम्। अच्छेद्य इत्यन्तस्यापि तमाह—अनीति। निरासाय तत्स्वरूपमाह—रक्षेति। भोग्यस्तु प्रसिद्ध इति भावः॥ ५७॥

---

१. १२४—१२५.। २ अ० २. १. ४३.। ३ फ. ब. पदार्थानतीति।

एवं चतुर्विधस्याऽऽधेर्विशेषमाह—

**आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।**
**काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ ५८ ॥**

प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधिरधमर्णेन द्रव्य-दानेन न मोक्ष्यते तदा नश्यति,—अधमर्णस्य धनं प्रयोक्तुः स्वं भवति। कालकृतः कृत-काल:, आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः। स तु काले निरूपिते प्राप्ते 5

---

भूराधिरेव च।" तयोः प्रतिभूर्व्याख्यातः इदानीं क्रमप्राप्तत्वात् आधिरुच्यते—**आधिः प्रणश्येद्द्विगुण इत्यादि ॥ ५८ ॥**

विश्वासार्थं हिरण्यादि यदाधीयते स आधिः। स द्विविधः,—गोप्यश्चागोप्यश्च,— तत्र गोप्यः कदाचित्कालव्यवस्थया क्रियते । इयता कालेनामोक्षयतो ममायं प्रणङ्क्ष्यतीति-कदाचित्तु स मुग्धः स प्रणश्येत्। द्विगुणे धने यदि न दीयते इतरोऽपि। कालव्यवस्थया कृतं

---

### सुबोधिनी

[१]अकृतकालगोप्योऽकृतकालभोग्यश्चेति द्विप्रकार इति । अक्षरार्थमाह— प्रयुक्ते धन

### बालंभट्टी

एवं चाऽऽधेश्चातुर्विध्यमनेनोक्तम्। गोप्यः कृतकालोऽकृतकालश्च । एवं [२]भोग्यश्चेति तदाह— एवमिति । उक्तप्रकारेणेत्यर्थः। मोच्यते इति — मोक्ष्यते इति पाठान्तरम् । तत्र मोक्षमोक्षणे इति धातुर्बोध्यः। मोक्षत इति त्वपपाठः। अद्याध्य-र्थमाह—प्रयुक्ते इति, दत्ते इत्यर्थः। भूते सति अधमर्णस्वं तदीयस्वत्वम्। क्वचिद्व्यस्तपाठः। षष्ठ्यन्तमात्रपाठे स्वमित्यग्रिमस्यात्राप्यन्वयो बोध्यः। न केवलं तावदित्याह—धनेति । तृतीयपदार्थं पदार्थपूर्वकमाह--कालकृत इति।अस्य पूर्वानुक्तत्वभ्रमनिरासायाऽऽह--कृतेति। नन्वेवं सति तदसंगतिरन्यथा पूर्वविरोधापत्तिरत आह—आहितेति। पूर्वतो वैलक्षण्य-माह—स त्विति। शेषमाह—प्राप्ते इति । गते सतीत्यर्थः। अत एव पूर्वेणागतार्थत्व-

---

१ द. लगोप्याधेर्द्वै। २ फ. भोग्यो द्वेधेति।

नश्येत्—द्वैगुण्यात् प्रागूर्ध्वं वा । फलभोग्यः फलं भोग्यं यस्यासौ फलभोग्यः,–
क्षेत्रारामादिः—स न कदाचिदपि नश्यति । कृतकालस्य गोप्यस्य भोग्यस्य च तत्काला-
तिक्रमे नाश उक्तः "काले कालकृतो नश्येत्" इति ; अकृतकालस्य भोग्यस्य नाशाभा-
व उक्तः—"फलभोग्यो न नश्यति" इति । पारिशेष्यादाधिः प्रणश्येत् इत्येतदकृतका-
5 लगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे
चतुर्दशादिवसप्रतीक्षणं कर्तव्यम्,—बृहस्पतिवचनात् "हिरण्ये द्विगुणीभूते पूर्णे

## सुबोधिनी

इत्यादिना । चतुर्विधाधिष्वपि विशेषं विभज्य दर्शयति— कृतकालस्य गोप्यस्येति ।
अकृतकालगोप्याधेर्द्वैगुण्यातिक्रमे नाशः । कृतकालगोप्यभोग्याध्योस्तु कृतकालातिक्रमे
नाश इत्यभिहितम् । तत्र न द्वैगुण्यमात्र एव न च कालातिक्रममात्र एव नाशः, अपि तु
क्रियानवकाशोऽस्तीत्याह— द्वैगुण्यातिक्रमेणेति । अथ कृतकालस्य गोप्याधेर्धनद्वैगुण्ये

## बालंभट्टी

माह—द्वैगुण्यादिति। तद्वत् तुर्यपादार्थमाह—फलेति । उक्तसूत्रेणैव पूर्वनिपातस्तस्याकृ-
तिगणत्वादित्याह—फलमिति । तृतीयासमासस्तु वक्तुमुचितः । कदेति—द्वैवैगुण्ये काले च
प्राप्ते सत्यपीत्यर्थः। न चैवं वाक्यार्थत्रये त्रिषु विशेषलाभेऽपि तुर्ये तदलाभात् प्रतिज्ञाहानिर
तोऽन्यथा दुर्वचत्वात् व्युत्क्रमे सर्वत्र तेषु विभज्य तमाह–कृतेत्यादि । इदमुभयपरं संको-
चे मानाभावादित्याह—गोप्येति । अत एवाऽऽह—कृतेति । विशेषोक्तेराह—भोग्येति ।
अवेति । पर्यवस्यतीत्यर्थः । कृतकालगोप्याध्योः कृतकालातिक्रमे नाशः; अकृतकृतकाल-
गोप्याध्योर्द्वैगुण्यातिक्रमे स इत्युक्तं तत्र द्वैगुण्यतत्कालातिक्रममात्रयोरेव न सः। किं तु ततोऽ
प्यग्रे स्वल्पावकाशोऽस्तीति प्राग्वत् विशेषमाह—द्वैगुण्येति। तदेवाऽऽह—हिरण्ये इति।
बन्धकस्येति मध्यमणिन्यायेनान्वेति। प्रतीक्ष्य चेति पाठः।प्रतीक्षयेदित्यपपाठः।हिरण्ये द्विगुणी
भूते सति कृतावधौ बन्धकस्य काले पूर्णे च सति धनी उत्तमर्णः द्विसप्ताहं प्रतीक्ष्य बन्धकस्य
स्वामी भवतीत्यर्थः । द्विःसप्त द्विसप्तास्तेषामह्नां समाहारो द्विसप्ताहं चतुर्दशदिनानि । प्रती

१ क. 'फलं भोग्यं यस्यासौ फलभोग्यः' इति नास्ति । २ ब. कृतकालगोप्यभोग्याध्योः ।

काले कृतावधेः । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च ॥ तदन्तरा धनं दत्त्वा ऋणी बन्धकमाप्नुयात् । " इति । नन्वाधिः प्रणश्येदित्यनुपपन्नम्,—अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात्; धनिनश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात्; मनुवचनविरोधाच्च—" न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः । " इति । कालेन संरोधः कालसंरोधश्चिरकालमनवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न निसर्गोऽस्ति, नान्यत्राऽऽधीकरणमस्ति, न च विक्रयः। एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगत इति । उच्यते। आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः । तत्र धनद्वैगुण्ये नि-

## सुबोधिनी

नाशोऽभिहितः। तमाक्षिपति— नन्वाधिः प्रणश्येदित्यनुपपन्नमित्यादिना । परिहरति—— उच्यते आधीकरणमेव लोक इत्यादिना । सोपाधिकाचासौ स्वत्वनिवृत्तिश्च, तत्र हेतुः, सोपाधिका चासौ स्वत्वनिवृतिश्च तत्र हेतुः, सोपाधिका चासौ स्वत्वापत्तिश्च, तत्र हेतुरित्युभयत्रापि समासः । ननु भवत्वेवं लोकतः, तथाऽप्यधमर्णस्यात्यन्तिकस्वत्वनिवृत्तेरुत्तमर्णस्य चात्यन्तिकस्वत्वप्राप्तेश्चाभावादाधिनाशः, कथमित्यत आह— तत्र धनद्वैगुण्ये

## बालंभट्टी

क्षाफलमाह—तदन्तरेति । चतुर्दशदिनमध्ये इत्यर्थः । कृतकाले तथा प्रतिज्ञयोभयत्र नाशेऽप्यकृतकालगोप्याधौ स न सम्भवतीति पूर्वार्धोक्तमाक्षिपति--नन्विति । हेत्वन्तरमाह— मन्विति । तदेवाऽऽह—न चाधेरिति । तथाशब्दादप्रतीतेर्व्याचष्टे—कालेनेति । साधनं कृतेति समासः बहुकालेनेत्यर्थः। संरोधः स्थितिस्तदाह--चिरेति। न च विक्रयम् इति अस्तीत्यस्यानुषङ्गः । नन्वेतावताऽपि नोक्तार्थलाभोऽत आह —एवमिति । चिरकालावस्थानेनेत्यर्थः । आधीत्यस्यान्यत्रेत्यादिः अन्यथैतदसंगतिः स्पष्टैवेति भावः । सोपेति—सोपाधिकाचासौ स्वत्वनिवृत्तिश्च तस्यास्तत्र वा हेतुरित्यर्थः । एवमग्रेऽपि । स्वत्वनिवृत्तिस्वत्वापत्त्योः स्वाभाविकत्वाभावेन सोपाधिकेत्युभयत्र विशेषणं प्रसिद्धत्वादेरुभयत्रान्वयः। नन्वस्त्वेवं लोकतस्तथाऽप्यात्यन्तिकयोस्तयोरभावादाधिनाशः कथमत आह—तत्रेति । तत्र तस्याः तयोस्तद्धेतुत्वप्रसिद्धौ चेत्यर्थः—धनेति । अनेन बृहस्पतिवचनेन, तयोस्त-

---

१ ख. ग. घ. ङ. छ. ज. बन्धमवाप्नु० । २.—११.२७.—२८. । ३ क. धनिकत्वत्व० । ४.—८. १४३ । ५ क. नान्यदीयकरणमस्ति । ६ बं. संबाधः स्थितिस्तदाह ।

रूपितकाले प्राप्ते च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्याऽऽत्यन्तिकी स्वत्वनिवृत्तिः उत्तमर्णस्य चात्यन्तिकं स्वत्वं भवति । न च मनुवचनविरोधः; यतः—"न त्वेवाऽऽधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।" इति । भोग्याधिं प्रकृत्येदमुच्यते—" न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ॥ " इति । 5 भोग्यस्याऽऽधिश्चिरकालावस्थानेऽप्याधीकरणविक्रयप्रतिषेधेन धनिनः स्वत्वं न भवति। इहाप्युक्तम् —"फलभोग्यो न नश्यति" इति गोप्याधौ तु पृथगारब्धं मनुना—" न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ॥ " इति । इहापि वक्ष्यते, " गोप्याधिभोगे नो वृद्धिः " इति । " आधिः प्रणश्येद्द्विगुणे " इति तु गोप्याधिं प्रत्युच्यते इति सर्वमविरुद्धम् ॥ ५८ ॥

## सुबोधिनी

निरूपितकालप्राप्तौ चेति । अयमर्थः—"परिपूर्णे कृते काले धने च द्विगुणे सति । तदन्तरा धनं दत्त्वा ऋणी बन्धकमाप्नुयात् ॥" इति वदता बृहस्पतिना द्वैगुण्यानन्तरं कृतकालानन्तरमपि चतुर्दशदिनाभ्यन्तरे द्रव्यं दद्यान्नोत्तरत्रेति सूचितम् । तेन चात्यन्तं-द्रव्यदानं द्वैगुण्याद्यनन्तरं निवर्तते । निवृत्ते च द्रव्यदाने आधिः प्रणश्येत्'' इत्यनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिः, उत्तमर्णस्य चात्यान्तिकी स्वत्वप्राप्तिरुपदिश्येतेति । यतो न त्वाधौ सोपकारे इति । सोपकारे आधौ भोग्याधाविति यावत् । तत्राप्यकृतकाल इति बोद्धव्यम् ॥ ५८ ॥

## बालंभट्टी

स्यात्यन्तानिवृत्तेस्तयोस्तदुभयं क्रमेण मूलवचने भवतीत्यर्थः। तदन्तरेत्यादि वदता बृहस्पतिना तयोरनन्तरमपि चतुर्दशदिनमध्ये पूर्वद्रव्यं देयं नाग्रे इति सूचितम् तथा च तदन्तरप्रत्यन्तद्रव्यदाननिवृत्तिलाभेन निवृत्ते द्रव्यदाने आधिः प्रणश्येदित्यनेनाधर्मणस्यात्यन्तिकी स्वत्वनिवृत्त्यपात्तिरुत्तमर्णस्य चात्यान्तिकी स्वत्वप्राप्तिरुपदिश्यते अन्यथा वचनवैयर्थ्यं स्पष्टमेवेति भावः। एवमाद्यदोषमुद्धृत्य द्वितीयमुद्धरति—न चेति। सोपकारे उपकार सहिते भोग्याधाविति यावत्। तत्राप्यकृतकाले इति बोध्यः। कुसीदेन तदर्धद्रव्यप्रयोगेन कृता अत एव तथैव तत्तात्पर्यमाह—भोग्येति।निषेधेनेति—तयोर्निषेधेनेत्यर्थः। उक्तमिति-अत्रैव वचने इति भावः। न त्वेवं मनोर्न्यूनता, गोप्याधिविषयानुक्तेरत आह— गोप्येति । अत एव बलादित्युक्तं वक्ष्यते । अव्यवहितमेवाऽऽहैतमेव । अत एवाविरोधं स्पष्टयन् प्रकृतिमाह—आधिरिति ॥ ५८ ॥

१.—८. १४३. (पूर्वार्धः) । २.— ८. १४३. (उत्तरार्धः) । ३.—८. १४४ । त चोत्पन्नद्र ।

किं च—

**गोप्याधिभोगे नो वृद्धिः सोपकारे[1]ऽथ हापिते ।**
**नष्टो देयो विनष्टश्च दैवराजकृताद्दते ॥ ५९ ॥**

गोप्याधेस्ताम्रकटाहादेरुपभोगे न वृद्धिर्भवति । अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या—समयातिक्रमात् । तथा सोपकारे उपकारकारिणि[2] बलीवर्द- 5 ताम्रकटाहादौ भोग्याधौ सवृद्धिके हापिते हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिरिति सम्बन्धः । नष्टो विकृतिं गतः ताम्रकटाहादिश्च छिद्रभेदनादिना[3]

तत एव प्रणश्यतीत्यत आह—"फलभोग्यो न नश्यति" इति । फलं भुज्यते यस्य स फल भोग्यः, फलं वृद्धिः, स्पष्टमन्यत् ॥५८ ॥

किं च— **गोप्याधिभोगे नो वृद्धिरित्यादि ॥ ५८ ॥**

गोप्याधिभोगे नो वृद्धिः;—प्रणश्येदिति भावः । सोपकारेऽथेत्यपिशब्दार्थोऽथशब्दः सोपकारेऽप्याधौ वृद्धिर्न स्यादित्यर्थः । वाहदोहादियुक्तो गवादिः सोपकारः, अविकाराशङ्कया

## सुबोधिनी

गोप्यभोग्याधिसाधारणं धर्ममाह— नष्टो विकृतिं गत इति । उभयसाधारण्यमेव

## बालंभट्टी

किं चेति — विशेषान्तरमत्राऽऽहेत्यर्थः । नो इत्यस्य व्याख्या—नेति । ननु दोषाल्पत्वादयुक्तमत आह — अपीति । समयः संकेतः। चार्थमाह—तथेति । अथेति अत्र पाठान्तरम् । अर्थः स एव। उपकारसाहित्यं तत्कर्तृत्वेन नान्यथेत्याह—उपेति । अत्र समयवशेन द्वैविध्यादाह—सवृद्धिके इति । अन्यथैतदसङ्गतिः स्पष्टैव । स्वरूपहाने रविवक्षितत्वादाह—व्यवेति । उक्तहेतोरेवानुषङ्गमाह- नो वृद्धिरिति । उत्तरार्धं विवृण्वन् गोप्यभोग्यादिसाधारणं धर्ममाह—नष्टो वीति । एतेन प्रसिद्धार्थनिरासः । अग्रिमेण पौनरुक्त्यापरोः तृतीयान्तं पूर्वान्वयि । छिद्रं च भेदनं विदारणं च तदादीत्यर्थः । योग्यतया

---

१ क. च. ङ. रेचहापिते । २ क. ङ. उपकारिणि । ३ क. ग. घ. ङ. छ. ज. भेदादिना।

पूर्ववत्कृत्वा देयः। तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः। उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या। भोग्याधिर्यदि नष्टस्तदा पूर्ववत्कृत्वा देयः; वृद्धिसद्भावे वृद्धिर्हातव्या। विनष्टः आत्यन्तिकं नाशं प्राप्तः, सोऽपि देयो मूल्यादिद्वारेण। तद्दाने सवृद्धिकं मूल्यं[1] लभते धनी[2]। यदि[3] न ददाति तदा मूलनाशः,—"विनष्टे मूलनाशः स्याद्दैवराजकृताद्दते।" 5 इति[4] नारदवचनात्। दैवराजकृताद्दते--दैवमग्न्युदकदेशोपप्लवादि, दैवकृताद्विनाशाद्विना; तथा स्वापराधरहिताद्राजकृतात्। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं

पृथग्वचनम्। भावित इति—भोक्त्राऽभ्युपगते साक्षिभिर्वा भुक्तोऽनेनायमित्येवं भाविते नष्ट

## सुबोधिनी

विविनक्ति- तत्र गोप्याधिर्नष्टश्चेदित्यादिना। विनष्ट आत्यन्तिकं नाशं प्राप्त इत्यादिकमप्युभयाधिविषये बोद्धव्यम् ॥ ५९ ॥

## बालंभट्टी

आह—पूर्ववदिति। उभयसाधारण्यमेव विशदयति। तत्रेति। तयोर्मध्ये इत्यर्थः। नष्टः तावन्मात्रम्। चेत् यदि। तदेति शेषः। एवमग्रेऽपि। अत एवाऽऽह—उपेति। अपिना नाशसमुच्चयः। वृद्धिरपीति। प्रथमपादोक्तत्वात् अपिना पूर्ववत् करण समुच्चयः। वृद्धिर्वेति[5] पाठे वा समुच्चये ॥असद्भावे तु तावन्मात्रमेवेति बोध्यम्। द्वितीयस्याप्युभयाधिविषयत्वं कथयन् साधारणधर्ममाह — विनष्ट इति। वि पदलभ्यमाह—आत्यन्तिकेति। चार्थमाह—सोऽपीति। तत्स्वरूपस्यैवाभावादाह—मूल्यादीति। तद्दाने धनिना तस्मिन् दत्ते स्वयं[6] तादृशं सर्वं स लभते। मूल्यं मूलम्। एवमग्रे सर्वत्र धनीत्यस्य मध्यमणिन्यायेनान्वयः। विशेषमाह —यदीति। मूलनाश इति। तथा सति सुतरां वृद्धिनाश इति भावः। विनष्टे अदत्ते[7] तथेति शेषः। अव्यवहितापवादत्वेन तुर्यपादं सप्रतीकं व्याचष्टे—दैवेति। अत एवाऽऽह—विनाशादिति। क्वचित्तत्रापि स्थले विशेषमाह—

१ क. ङ. मूलं। २ ग. घ. धनीति नास्ति। ३ यदा। ४.--१. १२६.। ५ ब. वृद्धिरपीति द्वितीयपादोक्तत्वात् द्विर्वेति। ६ फ. ब. स्वीयं ७ ब. उद्दण्डे (?)।

दातव्यम् अधमर्णेनाऽऽध्यन्तरं वा; यथाऽऽह—"स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते। आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्॥" इति। तत्र स्रोतसाऽपहृते इति दैवकृतोपलक्षणम् ॥ ५९ ॥

अपि च—

**आधेः स्वीकरणात्सिद्धीरक्ष्यमाणोऽप्यसारताम् ।** 5
**यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥**

आधेर्भोग्यस्य गोप्यस्य च स्वीकरणादुपभोगादाधिग्रहणसिद्धिः । न साक्षिले-

आधिर्विनष्टो वा दैविकात् । अन्याद्युपद्रवात् राजकीयाद्वा नाधमर्णिकाय देयः । स्वरूपहानिः विनाशः ; अपहारस्तु नाशः, स्पष्टमन्यत् ॥ ५९ ॥

ऋणिकार्पितस्य – **आधेः स्वीकरणादित्यादि ॥ ६० ॥**

असारतां यातश्चेदन्य आधेया धनं वा धनिने वहेत् । समर्पितस्यापि स्वीकरणे नो-

## सुबोधिनी

आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादुपभोगादिति । गोप्यस्य स्विकरणमात्रं भोग्यस्योपभोग इति द्रष्टव्यम् । भोग्यस्योपभोगेनैव सिद्धिरित्यत्र नारदवचनं प्रमाणयति–

## बालंभट्टी

स्वापेति । कृतात् विनाशाद्विनेत्यनुषज्यते । अनेन सूचितं तत्र विशेषमाह—दैवेति । [१]अधमर्णस्यैव वस्तुनाशो नोत्तमर्णस्येति भावः। तदसम्भवे आह  आध्यन्तरं वेति। स्रोतसा नद्यादिसंबन्धिना। राज्ञेति-अधिकृतद्वारेति भाव.। अत एव णिच् । अथशब्दो अव्यवहिततदानन्तर्ये। धनं सवृद्धिकम् । तत्र न्यूनतां निराचष्टे–तत्रेति । तयोर्मध्ये इत्यर्थः । द्वितीयस्य कण्ठत उक्तत्वादिति भावः । दैवेति—दैवकृतमात्रेत्यर्थः ॥ ५९ ॥

अपि चेति । अन्यदप्याधिविषये आहेत्यर्थः। संकोचे मानाभावादुभयसाधारण्येन व्याचष्टे— आधेरिति । अत एव गोप्यस्य स्वीकरणमात्रत्वेन निर्वाहेऽपि भोग्येऽनिर्वाहात्तदुपलक्षणमित्याह — उपेति । तथा च यथासंख्यमन्वयः कृतः । साकांक्षत्वादाह — आधीति । हतुव्यवछेद्यमेवाऽऽह — न साक्षीति । मात्रपदे

---

१ ब. ईदृगस्यैव ।

ख्यमात्रेण, नाप्युद्देशमात्रेण ; यथाऽऽह नारदः—"आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा। सिद्धिरस्योभयस्यापि भोगो यद्येऽस्ति नान्यथा"॥ इति। अस्य च फलं "आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा॥" इति। या स्वीकारान्ता क्रिया सा पूर्वा बलवती, स्वीकाररहिता तु पूर्वाऽपि न बलवतीति। स चाधिः प्रयत्नेन रक्ष्यमाणोऽ-

पभोग्यत्वसिद्धिः स्यात्। यत्नेनापि तु रक्ष्यमाणोऽप्यसारतां यातश्चेद्यदि पाल्यमानोऽप्य-

## सुबोधिनी

आधिस्तु द्विविधः प्रोक्त इति। अथ वाऽऽधेर्गोप्यस्य भोग्यस्य च स्वीकरणादित्यस्यान्या व्याख्या; तद्यथा—स्वीकरणशब्दस्यैव पर्याय उपभोगादिति। अयमभिसन्धिः—भुजिः पालने अभ्यवहरणे च वर्तते। गोप्याधावुपभोगो नाम परिपालनम्। अत्रोपेत्युपसर्गो व्याप्तौ वर्तते। तथा चोपसर्गसूत्रम् "उप सामर्थ्यसामीप्यव्याप्त्याचार्यकरणदोषख्यापन - दाक्षिण्यवीप्सारम्भपूजोद्योगकार्यार्हत्यमरणानशनेषु" इति। भोग्याधावुपभोगो नामाभ्यवहरणं फलाद्युपभोग इति यावत्। अस्मिन् व्याख्याने उभयत्र नारदवचनमपि प्रमाणयति— आधिस्तु द्विविध इति। अस्य च फलमिति।"आधेः स्वीकरणात् सिद्धिः" इत्यस्य वाक्यस्येत्यर्थः। फलत्वमेव विविच्य दर्शयति—स्वीकारान्ता क्रियेति। "रक्ष्यमाणोऽप्यसारताम्" इत्यमुमंशं व्याचष्टे "स चाऽऽधिः प्रयत्नेन" इत्यादिना॥ ६०॥

## बालंभट्टी

न विशिष्टस्य सिद्धिजनकत्वं सूचितमत एव प्रागवधारणानुक्तिः। उद्देशो वस्तुसंकीर्तितम्। उपदेशेति पाठांतरम्। भोग्यस्य भोगेनैव सिद्धिरित्यत्र मानमाह—यथाऽऽहेति। यद्वा स्वीकरणादित्यस्य व्याख्या—उपभोगादिति। भुज पालानाभ्यवहारयोरित्युक्तेर्गोप्याधावुपभोगः परिपालनम्। भोग्याधौ अभ्यवहारणं फलाद्युपभोग इति यावत्। उपशब्दस्तु सामीप्यसामर्थ्यव्याप्त्याचर्यकृतिमरणदोषदाक्षिण्यवीप्सारंभपूजनाध्ययनेषु वर्त्तत इति यथासंभवं योज्यः। अत्र पक्षे उभयत्र मानमाह—यथाऽऽहेति। भागे इति-उक्तद्वयर्थकमिदम्। अन्यथा उक्तभोगाभावे साक्ष्यादिमात्रेण नेत्यर्थः। ननु किमनेन प्रकृते साधितमत आह— अस्य चेति। आधेः स्वीकरणात् सिद्धिरित्यस्येत्यर्थः। इतीति--इत्युक्तार्थसिद्धिः फलमित्यर्थः। फलत्वमेव विशदयति—येति। स्वीकारपदमुक्तार्थकम्। रक्ष्यमाणोऽपीत्यादि व्याचष्टे— स चाऽऽधिरिति। द्विविध इत्यर्थः। शक्तसामर्थ्यादाह— प्रयत्नेनेति। अविरोधायाऽऽह-

१. क. ङ. च. छ. उपदेश। २. ज. यद्यस्य। ३.—१. १३८.। ४. व्य. २३.। ५. थ. द. अभ्यवहारे च। ६. थ. द. षाख्यान। ७ 'त्य' इत्यस्य स्थाने 'न्त्य' इति भवेत्। ८. त. बलमे। ९. त. द. या स्वीका। १० फ. ब. "सामीप्य सामर्थ्यव्याप्त्याचार्यकरणदोषख्यापनदा वीप्सारम्भ क्षिण्य पूजोद्योगकार्य हासमरणस्वादनानशनेषु"

पि कालवशेन यद्यसारतामविकृत एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां गतस्तदाधिरन्यः कर्तव्यो धनिने धनं वा देयम् । "रक्ष्यमाणोऽप्यसारताम्" इति वदताऽऽधिः प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम् ॥ ६० ॥

" आधिः प्रणश्येत् द्विगुणे " इत्यस्यापवादमाह—

**चरित्रबन्धककृतं स वृद्ध्या दापयेद्धनम् ।** 5

**सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥**

चरित्रं शोभनाचरितं, चरित्रेण बन्धकं चरित्रबन्धकं, तेन यद्द्रव्यमात्मसात्कृतं परा-

सारीभूतो ततोऽन्य आधेयः स्यात् । यद्वा यस्मिन्न ववधन (?) भावाद्धनी भवेत । धनिने वा धनं सोदयं देयम्। आध्यतन्रं वा कार्यमित्यर्थः ॥ ६० ॥

यथा अर्धाधिरपुष्यमाण एव स तु बन्धक मात्रतया क्रियते । तदा—**चारित्रबंधककृतमित्यादि ॥ ६१ ॥**

चरित्रबन्धककृते सोदयमर्थं दाप्यः। नाधिन्यागममात्रेण मोच्य इत्यर्थः । अन्यत्राप्येवमेव विश्वासव्यवहारे सत्यङ्काराय च यद्द्रव्यमर्पितं तद्विसंवदता द्विगुणं प्रत्यर्पणीयम् । सत्य-

सुबोधिनी

यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतमित्युक्तं पूर्वत्र तत्राऽऽत्मसात्कृतं द्रव्यमाह—

बालंभट्टी

कालेति। चेदर्थमाह–यदीति। असारेत्यादिव्याख्या—अविकृत एवेति। विद्यतेः प्रागुक्तत्वेनापौनरुक्त्यायेदमुक्तम् । ततः तदा। यद्वा तत इत्यस्यान्य इत्यत्रान्वयः । तदेति शेषः । तदेत्येव पाठान्तरम् तदेति सूचितार्थमाह–रक्ष्येति ॥ ६० ॥

अन्यथोक्तिवैयर्थ्यं स्पष्टमेव— इत्यस्येति । इति पूर्वार्धोक्त स्याकृतकालगोप्याधिविषयकस्य तन्नाशस्येत्यर्थः । शोभनेति — सदाचरणमित्यर्थः । समासौ क्रमेणाऽऽह— चरित्रेणेत्यादिना । विनिगमकाभावादाह — परेति । एवपदस्य

१ क. ङ. च. शोभनं चरितं । २ क. झ. ' चरित्रबन्धकम्' इति नास्ति । ३. ब. तदाचरण ४. फ. ब. सुष्ठुयासाधनकृतेतिसमासौ ।

धीनं वा कृतम् । एतदुक्तं भवति—धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम्, यदि वाऽधमर्णस्य स्वच्छाशयत्वेना-[1] ल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेव धनिनाऽधमर्णाधीनं कृतमिति तद्धनं स[2] नृपो वृद्धया सह दापयेत् । अयमाशयः—एवंरूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति। किं तु
5 स्वयमेव द्विगुणं दातव्यमिति । तथा सत्यङ्कारकृतं—करणं कारः, भावे घञ्, सत्यस्य कारः सत्यङ्कारः "कारे सत्यागदस्य"[3] इति मुम्—सत्यङ्कारेण कृतं सत्यङ्कार-कृतम् । अयमभिसन्धिः—यदा बन्धकार्पणसमय एवेत्थं परिभाषितं 'द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यं नाधिनाशः' इति, तदा तद्द्विगुणं दापयेदिति अन्यो-

ङ्कारिणस्तु विसंवदतस्तद्धानिरेव; यथाऽऽह कात्यायनः—"सत्यङ्कारविसंवादे द्विगुणं प्रति-दापयेत् । अकुर्वतस्तु तद्धानिः सत्यङ्कारप्रयोजनम् ॥" इति ॥ ६१ ॥

## सुबोधिनी

-धनिनः स्वच्छाशयत्वेनेति । पराधीनकृतद्रव्यमाह— यदि वाऽधमर्णस्येति । सत्यङ्कार-मित्येतं शब्दं निर्वक्ति—करणं कार इत्यादिना । चारित्रबन्धककृतमित्येतत् प्रकारान्तरेण व्याचष्टे—अन्योऽर्थ इत्यादिना ॥ ६१ ॥

## बालंभट्टी

शाब्दमर्थमुक्त्वा तात्पर्यार्थमाह —एतदिति । तत्रात्मसात्कृतमाह— धनिन इति । द्वितीयमाह— यदि वेति । वहिति(?)तदर्थमव्ययं भिन्नं पदं वा। एवं पदार्थानुक्त्वा वाक्यार्थ-माह—तदिति । चारित्रबन्धककृतामित्यर्थः। स इत्यस्य व्याख्या—नृप इति । सह युक्ते तृतीयेत्याह–सहेति । तदपवादत्वं स्पष्टयितुमाह —अयमाशय इति । एवं रूपमिति–चारित्रहेतुकमित्यर्थः । उत्तरार्द्धं व्याचष्टे—तथेति । तत्रादौ सत्यमिति पदार्थमर्थान्तरस्या नुपयोगिनो निरासायाऽऽह–करणमित्यादि । सत्यङ्कार इति समयकरणमित्यर्थः। शपथकरण-मिति यावत् । सूत्रे कार इति घञन्ताणन्तयोस्तन्त्रेण निर्देश इति भावः । शब्दस्य वाक्या-र्थस्यास्फुटत्वादाह—अयमिति, आशय इत्यर्थः । तत् सत्यङ्कारकृतं द्रव्यम् । सम्भवा

---

१. क. ग. स्वेच्छाश । २. च. छ. सवृद्धिनृपो वृद्धया । ३. अ० ६. २. ७०. ।

ऽर्थः । चारित्रमेव बन्धकं चरित्रबन्धकं चारित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते । यत्र तदेवाऽऽधीकृत्य यद्द्रव्यमात्मसात्कृतं तत्र तदेव द्विगुणीभूतं दातव्यं नाधिनाश इति । आधिप्रसङ्गादन्यदुच्यते—सत्यङ्कारकृतामिति क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणं दातव्यम्। तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यवस्थाऽतिवर्ती[1] तेन तदेव हातव्यम्[2]। 5
इतरश्चेद्व्यवस्थाऽतिवर्ती तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिदापयेदिति ॥ ६१ ॥

किं च—

**उपस्थितस्य मोक्तव्य आधिस्स्तेनोऽन्यथा भवेत् ।**
**प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६२ ॥**

धनदानेनाऽऽधिमोक्षाणायोपस्थितस्याऽऽधिर्मोक्तव्यो धानिना, न वृद्धिलोभेन स्थाप- 10

यदा त्वृणिकः सोदयं द्रव्यं आदायोपस्थितस्तदा — **उपस्थितस्य मोक्तव्य इत्यादि ॥ ६२ ॥**

प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् । सोऽयं द्रव्यमादायोपस्थितेआधिमनुत्सृजन् प्रयोक्ता दण्डयः स्यात्। यदा त्वसंनिहितो धनप्रयोक्ता तदा तस्मिन् प्रयोजके तत्कुटुंबे

बालंभट्टी

दाह—अन्योऽर्थ इति । पद्यस्येति भावविशेषणम् । समासमाह—चरित्रमिति । अत्र पक्षे चरित्रशब्देन सदाचरणं नोच्यते ; किन्तु तज्जन्यं फलमित्याह — चरित्रेति । अग्रे समासः प्राग्वदेवेति सूचयन् वाक्यार्थमाह—यत्रेति । तदेव चरित्ररूपबन्धकमेव । तदेव आत्मासात्कृतं द्रव्यमेव । प्रकृतासंबद्धत्वादाह—आधीति। पदार्थः प्रागुक्त एवेतिवाक्यार्थमाह --क्रयेति । आदिना दानप्रतिग्रहादि । निमित्ताभावे तथा कारणानौचित्यादाह—व्यवस्थानीति। विशेषमाह—तत्रापीति, तयोर्मध्येऽपीत्यर्थः । व्यवेति—तामुल्लंघ्य वर्त्तत इत्यर्थः । तदेति शेषः। इतरः गृहीता ॥ ६१ ॥

किंचेति — प्राग्वत् । योग्यतया आह — धनेति । अधमर्णस्येति भावः । एतत्तात्पर्यार्थमाह — न वृद्धीति । अन्यथेत्यस्य व्याख्या —

१, क. वर्ती भवति तेन । २ ख. घ. दातव्यं ।

यितव्यः । अन्यथा अमोक्षणे स्तेनः चोरवद्दण्ड्यो भवेत्[1] । असन्निहिते पुनः प्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं निधायाधमर्णकः स्वीयं[2] बन्धकं गृह्णीयात् ॥ ६२ ॥

अथ प्रयोक्ताऽप्यसन्निहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति, यदि वा असंनिहिते प्रयोक्तर्याधिविक्रयेण धनदित्साधमर्णस्य तत्र किं कर्तव्यमित्यपेक्षित आह—

5

**तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।**

समर्प्य द्रव्यं आधिमाप्नुयात् निस्संशयं गृह्णीयादित्यर्थः । एवं धनिककुले द्रव्यं समर्पयित्वाऽऽधिर्ग्राह्यः ॥

**तत्कालकृतमूल्यो वा इत्यादि ॥ ६३ ॥**

तत्काले कृतं यन्मूल्यं तद्धनिकेन देयमित्येतया परिभाषया वृद्धिशून्यो धनिकहस्ते·

## सुबोधिनी

असान्निहिते पुनः प्रयोक्तरीति । प्रयोक्ता ऋणप्रयोक्ता उत्तमर्ण इति यावत् ॥ ६२ ॥

'अथ प्रयोक्ताऽप्यसान्निहितः तदाप्ताश्च धनस्य गृहीतारो न सन्ति' इत्यस्यांशस्यो·

## बालंभट्टी

अमोक्षणे इति । तावन्मात्रे इष्टापत्तेरतिदेशपरतया लभ्यं तात्पर्यार्थमाह—चोरेति। असतीति छेदेन नाशाविवक्षया द्वितीयाधार्थमाह—असन्नीति । पुनः तु । प्रयोजक इत्यस्य व्याख्या—प्रयोक्तरीति । ऋणस्येति शेषः । धनदातर्युत्तमर्णे इत्यर्थः । यथा श्रुतार्थे बाधादतो लक्ष्यार्थमाह —तदाप्तेति । अर्थादाह — सवृद्धीति । न्यस्येत्यस्य व्याख्या—निधायेति । आधिमित्यादेरर्थमाह—स्वीयमित ॥ ६२ ॥

उत्तरावतरणमाह—अथेति। शङ्कान्तरमाह[3]—यदि वेति। दित्सा तद्दानेच्छा। षष्ठ्यन्तस्य पूर्वान्वयः। तत्र उभयत्र वक्ष्यमाणवचने वाशब्देनार्थद्वयसूचनाच्छब्दद्वयमत्र फलतोऽव्याचष्टे—

१ ख. भवति । २ क. स्वयं । ३ फ. शकायामस्यां शङ्कान्तरमाह ।

तस्मिन्काले यत्तस्याऽऽधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत् न तत ऊर्ध्वं विवर्धते, यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति यावद्वा तन्मूल्यद्रव्यमृणिने प्रवेशयाति ॥ ६२ ॥

यदा तु द्विगुणीभूतेऽपि धने द्विगुण धनमेव ग्रहीतव्यं न त्वाधिनाश इति विचारितमृणकाल एव, तदा द्विगुणीभूते द्रव्ये असन्निहिते चाऽधमर्णे धनिना किं कर्तव्यमित्यत आह— 5

विना धारणकाद्वाऽपि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥

धारणकात्[1]—अधमर्णाद्विना अधमर्णे असन्निहिते साक्षिभिस्तदाप्तैश्च सह

तिष्ठेत्। यदा तु धनं द्विगुणीभूतं ऋणिकश्चासन्निहितः, तदा तत्काले श्रावयित्वाऽऽधिं निर्विकल्पं गृह्णीयात्,—विनैव धारणकात् ससाक्षिकं विक्रीणीतेत्यर्थः ॥ ६३ ॥

सुबोधिनी

त्तरं—तास्मिन् काले यत्तस्याऽऽधेरिति। "यदि वा सन्निहिते प्रयोक्तरि" इति यदुक्तं तत्रोत्तरं—यावद्वा तन्मूलद्रव्यमिति ॥ ६२ ॥

बालंभट्टी

तस्मिन्निति,—मोक्षणोद्यमकाले इत्यर्थः। षष्ठ्यर्थे बहुव्रीहिः। उभयत्राऽऽधिरन्यपदार्थ इति शब्दार्थः स्पष्ट एवेति सूचयति—यत्तस्येति। तत्रेत्यस्य व्याख्या सर्वामिति न्यायेन—तत्रैवेति। तस्याप्यर्थमाह— धनिनीति। अस्यापि तात्पर्यमाह—न तत इति[2]। अथ प्रयोक्तेत्याद्याशङ्कोत्तरं वाशब्दसूचितमाह—यावद्धनीति। वाशब्दसूचितं कथयन्नेव यदि वेत्यादिद्वितीयाशङ्कोत्तरमाह—यावद्वेति। विक्रयेच्छात आह—तन्मूल्येति। ऋणिन इति—अधमर्णस्यान्तिकं प्रापयतीत्यर्थः ॥ ६२ ॥

उत्तरानुरोधेनोत्तमर्णस्यैवेदमित्याह—ग्रहीतव्यमिति। त्वयेति शेषः। विचारितमिति—अधमर्णेनेति भावः। निहिते चेति पाठः। वेति पाठे स चार्थे। धारणकादिति पाठे बाहुलकात् कर्तरि ल्युडन्तात् स्वार्थे कः। आधिं धारयति धारणकस्तस्मात्। यद्वा धारणं करोतीति णिजन्तात् ण्वुल्। धारणिकादिति पाठे आधेर्धारण यस्यास्तीति मत्वर्थे नजिति (?) केचित्। तदर्थमाह—अधेति। मरणनिरासायाऽऽह—अधमर्णेऽसन्नीति। अपीत्यस्य ससाक्षिकमित्यत्रान्वयेन तत्समुच्चितमाह—तदाप्तैश्चेति।

१ क. ख. ङ. ग. च. छ. ज. धारणिकात्। २ ब. एतदनन्तरं 'स्थिते' आधिं 'सूचयन्' इति वर्तते।

तमाधिं विक्रीय तद्धनं गृह्णीयाद्धनी । वाशब्दो व्यवस्थितविकल्पार्थः । यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यं न त्वाधिनाश इति न विचारितं तदा—"आधिः प्रणश्येद्द्विगुणे" इत्याधिनाशः, विचारिते त्वयं पक्ष इति ॥ ६३ ॥

भोग्याधौ विशेषमाह—

5 **यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।**
**मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६४ ॥**

यदा प्रयुक्तं धनं स्वकृतया[2] वृद्ध्या द्विगुणीभूतं तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने[3] वृद्ध्यर्थं प्रथमदिवसादारभ्य प्रयोक्त्रा भुज्यमानेऽपि—**यदा तु द्विगुणीभूतमित्यादि ॥ ६४ ॥**

---

सुबोधिनी

मूलवचनस्थस्य वाशब्दस्याभिप्रायमाह—वाशब्दो व्यवस्थितविकल्पार्थ इति । व्यवस्थितविकल्पार्थत्वमेव विभज्य दर्शयति—यदर्णग्रहणकाल इत्यादिना । विचारिते त्वयमिति । अस्मिन् वचने अभिहित इत्यर्थः ॥ ६३ ॥

यदा प्रयुक्तं धनमिति,—अयमाशयः—ऋणत्वेन प्रयुक्ते धने वृद्ध्या सह द्विगुणे जाते पश्चादाधिर्दत्तो भोगार्थं यदा, तदा आधेः सकाशादुत्पन्ने धने द्विगुणे धनिनः

बालंभट्टी

विक्रीणीतेत्यस्य तात्पर्यार्थमाह—विक्रीयेति । यथाश्रुतविकल्पस्य प्राग्वदसंभवात्—वाशब्द इति । तत्त्वमेवाऽऽह—यदर्णेति। तदा तस्मिन्काल एवेत्यर्थः। विचारिते त्विति धनमेव तावत् ग्रहीतव्यं न त्वन्यमितीति शेषः। अयमिति—विना धारेति प्रकृतवचनोक्त इत्यर्थः। तथा च सिंहावलोकनन्यायेन व्यवहितमपि तत् बुद्धिस्थीकृत्य पक्षान्तरत्वेनेदमुक्तमित्यर्थः ॥ ६३ ॥

प्रयुक्तं उत्तमर्णेन केवलम् ऋणत्वेन दत्तम् । कृतया स्वकृतया । क्वचित्तथैव पाठः । तदा द्विगुणीभवनकाले । आधौ कृते सति तन्निर्वाहार्थमिति भावः । कृते इति—शेषपूरणम्। तदुत्पन्ने इत्यस्य व्याख्या—आधीति ; फलभूते इत्यर्थः । धनिन[4] इति—शेषोऽयम् । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । प्रविष्टे सति ऋणत्वेन केवलं प्रयुक्ते धने वृद्ध्या सह द्विगुणे जाते पश्चादाधिर्दत्तो भोगार्थो यदा, तदा आधेः सकाशादुत्पन्ने धने द्विगुणे धनिनि प्राप्ते सत्याधिर्मोक्तव्यस्तेनेत्यर्थः । संभवात् व्याख्या-

---

१ व्यव० ५८। २ ज. स्वीकृतया। ३ क. झ. आध्युत्पन्न इति नास्ति। ४.—पृ० ४५९.।

द्रव्ये द्विगुणे धनिनि[1]ःप्रविष्टे धनिनाऽऽधिर्मोक्तव्यः।यदि वाऽऽदावेवाऽऽधौ दत्ते द्विगुणीभूते द्रव्ये त्वयाऽऽधिर्मोक्तव्य[2] इति, परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदाऽऽधौ भोगार्थे धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे[3] सत्याधिर्मोक्तव्यः। अधिकोपभोगे तदपि देयम् । सर्वथा सवृद्धिकमूल्यर्णापाकरणार्थाध्युपभोगविषयमिदं वचनम् ; तमेनं क्षयाधिमाचक्षते लौकिकाः । यत्र तु वृद्ध्यर्थ एवाऽऽध्युपभोग इति परिभाषा, तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूल्यदानं, तावदुपभुङ्क्त एवाऽऽधिम्। एतदेव स्पष्टीकृतं बृहस्पतिना—"ऋणी बन्धमवाप्नुयात् । फलभोग्यं पूर्णकाले दत्त्वा द्रव्यं तु सामकम् ॥ यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी । ऋणी च न लभेद्वन्धं पर-　　5

सुबोधिनी

**प्रविष्टे सति आधिर्मोक्तव्य इति । यदि वाऽऽदावेवेति—,अयमाशयः— ऋणग्रहणकाल एवाऽऽधिं ददद्धमर्ण एवं ब्रवीति 'यदा द्रव्यं वृद्ध्या सह द्विगुणं जायते, तदा अयमाधिस्त्वया भोक्तव्यो न ततः पूर्वम्' इति । एवं च परिभाषया यावत् द्विगुणं भवति, तावदाधेर्भोगाभावः । अथ वा यावत् द्विगुणं भवति, तावत् ऋणग्रहणकालदत्तस्याऽऽधेर्दैविकराजिकव्यसनरूपकारणान्तरवशात् भोगाभावः । एव-**

बालंभट्टी

**नान्तरमाह — यदि वेति । आदावेव ऋणग्रहणकाले एव। भोगाभावे परिभाषारूपं हेतुमाह—द्विगुणीति । भोक्तव्य इति पाठः। न इत आरभ्येति भावः। ऋणग्रहणकाल एवाऽऽधिं ददद्धमर्णः एवं ब्रवीति 'यदा द्रव्यं वृद्ध्या द्विगुणीभूतं तदा आधिर्भोक्तव्यः' इति; उत्तमर्णोऽपि तथैवानुजानीते इत्येवं परिभाषया बाधेन पूर्वं भोगाभावेन द्वैगुण्ये जाते, ततो भोगे प्रारब्धे स्वीयद्विगुणधनलाभानन्तरमाधेरुपभोगाभावः, किंतु मोचनम् इत्यर्थः। कारणान्तरेण भोगाभावसंभवादाह— कारणान्तरेण वेति । उत्तमर्णस्य स्वच्छाशयत्वेनालुब्धत्वेन च धने द्विगुणेऽहमाधिं भोक्ष्ये नेत आरभ्येति प्रतिज्ञायामधमर्णेन तथा कुर्वित्यङ्गीकृते उत्तमर्णस्य सत्यवचनत्वरूपकारणान्तरेण बाधेन पूर्वं भोगाभावेनेत्याद्यर्थः। स्वरूपतः प्रवेशस्य पूर्वमेव सत्वादाह—भोगार्थमिति । तदपि अधिकमुपभुक्तमपि । अपिनाऽऽधिसमुच्चयः। तात्पर्यार्थमाह—सर्वथेति; पक्षद्वयेऽपीत्यर्थः। आध्युपभोगेति— तदपाकरणार्थोऽयं आध्युपभोगस्तद्विषयक इत्यर्थः। उपभोगेत्येव पाठो वा। क्षयाधिमिति —तादृशऋणनाशकाधिमित्यर्थः। तथा च पक्षद्वयेऽपि द्वैगुण्ये सति भोगे कृते स्वीयद्विगुणलाभे एवाऽऽधिर्मोक्तव्यो न ततः प्रागिति सिद्धम्। विशेषमाह—यत्र त्विति । पूर्वानुषङ्गार्थमाह—ऋणीति । स्वरसतोऽर्थद्वया-**

---

१ क. धनिनि। २ सर्वेष्वपि उपलब्धपुस्तकेषु अयमेव पाठः । ३ ख. द्विगुणीभूते। ४ ख. झ. मूल्यापकरण०। ङ. मूलर्णा० । ५ ङ. मूलदा०। ६ ङ. 'एवाऽऽधिम्' इति नास्ति। ७ यदि चादा० । ८ त. वदग्र । ९ त. स्याप्याधे ।

स्परमतं विना ॥" इति[1]। अस्यार्थः—फलं भोग्यं यस्यासौ फलभोग्यः बन्धक आधिः। स च द्विविधः—सवृद्धिकमूल्योपाकरणार्थो[2] वृद्धिमात्रार्थापाकरणार्थश्च। तत्र च सवृद्धिमूल्यापाकरणार्थं बन्धं पूर्णकालं—पूर्णः कालो यस्यासौ पूर्णकालः—तमाप्नुयादृणी। यदा सवृद्धिकं[3] मूल्यं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमवाप्नुयादित्यर्थः। वृद्धिमात्रापाकरणार्थं तु बन्धकं सामकं दत्त्वाऽऽप्नुयादृणी। समं मूल्यं, सममेव सामकम्। अस्यापवादमाह—"यदि प्रकर्षितं तत्स्यात्" तद्बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात् "तदा न धनभाग्धनी" सामकं न लभेत् धनी;—मूल्यमदत्वैव ऋणी बन्धमाप्नुयादिति यावत्। अथ त्वप्रकर्षितं[4] तद्बन्धकं वृद्ध्येऽप्यपर्याप्तं, तदा

सुबोधिनी

मुभयथाऽपि ऋणग्रहणकालदत्तस्याप्याधेर्भोगाभावेन हेतुना ऋणे द्विगुणे जाते पश्चादुपभोक्तुं धनिनि प्रविष्टे सति, आध्युत्पन्नद्रव्येऽपि द्विगुणे जाते, वृद्ध्या सह द्विगुणीभूतर्णसमे सत्याधिर्मोक्तव्य इति। 'ऋणी बन्धमवाप्नुयात्' इत्यादि बृहस्पतिवचनजातं व्याचष्टे—अस्यार्थ इत्यादिना। तत्र "ऋणी बन्धमवाप्नुयात्। फलभोग्यं पूर्णकालम्" इत्येतदन्तमेकं वाक्यम्। तत्तात्पर्यसहितं[5] व्याचष्टे—'फलं भोग्यं यस्येत्यादिना बन्धमवाप्नुयादित्यर्थ इत्यन्तेन। "दत्वा द्रव्यं च सामकम्" इत्यस्यांशस्य व्याख्या—वृद्धिमात्रापाकरणार्थमित्यादिना। "यदि प्रकर्षितं तत् स्यात् तदा न धनभाग् धनी।" इत्यमुमंशं व्याख्यास्यन्नवतारयति—अस्यापवादमाह इति। "ऋणी च न लभेद् बन्धम्" इत्यमुमंशं व्याचष्टे—अथ त्वप्रकर्षितमित्यादिना। "यदि प्रकर्षितं तत् स्यात् तदा न धनभाग् धनी।" इत्येकं[6] वाक्यम्, "ऋणी च

बालंभट्टी

प्रतीतेराह— अस्यार्थ इति। वाक्यार्थबोधोपयुक्तमादावाह— फलमिति। मात्रपदेन मूल्यव्यवच्छेदः। वाक्यार्थमाह—तत्रेति। तयोर्मध्ये इत्यर्थः। अस्याप्यर्थमाह—यदेति। एवं चेदं प्रागुक्तार्थकमेव। धनिन इति प्राग्वत्। द्वितीयमाह-वृद्धीति। चार्थमाह —त्विति। सममित्यस्यार्थो—मूल्यमिति। स्वार्थेऽङ्काविल्याह —सममेवेति। अस्यापेति—बृहस्पतिरेव "दत्त्वा द्रव्यं च सामकम्" इति स्वोक्तमेवापवदतीत्यर्थः। प्रतीकमाह—यदीति। व्याचष्टे—तदिति। धनभाग्धनीत्यस्य व्याख्या—सामकं न लभेत धनीति। तात्पर्यमाह—मूल्यमिति। "ऋणी च न लभेद्धनम्" इत्यंशं व्याचष्टे—अथ त्विति। अप्रकेत्यस्य व्याख्या—वृद्ध्येऽपीति। अपिना मूल्यसमुच्चयः। अनुषङ्गेणाऽऽह—

१.—११. २३—४. । २ क. घ. स वृद्धिमू। ३ क. घ. सवृद्धिम्। ४ क. अथाप्र०। ५ थ. द. यर्थं। ६ त. प्रत्येकं वाक्यम्।

सामकं दत्त्वाऽपि बन्धं न लभेताधमर्णः;—वृद्धिशेषमपि दत्त्वैव लभेतेत्यर्थः। पुनरुभयत्रापवादमाह—" परस्परमतं विना" — उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे " यदि प्रकार्पितम्" इत्याद्युक्तं, परस्परानुमतौ तावदुपभुङ्क्ते धनी, निकृष्टमपि मूलमात्रदानेनैवाधमर्णो लभत इति ॥ ६४ ॥

॥ इति ऋणादानप्रकरणम् ॥ 5

धने प्रविष्टेसत्याधिर्मोच्यः । न त्वर्वागेव द्विगुणद्रव्यप्रदानलक्षणोऽस्य प्रणाशस्स्यादि त्यभिप्रायः ॥ ६४ ॥

## सुबोधिनी

न लभेद्धनम्" इत्यपरम् । एतदुभयमपि बृहस्पतिरेवापवदतीत्याह - पुनरुभयत्रापवादमाहेति ॥ ६४ ॥ इति श्रीभट्टविश्वेश्वरविरचितायां सुबोधिन्याम् ऋणादानप्रकरणम्॥

---

## बालंभट्टी

सामकमिति। चोऽप्यर्थ इत्याह--अर्पीति। व्युत्क्रमे इति भावः। सर्वथा लाभाभावो न प्रतिपाद्य इत्याह--वृद्धिशेषमिति। अपिना मूलशेषसमुच्चयः । पुनरुभयत्रेति—" यदि प्रेत्या" यद्धोक्तं "ऋणी च" इत्यंशं च स एवापवदतीत्यर्थः। मतमित्यत्र भावे क्त इत्याह -- अनुमत्येति । इत्याद्युक्तमिति—उभयमुक्तमित्यर्थः । यावन्मूल्येति--वृद्धिदानमत्रोभयत्र न । अत एवाग्रे —मात्रेति। निकृष्टम्—अपकृष्टम् । अप्रकृष्टमिति पाठान्तरम्, — विगतप्रकर्षकमिति तदर्थः । निकृष्टमिति पाठः सुगम एव ॥ ६४ ॥ इति ऋणादानप्रकरणम् ॥

१ ख. उत्तमाधमर्णयोः । २ क. इत्युक्तम् । ३ त. त्राप्यप ।

# अथ निक्षेपप्रकरणम् ४

उपनिधिं प्रत्याह—

**वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।**
**द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ६५ ॥**

5 निक्षेपद्रव्यस्याऽऽधारभूतं द्रव्यान्तरं वासनं करण्डादि, तत्स्थं वासनस्थं यद्द्रव्यं रूपसङ्ख्यादिविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विस्रम्भादर्प्यते स्थाप्यते, तद्द्रव्यमौपनिधिकमुच्यते; यथाऽऽह नारदः—"असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः॥" इति । "प्रतिदेयं तथैव तत्" यस्मिन् स्थापितं तेन यथैव पूर्वमुद्रादिचिह्नितमर्पितं तथैव स्थापकाय 10 प्रतिदेयं प्रत्यर्पणीयम् ॥ ६५ ॥

---

आध्यनन्तरं विश्वासार्पितत्वसामान्यात् उपनिधिरुच्यते—**भाजनस्थमनाख्या-येत्यादि ॥**

उच्यत इति शेषः ।

**प्रतिदेयं तथैव तत् ॥ ६५ ॥**

क्वापि स्थितमनिर्दिष्टस्वरूपं कस्यचित्परिग्रहे यत्समर्प्यते त्वयेदं रक्षणीयमिति । हस्तशब्दः परिग्रहार्थः । न्यस्य क्षिप्येत्यर्थः । तत्रोपनिधिसंज्ञकं यथागृहीतं तथैव प्रत्यर्पणीयमित्यर्थः ॥ ६५ ॥

---

बालंभट्टी

उपनिधिमिति—तत्सम्बन्धिनमित्यर्थः । उद्देशक्रमादिति भावः । निक्षेपोपनिध्योः स्वल्प एव भेद इति सूचयन्नाह—निक्षिप्येति । आदिना संपुटकादिस्थं द्रव्यमिति पाठः । यद्द्रव्यमिति पाठे तदिति शेषः । आनाख्याने कर्माकाङ्क्षत्वादाह—रूपेति । तद्रूप विशेषमित्यर्थः । तस्याप्यर्थमाह-मुद्रितमिति । अर्पणे फलहेतुमाह—रक्षेति।अनेनोपनिधीयत इति निक्षिप्यते इति च व्युत्पत्तिः सूचिता ।औपेत्यत्र विनयादित्वात् स्वार्थे ठगिति भावः । असंख्यातमगणितम् । अवीति—रूपतः । अत एवाऽऽह—समुद्रमिति । निक्षेपपदार्थमाह—निक्षेपमिति । गणितं सङ्ख्यातम् । तुर्यपादं व्याचष्टे--प्रतीति अर्पितं स्थापकेन ॥ ६५ ॥

---

१ विश्व० भाजन । २ संरुद्धं । ३ (?) । ४ कर्माकाङ्क्षायामाह । ५ ब. स्थापनेन ।

प्रतिदेयमित्यस्यापवादमाह—

न दाप्योऽपहृतं तं[1] तु राजदैविकतस्करैः ।

तं[2] मुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वाऽपहृतं न दाप्योऽसौ यस्मिन्नु[3]पनिहितम् । धनिन एव तत् द्रव्यं नष्टं यदि जिह्मकारितं न भवति ; यथाऽऽह नारदः —"ग्रहीतुः सह योऽर्थेन नष्टो[4] नष्टः स दायिनः । दैवराजकृते तद्वन्न[5] चेत्तज्जिह्मकारितम् ॥" इति[6] । 5

यत्तु द्रव्यमुपनिहितं— न दाप्योऽपहृतं तत्त्वित्यादि ॥ ६६ ॥

राजाद्यपहृतमपराधी न दाप्यः ॥ ६६ ॥

## सुबोधिनी

अथ निक्षेपप्रकरणम् ॥ ग्रहीतुः सह योऽर्थेनेति,—अस्यार्थः,—ग्रहीतुरर्थेन सह योऽर्थो नष्टः, सोऽर्थो दायिनः स्वामिन एव नष्टो नोपनिध्यादिरक्षकस्येति । एतच्च चोरहृताद्युप

## बालंभट्टी

"तत्तु राजदैवकतस्करैः" इति पाठः । स्वार्थे कः । दैविकेति पाठे प्राग्वत् स्वार्थे कः । तदाह--तमिति । असावित्यस्यार्थमाह--यस्मिन्नुपहितमिति । विशेषं कथयन् तात्पर्यार्थमाह—धनिन एवेति । तदेति शेषः । जिह्मेति—कपटप्रयोजितमपहरणमित्यर्थः । जिह्मस्य प्रयोजकत्वात् णिच् । ग्रहीतुरिति—ग्रहीतुरर्थेन धनेन सह य उपनिध्यादिर्नष्टः स दायिनो धनस्वामिन एव नष्टो नोपनिध्यादिरक्षकस्येत्यर्थः। एतच्च तस्करापहारविषयमित्याशयेनाऽऽह—दैवराजकृते तद्वदिति । दैवराजाभ्यां कृतेऽपहारे उक्तवदेवेत्यर्थः । ग्रहीतुरर्थेन सहेति नाशस्य सत्यत्वप्रतिपादनपरं न स्वार्थपरमिति सूचयन् तृतीय शेषमाह —न चेदिति । तत्—अपहरणं॥ ६५ ॥

---

१ क. ग. घ. विश्व॰ तत्तु । २ तम् इतिनास्ति। ३ ख. घ. ङ. च. छ. ज. झ. उपहितं । ४ झ. गोप्ये नष्टार्थदायिनः । क. नष्टो नष्टांशदायिनः । ५ क. चेन्न जिह्मेन का॰ । छ. न तज्जिह्मेन का॰ । ६.—'. ९. ।

अस्यापवादमाह—

²भ्रेषश्चेन्मा³र्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥ ६६ ॥

स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजभिर्भ्रेषो नाशः संजातः अथाऽपि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो,
5 राज्ञे च तत्समं दण्डम् ॥ ६६ ॥

भोक्तारं प्रति दण्डमाह—

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।

यः स्वेच्छया स्वाम्यननुज्ञयोपनिहितं द्रव्यमाजीवत्युपभुङ्क्ते व्यवहरति वा,प्रयोगादिना लाभार्थम्, असावुपभोगानुसारेण लाभानुसारेण च दण्ड्यः । तं चोपनि-

दोषश्चेन्मार्गिते प्रयाचिते अदत्ते अनर्पिते तस्करापहारादिलक्षणो दोषश्चेद्दाप्यो हृतं तत्समं च राज्ञे दाप्यो दण्डः ॥ ६६ ॥

यस्त्वन्यथा स्वाम्यननुज्ञयैवोपनिधिकं द्रव्यं—आजीवन्स्वेच्छयेत्यादि॥६७॥

---

सुबोधिनी

लक्षणार्थम् । अस्याप्यपवाद इति। "न दाप्योपहृतं (तं) तु" इति यदुक्तं तस्येत्यर्थः। अस्मिन् प्रकरणे इतरत्स्पष्टव्याख्यातम् ॥ ६६ ॥ इति श्रीभट्टविश्वेश्वरविरचितायां सुबोधिन्यां निक्षेपप्रकरणम् ॥

बालंभट्टी

अदत्ते इति छेदः । भूतत्वमविवक्षितं सति सप्तमीति सूचयन्नाह—यदि न ददाति तदेति । सतिसप्तम्या सूचितमाह—तदुत्तरेति । क्रियाविशेषणं चैतत् । चेदर्थमाह—यद्यपीति । साकाङ्क्षत्वादाह—अथापीति । तस्याभावादाह—मूल्येति ॥ ६६ ॥

यद्यपि सोदयोपनिधिदानरूपविशेषोऽपि वक्ष्यमाण इति अथ भोक्तारं प्रत्याहेत्येवोचितं, तथाऽपि पूर्वं तद्दानस्य मुख्यत्वं दण्डस्य गौणत्वमिति पश्चादुपात्तदण्डस्य प्रसङ्गेन वक्ष्यमाणेन वैपरीत्यं तत्र तथैव पाठादिति तेनैव सङ्गतिर्न तु तेनेति सूचयन्नाह— भोक्तारमिति। उक्तदण्ड प्रसङ्गादिति भावः।तदनुज्ञायामपि स्वेच्छाया: सत्त्वात्तात्पर्यार्थमाह-स्वाम्यननुज्ञेति । प्राग्वदाह_उपेति । आजीवन्निति लक्षणहेत्वोरिति शतुरित्याह—आजीवतीति । तदर्थमाह—उपेति । अत्तीत्यर्थः। यत्रनास्य संभवस्तत्राऽऽह—व्यवहरति वा प्रयोगादिना लाभार्थमिति । एवं च व्यवस्थितविकल्पो बोध्यः । विशेषानुक्ते राद्ये आह—उपेति । द्वितीय आह—लाभेति । वेति पाठः। चः पादपूरणे इत्याह-

---

सुबो०. स्याप्यप वा० । २ विश्व० दोषश्चे । ३ क. प्रार्थितो । ४. घ. ङ. च. प्रत्याह । ५ क. आजीवन्नुप० । ६ फ. दण्डं तत्सहित । ब. दण्डं तत् ।

धिं सोदयम् उपभोगे सवृद्धिकं, व्यवहारे सलाभं, धनिने दाप्यः। वृद्धिप्रमाणं च कात्यायनेनोक्तम्—"निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च। याच्यमानो न चेद्दद्याद्वर्धते पञ्चकं शतम्॥" इति। एतच्च भक्षिते द्रष्टव्यम्। उपेक्षाज्ञाननष्टे तु तेनैव विशेषो दर्शितः—"भाक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम्। किञ्चिन्न्यूनं प्रदाप्यः स्यात् द्रव्यमज्ञाननाशितम्॥" इति। किञ्चिन्न्यूनमिति चतुर्थांशहीनम्। ॥६६॥ 5

उपनिधेर्धर्मान् याचितादिष्वतिदिशति—

## याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥ ६७ ॥

विवाहाद्युत्सवेषु वस्त्रालङ्कारादि याचित्वाऽऽनीतं याचितम्; यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते 'स्वामिने देहि' इति निहितं तदन्वाहितम्; न्यासो नाम गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो 'गृहस्वामिने 10

याचितं कार्यार्थमाहृतं परकीयमुपस्करादि; अन्वाहितमन्यस्यार्थे यदन्यत्रार्पितं, प्रतिग्रहप्रसङ्गेन वा यदलब्धमेव पात्रादि उपकरणत्वेनार्पितम्; न्यासोऽनिर्दिष्टस्वरूपं द्रव्यं

---

### बालंभट्टी

चेति। प्राग्वत् सोदयमित्यस्यार्थद्वयमाह—उपेति। दाप्यः दाप्योऽपि,—अपेरत्र सम्बन्धः। नात्र प्रागुक्ता वृद्धिरित्याह—वृद्धिप्रमाणं चेति। चस्त्वर्थे। वृद्धिशेषम् अवशिष्टा वृद्धिः, क्रयं क्रीतसम्बन्धि द्रव्यं, विक्रयं विक्रीतद्रव्यं, याच्यमानमिति[1] पाठः। अस्याः वृद्धेः सर्वत्र प्राप्तौ विशेषमाह—एतच्चेति। उक्तवृद्धिप्रमाणं चेत्यर्थः। उपेक्षेति—उपेक्षा च अज्ञानं च ताभ्यां नष्टेत्यर्थः। तेनैव कात्यायनेनैव। न्यासोऽप्येवमानुपूर्विक एव। अव्यवस्थां निराचष्टे—किञ्चिदिति ॥ ६६ ॥

तत्राऽऽदौ याचितादिपदार्थानाह—विवाहाद्युत्सवेष्वित्यादिना तथैव चेतीत्यन्तेन। आनीतमिति छेदः। तत्र हेतुमाह—इति। (?)स्वामीति। नेऽदर्शैत्यत्र[2] अकारप्रश्लेषः। षष्ठीपक्षेऽप्येवम्। सा[3] प्राग्वत्। तदिति,—गृहस्वामीत्यर्थः। प्रक्षेपो न्यसनम्। तत्र हेतुमाह—गृहेति।

---

१. याच्यमानम्। २. "स्वामिनेऽदर्शयित्वा" इत्यत्र अदर्शयित्वा इति पदच्छेद इति भावः।
३. सा षष्ठी, प्राग्वत्—संप्रदानस्य तत्वाविवक्षया सामान्यतस्संबन्धत्वविवक्षया।

समर्पणीयम्' इति ; समक्षं तु समर्पणं निक्षेपः ; आदिशब्देन सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः, प्रतिन्यासस्य च परस्परप्रयोजनापेक्षया[1] 'त्वयेदं मदीयं रक्षणीयं, मयेदं त्वदीयं रक्ष्यते' इति न्यस्तस्य ग्रहणम्; यथाऽऽह नारदः—"एष एव विधिर्दृष्टो याचितान्वाहितादिषु। शिल्पिषूपनिधौ[2] न्यासे प्रतिन्यासे तथैव

5 च ॥" इति[3]। एतेषु याचितादिष्वयं विधिः उपनिधेर्यः प्रतिदानादिविधिः स एव वेदितव्यः ॥ ६७ ॥

॥ इति निक्षेपप्रकरणम् ॥

---

यद्रक्षणार्थं समर्पितम्; निक्षेपोऽन्यहस्त एव यदन्यस्मै देयत्वेन निक्षिप्तम्;—एतेष्विति याचितादिष्वयमेवौपनिधिको विधिर्द्रष्टव्यः ॥ ६७ ॥

## बालंभट्टी

इति-हेतौ। समक्षमिति-दर्शनपूर्वकमित्यर्थः।अत एव"निक्षेपं गणितं विदुः"इति प्रागुक्तनारदैकवाक्यतयेति बोध्यम्। द्वितीयमाह-प्रतीति । तत्स्वरूपमाह—परस्परेत्यादिन्यस्तस्येत्यन्तेन। आदिशब्देनोभयग्रहणे मानमाह-यथाऽऽहेति ।एषेति,—"रहोदत्ते निधौ यत्र विसंवादः प्रजायते। विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥" इति प्रागुक्तरूप एवेत्यर्थः। दृष्ट इति,—द्रष्ट इति पाठान्तरम्। आदिना निक्षेपग्रहणं, बहुवचनं व्यक्त्यभिप्रायः। शिल्पिषु,—तन्न्यासेषु। एवं पदार्थानुक्त्वा वाक्यार्थमाह—एतेष्विति ; मूलोक्तेषु इत्यर्थः। अयं विधिरित्यस्य व्याख्या—उपेति ॥ ६७ ॥

---

१ ख. पेक्षायां। २ 'शिल्पे चोप' इति क्वचित्पाठः। ३.—२. १४.।

# अथ साक्षिप्रकरणम् ५

"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।" इत्युक्तम्। तत्र भुक्तिर्निरूपिता, साम्प्रतं साक्षिस्वरूपं निरूप्यते। साक्षी च साक्षाद्दर्शनाच्छ्रवणाच्च भवति; यथाऽऽह मनुः-"समक्षं दर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति।"[1] इति। स च द्विविधः—कृतोऽकृतश्चेति। साक्षित्वेन निरूपितः कृतः, अनिरूपितोऽकृतः। तत्र कृतः पञ्चविधोऽकृतश्च षड्विध इत्येकादशविधः; "यथाऽऽह नारदः—"एकादशविधस्साक्षी शास्त्रे दृष्टो मनीषिभिः। कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते॥" इति[5]। तेषां च[6] भेदस्तेनैव दर्शितः—"लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च। गूढश्चोत्तरसाक्षी 5

सर्वत्रर्णादानादौ व्यक्तिहेतवो लिखितं साक्षिणो भुक्तिश्चेति। तत्र भुक्तिरस्थावरादौ, अन्यत्र तु लिखितं साक्षिणश्च। तथा च नारदः —"लिखितं साक्षिणश्चैव प्रमाणे व्यक्तिकारके॥" इति सामान्यविवक्षयैवाऽऽह। तेनार्थिप्रत्यर्थिभ्यां साक्षिभिर्लिखितेन वा

## बालंभट्टी

अथ साक्षिनिरूपणस्य अव्यवहितसङ्गत्यभावात् व्यवहितसङ्गतिकथनपूर्वकमुपयुक्तं मूलानुक्तमुपोद्घातरूपमाह — प्रमाणमित्यादिसमुदाहृता इतीत्यन्तेन। भुक्तिरिति—तेषां मध्ये इत्यादिः दृशेर्ज्ञानसामान्यार्थत्वेन साक्षाद्द्रष्टरीति[10] सूत्रसिद्धमेवार्थमाह—साक्षादिति।समक्षं दर्शनात् साक्ष्यमिति,—समक्षमित्यस्य श्रवणेऽपि सम्बन्धः। समक्षदर्शेति पाठे तु लुप्तविभक्त्यन्तं पृथक् पदम्। तथा च साक्षात् दर्शनात् साक्षात् श्रवणाच्च साक्ष्यं सिद्ध्यत्येवेत्यर्थः। साक्षादित्यनेन परम्पराव्यावृत्तिः। नारदोऽपि "सन्दिग्धेषु तु कार्येषु तयोर्विवदमानयोः[11]। दृष्टश्रुतानुभूतत्वात्[12][13] साक्षिभ्यो व्यक्तदर्शनम्[14]॥" इति[15]। निरूपितः—प्रतिपादितः। इतीति—मिलित इति शेषः। एकादशेति,—बृहस्पतिना तु द्वादशविध उक्तः—"लिखितो लेखितो गूढःस्मारितः कुल्यदूतकौ। यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः॥नृपोऽध्यक्षस्तथा-ग्रामः साक्षी द्वादशधा स्मृतः।"[16] इति; अर्थिना पत्रे निवेशितो लिखितः; अर्थि प्रत्यर्थिनोः परेण निवेशितो लेखितः; कुड्यादिव्यवधानेन श्रावितो गूढः; पुनः पुनःकार्ये स्मार्यमाणः स्मारितः; यदृच्छयैवाऽऽगतः साक्षीक्रियमाणो यादृच्छिकः; श्रवणात् श्रावणाद्वा साक्षिणामुपर्युपरिभाषमाण उत्तरः; अध्यक्षः प्राड्विवाकादिः। अन्यत् स्पष्टम्। अत्र मूलमनुपदमेव स्फुटीभविष्यति। अत्र लेखितोऽधिकः। भेदः भेदश्च; तेनैव नारदेनैव। यदृच्छाभिज्ञ इति—यदृच्छया स्वेच्छया अभिज्ञः मिश्रितः; प्राप्त इति यावत्। यदृच्छाभिज्ञ इति पाठान्तरम्।

---

१ व्यव० २२। २. समक्षदर्शनात्। ३.—८. ७४॥ ४ तेषामिति क्वचित्। ५.—१.१७८। ६. छ. "तेषां च" इत्यारम्य "कृत इति" इत्यन्तं नास्ति। ७. यदृच्छाभिन्न। ८. 'च द्वे' इति क्वचित्। ९.—१. ११७.। १०. साक्षाद्द्रष्टरि संज्ञायां। ११ 'च' कार्येषु 'द्व०' इति क्वचित्। १२ 'श्रुतदृष्ट' इति क्वचित्। १३ 'भूतार्थात्' इति क्वचित्। १४ 'व्यक्ति' इति क्वचित्। १५.—१. १४७.। १६.—७. १—२.

च साक्षी पञ्चविधः कृतः॥" इति। लिखितादीनां च स्वरूपं कात्यायनेनोक्तम्—"अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते। स साक्षी लिखितो नाम स्मारितः पत्रकादृते॥" इति। "स्मारितः पत्रकादृते" इत्यस्य विवरणं तेनैव कृतम्-"यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः। स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते॥"इति। यस्तु
5 यदृच्छयाऽऽगतः साक्षीक्रियते स यदृच्छाभिज्ञः। अनयोः पत्रानारूढत्वेऽपि भेदस्तेनैव दर्शितः—"प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः। द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ॥" इति। तथा—"अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते॥"इति। तथा—"साक्षिणामपि यः

## सुबोधिनी

अथ साक्षिप्रकरणम्॥ अर्थिना स्वार्थसिद्ध्यर्थमिति,—अर्थिना साध्यवता स्वार्थसिद्ध्यर्थं प्रत्यर्थिनो वचनं स्फुटं यथा भवति तथा प्रत्यर्थिनाऽविज्ञातस्सन् स्थितो यः पुमान् श्राव्यते, स गूढसाक्षीति कथ्यत इति।

## बालंभट्टी

तत्र यदृच्छया तत्पूर्वकप्राप्त्याऽभिज्ञायते स्मार्यते स इत्यर्थः। "अतश्च"इति कर्मणि णिङ्। अत एव "यदृच्छास्मारितः कुल्यास्तथा चोत्तरसाक्षिणः।" इति बृहस्पतिः। विधः कृत इति पाठः। चस्त्वर्थे,—स्वरूपन्त्वित्यर्थः।सन्नीति— वर्तमानसामीप्ये इति भूते लट्; संनिवेशित इत्यर्थः। पत्रकात् पत्रसन्निवेशात्। पौनरुक्त्यं परिहरति—स्मारित इति। तेनैव कात्यायनेनैव। एवमग्रेऽपि। पुनःपुनः कार्यं दृष्ट्वा कार्यप्रसिद्ध्यर्थं यः स्मार्यते इत्यन्वयः। स्मारित इति पाठे "मतिबुद्धि..."इति वर्तमाने क्तः। इति व्यवहार आगत इति शेषः।अनयोः स्मारितयदृच्छाभिज्ञयोः। भेद इति—मिथ इत्यादिः। द्वाविति,-तथा च तदैक्येऽप्याकारणानाकारणकृतो भेद इति भावः। चतुर्थमाह स एवेत्याह (?)—तथेति। एवमग्रेऽपि। अर्थिनेति—अर्थिना साध्यवता। स्वार्थसिद्ध्यर्थं प्रत्यर्थिनो वचनं स्फुटं यथा गूढः स्थितः कुड्यादिव्यवहितः प्रत्यर्थिनाऽविज्ञातस्सन् स्थितो यः पुमान् श्राव्यते स गूढसाक्षीत्युच्यत इत्यर्थः। तथा साक्षिणामपीति—साक्षिणामप्युपरि ऊर्ध्वं यः पुमान् श्रवणात् श्रावणाद्वा साक्ष्यमुपरि उत्तरमुत्कृष्टं भाषत इत्याद्यर्थः। अत एव षष्ठीसङ्गतिः, अन्यथा द्वितीयापत्तिः स्फुटैव। एवमाद्यभेदस्वरूपमुक्त्वा द्वितीयभेदमात्रं स्वरू

१ ना० १. १४०. । २. क. ङ. वोक्तम्। ३. स्मारितः। ४. ख. श्रावितः। ५.—अ० ४. १. १७७. । ६.—अ० ३. २. १८८.

साक्ष्यमुपर्युपरि भाषते।श्रवणाच्छ्रावणाद्वाऽपि स साक्ष्युत्तरसंज्ञितः॥" इति। षड्विधस्याप्यकृतस्य भेदो नारदेन दर्शितः—"ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥ कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः । कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः॥" इति। प्राडिवाकग्रहणं लेखकसभ्योपलक्षणार्थम्। *"लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः । नृपे पश्यति तत्कार्ये साक्षिणः समुदाहृताः ॥" इति † ॥ 5

## सुबोधिनी

"लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः । नृपे पश्यति तत्कार्ये साक्षिणः समुदाहृताः॥" इति सहपाठादिति शेषः । अस्यार्थः—राजनि तत्कार्ये व्यवहारकार्ये पश्यति सति एते लेखकादयोऽनुपूर्वशः "पूर्वाभावे परः परः" इति साक्षिणः, न तु लेखकादीनामेव सभापातित्वे त एव सीाक्षणः नृपे पश्यतीत्यभिधानादिति । लेखकादिभिः सह परिपठितस्य प्राड्विवाकस्योपादानं लेखकाद्युपलक्षणार्थमित्यर्थः॥ साक्षिप्रकरणप्रक्रमप्रभृ-

## बालंभट्टी

पस्य स्फुटत्वादाह—षड्विधेति । अकृतस्यापीत्यर्थः । चतुर्थमाह—व्यवेति । व्यवहारिणां कार्येष्वधिकृतो यः स्यादित्यर्थः।यद्यपि सभ्यस्य पूर्वनिपात उभयथोचितः; तथाऽपि कात्यायनोक्तक्रमाविवक्षयाऽऽह—लेखकेति।तयोरपीत्यर्थः । अत्र हेतुं कात्यायनमेवाऽऽह--लेखक इति; समुदाहृता इतीति सहपठादिति शेषः। राजनि तत्कार्ये पश्यति सति ते लेखकादयोऽनुपू-

*कात्यायनवचनमिदम्।

†"बृहस्पतिः—"लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ । यदृच्छश्चोत्तरश्चैव कार्यमध्यगतोऽपरः ॥ नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ॥" इति। कात्यायनः—"अशक्य आगमो यत्र विदेशं प्रति वादिनाम् । त्रैविद्यप्रहितं तत्र लेख्यं साक्ष्यं प्रवादयेत् ॥" वादिनां व्यवहारिणां विदेशे विरुद्धदेशे आगमनमागमोऽशक्यो यत्र तत्र त्रैविद्यैः सभ्यैः प्रहितं लेख्यमेव साक्षिणो वादयेत् । लेख्यार्थमवधार्य सभ्यप्रहितपुरुषसंनिधौ साक्षिणो ब्रूयुरित्यर्थः । "—इति अप० पृ० ६६६ ।

१ 'प्वम्यन्तरे' इति क्वचित् । २ ङ. च. कुल्याकुल्यवि । घ. कुल्याः कुल्यवि० । ३ अवेयेस्त इति क्वचित् । ४ — १. १५१. — ५२ । ५ त. कथितः । ६ थ. द. त्वे सा । ७ फ. ब. पञ्चमं दूताख्यमाह--अर्थिनेति । अर्थिप्रेरणया प्रत्यर्थिना संनिवेशित इत्यर्थः । कुल्या इत्यस्य विषयविशेषमाह—कुलेति । तेऽपीति प्रागुक्तास्सर्वेऽपीत्यर्थः । अयं पाठोऽधिकः।

ते च साक्षिणः कीदृशाः कियन्तश्च भवन्तीत्यत आह—

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ६८ ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
5 यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ६९ ॥

तपस्विनस्तपश्शीलाः, दानशीला दाननिरताः, कुलीनाः महाकुलप्रसूताः, सत्यवादिनः सत्यवदनशीलाः, धर्मप्रधानाः न[3] त्वर्थकामप्रधानाः, ऋजवोऽकुटिलाः, पुत्रवन्तः विद्यमानपुत्राः, धनान्विताः बहुसुवर्णादिधनयुक्ताः, श्रौतस्मार्तक्रियापराः

स्वपक्षसिद्धिः कार्येत्युक्ते किं लक्षणास्तु साक्षिणो लेख्यं चेत्येतद्वक्तव्यम् । तत्र साक्षिणस्तावदुच्यन्ते—तपस्विनो दानशीला इत्यादि ॥ ६८ ॥

त्र्यवराः साक्षिणो ज्ञेयाः इत्यादि ॥ ६९ ॥

सुबोधिनी

त्येतत्पर्यन्तमुपोद्घातत्वेन किञ्चिदभिधायाऽधुना मूलवचनमवतारयति[4]—ते च साक्षिणःकीदृ-

बालंभट्टी

र्शः । स्वार्थे शस् । क्रमेण पूर्वाभावे पेरः पत्रवेदने साक्षिण इत्यर्थः ॥ एवमुपोद्घातमुक्त्वा मूलमवतारयति—ते च साक्षिण इति।कीदृशा इति स्वरूपप्रश्नः; कियन्त इति सङ्ख्याप्रश्नः। धर्मेति— पुरुषार्थानां त्रयाणां मध्ये इति भावः । व्यासोऽपि "धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः। श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः॥ श्रोत्रिया न पराधीनाः सूरयश्चाप्रवासिनः। युवानः साक्षिणः कार्या ऋणादिषु विजानता॥" इति । अत्र नेति पूर्वोत्तरान्वयि । अतो न वक्ष्यमाणविरोध इति बोध्यम् । पक्षान्तरमाह—सर्वे इति । अत्र्यवराः इति सङ्ख्याप्रश्नोत्तरम्,अन्यत् सर्वमन्यस्य।नित्ययोगे इनिलाह–तपःशीला इति। शीलपदार्थमाह—निरता इति । कुलात् ख इति सिद्धविशिष्टतात्पर्यार्थमाह—महेति । ताच्छील्ये णिनिरित्याह–वदनशीला इति । मोक्षसङ्ग्रहाय व्यतिरेकमाह न त्विति। नार्थेति पाठान्तरम्।वर्तमानसत्तायां मतुबुत्पत्तेराह—विद्येति । विशिष्टसामर्थ्यलभ्यमाह—बह्विति ।

१ विश्व० रताः । २ विश्व० पुनः । ३ नार्थकाम । ४ फ. परः परः । ५ श्रोत्रियास्तापसावृद्धास्ते च प्रव्रजितादयः । असाक्षिणस्ते—इति वक्ष्यमाणवचने विरोधा नेति भावः ।

नित्यनैमित्तिकानुष्ठानरताः,—एवंभूताः पुरुषाः त्र्यवराः साक्षिणो भवन्ति। त्रयः अवराः न्यूना येषां ते त्र्यवराः—त्रिभ्योऽर्वाक्[1] न भवन्ति, परतस्तु यथाकामं भवन्तीत्यर्थः । जातिमनतिक्रम्य यथाजाति । जातयो मूर्धावसिक्तादयः[2] अनुलोमजाः प्रतिलोमजाश्च । तत्र मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति । एवमम्बष्ठादिष्वपि द्रष्टव्यम् । वर्णमनतिक्रम्य यथावर्णम्; 5 वर्णा ब्राह्मणादयः। तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा उक्तसङ्ख्याकाः साक्षिणो भवन्ति। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः; यथाऽऽह मनुः—"स्त्रीणां साक्ष्यं स्त्रियः कुर्युः"[3] इति । [4]सजातिसवर्णासंभवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासंभवं

तपःप्रभृतयो यथोपलब्धवादित्वे हेतवः । कथं यो हि निष्कारणं परलोकसाधनैकप्रवणः तपोदानादिप्रवृत्तोऽतिशयिते पुरुषप्रज्ञः स कथमिवाऽऽत्मना दृष्टादृष्टविरुद्धं विमार्गाश्रयिणः परस्यार्थेऽनृतं ब्रूयात् इत्यभिप्रायः । तपोदानादिभिर्ये धर्मप्रधानतया

## बालंभट्टी

काम्यस्याकरणे प्रत्यवायाभावात्तदभावायाऽऽह–नित्येति। एवं पदार्थानुक्त्वा वाक्यार्थमाह—एवंभूता इति । शाब्दमुक्त्वा तात्पर्यार्थमाह—त्रिभ्य इति । यथावर्णमित्यनेनापौनरुक्त्यायाऽऽह—मूर्धेति । तत्तात्पर्यार्थमाह—तत्रेति; तेषां मध्ये इत्यर्थः। एवमग्रेऽपि। इदमग्रेऽतिदिशति—एवमम्बष्ठादिष्वपीति । न्यूनतां निराचष्टे—तथेति। मनुरिति,—"[5]द्विजानां द्विजसत्तमाः। शूद्राश्च सन्तश्शूद्राणां अन्त्यानामन्त्ययोनयः॥" इति वचनशेषः। कात्यायनोऽप्येवम्। नारदोऽपि—"श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः। बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः॥"[6] इति वर्गिण आह। कात्यायनः—"लिङ्गिनः श्रेणिपूगाश्च वणिग्जातास्तथाऽपरे। समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः॥ दासचारणमल्लानां हस्त्यश्वरथवाजिनाम् प्रत्येकैकसमूहानां नायका वर्गिनःस्मृताः॥"इति। सर्वे इति पक्षान्तरं व्याचष्टे—सजातीति । सजातिसवर्णयोरसंभवे इत्यर्थः। तयोः प्रक्रान्तत्वात् सर्वेषां युगपदसंभवादाह—यथासंभवमिति । मनुरपि—"यादृशा अर्थिभि[7]: कार्या व्यवहारेषु साक्षिणः। तादृशान् संप्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥ गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयो-

---

१ त्रिभ्यो न्यूना न। २ घ. क्तायाः। ३.—८.६८। ४ ल. ङ. सजातिवर्णासं०। ५. 'द्विजसत्तमाः' इत्यादि 'वर्गिनः' इत्यन्तं नास्ति ।६.—१. ११५ । ७ 'धनिभिः' इति क्वचित् ।

साक्षिणो भवन्ति । उक्तलक्षणानां साक्षिणामसंभवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणो वक्तव्याः । ते च पञ्चविधा नारदेन दर्शिताः—"असाक्ष्यपि हि शास्त्रेषु[1] दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्वयमुक्तेर्मृतान्तरः[2]॥" इति[3] । के पुनर्वचनादसाक्षिण इत्यत आह—"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः[4]। असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥" इति[5]—तापसा वानप्रस्थाः; आदिशब्देन पित्रा विवदमानादीनां ग्रहणम्; यथाऽऽह शङ्खः—"पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्था असाक्षिणः" इति । दोषादसाक्षिणो दर्शिताः—"स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते

सत्यवादिनः, ये वा कुलीनाः स्वकुलकलङ्कभीत्या, ये वा पुत्रिणो धनिनश्च तद्विनाशभीत्या, प्रकृत्या ऋजवः उपलब्धातिरिक्तवचनाशक्त्या नान्यथा वादिनः, ते त्र्यवराः साक्षिणो ज्ञेयाः— त्रयो येषामवरास्ते त्र्यवराः,—त्रिप्रभृतय इत्यर्थः। साक्षिणो ज्ञेया इति प्रत्यक्षमूलाभिप्रायः । निपुणतः प्रत्यक्षादिभिः लक्षणतः साक्षिणो निरूपणीया इत्यर्थः । पञ्चयज्ञक्रियारताः इति आन्वाहिकासत्यपरिहाराहिंसानिष्कृत्यर्थं पञ्चयज्ञक्रियाविधानं तद्येष्व(?)शक्त्यपरिहारामपि हिंसामपाकर्तुं प्रवृत्ताः।ते कथमिव स्वाभिप्रायेणान्यायवर्तिजन

## सुबोधिनी

शाः इति । वचनादसाक्षिणां स्वरूपं नारद एव दर्शयतीत्याह—के पुनर्वचनादसाक्षिण-

## बालभट्टी

नयः । इत्युक्तास्साक्ष्यमर्हन्ति न ये केचिदनापदि ॥ आप्ताः[7] सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः । सर्वधर्मविदो लुब्धा विपरीतांस्तु वर्जयेत् ॥" इति[8]। ऋतं सत्यम् मौलाः प्रसिद्धकुलोद्भवा इति कल्पतरुः।अथ मूलमवतारयितुं प्राग्वदुपोद्घाततया आह—उक्तलक्षणेत्यादिना साक्षी न संभवतीत्यन्तेन वक्तव्ये हेतुमाह—प्रतिषेधेति । प्रतिषिद्धेति पाठेऽपि भावे क्तः। अपिः कृतसाक्षि समुच्चायकः। ते चेति;—अत्र येऽसाक्षिणः इति शेषः। अग्रे उभयत्रासाक्षीति शेषः। वचनादसाक्षिणां स्वरूप नारदेनैवोक्तमित्याह—के पुनरिति । श्रोत्रिया इति,—अत्र विरोधः परिहृतः यद्यपि तदविरोधायैवाऽऽह—वानेति । अत्राऽऽदिशब्दग्राह्यं सूचयन्नुभयत्र मानमाह–यथाऽऽह शङ्ख इति।गुरुकुलेत्यनेनोभयोरपि ग्रहणम्।निर्ग्रन्था इति। पाषण्डिन इत्यर्थः । दर्शिता इति,—नारदेनैवेति शेषः। साहेति—अविचारितकारिण-

१.—'शास्त्रेऽस्मिन्' इति क्वचित् । २.—'नृता' इति क्वचित् । ३—१. १५७. ४ 'नराः' इति क्वचित् । ५.—१. १५८. । ६.—अर्थ्युक्ता इति क्वचित् । ७. 'आप्ताः । इति क्वचित् । ८.—८. ६१—३. ।

दुष्टत्वात्तेषु सत्यं न विद्यते॥" इति। चण्डाः कोपनाः; कितवा द्यूतकृतः। भेदसाक्षिणां च स्वरूपं तेनैव दर्शितम्—"साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम्[2]। तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः॥" इति। तथा स्वयमुक्तस्वरूपं चोक्तम्[3]—"स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत्। सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति॥"[5] इति। मृतान्तरस्यापि लक्षणमुक्तम्—"योऽर्थः श्रावयित- 5

वदसद्वादेषु प्रवर्तेरन्नित्यभिप्रायः। एवं स्मृत्यन्तराण्यपि साक्षिप्रपञ्चविषयाणि व्याख्येयानि। यत्तु नारदेनैकादशविधं साक्ष्यं कृताकृतत्वभेदेनोक्तं तत्सौहृदान्मुग्धजनव्युत्पत्त्यर्थम्। तच्च तस्मादेवाऽवगन्तव्यम्। यथा जातीति मनुष्यः। स्त्रीजातिभेदाभिप्रायं वा जातिवचनम्। यथोक्तं नारदेन—"श्रेणीषु श्रेणिपुरुषाः"[6] इत्यादि। यथावर्णं च ब्राह्मणादीनां साक्ष्यं सर्वे वा सर्वासु जातिषु। जातिशब्दाभिधेयत्वाद्वर्णेऽपि स्त्रीलिङ्गाविरोधः। पुनश्शब्दोऽवसरापे-

## सुबोधिनी

इति। निर्ग्रन्था इति;—पाषण्डिन इत्यर्थः। साक्षिणां लिखितानां चेति, अस्यार्थः—साक्षित्वेन निर्दिष्टानाम् एते साक्षिण इति पत्रे लिखितानां वादिनां ब्रुवतां तेषां साक्षिणां मध्ये एकोऽन्यथावादी चेत्, तदा ते भेदान्न साक्षिण इति। 'योऽर्थः श्रावयितव्यः स्यात्'

## बालंभट्टी

इत्यर्थः। वञ्चकाः प्रतारकाः। दोषमेवाऽऽह—तेष्विति। तेनैव--नारदेनैव। एकेन चेन मिथस्समुच्चयोऽन्येन अन्येषाम्। वादिनामिति,—भाषमाणानां तेषां अनेकेषां मध्ये इत्यर्थः। वादिनेति पाठस्तु युक्त एव। तुर्योऽपि नारदेनैवोक्त इत्याऽऽह—तथेति। अनिर्दिष्टः—साक्षित्वे इति शेषः। सूची सूचकः। "अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत्। स्वयमुक्तस्स शास्त्रेषु न च साक्षित्व मर्हति॥" इति पाठान्तरम्। अनेन स्वयमेवोक्तिर्यस्येति योगार्थोऽपि दर्शितः। उक्तमिति,—नारदेनैवेति भावः। योऽर्थ इति—योऽर्थः श्रावयितव्य स्तस्मिन्न सति मध्यमणिन्यायेनान्वयात् अर्थिनि वादिनि प्रतिवादिनि वाऽसति तदङ्गीकृतं साक्षित्वं क कस्मिन् विषये साक्षी वदत्विति हेतोः सोऽसाक्षी मृतान्तर इति शाब्दोऽर्थः। तत्फलितं शेष

१ ना० १. १५९. अस्मिन् श्लोके 'वञ्चकास्तथा' इत्यत्र 'वधकाश्च ये' इति क्वचित्। २ घ. च. वादिना। ३ ङ. तथास्वरूपंचो०। ४ ङ, क्तिर्हि नि०। ५ ङ. साक्षी। ६.—१. १६१. । ७.—१. ११५.

व्यः स्यात्तस्मिन्नसति चार्थिनि । क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः॥" इति[1]। येनार्थिना प्रत्यर्थिना वा[2] साक्षिणां योऽर्थः श्रावयितव्यो भवेत् 'यूयमत्रार्थे साक्षिणः' इति तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृते अर्थे[3] चानिवेदिते, साक्षी क्व[4]कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वद[5]त्विति मृतान्तरः साक्षी न भवति । यत्र तु
5 मुमूर्षुणा स्व[6]स्थेन वा पित्रा पुत्रादयः श्राविता 'अस्मिन्नर्थेऽमी साक्षिणः' इति तत्र

## सुबोधिनी

इत्येतद्वचनं व्याचष्टे– येनार्थिना प्रत्यर्थिना वेत्यादिना,— एतदुक्तं भवति–अस्मिन् अर्थेविशेषे एते साक्षिण इति अर्थविशेषे अभिहिते साक्षिषु[7] च निर्दिष्टेषु सत्सु पश्चात् तमर्थविशेषं प्रति निर्देष्टृपुरुषस्य कृते साक्ष्यं वक्तव्यम् । एवञ्च यदा अर्थविशेषा[8]निर्देष्टैव मृतः अथवाऽर्थविशेषो न निवेदितः, तदा कस्मिन्नर्थे कस्य कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी नेति ; मृतेन अन्तरमवकाशो व्यवधानं यस्य स मृतान्तरः । एवं मृतान्तरस्य सर्वत्राऽसाक्षित्वे प्राप्तेऽपवादमाह—यत्र तु मुमूर्षुणेत्यादिना ।

## बालंभट्टी

पूरणेनाऽऽह—येनेति । अर्थिनीत्यस्य प्रागुक्तव्युत्पत्त्या साध्यवतीत्यर्थत्वेनोभयपरत्वादाह— प्रत्यार्थिना वेति । अत एव कात्यायनः—"अर्थी यत्र विपन्नस्स्यात्तत्र साक्षी मृतान्तरः । प्रत्यर्थी वा मृतो यत्र त[9]थाप्येवं प्रकल्पयेत् ॥" इति तदाकारमाह—यूयमिति । श्रावितादृते तत्साध्यादिविशेषपरिज्ञानस्य तेषामसम्भवादिति भावः। तच्छब्देनात्र त्रयाणां परामर्श इत्याह—अर्थिनीत्यादि। असतीत्यस्य व्याख्या—मृते इति । अस्याऽग्रेऽप्यन्वयः । वासूचितं पक्षान्तरमाह—अर्थे वाऽनिवेदिते इति। निवेदितेऽर्थेऽसति मृते वेत्यर्थः । असाक्षित्वे हेतुं सूचयन्नाह—क्वेति। अस्योक्तपक्षभेदेनार्थद्वयं मूलानुरोधेन व्याख्याव्युत्क्रमेणाऽऽह— कस्मिन्निति । साक्ष्यमित्यस्य तदित्यादिस्तस्य चाङ्गीकृतमित्यर्थः।इति हैतौ। अनेन मृत उत्क्रान्यतमः अन्तरे साक्ष्यस्य स्वीकारभाषणयोर्मध्ये यस्य स मृतान्तर इति व्युत्पत्तिस्सूचिता । एवमसाक्षिस्वरूपं प्रतिपादितम् । अनेन मृतान्तरस्य सर्वत्रासाक्षित्वे प्राप्ते प्रतिप्रसवमाह— यत्र त्वित्यादिना दिष्वित्यन्तेन । अस्मिन्निति—इदं द्रव्यमियदेतया वृद्ध्याऽस्मिन् काले देवदत्ताय दत्तमित्यत्रार्थे इत्यर्थः। अन्यथा तेषां साध्यादिविवेकासम्भवादिष्टसिद्धिर्न स्यादिति

१.—ना० १. १६१. । २ क. वेति नास्ति । ३ क. वाऽनिवे । ४ ख. क्वेति नास्ति । ५ क. वदन्निति । ६ ख. सुस्थेन । ७ निर्दिष्टेषु साक्षिषु स ० । ८ त. शेषेऽनिर्दिष्टे च मृतः अत एवार्थ (?) ,२ थ, ते सति । ९ फ तत्राप्येवं ।

मृतान्तरोऽपि साक्षी। यथाऽऽह नारदः—"मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते।" तथा—"श्रावितोऽनातुरेणापि यस्त्वर्थो धर्मसंहितः। मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वाहितादिषु॥" इति ॥६८॥ ६९॥

तानेतानसाक्षिणो दर्शयति—

**स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।**
**रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः॥ ७०॥**

5

क्षया साक्ष्यन्तराभावे पुनर्वक्ष्यमाणकार्यापेक्षया वा सर्वे सर्वेषां यथा सर्वसङ्ग्रहणे साक्षीति ॥ ६८—६९ ॥

उक्तन्यायविरोधे तु— **स्त्रीवृद्धबालकितवेत्यादि ॥ ७० ॥**

## सुबोधिनी

"मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते।" इति। अस्यार्थः—अर्थिनि प्रेते सति साक्षी मृतान्तर इति कथ्यते। मुमूर्षुणा श्रावितं विना। अयमभिप्रायः—मुमूर्षुणा श्रावितश्चेन्मृतान्तरोऽपि साक्षी भवतीति। मुमूर्षुश्रावितो मृतान्तरः साक्षी भवतीत्यमुना नारदवचनेन प्रतिपाद्य स्वस्थेन श्रावितो मृतान्तरोऽपि साक्षी भवतीत्यत्राऽपि नारदवचनमेव प्रमाणयति —तथा श्रावितोऽनातुरेणापीति ॥ ६८॥ ६९ ॥

एवं महता प्रपञ्चेनासाक्षिस्वरूप प्रतिपाद्य अस्मिन्नर्थे मूलवचनमवतारयति— तानेतानसाक्षिण इति ॥ ७० ॥ ७१ ॥

## बालंभट्टी

भावः। तत्राऽऽद्यं बाधे मानमाह—तथाऽऽहेति। मुमूर्षुश्रावितं विनाऽर्थिनि प्रेते सति साक्षी मृतान्तर इति कथ्यते इत्यर्थः। द्वितीयेऽपि स एव मानमित्याह—तथेति। अनातुरेण स्वस्थेन। अपिर्मुमूर्षुसमुच्चायकः। धर्मसंज्ञित इति धर्माख्य इत्यर्थः, तत्स्वरूप इति यावत्; धर्मज्ञानविषयो वा; धर्मसंश्रितः इति पाठान्तरम्—धर्मयुक्त इत्यर्थः। तदा—तत्रेति; तस्मिन्नेवान्मृतेऽपि तत्रार्थे मृतान्तरोपि एतेषु षट्सु साक्षी स्यादित्यर्थः ॥ ६८ ॥ ६९ ॥

एवमुपोद्घातमुक्त्वा सांप्रतं मूलमवतारयति—तानेतानिति। वक्तव्यान्नारदोक्तानित्यर्थः।

१ क. मृतान्वये। २ ख. तथाऽऽह। ३. —१. ९६.। ४ क. तेन तान्। ५ द. मर्थं नार.।

पतिताप्तार्थसंबन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ७१ ॥

स्त्री प्रसिद्धा; बालः अप्राप्तव्यवहारः ; वृद्धः अशीतिकावरः; —वृद्धग्रहणं वचननिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम्; कितवः अक्षदेवी[1]; मत्तः 5 पानादिना ; उन्मत्तो ग्रहाविष्टः ; अभिशस्तः अभियुक्तो ब्रह्महत्यादिना ; रङ्गावतारी चारणः ; पाषण्डिनो निर्ग्रन्थप्रभृतयः[2] ; कूटकृत्कपटलेख्यादिकारी ; विकलेन्द्रियः श्रोत्रादिरहितः ; पतितो ब्रह्महादिः ; आप्तः सुहृत् ; अर्थसंबन्धी विप्रतिपद्यमानार्थसंबन्धी; सहाय एककार्यः; रिपुः शत्रुः; तस्करः स्तेनः ; साहसी स्वबलावष्टम्भकारी;

पतिताप्तार्थिसम्बन्धीत्यादि ॥ ७१ ॥

येषां तु दृष्टमदृष्टं वा यथाभूतार्थदर्शने दृष्टार्थाभिधायित्वे च कारणं न स्यात्, विपर्यये वा स्यात्ते न साक्षिण इत्यर्थः । सर्वे चाभोज्यप्रकरणोक्ता अग्निहीनादयः साक्ष्यानर्हा द्रष्टव्याः। तदुपलक्षणार्थैवाऽत्र स्त्री। यथोक्तम् 'अविरोधाश्च योषितः' इति सैव साऽत्राप्यभिप्रेतानवीरास्तु (?) तदधिष्ठिताया साक्ष्यं क्वचिदस्त्येव; यथोक्तं स्वयंभुवा—"स्त्रीणां साक्ष्यं स्त्रियः कुर्युः' इति । रङ्गावतारी मल्लः । स्पष्टमन्यत् । अभोज्यान्नानां तु साक्ष्यानधिकारं न्यायसिद्धमेवाभिप्रेत्य नारदेनोक्तम्--" नार्थसंबन्धिनो नाऽऽप्ता न सहाया न वैरिणः । न दृष्टदोषाः कर्तव्याः न व्याध्यार्ता न दूषिताः ॥ " इत्युक्त्वा ततः " दासनैकृतिकश्रान्तवृद्धस्त्रीबालधिक्कृताः[3] ।" इति। एवं सर्वे अभोज्यान्ना अनुक्रान्ताः। प्रमाणान्तरमूलं चा साक्षित्वं

वालंभट्टी

पाषण्डादि द्वन्द्वं कृत्वा पुनःपतितेन सहेति बोध्यम्।अप्राप्तेति--व्याख्यातमिदम्--अशीतिकेति अशीति प्रमाणमस्य स अवतारो यस्येति विग्रहः। ततोऽर्वाक् न भवति तदारभ्य भवतीत्यर्थः।वैषम्ये बीजाभावात्तदेकवाक्यतया च न्यूनतां निराचष्टे—वृद्धेति|आदिना भक्षणग्रहणम्।अभियुक्तेतितत्सम्बन्धारोपमात्रं यस्येत्यर्थः; आदिना भोगादिग्रहणम्। व्यवहारे श्रुतेः प्राधान्यादाह—श्रोत्रादीति।योगनिरासायाऽऽह—सुहृत् इति| यत्किञ्चिदर्थसंबन्धित्वस्य सर्वत्र सत्वादाह—विप्रतीति । एकेति बहुव्रीहिः पुत्रादिरित्यर्थः । कारीति—तेन करोति न तु विचारेण

१ घ. अक्षकी। २.—क. न्थि ० । ३ 'चाक्रिकाः' इति क्वचित् । ४.—१. १६६. ८. " प्रष्टव्याः साक्षिणः प्रतिदूषिताः' इति क्वचित् । ५ मूले पूर्वार्धे पाषण्डिपद उत्तरार्धे पतितपद च श्रूयते। अतः पाषण्डिपतितशब्दयोः व्यत्यासेन श्रवणात् न तयोस्समासस्यावकाशः। अतः प्रामादिकोऽयं पाठः॥ पाषण्डादिद्वन्द्वंकृत्वा इत्यनन्तरं, पुनः पतितेनेत्यतः प्राक् रङ्गावतारिणा सह पुनर्द्वन्द्वः एवमाप्तादि द्वन्द्वं कृत्वा इति पाठेन गलितेन भाव्यम् इति । प्रतिभाति

दृष्टदोषो दृष्टवितथवचनः ; निर्धूतो बन्धुभिस्त्यक्तः ; आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां ¹दोषादसाक्षिणां भेदादसाक्षिणा स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् । एते स्त्रीबालादयः साक्षिणो न भवन्ति ॥ ७० ॥ ७१ ॥

"²त्र्यवराः साक्षिणो ज्ञेयाः" इत्यस्यापवादमाह—

## उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

5

ज्ञानपूर्वकं नित्यनैमित्तिक³कर्मानुष्ठायी धर्मवित् ; स एकोऽप्युभयानुमतश्चेत्साक्षी भवति, अपिश⁴ब्दाद्द्वावपि।⁵यद्यपि "श्रौतस्मार्तक्रियापरा" इति ⁶त्र्यवराणामपि धर्मवित्त्वं

प्रपञ्चितं यथा—"बालोऽज्ञानादसत्यात्स्त्रीपापाभ्यासाच्च कूटकृत् । विब्रूयुर्बान्धवास्नेहा द्वैरनिर्यातनादरिः॥" इति॥ वचनादपि क्वचित्। यथाऽऽह-श्रोत्रियाद्या वचनतः स्तेनाद्या दोष दर्शनादिति सर्वथाऽनया दिशाऽन्यायागमाभ्यां साक्ष्यमसाक्ष्यं च प्रवचनीयम् ॥ ७०॥ ७१ ॥

देशकालाद्यपेक्षया पुनः—उभयानुमतः साक्षीत्यादि ॥ ७२ ॥

अर्थिप्रत्यर्थिभ्यामनुमतोऽतिशयगुणवानेकोऽपि साक्षी स्यात् । अपि शब्दाद्द्वावपि

### सुबोधिनी

ननु त्र्यवरा अपि धर्मविदः, एकोऽपि धर्मविदेव साक्षी तथा द्वावपि, एवं च त्र्यवरपद मनर्थकमित्यभिप्रायेणाशङ्क्य परिहरति—यद्यपि श्रौतस्मार्तक्रियापरा इत्यादिना ॥ ७१ ॥

### बालंभट्टी

अविचारितकारीत्यर्थः । दोषाणां बाहुल्येऽपि अत्र प्राधान्यादाह—वितथेति। बन्धुभिरिति । ग्रामराजकुलश्रेण्यादिभिर्निस्सारित इति कल्पतरुः। नारदैकवाक्यत्वायाऽऽह—आदीति। एवं पदार्थानुक्त्वा वाक्यार्थमाह—एते इति ॥ ७० ॥ ७१ ॥

श्रौतस्मार्तेत्येकवाक्यतया आह—ज्ञानेति—तथा च विदेर्ज्ञानपूर्वकतदनुष्ठाने लक्षणेति भावः । अत एवोक्तं "पठकाः पाठकाश्चैव येचान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः" इति उभयेति—अर्थिप्रत्यर्थि इत्यर्थः । द्वावपीति—तादृशौ चोभौ साक्षिणौ भवत इत्यर्थः । नन्वेवं धर्मवित्त्वं सर्वत्र तुल्यं ; तथा च तत्र त्र्यवरपदमनर्थकं व्यावर्त्याभावादपिना तेषामपि सङ्ग्रहादित्याशङ्कते—यद्यपीति। इतीति— इत्युक्तेरित्यर्थः । धर्मवित्त्वे प्रयुक्तवैलक्षण्याभावेऽप्यु-

* उपरि ६९ श्लोकव्याख्यायामेतेषां लक्षणानि द्रष्टव्यानि ।

१ क दोषसा० भेदसा० । २ व्यव० ६९ । ३ क. धर्मानु० । छ. धर्मानुष्ठानधीः । ४ ख. ग. शब्दबलाद्य । ५ द्वावपि श्रौतस्मार्तक्रियापरौ ।यद्यपि श्रौ०। ६ व्यव० ६९ ।

समानं, तथाऽपि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवति, एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्व भवतीत्यर्थवत् त्र्यवरग्रहणम् ॥ ७१ ॥

" तपस्विनो दानशीलाः" इत्यस्यापवादमाह—

**सर्वः साक्षी सङ्ग्रहणे चौर्यपारुष्यसाहसे ॥ ७२ ॥**

5 सङ्ग्रहणादीनि वक्ष्यमाणलक्षणानि,— तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति । दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षि-

साक्षी, पुनर्वचनं समक्षदर्शनादेव सङ्ग्रहणादौ साक्ष्यं यथा स्यात् । अविशेषाभिधाने विभूतार्थोपलंभवचनाशक्तेर्बालादयो न स्युः । तथा च नारदः—" असाक्षिणोऽपि येऽत्रोक्ताः दासनैकृतिकादयः । कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥ साहसेषु तु सर्वेषु

## सुबोधिनी

ननु सङ्ग्रहणचौर्यपारुष्यसाहसानां सर्वेषामपि साहसशब्दवाच्यत्वाभेदेनोपादान-

## बालभट्टी

भयानुमतत्वप्रयुक्तं वैलक्षण्यमित्याशयेन समाधत्ते— तथाऽपीति । द्वयोर्वा— द्वयोस्तु । अर्थवत्—सफलम् ॥ ७१ ॥

प्रत्यासत्तेः स्त्रीबालेत्यस्यैवोपस्थितेराह—तपस्वीति।इत्यस्येति—इत्यस्यापीत्यर्थः । क्वचित्तथैव पाठः । अयमपि न स्त्रीबालेत्यादि निषिद्धसङ्ग्रहः । अत एव व्याख्यानविरोधो नेति बोध्यम् । चौर्येत्यादिसमाहारद्वन्द्वः। सङ्ग्रहणादीनि चत्वारि सर्वशब्दस्य बुद्धिस्थबहुसङ्ख्यकावयवारब्धं समुदाये शक्तया तस्यानुद्भूतावयवभेदत्वेन यद्यपि सर्वलोक इतिवत् एकवचनं, तथाऽपि स्पष्टार्थमुद्भूतावयवपरतया व्याचष्टे — सर्वे इति । तदर्थमेव व्युत्क्रमेणाऽऽह । वचनेति — मौलस्त्रीबालेत्यादिवचनेत्यर्थः । नन्वेवमतिप्रसङ्गोऽत आह—दोषादिति। एते त्रय इत्यर्थः । अत्रापि स्त्रीसङ्ग्रहणादिष्वपि । ननु पूर्वं

१ त्यर्थं त्र्यव । क. तीत्यतदर्थं त्र्य० । २ व्यव ० ६८. ।

णो न भवन्ति,– सत्याभावादिहेतोरत्रापि विद्यमानत्वात्। "मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्॥" इति वचनाद्यद्यपि स्त्रीसङ्ग्रहणचौर्यपारुष्याणां साहसत्वम्; तथाऽपि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां

## सुबोधिनी

मनुपपन्नमित्याशङ्क्य परिहरति—मनुष्यमारणं चौर्यमित्यादिना। अयं भावः—जनसमक्षं

## बालंभट्टी

तेषामसाक्षित्वे उक्तेऽपि अस्य तदपवादत्वेनात्रैव तेषां साक्षित्वं स्यादेवात आह –सत्याभावादितीति(?) ।एवं च येन हेतुना तत्रासाक्षित्वं तस्य अत्रापि । तस्य सत्त्वं कल्प्यमिति तदनपगमेन तेषामत्रापि अतत्त्वमेवेति भावः । एवं च स्वयमुक्तिश्चेति तेनान्येषामपीदृशानां ग्रहणम्। तथा च नारदः-"असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः। कार्यगौरवमापाद्य भवेयुस्तेऽपि साक्षिणः॥तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत्। न बान्धवो न वाऽरातिर्ब्रूयुस्ते साक्ष्यमन्यथा॥[1]" इति। नैकृतिको वञ्चकः।व्यासोऽप्याह-–"साक्षिदोषाः प्रवक्तव्याः संसदि प्रतिवादिना। पत्रेऽभिलिख्य तान् सर्वान् वाच्याः प्रत्युत्तरन्तु ते॥ प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन । अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥ अभावयन्दमं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि वादी निराकाङ्क्षः साक्षिसत्येष्ववस्थितः ॥ " इति पत्रे लिखितान् साक्षिदोषो नाभिलक्षीकृत्य प्रत्युत्तरमुत्तरं तत्तद्विषयपरिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः । यत्रैतान् सर्वानभिलेख्य उत्तरमुत्तरं ते दोषा वाच्या इति कल्पतरुः । अतोऽन्यथा असंप्रतिपत्तौ भावनीयाः अङ्गीकारयितव्याः । क्रियया प्रमाणेन स्फुटं यथा स्यात्तथा भावयन्नित्यन्वयः। ननु सङ्ग्रहाणादित्रयाणामपि साहसशब्दवाच्यत्वात् भेदेनोक्तिर्मूलेऽयुक्तेत्याशङ्कते –मनुष्येति । उभयं वाक्पारुष्यं दण्डपारूष्यं च पारुष्यत्वेनैक्यादाह—चतुरिति । उक्तक्रमविवक्षयाऽऽह—स्त्रीसमिति ।समाधत्ते - तथाऽपीति । जनसमक्षं स्वबलावष्टम्भेन यत्कारणं तेनोपाधिं विना क्रोडीकृतानामेषां साहसपदवाच्यत्वं एकान्ते यत्करणं तदुपाधेरैकैकविषयभेदेन भिन्नत्वात् तद्विषयभेदघटितरहःकरणोपायभे-

१ ङ. च. छ. झ. पुस्तकेषु इयंपङ्क्तिर्नास्ति । २ ना० १४. १ । ३ नांनु सङ्ग्रह० । ४.—१. १६८. । ५.-–१. १९०. । ६ ब. पारुष्येणैक्यादाह । ७ फ. क्रमेकालेयत्करणं तद्रूपोपाधेरैक्येऽपि विषयभेदेन ब. वाच्यत्वमेकान्तेयत्कारणं तद्रूपोपाधे रेकोऽपि।

साहसत्वम् ; रहसि क्रियमाणानां तु *सङ्ग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथ-गुपादानम् ॥ ७२ ॥

साक्षिश्रावणमाह—

**साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।**

5 अर्थिप्रत्यर्थिसन्निधौ साक्षिणः समवेतान्—"नासमवेताः पृष्टाः[1] प्रब्रूयुः" इति गौतमवचनात्—वक्ष्यमाणं श्रावयेत् । तत्रापि कात्यायनेन विशेषो दर्शितः—†"सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ । प्राड्विवाको नियुञ्जीत विधिनाऽनेन सान्त्वयन् ॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं[3] द्विजान् । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै[4] शुचिः शुचीन् ॥ ‡आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् । समस्तान्

10 विदिताचारान् विज्ञातार्थान्[5]पृथक् पृथक् ॥" इति । तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः--"सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥" इति[6] । ब्राह्मणमन्यथा ब्रुवतः सत्यं ते नश्यतीति शापयेत् । क्षत्रियं वाहनायुधानि

बालंभट्टी

दात् सङ्ग्रहणादिशब्दवाच्यत्वमिति भावः । तेषां त्रयाणां । सात् पृथगिति—सात्प्रागु[7]-क्तेति पाठान्तरं तत्र ततोऽग्रे उपादाने सामान्यविशेषभावेनाऽन्वयसम्भवेन त्रयाणामेव सङ्ग्रहः स्यादिति तथेति भावः ॥ ७२ ॥

श्रावणं तद्विधिसाम्ययोरत्र विवक्षितं न तु तदगमनमित्याह—सन्निधावि-ति । विशेषमाह—समवेतानिति—मिलितानित्यर्थः । अत्र मानमाह—नास-मेति—पृष्टा अपि असमवेतानित्याद्यर्थः । कर्माकाङ्क्षायामाह—वक्ष्येति—मूल-कृतेति भावः । तत्रापि—श्रावणेऽपि । सभान्तः सभामध्ये । सर्वान् । उक्तोऽर्थः अत एव सम स्तानिति सफलम् अनुयुञ्जीत पृच्छेत् वियुञ्जीतेति पाठान्तरं तत्र मेलयेदित्यर्थः । विधिमेवाऽऽह—देवेति । समस्तान् मिलितान् पृथक् पृथक् विज्ञातार्थानित्यर्थः; तत्रापि विशेषमाह—ब्राह्मे-

* सङ्ग्रहणं परदाराभिमर्शनं उभयं पारुष्यं वाक्पारुष्यं दण्डपारुष्यं च अत्र सङ्ग्रहणादीनां पृथगुक्तत्वात् साहसशब्दो मनुष्यमारणार्थको वा इति अपरार्कः । पृ० ६७०.

† इमौ मानवेऽपि ८. ७९, ८७.

‡ अयं नारदीये १. १९८. ।

¹ 'अपृष्टाः' इति क्वचित् । २—१३. ५. । ३ ङ. पृच्छेदतन्द्रितान । ४ वेतिक्वचित् । ५ च. अविज्ञातान् । ६—८. ११३. । ७ ब. प्रागुक्त० इति ।

तव विफलानीति । गोबीजकाञ्चनादीनि[1] तव विफलानि भविष्यन्तीति वैश्यम् । शूद्रमन्यथा ब्रुवतस्तव सर्वाणि पातकानि भविष्यन्तीति शापयेत् । अत्र चापवादस्तेनैव दर्शितः—"गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥"[2] इति । विप्रग्रहणं क्षत्रियवैश्ययो-रुपलक्षणार्थम् । कुशीलवा गायकाः । प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च 5

"साहसेषु तु सर्वेषु स्तेयसंग्रहणादिषु। वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः॥" इत्युक्त्वाऽऽह —"एषामपि न बालस्स्यान्नैको न स्त्री न कूटकृत्। न बान्धवो न चारातिः कुर्युस्ते साक्ष्यमन्यथा॥"इति। अतो बालादिवर्जं द्विप्रभृतिसाक्ष्यमविरुद्धम्। यद्वा नैक इति नायं सङ्ख्यया निषेधः; पुरुषमात्रप्रतिषेध एवायम् यथैवैका स्त्री निषिद्धा या योषित चावीरामिति तथैव स्त्रीरहित एकः पुमाननर्हः इति व्याख्येयम् । अतश्च त्र्यवराणामेव सङ्ग्रहणादौ साक्ष्यमित्यवसेयम् ।

## सुबोधिनी

[3]स्वबलावष्टम्भेन यत् करणं स एवोपाधिः । तेनोपाधिना क्रोडीकृतान्येतानि सङ्ग्रहणादीनि साहसशब्दवाच्यानि । एकान्ते बलादिना यत्करणं स एवोपाधिः । स चोपाधिर्विषयभेदाद्भिद्यते। ततश्च तत्तद्विषयभेदघटितरहःकरणोपाधिभेदात् सङ्ग्रहणादिशब्दवाच्यत्वमिति॥७२॥

"सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यम्" इत्यस्मिन्नर्थे मनु-

## बालंभट्टी

ति । द्विषु त्रिषु नियम इति विशेष इति भावः, शूद्रेतु न नियम इत्याह—शूद्रमिति । अत एव तु: ब्राह्मणमित्यस्य शापयेदित्यत्रान्वयः तस्य चाग्रे उभयत्रानुषङ्गः अन्यथा ब्रुवत इत्यस्य सुसंपुटीकरणेन मध्येऽप्युभयत्र सम्बन्धो ध्वनितः, तत्रापि विशेषमाह—अत्र चेति । सत्येन शापयेदित्यत्रार्थे चेत्यर्थः,सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी। तेनैव मनुनैव। कारुः शिल्पी। युक्तितौल्यादाह–विप्रेति,—तयोरपीत्यर्थः। एतच्च साक्षिसन्त्रासार्थमेव,यथाऽऽह नारदः "पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः। अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥" इति । "सत्येन त्रासयेद्विप्रम्" इत्यस्याप्यपकृष्टब्राह्मणविषयत्वं न ब्राह्मणमात्रविषयं, तस्य गौतमेन शपथस्य निषिद्धत्वादिति कल्पतरुः । ननु प्रतिवादिना साक्षिदोषे उक्ते तन्निर्णये साक्ष्यन्तरापेक्षायामनवस्था स्यात् तदुक्तं व्यासेन—"अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम्। अनवस्था भवेत् दोषस्तेषामप्यन्यसम्भवात्॥" इति। अतो विशेषमाह —प्रतीति। दत्ते सति सत्सु बाल्यादिषु चापल्यादिष्वित्यपपाठः । तथैव प्रत्यक्षेणैव । अयोग्येषु दूषणेषु सत्सु

१ क. दीनीति वै० । २.—८. १०२. । ३ थ. द. स्ववाक्याव० ।

निर्णयो न साक्ष्यन्तरेणेति नानवस्था। यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी, तदाऽसौ दोषानुसारेण दण्ड्यः; अथ साधयति, तदा न साक्षिणः; यथाऽऽह—"असाधयन् दमं दाप्यो दूषणं साक्षिणां स्फुटम्। भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः॥" इति। उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रिया-
5 न्तरनिरपेक्षस्तदा पराजितो भवति—"जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा। यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः॥" इति स्मरणात्। साकाङ्क्षश्चेत् क्रियान्तरमवलम्बेतेत्यभिप्रायः॥ ७२-॥

न्यायमूलत्वादेव चात्यर्थमनुमानकुशलतयाऽयमपि नारदीय प्रतिषेधातिक्रमयितव्यः। तथा च स्वायंभुवम्—"स्त्रियाऽप्यसंभवे कार्यं बालेन स्थविरेण वा। शिष्येण बन्धुना वाऽपि दासेन भृतकेन वा॥" इति। अनुमानानुसारिणी च निश्चयावगतिस्तत्रैवोक्ता—"बालवृद्धातुराणां च साक्ष्येषु वदतामृतम्। जानीयादस्थिरां वाचं उत्सिक्तमनसां तथा॥" इति। एवमन्यत्रापि व्यवहारप्रकरणे न्यायागमविवेकः प्रपञ्चनीयः॥ ७२॥

## सुबोधिनी

रेवापवादं दर्शयतीत्याह—अत्र चापवादस्तेनैवेत्यादिना। अत्र गोरक्षकानित्यादीनि विप्रानित्यस्य विशेषणानि न स्वतन्त्राणीति बोध्यम्॥ ७२-॥

## बालंभट्टी

तद्वचनात्—साक्षिवचनात् तदुक्तं व्यासवचनेनैव—"सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा। साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात्॥" इति। असाध्यं साधनानर्हं दोषवर्जनात् अनवस्थादिराहित्वात् विशेषान्तरमाह—यदीति। सारो बलं साक्षिणे[3] इति इत्यादिः। क्वचित्तथा पाठ एव। कात्यायनमाह—यथाऽऽहेति। असाधेति। अभावयन्निति पाठान्तरम्। अर्थो भिन्नः साक्षिणां दूषणं स्फुटं यथा तथाऽसाधयन्नित्याद्यन्वयः। भाविते—साधिते सति। साक्षिधर्मेति—साक्षित्वानर्हा इत्यर्थः। विशेषान्तरमाह—उद्दिष्टेष्विति,—कथितेष्वित्यर्थः। दुष्टेषु सत्सु। क्रियान्तरेति—प्रमाणान्तरेत्यर्थः। व्यासमानमाह—जित इति। यदि वादी साक्षिसभ्यविषये निराकाङ्क्षो व्यवस्थितः सम्पन्नस्तदा जितः पराजितस्सन् स वादी शास्त्रोक्तविधिना विनयं दमं दाप्य इत्यर्थः। साक्षिसभ्येष्वित्यत्र साक्षिसत्येष्व[4]ेति पाठान्तरम् अर्थस्तदधस्तात्। सूचितार्थमाह—साकाङ्क्ष इति॥७२-॥

---

१ ख. सारानु०। २ थ. द. द्व्यम्। ३ ब. साक्षिण इत्यादिरर्थ इत्यन्तः पाठो नास्ति। ४ फ. ब. सत्येवेति।

कथं श्रावयेदित्यत आह

ये पातककृतां लोका महापातकिनां तथा ॥ ७३ ॥
अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।  5
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥

पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोका-स्तान् सर्वानसावाप्नोति यस्साक्ष्यमनृतं वदति । तथा जन्मान्तरशतैर्यत्सुकृतं कृतं, तत्सर्वं तस्य भवति यस्ते अनृतवदनेन पराजितो भवति इति, इति श्रावयेदिति संबन्धः। एतच्च शूद्रविषयं द्रष्टव्यम्—"शूद्रं सर्वैस्तु पातकैः" इति शूद्रे सर्वपातकश्रावणस्य 10 विहितत्वात् । गोरक्षकादि द्विजातिविषयं च—"गोरक्षकान् वाणिजकान्" इत्युक्त-त्वात् । अन्यानेकजन्मार्जितसुकृतसङ्क्रमणस्य महापातकादिफलप्राप्तेश्चानृतमात्रेणानुप-

बालंभट्टी

वक्ष्यमाणमित्युक्तमेव वक्तुमाह—कथमिति। वाक्यमिति शेषः। क्वचित्तु तथैव पाठः। सर्वानिति स्पष्टार्थः—स तानित्येकवचनबहुवचनाभ्यामेव तदर्थलाभात् । एवं सामा-न्येनोक्तं विशिष्याऽऽह—सुकृतमिति। मूले पातकशब्देन वक्ष्यमाणभिन्नानां ग्रहणमित्याह—पातकोपेति । अत्राप्यनेन वक्ष्यमाणभिन्नसर्वस्य ग्रहणमिति बोध्यम्। स इत्यस्यार्थः—असाविति। इति वाक्यार्थसमाप्तौ । अत एवाऽऽह—तथेति,—किंचेत्यर्थः। वादिति (?) तथेति पाठे वद किंच भवतीत्यर्थः। सुकृतं पुण्यं, तस्य तदीयम्। तदर्थमाह—यस्ते इति,—तवानृत वाक्येनेत्यर्थः। तवेत्येव पाठान्तरम्। अस्य त्वत्र कर्मत्वमित्याह—इति श्रावेति । मनुविरोधा-याऽऽह—एतच्चेति। तमेवाऽऽह—शूद्रमिति। तदेकवाक्यतयैवाऽऽह— गोरक्षेति। ननु स्व-ल्पतरानृतवदनरूपदोषात्तादृशपापोत्पत्तावपि कथं बहुलर्मादृशं फलमत आह—अन्यानेकेति।

---

१ ख. वृथा । २ ङ. समवाप्नोति । च. सोऽवाप्नोति । क. सर्वानवाप्नोति । ३ ख. ग. ङ. वदेदिति । ४ घ. च. तेनानृत । क. यस्तवानृत । ५ म० ८.—१२३. । ६ घ. च. वा । ७. ब. सर्वव्यवहरणमिति । ८ इदमशुद्धम् । फ. वदति तथेति । वदिति । ९. तच्छब्दार्थमाहेत्यर्थः । १० फ. मन्वविरोधायाह ।

पत्तेः, साक्षिसन्त्रासार्थमिदमुच्यते ; यथाऽऽह नारदः—"पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः । अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥" इति ॥७३॥७४॥७५॥

यदा तु श्राविताः साक्षिणः कथंचिन्न ब्रूयुः, तदा किं कर्तव्यमित्यत आह—

**अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।**
**राज्ञा सर्वं प्रदाप्यस्स्यात् षट्चत्वारिंशकेऽहनि ॥ ७६ ॥**

5

यः साक्ष्यमङ्गीकृत्य श्रावितस्सन् कथञ्चिन्न वदति स राज्ञा सर्वं सवृद्धिकमृणं धनिने दाप्यः, सदशबन्धकं दशमांशसहितम् । दशमांशश्च राज्ञो भवति—"राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम॥"इत्युक्तत्वात् । एतच्च षट्चत्वारिंशकेऽहनि प्राप्ते

## सुबोधिनी

अन्यानेकजन्मार्जितसुकृतसङ्क्रमणस्येति । अनेकानि च तानि जन्मानि च तत्राऽऽर्जितं । तच्च तत् सुकृतं च तस्य सङ्क्रमणम् । अन्यस्मिन् अनेकजन्मार्जितसुकृतसङ्क्रमणमिति समासः ॥ ७३ ॥ ७४ ॥ ७५ ॥

## बालंभट्टी

स्वयं अनेकजन्मभिरार्जितं यत् सुकृतं तस्यान्यत्र सङ्क्रमणस्येत्यर्थः । कृतशब्द आर्जितपरः, शतशब्दोऽनेकपर इति भावः। उच्यते इति इदमित्यादिः। क्वचित्तथैव पाठः। तथा चार्थवादोऽयमिति भावः। अत एवाऽऽह—यथेति। धर्मेति-स्मृतीत्यर्थः। सत्यसम्बन्धिमाहात्म्यस्य कीर्तनैरित्यग्रिमार्थः । भृशामिति,— तथा चानृतवदनाभावे तात्पर्यम् ॥७३॥ ७४॥ ७५ ॥

कथंचित्—कारणेन । सः—नरः । सर्वमित्यस्य योग्यतादिना पूर्वार्द्धेऽन्वय इत्याह— सर्वमिति । तदर्थमाह— सवृद्धिकामिति । योग्यत्वादाह— धानिने इति । यद्यपि सदशेति ऋणविशेषणं, तथाऽपि धन्ययोग्यमिति तद्वाक्यात् पृथक् व्याचष्टे— सदशेति । दशबन्धकेन सहितं तथा दशशब्दो दशमपरः बन्धशब्दोऽशपरः। स्वार्थे क इत्याह—दशमांशकेति। उक्तहेतोरेवाऽह—दशमांश इति। चस्त्वर्थे ननु अयमपि वचनाद्धनिन एवाऽऽस्तां किमित्येवं व्याख्यानं वैरूप्यापादकमत आह— राज्ञेति । तन्न्यायेनेत्यर्थः । तथा च तदेकवाक्यतस्तल्लाघवमूलकमेव व्याख्यानमुचितमिति भावः। अस्य कालनियममाह—एतच्चेति । मन्वनुरोधेनैवाऽऽह—प्राप्ते सतीति[६]।

१.—१.२००। २ त. न्मानि। ३ द. तत्रार्जितं यत् सु०। ४. धनिनः दशमांशदापनमयोग्यमित्यर्थः । ५. फ. वंश शब्दोंऽशपरः । ६ अनेन मूले सत्यन्तपाठो गम्यते ।

वेदितव्यम्, ततोऽर्वाग्वदन्न दाप्यः । इदं च व्याध्याद्युपप्लवरहितस्य; यथाऽऽह मनुः—"त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः । तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वशः॥" इति । अगद इति राजदैवोपप्लवविरहोपलक्षणम् ॥ ७६ ॥

*यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात्तं प्रत्याह—

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।　　5
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७७ ॥

यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति

नन्वेवमपि सङ्कटं साक्ष्यव्यवहारे यदि न कश्चित् साक्ष्यं ब्रूयात् । सत्यम् । तेनैव चाऽऽह—अब्रुवन् हि नरः साक्ष्यमित्यादि ॥ ७६ ॥

यद्यरोगस्त्रीपक्षेणापि साक्ष्यं न ब्रूयात् ततो राज्ञा सदशबन्धकमृणं प्रमथ्य दाप्यः । सह दशबन्धकेन सदशबन्धकं—दशांशाभ्यधिकमित्यर्थः । ऋणग्रहणं सर्वविवादोपलक्षणार्थम् ॥ ७६ ॥

किं च—न ब्रवीति हि यः साक्ष्यमित्यादि ॥ ७७ ॥

जानन्नप्यवदन्तं नियोगस्याविवक्षां दर्शयति । तथा च स्वयंभूः—"यत्रानिबद्धो

बालंभट्टी

एतत्तात्पर्यमाह—ततोऽर्वागिति,—पक्षत्रयमध्ये इत्यर्थः। अत एव हिः प्रयुक्तः । स हि तत्रावदनस्य तद्धेतुत्वं प्रतिपादयति। विशेषमाह—इदं चेति,—इदमपीत्यर्थः आदिनाराजदैवग्रहणम् । त्रिपक्षादिति—त्रयः पक्षा यस्मिन्निति बहुव्रीहिः। ल्यब्लोपे इति कर्मणि पञ्चमी ऋणादिविषये सार्धमासमभिव्याप्य साक्ष्यमब्रुवन्नगदोऽपीडितशरीरो नरः तदृणं सर्वं सवृद्धिकं प्राप्नुयात् दद्यात्, दशबन्धं च दशमं भागं च सर्वशः सर्वस्मै राज्ञे दद्यादित्यर्थः। सर्वत इति पाठान्तरम्। सङ्ख्यावाचिनः परो बन्धशब्दो दण्डविशेषांशमात्रवचनः। नरग्रहणं सर्वतोग्रहणम्। श्लोकपूरणार्थमिति मेधातिथिः । युक्तिसाम्यादाह—अगद इति,-विरहस्यापीत्यर्थः॥ ७६ ॥

जानन्निति,—विप्रतिपद्यमानमर्थमित्यादिः । करोतीति,—एवो व्युत्क्रमे नाङ्गीकरोत्येवेत्यर्थः । ह्यर्थमाह—पुनरिति । त्वर्थे—नरेति । अस्यैवार्थो दौरात्म्यादित्यनेनोक्तः साकाङ्क्षत्वादाह—विप्रेति । विवादास्पदमित्यर्थः । द्वितीयह्यर्थमाह—विशेषत इति ।

* ऋणादिव्यतिरिक्तविषये पुनरन्यथा दण्डमाह—इति अपरार्कः.

१.—८. १०७. ।

नाङ्गीकरोति स कूटसाक्षिणां तुल्यः पापैः दण्डेन च। कूटसाक्षिणां च दण्डं वक्ष्यति। कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः। कृतोऽपि वा, कौटसाक्ष्ये विदिते[1] निवर्तनीयः; यथाऽऽह मनुः—"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥" इति[2] ॥ ७७ ॥

साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह—

5 द्वैधे बहूनां वचनं समेषु गुणिनां तथा।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८ ॥

वीक्षेत श्रुणुयाद्वाऽपि कश्चन। पृष्टस्तत्राऽपि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥" इति। यतश्चान भिधाने प्रत्यवायः, ततो जानता तत्कालनियुक्तेनापि वक्तव्यमित्यर्थः ॥ ७७ ॥

कूटसाक्षिणो[3] मिथ्यावादिनः। तेषां यत्पापं तत्प्रकरणान्तरेण दर्शयति—**साक्षिणः श्रावयेदित्यादि ॥ ७३ ॥**

**अग्निदानां च ये लोका इत्यादि ॥ ७४ ॥**

स्मृत्यन्तरन्यायाच्च प्राङ्मुखान्वा प्रयतान् पूर्वाह्णे प्राणिहितैकाग्रानर्थिप्रत्यर्थिसभ्यसमक्षं तथाभूत एव प्राड्विवाकोऽपि "ये पातककृतां लोकाः" इति श्रावयेत्। स्पष्टमन्यत् ॥ ७४ ॥

एवं श्रावयित्वा तत्स्वरूपापेक्षया यथार्हं पृच्छेत्। धर्मानभिज्ञांस्त्वेवं प्रतिबोधयेत्—**यत्त्वया सुकृतं किञ्चिदित्यादि ॥ ७५ ॥**

एवमुक्ते यथानुभवं वदतां - **साक्षिद्वैधे प्रभूतानां समेषु गुणिनां तथा इत्यादि ॥ ७८ ॥**

बालंभट्टी

लक्ष्यार्थमाह— नाङ्गीति। तुल्य इति—तुल्य एवेत्यर्थः। एवस्यात्रान्वयात् तत्प्रयोजकधर्मावाह—पापैरिति। ननु को दण्डस्तेषामत आह—कूटेति। च दण्डं दण्डं च तेन कूटसाक्षिपरिग्रहः। अत एव विशेषमाह—कूटेति। इदमकृतव्यवहारविषयम्, अत एवाऽऽह— कृतोऽपीति। व्यवहार इत्यस्यानुषङ्गः। पूर्वं तेषु तत्त्वाज्ज्ञानात् अत एवाऽऽह—कूटेति। कौटेति पाठान्तरं, तत्र समस्तात् भावप्रत्ययः आद्ये तदन्तेन[4] समासः। एवमग्रेऽपि। अकृतविषये उक्ताकृतविषये आह—कृतं चापीति ॥ ७७ ॥

१ क. विदितो। २.—८. ११७.। ३. अयमेव प्रकरणक्रम आदृतो विश्वरूपाचार्यैः।
४. भावप्रत्ययान्तेन कूटशब्दस्य समासः।

साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम् । समेषु समसङ्ख्येषु द्वैधे ये गुणिनस्तेषां वचनं प्रमाणम् । यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसम्पन्नास्तेषां वचनं ग्राह्यम् । यत्र तु गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम्—"उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्"[1] इति गुणातिशयस्य मुख्यत्वात् । यत्तु [2]भेदादसाक्षिण 5 इत्युक्तं, तत्सर्वसाम्येनागृह्यमाणविशेषविषयम् ॥ ७८ ॥

साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह—

**यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**

## सुबोधिनी

ननु पूर्वं भेदादसाक्षिण इत्युक्तम् । अधुना द्वैधे बहूनामित्यनेन भेदादपि साक्षिणो भवन्तीत्युच्यते। तथा च परस्परविरोधः स्यादित्याशङ्क्याऽऽह—यत्तु भेदादसाक्षिण इति ॥ यत्र सङ्ख्यागुणादिभिः साम्यं तत्र विशेषाभावाद्भेदादसाक्षित्वम् । यत्र पुनः सङ्ख्यागुणादिभिर्वैषम्यं तत्र पूर्वोक्तरीत्या भेदादपि साक्ष्यं भवतीत्यभिप्रायः ॥ ७८ ॥

## बालंभट्टी

साक्षीति । नन्वित्यादिः योग्यतया साकाङ्क्षत्वादाह—साक्षिणामिति । वचनं ग्राह्यमित्यस्य सर्वत्र संबन्धादाह—वचनमिति । उत्तरार्द्धोपात्तस्य पूर्वार्द्धेऽपि संबन्धादाह—ग्राह्यमिति । समत्वं सङ्ख्याकृतमेवेत्याह— सङ्ख्येष्विति । अनुषङ्गेणाऽऽह—द्वैधे इति,—तन्निष्ठद्वैधे इत्यर्थः । त्वर्थमाह—पुनरिति। प्रकर्षमाह—श्रुतेति । शेषमाह—तेषामिति । विशेषमाह—यत्र त्विति । इति इत्यनेन त्वात् तत्त्वप्रतिपादनात्। ननु प्राक् भे[3]दादसाक्षिण इत्युक्तम् इदानींतु भेदेऽपि साक्षिण इत्युच्यते द्वैधे इत्यनेनेति मिथो विरोधोऽत आह—य[4]त्त्विति । तत्सर्वेति—यत्र सङ्ख्यागुणादिभिः सर्वैः साम्यं तत्र विशेषाभावा[5]त् भेदादसाक्षित्वं यत्रतु सङ्ख्यागुणादिभिः वैषम्यं तत्र भेदेऽप्यनेन प्रकारेण साक्षित्वं भवत्येवेति भावः ॥ ७८ ॥

साक्षिभिरिति । नन्वित्यादिः । साक्षिभिरुक्ते सति कथमित्याद्यन्वयः—तद्वचनस्यातादृशस्यापि संभवात् । अत एव वक्ष्यति 'यत्र त्वित्यादि' इति भावः । कथ-

१. व्यव० ७२.। २. व्यव० ६८—६९ श्लोकव्याख्यायाम। ३ फ.भेदासाक्षिण० । ४. इदं प्रतीकं विरुद्धम्. मूले यत्त्वित्येव । अतः यत्त्वित्येव भाव्यम् । ५. ब. षाभावादेर्भेदात् ।

## अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ७९ ॥

यस्य वादिनः प्रतिज्ञां द्रव्यजातिसङ्ख्यादिविशिष्टां साक्षिणः सत्यां वदन्ति 'सत्यमेवं जानीमो वयम्' इति स जयी भवति । यस्य पुनर्वादिनः प्रतिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य पराजयो ध्रुवो निश्चितः । यत्र तु प्रतिज्ञातार्थस्य 5 विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति, तत्र प्रमाणान्तरेण निर्णयः कार्यः

एवं तु परीक्षितवचनाः—**यस्याहुः साक्षिणः सत्यामित्यादि** ॥ ७९ ॥

प्रतिज्ञामित्यशेषवचनात् कृत्स्नप्रतिज्ञातार्थसत्यत्व एव जयो विज्ञेयः । अन्यथा तु पराजय एव स्यात् । तथा च नारदः—"देशकालवयोद्रव्यप्रमाणाकृतिजातिषु । यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि चान्यथा ॥" इति। बह्वर्थप्रतिज्ञायां च—"न्यूनमप्यधिकं चार्थं प्रब्रूयुर्यत्र साक्षिणः । तदप्यनुक्तं विज्ञेयमेषसाक्ष्यविधिः स्मृतः ॥" इति । अतः कृत्स्नप्रतिज्ञातार्थसत्यत्व एव ध्रुवो जयः—न्यायमूलत्वाच्च व्यवहारस्मृतेः ॥ ७९ ॥

### बालंभट्टी

मित्यस्य पुनरुक्तिः स्पष्टार्था। अग्रिमस्य भिन्नपदस्य पूर्वत्रापि सम्बन्ध इत्याह—यस्येति । अस्य साक्षित्वं भवत्येवेति भावः।यस्येत्यस्य व्याख्या—वादिन इति । अस्य न साक्षिण इत्यत्रान्वय इत्याह—प्रतिज्ञामिति । सा च पत्रारूढा न केवलेत्याह—द्रव्येति । लिङर्थो-न विवक्षित इत्याह—वदन्तीति। तदाकारमाह—सत्यमेवेति । एवेनासत्यत्वव्यवच्छेदः । स इति तदिष्टसिद्धेरिति भावः।उत्तरार्धार्थमाह—यस्येति । पुनस्त्वर्थे। वैलक्षण्याय शेषपू-रणमिदम् साक्षिण इत्यस्यानुवृत्तिः, अन्यथा वादिन इत्येकम् यस्य तु वादिनोऽन्यथा प्रति ज्ञाविरुद्धार्थं वदन्ति तादृशाः साक्षिणो भवन्ति तस्येत्यादि शाब्दोऽर्थः। तत्फलितमाह—प्रतिज्ञामिति। सर्वथा यस्येत्यस्य प्रतिज्ञादावन्वयो न साक्षिण इत्यत्रेति तात्पर्यम् । अत एव द्वितीयान्ततया पदद्वयेन चोक्तिः । विशेषमाह—यत्र त्विति।प्रतिज्ञार्थेति—तद्रूपस्यार्थस्येत्यर्थः प्रतिज्ञातार्थस्येति पाठान्तरम्।आदिना मोहादिः।तत्र तादृशे स्थले तस्येति पाठान्तरम्।प्रमेति।

न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः, स्वभावोक्तमेव वचनं ग्राह्यम्; यथाऽऽह--"स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् । उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥" इति ॥ ७९ ॥

" अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः।" इत्यस्यापवादमाह—

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः । 5

द्विगुणा[2] वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ ८० ॥

पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिप्राये प्रतिज्ञातार्थवैपरीत्येनाभिहिते यद्य-

उक्तेऽपि साक्षिभिः साक्ष्ये इत्यादि ॥ ८० ॥

---

सुबोधिनी

पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिप्राये इति—स्वाभिप्रायविषये साक्ष्ये प्रतिज्ञातार्थवैपरीत्येनाभिहित इत्यन्वयः । अथ वा साक्षीनामार्थ्यभिमतार्थस्य सम्यग्ज्ञाता, तस्य भावः साक्ष्यम् । तदेव साक्ष्यं स्वस्यार्थिनोऽभिप्रायः । एवञ्च साक्ष्यं नाम स्वाभिप्रायः । तथा च साक्ष्यपदस्य व्याख्या—स्वाभिप्राय इति । अस्मिन् पक्षे यथाश्रुत एवा-

बालंभट्टी

प्रकृतसाक्षिभिन्नेनेत्यर्थः। अत्र हेतुमाह--न चेति,—न हीत्यर्थः।राज्ञेत्युपलक्षणम् अन्येषामपि। अत्र हेतुमाह—स्वभेति,—यत इत्यादिः। मनुकात्यायनावाह—यथेति। तेषां--साक्षिणाम् । अत्र हेतुमाह—यद्दोषेति,—यतो दोषवर्जितमित्यर्थः । दोषवार्जितमिति पाठेऽपि हेतुगर्भं विशेषणम् । अत एवाऽऽह—उक्ते त्विति,—स्वभावोक्ते तु सतीत्यर्थः; दोषसंभवादिति भावः ॥ ७९ ॥

पूर्वोक्तलक्षणैरित्यनेन साक्षिपरीक्षा उक्ता। अनिषिद्धैस्तपस्वित्वादिगुणविशिष्टैरिति तदर्थः। स्वाभिप्रायविषये साक्ष्ये प्रतिज्ञातार्थवैपरीत्येनाभिहितेऽपीत्यन्वयः।यद्वा अत्र साक्षीनामार्थ्यभिमतार्थस्य सम्यग्ज्ञाता; तस्य भावः साक्ष्यं ; तदेव स्वस्यार्थिनोऽभिप्रायस्तात्पर्यविषयः । एवं च साक्ष्यपदस्यैव व्याख्या—स्वाभिप्राय इतीति । यथाश्रुत एवान्वयः । यद्वा स्वाभिप्राय इत्यस्य व्याख्या—प्रतिज्ञातार्थेति ।पूर्वेभ्य इत्यस्य मध्यमणिन्यायेनाऽन्वयः।

---

१. व्य० ७९.। २. विश्व० द्विगुणं । ३. क. प्रतिपादितार्थ । ४. द. यविषये । ५ फ. ब. साक्षी नामार्थी । अभि० ।

न्ये पूर्वेभ्यो गुणवत्तमाः द्विगुणा वा अन्यथा प्रतिज्ञातार्थानुगुण्येन साक्ष्यं ब्रूयुस्तदा पूर्वे साक्षिणः कूटा मिथ्यावादिनो भवेयुः। नन्वेतदनुपपन्नम्,—अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात्; "निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत्॥ यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः। निर्णिक्तव्यव-
5 हाराणां प्रमाणमफलं तथा॥" इति नारदवचनाच्च। उच्यते। यदाऽर्थी प्रतिज्ञातार्थस्यान्तरात्मसाक्षित्वेनानाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं

## सुबोधिनी

न्वयः। निगदे दत्त इति—सभ्यादिजनसमक्षमुच्चैर्निस्सन्दिग्धं भाषणं निगदः, तस्मिन् दत्ते कृत इत्यर्थः। यदा अर्थी प्रतिज्ञातार्थस्येति,—अयमभिसन्धिः—प्रतिज्ञातार्थस्य सत्यत्वेन स्वान्तःकरणे 'असावर्थ एवमेव' इति दृढतरप्रतीत्युत्पत्तेस्तदुत्पत्त्यन्यथानुपपत्त्या साक्षिष्वपि दोषः परिकल्प्यते, न दृष्टदोषैस्तेषु साक्षिषु। अतश्च परिकल्पितदोषदुष्टत्वेन

## बालंभट्टी

अग्रेऽपि तथा; अर्थिनैव निर्दिष्टा इति भावः। गुण्येनेति,—सत्यमेतदितीत्यर्थः। समासान्तराभ्रमायाऽऽह—पूर्व इति। क्रमस्य विवक्षितत्वादाह—अर्थीति। परीक्षात एवाऽऽह—प्रमाणेति,-प्रमाणभूत इतिवत् प्रयोगः। अत एव चिवर्न। निगदिते-साक्ष्ये उक्ते। निगदे दत्ते इति पाठे,--सभ्यादिजनसमक्षमुच्चैर्निस्सन्दिग्धं भाषणं निगदः; तस्मिन् दत्ते कृते सतीत्यर्थः। स्मृत्यन्तरविरोधमप्याह-निर्णिक्ते इति,—शोधिते इत्यर्थः। प्रमाणं-प्रमाणान्तरम्। तदेवाऽऽह—लिखितमिति। अपिना भुक्तिसमुच्चयः। तत्र विशेषमाह—पूर्वमिति। उक्तमेवार्थं दार्ढ्याय सदृष्टान्तमाह—यथेति। पक्वेषु--पूर्णेषु पुष्टेषु। प्रेति—वर्षणरूपगुणा इत्यर्थः। निर्णिक्तेति बहुव्रीहिः। प्रमाणं—प्रमाणान्तरान्वेषणम्। आत्मेति-स्वात्मेत्यर्थः। बहुव्रीहिरयम्, विसंवादित्वे हेतुरयम्। अनेनेति,--शास्त्रेण प्रकटितदोषशून्यानामपीत्यर्थः; प्रसिद्धदृष्टदोषरहितानामपीति यावत्; स्वोपन्यस्तानामपीति भावः। अर्थेति—स्वार्थविरुद्धत्वेनेत्यर्थः। अपिना वचन

---

१. मा० १. ६३—६२. । २. थ. द. पपत्ते० । ३ थ. पत्तेस्तदुत्पत्त्यन्यथानुपपत्त्या(?)। ४ थ. षस्तेषु । अ० । ५. ब. नान्त्ति्म० । ६. अनेति भाव्यम । अर्थश्च संगतो भवति ।

मन्यमानः साक्षिष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्यते । उक्तं च—''यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः'' इति ; यथा चक्षुरादिकरणदोषानध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञानस्याप्रामाण्येन करणदोषकल्पना, तथेहापि ; साक्षिपरीक्षातिरेकेण वाक्यपरीक्षोपदेशाच्च —

## सुबोधिनी

प्रमाणान्तराङ्गीकरणमुपपन्नमेव । अङ्गीकृते च प्रमाणान्तरे व्यवहारदर्शिभिरपि व्यवहारः प्रवर्तनीय एव,--''छलं निरस्य भूतेन'' इति वचनादिति । ननु स्वप्रमित्या साक्षिषु दृष्टदोषः कथमित्याशङ्क्य दृष्टान्तमुखेनोपपादयति—यस्य च दुष्टं करणमिति । अस्यार्थः—यस्य ज्ञानस्य करणं चक्षुरादिकं दुष्टं काचकामलादिदोषदुष्टं, यत्र च 'इदं रजतम्' इत्यादिज्ञान-विषये 'नेदं रजतम्'इति बाधकप्रत्ययः, स एव प्रत्ययो ज्ञानमसमीचीनमिति दृष्टान्तवाक्यस्य तात्पर्यार्थं प्रकृतोपयोगार्थमाह—यथा चक्षुरादीति । अयमभिप्रायः—अर्थविसंवादादर्थस्य शुक्तिरजतादेरयथार्थत्वात् तज्जनितस्य 'इदं रजतम्' इति ज्ञानस्याप्रामाण्येन चक्षुरादि गतदोषकल्पना । यथेति दार्ष्टान्तिके योजयति—तथेहापीति । न केवलं युक्तितः प्रमाणान्तरगवेषणमुचितम्, अपि तु वचनबलादपीत्याह—साक्षिपरीक्षातिरेकेणेति ।

## बालंभट्टी

समुच्चयः। प्रतिज्ञातार्थस्य सत्यत्वेन स्वान्तःकरणेनासावर्थ एवमेवेति दृढतरप्रतीत्युत्पत्ते-स्तदन्येषामनुपपत्त्या साक्षिष्वपि दोषः कल्प्यते ; न दृष्टप्रसिद्धदोषस्तेषु । तथा च परिकल्पिते दोषे दुष्टत्वेन प्रमाणान्तरान्वेषणाद्युपपन्नमेव। अङ्गीकृते च प्रमाणान्तरे व्यवहारदर्शिभिरपि व्य-वहारः प्रवर्तनीय एव;''छलं निरस्य भूतेन''इत्युक्तेरिति भावः। तथा च तथाऽपरितुष्यतोऽर्थि-नोऽयं साक्ष्यन्तरान्वेषणोपदेश इति नानवस्था। नापि स्मृत्यन्तरविरोध इति बोध्यम्। ननु स्व-मत्या साक्षिष्वदृष्टदोषकल्पनं कथमतो दृष्टान्तमुखेनोपपादयति। उक्तं चेति,-गौतमेनेति भावः।यस्य च-संप्रत्ययस्य।करणं चक्षुरादिकं,दुष्टं काचकामलादि दोषयुक्तं,यत्र-च'इदं रजत-म्'इत्यादिज्ञानविषये प्रत्ययः'नेदं रजतम्'इत्यादि बाधकप्रत्ययः।स एव द्विविधः प्रत्ययः,अज्ञा नरूपोऽसमीचीन इति दृष्टान्तवाक्यार्थः। तं प्रकृते योजयति—यथेति। अनध्यवसायेति—काचकामलादिप्रसिद्धदोषाणामानिश्चयेऽपि । एवं सत्यपि अर्थस्य शुक्तिरजतादेः विसंवादात् अन्यथात्वात् तज्जनितस्येदं रजतमिति ज्ञानस्याप्रामाण्येन चक्षुरादिगतदोषकल्पना यथा तथो-हापि दार्ष्टान्तिकेऽपीत्यर्थः । न केवलं युक्तितः प्रमाणान्तरान्वेषणसाधनम्, अपि तु वचनबलादपीत्याह-साक्षिति साक्षिपरीक्षोपदेशतोपि भेदेन तद्वाक्येत्याद्यर्थः। तमेवाऽऽह

---

१. गौतमधर्मशास्त्रे नोपलभ्यते।२. त. न्नम्। एवमप्यङ्गी। ३ थ. रन्यथात्वात्। द. रन्य(था)त्वात्। ४. फ. तदन्वेषा। ५. फ. ब. ल्पितदोष० । ६. व्य० १९. । ७ फ. ब. ननु स्वसमित्या साक्ष्यदृष्ट० । ८. ब. अध्यवसायेति । ९. ब. कल्पनाय यथा ।

"साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्।" इति। कात्यायनेनाप्युक्तम्—"यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम्। शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः॥"इति। क्रिया साक्षिलक्षणा; "नार्थसंबन्धिनो नाऽऽप्ताः"इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम्। वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन 5 —"सत्येन शुद्ध्यते वाक्यम्"इति स्मरणात्। एवं शुद्धायाः क्रियायाः शुद्धाच्च वाक्यात्,

## सुबोधिनी

अयमभिप्रायः—न केवल साक्षिवचनमात्रेण निर्णयः, अपि तु तद्वाच्यपरीक्षया च। एवं च साक्षिवचनपरीक्षायां क्रियमाणायां यदि तद्वचनमबाधितं स्यात् तदा तस्य प्रामाण्यम्; इतरथा साक्षिवचनस्य बाधितत्वे साक्षिष्वपि दोषकल्पना स्यादिति। एतच्च परीक्षाविधि-बलात् गम्यते। "यदा शुद्धा क्रिया" इति कात्यायनवचनं व्याचष्टे—क्रिया साक्षिल-

## बालंभट्टी

साक्षिभिरिति। "उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम्।" इत्यस्य नारदस्य पूर्वार्द्धम्। न केवलं साक्षिवचनमात्रेण निर्णयः अपि तु तद्वचनपरीक्षयाऽपि। तथा च तस्यां क्रियमाणायां यदि तद्वचनमबाधितं तदा तस्य प्रामाण्यम् अन्यथा तु न साक्षिष्वपि दोषकल्पना स्यादेवेति तत्परीक्षाविधिबलाद्गम्यते अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः। अन्यदप्याह — कात्यायनेति। स्फुटमितस्तदर्थाप्रतीतेः कात्यानोक्तं व्याचष्टे-क्रियेत्यादि। क्रियेत्यस्य व्याख्या-साक्षीति। निषेधाविषयत्वमेव न्याय इति तं मनूक्तमेवाऽऽह-नार्थेति। इत्थं च मनुः"सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत्। नार्थसम्बन्धिनो नाऽऽप्ता न सहाया न वैरिणः॥न दृष्टदोषाः कर्तव्या न व्याध्यार्त्ता न दूषिताः। न साक्षी नृपतिः कार्यो न कारुककुशीलवौ॥ न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः। नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्॥ न वृद्धो न शिशुर्नैको नान्यो न विकलेन्द्रियः। नाऽऽर्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः॥न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः।" इति। आध्यदीनो बन्धके धृतः। शुद्धेति—तद्दोषरहितेत्यर्थः। चस्त्वर्थे। उत्तरार्द्धार्थमाह-एवमिति,—उक्तप्रकारेणेत्यर्थः। पूर्वार्द्धाविरोधाय न्यूनतानिरासाय च शुद्धाद्वाक्याच्चेत्यन्वये-न च समुच्चयमाह—शुद्धाया इति। च वाक्यादिति—वाक्याच्चेत्यर्थः। य इति—योऽर्थः शुद्धो

---

१(?)२ ख. नार्थि। ३ क. ङ. तदा साक्षि। ४. ख. शुद्धवाक्याच्च। ५. थ. द. तद्वाक्यप०। ६. म० ८. ६३—६७.

यः शुद्धोऽवगतोऽर्थः स शुद्धस्तथाभूत इति स्थितिः, ईदृशी मर्यादा न्यायविदाम् । करणदोषबाधकप्रत्ययाभावे सति अवितथ एवार्थ इत्यर्थः। ननु स्वयमर्थिना प्रमाणीकृतान्साक्षिणोऽतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते ? नैष दोषः ; यतः,—"क्रियां बलवतीमुत्क्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम्॥" इति कात्यायनेन जयावधारणोत्तरकालं क्रियान्तरपरिग्रहनिषेधाज्जयावधारणात्प्राक् क्रियान्तरपरिग्रहो दर्शितः। नारदेनापि—"निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्।" इति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं, न प्रागपि। तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये अपरितुष्यतो क्रियान्तरमङ्गीकर्तव्यमिति स्थितम् । एवं स्थिते यद्यभिहितवचनेभ्यः साक्षिभ्यो गुणवत्तमाः द्विगुणा वा पूर्वनिर्दिष्टा असन्नि- 5

## सुबोधिनी

क्षणेत्यादिना। स शुद्धस्तथाभूत इति,--शुद्धपदस्य व्याख्या—तथा भूत इति,--तथाभूतस्तथ्यभूतः,सत्य इति यावत् । कात्यायनवचनस्य तात्पर्यार्थमाह—करणदोषबाधकप्रत्ययाभावे

## बालभट्टी

ऽवगतो निश्चित इत्यर्थः। स शुद्ध इति—शुद्धपदस्य व्याख्या–तथाभूतइति,—सत्य इत्यर्थः। एवं तदुक्तेः शाब्दार्थमुक्त्वा प्रकृतसंगतये तात्पर्यार्थमाह—करणेति। करणदोषश्च बाधकप्रत्ययश्चेतौ तयोरभावे । सत्यर्थोऽवितथ एव–सत्य एवेत्यर्थः। इत्यर्थ इति-तात्पर्यार्थ इत्यर्थः । अत्र यदा शुद्धेति पूर्वार्द्धेन साक्षिलक्ष्यलक्षणक्रिया[3] तूपकरणगतदोषाभाव उच्यते; शुद्धा चेत्युत्तरार्द्धेन तु बाधकप्रत्ययाभाव इति बोध्यम् । स्वयम्—स्वयमेव। तथा च विरोधः स्पष्ट एव। स इति। सभ्यैस्तयैव क्रियया तस्य जयेऽवधृते निश्चिते सति स दुर्बलक्रियावलम्बी पुनस्तां बलवतीं क्रियां नाप्नुयादित्यर्थः । कालमिति निषेधक्रिया विशेषणम्। निषेधात्–तत्कथनात् । अयं दर्शने हेतुः; कात्यायनः कर्ता. नारेति—प्रागुक्तं निर्णिक्तेति वदता नारदेनापीत्याद्यर्थः। तृतीयान्तस्य निषिद्धमित्यत्रान्वयः। एवव्यवच्छेद्यमाह—न प्रागपीति। अपिनोत्तरसमुच्चयः। तात्पर्यार्थमुपसंहरति-तस्मादिति।उक्तेऽपीति,-अर्थिना।विशेषमाह-एवंस्थिते इति।असन्नीति

१.—मा० १. ६२. । २ क. अपरितुष्यति । ३ फ. ब. साक्षिलक्षणक्रिया० ।

हिताः साक्षिणः सन्ति, तदा त एव प्रमाणीकर्तव्याः। "स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्।" इत्यस्य सर्वव्यवहारशेषत्वात्, "निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत्॥" इति नारदवचनाच्च। पूर्वनिर्दिष्टानामसंभवे त्वनिर्दिष्टा अपि तथाविधा[2] एव साक्षिणो ग्राह्याः, न दिव्यम्—"संभवे साक्षिणां
5 प्राज्ञो दैविकीं[3] वर्जयेत् क्रियाम्।" इति स्मरणात्। तेषामसंभवे दिव्यं प्रमाणं कर्तव्यम्।

## सुबोधिनी

इति। "यदा शुद्धा क्रिया न्यायात्" इत्यनेनांशेन साक्षिलक्षणक्रियारूपकरणगतदोषाभावोऽभिधीयते, "शुद्धाच्च वाक्याद्यः शुद्धः" इत्यनेन तु बाधकप्रत्ययाभावोऽभिधीयते। एवं करणदोषबाधकप्रत्यययोरभावे सत्यर्थोऽवितथः; सत्य इति तात्पर्यार्थः। स्वभावेनैव यद्ब्रूयुरिति,—अर्थिना स्वकीयप्रतिज्ञायामन्यथाभावमज्ञात्वैव प्रथममेवान्येषामपि साक्षित्वेन निर्दिष्टत्वात् स्वभावेनैव वचनमिति प्रकृते द्रष्टव्यम्। यदुक्तमाक्षेपसमये अनवस्थाप्र-

## बालंभट्टी

--ईदृशाःसाक्षिणोऽसन्निहिताः सम्भवन्तीत्यर्थः।त एवेति—पूर्वनिर्दिष्टा एवेत्यर्थः। एवेनाभिहितवचननिरासः॥ ननु तेषामेव पुनः कुतो न प्रश्नोऽतो मनुमाह-स्वभेति। साक्षिणो व्यावहारिकं व्यवहारागतं यद्वचनं स्वभावेनैव प्रब्रूयुः तद्ग्राह्यमित्यर्थः। अस्येत्तरार्द्धम् "अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम्॥" इति। साक्षिप्रकरणस्य व्यवहारविशेषप्रकरणापाठादाह--सर्वव्येति। तथा चात्रापि व्यवहारः समापनीयः, तेन अर्थिना स्वीयप्रतिज्ञाया अन्यथाभावमज्ञात्वैव प्रथममेवान्येषामपि साक्षित्वेन निर्दिष्टत्वात् स्वभावेनैव प्रकृते तेषां वचनस्य सत्त्वादिति भावः। नारदमपि साधकत्वेनाऽऽह—निर्णिक्ते इति। पूर्वावेदनाभावे व्यवहारशुद्धौ प्रमाणान्तरमफलं, तदशुद्धौ तु प्रमाणमेवापरम्, इदमपि गुणवत्तमादीनां पूर्वावेदनाभावे;तच्छुद्धत्वे तु ततो व्यवहारशुद्धिप्राप्तावप्युक्तरीत्या तेषामप्रामाण्येन पूर्वमुभयावेदनेन सामान्यालाभेन विशेषणासंभवेन तेनैव निर्वाह इति भावः। पूर्वनिर्दिष्टानामिति, तथाविधाः--ततो गुणवत्तमा द्विगुणा वा। एवव्यवच्छेद्यमाह—न दिव्यमिमि। मनुमाह—संभवे इति। ततोऽपि विशेषमाह-तेषामिति,--साक्षिणामित्यर्थः।भवे--भवे तु। अन्यथानुपपत्त्येति भावः। पूर्वपक्षे

---

१. मा० १. ६२.। २ तथाविधाः' साक्षिण एव। ३. क. ख. ग. वर्जयेद्दैविकी।

अतः परमपरितुष्यताऽप्यर्थिना न प्रमाणान्तरमन्वेषणीयमवचनादिति परिसमापनीयो व्यवहारः। यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषः, तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात्सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम्। तत्र च दोषावधारणे साक्षिणो विवादास्पदीभूतमृणं दाप्याः, सारानुसारेण दण्डनीयाश्च। अथ दोषानवधारणं, तदा प्रत्यर्थिना तावता सन्तोष्टव्यम्; यथाऽऽह मनुः "यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥" इति[2]। एतच्च "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्।" इत्यस्य 5

## सुबोधिनी

सन्नादिति तत् परिहरति— अतः परमपरितुष्यताऽपीति। स्वप्रत्ययबलादपरितुष्यता अर्थिना प्रमाणान्तरमङ्गीकर्तव्यमित्युक्तम्। प्रत्यर्थिनस्तु तथा नास्तीत्याह— यत्र तु प्रत्यर्थिन इत्यादिना। 'यस्य दृश्येत' इत्यस्य मनुवचनस्य विषयं दर्शयति— एतच्च[3] "यस्योचुःसाक्षि-

## बालंभट्टी

उक्तमनवस्थारूपदोषमेवंसति प्राप्तं परिहरति--अतः परमिति। स्वप्रत्ययबलादपरितुष्यता अर्थिना प्रमाणान्तरमङ्गीकार्यमित्युक्तं नैवं प्रत्यर्थिनः इति। विशेषान्तरमाह-यत्र त्विति।मन्येति —प्रत्यर्थिविशेषणम्। अवसरेति— प्रसङ्गेत्यर्थः। "मिथ्याक्रियापूर्ववादे" इत्युक्तेरिति भावः। अवतारेति पाठान्तरम्। व्यसनोद्भवेनेति — दुःखनिष्पत्त्येत्यर्थः। कर्तव्यमिति—पूर्ववत् प्रमाणान्तरान्वेषणाभावेनाऽऽगत्या प्रत्यर्थ्यपरितोषपरिहरणायेति[4] भावः; तत्र च सप्तसु दिनेषु। तावतैव आगतेरिति भावः। सप्ताहादिति—ल्यब्लोपे पञ्चमी सप्ताहमभिव्याप्येत्यर्थः। अर्वागित्यध्याहार इति तु मेधातिथिः। उक्तेति— बहुव्रीहिः साक्षिविशेषणम्। रोगादेर्विकल्पो बोध्यः। सः साक्षी रोगोऽत्यन्तपीडाकरः; अग्निर्गेहधनदाहः। पुत्रदारादिप्रत्यासन्नमरणं ज्ञातिमरणम्। इदं च तस्य कूटसाक्षित्वे लिङ्गम्। एवं सति प्रसक्तं मनुयाज्ञवल्क्ययोर्विरोधं परिहरति— एतच्चेति। यस्य दृश्ये-

---

१. क. ङ णीयं मनुवचनात्। ग. णीयं यमवचनात्, छ. णीयं वचनात्। २.—८.१०८। ३. त. च्चेति। ४. फ. ब. परितोषणपरिपालनाय।

अपरितुष्यत्प्रत्यर्थिविषयेऽपवादो द्रष्टव्यः। केचित् "उक्तेऽपि साक्षिभिः साक्ष्ये" इत्येतद्वचनमर्थिना निर्दिष्टेषु साक्षिष्वर्थ्यनुकूलमाभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान्वाऽन्यान् साक्षिणः पूर्वोक्तविपरीतं वादयति, तदा पूर्ववादिनः साक्षिणः कूटा इति व्याचक्षते। तदसत्—प्रत्यर्थिनः क्रियानुपपत्तेः। तथा हि,—अर्थी

## सुबोधिनी

णः सत्याम्" इति। अयमर्थः—एतत् "यस्य दृश्येत" इति मनुवचनम्। "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्।" इत्यस्यापवादकम्[3]। कस्मिन् विषय इत्याकाङ्क्षायामिदमुच्यते—अपरितुष्यत्प्रत्यर्थिविषय एवेति। एतदुक्तं भवति—साक्षिभिः साक्ष्ये कथिते यदि प्रत्यर्थी परि[4]तुष्यति, तदाऽर्थिनो जयः प्रत्यर्थिनः पराजयः। अथ स्वप्रत्ययविसंवादित्वेन प्रत्यर्थी न परितुष्यति, तर्हि साक्षिपरीक्षणे सप्तसु दिनेषु क्रियमाणे यदि ते दोषवन्तः साक्षिणः, तदा "यस्य दृश्येत सप्ताहात्" इति मनुवचनेन "यस्योचुः साक्षिणः सत्याम्" इति योगीश्वरवचनमपोद्यते। तथा च प्रत्यर्थिनो जय इतरस्य पराजय इति। "उक्तेऽपिसाक्षिभिः साक्ष्ये" इत्यस्य योगीश्वरवचनस्यैकदेशिव्याख्यानं दूषयितुमनुभाषते—केचिदुक्तेऽपि

## बालंभट्टी

त्येतत् मनूक्तं यस्योचुरिति मूलस्यापवाद इत्यर्थः। कस्मिन्विषय इत्याशङ्कायामाह—अपरीति। एवेन विषयान्तरव्यवच्छेदः। साक्षिभिर्वाद्यभिमते एव साक्ष्ये उक्ते यदि प्रत्यर्थी परितुष्यति, तदा मूलवाक्योक्तोऽर्थिजयः तदा सप्ताहं साक्षिपरीक्षणाभावात्। यदा तु प्रत्यर्थिनोऽपरितोषेण तत्परीक्षणावश्यकतया तन्मध्ये साक्षिदोषावधारणेन ते दोषवन्तः तदा "यस्येति" मनुवाक्येन मूलवाक्यमापोद्यत इति;—प्रत्यर्थिनो जयोऽर्थिनः पराजय इति भावः। इदं च ऋणं गृहीत्वा याचनावस्थायां 'च दत्तं नैव वा गृहीतम्' इत्युक्त्वा विपरीतं धर्मस्थानं प्रविशति, तद्विषयकं बोध्यम्। "उक्तेऽपि" इति मूलवाक्यस्यैकदेशिव्याख्यानं दूषयितुमनुवदति,—केचिदिति; व्याचक्षत इत्यत्रान्वयः। अस्य द्विकर्मकत्वादेकं कर्माऽऽहवचनमित्यन्तेन द्वितीयमाह—अर्थिनेत्यादि इतीत्यन्तेन—अर्थेति,—अर्थ्यर्थेत्यर्थः। अर्थ्यनुकूलमिति पाठस्तु सुगम एव। विपेति—अर्थ्यर्थविपरीतं स्वानुकूलमित्यर्थः॥ अत्र पक्षे पूर्वेत्यत्र षष्ठीतत्पुरुष इत्याह— पूर्वस्येति। तदर्थमाह—वादिन इति। दूषयति—तदसादिति। क्रियेति—क्रियाया एवानुपपत्तिरित्यर्थः। सामान्योक्तां तां विविच्य दर्शयितुमादावर्थिप्रत्यर्थिस्वरूपं प्रागुक्तमपि दार्ढ्यायाऽऽह—तथा हीति। अर्थ्यत इत्यर्थः साध्यं, तदस्यास्तीति

१ क. ग. संवादयति। २. त. एतदादि 'साक्षिणः' इत्यन्तं नास्ति। ३. त. वादः कस्मिन्। ४. त. परि इति नास्ति।

नाम साध्यस्यार्थस्य निर्देष्टा। तत्प्रतिपक्षस्तदभाववादी प्रत्यर्थी। तत्राभावस्य भावसिद्धिसापेक्षसिद्धित्वाद्भावस्य चाभावानिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम्,—अभावस्य स्वरूपेण साक्ष्यादिप्रमेयत्वाभावात्। अतश्चार्थिन एव क्रिया युक्ता।

## सुबोधिनी

साक्षिभिरित्यादिना। दूषयति — तदसदिति। प्रत्यर्थिनः क्रियानुपपत्तिं दर्शयितुमर्थिप्रत्यर्थिस्वरूपं दर्शयति—तथा हि, अर्थीनामेति। भावत्वभाववादित्वम् प्रत्यर्थिनः, तस्य क्रियानुपपत्तौ किमायातमित्यत आह—तत्राभावस्येति। अयमाशयः—न भावः अभावः; भावाधीनत्वादभावस्वरूपस्य तथाभाव इत्युक्ते कस्याभाव इत्याकाङ्क्षायां घटस्याभावः पटस्याभाव इति प्रतियोगिभूतघटपटादिनिरूपणाधीननिरूपणत्वात्। प्रध्वंसाभावे च भावस्वरूपसिद्ध्युत्तरकालीनत्वादभावस्वरूपासिद्धेर्भावसिद्धिसापेक्षसिद्धित्वमभावस्य। भावस्य त्वेतद्वैपरीत्यात् स्वातन्त्र्येण सिद्धिर्नत्वभावापेक्षया सिद्धिः। अत एवाभावसिद्धिनिरपेक्षसिद्धित्वं भावस्य। एवञ्च सापेक्षनिरपेक्षसिद्ध्योरभावभावयोर्मध्ये निरपेक्षसिद्धित्वेन भावस्यैव साध्यत्वं युक्तमिति। नन्वभावस्य सापेक्षत्वे सिद्धे कोऽपराधो यत् साध्यता नास्तीत्यत आह—अभावस्य स्वरूपेणेति। अयमर्थः—भावस्य साक्षात् साक्ष्यादिरूपप्रमाणप्रमेयत्वम्, अभावस्य तु न साक्षात्, अपि तु भावद्वारा। तथा च साक्षात् प्रमेयस्यैव साध्यत्वं न

## बालंभट्टी

व्युत्पत्तेराह—साध्यस्येति। प्रत्यर्थमाह—तत्प्रतीति। तदभेति—साध्याभावेत्यर्थः।[7] अयं भावः—न भावोऽभाव इति व्युत्पत्त्या भावाधीनत्वमभावस्वरूपस्य तथाऽभाव इत्युक्ते कस्येत्याकाङ्क्षायां घटस्येत्यादेः प्रयोगेन तस्य प्रतियोगित्वात् प्रतियोगिभूतघटादिनिरूपणाधीननिरूपणत्वं प्रतियोग्यधिकरणाभ्यामभावो निरूप्यत इत्यत एव तन्त्रान्तरे उक्तं प्रध्वसाभावस्यापि भावस्वरूपसिद्ध्युत्तरकालिकत्वमिति सर्वथा भावसिद्धिसापेक्षसिद्धित्वमभावस्य, भावस्य त्वेतद्वैपरीत्यात्तच्छरीरे तदप्रवेशात् स्वातन्त्र्येण सिद्धिर्नत्वभावापेक्षया सिद्धिरिति अभावसिद्धिनिरपेक्षसिद्धत्वं भावस्य। एवं च सापेक्षनिरपेक्षसिद्धिकयोरुभयोर्भावाभावयोर्मध्ये निरपेक्षसिद्धिकत्वेन भावस्यैव साध्यत्वं युक्तमिति। नन्वभावस्य सापेक्षसिद्धिकत्वेऽपि साध्यता कुतो नास्तीत्यत आह—अभावस्येति। भावस्यैव साक्षात् साक्ष्यादिरूपप्रमाणप्रमेयत्वम् अभावस्य तु न तत्; अपि तु भावद्वारा तथा च साक्षात् प्रमेयस्यैव साध्यत्वं, नातिभूयस्या परम्परया प्रमेयस्येति भावः। फलितमाह—अतश्चेति। वाचनिकोऽप्य-

१.क. र्थस्य निर्देशात्तत्प्र० २. ख. ग. पक्षतदभाव। ३. क. सापेक्षत्वाद्भा०। ४. ख. ग. भावस्य वा भाव. ५. क. क्षसिद्ध०। ६. थ. द. त्वाच्चाभा०। ७. फ. ब. "ननु भवतु तदभाववादित्वं प्रत्यर्थिनस्तथापि क्रियानुपपत्तौ तस्य किमायातमत आह —तत्राभावस्येति तयोर्मध्य इत्यर्थः" इत्यधिकम्। ८.फ. सिद्धिकयोरभावभावयोः। ९. फ. ब. "एवञ्च प्रत्यर्थिनस्तदनुपपत्तिस्तु सिद्धेतिभावः" इत्यधिकम्

अपि चोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्यते—"प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥" इति। न चैकस्मिन्व्यवहारे द्वयोः क्रिया—"न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।" इति स्मरणात्। तस्मात्प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वाऽन्यथा ब्रूयुरि 5 त्यनुपपन्नम्। अथ मतम्—द्वावपि भावप्रतिज्ञावादिनौ 'मदीयमिदं दायादप्राप्तम्' 'मदीयमिद दायादप्राप्तम्' इति पूर्वापरकालविभागानाकलितमेव वदतः, तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो ग्राह्या इत्याकाङ्क्षायां "द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥" इति वचनेन यः पूर्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थिते तस्यापवादमाह—"उक्तेऽपि साक्षिभिः साक्ष्ये" इति। अत- 10 श्च पूर्वोत्तरयोर्वादिनोः समसङ्ख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिनः साक्षिणः

सुबोधिनी

निरूपस्य परम्परया प्रमेयस्येति। "उक्तेऽपि साक्षिभिः साक्ष्ये" इत्यस्य वचनस्यार्थान्तर माशङ्कते पूर्ववादी—अथ मतमित्यादिना। तस्यायमपवाद इत्युक्तं, तत्र क्वापवाद इत्याशङ्क्य परिशेषादपवादविषयं वक्तुं "द्वयोर्विवदतोरर्थे" इत्यस्य वचनस्य विषयं दर्शयति—अतश्च पूर्वोत्तरयोर्वादिनोरिति। अपवादविषयमाह—यदा नूत्तरवादिन इति। अस्मिन्

बालंभट्टी

यमर्थ इत्याह—अपि चेति। सर्वत्रैव—न केवलमत्रैव। नन्वेवमपि व्यवहारभेदवदुभयोरप्यत्र क्रिया आस्तामिति न दोषः। अत आह—न चैकेति,—नापीत्यर्थः। कात्यायनमाह—न चैकेति। दूषणमुपसंहरति—तस्मादिति। पूर्वोक्तस्याऽऽशयान्तरवर्णनद्वारा तस्यार्थान्तरप्रतिपादकप्रागुक्तैकदेश्युक्तिमेव दूषयितुमनुवदति—अथ मतमिति। सामान्योक्तं विशिष्याऽऽह—मदीयमिति। तत्र कालविशेषोक्तौ तत एव निर्णयस्य प्रागुक्तरीत्या संभवादाह—पूर्वापरेति। प्राप्तौ तद्राहित्यसेवानाकलनम्। ननु एवमपि साक्षिभिस्तत्र निर्णयः स्यादत आह—तत्रेति। अत एवाऽऽह—कस्येति। नारदमाह—द्वयोरिति। व्याख्यातमिदं प्राक्। प्रतिज्ञायां कालानुक्तेराह—यः पूर्वं निवेदेति। प्राप्तिपूर्वत्वाज्ञानेऽपि निवेदनपूर्वत्वज्ञानेन तत्र निर्णय इति भावः। स्थिते इति—सिद्धान्ते इत्यर्थः। तस्यायमपवाद इत्युक्ते[4], क्वापवाद इत्याशंकामपाकुर्वन् प्राक् प्रकल्प्येवेति न्यायेन परिशेषादपवादविषयं वक्तुमादावुत्सर्गविषयमाह—अतश्चेति,—[6]तस्यापवादत्वाच्चेत्यर्थः। समेत्यादिनाऽपवादविषयता सूचिता; अपवा-

---

१. ति प्रतिज्ञावादिनोः पू०। २. ख. न एव सा०। ३. फ. ब. दत्राप्युभ०। ४. फ. तत्र क्वा०। ५. फ. कल्प्यवेति। ६. फ. अस्य तदप०।

प्रष्टव्याः । यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः । एवं च नाभावस्य साध्यता । उभयोरपि भाववादित्वाच्चतुर्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था । एकस्मिन्व्यवहारे यथैकस्यार्थिनः

## सुबोधिनी

व्याख्याने पूर्वोक्तदोषाभावं दर्शयति—एवञ्च नाभावस्येति । ननु पूर्वोत्तरयोर्वादिनोः साक्षिणां समत्वे पूर्ववादिनः साक्षिणः प्रष्टव्याः, उत्तरवादिसाक्षिणां गुणाधिक्ये द्वैगुण्ये वा उत्तरवादिन एव साक्षिणः प्रष्टव्या इत्यभिधीयमाने एकस्मिन् विवादे द्वयोर्वादिनोः क्रियाप्रसक्तेः "न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।" इत्येतद्वचनविरोधः स्यादित्यत आह—चतुर्विधोत्तरविलक्षणत्वादिति । अयमभिप्रायः—सत्यमिथ्याकारणप्राङ्न्यायोत्तरेष्वेव वादिप्रतिवादिनोर्द्वयोरपि क्रियाभावः । प्रकृतोदाहरणे तु उभयोः प्रतिज्ञावादित्वेन तद्विलक्षणत्वान्न क्रियाव्यवस्थेति । प्रतिबन्द्या युक्त्यन्तरमाह—एकस्मिन् व्यवहारे यथेति । अयमभिप्रायः—यथा परमते सिद्धान्तिनो मते साक्षिभिः साक्ष्येऽभिहिते सति यत्र प्रतिज्ञातार्थस्यान्यथात्वेन स्वान्तःकरणप्रत्ययाभावात् प्रमाणान्तराङ्गीकरणम्, एवमस्मन्मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयमिति । एतदुक्तं भवति—सिद्धान्तिनो मते "न चैकस्य क्रियाद्वयम्" इति वचने जाग्रत्यपि यथा स्वान्तःकरणविसंवादित्वेन प्रमाणान्तराङ्गीकरणं, तथाऽस्मन्मतेऽपि "न चैकस्मिन् विवादे तु क्रियास्याद्वादिनोर्द्वयोः।" इत्येतस्मिन् सत्यपि उक्तरीत्या एकस्मिन् विवादे क्रियाद्वयमिति । निराचष्टे—

## बालंभट्टी

दविषयमाह–यदातूत्तरेति । अयमेव प्रतिवादी तथा चास्मिन्नेव विषयेऽपवादत्वमिति भावः। एवं व्याख्याने प्रागुक्तदोषाभावमाह—एवं चेति,—ईदृशविषयकत्वाङ्गीकारे चेत्यर्थः। ननु एवमपि पूर्वोत्तरयोर्वादिनोः साक्षिणां समत्वे पूर्ववादिनः साक्षिणः प्रष्टव्या इत्याद्युक्त्या एकस्मिन्विवादे द्वयोःक्रियाप्रसङ्गलाभेन "प्राङ्न्याय" इति "न चैकस्मिन् विवादे" इति च कात्यायनविरोध इत्यग्रिमदोषद्वयं तदवस्थमेवात आह–चतुरिति। चोऽन्ते योज्यः। सत्यमिथ्या कारणप्राङ्न्यायोत्तरेष्वेव क्रियाव्यवस्था वादिप्रतिवादिनोर्द्वयोः क्रियाभावश्च। प्रकृतोदाहरणे तु द्वयोरपि प्रतिज्ञावादित्वेन तद्विलक्षणत्वान्न क्रियाव्यवस्थेति न द्वितीयतृतीयदोषाविति भावः। तृतीयदोषं प्रतिबन्द्या युक्त्यन्तरेणापि खण्डयन्नाह–एकस्मिन्निति,—स्थलविशेषे प्रागुक्ते

१. फ. ब. दोषः प्रतिबन्द्या युक्त्यन्तरेणापि ।

क्रियाद्वयं परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति, तदप्याचार्यो नानुमन्यते, — "उक्तेऽपि साक्षिभिः साक्ष्ये" इत्यतश्शब्दादर्थात्प्रकरणाद्वाऽस्यार्थस्यानवगमादित्यलं प्रसङ्गेन ॥ ८० ॥

कूटसाक्षिणो दर्शिताः, तेषां दण्डमाह—

5 पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।

एवं च कौटसाक्ष्ये साक्षिणां व्यवहारकर्त्रोर्वा कूटव्यवहारकर्तृत्वे स्पष्टीकृते निर्विकल्पं राज्ञा—

पृथक् पृथक् दण्डनीयाः इत्यादि ॥ ८१ ॥

## सुबोधिनी

तदप्याचार्य इति। आचार्यो विश्वरूपाचार्यः—विश्वरूपविकटोक्तिविस्तृतिसङ्ग्रहात्मकत्वादस्य ग्रन्थस्य । उक्तेऽपि साक्षिभिः साक्ष्ये इत्यतः शब्दादिति,—अतोऽस्माच्छब्दाद्वचनादित्यर्थः ॥ ८० ॥

## बालंभट्टी

इत्यर्थः। परमते—सिद्धान्तिमते। तथेति,—अत्रपक्षे इति शेषः। यथा सिद्धान्तिमते साक्षिभिः साक्ष्ये उक्ते सति यत्र प्रतिज्ञातार्थस्यान्यथात्वेन स्वान्तःकरणप्रत्ययाभावात् प्रमाणान्तराङ्गीकरणमेवमस्मिन्मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयं, नारदवचने जाग्रत्यपि यथा स्वान्तःकरणप्रत्ययविसम्वादित्वेनोक्तरीत्या तन्त्रमते प्रमाणान्तराङ्गीकरणं तथाऽस्मिन्मतेऽपि "न चैकस्मिन्" इति कात्यायनवचने जाग्रत्यपि नोक्तरीत्यैकत्र विवादे तयोः क्रियाद्वयमिति भावः । इतिः—मतसमाप्तौ । इदमपि दूषयति-तदपीति । आचार्यः—विश्वरूपाचार्यः,—विश्वरूपविकटोक्तिविस्तृतिसंहारात्मकत्वेनास्य ग्रन्थस्य तदनुयायित्वात् । इत्यतश्शब्दादिति—अस्माद्वचनादित्यर्थः। एवं शाब्दत्वं निरस्य व्यङ्ग्यत्वं निराचष्टे—अर्थादिति,—प्रयोजनादित्यर्थः । प्रकरणं वक्तृश्रोतृबुद्धिस्थता; किञ्च प्रकृतोदाहरणे ताभ्यां तथोक्तावपि साक्षिणां साम्येऽपि प्रागुक्तरीत्या कालादिनिश्चयद्वारा निर्णयसंभवेन न तदर्थमस्योपयोगः । किञ्च नैकमुदाहरणमिति न्यायेन सामान्यशास्त्रप्रणयनानर्थक्यमिति तथैवोचितमिति दिक् । तदाह—इत्यलमिति ॥ ८० ॥

दर्शिता इति—अनुपदमेवेति भावः । अन्येऽपि ते अन्यत्र स्पष्टाः । यद्यपि कूटकृ-

---

१. क. इत्यतश्शब्दार्थात्प्र० । ख. ग. इत्यपिशब्दादर्थात्प्र० । २. ख. द्वार्थस्यान० । ३. त. (भिरि? (विस्तृ) त्युपसंहारात्म० ।

विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ॥

यो धनदानादिना कूटान् साक्षिणः करोति स कूटकृत्; साक्षिणश्च ये तथा कूटाः, ते विवादात् विवादात्पराजये यो दण्डस्तत्रतत्रोक्तः तं दण्डं द्विगुणं पृथक्पृथगेकैकशो[2] दण्ड्यः। ब्राह्मणस्तु विवास्यो राष्ट्रान्निर्वास्यो न दण्डनीयः। एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यम्। लोभादिकारणविशेषपरिज्ञाने अभ्यासे च 5

## सुबोधिनी

क्रोधात्तु त्रिगुणं परमिति—परमुत्तमसाहसमित्यर्थः। लोभादिकारणविशेषे दण्डविशेषमभिधाय कौटसाक्ष्य[3]ाभ्यासे दण्डविशेषं दर्शयति—तथा कौटसाक्ष्यमिति। अभ्यासविषयत्वं व्यनक्ति—एतच्चाभ्यासविषयमिति। एददुक्तं भवति—अनभ्यासे त्वेकदैव कृतत्वेन भूतार्थक्तप्रत्ययान्तः शब्दः स्यात् कृतादिति। न च तथा। तथा च वर्तमानार्थवाचिशानच्प्रत्ययान्तः शब्दः प्रयुक्तः कुर्वाणानिति। प्रारब्धस्यापरिसमाप्तिर्हि वर्तमानता। पुनःपुनः कौटसाक्ष्यम्(?)अभिधीयमानस्यापरिसमाप्तप्रायत्वाद्[3]वर्तमानत्वमेव कौटसा-

## बालंभट्टी

तश्च ते साक्षिणश्चेति व्याख्यानं संभवति तथाऽपि तथेत्यस्यावैयर्थ्याय भेदेन व्याचष्टेय इति। आदिना सामादिपरिग्रहः। कूटान्साक्षिण इति पाठः-मिथ्याभूतानिति तदर्थः। साक्षिण इति विशेष्यस्य प्रकरणाल्लाभः। अत एवाऽऽह—साक्षिणश्चेति। तथेत्यस्य व्याख्या—कूटा इति,—प्रागुक्ताः सर्वे। विवादादित्यस्य सान्निध्यात् द्विगुणमित्यत्रान्वयेन तदाऽस्य तद्व्यादित्यर्थे तस्यानियमेन नियतदण्डापत्तिः; तस्य स्वतत्त्वे च(?)बहुदण्डापत्तिः अतोऽन्यथा व्याचष्टे। विवादादिति हेतौ पञ्चमी। पराजये तस्य लक्षणा—पूर्वत्रापि तस्य[10] सत्त्वेन अत्राविशेषात् दण्डे चान्वयः। तदाह—विवादपराजये इति। सतीति शेषः। गर्गदण्डनन्यायेन समुदाये दण्डविश्रान्तिवारणायाऽऽह—पृथगिति। इदं द्वितीयं सफलम्-दण्डनीया इति,-धान्यपेषं पिनष्टीतिवत् प्रयोगः लक्षणा वा। तुर्यपदार्थमाह-ब्राह्मण इति। तु वैलक्षण्ये। निर्वासनं बहिष्कारः। अत एव विवासव्यतिरेकमाह—न दण्डय इति। उक्तदण्डविषयो नेत्यर्थः। मन्वविरोधाय सङ्कोचेन विषयविशेषपरत्वमाद्यार्थस्याऽऽह—एतच्चेति,—पादत्रयोक्तं चेत्यर्थः। दण्डय इत्यस्याऽग्रे अनुषङ्गः। पूर्वन्तु साहसं सार्धपणशतद्वयं। भयात् द्वौ मध्यमौ दण्ड्य इति पाठः—द्वौ मध्यमौ

१. ख. ग. वादाद्विवादपराजयात्परा०। २. ख. ग. न दण्ड्यः। ३ त. क्ष्यान्यथात्वे। ४. थ. द. क्ष्यन्त्विति। ५. त. प्तिर्वर्त०। ६. थ. 'वर्त' इत्यादि 'पत्वात्' इत्यन्तं नास्ति। ७. ग. कौटसाक्ष्याभिधानस्य। ८. ब. तदास्पदद्र०। ९. 'बहुत्वे च' (?)। १०. फ. तस्यास्सत्वेन। ११. ब धनपेषं। १२. फ. विषयपरत्व०।

मनुनोक्तम्—" लोभात्सहस्रं दण्डयः स्यान्मोहात्पूर्वं तु साहसम् । भयाद्द्वौ मध्यमौ दण्डयो मैत्र्यात्पूर्वं चतुर्गुणम्॥ कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। आज्ञानद्वे शते पूर्णे बालिश्याच्छतमेव तु॥" इति। तत्र लोभोऽर्थलिप्सा, मोहो विपर्ययज्ञानम्, भयं संत्रासः, मैत्री स्नेहातिशयः, कामः स्त्रीव्यतिरेकाभिलाषः, क्रोधोऽमर्षः, अज्ञानमस्फु-
5 टज्ञानम्, बालिश्यं ज्ञानानुत्पादः । सहस्रादिषु ताम्रिकाः पणा गृह्यन्ते । तथा " कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः । प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥" इति । एतच्चाभ्यासविषयम्—कुर्वाणानितिवर्तमाननिर्देशात् ।

---

कूटव्यवहारकर्ता कूटकृत् दण्ड्यः एकैकश्च पृथक् पृथक् । साक्षी विवादधनद्विगुणं

---

## सुबोधिनी

क्षिवचनस्य । अतोऽभ्यासविषयत्वमिति । कौटसाक्ष्यं तु कुर्वाणानित्येतद्वचनं व्याचष्टे—

## बालंभट्टी

साहसावित्यर्थः। पणसहस्रमिति यावत्।भयाद्द्वै मध्यमो दण्ड्य इति त्वपपाठः। पूर्वं पूर्वसाहसं —पणसहस्रम् । एवमग्रेऽपि । परम्—उत्तरसाहसं। त्रिगुणं—पणसहस्रत्रयरूपं पूर्वापेक्षया। परो मध्यमसाहसस्तस्मिन् त्रिगुणे पञ्चदशशतानि संपद्यन्ते इति कल्पतरुः। पौनरुक्त्याभावाय हेतून् व्याचष्टे--लोभ इत्यादि । मैत्र्या इति पाठेनाऽऽह—मैत्रीति । मैत्र्यादिति पाठान्तरं ल्यबन्तोऽयम्।व्यतिकरः संबन्धः।नञोऽन्यार्थत्वेनाऽऽह--अस्फुटमिति।एतेन व्यवहारकाले एव विपरीतं ज्ञानमिति कल्पतरूक्तमपास्तं—मोहेन पौनरुक्त्यापत्तेः। बालिश्यं ज्ञानेति-तदुत्पत्ति प्रागभाव इत्यर्थः। बालिश्यमत्राप्राप्तयौवनत्वमात्रत्वं न बाल्यं तस्य साक्ष्यनिषेधादिति मेधातिथिकल्पतर्वादयः। पूर्वाध्यायान्तोक्तावष्टंभेनाऽऽह—सहस्रादिष्विति। तथा च पणानां सहस्र मित्याद्यन्वयः । एवं लोभादिकारणविशेषपरिज्ञाने दण्डमुक्त्वा कौटस्याभ्यासे दण्डविशेषं तदुक्तमेवाऽऽह—तथेति। शब्दतस्तद्विषयत्वाप्रतीतेः तत् स्पष्टयति—एतच्चाभ्यासेति। यद्यपि सकृदपराधे पूर्वमुक्तत्वादर्थादेवेदमभ्यासविषयं दण्डाधिक्योक्त्या परिशिष्यते, तथाऽपि शाब्दत्वमप्यस्तीति सूचनायाऽऽह—कुर्वाणानितीति। वर्तमानार्थलट्स्थानिकशानजादिनिर्देशादित्यर्थः। अयं भावः—अनभ्यासे एकदैव कृतत्वेन भूतार्थक्तवत्वन्तेन कृतवत इति निर्देष्टव्ये वर्तमानार्थकलट्स्थानिकशानजन्तेन कुर्वाणानित्युक्त्या क्रियायाः प्रारब्धापरिस-

---

१.—८. १२०—१२१. । २.—८. १२३. । ३. ख. ग. मानकालनि० । ४. 'साक्ष्यवचनस्य' 'कूटसाक्षिवचनस्य' इति वा भाव्यम् । ५. फ. अप्राप्तमात्रयौवनत्वम् । ६. फ. कौटसाक्ष्याभ्यासे । ७. फ. प्रारब्धपरि० ।

त्रीन्वर्णान् क्षत्रियादीन् पूर्वोक्तं दण्डं दण्डयित्वा प्रवासयेत् मारयेत्,—अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात्, अस्य चार्थशास्त्रस्वरूपत्वात्। तत्रापि प्रवासनमोष्ठच्छेदनं, जिह्वाच्छेदनं, प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम्। ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्निष्कासयेत्। यद्वा वाससो विगतो विवासाः विवासं करोतीति णिचि कृते "णाविष्ठवत्प्रातिपदिकस्य" इति टिलोपे रूपम्;— 5 नग्नीकुर्यादित्यर्थः। अथ वा वसत्यस्मिन्निति वासो गृहं विवासयेत् भग्नगृहं कुर्यादि-

## सुबोधिनी

त्रीन् वर्णानिति। अस्य चार्थशास्त्ररूपत्वादिति—अस्य कौटसाक्ष्यमित्येतद्वचनस्येत्यर्थः। ननु किं ब्राह्मणस्य सर्वत्र विवासनमेव नार्थदण्ड इत्याशङ्क्य दण्डोऽप्यस्तीत्याह—

## बालंभट्टी

मासत्वरूपरिवर्तमानत्वेन पुनः कौटसाक्ष्याभिधानस्यापरिसमाप्तत्वाद्वर्तमानत्वमेव तस्येत्यभ्यासविषयत्वस्यैवास्य सूचनादिति। अत्र यत कौटसाक्ष्यं ततः एव पुनःपुनरभिधानं न तु पुनःपुनः प्रश्नपूर्वकमिति न पूर्वविरोध इति बोध्यम्। इदं व्याचष्टे विशेषं वक्तुं—त्रीन् वर्णानिति। ब्राह्मणस्य दण्डान्तरविधानादाह—क्षत्रेति। दण्डस्यात्रानुक्तत्वादाह—पूर्वोक्तमिति। "एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः। धर्मस्याव्यभिचारार्थमधर्मनियमाय च॥" इति श्लोकमात्रव्यवहितेन लोभादित्यादिनोक्तमित्यर्थः। ननु प्रवासयेदित्यस्य कथमयमुक्तोऽर्थोऽत आह—अर्थेति। प्रवासेति—उपसर्गान्तरसंस्पृष्टस्येत्यर्थः। अतः "सचिह्नं ब्राह्मणं कृत्वा स्वाराष्ट्राद्विप्रवासयेत्।" इति स्तेयप्रकरणस्थमूलविरोधो नेति बोध्यम्। नन्वस्य धर्मशास्त्रत्वेन कथं तथा अत आह—अस्य चेति,-कौटसाक्ष्यमिति वचनस्येत्यर्थः। एतदन्तर्गतमपि तदस्तीति प्राक् प्रतिपादितं मारणमेव केवलं सर्वत्र नार्थः, किं त्वन्योऽपि इति तस्यानेकविधित्वमाह—तत्रापीति,— अर्थशास्त्रेऽपीत्यर्थः। कौटसाक्ष्यविषेति—तद्भेदेनेत्यर्थः। एतत्तुर्यपादार्थमाह—ब्राह्मेति। विवासनस्य मूलेऽप्युक्तत्वेनाभ्यासस्य आधिक्यस्यापेक्षितत्वेन मध्यपातिदण्डयित्वेत्यस्य मध्यमणिन्यायेनान्वयादाह-दण्डेति। अर्थान्तरमाह—यद्वेति। एवमग्रेऽपि। बहुव्रीहेर्लाघवात्तत्पुरुषमाह—वासस इति। वासो गृहमिति "हलश्च" इत्यधिकरणे घञ्। अत्रप्रक्रिया पूर्ववत्। इतिर्मन्त्वर्थसमाप्तौ। ननु मूलेन विवासनस्य तस्योक्तत्वे ब्राह्मणस्य किं सर्वत्र

१. थ. द. क्ष्यंत्वित्ये०। २. फ. अभ्यासे आधिक्यस्यापे०। ३. अ० ३. ३. १२१.

ति । ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञाने, अनभ्यासे च, तत्रतत्रोक्तोऽर्थ-
दण्ड एव ; अभ्यासे त्वर्थदण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया
विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारण-
विशेषापरिज्ञाने अनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड
5 एव ; महाविषये तु देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम् ।
नं च ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च

सुबोधिनी

ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे चेत्यादिना । अत्राप्यभ्यास

बालंभट्टी

साक्षिविषये विवासनमेव; नार्थदण्ड, इति चेत् न सोऽपि हि अस्तीत्याह—ब्राह्मणेति ।
प्रकृतमूलविषयत्वाभावादाह—तत्रतत्रोक्त इति । अभ्यासे त्विति—लोभादिकारण-
विशेषपरिज्ञाने इत्यादिः। अत्रापि एतद्विषयत्वादव्यवहितमनूक्तमाह—अर्थेति,—तदुक्ता-
र्थदण्ड इत्यर्थः। अत एव विशेषं प्रागुक्तमेवाव्यवस्थितमाह—तत्रापीति । विवासनांशेऽ-
पीत्यर्थः। अनुबन्धो गुणः । नं वेतीति पाठः । एवं तत्परिज्ञाते उक्त्वा तदपरिज्ञाने आह--
लोभादीति । अत्र कस्यापि प्रागुक्तस्याप्राप्तेर्विशेष्यानुक्तत्वाच्चाऽऽह क्षत्रियादिवदिति ।
एवेन मूलोक्तविवासननिरासः।विषयस्याल्पता तु दण्डस्य महत्त्वात्।ननु एवं मूलस्य निर्विषय-
तापत्तिरत आह—महेति । अन्यत् सर्वं प्राग्वत् । नमेवेति,—मूलेन तस्यैवोक्तत्वात्
मनूक्तविषयत्वाविशिष्यदण्डानुक्तत्वात् सामान्योक्तस्यानेन बाधाच्चेति भावः । एवे-
नार्थदण्डनिरासस्तथासतीति तात्पर्यम्— अत्रापीति । लोभादिकारणविशेषापरिज्ञाने
महाविषयेऽपीत्यर्थः । सर्वेषां ब्राह्मणादीनाम् । एतेन दण्डांशे वैलक्षण्यनिरासः। अन्यस्यावि-
षयत्वादाह —मनूक्तमिति,—कौटसाक्ष्यमित्यनेनोक्तमित्यर्थः । यद्वा मनूक्तत्वेन सा-
म्यादुभयांशेऽप्यवैलक्षण्यं बोध्यम् । यद्वा एवो व्युत्क्रमे मनूक्तमेवेत्यर्थः।अन्याविषयकत्वसूचक
एवकार इति बोध्यम् । न चेति,—"समग्रधनमक्षतम्" इत्याद्युक्तेः निध्यनुपलंभाच्चेति
भावः; तथा च मानवे दण्डयित्वेति पूर्वान्वय्येवेति बोध्यम्। तत्रादौ युक्तिमाह-अर्थदण्डेति।

१. क. ग. निर्वासनं वेति । २. क. तु तद्देशान्नि० । ३. ब्राह्मणस्यापीत्ययं शब्दो "लोभा-
दिकारणे" त्यादेरूर्ध्वं पठ्यते । ख. मिताक्षरायाम् । ४. फ. एतदविषय० । ५. फ. अल्पत्वात् ।
६. निर्वासनमेवेत्यत्र प्रतीकम् ।

निषिद्धे स्वल्पेऽप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणप्रवासनं दण्डाभावो वा प्रसज्येत—"चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम्। शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥" इति स्मरणाच्च । तथा—"सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् । " इति स्मरणात् । यत्तु शङ्खवचनं " त्रयाणां वर्णानां धनापहारवधबन्धनक्रियाः,

## सुबोधिनी

इति । अत्रापि महाविषये । सर्वेषां ब्राह्मणादीनाम्—दण्डाभावो वा प्रसज्येतेति । तच्चायुक्तमिति शेषः। ननु ब्राह्मणस्यार्थग्रहो न युज्यते—शङ्खवचनेन त्रयाणां वर्णानां क्षत्रियादीनां धनापहारवधबन्धक्रियाः ब्राह्मणस्य तु विवासनमेवेत्युक्तत्वादित्याशङ्क्य परिहरति— यत्तु शङ्खवचनं त्रयाणां वर्णानामित्यादिना। एष परिहाराभिप्रायः—सर्वस्वहरणं

## बालभट्टी

यत इत्यादिः । निषिद्धे इति " न शारीरो ब्राह्मणस्य दण्डः" इति गौतमादिति भावः । मूलस्य मनुतुल्यार्थकत्वेन तत्प्राप्तमाह — नग्नीति । अन्यत्राङ्कनस्याप्युक्तत्वादाह—अङ्केति,—समाहारद्वन्द्वः एतदन्यतममित्यर्थः । ननु दण्डस्य महत्त्वेनापराधस्याल्पत्वेन वैषम्येणायोग्यतया कथमेतत्प्रसक्तिः अत आह–दण्डाभावो वेति,—अन्यदण्डस्यानुक्तत्वात् । न चेदं युक्तं दण्डयादण्डने राज्ञो दोषस्योक्तत्वात् अधर्मवृद्धयापत्तेश्चेति भावः । ननु धिग्दण्डवाग्दण्डावुक्तावेवेति तौ यथा संभवं तत्र विशिष्यतोऽत आह—चतुर्णामिति । मनूक्तिरियम्। अत्र शारीरमिति क्षत्रियादिपरं धनेति साधारणम् इति भावः।धर्मादनपेतं धर्म्यम्। ननु "ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः । एते सर्वे पृथग्ज्ञेया महापातकिनो नराः ॥ चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् । शारीरम्"इत्यादि तत्र पाठो दृश्यते । एवं च ब्राह्मणपरतयाऽप्युपपत्तिरस्य । अत एव "शारीरं धनसंयुक्तम्" इत्यस्य स्वरसतः सङ्गतिः । तस्य च दश स्थानानि "उपस्थमुदरम्" इत्यादिनोक्तमित्यर्थ इति नेदं साधकम्; अत एव यमस्मृतिरपि–"सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम्।"सर्वेष्वपि ब्रह्महननादिष्वित्याद्यर्थः। अधिकरणस्य सम्बन्धित्वेन विवक्षया षष्ठी। एवोऽप्यर्थे अत आह —सहस्रमिति,—स्त्रीसंग्रहप्रकरणे मनूक्तिरियम्।च स्मइति— स्मरणाच्चेत्यर्थः। आदौ तथेति पाठेऽत्र अच:पाठः।नन्वेवं शङ्खविरोधः—तत्र त्रयाणां क्षत्त्रादीनां धनापहारादित्रयमुक्त्वा ब्राह्मणस्य विवासनाङ्ककरणयोरेवोक्तत्वात्। तथा च स्थलविशेषे तथा सत्त्वेपि सामान्येनार्थदण्डस्तस्य नैव युक्तोऽत आह—यत्तु शङ्खेति । त्रयाणां–क्षत्रियादीनां—धनेति । वधश्च या च ते धनापहारश्च ते च ता

१. मनुः—८. ३७८. । २. थ. द. दण्डो न० । ३. फ. चात्राह्म० । ४ अत्र अवताराकांशो वा गलितः अत आहेत्येतद्वा अशुद्धम् ।५. तथा सहस्रमिति आदौ पाठे अत्र अन्ते अचः—चकाररहितः पाठः । तथेति पाठाभावे चान्तपाटः इति बोध्यम् ।

विवासनाङ्ककरणं ब्राह्मणस्य"इति, तत्र धनापहारः सर्वस्वापहाराविवक्षितः;–वधसाहच र्यात्,"शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्तितः।काकिण्यादिस्त्वर्थदण्डःसर्वस्वान्तस्त थैव च॥" इति वधसर्वस्वहरणयोः सहपाठात्। यदप्युक्तम्—"राष्ट्रादेनं बाहिः— कुर्यात्समग्रधनमक्षतम्।" इति, तत्प्रथमकृत साहसविषयं न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति—"न जातु ब्राह्मण हन्यात्सर्वपापेष्वपि स्थितम्।" इति सामान्येन मनुस्मरणात्। तथा—"न ब्राह्मणवधाद्भूयानधर्मो ।विद्यते भुवि। तस्मादस्य वधं राजा मनसाऽपि न चिन्तयत्॥इति[3]॥ ८१॥

द्रव्यं दाप्यः॥ "ब्राह्मणस्त्वददद्दण्डं समग्रधन एव च। राष्ट्राद्विवास्यः"—तथा च स्वायम्भुवम् "न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्। राष्ट्रात्त्वेनं बहिष्कुर्यात्समग्रध- नमक्षतम्॥"इति। वधप्रसंगे दण्डप्रधानेन वा समग्रधन एव राष्ट्राद्बहिष्कुर्युः, न तु शारीरो निग्रहोऽन्यथा वा ब्राह्मणस्य कार्यं इत्यर्थः॥ ८१॥

## सुबोधिनी

ब्राह्मणस्य निषिध्यते, न दण्डमात्रमिति। ननु वधसाहचर्यमात्रेण धनापहारस्य सर्वस्वापहार परत्वं कथमित्यत आह—शारीरस्त्ववरोधादिरिति॥ ८१॥

## बालंभट्टी

इत्यर्थः। विवेति समाहारद्वन्दः। सर्वस्वेति,— तथा च तथोक्तः ब्राह्मणस्य सर्वस्वहरणं तात्पर्यतो निषिध्यते नार्थदण्डमात्रमिति भावः। ननु प्रकृते वधशब्दसान्निध्येऽपि सर्वस्व हरणस्य तत्साहचर्यस्यान्यत्रादृष्टत्वात् प्रकृते तत्सहपाठमात्रेण कथं तस्य तत् परत्वमत आह-- शारीरस्त्विति।मानवमेवेदम्।जीवितान्तः-तद्ग्रहणान्तः। एवमग्रेऽपि।प्रकीर्तित इत्यस्योभया- न्वयो मध्यमणिन्यायेन ।तथा च अर्थदण्डस्तु तदादिः तदन्तः प्रकीर्तितः। च किंच--तथैव —तत्सदृशएवेत्यर्थः। मनुविरोधं परिहरति— यदप्युक्तमिति। प्रथमकृतेति— स्त्रीसङ्ग्रहणाख्यप्रक्रान्तसाहसविषयकमित्यर्थः। प्रकरणादेवेति भावः। ननु सहपाठेन तथा साधनेवच्छारीरस्यापि ब्राह्मणस्य प्राप्तिः स्यादत आह–शारीरस्त्विति। कदाचित्-कदाचिदपि राष्ट्रादित्यस्य प्राचीनं मानवमाह—न जात्विति,-सर्वपापेषु स्थितमपि ब्राह्मणं कदाचिदपि न हन्यादित्यर्थः। सामेति—पातकसामान्येनेत्यर्थः। अक्षतमित्यग्रिममपि मानवं हेत्वन्त- रतयाऽऽह—तथेति,-समुच्चयेऽयम्। भूयान् -अधिकः। इतीति—सामान्येन मनुस्मरणादि- त्यस्यानुषङ्गः। प्रपञ्चितमिदं प्राक्, तत एव बोध्यम्॥ ८१॥

१. नारदपरिशिष्टम् ५४. । २.—८. ३८०. ३. मनुः— ८. ३८१.।। ४. फ. ब्राह्मणे। ५. प. न्तरमत आह। फ. न्तरमाह।

अपि च—

**यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।**

**स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥**

यस्तु साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन् निगदन काले तमोवृतो रागाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यः साक्षिभ्यो निह्नुते 'नाहमत्र साक्षी भवामि' इति स विवादपराजये यो दण्डस्तं दण्डमष्टगुणं दाप्यः, *ब्राह्मणं पुनरष्टगुण-द्रव्यदण्डदानासमर्थं विवासयेत् । विवासनं च नग्नीकरणगृहभङ्गदेशनिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम् । इतरेषां त्वष्टगुणद्रव्यदण्डासंभवे स्वजात्युचितकर्मकरण-निगडबन्धनकारागृहप्रवेशादि द्रष्टव्यम् । एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम् । 5

उत्तरसाक्षी तु प्रपत्स्यता मुमूर्षुणा वा—

**यः साक्ष्यं श्रावितोऽन्येन इत्यादि ॥ ८२ ॥**

## सुबोधिनी

एतच्चै पूर्वश्लोकेऽप्यनुसर्तव्यमिति—एतदिति ब्राह्मणस्य द्रव्यदानासमर्थस्य

## बालंभट्टी

अपि चेति,—साक्षिणामुक्तदेषान्यदोषे दण्डान्तरमाहेत्यर्थः । अत एव तुः उक्तवैलक्षण्ये । न ददातीति प्रयुक्तमूलापौनरुक्त्यायाऽऽह—अङ्गीकृत्येति। ल्यबन्तस्य नि-ह्नुते इत्यत्रान्वयः । अन्यैरित्यादेरुत्तरेणान्वयः । साक्ष्यमिति—यदित्यादिः। निगदनकाले—भाषणकाले। इदमर्थलब्धम्। तेषां तमः कार्यत्वादाह—रागादीति,—हेतुगर्भविशेषणमिदम्। तदित्यस्यार्थं प्रक्रान्तत्वादाह—साक्ष्यमिति । प्रकृतत्वात्तदर्थमाह— साक्षिभ्य इति निह्नवमेवाऽऽह—अहामीति । विवासमित्यस्योक्तार्थकत्वस्यानुपदमेव व्यवस्थितत्वादाह—विवासेति । ब्राह्मणे अर्थदण्डस्यानुपदमेव स्थापितत्वादाह—अष्टगुणेति । पुनः स्पष्टार्थ-माह—विवेति,-एतत्त्रितयस्वरूपमित्यर्थः। प्रागुक्तरीत्या न्यूनतां निराचष्टे—इतरेषामिति,—क्षत्रियादीनामित्यर्थः। सिंहावलोकनन्यायेन तत्रापि न्यूनतां निराचष्टे— एतच्चेति ।

* "ब्राह्मणश्चेदेवं विधस्तं स्वदेशाद्विवासयेत् निर्वासयेन्न तु दण्डयेत्"—इत्यपरार्कः ।

१. क० गदका० । २. त. ०च्च सर्वं पू० । ३. फ. स्वीकृ० ।

यदा सर्वे साक्ष्यं निह्नुवते, तदा सर्वे समानदोषाः; यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति, तदाऽनुबन्धाद्यपेक्षया दण्ड्याः; यथाऽऽह कात्यायनः—"उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः।" इति। न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्तव्याः; यथाऽऽह नारदः—"न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः। 5 भेदयेन्नैव चान्येन हीयेतैवं समाचरन्॥" इति[1] ॥ ८२ ॥

साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धम्, तदपवादार्थमाह—

## वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।

---

अतोऽवश्यं वक्तव्यं साक्ष्यं सत्यं च ॥ ८२ ॥

### सुबोधिनी

विवासनम्; क्षत्रियादीनां[2] द्रव्यदानासमर्थानां निगडबन्धादि[3] यदुक्तं, तत् पृथक् पृथक् पूर्वोक्तप्रकारेण दण्ड्या इत्यर्थः। तदाऽनुबन्धाद्यपेक्षयेति—जातिद्रव्यगुणाद्यपेक्षयेत्यर्थः॥७२॥

### बालंभट्टी

विप्रस्य दण्डदानासमर्थस्य विवासनम्। क्षत्रादीनां तदसमर्थानां कर्मकरणादीति यदुक्तं तदित्यर्थः। य इत्याद्युक्तेरेकस्यैवेदम् इति भ्रमनिरासायाऽऽह—यदेति। समानेति,—प्रागुक्तरीत्या पृथक् पृथक् दण्ड्या इत्यर्थः। तथा च मूलमुपलक्षणम्। गृहं सम्मार्ष्टीतिवदुद्देश्यविशेषणमेकत्वमविवक्षितं वेति न न्यूनतेति भावः। विशेषमाह— यदा त्विति। तदनुबन्धेति—जातिद्रव्यगुणाद्यपेक्षयेत्यर्थः। उक्तेति पाठे समस्तं तत्र हेतुमाह—वागिति। वाचः छलं मिथ्यात्वं,—तदन्विता इत्यर्थः। विशेषान्तरमाह—न चेति,—नापीत्यर्थः। प्रकारान्तरमाह—भेदयेदिति,—स्वयं रहसि अगमनेऽपि अन्यद्वारा भेदोऽपि न करणीय इत्यर्थः। अत एवोक्तिः। मूले रह इत्यव्ययम् एतत्फलमाह—हीयेतैवमिति ॥ ८२ ॥

उपस्थितेत्युक्तं, व्युत्क्रमेणाऽऽह—अवचनमिति,—सर्वत्र व्यवहारे पूर्वोक्तमूलाभ्या-

१.—१. १६५. । २. थ. द. नां च द्र० । ३. थ. द. न्धनादि० ।

यत्र वर्णिनां [1]शूद्रविट्क्षत्रविप्राणां सत्यवचनेन वधः संभाव्यते, तत्र साक्षी-अनृतं वदेत् सत्यं न वदेत् । अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्ध-मसत्यवचनमवचनं चाभ्यनुज्ञायते । यत्र शङ्काभियोगादौ सत्यवचने वर्णिनो वधो-ऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते । यत्र तु सत्यवचनेऽर्थि-प्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधस्तत्र तूष्णीम्भावाभ्यनुज्ञा 5

## सुबोधिनी

यत्र वर्णिनां शूद्राविट्क्षत्रविप्राणामिति—अत्र प्रातिलोम्येन [2]वर्णानामुपादानं हीनस्यापि वधो गर्हितः, किमुत उत्कृष्टस्येत्येतज्ज्ञापनार्थम्। असत्यवचनमवचनं चाभ्यनुज्ञा-यत इत्युक्तं पूर्वत्र । [3]क्वासत्यवचनाभ्यनुज्ञानं क्व वाऽवचनाभ्यनुज्ञानमित्याकाङ्क्षायामसत्य वचनाभ्यनु[4]ज्ञाविषयं [5]दर्शयति—यत्र शङ्काभियोगादाविति । अवचनाभ्यनुज्ञानविषय-माह—यत्र तु सत्यवचन इति ॥ ८२-॥

## बालंभट्टी

मिति भावः । अग्रे एकस्यैवोक्तत्वादाह—वर्णिनामिति । अर्थान्तराभ्रमायाऽऽह—शूद्रे-ति । अत्र प्रातिलोम्येन कथनं हीनस्यापि वधो गर्हितः, किमुत्कृष्टस्येत्यन्यत्राप्येवं बोध्य-मिति ज्ञापनार्थम् । हिसूचितमाह—सत्येति । तदानीं तस्याभावादाह—संभाव्यते इति । अन्यसङ्ग्रहाय तात्पर्यार्थमाह—सत्यमिति । तदेवाऽऽह—अनेन चेति । चो वाक्यालङ्कारे । प्रागुक्तक्रमेणाऽऽह—असत्येति । उभयाभ्यनुज्ञाने उक्तेऽपि कुत्र किमि-त्याशङ्कायां तयोर्व्यवस्थां दर्शयितुमादावसत्यवचनाभ्यनुज्ञाविषयमाह—यत्र शङ्केति । एतत्स्वरूपमादावुक्तम् । अवचनाभ्यनुज्ञानाविषयमाह—यत्र त्विति। वचने च तत्रापि ।

*"यद्यपि न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपिस्थितम्।" इत्यादिभिर्वाक्यैर्ब्राह्मणस्य वधो नि-षिद्धः;तथाऽपि तस्यापि पुरनिर्वासनादिर्वधतुल्यो दण्डोऽस्तीति तदभिप्रायकमिदम्; यथाऽऽह मनुः–"ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा। ललाटे चाङ्ककरणं प्रयाणं गर्दभेन च॥" इति। यद्वा "गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदा-चरेत् ॥" इति मनुवचनेन महत्यपराधे विप्रविशेषस्यापि वधः प्राप्नोतीति तत्परमिदम्।–अथ वा अतिक्रान्तनिषेधेन यत्र ब्रह्मवधः क्रियते तत्रैतत् ॥"—इत्यपरार्कः ।

---

१. क. तूष्णीम्भावावश्याभ्यनु॰ । २. थ. द. वर्णिनामु॰ । ३. थ. द. तत्र क्वा॰। ४. थ. ज्ञानवि॰ । ५. द. 'दर्शयति' इत्यारभ्य 'विषयम्' इत्यन्तं नास्ति ।

राजा यद्यनुमन्यते। अथ राजा कथमप्यकथने न मुञ्चति, तदा भेदादसाक्षित्वं कर्तव्यम् । तस्याप्यसंभवे सत्यमेव वदितव्यम् । असत्यवचने वर्णिवधदोषोऽसत्यवचनदोषश्च, सत्यवचने तु वर्णिवधदोष एव । तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम् ॥ ८२ ॥

5 तर्ह्यसत्यवचने तूष्णीम्भावे च शास्त्राभ्यनुज्ञानात्प्रत्यवायाभाव इत्यत आह—

**तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥**

तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय सारस्वतश्चरुर्द्विजैरेकैकशो निर्वाप्यः कर्तव्यः। सरस्वती देवता अस्येति सारस्वतः । अनवस्रावितान्तरूष्म-

अस्यापवादः— **वर्णिनां तु वधो यत्र इत्यादि ॥ ८३ ॥**

शूद्रेण तु दानादय इत्यभिप्रायः । चतुर्ष्वपि भवा ब्राह्मणादयो वर्णिनः तेषां यत्र सा-

## सुबोधिनी

अनृतवचनावचननिषेधो हि द्विप्रकारः—साधारणोऽसाधारणश्चेति । साधारणस्तु "नानृतं वदेत्" "अब्रुवन् विब्रुवन् वा" इत्यादिकः । असाधारणस्तु "स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ।" "अब्रुवन् हि नरः साक्ष्यम्" इत्यादिकश्च ।

## बालंभट्टी

तत्र विशेषमाह—राजेति । यदीत्यस्य तात्पर्यमाह—अथेति,—कथमपि न मुञ्चतीत्यन्वयः । साक्षिण इति शेषः । तस्यापि —भेदस्यापि । तत्र बीजमाह—असत्येति । ननु तत्र दोषैक्येऽपि दुष्टत्वं तदवस्थमेव । अत आह—तत्र चेति,—तद्दोषनिरासार्थं चेत्यर्थः ॥ ८२ ॥

तर्हीति — उभयाभ्यनुज्ञायामित्यर्थः । किमिति शेषः । नन्वित्यादिः । तच्छब्देन तयोरुक्तक्रमेण परामर्श इत्याह—अनृतेति । द्विजैरित्यनेन शूद्रनिरासः तस्याग्निसाध्यत्वात्, तस्य तु प्रायश्चित्तं विष्णुनोक्तं—"शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यात्" इति । एकेति—एकदिनभक्षणपर्याप्तमित्यर्थः । ब्राह्मणभोजनन्यायेनाऽऽह — एकैकश इति । सरस्वतीदेवताकत्वनिरासायाऽऽह — सरस्वतीति । अत्र शास्त्रे परिभाषणादाह—अनवेति । ननु साक्ष्येऽनृतवचनावचनयोः मूलविशेषे

१. ख. वचनेन व० । २. ख. ज्ञया । ३. प. उदरस्थमेव । ४. प. नृताभूतव० । ५. फ. स्थलविशे० ।

पक्वौदने चरुशब्दः प्रसिद्धः । इहायमभिसन्धिः,—साक्षिणामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम् । यत्तु "नानृतं वदेत्" "अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषी ।" इति च सामान्येनानृतवचनमवचनं च निषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तम्; न च मन्तव्यं साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादवस्थ्यादवचनाभ्यनुज्ञावचन- 5

सुबोधिनी

एवं स्थिते योऽयमसाधारणो निषेधः साक्ष्यनृतवचनावचनयोस्तत्राभ्यनुज्ञावशादनृतवचनेऽवचने वा न प्रायश्चित्तमित्यभिप्रायेणाऽऽह — साक्षिणामनृतवचनमवचनं चेति । ननु तर्हि किमिति "तत्पावनाय" इत्यनेन प्रायश्चित्तार्थं सारस्वतचरुर्विधीयत इत्याशङ्क्य साधारणनिषेधातिक्रमाभ्यनुज्ञा[3]भावात् तदतिक्रमदोषपरिहारायेदं प्रायश्चित्तमित्याह—यत्तु नानृतं वदेदिति । ननु "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।" इत्येतन्निषिद्धानृतवचनावचनाभ्यनुज्ञानपरं वचनमनर्थकं सामान्यतो निषिद्धानृतवचनावचना[4]तिक्रमजन्यदोषस्य तथा[5]प्यवस्थितत्वादित्याशङ्क्य परिहरति — न च मन्तव्यमित्यादिना । एष परिहाराभिप्रायः — साधारणनिषे-

बालंभट्टी

शास्त्राभ्यनुज्ञाने यदि प्रत्यवायाभावस्तर्हि प्रायश्चित्तोक्तिरफला, अथ यदि प्रत्यवायस्तर्ह्यभ्यनुज्ञानं व्यर्थमिति मिथो विरुद्धमिदमत आह —इहायमभीति,—अभिप्राय इत्यर्थः । अ[6]नृतवचनावचननिषेधौ द्विविधौ साधारणावसाधारणौ च । तत्राऽऽद्यौ "नाभूतं[7] वदेत्" इत्यनावश्याधीतौ "अब्रुवन्विब्रुवन्वा" इत्यादिकौ । द्वितीयौ तु "स तान् सर्वानवाप्नोति यस्साक्ष्यमनृतं वदेत् ।" इति, "अब्रुवन् हि नरस्साक्ष्यम्" इति च । एवं सति प्रकरणात् द्वितीययोरेव शास्त्राभ्यनुज्ञावशात्तयोर्न प्रायश्चित्तमस्य व्यवहितत्वादित्याह—साक्षिणामिति । तदिहेति,—अत्र मूले पूर्वार्द्धेनेति भावः । नन्वेवं प्रायश्चित्तविधानं व्यर्थमिति चेत्—न ; साधारणनिषेधापवादाभावात्तत्राभ्यनुज्ञानाभावात्तदतिक्रमजन्यदोषपरिहारायास्य साफल्यात् तच्छब्देन बुद्धिस्थवाचिना तयोः परामर्शासंभवादाह —यत्त्विति । नन्वेवं वर्णिनामित्यभ्यनुज्ञावचनमनर्थकं,सामान्यतो निषि[8]द्धानृतवचनातिक्रमजन्यदोषयोस्तथाऽप्यवस्थितत्वादित्यत आह—न चमन्तव्यमिति । निमित्तेति—निमित्तकेत्यर्थः । पूर्वं मूले तथाक्रमस्य सत्त्वात् तदनुरोधेनात्र सर्व[9]त्रानृतवचनस्य पूर्वनिपात । प्रत्यवायस्येति,-

१. मनुः.—८. १३. । २. क. ज. च. प्रतिषि० । ३. थ. द. ज्ञाना० । ४ त नातिक्रम० । ५. द. थापि स्थि० । ६. प. अनुभववचनाव० । ७. फ. नानृतं । ८. प. षिद्धाभूतवचनानि० । ९. प सर्वानृत ।

मनर्थकमिति; यतः साक्षिणामसत्यवचनाद्वचनप्रतिषेधातिक्रमयोर्भूयान्प्रत्यवायः, साधारणानृतवचनावचनयोरल्पीयान् इत्यर्थवदभ्यनुज्ञावचनम् । यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र, तथाऽपीहाभ्यनुज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसो निवृत्त्याऽल्पीयानप्यानुषङ्गिकोऽपि प्रत्यवायो न

## सुबोधिनी

धातिक्रमजन्यभूयोदोषाभावं प्रतिपादयत् सार्थकमिति । ननु ब्रह्महनने विचारिते पापमुत्पद्यते । तथोद्योगे कृते तस्मादप्यधिकं पापम्, हनने निष्पन्ने महत् पापमिति पूर्वपूर्वापेक्षया पापाधिक्येऽपि हननजनितमहापापप्रायश्चित्ते क्रियमाणे आनुषङ्गिकविचारोद्योगादिजन्यानामल्पीयसामपि पापानां यथा निवृत्तिः, तथेहाप्यभ्यनुज्ञावचनेन महतः प्रत्यवायस्य निवृत्तेरनुषङ्गसिद्धसाधारणानृतवचनानिषेधातिक्रम जन्यस्वल्पप्रत्यवायनिवृत्तिरपि भवतु[1]"वर्णिनां हि"इत्यभ्यनुज्ञावचना[2]दित्याह-यद्यपीत्यादिना। "तत्पावनाय निर्वाप्य" इत्येतद्वचनारम्भसामर्थ्याद[3]त्राल्पीयसः प्रत्यवायस्या[4]निवृत्तिरित्याह तथापीत्यादिना । अयमाशयः—यद्यभ्यनुज्ञावचनमेव स्यात्, तर्हि स्यान्महतः प्रत्यवायस्य निवृत्त्यानुषङ्गसिद्धस्याल्पीयसोऽपि निवृत्तिः । प्रायश्चित्तविधायकमप्यस्ति वचनम् अत एव तदानर्थक्यपरिहारायानुषङ्गसिद्धा[6]ल्पीयः प्रत्यवायस्यानिवृत्तिः कल्प्यत इति । उक्त-

## बालंभट्टी

जातावेकवचनम् । एवमग्रेऽपि । तत्र प्रत्येकाभिप्रायं वा हेतुमाह—यत इति । साधारणनिषिद्धातिक्रमजन्यप्रत्यवाययोः भूयस्त्वाभावप्रतिपादकतया तस्य सार्थक्यमिति भावः । ननु ब्रह्महत्याविचारे पापं भवति, तथोद्योगतोऽधिकं तत्, हनने कृते[8] तु महत्पापमिति पूर्वपूर्वापेक्षया उत्तरोत्तरस्य पातकास्याऽऽधिक्येऽपि[7] हत्यानिमित्तकमहाप्रायश्चित्ते कृते आनुषङ्गिकविचारोद्योगादिजन्यानामल्पीयसामपि पापनां निवृत्तिस्तथेहापि तत्राभ्यनुज्ञा वचने महतः प्रत्यवायस्य निवृत्तेरनुषङ्गसिद्धसाधारणानृतवचनावचननिषेधातिक्रमजन्यस्वल्पप्रत्यवाययोरपि निवृत्तिस्स्यादिति तदर्थं प्रायश्चित्तोपदेशो व्यर्थ एवेत्याशयेन शङ्कते — यद्यपीति । यस्य......तथाऽपीहेति । वचनद्वयकरणादिह तथा नान्यथान्यतरवैयर्थ्यं स्पष्टमेव । अभ्यनुज्ञावचनात्तथा सिद्धावेव प्रायश्चित्तवचनादेतत्सिद्ध्यतीत्युभयोरुल्लेखः ।

१. थ. द. वत्वित्याशङ्क्य (?) २. थ. द. नात् तत्पा (?) । ३. थ. द. च्चात्र नाल्पी० । ४ थ. द. स्यनि० । ५. थ. द. यद्यपि भूयस इत्या (?) । ६. थ. द. द्धस्याल्पी० । ७ प. पापानां निवृत्तिस्तथे० । ८ प. 'कृते' इति नास्ति ।

निवर्तेत इति गम्यते। एतदेवान्यत्र प्रश्नेषु वर्णिवधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम् । न च तत्र प्रायश्चित्तमस्ति, प्रतिषेधान्तराभावात् निमित्तान्तरेण कालान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यत इति ॥ ८३ ॥

इति साक्षिप्रकरणम् ॥

---

क्षिणि सत्याभिधातरि वधःस्यात्, तत्रसाक्ष्यनृतं वक्तुमर्हति। सदोषमपि गुणभूम्नाऽनृतवचनमभ्युपगम्यते । तन्निर्हरणाय च सारस्वतश्चरुः कार्यः द्विजैः; शूद्रेण तु दानादय इत्यभिप्रायः। वर्णिनामितिवचनाच्चापशदवधप्रसङ्गे सत्यवचनमेव;तथा च गौतमः—"नानृतवचने दोषो जीवनं च तदधीनम् " इत्युक्त्वाऽऽह "न नु वाऽल्पीयसो जीवनम्" इति। अदोषवचनं चाल्पदोषाभिप्रायम् प्रायश्चित्तविधानसामर्थ्यात् द्रष्टव्यम् । एतच्चान्यायप्राप्तमेव मन्दं बुद्धिप्रतिबोधनाय प्रायश्चित्तविधानाच्चावश्यकर्तव्यताऽत्रोच्यते । अन्यत्रापि गुरुलघुत्वे समीक्ष्य पापस्याप्यनुष्ठानं प्रायश्चित्तं च तदपनुत्तये कार्यं यथा स्यात् । धर्मान्तरोपयोगित्वाच्च एतत्कामकृतमप्यकामकृतमेव द्रष्टव्यम् । स्वायंभुवे तु— "वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् । अनृतस्यैनसस्तस्य कुर्वाणो निष्कृतिं पराम् ॥ कूष्माण्डैर्वापि जुहुयात् घृतमग्नौ यथाविधि। उदित्यृचा वा वा वारुण्या तृचेनाब्दैवतेनवा "॥ इति । एवं प्रायश्चित्तचतुष्टयं यदाम्नातं तत्तन्निर्देशानुसारात् शूद्रादिक्रमेण यथावर्णं क्रमशो द्रष्टव्यम्। शूद्रस्वरूपापेक्षया चरोः सकृद्वृत्तिद्विस्त्रिरावृत्तिर्यथा स्यादिति चरुभिरित्युक्तम्। अस्मादेव च प्रायश्चित्तादनृतानुज्ञानाद्राज्ञो नैयोगिकं वेध्यानुक्षेपणमिति गम्यते । साक्षिणस्तु प्रायश्चित्तमात्रोपदेशाद्राजकीयविनयानर्हा इत्यवसेयम् ।

---

## सुबोधिनी

न्यायमन्यत्राप्यतिदिशति—एतदेवेति। उक्तन्यायातिदेशेन प्रायश्चित्तस्याप्यतिदेशप्राप्तावपवदति–नच तत्रेति। तत्रोपपत्तिमाह–प्रतिषेधान्तराभावादिति। एतदुक्तं भवति—यथा

## बालंभट्टी

साक्षिप्रमाणमुपलक्षणमित्याह—एतदेवेति,—स्वातन्त्र्येणानुक्तत्वात्। अन्यत्र—साक्षिभिन्नेषु अनृतेति—सामान्यवचननिषिद्धेत्यादिः। अत एव तत्र प्रत्यवायाभावः। एवं तौल्येऽपि कञ्चन विशेषमाह—न चेति। मूलोक्तन्तु साक्षिविषयकमिति भावः। प्रकृतवैषम्यमाहप्रतीति। ननु भवतूक्तरीत्या तदभावः, तथाऽप्यनृतवचनादिप्रयुक्तो राजदण्डस्तु स्यादेव ; अत आह—निमित्तान्तरेणेति। अन्येषां च —पान्थादीनाम्। अस्मादेव— अभ्यनुज्ञा-

१. प. प्यभूतव॰ । २. प. स्यादेवापराधे सति ।

## सुबोधिनी

साधारण्येनानृतवचनावचननिषेधे सत्यपि पुनर्विशेषेण साक्षिणां तन्निषेधः. न तथा निषेधद्वयं पान्थादिषु; किन्तु साधारणानिषेध एव । अतो विशिष्टनिषेधान्तराभावात् सामान्यनिषेधातिक्रमजन्यप्रत्यवायस्याभ्यनुज्ञावचनबलेनाभावाच्च न प्रायश्चित्तिरिति ॥ ८३ ॥

इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां साक्षिप्रकरणम् ॥

---

## बालंभट्टी

वचनादेव । अपराधे सति दण्डशास्त्रतदभ्यनुज्ञाने, अपराधाभावेन तदभावः । यदि तु दण्डस्स्यात् तदा तद्धेत्वपराधकल्पना स्यादिति वचनवैयर्थ्यं तदवस्थमेवेति भावः ॥ ८३ ॥ इति साक्षिप्रकरणम् ॥

---

# अथ लेख्यप्रकरणम् ६

भुक्तिसाक्षिणौ निरूपितौ; सांप्रतं लेख्यं निरूप्यते। तत्र लेख्यं द्विविधं—शासनं, जानपदं चेति। शासनं निरूपितं, जानपदमभिधीयते। *तच्च द्विविधम्—स्वहस्तकृतमन्यकृतं चेति। तत्र स्वहस्तकृतमसाक्षिकम्, अन्यकृतं ससाक्षिकम्; अनयोश्च देशाचारानुसारेण प्रामाण्यम्; यथाऽऽह नारदः—"लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा। असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः॥" इति। तत्रान्यकृतमाह— 5

**यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।**

## सुबोधिनी

अथ लेख्यप्रकरणम्॥ 'प्रमाणं लिखितं भुक्तिः साक्षिणश्च' इति मानुषप्रमाणानां मध्ये निर्देशक्रमेण लेख्यस्य पूर्वभावित्वेऽपि साक्षिलिखितयोरार्थसम्बन्धवशात् पौर्वापर्यं सिद्धवत्कृत्य प्रसङ्गात् प्रथमत एव मध्ये[3]निविष्टापि भुक्तिः प्रतिपादिता। ततश्च साक्षिस्वरूपे विज्ञाते "लेख्यं तु साक्षिमत् कार्यम्" इति साक्षियु[4]क्तलेख्या[5]भिधानं सुबोधमिति साक्षिप्रकरणानन्तरभावित्वं लेख्यप्रकरणस्योचितमिति सङ्गतिं दर्शयति—भुक्तिसाक्षिणौ निरूपिताविति। मूलवचनमवतारयति—तत्रान्यकृतमाहेति॥ ८४॥

## बालंभट्टी

[1]व्यवहितसङ्गतिं प्रदर्शयन् स्वल्पमुपोद्घातमाह—भु[6]क्तीति। तत्र—निरूपणीये लेख्ये 'तत्र शा[7]सनम्' इति पाठः; तयोर्मध्य इत्यर्थः। तच्च—जानपदञ्च। अन्यहस्तकृतामिति,—सामान्यवचननिषिद्धमिति भावः। अन्यकृतमिति पाठो नारदानुरोधात्। तत्र—तयोर्मध्ये। असाक्षिकं—साक्षिनिरपेक्षम्। देशव्यवहाराविरोधाय व्यवस्थामाह—अनयोश्चेति। क्रमस्य विवक्षितत्वात् स्वहस्तेत्यस्य पूर्वनिपातो द्वन्द्वे, मध्यमपदलोपी[8] समासो वा। यथेति पाठः। लेख्यन्तु यथा स्वहस्तकृतमन्यकृतञ्चेत्येवं द्विविधं ज्ञेयम्, तथा यथाक्रममसाक्षिमत् साक्षिमच्चेत्येवं तदुभयं ज्ञेयमित्यर्थः। तथेति पाठे पूर्वत्र तथेतिवद्यथेत्यस्याध्याहारेणोक्त एवाऽर्थः। सिद्धिरिति—तयोर्देशस्थितेस्तदाचारात् प्रामाण्यमित्यर्थः। अथ मूलमवतारयति—तत्रेति,—तयोर्मध्ये इत्यर्थः। तस्य प्रामाण्यस्य बहूपायसाध्यत्वादिहानुक्तिः। यः[9] कश्चिदिति—उक्तनारदाद्वक्ष्यमाणमूलाच्चास्यान्यकृतपरत्वं कश्चिदर्थमाह।

---

*अत्र "भोगदानक्रयाधीनां संविद्दासऋणादिभिः। सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम्" इत्यादिबृहस्पतिवसिष्ठादिवचनोपन्यासेन लौकिकलेख्यस्यानेकविधत्वमुक्तमपरार्केण।

---

१. १. १३५। २ थ. निर्दिष्ट। ३. त भुक्ति (?)। ४. थ. द. ल्यविधा। ५. फ.अव०। ६. प. भुक्तिरि०। ७. प. फ. तत्र अन्यहस्तकृतञ्चेति शा०। ८. फ. पिस०। ९. प. दादावुक्तिः।

## लेख्यं[1] वा साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥ ८४ ॥

धनिकाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या 'इयता कालेनैतावद्देयमियती च प्रतिमासं वृद्धिः' इति निष्णातो व्यवस्थितः, तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं लेख्यं साक्षिमदुक्तलक्षणसाक्षियुक्तं धनिकपूर्वकं धनिकः पूर्वो यस्मिंस्तद्धनिकपूर्वकं—धनिकनामलेखनपूर्वकमितियावत् कार्यं कर्तव्यम्। उक्तलक्षणाः साक्षिणो वा कर्तव्याः—"कर्त्रा तु यत्कृतं कार्यं सिद्ध्यर्थं तस्य साक्षिणः। प्रवर्तन्ते विवादेषु स्वकृतं वाथ लेख्यकम्॥" इति स्मरणात् ॥ ८४ ॥

अपि च—

## समामासतदर्धाहर्नामजातिस्वगोत्रकैः।

साक्ष्यनन्तरं व्यक्तिप्रमाणकत्वाविशेषाल्लिखितमुच्यते—**यः कश्चिदर्थो निष्णात इत्यादि ॥ ८४ ॥**

यः कश्चिद्दणाधिक्रयप्रतिग्रहविक्रयादिरर्थो निष्णातः परिशुद्धस्वरूपसङ्ख्यापरिमाणवृद्ध्यवध्यादिकः, धनिकर्णिकादीनां स्वरुच्या परस्परमवस्थिते तस्मिन् अव्यभिचारार्थं लेख्यं वोक्तलक्षणसाक्षियुक्तं भाविसन्देहापनोदनक्षमं कार्यम्; तस्य चायं क्रमः—धनिकपूर्वकं स्यात्; ऋणिकापेक्षया च धनिकस्य पूर्वकत्वं, न कालाद्यपेक्षया ॥ ८४ ॥

### बालंभट्टी

हिरण्येति। तामेवाऽऽह—इयतेति। रुच्यन्तरमाह— इयती चेति। निष्णेत्यस्य व्याख्या—व्यवेति। तस्मिन्नित्यस्य व्याख्या—अर्थे इति,—विषयसप्तमीयं वि[3]प्रतिपत्तावन्वयः। यथाश्रुतेऽनुपपत्तेः शेषमाह—कालान्तरे इति। विप्रतिपत्तौ सम्भावितायाम् इति शेषः। लेख्ये साक्षियुक्तत्वं तन्नामवैशिष्ट्येन। अत एवाग्रेऽपि यथाश्रुतासम्भवादाह—नेमात। कार्यमित्यस्य व्याख्या-कर्तव्यमिति। लेख्यं वेति वा शब्दसूचितं लाघवाद्विशेषपक्षान्तरमाह—उक्तेति,—त एव वेत्यर्थः। नारदमेवाऽऽह[4]—कर्त्रा त्विति। विवादेषु सत्सु। पक्षान्तरमाह— स्वकृतमिति। वा—अथवा ॥ ८४ ॥

नैतावन्मात्रेण तस्य पूर्तिरित्याह—अपि चेति। अत्र समादीनां व्याप्यव्यापक भावः। अत एव क्रमस्य प्रतिपाद्यत्वात्तस्य प्रागुक्तिरेव क्रमो नामादावपि बोध्यः।

१. क. खं. लेख्यं तु। २.........। ३. प 'वि' नास्ति। ४ प. वाऽऽह ॥८४॥ अपि चेति।

सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ ८५ ॥

समा संवत्सरः; मासश्चैत्रादिः; तदर्धं पक्षः शुक्लः कृष्णो वा; अहस्तिथिः प्रतिपदादिः; नाम धनिकाधमर्णयोः; जातिर्ब्राह्मणत्वादिः; स्वगोत्रं वासिष्ठादिगोत्रम्; एतैः समादिभिः चिह्नितम्। तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं; गुणनाम बह्वृचः कठ इति; आत्मीयपितृनाम धनिकर्णिकपितृनाम आदिशब्दात् द्रव्यजातिसंख्यावारादेर्ग्रहणम्; एतैश्च चिह्नितं लेख्यं कार्यमिति गतेन संबन्धः॥८५॥ 5

किं च

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ ८६ ॥

धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितः, तस्मिन्नर्थे समाप्ते लिखिते ऋणी 10 अधमर्णो नामाऽऽत्मीयं स्वहस्तेन "अस्मिँल्लेख्ये यदुपरि लेखितं तन्ममामुकपुत्रस्य मतमभिप्रेतम्" इति निवेशयेत्—पत्रे लिखेत् ॥८६॥

ततश्चायं क्रमः—समामासतदर्धाहर्वासेत्यादि ॥ ८५ ॥
समाप्तेऽर्थे ऋणी नाम इत्यादि ॥ ८६ ॥

बालंभट्टी

स्वार्थेके[2]। स्त्रीलिङ्गो बहुवचनान्त इत्याह—समा इति। तदर्धः पक्ष इति पाठः। अक्लीबत्वादेकदेशिसमासाभावात् षष्ठीतत्पुरुषः। अविनिगमकत्वादाह—कृष्णो वेति। अहश्शब्दोऽत्राहोरात्रपर इत्याह—तिथिरिति। प्राग्वदाह—धनीति। अयं द्वन्द्वः। तदाह—एतैरिति। अग्रे सत्वादत्रापि अध्याहारः[3]—चिह्नितमिति। अन्यदप्याहेत्याह—तथेति। सब्रह्मेत्यस्य तत्साधारणमित्यर्थः, तदाह—ब्रह्वृचेति। बह्वृचादेर्या शाखा तदध्ययनप्रयुक्तमित्यर्थः। अत एवाऽऽह – गुणेति। प्राग्वदाह—धनीति,—एतैश्चिह्नितमिति पाठः। वाक्यपूर्तय आह—लेख्यमिति ॥ ८५ ॥

प्राग्वदाह—किञ्चेति। अर्थोऽत्र प्रागुक्त एवेत्याह—धनिकेति। यथाश्रुतासङ्गतेराह— लिखित इति। अत्रेत्यस्य व्याख्या— अस्मिन्निति। प्रकृतत्वादाह—लेखितामिति। अमुकपुत्रस्येत्यार्षम्। एवमग्रेऽपि। इतीति—एवं प्रकारेण नाम निवेशयेदित्यर्थः। यथाश्रुतासङ्गतेराह—लिखेदिति ॥ ८६ ॥

१. विश्व० नाम्ना च चि० । २. प. फ. क इत्याह मा शब्दः(?) । ३. हारेणाऽऽह चि०।

तथा—

**साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।**
**अत्राहममुकः साक्षी लिखेयुरिति ते[1]समाः ॥ ८७ ॥**

तस्मिंल्लेख्ये ये साक्षिणो लिखितास्तेऽप्यात्मीयपितृनामलेखनपूर्वकम् "अस्मिन्नर्थेऽयममुको देवदत्तः साक्षी" इति स्वहस्तेनैकैकशो लिखेयुः।तेच समाः सङ्ख्यातो गुणतश्च कर्तव्याः । यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति, तदाऽधमर्णोऽन्येन, साक्षी च साक्ष्यन्तरेण, सर्वसाक्षिसन्निधौ स्वमतं लेखयेत्; यथाऽऽह नारदः— "आलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् । साक्षी वा साक्षिणाऽन्येन सर्व साक्षिसमीपतः॥" इति ॥ ८७ ॥

---

**साक्षिणश्च स्वहस्तेन इत्यादि ॥ ८७ ॥**

'अत्राहममुकः साक्षी' इत्येवं लिखेयुः। असमाः त्रय इत्यर्थः। अन्ये तु समा इति छेद भ्रान्त्या द्वावपि; तत्तु बहुवचनविरोधादयुक्तम् । न च चतुरभिप्रायं तदिति युक्तम्— "लेख्यास्तु परमास्त्रयः" इति वचनात् । "अलिपिज्ञ ऋणी यः स्यात् स्वमतं लेखयेत्तु सः । साक्षी वा साक्षिणोऽन्येन सर्वसाक्षिसमीपगः॥"—ऋणी साक्षी वा योऽलिपिज्ञः सः सर्वसाक्षिसमक्षं लेखकेन साक्षिणोऽन्येन स्वमतं साक्ष्यं वा लेखयेत् ॥ ८७ ॥

### बालंभट्टी

प्राग्वदाह—तथेति । साक्षिमति पत्रे प्रतिपादितमर्थमाह—तस्मिन्निति । चार्थमाह—[3]तेऽपीति,—स्वार्थे कः। लेखने नामपूर्वत्वा[4]दाह— लेखनेति । अत्रार्थमाह—अस्मिन्निति । समुदायनिरासाय अमुक इत्युक्तिः। स्वारस्यादाह—एकैकेति । वैषम्यस्य प्रागुक्तत्वादत्र विषये विशेषमाह— ते चेति । विनिगमनाविरहादाह—सङ्ख्येति। एतेन असमा इत्यकारप्रश्लेष इत्यपास्तम् । उभयत्र स्वहस्तेनेत्यंशे विशेषमाह— यद्यधेति । साक्षी वेति,—अलिपिज्ञ इति भावः । स्वमतमित्यादेरनुषङ्गः । समीपतः—समीपे ॥ ८७ ॥

---

१. विश्व० तेऽसमाः । २...... । ३. प. 'तेऽपि' इत्यारभ्य 'लेखनेति, इत्यन्तं नास्ति । ४. फ. स्वाभावादा० ।

अपि च—

**उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।**
**लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ ८८ ॥**

ततो लेखको 'धनिकाधमर्णिकाभ्यामुभाभ्यां प्रार्थितेन मयाऽमुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितम्' इत्यन्ते लिखेत् ॥ ८८ ॥  5

साम्प्रतं स्वकृतं लेख्यमाह—

**विना पि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।**
**तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥ ८९ ॥**

यल्लेख्यं स्वहस्तेन लिखितमधमर्णेन, तत्साक्षिभिर्विनाऽपि प्रमाणं स्मृतं मन्वादिभिः ; बलोपधिकृतादृते बलेन बलात्कारेण उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं, तस्माद्विना ; नारदोऽप्याह—"मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च  10

ततः—**उभयाभ्यर्थितेनेदमित्यादि ॥ ८८ ॥**

अन्तत इति वचनं प्राप्तत्वादधिकनिवृत्त्यर्थम् ॥ ८८ ॥

किं पुनः स्वहस्तारोपणे प्रयोजनम्? उच्यते—

**विनाऽपि साक्षिभिर्लेख्यमित्यादि ॥ ८९ ॥**

**बालंभट्टी**

प्राग्वदाह—अपि चेति । अन्ततः—साक्षिलिखनानन्तरम् । अन्ते,—सर्वाधः, न तूपरि ॥ ८८ ॥

विनाऽपीति । तुरुक्तवैलक्षण्ये । यत् लेख्यं स्वहस्तलिखितं, तत्तु लेख्यं साक्षिभिर्विनाऽपि प्रमाणं स्मृतं मन्वादिभिरित्याद्यन्वयः । लेख्यमित्यस्य पुनरुक्तिस्स्पष्टार्था । अग्रे सर्वमिति पाठस्तु युक्त एव। तदाह—यदिति। मुख्यमुपधिशब्दार्थमाह—छलेति।न्यूनतानिरासायेदमुपलक्षणमित्याह—लोभेति । एतत्सूचनार्थमेव नारदमाह— नारेति । मत्तेति—अत्र स्त्र्यादेः द्वन्द्वं कृत्वा पुनः सः । मत्तः पानादिना ; अभियुक्तः आक्षिप्तः । चस्त्वर्थे ।

१. ख. किं च । २. विश्व. नेदं । ३. विश्व० लिखितन्त्वमुकेनेति लेखकस्त्वन्ततो लिखेत् । ४. क. ख. विना तु सा० । ५. विश्व० सर्वं । ६ प. ग्रे तत्र स० । अग्रे । लेख्यमित्यत्र सर्वमिति पाठ इति यावत् ।

यत्। तदप्रमाणं लिखितं भयोपधिकृतं तथा॥" इति। तच्चैतत्-स्वहस्तकृतं परहस्तकृतं च यल्लेख्यं, देशाचारानुसारेण सबन्धकव्यवहारेऽबन्धकव्यवहारे च युक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावत्, न पुनः साधुशब्दैरेव ; प्रातिस्विकदेशभाषयाऽपि लेखनीयम् ; यथाऽऽह नारदः—"देशाचाराविरुद्धं यद्व्यक्ता-

5 धिविधिलक्षणम्। तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम्॥" इति। विधानं विधिः, आधेर्विधिराधीकरणं तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि। तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् ; अर्थानां क्रमः, क्रमश्चाक्षराणि च क्रमाक्षराणि, अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरम् ; तदेवंभूतं लेख्यं प्रमाणम्। राजशासनवन्न साधुशब्दनियमोऽत्रेत्यभिप्रायः॥ ८९॥

ऋणिकस्संप्रतिपत्त्यर्थं हि साक्षिणः स चेत्? स्वहस्तोपि संपनिपद्यतः मन्दं साक्षिप्रयोजनं मन्यते (?)। एतच्चोपगतादिविषयं द्रष्टव्यम् निर्व्याजप्रमाणशुद्धं च॥ ८९॥

## सुबोधिनी

युक्तमर्थक्रमापरिलोपेनेति—अर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च युक्तं लेख्यमित्यन्वयः। "देशाचाराविरुद्धम्"इत्येतन्नारदवचनं व्याचष्टे—विधानं विधिरित्यादिना॥८९॥

## बालंभट्टी

प्रागुक्तमेव 'सिद्धिर्देशस्थितेः' इत्यस्यार्थं कथयन् सविशेषमुपपादयन्नाह—तच्चैतदिति,—तदेतच्चेत्यर्थः। इदमेव प्रत्यासत्त्या व्युत्क्रमेणाऽऽह—स्वहस्तेति। चयुक्तमिति,—तत्र च यथाक्रमं नियतसंबन्ध इत्यर्थः। अग्रेऽन्वयः। इत्येतावदिति। व्याचष्टे—न पुनरिति। रेवेति,—किन्त्विति शेषः। प्रातिस्विकेति,— प्रतिनियतेति पाठान्तरम्। अपिना तेषामपि समुच्चयः। व्यक्ताधीति— विशेषमेव व्याकर्तुं कर्मप्रत्ययेऽर्थासङ्गतेराह—विधानमिति,—भावेकिरिति भावः। गोप्याधीति—समाहारद्वन्द्वः। आदिना अकालकृतादिपरिग्रहः। सबन्धकव्यवहारविषयमिदं स्पष्टम्। बन्धकप्रकारलक्षणं पत्रे यथा तथेति कल्पतरुः। क्रमस्य साकाङ्क्षत्वादाह—अर्थानामिति। अवीति,—व्याचष्टे—क्रमश्चेति। एवं पदार्थानुक्त्वा वाक्यार्थमाह—तदेवमिति। नारदतात्पर्यार्थं प्रागुक्तमेवाऽऽह—राजेति। व्यतिरेकदृष्टान्तः॥ ८९॥

१.–१. १३७.। २. क. रेव प्रतिनियतदेश०। ३.–१. १३६.। ४. ख. राधिविधिराधी०। छ. विधानं विधिराधीकरणं। ५. ख. ग. णम् अविलुप्तक्रमाक्षरम् अर्था०। ६. क. ङ. मो वेत्य०। ७. प. तत्तथे०।

लेख्यप्रसङ्गेन लेख्यारूढमप्यृण त्रिभिरेव देयमित्याह--

**ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।**

यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयं, तथा लेख्यकृतमप्याहर्तृतत्पुत्रतत्पुत्रै-त्रिभिरेव देयं न चतुर्थादिभिरिति नियम्यते । ननु "पुत्रपौत्रैर्ऋणं देयम्" इत्यविशेषेण ऋणमात्रं त्रिभिरेव देयमिति नियतमेव । बाढम् । अस्यैवोत्सर्गस्य 5 पत्रारूढर्णविषये स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदं वचनमारब्धम् । तथा हि । पत्रलक्षणमभिधाय कात्यायनेनाभिहितम्, — "एवं कालमतिक्रान्तं पितॄणां

**ऋणं लेख्यगतं देयमित्यादि ॥ ९० ॥**

यदृणं लेख्यगतं, लेख्यारूढमित्यर्थः, तद्देयं पुरुषैस्त्रिभिरेव कर्तृतत्पुत्रपौत्रैरित्यर्थः । तु शब्दो व्यवच्छेदार्थः: तथा च नारदः—"क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् । दद्युः पैतामह पुत्रस्तच्चतुर्थान्निवर्तते ॥" इति । अस्यापवादः—आधिस्तु तेन चतुर्थान्निवर्तते । किमनधिक एव न हि तावत् यावत्तद्देयं न प्रदीयते ॥ ९० ॥

## सुबोधिनी

न तुरीयादिभिरिति नियम्यत इति—तुरीयश्चतुर्थः—प्रपौत्र इति यावत्। पूर्वोक्तमाक्षेपं समाधत्ते-बाढमिति। अयमर्थः-"पुत्रपौत्रैः ऋणं देयम्"इत्यनेन पत्रारूढे पत्रानारूढे चर्णे सामान्येन त्रयाणामेव दातव्ये सति, स्मृत्यन्तरवशात् पत्रारूढमृणं पुत्रपौत्रैरेव देयं; न प्रपौत्रादिभिरित्येष नियमो न घटते; अपि तु प्रपौत्रादिभिरपि देयमिति पत्रारूढर्णेऽपवादाशङ्का जायते ; तां शङ्कामपनेतुम् "ऋणं लेख्यकृतं देयम्" इत्येतद्वचनमारब्धमिति । तदेतत स्मृत्यन्तरं प्रकरणशुद्धिपूर्वकं दर्शयति —तथा हीत्यादिना। पूर्वोक्तं कात्यायनवचनं व्याचष्टे—

## बालंभट्टी

सङ्गतिमाह-- लेख्येति । प्रागुक्तं दृष्टान्तयति—यथेति । एवञ्च तत्सजातीय एवायमर्थः; न त्वपूर्व इति भावः । अत एवाऽऽह—नान्विति । एवव्यवच्छेद्यमाह— न चेति । एवोक्तिं सफलयति—नियेति । अत एवाऽऽह—नान्विति । अवीति,— साक्षिलेख्यसाधारण्येनेत्यर्थः । नियतं—नियमितम्; क्वचित्तथैव पाठः । अस्यैव — पुत्रपौत्रैरित्युक्तस्यैव सामान्यस्य । प्रभवां — जन्याम् । इदम्— "ऋणं लेख्यम्" इति। तदेव स्मृत्यन्तरप्रकरणशुद्धिपूर्वकमाह—तथा हीत्यादिना । तद्व्याचष्टे—

१. व्यव० ५०. । २ मूले चतुर्थादिभिरिति । ३. त. ति. पुत्र० । ४. थ. द. दशङ्का । ५. थ. द. वस्मृ० । ६. फ. क्तं ।

दाप्यते ऋणम् ।" इति । इत्थं पत्रारूढमृणमतिक्रान्तकालमपि पितॄणां संबन्धि दाप्यते । अत्र पितॄणामिति बहुवचननिर्देशात्कालमतिक्रान्तमिति वचनाच्च चतुर्थादिर्दाप्य इति प्रतीयते । तथा हारीतेनापि—"लेख्यं यस्य भवेद्धस्ते लाभं तस्य विनिर्दिशेत् ।" इति । अत्रापि 'यस्य हस्ते पत्रमस्ति तस्यर्णलाभः' इति सामान्येन
5 चतुर्थादिभ्योऽप्यृणलाभोऽस्तीति प्रतीयते । अतश्चैतदाशङ्कानिवृत्त्यर्थमेतद्वचनमित्युक्तम् । वचनद्वयं च योगीश्वरवचनानुसारेण योजनीयम् ॥ ८९ ॥

## सुबोधिनी

इत्थं पत्रारूढमिति । अनेन वचनेन पत्रारूढर्णविषये पुत्रपौत्रैरेवर्णं देयमिति न, अपि तु प्रपौत्रादिभिरपि देयमितीयमपवादाशङ्का कथं जायत इत्यत आह—अत्र पितॄणामिति । अयमभिप्रायः—बहुत्वं त्रित्वे पर्यवस्यति; तथा च पितॄणामित्युक्तेः प्रपौत्रस्य प्रपितामहर्णं देयमिति प्रतीयते; तथा यदा पौत्रोऽप्यतिक्रान्तो मृतस्तदा "पुत्रपौत्रैर्ऋणं देयम्" इत्यादिभिर्वचनैः पौत्रानन्तरकालीनस्य प्रपौत्रादेरदेयत्वे सिद्धेऽप्यतिक्रान्तकालमित्युक्तेः पौत्रादीनामपि पत्रारूढे ऋणे देयत्वाशङ्का भवतीति । आक्षेपसमाधानमुपसंहरति –अतश्चेति। एवं तर्हि कात्यायनहारीतवचनयोः का गतिरित्यत आह—वचनद्वयं चेति ॥८९॥

## बालंभट्टी

इत्थमिति,—एवमित्यस्य व्याख्या इयम्। एतदर्थमेव तदुक्तम् । प्राक्तं कालमपीति पाठः, —कालमतिक्रान्तमपीत्यर्थः । क्वचित् समस्तपाठः । अव्यवहितान्वयनिरासायाऽऽह— संबन्धीति । दाप्यते—राज्ञेति शेषः । दापयेदिति पाठान्तरम् । उभयत्र इतो यथा तदाशङ्का । (?) तमाह —अत्रेति,— तदुक्तावित्यर्थः । प्रतीयत इत्यत्रान्वयः । पत्रारूढऋणविषये पुत्रपौत्रप्रपौत्रैरेव देयमिति नास्यार्थः; किन्तु बहुवचनादरतः ऋणे त्रितयसम्बन्धित्वे सति देयत्वप्रतीतेः[६] । अर्थात् प्रपौत्रादिभिरेव देयमिति प्रतीयते । तथा पौत्रे मृते तत्पुत्रस्य तेनादातृत्वप्राप्तावपि अतिक्रान्तमित्युक्तेः तेषां दातृत्वप्राप्तिर्भवतीति भावः । तथा तद्वत् अभिहितमित्यस्यानुषङ्गः । प्राग्वदाह— अत्रापीति;—प्रतीयत इत्यत्रान्वयः । सामान्योक्त्यैवात्र, प्राग्वन्नावधारणमित्याह— दिभ्योऽपीति । आक्षेपसमाधिमुक्तमुपसंहरति—अतश्चेति। नन्वेवं हारीतकात्यायनयोः का गतिरत आह—वचनेति।चस्त्वर्थे। आद्ये बहुत्वमविवक्षितम्। उद्देश्यगतत्वात् कालातिक्रमस्यापि तावत्पर्यन्तस्यैव संभवेन ग्रहणं न त्वग्रिमस्य। द्वितीयमपि तावत्परमेवेति भावः॥८९॥

---

१.....। २. ख. हस्ते लेख्यभ । ३. त. पितामहर्णं । देयमि० । ४. त. देयमित्याश० । ५. षये देय० । ६. प तीत्या अ० । ७. प देयत्वे प्र० ।

अस्यापवादमाह—

**आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ ९० ॥**

सबन्धकेऽपि पत्रारूढे ऋणे त्रिभिरेव देयमिति नियमादृणापाकरणानधिकारेणाऽऽध्याहरणेऽप्यनधिकारप्राप्ताविदमुच्यते—'यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते, तावदेवाऽऽधिर्भुज्यते' इति वदता सबन्धकर्णापाकरणे चतुर्थादेरप्यधिकारो दर्शितः। 5
नन्वेतदप्युक्तमेव "फलभोग्यो न नश्यति" इति। सत्यम्। तदप्येतस्मिन्नसत्यपवादवचने पुरुषत्रयविषयमेव स्यादिति सर्वमनवद्यम् ॥ ९० ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति—

**देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।**
**भिन्ने[2] दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ९१ ॥** 10

यदात्त्वृणिकदेशाद्देशान्तरे लेख्यं, प्रमादतो वा भ्रष्टं, तदा अयं प्रकारः; तमाह—

**देशान्तरस्थे दुर्लेख्ये इत्यादि ॥ ९१ ॥**

राजा परस्परं वा धनिकर्णिकावित्यभिप्रायः। लेख्यदोषो यत्र प्रमादाल्लिख्यमाने संजातः दुर्लेख्यः; उन्मृष्टं भग्नाक्षरं; छिन्नं मूषिकादिभिः; भिन्नं पाटितम्; तथाशब्दः प्रकारार्थः। स्पष्टमन्यत् ॥ ९१ ॥

बालंबट्टी

नन्वेतदभावे कथं पूर्वप्राप्तिरत आह—सबन्धेति। अपिना द्वितीयसमुच्चयः। अस्य नियमेऽन्वयः। अयौगपद्यायाऽऽह—क्रमेणेति[3]। ऋणेति—चतुर्थादेरित्यादिः। नन्वेतावताऽपि स्फुटं न तत्त्वप्रतीतिः; अतः अपवादत्वमुपपादयति—यावदिति। अस्यार्थमाह—चतुर्थेनेति,—दिक्प्रदर्शनमिदम्। तत्पदार्थमाह—ऋणमिति। सर्वमिति[4] न्यायेनाऽऽह—तावदेवेति। प्राग्वत् प्राप्तं पौनरुक्त्यं निराचष्टे—नन्वित्यादिना। स्यादिति;-अत इदमप्यावश्यकं तस्य तत्प्राप्त्यर्थमिति भावः ॥ ९० ॥

सङ्गतिमाह— प्रासङ्गीति। नष्टोन्मृष्ट इति समाहारद्वन्द्वः। नन्वत्र देशान्तरस्थादि उद्दिश्य पत्रान्तरकरणविधिः प्रतीयते; तत्र किं तेषां प्रत्येकं निमित्तत्वमुत समुदायस्य? तत्र न तावदाद्यः—तथाशब्दासङ्गतेः सकृच्छ्रुतस्य विधेयस्य सर्वैरन्वयासंभवाच्च। न चावृत्त्या। तथा प्रधानानुरोधेन गुणावृत्तावपि

१. व्यव० ५८.। २. विश्व० छिन्ने भिन्ने तथा दग्धे। ३. अनेन प्रतीकेन मूलेऽपि 'क्रमेण' इति भाव्यम्। ४. 'सर्वं वाक्यं सावधारणम्' इति न्यायः।

व्यवहाराक्षमे पत्रे, पत्रान्तरं कुर्यादिति विधीयते। व्यवहाराक्षमत्वञ्च अत्यन्तव्यवहितदेशान्तरस्थे पत्रे; दुर्लेख्ये—दुष्टानि सन्दिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये, नष्टे कालवशेन; उन्मृष्टे मषीदौर्बल्यादिना मृदितलिप्यक्षरे; हृते तस्करादिभिः; भिन्ने विदलिते; दग्धे अग्निना; छिन्ने द्विधाभूते सति द्विभवति। एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम्। विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय दुर्गाध्वापेक्षया कालो दातव्यः। दुर्गदेशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः; यथाऽऽह नारदः—"लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते। सतस्तत्कालकर-

सुबोधिनी

"देशान्तरस्थे दुर्लेख्ये" इत्यस्मिन् वचने विधेयांशमाह—व्यवहाराक्षम इति। व्यवहाराक्षमत्वमेव कथमित्याशङ्कायामाह—व्यवहाराक्षमत्वं चेत्यादि,—अत्र व्यवहाराक्षम-

बालंभट्टी

वैपरीत्यस्य सकलतन्त्रविरुद्धत्वात् वाक्यभेदापत्तेश्च। न द्वितीयः,—अथवेत्यस्यासङ्गतेः, स्मृत्यन्तरविरोधेनापसिद्धन्ताच्च। अत आह—व्यवेति। पत्रे[3]—पूर्वपत्रे, सतीति शेषः। अन्यथानुपपत्त्या सकलसाधारणानुगतधर्माक्षेपेणास्योद्देश्यत्वं न तस्येति न कोऽपि उक्तदोष इति भावः। णिजर्थाविवक्षया आह—कुर्यादिति। पादत्रयार्थस्य एवं सत्यन्वयं कथयन् व्यवहाराक्षमत्वमेव विशदयति- —व्यवेति। एतेन तदेव कथमिति शङ्का निरस्ता। त्वञ्च त्वन्तु भवतीत्यन्वयः[4]। क्रमेण निमित्तानि व्याचष्टे—अत्यन्तेति। निकटे आनयनस्य सुकरत्वात् लक्ष्यार्थोऽयम्। पत्रे इत्यस्याग्रे सर्वत्रान्वयः। दुष्टानीत्यस्यार्थद्वयम्[5]। लेख्यानीत्यस्यापि यथासङ्ख्यमन्वयः। नष्टादेरौपाधिकभेदमाह—कालेत्यादि। आदिना जलपातादिना; विदलिते सञ्चूर्णिते; दग्धे अग्निनेति पाठान्तरम्। सर्वपाठोऽपि क्वचित् स्पष्टोऽर्थः। एतेषामपि विकल्पो बोध्यः। अत एवाथवेत्यस्य सङ्गतिः। तथेति। तुः सादृश्ये, न तु समुच्चये। नारदविरोधं मूलस्य परिहरन् विशेषमाह—एतच्चेति,—पत्रान्तरकथनञ्चेत्यर्थः[6]। एतस्याऽऽवश्यकत्वादाह[7]—व्यवेति। तादृशे स्थले आह—देशान्तरेति। दुर्गेति—दुःखेनापि गन्तुमशक्यदेशे इत्यर्थः। दुर्देशेति पाठान्तरम्। अयं प्रकारोऽन्यत्रापीत्याह—नष्टे वेति। वा चार्थे।

१. क. ङ. ग. दग्धे प्रज्वलिते छि०। ख. सति अग्निना द्विभ०। ग. छ. ज. झ. सति भवति। २. थ. द. दिना। ३. प. फ. 'शेष' इति नास्ति ४. फ. त्यत्रान्व०। ५. सन्दिह्येति अपथेति च। ६. फ. कारणञ्चेत्यर्थः। ७. फ. तत्र तस्याव०।

णमसतो द्रष्टृदर्शनम्॥" इति। सतो विद्यमानस्य पत्रस्य देशान्तरस्थस्याऽऽनयनाय कालकरणं कालावधिर्दातव्यः। *असतः पुनरविद्यमानस्य पूर्वं ये द्रष्टारः साक्षिणः, तैर्दर्शनं व्यवहारपरिसमापनं कार्यम्। यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः—"अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत।" इति स्मरणात्। एतच्च जानपदं व्यवस्थापत्रम्। राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति। इयांस्तु 5 विशेषः,—"राज्ञस्स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा। राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्॥" इति। तथाऽन्यदपि राजकीयं जयपत्रं वृद्धवसिष्ठेनोक्तम्,—"यथोपन्यस्त-

सुबोधिनी

त्वं च भवतीत्युत्तरेणान्वयः। यथोपन्यस्तसाध्यार्थेति;—अस्यार्थः—प्रतिज्ञातार्थः साध्यार्थः तेन संयुक्तम्; तथा उत्तरेण द्वितीयपादरूपेण क्रियया पत्रादिरूपेण च सहितम्; तथैव सावधा-

बालंभट्टी

तेनान्येषामपि समुच्चयः। उत्तरार्द्धं व्याचष्टे—सत इति। तेषां मध्ये इत्यादिः। तत्पदार्थमाह—आनयनायेति। समासस्तु संबन्धसामान्यषष्ठ्या कार्यः। तत्र पुनस्तु अन्यनिरासायाऽऽह—पूर्वमिति। तत्कर्मकदर्शनमिति नार्थ इत्याह—तैरिति। लक्ष्यार्थमाह—व्यवेति। विशेषान्तरमाह—यदा त्विति। कात्यायनमाह—अलेख्येति,—लेख्यसाक्ष्युभयरहिते व्यवहारे इत्यर्थः। दैवीं क्रियां। विशेषान्तरं वक्तुमेनमाऽऽह—एतच्चेति। जानपदमिति,—लौकिकमित्यस्यैव नामान्तरम्। "लौकिकं राजकार्यञ्च लेख्यं कुर्याद्द्विलक्षणम्।"इति वसिष्ठोक्तेः, "राजकीयं जानपदं [६]लेखितं द्विविधं स्मृतम्।" इति सङ्ग्रहोक्तेश्च अत्रोभयत्र राजकीयमित्याभ्यां प्रत्येकं त्रयाणां ग्रहणमिति न्यूनता; अत एवाऽऽह—राजकीयमपीति। कात्यायनमाह—राज्ञ इति। तथेति समुच्चये। "राजकीयं तथा राजा स्वहस्तेन लिखेत्स्वयम्। मतम्मेऽमुकपुत्रस्य ह्यमुकस्य महीपतेः॥" इति व्यासः। अर्थेष्विति,—विषयसप्तमी। साक्षिमदिति— साधारणोक्तिः। यथोपेति—येन प्रकारेण उपन्यस्तो यस्साध्यार्थः प्रतिज्ञातार्थः तेन संयुक्तम्। अनेन आद्यपादप्रदर्शनम्। उत्तरं च क्रिया च ताभ्यां सहितम् क्रिया पत्रादिरूपा। अनेन द्वितीयतृतीयपादप्रदर्शनम्। अवधारणं निर्णयः, तेन सहितम्। स्वार्थेकः। अनेन तुर्यपादप्रदर्शनम्। हस्ताङ्कं तदक्षराङ्कम्। एवमग्रेऽपि

*"असति तु पूर्वलिखिते लिखितान्तरं कृत्वा तस्य दर्शयितव्यं; येन तत्पूर्वं लिखितं दृष्टं द्वितीयस्यान्यथाभावनिराकरणाय" इत्यपरार्कः॥

१.—१. १४२.। २. क. दर्शनव्यवहारपरिहारसमा०। ख. व्यवहारे दर्श०। ३. ख. छ. झ. पत्रकं। ४. तत्कालेत्यत्र। ५. फ. वक्तुमुन्नमेवा०। ६. ख. लिखि०। ७. फ. न न्यू०। ८. प. कीये।

साध्यार्थसंयुक्तं सोत्तरक्रियम् । सावधारणकं चैव जयपत्रकमिष्यते ॥ प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया । सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम्॥" इति। तथा सभासदोऽपि "मतं मेऽमुकपुत्रस्य" इति स्वहस्तं दद्युः—"सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः । यथा लेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते॥" इति मनुस्म-
5 रणात् । सभासदां च परस्परानुमतिव्यतिरेकेण न व्यवहारो निःशल्यो भवति; यथाऽऽह नारदः—"यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते । स निःशल्यो विवादः स्यात्सशल्यस्त्वन्यथा भवेत्॥" इति । एतच्चतुष्पाद्व्यवहार एव । "साधयेत्साध्यमर्थं यच्चतुष्पादान्वितं च यत्॥राजमुद्राङ्कितं चैव जयपत्रकमिष्यते॥" इति स्मरणात् । यत्र तु हीनता यथा—"अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूत-
10 प्रपलायी च हीनः पञ्चविधः स्मृतः ॥" इति । तत्र न जयपत्रमस्ति, अपि तु हीनपत्रकमेत्र, तच्च कालान्तरे दण्डप्राप्त्यर्थम् । जयपत्रं तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः ॥ ९१ ॥

सुबोधिनी

रणकम् अवधारणं निर्णयस्तेन सहितं जयपत्रं भवतीति । एतच्चतुष्पाद्व्यवहार एवेति—एतज्जयपत्रमित्यर्थः ॥ ९१ ॥

बालंभट्टी

वादिने इति,—"पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः । प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥" इति बृहस्पत्युक्तेरिदमुपलक्षणम् । अत्र आदिग्राह्यं सूचयन्नेवाऽऽह—तथेति । कात्यायनमाह—सभेति । तत्र—व्यवहारे । यथेति—क्रियमाणे राजकीयव्यवस्थापत्रे यथा तद्वज्जयपत्रेऽपीत्यर्थः । एवेन तस्य आवश्यकता सूचिता । व्यवहारस्य निश्शल्यतोपायं प्रतिपादयन् तत्र हेतुभूतं विशेषान्तरमाह—सभेति । चेनान्येषामपि तत्रत्यानां समुच्चयः । यत्र—निर्णये । विवादे विशेषान्तरमाह—एतदिति,—जयपत्र इत्यर्थः । कात्यायनमाह—साधयेदिति । साध्यार्थसाधकं तदन्वितञ्च यद्व्यहारस्वरूपं यत् यतोऽतस्तदेव तदङ्कितं तदिष्यत एवेत्यर्थः । चेनान्यसमुच्चयः । यद्यपीदं "सभासदां च" इत्यतः प्रागुचितं, तथाऽपि सभासदां प्रसङ्गात्तद्विषयकं तदादावुक्तम् । एवव्यवच्छेद्यमाह—यत्र त्विति । तस्योपयोगमाह—तच्चेति,—हीनपत्रं चेत्यर्थः । विशेषः—हीनपत्रतः ॥ ९१ ॥

१... । २...... । ३. ख. मुद्राञ्चितं । ४. ना. मा.—१. ३२. । ५. ख. झ. त्रकम० । ६. प. वादि । ७. फ. एतेन । ८. प. यत् ततोऽत० ।

लेख्यसन्देहे निर्णयनिमित्तान्याह—

**सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।**
**युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥ ९२ ॥**

शुद्धमशुद्धं वेति सन्दिग्धस्य लेख्यस्य शुद्धिः स्वहस्तालिखितादिभिः स्यात । स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः—यदि सदृशान्यक्षराणि भवन्ति; तदा शुद्धिः स्यादित्यर्थः । आदिशब्दात्साक्षिलेखकस्वहस्तलिखितान्तरसंवादाच्छुद्धिरिति । *युक्त्या प्राप्तिर्युक्तिप्राप्तिः; देशकालपुरुषाणां द्रव्येण सह संबन्धः प्राप्तिः; 'अस्मिन्देशे   5

लेख्यस्वरूपे चेद्व्यभिचारशङ्का कोऽत्र निर्णयहेतुः? उच्यते— **सान्दिग्धार्थविशुद्ध्यर्थं स्वहस्तालिखितन्तु यत् । युक्तीत्यादि ॥ ९२ ॥**

सन्दिग्धश्चासावर्थश्चेति सन्दिग्धार्थः, तद्विशुद्धिरर्थः प्रयोजनं यस्य लेख्यस्य तत्तथोक्तम् संदिग्धार्थनिर्णये तदेव प्रमाणमित्यर्थः; तच्च स्वहस्तलिखितं यदि स्यात् , ततः शुद्धमेव

बालंभट्टी

संशयकोटिद्वयमाह— शुद्धमिति,—कृत्रिममकृत्रिमं वेत्यर्थः । तथा च नारदः— "यस्मिन् स्यात्संशयो लेख्य......कुचित् । तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत् ॥ लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत् । विप्रत्यये परीक्षेत संबन्धागमहेतुभिः ॥" इति। विप्रत्यये विप्रतिपत्तौ । लिखितमिति,—कर्मणि भूते निष्ठा, तेनेदानीन्तनव्यावृत्तिः। तदाह — स्वहस्तेनेति । तत्त्वस्यात्रापि[3] सत्त्वादाह — लेख्यान्तरमिति,— पत्रान्तरमित्यर्थः। नैनु[3] द्वयोर्भेदेनास्य कथं शुद्धिः? अत आह — यदीति । तदिति[4] शेषः। साक्षीति—साक्षिलेखकयोः पत्रान्तरमित्यर्थः। साक्षिलेखकयोः यत् स्वहस्तोलिखितम् एतदपेक्षया भिन्नं तत्संवादादेतल्लेखीयाक्षरस्य तदक्षरसादृश्यादेतत्पत्रस्य शुद्धिरित्यर्थः। तथा चेदमन्यकृतविषयम् । श्रौतन्तु[6] स्वकृतविषयमिति भावः। इतिः पूर्वार्धार्थसमाप्तौ । देशकाले इति समाहारद्वन्द्वात् सप्तमी । कालपुरुषेति पाठे समस्तत्रयाणां तेन सम्बन्ध इति यावत् । तदेवाऽऽह— अस्मिन्निति । युक्तिपदार्थमाह—

*"युक्तिः अथार्पत्तिः । प्राप्तिः। एकत्र देशे काले च वादिप्रतिवादिनोः स्थितिः। एतच्च प्रमाणान्तरानुग्राहकतया शुद्धिहेतुर्न स्वातन्त्र्येण; यदि हि नैकत्र देशादौ तयोः स्थितिस्तदा

१. स्वलिखित । २. प. स्यापि । ३. प. नन्वित्यारभ्य 'पत्रान्तरमित्यर्थः' इत्यन्तं नास्ति । ४. तदेति । ५. प. लिखनं । ६. 'स्वहस्तालिखिते' तिशब्दप्रतीयमानम् ।

अस्मिन्कालेऽस्य पुरुषस्येदं द्रव्यं घटते' इति युक्तिः; क्रिया तत्साक्ष्युपन्यासः; चिह्नम-साधारणं श्रीकारादि; संबन्धः अर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादि-

## बालंभट्टी

घटत इति,—योग्यं भवतीत्यर्थः सम्भवतीति यावत्। कल्पतरुरप्येवम्। युक्तिरर्थापत्तिः प्राप्तिर्द्वयोरेकत्रावस्थानमित्यन्ये। तत्साक्षी—प्राग्निसाक्ष्युपेत्यर्थः। अत एव वक्ष्यमाण-विरोधो न। कल्पतरुरप्येवम्। संव्यवहारः क्रियेत्यन्ये। आदिना स्वस्तिकमुद्रादिपरिग्रहः। पूर्वमपि—विवादात् प्रागित्यर्थः। दानेति—धनस्येत्यादिः। आदिनाऽऽध्यादिपरि-

लिखितमप्रमाणमेवेति निश्चिते, स्वहस्तलिखितादिषु लेख्यप्रामाण्यावधारकेषु विचारकाणां-जिज्ञासैव न जायते क्रियासंव्यवहारः।ययोः खलु नास्त्यार्यद्रविडयोरिव संव्यवहारः,तत्र लेख्यं प्रति प्रामाण्यमसंभवनिरस्तम्। हेतुः अनुमानं स्वहस्तलिखितादिकं न लेख्यस्य शुद्धौ युक्त्यादिनिरपेक्षं कारणं भवितुमर्हति—अनैकान्तिकत्वात्—सन्तिखलु पुरुषाः कुशला. ये पुरुषान्तरलिखिततुल्यं लेख्यमापादयन्ति एवमधमर्णलिखितस्य साक्षिरहितस्य प्रामाण्यसं-शये शुद्ध्युपायाः कथिताः। साक्षिमल्लेख्यसाक्षिभिरेव दोषोद्धारः कर्तव्यः। एवं दोषे उद्भाविते साक्षिणां वचनात्पत्रकं यो वादी शुद्धिं न नयेत्स उत्तमदण्डयोग्यः।मृतेषु साक्षिषु लेखके वा, तेषां स्वहस्तलिखितादिभिश्शुद्धिः राजमुद्रासहिते वा पत्रे। "दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं च यत्।लेख्यं सिद्ध्यति सर्वत्र मृतेष्वपि हि साक्षिषु॥"इति नारदवचनन्तु सिद्धिसं-भावनामात्रप्रतिपादकं न परीक्षानिवारकम्"साक्षिभ्यो लिखितं श्रेयः लिखितान्नतु साक्षिणः।" इति वचनं लेख्यानारूढसाक्षिविषयम्। सदोषमपि पत्रम् अधमर्णेनानुद्भावितदोषं विंशति वर्षपर्यन्त पञ्चावतो भुक्तिरिति सन्देहे दिव्येन साधनीयम्। अदुष्टस्य तु तावत्कालभुक्ति मात्रेण प्रामाण्यसिद्धिः।आधानसहिते लेख्ये स्वल्पभोगेपि तत्पश्चान्मृतसाक्षिकमपि प्रमाणम्। यदि लिखितबलादुत्तमर्णेनाधमर्णात्किंचिल्लब्धं, यद्वा"लिखित ममैतद्धस्ते विद्यतेऽत्र विषये" इति प्रज्ञसिरधमर्णं प्रति कृता भवति,तदा लेख्यारूढसाक्षिणामभावेऽपि लेख्यं प्रमाणम्।लेख्या-नामन्योन्यविरोधे 'स्वहस्तकाज्जानपदं तस्माच्च नृपशासनम्। प्रमाणतरमिष्टं हि व्यवहारार्थ-मागतम्" इति व्यासः। लेख्यविरुद्धं च साक्ष्यं वर्जनीयम् तथा "लेख्यं त्रिंशत्समातीतमदृष्टा-श्रावितं च यत्। न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु॥ प्रयुक्तशान्तलाभे तु लि-खितं यो न दर्शयेत्। न याचते च ऋणिकं तत्सन्देहमवाप्नुयात्॥" तथा नारदः"मृतास्स्युस्सा क्षिणो यत्र धनिकर्णिकलेखकाः। तदप्यनर्थं लिखितं नचेदाधिस्स्थिराश्रयः इति। आश्रयः भुक्तिः"इत्येतावदर्थजातं तत्तत्प्रमाणोपन्यासपूर्वकमुपपादितमपरार्केण पृ० ६८८.।

---

१. क. 'दान' नास्ति।

संबन्धः; आगमोऽस्यैतावतोऽर्थस्य संभावितः प्राप्त्युपायः । एते एव हेतवः एभिर्हेतुभिः सन्दिग्धलेख्यशुद्धिः स्यादित्यन्वयः । यदा तु लेख्यसन्देहे निर्णयो न जायते, तदा साक्षिभिर्निर्णयः कार्यः; यथाऽऽह कात्यायनः—"दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत् ।" इति । साक्षिसंभवविषयमिदम् ; साक्ष्यसंभवविषयं तु हारीतवचनम्—"न मयैतत्कृतं पत्रं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥" इति ॥ ९२ ॥ 5

संशये तु युक्त्यादिभिः निर्णयः कार्यः—'तस्मिन्काले देवदत्तस्य द्रव्यप्रयोजनमासीत्, यज्ञदत्तश्च तदा स्वधनं प्रयुक्तवान्' इत्यादिका युक्तिः; 'समानदेशस्थौ तदोभावप्यभूताम्' इति प्राप्तिः; 'अप्रतारकश्चासौ लेखकः, प्रसिद्धाः तदीया लेख्याः' इति क्रिया; चिह्नं मुद्रालिपिविशेषादिकम्; संन्बधो बलोपध्याद्यभावः; आगमो लेख्यलक्षणयोगः; कूटसाक्षित्वाद्यसंभवो हेतुः । एवं युक्त्यादिभिर्यत् परीक्षितं लेख्यं तत्प्रमाणमित्यवसेयम् ॥ ९२ ॥

## सुबोधिनी

साक्ष्यसम्भवविषयमिदं हारीतवचनमिति,—इदं वक्ष्यमाणं—'न मयैतत् इति' वचनमित्यर्थः ॥ ९२ ॥

## बालंभट्टी

ग्रहः । अर्थस्य धनस्य आगमः क्रयादिरित्यन्ये । आगमान्तद्वन्द्वस्य हेतुशब्देन कर्मधारय इत्याह—एते एवेति । उत्तरार्धस्य क्रियान्तराध्याहारेणान्वयः । भ्रमनिरासायाऽऽह—एभिरिति । सोऽप्येवं हेतुरनुमानमित्यन्ये । विशेषमाह—यदा त्विति । पत्रके—स्वार्थे कन् । तदारूढांस्त्विति—पत्रारूढान् साक्षिणस्त्वित्यर्थः । अस्य वक्ष्यमाणविरोधं परिहरति—साक्षिसामिति । इदं— कात्यायनीयम् । तदेवाऽऽह—न मेति । एतेन अन्येन केनचित् । अत एवाऽऽह—कारितामिति । तत् पत्रमिति,—तत्पत्रं प्रमाणत्वेनानाश्रित्य अथ अनन्तरं दिव्येन निर्णयः कार्य इत्यर्थः । अथ दिव्येनेति पाठः, अर्थे इति पाठे तद्विषये इत्यर्थः ॥ ९२ ॥

१. ग. लेख्ये सन्देहनि० । २. क. दर्शयेत् । ३ ख. मिदं वचनम् । ४. ग. त्रमथदि० । ५. प. एतदारभ्य ' ' साक्षिसम् ' इत्यन्तं नास्ति ।

एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेव ऋणं दातुमसमर्थस्तदा किं कर्तव्यमित्यत आह—

**लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा दत्त्वर्णिको धनम्।**
**धनी वोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥ ९३ ॥**

5 यदाऽधमर्णिकः सकलमृणं दातुमसमर्थः, तदा शक्त्यनुसारेण दत्त्वा पूर्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेत्—'एतावन्मया दत्तम्' इति ; उत्तमर्णो वा उपगतं प्राप्तं धनं तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेत्—'एतावन्मया लब्धम्' इति। कथम् स्वहस्तपरिचिह्नितम् – स्वहस्तलिखिताक्षराचिह्नितम्। यद्वोपगतंप्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्णायोत्तमर्णो दद्यात् ॥ ९३ ॥

एवं च न्यायागमपरिनिष्ठितप्रामाण्यस्य **लेख्यस्य पृष्ठेऽभिलिखेत् प्रविष्टमधमर्णिक इत्यादि ॥ ९३ ॥**

यन्मूल्यात् कालान्तराद्वा दद्यात् तत्तस्यैव पत्रस्य पृष्ठे लेखयेत्। धनिको वाऽन्यत् स्वहस्तपरिचिह्नितमृणिकायोपगतं दद्यात्। अन्यथा तु दत्तमप्यदत्तं स्यात् ॥ ९३ ॥

---

सुबोधिनी

"धनी चोपगतं दद्यात्" इत्यमुमंशं प्रकारान्तरेण व्याचष्टे—यद्वोपगतं प्रवेशपत्रमिति। शेषं सुगमम्॥९३॥ इति श्रीविश्वेश्वरभट्टविरचितायां सुबोधिन्यां लेख्यप्रकरणम्॥

बालंभट्टी

अवतरणमाह—एवमिति। दातुमिति— युगपदिति शेषः। एवमग्रेऽपि। आर्थिकमाह—शक्तीति। उत्तरार्द्धमाह—उत्तमेति। स्वहस्तशब्दो लाक्षणिक इत्याह—लिखितेति,—तथा च क्रियाविशेषणमिदमिति भावः। अत्र पक्षे तत्पृष्ठभागे उल्लिखने ऐच्छिकविकल्पो लब्धः। स च न युक्तः—तस्याष्टदोषदुष्टत्वात्, प्रकारान्तरेण उत्तरार्धस्य सङ्गमने तथोक्तेरयुक्तत्वात्, लक्षणाद्यापत्तेश्च। अत आह—यद्वोपगतमिति। भावक्तान्तादर्श आद्यजित्याह—प्रवेशपत्रमिति। परः उत्कर्षः इतरव्यावर्तकत्वरूपो यस्यास्तीति परिस्वहस्तलिखितं तेन चिह्नितमिति पत्रविशेषणं; तादृशं लेख्यान्तरं कृत्वेति भावः। तदाह— स्वहस्तलिखितेति,—भावे क्तः। उत्तमर्ण इति, — प्राप्ताल्पधन इति भावः। तथा चात्र न लक्षणा। क्वाऽपिलेख्यासन्निधिविषयञ्चेदम्। तदाह विष्णुः—"असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वहस्तलिखितं दद्यात् ॥" इति ॥ ९३ ॥

१. ख.दातुमृणम्। २.ग.ङ.दत्त्वा दत्त्वा। ३. फ. तच्चि०। ४.प.फ.साकल्ये। ५.—६.२६.।

ऋणे तु कृत्स्ने दत्ते लेख्ये किं कर्तव्यमित्यत आह—

**दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत्।**

क्रमेण सकृदेव वा कृत्स्नमृणं दत्त्वा पूर्वकृतं लेख्यं पाटयेत्। यदा तु दुर्ग-देशांवस्थितं लेख्यं, नष्टं वा, तदा शुद्ध्यै अधमर्णत्वानिवृत्त्यर्थमन्यल्लेख्यं कारये-दुत्तमर्णम् अधमर्णः—पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादित्यर्थः॥९३-॥ 5

ससाक्षिके ऋणे कृत्स्ने दातव्ये किं कर्तव्यमित्यत आह—

**साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ९४ ॥**

यत्तु ससाक्षिकमृणं तत्पूर्वसाक्षिसमक्षमेव दद्यात्॥ ९४ ॥

॥ इति लेख्यप्रकरणम् ॥

निश्शेषं तु **दत्त्वर्णं पाटयेल्लेख्यमित्यादि ॥ ९४ ॥**

ऋणं दत्त्वा लेख्यं पाटयेत् शुध्यै शुद्ध्यर्थं निरपवादत्वायेति। यद्वा अन्यत्तु कारयेत् अन्यदेव वा लेख्यं कार्यम्। ऋणिकस्येच्छया विकल्पः। लेख्यव्यतिरेकेणापि तु ससाक्षिकं यत् गृहीतं तत्ससाक्षिकमेव दातव्यं—परिशोधनीयत्वात्। सर्वथा लेख्यवत्यर्थे लेख्यान्तराद्विशुद्धिः, साक्षिमति च साक्ष्यन्तरात्। यथैवार्थो गृहीतः तथैव प्रतिदेय इत्यर्थः॥ ९४ ॥

## बालंभट्टी

नाव्यवहितमात्रविषयमिदं, किन्तु साधारणमिति सान्निध्यं व्युत्क्रमेणाऽऽह—क्रमेणेति। द्वितीयपादं व्याचष्टे—यदा त्विति। वा चार्थे। तेनान्येषामपि सङ्ग्रहः। मौलस्तु विकल्प एव। अधेति,—स्वाधेत्यर्थः। अन्यत्—पूर्वकृतात् भिन्नम्। णिजर्थमाह—उत्तमर्णमधमर्ण इति। उत्तमर्णेनेति पाठान्तरम्—"हृक्रोः" इति वा कर्मत्वात्। तात्पर्यार्थमाह—पूर्वोक्तेति,—प्रागुक्तरीत्येत्यर्थः॥ ९३-॥

एवं लेख्यस्थाने उक्त्वा साक्षिमात्रप्रमाणकऋणग्रहणविषये आह—ससाक्षिके इति। साक्षिणां सर्वदा सान्निध्यासंभवात् इदं यौगपद्यविषयकमित्याह—कृत्स्ने इति। चस्य व्युत्क्रमान्वयादाह—यच्चेति,—यत्त्वित्यर्थः। क्वचित्तथैव पाठः। पूर्वेति बहुव्रीहिः,—तत्साक्षिसमक्षमित्यर्थः। क्वचिदेवमेव पाठः। एवार्थे व्युत्क्रमे चेत्याह—एवेति॥ ९४॥ इति लेख्यप्रकरणम्॥ ९४॥

---

१. विश्व० यत्तु दातव्यं तत्स०। २. अ० १. ४. ५२.

# अथ दिव्यप्रकरणम् ७

लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषप्रमाणमुक्तम् । अथावसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् "तुलाग्न्यापः" इत्यादिभिराद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां कथयति । तत्र तावद्दिव्यान्युपदिशति—

5 **तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।**

तुलादीनि कोशान्तानि पञ्च दिव्यानीह धर्मशास्त्रे विशुद्धये सान्दिग्धस्यार्थस्य सन्देहनिवृत्तये दातव्यानीति ॥ ९४८॥

लिखिताद्यभावे वा परितुष्य सामर्थ्ये सति **तुलाग्न्याप इत्यादि** ॥९५॥

## सुबोधिनी

अथ दिव्यप्रकरणम् ॥ त्रेधा हि नियमः सम्भवति—अपराधविशेषे, दिव्यस्वरूपे, उभयत्रापीति । तद्यथा —'महाभियोगरूपापराधेष्वेव दिव्यानि' इत्येकः; 'इयन्त्येव दिव्यस्वरूपाणि' इत्यपरः; 'दिव्यस्वरूपाणि इयन्त्येव, महाभियोगेष्वेव' इत्यपरः। एवं स्थिते "तुलाग्न्याप" इत्यत्र निर्दिष्टानि पञ्च दिव्यानि महाभियोगेष्वेवेति नियम्यते ; न स्वरूपनियमो नापि विशिष्टनियमः — यतः पितामहवचनेन

## बालंभट्टी

सङ्गतिमाह— लिखितेति । अभ्यर्हितत्वात् प्रवृत्तिक्रमस्य विवक्षितत्वाच्च अस्य पूर्वनिपातः । अथेत्यस्य कथयतीत्यत्रान्वयः । प्रतिबन्धकशिष्यजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वरूपावसरसङ्गतिप्राप्तमित्यर्थः। दिव्यमिति-जातावेकवचनम्। अभिधास्यन् ,—तुलाधारणेत्यादिना। दिव्यमातृकां—दिव्योपोद्घातम् । तत्र आद्यश्लोकमवतारयति—तत्रेति,—दिव्यमातृकायां कथनीयायामित्यर्थः। तावत् आदौ। नाम्ना वस्तु सङ्कीर्तनमुद्देशः। कर्मत्वस्य विवक्षितत्वात् तुलाशब्दस्य पूर्वनिपातः । त्रयाणामितरेतरद्वन्द्वः । समासान्तविधेरनित्यत्वान्न सः । विशुद्धिपदार्थमाह— समित्यादिचतुर्थ्यन्तेन । नित्यसापेक्षत्वादाह—सन्देहनीति । योग्यतया आकाङ्क्षाशान्तये आह—दातेति ॥ ९४८ ॥

१. ख. मानुषं प्र० । २. प वेत्रनि० । ३. स्यावि० । ४. प. दाह—नीति ।

ननु अन्यान्यपि[1] तण्डुलादीनि दिव्यानि सन्ति,—"घटोऽग्निरुदकं चैव विषं कोशस्तथैव च । तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः ॥" इति पितामहस्मरणात् ; अतः कथमेतावन्त्येवेत्यत आह—

## महाभियोगेष्वेतानि

एतानि महाभियोगेष्वेव, नान्यत्रेति नियम्यते न पुनरिमान्येव दिव्यानीति । महत्त्वावधि च[2] वक्ष्यति। नन्वल्पाभियोगेऽपि कोशोऽस्त्येव[3]—"कोशमल्पेऽपि दापयेत्" इति स्मरणात्। सत्यम्। कोशस्य तुलादिषु पाठो न महाभियोगेष्वेवति नियमार्थः ; किं तु  5

### सुबोधिनी

विरोध इत्याह—एतानि महाभियोगेष्वेवेत्यादिना । अत्र "न पुनः" इति पुनश्शब्दो विशिष्टनियमनिराकरणार्थः । पूर्वोक्तानि दिव्यानि महाभियोगेष्वेवेति नियमो न घटत इत्याशङ्कते—नन्वल्पाभियोगेऽपीति । परिहरति—सत्यमित्यादिना । अयमर्थः—कोशस्य तुलादिभिः सहपाठो महाभियोगेष्वेवेति न नियमार्थः;अपि तु यथैतानि तुलादीनि

### बालंभट्टी

एतान्येव दिव्यानीत्याशयेन अवतरणमाह—नन्विति । घट इति "घटस्स्यात्तु तुलाकाष्ठम्" इति कोशः। पितामहेति,—बृहस्पतिरपि "घटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमः। षष्ठं च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकः ॥ अष्टमं फाल इत्युक्तं नवमं धर्मजं स्मृतम् । दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥" इति । अत एव शङ्कायां बहुवचनसङ्गतिः । एतावन्ति पञ्च, यद्यपि त्रेधा नियमस्संभवति—अपराधविशेषे, दिव्यस्वरूपे, उभयत्रापि; तद्यथा — 'महाभियोगरूपापराधेष्वेव दिव्यानि इत्याद्यः; इयन्त्येव दिव्यस्वरूपाणि इति द्वितीयः; मिलितस्तृतीयः । तथाऽप्याद्य एव नियमः स्वीक्रियते न द्वितीयतृतीयौ । पितामहोक्तिविरोधादित्याह—एतानीति,—तुलेत्यत्र निर्दिष्टानि दिव्यानि महाभियोगेष्वेवेति नियम[4] इत्यर्थः। न पुनरित्यनेनार्थात् तृतीयस्यापि निरासः । पुनश्शब्देन तन्निरास इति त्वयुक्तम्—उदक्षरत्वात् । न पुनरिति —न त्वित्यर्थः । अनेन शङ्का समाहिता। नियम्यत इत्यस्यानुषङ्गः । ननु महत्त्वस्य सावधिकत्वेनानियमापत्तिरत आह — महत्त्वेति । "नासहस्रात्" इत्यादिनेति भावः। तथा च नानियम इति बोध्यम् । स्मृत्यन्तरविरोधापत्त्या प्रोक्तनियमो न घटत इत्याशङ्कां[5] परिहरति— नन्वल्पेत्यादि । पितामहमाह—कोशमल्पेऽपीति । एवमग्रेऽपि । सत्यमिति,— उक्तवचनाविरोधाय विधिनियमयोर्विधेर्ज्यायस्त्वेन तथैव स्वीक्रियते । नतु तस्य नियमशरीरे प्रवेशः, तथा च तस्य तैस्सह पाठो न तदर्थः; अपि तु

१. ख. अन्यत्रान्या० । २. क. ङ. 'च' नास्ति । ३. ख. कोशइष्यते । ४. त. 'नियम' इत्यादि 'ष्वेवेति' इत्यन्तं नास्ति । ५. शङ्कय परि० ।

सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः। अन्यथा शङ्काभियोग एव स्यात्—"अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः॥" इति स्मरणात्॥

महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह—

**शीर्षकस्थेऽभियोक्तरि ॥ ९५ ॥**

5 एतानि तुलादीन्यभियोक्तरि शीर्षकस्थेऽभियुक्तस्य भवन्ति। शीर्षकं शिरः व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणः,—तेन च दण्डो लक्ष्यते तत्र तिष्ठतीति

"महाभियोषेषु" इति वदन् महाभियोगेषु शपथप्राप्तिं दर्शयति नारदः—"सत्यं वाहनशस्त्राणि गोबीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च ॥ इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे। पातके त्वभियोगे वा विधिर्दिव्यः प्रकीर्तितः ॥" इति[1]। महाभियोगे महापातकाद्यभियोगे; स्पष्टमन्यत् ॥ ९५ ॥

## सुबोधिनी

सावष्टम्भाभियोगेषु[2] भवन्ति, तथा कोशोऽपि सावष्टम्भाभियोगेष्वपीत्येवमर्थ इति। सावष्टम्भाभियोगेऽपीति— यत्राभियोक्ता[3] 'अहमस्यापराधं जानामि' इति शीर्षकस्थो भवति स सावष्टम्भाभियोग इत्युच्यते ॥ ९५ ॥

## बालंभट्टी

यथा तुलादीनि सावष्टंभाभियोगेषु, एवमयमर्पीत्येवमर्थ इति भावः। सावष्टंभेति— अवष्टम्भेन सहितः सावष्टम्भः—स्वोपरि दण्डाङ्गीकारश्चावष्टंभः। निश्चयः स इति कल्पतरुः। अन्यथा—मूले कोशस्यानुपादाने स्यात् कोश इति भावः। मूलानुक्तत्वात् स्मृत्यन्तरमाह— अवष्टंभेति। सावष्टंभेति पाठान्तरम्पितामहोक्तिरियम्। घटादीनि चत्वारि। शङ्कास्वेवेति- शङ्कास्वेतानि योजयेदिति पाठान्तरम्। तथा च महाभियोगो महाभिप्रायः;स च द्विविधः-शङ्कितः सावष्टंभश्च। स्वोपरि दण्डमङ्गीकृत्य लपितः सावष्टंभः। एवमल्पाभियोगेऽपि बोद्धव्यम् ॥

अत एवाऽऽह—महाभियोगेष्विति। तद्भेदमाह— शङ्कितेष्विति। उभयविध- महाभियोगेष्वविशेषेण प्रोक्ततृतीयपादे विशेषानादरेण एतेषां तुलादिचतुर्णां प्राप्तावित्यर्थः। अनुवृत्त्या आह—एतानीति,—चत्वारीत्यर्थः। अर्थादाह—अभियुक्तस्येति। शक्यार्थ- माह—शिर इति। प्रकृते व्यवहारपुरुषस्य तदाह— व्यवेति। स्पष्टार्थं पुनस्तत्स्वरूप- माह—जयेति। प्रकृते तु पराजय एव विवक्षितः। अत एव तत्सम्बन्धाल्लक्ष्यार्थमाह— तेन चेति। तिष्ठतिरत्राहानौ "समये तिष्ठ सुग्रीव" इतिवत्। अङ्गीकृतदण्डनं न

१.—१. २४८, २५०. । २. त. 'भवन्ति' इत्यादि 'भियोगेऽपीति' इत्यन्तं नास्ति। ३. त. 'यत्राभियोक्ता' इति नास्ति।

शीर्षकस्थः—तत्प्रयुक्तदण्डभागित्यर्थः ॥ ९५ ॥

"ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।" इति भावप्रतिज्ञावादिन एव क्रियेति व्यवस्था दर्शिता ; तदपवादार्थमाह—

## रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।

रुच्या अभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्याऽन्यतरोऽभियुक्तोऽभियोक्ता वा दिव्यं कुर्यादितरोऽभियुक्तः अभियोक्ता वा शिरःशारीरमर्थदण्डं वा वर्तयेदङ्गीकुर्यात्। अयमभिसन्धिः—न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरम्, अपि तु भावाभाव- 5

किमभियोक्त्राऽवश्यं शिरो वर्तनीयम्? एष तावान्नियमः—

## रुच्या वान्यतरः कुर्यादित्यादि ॥ ९६ ॥

इच्छयैवाभियोक्त्रोरन्यतरो दिव्यं कुर्यात् ; अन्यतरः शिरो वर्तयेत्। यद्यभियुक्तोऽर्थोऽन्यथा स्यात् ततो ममेदं धनं सर्वस्वं वा यद्वेद। मंगाशिरो(?)गच्छेदित्येवमवष्टंभेन दिव्यक्रियाप्रयोक्ता शिरोवर्तीत्युच्यते । राजद्रोहमहापातकशङ्कायां त्वशीर्षकमपि स्यादेव ; स्पष्टमन्यत् ॥ ९६ ॥

### बालंभट्टी

जहातीत्यर्थः । अत एवाऽऽह—तदिति,—पराजयेत्यर्थः । इत्यर्थ इति,--तस्मिन् सतीत्यादिः । अभिशापदातरि शीर्षकस्थे पराजयहेतुकदण्डभाजि सत्येवैतानि भवन्ति।'यद्यनेनेदं न कृतं स्यात्, तदा मयाऽऽयं दण्डो देयः' इति वादी शीर्षकस्थः ; तादृशे तस्मिन् सतीत्यर्थः । तथा च सावष्टम्भेष्वेव तेष्वेतेनाशङ्कितेष्विति विशेषोक्त्या तदपवादत्वमित्यर्थः ॥ ९५ ॥

'यद्यप्यव्यवहितसङ्गतिस्तत्र विकल्पमाह' इत्येवं संभवति ; तथाऽपि विशेषप्रतिपादनाय व्यवहितसङ्गतिमाह—तत इति । वस्तुतस्तदपवादत्वाभावादाह–दार्थमिति, —तदर्थमुक्तापेक्षया विकल्पमाहेत्यर्थः। रुचिरत्र न प्रसिद्धेत्याह—अभीति । अन्यतर इत्यत्राल्पाच्तरमितिवत् स्वार्थे तरप् । उक्तादन्य इत्यर्थः तदाह--अभियोक्ता वा दिव्यं कुर्यादिति । मौलं विकल्पमाह—वा दिव्यमिति । अत एवाऽऽह—इतरोऽभीति । दण्डविकल्पमाह —दण्डं वेति । एतेन तरपो यथाश्रुतत्वेन तस्याभियोक्ता अभियुक्तो वेति व्याख्यानमग्रे चैकमेवेति क्वचिदुपलभ्यमानमयुक्तं वेदितव्यम्।ननु दिव्यतत्त्वे "शीर्षकस्थे" इत्यनेन अभियोक्तुः शिरोवर्तित्वाभिधानादभियुक्तस्य दिव्यमित्युक्तम्। रुच्येत्यनेन तु अभियुक्ते शिरोवर्तिनि तदिच्छया अभियोक्तुरपि दिव्यमुच्यत इत्युक्तमिति तथैव कुतो नोक्तमत आह—अयमभीति ,—अभिप्राय इत्यर्थः। भावैकेति ,—भावमात्रे-

---

१. व्यव० ७ः२. ख. क्रियाप्र्य० ।

विशेषेण गोचरयति। अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरेच्छया दिव्यं भवतीति ॥ ९५ ॥

अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो भवतीत्युक्तम् ; तुलादीनि विषान्तानि तु[1] महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमोदर्शितः; तत्रावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह—

5

**विनाऽपि शीर्षकात्कुर्यान्नृपद्रोहे[2]ऽथ पातके ॥ ९६ ॥**

राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च शिरःस्थायिना विनाऽपि-

## सुबोधिनी

अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरिति । अल्पाभियोगे "कोशमल्पेऽपि दापयेत्" इत्यनेन ; महाभियोगे "महाभियोगेष्वेतानि" इत्यनेन : शङ्कायां "दण्डश्चैव तु कोशश्च शङ्कास्वेव न संशयः।" इत्यनेन ; सावष्टंभे "तुलाग्न्यापो विषं कोशः" इति तुलादीनां सहपाठेन ; "शीर्षकस्थे[3]ऽभियोक्तरि" इत्यनेन चोक्तमिति द्रष्टव्यम् । तुलादीनि विषान्तानि त्वित्यादि,—अत्रापि महाभियोगेष्वेव 'महाभियोगेष्वेतानि' इत्यनेनैव "सावष्टम्भेष्वेव" "शीर्षकस्थेऽभियोक्तरि" इत्यनेन च नियमो दर्शित इति बोद्धव्यम् । महाचौर्याभिशङ्कायांचेति । अत्र शिरःस्थायिना विनापि तण्डुलादीनि (?) कुर्यादिति पूर्वेण सम्बन्धः,

## बालंभट्टी

त्यर्थः । इतिः तत्समाप्तौ । अयं भावः—अयञ्च विकल्पोऽभियोक्त्रिच्छायामेव ; तदनिच्छायां त्वभियोज्यस्यैव दिव्यं नत्वभियोक्तारं दिव्येषु नियोजयेत्—"अभियुक्तस्य दातव्यन्दिव्यं दिव्यविशारदैः । " इति दिव्ये तत्कर्तव्यतोक्तेः ॥ ९५ ॥

उत्तरार्द्धमवतारयितुमुक्तसर्ववचनसिद्ध्यर्थमनुवदति—अल्पाभीति। यथाक्रमं "कोशमल्पेऽपि" इत्यनेन, "महाभियोगेष्वेतानि" इत्यनेन, "शङ्कास्वेव न संशयः" इत्यनेन, तुलाग्न्यापः"[4] इत्यत्र तुलादि सहपाठेन च चतुर्षु स इत्युक्तमित्यर्थः। तत्राऽऽद्यो "महाभियोगेष्वेतानि" इत्यनेन "शीर्षकस्थ" इत्यनेन द्वितीयो दर्शित इति बोध्यम् । [5]यथासङ्ख्याभावाय व्याससमासाभ्यामुक्तिः।एतत्सूचक एव अपिः। नियम इति जातावेकवचनम् । चो व्युत्क्रमे—दर्शितश्चेत्यर्थः । शङ्कास्वेवेत्येवकारस्तु तण्डुलान्वयाशयकः इत्यपि बोध्यम् । तत्र—तयोर्मध्ये । अथशब्दः समुच्चये। पातकपदं महापातकपरमित्याह—ब्रह्मेति। शीर्षकादित्यस्य व्याख्या—शिरः स्थायिनेति ; तथा च राजद्रोहमहापातकयोः शङ्कायामपि तुलादीनि कार्याणीति

१. ज. 'तु' नास्ति । २. विश्व० राजद्रो०। ३. त. पार्श्वस्थो०।४'तुलाग्न्यापः' इत्यत्रेत्यर्थः। ५. 'यथासङ्ख्यया' इत्यारभ्य 'दर्शितश्चेत्यर्थः, इत्यन्तं नास्ति ।

तुल्दानि कुर्यात्, महाचौर्याभिशङ्कायां च; यथाऽऽह--"राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः। आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥" इति। तण्डुलाः पुनरल्पचौर्यशङ्कायामेव—"चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः।" इति पितामहवचनात्। तप्तमाषस्तु महाचौर्याभिशङ्कायाम्—"चौर्यश-

सुबोधिनी

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिरिति—अत्र "निर्दिष्टानां च दस्युभिः" इत्युक्त्या शब्दतश्चौर्याभिशङ्का यद्यपि न प्रतीयते, तथाऽपि "राजभिः शङ्कितानाम्" इत्युपक्रमबलात् दस्यूनामविश्वसनीयत्वेन तन्निर्दिष्टेष्वाशङ्कैव जायत इति। चौर्यशङ्काभियुक्तानामिति यद्यप्यविशेषेणोक्तं, तथाऽपि तप्तमाषस्य तीक्ष्णत्वेन महादिव्यत्वान्नैमित्तिकतप्तमाषानुसारेण निमित्तस्य चौर्यशङ्काया महत्त्वं युक्तमिति भावः। एतच्च प्रायश्चित्ताध्याये निपुणतरमुपपाद-

बालंभट्टी

तदपवादत्वमिति भावः। अथसमुच्चयमेवाऽऽह—महेति। तन्मध्ये तत्र चेत्यर्थः। पितामहनारदावाह—यथाऽऽहेति। साजात्यादेकवचनम्। राजभिरिति,--अत्र "राजभिः" इति शङ्कामुपक्रम्य "आत्मशुद्धिपराणां च दिव्यम्" इत्यनेन निरवष्टंभाभियोगे च दिव्यदानस्योपसंहारात्तन्मध्यपातिनिर्दिष्टानामित्यस्यापि शङ्काविषयत्वं बोध्यम्। दिव्यतत्त्वे कालिकापुराणे--"परदाराभिशापे च चौर्यागम्यगमेषु च। महापातकशस्ते च स्याद्दिव्यं नृपसाहसे॥ विप्रतीतौ विवादे च अवर्णास्थापने कृते। तत्रैव दापयेद्दिव्यं शिरःपूर्वं महीपतिः॥ परदाराभिमर्शे च बहवो यत्र वादिनः। शिरोहीनं भवेद्दिव्यमात्मनश्शुद्धिकारणात्॥" इति। अगम्याः परदारभिन्नाः साधारणवेश्याद्याः; शस्ते अभिशस्ते, साहसं; बलादन्यायः; विप्रतीत्तौ[5] परदाराभिशापादिविषयायां; विवादे ऋणादानादि विषये; अवर्णा निन्दा, परेति विशेषणमविवक्षितम्—अभिशापस्य अनुवाद्यत्वात्: एवं बहव इत्याद्यपि। परदाराभिमर्शे चेति चौर्यादीनामप्युपलक्षणम्। तेन वाद्यभावेऽपि[6] दिव्यं भवति। अत एव शुद्धिकारणादिति हेतूक्तिः। विनाऽपीति—मौलसामान्योक्तिश्च सङ्कुचते। विष्णुरपि "राजद्रोह साहसेषु विनाऽपि शीर्षकार्यिणः।" इति। नारदोऽपि "अशिरांसि च दिव्यानि राजकृत्येषु दापयेत्। अभियोक्तृभियुक्तानामन्येषान्तु यथाक्रमम्॥" इति। शङ्कास्वेवेत्येवकार सफलयन् विरोधपरिहारार्थं विशेषमाह—तण्डुलाः पुनरिति,—तण्डुलास्त्वित्यर्थः। चौर्ये त्विति,—यद्यप्यत्र चौर्य इत्येवोक्तम्, तथाऽपि तण्डुलरूपाल्पदिव्यानुरोधेन निमित्तस्याल्पत्वकल्पनामिति भावः। प्राग्वदाह—तप्तेति। चौर्येति,—पितामहोक्तिः। यद्यप्यत्र चौर्यशङ्केत्यविशेषेणोक्तम्, तथाऽपि तप्तमा-

१ क. राजाभिशं०। २. ख. ग. यामेवं। ३. प. फ. महाभीति। ४. मर्शे च। ५. फ. विप्रतिपत्तौ (?) ६. प. वेऽपि सर्वाभिनयो दिव्यं भ०। फ. सर्वाभिनये दि०। ७. फ. कार्याणि।

ङ्काभियुक्तानां तप्तमाषो विधीयते।" इति स्मरणात्। अन्ये पुनः शपथा अल्पार्थविषयाः—"सत्यवाहनशस्त्राणि गोबीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च॥ स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा। अभियोगेषु सह्येषु कोशपानमथापि वा॥ इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे।" इति नारदा- 5 दिस्मरणात्। यद्यपि मानुषप्रमाणानिर्णेयस्य निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं, तथाऽपि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदेन व्यपदेशो ब्राह्मणपरिव्राजकवत्।

सुबोधिनी

यिष्यते। अभियोगेषु सह्येष्विति-सह्येषु सहनयोग्येषु स्वल्पेष्विति यावत्। ब्राह्मणपरिव्राजकवदिति,—अयमर्थः--'ब्राह्मणानामन्त्रय' इत्युक्ते परिव्राजकेऽपि ब्राह्मणत्वस्याविशिष्टत्वात् त-

बालंबट्टी

षस्य तीक्ष्णत्वेन महादिव्यत्वान्नैमित्तिकतप्तमाषानुसारणे निमित्तस्य चौर्यशङ्काया महत्त्वं युक्तमिति भावः। इदञ्च तृतीये व्यक्तीभविष्यति। अन्ये उक्तेभ्यः। पुनः तु। वाहनमश्वादि; बीजं-धान्यम्; देवतापितृपादान्[2]-तयोः चरणान्, दत्तानि भूम्यादीनि सुकृतानि-सदाचरणानि। स्पृशेदित्यस्य सर्वत्रान्वयः। सह्येषु सहनयोग्येषु स्वल्पेष्विति यावत्। कोशपानं-कोशस्य जलविशेषस्य भक्षणम्। ननु तुलादीनां दिव्यत्वमुक्तं मूलादौ; सत्यादीनान्तु शपथत्वमुक्तं नारदेन तदयुक्तं तेषामपि दिव्यलक्षणाक्रान्तत्वादिति शङ्कते—यद्यपीति। दिव्यलक्षणमाह —मानुषेति। यस्य[3] अर्थस्य। लोकेत्यनेन शास्त्रोक्तत्वव्यवच्छेदः। उक्तलक्षणं द्विविधम्—तत्कालनिर्णायकं कालान्तरनिर्णायकञ्च; यथा[4] तत्राऽऽद्यं तुलादि, द्वितीयं सत्यादि। तत्राऽऽद्यस्यानामान्तरत्वेऽपि द्वितीयस्य रूपमेव सर्वत्रोचितं; न तु क्वचित् कृतं वैलक्षण्यं क्वचित् किञ्चित् कृतं साम्यमिति वैनामान्तरं शपथ इति। एव सति भेदेनोक्तिर्विशेषधर्मा[6]निमित्तिकेत्याशयेन समाधत्ते—तथाऽपीति। निर्णयनीत्यादि षष्ठी तत्पुरुषः। गोबलीवर्दन्यायस्यासत्त्वादाह- ब्राह्मणेति,--'ब्राह्मणानामन्त्रयस्व' इत्युक्ते तत्त्वस्य तत्राविशिष्टत्वात्तदामन्त्रणेऽपि पुनः' 'परिव्राजकमामन्त्रयस्व इति कथनं तत्प्राधान्यप्रतिपादनार्थं यथा, तथा तुलादीनां सत्यादीनाञ्च दिव्यत्वे तुल्ये[7]ऽपि ततस्तेषां भेदेन कथनं कालान्तरनिर्णयनिमित्तत्वद्योतनार्थमित्यर्थः। यथा तस्य तत्फलान्तरानुरोधेन एवमत्रापीति यावत्। यद्वा 'ब्राह्मणानामन्त्रन परिव्राजकं च' इत्युक्ते प्रोक्तरीत्या सिद्धे पुनस्तदुक्त्या यथा तस्य तदन्यपरत्वं, तथाऽत्रापीत्यर्थः। ननु यदि कालन्तरनिर्णयनिमित्तानि शपथाः, तर्हि कोशस्य सद्यो निर्णयनिमित्तेषु[8] पाठोऽनुपपन्नः; तस्य तदन्तर्गतत्वादतः प्रागुक्तमनसृत्यैवाऽऽह —

१. ख. सर्वेषु च. सह्ये को। २. प. फ. देवतापितृपादानीति नास्ति। ३ प. उक्तेति ना। ४. फ. यथेति नास्ति। ५. किञ्चिदिति नास्ति। ६. र्माणिनि०। फ र्मानि०। ७. प. तुल्यत्वेऽपि। ८ प षु तुलादिषु।

कोशस्य तु शपथत्वेऽपि घटादिषु पाठो महाभियोगविषयत्वेनावष्टम्भभियोगविषयत्वेन च घटादिसाम्यत् , न तु समनन्तरनिर्णयनिमित्तत्वेन। तण्डुलानां तप्तमापस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च घटादिवैलक्षण्यात्तेष्वपाठ इति सन्तोष्टव्यम्। एतानि च दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि। यत्तु पितामहवचनम्—" स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।" इति, तदपि लिखित- 5

## सुबोधिनी

भिमन्त्रणेऽपि प्राप्ते, पुनः ' परिव्राजकमामन्त्रय ' इति पृथगभिधानं यथा परिव्राजकप्राधान्यप्रतिपादनार्थं, तथा तुलादीनां शपथानां सिद्धेऽपि दिव्यत्वे तुलादिभ्यः शपथानां पृथगभिधानं कालान्तरनिर्णयनिमित्तत्वद्योतनार्थमिति । एतदुक्तं भवति—यथा परिव्राजकस्य पृथगभिधानं प्रयोजनान्तरानुसारेण, तथा शपथानामपि प्रयोजनान्तरानुसारेण पृथगभिधानमिति। तच्च प्रयोजनान्तरं पूर्वमेवोक्तम् । अथवा ब्राह्मणपरिव्राजकवादित्यस्यान्योऽर्थः —'ब्राह्मणमामन्त्रय परिव्राजकं चामन्त्रय' इत्युक्ते ब्राह्मणामन्त्रणनियोगेनैव परिव्राजकेऽप्यामन्त्रणनियोगसिद्धेः पुनः परिव्राजकामन्त्रणनियोगात् यथा परिव्राजकातिरिक्तविषयो ब्राह्मणशब्दः, तथा तुलादीनां शपथानां च दिव्यत्वे सिद्धेऽपि दिव्यशपथशब्दयोः प्रयोगात् दिव्यशब्दः शपथव्यतिरिक्ततुलादिविषय इति । ननु यदि कालान्तरनिर्णयनिमित्तानि शपथाः, तर्हि सद्यो निर्णयनिमित्तेषु तुलादिषु कोशस्य सहपाठोऽनुपपन्न इत्याशङ्क्य पूर्वोक्तमेव प्रयोजनं स्मारयति—कोशस्य तु शपथत्वेऽपीति । यदुक्तम् ' ऋणादिषु सर्वेषु विवादेषु यथासम्भवं दिव्यानि प्रयोज्यानि' इति तदनुपपन्नम् स्थावरेषु पितामहवचनविरोधादित्याशङ्क्य परिहरति—यत्तु पितामहवचनं स्थावरेष्वित्यादिना ।

## बालंभट्टी

कोशस्य त्विति। न चेति साम्ये हेतुः। निमित्तत्वेनेति,—घटादिसाम्यादित्यनुषज्यते । ननु एवमपि तण्डुलतप्तमाषयोः सद्योनिर्णयानिमित्तत्वेन मूले तुलादिषु पाठः स्मृत्यन्तरवदुचितोऽत आह— तण्डुलेति । अल्पेति —अल्पाभियोगेत्यर्थः । नन्वैकरूप्यमेव सर्वत्रोचितं, न तु क्वचित् किञ्चित् कृतं वैलक्षण्यं क्वचित् किञ्चित् कृतं साम्यमिति वैरूप्यमत आह—सन्तोष्टव्यमिति । सिद्धस्य गतिश्चिन्तनीयेति भावः। कोशस्याल्पशङ्काभयविषयत्वेऽपि तन्मात्राविषयकत्वाद्युक्तस्तेषु पाठ इति तात्पर्यम् । विशेषं वक्तुं प्रतिजानीते—एतानि चेति । चो वाक्यालङ्कारे । ऋणादिष्विति—ऋणादानादिरूपाष्टादशविवादेष्वित्यर्थः । नन्विदमयुक्तं पितामहविरोधादित्याशङ्क्य प्रागुक्तरीत्यैव परिहरति—यत्त्विस्यादि । स्थावरेष्विति, — विषयसप्तमी । सामन्तार्थे अग्रे स्फुटीभविष्यति ।

१. क. ग. ज. माषकस्य। २. ग. ज. यच्च। ३. त. न्यापा ४. त. द. था (दी?)नां। ५. त. त्ताभिप्रायकं(?)तर्हि। ६. फ. क्वचित् कृतवैलक्षण्यं क्वचित्। प. इद नास्ति । ७. प. शङ्का। ८. फ. न्तश्चाग्रे।

सामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणान्तरसंभवे दिव्यानामनवकाश एव । सत्यम् । ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासे अर्थिना कृतेऽपि, प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते, तदा दिव्यमपि भवति । साक्षिणामाशयदोषसंभवाद्दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य; यथाऽऽह नारदः—"तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि । दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥" इति । स्थावरेषु विवादेषु तु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थम् । "स्थावरेषु विवादेषु"

## सुबोधिनी

एवं सति स्थावरेषु विवादेष्वित्यत्र पितामहवचने स्थावरपदमनर्थकम्; विवादान्तरेष्वपि मानुषप्रमाणसम्भवे व्यभिचारादित्याक्षिपति —ननु विवादन्तरेष्वपीति । अर्धाङ्गीकारेण परिहरति—सत्यमित्यादिना । स्थावरपदस्य सार्थकत्वमाह—स्थावरेषु विवादेषु प्रत्यर्थिनेति । अयमभिप्रायः—स्थावरेषु मानुषदिव्यप्रमाणयोर्न विकल्प इति विकल्पनिराकरणार्थं स्थावरशब्द इति ॥ ९६ ॥

## बालंभट्टी

व्याख्येयमिति। स्थावरविवादेनात्यन्तिकदिव्यनिषेधार्थमिदम्,— दृष्टप्रमाणाभावेऽनिर्णयप्रसङ्गात्; किन्त्वर्थिनो दृष्टप्रमाणसत्त्वे प्रत्यर्थिनि दण्डावष्टंभेन दिव्यमवलंबेत्यपि दृष्टेनादृष्टेन वा निर्णय इति प्रागुक्तरीत्या प्राप्तविकल्पनिरासेन दिव्यनिषेधार्थम्ँ ,विवादान्तरेतु विकल्प एवेति भावः। इदमेव ध्वनयन् स्थावरपदानर्थक्यमुक्तयुक्तेस्तुल्यत्वात् प्राप्तं परिहर्तुं शङ्कते —नन्विति। विवेति—स्थावरविषयान्येष्वपीत्यर्थः। प्रमेति—दिव्यान्यमानुषप्रमाणेत्यर्थः। ऋणादिष्विति,—विषयसप्तमी । दण्डेति—दण्डाङ्गीकारनिश्रयेनेत्यर्थः । अपिना तस्यापिसमुच्चयः। ननु संभवतीति न्यायविरोधोऽत आह—साक्षिणामिति । आशयः अन्तःकरणम् । हेत्वन्तरमाह—दिव्यस्य चेति । चोऽन्ते योज्यः । हेत्वन्तरमाह — तदिति,—धर्मस्य वस्तुतत्त्वविषयकत्वाच्चेत्यर्थः । अत्र हेतौ मानमाह—यथाऽऽहेति । तत्र दिव्ये । सत्ये तद्रूपे साक्षिणि। व्यवहारस्तु तन्मानन्तु । साध्ये तदेकसाध्ये । पौरुषेयीं क्रियां साक्षिरूपाम् । नेत्युभयान्वयि । अयञ्च दोषसंभावनामात्रेण साक्ष्यादिनिषेधो न वास्तव इति बोध्यम्। एवमन्यत्रोक्तं स्थावरेषु कथयन् स्थावरपदसार्थक्यं तत्राऽऽह—स्थावरोष्विति। दृष्टेति—तद्रूपदृष्टेत्यर्थः । नेत्युत्तरान्वयि । विकल्पेति,—स्थावरेषु मानुषदिव्यप्रमाणयोर्न विकल्प इति

१. क. सद्भावे । २. ग. दिविवादेषु । ३. क. आलम्भते । ४. ख. 'तु' इति नास्ति । ५ थ. द. दिव्याभावादि । ६. प. प्रमाणत्वे । ७. फ. र्थः । ८. प. पौरूषेऽपि ।

इत्यादिपितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम्—लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात् ॥ ९६ ॥

किं च –

**सचैलं स्नातमाहूय सूर्योदयउपोषितम् ।**
**कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ९७ ॥**

5

पूर्वेद्युरुपोषितमुदिते सूर्ये सचैलं स्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानां च ब्राह्मणानां संनिधौ सर्वाणि दिव्यानि कारयेत्प्राड्विवाकः । "त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा । नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥" इत्यु-

महापातकाद्याशङ्का भवेत्- **नासहस्रपरं फालमित्यादि ॥ ९९ ॥**

परशब्दोऽर्थवचनः; यथा ब्राह्मणपरमस्य द्रव्यं ब्राह्मणार्थमित्यर्थः । सहस्रमर्वाङ् न फलादीनि स्युः । सहस्रादर्वागेषामप्रवृत्तिः । नृपार्थेष्वल्पाभियोगेष्वपि वहेयुः,— कुर्युरित्यर्थः । शुचयः सदेति ये हि नित्यं शुचयोऽपि दैवादाशङ्किताः त एवं कुर्युः, न तु संभाविता शुचित्वा (?) अपीत्यर्थः । एवं चासति—"सहस्रार्थे तुलादीनि कोशमल्पेऽपि कारयेत् । पंचाशद्दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ॥" स्पष्टार्थः श्लोकः ॥ ९९ ॥

किं सद्य एव दिव्यक्रिया ? नेत्याह । किं तर्हि— **सचेलस्नातमाहूयेत्यादि ॥ ९७ ॥**

नृपादिसंनिधिवचनं कार्यगौरवप्रतिपत्त्यर्थम् ॥ ९७ ॥

बालंभट्टी

विकल्पानिराकरणार्थः स्थावरशब्द इति भावः । आत्यन्तिकेति, सर्वथेत्यर्थः । निषेधहेतुमाह—लिखितेति ॥ ९६ ॥

किञ्चेति,—दिव्यस्य[3] कालाद्युच्यत इत्यर्थः । सचैलस्नानमिति बहुव्रीहिः स चेलं स्नातमिति पाठान्तरम् । भूतप्रत्ययादिसूचितमाह — पूर्वेद्युरिति । अर्धबिंबनिरासायाऽऽह—उदित इति । सूर्योदयं इति बहुव्रीहिरिति भावः । ब्राह्मणपदार्थमेवाऽऽह— सभ्यानाञ्चेति । नृपस्योक्तत्वेनार्थादाह —प्राड्वीति । अत्रोपोषित इति सामान्येनोक्तावपि पितामहोक्तं विशेषमाह- त्रिरात्रोपोषिति । शुचये कृतस्नानाय। आर्द्रवाससे सचेलस्नानाय । त्रिरात्रोपोषिताय अथव एकरात्रोषिताय नित्यम् अवश्यं दिव्यानि देयानि स्युरित्यर्थः । नित्यमित्यनेनादाने प्रत्यवायस्[6]सूचितः । येव ह्य इति पाठान्तरम् । एकरात्रोपो-

१. क. ब्र.णानां च। २. क ये (?) स्युः । ३ प. दिव्यकाला०। ४. फ. 'सूर्योदय' इति नास्ति । ५. प. आर्द्रेत्यारभ्य स्नानायेत्यन्त नास्ति । ६. फ. 'सूचितः' इति नास्ति ।

पवासविकल्पः पितामहेनोक्तो बलवदबलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः। उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि—"दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया॥" इति पितामहवचनात्। अत्र च यद्यपि "सूर्योदय" इत्याविशेषेणोक्तं, तथाऽपि शिष्टसमाचाराद्भानुवारे दिव्यानि देयानि। तत्रापि—"पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत्।
5 मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता[2]॥ दिवसस्य तु पूर्वाह्णे कोशसिद्धिर्विधीयते। रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलं[3]॥" इति पितामहोक्तो विशेषो द्रष्टव्यः॥ अनुक्तवेलाविशेषाणां[4] तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्ण एव प्रदानम्,—"पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम्॥" इति सामान्येन नारदस्मरणात्। अहनि त्रिधा
10 विभक्ते पूर्वो भागः पूर्वाह्णः, मध्यो मध्याह्नः, उत्तरोऽपराह्णः। तथाऽपरोऽपि कालविशेषो विधिप्रतिषेधमुखेन दर्शितः। विधिमुखस्तावत्—" अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः। शरद्ग्रीष्मे[5]तु सलिलं हेमन्ते शिशिरे विषम्॥ चैत्रो मार्गशिरश्चैव[6]

बालंभट्टी

षिताय त्रिरात्रोपोषिताय वेति। मयूखादिधृतपाठस्तु मुनिशैलीविरुद्धत्वादुपेक्ष्यः मनुबलवदिति(?)न युक्तं कार्यतारतम्येऽपि तथापत्तेरत आह–महेति। विशेषमाह—उपेति। चेनार्द्रवासस्त्वादिसमुच्चयः; तदाह नारदः " प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः। श्रुतवृत्तोपसम्पन्नश्शान्तचित्तो विमत्सरः॥ सत्यसन्धो भूरिपक्षः सर्वप्राणिहिते रतः। उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः॥ सर्वासां देवतानाञ्च पूजां कृत्वा यथाविधि।" इति। शिष्टेति,—वस्तुतस्तु सूर्यस्य तद्वारस्य(?)उदयो यत्रेति। सूर्ये तद्वारे उदये अर्थाद्रवेरिति वार्थ इति स्मार्तमेवेदमिति बोध्यम्। तत्रापि—भानुवारेऽपि ; विशेष इत्यत्रान्वयः। दिवसस्येत्यस्य सर्वत्र सम्बन्धः। स्पष्टार्थं विषान्यदिव्यमाले दिवसस्य प्राधान्यसूचनार्थमिदं विशेषणम्। तु शीतले इति पाठान्तरम। सुशीतलमिति पाठस्त्वयुक्तः। विशेषमाह—उक्तेति,—एतेन न्यूनता निरस्ता। कालस्य[7] अनुक्तत्वादाह—तण्डुलेति। प्रभृतिशब्देन फालादिग्रहणम्। पूर्वाह्णे इति,—"अहोरात्रोषिते[8] स्नाते त्वार्द्रवाससि मानवे[9]" इत्यस्य पूर्वार्धम्[10]। पूर्वाह्णादीनामनेकत्वादाह—अहनीति। पितामहोक्तमेव विशेषान्तरमाह—तथेति,—मासादेरित्यर्थः[11]। मुखे तदुभयद्वाराऽऽह—विधीति। तत्रेत्यादिः बहुव्रीहिः। एवमग्रेऽपि। शिशिरहेमन्तावित्यार्धम्। " ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण "

१....वासरे। २. ज. अभीप्सुना। ३. क. झ. तलम्। ४. ख. घ. काल। ५. ख. ग. ग्रीष्मेषु (?) ६. ख. ग. रात्रैव। ७. प. फ. कालस्योक्तत्वादाह—वेलेति। ८. प. फ. त्रोपोषि०। ९. प. फ. से (?)। १०. प. फ. पूर्वार्धमिति नास्ति। ११. फ. समासा०।

वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः ॥ कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी ।" इति । कोशग्रहणं सर्वशपथानामुपलक्षणम् । तण्डुलानां पुनर्विशेषानभिधानात्सार्वकालिकत्वम् । प्रतिषेधमुखोऽपि[1]—"न शीते तोयसिद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात्प्रवाते न तुलां तथा॥ नापराह्णे न सन्ध्यायांन मध्याह्ने कदाचन।" इति। "न शीते तोयशुद्धिः स्यात्" इत्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम्। "नोष्णकालेऽग्निशोधनम्" इत्यत्रोष्णकालशब्देन ग्रीष्मशरदोर्विधानलब्धस्यापि पुनर्निषेध आदरार्थः। प्रयोजनं तु वक्ष्येते॥९७॥ 5

## सुबोधिनी

ननु ग्रीष्मादिकालविधानबलादेवेतरकालनिषेधासिद्धेः पुनर्निषेधोऽनर्थक इत्याशङ्क्य परिहरति—विधानलब्धस्यापि पुनरिति ॥ ९७ ॥

## बालंभट्टी

इत्युक्तेः। एवं शराद्ग्रीष्म इत्यपि बोध्यम्। अत एवाग्रे तथैव प्रयोगद्वयम्। अन्त्येन[2] समाहारद्वन्द्वः। वर्षाण्येवेति कल्पतरुधृतोऽपपाठः- -तस्य स्त्रीत्वात्। प्रकीर्त्यत इति पाठे काल इत्यस्य विशेष्यत्वं बोध्यम्—"यो यस्य विहितः कालो विधिर्यस्य च यो यथा । तं प्रवक्ष्यामि तत्त्वेन वादिनश्च बलाबलम् ॥" इतीतः प्रागुक्तेः । अत एव "अग्निशिशिरहेमन्तवर्षासु परिकीर्तितः ।" इति मयूखधृतपाठोऽप्ययुक्तः । कोशस्त्विति,—अस्य स्थाने "घटस्सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।" इति पाठः कल्पतर्वादौ । इदं नारदीयमिति केचित् । न्यूनतां निराचष्टे—कोशेति । चतुर्णां दिव्यानां प्रत्येकमुक्तत्वात्तन्मध्यपाठसत्त्वादिति भावः । तत्रापाठात् भेदेनाऽऽह—तण्डुलेति । अत एव पुनस्त्वर्थः । विशेषेति-अग्न्यादेरेवेति[3] भावः। शङ्काविषयतया सहपाठाच्चेत्यपि बोध्यम्।तप्तमाषादेस्तु चैत्रादिरेव काल इति बोध्यम् । द्वितीयमाह—प्रतीति । न शीते इति "विचार्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः । धर्म्ये[4] सर्वर्तुकं प्रोक्तं पण्डितैर्धटधारणम्[5] ॥ वर्षासु समये वह्निर्हेमन्ते शिशिरे तथा । ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले ॥" इतीतः प्राङ्नारदोक्तिः । प्रवाते—प्रकृष्टे वाते सति । न मध्याह्ने इति निषधा जलान्यपरः । अतः प्रागुक्तपितामहविरोधो न। विध्येकवाक्यतायै[6] विरोधनिरासाय चाऽऽह—न शीते इत्यादि । हेमन्तेति,--मार्गशीर्षान्येत्यादिः। न च—नापि शरदोग्रहणमित्यनुषज्यते । एवं प्रावृट्छब्दो ग्रीष्मशरदोरप्युपलक्षणमिति बोध्यम् । "अनवस्थितमर्यादं विषं प्रावृषि जायते।" इति पितामाहः । ननु ग्रीष्मादिकालविधेरेवान्यकालनिवृत्तौ सत्यां पुनर्निषेधोऽफलः; अत आह--विधानेति,--

१. क. मुखेऽपि । ज. मुखेनापि । २. फ. अन्ते (?) समा० । ३. फ देरिवे० । ४. फ धर्मे । ५. प. पण्डितं धटधारणम् । ६. प. क्यतैव ।

अधिकारिव्यवस्थामाह—

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ९८ ॥

स्त्री स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण ; बाल आषोडशाद्वर्षात इति विशेषानादरेण; वृद्धोऽशीतिकावरः; अन्धो नेत्रविकलः; पङ्गुः पादविकलः; ब्राह्मणो जातिमात्रम्; रोगी व्याधितः—एतेषां शोधनार्थं तुलैवेति नियम्यते । अग्निः

न चाविशेषेण सर्वेषां सर्वदिव्यानि स्युः । किं तर्हि **तुलास्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणामित्यादि ॥ ९८ ॥**

स्त्र्यादिग्रहणं क्षत्रियाद्यर्थः। "अग्निर्जलं वा शूद्रस्य" इति अशूद्रस्यापि जलं वा स्यात् । व्यवस्थितविकल्पश्चायं क्षत्रियस्याग्निः ; वैश्यस्य जलं ; शूद्रस्य तु यवाः सप्त विषस्य वा जलं वाऽग्निर्वेत्यर्थः । अग्निर्जलं वा शूद्रस्य क्षत्रियादिजातस्येत्यर्थः । क्षत्रियादीनामग्न्या

सुबोधिनी

ननु "अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा।" इत्यत्राग्निजलविषाणां शूद्र एव

बालंभट्टी

—निषेधविषयकालस्येत्यर्थः । यथाश्रुतेऽनुपपत्तिः स्पष्टैव। ज्योतिश्शास्त्रे विशेष उक्तः "[१]सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा। मलमासे न कर्तव्या परीक्षा जयकाङ्क्षिणा॥ रविशुद्धौ गुरौ चैव [२]शुक्रे चास्तङ्गते पुनः । सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥ नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् । न परीक्षाधिवासश्च[३] शनिभौमदिने भवेत्॥ नो शुक्रास्तेऽष्टमार्के गुरु सहितरवौ जन्ममासेऽष्टमेन्दौ विष्टौ[४] मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ। नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ प्रातः कार्या परीक्षा द्वितनुचरग्रहांशोदये शस्तलग्ने॥" इति ॥ ९७ ॥

अधीति—वर्णादीत्यर्थः । तथोक्तिस्वारस्यादाह—मात्रमिति । मात्रार्थं विशदयति—जातीति । एवमग्रेऽपि । ब्राह्मणीत्वादिर्जातिः ; वर्षादिर्वयः; तत्कृता एवावस्थाः बाल्यादयः । नेत्रेति-लोकप्रसिद्ध्यनुरोधेनेदम् । महाभियोगेषु सावष्टंभेषु प्रागुक्तवाक्येभ्यः सर्वेषां प्राप्तावाह—तुलैवेतीति। तृतीयपादार्धं व्याचष्टे—अग्निरिति । पूर्ववत् अनियमेन

१. थ. त्यनुष्ठानक्ष । द. त्यनुपात्तक्ष । २. प. च शुक्रेस्तं । फ. च शक्रेऽस्तं । ३. प. विवादश्च । ४. फ. मार्गे । ५. फ. स्त्रीमा ।

फालस्तप्तमापश्च क्षत्रियस्य, जलमेव वैश्यस्य। वा शब्दोऽवधारणे। विषस्य यव उक्तपरिमाणाः सप्तैव शूद्रस्य शोधनार्थं भवन्ति। ब्राह्मणस्य तुलाविधानात् शूद्रस्य "यवाः सप्त विषस्य वा" इति विषविधानादग्निर्जलं वेति क्षत्रियवैश्यविषययुक्तम्। एतदेव स्पष्टीकृतं पितामहेन—"ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्॥" इति। यत्तु स्त्र्यादीनां दिव्याभावस्मरणम्—"सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम्। स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः॥" इति, तत् "रुच्या वाऽन्यतरः कुर्यात्"इति विकल्पनिवृत्त्यर्थम्। 5

## सुबोधिनी

विकल्पोऽस्तु किमित्येषां क्षत्रियवैश्यविषयताऽऽश्रीयत इत्यत आह–ब्राह्मणस्य तुलाविधानाच्छूद्रस्य यवा इति। ननु भवतु स्त्र्यादिगणस्य तदतिरिक्तानामन्येषां च मिथोऽभियोक्तृत्वेऽ

## बालंभट्टी

एवासंबन्धात् स्मृत्यन्तरैर्विरोधाच्चेदमुपलक्षणमित्याह—फाल इति। तु अवशिष्टार्थमाह—जलमिति। ननु जलं वैश्यस्य जलमेवेति कथमर्थोऽत आह — वाशब्द इति,— "वास्याद्विकल्पोपमयोरेवार्थे च समुच्चये।" इति कोशात्। एतस्याग्रेऽप्यन्वयो बोध्यः। अत एव सप्तैवेत्युक्तिरग्रे। अवशिष्टं व्याचष्टे—विषयस्येति। उक्तेति,—पूर्वाध्यायान्त इति भावः। नन्वग्निजलविषाणां श्रौतः शूद्र एव विकल्पोऽस्तु; किमित्यश्रौतक्षत्रवैश्यविषयतास्वीकारोऽत आह— ब्राह्मणस्येति। युक्तमिति परिशेषात्। अन्यथा न्यूनतापत्तेरेकस्य वा शब्दस्याऽऽधिक्यात् स्मृत्यन्तरानुरोधाच्चेति भावः। एतेन विषयस्य चेति क्वाचित्कः पाठस्त्वयुक्तः। तदेवाह—एतदेवेति। दापयेत्—नृप इति शेषः। नारदेऽप्येवं बोध्यम्—तेषां तत्समत्वस्योक्तत्वात्। विरोधं परिहरति—यत्त्विति। नारदमाह—सव्रेति। भृशेति,—अतिशयिताधिग्रस्तानामित्यर्थः। कृशार्तानामिति पाठस्तु कल्पतरौ स्थितो न युक्तः—पौनरुक्त्यापत्तेः। अपेक्षित इति—अपेक्षितो यदि अवेक्षितो यदीत्यर्थः। इतीति—इति पक्षप्राप्तेत्यर्थः।

१. ज. कालः। २. द. त्यनुपात्तक्ष०। थ. त्यनुष्ठानक्ष (?) ३. फ. रानुरो०। ४. प. फ. णादिस्त्र्यन्य०। ५. प. फ. ठः प्रयु०। ६. प. फ. अपेक्षित इति द्विः अवेक्ष्यत इति त्रिः अपे०। ७. प. फ. प्राप्तदिव्येत्य०।

एतदुक्तं भवति, — अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यमेतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम् । परस्पराभियोगे तु विकल्प एव। तत्रापि तुलैवेत्यनेन वचनेन नियम्यते । तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति । एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्व-

## सुबोधिनी

भियोज्यत्वे वा स्त्र्यादिव्यतिरिक्तानामेव दिव्यं; मास्तु "रुच्या वाऽन्यतरः" इति विकल्पः। स्त्र्यादीनामेवान्योन्याभियोगे कथमित्यत आह—परस्पराभियोगे त्विति । ननुच दिव्य-कर्तृविकल्पवत् दिव्यविकल्पोऽप्यस्त्वित्याशङ्क्य भवेन्न्यायतः, अपि तु "स्त्रीबालवृद्ध" इत्यादियोगीश्वरवचनेन तुलाया नियम इत्याह—तत्रापि तुलैवेति । किमयं सावष्टम्भाभि-योगेष्वेव तुलानियम इत्याशङ्क्य नेत्याह—तथा महापातकादीति। अत्र तथेति स्त्र्यादी-नां तुलानियमसाम्याभिप्रायस्तथाशब्दो न सर्वसाम्याभिप्रायेण—शङ्काभियोगे सर्वथा साव-ष्टम्भाभियोगसाम्याभावात् । ननु किमयं तुलानियमः स्त्रीणां सार्वकालिक इत्याशङ्क्य नेत्याह —एतच्च वचनमित्यादिना,—एतच्च "स्त्रीबाले"इत्यादियोगीश्वरवचनमित्यर्थः।उक्तं प्रमेय-

## बालंभट्टी

ननु कथमनेन तन्निवृत्तिरत आह—एतदिति । स्त्र्यादीनामिति,—पूर्वन्याये अन्यैस्सह इति शेषः । तत्र वैपरीत्येऽप्याह—एतेषामिति,—स्त्र्यादीनामित्यर्थः । ननु स्त्र्यादीना-मन्यैस्सहाभियोगे पक्षद्वयेऽपि तदन्येषामेव दिव्यमित्यस्तु; तथाऽपि तेषां मिथोऽभियोगे कथमत आह—परस्परेति । विकल्प इति—ऐच्छिकविकल्प इत्यर्थः । ननु दिव्यकर्तृक-विकल्पवद्दिव्यविकल्पोऽप्यस्तु इति चेन्न—तस्य न्यायतः प्राप्तत्वेऽपि "तुलास्त्री"इति वाक्येन नियामकेन बाधात् । तत्रापीति—दिव्यानां मध्येऽपीत्यर्थः । अनेन—तुलास्त्रीति मूलवच-नेन । नायं नियमः सावष्टंभाभियोग एव ; किन्त्वन्यत्रापीत्याह—तथेति,—अयं समुच्चये न सादृश्ये । तच्छङ्काभियोगे सर्वथा सावष्टंभाभियोगसाम्याभावात् तुलानियमसाम्य-स्यान्वायको वा तथाशब्दः । नियम्यते इत्यस्यानुषङ्गः । नन्वेवं तुलानियमस्य स्त्रीणां सार्वकालिकत्वापत्तिस्तस्याप्यनेन बाधादत आह—एतच्चेति,—स्त्रीबालवृद्धेत्यादिमूलवाक्य-मित्यर्थः। अर्थवत् इत्यत्रान्वयः । मासक्रमस्य विवक्षितत्वादाह—मार्गेति । अयमका-

१. क. एतदेव । २. त. स्तु वा रुच्यान्य० । ३. त. ल्पोस्त्वि० । ४. त. थ. 'अत्र' इत्यादि 'ननु' इत्यन्तं नास्ति ५. प. कल्पनस्तथाऽपि । फ. अन्यतरविकल्पस्त्वथाऽपि । ६. प. ल्पस्तथाऽपीत्यर्थः । ७. फ. ततः श०।

दिव्यसमवधाने नियामकतयाऽर्थवत् । न च सार्वकालं स्त्रीणां तुलैवेति—"स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् । धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥" इति विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिविधानात् । एवं बालादिष्वपि योजनीयम् ; यथा ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः —"सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते । सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना ॥" इति पितामहवचनात् । तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम् ; कालान्तरे तु तत्तत्कालविहितं सर्वेषाम् । तथा हि । वर्षास्वग्निरेव सर्वेषाम् ; हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः ; ब्रा- 5

## सुबोधिनी

मुपसंहरति —तस्मात् साधारणेकाल इति । नियमार्थमिदं वचनमिति,— इदमिति "स्त्रीबालो"इत्यादियोगीश्वरवचन पूर्वविधिप्रतिषेधमुखेन "अग्नेः शिशिरहेमन्तौ" इत्यादि भिर्वचनैः शिशिरादिकालान्तराणि दर्शितानि । तत्र प्रयोजनं तु वक्ष्यत इत्युक्तम्। तदिदानीं दर्शयति—कालान्तरे तु तत्कालविहितमित्यादिना । उक्तं प्रयोजनमुपसंहरति—

## बालंभट्टी

रान्तङ्शब्दः । अर्थवत्—सफलम् । संभावितमन्यथा सार्थक्यं निराचष्टे—न चेति,—न त्वित्यर्थः । तुलैवेतीति,—नियेत्यादेरनुषङ्गः । नारदमाह—स्त्रीणान्त्विति ।" क्लीबान्नरान् सत्त्वहीनान् पतितांश्चार्दितान्तरान् । बालवृद्धातुरां स्त्रींश्च परीक्षेत धटे सदा ॥" इत्यस्य पूर्वपद्यम् । अतः—यतो निषेधस्तयोरत इत्यर्थः। अन्तस्तत्त्वमिति पाठे आन्तरं वास्तवमित्यथः । आदिसङ्ग्राह्यमाह—अग्न्यादिभिरिति । आदिना तण्डुलादि । वर्णविषये विशेषमाह—तथेति । उक्तं सर्वमुपसंहरति स्पष्टार्थं—तस्मादिति,—चैत्रादिमासत्रये इत्यर्थः। बहुदिव्येति—अग्न्यादीत्यादिः । इदं वचनमिति—स्त्रीबालेत्यादिमूलवाक्यमित्यर्थः । एवव्यवच्छेद्यं दर्शयन् प्रयोजनन्तु वक्ष्यत इति प्रागुक्तं प्रयोजनं दर्शयति—कालान्तरे-

१. ख च । २. णेका० मूलपाठः । ३. मेवेदं व० मूलपाठः । ४. प. वास्तत्वमि० । फ. वस्तुतत्वमि० ।

ह्मणस्य त्वग्निरेव न कदाचिद्विषम्—"ब्राह्मणस्य विषं विना" इति प्रतिषेधात्; ग्रीष्मशरदोस्तु सलिलमेव। येषां तु व्याधिविशेषेण अग्न्यादिनिषेधः—"कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतां नित्य विषं तु परिवर्जयेत ॥" इति, तेषामग्न्यादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति। तथा "तोयमग्निर्विषं चैव दातव्यं
5 बलिनां नृणाम्।" इति वचनाद्दुर्बलानामपि सर्वथा विधिप्रतिषेधादृतकालानतिक्रमेण जातिवयोवस्थाश्रितानि दिव्यानि देयानि ॥ ९८ ॥

"महाभियोगेष्वेतानि" इत्युक्तम्; तत्राभियोगस्य यदपेक्ष्यं महत्त्वं तदिदानीमाह—

**नासहस्राद्धरेत्फालं[2] न विषं न तुलां तथा।**

पणसहस्रादर्वाक् फालं विषं तुलां[3] न कारयेत्। मध्यवर्ति जलमपि;

दिव्येच्छाविकल्पः; स्मृत्यंतरात्तु देशकालादिव्यवस्थाप्रपञ्चकल्पना ॥ ९८ ॥

## सुबोधिनी

सर्वथापि विधिप्रतिषेधादृतुकालानतिक्रमेणेति ॥ ९८ ॥

मध्यवर्ति जलमपीति—"तुलाग्न्यापो विषं कोशः" इत्यत्र तुलाविषयोर्मध्ये जलस्य

## बालंभट्टी

त्वित्यादि। सलिलमेवेति,—सर्वेषामिति भावः। अयञ्च कालविशेषेऽग्न्यादिनियमः कुष्ठाद्यनुपेतविषय इति विशेषान्तरमाह—येषान्त्विति। अपिना साधारणकालसमुच्चयः। वर्णाद्याशयेनाऽऽह—तुलाद्येवेति। किञ्च बलविषयक इत्याह—तथेति। लानामपीति—अग्न्यादीत्यादेरनुषङ्गः। उक्तप्रयोजनमुपसंहरन्ति—सर्वथाऽपीति,—विधिप्रतिषधादृतुकालानतिक्रमेणेति पाठः ॥ ९८ ॥

व्यवहितसङ्गतिमाह—महेति। महाभियोगेषु पञ्चसु उपपत्तये आह—अर्वागिति। हरेदित्यस्यान्तर्भावितण्यर्थतया लक्ष्यार्थमाह—कारेति। न्यूनतानिरासायाऽऽह—मध्येति। अग्नेस्तु फालत्वेनैव ग्रहणसंभवस्योक्तत्वादाह—जलमिति। "तुलाग्न्यापः" इत्यत्र

१. ख. ज. दृतुका०। घ. षधादुक्त०। ङ ज. षेधोक्त०। २. विश्व० पर। ३. तुलां वा न। ४. प. सराणिवि०।

यथोक्तम्—"तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेत् ।" इति। अत्र कोशस्याग्रहणम्—"कोशमल्पेऽपि दापयेत्" इत्यल्पाभियोगेऽपि तस्य स्मरणात् । एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्ति नार्वागित्यर्थः । नन्वर्वागप्यग्न्यादीनि पितामहेन दर्शितानि—"सहस्रे तु घटं दद्यात्सहस्रार्धे तथाऽऽयसम्। अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम्॥" इति । सत्यम् । तत्रेत्थं व्यवस्था—'यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनम्. इतरद्रव्यविषयं योगीश्वरवचनम्' इति । एतच्च वचनद्वयं स्तेयसाहसविषयम् । अपह्नवे तु विशेषो दर्शितः कात्यायनेन— 5

## सुबोधिनी

स्थितत्वात् मध्यवर्तित्वमित्यर्थः । अत्र कोशस्याग्रहणमिति,—अत्र-"नासहस्राद्धरेत् फालम्" इत्यस्मिन् वचन इत्यर्थः । एतानि चत्वारि दिव्यानीति, —तुलाग्न्यापोविषाणीति भावः । एतच्च वचनद्वयमिति—"नासहस्रात्" इति योगीश्वर वचनमेकम् ; अपरन्तु "सहस्रे तु घटम्" इति पितामहवचनमिति द्रष्टव्यम् । शेषं सुबोधम् ॥ ९९ ॥

## बालंभट्टी

तुलाविषयोर्मध्ये स्थितत्वात् तस्य । यथोक्तमिति,—पितामहेनैवेति भावः । अत्र—नासहस्रादित्यत्र । अग्रेति—न ग्रहणमित्यर्थः । अल्पेऽपीति,—तथा च एतेषां "गुरुष्वेव" इत्यादिनियमात् तस्य अल्पसाधारण्यात् वैलक्षण्येनाग्रहणमिति भावः। तमेव नियमं फलितमाह—एतानि चत्वारीति,—तुलाग्निजलविषाणीत्यर्थः। संज्ञायाः प्रागुक्तत्वादाह—पणेति। सहस्रादिति ,—अभिव्याप्तौ आङ्योगे पञ्चमी,—तमभिव्याप्येत्यर्थः । तत्राग्रिमनिरास एव "अर्वाक्" इतिश्लोकव्याख्याने उक्तः; तथा च व्युत्क्रमस्सूचितः। तदाह—सहस्रादूर्ध्वमेवेति । नार्वागिति—तदूर्ध्वत एव नार्वागपीत्यर्थः । अत एव सहस्रैरपि नेन्याशयेनाऽऽह—नन्विति । आयसम्—फालम् । तत्र—विरोधे सति । यद्द्रव्येति—सुवर्णेत्यर्थः। तथा सति फलितं विशेषणमाह—एतच्चेति,-"नासहस्रात्" इति मौलं,"सहस्रे तु" इति पैतामहञ्चेत्यर्थः । स्तेयेति—स्तेयसाहसोभयेत्यर्थः । ननु कल्पतरुणा "नासहस्रात्" इति वाक्यं पणसहस्रादूर्ध्वं तेनैवापह्नवे फालादिक्रियेत्येवमपह्नवविषयतया व्याख्यातमिति तथैव कुतो नोक्तमिति चेत्? न—उपास्थितपूर्वोक्तसङ्गतिसंभवेऽनुपस्थितपरतया व्याख्यानस्यानौचित्यात् । तथा च स विषयो मूलेनोक्त एव । तदेतत् ध्वनयन्नाह — अपह्नवे-

१. फ. यथोक्तमिति नास्ति । २. प. फ. तदेकवाक्यतापत्तेः अग्रेति। ३ प. फ. असाधा०। ४. फ. यमफालि० । ५. प. फ. शेषव्या० । ६. प. स्यानौचि० ।

"दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् । स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥ सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् । हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥ ज्ञात्वा सङ्ख्यां सुवर्णानां शतनाशे विषं स्मृतम् । अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥ षष्ठ्या नाशे जलं देयं चत्वारिंशति वै धटम् । विंशद्दशविनाशे तु कोशपानं विधीयते ॥ पञ्चाधिकस्य वा नाशे ततोऽर्धार्धस्य तण्डुलाः । ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान् ॥ ततोऽर्धार्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः । एवं विचारयन्राजा धर्मार्थाभ्यां न हीयते ॥" इति । "ज्ञात्वा सङ्ख्यां सुवर्णानाम्" इत्यत्र सुवर्णशब्दः 'षोडशमाषाः सुवर्णः' इत्युक्तपरिमाणवचनः; नाशशब्दश्चात्रापह्नववचनः; "नासहस्राद्धरेत्फालम्" इत्यत्र तुताम्रिकपणसहस्रं बोद्धव्यम् ॥९८॥

**बालंभट्टी**

त्विति। प्रमाणम्—अपह्नुतद्रव्यानुसारेण दिव्यानि । स्तेयेति,—अत्र साहसपदं ब्राह्मणवासिष्ठन्यायेन स्तेयान्यसाहसपरम् । स्वल्पेऽप्यर्थे इत्यपिना महतः समुच्चयः; तत्प्रकारमेवाऽऽह—सर्वेति। युक्तं—तत्संबद्धं तत्तुल्यमिति यावत् । ज्ञात्वा सङ्ख्यामिति पूर्वान्वयि । सङ्ख्याम्—प्रमाणम् । सुवर्णानामित्यस्य मध्यमणिन्यायेन अन्वयः । चत्वारिंशतीति—तत्सङ्ख्याकेषु सुवर्णेषु । अपह्नुतेष्वित्यर्थः । विंशतिः प्रमाणमस्येति विंशत् तच्च दश च । तेषां विनाशे इत्यर्थः। विंशद्दशकेति पाठान्तरम्,—विंशद्दशेत्यर्थः। पञ्चार्धकस्येति पाठः; पञ्चैवार्धं स्वार्थे ठक् तस्येत्यर्थः । पूर्वान्वयी वाशब्दः—स्वारस्यात्। तदर्धेत्यत्र तच्छब्देन दश परामृश्यन्ते इत्यनेन पूर्वोक्तं तदर्धार्धम् । लौकिक्यः—लोकभवा अन्ये शपथादयः । विचारयन्—तत्पूर्वकं कुर्वन्नित्यर्थः। कल्पतरौ तु पाठान्तरं प्रयोजयेत् इति "शते विषन्तु पादोने हुतभुक्तत्र दृश्यते । आपस्त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥ कोशपानं तदर्धे तु दशपञ्चकसप्तसु । तदर्धे तण्डुला देयाः तदर्धे तप्तमाषकः ॥" इति । शते सुवर्णस्येति शेषः । वृद्धकाशः "ज्ञात्वा सङ्ख्यां सुवर्णस्य शतनाशे विषं स्मृतम्। अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनम् ॥ षष्ट्या नाशे जलं ज्ञेयं स्याच्चत्वारिंशतो धटम् । विंशद्दशविनाशे तु कोशपानं बृहस्पतिः ॥ पञ्चार्धकस्य वा नाशे तदर्धस्य च तण्डुलाः ।" इति । पञ्चार्धकस्य पञ्चार्धं सार्धद्वयम् । महत्त्वसम्पत्तय आह—ज्ञात्वेति,—तत्पदस्वारस्यात् । नन्वत्र नाशपदोक्तया कथमस्यापह्नवविषयत्वमित्यत आह—नाशेति । मिथोऽनयोः विरोधं परिहरति—नासहस्रादिति,— सामान्यपरिभाषासंभवात्; अन्योऽपि विशेषः

१. ग. ज. प्रदापयेत् । २. ख. दद्यादेव। ३. स्तकम् । ४ आ० ३६३. । ५. आ० ३६४ । ६. प. 'शते' इति नास्ति । ७. फ. वा । ८. प. फ. इति । मह० ।

ननु नृपद्रोहे पातके चैतानि दिव्यान्युक्तानि ; तत्कथं नासहस्राद्धरेत्कालमित्यत्राऽऽह—

**नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥**

नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसङ्ख्यामनपेक्ष्यैवैतानि दिव्यानि कुर्युरुपवासादिना शुचयः सन्तः । तथा देशविशेषोऽपि नारदेनोक्तः—" सभाराज-

बालंभट्टी

कात्यायनेनोक्तः — " देशकालाविरोधे तु यथायुक्तं प्रकल्पयेत् । अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥ " इति । हारयेत्—कारयेत् । विपर्यये—दिव्यकारिणोऽभियुक्तस्यासामर्थ्ये। "कालदिव्यविरोधे तु यथायुक्तं विरोधयेत् । अन्येन हारयेद्दिव्यं विधिरेष विपर्यये॥"इति तु कल्पतरौ पाठः।अत एव महापातकिनामन्यद्वारा दिव्यमाह स एव—" मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् । महापातकयुक्तानां नास्तिकानां विशेषतः ॥ लिङ्गिनामसवानां तु मन्त्रयोगक्रियाविदाम् । वर्णसङ्करजातीनां पापाभ्यासप्रवर्तिनाम् ॥ एतेष्वेवाभियोगेषु नित्येष्वेव प्रयत्नतः । दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥ एतैरपि नियुक्तानां साधूनां दिव्यमर्हति। नेच्छान्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरः॥"इति । तथा च दिव्यकारिणोऽशक्त्या प्रतिनिधिर्विपर्यये इत्यन्तेनोक्तः।अन्येन हारयेत् प्रतिनिधिना कारयेत् "मातापितृ"इत्यादिना पूर्वं पित्रादिघातादिमहापातकं तेन कृतमिति निश्चये कालान्तरे चार्थान्तरसन्देहेऽपि प्रतिनिधिद्वारैव दिव्यमुक्तम्। वृद्धस्त्रीबालेति पाठान्तरम् , प्रमदानां चेति। तथा न सन्तीति तत्र शोध्याः स्वकैर्नराः इति । तथा स्वकैः--आप्तैः ॥९८॥

नृपार्थेष्वित्यस्य नृपः अर्थः—विषयः येषां द्रोहाणां तेष्वित्यर्थः । तदाह—नृपद्रोहेष्विति। अभिशापे चेत्यस्य वास्तवे तत्रेत्यर्थः। तदाह–महेति। सदेति व्याचष्टे —द्रव्येति। प्रक्रान्तत्वादाह —एतानीति । शुचित्वं तत्र निमित्तमित्याह—उपेति । आदिना स्नानादि परिग्रहः। विशेषमाह—तथेति ।सभा च, राजगृहद्वारं च, देवायतनं च चत्वरश्चेति समाहारद्वन्द्वः।व्यस्तपाठे तत्द्वन्द्वद्वयम्। कुलं—गृहः।चत्वरः चतुष्पथः।साकाङ्क्षत्वात् प्रकृतमाह—

१, विश्व०. योगे । २. फ. विवर्जयेत् । ३. फ. तक्यादौ० । ४. फ. मशवां० । ५. ठे तु त० ।

कुलद्वारे देवायतनचत्वरे । निधेयो निश्चलः पूज्यो धूपमाल्यानुलेपनैः ॥" इति । निधेयो धटः । व्यवस्था च कात्यायनेनोक्ता—"इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् । नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे । अतोऽन्येषु[1] तु कार्येषु सभामध्ये विदुर्बुधाः ॥ अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् । प्रातिलोम्यप्रसूतानां निश्चयो[2] न तु राजनि ॥ तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ।" इति ॥ ९९ ॥ इति दिव्यमातृका ॥

एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानी धटादिदिव्याना प्रयोगमाह—

## बालंभट्टी

धट इति।च स्त्वर्थे। उक्तदेशानामिति भावः।'इन्द्रस्थानमिन्द्रप्रतिमा यत्र तत्रेत्यर्थः'इति केचित्;इन्द्रध्वजयूथस्थानमिति कप्पतरुः;इन्द्रध्वजपूजास्थानमित्यन्ये।[3]इन्द्रस्य पेवस्य(?)स्थानं तत्रेति वयम्। अभी त्यस्यैव व्याख्या—महेति। च स्त्वर्थे तथा पाठ एव वा। दिव्यमित्यस्यानुषङ्गः।विषयसप्तमी[4]। देशव्यवस्थामुक्त्वा दिव्यव्यवस्थामाह—अस्पृश्येति । अस्पृश्याश्चण्डालादयः; अधमाः शूद्रादयः। न तु— न हि । तत्प्रासिद्धानि—[5]धटादीनि। नारदः—"नाऽऽर्तानां तोयशुद्धिस्स्यान्न विषं पित्तरोगिणाम्।श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते॥ नमज्जनीयास्स्त्रीबाला धर्मशास्त्रविचक्षणैः।रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥ निरुत्साहान् व्याधिक्लिष्टानार्त्तांस्तोये निमज्जयेत्। सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः॥ साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत्।न चापि हारयेदग्निं न विषेण विशोधयेत्[6]॥"विष्णुः-"न श्लेष्मिकव्याधितानां भीरूणां श्वासकासिनां । न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनां॥मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित्। तण्डुलैर्नैनियुञ्जीत व्रतिनं मुखरोगिणम् ॥" व्रती—पयोव्रतादिमान् । पितामहः—"मद्यपस्त्रीव्यसनिनां कितवानां तथैव च कोशः प्राज्ञैर्नदातव्यो ये च नास्तिकवृत्तयः ॥" नारदः—"महापराधे निर्धर्मकृतघ्न क्लीबकुत्सिते । नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत्[7] ॥" नारदबृहस्पतिकात्यायनाः—"यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः । आयथोक्तं प्रदत्तं च न दत्तं साध्वसाधने ॥ अदेशकालदत्तानि बहिर्वादिकृतानि च। व्यभिचारं सदार्थेषु कुर्वन्तीह न संशयः॥"वादिनमभियोक्ता बहिर्वादी । मातृकेति—परिभाषेत्यर्थः ॥ ९९ ॥ इति दिव्योपोद्धातः ॥

सङ्गतिमाह—एवमिति । मातृकां—तत्परिभाषाम् । तत्प्रयोगामिति । तावत्सर्वसा-

१. ख. सभामध्ये दिव्यन्देयं वि० । २. ग. योत्रतु । ३. फ. परेस्त्वस्य । ४. फ मीच ।
५. फ. घटसर्पादी० । ६—१. २५५, ३१३—५. । ७.—१. ३३२. ।

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः[1] ।
प्रतिमानसमीभूतो रेखां[2] कृत्वाऽवतारितः ॥ १०० ॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ १०१ ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।                5
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ १०२ ॥

तुलायाः धारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयः, तैः प्रतिमानेन मृदादिना समीभूतः समीकृतस्तुलामाश्रितोऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी रेखां कृत्वा येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेख्येनाङ्कयित्वाऽवतारितस्तुलामभिमन्त्रयेत् प्रार्थयेत अनेन मन्त्रेण— 10

अधिकृतश्च प्रागुक्तनियमवान् कृतस्वस्त्ययनमङ्गलः स्मृत्यन्तरोक्तलक्षणतुलां प्रत्युपस्थितः—तुलाधारणविद्वद्भिरित्यादि ॥ १०० ॥

वक्ष्यमाणं कर्म कुर्यादिति शेषः । अभियुक्तो व्यवहारेऽभिशस्तः स तुलामारूढः प्रतिमानसमत्वेन तुलाधारणविद्वद्भिः यदा लक्षितः तदा—'अस्यास्मिन् प्रदेशे इदमङ्कम्' इत्येवं चिह्नार्थं लेखं कृत्वा अवतारणीयः । तुलाधारणविद्वांसः स्वर्णकारादयः । प्रतिमानम् अपरभागस्थितशिक्यस्थ वा सुलोष्टपूर्णं विकटम् । स्पष्टमन्यत् ॥ १०० ॥

अवतीर्य चोदङ्मुखः स्थित्वा—त्वं तुले सत्यधामासीत्यादि ॥१०१॥

यद्यस्मिन् पापकृन्मातरित्यादि ॥ १०२ ॥

वालंभट्टी

धारणमित्यर्थः । यद्वा जातावेकवचनं प्रयोगावित्यर्थः । क्रमेणेत्यादिः,—ईदृशोऽवतारितः प्राड्विवाककृत्योत्तरम् इत्यनेन मन्त्रेण तुलामभिमन्त्रयेदि[3]त्यर्थ इत्याह—तुलाया इत्यादिना । तृतीयान्तस्य व्यवहितान्वय इत्याह—तैः प्रतीति । अन्तर्भावि[4]ण्यर्थत्वेनाऽऽह—समीकृत इति । इदमुक्तरीत्योपलक्षणमित्याह—अभियोक्ता वेति । तात्पर्यार्थमाह—दिव्येति । रेखामिति पाठान्तरम् किंचिच्चिह्नविशेषमित्यर्थः । तमेवाऽऽह—येनेति । पाण्ड्विति,—अपङ्कलेखेनेत्यर्थः। खडीति भाषाप्रसिद्धम् । अभि इत्यस्य व्याख्या—प्रार्थेति। इतीत्यस्यार्थमाह—अ-

१. क. तथाश्रितः । छ. तुलान्वितः २. विश्व० लेखं । ३. फ. न्वय इ० । ४. फ. वितण्यर्थ० ।

'हे तुले त्वं सत्यस्य स्थानमसि; पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्विनिर्मितोत्पादिता; तत्तस्मात्सत्यं सन्दिग्धस्यार्थस्य स्वरूपं[1] दर्शय ; कल्याणि शोभने अस्मात्संशयान्मां विमोचय; हे मातः यद्यहं पापकृदसत्यवाद्यस्मि, ततो मां त्वमधो नय ; अथ[2] शुद्धः सत्यवाद्यस्मि ततो मामूर्ध्वं गमय' इति । प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्राः[3]
5 स्मृत्यन्तरोक्ताः; अयं तु दिव्यकारिणः । जयपराजयलक्षणं तु मन्त्रालिङ्गादेवावगम्यते इति न पृथगुक्तम् ॥

घटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम् ; तद्यथा—" छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् । प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः॥ मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च। चतुरस्रा तुला कार्या

बालंभट्टी

नेन मन्त्रेणेति, — त्वमित्यादिना मामित्यन्तेन इत्यर्थः । तदर्थमाह — हे इत्यादि । धामार्थः स्थानमिति । तदित्यस्य व्याख्या—तस्मादिति । सत्यामि त्यस्यार्थः—सन्दिग्धेति । भाषणासम्भवादाह —दर्शयेति। प्रकृतत्वादाह—अस्मादिति । अस्मीत्युक्तेरध्याहारेण तस्य तदर्थाव्ययत्वेन वाऽऽह — अहमिति । प्राग्वदाह – असत्येति। एवमग्रेऽपि। निपातानामनेकार्थत्वाच्चेदर्थमाह-अथेति।मामस्मीत्युक्तिस्वारस्यादस्याप्रवृत्तेराह –प्राडिति,—धर्माधिकारिण इत्यर्थः। इदमनुपदमेव स्फुटीभविष्यति।न्यूनतां निराचष्टे-जयेति, —तयोः स्वरूपे इत्यर्थः । जातावेकवचनम् । लिङ्गमूर्द्ध्वगमनादिकम् । एतदर्थमेवाऽऽह — घटेत्यादिना । पुनस्त्वर्थे। आदिना व्याप्तादिपरिग्रहः । तत्राऽऽदौ पितामहमाह—छित्वा-त्वित्यादिना। यज्ञियं-खदिरम् । मन्त्रेति—"ओषधे त्रायस्वैनम्" इत्यादिमन्त्रपूर्वकमित्यर्थः। छेदनक्रियाविशेषणमिदम् । यूपवदित्यस्य तुलाकार्येत्यत्रान्वयः यूपवदित्यातिदेशसिद्धं मन्त्रवदित्युक्तमेवानुवदति—मन्त्र इति। "वानस्पत्यच्छेदने"इति समस्तम्। तच्छेदनकाले सोमदेवताः"सोमो धेनुं सोमो अर्वन्तम्"इत्यादिमन्त्रो जप्य एवेत्यर्थः। व्यस्तः पाठः। वानस्पत्यो मन्त्रः "वनस्पते शतवल्शो विरोह" इति अनयोर्जपमन्त्रत्वेनादृष्टार्थत्वात् समुच्चयः। चो भिन्नक्रमः। छेदने—तुलाकाष्ठच्छेदने। स स च जप्य एवेत्यर्थः इत्यन्ये। तुलास्वरूपमाह—चतुर-

---

१. क. ग- पं च दर्शय। ख. वद दर्शय । २. क. झ. यदि । ङ. अथो । ३, ख. मन्त्रः स्मृत्यन्तरोक्तः ।

दृढा ऊर्ध्वा तथैव च ॥ कटकानि च देयानि त्रिषु स्थानेषु चार्थवत् ॥ चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ ॥ अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा । हस्तद्वयं निखेयं तु पादयोरुभयोरपि ॥ तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि । धटा-दुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥ अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ । मृण्मयौ सूत्रसंबद्धौ धटमस्तकचुम्बिनौ ॥ प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटस्तथा । शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ॥ प्राङ्मुखान्कल्पयेद्दर्भान् शि-क्ययोरुभयोरपि । पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ॥ पिटकं पूरये- 5

बालंभट्टी

त्तेति । त्रिषु पार्श्वद्वये मध्ये च । तत्फलमाह —अर्थवदिति,—क्रियाविशेषणं चैतत् । यथा तुलायाः सामर्थ्यं भवेत् तथा देयानीत्यर्थः। यत्नत इति पाठान्तरम् । तत्प्रमाणमाह— चतुरिति । तत्समाविति—चतुर्हस्तौ पादौ कार्यावित्यर्थः । पादौ कार्यौ तथाविधाविति पाठान्तरम् । तयोः—पादयोः,अन्तरं—व्यवधानम् , हस्तौ —हस्तद्वयम्,—परिमितिर्भवे-दित्यर्थः । पक्षान्तरमाह—अध्यर्धमेव वेति,—सार्धहस्तं वेत्यर्थः। उपरीत्येतत्सूचितमेवा-ऽऽह—हस्तद्वयमिति,—उभयोरपि पादयोर्हस्तद्वयं हस्तचतुष्टयादवशिष्टं भूम्यन्तः प्रवे-शनीयमित्यर्थः । तोरणे चेति,—तथेत्यनेन हस्तद्वयान्तरालतोक्ता भूमेरुपरि समता समभागतारेस्मदतानिरपातस्तु(?)यथासंभवम् । अत एव विशेषमाह—धटादिति,—तथा च तुलायाः पार्श्वद्वये हस्तद्वयान्तरालं दक्षिणोत्तरयोस्स्तंभस्य द्वयं निखाय तयोरुपरि उत्तराग्रं काष्ठं देयं; तदेतत् तोरणमिति बोध्यम् । तस्य [4]फले तु कथयन् तच्चावश्यं धटाद्दशाङ्गुलोच्चमित्याह—धटादिति। अवलंबाविति-–तोरणाभ्यां संबद्धौ तदधः प्रदेशे लम्बमानौ अधोमुखौ मृण्मयौ तद्गोलकरूपौ सूत्रसंबद्धौ धटमस्तकचुम्बिनौ तुलाप्रांतद्वयो-परिभागस्पृशौ अवलम्बौ तत्संज्ञकौ कार्यावित्यर्थः । धटमस्तकचुम्बिताविति पाठान्तरे बहुव्रीहिः । सम्यग्ज्ञानार्थमेवावलम्बद्वयकरणम् एतत्फलमनुपदमेवाग्रे स्फुटीभविष्यति— स विज्ञेयः समो धट इति । तस्याम तदाधारदेश चाऽऽह— प्रागिति । कल्पयेत् — [5]स्थापयेत् । आस्तरणामिदम् । पश्चिमे शिक्ये । अन्यस्मिन् पूर्वे । शुभामिति — इष्टकाभस्मपाषाणकपालास्थिदुर्गन्धादिविवर्जितामित्यर्थ. । पिटकं —शिक्यम् । इष्टकेति,—चयनीयत्वेनाभ्यर्हितत्वात् पूर्वनिपातः । समुच्चये फला

१. 'च', 'ध एव च ' इति पाठान्तरे । २. क. घ. उच्चरते । ३. फ. णमेतत् । ४. फ. फलंकथ० । ५. फ. ' स्थापयेत् ' इति नास्ति ।

त्तस्मिन्निष्टकाग्रावपांसुभिः ।" अत्र च मृत्तिकेष्टकाग्रावपांसूनां विकल्पः । "परीक्षका नियोक्तव्यास्तुलामानविशारदाः ॥ वणिजो हेमकाराश्च कांस्यकारास्तथैव च । कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ॥ उदकं च प्रदातव्यं धटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥ तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु । धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥ तत आवाहयेद्देवान् विधिनाऽनेन मन्त्रवित् । वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ॥ प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् । एह्येहि भगवन्धर्म ह्यस्मिन् दिव्ये समाविश ॥ सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः । आवाह्य तु धटे धर्मं पश्चादङ्गानि विन्यसेत् ॥ इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा । वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥ अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् । इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥ कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः । तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥ ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् । इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः ॥ धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः ॥ देवेशेशानयोर्मध्ये आदित्यानां तथाऽयनम् । धाताऽर्यमा च मित्रश्च वरुणोंऽशैर्भगस्तथा ॥ इन्द्रो विवस्वान्पूषा

## बालंभट्टी

भावात्तुल्यार्थत्वाच्चाह— अत्र चेति । "मृत्तिकेत्येव सत्यम्" इति श्रुतेरुक्तक्रमादाह— मृत्तीति। परीक्षाप्रकारमाह — परीति,—पश्चादिति ।तस्मादिति पाठान्तरम् । पताकेति। पताकासहितध्वजशोभितमित्यर्थः। अल्पमहत्त्वकृतोऽनयोर्भेदः। एवमग्रेऽपि। परित इति भावः। मन्त्रवित् ,—धर्मविदिति पाठान्तरम्। तृतीयाद्वयमुपलक्षणे । अनुलेपनं स्नानचूर्णम्।अनेन विधिनेत्युक्तविधिमेवाऽऽह—एह्येहीति,—अनेन धर्मदेवतास्वरूपमपि कथितम् । अस्मिन् तुलाख्ये। वसवश्चाऽऽदित्याश्च मरुतश्च गणाश्चेति द्वन्द्वः।अङ्गानि लोकपालादीनि । तत्प्रकारमेवाऽऽह—इन्द्रमित्यादिना ।एतेषां ध्येयरूपाण्याह—इन्द्र इत्यादि । भागे इति,— पार्श्वे वसूनावाहयेदिति पाठान्तरम् । तेषां सङ्ख्यामाह—धर इति । देवेशः इन्द्रः तथाऽचैनं ; तथाऽयनमिति पठान्तरम् । प्राग्वदाह —धातेति। वरुणोंऽश इति पाठः अन्योऽ-

१. क. तारयेत् । २. क. धरध्वरः । ङ. धारोऽध्वरः । ३. ख. थागणम् । ४. ख. अंशुः ।

च पर्जन्यो दशमः स्मृतः । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥ इत्येते द्वा-
दशादित्या नामभिः परिकीर्तिताः । अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चाप-
राजितः ॥ भुवनाधीश्वरश्चैव कपाली च विशांपतिः । स्थाणुर्भवश्च भगवान् रुद्रा-
स्त्वेकादश स्मृताः ॥ प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत् । ब्राह्मी माहेश्वरी चैव 5
कौमारी वैष्णवी तथा ॥ वाराही चैव माहेन्द्री चामुण्डा गणसंयुता । निर्ऋतेरुत्तरे
भागे गणेशायतनं विदुः ॥ वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते । गगनः स्पर्श-
नो वायुरनिलो मारुतस्तथा ॥ प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ।
धटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः॥एतासां देवतानां तु स्वनाम्ना पूजनं विदुः। भूषा-
वसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ॥ अर्घादि पश्चादङ्गानां भूपान्तमुपकल्पयेत् । 10
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥" इति। अत्र च तुलां पताकाध्वजालङ्कृतां
विधाय तस्याम् "एह्येहि" इति मन्त्रेण धर्ममावाह्य 'धर्मायार्घं कल्पयामि नमः' इत्यादिना प्र-
योगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभू-
षान्तं दत्त्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैर्नमोन्तैरर्घ्यादिभूषान्तं
पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि दत्त्वा इन्द्रादीनां गन्धादीनि 15

### बालंबट्टी

पपाठः । अजघन्येत्यादिः क्रमादुभयविशेषणम् । गणपदार्थानाह—अग्नेरित्यादि । अयनं स्थापनम् । तानाह—वीरेति । अत्र महायशा इति गिरिशविशेषणम् । विशांपतिरिति। कपालिविशेषणम् "द्वौ विशौ वैश्यमनुजौ" इति कोशः । भगवानिति भवविशेषणम् । भग इति पाठान्तरम् । क्रमस्य विवक्षितत्वात् प्रेतेशस्य पूर्वनिपातः । मातृस्थानमिति समस्तपाठः । ता आह—ब्राह्मीत्यादि । गणसंयुतेति विशेषणं चामुण्डयाः; तथा च सह बोध्याः । गणेश एक एव । मरुतां—वायूनां । तानाह—गगन इति प्राणेशजीवा-वित्यार्षम् । समुच्चेयमाह—धटस्योत्तरेति। पूजाक्रममाह—भूषेति,—अर्घप्रभृत्यलंकारान्। तत्क्रमेण धर्माय प्रधानदेवतायै दत्त्वा पश्चादिन्द्रादीनां तथैव कुर्यादित्यर्थः । निवेद्यो नैवेद्यः । सर्वथोक्तक्रमेणेति भावः । अस्यार्थमाह—अत्र चेति, — तुलाख्यदिव्यविषये इत्यर्थः। पूजाक्रम इत्यत्रान्वयः। काण्डान्वँसमयस्याभावादाह—पदार्थेति,—तद्रीत्येत्यर्थः ।

१. 'च' इति क्वचित् । २. क. ख. घ. छ. अर्घ्यादि । ३. परिक० (पाठान्तरम्)। ४. 'च' इति क्वचिन्नास्ति । ५. ख. र्घ्यं । ६. फ. ण्डायाः । ७. फ. काण्डानुस ।

पूर्ववद्दद्यात्[1] ।गन्धपुष्पाणि च धटपूजायां रक्तानि कार्याणि ; यथाऽऽह नारदः—"रक्तै-र्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्चयेत्तु धटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥" इति । इन्द्रादीनां तु विशेषानभिधानाद्यथालाभं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः ॥

5 एतच्च सर्वं प्राड्विवाकः कुर्यात्; यथोक्तम्--"प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपा-रगः । श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः॥ सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः । उपोषितः शुद्धवासाः कृतदन्तानुधावनः ॥ सर्वासां देवतानां च पुजां कुर्या-द्यथाविधि।" तथा ऋत्विग्भिश्चतर्भिश्चतसृषु दिक्षु लौकिकोग्नौ[2] होमः कार्यः; यथाऽऽह—"चतुर्दिक्षु[3] तथा होमः कर्तव्यो वेदपारगैः । आज्येन हविषा चैव समिद्भिर्होमसाधनैः॥[4]

10 सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् । " प्रणवादिकां गायत्रीमुच्चार्य पुनः

बालंभट्टी

गन्धादौ विशेषमाह—गन्धेति । शिष्टान्—शेषभूतान् अङ्गानिति यावत् । अन्यैर्वा गन्धपुष्पैः । यथोक्तमिति,—नारदेनेति भावः । ततः तस्याः पताकाद्यलङ्कारवि-धानानन्तरं श्रुतं वेदशास्त्रे वृत्तमाचरणम्। सत्यसन्धःसत्यसङ्कल्पः।शुद्धवासाः आर्द्रवासा इति पाठान्तरम् । अन्यदप्याह—तथेति । यथाऽऽहेति,—पितामह इति शेषः । प्रतीति—चतुर्दिक्षु इति पाठान्तरम् । तथेति समुच्चये । कथं कार्यमित्याकाङ्क्षायां तत्र द्रव्याण्याह—आज्येनेति, सामिति । एतत्त्रितये एवसाधर्म्यं ध्वनयन्नाह—होमेति,—एतत्त्रि-तयरूपहोमसाधनैरित्यर्थः । उत्तरार्द्धेऽन्वयोऽस्य । मन्त्रमाह—सावित्र्येति । अथशब्द आनन्तर्ये । एवेन तदभावव्यवच्छेदः। प्रणवेनेत्यस्य मध्यमणिन्यायेनान्वयः । युक्तत्वं तृती-यार्थस्तदाह—प्रणवादीति । अथार्थः–पुनरिति—पश्चादित्यर्थः।स्वाहेति–वषट्कार इत्यनेन सामान्यार्थकत्वज्ञापकेनायं साधुः। प्रसिद्धत्वात् हविः शब्दार्थमाह—चरूनिति,—चर्वाज्य-समिध इत्युचितम् । अत्राऽऽज्यहविस्समिधां संप्रतिपन्नदेवताकत्वात् मिलितानामेव होमः साक्षाय्ययोरिवेति कश्चित् । तन्न । आज्ये "स्रुवेणावद्यति" इति स्रुवस्य चरोः "सकृदुपस्तृ-णाति" "मध्यात्पूर्वार्धाच्च हविषोऽवद्यति" "प्रत्यभिघार्य हविः" "अवत्तं च" " एषोऽ-वदानधर्मः"[5] इत्याश्वलायनादिसूत्रात् स्रुवः समित्सु असामर्थ्याद्धस्तस्यैव तत्वाद्भिन्नसाधनक त्वात्तन्त्रतानुपपत्तेः। साक्षाय्यहोमयोस्तु जुह्वा एव साधनत्वात्तन्त्रता युक्ता ।तदेतत् ध्वनय-

१. क. दत्त्वा । २. क. घ. छ. केऽग्नौ । ३. बालं. प्रतिदिक्षु । ४. आ० १. १०. १८.। ५. फ. द्विर्ह० ।

स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून्प्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः। एवं हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे लिखित्वा तत्पत्रं शोध्यशिरोगतं कुर्यात्; यथाऽऽह—"यं[2] चार्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके। मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम्॥" मन्त्रश्चायम्—"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च[3] जानाति नरस्य वृत्तम्॥" एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम्; यथोक्तम्—"इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्। आवाहनं च देवानां तथैव परिकल्पयेत्॥" इति। अनन्तरं प्राड्विवाको धटमामन्त्रयेत्[4]—"धटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्।" इति स्मरणात्। मन्त्राश्च दर्शिताः—"त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं[6] दुरात्मनाम्। धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम्॥ धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे। त्वं वेत्सि सर्वजन्तूनां पापानि सुकृतानि च॥ त्वमेव[7] देव जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति॥ तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि।" इति। शोध्यस्तु "त्वं तुले" इत्यादिना पूर्वोक्तेन मन्त्रेण तुलामामन्त्रयेत्[5]। अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्य यथास्थानं निवेश्य च धटमारोपयति—"पुनरारोपयेत्तस्मिन् स्थित्वाऽवस्थितपत्रकम्"। इति स्मरणात्। आरोपितं च विनाडीपञ्चकं यावत्तथैवावस्थापयेत्। तत्कालपरीक्षां च ज्योतिःशास्त्राभिज्ञः कुर्यात्—

## बालंभट्टी

न्नाह—प्रत्येकमिति। अन्यदाह—एवमिति। शोध्येति,—दिव्यकारिणः शिरसि बध्नीयादित्यर्थः। यथाऽऽहेति,—पितामह इति शेषः। यं चार्थमिति,—यदर्थकर्मकाभियोगविषयीकृतो दिव्यकारी स्यात् इत्यर्थः। पितामहोक्तमेव मन्त्रमाह—मन्त्रश्चेति। आदित्येति,—अभ्यर्हितत्वात् पूर्वनिपातः। यथोक्तमिति,—पितामहेनेति भावः। आदित्येत्यग्रिममिदं पद्यम्। चेनाग्रिमसर्वसमुच्चयः। पितामहमेवाऽऽह—धटमिति। दर्शिताः—तेनेव। धृतः शुचौ देशेऽवस्थापितःत्वं यस्मात् कुटिलं नरं भावयसे—प्रतिपादयसि तेनेत्याद्यन्वयः। तमेवाऽऽह—पुनरिति। विशेषमाह—आरोपितं चेति। तत्कालेति—

१. क. संशो०। २. ख. यथार्थम०। ३. ङ. र्मो हि। महाभारते आदि० ७४. २८.। ४. क. यते। ङ. येत। ५. क. येत। ङ. अभिम०। ६. क. क्षार्थम्। ७. प. ब. त्वमिति नास्ति।

"ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् । विनाड्यः पञ्च विज्ञेयाः परीक्षाकाल-कोविदैः ॥" इति स्मरणात् । दशगुर्वक्षरोच्चारणकालः प्राणः ; षट्प्राणा विनाडी; उक्तं च—"दशगुरुवर्णः प्राणः षट् प्राणाः स्याद्विनाडिका तासाम् । षष्ट्या घटी घटीनां षष्ट्याऽहः खाग्निभिर्दिवसैः ॥ मासः" इति । तस्मिंश्च काले शुद्ध्यशुद्धि-
5 परीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः । ते च शुद्ध्यशुद्धी कथयन्ति । यथोक्तं पितामहेन – "साक्षिणां ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः । ज्ञानिनः शुचयोऽलुब्धाः नियोक्तव्या नृपेण तु ॥ शंसन्ति साक्षिणस्सर्वे शुद्ध्यशुद्धी नृपे तदा ।" इति । शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम् — "तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नरः॥" इति। यत्तु पितामहवचनम्—
10 "अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते ।" इति तत्र यद्यभियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते, तथाऽपि सकृदमतिपूर्वत्वेनाल्पत्वमसकृन्म-

## सुबोधिनी

अथ घटाकृतिर्लिख्यते इति । घटाकृतिः घटप्रकरण एव । षष्ट्याहः खाग्निभिर्दि-नैर्मास इति । अत्र खशब्देन शून्यमभिधीयते । अग्निशब्देन च त्रित्वसङ्ख्या, ततश्चैवं रूपोऽङ्कः सम्पद्यते—३० ॥ १०० ॥ १०१ ॥ १०२ ॥

## बालंभट्टी

विनाडीपञ्चकेत्यर्थः । तमेवाऽऽह—ज्योतिरिति,—ज्योतिश्शास्त्रविदो ये ब्राह्मणास्तेषु श्रेष्ठ इत्यर्थः । पदत्रयमित्यन्ये । परीक्षाकालेति—कालस्य परीक्षा परीक्षाकालः राजदन्तादिः; तत्र कोविदैरित्यर्थः । परीक्ष्याः कालेति पाठान्तरम्—तैः परीक्ष्याः सत्य एव विज्ञेया नान्यथेत्यर्थः । तत्र दशेति,— तथा च विनाडीपञ्चकमुच्यते । अहः खाग्निभिरिति—अहः अहोरात्रं; त्रिंशतेति पाठान्तरम् । तस्मिन्निति—विनाडीपञ्चकरूपेत्यर्थः । अलुब्धा इति छेदः । नृपे इति विषयसप्तमी । नृप इति पाठान्तरम् । चोक्तमिति,—नारदेनेति शेषः। स शुद्ध इति,—विशुद्ध इति पाठान्तरम्। अत्र वृद्धिरूर्ध्वगतिः हानिर्धोगतिः, अतो न पूर्वविरोधः । अत एवान्यविरोध परिहरति—यत्त्विति । न दिव्येनेति,–

१. ग.ङ. "षष्ट्याहोरात्र उक्तश्च । त्रिंशद्भिर्दिवसर्मासः" इति । ख. छ. "खाग्निभिर्दिवसैर्मासः" इति । २. ख. श्रेष्ठाः । ३. ख. सशु० । ४. ना०—१. २८३. । ५. इदं मूले नास्ति

तिपूर्वत्वेन च महत्त्वमिति दण्डप्रायश्चित्ताल्पत्वमहत्त्वमवधार्यते । यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्ष्यादीनां छेदो भङ्गो वा भवति, तदाऽप्यशुद्धिरेव—"कक्ष्यच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत्॥" इति स्मरणात् । कक्ष्यं शिक्यतलम् । कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलकौ कर्कटशृङ्गसन्निभौ । अक्षः पादस्तम्भयोरुपरि निविष्टस्तुलाधारपट्टः । यदा तु दृश्यमानकारणक एषां भङ्गः, तदा पुनरारोपयेत्—"शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरम्।" इति स्मरणात् । ततश्च "ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च तोषयेत् । एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ॥ महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ।" यदा तूक्तलक्षणं धटं तथैव स्थापयितुमिच्छति, तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्यात्—" विशालामुच्छ्रितां शुभ्रां धटशालां तु कारयेत्। यत्रस्था नोपहन्येत श्वभिश्चाण्डालवायसैः ॥ तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत् । त्रिसन्ध्यं पूजयेच्चैनान् गन्धमाल्यानुलेपनैः ॥ कपाटबीजसंयुक्तां परिचार-

बालंभट्टी

तथा नियमाभावात् । महत्वामिति,—इदं च शिरःस्थापितपत्रेणैवावगतमिति भावः । एवं चैतत्परं तत् न तत्परमिति विरोध इति भावः। विशेषमाह—यदा चेति । चः त्वर्थे । अनुपेति बहुव्रीहिः छेदादिविशेषणम् । तमेवाऽऽह—कक्ष्येति । अस्पष्टत्वादिना भेदानाह—कक्ष्यमिति। धटस्य कर्कटाविति समासः। अन्यथा दोषापत्तेरित्याह-कर्कटाविति।तुलान्तयोः,—संबद्धौ। वैलक्षण्यादाह—यदा त्विति। तमेवाऽऽह—शिक्यादीति,—अत एव शिक्यमिति व्याख्यातम् ; व्यक्त्यभिप्रायं बहुवचनम्; अन्यथाऽनयोर्मिथो विरोधः स्पष्ट एवेति भावः । व्यासोऽपि—"कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा । रज्जुच्छेदेऽक्षभङ्गे च दद्याच्छुद्धिं पुनर्नृपः ॥" इति । कात्यायनोऽपि " शिक्यच्छेदे तुलाभङ्गे तथा वाऽपि गुणस्य वा । शुद्धेश्च संशये चैव परीक्षेत पुनर्नरम् ॥ " अनेन कारणन्तरमप्युक्तम् । आवृत्तिस्तोलनमात्रस्य न साङ्गप्रयोगस्येति प्राच्याः । एवं तु वैगुण्यापरिहारात् साङ्गप्रयोगः आवर्त्तनीय इति मदनः । तोलनमात्राद्यमेव मूलसम्मतम् । शेषं पितामहोक्त्यैव पूरयितुं वर्णिकामाह—ततश्चेति,--दिव्यकारीत्यर्थः । उपसंहरति—स एवामिति । ब्रह्मभूयाय—ब्रह्मत्वाय। इच्छति,—राजा । पितामहमाह-विशालामिति,--विस्तृतामित्यर्थः। उच्छ्रिताम्—उन्नताम् । यत्रस्थः,—धटः। तत्रैव शालायामेव। एतान्--लोकपालादीन् । कपाटबीजेति,—

१. क. काष्ठादीनां । ख. कक्षादीनां । २. ख. कक्ष० । ङ. ग. कक्षाच्छे० । छ. कक्ष्याच्छे० । ३. ख. वा । ४. ना.—१ २८४. । ५. ख. कक्षं । ६. क. धटः । ७. ख. न्नतां । ८. ख. ग सर्वान् । ९ ख. छ. तान् । १०. प. फ. ण्यपापापरि० । ११. फ. ङ्गः प्र० ।

करक्षिताम् । मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः ॥" इति स्मरणात् । बीजानि यवव्रीह्यादीनाम् । ॥ १०० ॥ १०१ ॥ १०२ ॥ इति धटविधिः ॥

इदानीं क्रमप्राप्तमग्निविधिमाह—

5 **करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।**
**सप्ताश्वत्थस्य पत्राणि तावत्सूत्राणि वेष्टयेत् ॥ १०३ ॥**

दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहानादिशिरःपत्रारोपणान्ते च विध्यन्ते सत्ययमग्निविधौ विशेषः—विमृदितव्रीहेः विमृदिताः विघर्षिताः व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रणाकिणा-
10 दिस्थानेष्वलक्तकरसादिनाऽङ्कयित्वा; यथाऽऽह नारदः "हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु।" इति । अनन्तरं सप्ताश्वत्थस्य पर्णानि हस्तयोरञ्जलीकृतयोर्न्यसेत्—"पत्रैरञ्जलि

स यदि तुलित ऊर्ध्वं गच्छेत्तदा शुद्धिः, अन्यथा तु विपर्ययः । यत्तु वा नारदीयम्—"तुलितो यदि वर्धेत विशुद्धस्स्यान्न संशयः। समो वा हीयमानो वा न वा शुद्धो भवेत्ततः॥" इत्यनया गत्या शुद्धिवचनं तत्तदुक्ताभिमन्त्रिणां विषयं द्रष्टव्यम् ॥ १०१ ॥ १०२ ॥

तप्तायः पिण्डधारणशास्त्रम्—**करौ विमृदितव्रीहेरित्यादि ॥ १०३ ॥**

कृतव्रीहिविमर्दनस्य तप्तलोहादाहस्पष्टीकरणार्थं हस्तौ कृतव्रणप्रदेशौ लेखाकरेण

बालंभट्टी

शाकपार्थिवादि ; कपाटेत्यत्रार्शाद्यच् । तेन तत्कर्मधारयो वा । परमततात्पर्यमाह—अशून्यामिति ॥ १०० ॥ १०१ ॥ १०२ ॥ इति घटविधिः ॥

सङ्गतिमाह—इदानीं क्रमेति,—उद्देशक्रमेत्यर्थः । अत्र प्रागुक्तं सर्वं सामान्यमपेक्षितमित्याह—दिव्येति । णान्ते च विधौ सतीति पाठः,—विधिः प्रकारः । पणान्त विध्यन्ते सत्ययमिति पाठान्तरम् । लक्षेत्यस्य व्याख्या—तिलकेति,—लक्षदर्शनाङ्कयोरिति धात्वर्थानुसारादाह—अङ्केति । अङ्कयित्वेति पाठान्तरम् । हंसपदानीति पाठः,—तदाकाराणि चिह्नानीत्यर्थः । ततः इत्यस्य व्याख्या—अन्तरमिति । पूर्वं द्विवचनस्यैव सत्त्वादाह—हस्तयोरिति । तत्र विशेषमाह—अञ्जलीति । नारदमेवाऽऽह—पत्रैरिति ।

१ क. ज. दीनि । २. ख. दिव्यमा० । ३. छ. ज. विध० । ४ —१. ३०१. ।

मापूर्य आश्वत्थैः सप्तभिः समैः ।" इति स्मरणात् । तानि च हस्तसाहितानि सूत्रेण तावद्वेष्टयेत् यावन्त्यश्वत्थपर्णानि—सप्तकृत्वो वेष्टयेदित्यर्थः ; सूत्राणि च सप्त शुक्लानि भवन्ति—"वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः ।" इति नारदवचनात् । तथा सप्त शमीपत्राणि सप्तैव दूर्वापत्राणि चाक्षतांश्च दध्यक्तानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत्—"सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् । दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत् ॥" इति स्मरणम् । कुसुमानि च विन्यसेत्—"सप्त पिप्पलपत्राणि अक्षतान्सुमनो दधि । हस्तयोर्निक्षिपेत्तत्र सूत्रेणाऽऽवेष्टनं तथा ॥" इति पितामह वचनात् । सुमनसः पुष्पाणि । यदपि स्मरणम्—"अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः । अन्तर्हितं रहःशुद्धमदग्धः सप्तमे पदे ॥" इति, तदप्यश्वत्थपत्राभावे अर्कपत्र विषयं वेदितव्यम्—अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात्,—"पिप्पला जायते वह्निः पिप्पलो वृक्षराट् स्मृतः । अतस्तस्य तु पत्राणि हस्तयोर्विन्यसेद्बुधः ॥" इति ॥१०३॥

लक्षयित्वा सप्ताश्वत्थस्य पत्राण्यन्तर्धाय हस्तयोराधाय सप्तकृत्वः सूत्रेण वेष्टयित्वा वक्ष्यमाणलोहपिण्डार्पणनिपुणं लोहकारं गृहीततप्तलोहमण्डलिकस्थितस्य समीपे प्राङ्मुखं कुर्यात् १०३ ॥

## बालंभट्टी

तावदिति क्रियाविशेषणमित्याह—तावदिति । तात्पर्यार्थमाह—सप्तेति । तावतां सूत्राणां समाहारः तावत्सूत्रम् ; तेन तावत्सूत्रेण । सप्तसूत्र्या सकृद्वेष्टयेदित्यर्थः इति मदनः । वेष्टनसङ्ख्यामुक्त्वा तथैव च स्पष्टार्थं सूत्रस्य सङ्ख्यां वर्णं चाऽऽह—सूत्राणि चेति,—वेष्टननिष्ठसङ्ख्यारोपेण सप्तसूत्राणि चेत्यर्थः । विशेषमाह—तथेति । नारदमेवाऽऽह—सप्तेति । अथ—समुच्चये । सप्तेत्यस्योभयत्रान्वयः । अक्षतानां स्पष्टं द्वैविध्यमुक्तमनेन ; अत एव दधि दध्यक्षतान् । तथा च पूर्वैकवाक्यता । आवेष्टित मित्यत्र भावे क्तः। आवेष्टनमिति पाठान्तरम्। सुमन इति जातावेकवचनमित्याह—पुष्पाणीति । पितामहविरोधं मूलस्य निराचष्टे—यदपीति । अतुल्यार्थत्वेन विकल्पो नेति सूचयन्नाह— अश्वत्थेति । पितामहस्येति,—पितामहकर्तृकतत्प्रशंसावचनेनेत्यर्थः । तदेवाऽऽह—पिप्पलादिति । ॥ १०३ ॥

१. ख. पर्णानि । २. वा । ३. क. झ. 'वि' नास्ति । ४. "सप्त पिप्पल......कुसुमानि च विन्यसेत् ।" इति च. छ. योर्नास्ति । ५. क. छ. ष्टितं । ६. फ. त्र पात्रादिः तेन• ।

कर्तुरग्न्यभिमन्त्रणमाह —

**त्वमग्ने सर्वभूतानामन्तश्चरसि पावक।**
**साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥१०४॥**

अग्ने त्वं सर्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जानामन्तः शरीराभ्यन्तरे चर-
5 सि उपयुक्तान्नपानादीनां पाचकत्वेन वर्तसे। पावक शुद्धिहेतो, कवे क्रान्तदर्शिन्,
साक्षिवत्पुण्यपापेभ्यः सत्यं ब्रूहि। पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी। पुण्यपापान्य-
वेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः। अयःपिण्डे त्रिभिस्तापैः तप्ते[1] सन्दंशेन पुरत आनीते
कर्ता पश्चिम[2]मण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेण अग्निम् अभिमन्त्रयेत्; यथाऽऽह नार-
दः—"अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम्। तापे तृतीये संताप्य ब्रूयात्सत्यपुरस्कृ-
10 तम्॥" इति[3]। अस्यार्थः— लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः
संताप्योदके निक्षिप्य तृतीये तापे संताप्य सन्दंशेन गृहीत्वा पुरत आनीते, सत्यपुर-
स्कृतं सत्यशब्दयुक्तं "त्वमग्ने सर्वभूतानाम्" इत्यादिमन्त्र कर्ता ब्रूयादिति।

इतरोऽपि प्रागुक्तनियमवानुदङ्मुखोऽयःपिंडमीक्षमाणः कृताञ्जलिर्ब्रूयात्— **त्वमेव सर्वभूतानामित्यादि ॥ १०४ ॥**

**बालंभट्टी**

कर्त्तुरिति-प्राड्विवाकस्य तु अग्रे वक्तव्यमिति भावः। ममे त्युक्तिरत्र बीजम्। सर्वपदोक्तेराह —जरेत्यादि। चरसीत्यस्य लक्ष्यार्थमाह— उपयुक्तेति,-भुक्तादीत्यर्थः। साभिप्रायाविशेषणद्व-यमित्याह—पावकेत्यादि। साक्षिवत्—साक्षिणो यथा कथयन्ति; अनेनास्याग्रे एवान्वयो न पूर्वत्रापीति सूचितम्। यथाश्रुते पञ्चम्याद्यनुपपत्तेराह—पुण्येति। साक्ष्यनुरोधेन तथो-क्तावपि प्रकृते तदर्थासम्भवादाह—दर्शयेत्यर्थ इति। ममेति,—शेषत्वविवक्षायां षष्ठी। विशेषमाह—अयःपिण्डे इति। तापैः क्रियारूपैः[4]। अनेन —प्रागुक्तेन। तात्पर्यं फलितमाह—लोहेति। तृतीय इति,— अधिकरणत्वविवक्षया सप्तमी सत्य-पुरस्कृतत्वमविवक्षितं; किन्तु तद्घटितत्वमात्रं विवक्षितमित्याह—सत्यशब्दयुक्तमिति। मन्त्रो विशेष्य इत्याह—त्वमिति। अत्र सुरञ्जितत्वम् अतिशयिततापकृतमेव; अत एव तस्य सस्फुलिङ्गत्वम्। सुरक्षितमिति पाठान्तरम्। "जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि। दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्॥" इति अग्निवर्णमित्यतः पूर्वपद्यम्। विशेषान्त-

१. ख. सन्तप्ते। २. क. पाश्चि०। ३.—१. २८८, २८९। ४. फ. तापत्रयफलमाह।

प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय 'अग्नये पावकाय स्वाहा' इति आज्येनाष्टोत्तरशतवारं जुहुयादग्नौ—"शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्।" इति स्मरणात्। हुत्वा च तस्मिन्नग्नावयः-पिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं पूर्वोक्तविधिं विधाय तृतीये तापे वर्तमाने अयःपिण्डस्थमग्निमेभिर्मन्त्रैरभिमन्त्रयेत्—"त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादि-नाम्॥ जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात्त-स्मात्पावक उच्यसे॥ पापेषु दर्शयात्मानमर्चिष्मान् भव पावक। अथवा शुद्धभावेषु शीतो भव हुताशन॥ त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानुषाः॥ व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशया-दस्माद्धर्मतस्त्रातुमर्हसि॥" इति॥ १०४॥

अपि च—

**तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम्।**
**अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि॥ १०५॥**

लोहकारोऽपि—

**तस्येत्युक्तवतो लोहमित्यादि॥ १०५॥**

बालंभट्टी

रमाह—प्राडिति। मण्डलेति,—यावति भूप्रदेशे मण्डलानि तत इत्यर्थः। नारदमेवाऽऽह—शान्त्यर्थमिति। तापत्रयमप्यत्रैवाग्नावित्याह— हुत्वा चेति। विधिमिति,—पूर्वोक्तप्रकारं कृत्वेत्यर्थः। सतिसप्तमी। उभयत्र विशेषणेन मुख्याग्निनिरासः। प्राड्विवाक एवात्र कर्ता—त्वाबलात्। नारदमेवाऽऽह—त्वमग्ने वेदा इत्यादि। त्वं मुखं ब्रह्मेति,— त्वयि होमेन देववत्तेषामपि तृप्तेरिति भावः। पापेषु पुरुषेषु। चरसि वर्त्तसे। साक्षिवत् अन्तर्यामिवत्। देवेति,—तानीति शेषः तत्स्थाने तत्पाठो वा॥ १०४॥

मूलकृदन्यदप्याहेत्याह — अपि चेति। सममित्यस्य व्याख्या—

१. ख. देवा०। २. क. त्वमग्ने। छ. त्वमग्ने। तानि। ३. ख. छ. ज. मानवाः। ४. वि. क्षिप्रं।

तस्य कर्तुरित्युक्तवतः "त्वमग्ने सर्वभूतानाम्" इत्याद्यभिमन्त्रणं कृतवतो लौहं लौहविकारं पिण्डं पञ्चाशत्पलिकं पञ्चाशत्पलसम्मितं सममस्त्ररहितम्, सर्वतश्च समं वृत्तं श्लक्ष्णं च तथाऽष्टाङ्गुलायामम्—"अस्त्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्। पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्॥" इति पितामहस्मरणात्; अग्निवर्णमग्निसदृशमुभयोर्हस्तयोरश्वत्थपत्रदाधिदूर्वाद्यन्तारितयोर्न्यसेत् निक्षिपेत्प्राड्विवाकः॥ १०५॥

ततः किं कुर्यादित्यत आह—

**स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।**

स पुरुषस्तप्तं लोहपिण्डं अञ्जलिना गृहीत्वा सप्त मण्डलानि शनैर्व्रजेत्। एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति; यथाऽऽह पितामहः—"न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम्।" इति॥ १०५-॥

सप्तैव मण्डलानि शनैर्व्रजेदित्युक्तम्; तत्रैकैकं मण्डलं किंप्रमाणं मण्डलयोरन्तरं च कियत्प्रमाणकमित्यत आह—

**षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम्॥ १०६॥**

षोडश अङ्गुलानि यस्य तत् षोडशाङ्गुलकम्; षोडशाङ्गुलप्रमाणं

---

**स तमादाय सप्तैवेत्यादि॥ १०६॥**

## बालंभट्टी

अस्त्ररहितामिति,—कोणरहितमित्यर्थः। अर्थान्तरमाह—सर्वतश्च सममिति। तदर्थद्वयमाह—वृत्तं श्लक्ष्णं चेति। विशेषमाह—तथेति। पैतामहे सममित्यस्य द्विरुक्तिरस्त्रहीनमित्यस्य चोक्तिरिति प्रागुक्तार्थलाभः। अत्राग्निहीनमिति पाठं धृत्वाऽग्निकोणरहितमिति व्याख्यातवान् कल्पतरुः। अग्निवर्णत्वस्य प्रकारान्तरेणापि संभवादाह— अग्निसदृशामिति,—दाहकतया तत्तुल्यमित्यर्थः। न्यासस्यासंभवादाह —[2]निक्षिपेदिति। प्राड्विवाक एवात्र कर्त्तेत्याह—प्राडिति॥ १०५॥

तत इति—तत्र निक्षेपानन्तरमित्यर्थः। कर्तेति शेषः। एवाधिक्यं परिहरति—एवेति॥ १०५-॥

सङ्गतिमाह— सप्तैवेति। किं कियत्। तस्योभयप्रतियोगिकत्वादाह—

---

१. प. फ. कोपर०। २. प. फ. इति क्षिपेदिति।

मण्डलं बोद्धव्यम्। मण्डलयोरन्तरं मध्यं च तावदेव। षोडशाङ्गुलकमेव सप्तमण्डलानि व्रजे दिति वदता प्रथममवस्थानमण्डलमेकमुक्तम्, अतश्चाष्टमण्डलानि षोडशाङ्गुलकानि; मण्डलान्तराणि तु सप्त तावत्प्रमाणानि; एतदेव नारदेन परिसंख्यायोक्तम्—"द्वात्रिं शदङ्गुलं प्राहुर्मण्डलान्मडलान्तरम्। अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्॥ चत्वा- रिंशत्समाधिकं भूमेरङ्गुलमानतः।" इति। अयमर्थः—अवस्थानमण्डलात्षोडशाङ्गु- 5 लान्मण्डलान्तरमन्यन्मण्डलम्, द्वितीयाद्येकमेकं द्वात्रिंशदङ्गुलं सान्तरालं, तदेवमव- स्थानमण्डलं षोडशाङ्गुलम्। गन्तव्यानि च सप्त मण्डलानि सान्तराला- नि द्वात्रिंशदङ्गुलान्येवमष्टाभिर्मण्डलैश्चत्वारिंशदधिकं शतद्वयं भूमेरङ्गुलमानतोऽङ्गु- लमानामिति सार्वविभक्तिकस्तसिः। अस्मिंस्तु पक्षेऽवस्थानमण्डलं षोडशाङ्गुलं विधाय द्वात्रिंशदङ्गुलप्रमाणानां सप्तानां सान्तरालमण्डलभूभागानामेकमेकं भूभागं 10 द्विधा विभज्यान्तरालभूभागान् षोडशाङ्गुलप्रमाणान् विहाय मण्डलभूभागेषु द्वि- षोडशाङ्गुलप्रमाणेषु गन्तृपदप्रमाणानि सप्त मण्डलानि कार्याणि ; यथा

## बालंभट्टी

मण्डलयोरिति। प्रमाणार्थकाङ्गुलशब्दोऽदन्तो नित्यक्लीबः मण्डलान्तरम् अन्यत् मण्डलम्। सर्वमिति न्यायेनाऽऽह–तावदेवेति। न्यूनतां विरोधं च परिहरति-सप्तेति। उक्तम् उक्तप्रायम्। फलितमाह—अतश्चेति। मण्डलान्तेति—मण्डलानामन्तराणीत्यर्थः। तु उक्तवैलक्षण्ये। तदेवाऽऽह—सप्तेति,—तेषामेव सत्त्वादिति भावः। परोति,—उभयसङ्ख्यामेकीकृत्ये- त्यर्थः। मण्डलान्तरम्—अन्यत् मण्डलम्। उक्तरीत्या मण्डलस्य द्वात्रिंशदङ्गुलत्वस्य बाधितत्वादाह—अयमर्थ इति। उक्तहेतोरेवाऽऽह—सान्तरालमिति। पर्यवसितमाह— तदेवमिति। अष्टाभिरित्याद्यर्थमाह—एवमिति,—उक्तप्रकारेणेत्यर्थः। चत्वेति,—बहुव्रीहिः। विभक्त्यन्तरायोग्यत्वादाह—मानामिति। इतिरर्थसमाप्तौ। तदुपपत्तिमाह—सार्वेति। अस्मिंस्तु पक्षे इति–द्वितीयादिमण्डलानां द्वात्रिंशदङ्गुलत्वमिति नारदोक्तपक्षे त्वित्यर्थः। कार्याणीति,—अन्यथा प्रागपि। ततः पादप्रक्षेपसंभवादुक्तपक्षतो भेदापत्त्या तद्विरोधापत्ति-

१. "षट्पञ्चाशत्समधिकं भूमेस्तुपरिकल्पनम्।" इति (पाठान्तरम्) २. क. ख. ग. ङ. च. ज. अष्टाभिः। ३.—१. २७५. २७६.। ४. ग. भूतभू०। ५. ग. माणमण्डलान्विरच्य। ६. फ 'मण्डलस्य' इत्यादि 'अष्टाभिरित्याद्य' इत्यन्तं नास्ति। ७. फ. आद्यादित्वात् अस्मिं०। ८. फ. वान्मूलोक्तप०।

तेनैवोक्तम्-"मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसम्मितम्।" इति । यत्तु पितामहेनोक्तम्
"कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा। आग्नेयं मण्डलं चाऽऽद्यं द्वितीयं वारुणं स्मृतम्॥
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् । पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ॥ सप्त-
मं सोमदैवत्यं सावित्रं त्वष्टमं तथा। नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ॥ द्वात्रिं-
5 शदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम्। अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥ षट्पञ्चा-
शत्समधिकं भूमेस्तु परिकल्पना । कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥
मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ॥" इति । तन्नवमं सर्वदैवत्यमपरिमि-
ताङ्गुलप्रमाणं मण्डलं विहायाष्टाभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणै-
रङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते। तत्रापि गन्तव्यानि सप्तैव मण्डलानि। यतः
10 प्रथमे तिष्ठति नवमे क्षिपतीति न विरुद्ध्यते। अङ्गुलप्रमाणं च—"तिर्यग्यवोदराण्यष्टा-
वूर्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥ हस्ते वितस्तिद्वितयं
दण्डो हस्तचतुष्टयम्। तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्॥"इतिबोद्धव्यम्॥१०६॥

## बालंभट्टी

रिति भावः। तेनैव—नारदेनैव। सम्मितं—तुल्यम्। यदि शोध्यपदं षोडशाङ्गुलादधिकं,तदा-न्तरालं षोडशाङ्गुलान्न्यूनमेव भवति यदिशोध्यपदं षोडशाङ्गुलादल्पं, तदा विपरीतं कार्यम् इति भावः । एवं मूलोक्तपक्षेऽपि पदप्रमाणमेव आन्तरमण्डलं तन्मध्ये कार्यमिति बोध्यम् । अन्यविरोधं परिहरति — यत्त्विति । कारयेदिति,-" अग्नेर्विधिं प्रवक्ष्यामि यथा-वच्छास्त्रचोदितम् ।" इत्यादिः। मदनरत्ने तु " अष्टमं सर्वदैवतम् । पुरस्तान्नवमंयत्तु तन्म-हत्पार्थिवं विदुः॥ मृद्गोमयेन तु कृतान्यद्भिः पर्युक्षितानि वा।" इति पाठः। मण्डलानां परिमा-णमाह—द्वात्रिंशदिति,—इदं प्रागुक्तरीत्या बोध्यम् । प्रचोदिता इति " विन्यसेच्च पदं तेषु कर्ता नित्यमिति स्थितिः।" इति शेषः । ननु नवानां मन्डलानां स्वयमुक्तत्वादष्टा भिरित्ययुक्तम् ; किञ्च प्रागुक्तरीत्या योजने चत्वारिंशदधिकमित्युचितम् ; अन्यथा ततोऽप्याधिक्यापत्तिरत आह—तत्र नवममिति। तत्सङ्ख्योक्तेः पाठान्तरानुरोधाच्चाऽऽह— अपरीति। मूलादिविरोधं समाधत्ते—तत्रापीति,-नवस्वपीत्यर्थः। एवं च "चत्वारिंशत्" इति नारदीयं अष्टमनवममण्डलान्तरालभूभागं विहाय बोध्यम्—तस्य गमनानर्हत्वात्; एवं च " चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना ॥ " इति कल्पतरूक्तपाठेऽपि आद्यमवस्था-नमण्डलं विहायाङ्गुलपरिमाणं योज्यम्—प्रमाणं चेति,-बोद्धव्यमित्यत्राऽन्वयः॥१०६॥

---

१.—ना० १. २९९. । २. ग. च. स्मृतम् । ३. क. तत्र नव० । ४. फ. लाधिकम् । ५. फ. 'च' नास्ति ।

सप्त मण्डलानि गत्वा किं कर्तव्यमित्यत आह—

## मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्।

अष्टमे मण्डले स्थित्वा नवमे मण्डले अग्नितप्तमयःपिण्डं त्यक्त्वा कराभ्यां व्रीहीन्मर्दयित्वा अदग्धहस्तश्चेच्छुद्धिमाप्नुयात्। दग्धहस्तश्चेदशुद्ध इत्यर्थसिद्धम्। यस्तु सन्त्रासात्प्रस्खलन् हस्ताभ्यामन्यत्र दह्यते, तथाऽप्यशुद्धो न भवति; यथाऽऽह कात्यायनः-"प्रस्खलन्नभिशस्तश्चेत्स्थानादन्यत्र दह्यते। अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत्॥" इति॥ १०६-॥ 5

किञ्च—

## अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत्॥ १०७॥

यदा गच्छतोऽन्तराष्टममण्डलादर्वागेव पिण्डः पतति दग्धादग्धत्वे वा संशयः, तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम्। अत्र चायमनुष्ठानक्रमः—पूर्वेद्युर्भूतशुद्धिं विधायापरेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र तत्र संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्य अग्नावयःपिण्डं निधाय धर्मावाहनादिसर्वदेवतापूजावनान्तां निर्वर्त्य, उपोषितस्य स्नातस्याऽऽर्द्रवाससः पश्चिमे मण्डले तिष्ठतो व्रीहिमर्दनादिकरसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बध्वा प्राड्विवाकस्तृतीये तापेऽग्निमभिमन्त्र्य तप्तमयःपिण्डं सन्दंशेन गृहीत्वा कर्त्रभिमन्त्रितं 10 15

## मुक्त्वाग्निर्मृदितव्रीहिरित्यादि ॥ १०७॥

### बालंभट्टी

सप्तेति,—नन्वित्यादिः। भिन्ने पदे मुख्यस्य तस्याभावादाह—तप्तमय इति। तात्पर्यार्थमाह—व्रीहीति,—शब्दस्तु प्रागुक्त एव। प्रकृतत्वादाह—अदग्धहस्तश्चेदिति। अर्थेति,—विनाऽपि मूले प्रत्ययं तस्य सिद्धत्वम्। विशेषमाह—यस्त्विति। स्खलन्निति,—अभिशस्तः संत्रासात् प्रस्खलन् सन् यदि हस्ताभ्यामन्यत्रेत्याद्यन्वयः। मूले हस्तादिति जातावेकवचनम्। तस्येति शेषत्वविवक्षया षष्ठी। अयःपिण्डमिति शेषः। राजेति भावः ॥१०६-॥

मूलोक्तमन्यदाह—किं चेति। गच्छत इति,—हस्ताभ्यामिति शेषः। नायमपूर्वो विधिरित्याह— अर्थप्राप्तमिति। स्पष्टार्थमाह—तत्र चेति,—अग्निविधिविषये इत्यर्थः। अधिदेवताः अग्न्यादयः। विधाय कारयित्वा। गृहीत्वेति, -तत्पुरतः समानीतमिति शेषः।

१. क. शुद्धो न भवति; यथाऽऽह। घ. अदग्धश्शुद्धिमाप्नुयात्। २. विश्व तं। ३. ख. य परे०। ४. क. ङ. छ. 'मन्त्रैः' इति नास्ति। ५. क. मर्दनादिसंस्कारम्। ख. दिकं करस०। छ. दिकं संस्का०। ६. फ. व्रीहीनिति। ७. फ. विनापि प्रत्ययमिति मूले तस्य साधुत्वम्। विशे०। ८. अनेन मिता० 'हस्तादन्यत्र' इति पाठो लभ्यते। ९. मिता० 'अत्र च' इति।

तस्याञ्जलौ निदध्यात् । सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्य[1]ादग्धः शुद्धो भवतीति ॥१०७॥ इत्यग्निविधिः ॥

संप्रत्युदकविधिमाह—

**सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।**
**नाभिदघ्नोदकस्थस्य गृहीत्वो[2]रू जलं विशेत् ॥ १०८ ॥**

हे वरुण सत्येन मा[3]ऽभिरक्ष त्वमित्यनेन मन्त्रेण कमुदकमभिशाप्याभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थि[4]तस्य पुरुषस्योरू गृहीत्वा शोध्यो जलं प्रविशेत् जले निमज्जेत् । एतच्च वरुणपूजायां सत्याम्—" गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः । वरुणाय प्रकुर्वीत पूजामादौ समाहितः॥" इ[5]ति नारदस्मर-

कृतलक्षणौ हस्तौ दर्शयित्वा पुनश्च मृदितव्रीहिरप्यलक्षितदाहः पराजयव्यञ्जकललाटस्वेदादिलक्षणहीनः कुहकादिशङ्काविनिर्मुक्तं शुद्धिमाप्नुयात्। दाहसंशयान्तरापिण्डपतनयोस्तु पुनः त्रिरात्रे सप्तरात्रे वा स्मृत्यन्तरानुसारात् करणमवसेयम् ; स्पष्टमन्यत् ॥१०५॥१०६॥१०७॥

प्रागुक्तनियमवानेव नृपब्राह्मणादाधिष्ठितमुदकान्तं गत्वा ततः – **सत्येन माभिरक्षस्वेत्यादि ॥ १०८ ॥**

बालंभट्टी

सोऽपि क[6]र्ताऽपि ॥ १०७ ॥ इत्यग्निविधिः ॥

सङ्गतिमाह—संप्रतीति। मामित्यस्य मेत्यादेश इत्याह— मामिति,—त[7]त एव कर्तुरयं मन्त्रः। इतीत्यस्य व्याख्या—अनेन मन्त्रेणेति। कम् इत्यस्य च उदकमिति। धातूनामनेकार्थत्वादाह—अभिमन्त्र्येति। पुरुषेति,— यस्य कस्यचिद्बलीयस इत्यर्थः। अत एव "ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः । नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली॥" इति नारदः । तद्ग्रहणोत्तरं प्रवेशस्यासंभवादाह —निमज्जेदिति । क्रममाह— प्रा[8]ग्वदेतच्चेति;—का[9]र्यमिति शेषः। एवमग्रेऽपि ।प्रकुर्वीत इति—दद्यादित्यर्थः; अत एव " स्थापयेत् प्रथमं तोये स्तम्भवत् पुरुषं नृपः। आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ॥" अत एव वरुणायेति चतुर्थी उक्तहेतोरेवोक्तम् —आदाविति । समेति,—प्राड्विवाक

१.क. निक्षिप्य। २.क०हीत्वा तु ज०। ३. ख. घ. छ.ज. मामभि०। ग. मा मां अभिर०। ४.म. ०णोदकस्थस्य । ङ. च. छ स्थस्य पुरुषस्य। ५. अयं श्लोको नारदीये नोपलभ्यते। ६.फ. कर्ताऽपि। एवं प्रागपि ॥ १०७ ॥ ७. फ. अत एव । ८. मिता० 'प्राग्वत्' इति नास्ति । ९. फ. 'अत एव' इत्यारभ्य 'प्राग्वदेवाऽऽह—तथा' इत्यन्तं नास्ति ।

णात् । तथा साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्र-शिरोनिवेशनान्तेषु सत्सु च । तथा—"तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् । शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥ अतस्त्वं दर्शयाऽऽत्मानं शुभाशुभपरीक्षणे।" इति प्राड्विवाकेनोदकाभिमन्त्रणे कृते शोध्यः "सत्येन माऽभिरक्ष त्वं वरुण" इत्युदकं प्रार्थयते। उदकस्थानानि च नारदेनोक्तानि--"नदीषु तनुवेगासु　5 सागरेषु वहेषु च । ह्रदेषु देवखातेषु तडागेषु सरस्सु च ॥" इति । तथा पितामहेनापि—"स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके । तृणशैवालरहिते जलौकामत्स्यवर्जिते॥ देवखातेषु यत्तोयं तस्मिन् कुर्याद्विशोधनम् । आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च॥ आविशेत्सलिले नित्यमूर्मिपङ्कविवर्जिते।" इति। आहार्यं तडागादिभ्य आहृतं ताम्रकटाहादिक्षिप्तं जलम् । नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां　10 धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्,—"उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च।" इति स्मरणात् ॥ १०८ ॥

ततः किं कर्तव्यमित्यत आह—

## समकालमिषुं मुक्तमानीयान्यो जवी नरः ।

**सत्येनाभिरक्षस्व वरुणेत्येवमन्तर्जलेन उदकमभिमन्त्र्य नाभिप्रमाणोदकस्थस्य अतिदृढस्य बालिनः पुरुषस्य ऊरू हस्ताभ्यां गृहीत्वा उदकं प्रविशेत। पुनर्ग्रहणमादरार्थम्॥१०८॥**

**मध्यमेन च धानुष्केण धनुषा च मध्यमेन निमज्जतः—समकालमिषुं मुक्तमित्यादि ॥ १०९ ॥**

### बालंभट्टी

इत्यर्थः । प्राग्वदेवाऽऽह–तथेति । "ततस्त्वावाहयेद्देवान् सलिलं चानुमन्त्रयेत् ।" इति पितामहः । देवान् धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्यादित्यर्थः । अन्यदप्याह—तथेति। इति—अनेन मन्त्रेण । च स्त्वर्थे। वहेषु,--प्रस्रवणेषु। चेति पाठः वेति पाठेऽग्रिमेऽपि तत्रैव। तथा तद्वत् । नापि,—उक्तमित्यस्यानुषङ्गः।ग्राहो—मकरः। अल्पक इति—कुत्सायां कन् । जलौकेति--मध्यमपदलोपः समासः। नित्यं—सर्वतः । आहृतम्—आनीतम्। विशेषमाह—नाभीति । धर्मस्थूणां—धर्मप्रतिमां "सूर्मी स्थूणाऽयःप्रतिमा" इत्यमरः । अवष्टंभश्च धारणात्मकसंयोगविशेषः । नारदमाह—उदके इति,— नाभिदघ्न इत्यर्थः ; तथा च साऽपि कृत्वा तत्राऽऽदौ स्थाप्येति भावः ॥ १०८ ॥

समकालमिति गमनक्रियाविशेषणम् । तच्च साकाङ्क्षमिति प्रकृतत्वादाह—

१. क. ह्रदेस्तु । २. दकनिमन्त्रणे कृते । ३. क. छ. प्रार्थयेत् । ४. च महे । ५.–१. ३०५. । ६. क. च. वर्जितम् । ७. प. प्रस्तरणेषु । ८. द्वि वै. ३५. ।

गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १०९ ॥

निमज्जनसमकालं गते तस्मिन् जविन्येकस्मिन्पुरुषे अन्यो जवी शरपातस्थानास्थितः पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति, तदा स शुद्धो भवति। एतदुक्तं भवति—त्रिषु शरेषु मुक्तेष्वेको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितयोस्तयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति । शरग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदाशुद्धो भवतीति । एतदेव स्पष्टीकृतं पितामहेन—"गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम् । गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः ॥ तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम् । गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः ॥ आगतस्तु शरग्राही न पश्यति यदा जले । अन्तर्जलगतं सम्यक्तदा शुद्धिं विनिर्दिशेत् ॥" इति । जविनोश्च पुरुषयोर्निर्धारणं

बालंभट्टी

मज्जनेति । गते इति,—मध्यमशरपातस्थानं प्रतीति भावः । तस्मिन् इत्यस्य व्यख्या—जविन्येकस्मिन्पुरुषे इति,—नर इति लब्धमिदम् । अत एवाऽऽह—अन्य इति । तदर्थमाह—शरेति अर्शआद्यच् । तत्र तथा । आनीयेति—यतस्स गतस्तत्राऽऽनीयेत्यर्थः । जले निमग्नाङ्गं,—सप्तम्यर्थे बहुव्रीहिः । जलेनिमग्नमिति पाठोऽपि अर्शआद्यच् । तत्र तद्विशिष्टं जलं पश्यतीत्येवार्थः । यद्वा निमज्जनं कर्णाद्यभिप्रायम् । दर्शनं मस्तकाभिप्रायमित्यनुपदं स्फुटीभविष्यति । अस्पष्टतया सर्वाप्रतीतेराह—एतदिति । त्रिष्विति,—अत एव "अप्सु प्रवेश्य पुरुषं प्रक्षिपेत् सायकत्रयम् ।" इति बृहस्पतिः । एकः पुरुषः । पञ्चम्यर्थे बहुव्रीहिणा लब्धं स्थानं विशिनष्टि—तोरणेति "तोरणोऽस्त्री बहिर्द्वारम् ।" इत्यमरः । स्थितयोरिति,—तयोः सतोरिति भावः । तृतीयेति,—तोरणमूलस्थितप्राड्विवाकसंबन्धितृतीयकरतालिकासमकालमित्यर्थः । तत्समेति,—कात्यायनोऽपि—"क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ।" इति । क्षिप्तेषु शरेषु सत्सु मज्जनं गमनं च तृतीयकरतालिकासमकालिकं कार्यमित्यर्थः । प्राप्ते सति । प्राप्य लब्ध्वा । अदर्शनेहेतुमाह—अन्तरिति । इतिः तत्समाप्तौ । प्रागुक्तहेतोरेवाऽऽह—स्पष्टीति । समं समकालम् । गमनेति समाहारद्वन्द्वः । गते तत्स्थानं प्राप्ते सति । अदर्शनेहेतुमाह—अन्तरिति,—सम्यगन्तर्जलगतमि-

१. विश्व० गतेऽन्यस्मिन् । २. 'यिमज्जन' इति मूले । ३. द्वि० पु १६. । ४. फ दर्शने हे० ।

कृतं नारदेन—"पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे । तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥" इति । तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्—"गत्वा तु तज्जलस्थानतटे तोरणमुच्छ्रितम् । कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥" इति नारदस्मरणात् । शरत्रयं वैणवं च धनुर्मङ्गलद्रव्यैः श्वेतपुष्पादिभिःप्रथमं संपूजयेत्-"शरान् संपूजयेत्पूर्वं वैणवं च धनुस्तथा । मङ्गलैर्धूपपुष्पैश्च ततः कर्म समाचरेत्॥" इति पितामहवचनात् ॥ धनुषः प्रमाणं लक्ष्यस्थानं च नारदेनोक्तम्—" रं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् । मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः॥ मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् । हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः॥ न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा॥" इति । अङ्गुलानां सप्ताधिकं शतं सप्तशतं क्रूरं धनुः।एवं षट्शतं पञ्चशतं च; एवं-चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य धनुषः प्रमाणम्। मध्यमस्य दशाङ्गुलाधिकम्; मन्दस्य नवाङ्गुलाधिकमित्युक्तं भवति । शराश्चानायसाग्रा वैणवाः कार्याः—

बालंभट्टी

ति मस्तकस्यापि निमज्जनादिति भावः । एतदाशयेनैव यदि न पश्यतीत्युक्तम् । अत एव मूलविरोधो[2] नेति भावः । नारदोऽपि[3]—"शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः । गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥ मध्यमं शरमादाय पुरुषो यस्तथाविधः । प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥" गतः आगतः[4], अन्यत् प्राग्वत् । विशेषानेवाऽऽह—जविनोश्चेत्यादिना । च स्त्वर्थे । एवमग्रेऽपि । तत्र हेतुमाह —शरेति । फलमपीह हेतुः तद्रूपहेतोस्तावेव नियोक्तव्याविस्यर्थः । संशोध्येति,—तस्य यौ कर्णावित्यर्थः। शोध्यकर्णेति पाठान्तरम् । तज्जलेति,—दिव्यजलसमीपभूप्रदेशमित्यर्थः । अत एवाऽऽह—तटे इति । उच्छ्रितं शोध्यकर्णप्रमाणमुच्छ्रितमित्यर्थः । विशेषमाह—शरेति । वैणवं धनुश्चेत्यर्थः । तत इति,—अत एव पूर्वमुक्तम् प्रथममिति। विशेषमाह- धनुरित्यादिना विध्यन्तेन[5] । विधिः प्रकारः । त्रैविध्यफलमाह—मध्यमेन चेति। चः त्वर्थे। एवमग्रेऽपि, एवार्थो वा । द्वितीयः पादपूरणे । किं कृत्वा क्रियत इत्यत आह—हस्तानामिति। तथा किं च । न्यूनाधिके तस्मिन् सति सायकान् क्षिपतो दोषः स्यादित्यर्थः। सप्तशतमित्यादेः भिन्नपदत्वे बहुवचनापत्तिः; समाहारद्विगौ ङीबापत्तिरसंभवापत्तिश्चातः सप्ताधिकशताङ्गुलप्रमाणमित्यर्थो[6] वाच्योऽतस्तत्फलितमाह—अङ्गुलानामिति। शतमिति,—यस्य तदिति

१. क. पुष्पधूपैश्च । २. ष. विरोधेनेति । ३ १. ३०९—१०. । ४. फ. आगत इत्यादि प्राग्वत् । ५. प. प्रयोगविध्य० । ६. फ. त्यादिवाच्योऽर्थस्तत्फलि ।

"शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये। वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत्॥" इति स्मरणात्। क्षेप्ता तु क्षत्रियः,तद्वृत्तिर्वा ब्राह्मणः सोपवासो नियोक्तव्यः; यदाह--"क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा। अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेत्॥" इति । त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः "तेषां च प्रेषितानां च शराणां शास्त्रचोद-
5 नात् । मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥" इति वचनात् । तत्रापि पतन स्थानादानेतव्यो न सर्पणस्थानात्—" शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् । सर्पन् सर्पन् शरो यायाद्दूराद्दूरतरं यतः॥" इति वचनात् ॥ वाते च प्रवाति विषमादिदेशे च शरमोक्षो न कार्यः—"इषुं न प्रक्षिपेद्विद्वान्मारुते चातिवायति । विषमे भूप्रदेशे च वृक्षस्थानसमाकुले ॥ तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते।" इति पिता-
10 महवचनात् । "निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् " इति वदतोऽनुन्मज्जिताङ्गस्याशुद्धिर्दर्शिता । स्थानान्तरगमने चाशुद्धिः पितामहेनोक्ता— " अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात् । स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥ " इति एकाङ्गस्यापि दर्शनादिति च कर्णाद्यभिप्रायेण— " शिरोमात्रं तु दृश्येत न कर्णौ

## बालंभट्टी

शेषः । तात्पर्यार्थमाह—एवं चेति । अनायसेति—अयोविकाररूपाग्रभागरहिता इत्यर्थः। कात्यायनमाह— शरांश्चेति । सुदृढमिति सूचितं विशेषमाह—क्षेप्तेति । पितामहमाह—यथाऽऽहेति । ततःक्षिपेदिति,—तथा शुचिरिति पाठान्तरम् । विशेषमुक्तमेवाऽऽह—त्रिष्विति । एवमग्रेऽपि । अत्र सर्वा पितामहोक्तिरेव । प्रोषितानाम् प्रक्षिप्तानां । तेषाम् उक्तलक्षणानाम् । तत्रापि मध्यमशरविषयेऽपि । सर्पन्निति शत्रन्तम् । वीप्सायां द्वित्वम् । अतिवायतीति आर्षं, प्रतिवायतीति पाठो वा। स्थाणुः वृक्षविशेषः "स्थाणुर्वा ना ध्रुवः शङ्कुः" इत्यमरः । उत्तरसङ्गतये आह—निमग्नाङ्गमिति । वदता मूलकृता । चोऽप्यर्थे । अन्यथेति,—" आगतस्तु शरग्राही न तश्यति तथा जले । अन्तर्जलगतः सम्यक् तदा शुद्धं विनिर्दिशेत् ॥" इत्यादि अन्यथेत्यस्यैवार्थमाह—एकाङ्गेति । स्थानपदार्थमाह—यस्मिन्निति । मिथोऽविरोधायाऽऽह-- एकाङ्गेति । चस्त्वर्थे । अपि उक्तसमुच्चये ।

---

१. क. न यसा० । २. त्तिः ब्राह्मणो वा । ३. ख. च. प्रवायति । ४. ङ. वदतोन्माज्जि० । ५. फ. अग्रे । ६. अनेन मिता० 'वृक्षस्थाणु' इत्यवगम्यते । ७. द्वि. वनौ. ८. ।

नापि नासिका । अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत ॥" इति विशेषाभिधानात् । अयमत्र प्रयोगक्रमः—उक्तलक्षणजलाशयसन्निधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं निधाय तोरणसन्निधौ सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान् हवनान्तमिष्ट्वा शोध्यस्य शिरासि प्रतिज्ञापत्र मावध्य प्राड्विवाको जलमभिमन्त्रयते "तोय त्वं प्राणिनां प्राणः"इत्यादिना मन्त्रेण । 5
अथ शोध्यः"मत्येन" इत्यादिना मन्त्रेण जलमभिमन्त्रय गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशर पातस्थाने मध्यमशरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जनमथशरानयनमिति ॥ १०९ ॥
इत्युदकविधिः ॥ 10

इदानीं विषविधानमाह—

त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे[1] व्यवस्थितः ।
त्रायस्वास्माद[2]भीशापात्सत्येन भवमेऽमृतम् ॥ ११० ॥

अनिमग्नस्यैवेषुत्रये क्षिप्ते मध्यमेषु समीपे जविष्ठं पुरुषमास्थाप्यमज्जनसमकालमेवोदकसमीपादन्यो जविष्ठः तमिषुप्रदेशं प्रधावन् गच्छेत् ॥ ते च तस्मिन् पूर्वोपस्थितमिषुमादाय प्रत्यागतो यद्युदस्थितमग्नांगमदेशान्तरस्थं च पश्येत्ततः शुद्धिमाप्नुयादिति कृतव्याख्यानमेवैतत् ॥ १०९ ॥

प्रागुक्तनियमवानेव शूद्रादिनृपब्राह्मसमीपस्थः कालव्यवस्थायाः स्मृत्यन्तरोक्तपरिमाणं विषमादायाभिमंत्रयेत् त्वं विष ब्रह्मणः पुत्रेत्यादि ॥ ११० ॥

## बालंभट्टी

विशेषेति,—तेनैवेति भावः। सन्निधौ पश्चिमतीरदेशे। तत्तीरे अक्षतपुञ्जादौ । अथ तदभिमन्त्रणानन्तरम्। स्थूणस्येति—प्राङ्मुखस्येति शेषः। प्राडिति तोरणमूलस्थितेनेत्यादि । दत्ते इति,—तृतीयतालिकासमकालमिति भावः॥ १०९ ॥ इत्युदकविधिः ॥

सङ्गतिमाह – इदानीमिति । व्यवस्थितमिति पाठः—विषशब्दस्य क्लीबत्वात् ।

१. विश्व० धर्मव्यव०। २. विश्व० । स्मान् माऽमि० ।

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥ १११ ॥

"त्वं विष" इत्यादिमन्त्रेण विषमभिमन्त्र्य कर्ता विषं हिमशैलजं शृङ्गप्रभवं भक्षयेत्। तच्च भक्षितं यस्य विषं वेगैर्विना जीर्यति स शुद्धो भवति । विषवेगो नाम धातोर्धात्व-
5 न्तरप्राप्तिः—"धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः।" इति वचनात् । धातवश्च त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणीति सप्त । एवं च सप्तैव विषवेगा भवन्ति । तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि—"वेगो रोमाञ्चमाद्यो रचयति विष-जः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोऽसौ नयनविवशतां[2] कण्ठभङ्गं च हिक्कां षष्ठो निश्वासमोहौ वितरति च
10 मृतिं सप्तमो भक्षकस्य ॥" इति । अत्र च महादेवस्य पूजा कर्तव्या; यथाऽऽह नारदः—"दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ । धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥" इति । प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं

एवमुक्त्वा विषं शार्ङ्गमित्यादि ॥ १११ ॥

**एवमिति प्रकारार्थे मन्त्रानधिकृतस्यानभिज्यस्य वाऽयमेवार्थः । पर्यायवर्नानैर्वाच्यो(?) यथा स्यात् शार्ङ्गवचनं मन्दवीर्यविषनिवृत्त्यर्थः। हैमवचनं कालकूटादिव्युदासार्थम्। स्पष्टम-न्यत् ॥ १११ ॥**

बालंभट्टी

**एवमग्रेऽपि । विषमित्यस्य मध्यमणिन्यायेनान्वयेन एवमुक्त्वेत्यस्यार्थमाह—** विषमभीति । **प्रकृतत्वादाह—**विषवेगैरिति । **लिङर्थाविवक्षया आह**—जीर्यतीत्यादि । वैगैरिति **बहुवचनसूचितमाह—**विषेति । **पितामहमाह—**धातोरिति । चलेति,—**लक्षणानि त्वित्यर्थः।तदेवाऽऽह—**वेग इति। तस्योर्द्ध्वम् **इति पूर्वान्वयि।** तस्येति **शेषत्वविवक्षया षष्ठी।** तत्पराविति **यथाक्रममिति भावः ।** नयेति,—**तयोर्विवशतामतिचञ्चलताम्,—कण्ठभङ्गं हिक्कां चेत्यर्थः। चस्त्वर्थे व्युत्क्रमे च । विशेषमाह—**अत्र चेति । **तदानन्तर्याभावात् यथा-श्रुतासङ्गतेर्नारदार्थस्य प्रयोगक्रममाह—**प्राडित्यादि । **तद्दिने उपवासभ्रमापत्त्या सेत्यस्य**

**१. विश्व०** जीर्णम् । २. **ख. घ.** नयति ।

व्यवस्थाप्य, धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरासि निधाय विषमभिमन्त्रयते—"त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् । पापानां दर्शया-ऽऽत्मानं शुद्धानाममृतं भव॥ मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् । त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव ॥" इति । एवमभिमन्त्र्य दक्षिणाभिमुखाय स्थिता-य दद्यात् नारदवचनात्—"द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते । 5 उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः ॥" इति । विषं च वत्सनाभादि ग्राह्यम्—"शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य च ॥" इति पितामहवचनात्। वर्ज्यानि च तथैवोक्तानि—"चारितानि च जीर्णानि कृत्रिमाणि तथैव च । भूमि-जानि च सर्वाणि विषाणि परिवर्जयेत् ॥" इति । नारदेनापि—"भृष्टं च चारितं चैव धूपितं मिश्रितं तथा । कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥" इति । 10 कालश्च नारदेनोक्तः—"तोलयित्वेप्सिते काले देयं तद्धि हिमागमे ॥ नापराह्णे न मध्याह्ने न सन्ध्यायां तु धर्मवित् ।" इति । कालान्तरे तूक्तप्रमाणादल्पं देयम्—"वर्षे

बालंभट्टी

व्याख्या —कृतोपेति । विशेषमाह —तस्येत्यादि । निधाय बध्वा। पूर्वमन्त्रः कर्त्तुरिति । अत्र पैतामहमेव तन्मन्त्रमाह—त्वमिति द्वाभ्यां । विशेषोक्तौ हेतुमाह— नारदेति । तदेवाऽऽह—द्विजानामिति । स्थित इति,--उद्देशस्याधिकरणत्वविवक्षया सप्तमी। प्राङ्मुखो वा प्राड्विवाकः। विषस्येत्यस्य प्रत्येकं संबन्धः। विकल्पे वा। "यवाः सप्त प्रदातव्याः शुद्धिहे-तोरसंशयः।" इति अस्य पूर्वार्द्धम् । भेदस्तु कात्यायनेनोक्तः—"अजाशुद्धमिभश्यामं सुपीतं शुद्धसम्भवम्। भङ्गे च शृङ्गबेराभं ख्यातं तत् शृङ्गिणां विषम्॥ रक्तस्थमासितं कुर्यात् कठिनं चैव तत्क्षणात् । अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥ वत्सनालनिभं पीतं वर्णज्ञानेन निश्चयः । शुक्तिशृङ्गाकृतिर्भङ्गे विद्यात्तद्वत्सनाभकम् ॥ मधुक्षीरसमायुक्तं स्वक्षे कुर्वीत तत्क्षणात् । वाह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥" इति । तेनैव—पितामहेनैव । एवं प्रागुक्तस्फुटप्रत्यासत्तौ चारितानि संचारितानि कस्मैचित् दत्तानि। च जीर्णानि,--अतिजी-र्णानीति पाठान्तरम्। उक्तहेतोरेवाऽऽह--नारेति,--उक्तानीत्यस्यानुषङ्गः।तथा च नारदेनापी-ति पाठे तद्वत्तेनाप्युक्तानीत्यर्थः।ईप्सितं सोपवासकम्। हिमेति -हेमन्तशिशिरयोरित्यर्थः।नारद-मेवाऽऽह —वर्षे इति । "वर्षासु षडयवा माला ग्रीष्मे पञ्च यवाः स्मृताः। हेमन्ते स्युः

१. क. ध्यशिर०। २.प. मा. पितामहवचन मिदम्। ३.घ.च. हैम०। ४. क. घ.च.वा। ५.क. ङ. तथा च ना०। घ. तथा ना०। ६. क. भ्रष्टं. ७. ना० १. ३२१.। ८. ङ. तं। ९.ना० १. ३१९, ३२०.। तुलयित्वाशरत्काले इति च । १०. फ. नि तानि। ११. फ. समयवा०। १२. प. वार्षे ।

चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता । हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि ॥" इति स्मरणात् । अल्पेति षडयवेत्यर्थः । हेमन्तग्रहणेन शिशिरस्यापि ग्रहणम्—"हेमन्तशिशिरयोः समासेन" इति श्रुतेः । वसन्तस्य च सर्वदिव्यसाधारणत्वात्तत्रापि सप्तयवा, विषं च घृतप्लुतं देयम्—नारदवचनात् "विषस्य पल-
5 षड्भागाद्भागो विंशतिमस्तु यः। तमष्टभागहीनं तु शोध्ये दद्याद्घृतप्लुतम् ॥" इति। पलं चात्र चतुःसुवर्णिकम् । तस्य षष्ठो भागो दश माषाः दश यवाश्च भवन्ति त्रियवं त्वेककृष्णलम् —"पञ्चकृष्णलको माषः" इत्येको माषः पञ्चदश यवा भवन्ति। एवं पञ्चदशानां माषाणां यवाः सार्धं शतं भवन्ति । पूर्वे च दशयवा इति षष्ट्यधिकं शतं यवाः पलस्य षष्ठो भागस्तस्माद्विंशतितमो भागोऽष्टौ यवास्तस्याष्टभाग-
10 हीनः एकयवहीनः विंशतिमं भागं सप्तयवं घृतप्लुतं दद्यात् । घृतं च विषात् त्रिंशद्गुणं ग्राह्यम्—"पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम् । घृते नियोजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम् ॥" इति कात्यायनवचनात् । त्रिंशद्गुणेन घृतेनान्वितं विषम् । शोध्यश्च कुहकादिभ्यो रक्षणीयः —"त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् । कुहकादिभयाद्राजा रक्षयेद्दिव्यकारिणम् ॥ औषधीर्मन्त्रयोगांश्च मणीनथ
15 विषापहान् । कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत्॥" इति पितामहस्मरणात् ।

---

बालंभट्टी

**सप्त यवाः शरद्यात्ततोऽपिहि ॥" इति कल्पतरौ पाठः । मात्राशब्दः परिच्छिन्नपरिमाणके वर्तते। सा मात्रा अल्पा त्रियवेति कश्चित्। न्यूनतां निराचष्टे**-हेमन्तेत्यादि । **नारदमेवाऽऽह**—विषस्येति। शोध्ये इति—**तस्य तत्त्वविवक्षया तदर्थमाह**—पलं चेत्यादिना । **पक्षान्तरनिरासायाऽऽह**—अत्रेति । **षडादिशब्दाः षष्ठादिपरा इत्याह**—षष्ठ इत्यादि । **अत एवात्र मिथो विरोधो न।** तस्मादिति—**संबन्धिनस्तत्त्वविवक्षया पञ्चमी; तस्येति भावः। शोध्ये इति प्राग्वत् । तमित्यस्य व्याख्या**-विंशतीति । **विशेषं तत्राऽऽह**-घृतं चेति । **देहिनामित्यपि तस्य तत्त्वविवक्षया**—श्लक्ष्णं पिष्टमिति,—**तद्यथा स्यात्तथापि ष्टमित्यर्थः। सम्यक्पिष्टमिति पाठान्तरम्। घृतपरिमाणमाह**—त्रिंशदिति। **यथाश्रुतासङ्गतेः तदर्थमाह**-त्रिंशादिति। **त्रिंशद्गुणेन त्विति कल्पतरौ पाठः। विशेषान्तरमाह**—शोध्यश्चेत्यादिना । कुहकेति—**मन्त्रादिभ्य इत्यर्थः। कुहकादीत्युक्तमेव विशदयति**—औषधीरिति । गूढोत्पेति,—**गुप्ततया जातानित्यर्थः । विषमभीति पाठे तथाशब्दः समुच्चये । अपीति पाठे तद्वदित्यर्थः ।**

---

१. तिक (?) । २. ना० १. ३२३ । ३. न. माषाः दश यवाश्च । ४.ख. पञ्चदश । ५. ख. पूर्वे । ६.क. संस्थांश्च। ७. प. हेमान्ते०। ८. फ.दिश्चेत् चेरन्यतानियमान्न दोषः। अत। ९.फ.तत्रेति

तथा विषमपि रक्षणीयम्—"शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम् । अकृत्रिममसंमूढममन्त्रोपहतं च यत् ॥ " इति नारदस्मरणात् । तथा विषे पीते यावत्करतालिकाशतपञ्चकं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः ; यथाऽऽह नारदः—" पञ्चतालशतं कालं निर्विकारो यदा भवेत् । तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥" इति । पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः—"भक्षिते 5 तु यदा स्वस्थो मूर्च्छाच्छर्दिविवर्जितः। निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत्॥" इति । अत्र च प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषं स्थापयित्वा धर्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखायं स्थिताय विषं प्रयच्छति । स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः॥ ११० ॥ १११ ॥ इति विषविधानम् ॥

अथ कोशविधिमाह—

**देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।** 10

**संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ ११२ ॥**

प्रयोजनाल्पत्वे रुच्या वा पूर्वोक्तनियमवानेव नृपब्राह्मणसंनिधौ गत्वा

**देवानुग्रान् समभ्यर्च्येत्यादि ॥ ११२ ॥**

देवानुग्रान् आदित्यप्रभृतीन् सम्यग्विधानेनाभिमुखीकरणाच्चार्चयित्वा तदीयं स्नानोदकमादायैतन्मन्त्रं संश्राव्य मैवं मंस्थाः यथाऽन्योदकपानमभिप्रेतवैतृष्ण्यादिनिमित्तमिति ।

बालंभट्टी

विशेषमाह--तथेति । पञ्चतालशतानि यस्मिन्निति बहुव्रीहिः कालविशेषणम् । "कालाध्वनोः" इति द्वितीया ।चिकित्सितमिति चिकित्सनमिति पाठान्तरम्। अनर्थान्तरम् । विरोधं परिहरति—पितेति। तमेवाऽऽह—भक्षिते त्विति,—विषे इति भावः । स्वस्थ इत्यस्यैव व्याख्या—मूर्च्छेति सर्वसङ्ग्रहायाऽऽह—निर्वीति। कंचन विशेषं कथयन् प्रागुक्तमपि किञ्चित् स्पष्टत्वायाऽऽह—अत्र चेति। क्रमेणान्वयः। निधाय आबध्य॥११०॥१११॥इति विषविधिः॥

कोशेति—"कोशोऽघदिव्ययोः" इत्यनेकार्थः । "कोशः कोशेऽण्डजे तु स्या-

१. ख. तथा च । २.—१. ३२२। ३. क. एवंविधे विषे । ४. ग. धिकृतः ५. क. मुखस्थिताय । ६. ख. जलं तु । ७ अ० २. ३. ५ ।

उग्रान्देवान् दुर्गादित्यादीन् समभ्यर्च्य गन्धपुष्पादिभिः पूजयित्वा संस्नाप्य तत्स्नानोदकमाहरेत्। आहृत्य च—"तोय त्वं प्राणिनां प्राणः" इत्यादिना तत्तोयं प्राड्विवाकः संश्राव्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा "सत्येन माऽभिरक्ष त्वं वरुण" इत्यनेनाभिमन्त्रितं पाययेत्प्रसृतित्रयम् । एतच्च साधारणधर्मेषु धर्मावाहनादिसकलदेवता-
5 पूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु । अत्र च स्नाप्यदेवतानियमः कार्यनियमोऽधिकारिनियमश्च पितामहादिभिरुक्तः—"भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् ॥ दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥ दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानि तु ॥"
10 इति देवतानियमः । "विस्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च । एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥" इति कार्यनियमः । "पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च । सशूकस्याव्यसनिनः कोशपानं विधीयते ॥" सशूक आस्तिकः । "मद्यपस्त्रीव्यसनिनां कितवानां तथैव च । कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥ महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते । नास्तिकव्रात्यदासेषु कोशपानं विवर्जयेत् ॥" इति । महापराधो महापातकी, निर्धर्मो वर्णाश्रमधर्मरहितः पाष-

---

एतद्धि मिथ्यावादिनं जन्मान्तरशतैरपि दारिद्र्यकुष्ठाद्युपद्रवैः प्रतिकुर्वाणं दुर्निवारं भविष्यति इत्येवमालोच्य सत्यावष्टम्भमन्तरेण माकुर्वित्युक्त्वा प्रसृतित्रयं पाययेत् ॥ ११२ ॥

## बालंभट्टी

चषके दिव्यशिम्बयोः । जातीवंशेऽसिपिधाने" इति हैमश्च । तत्रापि प्रकृतेऽपां वाचकत्वात्तत्र रूढिः । संश्राव्य—अभिमन्त्र्य । तस्मादाहृताज्जलात् । तज्जलमिति पाठेऽग्रिमं विशेष्यम् । वक्ष्यमाणलब्धमाह—संस्नाप्येति । इत्यादिना मन्त्रेण संश्राव्येत्यस्य पाययेदित्यत्रान्वयः । आदिना नारदादयः । ते चान्यत्र स्पष्टाः । विशेषमाह—अत्र चेत्यादिना । प्राग्वदाह—एतच्चेति । समभावे तु देवानां—देवताविषयकभक्तिसाम्ये इत्यर्थः। ये चेति,--तांश्चेत्यर्थः। तं नेति,--ब्राह्मण्यादेस्तन्मूलकत्वात् । विस्रम्भे—विश्वासे । आस्तिक इति—सत्येन दिव्यकरणेऽनिष्टाशङ्कावानित्यर्थः । मद्यपेति,—द्वन्द्वगर्भोऽत्र द्वन्द्वः । ये चेति,—तेषां

१. ख. 'आपोमयः प्राणाः' इति छान्दोग्ये । २. ङ. छ. वा । ग संशोध्येन च । ३. सत्सु च। ४. ख. वनि० ग. तापूजाति० । ५. ना० १. ३२८.। ६. ग. कः। पातकमिति क्वचित्।

ण्डी कुत्सितः प्रतिलोमजः; दाशाः कैवर्ताः. इत्यधिकारिनियमः । तथा गोमयेन मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेदिति च नारदवचनादवगन्तव्यम् ; यथाऽऽह " तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम् ॥ " इति ॥११२॥

ननु तुलादिविषान्तेषु समनन्तरमेव शुद्धयशुद्धिभावना; कोशे तु कथमित्यत आह— 5

## अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।
## व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥११३ ॥

चतुर्दशादह्नः पूर्वं यस्य राजिकं राजनिमित्तं, दैविकं देवप्रभवं, व्यसनं दुःखं, घोरं महत्, नो नैव जायते अल्पस्य देहिनामपरिहार्यत्वात्स शुद्धो वेदितव्यः । ऊर्ध्वं पुनरवधेर्न दोषः ; यथाऽऽह नारदः-- " ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥ " इत्यर्थसिद्धमेवोक्तम् ।

कथमत्र व्यक्तिरित्यत आह—**आचतुर्दशमादह्नो यस्येत्यादि ॥११३॥**

तात्कालिकं ललाटस्वेदादिद्विसप्तरात्रेण वादैवराजकं यदुग्रं व्यसनं नोत्पद्यते ततो निस्संशयं शुद्धिरित्यवसेया। एतच्च सर्वदिव्यशेषतया श्लोकोत्थमवसेयं। तात्कालिकं यदि दाहादि ललाटस्वेदादि वा न स्यात्। यदि चतुर्दशरात्रादर्वाग्दैवराजकव्यसनानुत्पादः ततो निःसंशयं शुद्धिरन्यथा तु विपर्यय इत्यभिप्रायः । तथा च स्वायंभुवम्—" यमिद्धो न दहत्यग्निरापो नो मज्जयन्ति च । न च तामृक्षति क्षिप्रं स ज्ञेयः शपथैः शुचिः ॥ " इति । " न चार्त्तिमृच्छति क्षिप्रम् " इत्येतत्पूर्वेण दाहादि न समुच्चीयते । चशब्दसामर्थ्याच्च ललाटस्वेदा-

### बालंभट्टी

चेत्यर्थः । क्लीबेति समाहारद्वन्द्वः । नास्तिकेति पूर्वैतद्वृत्तिरुक्त इति न पौनरुक्त्यम् । विशेषमाह—तथेति । यथाऽऽहेति,—स एवेति शेषः ॥ ११२ ॥

मूलमवतारयति—नन्विति । अर्वागित्यस्यार्थः—पूर्वमिति । राजदैविकमित्यत्र द्वन्द्वात्तस्य निमित्तमिति ठगित्याह—राजिकमित्यादि । महदित्यस्य फलमाह—अल्पेति। वैकृतम्—विकृतमेव वैकृतम् ,—विकार इत्यर्थः। इतिनारदसमाप्तौ।ननु नेदमवश्यवाच्यमतआह—अर्थेति । मौलावप्युपादानसिद्धमेव नारदेनोक्तमित्यर्थः। विरोधं परिहरति—

१ ख. दिषुवि० । २.—१. २३१. । ३ फ. यथाऽऽहेति नास्ति ।

"अर्वाक् चतुर्दशादह्नः" इत्येतन्महाभियोगविषयम्-महाभियोगेष्वेतानीति प्रस्तुत्याभिधानात् । अवध्यन्तराणि पितामहेनोक्तानि अल्पविषयाणि,—"कोशमल्पेऽपि दापयेत्" इति स्मरणात् । तानि च "त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् । वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः॥" इति । महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं[1] व्यवस्थापनीयम् ॥ ११३ ॥ इति कोशविधिः ॥

तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि, स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यानि[2] अपि दिव्यानि कथितानि; यथाऽऽह पितामहः—"तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम् । चौरे तु तण्डुला देया नान्यत्रेति[3] विनिश्चयः ॥ तण्डुलान्कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् । मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥ स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् । प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ॥ तण्डुलान् भक्षयित्वा तु पत्रे

द्यपि कुहकादिप्रबन्धेनाप्यदाहादिसंभवः । अतो न चार्तिमृच्छतीति द्वितीयव्यञ्जकोपादानमविरुद्धम् ॥ ११६ ॥

नन्वियं दिव्यस्मृतिरप्युक्तमूलेऽवलक्ष्यते । यतो न प्रत्यक्षादेरयं विषयः दिव्याभिधानादेव अकार्यत्वाच्च ना......त्यन्योनेदं भवतीत्यागमस्य विषयः । कथं तर्हि यागात्स्वर्ग

सुबोधिनी

तुला अग्निः सलिलं विषं कोशः तण्डुलाः तप्तमाषः धर्माधर्माख्यदिव्यं "निष्के तु सत्यवचनम्" इत्यादयः शपथाः दिव्यपराजयनिमित्तदण्डविधानं चेत्येवंरूपैस्तत्तन्नामधेयैर्दशभिरवान्तरप्रकरणैः विशिष्टं दिव्यप्रकरणं सुबोधम् ॥ इतिश्रीभट्टविश्वेश्वरविरचितायां सुबोधिन्यां दिव्यप्रकरणम् ॥

बालंभट्टी

अर्वागिति । प्रस्तुत्य तु प्रक्रम्य । तराणि तराणि तु । पितामहमवोऽऽह—त्रिरात्रादिति । क्वचित्तानि चेत्यादिः । नन्वेवमनयोर्व्यवस्थायामपि तदुक्तपक्षाणामवान्तरव्यवस्था कथमत आह — महेति । अर्वाचीनं व्युत्क्रमेण सहस्रान्न्यूनम् ॥ ११३ ॥ इति कोशविधिः ॥

न्यूनतां निराचष्टे—तुलादीति । यथोद्देशमिति,—उद्देशानतिक्रमेणेत्यर्थः । नाम्ना वस्तुसङ्कीर्तनमुद्देशः भक्षणचोदितमिति—भक्षणे चोदितं शास्त्रे विहितं विधिप्रकारमित्यर्थः। लक्षणबोधितमिति पाठान्तरम् । भक्षणवर्जने इति च । कृत्वेत्यस्य संमिश्रानित्यत्रान्वयः।

१. क. त्रिरात्रादिपक्षद्वयं । २. ख. नि दि० । ३. नान्यत्रेतिं सर्वत्र ।

निष्ठीवयेत्तत । पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु ॥ लोहित दृश्यते यस्य हनुस्तालु च शीर्यते । गात्र च कम्पयेद्यस्य तमशुद्ध विनिर्दिशेत् ॥" इति । शिरोरोपितपत्रक तण्डुलान् भक्षयित्वा निष्ठीवयेत्प्राड्विवाकः । भक्षयित्वेति च ण्यन्तात्सिचि रूपम् । सर्वदिव्यसाधारण च धर्मावाहनादि पूर्ववदिहापि कर्तव्यम् ॥ इति तण्डुलविधिः ॥　　5

तप्तमाषकविधिः पितामहेनोक्तः। तथा हि—"सौवर्णे राजत वाऽपि ताम्र वा षोडशाङ्गुलम्। चतुरङ्गुलखात तु मृण्मय वाऽथ मण्डलम् ॥" वर्तुलमित्यर्थः। "पूरयेद् घृततैलाभ्या विंशत्या तु पलैस्तु तत् । सुवर्णमाषक तस्मिन् सुतप्ते निक्षिपेत्ततः ॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् । कराग्र यो न धुनुयाद्विस्फोटो वा न जायते । शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥" इति । उद्धरेदिति वचनात्पात्रादुत्क्षेपण[1]मात्र, न बहिःप्रक्षेपणमादरणीयम् ॥　　10

इति स्वर्गकामस्य कर्तव्यतोपदेशादसाधनत्वे च तद्वथाघाताद्यागमादेः साधनत्वमवगम्य यागात् स्वर्ग इत्युच्यते । अत्रापि तर्हि प्रायश्चित्तवत् सशोधनार्थो दिव्योपदेशः स्यात् । सत्यम् यद्यनुष्ठानमात्रोपदेशः स्यात् । इह तु तप्तायःपिण्डेनादग्धस्यापरं निर्दोषस्य ज्ञापनमुक्तं तदपेशलमिव स्यात् उच्यते। द्वेष्येत चोदने स्तेयादिशङ्कितस्य अभ्युपगच्छतः प्रायश्चित्तराजदण्डादि प्रसङ्गः। अनभ्युपगमे तु यागाद्यनुष्ठानमिति अत्र चोर्ध्वगमनादौ सत्यदृष्टव्यवहारः कार्य इति । अतश्च अर्थादिदमापद्येत । ऊर्ध्वगमनाद्विना शनशुद्धिरिति अत एवोपलभ्य-

## बालभट्टी

स्नानोदकं चाऽऽदित्यस्यैव प्रत्यासत्तेः।ततःभक्षणकरणानन्तरम् । शीर्यति विशीर्णे भवति। "हनुजालं च सीदति"इति कल्पतरौ पाठ ।हनुजालम् उत्तराधमदक्षिणं हनुजालं समूह इति तदर्थः। कर्त्रनुपादानादर्थमाह—शिरोऽपीति । त शोध्यम् । असंबन्धत्व[2]निरासायाऽऽह—भक्षेति । तस्य चोरादिकत्वादिति भावः ॥ इति तण्डुलविधिः ॥

तथा हि—तेदेवाच्यते।विस्तारमाह—षोडेति।निम्नतामाह—चतुरिति,—बहुव्रीहिः।अथइत्यस्याग्रेऽन्वयः।अनेन कारयित्वेति तल शेष सूचितः। मण्डलमित्यस्यार्थमाह—वर्तुलमिति । घृततैलयोरेकार्थत्वाद्विकल्पः।धुनुयात्—कम्पयेत्। सर्वसंग्रहाय तदुपसंहरति—निर्विकारेति,—बहुव्रीहिः । यावद्वचनं वाचनिकमिति न्यायेनाऽऽह—उद्धरेदिति। तत्सत्त्वेऽप्याह— आदरेति,—स्थलविशेष इति भावः॥

---

१. ग. पणं । २. फ. ण्वध्यत्व० ।

अपरः[1] कल्पः—"सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा। गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥ सौवर्णी राजतीं ताम्रीमायसीं वा सुशोधिताम्। सलिलेन सकृद्धौतां प्रक्षिपेत्ताम्रमुद्रिकाम्[2] ॥ भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे[3]। परीक्षेतार्द्रपर्णेन चुरुकारं[4] सुघोषकम् ॥ ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत्। परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥ दह पावक पापं त्वं हिमशीतं शुचौ भव। उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥ ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा। प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ॥ यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः।" इति अत्रापि धर्मावाहनाद्यनुसन्धातव्यम्। घृतानुमन्त्रणं प्राड्विवाकस्य—"त्वमग्ने सर्वभूतानाम्" इति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः। "प्रदेशिनीं परीक्षेयुः" इति वचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम् ॥ इति तप्तमाषकविधिः ॥

**व्यञ्जकाभावेऽपि शपथाद्यनुष्ठानमात्रादेवादुष्टव्यवहारसिद्धिः। तस्य त्वामुष्मिको दोषस्स्थित एव। तथा चोक्तं "दिव्यानीह विशुद्धये" इति। इहैव नान्यत्रेत्यर्थः। कुहकादिप्रतिबंधेऽपि तर्हि शुद्धिप्रसंगः। न प्रतिषेधात्; यथा च बृहस्पतिः—"त्रिरात्रं पञ्चरात्रं वा पुरुषैस्स्वैरधिष्ठितम्। निरुद्धं चारयेत्तत्र कहकाशङ्कया नृपः॥" इति। अतः कुहकादिरहित एवोर्ध्वगमनादौ शुद्धव्यवहारः कुहकादिनव्यवहारशङ्कायां वा दैवराजकव्यसनानुत्पत्तौ। पारमार्थिके तु शुद्ध्यशुद्धीत्यवोपयुज्येते।अतो वेदमूलत्वमविरुद्धम्। तथा चाम्नायश्छान्दोग्यः—"पुरुषं सोम्येतहस्तग्रहीतमानयन्त्यपहर्षीस्तेयमकार्षीरिति परशुमस्मै तपते स यदि तस्य कर्ता**

बालंभट्टी

**तदुक्तमेव प्रकारान्तरमन्यग्रन्थानुक्तमाह**—अपर इति। उपेति,—**स्थापयित्वा इत्यर्थः।** सुशोधितामिति,—**भङ्गादिनिरासायेति भावः।** सुशोभितामिति पाठान्तरम्। धौतां—**प्रक्षालिताम्।** भ्रमद्वीचीति—**भ्रमन्तो वाचः शब्दाः यस्मिन्नित्यर्थः। तरङ्गैः वीचिभिः। आढ्ये पूर्णे। ननखस्यापि विषये।** चुरुकारमिति,—**तैलादि पक्तारीक्षाचर इति शब्देन भवतीत्यनुकरणमिदं ध्वनेः तत्रापि। सघोषकं महाशब्दयुक्तम्। क्रियाविशेषणमिदं द्वयम्।** अनेन **वक्ष्यमाणेन। प्राड्विवाक इति शेषः। सुतप्तत्वात् पवित्रत्वाच्चाऽऽह** —पावकेति। प्रदेशिनीं **तर्जनीम् तस्य कर्तुःस्यादिति शेषः** मन्त्रणामिति,—**परमित्याद्युक्तमित्यर्थः। अत एवाऽऽह**—त्वमग्ने इति। **प्राग्वदाह**—अग्न्यभीति। **प्राग्वदाह**—प्रदेशिनीमिति ॥ **इति तप्तमाषकविधिः ॥**

१. ख. अपरक०। २. ना० १. ३३४, ५.। ३. क. अनख०। घ. छ. सनख०। ङ. न नख०। ४. क.घ. चूरु०। ५. ग धिकं। ६. फ. नखस्पर्शस्यापि।

धर्माधर्मादिव्यविधिः ॥ धर्माधर्माख्यदिव्यविधिश्च पितामहेनोक्तः । तथा च—"अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥"हन्तॄणामिति साहसाभियोगेषु ; याचमानानामिति अर्थाभियोगेषु ; प्रायश्चित्तार्थिनामिति पातकाभियोगेषु । "राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।" इति प्रतिमाविधानं सीसकं वा आयसं वेति ॥ 5

पक्षान्तरमाह—"लिखेद्भूर्जे पटे वाऽपि धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् । एवं विधायोपलिख्य पिण्डयोस्तौ निधापयेत् ॥ गोमयेन मृदा वाऽपि पिण्डौ कार्यौ समं ततः । मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥ उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ । आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥ धर्मावाहनपूर्वं तु

भवति । तत एवाऽऽत्मानमनृतं कुरुते । सोऽनृतोऽभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते अथ हन्यते । अथ यदि तस्याकर्ता भवति । तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः । सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स न दह्यतेऽथ मुच्यते ।" इति । एवमादीन्यन्यान्यपि तुलादिदिव्यप्रयोगमूलान्यन्विष्यो-

## बालंभट्टी

चोऽप्यर्थे । तथा चेति, अधुनेति—शेषवचने । न्यूनतां परिहरति—हन्तॄणामित्यादि । इतिर्वचनसमाप्तौ । इतराभ्रमायाऽऽह—प्रतिमेति । एकार्थत्वादाह—सीसकं वेति । अत्रो आद्यजन्तमिदमिति भावः । तरं तरं च । आहेति,—स एवेति भावः । अभ्युक्ष्य— प्रेक्ष्य । सितपुष्प इति बहुव्रीहिः । पुष्पधृत इति धृञः क्विबन्तस्य रूपम् । धृगिति पाठे धृष्णोतेः तदन्तस्य रूपम् ; भृदिति पाठे भृञस्तदन्तस्य । एवं विधायेत्यस्य व्याख्या-उपलिख्येति । एवं विधानुपलिख्येति पाठान्तरं सुगमम् । एवं विधायोपलिप्येति पाठे तु एवं संलिख्य चन्दनेनोपलिप्येत्यर्थः । समं यथा स्यात्तथा कार्या इत्यर्थः । तत इत्यग्रिमान्वयि । अनुपहते अभग्नादौ । अनुपलक्षितावित्यनेनापि विधानेतस्य सूचिते । मध्ये चूर्णिकामाह—

---

१. ख. नास्ति । २. क धावुपालिख्य ।

प्रतिज्ञापत्रकं लिखेत्। " ततः—" यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे[1] ॥ " इति—अभिशस्तोऽभिमन्त्रयते[2] । " अभियुक्तस्तयोश्चैकं प्रगृह्णीताविलम्बितः । धर्मे गृहीते शुद्धः[3] स्यादधर्मे तु स हीयते ॥ एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ।" इति ॥ इति धर्माधर्मदिव्यविधिः ॥

5 अन्ये च शपथा द्रव्याल्पत्वमहत्त्वविषया जातिविशेषविषयाश्च मन्वादिभिरुक्ताः; यथा—"निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् । त्रिकादर्वाक्तु पुण्यं

दाहरणीयानि । अत्र च शङ्कितस्य परशुग्रहणेन दग्धस्य मोचनमदृष्टव्यवहारकरं च विधीयते । अन्यत्तु दाहादिप्राप्तमनूद्यते । अतोऽप्युक्तप्रकारं वेदमूलत्वमविरुद्धमेव । यथा चैतदेवं तथा वक्ष्यामः । एवं सति व्यासाद्युक्तेतिहासदर्शनानुसारेणाभिप्रष्टातृत्वेन तुलाद्य

बालंभट्टी

तत इति । तयोश्चैकामिति--ततश्चैकमिति क्वचित् । अविलंबितामिति । अविशंकित इति अवलम्बितम् इति पाठे क्रियाविशेषणम् । समासतः—संक्षेपतः। बृहस्पतिरपि—" यत्र द्वये लेखनीयौ धर्माधर्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥ आमन्त्र्य पूजये-द्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥ समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ । ततः कुंभात्पिण्डमेकं प्रगृह्णीताविलम्बितः ॥ धर्मे गृहीते शुद्धस्स्यात् संपूज्यश्च परीक्षकैः।"इति। जीवदानादिकैः याप्रजामयथोभयमित्यादिभिरिति(?) कल्पतरुः । प्राणप्रतिष्ठापूर्वमित्यन्ये ॥ इति धर्माधर्मविधिः॥

फालविधिर्बृहस्पतिनोक्तः— " आयसं द्वादशपलं घटितं फालमुच्यते । अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥ अग्निवर्णं तु तच्चोरो जिह्वायां संलिहेत् सकृत् । न दग्धश्चे-च्छुद्धिमियादन्यथा तु स हीयते ॥" इति । आदिना नारदादिपरिग्रहः । तथा च नारदः—" शपथा अपि देवानामृषीणां च महात्मनाम् । वसिष्ठः शपथं शेपे यातुधाने तु शङ्कितः ॥ महर्षयस्तथेन्द्रश्च पुष्करार्थे निबोधिताः । शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥ " इति । "महर्षिभिश्च देवैश्च कार्यार्थे शपथाः कृताः । वसिष्ठश्चापि शपथं शेपे वै यवने नृपे ॥"इति मनुरपि।सत्यवचनं सत्यमिति कथनम् । पुष्पमिति,—पुण्यमिति पाठान्तरम् । आद्यविषय-

---

१. ख. ग. च. करे । 'अशुद्धश्चेन्मम करे पापमायातु धर्मतः ।' इत्यधिकम् । २. क. मन्त्रयेत् । ३. क. घ. शुद्धिः । ४.—८. ११०. ।

स्यात्कोशपानमतः परम् ॥ सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्च-नैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥" इत्यादयः । अत्र च शुद्धिविभावना मनुनोक्ता— "न चाऽऽर्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः॥" इति । आर्तिरपि "यस्य नो राजदैविकम् ।व्यसनं जायते घोरम्"इत्युक्तैव। कालनियमश्च त्रिरत्रप्रभृति कार्यलाघव-गौरवपर्यालोचनया द्रष्टव्यः। एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः 5 कात्यायनेन—"शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् । "इति । तं दण्डमाह—

न्तर्गतलोकपालादिजगत्साक्षीभूतदेवताकल्पनमप्यविरुद्धम्। तथा च "मन्त्रवर्णगत्यो देवताः" "त्वमेव सर्वभूतानामन्तश्चरसि पावक।" इत्युक्ताः। एवं स्वायंभुवेऽपि च देवताधिष्ठानमेव सत्यधर्मानुसारि प्रदर्शितम् ; यथाऽऽह—"................... पुरा भ्रात्रा यवीयसा ॥ नाग्निर्ददाह रोमापि सत्येन जगतः स्पृशः॥" इति । स्पृशश्चरः साक्षीत्यर्थः। अथ वा अनुमा-नमूलत्वमेवास्तु न निर्दोषस्य दोषवत्तया शंकितस्य अग्निर्दाहकः—अभ्रकादेरिव दाहानुपलं-भात् ॥ अनादिकालिकाव्यभिचारिव्यवहारप्रवृत्त्यन्वयव्यतिरेकशुद्धानुमानं वह्न्यभाव इव निर्धूमतानुमानमप्रतिहतमेव । अतोऽप्युपपन्नं दिव्यस्मृतेः समूलत्वमित्येषा दिक् ॥

## बालंभट्टी

मुक्त्वा द्वितीयमाह—सत्येनेति । अत्र च–शपथविषये । आर्तिः पीडा । सा च नान्येत्याह— आर्तिरपीति,—पूर्वोक्तैवेति भावः, एवं कालनियमोऽपि प्रागुक्त एवेत्याह–कालेति । कात्यायनः "आचतुर्दशकादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः"॥अत्राऽऽह मर्यादां मनुः—"न वृथा शपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः।वृथा हि श पथं कुर्वन् प्रेत्य चेह च नश्यति ॥ कामिनीषु विवाहेषु गवां भक्ते तथेन्धने । ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥" यमः— "कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् । अनृतेन तु युज्येत वधेन च तथा नरः ॥ तस्मान्न मिथ्याशपथं नरः कुर्याद्विधेप्सितम् ॥" इति । सर्वदिव्यशेषमाह—एवमिति। शुद्धं पुरुषम् , तम् अशुद्धसम्बंधिनम्। आहेति—कात्यायन

१. मनुः ८ ११३. । २. मनुः ८. ११५. । ३. ख. ग. मध्ये एकरात्रमारभ्य त्रिरात्रप-मारभ्य पञ्चरात्रपर्यन्तं एकरात्रप्रभृतित्वं कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यम् । ज. एकरात्रमारभ्य त्रिरात्रपर्यन्तं त्रिरात्रमारभ्य पञ्चरात्रप्रभृति वा कार्य । ४. ख. व्यम् । ५. फ. क्तैवेति ।

"विषे तोये हुताशे च तुलाकोशे च तण्डुले। तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥ सहस्रं षट्शतं चैव तथा पञ्चशतानि च । चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ॥" इति॥ "निह्नवे भावितो दद्यात्" इत्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते ॥

॥ इति दिव्यप्रकरणम् ॥

नन्वेवं सति भाविन्यर्थे दिव्यानि स्युः द्यौः तदभावार(?)सिद्धत्वात्। को वाऽन्यथाऽऽह। कथं तर्हि । भाविन्यर्थे कोशपानादिव्यवहारः । सत्यसंकल्प प्रकटीकरणमात्रतद्व्यभिचरद्(?) शिष्टविगर्हणासिद्ध्यर्थं संकल्पितान्यथाकरणात्व(?)नृतदोषस्थित एव इत्यलंप्रसक्त्या॥

बालंभट्टी

एवेति भावः।तुलेति समाहारद्वन्द्वः।कल्पनामेवाऽऽह—सहस्रमिति।षट्शतमिति बहुव्रीहिः। दण्डो विशेष्यः। चतुरिति—समाहारद्वन्द्वः। क्रमविवक्षया न दोषः। अग्रेऽपि अतिदिशन्नाह-एवं च हीनमिति,—उक्तप्रकारेण कल्पनयाऽग्रेपि उत्तरोत्तरन्यूनमित्यर्थः।।विरोधं परिहरति— निह्नवे इति । मूलमिदं सर्वसाधारणम् ;अत एव न विकल्पः अत एवाऽऽह— अयं दिव्येति,—-कात्यायनोक्तदिव्यमात्रविषय इत्यर्थः।एवं च तुलाग्निसलिलविषकोशतण्डुलतप्तमाषधर्माधर्मशपथदण्डरूपैरवान्तरप्रकरणैर्विशिष्टप्रकरणं सम्पन्नमिति बोध्यम् । तदाह—इति दिव्येति ॥ इति दिव्यप्रकरणं सम्पूर्णम् ॥

१. व्यव० ११. । २. फ. लशततप्तं ।

# अथ दायविभागप्रकरणम् ८

** प्रमाणं मानुषं दैवमिति भेदेन वर्णितम् । 1
अधुना वर्ण्यते दायविभागो योगमूर्तिना ॥

** तत्र दायशब्देन यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति 2 तदुच्यते । **स च द्विविधः—अप्रतिबन्धः सप्रतिबन्धश्च ; तत्र पुत्राणां पौत्राणां 3 च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धो दायः ।

## सुबोधिनी

अथ दायविभागप्रकरणम्॥ *[महता प्रबन्धेन दायविभागप्रकरणं व्याचिख्यासुर्निबन्धकारः 1 पूर्वोत्तरयोः ग्रन्थसन्दर्भयोः पद्यबन्धेन सङ्गतिं दर्शयति-प्रमाणं मानुषं दैवमिति। ]*दायशब्दार्थमाह—तत्र दायशब्देनेति। *[अयमर्थः—धनस्वामिना पित्रादिना सह सह यः सम्बन्धो 2 जन्यजनकत्वादिः, तस्मात् सम्बन्धरूपान्निमित्तात् अन्यस्य सम्बन्धप्रतियोगिनः पुत्रादेः स्वं यद् धनं भवति तद् दायशब्देनोच्यत इति। ]* अप्रतिबन्धदायस्वरूपमाह—तत्र पुत्राणां पौत्राणां चेति । *[अयमभिप्रायः,—पितृधने पितामहधने च पुत्रपौत्रयोः स्वव्यतिरिक्त- 3

## बालंभट्टी

निबन्धकारः पद्यबन्धेन सङ्गतिमाह—प्रमाणमिति । इति भेदेनेति—एवं प्रकारेण द्विविधं प्रमाणमवान्तरभेदेन वर्णितमित्यर्थः । *[योगेति—योगीश्वरेण याज्ञवल्क्येनेत्यर्थः । ]* निरूपणीयव्यवहारपदानां मध्ये केषाञ्चिन्निरूपणानन्तरं मध्ये प्रसक्त- 1 प्रमाणनिरूपणं कृत्वाऽवसरसङ्गत्या प्राप्तावशिष्टव्यवहारपदनिरूपणप्रसङ्गे तावत् सर्वोपयोगित्वेन दायविभागो निरूप्यत इत्यर्थः। दायशब्दार्थं तावदाह—तत्रेति,—निरूपणीये दायविभागे इत्यर्थः। *[एवेन क्रयादिरूपनिमित्तव्यवच्छेदः । सम्बन्धश्च जन्यजनकभावादिर्धन- 2 स्वामिना सह अन्यस्य पुत्रादेर्बोध्य.। ]* एतेन पूर्वद्रव्यस्वामिसंबन्धिनां तत्स्वाम्योपरमे[2] यत्र द्रव्ये स्वत्वं, तत्र निरूढो दायशब्द इति प्राच्योक्तमपास्तम् । स च—दायश्च । अप्रेत्यादिर्बहुव्रीहिः।तत्राऽऽद्यस्वरूपमाह —तत्रेति,—तयोर्मध्ये इत्यर्थः।"भूर्यापिता"इत्यादि[3]ना वक्ष्यमाणसिद्धान्तमभिप्रेत्याऽऽह—पौत्राणां चेति,—यथाक्रममन्वयः। *[स्वव्यतिरिक्तान्य- 3

१. थ. द. प्रणिधानेन । २. फ' स्वाम्युपरमे । ३. व्यव० १२९. ।

Cole.: Ch. 1, Sec. i, §§ 1—3.

पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति पुत्रसद्भावः स्वामिसद्भावश्च प्रतिबन्धः, तदभावे पितृव्यत्वेन भ्रातृत्वेन च स्वं भवतीति
4 सप्रतिबन्धो दायः। एवं तत्पुत्रादिष्वप्यूहनीयः। ** विभागो नाम द्रव्यसमुदायविषया-
5 णामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम्। ** एतदेवाभिप्रेत्योक्तं नारदेन—"वि-

## सुबोधिनी

जनप्राप्तिमन्तरेण स्वाम्यं भवतीति अप्रतिबन्धो दाय इति ]* । सप्रतिबन्धदायस्वरूपमाह—
3 पितृभ्रात्रादीनामिति,—पितरौ भ्रातरश्चादिर्येषां ते तथाविधाः। एवं *[ तत्पुत्रादिष्वप्यूहनीय इति,—अत्र तच्छब्देन पुत्रपौत्रयोः पुत्रादयो गृह्यन्ते । अयमभिसन्धिः—विद्यमानेषु स्वामिसम्बन्धिषु यस्याव्यवहितः स्वामिसम्बन्धस्तस्य अप्रतिबन्धो दायः, यस्य व्यवहितः स्वामिसंबन्धः, तस्य सप्रतिबन्धो दायः । ]* दायशब्दार्थमभिधाय विभागशब्दार्थमाह
4 —विभागो नाम द्रव्यसमुदायविषयाणामिति । *[ अयमाशयः —अविभक्तद्रव्यसमुदायगोचराणामनेकेषां पुत्रादिस्वाम्यानां तदेकदेशेषु समुदितद्रव्यैकदेशेषु व्यवस्थापनं विशेषेण प्रातिस्विकस्वाम्यस्थापनं विभागशब्दवाच्यमिति । ] * पूर्वं सङ्गतिश्लोके "दायविभागो योगमूर्तिना" इति अभिधाय दायविभागशब्दस्यार्थो विविच्य दर्शितः । तत्र नारदवचनं प्रमाणयितुमाह—एतदेवाभिप्रेत्योक्तमिति । नारदवचनस्य स्वाभिप्रेतार्थपरत्वं

## बालंभट्टी

जनप्राप्तिं विनाऽपि स्वाम्यस्य सत्त्वात्तस्य तत्त्वमिति भावः । द्वितीयस्वरूपमाह—पितृव्यभ्रात्रिति,—पितृव्यश्च भ्राता च तत्प्रभृतीनामित्यर्थः । अभ्यर्हितत्वात्तस्य पूर्वनिपातः। पितृव्यत्वादिकं च धनस्वामिनिरूपितमेव । अत्र वस्तुकथने तात्पर्यं न तु क्रमे । पितृभ्रात्रादीनामिति पाठान्तरम् तत्र क्रम एव; पितरौ च भ्रातरश्च आदिर्येषां ते च इति तदर्थः।]* विशेषान्तरमाह—स्वाम्यभावे चेति । तदभावे उभयाभावे । तत्पुत्रेति पुत्रपौत्रपितृव्यादिपुत्रादिष्वपीत्यर्थः । तत्रापि विद्यमानेषु धनस्वामिसंबन्धिषु यस्य येनाव्यवहितः संबन्धस्तस्याऽऽद्यो यस्य व्यवहितस्तस्य द्वितीय इति भावः । एवं दायशब्दार्थमाह—विभागो नामेति ।
4 *[ अविभक्तद्रव्यसमुदायनिरूपितानामनेकेषां पुत्रादिनिष्ठस्वाम्यानां तदेकदेशेषु समुदितद्रव्यैकदेशेषु तद्विषयतया तन्निरूपिततया व्यवस्थापनं विशेषणप्रत्येकमवस्थापनं —तस्य विभागशब्दवाच्यत्वमित्यर्थः । ] * उक्तार्थं समूलयति — एतदेवेति ।

१. स्वामिनोऽभावे च । २ ख पुत्रव्यस्य० । ३. फ, स्थानं ।

Cole: Ch. I, Sec. i, §§ 4.—5.

भागोऽर्थस्य पैत्रस्य तनयैर्यत्र कल्प्यते। दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥"
इति । पैत्रस्येति स्वत्वनिमित्तसंबन्धोपलक्षणम् ; तनयैरित्यपि प्रत्यासन्नोपलक्षणम् ।
**इदमिह निरूपणीयम्—कस्मिन्काले, कस्य, कथं, कैश्च, विभागः कर्तव्यः— 6
इति । तत्र कस्मिन्काले, कथं, कैश्चेति तत्रतत्र श्लोकव्याख्यान एव वक्ष्यते ।
कस्य विभाग इत्येतावदिह चिन्त्यते ।

## सुबोधिनी

दर्शयति—पैत्रस्येति । स्वत्वनिमित्तसम्बन्धोपलक्षणमित्यादि[६] । एतदुक्तं भवति,·
*[स्वामिसम्बन्धादेव निमित्तादिति यदुक्तं तदुपलक्षणार्थं नारदवचनस्थं पैत्रस्येति पदम् । 5
तनयैरिति पदमव्यवहितसम्बन्धोपलक्षणार्थमिति ।]* सङ्गतिमभिधाय विभागप्रकरणार्थं
निष्कृष्य दर्शयति -- इदमिह निरूपणीयमित्यादिना। तत्र कस्येति द्रव्यस्य निर्देशः,
कथमिति इति कर्तव्यतायाः, कैश्चेति कर्तॄणाम् । तत्र कस्येत्यस्यांशस्य मूलश्लोकानारूढ-
त्वात सकलविभागप्रकरणोपयोगित्वाच्च तमंशं प्रथमतो विचारपथमवतारयति —

## बालंभट्टी

पैत्रस्येति । "तस्येदम्" इत्यण् । पितृयस्येतिकल्पतरुधृतपाठस्तु न युक्तः' — यतो
देवताधिकारपठितत्वात्। यत्र व्यवहारे । "तद्विवादपदं बुधैः" इति पाठान्तरम् ।
तत्र तदिति विधेयविशेषणम् । न्यूनतां परिहरन् तस्य स्वोक्तार्थपरत्वमाह-- पैत्रस्येति ।
*[स्वत्वे निमित्तभूतो यः संबन्धः स्वामिसंबन्धः प्रागुक्तस्तदुपलक्षणार्थमित्यर्थः । तेन 5
पैतामहादेरपि ग्रहणम् ।]* प्रत्येति, — अव्यवहितसंबन्धीत्यर्थः। एतेनैकदेशगतस्यैव
भूहिरण्यादावुत्पन्नस्यैव स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया
अव्यवस्थितस्य गुटिकापातनादिना स्वत्वव्यञ्जनं विभाग इति प्राच्योक्तमपास्तम् ।
— निमित्तभूतसंबन्धस्य साधारणत्वेन नियतैकदेशग्रहणे विनिगमकाभावेन च
तथा दुर्वचत्वात्। अन्यथा तदपि तच्छेषव्यवहारापत्तेर्मिथो विरोधाच्च । एवं सङ्गतिमुक्त्वा
विचारं कर्तुमादौ विभागप्रकरणार्थं निष्कृष्याऽऽह—इदमिति । इह विभागप्रकरणे। अत्र कस्ये-
ति द्रव्यनिर्देशः ; कथमिति इति कर्तव्यतायाः; कैश्चेति कर्तॄणाम्। तत्र चतुर्णा-
म् मध्ये । इह आदौ— तस्य मूलानारूढत्वात् सकलदायप्रकरणोपयोगित्वाच्चेति भावः ।
*[अत्र द्विविधो विचारः।तत्राऽऽद्यविचारस्य विभज्यमानं द्रव्यं विषयः।तत्र सन्देहः किमस्व-
स्य विभागः स्वत्वहेतुः तथा च विभागेन स्वत्वम् । न ततः प्राक्—स्वत्वहेतुभूतविभागाभा-
वात् । उत विभागो न स्वत्वहेतुः । किन्तु जन्मैव । तथा च तत एव स्वत्वात् स्वस्य वि-

१. क. विभागोऽन्यस्य पैत्रस्य । ख. पित्र्यस्य । २.—१३. १. । ३. ख. पित्र्यस्ये० ।
४.छ. होच्यते किन्चा। ५. च. ते किन्चा। ६. थ. द दिना। ७. त. लप्रक० ८ अ० ४. ३. १२०।

7 **किं विभागात्स्वम्, उत स्वस्य सतो विभाग इति—तत्र स्वत्वमेव तावन्निरूप्यते। किं शास्त्रैकसमधिगम्यं स्वत्वम्, उत प्रमाणान्तरसमधिगम्यमिति। 8 **तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तम्—गौतमवचनात्—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" "ब्राह्मणस्याधिकं लब्धम्।" "क्षत्रियस्य विजितम्" "निर्विष्टं वैश्यशूद्रयोः।" इति प्रमाणान्तरगम्ये स्वत्वे

## सुबोधिनी

7 कस्य मिभाग *[इत्येतदिह चिन्त्यत इति। अत्र द्विपर्वा विचारः। तथा हि—विभज्यमानं द्रव्यं विषयः। तत्र सन्देहः किमस्वस्य विभाग उत स्वस्य विभाग; इति तदर्थमर्थान्तरचिन्ताविभागः स्वत्वहेतुरुत नेति। यदि विभागः स्वत्वहेतुस्त तोऽस्वस्य विभागः तेन च विभागेन स्वत्वं न ततः प्राक्—स्वत्वहेतुभूतविभगाभावात्। अतश्चास्वस्य विभाग इति पक्षोदयः। अथ विभागो न स्वत्वहेतुः, अपि तु जन्मैव तदा जन्मनैव स्वत्वात् स्वस्य विभाग इति पक्षोदयः इत्येको विचारः। तमेतं विचारं दर्शयति—कि विभागात् स्वत्वम् उत स्वस्य सतो विभाग इति।] *अपरो विचारः स्वत्वाविषये। तमुपक्षिपति—तत्र स्वत्वमेव तावन्निरूप्यत इति। अत्र तु स्वत्व विषयः, तत्र संशयः—किं शास्त्रैकगोचरं स्वत्वमुत लौकिकप्रमाणान्तरगोचरमिति। तमेनं 8 दर्शयति — कि शास्त्रैकसमधिगम्यामिति। *[पूर्वपक्षं परिगृह्णाति]*—तत्रेति। हेतुमाह—गौतमवचनादिति। तदेव वचनं दर्शयति—स्वामी रिक्थेति। स्वत्वस्य लौकिकप्रमाणान्तरगप्यत्वे दोषमाह—प्रमाणान्तरगम्ये स्वत्व इति। नेदं वचनम् इदं

## बालंभट्टी

भाग इति। अयमेको विचारः। तदाह—किं विभागादिति। स्वं स्वीयम्। स्वस्येति स्वीयस्य सत इत्यर्थः। एतदुपयोगिद्वितीयविचारं तावदाह—तत्रेति,—उक्ते विचारविषय इत्यथः।]*एवंनैतद्विचारं विना तस्य दुष्करत्वं सूचितम्। अत्र विचारे स्वत्वं विषयः। तत्र संशयमाह—किमिति। शास्त्रेति—तन्मात्रेत्यर्थः। प्रमेति लौकिकेत्यर्थः। तत्र पूर्वपक्ष माह—तत्रेति,—तयोर्मध्ये इत्यर्थः। तदेवाऽऽह—स्वामीति,—व्याख्यातमिदं प्राक्। 7 स्फुटीभाविष्यति चानुपद मूले एव। *[यतस्तल्लाभस्तमाह — प्रमाणान्तरेति

१. ख. स्वत्वं। २.—१०. ३९—४२.। ३. त. विविच्यते। ४. शास्त्रेकेति।

Cole.: Ch. I, Sec. i, §§ 7.—8.

नेदंवचनमर्थवत्स्यात् । तथा मनुः—"योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् । याजनाध्यापनाद्वाऽपि यथा स्तेनस्तथैव सः ।" इति अदत्तादायिनः सकाशात् याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे । अपि च लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिति न ब्रूयात्—अपहर्तुरेव स्वत्वात्—अन्यथा स्वं तेनापहृतमिति नापहर्तुः स्वम् । एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा

## सुबोधिनी

गौतमवचनं नार्थवदित्यर्थः । स्वत्वस्य लौकिकत्वे वचनान्तरविरोधमाह—तथेत्यादिना । स्वत्वस्यालौकिकत्वे युक्तिमाह—अपि चेति । तत्र हेतुः—अपहर्तुरेव स्वत्वादिति । विशेषमाशङ्कते—अथेति । परिहरति—एवं तर्हीति । *[अयमभिप्रायः—यदि लौकिकं 8 स्वत्वं तर्ह्यन्यस्य स्व अन्येनापहृते सति तत्रापह्रियमाणो यदि ब्रूयात् 'मम स्वमनेनापहृतम्' इति ततः श्रोतॄणां सभासदाम् अस्य वा स्वमस्य वेति संशयो नस्यात् । यथा लौकिके

## बालंभट्टी

इदं गौतमवाक्यम् । अनुवादे फलाभावात् ]* । वचनान्तरविरोधमाह-तथेति । स्वत्वस्य लौकिकत्वे इत्यत्र योज्यम् । अदत्तेति—षष्ठयन्तं हस्तान्वयि । अन्येनादत्तम् परकीयमाददाति,—तस्य हस्तादित्यर्थः । अग्रे तु फलितार्थ उक्तः । याजनेति—समाहारद्वन्द्वः । अपिना प्रतिग्रहसमुच्चयः । स्तेनत्वादेशस्तद्दण्डप्राप्त्यर्थ इत्याह—दण्डेति । स्वत्वस्यालौकिकत्वे युक्तिमप्याह —अपि चेति । स्वत्वमिति—तदेति शेषः । तत्र हेतुमाह—अपेति—*[तत्सम्बन्धस्यैव प्रत्यक्षविषयत्वात् । ]* उक्तदोषं परिहरन् विशेषमाशङ्कति—अथेति । परिहरति—एवं तर्हीति । *[स्वत्वस्य लौकिकत्वेऽन्यस्य स्वेऽन्येन अपहृते स यदि ब्रूयात् 'मम 8 स्वमनेनापहृतम्' इति तदा श्रोतॄणां सभासदामुक्तसंशयो न स्यात् । यथा लौकिकसुवर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति न वेति न संशयः, तद्वत् स्वत्वेऽपि तदभावः स्याल्लोकतः—तत्कोटिनिश्चयसत्वात् । जायते च संशयस्तस्मात् अपहर्तुः स्वं भवतीति वक्तुमशक्यमिति भावः । यद्वा अथेति पूर्वपक्षवादी प्रष्टव्यः 'अपहर्तुः स्वं न भवतीति प्रमितिरुत्पद्यते न वा' इति । तत्राऽऽद्ये आह-एवं तर्हीति । यथा 'इदं सुवर्णमिदं रजतम्' इत्युत्पन्नायां

१. ख. ग. तथा स्तेनातिदेशे मनुः । २.—८.१४०. । ३. ग. याजनादिकरणेन । 'अपि' इति क्वचिन्नास्ति । ४. क. यते । ५. क. ग. घ. च. अन्यस्वं । ६. ज. अनेनाप० । ७. थ. द. लौकिकत्वे दोषमाह । ८. थ. द. स्य वा स्वमिति । ९. मिता० अन्यथा ।

Cole.; Ch. I, Sec. i, § 8.

स्वमन्यस्य वा स्वमिति संशयो न स्यात् । तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति ।
9 **अत्रोच्यते । लौकिकमेव स्वत्वम्—लौकिकार्थक्रियासाधनत्वात्,—व्रीह्यादिवत् ।
आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनत्वमस्ति ।

## सुबोधिनी

स्वर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति न वेति न संशयः, तथा स्वत्वेऽपि संशयाभावः स्यात् लौकिकत्वात् स्वत्वस्य । जायते च संशयः अतोऽपहर्तुः स्वं न भवतीति वक्तुं न शक्यते इति । अथ वा 'यतोऽन्यस्य स्वमेव गृहीतम् अतोऽपहर्तुः स्वं न भवति' इति वदन् वादी प्रष्टव्यः—अपहर्तुः स्वं न भवतीति प्रमितिरुत्पद्यते न वेति विकल्प्याऽऽद्यं दूषयति—एवं तर्हीति । अयमाशयः—यथेदं सुवर्णमिदं रजतमित्युत्पन्नायां प्रमितौ सुवर्णादिस्वरूपे संशयो न जायते तथा प्रकृतेऽपीति । नापि द्वितीयः। प्रमित्यनुदयादेवापहर्तुः स्वं न भवतीति वक्तुमशक्यत्वादिति बहिरेव परिहृत्य पूर्वपक्षमुपसंहरति— तस्मादिति ।]*सिद्धान्तमाह—
9 अत्रोच्यत इति।*[स्वत्वं लौकिकमित्यत्रानुमानं प्रमाणयति—लौकिकमेव स्वत्वमित्यादिना।
अनुमानं तु स्वत्वं लौकिकम्–लौकिकार्थक्रियासाधनत्वात्।यद्यल्लौकिकार्थक्रियासाधनं तत्तल्लौकिकं यथा व्रीह्यादि। तथा चेदं स्वत्वं तस्माल्लौकिकमिति । यद्यल्लौकिकं न भवति तत्तल्लौकिकार्थक्रियासाधनमपि न भवति यथाऽऽहवनीयादीति ।]* व्यतिरेकव्याप्तिं दर्शयति—आहवनीयादीनां हीति। व्यतिरेकापरिशुद्धमनुमानं न प्रमाणमित्याक्षिपति—नन्वाहवनीयादी-

## बालंभट्टी

प्रमितौ सुवर्णादिस्वरूपे संशयो न भवति तथा प्रकृतेऽपीति भावः। नापि द्वितीयः । प्रमित्यनुदयादेवापहर्तुः स्वं न भवतीति वक्तुं शक्यत्वादिति। पूर्वपक्षमुपसंहरति—तस्मादिति।]* सिद्धान्तमाह—अत्रोच्येति । स्वत्वस्य लौकिकत्वमनुमानेन तावत् साधयति—लौकिकमेवेति । स्वत्वं पक्षः। लौकिकत्वं साध्यम्, लौकिकार्थेति हेतुः । तत्रान्वयव्याप्तौ दृष्टान्तमाह—व्रीह्यादीति । तथा च स्वत्वं लौकिकम्, — लौकिकार्थक्रियासाधनत्वात्; यद्यल्लौकिकार्थक्रियासाधनं तत्तल्लौकिकं; यथा व्रीह्यादिस्वरूपम् तथा चेदं; तस्मात् लौकिकम् इति बोध्यम् । यद्यल्लौकिकं न भवति तत्तल्लौकिकार्थक्रियासाधनमपि न भवति; यथाऽऽहावनीयादिति । व्यतिरेकव्याप्तिमप्याह —अहेति । हिं—यतः । दृष्टान्तव्यतिरेकाप-

---

१. त. स्वंभ । २. त. तु श। ३. त. एतदादि लौकिकमित्यन्तं नास्ति । ४. थ. एतदादि हीत्यन्तं नास्ति ।

नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव । नैतत् । न हि तत्राऽऽहवनीयादिरूपेण पाकादिसाधनत्वम् । किं तर्हि ? प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण । इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वम्, अपि तु स्वत्वेनैव । न हि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति ।

सुबोधिनी

नामिति । अलौकिकस्याप्याऽहवनीयस्य लौकिकपाकादिसाधनत्वात् यद्यदलौकिकं तत्तन्न लौकिकार्थक्रियासाधनमिति या व्यतिरेकव्याप्तिस्तस्याव्यभिचारादनुमानं दुष्टमित्यर्थः ।]*समाधत्ते— नैतदित्यादिना । *[अयमभिसन्धिः—आहवनीयस्य द्वे रूपे अग्नित्वमाहवनीयत्वं च । तथा च आद्येन लौकिकार्थक्रियाकारित्वेऽपि द्वितीयेन न तथात्व तथा सत्यलौकिकाहवनीयादिरूपहीनलौकिकाग्नेः पाकसाधनत्वं न स्यात् । तस्मान्न व्यतिरेकव्याप्तिव्यभिचार इति । ननु तर्हि प्रकृतेऽपि सुवर्णादिरूपेणैव लौकिकक्रयविक्रयाद्यर्थसाधनत्वमस्तु सुवर्णादेर्वस्तुनो, माभूत् स्वत्वरूपेणेत्याशङ्क्याऽऽह— सुवर्णादिरूपेणेत्यादिना । अज्ञातशास्त्रव्यवहाराणां म्लेच्छादीनामपि स्वत्वव्यवहारो दृश्य-

बालंबट्टी

रिशुद्धमनुमानं, तादृशं न प्रमाणमित्याक्षेपं सूचयन् व्यतिरेकव्याप्तौ व्यभिचारमाह— नन्वाहेति । अलौकिकस्यापि तस्य लौकिकपाकादिसाधनत्वादुक्तव्यतिरेकव्याप्तौ व्यभिचारादनुमानं दुष्टमिति भावः । समाधत्ते—नैतदिति । आहवनीयादौ रूपद्वयसत्त्वेऽपि पाकसाधनत्वं न शास्त्रसमधिगम्यम्,—अलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेरेव तत्स्वरूपेण पाकसाधनत्वाङ्गीकारात् । न चालौकिकाहवनीयादिरूपेणैव तदस्तु । तथा हि सत्यलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेः पाकसाधनत्वं न स्यात् । न च सामान्यस्वरूपेण सार्वत्रिकं तदस्तु,—तथा सति तस्यापि लौकिकत्वापत्त्या शास्त्रानर्थक्यापत्तेः । अत एव साधनत्वं फलोपहितत्वं निविष्टं तस्मान्व्याप्तौ व्यभिचार इति भावः । नन्वेवं प्रकृतेऽपि सुवर्णादेः सुवर्णादिरूपेणैव लौकिकक्रयविक्रयाद्यर्थसाधनत्वमास्तां न स्वत्वरूपेणेति कथं तस्य लौकिकत्वसिद्धिरत आह—इह त्विति । सत्वेनैव तद्वत्त्वेनैव तदेव ध्वनयन्नुक्तमुपपादयति —न हीति । लोकविशेषव्यवहारोऽपि स्वत्वस्यालौकिकत्वेऽन्यथानुपपद्यमान-

१. थ. द. अलौकिकाहवनीयत्वं लौकिकाग्नित्वं च । तथा च लौकिकादाग्निरूपेण पाकसाधनत्वं नत्वलौकिकाहवनीयादिरूपेण तथा स० । २. द. एवं च । ३. थ. यदिकार्यसा । ४. थ. द. इह तु सुव० । ५. फ तस्मान्न व्याप्तौ ।

Cole.: Ch. I, Sec. i, § 9.

अपि च,—प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्व-
10 व्यवहारो दृश्यते—क्रयविक्रयादिदर्शनात्। **किं च—नियतोपायकं स्वत्वं लोकसि-
द्धमेवेति न्यायविदो मन्यन्ते। तथा हि। [1]लिप्सासूत्रे तृतीये वर्णके

## सुबोधिनी

ते। अतस्तदन्यथानुपपत्तिरपि स्वत्वस्य लौकिकत्वे प्रमाणमित्याह—अपि चेत्यादिना]* "स्वत्वव्यवहारो दृश्यते"। इत्यनेन स्वत्वव्यवहारः स्वत्वस्य लौकिकत्वे कल्पक इत्यभिहितः। तत्र कल्पकासत्त्वं[2]मर्थापत्तिदूषणं निवारयति—क्रयविक्रयादिदर्शनादिति। तथा हि
10 लिप्सासूत्रे तृतीये वर्णक इति। *[चतुर्थाध्यायप्रथमपादे द्वितीयाधिकरणसूत्रं]*"यस्मिन्
10 प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्"।*[अत्र प्रथमवर्णके क्रत्वर्थपुरुषार्थयो र्लक्षणविचारः। द्वितीयवर्णके गोदोहनादिकं क्रत्वर्थमुत पुरुषार्थमिति। तृतीयवर्णके स्वयं विचारः। अनारभ्य श्रूयन्ते द्रव्यार्जननियमाः। ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिनेति। तत्र सन्देहः—एते नियमाः क्रत्वार्थं उत पुरुषार्था इति। *[पूर्वपक्षस्त्वनारभ्याधीतत्वेऽपि द्रव्यार्जननियमानां क्रत्वर्थत्वानङ्गीकारे अधिकारिणोऽभावात्
10 विध्यानर्थक्यापत्तेः क्रतृप्रयुक्तद्रव्यद्वारा क्रत्वर्थत्वमेव युक्तम्।]*नन्वेष पूर्वपक्ष एव नोदेति—

## बालंभट्टी

स्वस्य तत्त्वे प्रमाणमित्याह—अपि चेति। प्रत्यन्तो म्लेछदेश स्यात्। सर्वथा शास्त्र ज्ञानाभावसूचकमिदम्। तदाह—अदृष्टेति,—अज्ञातेत्यर्थः; म्लेच्छादीनामिति यावत्। ननु तद्व्यवहारस्य तत्कल्पकत्वमुक्तं; तत्र कल्पकसत्व एव न मानमिति कथमर्थापत्त्या तत्सिद्धिरत आह—क्रयेति। स्वत्वस्य तत्त्वं न्यायवित्सम्मतमपीत्याह—किं चेति। नियतोऽपेति—प्रतिग्रहार्जनादीत्यर्थः। विदः तेऽपि कथमित्याशङ्कायामुक्तमुपपादयति—
10 तथा हीत्यादिनाम्। *[लिप्सेति,—चतुर्थाध्याये प्रथमपादे द्वितीयाधिकरणसू-
10 त्रम्।]*"यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्" इति। *[तत्र प्रथमव-र्णके क्रत्वर्थपुरुषार्थयोर्लक्षणविचारः द्वितीयवर्णके गोदोहनादिकं क्रत्वर्थमुत पुरुषार्थ-मित्यादिविचारः। तृतीयवर्णके स्वयं विचारः। अनारभ्य पठ्यन्ते द्रव्यार्जननियमाः —ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिनेति।

---

१. जै० ४. १. २. । २. थ. द. त्वाख्यम।

Cole.: Ch. I, Sec. i, §§ 9—10.

## सुबोधिनि

क्रतुसिद्ध्यभावात्। तथा हि। द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्य लौकिकहेतुजन्यत्वात् वैदिकहेत्वन्तराभावान्नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वेनान्यार्थत्वादकारणककार्योत्पत्त्यभावाच्च स्वत्वमेव नोत्पद्यते। ततः स्वत्वाभावात् क्रतोरभावो यतः स्वेनैव क्रतुसिद्धिर्नास्वेन। मैवम्। जन्मना प्रतिग्रहादिभिश्चार्जितस्य धनस्य स्वत्वं लोकासिद्धमिति लोके वृद्धव्यवहारसिद्धत्वात्। ननु नार्जनोत्पन्नः कोऽपि धर्मो मानगम्यो यत्स्वत्वमिति व्यवह्रियते। मैवम्। अर्जनादर्जकार्ज्यसम्बन्धो यः स्वस्वामिभावसम्बन्धस्तदेव स्वत्वम्। तच्च पृथङ्मानं नापेक्षते; यतः क्रियागर्भः कर्तृकर्मणोः सम्बन्धो लोकसिद्धः। न चार्जनक्रियापाये तज्जन्यस्वत्वरूपसम्बन्धस्यापायः सम्बन्धिनोराश्रययोरनपायात्। न हि पितुः क्रियापाये पितृत्वमपैति। तेन लौकिकत्वात् स्वत्वस्य स्वेनैव च क्रतुसिद्धेः सिद्धिमर्जननियमानां क्रत्वर्थत्वामिति। राद्धान्तस्तु--धनार्जनप्रवृत्ते ह्यधिकारिणि अर्थलभ्ये सति अर्जननियमानां क्रतुनिवेशकल्पना न युक्ता। धनकामाधिकारी च रागात् प्रवृत्तो न नियतं प्रवर्तते। अतो नियमार्थं विधिवाक्यप्रवृत्तेर्ब्राह्मणः प्रतिग्रहादिना धनमर्जयेदित्यादिविधेर्नानर्थक्यम्। किं च क्रत्वर्थत्वेऽर्जनस्य कृत्स्नमेवार्जितं क्रत्वर्थमिति जीवनोपायाभावात् सर्वक्रतुलोपः स्यात्। तस्मात् पुरुषार्था नियमाः। नियमातिक्रमे च पुरुषस्य दोषो न क्रतुवैगुण्यम्। पूर्वपक्षे तु क्रत्वर्थत्वान्नियमानां तदतिक्रमे क्रतुवैगुण्यमिति। प्रकृतमनुसरामः। *[स्वत्वं लौकिकमिति न्यायाविदो मन्यन्त इत्युक्तम्। तदु- 10

## बालंभट्टी

तत्र सन्देहः— किमेते क्रत्वर्था उत पुरुषार्था इति। तत्र पूर्वपक्षः तेषां तत्त्वेऽपि क्रत्वर्थत्वानङ्गीकारे अधिकारिणः अभावाद्विध्यानर्थक्यापत्तेः कर्तृत्वप्रयुक्तद्रव्यद्वारा क्रत्वर्थत्वमेव युक्तमिति।*[अयं भावः—यथा क्रतुविधिना आक्षिप्ते द्रव्यार्जने सोमं क्रीणातीत्यादिर्द्रव्यार्जननियमः क्रत्वर्थस्तथैव प्रतिग्रहादिनियमोऽपि]* अन्यथा तस्य द्रव्यप्राप्तिस्वरूपत्वे तत्कार्ये क्षुत्प्रतिघातादौ चानुपयोगात् वैयर्थ्यं स्यात्। न च तत्र प्रकरणं क्रत्वर्थबोधकमस्ति नात्रेति वैषम्यमिति वाच्यम्। अदृष्टोपायापेक्षक्रतुसामर्थ्येन अदृष्टप्रयोजनापेक्षनियमसामर्थ्येन चांगत्वसिद्धेः। न च सर्वस्य द्रव्यस्य क्रयार्थत्वाज्जीवनं स्यादिति वाच्यम्,— अनियमोपार्जितेन तत्सिद्धेः। यद्वा जीवनं विना क्रत्वसिद्धेः[11] क्रतुविधिभिरेव स्वार्थसिद्ध्यर्थं नियमोपार्जितस्य जीवनार्थत्वमभ्युपागतमिति[12]। द्रव्यप्राप्तिरूपद्रव्यार्जनमत्रोदाहरणमिति तन्त्ररत्नकृदुक्तं तु वार्तिकविरुद्धं, युक्ति विरुद्धं च। विधेयस्यैव मीमांसायां विचा 10

१. त. द. स्यालौ. २. थ. द. त्वस्याभा। ३. थ. द द्रव्यस्य। ४. थ. द. चैवमर्जे। ५. थ. द. स्वेन च। ६. त. कारे च। ७. द. यथेष्टाचरणात्। ८. थ. द. सर्वक्र। ९. प. फ. कर्तृप्र०। १०. फ. स्वरूपे। ११. फ. क्रत्वर्थसि०। १२. फ जीवनार्थम०।

Cole.: Ch. I, Sec. i, § 10.

द्रव्यार्जननियमानां

क्रत्वर्थत्वे स्वत्वमेव न स्यात्—स्वत्वस्यालौकिकत्वादिति पूर्वपक्षसम्भवमाशंक्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा।

सुबोधिनि

10 पपादयति—तथा हि लिप्सासूत्र इत्यादिना। *[तत्र द्रव्यार्जननियमाः क्रत्वर्था इत्यमुं पूर्वपक्षमाक्षिपति— द्रव्यार्जननियमानामित्यादिना पूर्वपक्षासम्भवमाशकङ्क्येत्यन्तेन। अयमभिप्रायः—द्रव्यार्जननियमाः क्रत्वर्था उत पुरुषार्था इति लिप्सासूत्रतृतीयवर्णके विचारः। तत्र क्रत्वर्था इति पूर्वपक्षः। स न घटते। तथा हि द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्यालौकिकत्वेन लौकिकहेत्वजन्यत्वाद्वैदिकोपायान्तराभावादर्जननियमानां क्रत्वर्थत्वे-नान्यार्थत्वात् स्वत्वमेव नोदेति। तथा च स्वत्वाभावादस्वेन च क्रत्वसिद्धेः. क्रत्वर्था
10 द्रव्यार्जननियमा इति पूर्वपक्षो न घटत इति।]* *[पूर्वपक्षमुज्जीवयति—द्रव्यार्जनस्य प्रति-ग्रहादिनेति। अयमभिसन्धिः—प्रतिग्रहादिनियमाः स्वत्वं साधयन्त एव क्रतूपयुक्तधन-द्वारा क्रत्वर्था भविष्यन्ति यथाऽवधातो वितुषीभावं कुर्वन्नेव क्रतूपयुक्तव्रीहिद्वारा क्रत्वर्थः। तच्च स्वत्वं वृद्धाः पुत्रत्वादिकमिव लौकिकं मन्यन्ते। अतो न क्रतुसिद्ध्यभाव इति।]*
10 *[ननु भवत्वर्जनं स्वत्वसाधनम्—अर्जननियमानां क्रत्वर्थत्वात्। अर्जनस्यापि क्रत्वर्थत्वेना-

बालंभट्टी

रादिति बोध्यम्। एवमाक्षिपति—द्रव्येति शङ्क्येत्यन्तेन। द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्यालौकिकत्वेन लौकिकहेत्वजन्यत्वेन वैदिकहेत्वन्तराभावेन नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वे नान्यार्थत्वेनाकारणककार्योत्पत्त्यभावेन च स्वत्वानुत्पत्त्या स्वस्याभावादस्वेन
10 च क्रत्वसिद्धेः क्रत्वर्था नियमा इति पूर्वपक्षासंभव इत्यर्थः। *[तमुज्जीवयति—द्रव्यार्जनस्येति। वैपरीत्येनान्वयः। प्रतिग्रहादिनियमा; स्वत्वं साधयन्त एव क्रतूपयुक्तध-नद्वारा क्रत्वर्था भविष्यन्ति : यथाऽवाघातो वितुषीभवं कुर्वन्नेव क्रतूपयुक्तव्रीहिद्वारा क्रत्वर्थस्तद्वत्। तच्च स्वत्वं जन्मना पुत्रत्वादिकवत्। आर्जनेनार्जकार्ज्ययोः तादृशस्वत्ववत् स्वस्वामिभावसंबन्धरूपं लौकिकमेव मन्यन्ते वृद्धाः;]*यतः—"सवंधः कारके-भ्यो यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायामभिधीयिते॥" इति हर्युक्तेः। क्रिया-मूलकः कर्तृकर्मणोः संबन्धो लोकसिद्धो न मानान्तरापेक्षः। न चैवमर्जनक्रियापाये तज्ज-न्यस्य तस्याप्यपायः। संबन्धिनोराश्रययोः सत्वात् न हि पितुः क्रियापाये पितृत्वमपैति। तथा च लौकिकत्वात् स्वत्वस्य स्वेन च क्रतुसिद्धेर्न तदभाव इति सिद्धं तेषां
10 तत्त्वमिति भावः। *[नन्वर्जनस्य स्वत्वसाधनत्वेऽपि तन्नियमानां क्रत्वर्थत्वादर्जनस्यापि

१. द. क्रत्वर्थत्वे न लौ०। २. थ. प्रायः। ३. थ. द्रव्यद्वा। ४. थ द. स्वत्वमे। ५. फ. हेतुभावक०। ६. फ. प्युपायः।

Cole.: Ch. I, Sec. i, § 10.

ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संवर्तेत । प्रलपितमिदं केनापि 'अर्जनं स्वत्वं नापादयतीति विप्रतिपिद्धम्' इति वदता। तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्। अतो 'नियमातिक्रमः पुरुषस्य न क्रतोः' इति । अस्य चार्थ एवं विवृतः—

सुबोधिनि

न्यार्थत्वात् स्वमेव न भवतीति क्रत्वभावस्तदवस्थ एवेत्याक्षिपति—ननु चेति । उपहसन् परिहरति प्रलपितमिदमिति । अर्जनं स्वत्वं नापादयतीति वदता केनापि प्रलपितम् । कुतः—विप्रतिषिद्धमिति । (एवं योजना?) अयमर्थः—अर्जनं नामार्जकधर्मः सम्बन्धरूपः, स द्विनिष्ठः पितापुत्रत्ववत् । तथा चार्जनमन्तरेणार्जनस्यानिष्पत्तेः 'मम मातावन्धया' इतिवदर्जनं स्वत्वं नापादयतीति वचनं विरुद्धमिति ।]* विचारप्रयोजनमुक्तमिति,— अधिकरणविचारप्रयोजनमित्यर्थः। *[प्रयोजनस्वरूपं दर्शयति— 10 अतो नियमातिक्रम इति । पूर्वोक्तप्रयोजनग्रन्थार्थौ विवृतो गुरुणा । तमर्थमाह— अस्य चार्थ एवं विवृत इत्यादिना पुरुषस्यैव नियमातिक्रमदोषे इत्यन्तेन। एष

बालंभट्टी

क्रत्वर्थत्वेनान्यार्थत्वात् स्वमेव नेति क्रत्वभावस्तदवस्थ एवेत्याह—ननु चेति संवर्तेतेत्यन्तेन। उपहसन् परिहरति – प्रलपीति। अर्जनं स्वत्वं नापादयतीति वदता केनापि प्रलपितमिदम्; यतो मिथो विप्रतिषिद्धमित्यर्थः । यद्वा केनापि प्रलपितमिदम् । तत्र हेतुमाह-अर्जनमिति। यत इत्यादिः। वदता इत्यस्य गुरुणेत्यत्रान्वयः। अर्जनं नामार्जकधर्मः सम्बन्धरूपः स च द्विनिष्ठः पितापुत्रवत्। तथा चार्ज्यं विनाऽर्जनस्यानिष्पत्तेः'मेमाता वन्ध्या'इतिवदर्जनं स्वत्वं नापादयति इति वचनं मिथो विरुद्धमित्यर्थः ।]* ननु पूर्वपक्ष्युक्तत्वादेव नायं तत्सिद्धान्तोऽत आह—सिद्धान्तेति। इत्थं हि सः धनार्जनप्रवृत्तेत्यधिकारिणि अर्थलभ्ये सति तन्नियमानां क्रतुनिवेशकल्पना न युक्ता । धनकामाधिकारे च रागात् प्रवृत्तो न नियतं प्रवर्तते । अतो नियमप्रवृत्तेन तद्विध्यानर्थक्यम् किं चार्जनस्य क्रत्वर्थत्वे कृत्स्नमेवार्जितम् सर्वं क्रत्वर्थमिति जीवनोपायाभावात् सर्वक्रतुलोपः स्यात् । तस्मात् पुरुषार्थानियमा इति । विचारेति,—अधिकरणविचारप्रयोजनमित्यर्थः । प्रयोजनस्वरूपमेवाऽऽह —अतो नियमातीति,— तत्प्रयुक्तदोष इत्यर्थः । अस्य च प्रयोजनपरग्रन्थस्य मूलोक्तस्य विवृतः; गुरुणेति शेषः । दोष इतीत्यन्तेन ग्रन्थेनेति भावः । पूर्वपक्षे पुरुषस्य

१. घ. तेति । २. थ. द. अप । ३. त. षा इ । ४. फ. तोऽर्नि ;

Cole.; Ch. I, Sec. i, § 10.

यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिः । नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे । राद्धान्ते तु अर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति, पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्—अन्यथा क्रतुसिद्ध्यभावात् ।
11 ** न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम्—लोके तत्र स्वत्वप्रसि
12 द्ध्यभावात्, व्यवहारविसंवादात् । ** एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते

## सुबोधिनी

तात्पर्यार्थः—पूर्वपक्षे पुरुषस्य नियमातिक्रमदोषो नास्ति । किन्तु नियमातिक्रमार्जितद्रव्येण न क्रतुसिद्धिः । अतः क्रतुवैगुण्यम् । राद्धान्ते तु नियमानां पुरुषार्थत्वात् तदतिक्रमे पुरुषस्य दोषो, न क्रतुवैगुण्यमिति ।]* फलितार्थमाह—नियमातिक्रमार्जितस्यापीति । अन्यथा क्रतुसिद्ध्यभावादिति,—*[अन्यथा नियमातिक्रमार्जितद्रव्यस्यापि स्वत्वानङ्गीकारे नियमानां क्रत्वर्थत्वेन तदर्जितस्यापि क्रत्वर्थत्वेन स्वत्वस्याप्यलौकिकत्वे[1] स्वत्वाभावे जीवनमपि दुर्लभमिति कर्तुरभावात् क्रतोरभाव इत्यर्थः।]* ननु यदि नियमातिक्रमार्जितेऽपि स्वत्वं तर्हि चौर्यादिनापि[2] प्राप्तस्य स्वत्वप्रसङ्ग इत्याशङ्क्य परिहरति—न चैताव-

## बालंभट्टी

दोषः[3], किं तु ततो न क्रतुसिद्धिः—क्रतुवैगुण्यात्[4] । सिद्धान्ते तु पुरुषस्य
10 दोषो न च क्रतुवैगुण्यमिति तात्पर्यम् । *[फलितमाह — नियमेति ।
10 तथा चेत्यादि सिद्धान्तेनेति[5] भावः । अपिः कैमुतिकन्यायसूचकः]* *[अन्यथा नियमातिक्रमार्जितस्य स्वत्वानङ्गीकारे नियमानां क्रत्वर्थत्वेत तदर्जितस्यापि तत्त्वेनस्व-
11 स्वस्यालौकिकत्वे स्वत्वाभावेन जीवनदौर्लभ्यात्तदभाव इत्यर्थः।]* *[ननु तदतिक्रमार्जितेऽपि स्वत्वाङ्गीकारे चौर्यादिप्राप्तस्यापि स्वत्वप्रसङ्गः। अतः प्रसङ्गात् मध्यमदोषपरिहारं सूचयन्नाह —न चैतावेति,—न हीत्यर्थः। हेत्वासिद्धिं परिहरति—व्यवेति। प्रसिद्धक्रयाद्यदर्शनादित्य-
12 र्थः।]*[एवं स्वत्वस्य लौकिकत्वे साधिते अलौकिकत्वसाधकप्रागुक्तयुक्तिं क्रमेण खण्डयति— एवं प्रतीत्यादिना । विजितेत्यत्रभावे क्तः । जयादय उपाया इत्यस्याग्र सर्वत्रानुषङ्गः

१. थ. द. कत्वाल्लौकिकस्व । २. थ. द. दिप्राप्तस्यापि । ३. न ततो दोषः । ४. फ ण्यम् । ५. प. सिद्धान्तिनेति ।

ब्राह्मणस्य प्रतिग्रहादय उपायाः, क्षत्रियस्य विजितादयो वैश्यस्य कृष्यादयः, शूद्रस्य शुश्रूषादय इत्यदृष्टार्थनियमाः। रिक्थादयस्तु सर्वसाधारणाः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इत्युक्तेः। तत्राप्रतिबन्धो दायो रिक्थम्; क्रयः 13 प्रसिद्धः; संविभागः सप्रतिबन्धो दायः; प्रतिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः; अधिगमो निध्यादेः प्राप्तिः—एतेषु निमित्तेषु सत्सु स्वामी भवति—ज्ञातेषु ज्ञायते स्वामी। "ब्राह्मणस्याधिकं लब्धम्" इति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम्; "क्षत्रियस्य विजितम्" इत्यत्राधिकमित्यनुवर्तते। क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम्। "निर्विष्टं वैश्यशूद्रयोः" इति अत्राप्यधिकमित्यनुवर्तते। वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणम्। शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम्। एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु

## सुबोधिनी

तेत्यादिना। ज्ञातेषु ज्ञायते स्वामीति,—*[एतेषु निमित्तेषु इत्यनुवर्तमाने एतेषु निमित्तेषु ज्ञातेषु स्वामीति ज्ञायते इत्यर्थः।]* उक्तन्यायमन्यत्राप्यतिदिशति— एवमनुलो- 13

## बालंभट्टी

अदृष्टेति—द्रव्याद्यदृष्टेत्यर्थः। इति नियमा अदृष्टार्था इत्यन्वयः। अथ साधारणविध्यभावेऽपि तत्परिगणकगौतमवाक्यानर्थक्यरूपालौकिकत्वसाधकप्रागुक्तयुक्तिं खण्डयति—रिक्थादयस्त्वित्यादिना। *[सर्वेति—वर्णमङ्करेत्यर्थः।]* तदर्थं वक्तु तानेवाऽऽह—स्वामीति। त- 12 त्र—तेषां मध्ये। अनन्येति—अमन्यस्वामिकस्येत्यर्थः। एवं पदार्थानुक्त्वा वाक्यार्थमाह— एतेष्विति। यथाश्रुते साकाङ्क्षत्वादाह—भवतीति। तदर्थमाह—ज्ञातेषु ज्ञायते स्वामीति—एतेषु निमित्तेषु स्वामीति ज्ञायते इत्यर्थः। अनेन पूर्वपक्षाभिमतनिरासः, —एतदर्थतया साफल्यात्। अग्रिमार्थमाह — ब्राह्मेत्यादि। सप्रतीकं लब्धमित्येतत्स्वारस्याद्वचनान्तरैकवाक्यत्वादत एव साहचर्याच्छेषपूरणेनाऽऽह—प्रतीति। *[अधिकम् 13 इत्यस्योत्कृष्टमित्यर्थः।]* तदाह— असाधेति। विजितमित्युपलक्षणम्। भावेक्तमित्याह — विजयदण्डेति। अधिकमित्यनुवर्तत इत्यर्थः। भोगरूपनिर्वेशाशयेनाऽऽह—कृषीति। आदिना वाणिज्यादिपरिग्रहः। न्यूनतानिरासायोक्तन्यायमन्यत्राप्यतिदिशति —एवमिति।

१. गौ० १०, ३९.। २. ख. कृतेषु। ३. गौ० १०, ४०.। ४. गौ० १०, ४१। ५. गौ० १०, ४२। ६. क ०कमि०। ७. त. पु ज्ञा।

Cole.: Ch. I, Sec. i, §§ 12—13.

स्वत्वहेतुषु यद्यदसाधारणमुक्तं "सूतानामश्वसारथ्यम्"[1]इत्यादि तत्तत्सर्वं निर्विष्टशब्देनो-
च्यते—सर्वस्यापि भृतिरूपत्वात्, "निर्वेशो भृतिभोगयोः" इति[2] त्रिकाण्डीस्मरणात्।
14 तत्तदसाधारणं वेदितव्यम्। ** यद्यपि "पत्नी दुहितरश्च"इत्यादिस्मरणं तत्रापि स्वामिसं-
बन्धितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं[3]
15 स्मरणमिति सर्वमनवद्यम्। ** यदपि मम स्वमनेनापहृतमिति न ब्रूयात्स्वस्वस्य लौकिकत्व
16 इति तदप्यसत्—स्वत्वहेतुभूतक्रियादिसंदेहात्स्वत्वसंदेहोपपत्तेः। ** विचारप्रयोजनं तु

## सुबोधिनी

14 मजानामित्यादिना। *[एतेषु निमित्तेषु ननु "पत्नी दुहितरः" इत्यादिभिर्वचनैः स्वामिनोऽ-
भावे पत्न्यादीनां स्वामित्वप्रतिपादनात् स्वत्वस्य लौकिकत्वे एतद्वचनजातं विरुध्यत
इत्याक्षिप्य*] परिहरति—*[यदपि पत्नी दुहितरश्चेत्यादिना।स्वत्वस्य लौकिकत्वे पूर्वपक्षिणा-
यद्दूषणमुक्तं तत्परिहर्तुमनुभाषते—यदपि मम स्वमिति। एतदुक्तं भवति—स्वत्व-
स्यालौकिकत्वे 'मम स्वमनेनापहृम्' इति न ब्रूयात्। अपहर्तुरेव स्वत्वात्। यदि ब्रूयात्
तर्हि मम स्वमनेनापहृतमित्युक्ते मध्यस्थानां संशयो जायते स न घटते स्वर्णादिस्वरूप
15 इवेति। परिहरति—तदप्यसंदित्यादिना। *[अयमर्थः—एतादृशि स्थलेऽन्यस्वस्य स्वं तेनाप-
हृतमिति ज्ञानमात्रमुत्पद्यते आवेदकवचनबलात्। प्रतीतिर्हि सा न प्रमितिः। तथा च
विप्रतिपत्तेः कारणात् सन्देहो जायते। तथा हि मम स्वमनेनापहृतमिति वादिनाऽभिहिते
प्रतिवादिना तद्विपरीते चाभिहिते मध्यस्थानां सन्देहो जायते अनेनापहृतमथ वा क्रयादिना
लब्धमिति।]* एवं च स्वत्वकारणभूतक्रयादिषु सन्देहात् कार्यभूतस्वत्वेऽपि संशयो भवतीति।

## बालंभट्टी

14 हेतुषु तेषां मध्ये तत्तदिति। तेषामित्यादिः। *[ननु स्वत्वस्य लौकिकत्वे "पत्नीदुहितरः"
इत्यादिवचनजातं विरुद्धम्। तेन स्वामिनोऽभावे पत्न्यादेः स्वामित्वप्रतिपादनादत आह—
यदपीति।]* अत्रापि वचनज्ञातेऽपि। तदभावे इति शेषः। क्रमस्मरणमिति पाठः। एवदत्ता-
दायीत्यनेन दण्डविधानमप्युपपन्नम्।अदत्तेत्यनेनैव तस्य परकीयत्वसूचनेनातत्त्वेन तथाप्रेरणया
ततस्तद्ग्रहणे तेषां तत्त्वस्योचितत्वात्। तदाह--सर्वमिति। प्रागुक्तं तृतीयं दोषमुद्धरति—
यदपीति। न ब्रूयादिति—अपहर्तुरेव स्वत्वात्। यदि ब्रूयात्तर्हि मध्यस्थानां संशयो न

---

१. औशनसामिति केचित्। २. तृ० ना० २१४.। ३. क. निवर्तनार्थं। ४. व्य० १३५.।

Cole.: Ch. I, Sec. i, §§ 13—16.

" यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च ॥" इति शास्त्रैकसमधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्राणां तदविभाज्यमेव । यदा तु लौकिकं स्वत्वं तदाऽसत्प्रतिग्रहादिलब्धस्यापि स्वत्वात् तत्पुत्राणां तद्विभाज्यमेव । "तस्योत्सर्गेण शुद्ध्यन्ति" इति प्रायश्चित्तमर्जयितुरेव तत्पुत्रादीनां तु दायत्वेन स्वत्वमिति न तेषां दो-

## सुबोधिनी

*[ननु साधुनिरूपितं स्वत्वस्य लौकिकत्वम्। तथाऽप्ययुक्तमिदं विभागप्रकरणे स्वत्वगतलौकिकत्वालौकिकत्वयोरप्रयोजकत्वादित्याशङ्कयाऽऽह—विचारप्रयोजनं त्वित्यादिना जप्येन तपसैव चत्यन्तेन।]* "यद्गर्हितेन" इत्येतद्वचनमर्थाद्व्याचक्षाणः पूर्वपक्षसिद्धान्तयोर्विभागप्रकरणोपयोगिनी प्रयोजने दर्शयति—शास्त्रैकसमधिगम्य इत्यादिना । ननूद्देशक्रमेणोद्दिष्टविषयविचारो युक्तः । अथ मतं प्रयोजनान्तरानुसारेणोद्देशक्रमानादरेणापि विचार इति, तर्हि न तत्प्रयोजनान्तरं पश्यामः । तथा हि । तत् किं हेतुहेतुमद्भावः, उत सूचीकटाहन्यायेनाल्पता, अथ वाऽन्यत् ? न प्रथमः—स्वत्वगतलौकिकत्वानपेक्षत्वात् वक्ष्यमाणविचारस्य । न द्वितीयः—बहुयुक्तिसाध्यत्वाल्लौकिकत्वस्य । न चरमः—अप्रदर्शनादेव । अतः कृतकरिष्यमाणविचारावनसरदुस्स्थावित्यमुमाक्षेपमभिप्रायतः परिहरन् 16

## बालंभट्टी

स्यात् । सुवर्णादिस्वरूपे इवेति शेषः । स्वत्वहेत्विति । तादृशस्थले आवेदकवचनादन्यदीयमनेनापहृतमिति ज्ञानमात्रोत्पत्तावपि तस्याप्रमाणत्वेन विप्रतिपत्तिकारणवादिना तथाऽभिहिते प्रतिवादिना चान्मथाऽभिहिते मध्यस्थानामनेनापहारलब्धमथ वा क्रयादिलब्धमिति स्वत्वकारणभूतक्रयादिषु संदेहात्तत्कार्यभूतस्वत्वेऽपि संदेहसंभवादित्यर्थः। ननु स्वत्वस्य निरूपणमत्रप्रकरणे नोपयुक्तं तल्लौकिकत्वयोर्विभागप्रयोजकत्वादत आह—विचारप्रयोजनं त्विति । उत्सर्गेण—त्यागेन। न केवलं तावन्मात्रमित्याह—जप्येनेति । इतीत्यस्योक्तत्वादिति शेषः। उभयत्रापि तदेतदुपयोग्याह—शास्त्रैकेति। गर्हितत्वं द्वेधा निषिद्धत्वमविहितत्वं चेत्याह—असत्यादि । सिद्धान्ते तद्वचनविरोधं परिहरति—तस्योत्सेति । ननु दायत्वेन तत्वेऽपि

१. क. तपसाऽपि । २. थ. द. त्येवमा । ३. त. पर्योगप्रयोजनं । ४. त. अद० ।

Cole.: Ch. I, Sec. i, § 16.

षसंबन्धः—" सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च
17 सत्प्रतिग्रह एव च" ॥ इति मनुस्मरणात् । ** इदानीमिदं संदिह्यते विभागात्स्वमुत
18 स्वस्य सतो विभाग इति। ** तत्र विभागात्स्वमिति तावद्युक्तम् जातपुत्रस्याऽऽधानविधा-

## सुबोधिनी

प्रथमोद्दिष्टं विचारं परिगृह्णाति—इदानीमिदं सन्दिह्यत इति । अयमभिप्रायः—विभागोऽपि लौकिकः । तद्गतनियमा एवालौकिकाः । जन्मादिकमपि लौकिकम् । एवं स्वत्वस्य लौकिकत्वे सिद्धे लौकिकविभागादिजन्यत्वं घटते नेतरथा । अतः स्वत्वगतलौकिकत्वविचारो हेतुः, अयं तु विचारो हेतुमानिति तदानन्तर्यमस्योचितमिति । अनेनैवाभिप्रायेण
18 चेदानीमित्युक्तिः।जातपुत्रस्याऽऽधानविधानादिति,—*["जातपुत्रःकृष्णकेशोऽग्नीनादधीत" इति श्रुतिवाक्येनाऽऽधानविधानादित्यर्थः । अस्य वाक्यस्यायमर्थः,—जातपुत्रोऽपत्यवान् ; पुत्रशब्दोऽपत्योपलक्षणम् ; कृष्णकेशः पूर्ववयस्कः समर्थ इति यावत् । एवंविधाधिकारी

## बालंभट्टी

परम्परयादोषसंबंधोऽस्त्येवाऽऽत आह— सप्तेति । वित्तलाभोपाया इत्यर्थः। ननूद्देशक्रमेणोद्दिष्टविषयविचारो नान्यथा । न च कारणान्तरेणात्र तथा तस्यादर्शनात् । न च हेतुहेतुमद्भावः — वक्ष्यमाणविचारस्य स्वत्वगतलौकिकत्वानपेक्षत्वात् । न च सूचीकटाहन्यायः—लौकिकत्वस्य बहुयुक्तिसाध्यत्वादन्यस्य कस्याचिददर्शनाच्च अतः कृतकरिष्यमामाणविचारावनवसरदुःस्थाविति चेत्—न । स्वत्ववद्विभागस्यापि लौकिकत्वेन तद्गतनियमानामेवालौकिकत्वेन जन्मादेरपि लौकिकत्वेनोक्तरीत्या स्वत्वस्य लौकिकत्वे सिद्धे एव लौकिकविभागादिजन्यत्वस्य तत्र घटमानत्वं नान्यथेति कृतविचारो हेतुः, करिष्यमाणविचारो हेतुमानिति तस्येतदानन्तर्यमुचितमित्याशयात्तदेतत् ध्वनयन्नाह —इदानीमिति,—तदनन्तरमित्यर्थः। तथा च उक्ताशयेनैवेदानीमित्यस्योक्तिरिति भावः । यद्यप्युक्तप्रतिज्ञायां स्वस्यास्वस्य वेत्येव शाब्दः सन्देहस्तथाऽप्यार्थिकमुक्तमेवाऽऽह—किं विभेति ।
18 तत्र तयोर्मध्ये । *[जातेति—" जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यनेन इति शेषः। तत्र पुत्रशब्दोऽपत्यमात्रोपलक्षणं कृतैकशेषद्विवचनान्तेन बहुव्रीहिर्वा ; कृष्णाः केशा यस्येत्यनेन पूर्ववयस्कत्वं समर्थत्वमिति यावत् । एवंविधोऽधिकारी आधानं कुर्यादिति तदर्थः ।

---

१.—१०. ११५. । २. थ. द. वं च स्व० । ३. थ. द. मस्य विचारस्यो ।

Cole.: Ch. I, Sec. 1, §§ 16—18.

नात्। यदि जन्मनैव स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्य-साध्येष्वाधानादिषु पितुरनधिकारः स्यात्। "तथा विभागात्प्राक् पितृप्रसादलब्धस्य 19 विभागप्रतिषेधोनोपपद्यते—सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात्; यथाऽऽह—"शौर्य भार्याधने चोभे यच्च विद्याधनं भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥"

## सुबोधिनी

आधानं कुर्यादिति। नन्वेतद्वचनमाधानं विधत्ते, न तु विभागात् स्वत्वप्रतिपादनपर-मित्याशङ्क्य तत्परत्वमाह—यदि जन्मनैवेत्यादिना। अयमभिप्रायः—जन्मनैव स्वत्वे उत्पन्नमात्रस्यापि द्रव्यस्वाम्यात् द्रव्यस्य साधारणत्वेन द्रव्यसाध्ये पतिपत्नीमात्रसाध्य आधानादौ कर्मण्यनधिकारः स्यादिति। आदिशब्दादवश्यकर्तव्यश्राद्धाद्युपसंग्रहः।]* प्रति-षेधस्य प्राप्तिपूर्वकत्वाज्जन्मनैव स्वत्वपक्षे प्रीतिदत्तस्य विभागप्राप्तिरेव नास्तीति तत्प्रति-षेधोऽपि नोपपद्यत इत्याह—तथा विभागादिति। ननु सति हि कुड्ये चित्रकर्म। तादृशः प्रतिषेध एव नास्तीत्याशङ्क्य प्रतिषेधकं वचनं दर्शयति - यथाऽऽह शौर्यभार्याधने इति। किं च जन्मनैव स्वत्वे जातमात्रस्यापि स्वत्वस्य विद्यमानत्वात् तस्यानुज्ञायामप्यसामर्थ्यात् द्रव्यस्य सर्वसाधारणत्वेनैकेन दातुमशक्यत्वात् प्रीतिदानस्याप्यभावात् प्रीतिदानप्रतिपादकम-

## बालंभट्टी

नन्वस्य तद्विधायकत्वेऽपि विभागात् स्वत्वस्य कथमितो लाभोऽत आह—यदि जन्मेति। एवेन तद्व्यवच्छेदः—उत्पन्नेति तन्मात्रस्येत्यर्थः। द्रव्यस्वाम्येन द्रव्यस्य साधारणत्वादिति भावः।]* तदाह—तत्स्वामिति। आधानेति पितृमात्रसाध्येऽपीत्यर्थः। आदिना अवश्यकर्त-व्यश्राद्धजातकर्मादिपरिग्रहः। ननु वचनात्तत्राधिकार इति चेन्निषेधस्य प्राप्तिपूर्वकत्वात्तत्र पक्षे पीतिदत्तस्य विभागप्राप्तिरेव नेति निषेधस्यासङ्गतिरित्याह—तथेति। विप्रतिपत्तिनि-रासायाऽऽह—सर्वेति। तत्र पक्षे ततः स्थिते एव स्वत्वे द्वयोर्दानपरिग्रहयोरधिकारस्तेनैव तत्सिद्धौ विभागे कारणाभावात्तदप्राप्तिरेवेति तदनुपपत्तिरित्यर्थः। ननु तद्वचनमेव खपुष्पाया माणमतो नारदमाह—यथाऽऽहेति,—शौर्यभार्यासंबन्धिनि धने इत्यर्थः। एवमग्रेऽपि। यस्येति, —यश्चेति पाठान्तरम्। पैतृक इति—पितुरागत इत्यर्थे "पितुर्यच्च" इति ठञ्। ननु सर्वानुमतिरेव यत्र न तद्विषयकमिति नायं दोष इति चेत् - दोषान्तरमाह—

१. फ. छ. तथा हि। २. त्रासा। ३. अ० ४. ३. ७९.।

Cole.: Ch. I, Sec. i, §§ 18–19.

20 इति ।** तथा " भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् । सा यथाकामम श्नीयाद्दद्याद्वा स्थावरादृते॥" इति प्रीतिदानवचनं नोपपद्यते, [2] जन्मनैव स्वत्वे[3] "न च स्थाव
21 रादृते यद्दत्तम्[4]" इति संबन्धो युक्तः—व्यवहितयोजनाप्रसङ्गात् ।** यदपि—"मणिमुक्ता प्रवालानां सर्वस्यैव पिता प्रभुः।स्थावरस्य तु सर्वस्य न पिता न पितामहः॥" तथा "पितृप्र-

---

## सुबोधिनी

पि वचनं विरुध्येतेत्याह—तथा भर्त्रा प्रीतेन यद्दत्तमित्यादिना। ननु नास्ति प्रीतिदानवचनवि रोधः, अपि त्वनुकूलमेव तद्वचनम् । तथा हि । स्थावरादृते यद् भर्त्रा स्त्रियै दत्तं, तस्मिन् मृते
20 सा यथाकाममश्नीयादित्यन्वयः । तथा च स्थावरेषु प्रीतिदानप्रतिषेधात्]* जन्मनैव स्वत्वे सिद्धे तन्न्यायेनेतरद्रव्येऽपि तथात्वे स्थावरव्यतिरिक्तस्य प्रीतिदानं वचनात् भविष्यति।]*
20 *[किं हि वचनं न कुर्यादित्याशङ्क्याऽऽह—न च स्थावरादृते यद्दत्तमिति।अयमत्र परिहा- राभिप्रायः—यद्ययमन्वयः स्यात् स्यादेवम् । एवंविधान्वयस्य व्यवहितत्वेन ग्रन्था- नार्जवादयमन्वय एव न घटत इति ।][5] *[वचनान्तरयोरव्यवहितान्वयेनैव स्थावराणां प्रीतिदानप्रतिषेधात् जन्मैव स्वत्वहेतुर्न विभाग इत्याशङ्क्य परिहरति]* यदपि मणि- मुक्ताप्रवालानामित्यादिना । अयमभिप्रायः—अर्जनादर्ज्यमर्जकस्य स्वं भवति । तच्च

## बालंभट्टी

20 तथेति।वैष्णवमाह—भर्त्रेति।दानद्वैविध्यादाह—प्रतीति।सामान्येनेत्यादिः।*[तत्र पक्षे जातमा- त्रस्यापि स्वत्वसत्त्वात्तस्यानुज्ञायामप्यसामर्थ्यात् द्रव्यस्य सर्वसाधारणत्वेनैकेन दातुमशक्य- त्वात् प्रीतिदानस्याप्यसंभवात्तत्प्रतिपादिकमिदं वचनमपि विरुध्येतेत्यर्थः।]*ननु स्थावरादित्य स्योत्तरार्द्धोपात्तान्वय एव एवं स्यात् , स एवं नेति न तद्वचनविरोधः, किन्तु अनुकूलमेव तदिति शंकते—न चेति। तथा चाशनादौ निषेधाभावात् प्रीतिदाने प्रतिषेधात्तेन जन्मनैव स्वत्वं प्रतिपादितं भवतीति भावः । व्यवेति—एवमन्वये तथा स्यात् । स एव न व्यवधा- नस्य प्रतिबन्धकत्वेन ऋजुतयाऽलाभात् । नन्वेवमपि वचनान्तरयोरव्यवहितान्वयेनैव स्थावरस्य प्रीतिदानप्रतिषेधाज्जन्मैव स्वत्वहेतुर्न विभाग इत्याशयेनाशङ्कते— यदपीति । प्रबलानामिति—निर्धारणे षष्ठी । यद्वा सामानाधिकरण्येनान्वयः । तत्र समानविभक्तित्वस्य तन्त्रत्वेऽपि समानवचनत्वस्या तन्त्रत्वात् वेदाः प्रमाणमितिवत् । सतिं—सत्यपि । दाने इति

---

१. ना० १३,९. । २. क. नोपपद्यते । ३. ख. तज्जन्मनैव । ४. घ. यद्दत्तमिति नास्ति । ५. थ. द न कु ।

सादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थावरं तु न भुज्येत प्रसादे सति पैतृके॥" इति स्थाव-स्य प्रसाददानप्रतिषेधवचनं तत्पितामहोपात्तस्थावरविषयम्। अतीते पितामहे तद्धनं पि-तापुत्रयोः साधारणमपि मणिमुक्तादि पितुरेव स्थावरं तु सधारणमित्यस्मादेव वचना-दवगम्यते। ** तस्मान्न जन्मना स्वत्वं किंतु स्वामिनाशाद्विभगाद्वा स्वत्वम्। अत एव 22

## सुबोधिनी

तत्सम्बन्धिनां पुत्रादीनां विभागात् स्वामिनाशात् वा स्वं भवति। तत्र स्वामिनि जीवति विभागः स्वत्वहेतुः; विनष्टे तु स्वामिनि स्वामिनाश एव स्वत्वहेतुः। तत्राप्यय-मपरो विशेषः। स्वामिसम्बन्धिनः पुत्रस्य पौत्रस्य वा एकत्वे स्वामिनाश एवासाधारणः स्वत्वहेतुः। पुत्रादीनां बहुत्वे तेषां स्वामिनाशात् साधारणं स्वं भवति विभागाच्च प्रातिस्विकम्। एवं स्थिते स्वामिनि पितामहे नष्टे विभागात् प्राक् पितामहधने पितुः प्रातिस्विकस्वत्वाभावादेव पैतामहं स्थावरं न प्रीत्या दद्यादिति स्थावरप्रीतिदाननिषेधो न स्वोपार्जितस्य यतो जन्मैव स्वत्वहेतुः स्यादिति। ननु किमेतदर्थवैषम्यं पैतामहे स्थावरे साधारणं मणिमुक्तादिषु तु नेत्याशङ्क्य वचनान्नियम्यत इत्याह—अतीते पितामह इति;

## बालंभट्टी

विषयस्सर्मा। वचनमिति— जातावेकवचनम्। एवमग्रेऽपि। ननु पैतामहे स्थावरे सर्व-साधारण्यम्। मणिमुक्तादिषु तु नेत्यर्धजरतीय (?) मयुक्तमत आह—अतीतेति। तथा च वचननियम्यमेतदिति न दोषः। पूर्वपक्षमुपसंहरति—तस्मादिति। अयं भावः—अर्जना र्जकस्य स्वं तच्च तत्संबंधिनां पुत्रादिनां विभागात् स्वामिनाशाद्वा स्वं तत्र स्वामिनि जीवति विभागः स्वत्वहेतुः विनष्टे तु स्वामिनि तन्नाश एव स्वत्वहेतुः। तत्रान्योऽपि विशेषः स्वा-मिनाशाद्वा स्वं तत्र स्वामिनि जीवति विभागः स्वत्वहेतुः विनष्टे तु स्वामिनि तन्नाश एव स्वत्वहेतुः तत्रान्योऽपि विशेषः स्वासिसंबंन्धिनः पुत्रस्य पौत्रस्य वा एकत्वे वा स्वामिना-श एवासाधारणः स्वत्वहेतुः तेषां बहुत्वे तु स्वामिनाशात् साधारणं स्वं भवति विभागाच्च प्रतिस्विकम्। एवं सति स्वामिनि पितामहे नष्टे विभागात् प्राक् पितामहधने पितुः प्रा-तिस्विकस्वत्वाभावादेव पैतामहस्थावरं न प्रीत्या दद्यादिति स्थावरप्रीतिदाननिषेधो न स्वो-

१. क. ग. रं न तु। २. क. स्थावरप्रसा। ३. क. अपिनास्ति। ४. क. खं। ५. क. ०नोशाद्वि७ : ६ द. च.। ७. थ. धैर्वशसम्।

Cole.; Ch. I, Sec. i, §§ 21—22.

पितुरूर्ध्वं विभागात्प्राग्द्रव्यस्वत्वस्य प्रहीणत्वादन्येन गृह्यमाणं न निवार्यत इति चोदास्यानवकाशः । तथैकपुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्षते
23 इति। ** अत्रोच्यते—लोकप्रसिद्धमेव स्वत्वमित्युक्तम् । लोके च पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरं नापह्नवमर्हति । विभागशब्दश्च बहुस्वामिकधनविषयो लोकप्रसिद्धः, नान्यदीयविषयो न प्रहीणविषयः। तथा "उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्याः" इति
24 गौतमवचनाच्च ** मणिमुक्ताप्रवालानाम् इत्यादि वचनं च जन्मना स्वत्व पक्ष एवोपद्य-

## सुबोधिनी

यतः स्वामिनाशोऽपि स्वत्वहेतुः । अतः[3] पितरि मृते विभागात् प्रथमम[4]औदासीन्यविषयं तद्द्रव्यं न भवतीत्याह — अत एव पितुरूर्ध्वमिति । पितृप्रयाणादिति—पितृमरणादित्यर्थः । एवं पूर्वपक्षे प्राप्ते सिद्धान्तं प्रतिजानीते—अत्रोच्यत इति ।
23 जन्मनैव स्वत्वे गौतमवचनं प्रमाणयति — तथा चोत्पत्त्यैवेति । *[जन्मनैवार्थस्वामित्वात् नैमर्थं तनयो लभेतेत्यर्थः।]* "मणिमुक्ताप्रवालानाम्" इत्यादिकमपि सिद्धान्तपक्ष एवोपपद्यत इत्याह—मणिमुक्तेति । यदुक्तं पूर्वपक्षिणाऽस्य वचनजातस्यान्या-

## बालंभट्टी

पार्जितस्य येन जन्मनैव स्वत्वं स्यादिति; यतः स्वामिनाशोऽपि स्वत्वहेतुरतः पितरि मृते विभागात् प्रागन्यदीयद्रव्यमिवोदासीन्यविषयभूतं तद्द्रव्यं भवतीत्याह—अत एवेति । तन्नाशस्यापि तत्वाङ्गीकारादेवेत्यर्थः। प्रहीणेति—निरूपकस्य स्वामिनोऽभावादिति भावः। एवमनेक पुत्रस्थले तदावश्यकत्वमुक्त्वैकपुत्रस्थले तदावश्यकत्वमाह— तथैकेति । तद्वदित्यर्थः । प्रयाणात्–मरणात् । इति—पूर्वपक्षे स्थिते सिद्धान्तमाह—अत्रोच्यत इत्यादि । पूर्वसिद्धान्तस्यात्र हेतुत्वसूचनाय तमनुवदति—लोकेति । प्रकृते साधकं तथैवाऽऽह—लोके चेति। युक्त्यन्तरमाह—विभागेति। प्रोक्तमिदं प्राक्। न प्रेति,–नापि स्वत्वरहितेत्यर्थः । प्रसिद्धमित्यस्यानुषङ्गः । अत्र गौतमवचनमपि मानमाह - तथोत्पत्त्यैवेति । तथाशब्दः समुच्चये । उत्पत्त्यैव जन्मनैव अंशस्वामित्वात्तमर्थं लभेतेत्याचार्या मन्यन्त इत्यर्थः। अर्थस्वामित्वमिति पाठान्तरम् । तथा चेति च मणिमुक्तेत्याद्यपि सिद्धान्तपक्ष एवोपपद्यते इत्याह—मणीति। आदिना वचनमात्रपरिग्रहः। अस्य पूर्वपक्ष्युक्तमन्यार्थं

---

१. घ. व्याऽर्थं स्वामित्वाद्ध । २ इदं गौतमीये न दृश्यते। ३. थ. द. अत एव पि० । ४. थ. प्रागन्यद्रव्यमिवौदा० । ५. थ. द. र्थंल ।

ते। न च पितामहोपात्तस्थावरविषयमिति युक्तम्—"न पिता न पितमहः" इति वचनात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यदेयमिति वचनं जन्मना स्वत्वं गमयति। तथा परमते मणिमुक्तावस्त्राभरणादीनां पैतामहानामपि पितुरेव स्वत्वं—वचनात्। एवमस्मन्मतेऽपि पित्रार्जितानामप्येतेषां पितुर्दानाधिकारो वचनादि-

## सुबोधिनि

र्थपरत्वं, तन्नेत्याह—न च पितामह इति। अयमभिप्रायः—स्वामिनाशस्यापि स्वत्वहेतुत्वेनातीते पितामहे तद्धने पितापुत्रयोः साधारण्ये मणिमुक्तादिकं वचनात् पितुः। स्थावरे तु साधारण्यमेवेत्येतावानर्थो यदि तद्वचनात् प्रतीयते तदा पूर्वोक्ता व्यवस्था स्यात्। न च तथा। ततश्चैवं वक्तव्यम्,—पितामहे जीवत्यपि स्थावरेषु सर्वसाधारण्यमिति। तथा चास्य वचनस्य पितामहोपार्जितस्थावरविषयत्वमनुपपन्नम् इति। कथमनुपपन्नमित्याशङ्क्य हेतुमाह—न पिता न पितामह इति वचनादिनि। यदि पितामहोपार्जितमेव स्यात् स्थावरादिकं, तदा तस्मिन् जीवति स्वोपार्जिते तस्य प्रभुत्वाभाववचनमनुपपन्नमित्यर्थः। मणिमुक्तादिवचनद्वयस्य जन्मना स्वत्वपरत्वं दर्शयति— पितामहस्य हीति। जन्मनैव स्वत्वे सर्वसाधारणत्वात् स्वस्य प्रीतिदानं कथमित्याशङ्क्य प्रतिबन्द्या वचनादित्याह—यथा परमत इत्यादिना। अयमभिप्रायः—स्थावरव्यतिरिक्तं स्वेनार्जितं

## बालंभट्टी

परत्वं निराचष्टे—न च पितेति। अनुपपत्तौ हेतुमाह—न पितेति। अयं भावः—स्वामिनाशस्यापि स्वत्वहेतुत्वेनातीते पितामहे तद्धने पितापुत्रयोः स्वाम्यस्य साधारण्येऽपि मण्यादिकं वचनात् पितुः। स्थावरं तु साधारणमेवेति प्रागुक्तोऽर्थो यदि तद्वचनात् प्रतीयेत,तदा पूर्वोक्तव्यवस्था स्यात्। न च तथा यदि पितामहोपार्जितमेव स्यात् स्थावरादिकं, तदा तस्मिन् जीवति स्वोपार्जिते तस्य प्रभुत्वाभावबोधकतुरीयपादस्यानुपपत्तेः। तस्मादेवं वाच्यम्–'पितामहे जीवत्यपि स्थावरेषु सर्वसाधारण्यमित्यस्य तद्विषयत्वं तदुक्तमनुपपन्नमेव इति। नन्वेवं किं विषयं तद्वचनद्वयं येन प्रकृतार्थालाभोऽत आह—पितामहस्य हीति। हि—यतः। वचनं—वचनद्वयम्। तथा च जन्मना स्वत्वपरमेव तद्वचनद्वयमिति भावः। ननु जन्मनैव स्वत्वस्य सर्वसाधारणत्वात् स्वस्य मणिमुक्तादेरपि कथं प्रीतिदानमित्याशङ्कायां प्रतिबन्द्यौ वचनादित्याह—यथेति। परः—पूर्वपक्षी। उक्ताशयेनैव आह—वस्त्रेति। अस्मन्मते-

१. थ. षु सा। २. ब. बध्नवचना० (?)।

Cole.: Ch. I, Sec. i, § 24.

25 त्याविशेषः।** यत्तु "भर्त्रा प्रीतेन"इत्यादिविष्णुवचनं स्थावरस्य प्रीतिदानज्ञापनं तत्स्वोपार्जितस्यापि पुत्राद्यभ्यनुज्ञयैवेति व्याख्येयम्,—पूर्वोक्तैर्मणिमुक्तादिवचनैः स्थाव-
26 रव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात् ।** यदप्यर्थसाध्येषु वैदिकेषु कर्मस्वनधिकार
27 इति तत्र तद्विधानबलादेवाधिकारो गम्यते ।** तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्;तथाऽपिपितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमोक्षा-

सुबोधिनी

वस्तु अनुज्ञार्हानुमतिमन्तरेणापि पित्रा[2] दातुं शक्यत इति। नन्वेवं[3] यदि तर्हि स्थावरस्यापि प्रीतिदानप्रतिपादकेन विष्णुवचनेन विरोध इत्यत आह—यत्तु भर्त्रा प्रीतेनेत्यादि विष्णुवचनमिति । अयमाशयः—स्वोपार्जितेष्वपि स्थावरेषु अनुज्ञासमर्थानुज्ञार्हसर्वानुमतिमन्तरेण दानानधिकारः। इतरेषु नानुमत्यपेक्षेति । विष्णुवचनस्यैवमर्थपरत्वे हेतुमाह—पूर्वोक्तैरिति । यदुक्तं जातपुत्रस्याऽऽधानाभाव इति तत्राऽऽह—यदप्यर्थसाध्येष्विति,—वचनादधिकार इत्यर्थः । स्वार्जिते पित्रादि प्राप्ते च स्थावरे पितुः पुत्रादिपारतन्त्र्यमेवे-

बालंभट्टी

ऽपि—सिद्धान्तमतेऽपि। तथा च स्थावराभिन्नं स्वोपार्जितं वस्तु अनुज्ञानार्हानुमतिं विनाऽपि पित्रा दातुं शक्यमिति भावः । नन्वेवमपि स्थावरस्य प्रीतिदानबोधकविष्णुवचनविरोध एवेत्यत आह—यत्तु भर्त्रेति,—भर्तृकर्तृकपत्नीसंप्रदानकदानेत्यर्थः । ज्ञापनं,— करणे ल्युट्—ज्ञापकम् । क्वचित्तथैव पाठः । तत्स्वोऽपेति—स्वोपार्जितेष्वपि स्थावरेषु अनुज्ञासमर्थसर्वानुमतिं विना दानानधिकारोऽन्यत्र नानुमत्यपेक्षेति भावः । एवं च भर्तृदत्ते स्थावरे यावज्जीवं निवासो न दानविक्रयानावश्यककार्यं विना । अत्र भर्तृग्रहणात् श्वशुरदत्ते स्वातन्त्र्यमपि। अत एव बृहस्पतिः—"स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु। न तच्छक्यमपाकर्तुं पुत्रैरपि हि कर्हिचित् ॥" विष्णुवचनस्यैवमर्थपरत्वे हेतुमाह—पूर्वोक्तैरिति,—बहुवचनेनानुक्तवचनसङ्ग्रहो बोध्यः । तच्चाग्रे स्फुटीभविष्यति । त्वस्य निश्चयादिति पाठः,—तत्कारणादिति तदर्थः । अत एव षष्ठीसमासाभावश्च । आद्ययुक्तिं खण्डयति— यदप्यर्थेति,—वचनात्तत्राधिकार इत्यर्थः । सावशेषमुपसंहरति— तस्मादिति,— स्थितमित्यत्रान्वयः । पितुरित्यस्य स्वातन्त्र्यमित्यत्रान्वयः । उक्तवक्ष्यमाणस्मृत्युक्तमाह—आवश्येत्यादिः । आवश्यकत्वे हेतुमाह—वाचेति,— श्राद्धादि-

१. क. छ. तथा पितु० । २. थ. द. त्रा प्रीत्या दा० । ३. थ. द. यद्येवं । ४. ब. र्थानुज्ञार्हस० ।

Cole.: Ch. I, Sec. i, §§ 24—27.

दिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम् ।स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारन्त्र्यमेव—"स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्।असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः॥" इत्यादिस्मरणात् । **अस्यापवादः 28 —"एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् । आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः॥"इति।** अस्यार्थः—अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु वा अनुज्ञादानादावसमर्थेषु 29 भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे वाऽवश्यं[1] कर्तव्येषु पितृश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः कुर्यादिति[2]

सुबोधिनी

त्युक्तं न्यायतः सामान्यवचनादपि । तदपोद्यते वैशेषिकेण वचनेनेत्याह—अस्यापवादः,—एकोऽपि स्थावरे कुर्यादित्यादिना । ननु "एकोऽपि स्थावरे कुर्यात्" इत्यस्याप्यपवादो दृश्यते "विभक्ता[3] वा"इत्यनेनेत्याशङ्क्य नैतद्वचनं सर्वात्मना दानादिष्वेकस्याधिकारं निरुणद्धि । अपि तु अविभक्तानुज्ञामन्तरेण दानाद्यसिद्धिः साधारणत्वात् द्रव्यस्य । विभक्तानुमतिमन्तरेणापि दानादिकमुपपद्यते, परं तु प्रतिग्रहीत्रादीनां व्यवहारसौकर्याय तदनुमति-

बालंभट्टी

ष्वित्यर्थः । स्थावरेति,—तदन्यद्रव्यस्य विनियोगे स्वातन्त्र्यमित्यर्थः । एवं स्थावरादन्यत्रोक्त्वा स्थावरे सिद्धान्तमाह—स्थावरे त्विति। वैलक्षण्ये तुः । पारतन्त्र्यमेवेति,—पित्रादेरिति भावः । अस्य पर्यवसानतो लाभेऽपि वचनमप्याह—स्थावरमिति। द्विपदं—दासादि । स्वयं--स्वयमपि। अर्जितं तथाऽपि तस्येति शेषः ।असंभूय असंपृष्ट्वा[4] । सुतेत्युपलक्षणम् । अत एव सर्वानिति,— एकशेपस्तत्र प्राग्वत् । न केवलमेतावदेव किंत्वन्यदपीत्याह—ये जाता इति । अस्येति,—उक्तसामान्यवचनस्य विशेषवचनेनापवाद इत्यर्थः । स्थावरे इति विषय सप्तमी । आधमनमाधिः, समाहारद्वन्द्वः । निमित्तविशेषमाह — आपदिति । वक्ष्यमाणार्थसिद्ध्यर्थमेवाऽऽह — अस्यार्थ इति । अनुज्ञानादाविति। तत्समर्थत्वे तु वक्ष्यमाणप्रकार इति न विरोध इति भावः । अपिना विभक्तसमुच्चयः । ततोऽपि विशेषमाह— सकलेत्यादि,— सकलकुटुंबेत्यर्थः । विषयस सम्या फलितमाह—स्थावरेति । एकार्थमाह--समर्थ इति । यथाश्रुते प्राप्तमनुवचनवि-

१. क ग. ङ. छ. ज. चावश्ये० । २. क. इतिर्नास्ति। ३. थ द. 'त्ता वाऽविभक्ता वा'। ४. ब. अपृष्ट्वेति ।

30 **यत्तु वचनम्—"विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः।एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥" इति, तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात् सर्वाभ्यनुज्ञाऽवश्यं कार्या। विभक्तेषूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्याय सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेन; अतो अविभक्तानुमतिव्यतिरेकेणापि व्यवहारः

31 सिद्ध्यत्येवेति व्याख्येयम्। ** यदपि "स्वग्रामज्ञातिसामन्तदायादानुमतेन च। हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी॥" इति, तत्रापि ग्रामानुमतिः "प्रतिग्रह-

---

सुबोधिनी

रित्याह—यत्तु वचनं विभक्ता वाऽविभक्ता वेत्यादिना। "षड्भिर्गच्छति मेदिनी" इत्युक्तम्। तत्र षण्णां क्रमेणोपयोगं दर्शयत् प्रथमतो ग्रामजनानुमतेः प्रयोजनं दर्शयति—तत्रापि ग्रामानुमतिरित्यादिना। एवं क्रमेणेतरेषामप्युपयोगो ग्रन्थ एव द्रष्टव्यः॥

पूर्वं कस्मिन् काले कस्य कथं कैश्च विभागः कर्तव्यः इति प्रकरणार्थं सङ्गृह्य कस्येत्ययमंशो महता प्रपञ्चेन प्रतिपादितः। अधुनेतरानंशान् प्रतिपादयितुं

बालंभट्टी

रोधम् उक्ताशयेनैव परिहरति—यत्तु मनुवचनमिति। हि—यतः। सर्वत्रेति,—दानादिविशेषणम्। तदपि इत्यस्य व्याख्येयम् इत्यत्रान्वयः। अपि पूर्वसमुच्चये। अत एव व्युत्क्रमेण व्याचष्टे—अवीति। मध्यस्थत्वात्- साधारणत्वात्। अनीशत्वात् अस्वामित्वात्। सर्वेति,--अविभक्ताभ्यनुज्ञां विना दानाद्यसिद्धेरिति भावः। व्येति—प्रतिग्रहीत्रादीनामिति भावः। न पुनः--न तु। फलितमाह—अत इति। तथा चाभ्यनुज्ञानादावसमर्थविषयकं तत्, इदं तु तत्समर्थविषयकम्। किं च तत्समर्थेष्वविभक्तेषु तद्विना दानादिकमेव नेति अवश्यं तदपेक्षेत्येतस्यार्थः। तत्समर्थेषु विभक्तेषु तु तदनुमतिं विना दानादिकोपपत्तावपि व्यवहारसौकर्यार्थं तदपेक्षेत्येतस्य विषय इति नेदं सर्वात्मना दानाद्यधिकारविरोधकम् एकोऽपीत्यस्याप्यपवादकं, येन विरोधो भवेदिति भावः। द्रव्यांशे विभक्तानामप्यविभक्तक्षेत्राद्युत्पन्नसस्यादिदानादावनुमतिं विनाऽधिकारप्रतिषेधार्थमिदमिति तु मदनः। वचनान्तरविरोधं निराचष्टे— यदपीति स्वेति सर्वविशेषणं स्पष्टार्थं–प्रत्यासत्तेरेव लाभात्। द्वन्द्वान्ते श्रूयमाणत्वादनुमतेः सर्वसंबन्धः; तदेतत् प्रतिपादयन् षण्णां क्रमेणोपयोगं प्रदर्शयन्नादौ ग्रामजनानुमतेः फलमाह— तत्रापि

१. ज. बा० भ० यत्तु मनुवचनम्। क. यदपिव०। २. क. विभक्ता ह्यविभक्ता। ख. ग. अविभक्ता विभक्ता वा। ३. क. ग. ङ. छ. ज. जाति०। ४. ख. प्रतिग्रहः प्रका०।

Cole.: Ch. I, Sec. i, §§ 30—31.

प्रकाशः स्यात्स्थावरस्य विशेषतः।" इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते। न पुनर्ग्रामानुमत्या विना व्यवहारासिद्धिः। सामन्तानुमतिस्तु सीमाप्रतिपत्तिनिरासाय। ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव** हिरण्योदकदानेनेति—"स्थावरे विक्रयो नास्ति 32 कुर्यादाधिमनुज्ञया।"इति स्थावरस्य विक्रयप्रतिषेधात्। "भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति। उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ॥" इति दानप्रशंसादर्शनाच्च। विक्रयेऽपि कर्तव्ये सहिरण्यमुदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्यादित्यर्थः॥ **पै- 33 तृके पैतामहे धने जन्मनैव स्वत्वेऽपि विशेषं च "भूर्या पितामहोपाता"इत्यत्र वक्ष्यामः॥

** इदानीं यस्मिन्काले येन च विभागः कर्तव्यस्तद्दर्शयन्नाह— 1

---

## सुबोधिनी

मूलश्लोकमवतारयति—इदानीं यस्मिन् काल इति। सुतानित्यत्र बहुवचनमविवक्षितमि-

## बालंबट्टी

ग्रामानुमतिरिति। पुनः—तु। दायदानुमतेरिति,— जातावेकवचनम्। उक्तमेवेति,— व्यवहारसौकर्यमित्यर्थः। हिरण्योदकेत्यनयोरुपयोगमाह—हिरेति। एवं स्थावरे सामान्येनोक्त्वा विशेषमुभयत्राऽऽह—पैतृके इति। एतेन पितुर्निधनमेवस्वत्वकारणं—"पितर्यूर्द्ध्वं गते पुत्रा विभजेयुर्द्धनं पितुः।" इति नारदात्। न जन्म "ऊर्द्ध्वं पितुश्च मातुश्च"इति मनुना, "पितर्युपरते पुत्रा विभजेयुर्द्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते॥" इति देवलेन च विरोधात्। न च भार्यापुत्रश्च इत्यादिवदस्वातन्त्र्याशयमिदम्—तदानीं स्वामित्वे मानाभावात्। भार्यादिपु"यत्ते समधिगच्छन्ति"इति स्वत्वे सिद्धे युक्तमस्वातन्त्र्यवर्णनम्। किं च स्वोपात्तेऽपि तेषामस्वामित्वे स्वधनसाध्यवैदिककर्मोच्छेदात् श्रुतिविरोधात्तथा सति पितुरनिच्छयाऽपि विभागापत्तेश्च जन्मनैव स्वत्वे मानाभावाच्च अर्जनरूपतया जन्मनः स्मृतावनुक्तेः। तस्मात् जीवति पितरि विभागनिषेधार्थं न मन्वादिवचनम् — अस्वार्थपरत्वापत्तेः; किंन्तु पित्रोः सतोः स्वामित्वमेव न निधनपातित्यादौ तु स्वामित्वमिति प्राच्योक्तमपास्ताम्॥

पूर्वं कस्मिंश्चित्यादिना प्रकरणार्थं संगृह्य तत्र कस्येत्यंशो महता प्रपञ्चेन प्रतिपादितम्। इदानीमितरानंशात् प्रतिपादयितुं मूलमवतारयति — इदानीमिति। तदिति त्रितयमित्यर्थः। मूलेपौनरुक्त्यादिदोषगणानुपपत्तिं परिहरम् व्याचष्टे — यदेति।

१. क. सीमाविप्र०। ख. सीमाप्र०। घ. सीमाविरोधाविप्र०। २. व्य० १२१.। ३. ख. यत्र। ४.—१३. २.। ५.—९. ११६.।

Cole.: Ch. I, Sec. i, §§ 31—33, Sec. ii, § 1,

**विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ ११४॥**

2 ** यदा विभागं पिता चिकीर्षति तदा इच्छया विभजेत् पुत्रानात्मनः सकाशात्—
3 पुत्रं पुत्रौ पुत्रान्।** इच्छाया निरङ्कुशत्वादनियमप्राप्तौ नियमार्थमाह''ज्येष्ठं वा श्रेष्ठभागेन''इति।ज्येष्ठं श्रेष्ठभागेन मध्यमं मध्यभागेन कनिष्ठं कनिष्ठभागेन—विभजेदित्यनुव-
4 र्तते ।**श्रेष्ठादिविभागश्च मनुनोक्तः—''ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
5 ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥'' इति ।** वाशब्दो वक्ष्यमाणपक्षापेक्षः

एवं प्रागुक्तानेकप्रकारार्जितस्य द्रव्यस्य **विभागं चेत् पिताकुर्यादित्यादि ॥ ११४॥**

सुबोधिनी

त्याह—पुत्रं पुत्रौ पुत्रानिति। ''ज्येष्ठस्य विंश उद्धारः'' इत्यस्य मनुवचनस्य स्वयमेवार्थं दर्शयिष्यति''विभजेरन् सुताः पित्रोः''इत्यत्र। ''ज्येष्ठं वा श्रेष्ठभागेन''इति योगीश्वरवचनस्थ-वाशब्दस्याभिप्रायमाह—वाशब्दो वक्ष्यमाणपक्षापेक्ष इति । ''विभागं चेत् पिता कुर्या-

बालंभट्टी

चेदर्थोऽयम् । कुर्यादिति अत्र लिङर्थो न[1] विवक्षितः । स च करणेच्छायां[2] लाक्षणि-
2 क इत्याह- चिकीर्षतीति। आक्षेपादाह—तदेति। इच्छया स्वेच्छयैव। *[विभजेत् दायभागदानेन पृथक् कुर्यात् ।]* तत्रावध्याकाङ्क्षायामाह—आत्मन इति । तदनन्तरं तेषां मिथ ऐक्यं भेदो वेत्यत्र नाऽऽग्रहोऽस्येति भावः। सुतानित्युक्तेर्बहुभिन्ने न विभाग इति शङ्कानिरासाय तदर्थमाह—पुत्रमिति। कृतैकशेषयोस्तेन पुनरेकशेष इत्यर्थः;–अनुदात्तानामितिवत्। निरङ्कुशेति,—अनियतत्वादित्यर्थः । नियमार्थमिति,—शास्त्रीयेत्यादिः । मन्वाद्येकवाक्यतयेदमुपलक्षणमित्याह—मध्यममित्यादि । साकाङ्क्षत्वादाह—त्रिभेति । उपलक्षणत्वे मानं सूचयन्नाह—श्रेष्ठादीति । चः त्वर्थे। अस्य व्याख्यात्वनुपदमेवाग्रे स्फुटा ग्रन्थ एव। ननु उत्तरार्धस्य पूर्वव्यवस्थापकतया योजने सर्वे वेति वासाङ्गत्येऽपि[3] ज्येष्ठं वेतिशब्दासङ्गतिः—पूर्वतो विकल्पबोधन एव तत्स्वारस्यात् । ननु तथैवास्तां पूर्वेणैच्छिकविषमविभागस्यैव प्रतिपादनादिति वाच्यं ''न्यूनाधिकविभक्तानाम्''[4] इति वक्ष्यमाणविरोधापत्तेरत आह —वाशब्द इति। तथा च स्पष्टार्थं एवेति भावः । तमेव व्याचष्टे—सर्वे वेति। समांशिनः—

१.—१. ११२. । २. ब. स च धातुश्च करणे।३. ब वाशब्दस्यासाङ्गत्येऽपि । ४. व्य. ११६.।

Cole.: Ch. I, Sec. ii, §§ 1-5.

"सर्वे वा स्युः समांशिनः"—सर्वे वा ज्येष्ठादयः समांशभाजः कर्तव्याः ।** अयं च विषमो विभागः स्वार्जितद्रव्यविषयः । पितृक्रमायाते तु समस्वाम्यस्य वक्ष्यमाणत्वान्नेच्छया विषमो विभागो युक्तः।* "विभागं चेत्पिता कुर्यात्"इति यदा पितुर्विभागेच्छा स तावदेकः कालः । अपरोऽपि जीवत्यपि पितरि द्रव्यनिःस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायां, पितुरनिच्छायामपि पुत्रेच्छयैव विभागो भवति । यथोक्तं नारदेन 6 7

सुबोधिनि

त्"इत्यनेन जीवत्येव पितरि पितुरिच्छया विभाग इति यस्मिन् काले विभाग इत्यस्योपसङ्ग्रहः; पितेत्यनेन येन विभाग इत्यस्योपसङ्ग्रहः ;"ज्येष्ठं वा श्रेष्ठभागेन"इत्यादिना यथा विभाग इत्यस्योपसंग्रह इति द्रष्टव्यम् । *[चत्वारः काला विभागस्य पित्रार्जिते द्रव्ये,]*तद्यथा-- *[जीवत्येव पितरि पितुर्यदा विभागेच्छा, स तावदेकः; निवृत्तरजस्कायां मातरि स्त्रीसुखानभिलाषिणि द्रव्यनिःस्पृहे पितरि जीवत्येव पित्रनिच्छायामपि यदा पुत्रेच्छा सोऽन्यः;पितृप्रयाणानन्तरमपरः; सरजस्कायामपि मातरि अनिच्छत्यपि पितरि तस्मिन् अधर्मवर्तिनि अचिकित्स्यरोगग्रस्ते सति वा यदि पुत्रेच्छा सोऽप्यपरः। ]* तत्र तावत् प्रथमं कालमाह-विभागं चेत् पिता कुर्यादिति । यदा पितुरिति—द्वितीय दर्शयति अपरोऽपि जीवत्येवेति । अत्र पुत्राः समं धनं विभजेयुरित्यनुपज्यत इति,—अत्रेति पूर्वोक्ते "मातुर्निवृत्ते रजसि"इति नारदवचन इत्य- 7 7

बालंभट्टी

इत्यत्र प्रशंसायामिनिः । अत एव बहुव्रीहिणा न गतार्थत्वमित्याह—समांशभाज इति । प्रागवदाह—केति,—पित्रेति भावः । अत्र विभागं चेत्कुर्यादित्यादिना यस्मिन् काले विभाग इत्यस्य सङ्ग्रहः, पितेत्यनेन येन विभाग इत्यस्य उत्तरार्द्धेन, विभाग इत्यस्येति बोध्यम् । विशेषमाह— अय चेति । क्रमायाते तु द्रव्ये चत्वारो विभागस्य कालास्तत्राद्यो मूलेनोक्त इति प्रतीकपूर्वकमाह—विभागं चेति—यदेति । जीवत्येव तस्मिन्निति भावः । द्वितीयमाह— परोऽपीति । कालोऽस्तीति शेषः । तमेवाऽऽह—जीवत्येवेति । निवृत्तेति, — स्त्रीसुखानभिलाषिणीत्यर्थः । पितुरिति, — विभागे इति शेषः । अपीति,—यदा पुत्रेच्छा तदेति शेषः । मूलानुक्तत्वादत्र मानमाह—यथा नारदेनेति, —दर्शित इत्यत्रान्वयः । अत इति—अत्र । पितुरित्यस्य धनमित्यत्रान्वयः । अत ऊर्ध्वमित्यस्य मातापितृमरणोत्तरमित्यर्थः— " ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् । भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥" इति मनूक्तेः । तदाह—

१.ख. समांशिन इति।२. क. सर्वे ज्ये०। ३. श्र. एककालः । ४ थ. द.स्मित् (व) वृ) द्धे अ । ५ मिता०'जीवत्यपि'। ६.व. कर्तव्या इति। ७.ब. यथाविभागं ८. प. योत तु । ९. मिता० चेदिति ।

Cole.: Ch. I, Sec. ii, §§ 5—7.

—"अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम्।" इति पित्रोरूर्ध्वं विभाग प्रतिपाद्य "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते चापि रमणे पितुर्युपरतस्पृहे॥" इति दर्शितः। अत्र पुत्रा धनं समं विभजेयुरित्यनुषज्यते। गौतमेनापि—"ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेरन्" इत्युक्त्वा "निवृत्ते चापि रजसि" इति द्वितीयः कालो दर्शितः। "जीवति चेच्छति" इति तृतीयः कालो दर्शितः। तथा सरजस्कायामपि मातर्यनिच्छत्यपि पितर्यधर्मवर्तिनि दीर्घरोगग्रस्ते च पुत्राणामिच्छया

यदा ह्याश्रमान्तरं प्रविशेत्तदा पिता पुत्राणां वा गुणवतां धर्मप्रवृत्तिसिद्ध्यर्थं कौतूहलाद्वा स्वद्रव्येण पुत्रान् विभजेत् संयोजयेदित्यर्थः। तदेच्छया यावद्यस्मै रोचते तदा तु तावदेव तस्मै दद्यात् न पुत्रेच्छया। न पुत्रैः पिता विभागं विशेषविषमं वा कारयितव्य इत्यर्थः। अत एव ज्येष्ठं वा श्रेष्ठभागेनौचित्या योजयेत्। एनं वाऽभ्यधिकं वा अथ वा सर्वान् समांशिनः कुर्यात् ॥ ११४ ॥

---

सुबोधिनी

र्थः। प्रथमद्वितीयतृतीयान् पक्षान् प्रतिलोमक्रमेण दर्शयति—गौतमेनापीति। चतुर्थमाह—तथा सरजस्कायामपीत्यादिना ॥ ११४ ॥

बालंभट्टी

पित्रोरिति। प्रत्तासु—विवाहितासु। रमणं स्त्रीसंभोगः तदिच्छानिवृत्तौ सत्याम्। स्पृहा—द्रव्यविषया। अत्र तदुक्तेः फलमाह—अत्रेति,— मातुर्निवृत्ते इत्यत्रेत्यर्थः। अनेन साकाङ्क्षत्वं निरस्तम्। मूलोक्तस्वयमुक्तनारदप्रथमोक्तपक्षान् प्रथमद्वितीयतृतीयान् व्युत्क्रमेण मुन्यन्तरसंवादेनाऽऽह—गौतमेति,—तृतीय इत्यनेनान्वयः। ऊर्द्ध्वमिति पित्रोरिति शेषः। पितुरिति—प्राग्वत्।वा ऽपीति,—पक्षान्तरे एवं नारदवाक्येऽपि बोध्यम्। चेच्छतीत्यत्राप्येवम्। तृतीय इति—गौतमेन कालो दर्शितः। प्रकृतक्रमे तु अस्याऽऽद्यत्वं बोध्यम्। एवं स्वयं पक्षद्वयमेवोक्तम्। अथ तृतीयं कालमाह—तथेति। निरिति पाठे तु दर्शित इत्यन्तं न गौतमसमाप्तिः। एवं कालद्वयं स्वयमुक्त्वा तृतीयमाह—जीवति चेच्छति पितरि जीवत्येव। इच्छति च—विषयाभिलाषुके च सति। तृतीयः तथा तृतीयोऽपि विभागकाल इत्यर्थः। तमेवाऽऽह—सरेति।अनिच्छेति,—विभागमित्यादिः।दीर्घेति,—अचिकित्स्येत्यर्थः। चेन

---

१. —१२, ३। 'पितमूर्ध्वं गते पुत्रा विभजेरन्धनं क्रमात्' इति क्वचित्। २. छ ऊर्ध्वं समं। ३.—१३, ३.। ४. क. तम्। ५.—२८. १.। ६. ७.—२८, २.।

Cole.: Ch. I, Sec. ii, § 7.

भवति विभागः ; यथाऽऽह शङ्खः—"अकामे पितरि रिक्थविभागो वृद्धे विपरीत-चेतसि रोगिणि च" इति ॥ ११४ ॥

** पितुरिच्छया विभागो द्विधा दर्शितः समो विषमश्च: तत्र समविभागे विशेषमाह — 8

**यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः ।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ ११५ ॥**

यदा स्वेच्छया पिता सर्वानेव सुतान् समविभागिनः करोति तदा पत्न्यश्च 9

तत्र तथैव स्यात् यथैव पितुरिच्छेति पुत्राश्रयो विधिरनवद्यः । स्नेहगुणाद्यनपेक्षं माध्यस्थ्येनैव यदि दद्यात् शमानांशानित्यादि ॥ ११५ ॥

बालंभट्टी

वृद्धत्वसमुच्चयः। यदि पुत्रेच्छा तदेति शेषः। अस्यापि मूलानुक्तत्वादाह—शङ्ख इति । अकामे विभागमनिच्छति । विपेति—अधर्मवर्तिनीत्यर्थः । रोगिणीत्यत्र भूम्नि इनिः । वेतीत्यनेन विकल्प उक्तः।एवं प्रागपि बोध्यम्। एतेन *[कालद्वयमेव पितुरिच्छा तन्निधनं च; 7
न तृतीयोऽपीति ।"मातुर्निर्वृत्तेरजसि"इति पितामहादिधनविषयमिति प्राच्योक्तमपास्तम्।]*
एवं कालत्रयं तत्रापि बोध्यम् । एतेन तत्रान्यथा व्याख्यान तदुक्तमपास्तम् ॥ ११४ ॥

दर्शितः मूलकृता। तत्र तयोर्मध्ये । यद्यर्थमाह— यदेति । फलितमाह—सर्वानेवेति लिङर्थाविवक्षयाऽऽह—करोतीति । पत्न्यश्च ता अपि। अत्र बहुवचनेन पत्नीपदस्वारस्येन च सापत्नमातुरपि विभागः सूचितः । अत एव मदनरत्ने पत्न्य इति बहुवचनात् प्रति-पत्नीस्वांशेन तुल्यांऽशो ग्राह्यो न तु ताभ्यः पृथक् कृत्वांऽशो देयः—" पुत्रवत् जायापत्योर्न विभागो विद्यते" इति हारीतविरोधात् । तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च द्रव्यार्जनेष्वपि तस्याः सहत्वमेव । तद्वत् पतिरर्जयति जाया गृहे निवसतीति योगक्षेमावुभयायत्ताविति द्रव्यार्जने सहत्वम्। एतदेवाऽऽह–"न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपादिशन्ति"इति। हि यतो भर्तुः प्रवासे सति तथा दाने कृते तस्य न स्तेयं कथयन्ति धर्मज्ञाः। यदि भर्त्तुरेव

१. भ. पास्तं शङ्खादिविरोधात् ।......। २. भ. पास्तं विभाग आद्यः दर्शित......। ३. भ. न च सुतसा० ।

Cole.: Ch. I, Sec. ii, §§ 7—9.

पुत्रसमांशभाजः कर्तव्याः, यासां पत्नीनां भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम् । दत्ते तु
10 स्त्रीधने अर्धांशं वक्ष्यति "दत्ते त्वर्धं प्रकल्पयेत्" इति। यदा तु श्रेष्ठभागादिना ज्येष्ठादीन् विभजति तदा पत्न्यः श्रेष्ठादिभागान्न लभन्ते किंतूद्धृतोद्धारात्समुदायात्समानेवांशान् लभन्ते स्वोद्धारं च; यथाऽऽहाऽऽपस्तम्बः—"परीभाण्डं च गृहेऽलङ्कारो भार्यायाः" इति ॥ ११५ ॥

समांशदानपक्षे प्रमितभर्तृकाः पुत्रपौत्रवत्यः सपत्न्यश्च भर्तृभागाः समांशिकाः कार्याः। "साहस्रमपरो दायःस्त्रियाः" इति स्मृत्यन्तरात्तावन्मात्रं प्रभूतधात्वेऽपि देयं स्वल्पेऽपि स्वसमांशत्वेनैव नान्येत्यनपत्यानां नियोगो अभिमुखत्वे समांशतामाहुः। तत्तु नियोगासभवादयुक्तं संभवन्नियोगानां तु नियोगांशत्वमेव युक्तम् ॥ ११५ ॥

सुबोधिनि

इतःपरं सार्धश्लोकव्याख्यानं सुगमम् ॥ ११५ ॥

बालंभट्टी

द्रव्यं स्यात्तदा स्यादेव स्तेयं नैमित्तिके इत्युक्त्याऽन्यत्र स्तेयं भवत्येव। एतदेव तत्साम्येऽपि वैषम्यं यत् पतिर्यथेष्टं विनियुङ्क्ते जायात्वे तावदेवेति च न पत्युर्जायानुमत्यपेक्षास्वतन्त्रत्वात् । यथा राजा राष्ट्रे तद्वदसौ गृहे। अत एव तस्या एव स्तेयशंका न भर्तुरिति दिक्। इदमग्रे स्फुटीभविष्यति । समांशक इत्यत्र लौकिकप्रक्रियावाक्ये समासान्तप्रवृत्त्या तदा तत्र टाबबभावान्नेत्वमिति ध्वनयन्नाह—समांशभाज इति। समांशिका इति पाठे तु वैकल्पिकत्वात् कबभावे टापि स्वार्थिके कनि कथंचिदिष्टासिद्धिः । विष्णुरपि—"मातरः पुत्रभागानुसारिभागहारिण्यः" इति। यासामिति शेषषष्ठी। तत्राऽऽह—यासां पत्नीनामिति। एवमग्रेऽपि। वक्ष्यति योगीश्वर एव । अस्य वचनस्य विषमविभागे पत्न्यंशाभावे दम्पत्योः पुत्रवद्विभागे च न तात्पर्यं गमकाभावदनियामकत्वाच्च। किन्तु समांशे एव एको वा मिथो विकल्पात्, द्वितीयो वा वक्ष्यमाणपित्रादिविकल्पे तत्रेत्यभिप्रेत्याह — भर्त्रेति स्त्रीधनं तत्त्वेन मनुमूलकृदादिना प्रतिपादितं वक्ष्यमाणं रिक्थादिभिन्नम्। नन्वेवं तदधीनेऽभावः स्यादत आह—दत्ते त्विति— अयमेव विशेषस्तदेतदभिप्रेत्याह—यदा श्रेष्ठेति।
10 किन्तु उद्धृतोद्धेति बहुव्रीहिः। अत्र द्वितीये मानमाह—यथाऽऽहेति।*[गृहे च यत् परीभाण्डं—पीठमृन्मयदृषदादि उपकरणम् । अलंकारः आभूषणं धृतं तद्भार्याया अंश इत्यर्थः। रथः पितुः परीभाण्डं च गृहे उभयं पितुरंशः, अलंकारो भार्याया ज्ञातिधन चेत्येके ; इदं भार्याया इति तु हरदत्तः]* ॥ ११५ ॥

१- ख. कार्याः। च. कर्तव्यः कदा तत्पु०। २.ध०. २. १४. ९.। ३.प. प्रकृत्या। ४.—१८. ३४.। ५. भ. यासां पत्नीनामितिवक्ष्यतियोगीश्वर एव आधिवेदनिकस्थले ।......।

Cole.: Ch. I, Sec. ii, §§ 9—10.

**"ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः" इति पक्षद्वयेऽप्यपवादमाह— 11

## शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया ।

** स्वयमेव द्रव्यार्जनसमर्थस्य पितृद्रव्यमनीहमानस्यानिच्छतो यत्किञ्चिदसारमपि दत्त्वा पृथक्क्रिया विभागः कर्तव्यः पित्रा, तत्पुत्रादीनां दायजिघृक्षा मा भूदिति ॥ 12

** "ज्येष्ठं वा श्रेष्ठभागेन" इति न्यूनाधिकविभागो दर्शितः, तत्र शास्त्रोक्तोद्धारादिविषमविभागव्यतिरेकेणान्यथाविषमविभागनिषेधार्थमाह— 13

## न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः ॥ ११६ ॥

** न्यूनाधिकविभागेन पुत्राणामसौ न्यूनाधिकविभागो यदि धर्म्यः शास्त्रोक्तो भवति तदाऽसौ पितृकृतः कृत एव न निवर्तते इति मन्वादिभिः स्मृतः । अन्यथा तु पितृकृतोऽपि निवर्तते इत्यभिप्रायः, यथाऽऽह नारदः—"व्याधितः कुपितश्चैव विषयासक्तमानसः । अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः॥" इति ॥११६॥ 14

पितुर्द्रव्यानपेक्षस्यैव स्वकुटुम्बरक्षणादौ धर्मकार्ये च **शक्तस्यानीहमानस्येत्यादि** ॥ ११६ ॥

### बालंभट्टी

किंचित्पदस्वारस्यादाह — असारमपीति । अपिना सारस्यापि समुच्चयः । तत्र हेतुमाह—तत्पुत्रेति। इति हेतोरित्यर्थः ॥ ११५ ॥

धर्म्य इत्यस्य व्याख्या—शास्त्रोक्त इति । अत्रासंबद्धत्वाद्धेतुशेषपूरणेन व्याख्यातम्। अन्यथा तु तस्याशास्त्रोक्तत्वे तु अयथाशास्त्रेति पाठः । अन्यथेति पाठेऽपि स एवार्थः । एवं पितरि जीवति विभागस्य कालत्रयमुक्तम् । अस्य पितरि जीवति इत्येतत्तात्पर्येणोक्तवचनेनैव सङ्ग्रहः। अधुना तन्मरणानन्तरमपि चतुर्थो विभागकालः संभवति । तमाह—यथाऽऽहेति ॥ ११६ ॥

१ व्य० ११३ । २. क स्मृतम् । ३ —१३ ६ । ४ भ. उत्तरसङ्गतिमाहज्येष्ठमिति। । ५. भ वस्त्वेव तन्निषेधानुक्त्या प्रतिज्ञाभङ्गोऽत एव व्यवच्छेद्यमाहान्यथा त्विति । तस्य शास्त्रोक्तत्वेत्वित्यर्थः ।

1 **इदानीं विभागस्य कालान्तरं कर्त्रन्तर प्रकारनियममाह—

## विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।

** पित्रोर्मातापित्रोरूर्ध्वं प्रयाणादिति कालो दर्शितः । सुता इति कर्तारो दर्शिताः।सममिति प्रकारनियमः । सममेवेति रिक्थमृणं च विभजेरन्।**ननु "ऊर्ध्वं पितु-

अनीहमानस्यापि कालान्तराविरोधाय यत्किञ्चित्सन्मानमात्रं कृत्वा पृथक्करणं कार्यम्।

### सुबोधिनी

पूर्वं पुत्राणां चत्वारो विभागकाला दर्शिता निबन्धकर्त्रा । ते योगीश्वरेण द्विधा सङ्गृहीताः पितरि जीवतीति । तत्र पितरि जीवतीत्यत्र त्रयः[१] पक्षाः संम्भवन्ति । तद्यथा—पित्रिच्छायां ; तदनिच्छायामपि द्विधा अरजस्कायां मातरि निवृत्तरमणादिके पितरीत्येकः, मातुरनिवृत्ते रजसि पितर्यधर्मवर्तित्वादिगुणयुक्ते चेत्यपर इति । एते सकलकर्तृनियमाः । प्रकारनियमाश्च "विभागं चेत्पिता कुर्यात्" इत्यत्राभिप्रायतो दर्शिताः । अधुना पितृप्रयाणोपलक्षितो यः कालः ये च कर्तारो यश्च प्रकारःतत्प्रतिपादकं वचनमवतारयति—इदानीं विभागस्य कालान्तरमिति । नियमस्वरूपमेव निष्कृष्य दर्शयति—सममेवेति । ननु पितुरूर्ध्वं च प्रागपि च मन्वादिवचनैर्विषमविभागविधानात् सम-

### बालंभट्टी

तत्प्रतिपादकमूलमवतारयति —इदानीमिति,-तत्कथनानन्तरमित्यर्थः।एवं च मुनिना तेषां द्विधैव सङ्ग्रहः कृतः।तच्च पितरि जीवतीत्यत्र त्रयः पक्षाः,—पित्रेच्छा तदनिच्छा च। अन्त्याऽप्युक्तरीत्या द्विधेति बोध्यम्।तृतीयेऽपि पूर्वतो विशेषमाह—नियमं चाऽऽहेति पिता च पिता चेत्यर्थनिरासायाऽऽह—मातेति। ऊर्द्धमित्यस्य साकांक्षत्वादाह—प्रयाणादिति,—मरणादित्यर्थः। सुता इति-अत्रापि प्राग्वत्। सुतश्च सुतौ च सुताश्च सुताश्चेत्येकशेषो बोध्यः। पितृव्यादितो विभागे आद्योपयोगो बोध्यः । नन्वेवकाराभावेन तावन्मात्रोक्त्या कथं नियमलाभोऽतो नियमस्वरूपमेव निष्कृष्याऽऽह—सममेवेतीति । सर्वं वाक्यमिति न्यायेनेति भावः। अभेदभ्रमनिरासाय व्याचष्टे—रिक्थमिति। ननु जीवद्विभागे मूले न विषमविभाग उक्तः । पित्रोरूर्द्धं विभागे मन्वादिभिः स उक्त इति तयोरुभयप्रामाण्याद्विकल्पे समविषमविभागयोर्न्याय्ये सममित्यस्य सममपीत्येव व्याख्यानमुचितं न तु सममेवेतीति । तथा प्रकारनि-

---

१. त. दर्शितास्तेनिबन्धकर्त्रायो । २ भ. बोध्यम् । सर्वे वा स्युः समांशिन इत्यनेनापि सूचितमिदम् । अतस्तत्रपक्षद्वये समविभाग एवेति बोध्यम् । तृ० ।

Cole.: Ch. I, Sec. iii, 1—3.

श्च मातुश्च"ईत्युपक्रम्य "ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयु-र्यथैव पितरं तथा॥"ईत्युक्त्वोक्तम्—"ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः॥"इति। सर्वस्माद्धनसमुदायाद्विंशातितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तज्ज्येष्ठाय दातव्यम्। तदर्धं चत्वारिंशत्तमो भागो मध्यमं च द्रव्यं मध्यमाय दातव्यम् तुरीयमशीतितमो भागो हीनं च कनिष्ठाय दातव्यमिति मातापित्रोरूर्ध्वं विभजतामुद्धारविभागो दर्शितः। तथा "उद्धारेऽ-

## सुबोधिनी

विषमविभागयोर्विकल्पे न्याय्ये सममेवेति नियमो न घटत इत्याक्षिपति—ननूर्ध्वमित्या-दिना, कथं सममेव विभजेरन् इति नियम्यत इत्यन्तेन। धर्ममपि लोकविद्विष्टं नाऽऽचरेत् यतोऽस्वर्ग्यं तदिति विषमविभागाभावे हेतुरुक्तः। तत्र स्मार्तमुदाहरणं

## बालंभट्टी

यमपरतया व्याख्यानमयुक्तमिति शंकते—न तूर्ध्वमित्यादिना नियम्यते इत्यन्तेन। ऊर्ध्व-मिति प्रागुक्तस्य तदूर्ध्वत्वस्य प्रतिपादकमिदं लिखितम्। एवमग्रेऽपि। पित्र्यं—पितुरागतम् अशेषतः—सार्वविभक्तिकः प्रथमान्तात्तसिः। शेषाः—ज्येष्ठाभिन्नाः। उपजीवेयुः—पितृवत्त-स्यानुसरणं कुर्युः।"ज्येष्ठेन जातमात्रेण" ईतीदं मानवं च"बिभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता। भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिः॥ सर्वेच्छया कनिष्ठो-ऽपि शक्तः सन् बिभृयात् परान्।" ईति नारदात् शक्तेच्छा विषयकम्। एवं च मानवे ज्येष्ठत्वमुपलक्षणम्। इदं व्याचष्टे—सर्वस्मात् द्रव्यसमुदायादिति,—विभजनी-यादित्यर्थः। उद्धार इति शेषः। कर्मणि घञ्, उद्ध्रियमाण इति तदर्थः। स्वारस्यादाह—सर्वेति। यद्यपि स्यादित्यपकर्षेणान्वयस्तत्र तथाऽपि फलितमाह—ज्येष्ठायेति,—तत्कर्तृभिरुदासीनैरित्यर्थः। इतीति—तथोक्त्वा इत्यर्थकेन तेन तततस्तथा कुर्वतां स दर्शित इत्यर्थः। एवमग्रेऽपि। ततोऽवशिष्टं द्रव्यं सर्वे समं विभज्य गृह्णीयुरिति भावः।प्रकारा-न्तरेण मनूक्तमेव विषमविभागमाह—तथेत्यादिविभजतामित्यन्तेन। तथेत्यस्य दर्शित

१.म०१.१०५।२.म०९.१०५.।३ म० ९.११२.।४.थ. तुरभिहितः।५.ब.इदं ज्ये०। ६.म० १०६.।७.—१३.५, ६०.।८.भ. शेषो मौलएव। तत्र:क० ९. भ र्थः। योगरूढोऽयम्। तस्य मध्यमाण्यियेन अग्रेऽप्यन्वय इति०। १०. भ. र्थः। मिथोवा ईतीति।११. भ तेन मानवेन त०।

नुद्धृते त्वेषामियं स्यादंशकल्पना॥ एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः। अंशमंशं यवीयांस इति धर्मो व्यवस्थितः॥"इति। ज्येष्ठस्य द्वौ भागौ, तदनन्तरजातस्य सार्धं एको भागः, ततोऽनुजानामेकैको विभाग इत्युद्धारव्यतिरेकेणापि विषमो विभागो दर्शितः; पित्रोरूर्ध्वं विभजतां जीवद्विभागे च स्वयमेव विषमो विभागो दर्शितः— "ज्येष्ठं वा श्रेष्ठभागेन"इति; अतः सर्वास्मिन्नपि काले विषमो विभागोऽस्तीति कथं सममेव विभजेरन्निति नियम्यते॥ **अत्रोच्यते, सत्यम्। अयं विषमो विभागः शास्त्रदृष्टः, तथाऽपि लोकविद्विष्टत्वान्नानुष्ठेयः--"अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु।" इति निषेधात्। यथा—"महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।" इति विधानेऽपि लोकविद्विष्टत्वादननुष्ठानम्। यथा वा " मैत्रावरुणीं गां वशामनुबन्ध्यामालभेत" इति गवालम्भ-

4

## सुबोधिनी

दर्शयति—यथा महोक्षं वेति। श्रौतमुदाहरणं दर्शयति—यथा च मैत्रावरुणीमिति। अस्यार्थः—मित्रावरुणदेवताकां वशां वन्ध्याम् अनुबन्ध्यां गामालभेतेति। उक्तस्मार्त-

## बालंभट्टी

इत्यत्रान्वयः। तेषां ज्येष्ठादीनाम्। इयं वक्ष्यमाणा। अस्य व्याख्या— ज्येष्ठस्येति। इदमपि प्रकरणात् ज्येष्ठादेः कर्तृत्वाच्च। तदनन्तरमेवेत्याह—पित्रोरिति। नन्वेवमपि मूलानुक्तत्वान्नास्ति तत्र विषमविभाग इत्याशङ्कायां दृष्टान्ततयाऽऽह—जीवदिति। एतेनास्यात्रानुपयोग इत्यपास्तम्। स्वयमेव मूलकृतैव। एवं चर्मा(?)कर्तृत्वाविशेषादिनिगमनाविरहात्तत्र तदभावो दुर्वचः। तदाऽऽह-अत इति। सत्यमित्यादिना तत्सत्तासूचितेत्या सत्वलक्षणमप्रामाण्यम्। यद्यपि तथाऽप्यननुष्ठानलक्षणमप्रामाण्यमेवेत्याह—लोकेति। योगरूढोऽयम्। ननु तस्य लोक विद्विष्टत्वेऽपि लोकतः शास्त्रस्य प्राबल्यात् कथमननुष्ठेयत्वमत आह —अस्वर्ग्यमिति। धर्म्यमपि लोकविद्विष्टं नाऽऽचरेद्यतोऽस्वर्ग्यं तदित्यर्थः। एवं च शास्त्रेणैव तथोक्तत्वान्नानुष्ठानं तस्येति भावः। अत्र स्मार्तं दृष्टान्तमाह—यथेति। श्रौतं तमाह—यथा वेति। मैत्रेति—मित्रावरुणदेवताकां वशां वन्ध्यामनुबन्ध्यां गामालभेतेत्यर्थः। उक्तश्रौतस्मार्त-

---

१. म० ९. ११६, ७.। २. घ. च. छ. सार्धं। ३. क. 'विभागः' इति नास्ति। ४. व्य० ११४.। ५. आ० १५६.। ६ आ० १०९.। ७. भ. वीप्सा व्याख्या एकैक इति। अस्य। ८. ब. तथा०। ९ भ. सर्वस्मिन्निति जीवदजीवद्विभागेत्यर्थः।

Cole.: Ch. I, Sec. iii, §§ 3.—4.

नविधानेऽपि लोकविद्विष्टत्वादननुष्ठानम् । **उक्तं च—"यथा नियोगधर्मो नो[1] ना 5
नुबन्ध्यावधोऽपि वा । तथोद्धारविभागोऽपि नैव संप्रति वर्तते॥"इति ।**आपस्तम्बो- 6
ऽपि " जीवन्पुत्रेभ्यो दायं विभजेत्समम्" इति[3] समतामुक्त्वा "ज्येष्ठो दायाद इत्येके[4]" इति कृत्स्नधनग्रहणं ज्येष्ठस्यैकीयमतेनोपन्यस्य " देशविशेषे सुवर्णं कृष्णा गावः

नन्वेवमपि यद्यसौ ब्रूयात् 'नमयाकृत्स्नोभागसमा...वः समो दीयताम्' इति अतोऽस्त्येव विरोधः। नास्तीति ब्रूमः। कस्मात् यस्मान्नाधिकविभक्तानां पितापुत्राणामिति शेषः। "धर्मः पितृकृतस्स्मृतः" इति विभागधर्मः पित्रा यः कृतः स एव स्मृतो विहित इत्यर्थः । तस्मादविरोधः ॥ ११६ ॥

## सुबोधिनी

श्रौतोदाहरणोपेतं विषमविभागप्रतिषेधकं वचनं दर्शयति—उक्तं चेति । अस्यार्थः—अन्यो नियोगधर्मो विधिधर्मो विधायकवाक्यविहितो महोक्षमहाजालम्भनरूपः तथानुबन्ध्यावशालम्भनरूपश्च धर्मो यथा नास्ति तथा विषमविभागोऽपि नास्तीति । देशविशेषे सुवर्णं कृष्णा गाव इत्यादि,—*[अस्यार्थः—क्वचनदेशे सुवर्णं कृष्णा गावः 6
कृष्णं भौमं भूमौ जातं माषादि सस्यम्—कृष्णं भौमं कृष्णायसमित्येके - एतज्ज्येष्ठस्य पुत्रस्य । पितूरथः परीभाण्डं च गृहे यत् परिभाण्डमुपकरणं पीठादिकम् । भार्यायास्तु धृतो-

## बालंभट्टी

दृष्टान्तयुतं विषमविभागप्रतिषेधकं स्मार्तभाट्टवचनमप्याह—उक्तं चेति। नियोगो विधिः। अन्यः श्रौतान्यः,—यथा विधिवाक्यविहितधर्मो महोक्षाद्यालम्भनरूपो नेत्यर्थः। नेत्यस्योभयत्रान्वयः । अपि वेति —समुच्चये। धर्मो नो इति पाठान्तरम् । अनुबंध्येति—वसालम्भनरूप इत्यर्थः । तथोद्धारेत्यत्रान्वयः । कृत्स्नेति—ज्येष्ठ एवेति मनुः प्रागुक्त एव। गौतमोऽपि " सर्वं वा पूर्वस्य स चेतरात् बिभृयात् " इति[6]। देशेत्यादि—
*[कस्मिंश्चिद्देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भूमौ जातं भौमं धान्यं माषादि—कृष्णाय- 6
समित्यन्ये। इदं सर्वं ज्येष्ठस्य पुत्रस्यांशः; रथः यद्गृहे परीभांडमुपकरणं पीठादिकं तत्पितुरंशः, धृतोलंकारो भार्याया अंश ज्ञातिभ्यः पुत्रादिभ्यश्च यद्धनं लब्धं तच्च भार्याया अंश इत्येके,—मन्यन्त इति शेषः ।]* ज्येष्ठेत्यादिसर्वं देशविशेष इत्येतत्सर्वमेके मन्यन्त इत्यर्थः[7]।

१. बा० भ०. धर्मोन्यो । २ क. च. । ३. ध० २. १४. १. । ४ ध० २. १४........।
५ थ. द. धान्यम । ६.—२८. २. । ७. मिताक्षरानुसृतपाठो दत्तोऽस्माभिः ।

Cole.: Ch. I, Sec. iii, §§ 4.—6.

कृष्णं भौमं ज्येष्ठस्य" "रथः पितुः परीभाण्डं च गृहे" "अलङ्कारो भार्यायाः" "ज्ञातिधनं चेत्येके" इत्येकीयमतेनैवम् उद्धारविभागं दर्शयित्वा "तच्छास्त्रैर्विप्रतिषिद्धम्" इति निराकृतवान् । तं च शास्त्रविप्रतिषेधं स्वयमेव दर्शयतिस्म " 'मनुः पुत्रेभ्यो दायं व्यभजत्' इत्यविशेषेण श्रूयते" इति।** तस्माद्विषमो विभागः शास्त्रदृष्टोऽपि लोकविरोधात् 7 श्रुतिविरोधाच्च नानुष्ठेय इति सममेव विभजेरन्निति नियम्यते ।।

## सुबोधिनी

ऽलङ्कारः । तथा ज्ञातिभ्यः पित्रादिभ्यश्च यल्लब्धं तज्ज्येष्ठपुत्रपितृभार्याणां यथाक्रमेणांशो भवतीति ।]*स्वयमेव दर्शयति स्मेति,—स्वयमापस्तम्ब इत्यर्थः।मनुः पुत्रेभ्यो दायमिति,—अस्यार्थः—मनुरविशेषेण........ ॥११६॥

## बालंभट्टी

विप्रपिषद्धं विरुद्धम्। स्वयमेव आपस्तंब एव।मनुरिति तैत्तिरीयश्रुतिवाक्यमिदम्। तत्र पुत्रेभ्य इति बहुवचननिर्देशाद्दायमित्येकवचननिर्देशाच्चाविशेषेण श्रवणमित्यर्थः। सिद्धान्तमुपसंहरति —तस्मादिति। श्रुतीति मनुरिति—श्रुतीत्यर्थः सममेवेति । अत एव जीवद्विभागे स एवोत्तरपक्षत्वेनोक्तः। [9]ज्येष्ठं वेति तु युगान्तरविषयकम्। अत एव न्यूनाधिकेति प्रागुक्तस्य तथाकर्तव्यत्वे न तात्पर्यम्। किन्तु यदिविशेषादर्शी (?) शास्त्रोक्तिमात्रेण। यदि दैवात् पिता शास्त्रोक्तप्रकारेण विभागं करोति तदा न निवर्तत इति तात्पर्यम्। परमतात्पर्यन्तु प्रागुक्तमेव व्याख्यातेति न तद्विरोध इति बोध्यम्।[10] एतेन प्राच्यानां उद्धारस्य विषमविभागस्य च प्रतिपादनमपास्तम् ॥ ११६ ॥

---

१. घ. २ १४. ६, ७, ८, ९। २. ख. ग. घ. छ. एव । ज. 'एव' इति नास्ति । घ कृत्स्नधनग्रहणंज्येष्ठस्य इत्येकीयमतेनैवोद्धारविभागं दर्शयित्वातच्छा० । ३ घ. २ १४. १०. । ४. विभजेदिति बहुषु पुस्तकेषु । ५. घ० २. १४. ११.। ६ अत्र किञ्चित् ग्रन्थपातो भाति । ७. भ. स एवाग्रेऽवलम्बितश्च ज्येष्ठम् । भ. कम् । जीवद्विभागे तु पितानेकं पुत्रं विशेषयेत् । निर्मात्रयेन्नचैकैकमस्मात्कारण विनेति का...। ९. भ. प्रकारेण विषयविभागं । १०. भ. प्रकारेण विहयविभागं । १० भ अत्र बहुघठोऽस्ति ।

Cole.: Ch. I, Sec. iii, §§ 6—7.

** 'मातापित्रोर्धनं सुता विभजेरन्' इत्युक्तं ; तत्र मातृधनेऽपवादमाह — 8

## मातुर्दुहितरः शेषमृणात्

**मातुर्धनं दुहितरो विभजेरन्, ऋणाच्छेषं—मातृकृतर्णापाकरणावशिष्टम्। 9
अतश्चर्णसमं न्यूनं वा मातृधनं सुता विभजेरन्नित्यस्य विषयः। **एतदुक्तं भवति— 10

स्वातन्त्र्येण तु **विभजेयुः सुताः पित्रोरित्यादि ॥ ११७ ॥**

ऋणमपनीयावशिष्टं विभजेयुः पुत्राः पित्रोरूर्ध्वं रिक्थम्। सुतग्रहणमौरसप्रतिपत्त्यर्थम्। माता च पिता च पितरौ। तयोरपि पित्रोरूर्ध्वम् तयोरित्यर्थः। पितुरूर्ध्वं च पैतृकं मातुरूर्ध्वं च मातृकम्। रिक्थाभावेऽपि ऋणमंशतो दद्युः। ऋणदाने च साम्यवचनाद्विभागेऽपि साम्यमेवेत्यवगम्यते। यत्तु स्मृत्यान्तरे - "विंश उद्धारः सर्वद्रव्याच्च यद्वरम्" इत्यादि विभाग-

### सुबोधिनी

ऋणावशिष्टेऽपि मातृधने पुत्राणामनधिकारो दुहित्रादिषु सत्सु। अत एव मातृकृतर्णसमे [1]न्यूने च सुतरामनधिकारान्मातृकृतर्णसमं [1]न्यूनं च मातृधनं "विभजेरन् सुताः पित्रोः" इत्यस्य[2] वचनस्याविषय इत्याह - अतश्चर्णसममिति। यथा ऋणावशिष्टं मातृधनं दुहित्रादिषु

### बालंभट्टी

अव्यव[3]हितसङ्गतिमाह — मातेति। अनुवृत्त्या व्याचष्टे—मातुरिति। प्रकृतत्वादाह—मातृकृतेति। नन्वस्य तदपवादत्वे शेषमृणादिति व्यर्थम्। न च मातं शे[4]साफल्याय यदुपादानमिति वाच्यम्। ताभ्य ऋते इत्येकवाक्यतया तस्य दुहित्रभावविषयतया साफल्यात्। अत आह-अतश्चेति,—तद्विशेषणोक्तेश्चेत्यर्थः। ऋणापाकरणावशिष्टमातृधने अपवादवशात् दुहितृसत्त्वे तत्संबन्धित्वलाभेन पुत्रकर्तृकविभागानर्हत्वेऽपि समत्वे न्यूनत्वे च विशेषाभावेनापवादाप्रवृत्त्या दुहितॄणां विद्यमानत्वेऽप्यनधिकारात्तत्र सामान्यवचनस्यैव प्रवृत्तिरिति भावः। ननु यथा[5] दुहितृषु सतीषु ऋणावशिष्टं तत्पुत्रविभागानर्हं तथा समं न्यूनं च सुतरां पुत्रविभागानर्हं तस्यावश्यदेयत्वादत आह—एतदिति। एवं च तैरेव गृहीत्वा ऋणं देयमिति

१. थ ने वा सु०। २ त. द. स्य वि०। ३. भ. ततर्थं पित्रोरित्युक्तं तत्फलं सूचयन्नव्यव०। ४. ब तत्सापव्यायतदु पादन। ५. प. फ. यथेति नास्ति।

Cole.: Ch. I, Sec. iii, §§ 8—10.

मातृकृतमृणं पुत्रैरेवापाकरणीयं न दुहितृभिः; ऋणावशिष्टं तु धनं दुहितरो गृह्णीयु-रिति। युक्तं चैतत्। "पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।" इति स्त्र्यव-यवानां दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि, पितृधनं पुत्रगामि पित्रवयवानां पुत्रे-

11 षु बाहुल्यादिति। ** तत्र च गौतमेन विशेषो दर्शितः "स्त्रीधनं दुहितॄणामप्रत्ताना-मप्रतिष्ठितानां च" इति। अस्यार्थः—प्रत्ताऽप्रत्तासमवायेऽप्रत्तानामेव स्त्रीधनम्। प्रत्तासु च प्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितानां चेति। अप्रतिष्ठिता निर्धनाः॥

वैषम्यमवगम्यते तद्भ्रातॄणां परस्परानुमित्या विज्ञेयम्। अन्ये तु गुणापेक्षं विभागवैष-म्यवाक्यानां विषयं वर्णयन्ति। कर्मार्थतां च तस्य मन्यमान आह। तत्तु पुरुषार्थ-त्वात् द्रव्यस्यायुक्तमेवेति गम्यते। यानि त्वग्निहोत्राद्यकरणे द्रव्यापहरणादिवचनानि तान्यन्यानि वक्ति पुरुषप्रशंसानार्थानि न तु द्रव्यक्रत्वर्थप्रतिपादकानि। अतो भ्रातॄणामेवे च्छया विभागवैषम्यं न त्वन्यायवर्तिनां निरंशत्वगौतमेनोक्तं "तदप्येकेषाम्" इति वच-नात्। परमतत्त्वेनैवानुशासनमात्रप्रयोजनतया व्याख्येयमित्येषा दिक्। पुत्राः समांशतो धनभागिनः। तथैव मातुर्दुहितरः॥ किं तु शेषमृणाद्विभजेरन्। नत्वधनाया अप्यृणं दद्युः

## सुबोधिनी

सत्सु विभागानर्हं, तथा दुहित्रादिष्वसत्स्वपि तद्धनमृणसमं न्यूनमपि विभागानर्हमि-त्यर्थः। प्रत्ताप्रत्तेति,—प्रत्ता विवाहिता, अप्रत्ता कन्यका॥ ११७॥

## बालंभट्टी

भावः। एवं वाचनिकं वैषम्यं स्मृत्यन्तरलब्धयुक्त्या समर्थयते—युक्तमिति[5]। एतेन वैपरी-त्यादिशङ्कानिरस्ता[6]। विशेषमाह—तत्र चेति। दुहितृविषयेऽपीत्यर्थः। ननु[7] दुहि-तॄणामित्यस्योक्ततुल्यार्थत्वात् सामान्येन तेनैव सिद्धेः प्रत्तानामित्यादि व्यर्थमत आह—दुहितृषु प्रत्तेति। प्रत्ता विवाहिताऽप्रत्ताऽनूढा। प्रतिष्ठिता सधनाऽप्रतिष्ठिता निर्द्धना। तथा च तत्रापि विशेषबोधकत्वान्न वैयर्थ्यमिति भावः। एवार्थचस्योभयत्रान्वय इत्याह—। एवेति॥ ११६॥

---

१. म०. ३. ४९.। २—२८. २४.। ३. क वा। ४. द. अपीति नास्ति। ५. भ. त्ति 'शुक्रे' इत्यस्यभयत्रान्वयः(?) एवं। ५. भ. 'एवं चास्य तन्नरणोत्तरं पुत्रादिकर्तृकविषयत्वेन पितरि जीवति पुत्रकर्तृक....मातरिर्जीवत्यतद्धने जनान्तः स्वत्वेऽपि दुहितृकर्तृको न विभागो नापि मातृकर्तृको वचनाभावात्। किंतु तस्येच्छया यद्दत्तं तत्तदीयमेव। अत एव वक्ष्यति—पितृभ्यां यस्येति। भार्याधनमविभाज्यमिति प्रागुक्तं तु तत्पदस्वारस्यात्पतिकर्तृकविभागविषयकमिति न विरोधः।' इत्याधिकम्। ७. भ स्त्रीति प्रात्यसत्यामातृधनमित्यर्थः। ननु।

Cole.: Ch. I, Sec. iii, §§ 10—11.

** दुहित्रभावे मातृधनमृणावशिष्टं को गृह्णीयादित्यत आह— 12

ताभ्य ऋतेऽन्वयः ॥ ११७ ॥

** ताभ्यो दुहितृभ्यो विना दुहितॄणामभावे अन्वयः पुत्रादिर्गृह्णीयात् । एतच्च 13 "विभजेरन् सुताः पित्रोरूर्ध्वम्" इत्यनेनैव सिद्धं स्पष्टार्थमुक्तम् ॥ ११७ ॥

**अविभाज्यमाह— 1

पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ ११८ ॥
क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ११९ ॥

पुत्राणां तु मात्रसंबन्धः किं नास्त्यैव नास्ति ? किं तु ताभ्यो दुहितृभ्य ऋते दाय एवान्वय इति वर्णयन्ति तत्त्वम् युक्तम् । न जामयेतान्वोरिक्थमारैतिमंत्रवर्णात् ? पितृधनाभिप्रायं तदिति चेन्न । यदि मातरो जनयन्तवाह्निमिति मात्रसंबंधवचनात् । यदि मातरःस्त्रियं पुत्रं जनयन्ति वह्निर्वहनयोग्यः पुत्रः । तत्र पुत्र एव दायादः न स्त्र्यपि इत्यर्थः । अस्मादेव वह्निवचनमुद्वाहासमर्थस्य क्लीबादेर्द्रव्याभावासिद्धिः । दुहितृसद्भावेऽपीति । तर्हि पुत्राणामेवास्तु न मातुर्दुहितर इति स्मृतेः । स्मृत्यन्तरान्मंत्रवर्णानुसाराच्च दुहिभस्वरूपार्थत एव । इत्यतस्तदभावे पुत्रगामीति स्थितम् ॥११७॥[1]

सहस्थितानां च एकेन पितृद्रव्या विनाशेनेत्यादि ॥ ११८ ॥

बालंभट्टी

क[2] इति—सामान्यवचनं त्वन्यविषयकमिति नात्र प्रवृत्तिरिति मन्यते । पदार्थमुक्त्वा वाक्यार्थमाह—दुहितणामिति[3] । सिद्धमिति—अर्थात् सिद्धमित्यर्थः । तद्वदर्थमपि तस्यैव विषय इति भावः ॥ ११७ ॥

१. इदं प्रायः अशुद्धमेव । २. भ. शङ्कते दुहित्रियि क । ३. भ. ति । मन्यते इति सूचितमेवाऽऽह एतच्चेति । सि० । ४ प. तदुभय० ।

Cole.: Ch. I, Sec. iii, §§ 12.—13 ; Sec. iv, § 1.

2 ** मातापित्रोर्द्रव्याविनाशेन यत्स्वयमर्जितं मैत्रं मित्रसकाशाद्यल्लब्धं, औद्वाहिकं विवाहलब्धं,दायादानां भ्रातॄणां तन्न भवेत्[1]। क्रमात्पितृक्रमादायातं यत्किञ्चित् द्रव्यमन्यै-र्हृतमसामर्थ्यादिना पित्रादिभिरनुद्धृतं यः पुत्राणां मध्ये इतराभ्यनुज्ञयोद्धरति तद्दायादेभ्यो
3 भ्रातृभ्यो[2] न दद्यात् उद्धर्तैव गृह्णीयात्। ** तत्र क्षेत्रे तुरीयांशमुद्धर्ता लभते शेषं तु सर्वे-षां सममेव; यथाऽऽह शङ्खः—"पूर्वनष्टां[3] तु यो भूमिमेकश्चेदुद्धरेत्क्रमात्। यथाभागं
5 लभन्तेऽन्ये दत्त्वांऽशं तु तुरीयकम्॥" इति। **क्रमादभ्यगतामिति शेषः।**तथा विद्यया

सुबोधिनी

"पूर्वनष्टां तु यो भूमिम्" इत्येतच्छङ्खवचनं पूरयति—क्रमादभ्यागतामिति शेष इति। अत्र क्रमादित्येतच्छङ्खवचनस्थमेव पदम्। अभ्यागतामित्येतदेव शेषपूरकं पदम्। मूलवच-नस्थः"पितृद्रव्याविरोधेन"इत्ययमंशो विभागानर्हत्वेन वचनोपात्ता ये मैत्रादयस्तेषां सर्वेषां

बालंबट्टी

अवीति,—विभागदार्ढ्यायैवेति[4] भावः। अत्र वाशब्दो विकल्पे[5]। अत्र विरोधो नाश एवेत्याह—द्रव्यावीति। यदिति—अन्यदिति[6] शेषः,—पितृद्रव्यभिन्नमिति तदर्थः। तद्भेदानाह—मैत्रमित्यादिना। लिङर्थाविवक्षयाऽऽह—भवतीति। एवमग्रेऽपि। क्रमादिति द्वितीयपद्यप्रतीकम्। अथ व्याचष्टे—पित्रिति। तात्पर्यार्थमाह[7]—उद्धर्तेति। एवमग्रेऽपि। विशेषमाह—क्षेत्रेति[8]। सर्वेषां—उद्धर्त्रादीनां। क्रमादित्यस्योद्धरणाऽन्वये फलाभावेन मूलैक-वाक्यतया च क्रमादिति वचनस्य[9] प्रतीकं गृहीत्वा शेषं पूरयति—अभ्यागेति। तुर्यपादं व्याचष्टे—तथेति। एवेत्यस्यात्रान्वयेनाऽऽह— विद्ययैवेति। विनिगमनाविरहादस्यार्थ-[10]

१. क. भवति। २. ख. ग. घ. भ्रात्रादिभ्यो। ३. ख. ज. पूर्वं नष्टां। ४. भ. यैव। अत एवप्रकरण सगतिरिति भावः। ५. भ. चैरोति चेति पाठान्तरम्। ६. भ. किञ्चिदिति। ७ नन्वेवं पूर्वैरेवोद्धारः कुतो न कृतः। अत आह असामर्थ्येति। अभ्यनुज्ञाया अभावे देयमेवे-त्याह इतरेति। ता०। ८. भ. चस्त्वर्थे। तत्र च क्षेत्रे इति पाठान्तरं युक्तम्। तेषां मध्ये तद्विषये इत्यर्थः। सर्वेषामुद्धर्त्रादीनां यथा भागमिति सर्वस्या भूमेस्तुर्यांशमुद्धर्त्रे दत्त्वा शेषं तेन सह सर्वे यथांऽशं गृह्णीयुरित्यर्थः। ९. ब. नस्थप्र०। १०. भ. द्वात्स्मृत्यन्तरैकवाक्यतया चास्यार्थोच्चय आह—

Cole.: Ch. I, Sec. iv, §§ 2—5.

वेदाध्ययनेनाऽध्यापनेन वेदार्थव्याख्यानेन वा यल्लब्धं तदपि दायादेभ्यो न दद्यात्— अर्जक एव गृह्णीयात्। ** अत्र च "पितृद्रव्याविरोधेन यत्किञ्चित्स्वयमर्जितम्।" 6 इति सर्वत्र शेषः। अतश्च पितृद्रव्याविरोधेन यन्मैत्रमार्जितं, पितृद्रव्याविरोधेन यदौद्वाहिकं, पितृद्रव्याविरोधेन यत्क्रमादायातमुद्धृतं, पितृद्रव्याविरोधेन विद्यया यल्लब्धमिति प्रत्येकमभिसंबध्यते। तथा च पितृद्रव्याविरोधेन प्रत्युपकारेण यन्मैत्रम्, आसुरादिविवाहेषु यल्लब्धम्, तथा पितृद्रव्यव्ययेन यत्क्रमायातमुद्धृतं, तथा पितृद्रव्यव्ययेन लब्धया विद्यया यल्लब्धं तत् सर्वं सर्वैर्भ्रातृभिः पित्रा च विभजनीयम् ** तथा "पितृद्रव्या- 7 विरोधेन" इत्यस्य सर्वशेषत्वादेव पितृद्रव्याविरोधेन प्रतिग्रहलब्धमपि विभजनीयम्।

सुबोधिनि

शेष इत्याह—अत्र च पितृद्रव्याविरोधेनेति। उपलक्षणं चैतत्। यद्यत् स्मृत्यन्तरेऽप्यविभाज्यमुक्तं तस्य तस्य योगस्यायं शेष इति द्रष्टव्यम्। "पितृद्रव्याविरोधेन" इत्यस्यांशस्य (अ)विभाज्यत्वेन वचनोपात्तानां मैत्रादीनामेव शेषत्वात् यथा पितृद्रव्यविरोधेनोपार्जितानां मैत्रादीनां विभाज्यत्वं, तथा मैत्राद्यनन्तर्भूतत्वात् प्रतिग्रहलब्धस्य पितृद्रव्याविरोधेनोपार्जितस्यापि विभागार्हत्वमित्याह—तथा पितृद्रव्याविरोधेनेति। यदि "पितृद्रव्याविरोधेन" इत्ययमंशो मैत्रादिशेषो न स्यात् तदाऽयमर्थः सम्पद्यते—यद्यत् पितृद्रव्याविरोधेनोपार्जितं, तत्तदविभाज्यमिति। तथाचानया वचनव्यक्त्या साधारण्येन तादृशानां मैत्रादीनामप्यवि

बालंभट्टी

त्रयमाह—वेदेति। अस्य मुख्यत्वादिति भावः। उक्तं व्याख्यानं साधारणमपि स्वाभिमतपरमिति दर्शयति—अत्र चेत्यादिना। अत्र च—मूलवाक्ये च। अन्यदर्थमाह—किंचिदिति। एवं पाठ एव वा,—तत्र सर्वशेष इति विभागनर्हत्वेन विशिष्यवचनोपात्तानां मैत्रादीनां सर्वेषां शेषोऽयमंश इत्यर्थः। अतश्च—तस्य सर्वशेषत्वे च। फलितमाह—तथा चेति। विरोधेनेत्यस्य व्याख्या—प्रत्युपेति। ब्राह्मे पितृद्रव्यविरोधाभावादाह—असुरादीति। विभेति—अत एव विभागप्रकरणसङ्गतिः। न तथेति--पितृद्रव्याविरोधेनार्जितं मैत्रादि न विभजनीयमित्यर्थः। न केवलमिदं स्ववचनोपात्तसर्वशेषः, अपि तु अन्यदपि स्मृत्यन्तरे यदविभाज्यमुक्तं तस्याप्ययं सर्वस्य शेषो—मैत्रादीनामुपलक्षणत्वात्। एवं च तादृशमैत्रादेर्यथा विभाज्यत्वं तथाऽन्यस्यापीत्याह--पितृद्रव्येति। क्वचिन्नञ्रहितः पाठः। अयमेवमुक्तो व्याख्यातृ-

१. ङ. ज. नैव य। २. च.अत्र पि०। ३.त.तस्य यो०। ४. त. स्यावच०। ५.त. थाप्रति। ६. त. स्यापि पि। ७. भ. ति। पित्रा चेति। अत एव सर्वविभागेष्वित्युक्तम्। वि। ८ भ. स्पष्टार्थं वाच्यार्थमाह—न तथेति। ९. भ. रेषु। १०. भ. युक्तश्चैतत्सिद्धि।

Cole.: Ch. 1, Sec. iv, §§6—7.

8 अस्य च सर्वशेषत्वाभावे मैत्रमौद्वाहिकमित्यादिनाऽऽरब्धव्यम्[1]।**अथ पितृद्रव्याविरोधेनापि यन्मैत्रादिलब्धं तस्याविभाज्यत्वार्थं मैत्रादिवचनमर्थवदित्युच्यते[2] । तथा सति समाचारविरोधः,

## सुबोधिनी

भाज्यत्वे[3] सिद्धे पुनस्तेषां "मैत्रमौद्वाहिकम्" इत्यविभाज्यत्वाभिधानमनुपपन्नं स्यादित्याह—अस्य च सर्वशेषत्वाभाव इति । ननु मैत्रादि[4]पितृद्रव्यविरोधेनार्जितमप्यविभाज्यमित्येतदर्थं मैत्राद्यारम्भ इति विशेषमाशङ्कते—अथ पितृद्रव्यविरोधेनेति । शिष्टाचाररूपप्रमाणविरोधान्नैवमिति परिहरति—तथा सतीति । नन्वेतदनुपपन्नं—वचनापेक्षयाऽऽचारस्य दुर्ब-

## बालंभट्टी

शैलीस्वरससिद्धिश्च पुनर्वाच्यार्थकथने फलाभावाच्च तदा तथेत्युत्तरशेष एव । न स्वतन्त्रम्। केचित्तु न तथेत्येव पाठस्तदाऽप्युत्तरशेषत्वेन न स्वातन्त्र्यमिति। अयमर्थः—"पितृद्रव्याविरोधेन" इत्यस्य सर्वशेषत्वादेव वचनोपात्तमैत्रादिमात्रशेषत्वादेव । यथा तद्विरोधेनोपार्जितानां मैत्रादीनां विभाज्यत्वं तथा मैत्राद्यन्यत्वात् पितृद्रव्यविरोधेन प्रतिग्रहोपार्जितस्यापि विभाज्यत्वमित्यर्थः । तस्य तदशेषत्वेन स्वातन्त्र्ये तु तत्रापि विरोधेनोपार्जने विभाज्यत्वापत्तिरिति भाव इत्याहुः । तन्नेति[5] केचित्—अनुपद[6]वक्ष्यमाणतथेत्यादिग्रन्थविरोधापत्तेः[7] । ननु तथैवास्त्विति तत्रेष्टापत्तिर्मास्तु तस्य तच्छेषत्वमिति स्वातन्त्र्यमेवास्तु ब्राह्मणवसिष्ठन्यायेन तस्य मैत्रादिभिन्नपरत्वमेवास्त्वत आह—अस्य चेति । तस्य तदशेषत्वे किंचित्पदादिस्वारस्याद्यद्यत्तदविरोधेनार्जितं तत्सर्वमविभाज्यमित्यर्थस्य वचनव्यक्त्यालाभेन साधारणेनानेनैव तादृशप्रतिग्रहलब्धवत् तादृशमैत्रादेरविभाज्यत्वे सिद्धे पुनस्तदभिधानानर्थक्यमित्यर्थः । ब्राह्मणवसिष्ठन्यायस्य[8] तु न विषयः—सति गमकेऽन्यथानुपपत्तौ च तत्प्रवृत्तेः। नैवं प्रकृते भिन्नविषयतया । तत्साफल्यं शङ्कते—अथेति । अपिः पूर्वसमुच्चये । भाज्यत्वादिति—फलरूपहेतौ पञ्चमी,—तत्प्रतिपादनार्थतयेत्यर्थः । भाज्यत्वायेति पाठस्तु सुगम एव । समाचारेति—शिष्टाचाररूपप्रमाणविरोध इत्यर्थः । ननु श्रुत्यादीनां पूर्वपूर्वप्राबल्यस्योक्तत्वेन वचनादाचारस्य दुर्बलत्वेनेदमयुक्तम्।आचारेण स्मृतिकल्पनेऽपि क्लृप्तस्मृतेर्झोडित्युपस्थितेः प्राबल्यमेवेति चेन्न-आशयानवबोधात्। तथा हि बाधोऽगतिकागतिः—बाधेनै-

१. क. ख. ङ. च. त्वात् । २. ज. ते चेत् तथा । ३. थ. द. ज्यत्वासिद्धः पु० । ४. थ. द. त्रादिकं तु पि० । ५. भ. न्न । अ० । ६. प. भ. दे । ७. भ. त्तेः । ग्रन्थशैल्यस्वारस्याच्च । ८. भ. सं...द्रढयन्नाह । ९. भ. स्तु न अयं वि० ।

Cole.: Ch. I, Sec. iv, §§ 7—8.

विद्यालब्धे नारदवचनविरोधश्च—"कुटुम्बं बिभृयाद्भ्रातुर्यो-
विद्यामधिगच्छतः ।

## सुबोधिनी

त्वात्। अथमतम् ; आचारोऽपि वचनं कल्पयन्नेव प्रमाणं न स्वत इत्यन्यमतेऽपि वचनमेवेति । एवमप्याचारपरिकल्पितया स्मृत्या यावत् स्वार्थः प्रत्येष्यते तावता "मैत्रमौद्वाहिकम्"इत्यादिस्मृत्या तदर्थप्रतीतेर्विलम्बितत्वाविलम्बितत्वप्रतीतिभ्यामाचार एवदुर्बल इति चेत्—मैवम् । अगतिका हीयं गतिर्योऽयं बाधः । न हि दुर्बलमित्येव बाध्यते, अपि तु विरोधे । विरोधश्च एकस्मिन् विषये परस्परविपरीताभिधानेन तथा सत्यबाधेनोपपत्तौ बाधो न न्याय्य इति न्यायेन "मैत्रमौद्वाहिकम्"इत्यस्य वचनस्य अस्मदुक्तरीत्या शिष्टाचाराविरोधेनैव वाक्यार्थप्रमित्युपपत्तेरर्थान्तरकल्पनया विरोधोऽनुपपन्न इति सुष्ठूक्तं समाचारविरोध इति (इति) सर्वमनवद्यम् । न केवलं समाचारविरोधः, अपि तु मैत्रादिगणपरिपाठितविद्यालब्धधनविषये नारदवचनमपि विरुद्ध्येतेत्याह —विद्यालब्ध इति । नारदवचस्यायमर्थः—विद्याध्ययनं कुर्वतो भ्रातुर्योऽन्यो भ्राता कुटुम्बं पोषयति स पोषकस्तस्माद् विद्याधनाद् भागमश्रुतः सन्नपि प्राप्नुयादिति । अत्र कुटुम्बभरणस्य धनग्रहणे हेतुत्वोपन्यासादौपाधिकी विद्याधनांशप्राप्तिर्न भ्रातृत्वेन स्वाभाविकीति विद्याधनस्य न स्वतो विभागार्हतेत्यवि-

## बालंभट्टी

वेति न्यायात् । न हि दुर्बलमित्येव बाधते किन्तु विरोधे निरवकाशत्वे च । विरोधश्चैकत्र मिथोभिन्नोक्तया। नैवमत्र । अबाधेनैवोपपत्तौ बाधो न न्याय्य इति न्यायेन मैत्रादिवचनस्यास्मदुक्तरीत्योपपत्तेरत एव न निरकाशत्वमपि। एवं चाऽऽनर्थक्यप्रतिहतानामिति न्यायेन विपरीतो बाध इति उक्तरीत्या तस्य तथार्थकत्वे शिष्टाचारविरोधः स्यादेवेति दिक् । न केवलमाचारविरोधः,अपि तु मैत्राद्यन्तर्थतविद्यालब्धविषये स्मृतिविरोधोऽपीत्याह—विद्यालब्धे इति, —तदंशे इत्यर्थः। तदेवाऽऽह—कुटुंबमिति।विद्याध्ययनं कुर्वतो भ्रातुर्योऽन्यो भ्राता तस्य कुटुंबं पोषयति सः अश्रुतोऽपि सन् वेदशास्त्राध्ययनरहितो मूर्खोऽपि सन् तस्माद्विद्याधनात्तदर्जितविद्यया लब्धाद्धनाद्भागमंशं लभेतेत्यर्थः । असुतोऽपीति पाठान्तरम् । अत्र कुटुंबभरणस्य धनग्रहणे हेतुत्वोक्त्या औपाधिकी विद्याधनांशप्राप्तिर्न भ्रातृत्वेन स्वाभाविकी[२] । यदि तथा स्यात्तर्हि तत्वोक्तिरनर्थिका स्यादिति विद्याधनस्य यथा कथंचिदर्जितस्य न स्वतो विभागार्हता। अन्यथा पितृद्रव्यविरोधेनाप्यर्जितस्याविभाज्यत्वे अत्राप्यविभाज्यत्वमेवोचितमिति भाग-

१. थ. चनमेवेति (?) । २. द स्यस्मिन् म० । ३. थ. द. वता स्वा० । ४. थ द. लं दुर्बलमि ५ ध. एतदाादिविरोध इत्यन्तं नास्ति । ६ भ. सोऽपि न ।

Cole.: Ch. I, Sec. iv, § 8.

भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥" इति । तथा विद्याधनस्याविभाज्यस्य लक्षणमुक्तं कात्यायनेन—"परभक्तोपयोगेन विद्या प्राप्तान्य तस्तु या। तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते॥"इति। तथा "पितृद्रव्याविरोधेन" इत्यस्य भिन्नवाक्यत्वे प्रतिग्रहलब्धस्याविभाज्यत्वमाचारविरुद्धमापद्येत्

## सुबोधिनी

भाज्यत्वमिति तात्पर्यार्थः। कात्यायनवचनेन पित्रादिव्यतिरिक्तान्यान्नाभ्यवहरणप्राप्तविद्यालब्धधनस्यैवा विभाज्यत्वावगमाद्विद्यालब्धे धने तद्वचनविरोधोऽपीत्याह-तथा विद्याधनस्येति। कात्यायनवचनस्यष तात्पर्यार्थः—पितृद्रव्याविरोधेन या विद्याप्राप्ताऽन्यसकाशात्, तया यल्लब्धं धनं तद्विद्याप्राप्तधनं नान्यत्। ईदृशमेवाविभाज्यम्। एतद्विपरीतं तुविद्याधनमविद्याधनमिव, अतो विभाज्यमेवेति। "प्रितृद्रव्याविरोधेन" इत्यस्य मैत्रादिसर्वशेषत्वाभावे दोषान्तरमाह—तथा पितृद्रव्याविरोधेनेत्यस्य भिन्नवाक्यत्व इति। एतदुक्तं भवति—

## बालंभट्टी

कथनासंगतिरिति भावः।ननु विभक्तभ्रातृस्थलेऽपूर्वार्थबोधकं तत्। किं च मैत्रादिवचनप्राप्तस्या विभाज्यत्वस्यापवादकं तदिति न विरोधोऽत आह--तथाविद्येति।परेतिपित्रादिभिन्नान्नौदना द्यभ्यवहरणेनेत्यर्थः। अन्यतः—पित्रादिभिन्नात्। तथा च पित्रादिद्रव्याविरोधेन या विद्यालब्धा तया यत् प्राप्तं धनं नान्यत् ईदृशमेवाविभाज्यमतोऽन्यथायत्तद्विद्याधनमेव नेति तद्विभाज्यमेवेति कात्यायनतात्पर्येण तथार्थस्यैतद्विरुद्धत्वं स्पष्टमेवेति भावः। तस्मात्तथा सार्थक्याभावेन तस्य तदशेषत्वे तदानर्थक्यदोषः। सुस्थ एव तत्र दोषान्तरमाह—तथेति। प्रतिग्रहेति पितृद्रव्याविरोधेनेत्यादि वचनस्य तथा प्रागुक्तरीत्या यद्यत् पितृद्रव्येत्याद्यर्थेन निरभिसंधिकदानक्रियासंप्रदानभूतस्यैव प्रतिगृहीतत्वेन प्रतिग्रहलब्धस्य पितृद्रव्याविरोधेनोपार्जितत्वेन तस्याप्यविभाज्यत्वापत्तौ वृद्धव्यवहारविरोध इति भावः।

---

१. १३. १०। २. भ० स्वाभाविकीत्युक्तम्। यदि कथमप्यर्जितस्य विद्याधनस्य तत्त्वे नाविभाज्यत्वं मूलाभिमते स्यात् तदा तद्धेतुरू विभागकथनं नारदीयं विरुद्धयेत। तस्मात्तस्य स्वनो न तादृशस्य विभाज्यत्वाविभाज्यत्वे। किं तु अविरोधेऽविभाज्यत्व विरोधे विभाज्यत्वमिति विरोधस्वरूपमेव नारदेन हेतुत्वेनोक्तमिति सिद्धान्ते एकवाक्यता सिद्धा। मूलेऽपि त्वित्युपलक्षणम्। किं च यदि स्वाभाविकीविद्याधनांश प्राप्तिर्नारदाभिमता भवेत् तर्हि तस्या हेतुत्वोक्तिरनार्थिका स्यात्। किं च विद्याधनस्य यथाकथंचिदार्जितस्य०

Cole.: Ch. I, Sec. iv, §§ 8—9.

एतदेव स्पष्टीकृतं मनुना--"अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् । दायादेभ्यो

## सुबोधिनी

यदा पितृद्रव्याविरोधेनेत्ययमंशः स्वतन्त्रो न मैत्रादिशेषः, तदा यद्यत् पितृद्रव्याविरोधेनार्जितं, तत्तदविभाज्यमिति सिद्धेर्नि[1] सन्निकदानक्रियासम्प्रदानभूतस्यैव प्रतिग्रहीतृत्वात् प्रतिग्रहलब्धस्य पितृद्रव्य .वेरोधेनोपार्जितत्वात् तस्याप्यविभाज्यत्वं स्यात् । तथा च वृद्धव्यवहारविरोध इति । पितृद्रव्याविरोधेनेत्यस्य मैत्रादिशेषत्वं मनुना[2] स्पष्टीकृतमित्याह—एतदेव स्पष्टीकृतमिति । अयमर्थो मनुवचनस्य–पितृद्रव्यमनुपघ्नन् श्रमेण विद्यया यल्लब्धमुपार्जयेत् । लभ्यत इति लब्धं धनम्। अथवा पितृद्रव्यमनुपघ्नन् श्रमेण यदुपार्जयेतम् , पितृद्रव्यमनुपघ्नता विद्यया यल्लब्धमिति विभक्तिविपरिणामेनान्वयः । तदुभयमपि दायादेभ्यो न[3] देयमिति । एवं च पितृद्रव्याविनाशस्य विद्यादेर्द्रव्योपार्जनस्य चोपार्जकद्वारा विशेषणविशेष्यभावप्रतीतेः पितृद्रव्याविरोधेन यत् विद्यालब्धं श्रमलब्धं वा तदविभाज्यमिति सिद्धं भवतीत्यर्थः।उपलक्षणं चैतत् मैत्रादीनामप्येवमेव–तद्गण-

## बालंभट्टी

एतदेवेति—पितृद्रव्याविरोधेनेत्यस्य मैत्रादिशेषत्वमेवेत्यर्थः । अनुपेति—अनुपयुञ्जन्नित्यर्थः। अत्र पूर्वार्धार्थः स्पष्टः।अनुपघ्नन्नित्यत्र विभक्तिपरिणामेनानुपघ्नता तदनुघ्नता यद्विद्यया लब्धं तत्पूर्वं चोभयमपि दायादेभ्यो न देयमित्यर्थेन पितृद्रव्यविनाशरूपविरोधाभावेन यद्विद्या लब्धं श्रमलब्धं वा तदविभाज्यमिति सिद्ध्या मैत्रादिगणान्तर्गतविद्याधनस्य तथात्वोक्तेरुपलक्षणत्वेन मैत्रादीनामपि तथात्वमाविष्कृतमिति भावः । तस्मात् पितृद्रव्याविरोधेनेत्यादिना

१. थ र इति । २. द ना दृढीकृ० । ३. थ. द. न दद्यादिति । ४ थ द. द्यादिभिर्द्र० ।५ द. इदं पदं नास्ति । ६. ब धेनोपार्जितस्य मै० । ७. भ धनोपार्जितत्वस्यापि संभवेन तस्याप्यविभाज्यत्वापत्तौ वृद्धव्यवहारविरोध इति भावः । तस्मात् मैत्र्यादि सर्वस्मृत्युक्तविषये विरोधाविरोधकृतद्वैविध्येऽपि प्रतिग्रहविषये सर्वथा विभाज्यत्वमेवाऽऽचारसिद्धं तद्विषये स्मार्तनिषेधस्तु याजनाध्यापनलब्धवन्न क्वाप्युपलभ्यते इति तत्त्वम् । एतदेवेति पितृद्रव्याविरोधेनेत्यस्य मै० । ७. ब. विपरिणामेनास्येत्यत्यस्य तदपपघ्नता । ८. ब. थात्वोभयोप० । ९ भावः । मानवे "स्वयमीहितलब्धं च नाकामो दातुमर्हति।" इत्युत्तरार्धपाठो यच्च स्वयमीहितं वाञ्छितं सत् मित्रादिभ्यो लब्धं तदकामोऽनिच्छन् भ्रात्रादिभ्यो न दातुमर्हतीत्यर्थकोमेधातिथिकल्पतर्वादिधृतो न युक्तः—अनेकस्मृतिवाक्योपापत्तेः । लब्धं तन्नेत्यर्वाचिनिपाठस्त्वयुक्ततर एव । यद्वा तदा तत्पैतामहविषयकमस्तु । एवं च भ्रातृभागशेषमाहानुपघ्नन्नितीत्यपि तदुक्तं तथेति ज्ञेयम् । आदिना कृष्यादि । तस्मात् ।

Cole.: Ch. I, Sec. vi, § **10.**

12 न तद्द्याद्विद्यया लब्धमेव च॥'' इति। **श्रमेण सेवायुद्धादिना। **ननु पितृद्रव्याविरोधेन यन्मैत्रादिलब्धं तदविभाज्यमिति न वक्तव्यम्,—विभागप्राप्त्यभावात्। यद्येन लब्धं
13 तत्तस्यैव नान्यस्येति प्रसिद्धतरम्, प्राप्तिपूर्वकश्च प्रतिषेधः। **अत्र कश्चिदित्थं प्राप्तिमाह

## सुबोधिनी

परिपठितविद्याधनस्य तथात्वात्। ननु पैतामहे पैतृके च धने पुत्रादीनां जन्मनैव स्वत्वं, न भ्रात्रर्जिते। अतश्च भ्रातृप्राप्तमैत्रादिधनेषु यत् येनार्जितं तत् तस्यैवेति तादृशि[४] धने विभागप्राप्त्यभावान्मैत्रादिकमविभाज्यमिति निषेधोऽनुपपन्न इत्यभिप्रायेणाऽऽक्षिपति—ननु पितृद्रव्याविरोधेनेत्यादिना। एकदेशिमतं दूषयितुं तन्मतेन मैत्रादीनां विभागप्राप्तिं दर्शयति[६]—अत्र कश्चिदिति। विभागप्रापकं वचनं दर्शयति—

## बालंभट्टी

वचनैर्येन एकभ्रात्रर्जितं मैत्र्यादिकमन्यस्य नांश इति प्रतिपादितं पितृपददायादादिपदस्वारस्यान्न पित्राद्यर्जितपरमिति सिद्धम्। एतेनायमाचारो भ्रातृस्नेहेन पौरुषबुद्ध्यावा अन्यत्र तथा दर्शनेन तन्मूलको वा "यत्किंचित् पितरि" इति मानवस्य त्वेवं तात्पर्यम्। "पितेव पालयेत् पुत्रान्" इति मानवात् पितापुत्रवद्भावेन तद्वज्ज्येष्ठधने कनिष्ठाधिकारः पित्रार्जितेऽविदुषामपि ज्येष्ठार्जिते तु विदुषामेवेति विशेषः। इदं च "पितरि प्रेते" इति "ज्येष्ठः" इति "यवीयसाम्" इति "विद्यानुपालिनः" इति चोक्त्या लभ्यते; तस्मादविभक्तार्जितत्वमात्रेणाविभक्तभ्रात्रन्तरस्य संभवतीत्ययुक्तमेवेति प्राच्योक्तमपास्तम्। ननु नैतद्युक्तं पैतामहे पैतृके च धने पुत्रादेर्जन्मनैव स्वत्वेऽपि भ्रात्रर्जिते तदभावेन भ्रातृप्राप्तमैत्रादिधने यद्येन प्राप्तं तत्तस्यैवेति प्रसिद्ध्याविभागप्राप्तेरेवाभावेन तदविभाज्यमिति निषेधकवचनस्यैवोक्तस्यासङ्गतेरित्याशयेनाऽऽह— ननु पितृद्रव्येति। प्राप्त्यभावे हेतुमाह—यदिति। यत इत्यादिः। एवं चान्यदीयस्वत्वमेव नेति भावः। अवक्तव्यत्वे हेत्वन्तरमाह—प्राप्तीति। चोऽर्थे[११]। एकदेशिमतं दूषयितुं मैत्रादीनां विभागप्राप्तिं तन्मतेनाऽऽह—अत्र कश्चिदिति। विभागप्रापकं मनुवचनमाह—

---

१.—९. २०८.। २. ख. ग. सेवया यु०। ३. ख. घ. ब्धं द्रव्यं त०। ४. द. शध०। ५. त. इदं पदं नास्ति। ६. थ. द यति यत्किंचित्। ७. ब. न जातेन ए०। भ. न जातेन तथा ए०। ८. ब. भ. त् तथा च न तत्पित्रा०। ९. फ. भ. स्तं यत्किञ्चिदित्यस्य वैयर्थ्यापत्तेः न०। १०. ब भ पिभ्रातुः भ्रात्र०। ११ भ. र्थे हेत्वसिद्धिसूचिकां एक०।

Cole.: Ch. I, Sec. vi, §§ 11—13.

—"यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति भागो यवीयसां तत्र यदि विद्यानुपालिनः॥" इति ज्येष्ठो वा कनिष्ठो वा मध्यमो वा पितरि प्रेते अप्रेते वा यवीयसां वर्षीयसां चेति व्याख्यानेन पितरि सत्यसति च मैत्रादीनां विभाज्यत्वं प्राप्तं प्रति

---

## सुबोधिनी

यत्किञ्चित् पितरि प्रेते इति। अस्य वचनस्य मैत्रादिविभगप्राप्तिपदत्वं दर्शयति—ज्येष्ठो वा कनिष्ठो वेति। अयमर्थः—"धनं ज्येष्ठोऽधिगच्छति" इत्यत्र ज्येष्ठशब्दोऽविवक्षितस्वार्थः। तथा च ज्येष्ठशब्दो मध्यमकनिष्ठयोरप्युपलक्षकः। तथा "भागो यवीयसाम्" इत्यत्र यवीयश्शब्दः कनिष्ठवाची ज्यायसामुपलक्षकः। तथा "पितरि प्रेते" इति पितृमरण-कालपरोऽयं शब्दः पितृप्रयाणोत्तरकालं प्राञ्चमपि कालं लक्षयति। एवं च ज्येष्ठादिशब्दा-नामुपलक्षणत्वेन ज्येष्ठोऽन्यो वा यत्किञ्चित् मैत्रादिकं धनमधिगच्छति तस्मात् धनात् कनिष्ठानां ज्येष्ठानां च पितरि स्थिते मृते च भागोऽस्ति यदि ते विद्यानुपालिनो विद्वांस इत्येवमर्थपरत्वात् "यत्किञ्चित् पितरि प्रेते" इत्यस्य वचनस्य। अनेन वचनेन मैत्रादीनामपि विभाज्यत्वे प्राप्ते "पितृद्रव्याविरोधेन" इत्यनेन योगीश्वरवचनेन निषिद्ध्यत इति। मैत्रादिलब्धधनस्य वृद्धव्यवहारसिद्धमविभाज्यत्वमनुवदति "पितृद्रव्याविरोधेन" इत्ये-

## बालंभट्टी

यत्किंचिदिति।अधिगच्छति—प्राप्नोति। तत्र धने। यदीति यदि यवीयांसो विद्यानुपालिनः विद्यासंरक्षकाः—विद्वांस इति यावत्। विद्यानुयायिन इति पाठान्तरम्। अस्य वचनस्यार्थ-कथनेन मैत्रादि विभागप्राप्तिपरत्वमाह—ज्येष्ठो वेति। ज्येष्ठशब्दस्त्रयाणामुपलक्षणम्। यवीयःशब्दो ज्यायसामपि। प्रेत इति—अप्रेते इत्यस्यापि। तथा च कालद्वयमपि लब्धम्। तथा च ज्येष्ठाद्यन्यतमो यत्किञ्चिद्धनं यथाकथंचित्प्राप्नोति तस्माद्धनादन्येषामपि भ्रातृणां पितरि स्थिते मृते च भागोऽस्ति यदि ते विद्वांस इति। अर्थपरेण तेन सामान्यवचनेन मैत्रादी-नामपि विभाज्यत्वे प्राप्ते "पितृद्रव्य" इत्यनेन निषिद्ध्यत इत्यर्थः। मैत्रादिधनस्य वृद्धव्यवहार-सिद्धस्यैवाविभाज्यत्वस्यानुवादकं मूलं न निषेधकं येन प्राप्त्यपेक्षा स्यादित्याशयेन शङ्कां

---

१. म० ९. २०४. । २. त स्थविभा० । ३. द. णोत्तरकाल० । ४. थ. द. णकत्वेन । ५. त. यायिनो । ६. थ. द्व३० । ७. ब. वदित्यर्थः । ८. भ. रम्। तुर्यपादेनेदं सूचितं यदितेऽविद्वांसः नदा नेनि तथाच गौतमः "स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्" इति । नारदोऽपि "वैद्योऽविद्याय नाकामो दद्यादंशं ततोधनात्। पित्र्यं द्रव्यं समाश्रित्य न चैतेन तदाहृतम्॥" इति । कात्यानोऽपि प्रागुक्तः। ९. भ. ०न सर्वतमै०। १०. भ. न्येन मै०।

Cole.: Ch. I, Sec, iv, § 13.

14 षिद्ध्यते इति। तदसत्। न ह्यत्र प्राप्तस्य प्रतिषेधः, किन्तु सिद्धस्यानुवादोऽयम्। लो-
15 कसिद्धस्यैवानुवादकान्येव प्रायेणास्मिन्प्रकरणे वचनानि ।* अथ वा "समवेतैस्तु यत्प्राप्तं सर्वैं तत्र समांशिनः।" इति प्राप्तस्यापवाद इति सन्तुष्यतु भवान्। अतश्च "यत्किञ्चित्पितरि प्रेते" इत्यस्मिन्वचने ज्येष्ठादिपदाविवक्षया प्राप्तिरिति व्यामोहमात्रम्। अतो मैत्रादिवचनैः पितुः प्रागूर्ध्वं वाऽविभाज्यत्वेनोक्तस्य "यत्किञ्चित्पितरि प्रेते" इत्यपवाद इति व्याख्येयम्।

---

### सुबोधिनी

तद्वचनं, न निषेधकं यतः प्राप्तिमपेक्षत इत्यभिप्रायेण दूषयति—तदसदित्यादिना । भवतु वा निषेधकम्। तथाऽपि वचनान्तरेण प्राप्तिः न त्वदुक्तरीत्येत्याह—अथ वा समवेतैस्त्विति । "यत्किञ्चित् पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।" इत्यस्य वचनस्य युक्तमर्थं दर्शयति—अतो मैत्रादिवचनैरिति । पितृमरणात् प्राक् ऊर्ध्वं वा मैत्रादीनां "पितृद्रव्या-

### बालंभट्टी

निराकुर्वन् तन्मतं खण्डयति—तदसादिति । अत्र मैत्रादिविषये न केवलमेवमत्रैवापि-त्वन्यत्रापीत्याह—लोकेति। आद्येनैवेन शास्त्रसिद्धत्वव्यवच्छेदः। द्वितीयेनैवेन निषेधकत्वे-व्यवच्छेदः। क्वचिदन्यथाऽपि वक्ष्यमाणत्वादाह—प्रायेणेति। भवतु निषेधकं, तथाऽपि वचनान्तरेण प्राप्तिर्नत्वदुक्तरीत्येति तुष्यतु दुर्जनन्यायेनाऽऽह— अथ वेति।बार्हस्पत्यमाह—समवेतैरिति,-सर्वाभिप्रायं बहुवचनम्।अत एवाऽऽह-सर्वे इति।तत्र—धने। नन्वेवमपि विनिगमनाविरहेऽत आह—अतश्चेति,—तव दुराग्रहस्य तथोपपत्तेश्चेत्यर्थः। ज्येष्ठादीति—अविवक्षायां कारणाभावात्। तथा च विनिगमकं स्पष्टमेव। तदाह—व्यामोहेति। नन्वेवं का तस्य सिद्धान्ते गतिरत आह—अत इति,—त्वदुक्तार्थासंभवादित्यर्थः। पितुरिति,—मरणादिति शेषः। अवीति छेदः। तस्य—मैत्रादिधनस्य। इति-इत्यनेन। पितरि मृते ज्येष्ठेनार्जितान्मैत्रादिकाद्यं कनीयांसो लभन्ते यदि ते विद्वांस इत्यर्थः; तस्येति भावः। न्यूनतां निराचष्टे—

---

१. त. षेधाऽन्तरेण प्राप्तिं न। २. भ त्वस्य व्य०। ३. भ. र्थः। तदविवक्षायां कारणाभावादाह—व्यामोहेति,—तथा च विनिगमकं स्पष्टमेवेति भावः। नन्वेवं। ४. मिता० 'तस्य' नास्ति। ५. भ. वः। अत्र पितृद्रव्याविरोधेनापि ज्येष्ठो विद्यादिना धनमर्जयति, तत्र कनिष्ठानामपि भागो यदि ते विद्याभ्यासरता इति मेधातिथिप्रभृतयः। एवं प्रागुक्तकानीयादेरपि सिद्धान्ते तदपवादत्वं बोध्यम्। मौलत्येन सङ्ग्रहात् न्यू०।

Cole.: Ch. I, Sec. iv, §§ 13.—15.

** तथाऽन्यदप्यविभाज्यमुक्तं मनुना—"वस्त्रं पत्रमलङ्कारं 16
कृतान्नमुदकं स्त्रियः। योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥" इति। **धृता- 17
नामेव वस्त्राणामविभाज्यत्वं यद्येन धृतं तत्तस्यैव। पितृधृतानि तु पितुरूर्ध्वं विभ-
जतां श्राद्धभोक्त्रे दातव्यानि; यथाऽऽह बृहस्पतिः—"वस्त्रालङ्कारशय्यादि
पितुर्यद्वाहनादिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे समर्पयेत् ॥"

## सुबोधिनी

विरोधेन" इत्यादिभिर्योगीश्वरवचनैरविभाज्यत्वे प्राप्ते "यत्किञ्चित् पितरि प्रेते" इत्यनेन पितरि मृते ज्येष्ठेनार्जितान्मैत्रादिकात् भागं कनीयांसो यदि विद्वांसस्तदा लभन्त इत्यपोद्यत इत्यर्थः। "वस्त्रं पत्रमलङ्कारम्" इत्येतन्मनुवचनं व्याचष्टे—धृतानामेव वस्त्राणामि-

## बालंभट्टी

तथाऽन्यदिति[2]—उच्यते इति शेषः। तद्ग्रन्थे तदानन्तर्यप्रतिपादको वा अथरहितपाठो वा। वस्त्रमित्यादिक्रमेण व्याचष्टे—धृतानामित्यादिना। मूले जातावेकवचनमिति भावः। एतेन वस्त्रपत्रालङ्कारोदकानामेकत्वं विवक्षितम्। वस्त्रञ्च सममूल्यं न तु महार्घमिति मेधातिथिकल्पतर्वाद्युक्तमपास्तम् — उद्देशविशेषणत्वात्। "धृतं वस्त्रमलङ्कारः" इति धृतस्तस्यैव तदुभयसाधारणस्योक्तेश्च। तदेतदभिप्रेत्याऽऽह — धृतानामेवेति एवेनाधृतव्यवच्छेदः[3]। एवं व्याख्याने हेतुमाह — यदिति,—इति लोकप्रसिद्धेरिति शेषः। ऊर्ध्वमिति — अनेन जीवद्विभागे स्वांशवत्तान्यपि पित्रैव ग्राह्याणीति सूचितम्। जतामिति—"कृत्यानाम्" इति कर्तरि षष्ठी पितुस्तदादिकं च यत्तदित्यन्वयः[4]। अर्चने श्राद्धे च। भोक्तैव कर्म। श्राद्धभोक्त्रे इति जातावेकवचनम्। तत्स्थानस्थित

१.—म० ९. २१९. । २. भ. अथान्यदित्यपपाठः। अपिना "विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्। मैत्र्यमौद्वाहिकञ्चैव माधुपर्किकमेव च ॥" इत्यस्य सङ्ग्रहः। मधुपर्कदाने पूज्यतया यल्लब्धं प्रचक्षते इति च युक्तमिति मन्दधृतपाठस्तु व्याख्यातृकल्पतरुमेधातिथ्यसम्मतत्वादुपेक्ष्यः। ३. भ. दः, तत्र पुत्रादिस्थले आह पितृस्थले आपदिति लोकप्रसिद्धमपदिम्। पित्रिति पितुर्मरणादूर्ध्वमिति। ४. अष्टा० २. ३. ७१. । ५ भ. यः आदिभ्यामन्यदुपकरणम् अर्च।

Cole.: Ch. I, Sec. vi, §§ 16—17.

18 इति । अभिनवानि तु वस्त्राणि विभाज्यान्येव ।**पत्रं वाहनमश्वशिबिकादि, तदपि यद्येनाऽऽरूढं तत्तस्यैव । पित्र्यं तु वस्त्रवदेव । अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव । वैषम्येणाविभाज्यत्वे ज्येष्ठस्य—"अजाविकं सैकशफं न जातु विषमं भजेत् । अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते॥" । इति[1] मनुस्म-

सुबोधिनी

18 त्यादिना । वैषम्येणाविभाज्यत्वे ज्येष्ठस्येति—*[अत्र वैषम्यमंशं प्रत्यपर्याप्तत्वं, न विषमसंख्योपात्तत्वम्[2] । युक्तं चैतत् । त्रयोऽश्वास्त्रयः[3] पुत्राः, तदांशविभागस्य[3] पर्याप्तत्वात् तद्विक्रयोपजीविनां ते विभाज्याः । अश्वाश्चत्वारः पुत्रास्त्रयः पञ्च वा, (तदा) अश्वानां विषमसङ्ख्याकानां स्वरूपेणांशविभागस्य कर्तुमशक्यत्वात् द्रव्यद्वारा विभागस्य च निषिद्धत्वाज्ज्येष्ठस्यैव देयत्वविधानादंशपर्याप्तानश्वादीन् विभज्य वैषम्येणावशिष्टमश्वादिकं-

बालंभट्टी

विप्रमात्राशयकं वा । तथा व्याख्याने फलमाह—अभीति। "सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।" इति "पत्रं वाहनपक्षयोः" इति च कोशादाह—वाहनमिति । आदिना मञ्चादि । वस्त्रवदेव श्राद्धभोक्त्रे देयम् । विशेषमाह—अश्वेति । जीविनामिति—प्राग्वत् कर्तरि षष्ठी । बहुत्वे सति तैस्तैर्विभजनीया इत्यर्थः । द्वैत्वो त्वे एवाऽऽह—वैषम्येणेति । ज्येष्ठस्येति,—तस्यैव स भाग इत्यर्थः । अत्र वैषम्यमंशं प्रत्ययार्थाप्तस्वरूपं न विषमसंख्यत्वम्[4] । एवं हि समसंख्यस्थलेंऽशविभागस्य पर्याप्तत्वात् तैस्ते विभाज्याः । विषमसंख्यस्थलविशेषे स्वरूपेण सर्वविभागस्य दुष्करत्वात् द्रव्य द्वारा विभागस्य च[5] निषिद्धत्वादंशपर्याप्तान् विभज्य वैषम्येणावशिष्टमश्वादि ज्येष्ठायैव दद्यात्[6] । क्वचित्तु सर्वं ज्येष्ठायैव देयम्; यथा चत्वारोऽश्वाः पुत्रास्त्रयः[7] पञ्च वेति । अस्मिन्प्रकरणे वैषम्यमेतादृशमेव—अन्यथा तु बहुव्याकोपः स्यादिति भावः । एवं रीतिरन्यत्रापि बोध्या अव्यवहिते मानमाह —अजाविकमिति,—पशुद्वन्द्वैकवद्भावः भजेत् विभजेत्[8], किन्तु ज्येष्ठस्यैव दद्यात् । अनेन प्रागुक्तद्वितीयम् उत्तरार्द्धेन

---

१. म० ९. ११९. । २. थ. द. पेतत्व । ३. 'विभागस्य' इत्यादि 'अश्वानाम्' इत्यन्तं नास्ति । ४. भ. एकं तस्मै दत्त्वा सम० । ५. भ. वियनिषेधेन निषि० । ६. भ. तदसंभवे तु सर्वं । ७. भ. पुत्रौ द्वौ प० । ८. ब मेव एतादृशाङ्गीकारे तु ब० । ९. म जेत्। अत्र हेतुमाह—अजेति यत इत्यादिः । अनेन प्रोक्तमध्ये आद्यं द्वितीयं चोक्तं स्पष्टमेव । एवमग्रेऽपि । अलङ्कार इति भूत इति ।

रणात् । **अलङ्कारोऽपि यो येन धृतः स तस्यैव । अधृतः साधारणो विभाज्य 19
एव—"पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन्दायादा भजमानाः पतन्ति ते॥" इति ।

---

## सुबोधिनी

ज्येष्ठस्यैव दद्यादिति। अस्मिन् प्रकरणे एवमेव वैषम्यं ज्ञेयम्।]* यः स्त्रीभिरलङ्कारो धृतो भवेदिति,—अत्र स्त्रीभिरित्युपलक्षणम् । तथा च "यो येन धृतः" इति पूर्वतनग्रन्थे सामान्यनिर्देशो न विरुध्यते। एवं च "पत्यौ जीवति"इत्यत्र पत्यावधिपतौ पित्रादिक इति यावत् । पित्रवरुद्धस्वैरिण्यादीनां समानामप्यविभाज्यत्वे गौतमवचनं दर्शयति—

## बालंभट्टी

प्रथमोक्तिरिति बोध्यम् । पत्रशब्देन लेख्यनिविष्टं धनं "धनं पत्रनिविष्टन्तु धर्मार्थं यन्नि-रूपितम् । उदकं चैव दाराश्च निबद्धो यः क्रमागतः ॥ विगृह्यवस्त्राभरणमृणमुद्ग्राह्य लेखितम्। कृतान्नं चा कृतान्नेन परिवर्त्य विवर्तयेत् ॥" इति कात्यायनोक्तेः । बृहस्पते-श्चेति कल्पतरुः । धृत इति —सर्वत्र भृत इत्यादिपाठान्तरम्, अर्थस्तुल्यः । अधृत इत्यस्य व्याख्या—साधारण इति । एवं सर्वत्र बोध्यम् । विभाज्य एवेति,—विभज्य एवेत्यपपाठः । यद्यपि "द्विवचनविभज्योपपदे" इति निपातनेन सोऽपि साधुः, तथाऽ-प्यपादाने एव नान्यत्र । न चैवं "कृत्यल्युटो बहुलम्" इति प्राप्तस्य ण्यतो बाधेन कथं विभाज्यशब्दसिद्धिरिति वाच्यम् । णिजन्तादाचोयता सुसाधुत्वात् । न चार्थे भेदः निवृत्तप्रेषणात् धातोः प्रकृतेऽर्थे णिचि "णेरणौ" इति सूत्रे हर्यादिभिर्व्युत्पादनात् "नि-पातनान्यबाधकानि" इति तु न युक्तम्। ण्यति कुत्वस्य दुर्वारत्वात् तत्पक्षस्यैवाभावाच्च । एतेन "स्मृतिप्रयुक्तविभाज्यशब्दस्य साधुत्वं चिन्त्यते" इति हरदत्तोक्तमपास्तम् । मनुमे-वाऽऽह—पत्याविति । अत्र पत्याविति स्त्रीभिरितिचोपलक्षणम् । अत एव यो येनेति पूर्वग्रन्थाविरोध इति बोध्यम् । इति—इत्यन्ता । उक्तविशेषे मानमाह एतेन धतस्तथैव

---

१. म० ९. २०० । २. त. द्यात् अ० । ३. थ. द. द्रष्टव्यम् । ४ अ० ५. ३ ५७। ५. अ० ३. ३. ११३. ।

Cole.: Ch. I, Sec. iv, §§ 18—19.

अलङ्कारो धृतो भवेदिति विशेषणोपादानादधृतानां वि-
20 भाज्यत्वं गम्यते। ** कृतान्नं तण्डुलमोदकादि तदप्यविभाज्यं, यथासंभवं भोक्तव्यम्।
21 **उदकमुदकाधारः कूपादि[3], तच्च विषमं मूल्यद्वारेण न विभाज्यं, पर्यायेणोपभोक्त-
22 व्यम्। **स्त्रियश्च दास्यो विषमा न मूल्यद्वारेण विभाज्याः, पर्यायेण कर्म कारयित-
व्याः। अवरुद्धास्तु पित्रा स्वैरिण्याद्याः समा अपि पुत्रैर्न विभाज्याः—"स्त्रीषु च
संयुक्तास्वविभागः" इति गौतमस्मरणात्। **योगश्च क्षेमश्च योगक्षेमम्। योगशब्देना-

## सुबोधिनि

स्त्रीषु च संयुक्तास्विति,—संयुक्तासु उपभुक्तासु—पित्रवरुद्धास्विति यावत्। "पितृद्रव्या-

## बालंभट्टी

स्थापितो विभागकाले पुत्रादिविभागमध्ये न देयः, किन्तु पतिभागत्वेन सैव परिदध्यात्। नतु पत्यौ जीवति यो धृतः स मृतेऽप्यविभाज्य इति अदृष्टार्थापत्तेरेतेन सर्वथा विभाज्यत्वमपि निरस्तम्। तत्सौन्दर्यलोभेन भजते तु पातित्यं भावतीत्युक्त्या मृतेऽन्य पि ग्रहणे न दोष इति मन्दोक्तमपास्तम्। कृतान्नमित्यत्र न कर्मधारयः कृतशब्दवैयर्थ्यापत्तेः; किन्तु अन्नेन कृतमिति राजदन्तादिः। अन्नशब्दो यौगिक स्तद्योग्यप रइत्याह---इत्याह—तण्डुलं मोदकेति तत्संबन्धिमोदकत्यर्थः। आदिना अपूपादि। यथेति किन्त्विन्यादिः। एवमग्रेऽपि।
21 विषमामिति—*[अनेन समत्वे विभागः सूचितः। एवमग्रेऽपि।]* उक्तहेतोः प्राप्ति-माह—मूल्येति। समामिति—किन्त्विति शेषः। एवमग्रेऽपि। योग्यतया दास्य इत्युक्तेः फलं सूचयन् विशेषमाह—अवेति,— पित्रविरुद्धास्तास्वित्यर्थः। तत्स्वरूपमाह—स्वैरी-ति। अपिनाविषमानां समुच्चयः। समानामपि तासां तत्त्वे मानमाह— स्त्रीषु च संयुक्ता-स्विति। संयुक्तासु—उपभुक्तासु, अवरुद्धास्विति यावत्। क्षेमश्चेति—"क्षेममस्त्रियाम्"

---

१ ख. ग. छ. ज. षेणो०। २. ख. कन्तूद०। ३. क. ख. ग घ. च. दिः। ४. क. ग छ. ज. मा मूल्यद्वारेण न वि०। ५.क. सरुद्धा०। ६.—२८ ४७.। ७. थ. द सु अव०। ८ भ. 'रयः, तथैव पाठान्तरं वा किन्तु मातुवत्पर्यायेन पालयाल्या इति भावः। संयुक्तानां विभागनिषेधवद्विवाहितानामर्थसिद्धएवासौ। एतेन दासीतुल्यतया तासां व्याख्यानं मन्दादिकृतमन्य-तरपरतया तदन्यतरकृतत्वमपास्तम् विनिगमनाविरहेणोभयोरपि ग्रहणात् अत एव सामान्योक्तिः। कृत०' इत्यधिकम्। ९. भ. मात्रमा०। १०. भ. एनदारभ्य·' शेषः' इत्यन्तं नास्ति।

Cole.: Ch. I, Sec. iv, §§19—23.

लब्धलाभकारणं श्रौतस्मार्ताग्निसाध्यमिष्टं कर्म लक्ष्यते । क्षेमशब्देन लब्धपरिरक्षणहेतुभूतं बहिर्वेदिदानतडागारामनिर्माणादि पूर्तं कर्म लक्ष्यते । तदुभयं पैतृकमपि पितृद्रव्याविरोधार्जितमप्यविभाज्यम् ; यथाऽऽह लौगाक्षिः—" क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः । अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥" इति। **योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपुरोहितादय उच्यन्ते इति केचित्। शस्त्रचामरच्छत्रोपानत्प्रभृतय इत्यन्ये ।**प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः सोऽप्यविभाज्यः । **यत्तूशनसा क्षेत्रस्याविभाज्यत्वमुक्तम्—"अविभाज्यं सगोत्राणामासहस्रकुलादपि । याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥ "इति, तद्ब्राह्मणोत्पन्नक्षत्रियादिपुत्रविषयम्—"न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥" इति स्मरणात् ।

24 25 26

---

पितृधनानुपघातेन यद्यन्यदार्जितं तथा मैत्रमौद्वाहिकं तदार्जयितुरेव न दायादान्तराणामपि स्यात् । मित्रादवाप्तं मैत्रं, विवाहे लब्धमौद्वाहिकम् । पितृद्रव्योपघातेनापि मैत्र्याद्यपि विभाज्यमेव—आरम्भसामर्थ्यात् । अन्ये तु मैत्रादिकमेव पितृधनानुपघातार्जितमविभाज्यमिच्छति—सामान्यविशेषोपसंहृतिन्यायात् ॥११८ ॥

---

## बालंभट्टी

इत्यमरः[3]।समाहारद्वन्द्वः। इष्टं तदाख्यं, पूर्तं तदाख्यम्। अस्य साधारणत्वादाह—पैतृकमिति। अपिना पैतामहसमुच्चयः । तस्य तच्छेषत्वादेवाऽऽह[4]–पितृद्रव्येति । अपिना अविरोधेनार्जितसङ्ग्रहः। साधारण्ये मानमाह— यथाऽऽहेति । एतेन पैत्राद्यन्यवदस्यापि तद्विशेषणं स्यात्तुल्ययुक्त्या वा लभ्येतेत्यपास्तम्—सामान्येन वा तस्य बाधात्।*[मेधातिथिकल्पतरुमतमाह—योगेति।]*तदन्यमतमाह— शस्त्रेति । सर्वपक्षे तदुत्पन्नो लाभो विषमश्चेद्विभाज्य एव—" योगक्षेमवतो लाभस्समत्वेन विभज्यते ।" इति बार्हस्पत्यात् ·योगक्षेमवतस्तद्धेतोः । प्रचारशब्दे करणे " हलश्च " इति घञित्याह—गृहेति[6] । क्षेत्रस्याविभाज्यत्वस्य वक्ष्यमाणत्वात्तद्विरोधं परिहरति—यत्त्विति। बृहस्पतिमाह —न प्रतीति।

24

---

१. क. तटाका०। २. क रोधेनार्जि० । ३. प्र० का० १३४.। ४ भ. षत्वेऽप्येतच्छेषत्वेन साधारण्यादेवा०। ५. अ० ३.३. १२१।६. भ. गृहेति ज्यमस्तीति च दर्शयन्नाह—नेति अनुक्त०(?)।

Cole.: Ch. I, Sec. iv, §§ 23—26.

28 ** याज्यं याजनेलब्धम् । ** पितृप्रसादलब्धस्याविभाज्यत्वं
29 वक्ष्यते । नियमातिक्रमार्जितस्याविभाज्यत्वमनन्तरमेव न्यरासि । ** पितृद्रव्याविरोधेन यदर्जितं तद्विभजनीयमिति स्थितं; तत्रार्जकस्य भागद्वयम्, वसिष्ठवचनात्–"येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेत" इति ॥ ११८ ॥ ११९ ॥

## सुबोधिनी

विरोधेन यदन्यत्स्वयमार्जितम्।" इत्यादिना अविभाज्यत्वं वक्तुमारब्धं योगीश्वरेण । तद्विधिप्रतिषेधमुखेनैकत्राभिहितं सुबोधमित्यविभाज्यप्रकरण एव वक्ष्यमाणं निर्दिशन्नुक्तं च स्मारयति—पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यत इत्यादिना । अविभाज्यस्वरूपकथनं
29 विधिः;अविभाज्यत्वनिरासो निषेधः। येन चैषामिति—*[एषां भ्रातॄणामित्यर्थः]* ॥११८॥ ११९॥

## बालंभट्टी

क्षेत्रं वास्तु क्षेत्रमिति कल्पतरुः । अनुक्तत्वाद्याज्यशब्दस्योपयुक्तलक्ष्यार्थमाह —याजनेति।पितृद्रव्येत्यादिना विभाज्यं वक्तुम् आरब्धं मूलकृता,न तु सर्वमुक्तमिति। न्यूनतापरिहाराय विभाज्यप्रकरणे एव वक्ष्यमाणमपि स्मरति—पितृप्रसादेति,–तस्यापीत्यर्थः। पूर्वमविभाज्यत्वं व्याख्यात्रा विधिनिषेधमुखाभ्यामुक्तम्। तत्राविभाज्यस्वरूपकथनं विधिः, अविभाज्यत्वनिरासो निषेधः। तथा सत्युत्तरसङ्गत्यर्थं विशेषं वक्तुमाह—नियमेति। पितृद्रव्याविरोधेनैवेतीत्यर्थः। अनन्तरमेवेति—कस्य विभाग इत्येतद्विचारावसरे शङ्कातः प्राप्तं सिद्धान्तितेनेति भावः। न्यरासि न्यषेधि । तथा चेति शेषः अत एवं महाप्रकरणसङ्गतिः । तत्र तथार्जिते मैत्रादौ । तमेवाऽऽह—येनेति । एषां—भ्रातॄणां मध्ये ॥ ११८ ॥ ११९ ॥

---

१. ख. नकर्मल० । २.—१७. ५१. । 'येन चैषां स्वयमुत्पादितं स्याद् द्व्यंशमेव हरेत्' इति क्वचित् सूत्रपाठः । ३, थ. द. तच्च वि० ।४. त. खेन कर्त्राभि (?) । ५. भ. र्थः; । पितृभ्यामित्यादिना मूलकृत् पूर्वं तु नारदीयं स्वेकम् इदं च पुत्रकर्तृकविभागविषयकमेवेति बोध्यम् । अत्राविभाज्यत्वं व्याख्यात्रा । ६. भ. सत्यत्रैवोक्तमपिवक्ष्यमाणोपयोगि स्मरति—नियमेति । ब्राह्मणः प्रतात्यदीत्यर्थः । अन० । ७. भ. तथासत्युत्तर सङ्गत्यर्थमव्यवहितकथितप्रागुक्तमुपसंहरति—पितृद्रव्येति तथा० । ८. ब. व हि म० ।९. भ. दिविषये। १०. भ. षां पितृ पुत्रादीनां मध्ये ।

Cole.: Ch. I, Sec. iv, §§ 27—29.

** अस्यापवादमाह— 30

**सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।**

**अविभक्तानां भ्रातृणां साधारणस्यार्थस्य कृषिवाणिज्यादिना संभूयसमुत्थाने- 31 सम्यग्वर्धने केनचित्कृते सम एव विभागो नार्जयितुरंशद्वयम् ॥ ११९ ॥

**पित्र्ये द्रव्ये पुत्राणां विभगो दर्शितः; इदानीं पैतामहे पौत्राणां विभागे विशेषमाह— 1

**अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२० ॥**

** यद्यपि पैतामहे द्रव्ये पौत्राणां जन्मना स्वत्वं पुत्रैरविशिष्टं, तथाऽपि तेषां 2 पितृद्वारेणैव पितामहद्रव्ये विभागकल्पना, न स्वरूपापेक्षया ।

तत्तु सामान्यद्रव्यसाध्यत्वाद्विभागस्यायुक्तमेव ; मैत्रादिव्यतिरेकेण तु **सामान्यार्थसमुत्थाने इत्यादि ॥ १२० ॥**

---

सुबोधिनी

*[अनेकपितृकाणामिति—अनेकपितृकाणां भिन्नपितृकाणां भ्रातृपुत्राणामिति I यावत्। "प्रमीतपितृकाणाम्"इत्यपि पाठोऽस्ति । न स्वरूपापक्षयति-न पात्रस्वरूपा-

बालंभट्टी

अस्य वसिष्ठोक्तभागद्वयस्य । सामान्यार्थेत्यस्य व्याख्या—अवीति । समुत्थान इत्यस्य व्याख्या—सम्यगिति । तत्र हेतुरुक्तः—कृषीति । शेषमाह— केनचिदिति । भ्रातृणां मध्ये इत्यादिः। त्वर्थमाह—एवेति । तद्व्यवच्छेद्यमाह—नेति ॥ ११९ ॥

उत्तरसङ्गतिमाह—पित्र्ये द्रव्ये इति,—यथाकथञ्चित्तदीयमात्रद्रव्य इत्यर्थः । पुत्राणां तेषामेव। एवमग्रेऽपि । विभाग इति—जन्मनैव स्वत्वेन तस्य प्राप्तत्वादिति भावः । अनेकपितृकाणामिति—अनेके पितरो येषामित्यर्थः—भिन्नपितृकाणामिति यावत् । एकपितामहानेकपुत्ररूपभ्रात्रनेकपुत्राणामिति परमार्थः। प्रमीतपितृकाणामिति पाठान्तरम् । अनेकपित्र्यकाणामिति त्वपपाठ एव । शङ्कापूर्वं व्याचष्टे—यद्यपीति। तृतीयान्तात्सार्वविभक्तिकस्तसिरित्याह—पितृद्वारेणैवेति,—नियामकमिति भावः। स्वेति—स्वस्वरूपेत्यर्थः। फलितमाह

---

१. ख. ङ छ. समान्य०। २. ख. झ. पैता०। ३. ग. महे द्र०। ४. थ. एतदादि 'न पौत' इत्यन्तं यास्ति । ५. द. त, (पुता ?) पि० । ६. त. न रूपा (?)। ७. भ. एतदर्थमेव नियमानासुक्तम् मध्ये०(?) । ८. भ. महे तन्मात्रविभागे इति जन्म० । ९ ब. मिदंवचनमि० ।

Cole.: Ch. I, Sec. iv, §§ 30—31; Sec. v, §§ 1—2.

एतदुक्तं भवति —यदाऽविभक्ता भ्रातरः पुत्रानुत्पाद्य दिवं[1] गताः तदा एकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार इति पुत्राणां वैषम्ये[2] तत्र द्वावेकं स्वपित्र्यमंशं लभेते, अन्ये त्रयोऽप्येकमंशं पित्र्यं, चत्वारोऽप्येकमेवांशं[3] पित्र्यं लभन्त इति। तथा केषुचित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्रानुत्पाद्य विनष्टेष्वप्ययमेव न्यायः। ध्रियमाणाः स्वांशानेव लभन्ते, नष्टानामपि पुत्राः पित्र्यानेवांशाल्लभन्त इति वाचनिकी व्यवस्था ॥ १२० ॥

---

सामान्येनार्थेन समुत्थानमार्जनं प्राप्तिर्यस्य समुत्थानद्रव्ये विभागेस्त्विति अवधारणार्थः तु शब्द.। अस्यैव विभाग इत्यर्थः। स चैकस्य शारीरादिक्लेशे सति द्रव्यसाधारणात् स्वत्यागासंभवाद्विरुध्यते। इयं वा विभागस्मृतिर्न स्यात् ॥ १२० ॥

---

## सुबोधिनी

पेक्षयेत्यर्थः।]*केषुचित् पुत्रेषु ध्रियमाणेष्विति—ध्रियमाणेषु अवस्थितेषु जीवत्स्विति यावत्। धृङ् अवस्थाने ॥ १२० ॥

## बालंभट्टी

—एतदिति। अवीति छेदः। तत्र भ्रातृणां मध्ये। न्यूनतानिरासाय उक्तन्यायमन्यत्रापदिशति —तथेति। ध्रियमाणेषु—अवस्थितेषु—जीवत्स्विति यावत्। धृङ् अवस्थाने। वाचेति अन्यथैत-[5]दानर्थक्यापत्तिरिति नियामकमिति भावः। एकस्यां योषिति बहुभिःसङ्गतानां तेभ्यो जातानामित्यर्थः इति कल्पतरुः। "अनेकपितृकाणां तु पितृतोंऽशविकल्पना। यस्य यत्पैतृकं रिक्थं तत् स गृह्णीत नेतरः॥" इति विष्णुव्याख्यावसरे[6]। भिन्नमातृकाणां समसंख्यानां विभाग

---

१. ख. ग. ङ. च. दिष्टं। २. क ज. वैषम्यं। ३. ख. कांश। ४. ख. ष्वयमे०। ५. भ अन्यथैत अवाचेति। (?) तदुक्त कत्यायनेन—"आवभक्ते सुते प्रेते तत्सुतं रिक्थभागिनम्। कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥ लभेतांश स्वपित्र्यन्तु पितृव्यात्तस्य वा सुतात्। स एवांशस्तु सर्वेषां भ्रातृणां न्यायतो भवेत्। लभेत तत्सुताद्वाऽपि निवृत्तिः परतो भवेत्।" इति। तदाह—आनर्थक्यापत्तिरिति। ६. भ रे। अत एव बृहस्पतिः—"यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ। तस्य यत्पैतृकं रिक्थ स तद्गृह्णीत नेतरः॥" इति। नायं पारिभाषिकः क्षेत्रजस्यान्यविभागस्य वक्ष्यमाणत्वात् किन्तु क्षेत्रमात्रोत्पन्नः। "द्वौ तु यौ विवदेयातां द्वाभ्यां जातो स्त्रियां धने। तयोर्मध्यस्थपित्र्यं स्यात्तस्य गृह्णीत नेतरः॥"इति मनुरपि। नन्व०।

Cole.: Ch. I, Sec. v, §§ 2.

**अधुना विभक्ते पितर्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो नास्ति— 3

सुबोधिनि

ननु "अनेकपितृकाणां तु पितृतो भागकल्पना।" इत्यनेन एतावानर्थः सम्पन्नः—पौत्रस्य पैतामहधनप्राप्तिः[1] पितृद्वारा । तत्रापि पितरि अविभक्ते दिष्टंगत एवेति । *[तथा च[2] सति यदा पिता जीवति, विभक्तश्च[3], अथ वैकपुत्रत्वेन भ्रात्रन्तराभावात् स्वपितुः सकाशादविभक्त एव जीवन्नास्ते, तदा प्रथमपक्षे विभक्तत्वादेव पैतामहद्रव्यप्राप्त्यभावः स्वपितुः । तस्मादध्रियमाणत्वाच्च पौत्रस्य पैतामहद्रव्यप्राप्त्यभावो द्वारस्य निरुद्धत्वात् । द्वितीयपक्षे यद्यपि स्वपितुर्धनप्राप्तिरस्ति— अविभक्तत्वात्, तथाऽपि पितुर्विद्यमानत्वादेव पौत्रस्य पैतामहधनप्राप्त्यभावः । अत एव पैतामहे धने पौत्रस्य जीवत्पितृकस्य विभाग एव नास्ति । भवतु वा विभागो जन्मनैव स्वत्वात् । तथाऽपि पितरि दिष्टं गते पितृद्वारेवांशविधानात् जीवति तस्मिन् सुतरामिति पितुः प्राधान्यप्रतीतेः पितुरिच्छयैव विभागः । तत्रापि "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता।"]* इत्यंशद्वयं पितुः। स्यादित्यभिप्रायेणाऽऽशङ्कते[4] उत्तरवचन-

बालंभट्टी

प्रकारमाह बृहस्पतिः—" यद्येकजाता बहवः समाना जातिसङ्ख्यया । सापत्नास्तैर्विभक्तव्यं मातृभागे न धर्मतः ॥" व्यासोऽपि—" समानजातास्त्वेकेन सूनवो भिन्नमातृकाः । तेषां ......मातृभागः प्रशस्यते॥" इति भिन्नसंख्यानां सवर्णानां तमाह बृहस्पतिरेव—" सवर्णाभिन्नसंख्या ये पुंभागः तेषु शस्यते ॥" इति ॥ १२० ॥

नन्वनेकपितृकाणामित्यनेनान्यथानुपपन्नेनैतावत् संपन्नं पौत्रस्य पैतामहद्रव्यप्राप्तिः पितृद्वारा न स्वतः । तत्रापि पितरि अविभक्ते दिष्टं गते चे विभागस्य स्वतो जनकत्वेऽपि तन्नाशकत्वात् तत्स्वत्वस्य प्रतिबन्धकत्वाच्च । एवञ्च । पौत्रस्यापि भ्रात्रादिवत् सप्रतिबन्ध एव दाय इति तथा प्रागुक्तमयुक्तम् । किञ्च[5] चेति । तथा सति यदा पिता जीवति विभक्तश्च स्वपितुः यद्वा एकपुत्रत्वेन[6] तस्य भ्रात्रन्तराभावात् स पितुः सकाशादविभक्त एव जीवन्नास्ते तदाऽऽद्यपक्षे विभक्तत्वादेव पैतामहद्रव्यप्राप्त्यभावः—स्वपितुर्विभक्तत्वात् । तस्य सत्त्वाच्च द्वारनिरोधेन पौत्रस्य पैतामहद्रव्यप्राप्त्यभावः । द्वितीयपक्षेऽपि यद्यपि स्वपितुर्धनप्राप्तिरस्ति—अविभक्तत्वात् । तथाऽपि सत्त्वादेव तस्य तदभाव इति सर्वथा पैतामहे धने पौत्रस्य जीवत्पितृकस्य विभागाभाव एव स्यादित्युत्तरवाक्यमवतारयन्नाह—अधुनेति । इत्याशांकित इत्यत्रान्वयः।विभक्ते इति छेदः।पौत्रस्य इत्युपलक्षणं पौत्रयोः पौत्राणामपि।अत्रहे[7]-

१. थ. द. द्रव्यप्रा० । २. थ. द. 'च' नास्ति । ३. थ. द. भ्रस्वपितुः । अ० । ४. थ. शङ्कयति।५. प. फ. ब. एतदारभ्य 'किञ्च'इत्यन्तं नास्ति। ६. तस्य एक०। ७. म. उभयत्रहे० ।

Cole.: Ch. I, Sec. v, § 3.

अम्रियमाणेपितरि पितृतो भागकल्पनेत्युक्तत्वात्। भवतु वा
स्वार्जितवत् पितुरिच्छयैवेत्याशंकित आह—

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा[2]।**
**तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव[3] हि॥ १२१॥**

4 ** भूः शालिक्षेत्रादिका। निबन्ध एकस्य पर्णभैरकस्येयन्ति पर्णानि। तथा एकस्य क्रमुकफलभरकस्येयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः। द्रव्यं सुवर्ण-

न च तदनुज्ञानादनुष्ठानमिति युक्तम्। जातमात्रस्यानुज्ञानाशक्तेः इत्याद्याशङ्कामपाकर्तुमाह— **भूर्या पितामहोपात्तेत्यादि॥ १२१॥**

## सुबोधिनी

मवतारीयतुम्—अधुना विभक्ते पितरीत्यादिना। अत्र पौत्रस्येत्युपलक्षणं पौत्रयोः पौत्राणामपि। निबन्ध एकस्य पर्णभारकस्येति,—एकस्याः पर्णवाटिकाया इयन्ति पर्णानि तथा क्रमुकवाटिकाया इयन्ति क्रमुकाणीति तद्व्यापारकोविदा वि[5]दन्ति। तथा च निबध्यते

## बालंभट्टी

तुमाह-आम्रियमाणे इति,-दिष्टं गते इत्यर्थः।म्रियमाण इति पाठे तस्य पूर्वान्वयः,आपितारीति छेदः।तदभावे इति तदर्थः।अत्र तूभयत्रापि पितुःसत्त्वमिति भावः।ननु नैतद्युक्तम् जन्मनैव स्वत्वस्य प्रागुक्तत्वेन द्वारानपेक्षत्वेन तत्रापि विभागस्य युक्तत्वादिति चेत्तथाऽपि पितरि दिष्टंगते पितृद्वारैवांऽशविधानाज्जीवति तस्मिंस्तद्द्वारकत्वं सुतरामिति अत्र पितुः प्राधान्यप्रतीत्या पितुरिच्छयैव विभागः स्यात्तत्रापि स्वार्जितवत् "द्वावंशौ" इति नारदवाक्येन पितुरंशद्वयं स्यात्तदाह—भवतु वेति। विभागस्तत्र तस्येत्यस्यानुषङ्गः। परं तु इति शेषः। [6]इच्छयैव च स्यादिति शेषः। [7]एकवाक्यतयैव शब्दशक्तिमाहात्म्येन लब्धमर्थमाह--शालीति। क्षेत्रादीत्यादिना यवक्षेत्रादि। तेन वास्त्वादिनिरासः। इदं वास्त्वादिविषयतत्त्वं चानुपदमेव विशदीकृतम्। निबध्यते यः पर्णादिगणनया स निबन्धो वृत्तिः। तत्स्वरूपमाह—एकस्येत्यादि। पर्णानां भरो बाहुल्यं यस्मिन्निति विग्रहे समासान्तः कः। एवमग्रेऽपि। तथा चैकस्याः पर्णवाटिकायाः क्रमुकवाटि-

१. छ म्रियमाणेऽपितरि। २. ख. छ. च। ३. विश्व० चोभयोः। ४. ख भारक०। ५. त. वदन्ति। द. विन्दन्ति। ६. ब. यथेव च स्यादिति शेषः दृष्टान्तः तत्रापीत्यादिना य०। भ. तत्रापीत्यादिनोक्तं भवन्नेति पाठे तु एक०। ७. प. फ. ब. एतदारभ्य 'क्षेत्र' इत्यन्तं नास्ति।

Cole.: Ch. I, Sec. v, §§ 3—4.

रजतादि । ** यत्पितामहेन प्रतिग्रहविजयादिना लब्धं तत्र पितुः पुत्रस्य च स्वाम्यं 5
लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति । हि यस्मात्तत्सदृशं समानम्, तस्मान्न पितु-
रिच्छयैव विभागो नापि पितुर्भागद्वयम्। ** अतश्च पितृतो भागकल्पनेत्येतत्स्वाम्ये समे 6
ऽपि वाचनिकम्।** "विभागं चेत्पिता कुर्यात्" इत्येतत्स्वार्जितविषयम्। 7

सुबोधिनी

पर्णादिगणनयेति निबन्धः,—पर्णभरकादिरित्यर्थः। भृञ् भरणे—वुन् प्रत्ययान्तः। प्रति-
ग्रहविजयादिलब्धमिति—आदिशब्देन वाणिज्यद्विजशुश्रूषादिकं गृह्यते । यत एवं स्वाम्यं
पितापुत्रयोः पितामहधने समानं लोके अतः "अनेकपितृकाणां तु पितृतो भागकल्पना।"
इत्ययमर्थः पितरि प्रेते वचनान्नियम्यते न तु जीवतीत्यनेनाभिप्रायेणाऽऽह—अतश्च पितृतो
भागकल्पनेति । वचनान्तरविरोधं परिहरति— विभागं चेदित्यादिना । पितामहधने

बालंभट्टी

कायाश्रेयन्ति पर्णानि क्रमुकफलानि चेति तद्व्यापारकोविदा एव जानन्ति नान्ये इति तदी-
यपर्णभरकादिः पर्णगणनया निबध्यमान इत्यर्थः। यत्पितामहे तस्याऽपि संबन्धसूचनायाऽऽ
ह—यत्पितेति। नियमानतिक्रममाह—प्रतीति। आदिना वाणिज्यद्विजशुश्रूषादिपरिग्रहः।
रजतादि आकरादौ नियतलभ्यम्। एवं पूर्वार्धे वाक्यार्थत्रयं प्रतिपादितम्। उत्तरार्द्धं वाक्य-
भेदेन शेषपूरणेन व्याचष्टे—तत्रेति,— त्रिष्वित्यर्थः। प्राग्वदस्यार्थमाह—अस्तीति,—
पूर्वेणैवान्वयादस्त्येवेत्यर्थः।"चोभयोः"इति कल्पतर्वादिधृतपाठासाङ्गत्यं ध्वनयन्नाह-हि यस्मादि
ति।सदृशं सदृशमेव अग्रिमेणैवान्वयात्। शेषं प्राग्वदाह--तस्मादिति। इच्छया न विभाग इति
पाठो युक्ततरः।एतेन समांशत्वं सूचितम्।बृहस्पतिरपि--"द्रव्ये पितामहोपात्ते जङ्गमे स्थावरेऽ-
पि वा। सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि॥" इति। एवं सति पूर्ववचनानर्थक्यं
प्रथमांशेन प्राप्तं तद्विरोधं च परिहरन् वाचनिकत्वमुक्तं द्रढयति—अतश्चेति,—यत एवं
स्वाम्यं पितापुत्रयोस्तत्र समानमेव लोकप्रसिद्धमत इत्यर्थः। वाचनिकमिति--पितरि प्रेते वच-
नात्तथा नियम्यते न तु जीवति। अत एव प्रमीतपितृकाणामिति पाठो युक्ततर इति भावः। इदं
प्रागपि उक्तम्।द्वितीयांशेन प्राप्तं वचनान्तरविरोधं परिहरति—विभागं चेदिति। प्रागपीदमुक्त-

---

१. ख. तत्सदृ० २। क. च. छ. तस्मात्पितुरनिच्छयेव। ३. ख. अतः पि०। ४. व्यव० ६१४.। ५. त. यल०। मिता०। विजयादिना लब्धुम्। ६. त. इदं पदं नास्ति। ७. त. समत्वं (?)। ८. प. फ. ब एतदारभ्य 'आदीना' इत्यन्तं नास्ति। ९. भ. इच्छया न०।

तथा "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता।" इत्येतदपि स्वार्जितविषयम्। "जीवतोरस्वन्त्रः स्याज्जरयाऽपि समन्वितः।" इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम्। तथा
8 "अनीशास्ते हि जीवतोः" इत्येतदपि। ** तथा च सरजस्कायां मातरि सस्पृहे च
9 पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति। ** तथाऽविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्यधिकारः। पित्रार्जिते तु न निषेधाधिकारः—तत्परतन्त्रत्वात्।अनुमतिस्तु कर्तव्या।

---

भूर्या पितामहोपात्तानिप (?) क्तोवाऽक्षयं निधिः अन्यदेव वा द्रव्यं, तत्र पितापुत्रयोस्तुल्यं प्रभुत्वं स्यात्। प्रत्येतव्यं निर्विचिकित्समेवेत्यर्थः। उभयोरित्यविभक्तस्यैव

---

सुबोधिनि

पित्रार्जितधनादविशेषान्तरमाह—तथा च सरजस्कायामित्यादिना। पैतामहधने पित्रादीयमाने पौत्रस्य निषेधाधिकारः,पित्र्ये तु नेत्यभिहितम्। तदेव हेतूपन्यासपुरस्सरं विवृणोति—

बालंबट्टी

म्। तृतीयांशेन प्राप्तप्रागनुक्तान्यवचनविरोधं परिहरति--तथेति। नारदमाह--द्वावंशाविति। प्रतिपत्तिः नियमेन ग्रहणम्।आत्मन इति—षष्ठ्यन्तं पञ्चम्यन्तं वा। अत्र विषमविभागे लोकविद्वेषाद्यभावादयं भवतीति भावः। एवं प्रागुक्तवसिष्ठोक्ते विभागेऽपि बोध्यम्। एवं च स्वार्जिते सर्वविभागेषु अर्जकस्यांशद्वयमिति सिद्धम्। सदृशमित्यनेन प्राप्तान्यविरोधमेवंरीत्यैव परिहरन् मतद्वयमाह—जीवतोरित्यादि। इत्येतदपीति,—मातेत्याद्यनुषङ्गः। पैतामहे धने पित्रर्जिते धनान्मूलानुक्तं तत्फलितं तदभिमतं विशेषान्तरमाह—तथा चेति,—तयोः स्वत्वस्य तुल्यत्वे चेत्यर्थः। जीवद्विभागे उक्तकालत्रयाभावकृतविशेषमाह—सरेति। आपिना तोन्निमित्तत्रयसमुच्चयः। इच्छया तयैव। एवं चैतदिच्छाया मुख्यत्वम्। अत एव विशेषान्तरमाह—तथेति,--तद्वदित्यर्थः। अवीति छेदः।विभागे स्वत्वनाशेन तदनाधिकारादिति भावः। अपिना विभागाकरणसमुच्चयः। कर्तव्येति–पुत्रेणेति भावः। अव्यवाहतोक्तिमवे

---

१. ना० १३. १२. । २. क. भागं दातुम०। ज. विभागं दा०। ३. त. •हेध०। ४. ब. गुक्ता०। ५. ब. विशेषाद्यभा०। ६. भ. मनुद्व० ७. ब. साङ्केत्याद्यनु०। भ. दिवपिः मेतत्या०। ८. प फ. ब. ०गप्रकर०।

Cole.; Ch. I, Sec. v, 7—9.

** तथा हि पैतृके 10 पैतामहे च स्वाम्यं यद्यपि जन्मनैव, तथाऽपि पैतृके पितृपरतन्त्रत्वात्, पितुश्चार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽप्यस्तीति विशेषः ।** मनुरपि— 11 "पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥" इति । यत्पितामहार्जितं केनाप्यपहृतं पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः सार्धमकामः स्वयं न विभजेदिति वदन्

स्वत्वज्ञापनार्थं भूम्यादेः पृथगुपादानम्—भाज्यत्वात् स्थायित्वाद्वा द्रष्टव्यम् । यत्त्वनुष्ठानविरोधादिचोद्यम् ,तत्स्वयमार्जितेनापि तत्सिद्धेः न किञ्चित्तदानीमेव वा विभज्यानुष्ठानमस्तु, यात्विच्छया विभागस्थितिः, सा स्वयमुपात्तद्रव्यवते द्रष्टव्या । अतः स्वत्वे सति विभाग इति सिद्धम् ॥ १२१ ॥

## सुबोधिनी

तथा हीत्यादिना । पितामहार्जितमकामोऽपीति,—पूर्वोक्तव्यतिरिक्तं पितामहार्जितमित्यर्थः ॥ १२१ ॥

## बालंभट्टी

हेतूक्तिपूर्वकं विशदयति-तथा हीत्यादिना। नैव समानमिति शेषः। पित्रिति पुत्रस्येत्यादिः। तत्रान्यतरस्यार्जकत्वादाह—द्वयोरिति। अत एव पैतामहे न मातुरंशः—स्वत्वाभावात् वचनाभावाच्च। एवं च पौत्राणामप्रतिबन्धो दाय इति प्रागुक्तं युक्तमिति बोध्यम्। अत्रान्यसंवादमाह—मनुरपीति । वदन् दर्शयतीत्यन्वयः । पैतृकमित्यस्य पितेत्युक्तिबलात् व्याख्या—पितामहेति । अनवाप्तमित्यस्य व्याख्या—पितेति । यदेत्यस्य यदीति । आप्नुयादित्यस्य प्रागवदुद्धरतीति । स्वयमर्जितमित्यस्यान्वयासंभवात् यथाश्रुते च वाक्यभेदासंभवेन दृष्टान्ततेत्याह—स्वार्जीति । अकामो विभागानिच्छुः । एतेन च स्वयं विद्याशौर्यादिना स्वयमर्जितमिति व्याख्यानं मेधातिथ्यादेरपास्तम् । बृहस्पतिरपि—"पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् । विद्याशौर्यादिना प्राप्तं तत्र

---

१. क. 'तथाहि' नास्ति । २. ख. छ. पितुः स्वा० । ३. क. तद्र० । ४. ९. —२०९। ५. प. फ. ब. चापुत्रा० । ६. ब. भवाद्दृ० ।

Cole.: Ch. I, Sec. v, §§ 10—11.

पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह विभजेदिति दर्शयति ॥ १२१ ॥

1 ** विभागोत्तरकालमुत्पन्नस्य पुत्रस्य कथं विभागकल्पनेत्यत आह—

**विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।**

2 विभक्तेषु पुत्रेषु पश्चात्सवार्णायां भार्यायामुत्पन्नो विभागभाक् । विभज्यते इति विभागः पित्रोः भागस्तं भजतीति विभागभाक्; पित्रोरूर्ध्वं तयोरंशं लभत

यस्माच्च स्वत्वे सति विभागस्तस्मात् विभक्तेषु सुतो जात इत्यादि ॥ १२२ ॥

## बालंभट्टी

स्वाम्य पितुः स्मृतम् ॥" इति । कात्यायनोऽपि—"स्वशक्त्या यद्वृत्तं नष्टं स्वयमाप्तं च यद्भवेत्। एतत्सर्वं पितापुत्रैर्विभागे नैव कथ्यते॥"इति। इदं भूभिन्नाविषयमिति प्रागुक्तमेवेति बोध्यम् । महार्जितमिति—उक्तभिन्नमित्यर्थः। अत्र भूपितामहेत्युभयमुपलक्षणम्। अत एव व्यासः—"क्रमागते गृहे क्षेत्रे पितृपौत्राः समांशिनः । पैतृकेन विभागार्हाः सुताः पितुरनिच्छतः॥" इति । एवं चात्र सर्वत्र स्थावरे च समांशित्वं पैतृके तु पितुरिच्छया गृहादौ समांशित्वं नान्यथेति विशेषः ॥ १२१ ॥

विभागोत्तरेति प्रथमतृतीयकालयोरित्यर्थः । पुत्रस्येत्युपलक्षणं पुत्रयोरित्यादेरपि । एवमग्रेऽपि। पुत्रेषु सत्सु । अत एवाऽऽह—पश्चादिति।भावे घञि भागित्यनुपपन्नमसंबन्धत्वं चात आह—विभज्यत इति,—कर्मणि घञिति भावः । विभागः—धनम्।साकाङ्क्षत्वात्प्रत्यासत्तेराह—पित्रोरिति। तात्पर्यार्थमाह—पित्रोरूर्ध्वमिति,--प्रयाणादिति शेषः। अंशम्---अंश-

---

१. ख. च. विभागः । ङ. यो विभा० । २. भ. एतदारभ्य 'बोध्यम्' इत्यन्तं नास्ति । ३. प. फ ब. तेति । ४ प. फ. ब. त्वंचाऽऽह ।

Cole.: Ch. I, Sec. v, § 11 ; Sec. vi, §§ 1 — 2.

इत्यर्थः। मातृभागं चासत्यां दुहितरि "मातुर्दुहितरः शेषम्" इत्युक्तत्वात्। **असवर्णायामुत्पन्नस्तु स्वांशमेव पित्र्याल्लभते। मातुर्भागं तु सर्वमेव।** एतदेव 4
मनुनोक्तम्—" ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्। " इति[3]।

## सुबोधिनी

मातृभागं चासत्यां दुहितरीति—*[अत्र चशब्दस्त्वर्थः,]*दुहितृसद्भावे मातृभागं 2
न लभेतेत्यर्थः। असवर्णायामुत्पन्नस्तु स्वांशमेवेति,—ब्राह्मणात् क्षत्रियायामुत्पन्नःपादो-
नमंशं वैश्यायामुत्पन्नोऽर्धमंशं शूद्रायामुत्पन्नश्चतुर्थांशम्। एवं क्षत्रियात् क्षत्रियायामुत्पन्नोऽ-
शत्रयं वैश्यायामुत्पन्नोऽर्धं शूद्रायामुत्पन्नः पादं वैश्यात् वैश्यायामुत्पन्नोऽर्धं शूद्राया-
मुत्पन्नः पादं लभेतेत्यर्थः। एवमेव वक्ष्यति "चतुस्त्रिद्व्येकभागाः स्युः" इत्यत्र।
मातृकं तु सर्वमेवेति, — अत्राप्यसत्सु दुहित्रादिष्वित्येव—" मातुर्दुहितरः शेषम्"
इत्यस्य मातृधनमात्रशेषत्वात्। सवर्णाया। विभागानन्तरमुत्पन्नपुत्रस्य पित्रोरूर्ध्वं
तद्धनभाक्त्वमित्यत्र मनुवचनं प्रमाणयति — एतदेव मनुनोक्तमिति। मनुवचनस्थं

## बालंभट्टी

त्वेन स्थितं सर्वम्। पित्रोरित्युक्तं सफलयति—मातृभागमिति। चस्त्वर्थे। तत्सद्भावे तु
तन्नलभत इति भावः। सवर्णायामित्युक्तेः फलमाह—असवर्णेति। स्वांशमेवेति—
मुख्यांशमेवेति पाठान्तरम्। ब्राह्मणात् क्षत्रियायामुत्पन्नस्य पादोनं ; वैश्यायामर्धं,
शूद्रायां पादः; क्षत्रियाद्वैश्यायामुत्पन्नस्य पादद्वयं ; शूद्रायां पादम्;वैश्यात् शूद्रायामुत्पन्नस्य
एकपादमित्यर्थः। एतद्वक्ष्यति "चतुस्त्रिद्व्येकभागास्स्युः" इति। पित्र्यादिति—धनादित्यर्थः।
पित्र्यमिति पाठान्तरम्। विशेषमाह—मातुरिति। मातृकं त्विति पाठान्तरम्। पितृस्वसवर्णदुहि-
त्रसत्त्वे इति बोध्यम्। मातुर्दुहितरमित्यस्य मातृधनमात्रशेषत्वात् उक्तमूलस्य तदूर्ध्वं तस्य
धनभाक्त्वमिति परत्वं कुतः जीवत्येव तस्मिन् तद्भाक्त्वपरत्वं कुतो नेत्याशङ्कां परिहरन्
प्रोक्तार्थे मानमाह—एतदेवेति,—पित्रोरूर्ध्वमित्युक्तमेवेत्यर्थः। हरेत्—गृह्णीयात्। अनेन तदुक्त-

१. छ. पित्र्य ल०। २. ख. घ. ग. ज. मातृकं। ३. —९—२१६.। ४ थ. द.
र्थे। ५. थ. पितृ (?)। ६. द. (अक्षत्रियं अंशत्रयं)। ७. थ. 'वैश्यायाम्' इत्यादि 'र्धमंशम्' इत्यन्तं
नास्ति। ८. द. र्धं शूद्रायामुत्पन्नः पादं वैश्याद्वै (?)। ९. त. न विभजनीयमि (?)। १०
भ. र्त्ति। ११ प. फ पादोनं वैश्यायामर्धं। ब. स्य पादत्रयं वैश्यायामुत्पन्नस्य पादद्वयं क्षत्रियाद्वै-
श्यायामुत्पन्नस्य पादद्वयं क्षत्रियाच्छूद्रायां पादः वैश्याच्छूद्रायामुत्पन्नस्य एकपाद इत्यर्थः। तद्वक्ष्यति।

पित्रोरिदं

पित्र्यमिति व्याख्येयम्—"अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तजः।"

अनिवृत्तरजस्कायां मातरि विभजतां विभागोत्तरकालं यदि पुत्रो जायेत, तस्यापि द्रव्यसंबन्धोऽस्त्येव; तस्मात् स्वत्वे सत्येव विभाग इत्युक्तः। यदि हि विभागेन स्वत्वसंबन्धोऽभविष्यत, ततो विभक्तस्य द्रव्यसंबन्धो नो वाल्पः स्यात्। अस्मिन्पुरस्त्वेव तस्यापि द्रव्यसंबन्धः अतस्वत्व इति।अतोऽयं श्लोकस्तद्विवेकायाऽऽरभ्यते।विभक्तेऽपि स्वसवर्णायाः पुत्रो जातो विभागाभाक् स्यादिति शेषः। अविशेषेऽपि पित्र्यविभागभागित्यवसेयम्; यथाऽऽह गौतमः—"विभक्तजः पित्र्यम्" इति। विभक्तजोऽपि च पितुः निधनत्वे भ्रातृद्रव्यादेव दृश्यमानात् तस्य विभक्तजस्य विभागः स्यात्। अयन्तु विशेषः—आयव्ययविवर्जितात् यत् स्वयमर्जितं, स आयः, यत्तस्माद्द्रव्यमुपक्षीणं, स व्ययः; आयव्ययविशुद्धं विभक्तजेन सह समं विभजनीयमित्यर्थः॥ १२२॥

## सुबोधिनी

पित्र्यमिति पदमेकशेषं कृत्वा व्याचष्टे—पित्रोरिदमिति। नन्वेकशेषे कृतेऽकृते च पित्र्यमित्येव; तथा चैकशेषकरणे को हेतुरित्यत आह— अनीशः पूर्वज इति। अत्र पित्रोरिति

## बालंभट्टी

रकालिकत्वं स्पष्टमेवोक्तम्। नन्वेवमपि पित्रोरिति प्रागुक्तमयुक्तं पितुरिति वाच्यम्; अत्र पित्र्यमित्यस्यैवोक्तत्वात् तस्य च पितुरागतमिति शब्दार्थादत आह—पित्रोरिति,—एकशेषं कृत्वा तद्धित इति भावः। इदं फलितार्थकथनम्। ननूभयथाऽपि पित्र्यमित्यस्य तुल्यत्वादत्र तथा व्याख्याने एव न मानमत आह – अनीश इति,—बार्हस्पत्यम्। अत्र पित्रोरिति द्विवचननिर्देशात्तथेति भावः। अस्फुटत्वादस्योक्तार्थपरत्वायेदं वाक्यभेदेन व्या-

१. क. अनशः। २.— २८. २९.। ३. थ. व्यमेव।

Cole.: Ch. I, Sec. vi, § 4.

इति स्मरणात् ** । विभक्तयोर्मातापित्रोर्भागे विभागात्पूर्वमुत्पन्नो न स्वामी, विभक्त- 5
जश्च भ्रातुर्भागे न स्वामीत्यर्थः । ** तथा विभागोत्तरकालं पित्रा यत्किञ्चिदार्जितं त- 6
त्सर्वं विभक्तजस्यैव ॥ " पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम् । विभक्तजस्य
तत्सर्वमनीशाः पूर्वजाः स्मृताः॥" इति स्मरणात्।**ये च विभक्ताः पित्रा सह संसृष्टाः 7
पितुरूर्ध्वं तैः सार्धं विभक्तजो विभजेत् ; यथाऽऽह मनुः—" संसृष्टास्तेन वा ये
स्युर्विभजेत स तैः सह ।" इति ॥ १२१ ॥

## सुबोधिनी

द्विवचननिर्देशादित्यर्थः। "अनीशः पूर्वजः पित्रोः" इत्येतद्वचनं व्याचष्टे—मातापित्रोरिति ।
संसृष्टास्तेन वेति,—तेन पित्रेत्यर्थः ॥ १२१ ॥

## बालंभट्टी

चष्टे—विभक्तयोरिति,—पूर्वं पुत्रेभ्य इति भावः । अन्यथानुपपत्तेः प्रकरणाच्चेदमुक्तम् । भागे
इति पाठः ; विभागे इत्यपपाठः । स्मृतावसत्त्वात् पूर्वज इत्यस्यार्थमाह— विभागादिति ।
द्वितीयवाक्यमाह—विभेति,—विभक्ताभ्यां पितृभ्यां जात इत्यर्थः । भ्रातुः पूर्वोत्पन्नस्य।
तथा च विभक्तपुत्रांशात् न्यूनत्वेऽधिकत्वेवा विभक्तजस्तावदेव लभते न तत्पूर्वजा अधिकं
गृह्णीयुर्न्यूनं वा पूरयेयुः। अयमेवार्थो मनुवाक्ये एवेन सूचितः। साधारणोक्त्या तन्त्रेण
मूलस्यैवार्थान्तररूपविशेषमाह —तथेति। बृहस्पतिमाह —पुत्रैरिति,—अस्य विभक्तेने-
त्यत्रैवान्वयः । यद्वा पूर्वपुत्राणां विद्यमानत्वेऽपीत्यर्थः—" सहैव दशभिः पुत्रैः " इति
वत्। स्वयमिति—स्पष्टार्थम्। अर्ले अर्जितमिति सामान्योक्त्या धन मृणं च ग्राह्यम् ।अत
एव बृहस्पतिरेव —"यथा धने तथर्णेऽपि दानाधानक्रयेषु च । परस्परमनीशास्ते मुक्त्वा
शौचोदकक्रियाम् ॥" इति । पदस्वारस्यात्तथैव विशेषान्तरमाह— ये चेति।पित्रा सहेत्यस्य
मध्यमणिन्यायेनान्वयः । पुनः संसृष्टाश्चेत्यर्थः । पितुरिति—प्रयाणादिति शेषः। संसृष्टा
इति प्रागुक्तोत्तरार्धमिदम् । अत एव पूर्वसमुच्चये वा।तेन वेति—पित्रेत्यर्थः। स तैरिति
विभक्तजः पूर्वजैरित्यर्थः ॥ १२१ ॥

१. क घ. च. 'विभक्तयोः' नास्ति। २. ख. च. विभागे । ३. 'पितुरूर्ध्वम्' नास्ति । घ. तैस्सह पितुरूर्ध्वम् । ४. ९—२१६. । ५. प. फ ब. एतदारभ्य 'तथैव' इत्यन्तं नास्ति । ६. भ. येविशेषमा पु० (?) ।

Cole.: Ch. I, Sec. vi, §§ 4—7.

8 *[1]पितुरूर्ध्वं पुत्रेषु विभक्तेषु पश्चादुत्पन्नस्य कथं विभागकल्पनेत्यत आह —

**दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२२ ॥**

9 तस्य पितरि प्रेते भ्रातृविभागसमयेऽस्पष्टगर्भायां मातरि भ्रातृविभागोत्तरकालमुत्पन्नस्य विभागस्ताद्विभागः कुत इत्यत आह दृश्याद्भ्रातृभिर्गृहीताद्धनात् । कीदृशात् आयव्ययविशोधितात् आयः प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते; व्ययः पितृकृतर्णापाकरणं; ताभ्यामायव्ययाभ्यां यच्छोधितं तस्मात् उद्धृत्य तद्भागो दातव्यः स्यात् ।

---

## सुबोधिनी

"दृश्याद्वा तद्विभागः स्यात्" इत्यत्र तद्विभागशब्दस्यार्थमाह—तस्य पितरि प्रेते इति । अत्र ग्रन्थे विभागोत्तरकालमुत्पन्नस्य तस्येत्यन्वयः । *[विभागानन्तरं प्रातिस्विकांशैः[2] कृष्यादिषु[3] क्रियमाणेषु यो लाभः स आयः। पितृकृतर्णापाकरणं कुटुम्बपोषणादिकं च[4] (यत्)

## बालंभट्टी

यद्यप्यन्यनिबन्धकारैःदृश्याद्वेति पूर्वत्रैव विकल्पपरतया व्याख्यातम् किञ्चिदन्यैश्चैकवाक्यतयैव व्याख्यातम् । तन्न युक्तम्—उक्तस्मृति[6] विरोधेन विकल्पासंभवात् आनर्थक्यस्यान्यतरस्य स्पष्टत्वेनासंबन्धेन च पदानर्थक्येन चैकवाक्यत्वासंभवात् न्यूनतापत्तेश्च । तदेतदभिप्रेत्योत्तरार्द्धस्यान्यदवतरणमाह—पितुरिति,—प्रयाणादितिशेषः। पुत्रेष्विति,—पितृमरणादव्यवहितपूर्वमेव गर्भे सति विभागसमयेऽपि मातुरस्पष्टगर्भत्वेन तदानीमज्ञाने तदव्यवहितमिति भावः । वा समुच्चये अवधारणे वा । आयव्ययविशोधितात् दृश्यादेव तद्विभाग इत्यर्थः । ननु तद्विभाग इत्यस्य कथमुक्तार्थतेति तस्येत्यस्यार्थमाह—पितरीति । भ्रातृभिरित्यस्य विभागे एवान्वयः ; तत्कर्तृकविभागेत्यर्थः। भ्रातृविभागेति पाठः प्रचुरः। मातरि सत्यां पितुरसत्वान्मातुर्विभागासंभवादवधिं पृच्छति—कुत इति । दृश्यादित्यस्य तात्पर्यार्थमाह—भ्रातृभिरिति । पदार्थावाह—आय इति । वृद्धिभेदस्य प्रागुक्त्या विनिगमनाविरहादाह—प्रतीति । वाक्यार्थमाह—ताभ्यामिति । शोधितम् परिहृतम् । तथा च प्रकृते विभागोत्तरं प्रातिस्विकांशैः कृष्यादिषु क्रियमाणेषु यो लाभः स आयः। पितृकृतं(यत्)ऋणं स्वकुटुंबपोषणा-

---

१. घ. भागक० । २. त. प्रातिस्वीकारौ (?) क० । ३. त. षु धनला० । ४. थ. द. णस्वकु० । ५. थ. द. 'च' नास्ति । ६. प. फ. ब. 'स्मृति' नास्ति । ७ प. फ. ब. एतदारभ्य 'भावः' इत्यन्तं नास्ति ।

Cole.: Ch. I, Sec. vi, §§ 8—9.

**एतदुक्तं भवति—प्रातिस्विकेषु भागेषु तदुत्थमायं प्रवेश्य पितृकृतं चर्णमपनीयावशि- 10
ष्टेभ्यः स्वेभ्यः स्वेभ्यो भागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः
कर्तव्य इति । **एतच्च विभागसमयेऽप्रजस्य भ्रातुर्भार्यायामस्पष्टगर्भायां विभागादूर्ध्व- 11
मुत्पन्नस्यापि वेदितव्यम् । **स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्य विभागः कर्तव्यः। 12
यथाऽऽह वसिष्ठः—"अथ भ्रातृणां दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्रला-

## सुबोधिनि

क्रियते स व्ययः। आयमंशमध्ये परिगणय्य व्ययं चोद्धृत्य सर्वेभ्योंऽशेभ्यो यस्माद्यस्मादंशात् यावद् यावदुचितं तावत् तावत् गृहीत्वांऽशक्लृप्तिः कर्तव्या। पितृमरणसमय एव गर्भे प-तित्वा विभागसमयेऽप्यव्यक्ते गर्भे तस्मादेव गर्भादुत्पन्नस्य पुत्रस्येत्याह—एतदुक्तं भवतीत्या-दिना]*|*[विभक्तमपि तद्धनमविभक्तमिव । यतो गर्भस्थितमप्यपत्यमपत्यत्वादेव पितृधनां-

## बालंभट्टी

दिसाधकं, तदपाकरणं व्यय इति भावः। आयव्ययरहितादित्यर्थनिरासायाऽऽह—एतदिति। भागेषु सत्सु। तदुत्थं ततः कृष्यादितो लब्धम् स्वस्वांशमध्ये इति शेषः। प्रवेश्य प्रक्षिप्य। अपनीय च। स्वेभ्यः स्वीयेभ्यः सर्वेभ्य इत्यर्थः। किंचित्किञ्चिदिति[2] यस्माद्यस्मादंशाद्यावद्या-वदुचितं तावत्तावद्गृहीत्वेत्यर्थः[3]। अत एवाऽऽह—स्वभागसम इति। अयं भावः—विभक्तमपि तत्पितृधनमविभक्तमिव[1]—यतो गर्भस्थितमप्यपत्यमपत्यत्वादेव पितृधनांशार्हम्; अतः पितृ-मरणसमये एव गर्भे सति विभागसमये यदाऽव्यक्तेगर्भे तस्मादेव गर्भादुत्पन्नमपत्यं तस्मात्पि-तृधनात्तदुत्थलाभाच्च भागार्हमिति, तत्रापि पुत्रसत्त्वे समांशभागित्वं पुत्रीसत्वे तु स्वस्व जातिनिबन्धनादंशाच्चतुर्थांशभागित्वं वक्ष्यमाणं बोध्यम्। उक्तन्यायं युक्तितौल्यादन्यत्राति-दिशति-एतच्चेति,—उक्त एव प्रकारः। भ्रातुः यस्यकस्यचित्प्रमीतस्य। अप्रजसीति भार्या-विशेषणम्। अप्रजस्येति पाठे यथासख्यमुभयोरुभयं विशेषणम्। न्यूनतानिरासाय विशेषं च सूचितम् उभयत्राप्याह—अस्पष्टेति। अनपत्या इति—बहिरविद्यमानपुत्रा इत्यर्थः। स्त्रियोऽत्र भ्रातृभार्याः। अत एवांऽऽह—आपुत्रेति,—आङ् मर्यादायाम्। अत एव तदर्थ-

---

१. थ. द. तत्पितृध० । २. प. फ. ब. किञ्चिदिति । ३. प. फ. ब. तावद्गृ० ।

Cole.: Ch. I, Sec. vi, §§ 10—12.

भात्'' इति । गृहीतगर्भाणामाप्रसवात्प्रतीक्षणामिति योजनीयम् ॥ १२२ ॥

13 ** विभक्तजः पित्र्यं मातृकं च सर्वं धनं गृह्णातीत्युक्तं, तत्र यदि विभक्तः पिता माता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति तत्र विभक्तजेन दानप्रतिषेधो न कर्तव्यो नापि दत्तं प्रत्याहर्तव्यमित्याह—

**पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।**

एतदेव स्पष्टयति **क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत यः ।**
**दायादेव न तद्दद्याद्विद्यया लब्धमेव च ॥ ११९ ॥**

पित्रादिक्रमादागतं द्रव्यविभागकालेऽविच्छिन्नभोगं विभक्तस्सन्नितरदायादानुमतस्वशक्त्या यदभ्युद्धरेत् स्वीकुर्यात् , स तद्विभागभञ्जकदायादे मैत्रादिकं च आयव्ययविशोधितादिति चोक्तमेव ॥ ११९ ॥

किञ्च **पितृभ्यां यस्य यद्दत्तमित्यादि ।**

सुबोधिनी

शार्हम् , अतः पितृधनात् तदुत्थादपि लाभाच्च तदपत्यं भागार्हमित्यर्थः। तत्रापि पुत्रत्वे समांशभागित्वम्; पुत्रीत्वे तु स्वजातिनिबन्धनादंशाच्चतुर्थांशभागित्वमिति वक्ष्यमाणमनुसन्धेयम्।]*
*[अत्र मूलस्थो वाशब्दोऽवधारणे । आयव्ययविशोधितात् ईश्यादेव तद्विभाग इत्यर्थः ।]*
''अथ भ्रातॄणाम्'' इत्येतत् वसिष्ठवचनमध्याहृत्य व्याचष्टे—गृहीतगर्भाणामिति॥ १२२॥

विभक्तजः पित्र्यं मातृकं चेति,—विभागानन्तरं मातापित्रोः सतोरेव योऽयमुत्पन्नः, तादृशो विभक्तजः पित्रोरूर्ध्वं मातापितृधनं गृह्णातीत्युक्तं ''विभक्तेषु सुतो जातः''

बालंभट्टी

माह—गृहीतेति।पुत्रेत्युपलक्षणमित्याह—आप्रेति।वाक्यार्थपूर्तये शेषमाह —पुत्रेति । (?) सूचितं तत्राऽऽह—प्रतीति ॥ १२२ ॥

व्यवहितसङ्गतिं सूचयन्नुत्तरावतरणमाह—विभक्तज इति। विभागानन्तरं पित्रोः सतोरेव य उत्पन्नः स विभक्तजः मातापितृमरणानन्तरं तयोर्धनं गृण्हातीत्युक्तं''विभक्तेषु सुतो जातः' इत्यनेनेत्यर्थः । मातृकांशः प्राग्वत्। तत्र तस्मिन् सति। मातावेति विकल्पो दाने न तु विभा-

१—१७. ४१ । २. द तुजा० । ३. थ. लवचनस्थवा० । ४. त. तादृशादेव (?) ।
५. प. फ. ब. यन्नवत० । ६. प. फ. ब. 'माता' नास्ति ।

Cole,; Ch. I, Sec. vi, § 13.

** मातापितृभ्यां विभक्ताभ्यां पूर्वं विभक्तस्य पुत्रस्य यद्दत्तमलङ्कारादि, तत्त- 14
स्यैव पुत्रस्य न विभक्तजस्य स्वं भवति । ** न्यायसाम्याद्विभागात्प्रागपि यस्य यद्दत्तं, 15
तत्तस्यैव । **तथाऽसति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य 16
यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम् ॥ १२२- ॥

## सुबोधिनि

इत्यत्रेत्यर्थः । उक्तं न्यायं [1]स्थलान्तरेऽपि अतिदिशति—तथाऽसति विभक्तज इति । अयमर्थः—न केवलं विभक्तजे पुत्रे सति विभागात् प्राग्वा पितृभ्यां यस्य यत् दत्तं, तत् तस्यैवेति नियमः; अपि तु विभक्तजपुत्राभावेऽपि विभक्ताभ्यां पितृभ्यां स्वपुत्रादिभ्यो यत प्रीत्या दत्तं, तन्मातापितृमरणानन्तरं तद्रिक्थं विभजतां मध्ये यस्मै यत दत्तं तत तस्यैव न विभागार्हमिति ॥ १२२- ॥

## बालंबट्टी

गे। पितुः पुत्रेभ्यः विभागे मातुस्तस्यार्थसिद्धत्वात् पृथक् तस्या अपि भागाच्च।अत एव पुनस्तत्र विभक्तेति विशेषणानुक्तिः । ताभ्योऽपि पुत्रवत पृथगंशं दत्वा तासां पृथक्कार इति तु न—"जायापत्योर्न विभागो विधीयते"इति हारीताद्युक्तेः।एवं च"पत्न्यःकार्याः समांशाकाः"इत्यत्र बहुवचनात् [2]पत्नीत्युक्तेश्च प्रतिपत्निपुत्रांशसमानमंशं गृह्णीयादित्यर्थो न तु तथेति प्रागुक्तं न विस्मर्तव्यमिति बोध्यम् । तत्र विषये " पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् । तस्य तन्नापहर्तव्यं माता दत्तं च यद्भवेत्"इति ॥ व्यासोक्तेराह—नापीति । यस्येति षष्ठी शेषे। एव-व्यवच्छेद्यमाह—नवीति। युक्तिसाम्यादन्यत्रातिदेशमाह—न्यायेति।अस्याग्रेऽप्यन्वयः। अपिः ऊर्ध्वसमुच्चये। एवेन विभाज्यत्वव्यवच्छेदः। [3]अतिदेशान्तरं तत एवाऽऽह--तथेति,—तद्वादित्य-र्थः। विभक्तजे असतीत्यन्वयः।तदूर्ध्वं तन्मरणानन्तरम्। जतामिति--निर्धारणे षष्ठी।न केव-विभक्तजे पुत्रे सति विभागादूर्ध्वं प्राग्वा यस्य यद्दत्तं, तत्तस्यैवेति नियमः; किन्तु विभक्तजपु-त्राभावेऽपि विभक्ताभ्यां ताभ्यां स्वपुत्रादिभ्यो यत् प्रीत्या दत्तं,तत्तयोर्मरणोत्तरं तद्धनं विभ-जतां मध्ये यस्मै दत्तं तत्तस्यैव न विभागार्हमित्यर्थः ॥ १२२- ॥

---

१. त. त्तं तस्यै । २. भ त्नीपदोक्तेश्च । ३. भ. इतः वाक्यद्वय नास्ति ।

Cole.: Ch. I, Sec. vi, §§ **14—16**.

1 ** जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं "यदि कुर्यात्समानंशान्" इत्यादिना ; पितुरूर्ध्वं विभागेऽपि पत्नीनां स्वपुत्रसमांशित्वं दर्शयितुमाह—

**पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ॥ १२३ ॥**

2 ** पितुरूर्ध्वं पितुः प्रयाणादूर्ध्वं विभजतां माताऽपि स्वपुत्रांशसममंशं हरेत् यदि स्त्रीधनं न दत्तम् । दत्ते त्वर्धांशहारिणीति वक्ष्यते ॥ १२३ ॥

**जीवता.....विभक्तानां विभक्तं च विभक्तभाक् ॥**

एतावदयं विधिः **पितुरूर्ध्वं विभजतां माताऽप्यंशं समाप्नुयात्॥१२३॥**

---

बालंभट्टी

व्यवहितसङ्गतिमाह—जीवादिति। स्वपदं स्पष्टार्थम् । पितुरिति—प्राग्वत्।पत्नीनां सर्वासाम्।दर्शोंति दर्शयन्नित्यर्थः।प्रयाणादिति,—तदित्यादि विभजनामिति,-"षष्ठी चानादरे" इति षष्ठी,—ताननादृत्येत्यर्थः। तद्वत् स्वत्वस्य स्वत्वादत एव हरेदित्युक्तिः।अपेःतत्रैवान्वयः। स च जीवद्विभागे समांशित्वसमुच्चायकः।अत एव तत्तुल्यतया एकत्वमत्राविवाक्षितम्।किं च अत्र मातुरुद्देश्यत्वात्तदुद्देशे हरणस्य अप्राप्तत्वेन विधेयत्वादेकत्वमाविवाक्षितम्—गृहंसम्मार्ष्टीतिवत्।"यदि कुर्यात्" इत्यत्र तु तेनैवाद्यपादेनांशभागित्वस्य प्राप्तत्वात् तदुद्देशेन पत्न्या विधानात्तद्गतं बहुत्वं विवक्षितं—पशुना यजेतेतिवत् ; एतेन विपरीतशङ्का निरस्ता । अत एव तदनुरोधेनावतरणे पत्नीनामित्युक्तम् । यद्वा यथाश्रुतेऽपिना जननीभिन्नसमुच्चयः । विष्णुरपि "मातरः पुत्रभागानुसारिभागहारिण्यः" इति । प्राग्वच्छेषमाह—यदीति।दत्ते त्विति प्रकृतानुरोधेनाऽऽह—हारिणीति। वक्ष्यते इति,—"सौदायिके दत्ते त्वर्धं प्रकल्पयेत् ।" इत्यनेनेति भावः।प्राग्वच्छेषः। अत एव स्मृत्यन्तरम्—"जनन्यस्वधना पुत्रैर्विभागेंऽशं समं हरेत्।"इति।अस्वधना—अप्राप्तस्विका स्त्रीधनशून्या।तत्र जननीग्रहणमपुत्राणां मातृसपत्नीनां पितामहीनां चोपलक्षणम्। अत एव व्यासः—"असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः। पितामह्यश्च तास्सर्वा मातृतुल्याः प्रकीर्तिताः ॥" इति । एवं सति प्रकृतमातृशब्दः पत्नीमात्रपर इत्यपि सुवचम्—"तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥" इति चतुर्विंशतिवचनं पितुः पत्न्यः सर्वा मातर इति सुमन्तुवचनमप्यत्र साधकम् । एवं च सापत्नमातुरपि अंशभागित्वमिति सिद्धम् ।

१. घ. ङ. सनांशान्वं । २. व्य०. ११५. । ३. ख पि मातुः स्व० । ४. क. घ ज. प्रयाणा० । ५. अ० २. ३. ३८. । ६ —१८ ५२.। ७. भ. ननन्या सधन० ।

Cole,- Ch. I, Sec. vii, §§ 1—2.

** पितरि प्रेते यद्यसंस्कृताः भ्रातरः सन्ति, तत्संस्कारे कोऽधिक्रियते इत्यत आह— 3

**असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।**

**पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदायद्रव्येण संस्कर्तव्याः॥१२३॥ 4

** असंस्कृतासु भगिनीषु विशेषमाह— 5

**भगिन्यश्च निजादंशाद्दत्त्वांऽशं[1] तु तुरीयकम् ॥ १२४ ॥**

अविद्यमानस्त्रीधनं माताऽपि विभागं पुत्रसममाप्नुयात् । मातृसंबंधश्चायं पितृसंबंधाविशेषात् तद्भार्यां मातृवचनो द्रष्टव्यः ॥ १२३ ॥

किञ्च—**असंस्कृतास्तु संस्कार्या इत्यादि ॥ १२४ ॥**

संस्कारं परिणयनं तत्पूर्वसंस्कृतैरसंस्कृतानां भ्रातॄणां कार्यम् , तादर्थ्येन वा द्रव्यमपनीयावशिष्टं विभजनीयम्।अस्मादेव ज्ञायते असाधारणद्रव्याद्विवाहनिवृत्तिः,सोपक्षयमौ-

बालंभट्टी

एतेनात्र मातृपदोक्त्या सापत्नमातुरंशभागित्वं नेति निर्वचनः[2] प्राच्यसिद्धान्तः परास्त इति दिक् ॥ १२३ ॥

पितुरूर्ध्वमित्यनेन प्रसङ्गसङ्गतिमाह—पितरीति । सन्तीति—तदेति शेषः । असंस्कृतानामनधिकारादाह—पूर्वसंस्कृतैरिति । अत एवाऽऽह —पितुरिति,— प्रयाणादिति शेषः । असंस्कृताः,—विवाहान्तसंस्कारैः । न च विभागप्रकरणे इदमयुक्तमिति वाच्यम् । पूर्वसंस्कृतैरिति विशेषणेन यथाऽस्वसंस्कारः पित्रा समुदायद्रव्येण कृतस्तथा तत्कृत्वा ततो विभागः कार्यः; न तु ततः प्रागिति बोधितत्वेनात्र सङ्गतेः—अन्यथा तद्विशेषणोपादानानर्थक्यं स्पष्टमेव। तदाह—समुदायेति,—विवाहान्तसंस्कारैरिति शेषः। एवमग्रेऽपि। तुल्ययुक्तया पातित्या[3]दिदोषदुष्टे पितरि जीवत्यपि यदि पुत्रा एव विभागकर्तारस्तदा तत्राप्येवमेव बोध्यम्[4] । एवमग्रेऽपि ॥ १२३ ॥

विशेषमिति,—विवाहान्तसंस्कारतौल्येऽपि पूर्वक्रमान्यविजातीयांशदानरूपम् अ-

१. क. दंशं दत्त्वा तु । २. भ. निर्वचः । ३. प.फ पातित्यादितिदोषदुष्टे । ४. ब. बोध्यमिति नास्ति ।

Cole.: Ch. I, Sec. vii, §§ 3—5.

बालंभट्टी

संस्कृतासु पूर्वमंशदानं ततस्तासां संस्कारा इति पूर्वक्रमान्यक्रमरूपं च विशेषमित्यर्थः। एतदर्थमेव तुः। ननु नेदं संस्कारमात्रबोधकं तावत्—निजादित्यादिवैयर्थ्यापत्तेः; किं च पूर्वेणैव सामान्येन सिद्धे संपूर्णस्य वैयर्थ्यापत्तेः। नापि तुरीयांशदानमात्रभागिनि मात्रोद्देशेन विधीयते—भगिन्य इति प्रथमायाश्च दत्त्वेति क्त्वाप्रत्ययस्य चासंबद्धत्वापत्तेः। नापि पूर्वानुवृत्त्या पूर्वगृहीतादंशात्तुरीयमंशं दत्त्वा[१] या असंस्कृतास्तास्तैः संस्कार्या इत्यर्थः। एवमपि चाऽऽनर्थक्यस्य तदवस्थत्वात् एतेन तत् दत्त्वा तेनैव संस्कार्या न तु समुदायद्रव्येण नापि स्वांशेनेत्यर्थः इत्यपि निरस्तम्। तदा तदुपयोगिद्रव्यस्यैव प्राप्त्या "दत्त्वांऽशं तुरीयकम्" इत्यस्यासङ्गतेश्च दत्त्वेत्यस्य व्ययीकृत्येत्यर्थेऽप्यवमे दोषः। निजमंशं परिभाव्य ततो वा तुरीयमंशं व्ययीकृत्यैव तथा ताः संस्कार्या इति नियामकं किंचिदमिति पक्षेऽपि चासङ्गतिः तदवस्थैव। वराय तं दत्वेत्यर्थस्तु प्रत्यासत्तिन्यायविरुद्धः। अथ वाक्यभेदेन भगिनीभ्यः सर्वाभ्यो निजादंशात् परिभाव्य आदौ तमुपास्य तं विचार्य ततोद्यम्य वा तुरीयमंशं दत्त्वा स्वांशास्तैर्ग्राह्या असंस्कृतास्ताः संस्कार्याश्चेत्यर्थेन न कस्याप्यसंगतिरित्युच्यते। एवमपि पूर्वेणैव सिद्ध्या द्वितीयवाक्यानर्थक्यं तदवस्थमेव।भगिनीभ्यो निजादित्याद्येव ब्रूयात्। न चैवं विशेषेणानेन पूर्वोक्तसंस्कारबाधापत्तिरिति वाच्यम्। तस्यासंस्कृतभ्रातृभगिनीसाधारणत्वेन अस्य संस्कृतासंस्कृतभ्रातृभगिनीसाधारणत्वेन सामान्यविशेषभावाभावात् परस्परविषये द्वयोश्चारितार्थ्येनासंस्कृतभगिनीविषये विरोधाभावेन समावेशसंभवात्। अथ तदनुवृत्त्यैव निजादंशात् दत्त्वा असंस्कृतास्ताः संस्कार्याः [२]संस्कारैः संस्कृतास्ताः संस्कार्या भूषणीयाश्चेत्यर्थस्याप्राप्तस्य विधानेन भगिनीमात्रदाने प्रत्यवायस्य मनूक्तत्वेन तदावश्यकत्वप्रतिपादनतात्पर्यकेण स्फुटतया तदर्थबोधार्थकानुवादक[३]त्वेन च न कस्यापि वैयर्थ्यमित्युच्येत। एवमपि निजादित्यादि अयुक्तम्—अर्थस्य दुर्वचत्वात्। तथा हि किं यावन्तो भ्रातरस्तावतोऽशान् विधाय स्वस्वांशात्तुर्यस्तुर्यो भागो देयस्तैःप्रत्येकमित्यर्थ उत भ्रातृभिः सर्वैः स्वस्वांशात्तुर्यं भागमुद्धृत्य देयमिति। तत्राऽऽद्ये पक्षे भगिनीद्वित्वादावप्येकैकस्यै प्रत्येकं चतुर्थो भागो देय इति सिद्धम्। द्वितीये पक्षे भगिनीद्वित्वादावपि सर्वैस्तैरुद्धृतं सकृद्भागमेव दत्तं सर्वा गृह्णीयुर्न तु प्रत्येकं पृथगुद्धार इति सिद्धम्। तत्र न तावदाद्यं युक्तं—यत्रैको भ्राता भगिन्यश्च बह्वयस्तत्र पृथक् ताभ्यश्चतुर्थांशदाने भ्रातुरकिंचनता स्यात्; किंचैका भगिनी बहवश्च यत्र भ्रातरस्तत्र तैस्तथा दीयमाने तदपेक्षया तस्या अधिकांशलाभेन पुत्रापेक्षया कन्याया न्यूनांशप्रापकवचनविरोधः। नापि द्वितीयःभगिन्या एकत्वे भ्रातॄणां च बहुत्वे पूर्वोक्तदोषस्यैव सत्त्वात्; किंच भ्रातुरेकत्वे भगिनीनां च बहुत्वे भ्रातृभागस्यैकनिष्ठत्वेन

१. भ. दत्त्वा ताभ्यो सं०। २. प. फ. ब. 'संस्कारैः' इति नास्ति। ३. प. फ. दकतत्वेन च।

Cole.: Ch. I, Sec. vii, § 5.

** अस्यार्थः—भगिन्यश्चासंस्कृताः संस्कर्तव्या भ्रातृभिः । किं कृत्वा ?—निजादंशाच्चतुर्थमंशं दत्त्वा । अनेन दुहितरोऽपि पितुरूर्ध्वं अंशभागिन्य इति गम्यते । 6

## सुबोधिनि

*["भगिन्यश्च निजादंशात्"इत्यत्र वचने व्याख्यातॄणां विप्रतिपत्तेर्विद्यमानत्वात् सूक्ष्मत्वाच्चार्थस्य स्वेनैवोच्यमानोऽर्थो नान्य इत्यभिप्रायेणाऽऽह--अस्यार्थ इति । " असंस्कृतास्तु संस्कार्याः" इत्यमुं प्राञ्चमांशमत्रानुषज्य व्याचष्टे — भगिन्यश्चासंस्कृता इति । केचन "निजादंशात्"इति पदमेवं व्याचक्षते ; तद्यथा–यावन्तो भ्रातरस्तावतोंऽशान् विधाय स्वात्स्वादंशाच्चतुर्थश्चतुर्थो भागो दातव्यो भगिन्यै । तथा भगिनीद्वित्वे बहुत्वे चैकैकस्यै प्रत्येकं चतुर्थो भागो दातव्य इति । अपरे[2] तु भ्रातृभिः स्वात्स्वादंशाच्चतुर्थं चतुर्थमंशमुद्धृत्य भगिन्यै दातव्यम् । यदा द्वे भगिन्यौ बह्व्यो वा, तदाऽप्युद्धृतमेव[3] भागं ता गृह्णीयुः न पृथगुद्धार इति व्याचक्षते। तदुभयमनुपपन्नम् । तथा हि—आद्ये पक्षे[4] यद्येको भ्राता भगिन्यश्च सप्ताष्टौ[5] वा, तदा भगिनीभ्यश्चतुर्थेंऽशे दीयमाने भ्रातुराकिञ्चनता स्यात् । अथैका भगिनी बहवो भ्रातरस्तदा भ्रातृभिश्चतुर्थेचतुर्थेंऽशे दीयमाने भ्रातुरिवांशो[6] भगिन्याः स्यात् ; तथा च पुत्रापेक्षया पुत्र्याः न्यूनांशप्रापकवचनाविरोधः । द्वितीये तु व्याख्याने भगिन्या एकत्वे भ्रातॄणां च बहुत्वे पूर्वोक्त एव दोषः ; भ्रातुरेकत्वे भगिनीनां च 6

## बालंभट्टी

तच्चतुर्थभागस्याल्पत्वेन तत्राप्यंशकल्पने[6] अतितुच्छता स्यादंशस्येति तस्य समुदायतद्वचनविरोधः[7]।कोऽयमेतस्यार्थ इति चेत्तत्राऽऽह— अस्यार्थ इति। एकवाक्यतया पूर्वानुषङ्गेणाऽऽह— भगिन्यश्चेति। चो भ्रातृसमुच्चये।दत्त्वेति,—नेदं संस्कारोपयोगिद्रव्यदानपरं—भ्रातृद्रव्यसंभवात्, तस्य भ्रातृकर्तृत्वेन दानानपेक्षणाच्च । किन्तु भ्रातुरंशवत्तासामपि ततः पृथगंशदानपरमित्यवश्यं वाच्यम् ।तच्चायुक्तं—तासां तद्वत् स्वत्वाभावात् विशेषवचनाभावाच्च।तस्मादेतदनुवादान्यथानुपपत्त्यैव तत्स्वत्वाभावेऽपि तदनन्तरं तासामप्यंशोऽस्तीत्यनुमीयते स च विनिगमनाविरहा उभयोस्तदेव । सामान्येनाऽऽह— अनेन दुहितरोऽपीति । अन्यथैतदनुपपत्तिरुक्तैवेति भावः । अथप्रागुक्तचरममते पक्षद्वये दत्तदोषद्वयस्य वक्ष्यमाणानिराकरणापेपत्त्यर्थमुक्तचरमैकदेश्युक्तमतद्वयनिराकरणपूर्वकं स्वोपपत्तिकमदोषं स्व-

१. क. मन्यन्त । च. मन्यते । २. थ. 'अपरे' इत्यारभ्य 'व्याचक्षते' इत्यन्तं नास्ति । ३. द. वैनं भागं ताश्च गृ० । ४. थ द. 'पक्षे' इति नास्ति । ५. थ. द. सप्ताष्टाः, तदा प्रतिभागिनि चतु० । ६. थ. द. तुरधिकांशता भ० । ६. भ. कल्पनायामपि भगिन्यौ । ७ प ब. भ. प्रथमपक्षे प्रत्येकमपि भगिनीनां तुरीयांशदानात्तुरीयांशमित्यादि विरुद्धम् ; अत्रतु तदभावात्तद्विरुद्धयेतेति कोय० ।

Cole.: Ch. I, Sec. vii, § 6.

तत्र निजादंशादिति प्रत्येकं परिकल्पितादंशादुद्धृत्य चतुर्थांशो दातव्य इत्येवमर्थो न भवति ; किन्तु यज्जातीया कन्या, तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्तव्या । एतदुक्तं भवति । यदि ब्राह्मणी सा कन्या, तदा ब्राह्मणीपुत्रस्य यावानंशो भवति,
7 तस्य चतुर्थांशस्तस्या भवति । ** तद्यथा—यदि कस्यचिद्ब्राह्मण्येव एका पत्नी पुत्रश्चैकः कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयात् ; यदा तु द्वौ पुत्रौ एका कन्या,

सुबोधिनी

सप्ताष्टत्वे भ्रातृभागस्यैव कनिष्ठत्वे तच्चतुर्थभागस्य स्वल्पत्वेन तत्राप्यंशकल्पनायामतितुच्छता स्यादंशस्येति "दत्त्वांऽश तु तुरीयकम्" इत्यस्याविषयः । भवतु वा तथाऽपि (?) तद्वचनविरोधः। अस्मदुच्यमानरीत्या तु प्रत्येकं भगिनीनामपि चतुर्थांशसिद्धेस्तुरीयकमित्येतत् पदं न विरुद्ध्यते।त्वतन्मते तु तदभावाद्विरुध्येतेत्यनेनाभिप्रायेणैकदेशिमतं निराकुर्वन् स्वमतमाह]*— तत्र निजांदंशादित्यादिना शेषं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः[1]

बालंभट्टी

मतमेतत्तात्पर्यभूतमाह — अत्र निजादंशादित्यादिना ब्राह्मणीपुत्रो विभज्य गृह्णीत इत्यन्तेन । अत्र मूलवाक्ये। तत्रेति पाठे उक्तबौद्धार्थानां मध्य इत्यर्थः।इति—इत्यस्य उभयं क्रोडीकृत्याऽऽह—प्रत्येकमिति । अयं च निजादित्यस्यार्थः । अनेन शास्त्रीयव्यवच्छेदः । अयमर्थ इति—प्रागुक्तद्विविधमित्यर्थः । न भेति—प्रागुक्तदोषापत्तेरिति भावः । भागादित्यनेन पञ्चम्यन्तार्थः । शास्त्रीय उक्तोऽग्रिमः । नन्वेवमपि कथनमात्रान्न ततोऽत्र पक्षे[2] भेदः स्फुटतया भासतेऽत आह— एतदिति । भवतीति—"चतुस्त्रि" इति वक्ष्यमाण वाक्येन प्रतिपादितो भवतीत्यर्थः । तथा च स एव निजांश इति तत्प्रतिपादितांऽशाच्चतुर्थांशं तस्यै दत्त्वाऽवशिष्टं स्वयं यथासंभवं गृह्णीयादिति निजांशस्य व्यवस्थितत्वे[3] तत्तुरीयांशदानामात्र तस्यै न तु प्रागवदव्यवस्थितमिति नात्र पक्षे प्रागुक्तदोषापत्तिरिति भावः । इदमेवोदाहरणबाहुल्यप्रदर्शनेन विशदयति— तद्यथेत्यादिना । यदीति — यत्रेत्यर्थकम् । तत्रेति—तदेत्यर्थकं वा । एवमग्रेऽपि । एतदभावे वक्ष्यमाणवाक्येन तत्राष्टावंशाः प्राप्ताः सन्तानभेदेनेति तुल्यांशलाभेन चत्वारश्चत्वारोंऽशा इति लाभात् फलितमाह—सर्वमेव द्रव्यं द्विधा विभज्येति । एवमग्रेऽपि बोध्यम् । एतद्वचनमाह—तत्रेति,—तयोर्मध्ये इत्यर्थः । शेषं सर्वम्। दानसाम्येऽपि ग्रहणवैलक्षण्य

१. ख. गृह्णीयुरित्य० । २. ब. भ. पक्षेऽतो भेदः । ३. प फ. ब व्यवहितत्वे ।

Cole.: Ch. I, Sec. vii, §§ 6—7.

तदा पितृधनं सर्वं त्रेधा विभज्य एकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः; अथ त्वेकः पुत्रो द्वे कन्ये, तदा पित्र्यं धनं त्रेधा विभज्य एकं भागं चतुर्धा विभज्य तत्र द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्त्वाऽवशिष्टं सर्वं पुत्रो गृह्णातीत्येवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम् । **यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्यैका, तत्र पित्र्यं धनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति । यदा[1] तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका, तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीनंशान्[2]क्षत्रियापुत्रभागांश्चतुर्धा विभज्य चतुर्थमंशं[3] क्षत्रियाकन्यायै दत्त्वा शेषं सर्वं[4] ब्राह्मणीपुत्रौ विभज्य गृह्णीतः । एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्या- 8

## सुबोधिनी

इत्यन्तेन । एवं जातिवैषम्ये भ्रातॄणां चेत्यादि भगिनीनां—तत्र जातिवैषम्ये भ्रातॄणां भगिनीनां च सङ्ख्यया साम्ये एवं द्रष्टव्यम् ; तद्यथा — ब्राह्मणीपुत्रः कन्या च[5]

## बालंभट्टी

सूचकस्तुः । अत एव तदा पितृधनमिति पाठः । एवमेग्रेऽपि । यद्यपि भगिन्यश्चेति भ्रातृभिरिति बहुवचनद्वयेनांशमित्येकवचनेन चानेकभ्रातृकर्तृकानेकभगिन्युद्देश्यैकैकतुरीयांशकर्मकदानला- भन प्रत्येकं भगिनीनां भागसंबन्धलाभो न;तथाऽपि वक्ष्यमाणमानवे वीप्सापृथक्पदयोस्सत्वादाह[6] - द्वौ भागौ द्वाभ्यां कन्याभ्यामिति।एतेनैक एवांशो भगिनीभ्यां देय इति मदनपारिजातो- क्तमपास्तम्—कन्याबहुत्वे प्रागुक्तदोषापत्तेः । एवं चात्र अंशमिति जातावेकवचनम् । इतिः समाप्तौ । एवं पुत्रबहुत्वे कन्याबहुत्वेऽपीत्याह—एवमिति । विजातीयेष्वाह—यदा त्विति। अत्र साम्याभावेन प्राग्वत् द्वेधा विभागासंभवादुक्तयुक्तेराह—सप्तधेति । वस्तुतस्तु पुत्रस्यैवेत्याह— पुत्रभागानिति । शेषं सर्वं एवमुक्तवैपरीत्ये बहुत्वे च बोध्यमित्याह— एवं जातीति । तत्र जातिवैषम्ये भ्रातॄणां भगिनीनां च सङ्ख्यासाम्ये इत्थं बोध्यम् ।

---

१. ख. यत्र । २. ख ग. तेषु क्षत्रियापुत्रभागा स्त्रींश्चतु० । क. तेषु इति नास्ति । शेषं ख. ग. वत् । ३. क तुरीयमंशं । ४. क. च सर्वमिति नास्ति । ५. थ. द. च । क्ष०। ६. ब. इत्युक्तवैवाऽऽह ।

Cole.: Ch. I, Sec. vii, §§ 7—8.

9 याः साम्ये वैषम्ये च सर्वत्रोहनीयम्। ** न च "दत्त्वांऽशं तु तुरीयकम्" इति तुरीयां-

## सुबोधिनी

तथा क्षत्रियापुत्रः कन्या च तथा वैश्यायाः शूद्रायाश्च एवमष्टावपत्यानि चत्वार्यपत्यानि स्त्रियः चत्वारि पुमांसः। "चतुस्त्रिद्व्येकभागाः स्युः" इति वचनेन ब्राह्मण्यपत्ययोरष्टावंशाः; क्षत्रियापत्ययोः षट् ; वैश्यापत्ययोश्चत्वारः ; शूद्रापत्ययोर्द्वौ ; एवं विंशतिभागान् कृत्वा ब्राह्मणीकन्यकायै स्वजातिविहितादंशचतुष्टयरूपान्निजाद्भागात् चतुर्थमंशं दद्यात् क्षत्रियाकन्यकायै स्वजातिविहिदादंशत्रयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्। वैश्याकन्यकायै स्वजातिविहितादंशद्वयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्; शूद्राकन्यायै स्वजातिविहितादेकांशरूपादेव निजाद्भागाच्चतुर्थमंशं दत्वा तत्तद्भागाद वशिष्टं द्रव्यमेकीकृत्य ब्राह्मणादिपुत्राः क्रमाच्चतुस्त्रिद्व्येकभागान् गृह्णीयुः; वैषम्ये तु भ्रातॄणां भगिनीनां यावत्यो व्यक्तयस्तावतीनां भ्रात्रादीनां तावतोंऽशांश्चतुस्त्रिद्व्येकभागादिक्रमेण कल्पयित्वा कन्यकानां स्वस्वजातिविहिताद्भागाच्चतुर्थं चतुर्थमंशं दत्वावशिष्टतद्भागद्रव्यं पुनश्चतुरस्त्र्यादिक्रमेण विभज्य गृ-

## बालंभट्टी

तद्यथा—ब्राह्मण्याः पुत्रः कन्यका च, क्षत्रियायाः पुत्रः कन्यका च, एवं वैश्याशूद्रयोरपि, एवं चाष्टावपत्यानि चत्वारः पुमांसश्चतस्रः स्त्रियस्तत्र "चतुस्त्रि" इति वक्ष्यमाणवाक्येन ब्राह्मणापत्योरष्टावंशा क्षत्रियापत्ययोःषट् वैश्यापत्ययोश्चत्वारःशूद्रापत्ययोर्द्वौ;–एवं विंशति भागान् कृत्वा ब्राह्मणीकन्यायै स्वजातिपुत्राविहितादंशचतुष्टयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्; क्षत्रियाकन्यायै स्वजातिविहितादंशत्रयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात् ;वैश्याकन्यायै स्वजातिपुत्रविहितादंशद्वयरूपान्निजात् भागाच्चतुर्थमंशं दद्यात् ; शूद्राकन्यायै स्वजातिपुत्रविहितादेकांशरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात् । ततोऽवशिष्टं द्रव्यमेकीकृत्य ब्राह्मण्यादिपुत्राः क्रमाच्चतुस्त्रिध्व्येकभागान् गृह्णीयुः। वैषम्ये तु भ्रातॄणां भगिनीनां च यावत्यो व्यक्तय तावतीनां भ्रात्रादिव्यक्तीनां तावतोंऽशान् चतुस्त्रीतिक्रमेण कल्पयित्वा भगिनीभ्यः स्वस्वजाति पुत्रविहितादंशाच्चतुर्थं चतुर्थमंशं दत्त्वाऽवशिष्टं तत्सर्वं द्रव्यं भ्रातरस्ते पुनः चतुस्त्रीत्यादि क्रमेण गृह्णीयुरिति। केचित्तु उक्तरीत्यैव तुरीयमंशं कन्यायै दत्त्वा—तेनैव विवाहः कार्यो न तु समुदितद्रव्येण विवाहोंऽशदानं च पृथगित्याहुस्तन्मतं खण्डयति— न चेति । इति

---

१ थ. 'चतुष्टय' इत्यादि 'वैश्याकन्यकायै स्वजातिविहिता' इत्यन्तं नास्ति । २. त. एतदादि 'तत्तत्' इत्यन्तं नास्ति । ३. भ र्थांशं द० ।

Cole.; Ch. I, Sec. vii §§ 8—9.

शाविवक्षया संस्कारमात्रोपयोगि द्रव्यं दत्त्वेति व्याख्यानं युक्तम् ; मनुवचन-विरोधात्—"स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् । स्वात्स्वादंशा-च्चतुर्भागं पतिताः स्युरदित्सवः ॥" इति । ** अस्यार्थः—ब्राह्मणादयो भ्रातरो ब्रा- 10 ह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यः "चतुरोंऽशान् हरेद्विप्रः" इत्यादिवक्ष्यमाणेभ्यः स्वात्स्वादंशादात्मीयभागाच्चतुर्थं चतुर्थं भागं दद्युः। न चात्मीया-द्भागादुद्धृत्य चतुर्थांशो देय इत्युच्यते; किन्तु स्वजातिविहितादेकस्मादंशात्पृथक्पृथगेकस्यै

सुबोधिनि

ह्मीयुरित्येवं योजनीयम् । संस्कारमात्रोपयोगिद्रव्यमिति,—सस्कारो विवाहः । "स्वेभ्योंऽशेभ्यः" इति मनुवचनं स्वोक्तार्थपरत्वेन व्याचष्टे—अस्यार्थ इत्यादिना। मनुवचने-ऽप्येकदेशिव्याख्यानं निराचष्टे—न चात्राऽऽत्मीयभागादिति । अत्रापि जातिवैषम्ये भ्रातॄणां

बालंभट्टी

इत्यस्य। संस्कारेति विवाहान्तेत्यादि। दत्त्वेतीति व्ययीकृत्येत्यर्थः। यद्यप्येवं व्याख्याने दोषद्वयं प्रागुक्तमत्रैव, तथाऽपि स्वमतं परसंमतमपीति सूचयन् दोषान्तरं च तत्र प्रतिपादयन्नाह- — मन्विति । एतेन देशाचाराद्व्यवस्थेति मदनपारिजाताद्युक्तमपास्तम् । तदेवाऽऽह— स्वेभ्योंऽशेभ्य इति । तं प्रतिपादयन्नस्फुटत्वादिना स्वोक्तार्थपरतया व्याचष्टे-- अस्यार्थ इति । तत्र कन्यात्वं स्वपितृनिरूपितं न तु स्वनिरूपितमित्याह—भगिनीभ्य इति । स्वेभ्यः इत्यस्य व्याख्या—स्वजातीति । तथा चाऽऽत्मीयपरः सः। स्वात् स्वादंशा-दित्येव सिद्धे बहुवचनान्ततदुक्तिसामर्थ्यात्तत्स्वरूपमाह —चतुर इति,—वक्ष्यमाणस्यार्थतो निर्देशः । ल्यब्लोपे पञ्चमी,—तानभिलक्ष्येत्यर्थः; हेतुपञ्चमी वा । दानग्रहणयोः प्रत्येकसं-बन्धलाभार्थं वीप्सादीत्याह—स्वात् स्वादिति । स्वशब्द आत्मीयपर इत्याह— आत्मी-यादिति । चतुःशब्दश्चतुर्थपरो लक्षणयेत्याह—चतुर्थं चतुर्थमिति,—इयं वीप्सा पृथक्पद-लभ्या । एवं चैतदुक्तिविरोधस्तद्व्याख्याने इति भावः । अत्रापि प्रागुक्तैकदेशिव्याख्या ने-त्याह—न चात्रेति,—मनुवाक्ये इत्यर्थः। उक्तहेतोः स्वेभ्योंऽशेभ्य इत्यस्याऽऽनर्थक्यापत्तेश्चेति भावः । प्रागुक्तसिद्धान्तमाह—किन्त्विति। अत्रापि जातिवैषम्ये सङ्ख्यावैषम्ये च पूर्वोक्तैव

१ —९. ११८. । २. ख. ग. दात्मीयात्मीयभा० । घ. ङ. दात्मीयादात्मीयाद्भा० । ३. ख. त्मभा० । घ. च. त्मीयभा० । ४. क. घ. ज. गेकस्यै एकस्यै । ५. थ. द. भ्यस्त्विति । ६. ब. यन् स्फु० । ७. प फ. ब. 'सः' नास्ति । ८. भ. र्थ्यमाह । ९. ब. ख्यान नेत्याह नचात्रेति ।

Cole.: Ch. I, Sec. vii, §§ 9—10.

कन्यायै चतुर्थोऽंशो देय इति जातिवैषम्ये सङ्ख्यावैषम्ये च विभागक्लृप्तिरुक्तैव।[1][2] "पतिता
11 स्युरदित्सवः" इत्यकरणे प्रत्यवायश्रवणादवश्यदातव्यता प्रतीयते । ** अत्रापि
चतुर्भागवचनमाविवक्षितं संस्कारोपयोगिद्रव्यदानमेव विवक्षितमिति चेन्न । स्मृति-
द्वयेऽपि चतुर्थांशदानाविवक्षायां प्रमाणाभावाददाने प्रत्यवायश्रवणाच्चेति । **यदपि
12 कैश्चिदुच्यते—अंशदानविवक्षायां बहुभ्रातृकायां बहुधनत्वं, बहुभगिनीकस्य च निर्ध-

द्वाहिकमार्जयितृणामेव द्रव्यमिति । अतस्साधारणादेव भ्रातरः संस्कार्याः भगिन्यश्च । यदि त्वल्पं द्रव्यं वा न स्यात् ततो निजादंशाच्चतुर्थमंशं भगिन्यर्थमपनीयान्यत् सर्वं विभजनीयमेव ॥ १२४ ॥

## सुबोधिनी

भगिनीनां च वैषम्ये पूर्वोक्तैव व्यवस्थेत्याह—जातिवैषम्ये[3] संख्यावैषम्ये[4] चेति । ननु कन्यानां प्रीतिदानमेव न त्वावश्यकमित्यत आह—पतिताः स्युरदित्सव इत्यकरण इति । एवं मनुवचनव्याख्यामाक्षिपति—अत्रापि चतुर्थभागवचनमिति । समाधत्ते—न स्मृति-द्वयेऽपीति । स्मृतिद्वये याज्ञवल्क्यस्मृतौ मनुस्मृतौ चेत्यर्थः। अंशदानविवक्षायां बहुभ्रातृ-काया इति,—"दत्त्वांऽशं तु तुरीयकम्" इत्यत्र "स्वात् स्वादंशाच्चतुर्थभागम्" इत्यत्रापि चतुर्थांशदानविवक्षायामित्यर्थः ॥ १२४ ॥

## बालंभट्टी

व्यवस्थेत्याह—जातीति । ननु भगिनीनां प्रीतिदानमेव न त्वावश्यकं[6]; तत् कथ विधिः प्रकर्षश्चात आह—पतिता इति । अदित्सवः--दातुमनिच्छवः । भ्रातृणामिति भावः । एवमुक्त्वा[7] केचिन्मतेन प्राग्वदत्रापि शङ्कते—अत्रापीति। अपिः पूर्वसमुच्चये । एवं सत्ये-तद्विरोधस्तत्र व्याख्यानेनेति[8] भावः । अत एवाऽऽह—स्मृतिद्वयेऽपीति,—मनुस्मृतौ याज्ञ-वल्क्यस्मृतावपीत्यर्थः। पूर्वानुक्तदोषान्तरमाह—अदाने प्रत्यवायेति,-मनुस्मृताविति शेषः। तथा सति तदर्थत्वेनैवोपयुक्तावश्यकत्वे लब्धेऽदाने प्रत्यवायश्रवणासङ्गतिः स्पष्टैवेति भावः । एवं दानावश्यकत्वे चरमप्रागुक्तैकदेशिमतव्याख्यानद्वये दोषापत्तिः तदव-स्थेति कस्यचिदुक्तिं खण्डयति — यदपीति । अंशेति, —स्मृतिद्वये चतुर्थांशेत्यर्थः।

---

१. क. भाग० । २. छ. रुक्ता । ३. थ द. 'जाति' नास्ति । ४. त. वेति । ५. द ये याज्ञ० । ६. भ. कमिति कथं । ७. भ. 'एवम्' आरभ्य 'त्रापि' इत्यन्तं नास्ति।८. भ. ख्यानेति।

Cole.: Ch. I, Sec. vii, §§ 10—12.

नता प्राप्नोतीति, तदुक्तरीत्या परिहृतमेव। न ह्यत्राऽऽत्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते येन तथा स्यात्; **अतोऽसहायमेधातिथिप्रभृतीनां व्याख्यानमेव चतुरस्रं, 13 न भारुचेः। ** तस्मात्पितुरूर्ध्वं कन्याऽप्यंशभागिनी। पूर्वं चेद्यत्किञ्चित्पिता 14 ददाति, तदेव लभते विशेषवचनाभावादिति सर्वमनवद्यम्॥ १२४॥

** एवं "विभाग चेत्पिता कुर्यात्" इत्यादिना प्रबन्धेन समानजातीयानां भ्रातॄणां परस्परं 1 पित्रा च सह विभागक्लृप्तिरुक्ता; अधुना भिन्नजातीयानां विभागमाह—

**चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।**
**क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः॥ १२५॥**

** "तिस्रो वर्णानुपूर्व्येण" इति ब्राह्मणस्य चतस्रः, क्षत्रियस्य तिस्रः, वैश्यस्य 2 द्वे, शूद्रस्यैकेति भार्या दर्शिताः। तत्र ब्राह्मणात्मजा ब्राह्मणोत्पन्ना वर्णशः ** वर्ण- 3

सवर्णानां समो विभागः। नानावर्णास्तु चतुस्त्रिद्व्येकभागा इत्यादि॥ १२५॥

बालंभट्टी

तत् तदपि। उक्तेति,— स्वजातिपुत्रविहितादंशादित्यर्थेनेत्यर्थः। तदपरोक्तव्यतिरेकमुखेनाऽऽह — न ह्यत्रेति। उपसंहरति अत इति। असहायेति स्वतन्त्रेत्यर्थः। प्रागुक्तहेतोः, उचितामिति—चतुरस्रमिति प्रचुरः पाठः। एवव्यवच्छेद्यं प्रागुक्तमेवाऽऽह— न चेति। फलितपरमतात्पर्यमाह—तस्मादिति। पितुरूर्ध्वं प्रयाणात्। कन्याऽपि सर्वा दुहिता। पूर्वं मरणात्। तत्रोपसंहारे विभागे इत्यनुक्त्या उपक्रमेऽपि अनेन दुहितर इत्यत्रानुक्त्या, तस्य पूर्वतोऽलाभेन च विभागे सत्यसति च दुहिता तच्चतुर्थांशभागिनी तदनन्तरमिति सिद्धम्। अत एवैकपुत्रस्थलेऽप्युपपादनं कृतमिति बोध्यम्॥ १२४॥

सङ्गतिमाह—एवमिति। वचनबाहुल्यादाह—प्रबन्धेनेति। अस्य संभवमाह—तिस्रो वर्णेति। इति इत्यनेन। एका स्वीया वर्तते एवेत्याह—चतस्र इति। दर्शिता इत्यादिः आचाराध्याये इति भावः। तत्र तासु सतीषु। ननु पितुर्ब्राह्मणस्यैकत्वेन न वर्णभेदोऽत आह—वर्ण शब्देनेति। तत्र वर्णशब्दस्य नियतपुंस्त्वेनात्र स्त्रीषु लक्षणायामपि

१. ख. ज. अस्मत्सहाय०। घ. अस्मत्संप्रदाय०। २. व्य० ११४.। ३. ख. ग. ज. 'च' नास्ति। ४. वि० वैश्यजौ द्व्येकभागिनौ। ५. आ० ९७.। ६. भ. तदेव प०। ७. फ. 'दुहिता' नास्ति। ८. फ. अत्र। ९. ब. च तच्च०। १०. ब. 'न' नास्ति।

Cole.: Ch. I, Sec. vii, §§ 12—14; Sec. viii, §§ 1—3.

शब्देन ब्राह्मणादिवर्णाः स्त्रियः उच्यन्ते । "सङ्ख्यैकवचनाच्च वीप्सायाम्[1] " इत्य-
*2 धिकरणकारकादेकवचनाद्वीप्सायां शस् ।** अतश्च वर्णे वर्णे ब्राह्मणोत्पन्ना यथाक्र-
4 मं चतुस्त्रिद्व्येकभागाः स्युः भवेयुः । **एतदुक्तं भवति—ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागाँल्लभन्ते । तेनैव क्षत्रियायामुत्पन्नाः प्रत्येकं त्रींस्त्रीन्[2] भागान्

ब्राह्मणस्य चतसृषु ब्राह्मण्यादिषु यदा पुत्राः स्युः तदा द्रव्य दशधा विभज्य ब्राह्मणादिक्रमेण चतुस्त्रिद्व्येकभाक्त्वं स्यात् । चत्वारो ब्राह्मणस्यांशाः, क्षत्रियस्य त्रयः, वैश्यस्य द्वे, एकः शूद्रापुत्रस्य । एवं क्षत्रियजातानां त्रयः क्षत्रियस्य वैश्यस्य द्वौ एकश्शूद्रस्य । एवं वैश्यजातस्य वैश्यस्य द्वौ एकश्शूद्रापुत्रस्य इति व्यवस्था । ननु च द्विजातीनां शूद्रापुत्रो नास्त्येव—तद्विवाहप्रतिषेधात् । सत्यम् । स्मृत्यर्थभ्रान्त्या तु प्रसक्तावयं विभाग इत्यभिप्रायः ॥ १२५ ॥

---

## सुबोधिनी

सङ्ख्यैकवचनाच्च वीप्सायामिति।अस्य पाणिनीयसूत्रस्यायमर्थः—सङ्ख्यावाचिनश्चैकवचनाच्च वीप्सायां द्योत्यायां शस्प्रत्ययो भवतीति। सङ्ख्यायां द्वौद्वौ ददाति द्विशो ददाति । एकवचनोदाहरणत्वेन प्रकृते दर्शयति—अधिकरणकारकादिति,—सप्तम्येकवचनादित्यर्थः।

## बालंभट्टी

पदस्यैव तदङ्गीकारात् । गङ्गायां घोष इति वन्न दोष इति भावः । बाहुल्यार्थादित्यस्याप्राप्तेराह—सङ्ख्यैकेति,—अस्य पाणिनीयसूत्रस्य सङ्ख्यावाचकादेकवचनान्ताच्च वीप्सायां शस्प्रत्ययः स्यादित्यर्थः । द्वौ द्वौ ददाति द्विशो ददातीति सङ्ख्योदाहरणम् । माषश इत्येकवचनोदाहरणम् । यद्यपि एकवचनशब्देन परिमाणशब्दा एव गृह्यन्त इति जयादित्येनोक्तम् ; तथाऽपि तदन्यस्यापि ग्रहणमिति वामनमतमेव युक्तम् । अत एव पदशः स्वरशोऽक्षरश इत्यादि सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति भावः । तदेतदभिप्रेत्य द्वितीयविषयतामत्राऽऽह—अधीति,—अधिकरणसप्तम्येकवचनान्तादित्यर्थः।एवं पदार्थानुक्त्वा वाक्यार्थमाह—अतश्चेति,—तादृशात्ततैः शसश्चेत्यर्थः । स्युरित्यस्यैव स्पष्टार्थं व्याख्या—भवेयुरिति । उक्तं विशदयति—एतदिति । एकैकश इति,—चिन्त्योऽयं प्रयोगः। एकश इति तु पाठ इति केचित् । वस्तुतस्तु सोऽपि साधुरित्यन्यत्र स्पष्टमिति बोध्यम् । तेनैव[3]

---

१. अ० ५. ४. ४३. । २. क. ख. ङ. च स्त्रीन् वैश्या० । ३ ब. ततः तत्र शासिचे० ।

Cole.: Ch. I, Sec. viii, §§ *2—4.

लभन्ते। वैश्यायां द्वौ द्वौ शूद्रायामेकमेकामिति। ** क्षत्रजाः क्षत्रियेणोत्पन्नाः—वर्णशः 5
इत्यनुवर्तते—यथाक्रमं त्रिद्व्येकभागाः[2]; क्षत्रियेण[3] क्षत्रियायामुत्पन्नाः प्रत्येकं त्रि-
स्त्रीन् भागान् लभन्ते; वैश्यायां द्वौ द्वौ; शूद्रायामेकमेकम्। ** विड्जाः वैश्येनो- 6
त्पन्नाः—अत्रापि वर्णश इत्यनुवर्तते—यथाक्रमं द्व्येकभागिनः। वैश्येन वैश्यायामुत्प-
न्नाः प्रत्येकं द्वौ द्वौ भागौ लभन्ते; शूद्रायामेकमेकम्। ** शूद्रस्यैकैव भार्येति भिन्न- 7
जातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः। ** यद्यपि चतुस्त्रिद्व्येकभागा इत्य- 8
विशेषेणोक्तं, तथाऽपि प्रतिग्रहप्राप्तभूव्यतिरिक्त[4]विषयमिदं द्रष्टव्यम्; यतः स्मरन्ति—
"न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्॥"
इति। ** प्रतिग्रहग्रहणात्क्रयादि[5]लब्धा[1] भूः क्षत्रियादिसुतानामपि भवत्येव, शूद्रापुत्रस्य 9

## सुबोधिनी

तत्पुत्राणां पूर्वोक्त एव विभाग इति,—तस्य शूद्रस्य पुत्राः शूद्रायामुत्पन्नास्तत्पुत्राः तेषां पूर्वो-
क्तो विभागः"विभागं चेत् पिता कुर्यात्"[6]इत्यादिना"विभजेरन् सुताःपित्रोरूर्ध्वम्"[7]इत्यादिना
चोक्त इत्यर्थः। प्रतिग्रहशब्दोपादानसामर्थ्यात् क्रयादिलब्धायां भुवि क्षत्रियादिसुताना-
मपि भागोऽस्त्येवेत्याह–प्रतिग्रहग्रहणादिति। किञ्च इतोऽपि कारणात् क्षत्रियादिसुतानां

## बालंभट्टी

ब्राह्मणेनैव। लभन्तइत्यस्याग्रे संबन्धः। अग्रे यथायोग्यं तदध्याहारः। तेनैवोत्पन्ना इत्यस्याग्रे
उभयत्राप्यनुषङ्गः। उत्तरार्धार्थमाह—क्षत्रजा इति। योग्यतयाऽऽह—त्रिद्व्येकेति।
अस्य वैशद्यमाह — क्षत्रियेणेति। विड्जा इति "द्वौ विशौ वैश्य-
मनुजौ"इत्यमरः। प्राग्वदाह—वैश्येनेति। तत्पुत्राणामिति—तस्य शूद्रस्य शूद्रायामुत्पन्नानां
पुत्राणाम्। पूर्वोक्तः—"विभागं चेत्पिता" इत्यादिना "विभजेरन् सुताः" इत्यादिना
चोक्त एव विभाग इत्यर्थः। विशेषमाह—यद्यपीति। भूः शालिक्षेत्रादिका। यथाचैतत्तथा
अनुपदमेवोक्तम्। बार्हस्पत्यमाह—न प्रेति। तत्राऽपि विशेषमाह—प्रतिग्रहेति,—
तद्ग्रहणसामर्थ्यादित्यर्थः। तत्र सुत इति जात्यभिप्रायं प्रत्येकाभिप्रायं वैकवचनमित्याह—
सुतानामपीति। एवं च तत्रापि तेषां विभागोऽस्तीति भावः। अत्र हेत्वन्तरमप्याह—शूद्रेति,—

१. ग. घ. त्रियोत्प०। २. क. भागिनः। ३. क णच। ४. क घ. क्तमिदं। ५. ख.
दिना। ६. व्य०११४.। ७.व्य० ११७.। ८.बृ० ना० २६९.।

Cole.- Ch. I, Sec. viii, §§ 4—9.

विशेषप्रतिषेधाच्च—"शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति।" इति। यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवेत्तदा शूद्रापुत्रस्य विशेषप्रतिषेधो नोपपद्यते।
10 ** यत्पुनः "ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्। यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥" इति, तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रदत्तं

## सुबोधिनी

क्रयादिलब्धभूभागोऽस्तीत्याह—शूद्रापुत्रस्येति। शूद्र्यां द्विजातिभिर्जात इति,—अत्र शूद्र्यामिति न शूद्रभार्यायाम् अपि तु स्वस्त्रियां शूद्रायामित्यर्थः—शूद्रभार्यात्वे तु तस्यां जातस्य कुण्डगोलकयोरन्यतरत्वेन भागानर्हत्वात्। अतः शूद्र्यामिति छान्दसम्। ननु भवतु शूद्रापुत्रस्य विशेषतो भूभागप्रतिषेधः; एतावता क्रयादिप्राप्तायां भुवि क्षत्रियादिसुतानां विभागप्राप्तिः कुत इत्यत आह—यदि क्रयादिप्राप्ता भूरिति। शूद्रापुत्रस्यैव शृङ्गग्राहिक(त ?)या निषेधात् क्षत्रियादिसुतानां भागोऽस्तीति गम्यत इत्यर्थः। ननु स्वल्पमेतदुच्यते शूद्रापुत्रस्य भूमेर्भागो नास्तीति; यतो वचनान्तरेणांशमात्रमेव निषिध्यते तस्येत्याशङ्क्य परिहरति—यत् पुनर्ब्राह्मणक्षत्रियविशामित्यादिना। जीवता

## बालंभट्टी

तस्य तद्भागस्य विशेषेण प्रतिषेधाच्चेत्यर्थः। तथा चाऽऽदिशब्देन वैश्य एवात्र न शूद्र इति भावः। तद्वचनं तदीयमेवेत्याह—शूद्र्यामिति,—अत्र शूद्री न शूद्रभार्या, तथा सति तस्यां जातस्य कुण्डगोलकयोरन्यतरत्वेन भागानर्हत्वेनासङ्गत्यापत्तेः। अपि द्विजाशूद्रकन्यकेतिवत्प्रयोगः। एतेन छान्दसः प्रयोग इत्यपास्तम्। द्विजातीत्युक्त्या शूद्रजातस्तु भागं स्वं लभत एवेति सिद्धम्। ननु भवतु तस्य तथा, तावताऽपि तेषां तत्र सा कुतोऽत आह—यदीति। शूद्रापुत्रस्यैव शृङ्गग्राहिकया निषेधात्तेषां तत्र भागोऽस्तीति गम्यत इत्यर्थः। शूद्रापुत्रस्यांशदानपरमूलस्य तदीयवचनान्तरविरोधं तदीयन्यूनताश्च परिहरति—यत्पुनरिति,—यत्त्वित्यर्थः।अस्येति शेषषष्ठी।अपिस्तज्जातीयस्मृत्यन्तरसमुच्चायकः। किमपि किंचिदपि। प्रदत्तं प्रसाददत्तं क्वचिदेवमेव पाठः।

---

१ क भूमौ। २. ग दायभाक्। ३. म० ९. १५५. । ३ थ. 'तु' नास्ति। ५ थ. द. कुतस्त्येत्य०। ६. ब. अपि तु। फ. द्विजातिस्त्रीशूद्रकन्याकेकयीतिवत्। ७. भ. तुतथा। ८. प. फ. ब. षा भा०। ९. ब. स्थत०।

स्यात्तद्विषयम् । यदा तु प्रसाददानं नास्ति, तदैकांशभागित्यविरुद्धम् ॥१२५॥

** सर्वविभागशेषं किञ्चिदुच्यते—

**अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।**
**तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२६ ॥**

** परस्परापहृतं समुदायद्रव्यं विभागकाले चाज्ञातं विभक्ते पितृधने यद्दृश्यते, तत्समैरंशैर्विभजेरन्नित्येवं स्थितिः शास्त्रमर्यादा । ** अत्र समैरंशैरिति वदता उद्धारविभागो निषिद्धः । विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति

असमांशभाक्त्वेऽपि तु—**अन्योन्यापहृतं द्रव्यं विभक्तैर्यत्र दृश्यते ।**

---

सुबोधिनी

पित्रा शूद्रापुत्राय य(त्) दि) किञ्चित् दत्तं स्यात्, तदा शूद्रापुत्रोऽशभाक् न भवतीत्यर्थः ॥ १२५ ॥

उद्धारविभागो निषिद्ध इति,—"ज्येष्ठं वा श्रेष्ठभागेन" इत्युक्तांशविभागो निषिद्ध इत्यर्थः। केचित् "अन्योन्यापहृतम्" इत्येतद्वचनं विभागार्हैः समुदायद्रव्यापहारे कृतेऽपि

बालंभट्टी

अत एवाग्रे तथैव वक्ष्यते। एवंच सर्वथा तदेवांशभाक् न भवतीति भावः । एतेनानूढशूद्रापुत्रविषयं तदिति मन्दोक्तमपास्तम् । तस्यापि प्रकरणादूढापुत्रविषयकत्वसंभवादन्यत्र प्रागुक्तरीत्या भागानर्हत्वाच्च दासस्थले तदभावस्य वक्ष्यमाणत्वाच्च । तदैकांशेति अत एव तत्र विशिष्य भूभागनिषेधोक्तिसाफल्यमिति भावः ॥ १२५ ॥

सङ्गतिमाह--सर्वेति।घञजपाः पुंसीत्यस्य प्रायिकत्वाच्छेषमित्युक्तिः।किंचित् पद्यात्मकम्। परस्परेति,—सर्वैरेवेत्यर्थः । स्वीयेस्वीये बाधकाभावात् सामान्योक्तिलभ्यमाह — समुदेति।विभक्ते इति--सति सप्तमी। तत्स्वारस्यादाह—विभागेति। यत्रेत्यस्य सर्वं विभागे इत्यर्थः । अत एव साकाङ्क्षत्वाच्छेषमाह— यदिति । पुनः अप्यर्थे पश्चादर्थे वा। ते इति पद्योक्तं बोध्यम् । स्थित्यर्थमाह—शास्त्रेति । अत्र वेति—अत्रापीत्यर्थः । अपिना पूर्वसमुच्चयः । अत्रेत्येवं पाठे पूर्वं यथा तथावास्तु अत्र तु सर्वथा निषिद्ध इत्यर्थः । वदता योगीश्वरेण। एवमग्रेऽपि। उद्धारेति,—"ज्येष्ठं वा श्रेष्ठ" इत्युक्त इत्यर्थः । केचित्तु

१ ख ग. अथ स० । २. क. च व्यवि० । ३ क ज न्निति स्थि० । ४ थ एतदादि 'तदा' इत्यन्तं नास्ति । ५. व्य० ११४. । ६ थ द. केचनान्यो० । ७ ब तदा सोंऽश० । ८. ब. एतदारभ्य 'इत्यर्थ.' इत्यन्तं नास्ति । ९. प. फ समुदितेति । १० भ. त्येव सर्व० ।

Cole.: Ch. I, Sec. viii, § 10. Sec. ix, 1—3.

4 दर्शितम् । ** एवं च वचनस्यार्थवत्वान्न समुदायद्रव्यापहार[1]दोषाभावपरत्वम् । **
5 ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहार[1]दोषो दर्शितो न कनीयसाम्—" यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः। स ज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥"[2]
6 इति वचनात् । ** नैतत् । यतः संभावितस्वातन्त्र्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं वदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपिकनीत्या सुतरां

तत्पुनस्तैस्समैरित्यादि ॥ १२६ ॥
स्थितिवचनं निर्विचिकित्सम् ॥ १२६ ॥

सुबोधिनी

तेषां दोषो नास्तीत्येत्यतत्परामिति व्याचक्षते। तदसदित्याह—एवं च वचनस्यार्थवत्त्वादिति। अयमभिप्रायः—पूर्वोक्तरीत्या श्रुतसमांशविभागविधानमात्रेणैव वाक्यस्य सार्थकत्वादश्रुतदोषाभावपरत्वं न कल्प्यम् । तत[3]ः समुदायद्रव्यापहारेऽपि दोषोऽ[4]स्तीति । नन्वस्तु दोषः स तु ज्येष्ठस्यैव न कनीयसां मनुना तथोक्तत्वादित्याशङ्कते — ननु मनुना ज्येष्ठस्यैवेति । विनिकुर्वीत तिरस्कुर्यात्—वञ्चयेदिति यावत् । दण्डापूपिकनीत्येति,—

बालंभट्टी

विभागार्हमवेद्रव्यापहारे कृतेऽपि ते[5]षां न दोष इत्येतद्वचनतात्पर्यमित्याहुः । तत् खण्डयति—एवमिति,—उक्तरीत्येत्यर्थः । उक्तरीत्या श्रुतसमांशविभागविधानादिमात्रेणैव वाक्यसाफल्येनाश्रुतदोषाभावपरत्वकल्पनस्यानौचित्येन समुदायद्रव्यापहारेऽपि तेषां दोषोऽस्त्येवेति भावः । नन्वस्तु दोषः, तथाऽपि स ज्येष्ठस्यैव नान्येषां —मनुना तथोक्तत्वादित्याह—ननु मनुनेति । एवेन अन्यव्यवच्छेदः । तदेव स्पष्टार्थमाह—न केति,—तद्भिन्नानामित्यर्थः । विनिकुर्वीत तिरस्कुर्यात्—वञ्चयेत् इति यावत् । न तावदेवेत्याह—अभागश्च इति । एवमग्रेऽपि । नियमनं दण्डः । बहुवचनेन देशान्तरगमनेऽपि तत्रत्यराजदण्डः सूचितः । वदता इत्यस्य मनुनेत्यत्रान्वयः वस्तुतस्तदभावादाह—सम्भेति,—बहुव्रीहिः ज्येष्ठत्वमेव तद्बीजम् । अत एवाऽऽह—पित्रिति तदुक्तं मनुनैव "पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः । पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥ यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः । अज्येष्ठवृत्तिर्यस्तु स्यात् स संपूज्यस्तु बन्धुवत् ॥"[6] इति । अपिः विरोधे। वदता मनुना। ज्येष्ठेति,— षष्ठीतत्पुरुषः । दण्डेति

---

१. ख. ग. घ. रे दो० । २.—९. २१३, । ३. थ. द. अतः । ४. थ. द. षो (नास्ति ?) इति । ५. प. फ. ब. 'तेषां' नास्ति । ६.—९. १०८, ११०. ।

Cole.: Ch. I, Sec. ix, §§ 3—6.

दोषो दर्शित एव । तथा चाविशेषेणैव दोषः श्रूयते—"यो वै भागिनं भागान्नुदते चयते[1]वैनं स, यदि चैनं न चयतेऽथ पुत्रमथ पौत्रं चयते" इति । ** यो भागिनं 7
भागार्हं भागान्नुदते भागादपाकरोति भागं तस्मै न प्रयच्छति, स भागान्नुन्न एनं नोत्तारं चयते नाशयति दोषिणं करोति ; यदि तं न नाशयति, तदा तस्य पुत्रं पौत्रं वा नाशयतीति।** ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्यापहारिणो दोषः श्रुतः । 8

## सुबोधिनि

अपूपानां समूह आपूपिकम् : "अचित्तहस्तिधेनोष्ठक्" इति[2] ठक् ; तथा चाऽमरः[3] "आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम्।" इति[4] आपूपिकं यस्मिन् दण्डे प्रोतं बद्धं वा, स दण्डो यदि चोरैरपहृतस्तदा आपूपिकमपि सुतरामपहृतमिति गम्यते;तद्वत् प्रकृतेऽपि स्वतन्त्रस्य पितृस्थानीयस्य ज्येष्ठस्य यदा समुदायद्रव्यापहारे दोषः[5], तदा सुतरामन्येषामिति।न केवलं न्यायतः किन्तु वाचनिकोऽपि दोषः श्रूयत इत्याह—तथा चाविशेषेणेत्यादिना । ननु समुदायद्रव्ये स्वस्यापि स्वत्वमस्तीत्यपहारदशायामपि स्वद्रव्यमित्येव गृह्यते; अतोऽपहर्तुर्दोषो नास्तीत्य-

## बालंभट्टी

दण्डापूपिकसंबान्धिन्यायेनेत्यर्थः।रीत्येति पाठान्तरम्।अपूपानां समूह आपूपिकम्"अचित्त"इति[2] ठक् । दण्डस्याऽऽपूपिकं दण्डापूपिकं; तथा च यस्मिन् दण्डे अपूपिकं प्रोत बद्धं वा, स दण्डो यदि चोरादिभिरपहृतस्तदाऽऽपूपिकमपि सुतरामपहृतं यथा तद्वदत्रापि ज्येष्ठस्य दोषे तेषां सुतरां स इत्यर्थः । तथा च ज्येष्ठादिपदमुपलक्षणमिति भावः । अत्रार्थे श्रुतिमपि मानत्वेनाऽऽह—तथा चेति। वै निश्चये । श्रुत्यर्थं प्रतिपादयन्नुक्तार्थं विशदमाह—यो भागिनमिति । गृहीतसर्वभागे तदसंभवादस्तीत्येतत्स्वारस्याच्चाऽऽह—भागार्हमिति। भागान्नुदते इत्यस्य व्याख्या—भागादिति। तस्य व्याख्या—भागमिति। भागिनमित्यस्य यमित्यादिरित्याशयेनाऽऽह—स चेति। चो व्युत्क्रमे वाक्यालंकारे इति भावः । स[6] इत्यन्तं द्वितीयं वाक्यम् । लक्ष्यार्थमाह— नाशेत्यादि । तृतीयवाक्यमाह— यदीति । स इत्यस्य चेनानुषङ्गः । आद्याथार्थमाह— तदेति । साकाङ्क्षत्वादाह —तस्येति । द्वितीयाथार्थमाह—चेति । तत तस्य तदभावं शङ्कते—

---

१. ग. च चैनम् । २. अ० ४. २. ४७. । ३. त. थाहाम० । ४. तृ० स० १५३.। । ५. थ. द. 'दोष' 'इत्यादि.' 'पिदोष' इत्यन्तं नास्ति । ६. प. ब. स इत्युक्तं ल० ।

Cole.: Ch. I, Sec. ix, §§ 6—8.

9 **अथ साधारणं द्रव्यमात्मनोऽपि स्वं भवतीति स्वत्वबुद्ध्या गृह्यमाणं न दोषमावहतीति
10 मतम् । ** तदसत् । स्वत्वबुद्ध्या[2] गृहीतेऽप्यवर्जनीयतया[3] परस्वमपि गृहीतमेवेति
11 निषेधानुप्रवेशाद्दोषमावहत्येव ।** यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमा-

सुबोधिनि

भिप्रायेणाऽऽशङ्कते—अथ साधारणं द्रव्यमिति । यथा स्वस्य स्वत्वं समुदायद्रव्ये, तथा भागार्हाणामन्येषामपि तत्र स्वत्वमस्तीत्यपहारदशायामन्यद्रव्यमपि सर्वात्मनाऽपहृतमेव स्यादिति "परस्वं न गृह्णीयात्" इति निषेधकशास्त्रानुप्रवेशादस्त्येव दोष इति परिहरति—
11 तदसदित्यादिना । *[अमुमेवार्थं द्रढयितुं षष्ठन्यायमुदाहरति—यथा मौद्गे चरौ विपन्ने

बालंभट्टी

अथेति । आवेति— जनयतात्यर्थः । समुदायद्रव्ये स्वस्यापि स्वत्वसत्त्वात् अपहारदशायामपि स्वद्रव्यमित्येव ग्रहणेनापहर्तुर्दोषो नेति भावः । वर्जेति,— परस्वत्वस्येत्यादिः। यथा तत्र स्वस्वत्वं तथाऽन्येषामपि तदस्त्येवेति तस्य वर्जनासंभवात् तद्दशायामन्यद्रव्यमपि सर्वथाऽपहृतमेवेति । निषेधाश्च बलीयांस इति न्यायेन "परस्वं न गृह्णीयात्" इति निषेधशास्त्रानुप्रवेशादस्त्येव दोष इत्यर्थः । अत्र दार्ढ्याय दृष्टान्तत्वेन षाष्ठन्यायमुपन्यसति—तथेति । षाष्ठे तृतीयपादषष्ठाधि-
11 करणसूत्रं "विप्रतिषिद्धं चाविशेषेण हि तच्छ्रुतेः"[4] इति । *[तत्र "अयज्ञिया वै माषाश्चणकाश्च कोद्रवाः"इति श्रूयते।अत्र संशयः-"मौद्गं चरुं निर्वपेत्"इति विहितमुद्गाभावे प्रतिनिधित्वेन माषा ग्राह्या न वेति । तत्र पूर्वपक्षः—व्रीह्यभावे नीवाराः इव तदभावे ते ग्राह्यास्तत्त्वेन जातिसादृश्याभावेऽप्यवयवसादृश्यात् ; यत उक्तनिषेधो माषादिरूपेण ग्रहणे प्रवर्तते, न तु मुद्गावयवोपादानेनावर्जनीयतया प्राप्तमाषाद्यवयवरूपेण; अतः प्रतिनिधित्वमेवेति। सिद्धान्तस्तु—माषादिजातीयस्य सर्वात्मना यज्ञसाधनत्वं तेन निरस्तम्–"अयज्ञिया माषाः"इति सामान्यश्रवणात्; अतो नान्तरीयका अपि माषावयवा वर्ज्या एव; तस्मात्प्रतिनिधित्वेन ते न ग्राह्या इति ।]* तदेतदभिप्रेत्य तत्र तावदधिकरणपूर्वपक्षं सङ्गृह्याऽऽह—मौद्ग इति, — विकारे "मुद्गादण्" इत्यण् । विपन्ने नष्टे पुनस्तद्दौर्लभ्ये इति शेषः ।

---

१ ग संभव० । २. क. बुद्ध्यानुगृहीतो० । ३. ख. ग. च. पि वर्ज० ।
४. अ० ४. ४. २५. ।

Cole.: Ch. I, Sec. ix, §§ 9—11.

णेषु "अयाज्ञिया वै माषाः" इति निषेधो न प्रविशति—मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिणोक्ते मुद्गावयवेषु गृह्यमाणेषु अवर्जनीयतया, माषावयवा अपि गृह्यन्त एवेति निषेधः प्रविशत्येव इति राद्धान्तिनोक्तम्[1]।

## सुबोधिनी

इत्यादिना ।]* षष्ठतृतीयपादाधिकरणं "प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः" इति[2]। *[" अयज्ञिया वै माषाश्चणकाः कोद्रवाः " इति श्रूयते । तत्र संशयः—" मौद्गं चरुं निर्वपेत्" इत्यस्ति ; तत्र मुद्गाभावे प्रतिनिधित्वेन माषा ग्राह्या न वेति । पूर्वपक्षस्तु—व्रीह्याद्यभावे नीवारा इव मुद्गाभावे माषाः प्रतिनिधेयाः । ननु " अयज्ञिया वै माषाः " इति निषेधान्न[3] प्रतिनिधेया माषा इति चेन्न । माषादिरूपेण हि तत्र निषेधो न तु मुद्गावयवोपादानेनावर्जनीयतया[4] प्राप्तमाषाद्यवयवादिरूपेण, अतः प्रतिनिधेया इति । राद्धान्तस्तु—माषादिजातीयस्य हि सर्वात्मना यज्ञसाधनत्वं निरस्तम् "अयज्ञिया वै माषाः" इत्यनेन साधारण्येन श्रुतेः; अतो नान्तरीयका अपि माषावयवा वर्ज्याः । तस्मात् प्रतिनिधित्वेन माषा न ग्राह्या इति।]* ग्रन्थयोजना त्वेवम्—अधिकरणस्थं पूर्वपक्षं सङ्गृह्य दर्शयति—यथा मौद्गे चराविति । अयमर्थः—मौद्गे चरौ नष्टे मुद्गाभावे मुद्गसदृशतयां माषेषु गृह्यमाणेषु "अयज्ञिया वै माषाश्चणकाः कोद्रवाः" इत्येतन्निषेधशास्त्रं न प्रविशति, निषेधो नास्ति—यतो माषेषु मुद्गावयवाः सन्ति, तत्रस्थितमुद्गावयवबुद्ध्यैव माषा गृह्यन्ते न स्वरूपेणेति। सिद्धान्तं सङ्गृह्य दर्शयति—मुद्गावयवेषु गृह्यमाणेषु अवर्जनीयतयेति। अयमाशयः—"अयज्ञिया वै माषाः"इत्यनेन सामान्येन माषजातिर्निषिध्यते । अतो मुद्गावयवबुद्ध्या गृह्यमाणेष्वपि माषेष्ववर्जनीयतया निषिद्धमाषजातीयाव-

## बालंभट्टी

मुद्गेति माषाद्यवयवानां तदवयवसादृश्येन तदवयवबुद्ध्यैव ग्रहणान्न स्वरूपेणेत्यर्थः । अथ सिद्धान्तमाह—मुद्गेति " अयज्ञियाः " इति सामान्येन माषजाति[5]निषेधात्तद्बुद्ध्या गृह्यमाणेष्वपि तेषु अवर्जनीयतया निषिद्धमाषजातीयावयवा अपि गृह्यन्त एवेति निषेधप्रसर एवेत्यर्थः । उक्तन्यायोऽत्रापीति दर्शयन् तन्मतखण्डनमुपसंहरति—

१. क. च. राद्धान्तेनो० । २. जै० ६. ३. २० । ३ थ द. धसंभवान्न । ४. थ. द. गाद्यवयवादा० । ५. प. फ. माषजातिप्रसर । ब. माषजातिनिषेधप्रसर ।

Cole.: Ch. I, Sec. ix, § 11.

12 ** तस्माद्वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येवेति स्थितम् ॥ १२६ ॥

1 ** द्व्यामुष्यायणस्य भागविशेषं दर्शयंस्तस्य स्वरूपमाह—

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १२७ ॥**

2 **"अपुत्रां गुर्वनुज्ञातः" इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परस्य

---

समविभागप्रतिपत्त्यर्थमौरसानां विभागधर्मः; तदभावे तु **अपुत्रेण परक्षेत्रे इत्यादि** ॥ १२७ ॥

---

## सुबोधिनी

यवा अपि गृह्यन्त एवेति निषेधशास्त्रप्रवेशोऽस्तीति । उक्तं न्यायं दार्ष्टान्तिकेऽप्यभिप्रायतो दर्शयन्नेकदेशिमतनिराकरणमुपसंहरति—तस्माद्वचनत इति ॥ १२६ ॥

## बालंबट्टी

तस्मादिति । वचनं — "यो वै" इत्यादि; न्यायः—षाष्ठः । एतेन परस्वत्वज्ञानपूर्वकं स्वत्वहेतुं विना स्वस्वत्वारोपकस्स्तेन इति लोकप्रसिद्धोऽर्थः । न च नेदं मम इदं परकीयमिति विवेकः—द्रव्यास्याविभक्तत्वात् । तथा चात्र साधारणधने तदसंभवादिदमयुक्तमिति प्राच्योक्तमपास्तम्—मन्वर्थाज्ञानात् । प्रच्छन्नं वेति कातीयस्तेनलक्षणे द्रव्ये परसंबन्धमात्रं विवक्षितमिति न तद्विरोधः । अन्योन्येतिवचनबलात्तथा इति तु न—तस्यान्यार्थत्वस्योक्तत्वात् । एतेन कातीये परशब्दात् स्वीयत्वव्यवच्छेदेनैव तत्स्वत्वापगम इत्यपि तदुक्तमपास्तम् ॥ १२६ ॥

यथापूर्वश्रुते सङ्गत्यभावादाह—द्व्यामुष्येति,—तथा च तस्य पूर्वभागापवादभूतभागविशेषोपयोगित्वमेव पूर्वसङ्गतिरिति भावः । धर्मतः, शास्त्रतः—अस्य शाब्दार्थं तावदाह—अपुत्रामिति,—"अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया । सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् । अनेन विधिना जातः क्षेत्रजोऽस्य भवेत् सुतः ॥" इति आचाराध्याये विवाहप्रकरणे मूलोक्तविधिनेत्यर्थः ।

---

१. ख. सिद्धम् । क. ङ. च. छ. दर्शितम् । २. आ. ६८. । ३. क. त्युक्त० । ४. ख. ग. परभा० । ५. द. इदं प्रतीकं नास्ति । ६. प. फ. यथाश्रुते । भ. यथापूर्वेश्रुते । ७. आ० ६८, ६९. ।

Cole. : Ch. I, Sec. ix, §§ 12 ; Sec. x, §§ 1—2.

भार्यायां गुरुनियोगेनोत्पादितः पुत्रः उभयोर्बीजिक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इति।** अस्यार्थः—यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति, स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च। ** यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रयतते, तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः। स च न नियमेन बीजिनो रिक्थहारी पिण्डदो वेति; यथोक्तं मनुना—"क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च॥" इति। 3 4

## सुबोधिनी

"अपुत्रेण परक्षेत्रे" इत्यस्य "उभयोरप्यसौ" इत्यस्य च प्रत्युदाहरणं दर्शयितुं तात्पर्यार्थमाह - इत्यस्यार्थ इत्यादिना। इति शब्द एवं शब्दार्थो वक्ष्यमाणाभिप्रायः। तदिदानीं प्रत्युदाहरणमाह—यदा तु नियुक्त इति। उक्तार्थे मनुवचनं प्रमाणयति—यथोक्तं

## वालंभट्टी

स्वमन्वाद्यनुरोधेनात्र विशेषोऽयम्। भार्यायां पाणिग्रहणयोग्यायाम्। साकाङ्क्षत्वादाह—गुर्विति। अपिनैष्फल्यं सूचयन्नाह—उभयोरिति। इत्यस्यार्थः इत्यस्य शाब्दोऽर्थः। नन्वेतावताऽपि द्व्यामुष्यायणपदानुक्तेः कथमस्य तत्त्वमित्याशंकायामपुत्रेणेत्यादिसूचितं तत्त्वमेव रिक्थहरणादौ निमित्तं नान्यदिति तत्सूचितं द्व्यामुष्यायणत्वमिति प्रतिपादयन् अपुत्रेणेत्यादेः प्रत्युदाहरणं च दर्शयिष्यन् तात्पर्यार्थमाह—यदाऽसाविति। तथा च " इत्यस्यार्थः" इत्यस्य मध्यमणिन्यायेनात्राऽप्यन्वय इति एवं वक्ष्यमाणोऽस्याभिप्रायार्थ इत्यर्थः। अपिः स्पष्टार्थः। एवमग्रेऽपि। पुत्रार्थे—पुत्रोत्पत्त्यर्थम्। स इति—यत इति शेषः।तस्यैव व्याख्या—द्व्यामुष्येति।अत इति शेषः। प्रत्युदाहरणमेवाऽऽह—यदा त्विति।अत्रापि विशेषमाह—स चेति,—अद्व्यामुष्यायणश्चेत्यर्थः। तदानीं पुत्रसत्त्वेतदभावेन तदभावे[3]ऽप्यनन्तरं तन्नाशादन्यस्याधिकारिणोऽभावात्तदा अयमेवाधिकारीति सूचयितुमाह—नियमेनेति। वा चार्थे। मूलानुक्तं विशेषं कथयितुमुदाहरणप्रत्युदाहरणयोर्मनुसंमतिमाह —यथोक्तमिति। तत्राऽऽद्ये तामाह—क्रियेति। यद्विशेषकथनार्थं मनूक्तिः, तस्य प्राधान्यं सूचयन् सप्रतीक-

१. ख. च. वर्तांति। २.—९. ५३.। ३. भ. भावेप्य (?) उदाहरण०।

Cole.: Ch. I, Sec. x, §§ 2—4.

5 ** क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्य-त्क्षेत्रं क्षेत्रस्वामिना बीजावपनार्थं बीजिने दीयते, तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य

6 बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः । ** तथा—"फलं त्वनभि-सन्धाय क्षेत्रिणां बीजिनां तथा। प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥" इति ।

## सुबोधिनी

मनुना क्रियाभ्युपगमादिति । पूर्वोदाहृतं मनुवचनं व्याचष्टे—अत्रोत्पन्नमपत्यमित्यादिना। अत्रोत्पन्नमपत्यमावयोरिति यदा प्रतिज्ञा नास्ति, तदा क्षेत्रिण एव तदपत्यं नोभयोरित्य-मुमंशं मनुवचनेन द्रढयति—तथा फलं त्वनभिसन्धायेति । क्षेत्रिणां बीजिनां वा मध्येऽ-न्यतमेनापि फलमनभिसन्धाय तथा तथेत्यनेन परक्षेत्रे यदपत्यमुत्पाद्यते इति

## बालंभट्टी

धारणमिदं व्याचष्टे—क्रियेति। एवमग्रेऽपि । अत्र क्रियापदविवक्षितं संवित्स्वरूपमाह—अत्रोत्पेति।अत्र,—क्षेत्रे । उत्पन्नम्—उत्पत्स्यमानम् । संवित्—प्रतिज्ञा। पञ्चम्यन्तार्थोऽयमि-त्याह—अङ्गीकरणादिति। क्षेत्रस्वामिनेति,—विद्यमानेऽपि तस्मिन् षण्डत्वाभिप्रायमिदम्। इदमपि स्वरीत्यैव अन्यथा त्विदमुपलक्षणमपि बोध्यम् । बीजार्थमित्यस्य व्याख्या—बीजावेति । अर्थादाह—बीजिने इति। यदस्तदाकाङ्क्षत्वाच्छेषेणाऽऽह—तस्मिन् क्षेत्रे इति। तस्येत्यस्यार्थमाह —उपन्नस्यापत्यस्येति। तत्र इहेत्यस्य शास्त्र इत्यर्थः । तत्र प्रयोगस्याऽऽ-र्षत्वात्तदनुरोधेन स्वयमपि तथैवाऽऽह—बीजीति। भागिनौ इत्यस्य यथाश्रुतार्थासंभवा दाह—स्वामिनाविति। द्वितीये तामाह—तथेति। तुः—उक्तवैलक्षण्ये व्युत्क्रमे च । निर्धारणे षष्ठीद्वयम् ; अत एव बहुवचनम् । उदाहरणान्तरविवक्षया तथेति,—अनेन तदर्थं दीयते यत्तत्र परक्षेत्रे यदपत्यमुत्पाद्यते इत्यस्याध्याहारः । तथा च क्षेत्रिणां बीजिनां च मध्ये अन्यतमेनाऽपि फलमनभिसन्धाय यत् क्षेत्रं तेन तदर्थं दीयते, तत्र च तेन यदपत्यमुत्पाद्यते, सोऽपत्यरूपोऽर्थः क्षेत्रिणामेव । तत्र हेतुः— "बीजाद्योनिर्बलीयसी" इति । तत्र हेतुः— प्रत्यक्षमिति, — तथा लोके दृश्यत इत्यर्थः । फलमत्र संविद्रूपमित्याह—

१.—९. ५२. । २. त. त्रमा० । ३. भ. 'अत्र' आरभ्य 'क्षितम्' इत्यन्तंनास्ति । ४. ब य तु यत् । ५. ब. वनीयसी।

** फलं त्वनभिसन्धायेति अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय 7
परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव; यतो बीजाद्योनिर्बलीयसी—
गवाश्वादिषु तथा दर्शनात्। **अत्रापि नियोगो वाग्दत्ताविषय एव। इतरस्य नियोगस्य 8

## सुबोधिनी

पूर्वोक्तमनुषज्यते सोऽपत्यरूपोऽर्थः क्षेत्रिणामेव। अत्रोदाहरणान्तरविवक्षया बहुवचनं बीजिनां क्षेत्रिणामिति। तत्र हेतुः "बीजाद्योनिर्बलीयसी" इति। प्रत्यक्षं प्रत्यक्षेण दृश्यत इत्यर्थः। एवं श्लोकयोजना। विशेषार्थस्तु निबन्ध एव स्पष्टः। इतरस्य नियोगस्येति—विवाहिताविषयनियोगस्येत्यर्थः। ननु "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।" इत्यादिकेन मनुवचनेन विधवानियोगस्य विहितत्वात् "नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।" इत्यादिकेन च तन्नियोगस्य निषिद्धत्वाच्च षोडशिग्रहणाग्रहणवन्नियोगविषये विधिनिषेधयोर्विकल्पोऽस्त्वित्याशङ्क्य परिहरति—

## बालंभट्टी

अत्रोत्पन्नमिति। तत्र तस्य हेतुत्वार्थमाह—यत इति। तत्र प्रत्यक्षमिति हेतुरिति सूचयन्नाह—गवेति। तदप्युक्तं मनुनैव—"ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम्॥ एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च। विहङ्गमहिषीणां च विज्ञेयः प्रसवं प्रति॥" इति। मेधातिथिस्तु "तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः। कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥" इति अविशेषेणोक्तस्य क्षेत्रिणां फलं न बीजिन इत्यस्य विशिष्टविषयत्वमाह। फलमिति,—तयोर्मिथो यत्र फलानभिसन्धानं तत्र क्षेत्रिणां प्रत्यक्षमनिश्चितं फलम्। प्रत्यक्षशब्देन निःसन्दिग्धतामाह— यतो बीजाद्योनिर्बलीयसीति। क्षेत्रमधिकमित्यर्थः। अनभिसन्धाने क्षेत्रिणः फलमुक्त्वा अभिसन्धाने किं बीजिनः उतोभयोरिति संशये उभयोरित्याह—क्रियेति। एवमेवैतदिति यो निश्चयः[10]संविल्लक्षणः, सा क्रिया तदङ्गीकरणाद्बीजार्थंबीजिकार्यफलानिष्पत्त्यर्थं यद्दीयते सामर्थ्याद्बीजिने इति गम्यते तस्येह द्वावपीत्याद्यर्थः इति व्याचख्यौ[11]। स्वमतमुक्त्वा प्राग्वदत्रापि आचार्यमतमाह-अत्रापीति। अपिना विवाहप्रकरणोक्तसमुच्चयः। इतरस्येति—विवाहिता विषयस्येत्यर्थः। तमे-

१. क. आवयोरस्त्वि०। २ क. ख. घ. सीति। ३. त. 'एवस्पष्टः' नास्ति। ४. त. त्वाद्वा(?)। ५. ल्पोऽस्तीत्या०। ६.—९. ५४, ५५.। ७. म० ९. ५१.। ८. ब. फलान्विति। ९. ब. मुक्तम्। १०. ब. सन्धिल०। ११. भ. चरव्यौ एवं मूलोक्तमर्थम् एवं स्वमत०।

Cole.: Ch. I, Sec. x, §§ 7—8.

मनुना निषिद्धत्वात् — "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥" इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति—"नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ अयं द्विजैर्हि विद्वाद्भिः पशु-

## बालंभट्टी

वाऽऽह—देवेत्यादिना साधव इतीत्यन्तेन। तत्राऽऽदौ तस्या नियोगमाह—देवरादिति,— तत्सकाशादित्यर्थः। सम्यक्--यथाशास्त्रम्। ईप्सिता पुत्ररूपप्राप्तव्या। क्षये सति अनेनाऽऽपदुक्ता। तस्य नियोगमाह—विधेति। वाग्यतः—मौनी। निशि गच्छन्,-सन्नेकमित्याद्यर्थः। अत्र मेधातिथिः—सन्तानशब्देन पुत्रः-कार्यक्षमत्वात्; अनेनाऽऽपदुक्ता ; अत एव--"ज्येष्ठो यवीयसो भार्यां यवीयान् वाऽग्रजस्त्रियम्। पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥" इत्यनेन मिथो भार्यागमने ज्येष्ठानुजयोः पातित्यमनापदि सत्यपि नियोगे पूर्वमुक्तम्। नियुक्तया अपत्योत्पादनेऽनुज्ञातया गुरुभिः; तथा स्मृत्यन्तरोक्तेः। सम्यगित्यनेन वक्ष्यमाणघृताभ्यक्तादिनियमानुवादः। गन्तव्येति,— विधौ कृत्यः। ईप्सिताशब्देन कार्यक्षमतामाह। तथा च दुहितर्यन्धबधिरादौ च जाते पुनर्नियोगोऽनुष्ठेयः। विधवाग्रहणमतन्त्रं क्लीबादिरूपे पत्यौ जीवत्यपि एष एव विधिः; यतो वक्ष्यति—"नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥" इति। निशीति,—प्रीत्याद्यालोकननिवृत्त्यर्थम्— वचनान्तरेणैव दिवोपगमप्रतिषेधात्। पूर्वविहितनियोगप्रतिषेधमाह —नान्यास्मिन्निति पतिभिन्ने इत्यर्थः। नोद्वाहिकेति,—पूर्वशेषोऽयमर्थवादः। विवाहकर्मणि तत्र तत्र एवं मन्त्रप्रयोगः-"अर्यमणं नु देवं कन्या अग्निमयक्षत""या पत्या जरदष्टिः" "मया पत्या प्रजावती" इति। नैवं श्रूयते मया अत्र नियुज्यसे ततो जनयेति तादृशमन्त्रग्रहणेन मन्त्रार्थवादा अपि नैवं विधाः सन्तीति दर्शितम्। तदेवाऽऽह—न विवेति। अयमिति,—अयमप्यर्थवाद एव नियोगप्रतिषेधशेषः। अविद्वद्भिः—सम्यक् शास्त्रमन्त्रलिङ्गाद्यनाभिज्ञैः। अयं पशु-

---

१.—९. ५९, ६०. । २ ग. घ. ज. एवं । ३ म० ९.—५८. । ४. म० ९.—६३ ।

Cole.; Ch. 1, Sec. x, § 8.

धर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥ ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थे[1] गर्हन्ते तं हि साधवः॥"[2]इति ।

*न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम्—नियोक्तॄणां निन्दाश्रवणात् ; 9

## सुबोधिनी

न च विहितप्रतिषिद्धत्वादिति ।*[समयोर्हि विकल्पः अत्र च"अन्यस्मिन् विनियुञ्जाना धर्मं हन्युः सनातनम्।"[3]इति नियोक्तृनिन्दाश्रवणान्निषेधे च तदभावान्न समता विधिनिषेधयोः; अतो न विकल्पः।]+षोडशिग्रहणाग्रहणयोस्तु उभयत्र निन्दाश्रवणात् समत्वेन ग्रहणाग्रहणयोर्विकल्प इत्यभिप्रायेणाऽऽह—नियोक्तॄणां निन्दाश्रवणादिति । ननु "तामनेन विधानेन निजो विन्देत देवरः । "[4] इति विवाहस्य विहितत्वेन सा भार्या स देवर एव पतिरिति दाम्पत्यसमु- 9

## बालंभट्टी

धर्मः[5] विगर्हितः अत्यन्तगर्हितः।मनुष्याणामपि प्रोक्तः-प्रवर्तितः। सोऽपीदानीन्तनो न अनादिरित्याह—वेने राज्यं प्रशासतीति,—राष्ट्रं पालयति सतीत्यर्थः[6] । द्विजैर्हि विद्वद्भिरिति पाठे विगर्हितोऽपि विद्वद्भिः मनुष्याणां प्रोक्तः पशूनामेष धर्मो—मातृस्त्रीगमनं नाम ; स च प्रवृत्तो वेनस्य राज्ये इत्यर्थः । तदेवाऽऽह-- स महीमिति । भुञ्जन्—पालयन् । ननु राजर्षिप्रवरस्याखिलमहीपालकस्य कथं तत्करणमत आह—कामोपेति, — कामेनोपहता चेतना यस्येत्यर्थः । स्पष्टार्थम् अर्थवादमाह—तत इति । मेधातिथिमतं खण्डयति—न चेति । अयं हि तदाशयः—नान्यस्मिन्निति निषेधो मृतभर्तृकाया एव न क्लीबादिजीवत्पतिकायाः; तेन भिन्नविषयत्वमिति न—सन्तानविच्छेदस्य निमित्तस्य तत्र श्रवणेन तस्योभयत्र तुल्यत्वात् घृताक्तादिनियमस्यापि तत्रा[7]ऽऽपत्तेश्च;तथा च विधिवन्निषेधेऽपि विधवाग्रहणस्यातन्त्रत्वेन निषेधस्याविशिष्टत्वेन "देवराद्वा"[8]इत्यादिविधेः"नान्यस्मिन्"[9] इति निषेधस्य चैकविषयत्वलाभेन षोडशिग्रहणाग्रहणवद्विकल्पः । अयमपि अपत्योत्पादनविधेर्नित्यत्वे बोध्य इति । नियोक्तॄणामिति— अयमाशयः—"तुल्यार्थास्तु विकल्पेरन् " इत्युक्तेः समयोर्विकल्पः; अत्र तु "अन्यस्मिन् हि नियुञ्जानाः" इति तेषां निन्दाश्रवणान्निषेधे च तदभावान्न समता विधिनिषेधयोः। किं च " पुत्रेणलोकान् जयति " इत्येवमादिफलः

१. क. त्यार्थे तं विगर्हन्ति साधवः । २.—९. ६४—६८. । ३. म० ९ ६४. । ४. म० ९. ६९. । ५. ब. धर्मस्सन्नत्यन्त० । ६. प. फ ब. त्यर्थः तदेवाऽऽह । ७. प. ब. तत्र भावापत्तेश्च । ८. म० ९. ५९. । ९. म० ९. १३७. ।

Cole.: Ch. I, Sec. x, §§ 8—9.

स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात् ; संयमस्य प्रशस्तत्वाच्च ; यथा[2] मनुरेव—
" कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामाऽपि गृह्णीयात्पत्यौ प्रेते परस्य
तु॥" इति[3] जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य " आसीतामरणात् क्षान्ता निय-
ता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि
कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्तरि सा-
ध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥ अपत्य-
लोभाद्या तु स्त्री भर्तारमतिवर्तते।सेह निन्दामवाप्नोति परलोकाच्च हीयते॥"इति[4] पुत्रा-
र्थमपि पुरुषान्तराश्रयणं निषेधति ; तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् ।
10 ** एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह—"यस्या

बालंभट्टी

अपत्योत्पादनविधिस्तथा चासत्यपत्ये तत्कार्यस्यौर्ध्वदेहिकादेरुपकारस्याभावात् सत्यपत्ये भावाद्भिन्नफलत्वम् ; अतो न विकल्पः। षोडशिग्रहणादौ[5] तूभयत्र तन्निन्दाया अश्रवणादङ्गभूय-स्त्वेन फलभूयस्त्वेऽपि प्रधानकार्यसिद्धावविशेषाच्च समत्वेन तयोर्विकल्पः इति। तत्र नि-न्दायाः प्रागुक्तत्वेन संयमप्राशस्त्ये मनुसंमतिमाह—यथा मनुश्चेति,–निषेधतीत्यत्रान्वयः। अत एवाऽऽह इत्यपपाठः। द्विविधमन्याश्रयणं–जीवनार्थं स्वर्गफलपुत्रार्थं च;तत्राऽऽद्य आह—कामामिति,—यथेच्छमित्यर्थः। क्षपयेत्—कृशीकुर्यात्[6]। पुष्पेति,--अबहुप्रकृतित्वादेकवत्[7] न। शुभैः इत्यनेन निषिद्धनिरासः। नामापीति,--आश्रयणादिकन्तु दूरापास्तमेवेति भावः। द्वितीये आह—आसीतेति,—आङ् मर्यादायाम् अनेन नैष्ठिकव्रतमुक्तम्। क्षान्ता—क्षमावती। नियता—संयता। एकपत्नीनाम्—एकपतिकानाम् अरुन्धत्यादीनाम्। अनुत्तमं— सर्वोत्कृष्टम्। नैष्ठिकत्वादेव दृष्टान्तं वक्तुं वृत्तमाह—अनेकेति।कौमारेति,--बाल्यादारभ्य तद्व्रतचारिणामित्यर्थः। अत एव तत् दृष्टान्तेन द्रढयति—मृत इति। व्यवेति—विना मध्ये विच्छेदाभावः सूचितः। स्वर्गमिति—सूर्यमिति पाठान्तरम्। अर्चिरादि-मार्गप्रदर्शकम्। एवं संयमस्य प्राशस्त्यमुक्त्वा तद्दोषमाह—अपत्येति। भर्तारं—मृतं जीवन्तं च। इह—भूलोके। तत्खण्डनमुपसंहरति—तस्मादिति। एवम्—उक्तप्रकारेण। धर्म्य इति–धर्मादनपेत इत्यर्थः। अन्यथा तत्कथनस्य निर्विषयत्वापत्तेरिति भावः। आहेति, — मनुरेवेति भावः। अत्र सर्वत्र वर्तमानत्वं स्वव्यवस्थाकालापेक्षया

१. क. बहुशो दो० । घ. बहुदोषत्वश्र०। २. ख. ग. घ. ज. यथाऽऽह। अत्र व्याख्यानात् 'मनुश्च' इति पाठोऽवगम्यते। ३ —५. १५७. । ४ —५. १५८.—१६१. । ५ प. फ. दौ उभयनि०। ६. ब. कृशं कु० । ७. प. फ. ब. ०द्धकृत० ।

Cole.: Ch. I, Sec. x, §§ 9—10.

म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।मिथो भजेताऽऽप्रसवात्सकृत्सकृदृतावृतौ॥"
इति ।** यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव वचनाद- 1
वगम्यते । तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् ।
यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृताभ्यङ्गवाङ्नियमादिना
शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रहस्यागर्भग्रहणात् प्रत्यृत्वेकवारं गच्छेत्।
** अय च विवाहो वाचनिको घृताभ्यङ्गादिनियमवत्, नियुक्ताभिगमनाङ्गमिति न 12

सुबोधिनि

त्पत्तेस्तदुत्पन्नः पुत्रस्तयोरौरस एव स्यादित्याशङ्क्याऽऽह—अयं च विवाहो वाचनिक इत्या-
दिना ।*[अयमभिसन्धिः—नियुक्ताभिगमने यथा घृताभ्यङ्गादिकमङ्गं विधीयते,तथाऽयं विवा- 12

बालंभट्टी

बोध्यम् । वाचा सत्ये कृते वाग्दाने निर्वृत्ते। एकेन वाचा दत्ताऽन्येन तथैव प्रतिगृहीतेति
यावत् । ननु एवमपि पाणिग्रहणाभावात्कथं पतित्वमाह—यस्मै इति,—यमुद्दिश्येत्यर्थः ।
तत्र पित्रादिभिरिति भावः । प्रतिग्रहमिति—पाणिग्रहणमित्यर्थः । क्वचित्तथैव पाठः ।
वचनात्—प्रतिपदपठितमनुवाक्यात् । अस्मादेव गम्यत इति पाठान्तरम् । "स्याला-
स्स्युः भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ।" इत्यमरादाह—ज्येष्ठः कनिष्ठो वेति । निज
इत्यस्य व्याख्या—सोदर इति । एवमग्रेऽपि । पूर्वश्लोकोक्तमनेन विधानेनेति । यद्यपि
मेधातिथिना वक्ष्यमाणेन विधानेनेत्येवं तत्रैव योजितम्, तथाऽपि तथा तत्रानुपयोगा-
दाह—अनेनेति,—गच्छेदित्यत्रान्वयोऽस्य। तस्या अपि विशेषान्तरमाह—शुक्लेति। व्रतं—
सङ्कल्पः;स च त्रिविध इत्याह—मनोवागिति। शुचित्वमाह—संयतामिति। मिथो इत्यो-
दन्तमव्ययम् । तदर्थमाह—रहसीति। आप्रसवादित्यस्य निषेधेन यथाश्रुतानुपपत्तेरर्थमाह
—आगर्भेति।ऋतावृताविति,—पृथक्पृथगिति अपपाठः।सकृत् सकृत् इत्यस्य व्याख्या—
एकैकवारमिति। भजेत इत्यस्यार्थः—गच्छेदिति । ननु "तामनेन" इत्यनेन विवाहस्य
विहितत्वात् सा तद्भार्या सच तत्पतिरिति दाम्पत्यसंपत्त्या तदुत्पन्नस्तयोरेवौरसः स्यान्न
पूर्वोक्तोऽत आह—अयं चेति,—केवलं परार्थः न स्वार्थः। वाचनिकः—यथापूर्वं तन्नियम-
भिन्नो विवाहसंस्कार इत्यर्थः। *[अत एवाऽऽह—घृतेति,—नियुक्ताभिगमने यथा घृताभ्य- 12

१. म०— ९. ६९, ७०.। २. क. ङ. च. पृथक्पृथगेक०।३. क. नियमान्नियुक्ताभिगमना गच्छति तद्देव०। ४. त. त्ताभ्यनुज्ञाने। द. त्ताभिगमे । ५. थ. द. ङ्गत्वेन वि०। ६. प. ब. यद्दिने नि०। ७. प. भ. पति०। ८. द्वि० म०—२९२.। ९. म० ९. ६९. । १०. ब. योरौरस एव ।

13 देवरस्य भार्यात्वमापादयति । **अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति, न देवरस्य ; संविदा तूभयोरपि ॥ १२७ ॥

---

## सुबोधिनी

13 होऽपि नियुक्ताभिगमनेऽङ्गं न स्वतन्त्रतया प्रधानकर्म येन दाम्पत्यप्रसङ्गः।]* *[अत एव नोभयोरौरसः पुत्रः; अपि तु क्षेत्रज एव क्षेत्रस्वामिनः "अत्रोत्पन्नमपत्यमावयोः" इति प्रतिज्ञाया अभावे ; सत्यां तु[1] प्रतिज्ञायामुभयोरपि पुत्र इति]* ॥ १२७ ॥

## बालंभट्टी

ङ्गादिकमङ्गत्वेन विधीयते, तथाऽयं विवाहोऽपि नियुक्ताभिगमने अङ्गं न स्वातन्त्र्येण
12 प्रधानकर्म येन दांपत्यप्रसङ्गः*[पुनर्भूत्वादूढाया भार्यात्वासंभवात् ;]* *[अत एव तदग्रे मनुः "न दत्त्वा कस्यचित् कन्यां पुनर्दद्यात् विचक्षणः । दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति
13 पुरुषानृतम्॥"[2]इति।पुरुषो मनुष्यः तस्य हरणे यत्पापं तत्तस्य भवतीत्यर्थः।*[तथा च दानाभावे कथं भार्यात्वमतो न स औरसः पुत्रः, अपि तु क्षेत्रज एव क्षेत्र स्वामिनः सम्विदभावे, तत्सत्त्वे तूभयोरपि।[3]]*तत्रापि बीजिनः औरससमो नौरसः इत्यग्रे स्फुटीभविष्यतीति भावः।तदाह— अत इति । आगर्भग्रहणादित्युक्तेः सकृद्गमनोपदेशाच्च यस्मै वाग्दत्ता तदपत्यं भवतीति कुल्लूकभट्टः । इत्थमाचार्यमतं प्रतिपादितम्—अत्रापीत्यादिना उभयोरपीत्यन्तेन । यद्यप्यत्र तत्त्वे नोक्तं किन्तु सामान्येन ; तथाऽप्याचाराध्याये स्वयं स्पष्टं तथैवोक्तमिति तथैव बोध्यम्॥ वस्तुतस्तु नेदं युक्तम्। "अद्भिश्च वाचा दत्तायां म्रियेताऽऽदौ वरो यदि । नच तौ दंपती स्याताम् कुमारी पितुरेव सा ॥"[4]इति वासिष्ठविरोधापत्तेः।"न च मन्त्रोपनीता स्यात्"इति तृतियपादे पाठान्तरं"कुमारी पुनरेव सा"इतिचतुर्थपादे। मन्त्रोपनीता—पाणिग्रहणजन्यमन्त्रसंस्कारवती। किं च वाग्दानोत्तरं वरे देशान्तरं गतेऽपि हि विशेषो नारदेनोक्तः स विरुध्येत—"प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् । त्रीन् ऋतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम्॥ स्त्रीपुंसयोस्तु संबद्धाद्वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः ॥ तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।"[5]इति। परिगृह्य वाचा दत्तां स्वीकृत्य। संवत्सरे[6] सतीति पाठान्तरम्। स्त्रीपुंसयोः संसर्गात् प्राक त्रितयं क्रियते वरणं,पाणिग्रहणं,सप्तपदीप्रक्रमश्चेति। तत्र वरणं नाम वरस्य संप्रदानत्वाय कन्यादात्रा प्रार्थनं तदेव च वाग्दानम् ।एवं स्थिते तयोः पाणिग्रहणसप्तपदीप्रक्रमयोः पूर्वभावि यद्वरणं, तदनियतमनियामकमित्यर्थः—तयोरेव भार्यात्वोत्पादकत्वादिति भावः ।

१. त. 'तु' नास्ति । २.—९. ७१. । ३. प. ब भावे इत्थमा० । ४. (?)। ५.—१२. २४, २, ३. । ६. भ. 'संव०' आरभ्य 'न्तरम्' इत्यन्तं नास्ति ।

Cole.: Ch. I, Sec. x, §§ 12—13.

## बालंभट्टी

अत्र मनुरनुपदमेव स्फुटीभविष्यति । वरणस्यानियामकत्वमपि पूर्ववरस्य दोषे स त्येवेति[1] । इदं च माधवीये स्पष्टम्। एतदेकवाक्यतयैव माधवेन—"वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा । रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत्पतिम् ॥"[2] इति कात्यायनोक्तं प्रणश्येत् देशान्तरं गच्छेत्—अन्यथा प्रतीक्षावैयर्थ्यापत्तेः इत्येवं व्याख्यातम् । वरमिति पाठान्तरम्[3] । इत्थं एतदेकवाक्यतयोक्तनारदीये ऋतुपदेन रजोदर्शनमेव न तु कालः; एवं च "संवत्सरे सति"इति पाठान्तरमयुक्तमेवेति बोध्यम्[4]। मन्त्रोपनीता--पाणिग्रहणमन्त्रजन्यसंस्कारवती । तथा च पाणिग्रहणादिकं विना वाग्दानमिवाऽद्भिरपि दानं न भार्यात्वोत्पादकमित्यर्थः । कुमारी पितुः । अन्यस्मै यादृशसंबन्धेन पित्रा विवाह्यते तादृक्पितृसंबन्धवती ; तथा च न तस्या वैधव्यम् । एतत्परमेव यमवाक्यं पूर्वाध्याये उक्तम्[5] । तथाच पराशरोऽपि—"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥"[6] इति। वाग्दानानन्तरं पाणिग्रहणात् प्राक् पतौ—संभावितोत्पत्तिकपतित्वे पूर्वस्मिन्वरे नष्टे सति लक्षणया दूरदेशगमनेनाऽपरिज्ञातवृत्तान्ते सतीत्यर्थः।एवं दुष्टे पूर्ववरे वाग्दत्ताऽपि वरान्तराय देयेत्यपि सिद्धम्। एवं च वाग्दत्ता,मनोदत्ता, अग्निपरिगता,सप्तमं पदं नीता,भुक्ता,गृहीतगर्भा, प्रसूता चेति सप्तविधा पुनर्भूः; तां गृहीत्वा"न प्रजा न धर्मं विन्देत्"इति बौधायनोक्त.वाग्दत्तामनोदत्तयोर्निषेधः पूर्ववरस्य निर्दोषत्वे सति बोध्यः; अत एव नारदः—" दत्तां न्यायेन यः कन्यां वरमन्यं ददाति ताम् । अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥"[7] इति तत्रैव दण्डं विधत्ते। प्रदानं स्वामित्वहेतुर्न तु वाग्दानं; तथा च मनुः—"मङ्गलार्थं स्वस्त्ययनं यज्ञस्तासां प्रजापतेः। प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारकम्[9] ॥ पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥"[10] इति। स्वस्त्ययनं कुशलेन कालातिवाहनहेतुत्वात् कनकधारणादि,"स्वस्ति भवन्तो ब्रुवन्तु" इत्यादि च यत्;यश्च प्रजापतिदेवताको वैवाहिको होमस्तत्सर्वम् मङ्गलार्थं[11] अभिमतार्थसिद्धिर्मङ्गलं तदर्थम्[12] निष्ठा भार्यात्वसमाप्तिरूपा[13]। प्रतिगृह्य वाग्दानेन गते वरे ऋतुत्रयप्रतीक्षणादिकं मुख्यप्रागुक्तकालादूर्ध्वमपि दत्ताया अदीयमानत्वविषयकमेव—"गम्यं त्वभावे दातॄणाम्"[14] इत्याद्येकवाक्यत्वात्; तस्माद्वाग्दानस्थले उक्त एव प्रकारभेदः। "अपुत्रो गुर्वनुज्ञातः"[15] इति "अपुत्रेण परक्षेत्रे" इति च मूलं विवाहिताविषयमेव ; तथैव च व्याख्यातं व्याख्यात्रा ; मनूक्तनियोगोऽप्येतद्विषय एव ; अत एव तत्र विधवापदोक्तिस्वारस्यम्। "नान्यस्मिन्"इति निषेधस्तु देवरमपि-

१. ब. वेतीति । २...... । ३. ब. न्तरमयुक्त० । ४ प. फ. ब. बोध्यम् । कुमा० । ५. प. ब. क्तं तादृशं तथा । ६.—प्रा० १. २८.। ७...। ८ भ इदं वाक्यं नास्ति । ९.—५. १५२.। १०—८. १२७. । ११. प. फ. र्थं या अ० । १२ भ. र्थः प्रदानं स्वामित्वहेतुर्नतु वाग्दानं तादृशदीयमानत्वविषयमेव गम्यं । १३. ब. र्यात्वप्राप्तिरूपा । १४. आ० ६४.। १५. आ० ६८. ।

बालंभट्टी

[1]ण्डसगोत्रान्यविषयकः — क्रमोक्त्या स्वरसतस्तथैव प्रतीतेः;एतस्यैव पोषकं"नोद्वाहिकेषु" इति प्रागुक्तानियोगान्य[2]सामान्यनियोगाद्यभावबोधकम् । एक पुत्रमित्याद्युक्तपोषकमेव अयमिति । अत एव पशुधर्म इत्युक्त[3]म्; स च वारं वारं नियोजनादिरूपः; तदेव द्रढयति— तत इति — सामान्येनोक्तः। नियमानादरेण पुनः पुनस्तं[4]दर्थे नियोजयतीत्यर्थः । अत एव व्यभिचारदोषश्रवणस्य संयमप्राशस्त्यस्य चोपपत्तिरिति न तद्विरोधः। "यस्या म्रियेत" इति तु देवरसत्त्वेऽन्यस्मै न देया;किन्तु तस्मै एव देयेत्येवं परम्।अत एव"यथाविधि"इति पद्यं सर्वं सफलम् । पुनरुपनयने विशेषवदत्र पुनर्विवाहे न विशेष इति यथाविधीत्युक्तम्। अधिगम्येत्यनेन दांपत्यमुक्तम् । शुक्लेत्यादिना तस्यामदुष्टत्वम्। भजेतेत्यने[5]नं रमणाद्युक्तम् । अत एवाऽऽप्रसवादि[6]त्युक्तिर्वीप्सा द्वयं च; अन्यथा तस्य सामान्यसिद्धत्वादेव वीप्सानर्थक्यं स्पष्टमेव । एवं च प्रधान एवायं विवाहो नाङ्गमत एवानेन विधानेन विन्देतेत्युक्तम् । देवर इति पतिरिति च सूत्रशाटकवद्भाविसंज्ञया प्रागुक्तकात्यायनीये पतिमितिवत् । एवं च कुल्लूकभट्टोक्तमेव युक्तम् । अत एव शुल्कदमरणे मनुः—"कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः। देवराय प्रदातव्या यदि कन्याऽनुमन्यते॥" इ[7]ति। अ[8]नेन च तस्मै दानं स्पष्टमेवोक्तम् । अत्र यदि कन्यकेत्यनेन तथा तदनुमतौ देवराय प्रदेया, तदन्यानुमतौ तदन्यस्मै देया ; विवाहमात्राननुमतौ तु कस्मा अपि न देयेति तथा नैष्ठिकव्रतमेव कर्तव्यमिति सूचितम् । शुल्कदातुर्देशान्तरगतौ तु कात्यायनः—"प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा। धार्या सा वर्षमेकं तु नेयान्यस्मै विधानतः॥ अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् । अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छतः ॥" इ[8]ति । अ[9]त्र धार्येत्यनेन अधार्यत्वे ततः पूर्वमपि देयेति सूचितम् । बहुभिर्निर्दोषैर्वरणे कृते विशेषमाह स एव—" अनेकेभ्योऽपि दत्तायामनूढायां तु यत्र वै । परागमश्च सर्वेषां ल[10]भेताऽऽद्यवरस्तुताम् ॥ पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः। अथाऽऽगच्छेत्समूढायां दत्तं पू[11]र्ववरो हरेत्॥" [12]इति । वरो विवाहार्थं उपस्थितः। तेन च यत् शुल्कं दत्तं तदेव लभेतेत्यर्थः । " तत्र वै । पुरागमश्च सर्वेषां लभते तदिमां सुताम् । " इति पाठान्तरम् । अन्यस्मै दत्तायां कन्यायां पूर्ववरोप्यायाति, तथा अनूढां तां लभते ; ऊढायान्तु स्वदत्तं द्रव्यमेव लभते । न तु कन्यामित्यपि सिद्धम् । अत एव तस्माद्विज्ञानेश्वरीयमूलार्थप्रतिपाद[13]नमात्रमेव युक्तमत एव न स्वपूर्वविरोधः । अत्रापि प्रागवत्तथा वाच्ये तदनुक्तिः—प्राक्तथोक्त[14]त्वात् । उक्तनिष्कर्षाकथनबीजत्वस्य

१. भ. ण्डान्य० । २. ब. गापत्यसा० । भ. गान्यदासा० । ३ प. ब. क्तं वारं० । ४. प. ब. दर्थे सत्त्वेऽन्य० । ५. ब. न यावज्जीवं र० । ६.—९. ९७. । ७. प फ. ब. इदं वाक्यं नास्ति । ८. (?) । ९. प. फ. ब. इदं वाक्यं नास्ति । १०. ब. लभते तद्वर० । ११. ब. वैव०। १२. (?) । १३. प. ब. नामूलार्थमेव । १४. भ. क्तनिष्कर्षत्वात् ।

Cole. : Ch. I, Sec. x, § 13.

**समानासमानजातीयानां[1] पुत्राणां विभागक्लृप्तिरुक्ता । अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यन् तेषां स्वरूपं तावदाह—   1

**औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।**
**क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १२८ ॥**

**गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः[2] स्मृतः।**
**कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १२९ ॥**

ननु च ब्राह्मणस्य नियोगप्रतिषेधादनारभ्योऽयं; क्षत्रियाद्यर्थं तर्हि भविष्यति । न च ब्राह्मणस्य नियोगप्रतिषेधः । किं तर्हि ब्राह्मण्यादि तेनान्योत्पादितो ब्राह्मणस्य न स्यात् । न तु क्षत्रियादिकायां ब्राह्मणस्यानुत्पादकत्वम् । अतो विरुद्ध एवायमौरसाभावे कल्पः । लक्षण औरसः पुत्र उच्यते—**औरसो धर्मपत्नीज इत्यादि ॥ १२८॥**

या वा ब्राह्मणादिविवाहसंस्कृता धर्मपत्नी, तस्यां स्वयमुत्पादितः पुत्र औरसः। तत्समत्ववचनं क्षेत्रजादिभ्योऽधिकत्वज्ञापनार्थम् । पुत्रिकास्वरूपं स्मृत्यन्तरादवगन्तव्यम् । क्षेत्रजस्तु क्षेत्रे पत्न्यां सगोत्रेणान्येन वा नियोगोत्पादितः ॥ १२८ ॥

नियोगाभावेऽपि **गृहे प्रच्छन्न उत्पन्न इत्यादि ॥ १२९ ॥**

इमौ तु मातृजातीयौ जनकापरिज्ञानात् विज्ञेयौ ॥ १२९ ॥

## बालंभट्टी

"देवराच्च सुतोत्पत्तिः" इति कलिवर्ज्येषु गणनादनास्थारूपमेव; "उद्वाहिताऽपि सा कन्या-न चेत् संप्राप्तमैथुना। पुनः संस्कारमर्हन्ती यथा कन्या तथैव सा॥" इति[3] नारदीयमप्यूह्यम् । "ऊढायाः पुनरुद्वाहः" इति कलिनिषिद्धमेव । न च कलिनिषिद्धस्यापि युगान्तरीयधर्मस्यैव "नष्टे मृते" इत्यादि पाराशरं प्रतिपादकमस्त्विति वाच्यं—"कलावनुष्ठेयान् धर्मानेव वक्ष्यामि" इति प्रतिज्ञाय तद्ग्रन्थप्रणयनात् ; अत एव तु भगवता योगीश्वरेणाऽत्राऽऽचाराध्याये च संक्षेपेणैव उक्तम् । न तु मनुवद्विस्तृततयेति दिगिति बोध्यम् ॥ १२७॥

प्रसङ्ग[4]सङ्गतिमाह–समानेति। तेषां तेषां चेत्यर्थः।क्लृप्तः—कल्पना। मुख्याश्च गौणाश्च इत्यादिसमासः। व्यवस्थां—नियमं बहूनां समवधाने एवमेवेत्येवंरूपम् । स्वरूपमिति

---

१. क तीयपु० । २ वि० तोमतः । ३.(?) । भ. अस्मिन् श्लोके पादत्रयं नास्ति । ४. भ. 'प्रसङ्ग' नास्ति ।

Cole.: Ch. I, Sec. xi, § 1.

अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः[1] ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १३०॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे भिन्नः[2] सहोढजः ॥ १३१ ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।

---

एवमेव च—अक्षतायां क्षतायामित्यादि ॥ १३० ॥

मृते भर्तर्यक्षतयोन्यां असंस्कृतायां जातः पौनर्भवः क्षतयोन्यां वा; यथोक्तम्—"अन्यौश्च-रित्वा तस्यैव कुटुंम्बमाविशति" इति। पितृभ्यां पित्रा मात्रा वातदनुज्ञया दत्तो दत्तः; तथा च वसिष्ठः—"न तु स्त्री पुत्रं दद्यात् प्रतिगृण्हीयाद्वा अन्यत्रानुज्ञानात् भर्तुः" इति[3]। धर्मेण मातापितृभ्यां दत्तोक्तः ॥ १३० ॥

क्रीतस्तु ताभ्यां विक्रीतः इत्यादि ॥ १३१ ॥

क्रीतस्तु ताभ्यामधिकृताभ्यां मातापितृभ्यां मौल्येन विक्रीतः क्रेतुः क्रीताख्यः पुत्रः। तुशब्दः दत्तकन्यायानुकर्षणेन मातुरस्वातंत्र्यप्रतिपयत्त्यर्थः; स्वयं तु मातापितृविहीनत्वे पुत्रत्वेनाङ्गीकृतः कृत्रिमः। दत्तात्मा त्वेवं लक्षण एव। स्वयं दत्तः स्वयमेव दत्त आत्मा येन स तथोक्तः। एतेन दत्तकादयः स्मृत्यन्तरानुसारात् सदृशा विज्ञेयाः। सहोढजस्तु गर्भे विन्नः गर्भस्थे यस्मिन् मातुरुद्वाहः, स च वोढुः पुत्रो मातृजातियः प्रत्येतव्यः॥ १३१ ॥
मातापितृभ्यामेव कथं चित् उत्सृष्टो गृह्यते यस्तु इत्यादि ॥ १३१/ ॥
अपविद्धसंज्ञक इत्यर्थः ॥ १३१- ॥

---

१. ग तथा। २ वि० विन्नः। ३.—१५.५.।

Cole.: Ch. 1, Sec. xi, § 1.

** उरसो जात औरसः पुत्रः। स च धर्मपत्नीजः—सवर्णा धर्मविवाहोढा 2
धर्मपत्नी–तस्यां जात औरसः पुत्रो मुख्यः। ** तत्समः पुत्रिकासुतः तत्सम औरस- 3

## बालंभट्टी

जातावेकवचनं स्वरूपाणीत्यर्थः । क्रमेणेति शेषः। अत एव वक्ष्यति—अनुक्रम्येति। इदमुपलक्षणं लक्षणानामपि। अत्रौरस इति लक्ष्यं धर्मेति लक्षणम्। आद्यमपि योगरूढम्। तत्र यद्यपि उरसि जात इति योगः शास्त्रीयः स्यात्, तथाऽपि "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे।" इति श्रुत्यनुरोधेन फलितार्थमाह—उरसो जात इति। यद्यपि यो धर्मपत्नीजः, स औरस इत्याद्युद्देश्यविधेयभावः, तथाऽपि योगार्थेन तस्य ज्ञातत्वात्तेन रूपेणोद्दिश्य रूढ्यर्थविधानमित्याह—स च धर्मपत्नीज इति। यद्यपि मूले नोक्तं तथाऽपि "सवर्णायां संस्कृतायाम्" इति बोधायनमात्रोक्तमाह—सवर्णेति। ननु नासौ मूलाक्षरार्थः। किं च "स्वक्षेत्रे संस्कृतायाम्" इत्येव मनुविष्णुवसिष्ठदेवलादिभिरुक्तमिति सवर्णेत्युपलक्षणमेवैकत्रेत्याशयेन सर्वाभिमतमूलार्थमाह—धर्मेति। *[धर्मेत्यनेन यस्य येऽधर्मविवाहस्तदूढानिरासः; 2 तेन प्रतिलोमजानां न तत्त्वम्। एतदर्थमेव धर्मपदं मूले। तथा च धर्मपत्नी द्विजानां द्विजैव; शूद्रस्य तु मुख्यपत्न्यभावेऽपि तत्तुल्या परिणीता। तस्यां जात इति,—स्वस्मादिति शेषः। अत एव विष्णुना—"स्वक्षेत्रे संस्कृतायां स्वयमुत्पादितः प्रथमः" इत्युक्तम्। मनुनाऽपि—"स्वक्षेत्रे संस्कृतायां हि स्वयमुत्पादयेत्तु यम्। तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकम्॥" इत्युक्तम्। तदर्थमेव धर्मपदम्। तेन प्रतिलोमजानां न तत्त्वम्। तथा च पत्नीत्वं मुख्यमविवक्षितमिति। शूद्राऽपि तादृशी द्विजानाम्। अत एवं तज्जस्यौरसत्वं वक्ष्यते—"शूद्रापुत्रस्त्वौरसोऽपि" इति भावः।]* अवतरणोक्तमुक्तमुख्यत्वं प्रतिपादयति—औरसः पुत्रो मुख्य इति। तथा च तद्वत् आसुरादिविवाहोढसवर्णापुत्रः; अनुलोमेन विवाहितक्षत्रादिस्त्रीषु विप्रादुत्पन्नो मूर्द्धावसिक्तोऽम्बष्ठो निषादापरपर्यायः पारशवश्च; वैश्यादिस्त्रियो राज्ञ उत्पन्नो माहिष्योग्रौ च; शूद्रायां वैश्यादुत्पन्नः करणश्च इति एतेऽप्यौरसाः एव। अत एव वक्ष्यति—"मूर्धावसिक्तादीनामप्यौरसेष्वेवान्तर्भावात्" इतीति बोध्यम्। अग्रिमांशं सप्रतीकधारणं व्याचष्टे—तत्सम इति,—इदं लक्ष्यमग्रिमं

---

१. क. घ. ज. धर्म्यं०। २ प. ब. पि अधिजातस्ते तव योगशास्त्रीयशब्दस्तथा०। ३. भ. त्याद्येवोद्दे०। ४. ब. जात०। ५. प. फ. ब. सः तथा च। ६.—१५. २.। ७.—९. १६६.। ८. भ. क्तं तथा च। ९. प. फ. व स्वौर०। १० भ. दापर्या०। ११. प. ब. सा औरसे०। १२. प. ब. क्ष्यमलक्ष०।

Cole.: Ch. I, Sec. xi, §§ 2—3,

समः। पुत्रिकायाः सुतः पुत्रिकासुतः। अत एवौरससमः; यथाऽऽह वासिष्ठः—"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति॥" इति[1]। अथवा पुत्रिकैव सुतः पुत्रिकासुतः, सोऽप्यौरससम एव पित्रवयवानामल्पत्वात् मात्रवयवानां बाहुल्याच्च; यथाऽऽह वासिष्ठः—"तृतीयः[3] पुत्रिकैव" इति[2]।तृती-

## सुबोधिनी

3 अत एवौरससम इति,—यत *[औरस्याः पुत्रिकायाः सुतः। पुत्रिकासमत्वेन न साक्षादौरसत्वं व्यवहितत्वादित्यर्थः।]*ननु पुत्रिकैव सुतः पुत्रिकासुत इत्यस्मिन् व्याख्याने"तत्समः पुत्रिकासुतः" इत्येतत् विरुद्ध्यते व्यवहितत्वाभावात् तस्या इत्याशङ्क्याऽऽह—सोऽप्यौरससम इत्यादिना। अयमभिसन्धिः—पित्रवयवानां दुहितरि विरलत्वादवयवबाहुल्याभावेन व्यवहितत्वमिति। तृतीयः पुत्रिकैवेति,—वसिष्ठेन तृतीयत्वेन पुत्रिका परिगणिता; न याज्ञवल्क्येन[6]। ननु द्व्यामुष्यायणो बीजिनः किमौरस उत तत्समादिष्वन्यतम इत्याशङ्क्याऽऽह—

## बालंभट्टी

लक्षणम्। एवमग्रे सर्वत्रोभयं बोध्यम्। एतद्व्याख्याने बीजमाह—अत एवेति, —यत औरस्याः पुत्रिकायाः। इदं च दायग्रहणे न पिण्डदाने। इदमपि संवित्सत्त्वे एव नान्यथेति ध्वनयन्नाह—यथाऽऽहेति। संवित्करणे बीजमाह—अभ्रातृकामिति। "अकृता वा कृता वा" इति मनुरप्यत्र बोध्यः। एतेन द्वितीयसाधकत्वेन तदुक्तिः केषांचित् अपास्ता।
3 *[अयं मातामहस्यैव। तथा संविदा तु बीजिनोऽपि; अत एव यमः—"कुर्यात् मातामहश्राद्धं नियमात् पुत्रिकासुतः। उभयोरर्थसम्बद्धः स कुर्यादुभयोरपि॥" इति। तथाचाऽयमपि द्व्यामुष्यायणः संविदंशे।]* तत्त्वं तु—"अरोगिणीं भ्रातृमतीम्" इत्यत्रोक्तं वसिष्ठानुरोधेन[8]। कर्मधारयस्य ततो लघुत्वाच्चाऽऽह—अथ वेति। ननु अत्र मते तत्सम इति विरुद्धमव्यवहितत्वादत आह—सोऽप्यौरसेति पित्रवयवानां तस्यामल्पत्वात्तदवयवबाहुल्याभावेन व्यवहितत्वात्तत्त्वमिति भावः[11]। अत्र सम इत्युक्त्याऽस्यापि कलिवर्ज्यत्वेनेति स्फुटमग्रे। तमेवाऽऽह —यथाऽऽहेति।तद्व्याचष्टे—तृतीयः पुत्र इति। वसिष्ठेन तृतीयत्वेन पुत्रिका परिगणिता; न मूलकृतेति ज्ञेयम्। ननु द्व्यामुष्यायणः प्रागुक्तबीजिनः किमौरस उत तत्समाद्यन्यतमः

१.—१७. १७. । क च. ति । अथ० । २.—१७. १५. ।। ३. क. ख. ग. घ ङ. ज. द्वितीयः। ४. त. व पुत्रः इ० । ५. त. म एवस्यादित्या० । ६. त. ल्क्यवचने। ७.—९. प. १३६। ८. आ. ५३.।९ प. विशिष्टानु। १०. प. स्यालपत्वादैक्वचनबा० ब. स्यालपत्वात्त०। ११ प. फ. ब. वःतमेवा० ।

Cole.; Ch, I, Sec. xi, § 3,

यः पुत्रः पुत्रिकैवेत्यर्थः । ** द्व्यामुष्यायणस्तु जनकस्यौरसादपकृष्टः— अन्यक्षेत्रो- 4
त्पन्नत्वात् ।** "क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ।" इतरेण सापिण्डेन देवरेण 5
वोत्पन्नः पुत्रः क्षेत्रजः ॥ १२८ ॥

** गूढजः पुत्रो भर्तृगृहे प्रच्छन्न उत्पन्नो हीनाधिकजातीयपुरुषजत्वपरिहा- 6
रेण पुरुषविशेषजत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यः । ** कानीन- 7

## सुबोधिनी

द्व्यामुष्यायणस्त्विति—औरसाविशिष्ट औरसम इत्यर्थः।"क्षेत्रजः क्षेत्रजातस्तु" इत्यादि-
मूलवचनांशं व्याख्यातुमुपादत्ते—क्षेत्रजः क्षेत्रजातस्त्विति ॥१२८ ॥

## बालंभट्टी

अत आह—द्व्यामुष्येति । औरसादपकृष्ट इति,—*[औरससम इत्यर्थः।]* औरसापेति 4
पाठान्तरम् । औरसविशिष्ट इति पाठेऽप्येवम् । तत्र हेतुमाह— अन्येति । एतेन
व्यवहितत्वाभावात् कथं तत्त्वमित्ययास्तम् । प्रागवदाह— क्षेत्रज इति । सगोत्रेणेति
सवर्णेनेत्यादिः,—सर्वत्र । इतरेणेति द्विधा व्याचष्टे—सपिण्डेनेति । मूलस्थ एव वेत्याह—
वोत्पन्न इति,— विधवायामपुत्रायां गुर्वनुज्ञानेति मूलोक्तविधिना नियोगधर्मेणेति शेषः ।
"यस्या म्रियेत" इत्युक्तेरिति भावः । पुत्रजननासमर्थस्य जीवतोऽपि पत्युर्नियोगे तत्क्षेत्रे
सवर्णात्तादृशाज्जातश्चेत्यपि बोध्यम् । अतएवात्र साधारणमुक्तम् । तथा च मनुः—" यस्त-
ल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य च। स्वधर्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः॥"[5] इति
अयं च क्षेत्रिण एव "अनेन विधिना जातः" [6]इत्युक्तेः। बीजिनोऽपि पुत्रेच्छायां तस्याऽपि—
" अपुत्रेण परक्षेत्रे " इति मूलोक्तेः ॥ १२८ ॥

उत्पन्न इति,—[7]अनिश्चितपुरुषविशेषात् सवर्णादिति भावः। तदेवाऽऽह—हीनेत्यादि ।
सर्वमेकं वाक्यम् । अत्र तन्निश्चयाभावो न तस्याः,किन्त्वन्येऽषामेव। एवं तन्निश्चयस्तद्द्वारा-तया
तत्स्वरूपस्य ज्ञातत्वात् । यत्र तु बलाद्दहसि निशि तमोवृतायां पुरुषान्तरसंभोगात् साऽपि
वर्णविशेषं न जानाति, तत्र स गूढजनाममात्रधारी ; न प्रोक्तगूढजवत् प्रशस्त इति मदन-
पारिजातकृत् ; स त्याज्य एवेत्यन्ये ; अयमपि क्षेत्रिण एव ; तथा च मनुः—" उत्पद्यते गृहे
यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ " इति ।

१. ग. कन्यैव । २. ङ. च. छ. ०साविशिष्टः । ३. ख. ग. ङ. च. छ. व्यम् । ४. प.
ब. सगोत्रान्यसपिण्डेनेत्यर्थः मूल० । ५.—९. १६७. । ६. आ० ९९. । ७. प. ब. निश्चि० ।
८. प. ब. षां तन्नि० । ९.—९. १७०. ।

Cole.: Ch. 1, Sec. xi, §§ 3—7.

स्तु कन्यकायामुत्पन्नः पूर्ववत्सवर्णात्स मातामहस्य पुत्रः । यद्यनूढा सा भवेत्तथा पितृगृह एव संस्थिता; अथोढा तदा वोढुरेव पुत्रः; यथाऽऽह मनुः—"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥" इति[1] ॥ १२९ ॥

## सुबोधिनि

तथापितृगृह एव संस्थितेति विवाहात् प्राक् पुत्र उत्पन्ने तथा अविवाहितैव पितृवेश्मनि[2] स्थिता सा कन्यका तस्याः पुत्रो मातामहस्येत्यर्थः । अनूढा चेत् कन्यका, तदा कानीनो मातामहसुतः, ऊढा चेद्वोढुरित्युक्तं, तत्रोभयत्र मनुवचनं प्रमाणयति—यथाऽऽह मनुः। पितृवेश्मनीति अस्यार्थः— पितृवेश्मनि कन्यारहोव्यभिचारेण य पुत्रं जनयेत् , तं कन्यासमुद्भवं नाम्ना कानीनं वदेत् ; स वोढुर्भवतीति। अत्र वोढुरित्युपादानात् विवाहिता चेत् तदा वोढुः, न चेन्मातामहस्येति गम्यते ॥ १२९॥

## बालंभट्टी

7 पूर्ववादिति — पूर्वो यथा सवर्णजस्तद्वदयमपि सवर्णः सवर्णज इत्यर्थः। *[कन्यकायामित्यस्याविवाहितायामितिमात्रं नार्थः— तत्रापि पुरुषासंबन्धे तत्प्रयोगादर्शनात्[3] ; किन्तु अमन्त्रतवत्संस्कारपूर्वकक्षतयोन्यामित्यर्थः।]*तत्त्वमेव हि तत्प्रवृत्तिनिमित्तमित्यन्यत्र स्पष्टमग्रे वक्ष्यते च । तदेतत् ध्वनयन् विकल्पमाह —यद्यनूढेति । मध्यमणिन्यायेनाऽग्रेऽपि अन्वयसूचनार्थं उभयसाधारणं निमित्तान्तरं भेदेनाऽऽह —तथेति,— चार्थेऽयम् । तत्रैव संस्थिता चेत्यर्थः। अथोढेति,—तत्रैव स्थिता चेत्यर्थः।तथा च विवाहात्प्रागुत्पन्नस्तत्र मातामहस्य, तदुत्तरमुत्पन्नस्तत्र वोढुरिति सिद्धम् । अत्रोभयत्र मनुसंमतिमाह — यथाऽऽह मनुरिति। पितृगृहे स्थिता कन्याऽक्षतयोनि· सुता रहोव्यभिचारेण यं पुत्रं जनयेत्, कन्यासमुद्भवं तं तु नाम्ना कानीनं वदेत् ; स वोढुर्भवतीत्यर्थः। अत्र वोढुरित्युपादानाद्विवाहिता चेत्तदा वोढुर्नोचेन्मातामहस्येति गम्यते। अत एव वासिष्ठः"कानीनः पञ्चमः""या पितृगृहेऽसंस्कृता कामादुत्पादयेत् स कानीनो मातामहस्य पुत्रो भवति" इति । "अप्रत्ता दुहिता यस्य पुत्रं विन्देत तल्पजा । पुत्री मातामहस्तेन दद्यात् पिण्डं हरेत् धनम् ॥" इति[4] च । *[अत्रापि एकस्यैवापुत्रत्वे । तस्यैवम् ; उभयोरपि तत्त्वे उभयोरपीति बोध्यम् ॥ १२९ ॥ ]*

---

१.—९. १७२. । २. थ. द. नि यदि स्थिता सा कन्या त० । ३. भ. एतदारभ्य 'वक्ष्यते च' इत्यन्तं नास्ति। ४.—१७. २१, २२, २३. ।

Cole.: Ch. I, Sec. xi, §§ 7.

** पौनर्भवस्तु पुत्रोऽक्षतायां क्षतायां वा पुनर्भ्वां सवर्णादुत्पन्नः । ** मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्मै दीयते, स तस्य दत्तकः पुत्रः । यथाऽऽह मनुः— 9

---

बालंबट्टी

स्वरीत्यैवाऽऽह—पुत्रोऽक्षतायामिति,—पत्या अभुक्तायां भुक्तायां वा जीवता पत्या त्यक्तायां विधवायां वेत्यर्थः। तथा च विष्णुः—"या तु मत्या परित्यक्ता विधवा स्वेच्छया-ऽथवा । उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥ " इति । अयं बीजिन एव—परित्यागेन मरणेन च भर्तुः क्षेत्रे स्वत्वाभावात्;नियोगस्याभावात्;स्वेच्छाग्रहणाच्च। मूलंक्रमेणैवाऽऽह—मात्रेति । अस्याः पत्यसान्निध्ये दानेऽधिकारः । तच्च द्विविधम्; तत्राऽऽद्ये आह — भर्त्रनुज्ञायां प्रोषिते इति,—तथैवेत्यर्थः । सन्निहितेऽनधिकारिणि वेत्यपि बोध्यम् । द्वितीये आह—प्रोषिते वा भर्तरीति,—तथा चात्र स्वातन्त्र्यम् ; तथा च वसिष्ठः—"शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः " इति । मौलं पक्षान्तरमाह— पित्रा वेति | अनयोश्चायं विशेषः—उभयोर्जीवने अस्यापि पत्न्यनुमत्यैव दातृत्वम्; अत्यन्तापदि तु कथञ्चिदपि तदनुमत्यलाभे स्वातन्त्र्यमपि । यद्यपि मूले एतावदेवोक्तम् ; तथाऽपि " दद्याताम्" इति मन्वनुरोधेन कैमुतिकन्यायेन च लब्धमर्थमाह —उभाभ्यामिति | पुत्रस्य सवर्णत्वे प्रतिग्रहीतुरपि तत्त्वमर्थसिद्धमेवेत्याह—सवर्णायेति । सवर्णा य इति पाठान्तरम् । यस्मै इति,—योऽत्यन्तदुर्गत्या भरणासामर्थ्येन विधिपूर्वकमिति शेषः।सः--प्रतिग्रहीतृसवर्णः।तस्येति—प्रतिग्रहीतुरेवेत्यर्थः। अयमद्व्यामुष्यायणो द्व्यामुष्यायणोऽप्ययमस्तीत्यन्यत्र स्पष्टम्।तत्र मानं मनुमाह—यथाऽऽहेति । अत्र वाद्विवचनयोः स्वारस्यादध्याहारेणाऽर्थत्रयलाभः; तथा च भर्तरि प्रोषितादौ तदनुमत्यैव मृते वाऽऽपदि केवलमातुरधिकारो दाने ; तथा मातरि मृतायामुन्मादादिदोषदुष्टायां वा तदननुमत्या; पितृगृहस्थितायां वा तदनुमत्यैवाऽऽपदि केवलपितुरधिकारः । तत्रान्यथा उभयोरपि सहैवेति बोध्यम् ; तथा च वसिष्ठः—"न स्त्री पुत्रं दद्यात् प्रतिगृह्णी-

---

१. ? । २. ब. मौल० । ३. १५. १.। ४. प फ. ब. अयमद्व्यामुष्यायणोऽप्यय०—१५. १.

Cole.: Ch. I, Sec. xi, §§ 8—9.

"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं
10 प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः॥" इति।** आपद्ग्रहणादनापदि न देयः। दातुरयं
11 प्रतिषेधः। ** तथा एकपुत्रो न देयः—** "न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा"

---

सुबोधिनी

सदृशं प्रीतिसंयुक्तमिति,—सदृशं सवर्णमित्यर्थः। दातुरयं प्रतिषेध इति, —न प्रतिहीतुरित्यर्थः। पूर्वोक्तं पुत्रीकरणप्रकारं क्रीतकृत्रिमादिष्वप्यतिदिशति—

वालंभट्टी

याद्वाऽन्यत्र भर्तुरनुज्ञानात्" इति। स्त्रीग्रहणात् पत्युः पूर्वोक्त एव विषये स्वातन्त्र्यं द्योत्यते नतु सर्वदा—उपक्रमविरोधात्। विशेषणे निषेधे सङ्क्रमादान इव प्रतिग्रहेऽपि स्त्रिया अधिकारः। होमस्तु न भवति। शौनकोऽपि—"वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च।" इति। इदञ्च सधवाविधवोभयसाधारणमिति स्पष्टमेव। एतेनात्र चशब्दः पठितुं युक्तो वा नवेत्यादि मेधातिथ्युक्तमपास्तम्। अद्भिरिति,—वसिष्ठोक्तविध्युपलक्षणम्। सदृशं—प्रतिगृहीतृसवर्णम्। एतेन "तत्त्वं न जातितः, किन्तु कुलानुरूपैर्गुणैः; तथा च क्षत्रियादिरपि ब्राह्मणस्य दत्तको युज्यते" इति मेधातिथ्युक्तमुपास्तम्। सवर्णसन्देशपठितस्याऽपि तत्त्वस्यैवौचित्यात्; सजातीयेष्विति मूलोक्तेश्च। प्रीतीति,—लोभभयद्वेषादिनिरासार्थम्। इदञ्च देयपुत्रविशेषणम्—"विक्रयञ्चैव दानञ्च न देयास्स्युरनिच्छवः।" इत्युक्तेः। दत्रिम इति,—"क्त्रेर्मम्नित्यम्" इति साधुः। आपदीत्यस्य दुर्भिक्षादावित्यर्थः। यत्तु तस्य प्रतिग्रहीतुरपुत्रत्व इत्यर्थः; तथा च सपुत्रत्वे तस्यैव दोषः—"अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिस्सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः॥" इत्यादिस्मरणादिति, तन्न। तथा सत्त्वेऽपि तदापत्तेर्ग्रहणस्यात्रोपस्थापकाभावात्। तदेतत् ध्वनयन् तल्लब्धमर्थमाह — अनापदीति। न देय इति,—इति गम्यत इति शेषः। तत एवाऽऽह—दातुरिति,—अनापदीत्यादिः। न प्रतिग्रहीतुरित्यर्थः। तथाच तत्र दाने तस्यैव दोषः; नान्यस्येति भावः। इत एव सङ्गतेर्विशेषमाह—तथेति।*[न देय इति,
II –नापि प्रतिग्राह्य इति शेषः। तथाच तथाकरणे उभयोर्दोष इति भावः।]*वा चार्थे। *["स
II हि सन्तानाय पूर्वेषाम्" इति तच्छेषः।]*शौनकोऽपि—"नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन।

---

१. ९.—१६८। २. त. प्रतिबन्ध इ०। ३.—१५. ५.। ४. प. फ. ब. तेन। ५. फ. सदृशप०। ६. ?। ७. फ. आप०। ८. प. 'इति' नास्ति। ९. फ. च तथा करणे।

Cole.: Ch. I, Sec. xi, §§ 9—11.

इति वसिष्ठस्मरणात्। ** तथाऽनेकपुत्रसद्भावेऽपि ज्येष्ठो न देयः—"ज्येष्ठे न जातमात्रेण पुत्री भवति मानवः।" इति तस्यैव पुत्रकार्यकरणे मुख्यत्वात्। ** पुत्रप्रतिग्रहप्रकारश्च "पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनमध्ये व्याहृतिभिर्हुत्व अदूर- 12 13

---

## बालंभट्टी

बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥" इति । अत्र नैकेति निषेधविधिः; ततोऽर्थलब्धार्थानुवादकमुत्तरार्धम्, न तु सोऽपि विधिः—तथासत्यापद्यपि यथाकथञ्चित्स्वनिर्वाहेण तददाने दोषापत्तेः। प्रयत्नत इत्युक्त्याऽस्याऽवश्यकत्वलाभेन नित्याविधित्वे निमित्तफलयोरनपेक्षयाऽऽपदाद्यनपेक्षत्वेन तत्राऽपि तदकरणे दोषापत्तेश्च । एतेनैकेत्येव सिद्धे बहुपुत्रेणेत्याद्युक्त्या द्विपुत्रस्य तद्दाने नाधिकार इति लब्धमित्यपास्तम् । उक्तयुक्तेः एकपुत्रस्य तद्दाने वसिष्ठोक्तस्य हेतोः"स हि"इत्यादेस्तत्राभावाच्च।तस्मात्तदेकवाक्यतयाऽपि तथैव।अत एव बहुशब्दोऽनेकपर एव । प्रयत्नत इत्यपि वसिष्ठोक्तपरमेवेति बोध्यम् । तदेतत् ध्वनयन् विशेषान्तरमाह—तथाऽनेकपुत्रेति,—अन्यथा बहुपुत्रेत्युक्तं स्यात्। तथाच वासिष्ठे एकम्पुत्रमित्युपलक्षणम् । मनुमाह—ज्येष्ठेन । अस्य यथाश्रुतार्थो न विवक्षितः—अन्यविरोधापत्तेः ; अत आह—इति तस्यैवेति,—अनेनेत्यर्थः । मुख्यत्वात्—मुख्यत्वप्रतिपादनात्। तथा च परलोकहानिरेवेति भावः । अत एव स्मृत्यन्तरमपि—"न ज्येष्ठं पुत्रं दद्यात्" इति । अद्भिरित्यनेन सूचितमाह—पुत्रं प्रतीति । निवेशनस्य स्वगृहस्य। सन्देहे चोत्पन्ने दूरे शूद्रमिव स्थापयेत्। "विज्ञायते ह्येकेन बहून् ततस्त्रायते"इति तच्छेषः।सति सम्भवे बन्धुसन्निकृष्टं भ्रातृपुत्रादिकं तदभावे—अदूरबान्धवम्,—सन्निहितदेशवृत्तिपित्रादिकं ज्ञातकुलशीलम् अन्यमपि।परीक्षितस्यापि कथञ्चित् ब्राह्मण्यादिसन्देहे तु उत्पन्ने यावत्तन्निवृत्तिस्तावत् दूरे स्थापयेत् तेन न व्यवहरेत्। अपुत्रस्य पुत्रकरणावश्यकत्वद्योतनाय श्रुत्याकर्षः। विज्ञायत इति—श्रूयत इत्यर्थः । हि—यतः । एकेन—अनौरसेनाऽपि पुत्रेण। बहून्—पित्रादीन् । ततः—नरकात् । त्रायत इति

---

१.—१५. ३. । २. म० ९. १०६. । ३. फ. तददाने । ४. प. इत्युक्तं तथा च । फ. इत्युक्त स्यात्तथा च । ५. ब. मुख्यप्र० । ६. फ. पुत्रप्र० । ७. प. फ. त्तिदूरे । ८. ब. पुत्रा० । ९. प. फ. तः चकारत्रा० ।

Cole.: Ch. I, Sec. xi, §§ 11—13.

14 बान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयात् ” इति वासिष्ठेनोक्तः । ** अदूरबान्धवमि-
15 त्यत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः । ** एवं क्रीतस्वयंदत्तकृत्रिमेष्वपि योजनी-
यम्—समानन्यायत्वात् ॥ १३० ॥

16 ** क्रीतस्तु पुत्रस्ताभ्यां मातापितृभ्यां मात्रा पित्रा वा विक्रीतः पूर्ववत्—तथैकं पुत्रं ज्येष्ठं च वर्जयित्वा आपदि सवर्ण इत्येव । यत्तु मनुनोक्तम्—“ क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा॥” इति, तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं ; न जात्या—सजातीयेष्वयं प्रोक्त इत्युपसंहारात् ।

## सुबोधिनी

एवं क्रीतस्वयंदत्तेति ॥ १३० ॥

ननु यदुक्तं “सवर्ण इत्येवं” इति, तदनुपपन्नं — मनुवचनविरोधादित्याशङ्क्य परिहरति —यत्तु मनुनोक्तं क्रीणीयादित्यादिना । तत्र हेतुमाह—सजातीयेष्वयं प्रोक्त इत्युपसंहारादिति,—योगीश्वरेणेति शेषः । तथाच न योगीश्वरवचने विरोध इत्यर्थः ॥ १३१ ॥

## बालंभट्टी

अर्थः । किञ्चिद्दूरस्थसङ्ग्रहायाऽऽह—अदूरमिति,—अनेनेत्यर्थः । दत्तके उक्तपुत्रीकरणविधिं
15 क्रीतादिष्वप्यतिदिशति—एवं क्रीतेति,—*[प्रागुक्तं होमभिन्नं सर्वमपि ग्रहणोपादानग्रहीतृविषयकं नियमनम् इत्यर्थः ।]* यथायोग्यं दृष्टार्थत्वात् वसिष्ठेन विक्रयत्यागोपादानाच्च । स्वयन्दत्ते तु होमोऽपि—तत्राऽपि प्रतिग्रहसत्त्वात् । एवमपविद्धेऽपि यथासम्भवं बोध्यमिति भावः । अतिदेशवचनाभावेऽपि युक्तिरेव नियामिकेत्याह—समानेति ॥ १३० ॥

ताभ्यामिति मूलस्थस्य व्याख्या—मातेति । ननु एवं मात्रा पित्रा वेत्यधिकमत आह —पूर्ववदिति । तथा च तुल्यन्यायत्वात्तथोक्तावपि तल्लाभ इति भावः । अत एवाऽऽह— तथैकमित्यादि । सवर्ण इत्यंशे मनुविरोधं परिहरति—यत्त्विति । मातापित्रोरान्तिकात् सकाशादित्यर्थः । तस्य—क्रेतुरेव । सदृशोऽथवा इति पाठः । शोऽपिवेति पाठान्तरम् । न जात्येति—ब्राह्मणत्वादिनेत्यर्थः । निषेधे हेतुमाह — सजेति,— मूलकृतेति शेषः । तथा च तद्विरोधान्न तथा व्याख्यानं किन्त्वगत्या तथैवेति भावः । पुनस्सिंहावलोकन्यायेन

---

१—१५. ६.। २. क. ग. ज. योज्यम् । ३. क. शोऽथवा। ४.—९. १७४.। ५. थ. द. ‘तथा च न’ नास्ति । ६. भ. दि सर्ववदिति तस्य क्रे० ।

Cole.; Ch. I, Sec. xi, §§ 13—16.

** कृत्रिमः स्यात्स्वयंकृतः—कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिप्रलो- 17
भनैः[1] पुत्रीकृतो मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात् । ** दत्तात्मा तु पुत्रो यो 18
मातापितृविहीनस्ताभ्यां त्यक्तो वा तवाहं पुत्रो भवामीति स्वयंदत्त[2] उपनतः। ** सहो- 19
ढजस्तु गर्भे स्थितो गर्भिण्यां परिणीतायां यः परिणीतः स[3] वोढुः पुत्रः ॥ १३१ ॥

## बालंभट्टी

प्रतीकं व्याचष्टे—कृत्रिम इति । तथा च मनुः—"सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥" इति[4] । अयमपि तस्यैव । प्रलोभनैरिति,—तथा च प्रौढत्वमपि तत्र बोध्यम् । अत्र दत्तात्मेति लक्ष्यनिर्देशः स्वयंदत्त इति लक्षण-मित्याशयेनाऽऽह—दत्तात्मा त्विति । त्यक्त इति,—अकारण इति शेषः । इति—एवं स्वयं-दत्त इत्यस्यार्थः । उपगत इति—प्राप्त इत्यर्थः । अन्ये तु विपरीतो लक्ष्यलक्षणभावः, तथा च तादृशस्तवाऽहं पुत्रो भवामीत्येवमात्मानं दत्तत्वात् पूर्ववत् गृहीतो यः, स स्वयन्दत्त इत्यर्थं इत्याहुः; तथा च मनुः—"मातापितृविहीनो यस्त्यक्तो वा स्यादकार-णात् । आत्मानं स्पर्शयेद्यस्तु स्वयन्दत्तस्तु स स्मृतः ॥" इति[5] । सहोढज[6] इत्यपि नामा-न्तरं मानवादौ। तत् ध्वनयन् गर्भे विन्न इति लक्षणं शेषपूरणेन व्याचष्टे—गर्भे स्थित इति । विन्न इत्यस्य व्याख्या—परीति । अन्ये तु गर्भे स्थितो गर्भस्थितः—गर्भिण्यां परिणीतायां स्वीकृतः—गर्भेण सह या ऊढा, पश्चात्तस्यां जात इत्यर्थः, "ङ्यापोः" इति[7] ह्रस्व इत्याहुः । सवर्णात् संभूतत्वं तूभयधाऽपि बोध्यम् ; तथा च मनुः—"या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती । वोढुस्स गर्भो भवति सहोढ इति चोच्यते ॥" इति[8] । पुरुषसं-बन्धमात्रान्न कन्यात्वहानिः; किन्तु मन्त्रवत्संस्कारपूर्वकक्षतयोनित्व एव हि कन्या-शब्दप्रवृत्तिनिमित्तमिति स्पष्टं "कन्यायाः कनीन च" इति[9] सूत्रे महाभाष्ये । एवञ्च तस्या[10] अपि विवाहसंभव इति न दोषः । अत एव प्रागुक्तद्विविधकानीनसङ्गतिरिति बोध्यम्[11] ॥ १३१ ॥

---

१. क. प्रयोजनैः । ख. ग प्रलोभैनैव। २. ख. दत्तत्वमुपगतः। ३. ग. सहोढजः । ४.—९. १६९ । ५.—९. १७७.। ६. भ इत्यस्य तया सह य ऊढो विवाहितगर्भस्तस्माज्जात इत्यर्थः गर्भेस्थितः गर्भिण्यां । ७. अ. ६. ३. ६३. । ८.—९. १७३. । ९. अ० ४. १. ११६. । १० प ब. 'तस्या' नास्ति । ११. भ. एतदारम्य 'परित्यक्त' इत्यन्तं नास्ति ।

Cole.: Ch. I, Sec. xi, §§ 17—19.

20 **अपविद्धो मातापितृभ्यामुत्सृष्टो यो गृह्यते, स ग्रहीतुः पुत्रः। सर्वत्र सवर्ण इत्येव ॥ १३१ ॥

21 ** एवं मुख्यामुख्यपुत्राननुक्रम्यैतेषां दायग्रहणे क्रममाह—

## पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ १३२ ॥

22 ** एतेषां पूर्वोक्तानां पुत्राणां द्वादशानां पूर्वस्य पूर्वस्याभावे उत्तरः उत्तरः पिण्डदः श्राद्धदोंऽशहरो धनहरो वेदितव्यः ।

---

## पिण्डदोंऽशहरश्चैषामित्यादि ॥ १३२ ॥

---

### बालंभट्टी

प्रक्रान्तत्वादाह—मातेति,—तदन्यतरेण वेत्यपि बोध्यम् । उत्सृष्ट इति—परित्यक्त इत्यर्थः । दोषाभावेऽपि मूलजातत्वादिना वेत्यादि । य इति,—ज्ञातपित्रादिरित्यर्थः । गृह्यते,—पुत्रत्वेनेत्यादिः । तथा च मनुः—" मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धस्तु स स्मृतः ॥" इति[1] । कृत्रिमादिशेषमाह—सर्वत्रेति,—कृत्रिमस्वयन्दत्तसहोढजापविद्धेष्वित्यर्थः ॥१३१॥

एतेषां क्रमोऽपि विवक्षितो न स्वरूपमात्रमित्याशयेन सङ्गतिमाह—एवमिति । यद्यपि पिण्डद इत्यप्यास्ति, तथाऽपि प्रकरणादाह—दायेति,—रिक्थेत्यर्थः । तत्कथनं त्वानुषङ्गिकमिति भावः। एषामित्यस्य व्याख्या—पूर्वोक्तेत्यादि । सङ्ख्याया अनुक्तत्वे विभागेनैव लाभादाह—द्वादशानामिति,—निर्धारणे षष्ठी । पूर्वाभावे इति वीप्सायां सप्तपर्णवदित्यग्रिमानुरोधेनेत्याह— पूर्वस्येति । परशब्दो नोत्कृष्टार्थ इत्याह— उत्तर इति । मौलक्रमेणाऽऽह — पिण्डद इति । तत्त्वमात्रमविवक्षितमित्याह — श्राद्धद इति । एकसङ्ग्रहाय—धनेति । चः अन्वाचये न तु समुच्चये इति सूचनाय व्याख्याने तत्त्यागः । यद्यप्यत्र प्रकारणादंशहर इत्येवोचितमिति पिण्डद इत्यसंबद्धम् ; अथ श्राद्धप्रकरणे अनुक्तत्वात् प्रकरणान्तरे सङ्गत्यभावात्[2] अत्रैव पुत्रप्रसङ्गेन तदप्युक्तं लाघवादिति चेदेवमपि अन्ते वाच्यमागन्तूनामिति न्यायात्[3] नाऽऽदाविति तथोक्त्यसङ्गतिरेव । तथाऽपि पुत्राणां पिण्डदत्वमावश्यकम्—अदाने प्रत्यवायश्रवणात् । धनहरत्वन्तु आनुषङ्गिकमन्वाचयशिष्टं न तु मुख्यमिति । नापि तेषामंशहरत्वप्रयुक्तं पिण्डदत्वामिति अंशहरत्वप्रयुक्तपिण्डदत्वस्य[4] अन्यत्र क्वचित् समनियतस्य[5] शास्त्रीयत्वेऽपि पिण्डदत्वप्रयुक्तांशहरत्वस्य

---

१.—९. १७१. । २. प. ब. णसङ्ग० । ३. प. फ. ब. यात् धनहर० । ४. प. ब. युक्तपिण्डदत्वस्य । ५. स्याशा० ।

Cole.: Ch. I, Sec. xi, §§ 20—22.

**औरसपौत्रिकेयसमवाये[1] औरसस्यैव धनग्रहणे प्राप्ते मनुरपवादमाह[2]-"पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः॥" इति[3] 23
**तथा अन्येषामपि पूर्वस्मिन्[4] सत्यप्युत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं वसिष्ठेन— 24

## सुबोधिनी

औरसपौत्रिकेयसमवाय इति—औरसपुत्रस्य पुत्रिकायाश्च सद्भाव इत्यर्थः । "समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः" इतीति । अस्यार्थः—पुत्रिकायां कृतायां यद्यौरस उत्पन्नः, तदा स्त्रियाः पुत्रिकाया ज्येष्ठता नास्ति "ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।" इत्यभिहितोद्धारादिकं[5] नास्ति; अपि तु सम एव विभाग इति । सम एवेत्युक्तत्वादौरसस्यैव[6] सकलधनग्रहणं नास्ति। अतः "पूर्वाभावे परः परः" इत्यस्यापवाद इत्यर्थः।*[यथौरसपुत्रांशात्[7] पुत्रिकाया अंशभाक्त्वं, तथाऽन्येषामपि पुत्राणामंशभाक्त्वमस्तीत्याह– ]*तथाऽन्येषामपीत्यादिना।औरसे सति क्षेत्रजादीनामप्यंशभाक्त्वे[8] कात्यायनवचनमपि प्रमा- 24

## बालंभट्टी

तथा न शास्त्रीयत्वमिति अनयोर्मिथो न व्याप्यव्यापकभावो नाऽपि सार्वत्रिकं समानैयत्य[9]मिति च सूचनार्थं भगवता योगीश्वरेण पिण्डदोंऽशहरश्चेत्युक्तम् । अनेनैवाऽऽशयेनावतरणे प्रकरणसङ्गतये तथोक्तमप्यत्र व्याख्याने मौलक्रमेणैव व्याख्यातं व्याख्यातेति बोध्यम् । एवं सति मन्वादिभिः प्राप्तविरोधपरिहारद्वारा मूलं समर्थयन् तेषां व्यवस्थां दर्शयति—औरसेत्यादि अंशभागितीत्यन्तेन । औरसेत्यस्यैवंसतीत्यादिः,—औरसपौत्रिकेययोर्मिथः समवाये इत्यर्थः । आद्यार्थाशयेनेदम् । इदं च पुत्रिकाकरणानन्तरमौरसोत्पत्तावेव संभवतीति बोध्यम् । तदेवाऽऽह—पुत्रिकायामिति । पुत्रिकैव पुत्र इति द्वितीयार्थाशयेनाऽऽह –ज्येष्ठेति । हि—यतः । स्त्रियः—पुत्रिकायाः । ज्येष्ठता नास्ति—"ज्येष्ठस्य" इत्याद्युक्तोद्धारादिकं नास्ति । अतस्तथा यदि भवेत्तदा तत्र सम एवं विभाग इत्यर्थः । अत्र सम एवेत्युक्त्या औरसस्यैव सर्वधनग्रहणाभावेन मूलोक्तापवादत्वं मनोरिति भावः । अपवादान्तरमाह—तथेति,—यथौरसे सति पुत्रिकाया अंशभाक्त्वं, तथा अन्येषामपि क्षेत्रजादीनामित्यर्थः । अन्येषामित्यस्योत्तरेषामित्यत्रान्वयः । अन्यत्वं च पुत्रिकातः । उत्तरेषामिति,-स्पष्टार्थम् । अपिः पुत्रिकासमुच्चये । पूर्वस्मिन् सत्यपीति पाठः । औरसे सत्यपीति तदर्थः ।

---

१. क. कोभेयसम० । २. क. अपवादमाह मनुः। ३.—९. १३४.। ४. क. ख. ग. घ. ङ. ज. स्मिन् पूर्वस्मिन् । ५. म० ९.—११२. । ६. थ. सस्य स० । ७. थ. द. रसे सति पुत्रि० । ८. ग. मंशभा० । ९. फ. समनै० ।

Cole.: Ch. I, Sec. xi, §§ 23—24.

''तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्यात् दत्तकः'' इति। दत्तकग्रहणं
25 क्रीतकृत्रिमादीनां प्रदर्शनार्थम्--पुत्री करणाविशेषात्; **तथा च कात्यायनः-''उत्पन्ने
26 त्वौरसे पुत्रे चतुर्थांशहराःसुताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभाजानाः ॥'' इति।
सवर्णा दत्तकक्षेत्रजादयस्ते सत्यौरसे चतुर्थांशहराः। असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः, किंतु ग्रासाच्छादनभाजनाः।

---

सुबोधिनि

णयति–कात्यायन इत्यादिना। क्षेत्रजदत्तकादय इति,–आदिशब्दात् क्रीतकृत्रिमस्वयंदत्तापविद्धा गृह्यन्ते। असवर्णाः कानीनेति,—असवर्णा अप्रशस्ता इत्यर्थः। दत्तकादीना-

बालंभट्टी

अयमपिर्विरोधे। पूर्वस्मिन्[2] पूर्वस्मिन् सत्यपीत्यपपाठः–वक्ष्यमाणात्तदलाभात्। तस्मिन्--दत्तकत्वेन अभिमते सत्सप्तमी। चेत्—यदि। तदेतिशेषः। नन्विदं दत्तकमात्रविषयकमिति कथमन्येषामित्याद्युक्तिरत आह—दत्तकेति। आदिना स्वयंदत्तपरिग्रहः। ननु तदविशेषेऽपि तत्र यथाश्रुत एवार्थोऽस्तु; अतः क्षेत्रजाद्यंशेऽपि मानं सूचयन्नाह—तथा चेति। अत्र सुता इति सामान्यबहुवचनान्तेनोक्तेस्तथा लाभ इति भावः। सवर्णा इति पूर्वान्वयीत्याह—सवर्णा इति। आदिना क्रीतकृत्रिमस्वयंदत्तापाविद्धाः।सत्यौरसे इति—तस्मिन्नुत्पन्ने सतीत्यर्थः। एवमग्रे[3]ऽपि क्षेत्रजादीनां सवर्णादुत्पन्नत्वं स्वतः सवर्णत्वं चास्ति; कानीनादीनां तु तदुत्पन्नत्वेऽपि स्वतस्तत्त्वाभावस्य वक्ष्यमाणत्वादाह—असवर्णा इति, — अप्रशस्ता इत्यर्थः। सहोढसहोढजौ पर्यायौ—तथा मनुमूलोक्तेः। तुसूचितमाह—न चेति,—अनेनेदं सूचितं—यत्र शाब्द आर्थो वा अंशनिषेधः,तत्रैव ग्रासादि नान्यत्रेति; स्फुटीभविष्यति चेदमग्रे।किंन्विति,—तयोः पात्रभूता इत्यर्थः।भागिन इत्युभयत्र पाठान्तरम्; अत एव मनुः—
'' सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा।ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्॥''
इति। न्याय्यं—यस्य यावदुपयुक्तं धनानुरूपं च। अत्यन्तं—यावज्जीवम्। नन्वेतावता औरसे सति क्षेत्रजादीनां तुर्यांशभागित्वं कानीनादीनां ग्रासादिभागित्वमिति लब्धं; तथा सति क्षेत्रजाद्यंशे कानीनाद्यंशे च मूलापवादत्वं सिद्धं यद्यपि, तथाऽपि कातीयस्य विष्णु विरोधः कानीनाद्यंशे, — तेन तेषां सामान्येनांशभागित्वाभावस्योक्तत्वात्; कातीयेन

---

१.— १५. ९.। २. प. ब. एतदारभ्य 'चेत्' इत्यन्तं नास्ति। ३. प. ब. मपि क्षे०।
४.—९. २०२.।

Cole.: Ch. I, Sec. xi, §§ 24—26.

** यदपि विष्णुवचनम्--"अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥"इति, तदप्यौरसे सति चतुर्थांशनिषेधपरमेव; औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव–"पूर्वाभावे परः परः"इति वचनात्। ** यदपि मनुवचनम्—"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजविनम्॥" इति, तदपि दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम्। ** तत्र क्षेत्रजस्य विशेषो दर्शितस्तेनैव–"षष्ठं तु क्षेत्रजस्यांशं प्रद- 27 28 29

एतेषां क्रमोपदिष्टानामौरसादीनां पुत्राणां पूर्वाभावे परः पिण्डदः अंशहरश्च प्रत्येतव्यः, पूर्वसद्भावे तु परस्याऽऽनृशंस्यार्थं वृत्तिमात्रकल्पनम्। तथा च स्वायंभुवम्—"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥" इति। औरसवचनं सर्वक्षेत्रजाद्युपलक्षणार्थम् य एवैकः पूर्वत्वाद्रिक्थभाक् स एव कृत्स्नपितृधनं गृह्णीयात्। इतरेषामानृशंस्यार्थं प्रजीवनमात्रं कुर्यादित्यर्थः। यस्तु क्षेत्रजस्य सत्यौरसे विभागविशेषमानं

## सुबोधिनी

मौरसप्रतिकूलत्वे निर्गुणत्वे च चतुर्थांशभाक्त्वं नास्ति, किन्तु ग्रासमात्रं दातव्यमित्युक्तम्। अधुना क्षेत्रजस्यौरसप्रतिकूलत्वे निर्गुणत्वे च विशेषोऽस्तीत्याह— तत्र क्षेत्रजस्येति।

## बालंभट्टी

विशेषस्योक्तत्वादित्याशङ्कां हृदि निधाय विरोधं परिहरति—यदपीति। परमेवेति,—कातीयैकवाक्यतयैवेति भावः। अत एव मूलस्यापि न विष्णुना विरोध इत्याह—औरसाद्येति। आदिना आद्यकोटिग्रहणम्। नन्वेवमपि वासिष्ठादेर्मनुविरोधस्तेन दत्तकादीनामपि तद्भागित्वस्योक्तत्वादतस्तं परिहरति—यदपीति। एक एव—मुख्य-एव हेतुगर्भविशेषणमिदम्। वसुनः—धनस्य। अत एवाऽऽह—शेषाणामिति,—दत्तकादीनामित्यर्थः। शेषे षष्ठी। एवमग्रेऽपि। न नृशंसो घातुकोऽनृशंसस्तद्भावः आनृशंस्यम् अघातुकत्वं पापाजनकत्वम्। अददत् पापमाप्नोति तदर्थमित्यर्थः। पुत्रिकायास्तेनैव विशेषस्योक्तत्वात् क्षेत्रजस्य वक्ष्यमाणत्वादाह—दत्तकेति। तथा च कानीनादिवत्तेषामपि तत्त्वे सति ग्रासादिभागित्वमेव न तुर्यांशभागित्वमिति वासिष्ठादेरपवादो मनुस्तत्रेति भावः। वक्ष्यमाणमेवाऽऽह—तत्रेति,—शेषाणां मध्ये इत्यर्थः। विशेष इति,--कातीयतो विशेषः, शेषाणामिति मनुतो विशेषो निर्गुणत्वप्रतिकूलत्वयोरवान्तरविशेषश्चेत्यर्थः। एवं च क्षेत्रजस्यौरसप्रतिकूलत्वे निर्गुणत्वे चाविशेषः पूर्ववन्नास्तीति भावः। तेनैव—मनुनैव।

१. ? । २. क. तूपजी० । ३.—९. १६३। ४. क. षो नास्ती०(?) । ५. फ. त्वाच्चाऽऽह।

Cole.: Ch. I, Sec. xi, §§ 27—29.

द्यात्पैतृकाद्धनात्।औरसो विभजन् दायं पित्र्यं पञ्चममेव वा॥'' इति।प्रतिकूलत्वनिर्गुणत्व-
30 समुच्चये षष्ठमंशम्, एकतरसद्भावे पञ्चममिति विवेक्तव्यम्। ** यदपि मनुना पुत्राणां

## सुबोधिनी

प्रतिकूलत्वनिर्गुणत्वसमुच्चय इति,—उभयसद्भाव इत्यर्थः। ''दायदा बान्धवाश्च षट्'' इति ''षडदायादबान्धवाः'' इति च द्वयोर्वचनयोः स्वपितृसापिण्डसमानोदकानां सन्निहितरिक्थ-हरान्तराभावे पूर्वेषां रिक्थहरत्वमुत्तरेषां तु तन्नास्तीत्येवमर्थो दर्शितः। तत्र हेतुमाह—

## बालंभट्टी

दायं धनम्। पञ्चममित्यादि पक्षान्तरम्।दत्तकादिवदुक्तपूर्ववाक्येन जीवनमात्रे प्राप्ते भागविक-ल्पोऽयं स चान्यथाऽनुपपन्न इत्यवश्यं कल्प्यमाह—प्रतीति,—इदमपीत्यादिः। समुच्चये तयोः सद्भावे। एवं चैकवाक्यीयविकल्पोपपत्तये आवश्यकयुक्त्यैव पूर्वमनुवाक्यस्याप्युप-पत्तिरिति न तस्य तद्विरोध इति भावः। एवं च क्षेत्रजस्य उभयसत्त्वे षष्ठांशः, एकतर-सत्त्वे पञ्चमांशस्तस्याभावे कातीयचतुर्थांशभागित्वं ; कानीनादीनां तु तत्र सति ग्रासादि-भागित्वमेव, न चतुर्थांशभागित्वं ; पुत्रिकायास्तु तत्र सति समभागः। यत्तु गौतमीये—''पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः'' ''कानीनसहोढपौनर्भवपु-त्रिकापुत्रस्वयंदत्तकान्ता गोत्रभाजः'' ''च तुर्थांशभागिनः'' इति।तत्र गुणवदगुणवदित्युक्तरीत्या षड्वर्गोक्ताः क्रमेण तद्धराः। द्वितीयवर्गमध्ये आद्यत्रयाणां तुर्यांशभागित्वोक्तिरौरसाभावे पुत्रिकादिसत्त्वे च ज्ञेया ; अन्यथोक्तस्मृतिविरोधो दुष्परिहर एव। पुत्रिकापुत्रस्य विषयो व्याख्यात्रैव वक्ष्यते। स्वयन्दत्तक्रीतयोस्तत्त्वं तु औरसे सति उक्तरीत्या वासिष्ठाद्येकवाक्यतयैव। एवं गूढोत्पन्नस्य रिक्थभाक्त्वोक्तिरपि औरसाद्यभावे ज्ञेयेति न कश्चित् विरोधः। एवं मानवे मेधातिथिसंमतरिक्थांशोऽपि औरसे सति कानीनादिवत् दत्तकादावपि दोषद्वयसत्त्वे तद-न्यतरसत्त्वे च ज्ञेयः;रिक्थांशेति पाठे तु न कश्चिद्दोष एवेति। क्तव्यम् इति—एतद्भिन्न-विषयकं मूलवाक्यमिति सिद्धमिति बोध्यम्। मूलस्य वासिष्ठादेश्च मनुवचनान्तरविरोधं परिहरति,—यदपीति। पुत्राणां इति,—'' पुत्रान् द्वादश यानाह नृणां स्वायंभुवो मनुः।

१.—९ १६४. २. क. ष्ठांशं। ३. त मुदाये। ४. द. समपिण्डसमा०। ५. भ शः औरसे सत्यपि दत्तकादीनान्तु तत्र सत्यपि उभयसमुच्चयेऽन्यतरसत्त्वे च ग्रासादिमात्रमन्यथा वासिष्ठाद्युक्तचतुर्थांशभागित्वम्। ६.—२८. ३२, ३३. ३४.। ७, प. ब णवदि०।

Cole,: Ch. I, Sec. xi, §§ 29—30,

षट्कद्वयमुपन्यस्य पूर्वषट्कस्य दायादबान्धवत्वमुक्तम् उत्तरषट्कस्यादायादबान्धवत्वमुक्तम्—"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥" इति,[1] ** तदपि स्वपितृसपिण्डसमानोदका- 31

## बभांलट्टी

तेषां षड्बन्धुदायादाःषडदायादबान्धवाः॥"[2]इत्युपक्रम्येत्यादिः।द्वयमिति-श्लोकद्वयेनेति भावः। दायादेति,-दायहरत्वं गोत्रहरत्वं चेत्यर्थः। तदेवाऽऽह_औरस इति।शौद्रश्चेति,-"यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्। स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः॥"[3]इति। अग्रे तेनैवौरसादिपुत्रान्प्रतिपाद्य अन्तेलक्षितोऽयम्—पारयन्"पिण्डदानादिना प्रीणयन्नपि शवस्तत्तुल्यः अनुपकारकः,असंपूर्णोपकारकत्वात् कामादिति त्वनुवादः"कामतस्तुप्रवृत्तानाम्"[4]इत्यस्य।मूर्द्धावसिक्तादीनान्तु संपूर्णोपकारकत्वेनौरसमित्यत एव शौद्रमात्रस्य द्वादशमध्ये मनुना पृथक् गणनं कृतं; तस्य फलमनुपदमेव स्फुटीभविष्यति। पुत्रिका तु एतत्प्रकरणात्पूर्वंपृथगेवोक्ता मनुनेति स त्रयोदशः पुत्रः; अत एव "पुत्रान् द्वादश यानाह नृणां स्वायंभुवो मनुः।"इत्यत्र तस्य न[5] ग्रहणम् ; अत एव औरसः क्षेत्रजश्चैव"इत्यादिना तानुक्त्वा"यद्येकरिक्थिनौ" "एकएवौरसः" "षष्ठं तु क्षेत्रजस्य" इत्युक्त्वा"औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः॥"इत्युक्त्वा"स्वक्षेत्रे संस्कृतायाम्"[6]इत्यादिना "पारशवस्स्मृतः"[7]इत्यन्ते न द्वादशस्वरूपमुक्तम्। तदग्रे"क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीन् प्राहुः क्रियालोपान्मनीषिणः ॥"[8] इत्यत्र एत एव शौद्रान्ता मन्वभिमता इति स्पष्टमेव । औरसक्षेत्रजाविति "षष्ठन्तु" इति पूर्वस्यानुवादो न विध्यन्तरं— क्षेत्रजस्यौरससाम्याभावात् गोत्रभागिनो रिक्थांशभागिनश्च रिक्थांशः जीवनमात्रम् मुख्याभावे हि प्रतिनिधिरत औरससत्वे तेन कार्याः क्रियालोपाद्धेतोः क्रियाया अपत्यमुत्पादयितव्यमित्यस्य विधेर्लोपो मा भूदिति नित्योऽयं विधिः। स यथाकथंचित् गृहस्थेन सम्पाद्यः । तत्र मुख्यं[9] औरसस्तदसंपत्तावेते कल्प्या इति मेधातिथि ः। अदायादेति—द्वन्द्वोत्तरनञ्समास इति शङ्काशयः। तदपीत्यस्य व्याख्येयमित्यत्रान्वयः। स्वेति,—पूर्वोक्तपुत्रेत्यर्थः।सपिण्डाश्च समानोदकाश्चेति

---

१—९. १५९, ६० । २—९. १५८. । ३. म० ९—१७८. । ४. म० ३. १२. । ५. प. ब. (न) नास्ति । ६.—९. १६२—१६६. । ७.—९. १७८. । ८.—९. १८०. । ९. प. ब. ख्यकल्प औ० ।

Cole. : Ch. I, Sec. xi, § 30—31.

नां सन्निहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वम् , उत्तरषट्कस्य तु तन्नास्ति ।
32 ** बान्धवत्वं पुनः समानगोत्रत्वेन सापिण्डत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेवेति व्याख्येयम् । "गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥"

षष्ठं तु क्षेत्रजस्याप्रदद्यात् पैतृकधनात् । "औरसो विभजेद्दायं पित्र्यं पञ्चममेव वा।" इति। पुनश्चोक्तम् "औरसक्षेत्रजौ पुत्रौ पितृवित्तस्य भागिनौ। दशापरे तु क्रमशो गोत्ररिक्थावभा-

## सुबोधिनि

"गोत्ररिक्थे जनयितुः" इत्यादिना । अस्यार्थः—दत्तकः पुत्रो जनयितुः निषेक्तुर्जनकस्य गोत्रं धनं च न कदाचित् प्राप्नुयात् ; अपि तु यस्मै दत्तस्तस्य गोत्रं धनं च स दत्तकः प्राप्नोति। तथा पिण्डः पिण्डदानमपि गोत्ररिक्थानुगः यत्सम्बन्धिनी गोत्ररिक्थे भवतः, तस्मा एव स पिण्डो देयः । यस्मात् कारणात् स्वधा स्वधासाधनकं पिण्डश्राद्धादिकं ददतो दातुः सकाशाद्व्यपैति निवर्तत इति। एतच्च दातुः पुत्रान्तरसद्भावे वेदितव्यम् । अभावे त्वसावेव

## बालंभट्टी

द्वन्द्वः। तदिति--स्वपितुः सपिण्डसमानोदकान्यतरादित्यर्थः। च स्त्वर्थे। तत्—तद्रिक्थहरत्वम्। एवं दायादादिशब्दस्यार्थमुक्त्वा बान्धवशब्दस्य तमाह—बान्धवेति । पुनस्त्वर्थे। अस्यातिप्रसक्तत्वादाह—सपिण्डत्वेन चेति । बान्धवस्वरूपमाह—उदकेति । एवं चादायादबान्धवा इत्यत्र नञ्समासं कृत्वा द्वन्द्वः कार्यो न तु प्रागुक्त इति भावः। एतेन प्रागुक्तमेधातिथिव्याख्यानमपास्तम् । एवं वचनद्वयव्याख्यानहेतुं तदुक्तिरूपमेवाऽऽह—गोत्रेति। दत्रिमः —दत्तकः। सुतः पुत्रः। जनयितुः—निषेक्तुर्जनकस्य। गोत्ररिक्थे—गोत्रधने। न भजेत्—न प्राप्नुयात । जनयितुरिति पञ्चमीति मेधातिथिः । तथा च तन्मरणनिमित्ताशौचादिकमपि न प्राप्नोति—विवाहं विना तत्र तद्गोत्रस्यापि परिहार्यत्वात् । अनेनान्यगोत्रस्यापि पुत्रीकरणमनुज्ञातं भवति; अपि तु यस्मै दत्तस्तस्य गोत्रं धनमाशौचादिकं च दत्तकः प्राप्नोति तथा यतो "गोत्ररिक्थानुगः स गोत्रेण" इति "यो रिक्थहरः" इति च स्मृतेः। पिण्डः— तद्दानं श्राद्धमिति यावत् । गोत्ररिक्थेऽनुगच्छति सः । यदीयं गोत्ररिकथं गृह्यते, तस्मै एव पिण्डोदकदानाद्यौर्ध्वदेहिकक्रिया अतो ददतः तद्दातुः।जनकस्य दत्तपुत्रकर्तृका स्वधा—श्राद्धम्। व्यपैति—अर्थात्ततो निवर्तते । दत्तकस्य जनकश्राद्धे नाधिकारस्तस्य तेन तन्नकर्तव्यमित

१. थ. द. रादिस० । २. प. भ. दायादिश० ।

Cole.: Ch. I, Sec. xi, §§ 31—32.

इत्यत्र दात्रिमग्रहणस्य पुत्रप्रातिनिधिप्रदर्शनार्थत्वात् ।

---

## सुबोधिनी

पिण्डदो रिक्थहरश्चेति । एतदुक्तं भवति—अत्र दत्रिमग्रहणं प्रतिनिधिपुत्रोपलक्षणार्थम् । तथा च दत्रिमादिपुत्राणामनेन वचनेन रिक्थहरत्वप्रतीतेः पूर्वपक्षोक्तरीत्या च रिक्थहरत्वाभा-

## बालंभट्टी

यावत्। ददतः इति पञ्चमी व्यपतीत्यत्रान्वय इति वा। वस्तुतः पिण्डशब्दः सापिण्ड्यपरः। श्राद्धपरत्वे ददतः स्वधेत्यनेन पौनरुक्त्यापत्तेः; अत एव शिष्टाः प्रतिग्रहीतृगोत्रेणैव तस्य-सर्वक्रियानुष्ठानं कुर्वन्ति ; प्रतिग्रहीतृसपिण्डा एव च तन्मरणादौ दशाहाशौचमनुतिष्ठन्ति । गृहीतृकुले एव तत्सपिण्डीकरणाद्याचरन्ति । अत एवास्मादेव वचनाद्दत्तकस्य जनकसापि-ण्डयनिवृत्तिरित्यभियुक्तैर्व्याख्यातमिति बोध्यम् । एतच्च दातुः पुत्रान्तरादिसद्भावे; दानोत्तरं तदभावे तु तस्याऽप्यसावेव रिक्थश्राद्धाद्यधिकारी—"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्म्मतः॥" इति न्यायसाम्यात्। "दत्तः पुत्रः पितुः कुर्यात् जनकस्य मृतेऽहनि।गयायां च ततोऽन्यत्र अपुत्रान्तरसन्निधौ॥"इति शातातपस्मरणाच्च।इदम-पि दानानन्तरं जनकस्यापुत्रत्वे–दानकाले त्वेकस्य दाननिषेधात् । एवमेव द्व्यामुष्यायण द-त्तकस्याऽप्युभयोपकारकत्वं बोध्यम्। अत एव"दत्रिमः क्वचित्"इति पाठेन सहैकवाक्यताऽपि। अस्य सापिण्ड्यं परिवेदनदोषाभावश्चान्यत्र स्पष्टः । एष एव न्यायः प्रागवत् पुत्रीकरणावि-शेषात् कृत्रिमादीनामपि बोध्यः; तदाह—इत्यत्र दत्रिमेति,—औरसपुत्रप्रातिनिधिदत्तककृत्रि-मादेरप्युपलक्षणार्थत्वादित्यर्थः। तथा च दत्तकादीनां ततः पित्रादिरिक्थहरत्वप्रतीतेः पूर्वपक्षो-क्तरीत्या च तदभावप्रतीतेर्मिथो विरोधादप्रमाण्यापत्तिरिति वचनानर्थक्यभियोक्तैव व्यवस्था ज्यायसी। अत एवोक्तद्वादशपुत्रानुक्त्वा देवलेनोक्तम्–"एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥ एषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते॥ सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥ तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । हीनास्तमु-पजीवेयुर्ग्रासाच्छादनसंभृताः॥" इतीति भावः। ननु तदविशेषेऽपि दत्रिमग्रहणं नोपलक्षणम् इति पूर्वोक्तमनुवाक्यद्वयं पितृधनविषयकमेवाऽऽस्तां–तावताऽपि मनोर्मिथो विरोधाभावात् ; मूलकृता पितृधनस्थले उक्तत्वेऽपि मनुनाऽन्यत्रोक्तत्वात् ; एवं च पूर्वपक्षोक्तमेव दृढं सम्पन्नम्

---

१. म० ९.—१४२. । २. त. धियुक्तेरुप० (?) । ३. व्यव० १२७. । ४. भ. 'कादीना' आरभ्य 'विरोधात्' इत्यन्तं नास्ति । ५. फ. अन्यत्र तत्रोक्त० । ब. अन्यत्रोक्तत्वात्तत्रानुक्त० । भ. अन्यत्र तत्रानुक्त० ।

Cole.: Ch. I, Sec. xi, § 32.

33

**पितृधनहारित्वं तु पूर्वस्य पूर्वस्याभावे सर्वेषामविशिष्टम् —"न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।"[1] इत्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वप्रतिपादनपरत्वात्; औरसस्य तु "एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।"[2] इत्यनेनैव रिक्थभाक्त्वस्योक्तत्वात्; दायादशब्दस्य

## सुबोधिनी

वप्रतीतेः परस्परविरोधादप्रामाण्यं प्रसज्येत। ततो वचनानर्थक्यभयादस्मदुक्तैव व्याख्या श्रेयस्करीति। ननु षट्कद्वयमध्ये पूर्वषट्कस्यैव स्वसपिण्डादिरिक्थहरत्वमस्तु, माभूदुत्तरषट्कस्य, पितृधने तु कथमित्यत आह— पितृधनहारित्वं त्विति। तत्र हेतुमाह— न भ्रातर इति। ननु "पुत्रा रिक्थहराः" इति पुत्राणां पितृधनभाक्त्वं प्रतीयते; ते पुत्रा औरसा एव न तु तद्व्यतिरिक्ता इत्यत आह—औरसस्य तु एक एवौरसः इति। वचनद्वयस्याप्येकार्थत्वे पौनरुक्त्यमित्यर्थः। दायादशब्दस्वरूपपर्यालोचनयाऽपि "दायादा बान्धवाश्च षट्" "षडदायादबान्धवाः" इत्यत्र पितृधन (प?) (ह) रत्वं चास्तीत्याह[3]— दायादशब्दस्येति। ननु याज्ञवल्क्येन "औरसो धर्मपत्नीजः"[4] इत्यादिना द्वादशविधपुत्राः प्रदर्शिताः;

## बालंभट्टी

अतो मनुवचनादेव तथा प्रतिपादयितुमाह-पितृधनेति। सर्वेषामग्रिमाणां तदुक्तमेवात्र हेतुमाह —न भ्रातर इति। "श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति। बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः॥"[5] इत्यस्य पूर्वश्लोकः। इति इत्यस्य। पुत्रा इति सामान्यबहुवचनाभ्यामाह— सर्वेषामिति। नन्वौरसबहुत्वापेक्षमेव बहुत्वमिति औरसा एव पुत्रा न ते प्रतिनिधिभूताः; किंच "न भ्रातरः" इत्यत्रत्यस्य पुत्रा इत्यस्य पित्रादिसाहचर्यान्मुख्यौरसपुत्रपरत्वमेवेति तद्विषयकमेव पुत्रपदोक्त्या पितृधनविषयकं तदस्तु; अत आह— औरसस्य इति। वचनद्वयस्याऽप्येकार्थत्वे पौनरुक्त्यापत्तिरिति भावः। ननु द्विर्बद्धमित्ति न्यायेन दार्ढ्याय पुनस्तदनुवादकमेव तदास्तामत आह—दायादेति। तथा च दायादशब्दस्वरूपपर्यालोचनयाऽपि पितृधनपरत्वं तस्य नास्तीति भावः। किंच साहचर्यस्यासार्वत्रिकत्वेन पुत्रत्ववत् पितृत्वादेरपि गौणमुख्यसाधारणत्वेन साहचर्यस्य दुर्वचत्वात्। अपि च "श्रेयसः" इति अग्रे पाठेन गौणपुत्रविषयत्वात् श्रेयस इत्यनेनापि तत्प्रतिपादनाच्च। "ब्राह्मणस्यानुपूर्व्येण"[6] इत्यादिना "पुत्रशतं भवेत्"[7] इत्यन्तेन ततः प्राक्तनवचनकदंबेन पितृधनविषये अंशविभागकथनपूर्वं तद्भागित्वस्यौरसस्य प्रतिपादितत्वाच्च। तस्मादौरस इत्यादि तत्परमेवेति व्यवस्थापनं मनुसंमतं यु-

१. म० ९.—१८५। २ म० ९.—१६। ३. थ द. नास्ती० (?)। ४. व्यव० १२७। ५. म० ९—१८४। ६. म० ९.—१४९। ७. म० ९. १५७। ८. प. फ. ब. त्वस्यैवप्र०

Cole.: Ch. I, Sec. xi, § 33.

"दायादानपि दापयेत्" इत्यादौ

## सुबोधिनि

"पूर्वाभावे परः परः" इति रिक्थग्रहणक्रमोऽपि दर्शितो वाक्यशेषे; स्मृत्यन्तरेष्वन्यथा दर्शितः; तथाहि—आपस्तम्बधर्मविवृतौ स्मृत्यन्तरसंग्रहः—"औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः। पौनर्भवश्च कानीनः सहोढो गूढसम्भवः॥ दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः। यत्रक्कचोत्पादितश्च स्वपुत्रा दश पञ्च च॥" इति। अत्र सङ्ख्याव्यत्ययः क्रमव्यत्ययश्च। संख्याव्यत्ययस्तु सुपरिहरः। पुत्रिकापुत्रिकासुतौ द्वावप्येककोटिः। तथा बीजक्षेत्रजौ। यत्रक्कचनोत्पादितोऽप्येष्वेवान्यतम इति त्रयाणामन्तर्भावे द्वादशैवेति। तथाऽपि क्रमव्यत्ययस्तदवस्थ एव। मानवे तु —"औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः॥" इति पुत्रिकामप्यौरससमत्वेन औरस एवान्तर्भावयित्वा इतरे दश पुत्रा दर्शिताः—"स्वे क्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः। तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्॥ यस्त्वप्रजप्रमीतस्य क्लीबस्य पतितस्य च। स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥ मातापिता च दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः॥ सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥ उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स्वगृहे गूढमुत्पन्नो यस्य स्यात् तस्य तल्पजः॥" न च ज्ञायेत कस्य सः इति — हीनाधिकपुरुषजत्वमन्तरेण सवर्णजत्वनिश्चये कस्य पुरुषस्येति पुरुषविशेषो न च ज्ञायते इत्यर्थः। यस्य स्यात् तस्य तल्पज इति—यस्य तल्पजः स्यात् तस्य तल्पज इत्यर्थः। तल्पशब्देन दारा लक्ष्यन्ते यथा गुरुतल्पग इति "तल्पं शय्याट्टदारेषु" इत्यमरः। "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते॥ पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। त कानीनं

## बालंभट्टी

क्तमेवेति न मूलादिवचनानां प्रागुक्तानां मिथो विरोध इतीति दिक्। नन्वेवमपि मूलोक्तः ससङ्ख्यः क्रमोऽयुक्त एव–स्मृत्यन्तरेष्वन्यथाक्रमस्य ससङ्ख्यस्य प्रतिपादितत्वेन तद्विरोधात्। एवमुक्तवर्गद्वयप्रतिपादकमनुरपि स्मृत्यन्तराविरुद्धः। तथाहि। तत्र तावदापस्तम्बधर्मसूत्रविवृतौ स्मृत्यन्तरसंग्रहः–"औरस; पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः। पौनर्भवश्च कानीनः सहोढो गूढसंभवः। दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः। यत्रकचोत्पादितश्च स्वपुत्रा दश

१. थ. 'परः' आरभ्य 'सङ्ग्रहः' इत्यन्त नास्ति। २. थ. काको (?)। ३. द. काको०। ४. त. काया औ०। ५. त. अप्रजस्य। ६.—९. १६५—७०। ७. तृ० ना० २८७।

Cole.: Ch. I, Sec. xi, §§ 33.

## बालंभट्टी

पञ्च ॥" इति। अत्र संख्याव्यत्ययः क्रमव्यत्ययश्च। तत्राऽऽद्यः सुपरिहरो, यद्यपि पुत्रिकापुत्रिकासुतौ द्वावप्येका कोटिः, तथा बीजक्षेत्रजौ, यत्र क्वचनोत्पादितोऽप्येषामेवान्यतम इति त्रयाणामन्तर्भावे द्वादशत्वस्यैव सम्पत्तेस्तथाऽपि क्रमव्यत्ययस्तदवस्थ एव। मानवे तु "औरसक्षेत्रजौ पुत्रौ पित्र्यरिक्थस्य भागिनौ। दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः॥" इत्यत्र पुत्रिकाया औरससमत्वेनौरस एवान्तर्भावितत्वात्, तस्याः पूर्वं स्वातन्त्र्येणोक्तत्वात्तद्भिन्नावेवात्र विवक्षिताविल्याशयेन च तावुक्त्वा इतरे दशेत्युक्त्वा तथैव क्रमेणोक्तानि तल्लक्षणानि; तथाहि--" स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः। तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकम् ॥ यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा। स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥ माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणं। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नः तस्य स्याद्यस्य तल्पजः॥ मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते॥ पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते॥ क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽथ वा॥ या तु पत्या परित्यक्ता विधवा वा यथेच्छया। उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ॥ यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्। स पारयन्नेव शवस्तस्मात् पाराशवः स्मृतः॥" इति। तल्पं—दाराः; यथा गुरुतल्पग इति। "तल्पं शय्याट्टदारेषु" इत्यमरः। व्याधितस्य—अप्रतीकारराजयक्ष्मादिरोगाक्रान्तस्य। स्वधर्मेण—प्रागुक्तेन। सदृशं—सवर्णम्। गुणदोषविचक्षणं—प्रौढम् अत एव पुत्र गुणैर्युक्तम्। न च ज्ञायेतेति-हीनाधिकपुरुषजत्वमन्तरेण सवर्णजत्वनिश्चये अस्य पुरुषस्य अयमित्येव न ज्ञायते चेत्यर्थः। मातुर्बहुगामिनीत्वे इदम्। यस्येति,—यस्य तल्पजः स्यात्तस्य स इत्यर्थः। मातापितृभ्यामिति—बहुपुत्रतया भरणासामर्थ्येन केनचिद्दोषेण वेत्यर्थः। पुत्रं तद्बुद्ध्या परिग्रहो न तज्जीवितेच्छया। येति

१.—९. १६५. । २. प. विल्वा० । ३.—१६६—७८. । ४. तृ० ना० २८७. । ५. प. फ. ब. ज्ञायेत अस्यायमिति नज्ञायेत चेत्यर्थः। ६. प. फ. ब. त्यर्थः सहोढ इ० ।

Cole.: Ch. I, Sec. xi, §§ 33.

## सुबोधिनी

वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती । वोढुस्स गर्भो भवति सहोढ इति चोच्यते ॥ क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीत[1]स्तु सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥" गुणैः सदृशोऽसदृशो वेत्यर्थः । "या पत्या वा परित्यक्ता विधवा वेच्छयाऽऽत्मनः । उत्पादयेत् पुनर्भूत्वा सपौनर्भव उच्यते[2] ॥" [3]पुनर्भूत्वा—पुनर्गृहीणी भूत्वेत्यर्थः । "मातापितृविहीनो यस्त्यक्तो वा स्यादकारणे । आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः॥" अकारणे—पातित्यादिकारणाभावे । स्पर्शयेत्—दद्यादित्यर्थः।"विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।" इत्यमरः।"यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम् । स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः[6] ॥" स पारयन्नेव शव इति—स पुत्रः पितॄन् श्राद्धादिभिः पारयन् प्रीणयन्नपि इतरपुत्रवदप्रशस्तत्वाच्छववच्छव इति पारयञ्छवः पारशव इत्यर्थ. । अस्य शूद्रापुत्रस्य विवाहिताजन्यत्वेनानुलोमजत्वादौरसत्वं यद्यप्यविशिष्टं, तथाऽप्यन्येषु सत्सु तस्य सकलरिक्थहारित्वाभावादस्मिन् प्रकरणे प्रान्ते परिगणनम् । वासिष्ठे तु "तृतीयः पुत्रः पुत्रिकैव" इति क्रमव्यत्ययः। एवं स्मृ-

## बालंभट्टी

—या ज्ञाता अज्ञाताऽपि वा गर्भिणी सती संस्क्रियते इत्यर्थः।सहोढ इति—तया सहोढ इत्यर्थः । पुनर्भूत्वा —पुनर्गृहीणी भूत्वा । अकारणात् — पातित्यादिकारणाभावात् । सकारणे इति पाठान्तरम् । स्पर्शयेत्—दद्यात् । "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।"इत्यमरः। स पारेति—स पुत्रः पितॄन् श्राद्धादिभिः पारयन् प्रीणयन्नपि अन्यपुत्रवदप्रशस्तत्वाच्छवतुल्य इति पारशव इत्यर्थः । यद्यप्यस्य शूद्रापुत्रस्य विवाहिताजन्यत्वेनानुलोमजत्वेन च मूर्द्धावसिक्तादिव दौरसत्वमविशिष्ट, तथाऽप्युक्तरीत्या अप्रशस्ततत्वेन ततो भेदेन तत्र गणनम्। एतेषु सत्सु तस्य सकलधनहरत्वाभावादत्र प्रकरणान्ते परिगणनमिति बोध्यम् । वासिष्ठे तु औरसानन्तरं "तदलाभे नियुक्तायां क्षेत्रजो द्वितीयस्तृतीयः पुत्रिकाविज्ञायते, पौनर्भवश्चतुर्थः, कानीनः पंचमो, दत्तकः षष्ठः, क्रीतः सप्तमः, स्वयमुपागतोऽष्टमोऽपविद्धोनवमो, गूढोत्पन्नो दशमः, कृतएकादश शूद्रापुत्र एव द्वादशो, भवति" इत्युक्तम्[8] । वैष्णवे तु "औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगुढोत्पन्नसहोढदत्तक्रीतस्वयमुपागतापविद्धयत्रक्वचनोत्पादिता द्वादश" इत्युक्तम् । देवलीये तु "औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपागतकृत्रिमक्रीता द्वादश" इत्युक्तम् । नारदीये तु—

१. त तस्संस्कृतस्तु० । २—९ १७१—१७५. । ३. त. पुनर्भूत्वा, नास्ति । ४. वात्य० । ५, द्वि० ब्र० ४२८. । ६.—९. १७७, ७८. । ७. द. अत्र । ८. १७. १३. । ९. फ. भ. अका० । १०—१७. १४. ।

Cole.: Ch. I, Sec. xi, §§ 33.

34 **पुत्रव्यतिरिक्तरिक्थभाग्विषयत्वेन प्रसिद्धत्वाच्च ।
वासिष्ठादिषु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन पाठो गुणवदगुणवद्विषयो वेदितव्यः ।

## सुबोधिनी

त्यन्तरेष्वपि द्रष्टव्यो ग्रन्थगौरवभयान्न लिख्यते । अत. कथं "पूर्वाभावे परः" पर इत्युक्तिरित्याशङ्क्याऽऽह—वासिष्ठादिषु वर्गद्वयेऽपीति । अयमत्र परिहाराभिप्रायः । मनुना—"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥" इति[1] स्वसपिण्डसमानोदकानां सन्निहितरिक्थहरान्तराभावे प्रथमषट्कस्य[2] तद्रिक्थहरत्वं द्वितीयषट्कस्य तदभावं च प्रतिपाद्य तत्प्रसङ्गादेव पश्चादौरसादिपुत्रस्वरूपप्रतिपादनात् उपक्रमानुसारेण न तत्त्वत एष एव क्रम इति[3] विज्ञायते । अत एव तत्र " क्रमश " इत्युक्तिरपि सर्वात्मना अमुमेव क्रमं न नियच्छति ; अपि तु कस्मिंश्चिद्विशेषे[4] सत्येव । असाव (पि) विशेषो गुणवदगुणवद्रूप एवेति । एवं स्मृत्यन्तरपाठस्याऽपि गतिरिति युक्तियुक्तं चैतद्याज्ञवल्क्येनोक्तम् । तथा हि -- औरसपौत्रिकेययोरौरसमत्वात् तत्समत्वादेव क्षेत्रजगूढजकानीनपौनर्भवानां तु स्वबीजक्षेत्रोत्पन्नत्वादेव दत्ताद्यपेक्षया प्राबल्यम् । सहोढजस्य स्वकीयत्वे परिगृहीतक्षेत्रोत्पन्नत्वेऽप्युत्तरषट्कयोगो[6] वाचनिक एवेति[7] सर्वमनवद्यम् । एतच्च सर्वं युगान्तरविषयम् । कलौ त्वौरसदत्तकावेव, औरससमत्वात् पुत्रिका च—"दत्तौरसेतराणां तु पुत्रत्वे न परिग्रहः ।" इति स्मरणात् । अत्र शेषे " कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः।" इति वाक्यशेषः । शिष्टाचारोऽपि तथैव दृश्यते कलौ । ननु माभूदितरवचनविरोधः; गौतमेन त्वौरससमस्य पौत्रिकेयस्य दशमत्वेन

## बालंभट्टी

"औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च। कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा । स्वयंचोपगतः पुत्रा द्वादशते प्रकीर्तिताः॥" इत्युक्तम् । तस्मात् क्रमव्यत्ययकृतविरोधो दुष्परिहरः; अत आह —वासिष्ठादिष्विति।अगुणवदिति,—असुज्वत इति भाष्यप्रयोगवदयं साधुः। अयं भावः—मनुना "औरसः"इत्यादिना वर्गद्वयेनाऽऽद्यस्य तत्त्वं द्वितीयस्य तदभाव च[10] प्रतिपाद्य तत्प्रसङ्गादेवाऽग्रे स्वल्पव्यवधानेनौरसादिपुत्रस्वरूपप्रातपादनेनापक्रमानुसारणे तथोक्तिर्न तु तत्त्वत एष क्रम इति ज्ञायते । अत

१. प्रतिसि० । २.—९. १५९, ६०. । ३. द. स्य तद० । ४ थ. द तिज्ञा० ॥ ५ थ. षेगुण● (?) । ६. थ. द. षट्कपाठो वा० । ७. थ. तिसर्वे युगा० । ८. थ. द. त्रवाक्यश०। ९.—१३. ४५, ४६. । १०. भ. च प्रतिपादनेनो० ।

## बालंभट्टी

एव तत्र क्रमश इत्युक्तिरपि तत्परैवेति न सर्वथा तात्त्विकैतत्क्रमबोधिका; अपि तु कस्मिंश्चिद्विशेषे असत्येवाऽसौ ; विशेषे तु गुणवद्भूय एवेति । एवं स्मृत्यन्तरपाठस्यापि गतिः । युक्तियुक्तश्च मूलोक्तक्रमः ; तथाहि—औरसपुत्रिकयोरौरसत्वात्तत्समत्वाच्च प्रागुक्तिः ; क्षेत्रजगूढजद्वितीयकानीनपौनर्भवाणां स्वबीजक्षेत्रोत्पन्नत्वादेव दत्ताद्यपेक्षया प्राबल्यम् । आद्यकानीनस्यापि स्वीयकन्योत्पत्तिकत्वादेव ततः प्राबल्यम् । अवान्तरमपि तारतम्यं स्पष्टमेव सर्वेषाम् । एवमग्रेऽपि सहोढजस्य स्वबीजाश्रयत्वेन परिगृहीतक्षेत्रोत्पन्नत्वेऽप्युत्तरषट्कयोगो गर्भोत्पत्तिकाले स्वक्षेत्रत्वाभावेनेति[1] सर्वमनवद्यमिति । इदमपि सर्वं युगान्तरविषयकम् । कलौ त्वौरसदत्तकावेव औरससमत्वात् पुत्रिका च—"दत्तौरसेतरेषां तु पुत्रत्वे न परिग्रहः।" इति माधवादिस्मरणात् । "एतानि लोकगुप्त्यर्थं कल्यादौ महात्मभिः । निवर्तितानि कर्माणि" इति चरमे अस्यान्वयः । शिष्टाचारोऽपि[2] तथैव दृश्यते । केचित्तु औरसेन पुत्रिकासंग्रह एव ; दत्तपदेन तत्समकक्षक्रीतस्वयंदत्त कृत्रिमाणामपि ग्रहणम् ; अत एव "श्रेयसः श्रेयसः" इति[3] मनूक्तिः, "स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते॥" इति वृद्धगौतमोक्तिः, "दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता। सप्तमी पञ्चमी चैव गोत्रं तत्पालकस्य च॥" इति बृहन्मनुः, "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुत·।" इति कलिधर्मप्रस्तावे पराशरश्च सङ्गच्छते । औरसादीनां सर्वेषां पुत्राणां प्रकृतत्वा दौरसादीनुपक्रम्य "तेषां पूर्वः श्रेयान् स एव दायहरः स चान्यान् बिभृयात्" इति वैष्णवादौरसादीनां पुत्राणां पूर्वपूर्वाभावे परः परः रिक्थमर्हति । पूर्वसद्भावे परसंवर्धनं स एव कुर्यात्तदप्यपवादेतरविषयम् । यदि तु समानरूपा बहवः पुत्राः, तदा सर्वे एव विभज्य धनं गृह्णीयुरिति मनुव्याख्यातारः । यद्यपि मन्वादिकं युगान्तरपरतयाऽपि सुयोजम्, तथाऽपि अन्त्यमन्यथा दुर्योजमेवेत्याहुः । वस्तुतो नियोगनिषेधेनैव क्षेत्रजनिषेधे तत्र क्षेत्रज इत्यौरसविशेषणमावश्यकं यथा, तथा कृत्रिमदत्तक इत्यपि दत्तस्यैव विशेषणमिति बोध्यम् । नन्वेवमपि मूलस्य[4] गौतमविरोध एव । तेन हि औरससमस्य पौत्रिकेयस्य दशमत्वेन परिगणनं कृतम् ; तथाहि—"पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः[5] कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयन्दत्तक्रीता गोत्रभाजः चतुर्थांशभागिन इति । कानीनादीनां तुर्यांशभागित्वमत्रोक्तं चौरसाभावे पुत्रिकादिसत्त्वे च ज्ञेयम् । एवं क्षेत्रजादीनामपि तत् क्रमतो ज्ञेयमन्यथा पूर्वविरोधो दुष्परिहर एव । स्वयंदत्तक्रीतयोस्तत्त्वं वसिष्ठाद्येकवाक्यतया; प्रागुक्तरीत्या गूढोत्पन्नस्य तत्त्वमौरसाद्यभावविषयकमिति बोध्य-

---

१. प. फ ब वेऽपीति । २. प. फ. ब- रोऽपि ग्रहणम् । ३.—९. १८४ । ४. भ 'मूलस्य' नास्ति । ५. प. फ. ब. रिक्थभागिनः इ०।

Cole.: Ch. I, Sec. xi, § 34.

35 **गौतमीये तु पौत्रिकेयस्य दशमत्वेन पाठो विजातीयविषयः। तस्मात्स्थितमेत-
36 त्पूर्वपूर्वाभावे परः परोंऽशभागिति। **यत्तु "भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥" इति, तदपि भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थम् ;

## सुबोधिनी

पाठात् तद्वाक्याविरोध इत्याशङ्क्य परिहरति गौतमीये त्विति। विजातीयविषय इति। ब्राह्मणादेः क्षत्रियादिस्त्रीषूत्पन्नपौत्रिकेयविषय इत्यर्थः। ननु "भ्रातॄणामेकजातानाम्" इत्यनेन भ्रातृपुत्रेणैवेतरभ्रातॄणामपि पुत्रित्वप्रतिपादनात् द्वादशभ्योऽधिकोऽन्यः स पुत्र इति द्वादशत्वकथनं पुत्रेष्वनुपपन्नमित्याह—यत्तु भ्रातृणामेकजातानामित्यादिना। तत्रहेतुमाह—

## बालंभट्टी

मित्यत आह—गौतमीये त्विति।विजातीयेति—ब्राह्मणादेः शूद्रान्यैक्षत्रियादिस्त्रियामुत्पन्न-पुत्रिकापुत्रविषय इत्यर्थः। तत्र परिगणनमात्रोक्त्या क्रमानुक्त्या तन्मात्रपरमेव तत्सर्वं न तु क्रमपरम्। अतः क्रमो मूलोक्त एव—"पूर्वाभावे परः पर." इत्युक्तेरिति केचित्। यद्यपि वैष्णवादौ औरसादीनां प्रागुक्तानां प्रथमद्वितीयादित्वेन कथनादेतेषां पूर्वः पूर्वः श्रेयान् स एव दायहर इत्युक्तेश्च क्रमो विहित एव; तथाऽपि मूलोक्त एव युक्तियुक्त इति प्रागुक्तमिति बोध्यम्। तदेतदभिप्रेत्यैव उपसंरहति— तस्मादिति। नन्वेवमपि मूलादेर्मनुविरोध एव। भ्रातॄणामिति मनुना एकेन भ्रातृपुत्रेणैवान्येषामप्यपुत्रभ्रातॄणां पुत्रवत्त्वप्रतिपादनेन मूलकृता च "औरसो धर्मपत्नीजः" इत्यादिना "पूर्वाभावे परः परः" इत्यन्तेन विभागकथनद्वारादिना द्वादशत्वस्य पुत्राणां प्रतिपादनेन द्वादशभ्योऽधिकोऽन्यस्तत्र कथमप्यनन्तर्भूतः स पुत्र इति लाभेन तथा द्वादशत्वासङ्गतेरित्याशयेनाऽऽह—यत्तु भ्रातॄणामिति।यत्तु—यदीप। परिहरति— तदपीति। परमतमाह—भ्रातृपुत्रस्येति सम्भवे इत्यनेनान्यथा अन्येषामपि अवकाशः सूचित इति न तत्प्रतिपादकस्मृतिविरोध इति सूचितम्। निषेधार्थमिति—तथा च तस्य दत्तकत्वमिति न विरोध इति भावः। ननु निषेधार्थमित्यस्य निषेधाभिधेयकमित्यर्थः; उत निषेधतात्पर्यकमित्यर्थः। नाऽऽद्यः—शब्दात्तदप्रतीतेः। नान्त्यः—तथा तात्पर्यस्य लक्षणां विना दुर्वचत्वेन वक्ष्यमाणरीत्या वचनोपपत्त्या मुख्यार्थबाधाभावेन तथाऽर्थे साधकस्मृत्यन्त-

---

१. म० ९. १८२. । २. त. तीय इति । ३. त. त्र येन। ४ भ द्राक्ष०। ५. भ. कृदादिनाचौ०। ६. व्यव० १२८. । ७. भ. तद्भावः।

Cole.: Ch. I, Sec. xi, §§ 35—36.

न पुनः पुत्रत्वप्रतिपादनाय—"तत्सुता गोत्रजा बन्धु:'

गिनः॥" इति। अत्र क्षेत्रजः पुत्रिकापुत्र एवाभिप्रेतः। नन्वसावौरसतुल्य एव। सत्यम्; तेनैव चोक्तं—"पितृरिक्थस्य भागिनौ" इति। कथं तर्हि "षष्ठं पञ्चममेव वा' इति? जनकपितृसमानाभिप्रायमेवैतत्—मातामहस्य ह्यसावौरसतुल्यत्वात्। कृत्स्नांशहरः पितुः पुनः परार्थेनोत्पादितत्वादनष्टः। तदभिप्रायमेव च वासिष्ठं "तृतीयः पुत्रिकापुत्रः" इति। पित्रा क्षेत्रत्वेनैवापत्योत्पादनायान्यस्मै दीयते ततस्तस्यासौ क्षेत्रज इति शक्यते वक्तुं जनयितुरपि — परार्थमुत्पादितत्वात्। संस्कृतत्वेन क्षेत्रमात्रतया स्त्रीसंबन्ध इति क्षेत्रजव्यपदेशः। तत्रौरसाविशिष्टं पितृरिक्थभाक्त्वं मातामहाभिप्रायं, भागवैषम्यं तु जनकाभिप्रायमिति अविरोधः। पञ्चमषष्ठांशयोस्त्वौरसत्वेच्छया विकल्पः। अन्यत्राऽप्येवमेव भागवैषम्यकल्पनम्। अथ स्थिते पूर्वाभावे द्रव्यसंबन्ध इति। यत्पुनरिदं स्वायंभुवम्—"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः॥" अस्य कोऽर्थः? क्षेत्रे जारजाः पञ्च सत्यौरसेऽप्यंशभाजः। कानीनादयस्तु पूर्वाभाव एव। एतेन वासिष्ठं व्याख्यातम्। तथा च शब्दः—"द्वौ भागौ पितुः द्वावेवौरसस्य त्रयः क्षेत्रजपुत्रिकापुत्रयोः एकैकमितरेषाम्" इति। अथ क्षेत्रजपुत्रिकापुत्रयोरेकैकस्याप्यर्धभाक्त्वम्, पितृविभागवचनाच्च। जवित्येव पितर्येते सत्यौरसेंऽशभाजः। ध्वन्याचार्यवचनं पूर्वाभाव एवोत्तराधिकार इति व्यवस्था। यत्तु क्रमान्यत्ववचनात्तत्पितुरे-

## सुबोधिनी

तत्सुतागोत्रजा बन्धुरिति। 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा

## बालंभट्टी

राभावेन तात्पर्यानुपपत्त्याद्यभावेन च निष्प्रयोजनलक्षणाया अनौचित्येन तदर्थासम्भवात्। तथा[2] चेदमयुक्तमतो वक्ष्यमाणं स्वाभिमतमर्थं हृदि निधाय स्वमतेन प्रकृतं विरोधं परिहरति—न पुनरिति,—न चेत्यर्थः। पुत्रत्वेति,—अपुत्रभ्रातृनिष्ठपितृतानिरूपितपुत्रतेत्यर्थः। कन्यादिसत्त्वे इत्यादिः। अत्रैवं तात्पर्यं न तूक्तार्थ इत्यत एवेदं उपपादयितुमाह—तत्सुता गोत्रजा इति,—"पत्नीदुहितरश्च" इत्यादिनाऽत्र वक्ष्यमाणेन भ्रातृभावे भ्रातृसुतस्य धनभाक्त्वं प्र-

१—१७. १३.। २. भ. तथार्थे साधकस्मृत्यन्तराभावेनर्थं (?)। ३. फ. त्वे०। ४. व्यव० १३५.। ५. भ. णेन तद्व्यवच्छेद्यमाह।

Cole.: Ch. I, Sec. xi, § 36.

इत्यनेन विरोधात् ॥ १३२ ॥

37 **इदानीमुक्तोपसंहारव्याजेन तत्रैव नियममाह —

## सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥

38 समानजातीयेष्वेव पुत्रेषु अयं "पूर्वाभावे परः परः" इत्युक्तो विधिः; न भिन्नजाती-

---

वेच्छाविकल्पतया द्रष्टव्यम्। तदभावे त्वाचार्योक्त एव क्रम इति। अनया दिशा अन्यान्यप्ये- वंजातीयकानि विभागवाक्यानि व्याख्येयानि ॥ १३२ ॥

सर्वे चैते दत्तकादयस्सजातीया इत्येतत् प्रदर्शयितुमाह—**स जातीयेष्वि- त्यादि ॥ ११३ ॥**

---

### सुबोधिनी

36 बन्धुः शिष्यः सब्रह्मचारिणः ॥" इत्यत्र *[भ्रात्रानन्तरं भ्रातृसुतस्य रिक्थहरत्वप्रतिपादक- याज्ञवल्क्यवचनविरोधः भ्रातृपुत्रेणेतरभ्रातॄणां पुत्रित्वे तस्य पुत्रत्वेन सर्वेभ्यः पित्रादिभ्यः पूर्वमेव रिक्थभाक्त्वादित्यर्थः]* ॥ १३२ ॥

### बालंभट्टी

तिपादितम्। यदि तु मनोस्तथाऽर्थः स्यात्तदा तस्याप्यौरसादितुल्यतया पुत्रत्वेन सर्वेभ्यः पत्न्या- दिभ्यः पूर्वमेव धनभाक्त्वस्य लाभेन तद्विरोधः स्पष्ट एव । किंच तथा सति अस्य क्रमप- ठितद्वादशमध्येऽन्तःपातस्य दुष्करत्वेन तदग्रे एव निवेशो वाच्यः ; तथा च सर्वतोऽत्रा- पकृष्टत्वलाभेन वक्ष्यमाणस्मृतिकदम्बविरोधापत्तेः । प्रकृतसङ्ख्याविरोधस्तु न दत्तः—शङ्का- विषयत्वात् । नचैवमपि, तथा सति त्रयोदशपुत्रत्वापत्त्या "पुत्रान् द्वादश यानाह" इति मनु- विरोध एव कुतो न दत्त इति वाच्यम् । तदाशयस्य वक्ष्यमाणत्वादिति भावः । एतत्तत्व- मनुपदमेव स्फुटीभविष्यतीत्यलम् ॥ १३२ ॥

सङ्गतिमाह—इदानीमिति। उपसंहारमात्रपरत्वे पौनरुक्त्यं परित्यागेऽपि तथा चमत्काराभा वेनाऽऽह —व्याजेनेत्यादि। तत्रैव—क्षेत्रजादिष्वेवं। नियमस्वरूपं सर्वंवाक्यमितिन्यायेनाऽऽह —समानेति। तद्व्यवच्छेद्यमाह—न भिन्नेति। तथा च एते सवर्णा एव युक्ताः पुत्रा भवन्ति। अत एव "सवर्णायाम्" इति बोधायनेनोक्तम् । एवं च एते क्षेत्रजादयो यद्यधिकवर्णादुत्पन्नाः, तदाऽपि तन्नामधेयभाजो भवन्त्येव ; अपि तु सवर्णादुत्पन्ना इव प्रशस्ततरा न भवन्ति ।

---

१. व्यव. १३५. । २.—९. १५८ ।

Cole.: Ch. Sec. xi, §§ 36—38

येषु। **तत्र च कानीनगूढोत्पन्नसहोढजपौनर्भवाणां सवर्णत्वं जनकद्वारेण न स्वरूपेण 39
—तेषां वर्णजातिलक्षणाभावस्योक्तत्वात्। ** तथाऽनुलोमजानां मूर्धावसिक्तादीनामौरसे 40

---

अयं मया विधिरुक्त इति वदन् स्मृत्यन्तरोक्तानां विषयान्तरेऽर्थवत्तां दर्शयति । तच्च व्याख्यातमेव पितर्युपरत एवेयं द्रव्यसंबन्धे पौर्वापर्यविकल्पना इति । जीवति तत्तु स्मृत्यन्तरोक्तया विभागव्यवस्थयेति । एतदेव स्पष्टयति मृते पितरि विभागव्यवस्थेयमस्माभिर्दुर्निरूपत्वात् निरूपिता । जीवति तु जातोऽपि दास्यां शूद्रेण पितुरिच्छयांऽशहरो भवेत् । इत्यनादरं विशेषनिरूपणस्य दर्शयति ॥ १३३ ॥

---

## सुबोधिनी

*[कानीनादिषु सजातीयत्वं दर्शयति—तत्र च कानीनेति । तेषां वर्णजातिलक्षणाभावस्योक्तत्वादिति, — कुण्डगोलकयोरन्यतरत्वेन वर्णाद्यभाव आचाराध्यायेऽभिहित इत्यर्थः । ]* मूर्धावसिक्तादीनां दायहरणे क्रममाह—तथाऽनुलोमजादीनामिति । 39

## बालंभट्टी

सजातीयेष्विति सजातीयनियमात् यदि हीनवर्णादुत्पन्नाः, तदा प्रतिलोमजत्वेन निन्द्या एवेति बोध्यम् । तथा सति प्रसक्तपूर्वविरोधाभावाय कानीनादिषु सजातीयत्वमाह— तत्र चेति,—तेषां पुत्राणां मध्ये इत्यर्थः । तथा नियमे सति च' इत्यर्थो वा । ननु स्वतस्तत्कुतो नेत्यत आह—स्वरूपेणेति,—स्वरूपतस्तेषां कुण्डगोलकयोरन्यतरत्वेन आद्यकानीनस्य व्यभिचारजन्यत्वेन च स्वतो वर्णजात्यन्तर्भावाभावस्य आचाराध्याये अभिहितत्वादित्यर्थः । नन्वेवमपि मूर्द्धावसिक्तादीनामन्ते ग्रहणे दायहरत्वानुक्त्या न्यूनता मूलादौ तेषां तत्रानन्तर्भावात्; उपलक्षणतया तत्र तेषां ग्रहणे प्रागुक्तरीत्या मध्ये दुर्ग्रहत्वेनान्ते ग्रहणे द्वादशाभावे तेषां दायहरत्वापत्तिः उपसंहारविरोधापत्तिश्च; अतः अनुक्तं विशेषान्तरमाह — तथेति । प्रतिलोमजव्यावृत्तये आह — अनुलोमेति । प्रागुक्ताशयेनाऽऽह — औरसेति। तथा च परांश एवायं नियमो न सर्वतः पूर्वांशे इति तत्रासवर्णत्वेऽपि न बाधकमिति न शङ्कोक्तदोष इति भावः। अपिर्मुख्यपुत्रिकोभयसमुच्चायकः । आदिना विजातीयपुत्रिकाऽपि । एवं सति प्राप्तातिप्रसङ्गनिरासाय वक्ष्यमाणमूलसङ्गतये च आदिना पारशवान्यस्यैव ग्रहणमिति सूचयन् विशेषान्तर-

---

१. क- च. छ. 'न' नास्ति ।

Cole. : Ch. I, Sec. xi. §§ 39-40.

41 ष्वन्तर्भावात्तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं बोद्धव्यम् । **शूद्रापुत्रस्त्वौरसोऽपि कृत्स्नं भागमन्याभावेऽपि न लभते ; यथाऽऽह मनुः—"यद्यपि स्यात्तु सत्पुत्रो यद्यपु 42 त्रोऽपि वा भवेत् । नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः॥" इति । **यदि सत्पुत्रो विद्यमानद्विजातिपुत्रो यद्यपुत्रोऽविद्यमानद्विजातिपुत्रो वा स्यात्, तस्मिन्मृते क्षेत्राजादिर्वाऽ 43 न्यो वाऽसपिण्डः शूद्रापुत्राय तद्धनाद्दशमांशादधिकं न दद्यादिति**अस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सकलधनग्रहणं गम्यते ॥ १३२ ॥

## सुबोधिनी

41 नाधिकं दशमाद्दद्याच्छूद्रापुत्रायधर्मत इतीति,—*[नन्वेतदनुपपन्नम्।"चतुस्त्रिद्व्येकभागाः स्युर्वर्णशः"इति शूद्रापुत्रस्यैकांशहरत्वाभिधानात्, अत्र दशांशहरत्वाभिधानात्। उच्यते। ब्राह्मणीपुत्रस्य चत्वारोंऽशाः क्षत्रियापुत्रस्य त्रय इति सप्त—वैश्यापुत्रस्य द्वाविति नव, शूद्रापुत्रस्य त्वेकः—इति मिलित्वा दश। एवं च "चतुस्त्रिद्व्येक" इत्यत्राऽपि दशमांशहारित्वस्योक्तत्वान्न विरोध इति सर्वमनवद्यम् ]* ॥ १३२ ॥

## बालंभट्टी

माह—शूद्रेति,—अन्याभावेऽपीति—मुख्यौरसादिपुत्राभावेऽपीत्यर्थः । उभयत्र मानमाह—यथाऽऽहेति । मन्वर्थमाह— यदीति,—यद्यपीत्यर्थः । क्वचित्तथैव पाठो वचनानुरोधेन । पितेति शेषः । इदञ्च मृतपितृकधनविभागविषयकम्—अक्षरमर्यादया तथैव प्रतीतेः । जीवद्विभागे तु प्रसादादनेकांशः । अप्रसादे तु तावदेव इत्युक्तं—यत्पुनर्ब्राह्मणेत्यादिना । अत एव तद्विरोधो न । तदेतदभिप्रेत्याऽऽह — तस्मिन्निति,—पितरीत्यर्थः। दद्यादिति स्वारस्यादाह—क्षेत्रेत्यादि। दशमांशादधिकमिति,— न चेदमनुक्तं दशमांशहारित्वं "चतुस्त्रिद्व्येकभागाः स्युर्वर्णशः" इति मूलोक्तेन शूद्रापुत्रस्यैकांशहारित्वेन विरुद्धमिति वाच्यं; ब्राह्मणीपुत्रस्य चत्वारोंऽशाः, क्षत्रियापुत्रस्य त्रयः वैश्यापुत्रस्य द्वौ शूद्रापुत्रस्यैक इति मिलित्वा दशेति तत्रापि दशांशहारित्वस्यैवोक्तत्वात् । तत्र शूद्रापुत्रांशापेक्षया चत्वारो भागा बोध्याः । इतिः—शब्दार्थसमाप्तौ । तात्पर्यार्थमाह—

43 अस्मादेवेति,—उक्तमनुवचनादेवेत्यर्थः । *[तदेव तथेत्यादिना प्रतिपादितमिति न तस्य निर्मूलता ]*; नापि कश्चित्तत्र विशेष इति भावः ॥ १३२ ॥

१.—९. १५४. । २. क. सपु० । ३. व्यव० १२५. । ४. श. द. नात् मैवं ब्रा० । ५ त. दशांश० । ६. प. फ. ब. माहयदीति । ७. भ. दादाने एकां० ।

Cole.: Ch. I, Sec. xi, §§ 40—43.

1

**अधुना शूद्रधनविभागे विशेषमाह—

**जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ॥ १३३ ॥**
**मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ।**
**अभ्रातृको हरेत्सर्वं दुहितॄणां सुताहृते ॥ १३४ ॥**

**शूद्रेण दास्यामुत्पन्नः पुत्रः कामतः पितुरिच्छया भागं लभते । पितुरूर्ध्वं 2 तु यदि परिणीतापुत्राः सन्ति, तदा ते भ्रातरस्तं दासीपुत्रं अर्धभागिनं कुर्युः । स्वभागादर्धं दद्युरित्यर्थः । अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नं धनं दासीपुत्रो गृह्णी-

---

इच्छैव च— **मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनमित्यादि ॥ १३४ ॥**

अर्धवचनं च न्यूनांशप्रतिपत्त्यर्थं; तथा च बृहस्पतिः—"कामतश्च शूद्रावरोधजनस्य

## सुबोधिनी

ये परीणीतापुत्राः सन्तीति— विवाहितायाः पुत्रा इत्यर्थः । स्वभागादर्धं दद्युरिति—स्वांशापेक्षया अर्धं समुदितद्रव्यात् दद्युरित्यर्थः ॥ १३३ ॥ १३४ ॥

## बालंभट्टी

अत एव वक्ष्यमाणसङ्गतिमेवाऽऽह—अधुनेति,—पूर्वोक्तोपसंहारस्य सविशेषस्य कथनानन्तरमित्यर्थः । तत्प्रसङ्गेन तत्प्रकरणेन तद्वक्तव्यत्वस्याऽप्यावश्यकत्वात् । उत्पन्नः सोऽपि कामतः इत्यस्य व्याख्या—पितुरिति । एवं पूर्वार्द्धेन जीवत्पितृकविभाग उक्तः । मनुरपि—"दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् । सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥" इति । उत्तरार्धं द्वितीयविभागपरं स्पष्टमेवेत्याह—पितुरिति,—मरणादिति शेषः । परिणीतापुत्राः—विवाहितापुत्राः । तदा ते भ्रातर इति पाठः । अर्धभागिकं,— कर्मधारयान्मत्वर्थीयष्ठन् । अर्धभागिनमिति पाठे इनिर्बोध्यः । अर्धत्वस्य सापेक्षत्वादाह—स्वभागादिति । तेषां प्रत्येकं यो भागोंऽशस्तत्रैकांशापेक्षया अर्धं समुदितद्रव्यात् दद्युरित्यर्थः । तृतीयार्धार्थमाह—अथेति । हरेदित्यनेन

---

१. क. ङ. च. छ. झ 'तदा' नास्ति। २ भ. 'अधुनेति' नास्ति । ३.—९. १७९।

Cole.: Ch. I, Sec. ii, § 1.—2.

यात् । यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति । तत्सद्भावे त्वर्धभागिक एव दा-

बालंभट्टी

जन्मना पुत्रवत्तस्यापि स्वत्वं सूचितम् । दुहितॄणामित्याद्यर्थमाह—यदीति । दुहितृसुता- पेक्षया दुहितुः प्राथम्यस्य मूले वक्ष्यमाणत्वेन तत्सुतसत्त्वेऽपि कृत्स्नग्रहणे किमु वक्तव्यं साक्षाद्दुहितृसत्त्वे इति कैमुतिकन्यायसिद्धमर्थमाह—परिणीतादुहितर इति । एवमे- वाऽऽह—तत्पुत्रा इति । केचित्तु दुहितॄणामित्यत्राभावे इति शेषः । सुतादित्यत्रापि प्रत्यासत्त्या तत्संबन्धः, गामश्व इतिवत्समुच्चय इत्याशयोऽस्येत्याहुः । प्रत्यासत्तेरेवै- तत्तात्पर्यार्थमाकांक्षितमाह—तदिति,—अन्यतरेत्यर्थः । युक्त्यन्तरस्य वक्ष्यमाणत्वेनैतं- द्युक्तमिति तत्त्वम् अन्यस्याश्रुतत्वात्तस्य च प्रकृतत्वेन बुद्धिस्थत्वमित्यत्रापि तथैवेति भावः। अत्र गृहजातप्रसङ्गात् दासविषये किंचिदनुक्तमुच्यते । तत्र तावत् दासाः पञ्चदश—"गृह- जातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥ मोक्षितो महतश्चर्णात् युद्धे प्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव बडबाहृतः । विक्रेता चाऽऽत्मनः शास्त्रे दासाः पञ्चदश स्मृताः"॥ इति नारदः[2]।तत्र गृहजातादौ विशेषमाहतुर्मनुयाज्ञवल्कयौ—"दास्यां वा दासदा- स्यां वा यः शूद्रस्य सुतो भवेत्।सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः॥"इति[3]।"जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम्।अभ्रातृको हरेत् सर्वं दुहितॄणां सुताहते॥"इति च।तत्र दास्यां यस्यां कस्यांचित् ध्वजाहृताद्युक्तलक्षणायां तादृ- शस्य दासस्य यस्य कस्यचित् संबन्धिन्यां दास्यां वा यः शूद्रस्य सुतो भवेत्,स पित्रा परिणी- तापुत्रैः समांशभागो भवान् भवत्वित्यनुज्ञातः सममंशमौरसेन हरेदिति शास्त्रव्यवस्था नियतेत्याद्यर्थं इति कुल्लूकभट्टः। शूद्रस्यानूढायामनियुक्तायामपि जातः सुत एव । एवं य- द्यपि दासस्य दासी, तथाऽपि वचनात्तस्यां जातो न दासस्य दासः, सुतो वा, अपि तु स्वामि- न एव सुतः अनुज्ञातस्तेन सममंशमौरसेन हरेदिति मेधातिथिः । जीवत्पितृकविभागोऽयं द्वितीयार्थो मिताक्षरायां स्पष्टः । तत्र द्वितीयेऽपिना क्रीतादयोऽपि समुच्चीयन्ते ; यथा पाणि- नीये "भूतेऽपि" इत्यपिना अन्यकालसमुच्चयः ; यथा वा "बलात् दासीकृतश्चोरैर्विक्रीत- श्चापि मुच्यते।"इत्यत्रापिनाऽऽहितदत्तयोरन्यत्र पठितयोः समुच्चयो विज्ञानेश्वरकृतः । न चा- पिः सर्वसमुच्चायक एव इति वाच्यम् ; तं विनाऽपि मनुवत्तत्समुच्चयसंभवात् औरसान्यसमु- च्चयस्यौरसेन सममिति वदतो मेधातिथ्यादेः परिणीतापुत्राः सन्तीत्यादिवदतो विज्ञाने- श्वरस्य चानभिमतत्वात् । दत्तान्येषां कलिवर्ज्यत्वेन शूद्राणामविद्यत्वेन होमादिकरणासंभ-

१. भ नैतमुक्त० (?) । २.—५. २.—२८ । ३.—९. १७९ । ४. अ० ३. ३. २. । ५. भ. पूर्व । ६. भ. चयो विज्ञाने औ (?) ।

Cole. : Ch. I, Sec. xii, § 2.

## बालंभट्टी

वात्र पुत्रस्य दाने प्रतिग्रहे वाऽधिकार इति तदसंभव इति तात्पर्यात् । अत एव "तस्मात् शूद्रं समासाद्य सदा धर्मयथेप्सितं। प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्॥"इत्याङ्गिरसम् "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः।"[2]इति मूलं च सफलम्। अन्यथा तयोस्तत्रानधिकाराद्भवदुक्तरीत्यैव वचनान्तरविहितकर्मणां तयोरपि तद्वर्जनेन सिद्धौ तदानर्थक्यं स्पष्टमेव। तस्माद्यत्र तद्रहितं कार्यमिति वचनमस्ति, तदेव तद्रहितं तत्र भवति नान्यत। न चेह तथा वचनमस्ति; न च"ब्राह्मणानां सपिण्डेषु शूद्राणां शूद्रजातिषु। सर्वेषां चैव वर्णानां ज्ञातिष्वेव न चान्यतः ॥ दौहित्रं भागिनेयं वा शूद्राणां चापि दीयते । शूद्रः सर्वस्वमेवाऽपि अशक्तश्चेत् यथाबलम् ॥" इति शौनकीयमस्त्येवेति वाच्यम्; तस्य[3] कालिकापुराणैकवाक्यतया दत्ताख्यदासप्रतिपादने एव तात्पर्यात्; अत एव "ध्वजाहृतो भक्तदासो गृहजः क्रीतकृत्रिमौ । पैतृको दण्डदासश्च सप्त ते दासयोनयः ॥" इति[4] मन्वाद्युक्तकृत्रिमस्य सावकाशत्वम्; अन्यथा दत्त्रिमयोः पुत्रदासयोर्विविक्तत्वं न स्यात् । मन्त्रादिराहितविधिना पुत्रत्वमन्यथा दासत्वमिति तु न । पूर्वोक्तहेतोरत एव कालिकापुराणे अदासतेति छेद इति केषांचित् कल्पनाऽपि निरस्ता। अत एव तेषां दासत्वप्रतिपादनार्थं न तु परिसंख्यार्थमित्येवं मानवं व्याख्यातं व्याख्यात्रा। स्पष्टं चेदं वाचस्पतिगोविन्दार्णवादिनिबन्धेषु । ब्राह्मणादित्रये नास्तीत्यादि तु दत्ताख्यदासत्वस्यैव बोधकम् । न च तत्र सुतपदान्न तथेति वाच्यम्; मानवेऽप्यत्र सुतपदसत्त्वात्, किं च मनूक्तद्वितयिसमुच्चयानापत्तेः । एतेनोक्तसमुच्चायकत्वं तस्य ; नानुक्तसमुच्चायकत्वमित्यपास्तम् । प्रागुक्तसमुच्चायकत्वे मनूक्तद्वितीयसमुच्चयानापत्तेः "बलाद्दासी" इत्यत्राऽपि तेन तयोः समुच्चयानापत्तेश्च स्मृत्यन्तरीयेषु मानवस्यैव समुच्चयो न नारदीयस्येत्यत्रात एव मानाभावाच्च । एतेन[6] जात इत्यनेनैव मनूक्तोभयसंग्रह इति स व्यर्थ एवेत्यप्यपास्तं–फले संभवति निष्फलत्वकल्पनाया अन्याय्यत्वात् । एतदर्थमपि नारदीयं परिगणनम् । अन्यथाऽपि वैयर्थ्यं स्पष्टमेव । पादपूरकत्वकल्पनापेक्षयोक्तमेवोचितम्;अत एव मनुना दासदास्यां वेत्यप्युक्तम्। विज्ञानेश्वरस्तत्राऽप्यंशे उदासीनः एवं चान्येषामपि दासानां शूद्रस्वामिकधनांशहरणमुक्तरीत्या सिद्धम्। एवं सति "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।" इति मनोरन्यत्राप्यत्राप्यवर्णेषु तादृशेषु तथा बोध्यम्। न च मनुविष्ण्वादिभिः "अनन्तरः सपिण्डाद्यस्तस्य धनं हरेत्"इत्यादिना प्रत्यासत्तेरेवांशहरत्वे नियामक-

१. फ 'अतएव' आरभ्य 'अतएव' इत्यन्तं नास्ति । २. आ० १३ । ३. प. फ. ब. 'तस्य' नास्ति । ४.—८. ४१५. । भ दत्रिम०। ६. फ. तेन। ७. प ब. मूलो०। ८. म० १०. ४१.।

Cole,: Ch. I, Sec. xii, § 2.

बालंभट्टी

त्वस्योक्तत्वेन गृहजातस्य तत्सत्त्वेऽपि क्रीतादिदासस्य तदभावात् कथं तेषां तद्धरत्वमिति वाच्यं ; दत्तक्रीतादिपुत्रवदत्रापि उपाधिना तत्संभवात् "भ्रातरस्त्वर्धभागिनम्" इति "अभ्रातृको हरेत्" इति च तस्य भ्रातृत्वातिदेशाच्च मानवेन सुतत्वातिदेशाच्च। अन्यथा "मृते स्वामिन्यात्मीयम्"[३]इति विष्णूक्तं दासानां स्वामिमरणे स्वजातीयाशौचमपि न स्यात्। अत एव दासीगमनेऽन्यस्य दण्डोऽप्युक्तः—"अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्यास्वपि पुमान् दाप्यः पञ्चाशत् पणिकं दमम्॥ प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः।" [४]इत्यादि। अत एव च भक्तदासस्य स्वामिना सह विवाद उक्तः। अत एव च तेषां प्रव्रज्यावसितभिन्नानां दासत्वान्मुक्तौ कारणानि मोक्षक्रमश्चोक्तः—"बलाद्दासीकृतश्चौरैर्विक्रीतश्चाऽपि मुच्यते। स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि॥" इति मूलम्। "यो वैषां स्वामिनं कश्चिन्मोक्षयेत् प्राणसंशयात्। दासत्वात् स विमुच्येत पुत्रभागं लभेत च॥ अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्। संभक्षितं यत् दुर्भिक्षे न तच्छुद्ध्येत कर्मणा॥ भक्तस्योत्क्षेपणात् सद्यो भक्तदासः प्रमुच्यते। तवाहमित्युपगतो युद्धप्राप्तः पणे जितः॥ प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा। कृतकालव्युपगमात् कृतकोऽपि विमुच्यते॥ निग्रहाद्वडबायास्तु मुच्यते वडबाहृतः।" [५]इति नारदश्चाऽऽह। विनतायाः कद्रूदास्यान्मुक्तिरपि वैनतेयकृता महाभारते स्पष्टा। "स्वं दासमिच्छेद्यं कर्तुमदासं प्रीतमानसः। स्कन्धादादाय तस्यासौ भिन्द्यात्कुंभं सहांभसा॥ साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत्। अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत्॥" [६]इत्यन्त्ये सः। तस्मात् प्रत्यासत्तेः सत्त्वाद्युक्तं तस्यापि तद्धरत्वम्। किंच पुत्रत्वादिप्रत्यासत्त्यपेक्षया दासस्य प्रत्यासत्तिरुत्तमोत्तमा। अत एवोक्तं तेषां दासस्य दासोऽहमिति। "[५]अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा [६]क्षमस्व परमेश्वर॥" इति च अत एव च दास्यं नवविधभक्तिमध्ये गणितं "श्रवणं कीर्तनमिति तत्र तत्र मुख्याधिकारिणश्चोक्ताः 'श्रीविष्णोः स्मरणे परीक्षित्' इति। दास्यविषये आशौचमपि ऋषिभिः प्रतिपादितम्। अत एव "छाया स्वा दासवर्गास्तु दुहिता कृपणं परम्।"[७]इति मनूक्तिः सा चाऽऽचारे प्रपञ्चिता। अत एव च श्राद्धे दासादीनां तृप्त्यर्थं भूमावुच्छिष्टान्नदानमुक्तम्। श्राद्धविशेषे च पिण्डदानमुक्तं न चैवं "भार्या पुत्राश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥" [८]इति मनुविरोधः इति वाच्यम्। एते त्रय आर्जितधना अपि अधनाः स्वामिनः भर्त्रादेरेव हि तत्र स्वामित्वं ते यद्धनं अधिगच्छन्ति अर्जयन्ति तत्र स्वस्वामिकत्वादित्यर्थेनांशग्रहणे भार्यादिवदविरोधात् पारतन्त्र्यप्रतिपादनपरतया मेधातिथिविज्ञानेश्वरादिभिर्व्याख्यातत्वेन स्वस्वकर्मणस्तदनुज्ञया तत्सत्त्वे करणेऽपि, तद्धत्तस्यापि तदनन्तरं स्वातन्त्र्यस्य निर्विघ्नत्वाच्च नञोऽल्पार्थत्वेनास्योपपत्तिर्बोध्या। अत्र भार्यादिसाहचर्यमपि तेषां तत्त्वे लिङ्गं "पुत्राः शिष्यस्तथाभार्या दासी

१.—२२. २० । २. व्यव० २९०, १९.। ३.—५. ३०—३६. । ४.—५-४२, ४३. । ५. भ. 'अपराध' आरम्य 'मया' इत्यन्तं नास्ति । ६. भ. क्षमस्वेति च । ७—४. १८५. । ८.—८. ४१६. ।

Cole.; Ch. I, Sec. xii, § 2.

## बालंभट्टी

दासस्तु पञ्चमः। प्राप्तापराधास्ताड्याः स्युः रज्वा वेणुदलेन वा॥ अधस्तात्तु प्रहर्तव्यं नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरन् चौरस्याऽप्नोति किल्बिषम्॥" इति मानवोक्तसाहचर्यमप्येवम्। यथा शिष्यस्य सर्वाभावे तद्धारित्वमेवं वर्णत्रये दासस्यापीत्यपि मनुतो लब्धम्। अत एव "शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥ शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः॥" इति नारदः सङ्गच्छते। अत एव तुल्यदण्डोक्तिरपि सङ्गता—"दासत्वात्स विमुच्येत पुत्रभागं लभेत च।" इति प्रागुक्तनारदीयमप्यत्र लिङ्गम्। दायादुपागत इति पैतृके इति च तत्र गणनमपि गृहजातभिन्नानां तत्त्वे साधकम्। संबन्धसत्त्वे एव हि तथा। अन्यथाऽसंबन्धत्वं स्पष्टमेव। मनुनाऽपि गृहजस्य मध्यपाठेन सर्वेषां समत्वं बोधितम्। अत एव नारदीये पञ्चदशत्वमपि तथैव बोध्यम्। किञ्चौरससत्त्वे दासस्य तत्र सति समांशभागित्वं तदिच्छया, तदभावेऽपि चार्धभागित्वं; दत्तकस्य तु औरसत्वे चतुर्थांशभागित्वमिति ततस्तस्य दुर्बलत्वमेव। किञ्च पत्न्यादिभ्योऽप्ययं प्रबलः, पत्नीत्यादितः प्राक् पुत्रानन्तरं तद्विषये जातोऽपीति योगिनोक्तत्वात्। पुत्रप्रकरणे एव "औरसः क्षेत्रजश्चैव" इत्यादि "पारशवः स्मृतः" इत्यन्तेन प्रागुक्तक्रमेणोक्त्वा दास्यां वेत्युक्त्वा, क्षेत्रजादीनिति य एतेऽभिहिता इति च भ्रातॄणामित्यतः प्राक् मनूक्तेश्च। अत एवाधुना शूद्रधनविभागे विशेषमाहेति व्याख्यात्राऽवतारितम्। विशेषपदेन पूर्वस्य त्रैवर्णिकमात्रविषयत्वमित्यत्र तन्निरासः सूचितः। न चैवं दुहितृदौहित्रयोरत्र ग्रहण कथमिति वाच्यम्। प्रागुक्तपुत्रिकासुत इत्यस्य व्याख्याद्वयाभिप्रायेण तथोक्तिरित्याशयात्। तेन प्रागुक्तप्रतिनिधिमध्येऽत्र युगेऽयमेव पुत्रिकापुत्रः शूद्रादौ प्रतिनिधिः न दत्तक इति सूचितम्। दत्तौरसेतरेषां त्विति तु त्रैवर्णिकपरम्—परिग्रहपदस्वारस्यात्। अत एव "तत्समः पुत्रिकासुतः" इत्युक्तम्। "पत्नीदुहितरः" इति वक्ष्यमाणाशयेन तु नात्र तद्ग्रहणम्—प्रथमोपात्तपत्नीत्यागस्य निर्मूलत्वापत्तेः; दौहित्रस्य साक्षात्तत्रानुपादानाच्च। अत एवात्र दौहित्र्या न ग्रहणम्। तथा च यथौरसो मुख्योऽन्ये प्रतिनिधयः, एवमत्र गृहजातो मुख्योऽन्ये प्रतिनिधय इति सिद्धम्। एतदर्थमेव तदनन्तरमेतदुक्तिः। तथा चात्र दत्तको नैवेति साम्प्रतं, तथा सन्नपि दास एव; अत एव व्याख्यात्रादिना परिणीतापुत्राः सन्तीत्याद्युक्तमित्युक्तम्। अत एव "दत्ताद्याश्चापि तनयाः

१. (?)। २.—५. २, ३, ४.। ३.—५. ३०.। ४. प. ब. 'ततः' नास्ति। ५. म० १५९—१७८.। ६. व्यव० १२८.।

Cole.: Ch. I, Sec. xii, § 2.

बालंभट्टी

निजगोत्रेण संस्कृताः । आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥ पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते । आचूडान्तं न पुत्रः सः पुत्रतां याति चान्यतः ॥ चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥" इति कालिकापुराणं सङ्गच्छते । ब्राह्मणादित्रयेऽप्यङ्गवैकल्ये दासत्व प्रतिपादयता तेन कैमुतिकन्यायेनान्यत्र तथा सति सुतरां तथेति सूचितमिति दिक् । एवं च ब्राह्मणादिस्थलेऽपि शिष्याद्य भावे दासः सर्वापहारी, तदभावे श्रोत्रियादिरत एव सर्वाभाव इति तत्रोक्तं मानवं नारदीयं च साहचर्यमप्यत्र गमकामिति बोध्यम् । न चैवमपि "यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च । नोत्पादकः प्रजाभागी तथैवान्याङ्गनासु च॥"[1] इति, "एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च। विहङ्गमहिषीणां च विज्ञेयः प्रसवं प्रति॥"[2] इति च मनुविरोध इति वाच्यम्—तत्रोत्पादकस्य स्वाम्यभिन्नस्यैव स्पष्टत्वात् । अत एव दासदास्यामित्यत्र वचनात्तथेति मेधातिथिनोक्तम् । किञ्च द्विजात्युत्पन्नस्यैव[3] निरंशस्य भरणमुक्तं व्याख्यात्रा, याज्ञवल्क्यादिनाऽपि—"भर्तव्याः स्युर्निरंशकाः" इत्यादिना तेषां भरणमुक्तम्। स्त्रीस्थलेऽपि प्रतिबन्धकवशान्निरंशत्वे भरणमुक्तम्—"भरणं चास्य" इति नारदेन, "अपुत्रा योषितः" इति मूलेन च । तद्दृष्टान्तेनैवानुकूलश्चेदिति वक्ष्यति व्याख्याकृत् । तथा च यत्र कथमपि निरंशत्वप्राप्तिः, तत्रैव भरणमन्यत्रांशहरत्वमेव यथासंभवम् । अत एव "सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥"[4] इति मनुना "अनंशौ क्लीबपतितौ"[5] इत्यग्रिमेणाभरणे पातित्यमुक्तम् । अत्यन्तमित्यस्य यावज्जीवमित्यर्थः । तथा च शूद्रादिस्थले परिणीतापुत्रपौत्रीदौहित्रसत्त्वे मृतपितृकविभागेऽर्धभागित्वं दासस्य, असत्त्वे तु सर्वहारित्वम्। अत एव "दुहितॄणां सुतादृते"इति दौहित्रमात्रपरतया मेधातिथिना व्याख्यातमपि[6] व्याख्यात्राऽपि लक्ष्यभेदेन व्याख्यातम् । एवं दुहितृसत्त्वेऽपि सर्वहारित्वं यावद्वचनं वाचनिकमिति सिद्धान्तात्तदर्थं निर्गलितोऽर्थः । आद्यदासस्यौरसकल्पत्वं परिणयनाभावात् । अन्येषां दत्तककल्पत्वं तत्र मन्त्राहोमयोरभावात् । तथा च तेषामन्यतमसत्त्वे मुख्यपुत्रादिसत्वे जीवत्पितृकविभागे तदिच्छया तत्समांशभागित्वं मृतपितृविभागेत्वक्तमेव दुहितृदौहित्रासत्त्वेऽपि ।एवं पत्नीसत्त्वेऽपि। पुत्रपौत्रदुहितृदौहित्राणामभावे सर्वग्राहित्वं, तदभावे तु पत्नीसत्त्वेऽपि संसृष्टिनोऽविभक्तस्य भ्रातुः सर्वहारित्वं,

१. म० ९. ४८. । २. म० ९. ५५. । ३. भ. 'निरंशस्य' नास्ति । ४.—९. २०२.। ५.—९. २०१. । ६. प.·ब. मपि लक्ष्य० । ७. प. ब. तृवि० ।

Cole.: Ch. I, Sec. xii, § 2.

सीपुत्रः । **अत्र च शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभतेः नाप्यर्धं दुहितर एव कृत्स्नम् । किन्त्वनुकूलश्चेज्जीवनमात्रं लभते ॥ १३३ ॥ १३४ ॥ 5

**मुख्यगौणसुता दायं गृह्णन्तीति निरूपितम् । तेषामभावे सर्वेषां दायादक्रम उच्यते ॥— 1

** पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । 2

---

भ्रातुरंशं सन्मानमात्रं प्रेते पितरि दद्युः शुश्रूषुश्चेत्" इति । अत्रापि च शास्त्रातिलङ्घनप्रवृत्तस्यायं विषयः। द्विजातीनामिव शूद्रापुत्रः न तु दास्यामवरोधाविध्यनुमानामित्यनवद्यम् । अभ्रातृकस्तु दुहितुस्सुताभावे सर्वभाक् स्याद्राजानुज्ञया बृहस्पतिवचनादेव अनन्वयिनस्सर्वं राजा तदनुज्ञया वाऽवरोधज इत्येक इति अस्मादेव च दौहित्राभाववचनात् द्विजातीनामपि पुत्राभावे दौहित्रा धनभाज इति । अत एव च मातामहश्राद्धनियमोपपत्तिः ॥ १३४ ॥

एवं तावद्वैशेषिकशूद्रस्य विधिरुक्तः । अविशेषेणैव तु **पत्नी दुहितरश्चैवेत्यादि ॥ १३५ ॥ १३६ ॥**

## सुबोधिनी

उक्तप्रमेयस्य कठिनतरत्वाद्वक्ष्यमाणप्रमेयस्य कठिनतमत्वाच्च तत्र श्रोतृसावधानतार्थं पद्यबन्धेन सङ्गतिं दर्शयति निबन्धकारः-मुख्यगौणसुता इति । तेषामभावे सर्वेषा-

## बालंभट्टी

तदभावे तु पत्न्याः सर्वांशभागित्वमित्यादीति दिगिति तदेतत् सर्वं हृदि निधायोक्तं ध्वनयन्नेव व्यङ्ग्यार्थमाह—अत्र चेति,—मूले इत्यर्थः । लभेत इत्यस्य इति गम्यते इति शेषः । ब्राह्मणादीनान्तु दासीसुताः प्रजीवनभाजो न रिक्थहरा इति मेधातिथिरपि ॥ १३३ ॥ १३४ ॥

उक्तवक्ष्यमाणप्रमेययोः कठिनतरत्वात्तयोस्तात्पर्यार्थे सौकर्याय दर्शयन्नत्र श्रोतृसावधानाय पद्येन सङ्गतिमाह —मुख्यगौणेति[2] । गौणेत्यनेन दासानामपि सङ्ग्रहः उक्तक्रमेणेति भावः । तेषामभावे इति,—तेषां सर्वेषां ब्राह्मणादिवर्णानां मूर्द्धावसिक्ताद्यनुलोमजानां दासानाञ्चेत्यर्थः। दायादाः—धनग्राहिणः। पत्नीति[3]—अत एवात्र[4] सर्वस्य प्रत्येकं संबन्धस्तेनाऽऽद्यादिसत्त्वे द्वितीयादिव्यावृत्तिः । चेन दौहित्रसमुच्चयः । भ्रातर इति—अत्रैकशेषेण भगिनीनामपि ग्रहणं बोध्यम् । तथेति भ्रातृविशेषणं विभक्ता असंसृष्टिनश्चेत्यर्थकम् । अत

---

१. ख. ग. ड. च. छ. ज. झ. दूरत एव । २. प. फ. ब. 'गौणेति' नास्ति । ३. भ. ति अत्र । ४. प. ब वास्य सर्वत्र ।

Cole.: Ch. I, Sec., xii, §§ 2—3; Ch. II, Sec. i, §§ 1—2.

**तत्सुता गोत्रजो[1] बन्धुः शिष्यः सब्रह्मचारिणः॥ १३५ ॥**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ १३६ ॥**

3 ** पूर्वोक्ताः द्वादश पुत्राः यस्य न सन्ति असावपुत्रः, तस्यापुत्रस्य स्वर्यातस्य परलोकं गतस्य धनभाक् धनग्राही एषां पत्न्यादीनामनुक्रान्तानां मध्ये[2] पूर्वस्य पूर्वस्या-

---

सुबोधिनी

मिति,— सर्वेषां ब्राह्मणादिवर्णानां तथा मूर्धावसिक्ताद्यनुलोमजातीनां सूतादिप्रतिलोमजानां चेत्यर्थः। "सर्ववर्णेष्वयं विधिः" इत्यत्र सर्वशब्दो न वर्णविशेषणम्; अपि तु स्वतन्त्र एव तथा च सर्वे च वर्णाश्चेति[3] (समाहारे?) समासान्तरगतश्चशब्द इत्याह—

बालंभट्टी

एव सफलं न तु समुच्चयाद्यर्थकम्।तं विनाऽप्यन्यत्रेवात्रापि तत्प्रतीत्या तथा साफल्याभावात्। तत्सुता इत्यत्र तयोः सुता इत्यर्थः। सुता इत्यत्र तथैकशेषेण तयोः कन्यानामपि ग्रहणम्। बन्धुशब्देन बान्धववदाचार्यस्य गुरोरपि ग्रहणं—तस्यानेकार्थत्वात्। हिः—त्वर्थे। पूर्वतो वैलक्षण्यसूचकः। अपुत्रस्येत्यत्र मुख्यपुत्रशून्यत्वमात्रं न विवक्षितं—प्रकरणविरोधात्; किन्तु मुख्यगौणपुत्राणामभाव एवेत्याशयेन तृतीयपादस्य अग्रेन्वयासंभवात्पूर्वैकवाक्यतामाह—पूर्वोक्ता इति। एषामित्यत्राऽपि तथैकशेष इत्याह—पत्न्यादीनामिति।इदमा न बुद्धिस्थप्रत्येकपरामर्शित्वमित्याह—आन्विति। निर्धारणे षष्ठीत्याह—मध्ये इ[4]ति। अग्रिमानुरोधेन पूर्वस्येति वीप्सागर्भमित्याह—पूर्वस्य पूर्वस्येति,—उत्तर-उत्तर इति सम्बन्धः इति पाठः। उत्तरोत्तरो धनभागीति सम्बन्ध इत्यपपाठः—पौनरुक्त्याद्नन्वयाच्च। तथा पाठे तु तदीयधनभाक्त्वमुद्दिश्य तेषां तथोत्तरोत्तरत्वस्य विधानान्नात्र दोषः। अत्र पुत्रग्रह[5]णं पौत्रप्रपौत्रयोरप्युपलक्षणम्। जीवति मृते च पु[6]त्रे पौत्राणां भागस्य "भूयो पि" इ[7]ति "अनेकपि" इ[8]ति चोक्तत्वात्—"अविभक्तविभक्तानां कुल्यानां वसतां सह। भूयो दायविभागस्स्यादाचतुर्थादिति स्थितिः॥" इति देवलात्। "अपुत्रपौत्रे सन्ताने दौहित्रा धनमाप्नुयुः।" इति विष्णुः[9]। "पिता....सवर्णायाः पुत्रः पौत्रः पुत्रपौत्रः" इत्युपक्रम्य "असत्स्वन्येषु तद्गामी" इ[10]ति बोधायनोक्तेश्च।

---

१. विश्व० गोत्रजो। २. ग घ. ङ. च. मध्यात्। ३. थ. द. श्च ते समा०। ४. प. फ. ब. ति पाठः उत्त०। ५. प. फ. ब. णं पौत्रयो०। ६. प. ब. 'पुत्रे' नास्ति। ७. व्य० १२१.। ८. व्य० १२०। ९—१. ५. १५.। १०.—१. ५. १७.। सत्स्वन्येषु (?)।

Cole.: Ch. II, Sec. i, §§ 2—3.

भात्र उत्तरोत्तरो[1] धनभागिति संबन्धः।**सर्वेषु मूर्धावसिक्तादिषु अनुलोमजेषु सूतादिषु[2] प्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु अयं दायग्रहणक्रमो[3] वेदितव्यः। **तत्र प्रथमं पत्नी धनभाक् । पत्नी विवाहसंस्कृता। "पत्युर्नो यज्ञसंयोग" इति[4] स्मरणात्। 4 5

## सुबोधिनी

सर्वेषु मूर्धावसिक्तादिष्विति । पत्युर्नो यज्ञसंयोगे इति स्मरणादिति,— अस्य पाणिनीयसूत्रस्यायमर्थः। पतिशब्दस्य नकारादेशो भवति यज्ञसंयोगे गम्यमाने ; यज्ञसाधनत्वात् तत्फलोपभोक्तृत्वाच्चेति[5]। एतदुक्तं भवति—विवाहसंस्कृता नारी यज्ञसाधनं नान्येति विवाहसंस्कृतैव पत्नीत्युच्यते इति । यद्यपि ज्येष्ठायामनिषिद्धायां सत्यां कनीयसीनां यज्ञे नाधिकारः, तथाऽपि तदभावे[6] सद्भावेऽपि दीर्घरोगग्रस्तायां[7] तस्यां[8] पतितायां वाऽन्यासां क्रमेणाधिकारोऽस्तीति यज्ञसाधनत्वयोग्यताऽस्तीति, यज्ञसंयोग इत्यत्र च[9] यज्ञ[10] साधनत्वयोग्यता विवाक्षितेत्यर्थः। अथवा यज्ञशब्देन विवाह एव कथ्यते तत्राऽपि देवतो-

## बालंभट्टी

एवं पादत्रयैकवाक्यार्थमुक्त्वा तुर्यपादार्थमाह—सर्वेष्विति । सर्वशब्दो न वर्णविशेषणम्; अपि तु स्वतन्त्र इति सर्वे च वर्णाश्च इति इतरेतरद्वन्द्व इति भावः। क्रम इति—इदं क्रमपरमेव हीति सष्टमिति भावः। उक्तक्रमं विभज्य विविच्य दर्शयति—तत्रेत्यादिना । तत्र—पत्न्यादीनां मध्ये । प्रथम तथोपादानात् तदर्थमाह—विवेति,—धर्मविवाहपूर्वकश्रौतस्मार्तकर्मसहाधिकारवतीत्यर्थः। तदेतत् ध्वनयन्नाह—पत्युर्नो यज्ञेति। स्मरणात्—पाणिनिस्मृतेः। पतिशब्दस्य नकारादेशो भवति यज्ञसंयोगे गम्ये । दम्पत्योः सहाधिकारेण यज्ञसाधनत्वात्[11] तत्कर्तृकयज्ञफलभोक्तृत्वाच्च तस्या यज्ञसंयोगः । यज्ञसंयोगे इत्यस्य यज्ञेन संबन्धे इत्यर्थः । स्त्रिया इति शेषः । संयोगपदं संबन्धोपलक्षणम् । संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वम् । तथा च विलक्षणविवाहसंस्कृतैव यज्ञसाधनं नान्येति सैव पत्नीत्युच्यत इति भावः । "सवर्णासु विधौ धर्म्ये" इत्युक्त्या ज्येष्ठां विनाऽन्यासामनधिकारेऽपि[12] तया सहाधिकारात्तदभावेऽप्यधिकारात्तासामपि तत्संबन्धो बोध्यः । एतेन यद्यपि ज्येष्ठायामनिषिद्धायां सत्यामन्यासां नाधिकारः, तथाऽपि तदभावे दीर्घरोगग्रस्तायां तस्यां पतितायां वा अन्यासां क्रमेणाधिकारोऽस्तीति यज्ञसाधनत्वयोग्यताऽस्तीति यज्ञसंयोग इत्यत्र यज्ञसाधनत्वयोग्यता विवक्षिता । यद्वा

---

१. ख. घ. ङ. उत्तर उत्तरो० । च. छ. ज. उत्तरो धन० । २. ख. 'सूतादिषु' नास्ति। ३. ख. अयंदायग्रहणविधिर्दाय० । छ. । दायक्रमो । ४. अ० ४. १. ३३. । ५. द. फलभो० । ६. त. तदभावेऽपि । ७. थ. गृह्यायाम् । ८. द. सत्या प० । ९. थ. द. 'च' नास्ति । १०. त. 'यज्ञ' नास्ति । ११. प. फ. ब. नत्वाच्च तस्याः । १२. प. ब. कारस्तथापि ।

Cole.: Ch. II, Sec. i, §§ 3—5.

एकवचनं च जात्यभिप्रायेण । अतश्च बह्वयश्चेत्सजातीया विजातीयाश्च यथांऽ-
6 शं विभज्य धनं गृह्णन्ति[1] । **वृद्धमनुरपि पत्न्याः समग्रधनसंबन्धं वक्ति—"अपु-

## सुबोधिनी

देशेन द्रव्यस्य दीयमानत्वात् तद्रूपत्वाच्च यागस्य । एवमपि विवाहितैव पत्नी नान्या । तदा स्त्रियमन्तरेण विवाहस्यैवाभावाद्यज्ञसाधनत्वमिति द्रष्टव्यम् । यथांशं विभज्य

## बालंभट्टी

यज्ञशब्देन विवाह एव — तत्रापि देवतोद्देश्येन द्रव्यस्य दीयमानत्वात्तद्रूपत्वाच्च यागस्य । एवञ्च[2] विवाहितैव पत्नी नान्येति[3] तदा स्त्रियं विना विवाहस्यैवाभावात् यज्ञसाधनत्वं बोध्यमिति मदनोक्तमपास्तम् । अन्यार्थे योग्यत्वविवक्षायामपि प्रकृते[4] प्रोक्तरीत्या निर्वाहे तद्विवक्षाया अनुपयोगात् द्वितीयार्थस्य भाष्याद्यसम्मतत्वादुक्तरीत्या पूर्वपक्षस्यैवासङ्गतेश्च । एतेन पत्नी विवाहिता पत्युर्नो यज्ञेति अत्र वदतोऽग्रेऽप्युपसंहारे उभयत्र तथैव वदतो विज्ञानेश्वरस्य द्वितीयमतमेवेष्टमिति शूद्राया अपि तस्यास्तत्त्वम् । अत एव कात्यायादिकमवरुद्धस्त्रीविषयमिति तेन वक्ष्यते । अन्यथा तां विहाय तत्पर्यन्तधावनासङ्गतिः स्पष्टैवेति परास्तम् । तथेष्टत्वे पत्नी धर्मविवाहोढेति प्राग्वद्विवाहितेत्येव सिद्धे पत्युर्नो यज्ञेत्युल्लेखस्य निर्बीजत्वापत्तेरर्थान्तरस्य महाभाष्यविरुद्धत्वाच्च इति दिक् । न्यूनत्वादिनिरासायाऽऽह—एकेति । अत एव "पत्न्यः कार्याः"[5] इत्यत्र बहुवचनमुक्तम् । यथांऽशमिति,—सन्ति तदेत्यादिः । "चतुस्त्रिद्व्येकभागास्स्युः"[6] इत्युक्तक्रमेण ब्राह्मणीक्षत्रियावैश्या गृह्णीयुरित्यर्थः । तथा च तस्य तादृशस्य समग्रधनग्रहणं पत्न्या कार्यमिति सिद्धम् । अत एव व्यासः—"मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्नाता प्रतिदिनं दद्यात् स्वभर्त्रे सलिलाञ्जलिम् ॥ कुर्यादनुदिनं भक्त्या देवतानां च पूजनम् । विष्णोराराधनं चैव कुर्यान्नित्यमुपोषिता ॥ दानानि विप्रमुख्येभ्यो दद्यात् पुण्यविवृद्धये । उपवासांश्च विविधान् कुर्याच्छास्त्रोदिताञ्छुभान् ॥ लोकान्तरस्थं भर्तारमात्मानं च वरानने । तारयत्युभयं नारी नित्यं धर्मपरायणा ॥" इति । अनेन च पुत्रादिवत् सर्वोपकारकतया नरकादिनिस्तारकत्वेन च तद्भावेऽन्यतः पूर्वं पत्न्या एव स्वत्वमन्यथा दानाद्यसंभव इति बोधितम् । सवर्णाया अभावेऽसवर्णाऽपि पत्नी, तेन शूद्राव्यवच्छेदः तस्याः परिणीतात्वेऽप्यपत्नीत्वात् । अत एव विष्णुः—"सवर्णाभावे त्वनन्तरया चाऽऽपदि ""न त्वेवाद्विजः शूद्रया"[7] इति । धर्मकार्यं कुर्यादित्यनुवर्तते । आचाराध्याये मूले चोक्तमिदम् । अतः तस्या जीवनोपयुक्तांशभागित्वं न

१. ख. यथा वृद्ध० । २. प. फ. ब. 'एवमपि' । ३. प. ब. तिस्त्रियं विवा० । ४. प. फ. ब. प्रोक्तरीत्या पूर्वं । ५. व्य० ११५ । ६. व्यव० १२५ । ७.—१६. ३. । ८ प.फ.ब. ये बोध्यम् तत्र ।

Cole.: Ch. II, Sec. i, §§ 5—6.

त्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्ड कृत्स्नमंशं लभते च ॥" इति। बृहद्विष्णुरपि—"अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामि" इति। कात्यायनोऽपि—"पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥" इति। तथा—
अपुत्रस्यार्थ[2]कुलजा पत्नी

## सुबोधिनि

धनं गृह्णन्तीति,—यथांऽशं "चतुस्त्रिद्व्येकभागाः स्युः" इत्य[1]नेन क्रमेण ब्राह्मणी क्षत्रिया वैश्या शूद्रा च गृह्णीयुरित्यर्थः। अपुत्रस्याप्यार्यकुलजा पत्नीति। नात्र कुलजेति सवर्णाज्जाता, अपि तु सत्कुलप्रसूता सवर्णादानुलोम्येन च जाता गृह्यते। (अव्य-

## बालंभट्टी

कृत्स्नांशभागित्वमिति बोध्यम्। तत्र मानान्तरमप्याह—वृद्धेत्यादिना। शयनं इति,—तच्छयनसाधनयोनिरक्षणं सम्यक् कुर्वन्तीत्यर्थः। अत एवाऽऽह — व्रते इति,—ब्रह्मचर्ये इत्यर्थः। एवेनेतरव्यवच्छेदः। तथा चेदमपि तदंशे क्रमबोधकमेवेति भावः। तत् तस्मै भर्त्रे। अंशं धनम्। अपुत्रेत्युक्तेरिदमग्निमच्चापुत्रादिविषयमिति स्पष्टमेव। बृहद्विष्णुरपीति,—पत्न्यादीनां क्रमेण सामान्येन सर्वधनग्रहणं वक्तीति शेषः। स हि क्रमपर एव स्पष्टः मूलवत्। विष्णुरप्येवम्। मातृगामीति,— तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे बन्धुगामि, तदभावे सकुल्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राजा स्वामी, इति वाक्यशेषः। नोऽपीति,—तथोक्तं किञ्चिदंशे इति भावः। पत्नीति,—सत्यादिः। भर्तुरिति,—अपुत्रस्येत्यादिः —स्वादिस्मृत्यनुरोधात्। धनहरीत्यत्र विशिष्टस्य पचादिषु पाठादच् नदडित्यादिवत् ङीप्। अव्येति,—इदमपि अप्रतिकूलाया अप्युपलक्षणम्। दुहितेति—-तत्सामान्यमित्यर्थः। यद्यनूढेत्यादेरर्थस्तु वक्ष्यमाण एव। उक्तवाक्यमपुत्रपरमिति सूचयन् तदीयमेव वाक्यान्तरमाह—तथेति। अथशब्दः प्रारम्भे आदाविति यावत्। कुलजात्वं च नात्र सवर्णाजातत्वमात्रमपि तु सवर्णादानुलोम्येन च जातात्वे सति सत्कुलप्रसूतात्वं; तेनाव्यभिचारिणी साध्वी गृह्यते। अत एव पूर्वस्यैकवाक्यता। अत एव तदभावे इत्यस्य अर्धद्वयमध्यपठितस्य पूर्वत्राऽप्यन्वयः। मूलाद्येकवाक्यतया चाग्रेऽपि प्रतिवाक्यं संबन्धः।

---

१. क. ग. ङ. छ. यनेनापि। २. ख. र्येकु०। घ. पिकु०। ३. व्यव० १२५.।

Cole.: Ch. II, Sec. i, § 6.

दुहितरोऽपि वा। तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः॥" इति। बृहस्पतिरपि—"कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु। असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी॥" इति** एतद्विरुद्धानीव वाक्यानि लक्ष्यन्ते; यथा—"भ्रातृणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा। विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां

7

पत्नीत्यत्र गृहीतगर्भाऽभिप्रेता। तथा च वसिष्ठः—"अथ भ्रातृणां दायविभागः याश्चानपत्यास्त्रियस्तासां चाऽऽपुत्रलाभात्" इति गर्भिण्यो रिक्थार्हा इति दर्शयति। पुत्रशब्दश्चायमनपत्या इति वचनात्। गर्भोपलक्षणमेव उत्पन्नं वस्त्वपि (?) पुत्रिका यथा स्यात्। तथा च गौतमः—"स्त्री चानपत्यस्येत्युक्त्वाऽऽह "जीवं (?) वा लिप्सेत" इति। अनेन

## बालंभट्टी

अपिना—दौहित्रसमुच्चयः। वा एवार्थः सर्वत्रान्वेति। पुत्राश्च प्रत्यासत्त्या भ्रातुरेव। चेन कन्यानामपि प्राग्वत् ग्रहणं बोध्यम्। भ्रातृपदं भागिनीनामप्युपलक्षणम्। पितामातेत्यंशे अनेन प्रागुक्तविष्णुना च तत्रान्यत्र च विरोधो यथामूलस्य न, तथाऽग्रे स्फुटीभविष्यति। अपीति,—सर्वत आदौ पत्न्या धनग्रहणं वक्तीति शेषः। कुल्येष्विति,—पित्रादिविशेषणमिति कश्चित्। वस्तुतो भिन्नपितृभ्रातृसपिण्डान्यस्वकुलोत्पन्नदुहितृदौहित्रभ्रातृसुतादिपरम्। पितृपदेनैकशेषेण मातुरपि ग्रहणम्। एवं भ्रातृपदेन भगिनीनामपि ग्रहणं बोध्यम्। "सपिण्डाः स्युःसनाभयः" इति कोशः। तेषु तेषु च विद्यमानेष्वपि अपुत्रस्य मृतस्य पत्नी एव तस्य भर्तुः भज्यत इति भागो—धनं सर्वं तद्धारिणीत्यर्थः। एवं स्वल्पस्मृत्यन्तरानुरोधेन मूलार्थं प्रतिपाद्य दृश्यमानान्यस्मृतिविरोधं परिहर्तुमादौ विरोधमाह—एतदिति,—उक्तसर्वविरुद्धानीत्यर्थः। चः—त्वर्थे। लक्ष्यन्ते दृश्यन्ते तान्येवाऽऽह—तद्यथेति—तान्येव क्रमेण प्रदर्शयामीत्यर्थः। तत्राऽऽदौ नारदमाह—भ्रातृणामिति,—निर्धारणे षष्ठी। अप्रजा इति—अत्र "नित्यमसिच्" इत्यसिच्। प्रजाशब्दः पुत्रादिमात्रपरः। प्रेयात्—परलोकं गच्छेत्। शेषास्ते—भ्रातर एव प्रत्यासत्तेः। चः भिन्नक्रमः।

१. क. च. छ. वृद्धबृ० । २. ख. 'इति' नास्ति। २५ ४८.। ३. ग. द्वैप्र०। ४. क. जीवित०। ५.—१७. ४१.। ६. प. फ. ब. पितृसपि०। ७. अम० म० २९३.। ८. अ० ५. ४. १२२.।

Cole.: Ch. II, Sec. i, §§ 6—7.

भर्तुश्चेदाच्छिन्द्युरितरासु तु ॥" इति पत्नीसद्भावेऽपि भ्रातणां धनग्रहणं पत्नीनां च भरणमात्रं नारदेनोक्तम् ; मनुना तु—" पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च[२] ।" इत्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम् । तथा[४] " अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥" इति मातुः

---

स्त्रीवचनं गर्भिण्यर्थमिति ज्ञापयति । दुहितरश्च पुत्रिका एव । तथा च स्वायंभुवम् पुत्रिकाभिप्रायेणैव—"यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥" इति । पुत्रजन्माशङ्कायां तु अपत्याभावे तदधिकारः । बहुवचनं पुत्रिकाबहुत्वज्ञापनार्थम्। च शब्दस्समुच्चये । नापीच्छातो द्रव्यसम्बन्धार्थः। एवकारस्सर्वत्रावधारणार्थः । माता च पिता च पितरौ सहाधिकारात्तु द्वन्द्वकरणमेकैकप्राप्त्यर्थम्। द्वन्द्वनिर्देशेऽपि मातुरेव प्राथम्यम् ; यथाऽऽह—" अनपत्यस्य पुत्रस्य माता दायाद्यमाप्नुयात् । तस्यामपि च वृत्तायां पितुर्माता हरेद्धनम् ॥" इति । सर्वदा चापत्याभावेऽनपत्य इत्ययमेवास्य विषयः । नन्वेतदप्यस्ति " पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।" इति, मातरि अनपत्यायामेतत् द्रष्टव्यम् । कथं शङ्खवचनं "स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं, तदभावे पितरौ हरेयातां, ज्येष्ठा पत्नी"इत्युक्तलक्षणपत्नीदुहितृभावे सोदर्यभ्रात्रभिप्रायम्।तात्पितुरन्या

---

## सुबोधिनी

भिचारिण्यः साध्व्य इति यावत्?) आच्छिन्द्युरितरास्विति,—इतरासु व्यभिचारिणीषु स्त्रीषु विषये भरणं पोषणमपि आच्छिन्द्युरपकुर्युः न दद्युरिति यावत् । एतच्चापोषणमत्यन्तपरिदुष्टासु । एवं परस्परविरुद्धानां वचनानां धारेश्वरेण कृतां व्यवस्थां दर्शयति—

## बालंभट्टी

चेत् ,—यदि । स्त्रियः भर्तुः शय्यां प्राग्वत् स्वयोनिं रक्षन्ति, तदा जीवनक्षयपर्यन्तमस्य-स्त्रीणां भरणं पोषणं कुर्वीरंश्चेत्यर्थः । आच्छिन्द्युरिति इतरासु—व्यभिचारिणीषु विषय भरणमपि आच्छिन्द्युरपाकुर्युर्न दद्युरिति यावत् । एतच्चापोषणमत्यन्तपरिदुष्टासु बोध्यम् । च भेति—भरणमात्रञ्चेत्यर्थः । मानवे एवस्य पूर्वत्रान्वयः । वा समविकल्पे इत्याह—पितुर्वा भ्रातुर्वेति । मन्वन्तेरमेवाऽऽह—तथेति । वृत्तायां—समाप्तायां मृतायामिति

---

१ ना० १३. २५, २६. । २. ख. ज. वा । ३ —९. १८५ । ४. क. तथा च । ख. च. यथा । ५ म० ९. ११७. । ६. थ. द. रासुस्विति । ७. त. षणं । ८. ब. छिन्द्युरपा० ।

Cole.: Ch. II, Sec. i, § 7.

पितामह्याश्च धनसंबन्धो दर्शितः । शङ्खेनापि—"स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी" इति । भ्रातृणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसंबन्धो दर्शितः । कात्यायनेनापि—"विभक्ते संस्थिते द्रव्यं
8 पुत्राभावे पिता हरेत् । भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात्॥"**इत्येवमादीनां विरुद्धार्थानां वाक्यानां धारेश्वरेण व्यवस्था दर्शिता—पत्नी गृह्णीयादित्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम्, सा च यदि नियोगार्थिनी भवति ।

सुबोधिनी

पत्नी गृह्णीयादित्येतद्वचनजातमिति । नियोगार्थिन्या एव पत्न्या धनग्रहणमित्येतत् कुतो

बालंभट्टी

यावत् । चः त्वर्थे व्युत्क्रमे च। शङ्खीयो हिः त्वर्थे। व्युत्क्रमेणान्वयः। एवार्थो वा सर्वत्रान्वयी। चः व्युत्क्रमे । तेन सगोत्रशिष्यसब्रह्मचारिण इति वाक्यशेषसमुच्चयः । पैठीनसिरप्येवम् । तदभावे इत्यस्याग्रेऽपि संबन्ध इत्याशयेनाऽऽह—क्रमेण धनेति । नापीति,—पितुर्भ्रातुर्मातुः पितामह्याश्च क्रमेण धनसंबन्धो दर्शित इति शेषः । क्रमादित्याद्युक्त्या तथा स्पष्टत्वादत्रेदं नोक्तम् । तच्चेत्थम् । वा एवार्थः । अथशब्द आनन्तर्यार्थः । उत्तरार्धे सर्वत्रान्वेति । तेन तत्तदभावो लभ्यते; तदेव स्फुटीकृतं—क्रमादिति,—तत्पितुर्माता वेत्यन्वयः। विभागं विना तदीयद्रव्यस्यैव प्रायोऽसंभवेन पितुस्तद्धनहारित्वासंभवादुक्तम्—विभक्ते इति,—भावे क्तः, विभागे जाते सतीत्यर्थः । यद्वा विभक्ते पितरि संस्थिते मृते सति इति वा । इतिः कातीयसमाप्तौ । एवं विरोधमुक्त्वा तमुपसंहरन्नन्यकृतं तत्परिहारं दूषयितुं तावदनुवदति — एवमादीनामित्यादिना । एवमादीनां—कातीयादीनाम् ।
8 *[आदिना अनुपदं वक्ष्यमाणगौतमादेः, "ततो दायमपुत्रस्य विभजेरन् सहोदराः । तुल्या दुहितरो वाऽपि ध्रियमाणाः पिताऽपिवा ॥ सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् । तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः॥" इति देवलस्य च परिग्रहः ।]* तुल्याः–सवर्णदुहितरः । सवर्णाः भ्रातरः सापत्नाः। व्यवस्थेति,–भ्रात्रंश इति भावः । एतदिति–मूलवृद्धमनुविष्णुबृहस्पतिकात्यायनादिप्रोक्तवचनसमूह इत्यर्थः । विभक्तेति,—विभागस्योक्तत्वात् विरुद्धकातीये विभक्त इत्यस्योपादानाच्च । तत्रापि विशेषान्तरमाह—सा चेति,—

१. क पित्रोर्वाज्येष्ठायाः प० । २. ख. योगीश्व० । ३ प. फ. ब. कृतं विभक्तेति । ४. प. फ. ब तिः समा० । ५ प. फ. ब. रन्नकृ० ।

Cole:. Ch. II, Sec. i, §§ 7—8.

कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनग्रहणं[1] न स्वतन्त्राया इति। "पिता हरेदपुत्रस्य"[2] इत्यादिवचनात्तत्र व्यवस्थाकारणं वक्तव्यम्। नान्यद्व्यवस्थाकारणमस्तीति। गौतमवचनाच्च—"पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत"[3]इति। **अस्यार्थः—पिण्डगोत्रर्षिसंबन्धा अनपत्यस्य रिक्थं भजेरन्स्त्री वा रिक्थं भजेत्[4] यदि 9

## सुबोधिनी

हेतोरित्याशङ्कते[5] तामेव व्यवस्थां प्रतिपादयितुं[6]—कुत एतदिति। न स्वतन्त्राया इति—नियोगानपेक्षिण्या इत्यर्थः। तं हेतुमाह—पिता हरेदिति,—"पिता हरेदपुत्रस्य"[2] इत्यादिवचनविरोधादित्यर्थः। किमतो यद्येवमित्याशङ्क्य उभयेषामप्रामाण्ये प्रसक्ते[7] व्यवस्था वक्तव्या, तत्रापि कारणं वक्तव्यमित्याह—व्यवस्थाकारणं वक्तव्यमिति। ननु तत्कारणमन्यदेवास्तु किमिति नियोगापेक्षित्वमेवेति नियम इत्याशङ्क्याऽऽह[8]—नान्यदिति। न केवलं नियोगार्थिन्या एव धनग्रहणमिति युक्तितः, अपि तु गौतमवचनमप्यस्तीत्याह—गौतमवचनाच्चेति। "बीजं वा लिप्सेत" इत्यत्र स्थितं वाशब्दं यद्यर्थपरं व्याचष्टे—यदि बीजं लिप्सेतेति।

## बालंभट्टी

सा तु इत्यर्थः। तदा तत्त्द्विषयमिति भावः। तदेव शङ्कानिरासेन द्रढयति—कुत इत्यादिना,—नियोगार्थिन्या एव पत्न्या धनग्रहणं न स्वतन्त्रायास्तदनपेक्षिण्यास्तस्या इत्येतत् कुतः कस्माद्धेतोरित्यर्थः। तं हेतुमाह — पितेत्यादि इतीत्यन्तेन। आदिना नारदीयस्याऽपि परिग्रहः। वचनात्—वचनजातविरोधात्। तत्र—उभयेषामप्रामाण्यप्रसङ्गे। तन्निरासायेति शेषः। व्यवस्थेति,—समाहारद्वन्द्वः। कारणञ्च प्रत्यासत्तेस्तस्या एव। ननु तदन्यदेवास्तु किमिति नियोगापेक्षित्वमेवेति नियमः अत आह—नान्यदिति। तथा च विभक्तभ्रातृस्त्रीविषयमित्यनेन व्यवस्थोक्ता। सा चेत्यनेन नियोगार्थित्वं तत्कारणमुक्तमिति भावः। इति:— हेतौ। न केवलं तथोक्तिमात्रेण तदर्थसाधनम्, अपि तु वाचनिकोऽपि सोऽर्थ इत्याह—गौतमेति। तमेवाऽऽह—पिण्डेति। तथा अस्फुटत्वात् व्याचष्टे—अस्यार्थ इति। ऋषिः प्रवरः सगोत्रसप्रवरत्वे च सति सपिण्डा इत्यर्थः। अनेन पित्रादेर्धनसंबन्धस्तावदुक्तः। पक्षान्तरमाह—स्त्री वेति। बीजं वेति वार्थमाह—यदीति,—निपातानामनेकार्थत्वात्।

---

१. ख. हरणं। २. म० ९. १८५.। ३— २८. २०, २१.। ४ क. भजते। ५. त. शङ्किते। द. शङ्क्यता०। ६. त. यितुमेतदिति(?)। ७. द. ण्यप्रसक्तेर्व्य०। ८. त. स्त्याहनान्य०।

Cole.: Ch. II, Sec. i, §§ 8—9.

10 बीजं लिप्सेतेति । **मनुरपि—"धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा । सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्॥"इति। अनेनैतद्दर्शयति—विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसंबन्धो नान्यथेति। तथाऽविभक्तधनेऽपि—"कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः॥" इति।

11 **तथा वसिष्ठोऽपि—"रिक्थलोभान्नास्ति नियोगः" इति रिक्थलोभान्नियोगं प्रतिषेधन्

12 नियोगद्वारक एव पत्न्या धनसंबन्धो नान्यथेति दर्शयति । **नियोगाभावे तु पत्न्या भरणमात्रमेव—नारदवचनात् "भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्।"

---

## सुबोधिनी

10 *[दद्यात् तस्यैव तद्धनमिति,—तद्धनं तस्य भ्रातुर्धनं तस्यैव दद्यादित्युक्तेर्विभक्तभ्रातृविषयमिति गम्यते—अन्यथा विभागाभावे तस्य पृथग्भूतधनाभावात्।समस्तत्र विभागःस्यादिति,-समो विभागः स्यादित्यभिधानादेतदविभक्तविषयमिति गम्यते—विभक्ते विभागाभावात्।]*

## बालंभट्टी

मनुरपीति,—इत्यनेनैतद्दर्शयतीत्यन्वयः । बिभृयात्—रक्षेत् । तमेव चेति पाठः । तद्धनं—तस्य भ्रातुः धनम् । तस्यैव—पुत्राय । दद्यादित्युक्त्या इदं विभक्तभ्रातृविषयम् । अन्यथा विभागाभावे तस्य पृथग्धनाभावान् तद्धनमित्यस्यैवासङ्गतिः स्पष्टैवेत्याशयेनैतत्पदार्थमाह-–विभक्तेति,—बहुव्रीहिः । पूर्वार्धोक्तः एवः उत्पाद्येत्यत्रान्वेतीत्याशयेनाऽऽह—द्वारेणैवेति । एवं विभक्तविषये उक्त्वा अविभक्तविषयेऽपि तथेति मनुमेवाऽऽह-–तथाऽवीति,—अनेनेत्यादि, भ्रातरीत्यादि च । पूर्वानुषङ्गेण वाक्यार्थः । अपिद्वयं मिथस्समुच्चये । समो विभागस्स्यादित्युक्त्या इदमविभक्तविषयम्—विभक्ते विभागाभावात् । प्रतिषेधन्निति—हेतुगर्भं वसिष्ठस्य विशेषणम् । लोभादिति—हेतौ पञ्चमी । नियोगे चान्वयः ।नास्तीत्यस्य न कार्य इत्यर्थः । एवं तद्विषयमुक्त्वा तद्दार्ढ्याय विरुद्धप्रागुक्तनारदविषयमाह—नियोगाभावे त्विति । एवेन कृत्स्नधनसंबन्धव्यवच्छेदः । तदेवाऽऽह—भरणमिति । जीवनेति,—जीवितेति पाठे भावे क्तः। एवञ्च प्रागुक्तमन्वादिकमप्येतद्विषयमेवेति बोध्यम्।

---

१.—९. १४६. । २. क. यथा । ३ म० ९. १२०. । ४.—१७, ४८. । ५. त. भक्तवि०। ६. भ. त्यनेन वचनेनैतद्द० । ७. प. फ. ब. ध्यम् मूलस्यार्थो० ।

Cole. : Ch. II, Sec. i, 9—12.

इति। **योगीश्वरेणापि किल वक्ष्यते—"अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। 13
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥" इति। ** अपि च। द्विजातिधनस्य यज्ञा- 14
र्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम्; तथा च केनापि स्मृतम्-
"यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाज-
नाः॥ यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्ख-
विधर्मिषु॥" इति, **तदनुपपन्नम्—"पत्नी दुहितरः" इत्यत्र नियोगस्याप्रतीतेरप्रस्तुत- 15
त्वाच्च। अपि च इदमत्र वक्तव्यम्—पत्न्या धनग्रहणे नियोगो वा निमित्तं तदुत्पन्न-
मपत्यं वा? तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसंबन्धः

## सुबोधिनी

योगीश्वरेणापि किल वक्ष्यत इति,-*[अत्रारुचौ किलशब्दः, यथा "त्वं किल योत्स्यसे" इति- 13
"अपुत्रा योषितश्चैव" इत्यस्य योगीश्वरवचनस्यार्थान्तरस्य वक्ष्यमाणत्वात्। तथा च केनाऽपि
स्मृतमिति,—केनापीत्यनादरद्योतनार्थम्। अत एवास्मिन् पूर्वपक्षेण मूलयुक्तत्वेन प्रदर्शनमस्य
वचनस्य]*धारेश्वरेणोक्तां व्यवस्थां दूषयितुमुपक्रमते—तदनुपपन्नमिति। अप्रस्तुतत्वाच्चेति—
अप्रकृतत्वादित्यर्थः। आद्यं पक्षं दूषयति—तत्र नियोगस्यैवेति। ननु नियोगस्यैव धनग्रहणनिमित्त-

## बालंभट्टी

मूलसम्मतिमप्याह— योगीति। तदेवाऽऽह—अपुत्रेति। वस्तुतोऽरुचौ किलशब्दोऽत्र
यथा "त्वं किल योत्स्यसे" इति; अपुत्रा इति मूलस्यार्थान्तरस्य वक्ष्यमाणत्वादिति बोध्यम्।
अनधिकारात्—स्वातन्त्र्येण विध्यविषयत्वात् गुणाद्यभावादेश्च। यज्ञार्थे—तत्सिद्ध्यर्थम्।
तत्र—यज्ञे। शास्त्रनिषिद्धत्वादपि तदनधिकृतत्वं बोध्यम्। हि—यतः। तस्मात्—ततः।
स्थानेषु—अनिषिद्धसगुणाविधिविषयद्विजातिषु। नियोजयेत्—राजा। शास्त्रनिषिद्धाः
शूद्रादयश्च विधर्मिणः। *[वस्तुतः केनापीत्युक्त्याऽत्र किञ्च "अपुत्रेण परक्षेत्रे" इत्यत्र स
उपात्त इति चानादरो द्योतितः। अत एवात्र वचने मूले न प्रदर्शितमिति बोध्यम्।]*तदुक्त- 14
व्यवस्थां दूषयति—तदनुपेति। ननु तत्र तद्बोधकशब्दाभावेऽपि प्राकरणिकः सोऽस्तु अत
आह—अप्रेति,—अप्रकृतत्वादित्यर्थः। नन्वेवमप्यन्यथानुपपत्त्या कल्पितस्स इत्युक्तमेव।
अत आह—अपि चेदमिति। नियोगः—बीजधारणमूलभूतः। आद्यं खण्डयति—तत्रेति,
—तयोर्मध्ये इत्यर्थः। एवेन द्वितीयव्यवच्छेदः। अत एवाऽऽह—अनुत्पादीति। अपि-

१. व्य० १४२.। २. क. 'वा' नास्ति। ३ थ द. ण नि०। ४. भ. त्राप्यनाद०।
५. व्य० १२७.। ६. प. फ. ब. च प्र०।

Cole.: Ch. II, Sec.1. §§ 12-15.

प्राप्नोति ; उत्पन्नस्य च पुत्रस्य धनसंबन्धो न प्राप्नोति । अथ तदपत्यस्यैव निमित्तत्वं, तथा सति पुत्रस्यैव धनसंबन्धात्पत्नीति नाऽऽरब्धव्यम् ।

---

## सुबोधिनी

त्वात् तत्सद्भावे अपुत्राया अपि धनग्रहणमस्तु को विरोध इत्यत आह—उत्पन्नस्य च[1] पुत्रस्येति।अयमभिसन्धिः—नियोगादुत्पन्नपुत्रस्य धनग्रहणेऽनिमित्तत्वात् तस्य धनसम्बन्धाभावे सति "पित्रोरूर्ध्वं विभजतां माताप्यंशं समंहरेत्।"इति"स्वयातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः।"

15 इति च*[द्वादशविधपुत्राणां विभागप्रकारकथनं,पुत्राभाव एवेतरेषां धनग्रहणकथनं च विरुध्यते[2] इति।]*द्वितीयं पक्षं दूषयति—अथ तदपत्यस्यैवेति। अयमभिप्रायः—पुत्रस्यैव धनसं-

## बालंभट्टी

नाष्टासमुच्चयः । ननु नियोगस्यैव धनग्रहणे निमित्तत्वे तत्सत्त्वे[3]ऽनुत्पादितपुत्राया अपि धनग्रहणमस्तु को विरोधः अत आह— उत्पन्नस्य च पुत्रस्येति,—नियोगोत्पन्नपुत्रस्य धनग्रहणे निमित्तत्वाभावेन तस्य धनसंबन्धाभावे "पित्रोरूर्ध्वं विभजतां"[4] 'पिण्डदोंऽशहरश्चैषाम्'[5]

15 इति "स्वयातस्य ह्यपुत्रस्य"[6] इति च यथाक्रमं*[द्वादशविधपुत्राणां विभागप्रकारकथनं, पुत्राभाव एवेतरेषां धनग्रहणकथनं च विरुध्येतेति भावः ।]*द्वितीयपक्षं दूषयति—अथेति। सर्वं वाक्यमिति न्यायेनाऽऽह—अस्यैवेति । एवं प्रागपि । एवेनाऽऽद्यव्यवच्छेदः । धनग्रहण इति शेषः । तथेति,—अस्यैव तद्ग्रहणनिमित्तत्वे पुत्रस्यैव धनसम्बन्धनिमित्तत्वलाभात् " पत्नी दुहितरः " इत्यत्र पत्नीत्यंशो न पाठ्यः । तस्या धनसंबन्धनिमित्तत्वाभावादस्य वचनस्य तत्प्रदर्शनार्थत्वाच्चेति भावः । यद्यपि पत्न्या धनग्रहणे नियोगो वा निमित्तं, तदुत्पन्नमपत्यम्,उभयं वा, विशिष्टं वा, अन्त्येऽपि नियोगः प्रधानमपत्यं वा वैशिष्ट्यञ्च जन्यजनकभावसंबन्धेन इति पञ्चपक्षसिंभव इति पक्षद्वयमात्रोपन्यासो न्यूनः, तथाऽपि पक्षद्वयोक्तदूषणैरेवान्येषामपि सुपरिहरत्वेन पृथगनुक्तिः । तथा हि । यदा वैशिष्ट्ये नियोगः प्रधानं, तदाऽपत्यं गौणमिति निमित्तमप्यनिमित्तमिव—परतन्त्रत्वात् । तथा च अनुत्पादितेत्याद्यपक्षोक्ताद्यदूषणं तदवस्थमेव । अथापत्यं प्रधानं, तदोक्तरीत्या द्वितीयपक्षोक्तदोषस्तदवस्थ एव । उभयोः समप्राधान्ये नियोगवत्याः पत्न्याः पुत्रस्य च धनसंबन्धात् केवलं " पत्नी दुहितरः" इत्यनेन पत्न्या धनसंबन्धोक्तिरयुक्ता । अथ

---

१. द. 'च' नास्ति । २. द. ध्येत । ३. प. फ. ब. तत्वेऽनुत्पा० । ४. व्य० १२३. । ५. व्य० १३२. । ६. व्य० १३६. ।

Cole.: Ch. II, Sec. i, § 15.

**अथ स्त्रीणां पतिद्वारको धनसंबन्धः पुत्रद्वारको वा नान्यथेति मतं 16

## सुबोधिनी

बन्धनिमित्तत्वे "पत्नी दुहितरश्चैव" इत्यत्र पत्नीति न कथनीयम्—तस्या धनसम्बन्धित्वभावादस्य वचनस्य धनसम्बन्धानिमित्तत्वप्रदर्शनार्थत्वाच्चेति । ननु पत्न्या धनग्रहणे नियोगो वा निमित्तं, तदुत्पन्नमपत्यं वा [2]निमित्तं, विशिष्ट वा निमित्तं, वैशिष्ट्येऽपि नियोगः प्रधानम्, अपत्यं वा, उभयोः समप्राधान्यं वेति षट् पक्षाः सम्भवन्ति । एवञ्च पक्षद्वयोपन्यासोऽनुपपन्न इति चेत् मैवम्—आद्यपक्षद्वयोक्तदूषणैरेवेतरपक्षाणां सुपरिहरत्वात पृथगुक्तेरनपेक्षत्वात् । तद्यथा—यदा वैशिष्ट्ये नियोगः प्रधानं, तदाऽपत्यमुपसर्जनमिति अपत्यं निमित्तमप्यनिमित्तमिव—अन्यपरतन्त्रत्वात् । तथा चानुत्पादितपुत्राया अपि धनसम्बन्धः प्राप्नोतीति प्रथमपक्षोक्तदूषणं तदवस्थमेव । अथापत्यं प्रधानं तदा पत्नीति नाऽऽरब्धव्यमिति स दोषस्तदवस्थः; उभयप्राधान्ये नियोगवत्याः पत्न्याः[3] पुत्रस्य च धनसंबन्धात् केवलं "पत्नी दुहितरः" इत्यनेन पत्न्या एव धनसम्बन्धकथनमनुपपन्नं स्यात् । अथ मतमुभयप्राधान्ये नियोगोत्पन्नः पुत्रः प्रधानमित्युक्तं भवतीति, तथाऽपि पत्नीति नाऽऽरब्धव्यं पुत्रस्यैव धनसंबन्धादिति सर्वात्मना पूर्वोक्तदूषणद्वयस्य दुष्परिहरत्वान्न काऽप्यनुपपत्तिरिति निरवद्यः पक्षद्वयस्योपन्यासः[4]। ननु यदुक्तं पत्नीति नाऽऽरब्धव्यमिति,तदसत् । स्त्रीणां भर्तृद्वारा पुत्रद्वारा वा धनसंबन्धो—"न स्त्रीस्वातन्त्र्यमर्हति"[5]इति वचनात्।तथा चाभर्तृकाया अपुत्रायाश्च धनसंबन्धाभावात् पत्युरभावे नियोगेनैव पुत्रसिद्धेः तद्वारा पत्न्या धनसंबन्धं वक्ति "पत्नीदुहितरः" इति । अतः पत्नीत्यारम्भोऽपि सार्थकोऽस्मदुक्तव्यवस्थाऽप्यवश्यमाश्रयणीयेत्यनेनाभिप्रायेणाऽऽशङ्कते—अथ स्त्रीणामिति । [6][भवेदेवं, पतिपुत्रद्वारैव धनप्राप्तिः स्त्रीणामिति यदि नियमः, स एव न घटते । प्रकारान्तरेणापि स्त्रीणां धनसम्बन्धबोधनादिति]* 16

## बालंभट्टी

तत्राऽपि नियोगोत्पन्नः पुत्रः प्रधानमित्युच्यते, तथाऽपि द्वितीयपक्षोक्तदोष एव—पुत्रस्यैव धनसंबन्धात् इति सर्वथोक्तदोषतो न मुक्तिरिति । तत्र द्वितीयपक्षोक्तदोषोद्धारेण तं समर्थयन् शङ्कते—अथ स्त्रीणामिति । अयं भावः—स्त्रीणां सामान्येन भर्तृद्वारा पुत्रद्वारा वा धनसंबन्धो न साक्षात्—"न स्त्री स्वातन्त्र्यमर्हति" इति वचनात् । तथा च भर्तृपुत्ररहितायास्तदभावप्राप्तौ भर्त्रभावे नियोगेनैव पुत्रसिद्धेः तस्याः तद्वारा धनसंबन्धबोधकं पत्नीति अस्मदुक्तव्यवस्थायामवश्याश्रयणीयायामेव तदारंभः सार्थक इति

१ थ द. संबन्धनिमित्तत्वा भा० । २ थ. द. त्तं वैशि० (?) । ३. ग. 'पत्न्याः' नास्ति । ४. थ. द द्वयोप० । ५. म ९ ३. । ६. प. ब. 'पुत्रद्वारा' नास्ति ।

Cole.: Ch. II, Sec i, § 16.

तदप्यसत्—"अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्री-
17 धनं स्मृतम्॥" इत्यादिविरोधात्। **किंच सर्वपुत्राभावे "पत्नी दुहितरः" इत्यारब्धम्;
तत्र नियुक्ताया धनसंबन्धं वदता क्षेत्रजस्यैव धनसंबन्ध उक्तो भवति। स च प्रागेवा
18 भिहित इत्यपुत्रप्रकरणे पत्नीति नाऽऽरब्धव्यम्। ** अथ "पिण्डगोत्रर्षिसंबन्धा रिक्थं

---

## सुबोधिनी

परिहरति—तदप्यसत् अध्यग्नीति। अध्यावहनिकमिति—"यत् पुनर्लभते नारी नीय-
माना पितुर्गृहात्। अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम्॥" इति कात्यायनवचनेना-
ध्यावहनिकस्वरूपं दर्शयिष्यति। नियुक्तायाः पुत्राद्द्वारा धनसम्बन्धे स पुत्रः क्षेत्रजः।
तथा चास्य क्षेत्रजपुत्रस्य धनसम्बन्धोऽर्थादुक्तः स्यात्। अस्य चार्थस्य "औरसो
17 धर्मपत्नीजः" इत्यत्रैवोक्तत्वात्" "पत्नी दुहितरः" इत्यत्र *[पत्नीति न कथनीयं
पौनरुक्त्यप्रसङ्गादित्याह—किञ्चेत्यादिना।]* ननु युक्तमिदमपुत्रधनं नियोगानपेक्षि-
ण्येव गृह्णातीति एवं च गौतमवचनानां का गतिरित्याशङ्क्य तेषां गतिं दर्शयितुं
गौतमवचनं पूर्वपक्ष्यभिप्रायसहितमनुवदति — अथ पिण्डगोत्रर्षिसम्बन्धा इति।

## बालंभट्टी

नोक्तदोष इति। मनुमाह—अध्यग्निरिति। अध्यग्नि—विवाहे अग्निसमीपे लब्धम्।
अध्यावहनिकं—द्विरागमने शिबिकाद्यावहनकाले यल्लब्धम्। तथा च कात्यायनः—
"यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्। अध्यावहनिकन्नाम स्त्रीधनं तदुदाहृतम्॥"
इति। इदं सर्वमग्रे स्फुटीभविष्यति। भ्रातृमातृपितृ इति—अत्र मध्यमपदलोपि समा-
सद्वयम्। आदिपदग्राह्यमपि अग्रे एव व्यक्तम्। विरोधादिति—उभयं द्वारं विनाऽपि
उत्तरार्धेन अन्यथा तत्संबन्धस्य तेन प्रतिपादनादित्यर्थः। उक्तदोषोऽपि तदवस्थ एवेत्याह—
किञ्चेति। सर्वेति—मुख्यगौणेत्यर्थः। तत्र—आरब्धे पत्नीतिवाक्ये। नियुक्ताया इति,—
पुत्रद्वारेति भावः। स च पुत्रः क्षेत्रज एवेत्याह—क्षेत्रजस्यैवेति। स च— आरब्धपत्नी-
ति प्रतिपाद्योऽर्थः। प्रागेवं—"औरसो धर्मपत्नीजः" इत्यत्रैव। अपुत्रेति,—अपुत्रसब-
न्धिधनग्राहिप्रकरणे इत्यर्थः। पौनरुक्त्यापत्तेरिति भावः। द्वितीयहेतुनिरासायोक्तार्थस्योक्तं
वाचनिकत्वं दोषसुकरतायै तद्वचनगत्यन्तराय च अनुवदति—अथ पिण्डेति।

---

१. ग वाह०। २. म० ९. १९४.। ३. थ द. च तस्य। ४ व्य० १२८.। ५. थ. द. युक्तियुक्त०। ६. त. पक्षाभि०। ७. प. फ. ब. ध्यग्निसमी०।

Cole.: Ch. II, Sec. i, §§ 16—18.

भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत" इति गौतमवचनान्नियुक्ताया धनसंबन्ध इति, तदप्यसत्। न हि यदि बीजं लिप्सेत, तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते ; किन्त्वनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन्स्त्री वा सा स्त्री बीजं वा लिप्सेत संयता वा भवेदिति तस्या धर्मान्तरोपदेशः। वा शब्दस्य पक्षान्तरवचनत्वेन यद्यर्थाप्रतीतेः। अपि च संयताया एव धनग्रहणं युक्तम् ; न नियुक्तायाः स्मृतिलोकानिन्दितायाः; "अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥" इति संयताया एव धनग्रहणमुक्तम्।

सुबोधिनी

तदाऽनपत्यस्य स्त्रीधनं गृह्णीयादिति,—धनमनपत्यस्य स्त्री गृह्णीयादित्यन्वयः। अत्रा-

बालंभट्टी

न हीति-अस्य प्रमीयत इत्यत्रान्वयः। हि—यतः। स्त्रीधनमित्यत्र स्त्रीति पदं भिन्नं कर्त्री च सा। अनपत्यस्य धनं स्त्री गृह्णीयादित्यर्थः। एतेन 'स्त्री चेति पाठं धृत्वा द्विजानां केवलशूद्राभार्याविषयमिदं तस्य धनं सपिण्डाद्याः प्रत्यासत्तेः क्रमेण भजेरन् स्त्री च; सपिण्डादितस्तस्याः पृथगुक्तेरर्धं ते अर्धं स्त्रीति तदर्थः। 'स्त्रीग्रहणमिदं शूद्रापरमेव—अन्यासां पत्नीत्वात्' इति भ्रान्तोक्तमपास्तम्—मूलाशुद्धेरुपक्रमविरोधात्तस्याधिकारिप्रदर्शनमात्रपरत्वाच्च। उपदेश इति,— प्रतीयत इत्यस्यानुषङ्गः। हेतौ हेतुमाह—वाशब्देति। निपातानामनेकार्थत्वमपि लिङ्गानुशासनानुरोध्येवेति भावः। अयं भावः—ते धनभाजस्स्त्री वा तथेत्युक्त्वा तस्या गतभर्तृकाया अन्यधर्मद्वयोपदेशं चिकीर्षुरेकं धर्ममुक्तवान्—सा स्त्री बीजं वा लिप्सेतेति,—नियोगधर्मेण पुत्रमपेक्षेतेत्यर्थः। अत्र तु वाशब्दो न यद्यर्थः—मानाभावात् ; किन्तु विकल्पार्थः ; स च पक्षान्तरापेक्षया तदेव द्वितीयो धर्मः। स च वचने साक्षादश्रुतोऽपि वाबलात् स्मृत्यन्तरानुरोधाच्च नियोगेन पुत्राभिलाषरूपोपात्तपक्षप्रतियोगी संयतत्वरूपो धर्मः इति ज्ञायते। तथा च नियोगात् पुत्रमपेक्षेत वा संयता वा भवेदिति धनभजनधर्मतोऽन्यधर्मद्वयोपदेश इति। एवं तदीयहेतुद्वयं सङ्खण्डय दोषान्तरमाह—अपि चेति। तदयोग्यतां सूचयत् विशेषणम्—स्मृतीति। तत्र हेतुमाह—अपुत्रेति, —यत इति शेषः। तत्पिण्डमित्यतोऽनुषज्यमानेन तच्छब्देन भर्तृपरामर्शात् भर्तुः कृत्स्नमंशं पत्नी लभते न तु स्वांशं कृत्स्नमित्यर्थः। कृत्स्नं—स्थावरं जङ्गमञ्च। अत एव बृहस्पतिः—"जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम्। आदाय दापयेच्छ्राद्धं मासषा-

१.—२८. २१। २. क. त्यस्माद्वचनादर्थः प्र० ३. (?)। ४. त. त्याश्री। ५. प. ब. तेनध० ६. भ. चकं।

Cole. : Ch. II, Sec. i, § 18.

तथा नियोगश्च निन्दितो मनुना—"नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।

---

## बालंभट्टी

ण्मासिकादिकम्॥पितृव्यगुरुदौहित्रान् भर्तुस्वस्रीयमातुलान्। पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्य-तिथींस्त्रियः॥सपिण्डा बान्धवा ये च तस्यास्स्युः परिपन्थिनः।हिंस्युर्धनानि तान्राजा चोरदण्डेन शासयेत्॥" इति। क्वचित् स्थावरे अपवादमाह स एव—"यद्विभक्ते धनं किञ्चिदाध्यादिवि-विधं स्मृतम्। तज्जाया स्थावर त्यक्त्वा लभते गतभर्तृका॥" इति। एवं च तत्स्थावरं विभक्तस्यापि भ्रातुरेव न पत्न्याः। इदमपि वचनं वक्ष्यमाणसिद्धान्ताद्यांशसाधकं बोध्यम्। एतेन इदमविभक्तस्थावरविषयं वृत्तहीनपत्नीविषयं वा दुहितृराहितप-त्नीविषयं वा दायादानुमतिं विना स्थावरदानविक्रयादिनिषेधपरं वेति परास्तम्—आद्यान्त्ययोर्वचनविरोधात् मानाभावस्यान्ययोस्सत्त्वात्। "मृते मर्तरि भर्त्रंशं लभते कुलपालिका। यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये॥"इति कातीयं तु मूलोक्तान्त्य-विषयकमिति बोध्यम्। "धनं य"[2] इति "कनीयान्"[3] इति च पूर्वोक्तमनुद्वयस्य तात्पर्या-न्तरं स्फुटमेव; न भवदुक्तं—मन्वन्तरविरोधादिति ध्वनयन् तस्याः स्मृतिनिन्दितत्वं प्रतिपादयन् तत्र दोषान्तरं तदुक्तमेवाऽऽह—तथेति,—नियोगो निन्दितश्चेत्यर्थः। आदिपदग्राह्यं व्याख्यानं च पूर्वं स्फुटं तयोस्तात्पर्यं त्वित्थम्। तत्र विभक्तधनस्य भ्रातुरभावे विधिरुक्तो—धनं य इति। तत्र पूर्वतो विशेष उक्तः—सोऽपत्यमिति। नियोगधर्मेणेति भाव। तस्यैवेति संबन्धसामान्ये षष्ठी। तदीयमाता एवव्यवच्छेद्या। अनेन च पुत्रसत्त्वे स्त्रीणां भरणार्हता न तु पतिधनसंबन्ध इति सूचितम्। एवं यवीया-नित्यपि अविभक्तस्य ज्येष्ठस्य नियोगधर्मेण जाते पुत्रे पितृवत् सोद्धारेंऽशे प्राप्ते तन्निवृत्त्यर्थं समो विभागः[4] स्यात् नोद्धारं न वाऽधिकं हरेत् ज्येष्ठः नापि यत्किञ्चिदेव देयम्; अपि तूत्पा-दकेन पितृव्येण कनीयसा समः स्यादिति। इदमेव[5] लिङ्गमन्यत्रापि बोध्यम्। इत्थं हि गूढाकूतम्। मनुनैव नियोगस्य निषिद्धत्वात् तत्परिहारः सुकर इति व्याख्यातृबुद्धिपरीक्षार्थं स्वाभिमतार्थं तस्य स्वक्रमप्राप्तम् अदर्शयित्वैव वचनान्तराणि स्वेष्टार्थपरत्वेन दर्शितानि। परिहारस्त्वेवम्—"अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युस्सनातनम्।" इत्यादिना[6] विधवायां नियोगस्य निन्दितत्वात् अवश्यं नियोगेन विभक्तधनभ्रातृजायायां पुत्रमुत्पाद्य तद्धनं तस्यैव देयमिति न नियम्यते तेन वाक्येन; अपि तु "न स्त्री स्वातन्त्र्यमर्हति"

---

१. प. फ. ब. द्विवि०। २—९. १४६.। ३. (?)। ४. प. फ ब. गःस्यादिति इद०। ५. भ. एतदारभ्य "सुकर" इत्यन्तं नास्ति। ६. म० ९. ६४।

Cole,: Ch. II, Sec. i, § 18.

अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥" इत्यादिना । ** यत्तु वसिष्ठवचनम् 19
" रिक्थलोभान्नास्ति नियोगः" इति, तदविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्या धनसंबन्धो नास्तीति स्वापत्यस्य धनसंबन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम् ।
** यदपि नारदवचनम्—"भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । " इति, 20
तदपि "संसृष्टानां तु यो भागस्तेषामेव स इष्यते।" इति संसृष्टानां प्रस्तुतत्वात् तत्स्त्री-

---

सुबोधिनी

यमभिप्रायः । पिण्डगोत्रर्षिसम्बन्धा रिक्थभाजः स्त्री वा रिक्थं भजेतेत्यभिधाय *[तस्याः 18
प्रमीतभर्तृकायाः धर्मद्वयमुपदिश्यते । तत्रायमेको धर्मः—सा स्त्री बीजं वा लिप्सेत नियोगधर्मेण पुत्रमपेक्षेतेति । अत्रत्यवाशब्दो न यद्यर्थः, अपि तु विकल्पाभिप्रायः । विकल्पश्च पक्षान्तरापेक्षया । तदेव पक्षान्तरं द्वितीयो धर्मः । स च धर्मो वचने साक्षादनुपात्तोऽपि वाशब्दप्रयोगबलान्नियोगेन सन्तानाभिलाषरूपस्य पक्षस्य प्रतियोगि संयतत्वं धर्म इति ज्ञायते । एतदुक्तं भवति—नियोगात् पुत्रमपेक्षेत वा संयता वा भवेदिति धर्मद्वयोपदेश इति ।][4] तदविभक्ते संसृष्टिनि वा भर्तरि प्रेत इति । *[एतदुक्तं भवति—अविभक्ते पत्यौ मृते 19

बालंभट्टी

इति मनुना स्त्रीणामेकाकितयाऽवस्थानं निषिद्धमिति देवरगृहे स्थितौ कृतायां स्त्रीणामप्रगल्भत्वेन तद्धनरक्षणे च देवरेण क्रियमाणे सन्ततिलोभात् सा स्त्री शास्त्रसिद्धत्वात् गर्हितमपि नियोगं यद्यनुमन्यते, तदा अपत्ये उत्पन्ने देवरेण धनलोभो न कार्यः तस्यैव तद्धनं दद्यात् नापि तन्मात्रे । अत एव बिभृयादिति धारणपोषणवाचिनो भृञ उक्तिरिति । तेन तदग्रे तद्वत् साधकत्वेनोक्तवसिष्ठतात्पर्यमाह—यत्त्विति । तदविभक्ते इति,—पक्षद्वयमिदम् । तस्याः— तत्पत्न्याः । नास्ति,— उक्तयुक्तेः । इतिः—हेतौ । स च संबन्धे वेति । स्वस्यास्तदभावेऽपि स्वापत्यस्य स भवत्विति लोभान्नियोगो नाऽपेक्षणीय इति भावः । अग्रिमयुक्तिं खण्डयति—यदपीति । प्रस्तुतत्वात् तानुपक्रम्य भ्रातृणामित्यादेरुक्तत्वात् तथाचोपक्रमानुरोधेन तादृशस्य भ्रातुर्धनमितरे संसृष्टिना भ्रातर एव गृह्णीयुरिति भावः । अत एवाऽऽह—तादिति । मात्रपदेन कृत्स्नधनसंबन्धव्यवच्छेदः । उक्ताशयेनैव

---

१.—९. ६४. । २.—१७. ६५. । ३.—१३. २६. । ४. क. स तस्या नेष्यते बुधैः। च. गस्तस्याने० । ५ ङ. दृश्यते । ना० १३ २४. ।६. थ द. कृथार्हत्य० । ७.थ. द. शति । ८. थ. द. गीसं० । ९. म० ९. ३. ।

Cole.: Ch. II, Sec. i, §§ 18—20.

णामनपत्यानां भरणमात्रप्रतिपादनपरम् । न च "भ्रातृणामप्रजाः प्रेयात्" इत्येतस्य संसृष्टिविषयत्वे "संसृष्टानां तु यो भागः" इत्यनेन पौनरुक्त्यमाशङ्कनीयम्; यतः
21 पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च भरणमात्रं विधीयते । **यदपि "अपुत्रा योषितश्चैषाम्" इत्यादिवचनं, तत् क्लीबादिस्त्रीविषयमिति वक्ष्यते ।

## सुबोधिनी

संसृष्टिनि वा पक्षद्वयेऽपि तत्पत्न्याः स्वस्या धनसंबन्धो नास्तीति कृत्वा स्वस्या धनसम्बन्धाभावेऽपि स्वापत्यस्य भवत्विति धनलोभान्नियोगो नापेक्षणीय इति।]* ननु "संसृष्टानां तु यो भागस्तेषामेव स इष्यते" इति नारदेन संसृष्टिन उपक्रम्य "भ्रातृणामप्रजाःप्रेयात् कश्चिच्चेत् प्रव्रजेत वा । विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।" इत्युक्तेरुपक्रमानुरोधेन भ्रातुर्धनमितरे संसृष्टिभ्रातरो गृह्णीयुरित्यभिहितम् । "भ्रातृणामप्रजाः प्रेयात् इत्यादिना च स एवार्थोऽभिधीयत इति पौनरुक्त्यं स्यादित्याशङ्क्य परिहरति—न च भ्रातृणामित्यादिना। अयमर्थः—पूर्वं संग्रहेण कथितमधुना विव्रियते । तत्र स्त्रीधनमविभाज्यमिति च तासां स्त्रीणां भरणं कर्तव्यमिति च वाक्यद्वयेनार्थद्वयं विधीयते न केवलं पूर्वोक्तमेव कथ्यते, येन पौनरुक्त्यं स्यादिति तत्रा स्त्रीधनं विनेति तद्धनस्याविभाज्यत्वविधिः, उत्तरेणेतरविधिः । योगीश्वरवचनस्य स्वाभिमतमर्थं दर्शयति—यद्प्यपुत्रा योषित इति। यत्तु मनुवचनं—"धनं यो बिभृयात्

## बालंभट्टी

शङ्कते—न चेति । *[पौनरुक्त्यमिति,—उभयोरेकार्थबोधकत्वात् । यत इति,—
20 पूर्वं सङ्ग्रहेण कथितमग्रे विवृण्वता तेन वाक्यद्वयेन स्त्रीधनमविभाज्यमिति तासां भरणमात्रं कार्यमिति चार्थद्वयं विधीयते ; न केवलं पूर्वोक्तमेव कथ्यते — येन पौनरुक्त्यं स्यात् । तत्र भ्रातृणामित्यादिना विवरणं स्त्रीधनं विनेति तस्याविभाज्यत्वविधिरुत्तरेणेतरविधिरिति भावः ।*] एतेन "सवर्णाभावे त्वनन्तरया चाऽऽपदि" "नत्वेव द्विजश्शूद्रया" इति विष्णूक्तेः परिणीतात्वेऽप्यपत्नीत्वात् तद्विषयं नारदवचनम्; अत एव तत्रा पत्नीशब्दः तत्र स्त्रीशब्द इति प्राच्योक्तमपास्तम्—उक्तरीत्योपपत्तेः । किलेति सूचितं योगीश्वरोक्तेर्वक्ष्यमाणं स्वेष्टार्थमाह—यद्यपीति ।

---

१. ना. १३. २४. । २. ना० १३. २४। ३. व्य० १४०. । ४. थ. द वा पत्यै मृते प० । ५. थ. द. त्युक्तत्वादुप० । ६. द. चाऽऽसा ७. द. अत्र । ८.—२६. ३, ४. ।

Cole.: Ch. II, Sec. i, §§ 20—21.

**यत्तु द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकारात् धनग्रहणमयुक्तमिति, 22
तदसत्—सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः । अथ यज्ञशब्दस्य
धर्मोपलक्षणत्वात् दानहोमादीनामपि धर्मत्वात्तदर्थत्वमविरुद्धमिति मतम् ।

## सुबोधिनी

भ्रातुर्मृतस्य स्त्रियमेव वा । अपत्यं भ्रातुरुत्पाद्य दद्यात् तस्यैव तद्धनम्'' इति विभक्तेऽपि भ्रातरि नियोगद्वारैव तत्पत्न्या धनग्रहणप्रतिपादकं, पूर्वपक्षदशायामुक्तं तत्र मनुवचनेन नियोगस्य निन्दितत्वात् तत्परिहारः सुकर इति व्याख्यातृबुद्धिपरीक्षार्थं स्वसिद्धान्तार्थं मदर्शयित्वैव वचनान्तराणि स्वाभिप्रेतपरत्वेन दर्शितानीति मन्तव्यम् । परिहारस्त्वेवम् — ''अन्यस्मिन् विनियुञ्जाना धर्मं हन्युः सनातनम् । '' इत्यादिभिर्विधवायां नियोगस्य निन्दितत्वेनावश्यं नियोगेन विधवाभ्रातृजायायां पुत्रमुत्पाद्य तद्धनं तस्यैव दातव्यमिति न नियम्यतेऽनेन वचनेन; अपि तु ''न स्त्री स्वातन्त्र्यमर्हति '' इति स्त्रीणामेकाकितयाऽवस्थानं निषिद्धमिति देवरगृहेऽवस्थाने कृते स्त्रीणामप्रगल्भत्वेन तद्धनरक्षणे देवरेण च क्रियमाणे सन्ततिलोभात् सा स्त्री शास्त्रसिद्धत्वात् गर्हितमपि नियोगं यदि मनुते, तदा अपत्ये उत्पन्ने देवरेण धनलोभो न कर्तव्यः । तस्यैव तद्धनं समर्पयेदित्येवमर्थपरं व्याख्येयम्—अनेकवचनविरोधादिति। अत एव ''धनं यो बिभृयात् '' इति धारणपोषणवाचिनो भृञ उपादानं मनुना कृतम् । ननु यज्ञशब्दो धर्ममात्रोपलक्षको न यज्ञवाचकः। अतो दानहोमादिसिद्धिरित्याशङ्कते—अथ यज्ञशब्दस्येति ।*[देवतोद्देशेन 22
द्रव्यत्यागो यागः । स एवोद्देशोऽग्नौ प्रक्षेपान्तो होमः । स्वत्वनिवृत्तिद्वारा परस्वत्वापादनं

## बालंभट्टी

चरमदोषं खण्डयति—यत्त्विति । जातस्य— तत्समूहस्य । ननु यज्ञशब्दो धर्ममात्रोपलक्षको न यज्ञवाचक इति दानहोमादिसिद्ध्या हेत्वासिद्धिरिति शङ्कते—अथेति । देवतोद्देशेन द्रव्यत्यागो वैधे आधारे सवषट्कारो यागः; स एवावषट्कारो

---

१. क. तद्ग्रह० । २.म० ९ १४६ । ३. थ. द. तुनैव नि० । ४. त. द्वार्थ० । ५. म० ९. ६४. । ६. थ. द. तत्वादव० । ७. थ. विभक्तधनविध० । द विभक्तधनविधवायां भ्रा० । ८. म, ९. ३. । ९. त. प्रजत्वे० । १०. थ. द. यद्यतुम० । ११ थ. द. पणा० ।

Cole.: Ch. II, Sec. i, § 22.

एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात्। तथा सति "धर्ममर्थं च कामं च यथाशक्ति न हापयेत्[1]।" तथा "न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः[2]" "न तथैतानि

सुबोधिनी

दानमिति यागदानहोमानां[3] भेदः।]*धर्म एव धनस्योपयोगात् धनसाधनकः[4] कृषिवाणिज्यादिलभ्योऽर्थः, तथा धनसाधनकः स्रक्चन्दनादिविषयः कामश्च न स्यातामिति परिहरति —एवं तर्ह्यर्थकामयोरिति। ओमित्यत आह—तथा च सतीत्यादिना। धर्मार्थकामेभ्यो यथाशक्ति पूर्वाह्णमध्यन्दिनापराह्णानफलान् न कुर्यादित्यन्वयः।न तथैतानि शक्यन्त इति, —"इन्द्रियाणां विचरतां विषयेष्वनपायिषु। संयमे यत्नमातिष्ठेत्"इतीन्द्रियसंयमं प्रक्रम्य "प्रापणात् सर्वकामानां परित्यागो विशिष्यते। न तथैतानि शक्यन्ते सन्नियन्तुमसेवया॥" इत्यभिहितं मनुना[6]। अस्यार्थः—सर्वभोगानां प्रापणादुपभोगादपि परित्यागो विशिष्यते समीचीनः उत्तम इति यावत्। एतानि विषयासक्तया दोषजनकानीन्द्रियाणि। असेवया रूपादिविषयानुपभोगेन तथा सन्नियन्तुं सम्यङ्नि न्तुं न शक्यन्ते विषयोपभोगेन तद्गतदोषविज्ञानं यथा न तथा विषयानुपभोगेनेत्यर्थः। अनिषिद्धविषयोपभोगस्य वैराग्योत्पा-

बालंभट्टी

होमः। स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानमिति यागहोमदानानां भेदः। एवं तर्हि— धर्ममात्र एव धनस्योपयोगे सति। धनसाधकः कृषिवाणिज्यादिलभ्योऽर्थः, तादृशः स्रक्चन्दनादिविषयः कामः। इष्टापत्तावाह—तथा च सतीति। मूलोक्तमाह—धर्ममिति। गौतमोक्तिमाह—तथा न पूर्वाह्णेति। धर्मार्थकामेभ्यो यथाशक्ति पूर्वाह्णमध्यन्दिनापराह्णानफलान्न कुर्यादित्यर्थः। मनूक्तिमाह—न तथैतानीति। "इन्द्रियाणां विचरतां विषयेष्वनपायिषु। संयमे यत्नमातिष्ठेत्" इति इन्द्रियसंयमं प्रक्रम्य "प्रापणात्सर्वकामानां परित्यागो विशिष्यते। न तथैतानि शक्यन्ते सन्नियन्तुमसेवया॥" इत्युक्तं मनुना। अस्यार्थः— तेषां तद्विषयके संयमे सर्वभोगानां प्रापणादुपभोगात् तद्धेतुकः परित्यागो विशिष्यते समीचीन उत्तम इति यावत्; यतः एतानि विषयासक्तया दोषजनकानीन्द्रियाणि असेवयास्रगादिविषयानुपभोगेन तथा सन्नियन्तुं सम्यक् नियन्तुं न शक्यन्ते यथा विषयोपभोगेन, यथा

---

१. आ० ११५.। २. गौ० ९. ४६.। ३. थ. द. मदानानां। ४. थ. कः स्रक्च०। ५. थ. णादुपभोगा० ६.—२. ८८—९६.। ७. भ. धनकः। ८. प. फ ब. परानतथै०। ९. प. फ. ब. गेन नेति अ०।

Cole.: Ch. II, Sec. i, §22

शक्यन्ते सन्नियन्तुमसेवया।" इत्यादियाज्ञवल्क्यगौतममनुवचनाविरोधः। ** अपि च 23
धनस्य यज्ञार्थत्वे "हिरण्यं धार्यम्" इति हिरण्यसाधारणस्य क्रत्वर्थतानिराकरणेन पुरुषार्थत्वमुक्तं तत्प्रत्युद्धृतं स्यात्।

---

सुबोधिनी

दकत्वेन कर्तव्यत्वादर्थकामाववश्यं साधनीयाविति प्रतिपादकवचनविरोध इत्यभिप्रायः। यदि धनं यज्ञार्थं स्यात्, तर्हि "हिरण्यं धार्यम्" इत्यनेन वाक्येन विहितं हिरण्यधारणं कर्तव्यमिति पूर्वपक्षिणाभिहिते तन्निराकृत्य पुरुषार्थमित्युक्तं सिद्धान्तिना। तन्यायविरोधोऽपि स्यादित्याह—अपि च धनस्य यज्ञार्थत्वे हिरण्यं भार्यमितीति। तत् प्रत्युद्धृतं स्यादिति,— प्रत्युद्धृतं विघटितं विपरीताभिहितमिति यावत्। तृतीयचतुर्थपादाधिकरणम्। अप्रकरणे तु तद्धर्मस्ततो विशेषात्" (॥ २६ ॥) अनारभ्य श्रूयते—"तस्मात् सुवर्णं हिरण्यं भार्यम् दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति। तत्र संशयः—किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन

बालंभट्टी

तद्गतदोषविज्ञानं, तथा विषयानुपभोगेन नेति अनिषिद्धविषयोपभोगस्य वैराग्योत्पादकत्वेन कर्तव्यत्वादर्थकामाववश्यं साधनीयावित्येतत्प्रतिपादकवचनजातविरोध इति भावः। दोषान्तरमाह—अपि चेति। धार्यमिति,—विहितस्येति शेषः। क्रत्वर्थता,—पूर्वपक्ष्युक्तेत्यादिः। उक्तं–सिद्धान्तिना। तत्प्रत्युद्धृतम्—विघटित विपरीतोक्तमिति यावत्। अयं भावः—तृतीयचतुर्थपादस्य द्वादशाधिकरणम् "अप्रकरणे तु तद्धर्मस्ततोविशेषात्" अनारभ्य श्रूयते "तस्मात्सुवर्णं हिरण्यं धार्यं दुर्वर्णोऽस्यभ्रातृव्यो भवति" इति। तत्र संशयः। किमिदं हिरण्यं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते, उत "हिरण्यं हस्ते भवति" इति विहितं यद्धारणं, तदनुवादेन सुवर्णतारूपो गुणो विधीयते यद्धिरण्यं धार्यं तत्सुवर्णमिति, उत हिरण्यधारणं पुरुषार्थतया विधीयते? इति। पूर्वपक्षस्तु हिरण्यविशिष्टं धारणं यद्यपि विधीयते, तथाऽपि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात् क्रियारूपत्वाच्च वैदिकदर्शपौर्णमासादिसाम्यात् फलवत् वैदिकं

---

१. म० २. ९६. । २. ण्यधार० । ३. थ. द. दाहृतं । ४. तैत्ति० ब्रा० २. २. ४ । ५. भ. शोभनवर्ण० ।

Cole.: Ch. II, Sec. i, §§ 22—23.

## सुबोधिनी

धारण संस्कारो विधीयते, अथवा "हिरण्यं हस्ते भवति" इति विहितं यद्धारणं तदनुवादेन सुवर्णता शोभनरूपता विधीयते यद्धिरण्यं भार्यं तत् सुवर्णमिति, आहोस्वित् हिरण्यधारणं पुरुषार्थतया विधीयत इति। पूर्वपक्षस्तु—हिरण्यविशिष्टं धारणं यद्यपि विधीयते,तथाऽपि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात् क्रियारूपत्वाच्च वैदिकदर्शपूर्णमासादिसाम्यात् फलवद्वैदिकं कर्म बुद्धिस्थं भवति। ततश्च तत्रैव वैदिके कर्मणि प्रयाजादिवदारादुपकारं कुर्वत् क्रत्वङ्गं धारणं भविष्यति। एतावता च फलाकाङ्क्षानिवृत्तेः स्वर्गादिकल्पना न युक्तेत्येकः। अथ वा "हिरण्यं भार्यम्" इत्यत्र कृत्यप्रत्ययेन धारणविधानात्[1] तत्कर्मणो हिरण्यस्य द्वितीयाविभक्त्या प्राधान्यप्रतीतेर्धारणं संस्कारः। "व्रीहीन् प्रोक्षति" इत्यत्र प्रोक्षणमिव। "भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति।" इति न्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कर्तव्यः। उपयोगश्च प्रयोजनवत एव। निष्प्रयोजनस्य लौकिकस्य सुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवन्नारादुपकारकमङ्गम्; अपि तु प्रोक्षणादिवत् संस्कारकर्मेत्यपरः। अथ वा क्रतुगतं हिरण्यं तद्धारणं चानूद्य लाघवात् सुवर्णमिति सुवर्णता विधीयत इत्यन्वयः।

## बालंभट्टी

कर्म बुद्धिस्थं भवति। ततश्च तत्रैव वैदिके कर्मणि प्रयाजादिवदारादुपकारं कुर्वत् क्रत्वङ्गं धारणं भविष्यति[2]। एतावतैव फलाकाङ्क्षानिवृत्तेः स्वर्गादिफलकल्पना न युक्तेत्येकः। हिरण्यं धार्यमित्यत्र कृत्यप्रत्ययेन धारणविधानात् तत्कर्मणो हिरण्यस्य कृत्यश्रुत्या प्राधान्यप्रतीतेः धारणं संस्कारो व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणमिव "भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति।" इति न्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कार्यः। उपयोगश्च प्रयोजनवत एव निष्फलस्य लौकिकसुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवन्नारादुपकारकमङ्गम्; अपितु प्रोक्षणादिवत् संस्कारकर्मेत्यपरः। क्रतुगतं हिरण्यं तद्धारणं चानूद्य लाघवात् सुवर्णमिति शोभनवर्णता विधीयत इत्यन्यः। एवं त्रेधाऽपि तावत् क्रत्वर्थमिति प्राप्ते उच्यते। यदुक्तं वैदिकत्वक्रियात्वसाम्यात् क्रतुरुपतिष्ठते फलाकाङ्क्षायामिति नैष नियमो घटते। यतः स्वर्गाद्युत्पत्तेरपि क्रियात्वाद्दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिषु स्वर्गादेः कर्तृसंबन्धितयोक्तेर्वैदिकत्वाच्च स्वर्गाद्युत्पत्तिं क्रतुं चोभयमुपस्थापयति। क्रियात्वं वैदिकत्वं चेति हेतुद्वयं न नियमतः क्रतुमेव—येन विशिष्टवि-

१. थ. द. नात्कर्म०। २ (?)। ३. त. थ. वानू०। ४. प. फ. ब. णमिव भूत०। ५. प. फ ब. यात्वंचेति।

Cole.: Ch. II, Sec. i, § 23.

** किंच यज्ञशब्दस्य धर्मोपलक्षणपरत्वे स्त्रीणाम- 24
पि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम्। ** यत्तु पारतन्त्र्यवचनं "न स्त्रीं स्वातन्त्र्य- 25

## सुबोधिनी

एवं त्रेधाऽपि तावत् क्रत्वर्थमिति प्राप्तेऽभिधीयते। यदुक्तं वैदिकत्वक्रियात्वसाम्यात् क्रतुरुपतिष्ठते फलाकाङ्क्षायामिति, नैष नियमो घटते—स्वर्गाद्युत्पत्तेरपि क्रियात्वात्। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिषु स्वर्गादेः कर्तृसम्बन्धितयोत्पत्तेर्वैदिकत्वाच्च स्वर्गाद्युत्पत्तिं क्रतुं चोभयं युगपदुपस्थापयति क्रियात्वं वैदिकत्वं चेति हेतुद्वयं, न नियमतः क्रतुमेव येन; विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात्। न च क्रतुगतहिरण्यप्रतीतिः यतो; हिरण्यानुवादेन धारणसंस्कारविधिः स्यात्। लोकेऽपि हिरण्यसद्भावात् न क्रतुगतहिरण्यप्रतीतिः। न हि धारणं धार्यमाणसंस्कारः—अदृष्टार्थत्वेनापि धारणोपपत्तेः। कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रं चाऽऽह न प्राधान्यम्—अनीप्सितकर्मणोऽपि विद्यमानत्वात्। अत एव धारणानुवादेन न सुवर्णतारूपगुणविधिः—क्रतुधारणाप्रतीतेः लोकेऽपि धारणसम्भवात्। अतो न क्रत्वर्थं सुवर्णधारणम्। विधिवशाच्चावश्यं फलेन भाव्यम्। तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गः, अर्थवादसद्भावे तु रात्रिसत्रन्यायेन तद्गतमेव। अत्र तु "दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति श्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपतैव फलमिति पुरुषार्थं हिरण्य-

## बालंभट्टी

धिपक्षेऽपि क्रत्वर्थता स्यात्। लोकेऽपि हिरण्यसत्त्वान्न क्रतुगतहिरण्यप्रतीतिः। न हि धारणं धार्यमाणसंस्कारः — अदृष्टार्थत्वेनापि धारणोपपत्तेः। कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रं वाऽऽह न प्राधान्यम्—अनीप्सितकर्मणोऽपि विद्यमानत्वात्। अत एव धारणानुवादेन न सुवर्णतारूपगुणविधिः क्रतुधारणप्रतीतेर्लोकेऽपि धारणसंभवात्। अतः न सर्वथा क्रत्वर्थं सुवर्णधारण विधिवशाच्चावश्यं फलेन भवितव्यम्; तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गः। तत्सत्त्वे तु रात्रिसत्रन्यायेन तद्गतमेव। अत्र "दुर्वर्णोऽस्य भ्रातुव्यो भवति" इति श्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपतैव फलमिति पुरुषार्थमेव हिरण्यधारणमिति सिद्धान्तः। दोषान्तरमाह — किञ्च यज्ञेति।
पूर्त—तटाकारामादि। पूर्वोक्तमनुतात्पर्यशरीरघटकत्वेनोपस्थितमन्वन्तरविरोधमपि परिहरति—यत्तु पारेति,— "पिता रक्षति कौमारे भर्ता रक्षति यौवने। रक्षन्ति स्थविरे पुत्राः" इति वाक्यादिः। आदिना "कालेऽदाता पिता वाच्यः" इत्यादितदग्रिममनु-

१. क. णमपि यु०। २ थ 'कर्तृ' आरम्य 'इत्यर्थः दोषश्रवणस्य' इत्यन्तं नास्ति। ३. द. यमुप०। ४. द. त्वे विना। ५. द. तुगतधा०। ६. त. र्णम्। ७. द. भवितव्यम्। ८. त. इति सिद्धा०। ९. भ. श्चन संस्कार्यत्वं सा०। १०.—९. ४.।

Cole.: Ch. II, Sec. i, §§ 24—25.

26 मर्हति" इत्यादि तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः**। कथं तर्हि "यज्ञार्थं द्रव्यमुत्पन्नम्" इत्यादिवचनम्। उच्यते। यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपीत्येवंपरं हि तत्-"यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत्।"
27 इति दोषश्रवणस्य पुत्रादिष्वप्यविशेषात्। **यदपि कात्यायनेनोक्तम्—"अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम्। अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत्॥" इति,

## सुबोधिनी

धारणमिति सिद्धान्तः। तदस्तु पारतन्त्र्यमिति,—पारतन्त्र्यमेकाकिनी भूत्वा स्थितिः। अतः स्वपत्युर्धने गृहीतेऽपि न विरोध इत्यर्थः। यज्ञार्थमेवार्जितं यद्धनमिति,— "यज्ञार्थं द्रव्यमुत्पन्नम्" इत्यस्मिन् वचने द्रव्यं यज्ञार्थमुत्पन्नमिति न विधिः; किन्तु यागार्थभिक्षयाऽवनिपतिगमनेन यज्ञार्थमेव यज्ञोद्देशेन यद्द्रव्यमुत्पन्नमित्यनूद्य तद्द्रव्यं तेन यज्ञ एव विनियोक्तव्यं, लोभात् तेन विनियोगेऽकृतेऽपि तत्पुत्रादिभिरपि धर्मकार्येष्वेव विनियोक्तव्यमिति सर्वात्मना यज्ञार्थमर्जितं द्रव्यं धर्म एव विनियोक्तव्यमिति विधीयते। अत एव धर्मेऽनधिकृतैस्तद्द्रव्यं न ग्राह्यम्—धर्मकरणेऽधिकाराभावात्। अत एव च ग्रासमात्रभाजना इत्युच्यत इत्यर्थः। दोषश्रवणस्य पुत्रादिष्वप्यविशेषादिति,—"यज्ञार्थं

## बालंभट्टी

ग्रहणम्। तदास्त्विति पारतन्त्र्यम्—एकाकीभूत्वा अस्थितिरिति तया स्वपत्युर्धनग्रहणेऽपि न विरोध इति भावः। एवं चरमसाधकखण्डने तत्साधकत्वेनोक्तवचनानामन्याशयत्वं शङ्कापूर्वकमाह—कथं तर्हीत्यादिना। सर्वं वाक्यमिति न्यायेनाऽऽह—यज्ञार्थमेवेति। यज्ञार्थमिति वचने द्रव्यं यज्ञार्थमुत्पन्नमिति न विधिः; किन्तु यागभिक्षयाऽवनिपतिगमनेन यज्ञार्थमेव तदुद्देशेनैव यत् द्रव्यमुत्पन्नं, तत् द्रव्यं तेन यज्ञ एव नियोक्तव्यं, लोभादिना तेन तत्र विनियोगेऽकृतेपि तत्पुत्रादिभिरपि धर्मकार्येष्वेव नियोक्तव्यमिति सर्वथा धर्मार्थमर्जितं द्रव्यं धर्म एव नियोक्तव्यमिति विधीयते। अत एव धर्मे अनधिकृतैः तत् द्रव्यं न ग्राह्यम्—धर्मकरणे अधिकाराभावात्। अत एव ते ग्रासाच्छादनमात्रभाजना इति तदर्थ इति भावः। अपिना अर्जकपरिग्रहः। अत्र मानं मनुमेवाऽऽह—यज्ञार्थमिति। पुत्रादिष्वपीति,—यज्ञार्थं लब्धमिति मानवे अर्जकनामग्रहणं विना सामान्यत उक्त्या "नारभ्याधीत" "नानृतं वदेत्" इतिवत् पुरुषमात्रोद्देशेन तस्य प्रवृत्त्याऽर्जकस्य तत्पुत्रादीनाञ्च धर्मार्थद्रव्यस्य धर्मकृत्येष्वविनियोगे दोष इति भावः। पूर्वप्रसङ्गोपस्थितकात्यायनविरोधमपि परिहरति—यदपीति। विरोधप्र-

१ म०९. ३. । २. क. व यद्धनमर्जितं । ३. आ० १२७. । ४. ग. षत्वा० । ५. तं. 'वचने' नास्ति । ६. त. वनीवने० (?) । ७. द. भादिना तेन तत्र ।
Cole.: Ch. II, Sec.i. §§ 25-27.

अदायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञो भवति योषित्भृत्यौर्ध्वदेहिकमपास्य तत्स्त्रीणामशनाच्छादनोपयुक्तं, और्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापास्य परिहृत्य राजगामि भवतीति संबन्धः। अस्यापवादः—श्रोत्रियद्रव्यं च योषित्भृत्यौर्ध्वदेहिकमपास्य श्रोत्रियायोपपादयेदिति।**एतदप्यवरुद्धस्त्रीविषयम्—योषिद्ग्रहणात्। नारदवचनं च—"अन्यत्र ब्राह्मणात्किं तु राजा धर्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥" इत्यवरुद्धस्त्रीविषयमेव—स्त्रीशब्दग्रहणात्। **इह तु 28 29

सुबोधिनी

लब्धमददत्" इत्यस्मिन् वचनेऽर्जकनामग्रहणमन्तरेण समान्यतोऽभिधानात् "नानृतं वदेत्" इतिवत् पुरुषमात्रोद्देशेन प्रवृत्तेरर्जकस्य तत्पुत्रादीनां च यज्ञार्थद्रव्यस्य यज्ञादिष्वविनियोगे दोष इत्यर्थः। पूर्वोक्तं कात्यायनवचनं व्याचष्टे-अदायिकं दायादरहितमित्यादिना। अस्यैव कात्यायनवचनस्य द्वितीयार्थं व्याचष्टे—अस्यापवाद इति। इत्येवं व्याख्याय तद्विरोधं परिहरति–एतदप्यवरुद्धस्त्रीविषयमिति। तत्र हेतुः—योषिद्ग्रहणादिति। अन्यत्र ब्राह्मणात् किन्त्विति,—"अदायिकं राजगामि" इत्यस्यैवार्थस्य नारदेन पूर्वं प्रस्तुतत्वात् तदनुषङ्गेणैवात्र योजना कर्तव्या। ब्राह्मणादन्यत्रादायिकं धनं राजगामि, किन्तु तत्रापि तत्स्त्रीणां जीवनं

बालंभट्टी

कटतायै व्यत्यस्तपदोक्त्याऽसंबन्धत्वनिरासाय च तदर्थमाह—अदायिकमिति,—दायिके मत्वर्थीयष्ठन् ततो बहुव्रीहिः दायग्राहकशून्यमित्यर्थः। तदाह—दायादेति। तत्पदोक्तेराह—यदिति। अनेन "श्रोत्रियेभ्यस्तदर्पयेत्" इति पाठस्सूचितः। वक्ष्यमाणात्तु "श्रोत्रियायोपपादयेत्" इति पाठो लभ्यते। तत्र उपेत्यादेः प्रापयेदित्यर्थः। तदाद्योभयमध्याहारलभ्यं तत्र च जातावेकवचनमिति बोध्यम्। वृत्तिपदार्थमाह—अशनेति। योषितोऽत्रैव संबन्धो नाग्रेऽपीति भावः। द्वितीयार्धशेषार्थमस्यैवाऽऽह–अस्यापवाद इति। तदनुवृत्तेराह—योषिदिति। तथा च स्त्रीणामशनादिपर्याप्तधनसंबन्ध एव न सकलधनसंबन्ध इति तदभिमतमिति तद्विरोधोऽसंबन्धतानिरासश्च स्पष्ट एवेति भावः। एवं तदर्थं व्याख्यायाथ तं परिहरति—एतदपीति,—प्रक्रान्तमपीत्यर्थः। तत्र बीजमाह—योषिदिति। नारदान्तरविरोधमपि तथैव परिहरति—नारदेति,—इति नारदवचनमप्यवरुद्धस्त्रीविषयमेवेत्यर्थः। तदेवाऽऽह—अन्यत्रेति। तथा चावरुद्धग्रहणं पत्नीत्वाभाववदुपलक्षणम्; *[तथा च यत्र यत्र पत्नीत्वाभावः पुनर्भ्वादावपि, तत्र सर्वत्रेदमेव;]*एतदभिप्रायक एव प्रजापतिरपि— 28

१ क. मप्यपा०। २.—१३. ५२। ३. आ० १२७। ४. त. र्जकस्य पु०। ५. भ. शनेतिद्विती०।

३० पत्नीशब्दादूढायाः संयताया धनग्रहणमविरुद्धम् । **तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति—

## सुबोधिनी

दद्यादिति। प्रतिपादितं स्वपक्षमुपसंहरति—तस्माद् विभक्तासंसृष्टिनीति। ननूक्तस्यैवोपसंहारो युक्तः; तथा च पूर्वोक्तोपसंहारेऽभिहितस्यार्थस्य "पत्नी दुहितरः" इत्यत्र वचने व्याख्याने वाऽनुक्तत्वात् कथं सोऽर्थ उपसंह्रियत इत्याशङ्क्य सकलवाक्यानामितरवाक्याविरोधेनैव प्रवृत्तेर्न्याय्यत्वात् उक्तवक्ष्यमाणानुसन्धानेनास्मिन् वाक्ये इयानर्थो लब्ध इत्यर्थादुक्तस्यैवोपसंहार इति स्पष्टयितुमुक्तं स्मारयन् वक्ष्यमाणं च दर्शयति—

## बालंभट्टी

" आढकं भर्तृहीनाया दद्यादाभरणं स्त्रियाः । " इति । ऊढाया इति,—श्रौतस्मार्तकर्मसु पाणिग्रहपूर्वकसहाधिकारवत्या एवेत्यर्थः । नारदाद्येकवाक्यतयाऽऽह—संयताया इति । तत्र ब्राह्मणादिति पूर्वान्वयि । तथा च पूर्वपद्यं—"अभावे दुहितॄणां वै सकुल्या बान्धवास्तथा। ततस्सजात्यास्सर्वेषामभावे राजगामि तत् ॥" इति । तथा च सर्वेषामभावे ब्राह्मणादीयधनादन्यत्र तद्धनं राजगामि; किन्तु धर्मपरायणो राजा तत्रापि तत्स्त्रीणां—जीवनं दद्यादित्यर्थः । बृहस्पतिरप्येवम्—जीवनपदार्थश्च बृहस्पतिनैव तदग्रे उक्तः—"अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम् । वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ एतातदेव साध्वीनां चोदितं विधवाधनम् । वसनस्याशनस्यैव तथैव रजकस्य च ॥ धनं व्ययोद्यताच्छिष्टं दायादानां प्रकल्पयेत् ।" इति । साध्वीनामित्युक्त्या असाध्वीनां तदपि नेति सूचितम् । एतेनान्यत्र ब्राह्मणादिति बृहस्पतिः क्षत्रियादिपरिणीतशूद्राविषय इति भ्रान्तोक्तमपास्तम् । एवं च सामान्यतः परिणीतशूद्राविषयकमपीदं द्वयं—तस्या अप्यपत्नीत्वात्। देवलवाक्ये यथाक्रममित्यस्य न स्वपाठक्रमेणेत्यर्थः, अपितु मूलविष्ण्वाद्युक्तक्रमेणेत्यर्थ इति न तद्विरोधोऽपि । सोदरासोदरत्वकृतविशेषस्तु प्रागुक्तबृहस्पतिपराहत एव। एवं तदीयपक्षं सन्दूष्य स्वाभिमतमर्थमुपसंहरन्नेवाऽऽह—तस्मादिति । पत्नीति,—संयतेत्यादिः । कृत्स्नमित्यग्रे शेषः । ननूक्तस्यैवोपसंहारो युक्त इत्यस्यार्थस्य "पत्नी दुहितरः" इत्यत्रानुक्तत्वात् कथमयमुपसंहार इति चेन्न—सकलवाक्यानां स्वेतरसर्ववाक्याविरोधेनैव प्रवृत्तेर्न्याय्यत्वात्; उक्तवक्ष्यमाणानुसन्धानेनास्यार्थस्य लाभादुक्तोपसंहारात् ।

१. थ. द. नां स्वेत० । २. थ. द. दर्शयि० । ३. थ. द. च प्रद० । ४. ना० १३. ५१. ५ प. फ. ब. आस० ।

Cole. : Ch. II, Sec. i, §§ 29—30.

विभागस्योक्तत्वात्, संसृष्टिनां वक्ष्यमाणत्वात्। **एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तं निरस्तं वेदितव्यम्। 31
तथा ह्यौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्—"यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।" "पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत्।" इति च। तथासत्यपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम्।

---

## सुबोधिनी

विभागस्योक्तत्वादिति। यद्यल्पधनं भवति तर्हि अपुत्रस्य प्रमीतस्य तद्धन पत्नी गृह्णीयादित्येवमर्थपरत्वं "पत्नी दुहितरः" इत्यादीनां पत्न्या धनप्रापकाणां याज्ञवल्क्यादिवचनानामन्यैः प्रतिपादितं, तद्वक्ष्यमाणेन निरस्तमित्याह—एतेनाल्पधनविषयत्वमिति। निरसनप्रकारमुपपादयति—तथा हीत्यादिना। जीवद्विभागेऽजीवद्विभागे चेति,—पत्यौ जीवति मृतेऽपीत्यर्थः। *[व्यामोहमात्रमिति,—यदा भर्तरि जीवति मृते च पुत्रेषु 31 सत्स्वपि पुत्रसमांशभाक्त्वं न भरणमात्रोपयुक्तधनभाक्त्वं पत्न्याः, तदा किमु वक्तव्यम् अपुत्रस्य धनं सकलं प्राप्नोतीत्येवं कैमुतिकन्यायेनैव पत्न्याः सकलधनभाक्त्वसिद्धेर्ग्रासाच्छादनातिरिक्तं न प्राप्नोतीत्युक्तिर्भ्रान्तैवेत्यर्थः। किञ्चांशग्रहणाधिकारिपुत्रान्तराभावे सकलरिक्थग्रहणाधिकारिणा पुत्रेण सह समांशभाक्त्वस्योक्तत्वात् पुत्राभावे विभक्तस्यानपत्यस्य धनं पत्नी गृह्णातीति युक्तियुक्तं चैतत्।]*तस्मात् पूर्वापरविचारशून्यानामिदं वचनमुपेक्षणीयमेव। समांशशब्दावपि जीवनोपयुक्तधनोपलक्षका-

## बालंभट्टी

तदेतत् ध्वनयन्नुक्तं स्मारयन् वक्ष्यमाणमाह—विभागेत्यादि। उक्तत्वादेतेन तस्याश्रुतत्वेऽपि प्रस्तुतत्वेनाप्रस्तुतत्वदोषनिरासः सूचितः—साक्षादपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेर्न्याय्यत्वात्; अन्यथा अप्रामाण्याद्यापत्तेः। एतेन—वक्ष्यमाणदोषेण। अल्पेति—यद्यल्पं धनं, तदा तस्य तत्प्रथमं पत्नी गृह्णीयादिति मूलतात्पर्यमित्यर्थः। निरसनप्रकारमेवाऽऽह—तथा हीत्यादिना। जीवदिति—पत्यौ जीवति मृते चेत्यर्थः। उक्तं—मूलकृता। तदेव क्रमेणाऽऽह—यदीत्यादि। व्यामोहेति,—यदा पुत्रे

१. व्य० ११५. । २. व्य० १२३. । ३. थ द. प्रदर्शितं । ४. त. परशू०।

Cole:. Ch. II, Sec. i, §§ 30—31.

**अथ "पत्न्यः कार्याः समांशिकाः" इत्यत्र
32 "माताऽप्यंशं समं हरेत्" इत्यत्र च जीवनोपयुक्तमेव धनं स्त्री हरतीति मतम् तदस-
33 त्—अंशशब्दस्य समशब्दस्य चाऽऽनर्थक्यप्रसङ्गात्। **स्यान्मतम्—बहुधने जीवनोप-
युक्तं धनं गृह्णाति अल्पे तु पुत्रांशसममंशं गृह्णातीति। तच्च न—विधिवैषम्यप्रस-
ङ्गात्। तथाहि—"पत्न्यः कार्याः समांशिकाः" "माताऽप्यंशं समं हरेत्" इति च बहु-

## सुबोधिनी

32 वित्याशङ्कते—अथ पत्न्यः कार्या इति। परिहरति—तदसादिति। *[अयमर्थः—भागे तुल्यतायां चांशसमशब्दौ लोकव्युपन्नौ। तयोः कारणमन्तरेण स्वार्थपरित्यागादानर्थक्यं स्यादिति।]* न त्वनयोः शब्दयोः पक्षे स्वार्थपरत्वान्न सर्वात्मनाऽऽनर्थक्यमिति विशेषमाशङ्कते—स्यान्मतमिति। परिहरति—तच्च नेति। विधिवैषम्यस्वरूपं दर्शयति—तथा हीत्यादिना।
33 *[अयमर्थः—"पत्न्यः कार्याः समांशिकाः" "माताप्यंशं समं हरेत्" इति वचनद्वयं बहुधने पत्यौ जीवति मृते वा पुत्रैः सह विभागकाले "भरणं चास्य कुर्वीरन्" इत्यादिवाक्यान्तरापेक्षया जीवनमात्रोपयुक्तं धनग्रहणं पत्न्या विधत्ते। पत्यावल्पधने तु स्वपुत्रांशसमधनग्रहणं विधत्त इति सकृदुच्चरितमेकमेव वचनं पक्षे सापेक्षं पक्षे निरपेक्षमित्येकरूपत्वाभा-

## बालंभट्टी

सति तत्र जीवति मृते च तत्समांशभाक्त्वं न भरणमात्रपर्याप्तभाक्त्वं तस्याः, तदा किमु वक्तव्यमपुत्रस्य तस्य धनं सा सर्वं प्राप्नोतीति कैमुतिकन्यायेनैव तस्याः सकलधनभाक्त्वसिद्धेः ग्रासाच्छादनातिरिक्तं न प्राप्नोतीत्युक्तिर्भ्रान्तैवेत्यर्थः। किञ्चान्यपुत्रसत्त्वेंऽशग्रहणाधिकारिणा पुत्रान्तराभावे सकलरिक्थग्रहणाधिकारिणा पुत्रेण सह समांशभाक्त्वस्योक्तत्वात् पुत्राद्यभावे विभक्त्वादेस्तस्य सर्वं गृह्णातीति युक्तियुक्तमपीदमिति तदुपेक्ष्यमेवेति बोध्यम्। समांशकादिशब्दोऽपि जीवनोपयुक्तधनोपलक्षक इति न तथा लाभ इति न विरोध इत्याशयेनाऽऽह—अथेति। अंशशब्दस्य कथञ्चित् सार्थक्येऽप्याह—समेति,—भागतुल्यतयोरंशसमशब्दौ लोकप्रसिद्धौ तयोर्निष्फलं स्वार्थत्यागोऽनुचित इति आनर्थक्यमिति भावः। ननु तयोः शब्दयोः पक्षे स्वार्थपरत्वान्न सर्वात्मनाऽऽनर्थक्यमिति विशेषमाशङ्कते—स्यान्मतमिति। बहु—विपुलम्; कर्मधारयः। खण्डयति—तच्च नेति। विधिवैषम्यमेवाऽऽह—तथा हीति।

---

१. व्य० ११५. । २. व्य० १२३. । ३. ख. समांशं । ज. तसमां० । ४. त. तन्ने० । ५. । ना० १३. २६. । ६. भ. किञ्चांशग्र० ।

धने जीवनमात्रोपयुक्तवाक्यान्तरमपेक्ष्य प्रतिपादयति ; अल्पधने तु पुत्रांशसममंशं प्रतिपादयतीति । ** यथा चातुर्मास्येषु 34

## सुबोधिनी

वात् विधिवैषम्यमिति।]* अस्मिन्नर्थे दृष्टान्तार्थत्वेनास्य न्यायस्योपपादकमधिकरणं सङ्गृह्य[1] दर्शयति—यथा[2] चातुर्मास्येष्वित्यादिना । सप्तमतृतीयपादाधिकरणम्।[3] "सौमिकं तु प्रण-

## बालंभट्टी

पत्यौ जीवति मृते वा पुत्रैस्सह विभागकाल इति शेषः । वाक्यान्तरमिति—"भरणञ्चास्य कुर्वीरन्" इत्यादीत्यर्थः । प्रतीति—विधत्ते इत्यर्थः । पत्न्यामिति भावः । यतीति,—तथा च सकृदुच्चारितमेकमेव वचनं पक्षे सापेक्षं पक्षे निरपेक्षमित्येकरूपत्वाभावाद्विधिवैषम्यमिति भावः । अत्रार्थे दृष्टान्ततया मानं दर्शयन् अस्य न्यायस्योपपादकमधिकरणं सङ्गृह्य दर्शयति—यथा चातुरित्यादि । सप्तमतृतीयपादाद्याधिकरणं "सौमिकं तु प्रणयमनवाच्यं हीतरत्[4]" सोमे सधर्मकमग्निप्रणयनं दर्शपौर्णमासयोश्चाधर्मकं तत् । अग्निप्रणयनं नाम गार्हपत्यादाहवनीयादिषु अग्निनयनम् उत्तरवेदिश्च सौम एव न दर्शपौर्णमासयोरेवं[5] प्रयोगास्थितिः । एवं स्थिते चातुर्मास्यचतुःकर्मसु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्येषु श्रूयते "द्वयोः प्रणयन्ति तस्मात् द्वाभ्यां यन्ति ऊरू वा एते यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्च" इति । तत्राऽऽद्यं द्वयोश्चातुर्मास्यपर्वणोरग्निप्रणयनविधायकं तस्मादित्यादिकं तदर्थवादवाक्यं ; तत्र संशयः — किं सौमिकप्रणयनवत् प्रणयनविधिरुत प्रणयनमात्रविधिर्वेति । तत्र पूर्वपक्षः—आद्यपक्ष एव युक्तः द्वितीये प्रकृतिवदित्यतिदेशत एव प्रकृतिभूतदर्शपौर्णमासतः प्रणयनमात्रस्य प्राप्त्या तद्विध्यानर्थक्यापत्तेः । न च चोदकप्राप्तप्रणयनस्यानुवादकमेव तदस्तु, किमर्थं विधानमिति वाच्यम्—प्रणयन्तीति विधिप्रत्ययबलाद्विधेयत्वप्रतीतेः । किञ्च न[6] वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये इति वाक्यद्वयेन तयोः पर्वणोरुत्तरवेदिप्रतिषेधः प्राप्तिसापेक्षो यतः स्वमते उपपद्यते । आद्यपक्षे हि सौमिकवदित्यतिदेशप्रतीत्या अत्रत्यसकलधर्मप्राप्तौ उत्तरवेदेरपि प्राप्तत्वात् । द्वितीये तु प्रकृतावेवोत्तरवेदेरभावात् तत्प्रणयनप्राप्तावपि उत्तरवेदिप्राप्त्यभावेन न वैश्वदेव इत्यादिप्रतिषेधासङ्गतिः स्पष्टैव । तस्मात् सप्रतिषेधोऽपि सौमिकवत् प्रणयनविधाने हेतुरिति पूर्वपक्ष्याशयः । तदाह—

१. थ. सङ्ग्रहात् । द ङ्ग्रहेण । २. त. यथा । ३ ना०. १३. २६. । ४. जै० ७. ३. १७. । ५. वनीयादिश्वग्निनयनं उत्तरचतुः क० (?) । ६. ब. 'न' नास्ति ।

## सुबोधिनी

यनमवाच्यं हीतरत् (॥१७॥)"सोमे सधर्मकमग्निप्रणयनमस्ति, दर्शपूर्णमासयोश्चाधर्मकमग्निप्रणयनम्। प्रणयनं नाम गार्हपत्यादाहवनीयादिषु नयनम्। उत्तरवेदिश्च सोम एव न दर्शपूर्णमासयोः। एवं प्रयोगस्थितिः। एवं स्थिते चातुर्मास्ये[1] चत्वारि कर्माणि सन्ति वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि। तत्र श्रूयते—"द्वयोः प्रणयन्ति। तस्मात् द्वाभ्यां यन्ति" "ऊरु वा ए(?) ते(तौ) यज्ञस्य" इति च। द्वयोश्चातुर्मा(स्यां)[2] पर्वणोरग्निं प्रणयन्तीति विधायकं वाक्यम्। तस्मात् द्वाभ्यां[3] फलं यन्ति गच्छन्तीत्यादिकमर्थवादवाक्यम्। तत्र संशयः—[4]सौमिकप्रणयनवत् प्रणयनं कर्तव्यम्[5] इति उत प्रणयनमात्रं विधीयत इति। [6]पूर्वपक्षस्तु[7] सौमिकप्रणयनसदृशं प्रणयनं विधीयत इति तावत् युक्तम्—अतिदेशत एव प्रकृतिभूतदर्शपूर्णमासाभ्यां[8] प्रणयनमात्रस्य[9] प्रकृतत्वात् प्रणयनमात्रविधानानर्थक्यात्। नन्वनुवादकमेवास्तु[10] चोदकप्राप्तप्रणयनस्य किमर्थं विधानमिति चेत्, मैवम्। प्रणयन्तीति विधायकप्रत्ययश्रवणबलात् विधेयत्वप्रतीतेः। किञ्च "न वैश्वदेव उत्तरवेदिमुपकिरन्ति" "न शुनासीरीये" इति वाक्यद्वये वैश्वदेवशुनासीरीययोः[11] पर्वणोरुत्तरवेदिप्रतिषेधश्चोपपद्यते—सौमिकप्रणयनसदृशप्रणयनविधाने ह्युत्तरवेदेरपि प्राप्तत्वात्। दार्शपौर्णमासिकप्रणयने उत्तरवेदेरभावात्[12] तत्प्रणयनप्राप्तावुत्तरवेदिप्राप्त्यभावेन "न वैश्वदेव उत्तरवेदिमुपवपन्ति" इत्यादि प्रतिषेधो नोपपद्यते। ननु सौमिकप्रणयनसदृशप्रणयनविधानेनोत्तरवेदिप्राप्तौ प्राप्ताया उत्तरवेदः "न वैश्वदेव" इत्यादि निषेध इति कोऽयं बकबन्धनप्रयासः। चातुर्मास्य प्रकरणस्थितेन "उपात्रवपन्ति"इत्यनेन वाक्येनोत्तरवेदेर्विहितत्वाद्विधानलब्धोत्तरवेदिनिषेधकं "न वैश्वदेव" इत्यादिवाक्यद्वयं भविष्यतीति चेन्न[13]। "उपात्रवपन्ति" इतीदं वाक्यं[14] चातुर्मास्य (परमापूर्वतया?)[15] उत्तरवेदिं विदधत् पर्वचतुष्टयेऽप्यविशेषेण विधत्ते। "न वैश्वदेव" इति वाक्यद्वयेन[16] पर्वद्वये निषेधात् विधिनिषेधयोर्वाक्यप्रमितत्वात् तुल्यत्वेन विकल्पः प्राप्नोति। ततश्चैवमर्थः

---

१. थ. द. स्यानीति च (?)। २. त. स्ययोरग्निं (?)। ३. त. भ्यां यन्ति गच्छन्तीत्यार्थवादिकं फलमर्थवादवाक्ये। ४. द. 'सौमिक' इत्यतः प्राक् 'सौमिकप्रणयनसदृशं। थ. द. प्रणयनं विधीयते द्वयोः प्रणयन्तीत्यनेन वाक्येन एतदुक्तं भवति (?)। ५. त. व्यम् उत। ६. थ. 'पूर्व' इत्यादि 'विधीयते' इत्यन्तं नास्ति। ७. द. नैमित्तिकप्रणयने सदृशं। ८. थ. द. सयोः प्रण०। ९. थ. द. त्रप्राप्तेः प्रण०। १०. थ. द. व भवतु चोद०। ११. थ. द. याख्ययोः। १२. थ. द. वात्प्रण०। १३. थ. द. चेत् तन्न। १४. थ. द. वचनं चा०। १५. थ. द. वैशेषतया। १६. त. वाक्य न (?)।

Cole.: Ch. II, Sec. i, § 34.

## सुबोधिनी

सम्पद्यते—"उपात्र वपन्ति" इति वाक्यं वैश्वदेवशुनासीरीययोः पर्वणोर्निषेधकं[1] "न शुनासीरीये" इत्यादि वाक्यद्वयमपेक्ष्य यदा निषेधद्वयार्थानुष्ठानं[2] नास्ति, तदैवोत्तरवेदिं विधत्ते, इतरपर्वद्वये तु नित्यवदुत्तरवेदिं विधत्त इति । तथा च द्वयोः पर्वणोर्वाक्यान्तरमनपेक्ष्योत्तरवेदिविधिः । इतरयोस्तु पर्वणोर्वाक्यान्तरापेक्षया पक्षे[3] विधिरिति विधिवैषम्यापत्तिः । तस्मात् सौमिकप्रणयनसदृशप्रणयनविधिरिति । राद्धान्तस्तु—विधायकप्रत्ययश्रवणात् प्रणयनं तावद्विधेयम् । विधेयत्वादेव च दार्श-पौर्णमासिकप्रणयनादन्यत्[4] प्रणयनमेतदिति गम्यते । न चैवं सति प्रणयनपरिवृत्तिमात्रमेवाति-देशिकं न भवति, किन्त्वौपदेशिकमिति प्रवृत्तौ न कोऽपि विशेष इति वाच्यम् । तस्मात् "द्वाभ्यां यन्ति" इत्यादिकस्यार्थवादस्य[5] विध्यन्वयेन तदेकवाक्यस्य[6] प्रामाण्योपपत्तेः।तथा चा-र्थवादबलेन मध्यमपर्वद्वये उत्तरवेदेरुपसंहारादनुष्ठानेऽपि[7] विशेषोऽस्तीत्युत्तराधिकरणरा-द्धान्ते गुरुणा वक्ष्यते । ततश्च "न वैश्वदेव उत्तरवेदिमुपकिरन्ति" "न शुनासीरीये" इति वाक्यद्वयमाद्यन्तयोः पर्वणोर्नित्यानुवादकम् ; "उपात्र वपन्ति" इति इदं वाक्यं मध्य-मपर्वणोरुत्तरवेदिप्रापकमिति पर्वचतुष्टये उत्तरवेदिप्राप्तेरभावाद्विधिवैषम्यमपि नास्तीति प्रणयनान्तरमेव विधीयत इति । "प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्" ॥ २४ ॥ "द्वयोः प्रणयन्ति" इत्यादि श्रूयते । तत्र संशयः—किमिदं पर्वद्वये विधीयमानं[8] आद्यन्तयोः पर्वणोरुत मध्यमयोरेवेति । "न वैश्वदेवे न शुनासीरीये" इत्याद्यन्तयोरुत्त-रवेदिप्रतिषेधादसत्यां च प्राप्तौ प्रतिषेधानुपपत्तेराद्यन्तयोः पर्वणोः प्रणयनमिति पूर्व-पक्षः । "उरू वा एते यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्च" इति "तस्मात् द्वाभ्यां यन्ति" इत्याद्यर्थवादस्य "द्वयोः प्रणयन्ति" इत्यस्य च[9] मध्यमपर्वघटितत्वात् तत्रैव प्रणयनम् । "न वैश्वदेव उत्तरवेदिमुपाकिरन्ति, न शुनासीरीये" इत्याद्यन्तयोः पर्वणो-र्नित्यानुवाद इति राद्धान्तः । प्रकृतमनुसरामः । चातुर्मास्येषु[11] "द्वयोः प्रणयन्ति" इति प्रणयनं विहितम् । तत्र सौमिकप्रणयनसदृशं[12] प्रणयनं विधीयत इति पूर्वपक्षः । सौमिक-प्रणयनवत् तत्प्रणयनं कर्तव्यमित्यभिप्रायः । एवं स्थिते ननु[13] प्रणयनविधिः प्रतीयते ; न[14] सौमिकवदित्यतिदेशप्रतीतिः । एवं च तद्वत् कर्तव्यमित्यतिदेशे को हेतुरित्याशङ्क्य "न वैश्वदेवे" "न शुनासीरीय" इत्येतदुत्तरवेदिप्रतिषेधकं वाक्यद्वयमुत्तरवेदि-प्राप्तिमपेक्षते । प्राप्तिश्च सौमिकवदित्यतिदेशात् तत्सर्वसंबंधधर्मप्राप्तावुत्तरवेदेरपि[15][16] सा

१. त. धकं शुनासीरीयवाक्य । २. थ द. धकवाक्यद्वया० । ३ त. क्षे विधिवै० । ४ थ. द. न्यरूपं प्र० । ५. त. स्य ह्यन्वयेन । ६ थ, द क्यतया प्रा० । ७. त. नुमाने । ८. थ. द. रेवोत्तर० । ९. थ. द. नं प्रणयनमा० । १०. त. च प्रथम । ११ त. मास्ययोः । १२. त. 'सदृशं' आरभ्य 'एवं' इत्यन्तं नास्ति । १३. थ. द. न प्रण० । १४. त 'न' नास्ति । १५. थ. द. सकलध० । १६. थ. द. पि सिद्धयती० ।

Cole.: Ch. II, Sec. i, § 34.

95

"द्वयोः प्रणयन्ति" इत्यत्र पूर्वपक्षिणा सौमिक[1]प्रणयनातिदेशे हेतुत्वेन "न वैश्वदेव उत्तरवेदिमुपकिरन्ति न शुनासीरीये" इत्युत्तरवेदिप्रतिषेधे दार्शिते, राद्धान्तैकदेशिना न सौमिकप्रणयनातिदेशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोःपर्वणोरयं प्रतिषेधः;किंतु "उपात्र वपन्ति"इति प्राकरणिकेन वचनेन प्राप्ताया

## सुबोधिनी

सिद्धेति प्रतिषेधवाक्यद्वयमेव सौमिकप्रणयनविधाने हेतुरिति पूर्वपक्षिणोऽभिप्रायमाह—द्वयोः प्रणयन्तीत्यत्र पूर्वपक्षिणेत्यादिना वेदिप्रतिषेधे दर्शित इत्यन्तेन। प्रतिषेधः प्राप्तिमपेक्षते; सा च सौमिकप्रणयनातिदेशमन्तरेणापि चातुर्मास्यप्रकरणपरिपठितेन "उपात्र वपन्ति" इत्यनेनाऽऽद्यन्तयोर्वैश्वदेवशुनासीरीयपर्वणोरुपपन्नेति प्राप्ताया उत्तरवेदेः"न वैश्वदेव" इत्यादिवाक्येन प्रतिषेधसिद्धेः सौमिकप्रण[2]यनवत्प्रणयनं कर्तव्यमिति पूर्वपक्षो न घटत इति पूर्वपक्षं निराकरोति । रा[3]द्धान्तैकदेशीत्याह—राद्धान्तैकदेशिनेत्यादिना इत्यभिहित इत्यन्तेन।

## बालंभट्टी

द्वयोः प्रणयन्तीत्यादि दर्शिते इत्यन्तेन। उपकिरन्तीति पाठान्तरम् । नन्विदमयुक्तं—प्रकारान्तरेण निषेधसाफल्ये तथैव स्वीकारे दुराग्रहमात्रत्वात् । तथा हि । प्रतिषेधस्य प्राप्तिसापेक्षत्वेऽपि न त्वदुक्तरीत्या प्राप्तिः; तत्प्रकारं विनाऽपि चातुर्मास्यप्रकरणपठितेनैव "उपात्र वपन्ति" इत्यनेनोत्तरवेदेर्विधानात् तल्लब्धोत्तरवेदेराद्यन्तपर्वणोर्निषेधकमुक्तवाक्यद्वयमिति तदुपपत्त्या सौमिकप्रणयनातिदेशः पूर्वपक्ष्युक्तो न घटत इति चेन्न । तदेवाऽऽह—राद्धान्तैकेत्यादि अभिहिते इत्यन्तेन । पूर्वपक्षिमततिरस्कारकत्वात् सिद्धान्तत्वम् । स्वोक्तेरप्ययुक्तत्वस्य तेनैव वक्ष्यमाणत्वादेकदेशित्वम् । उपात्रेति,—अत्र[4] चातुर्मास्येषु उपवपन्ति वेदिमुपकिरन्तीत्यर्थः । प्रागिति—चातुर्मास्यप्रकरणपठितेनेत्यर्थः । नन्विदमप्ययुक्तम्—विधिवैषम्यापत्तेः। तथा हि । उपात्रेति वाक्यं चातुर्मास्यपरमापूर्वशेषतयोत्तरवेदिं विदधत् पर्वचतुष्टयेऽप्यविशेषेण तां विधत्ते; "न वैश्व"इत्यादिवाक्यद्वयन्तु पर्वद्वये निषेधकं;तथा च ताद्विधिनिषेधयोर्द्वयोरपि वाक्यप्रमितत्वेन वाचनिकत्वाविशेषात् तुल्यत्वेन विकल्पः प्राप्नोति । स चेत्थम्—"उपात्र"इतिवाक्यं आद्यन्त्यपर्वणोर्यदा"न वैश्व"इत्यादिवाक्यद्वयमपेक्ष्य तेन प्राप्तस्य निषेधयाद्वर्थस्यानुष्ठानाभावः, तदैव पक्षे तदपेक्ष्योत्तरवेदिं विधत्तेऽन्यथा तेन मध्यमपर्वणोस्तु निषेधवाक्यानपेक्षयैव नित्यवत्तां विधत्ते । तथा च द्वयोर्वाक्यान्तरानपेक्षयोत्तरविधिः

---

१. जै० ७. ३. २३—२५ । २. त. यनं कर्त० । ३. द. 'राद्धान्तैकदेशीत्याह' नास्ति । ४. प. फ. ब. 'अत्र' नास्ति । ५. भ. न वाक्य० । ६. भ. थानमध्य० ।

Cole,: Ch. II, Sec. i, § 34.

उत्तरवेद्याः प्रतिषेधोऽयमित्याभिहिते पुनः पूर्वपक्षिणा "उपात्र वपन्ति"इति प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिं प्रापयति। मध्यमयोस्तु निरपेक्षमेव नित्यव-

---

## सुबोधिनी

नन्वेवम् "उपात्र वपन्ति" इत्यादिवाक्यं पर्वचतुष्टयेऽप्युत्तरवेदिं विधत्ते ; "न वैश्वदेव उत्तरवेदिमुपकिरन्ति न शुनासीरीये" इति पर्वद्वये उत्तरवेदिनिषेधतः उत्तरवेदिविधिनिषेधयोरुभयोरपि वाचनिकत्वेन द्वयोः पक्षे उत्तरवेद्यनुष्ठानं पक्षेऽननुष्ठानमिति विकल्पप्रसङ्गः; ततश्चैवं स्यात्–"उपात्र वपन्ति"इति इदं वाक्यम्"आद्यन्तयोः पर्वणोः""न वैश्वदेव" इत्यादिवाक्यद्वयेन यदोत्तरवेदिः[1] निषिध्यते, तदा तद्वाक्यमपेक्ष्य पक्षे उत्तरवेदिं विधास्यति; मध्यमयोस्तु पर्वणोर्निषेधवाक्यानपेक्षयैव नित्यवत् प्रापयतीति सकृदाम्नातं वाक्यमेकत्र पक्षे प्रापकमेकत्र नित्यवदिति । एकरूपप्रवृत्त्यभावात् विधिवैषम्यं स्यादिति पूर्ववादी राद्धान्तैकदेशिमतं निराकरोतीत्याह — पुनरित्यादिना[2] विधिवैषम्यं दर्शितमित्यन्तेन ।

## बालंभट्टी

द्वयोर्वाक्यान्तरसापेक्षतया पक्षे विधिरिति सकृत् श्रुतवाक्यमेकत्र पक्षे प्राप्तमेकत्र नित्यवदिति एकरूपप्रवृत्त्यभावाद्विधिवैषम्यापत्तिः । तस्मादगत्या पूर्वपक्ष्युक्तमेव युक्तमिति चेत् तदेव स आह—पुनः पूर्वेत्यादि दर्शितमित्यन्तेन । सिद्धान्तैकदेशिमतानन्तरं मुख्यसिद्धान्त्युक्तिरुचितेति तद्भ्रमनिरासाय पुनः पूर्वपक्षिणेत्युक्तम् । इतीति कर्तृ । प्रतीति—"न वैश्वदेवे" इत्यादिवाक्यद्वयप्राप्तम् । निरेति प्रतिषेधेत्यादिः । नित्यताबोधकपदाभावादाह—नित्यवदिति—सिद्धान्तस्त्वित्थम्—विधिप्रत्ययश्रुतेः प्रणयनं तावद्विधेयमेव, तत्त्वादेव दर्शपौर्णमासिकप्रणयनादन्यदेतदिति गम्यते । न चैवं प्रणयनमात्रमेवातिदेशिकं न; किन्तु औपदेशिकमिति प्रवृत्तौ न कोऽपि विशेष इति वाच्यम्—"तस्मात्" इत्याद्यर्थवादस्य प्रणयनवाक्यैकवाक्यतया प्रमाणोपपत्तिरित्यर्थवादबलेन मध्यमपर्वद्वये उत्तरवेदेरुपसंहारेणानुष्ठानविशेषसत्त्वात् । तथा च "द्वयोः प्रणयन्ति" "तस्मात्" इत्यादेर्मध्यमपर्वद्वयघटितत्वेन तत्रैव प्रणयनविधिर्यत्र प्रणयनं तत्रैवोत्तरवेदिरिति, "उपात्र" इत्युत्तरवेदिविधानमप्यर्थवादानुसारेण मध्यमपर्वणोरेव नाऽऽद्यन्तयोरिति तयोरुत्तरवेदिप्राप्त्यभावान्न वैश्वेदिवाक्यद्वयमाद्यन्तयोः पर्वणोर्नित्यानुवादकं "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" इतिवत् ।

---

१. त. दिर्नेनि० । २. थ. द. नः पूर्वपक्षिणेत्यां० ।

Cole.: Ch. II, Sec. i, §§ 34.

दुत्तरवेदिं प्रापयतीति विधिवैषम्यं दर्शितम् । राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्त-मयोःपर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो "द्वयोःप्रणयन्ति" इत्याद्यर्थवादपर्यालोचनया "उपात्र वपन्ति" इति मध्यमयोरेव "वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्ते" इति

---

## सुबोधिनी

सिद्धान्तैकदेशिमतानन्तरं मुख्यराद्धान्तस्योचितत्वात् तद्भ्रान्तिर्माभूदिति पुनः पूर्वपक्षिणेत्युक्तिर्द्रष्टव्या । राद्धान्तमाह —राद्धान्तेऽपीति । एकदेशिमतानुसारेणाभिधीयमाने विधिवैषम्यं दुर्वारमिति " द्वयोः प्रणयन्ति " " तस्माद्द्वाभ्यां यन्ति " " ऊरु वा एते यज्ञस्य" इत्यर्थवादवाक्यस्य मध्यमपर्वद्वयघटितत्वेन तत्रैव प्रणयनविधिः, यत्र प्रणयनं तत्रैवोत्तरवेदिरिति'उपात्र वपन्ति' इत्युत्तरवेदिविधानमर्थवादानुसारेण तत्रैव मध्यमपर्वणोरित्याद्यन्तयोरुत्तरवेदिप्राप्त्यभावान् "न वैश्वदेवे" इति वाक्यद्वयमाद्यन्तयोः पर्वणोर्नित्यानुवादकं "नान्तरिक्षे न दिव्याग्निश्चेतव्यः" इति वाक्यवदित्यर्थः। अनेन चातुर्मास्येष्वित्यादिग्रन्थजातेन एतदुक्तं भवति—यथाऽत्रैकदेशिमते विधिवैषम्यदोषः, तथा "पत्न्यः कार्याः समांशिकाः" " माताऽप्यंशं समं हरेत् " इत्यत्र च सकृदाम्नातावंशसमशब्दावपि भर्तुर्बहुधनत्वपक्षे "भरणं चास्य कुर्वीरन् " इत्यादिवाक्यपर्यालोचनया जीवनोपयुक्तधनपरौ । स्वल्पधनत्वे तु वाक्यान्तरनैरपेक्ष्येण नित्यवत्पुत्रांशसमांशपराविति श्रीकराद्युक्तव्याख्याने विधिवैषम्यदोषो

## बालंभट्टी

तथा च पर्वचतुष्टये वेति संशये "न वैश्व"इत्यादिना तत्प्रतिषेधादसत्यां च प्राप्तौ प्रतिषेधानुपपत्त्या आद्यन्तयोः प्रणयनं पूर्वपक्ष इत्यपि निरस्तमिति तदाह–राद्धान्तेऽपीति,–अस्य दर्शितमित्यत्रान्वयः । विधीति,–सिद्धान्त्येकदेशिमते इत्यादिः। प्रणयन्तीति—प्रणयन्तीति विधिरादिर्यस्य तस्मादित्याद्यर्थवादस्य तस्य पर्यालोचनयेत्यर्थः।तस्य मध्यमपर्वद्वयघटितत्वादिति भावः । तथा च यथा तत्र तन्मते विधिवैषम्यदोषः, तथा "पत्न्यः कार्याः" "माताऽप्यंशम्" इत्यत्र सकृच्छ्रुतावंशसमशब्दावपि भर्तुः बहुधनपक्षे भरणं चास्येत्यादिवाक्यपर्यालोचनया जीवनोपयुक्तधनपरौ ; स्वल्पधने तु वाक्यान्तरनैरपेक्ष्येण नित्यवत्पुत्रांशसमांशपराविति श्रीकराद्युक्तव्यवस्थायां विधिवैषम्यदोषो दुर्वार इति तात्पर्यम् । पत्नीत्यस्य अन्यै-

---

१. थ. द. राद्धा० । २. थ. द. त्याद्यर्थ० । ३. थ. द. त्रैवात्त० । ४. थ. द. तिवदि० । ५. त क्यद्वयप । ६. ब. स्याप० ।

Cole.: Ch. II, Sec. i, § 34.

दर्शितम्।** यदपि मतम्—"पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।"[1]इति मनुस्मरणात्। तथा "स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं, तदभावे पितरौ हरेयातां, ज्येष्ठा वा पत्नी" इति शङ्खस्मरणाच्च; अ[2]पुत्रधनं भ्रातृगामि इति प्राप्तं "भरणं चास्य कुर्वीरन्स्त्रीणामा[3]जीवनक्षयात्।" इ[4]त्यादिवचनाच्च भरणोपयुक्तं धनं पत्नी लभत इ[5]त्यपि स्थितम्। एवं स्थिते बहुधने अपुत्रे स्वर्याते भरणोपयुक्तं पत्नी गृह्णाति शेषं च[6] भ्रातरः। यदा तु[7] पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति,ततो न्यूनं वा, 35

## सुबोधिनी

दुर्वार इति। अन्यैः कैश्चित् "पत्नीदुहितरः" इत्यादीनां वाक्यानां व्यवस्था दर्शिता। तां निराकर्तुं दर्शयति—यदपि मतमित्यादिना। म[8]नुशङ्खवाक्ययोस्तात्पर्यमाह — अपुत्र[9]धनं भ्रातृगामीति। नार[10]दोक्ततात्पर्यमाह—भरणेति। एवमुक्तरीत्या अपुत्रप्रमीतभ्रातृरिक्थभाज इतरे भ्रात[11]रः,तत्स्त्र्यपि जीवनोपयुक्तं धनं लभेतेत्येवं व्यवस्थिते सति, यस्या भर्त्ता अपुत्रको बहुधनश्च तस्मिन् प्रमीते एतद्द्वयमपि घटते—तद्भ्रातरो रिक्थभाजः,पत्नी च भरणं लभत इति। अथ तु पत्नीजीवनायैवालं तद्धनं जीवनायापि नालं वा, तदा मनुशङ्खवचनप्रामाण्यात् भ्रातरो गृह्णन्तीति उत नारदवचनात् पत्न्येव गृह्णातीति संशये, तन्निवृत्त्यर्थं योगीश्वरेणानुपसंजातविरोधित्वेन पूर्वबलीयस्त्वात् पत्न्येव गृह्णातीति वक्तुं क्रमप्रतिपादकं पत्नीदुहितर इत्यादिवचनमारब्धमित्याह—ए[12]वमिति इत्यारब्धमित्यन्तेन। सर्वथा पत्न्येवापुत्रधनभा-

## बालंभट्टी

रन्यथा कृतां व्यवस्थां खण्डयितुमाह—यदपीत्यादि रब्धमित्यन्तेन। तथा—तद्वत्। अत एव चासङ्गतिर्न। मनुशङ्खयोस्तात्पर्यार्थमाह—अपुत्रधनमिति। *[यद्यपि मानवे पिता आदिः, तथाऽपि तस्य क्रमाबोधकत्वेन तद्बोधकशङ्खेनो[13]न्यथा नयनमत एव·तस्यापि कथनमित्याशयेनाऽऽह—भ्रात्रिति।]* चः त्वर्थे। नारदतात्पर्यार्थमाह—भरणोपेति। एवं स्थिते-उभयप्रामाण्यादपुत्रप्रमीतभ्रातृधनभाज इतरे भ्रातरः, स्त्र्यपि जीवनोपयुक्तं धनं लभते इत्येवंव्यवस्थे। भ्रातर इति,—द्वयमपि घटत इति शेषः। मात्रमवधारणे। ततो न्यूनं वेति,—तज्जीवनायापि नालमित्यर्थः। अनयोः सङ्ग्रहस्तु बहुधनभिन्नत्वेनेति बोध्यम्। 35

१.—९. १८५.। २. ख. त्रस्यध०। ३. क. जीवित०। ४. ना० १३. २६.। ५. क. इति स्थि०। ६. क. 'च' नास्ति। ७. क. 'तु' नास्ति। ८. थ. द. वचनशङ्खवचनयो०। ९. त. त्रेति। १०. थ. द. दवचनस्य तात्पर्यार्थमाह—भरणोपयुक्तं पत्नी लभत इत्यपि स्थितमिति। ११. त. अतः स्त्र्य०। १२. थ. वंस्थिते बहुधन इत्यादिना इत्या० १३. भु. नाथा (?)।

Cole.: Ch. II, Sec. i, § 35.

तदा किं पत्न्येव गृह्णाति, उत भ्रातरोऽपीति विरोधे पूर्वबलीयस्त्वज्ञापनार्थं "पत्नी दुहितरः" इत्यारब्धमिति, तदप्यत्रभवानाचार्यो न मृष्यति; यतः—"पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।" इति विकल्पस्मरणान्नेदं क्रमपरं वचनम्; अपितु धनग्रहणेऽधिकारिप्रदर्शनमात्रपरम्। तच्चासत्यपि पत्न्यादिगणे घटत इति व्या-

## सुबोधिनी

गिनी[8] नेत्यर्थः।निराकरोति —तदप्यत्रेति। आचार्यो विश्वरूपः। "पिता हरेदपुत्रस्य" इत्यस्य मनुवचनस्यान्यार्थत्वादित्यर्थः। तदेवान्यार्थत्वं दर्शयति–यत इत्यादिना। अयमर्थः —दायग्रहणे पित्रादिक्रमप्रतिपादनपरमेतद्वाक्यं न भवति, येन पूर्वोक्ता व्यवस्था स्यात्।

## बालंभट्टी

पत्न्येवेति,—नारदोक्तः। भ्रातरोऽपीति,—मनुशङ्खोक्तेः। अपिना ततस्तस्याः समुच्चयः; विरोधे प्राप्ते सति तद्विषय एव तन्निवृत्त्यर्थमिति शेषः। पूर्वेति पूर्वत्वं च मौलम्। तत्र विषय एवाऽऽदौ पत्न्येव गृह्णातीति वक्तुं क्रमप्रतिपादकं योगीश्वरेण वचनं पत्नीत्यारब्धमित्यर्थः। सर्वथा पत्न्येवापुत्रभर्तृधनभागिनी नेति भावः। खण्डयति—तदप्येति। अत्रभवान्—पूज्यः। *[आचार्यः—विश्वरूपाचार्यः।]* मनोरन्यार्थत्वस्य तेन दर्शितत्वादित्यर्थः। तदेवाऽऽह—यत इत्यादि व्याचचक्षे इत्यन्तेन। यत इत्यस्य व्याचचक्षे इत्यत्रान्वयः। यतस्तथाऽत इत्यर्थः। स एवेति भावः। इति इत्यत्र। विकल्पे एवेति,— विषयसप्तमी संबन्धिनस्तत्त्वविवक्षया। विकल्पस्यैवेति पाठान्तरम्। विकल्पस्मरणादित्यपि। तथा मात्रपदेन क्रमव्यवच्छेदः। तच्च-अधिकारप्रदर्शनञ्च। आदिना दुहितुर्दौहित्रस्य मातुश्च परिग्रहः। अत एवाऽऽह—गणे इति। अयं भावः—दायग्रहणे पित्रादिक्रमप्रतिपादकं तन्न—येनोक्तव्यवस्था स्यात्; अपि तु पुत्रादयोऽपि धनग्रहणेऽधिकारिण इति अधिकारप्रदर्शनपरं—वाशब्देन विकल्पप्रतीतेः। समयोर्हि विकल्पः पितुरभावेऽन्येऽधिकारिण इति क्रम विवक्षायां तु पितुः प्राधान्यप्रतीत्या तस्यान्येषाञ्च साम्याभावाद्विकल्पासङ्गतिरेव। तस्याधिकारप्रदर्शनमात्रपरत्वे तु पत्नीं दुहितरं दौहित्रं मातरं च गणयित्वा "पिता हरेत्" इति पित्रादिगणने कृते तस्याधिकारो घटत एवेति तस्मात्तस्य तथोक्तिरयुक्तैवेति तात्पर्यम्। शङ्ख-

35

१. ख. ग. घ. ज. भगवा० । २. म० ९. १८५. । ३, ख. ग. घ. कारप्र० । ४. थ. द. नी न भवतीत्य० । ५. थ. द. तः पिता हरेदित्या० । ६. द्वचनं न । ७. भ. तर इति इवेति(?)। ८. भ. एवं चान्यत्र तत्प्रवृत्ति नास्येति औ सर्वे०(?) । ९. प. फ. ब. इत्यवि० । १०. प. फ.ब. मूलश० ।

Cole.: Ch. II, Sec. i, § 35.

चेष्टे—शङ्खवचनमपि संसृष्टभ्रातृविषयमिति । **अपि चाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावगम्यते । "धनभागुत्तरोत्तरः" इत्यस्य च "पत्नी दुहितरः" इति 36

## सुबोधिनी

अपि तु पित्रादयोऽपि रिक्थग्रहणेऽधिकारिण इत्यधिकारप्रदर्शनपरं—"रिक्थं भ्रातर एव वा" इति वाशब्देन विकल्पप्रतीतेः । समयोर्हि विकल्पः पितुरभावेऽन्येऽधिकारिण इति क्रमस्य विवक्षितत्वे पितुः प्राधान्यप्रतीतेस्तस्य चान्येषां चसाम्याभावात् । विकल्पस्मरणमनुपपन्नम् । एवमधिकारप्रदर्शनपरत्वे मनुवचनस्य पत्नीं दुहितरं वा गणयित्वा "पिता हरेदपुत्रस्य" इति पितृभ्रातृगणने कृतेऽपि पितृभ्रात्रोरधिकारो घटत एवेति जीवनोपयुक्तं ततो न्यूनं च धनं पत्न्या एवेत्यभिधानार्थं "पत्नी दुहितर" इत्यादिवचनमित्युक्तिरनुपपन्नेति । "स्वर्यातस्य ह्यपुत्रस्य" इति शङ्खवचनमप्याचार्येणान्यथा व्याख्यातम् । तद्दर्शयति—शङ्खवचनमपि संसृष्टभ्रातृविषयमिति,—*[विभागानन्तर पुनरपि स्नेहादिवशादेकीभूयस्थितभ्रातृविषयमित्यर्थः।]* अस्मादिति—"पत्नी दुहितर" इत्येतस्माद्वचनादित्यर्थः । 35
किञ्च "पत्नी दुहितरः" इत्यस्याल्पधनं पत्नी गृह्णातीत्येवमर्थपरत्वे "एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।" इति वाक्यशेषोऽपि "भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।" इत्यादि वाक्यपर्यालोचनया यदि (चेद्) भरणमात्रोपयुक्तमेव धनं, तदेव पत्नी तदभावे दुहिता गृह्णाति न बहुधनत्व इति पक्षेऽनित्यवद्धनग्रहणं पत्न्या दुहितुश्च प्रापयति । पितृभ्रातृतत्सुतादिषु तु वाक्यान्तरनैरपेक्ष्येणैव नित्यवद् बोधयति रिक्थग्रहणमिति पूर्वोक्तो विधिवैषम्यदोषस्तदवस्थ एवेत्याह — धनभागित्यादिना ।

## बालंभट्टी

वाक्यमपि तेनान्यथा व्याख्यातमित्याह—शङ्खेति । संसृष्टेति,—विभागानन्तरं पुनरपि स्नेहादिना एकीभूय स्थितभ्रातृविषयमित्यर्थः। इतीत्यस्य व्याचचक्षे इत्यस्यानुषङ्गेणान्वयः। एवमप्यन्यथा प्रसक्तविरोधपरिहारस्त्वग्रे स्फुटीभविष्यति । स्वयन्दोषान्तरमाह–अपि चेति यत इति शेषः । एवमग्रेऽपि । अस्मात्–"पत्नी दुहितरः" इत्यस्मात्। न केवलं तदननुमतत्वादि; किन्तु दोषोऽपि प्रागुक्तस्तथा व्याख्यानेऽन्यत्र इत्याह-–धनेति । अत एव च: किञ्चेत्यर्थे। व्युत्क्रमेण सर्वादौ स बोध्यः। पत्नीत्यस्य तादृशधनविषयत्वे तुल्यन्यायेन दुहित्रादा-

---

१. ख. ग. घ. च. चचक्षे । २. क. परमि० । ३. क. च. किंच । ४. थ. द. इति वच० । ५. थ. द तं दर्श० । ६. त. त्यत्वं (?) । ७. थ. द. गुत्तरोत्तर इत्यस्य चेत्या० । ८. प. फ. ब. दि पत्नी० ।

विषयद्वये वाक्यान्तरमपेक्ष्याल्पधनविषयत्वं, पित्रादिषु तु धनमात्रविषयत्वमिति
37 पूर्वोक्तं विधिवैषम्यं तदवस्थमेवेति यत्किञ्चिदेतत् । **यत्तु हारीतवचनम्—"विधवा यौवनस्था चेन्नारी भवति कर्कशा । आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥"
इति, तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम् । अस्मादेव वच-
38 नादनाशङ्कितव्यभिचारायाः सकलधनग्रहणं गम्यते । **एतदेवाभिप्रेत्योक्तं शङ्खेन—
"ज्येष्ठा वा पत्नी" इति । ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा सा सकलं धनं
39 गृहीत्वाऽन्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम् । ** तस्मादपुत्रस्य

## सुबोधिनी

अस्मादेवेति — अत्र हारीतवचनादित्यर्थः । एतदेवाभिप्रेत्योक्तमिति, — अनाशङ्कितव्यभिचारायाः सर्वधनग्रहणमेवेत्यर्थः । उपसंहरति तस्मादिति ।

## बालंभट्टी

वपि तथा[3]धनभागिति वाक्यशेषोऽपि भरणं चास्येत्यादिपर्यालोचनया यदि चाल्पं धनं, तदैव पत्नी गृह्णतीत्यादौ तदभावे दुहिता न बहुधने इति पाक्षिकं धनग्रहणं पत्न्यादेः प्रापयति । पित्रादिषु तु वाक्यान्तरनिरपेक्षेणैव नित्यवत्तद्बोधयतीति स दोषस्तदवस्थ एवेति भावः । पूर्वं संयताया एव तस्या धनग्रहणमुक्तं द्रढयितुमन्यात्विरोधं परिहरति—यत्त्विति। यौवनस्था चेदिति,—यथास्थितमेव । कर्कशा—क्रूरा । अनेन कृत्स्नधनासम्बन्धः स्पष्ट एवोक्त इति विरोधः स्फुट एव । परिहरति —तदपीति,—विधवा यौवनस्था नारी कर्कशा चेद्भवतीत्यन्वयः । कर्कशत्वञ्च नान्यादृशं; किन्तु दुरूहदुरभिप्रायकत्वम् । प्रागुक्त-स्मृत्यन्तरानुरोधात्तदाह—शङ्कितेति । एवञ्च संयतायाः सकलधनग्रहणमेतत्सम्मतमेवेति न विरोध इति भावः । एवं चेतोऽपि प्रागुक्तार्थलाभ एवेत्याह—अस्मादेवेति ,- एवोऽप्यर्थे हारीतवचनादपीत्यर्थः । अपिना प्रागुक्तसमुच्चयः । अत्र प्रागुक्तमेव मानान्तरमप्याह—एतदेवेति,—अनाशङ्कितव्यभिचारायाः सकलधनग्रहणमित्येवेत्यर्थः । वयःकृतज्येष्ठत्वे उक्तार्थालाभादाह —ज्येष्ठा या गुणेति । अन्यगुणकृतज्येष्ठत्वमपि नाऽभिमतमिति तदर्थमाह —अनाशङ्कितेति । अन्यामिति—कर्कशामपीत्यर्थः। अपिना स्वीयसमुच्चयः। मातृवत्—माता यथा पालयति स्वीयं, तद्वत्। उपसंहरति—तस्मादिति।

---

१. ख. ग. घ. दशङ्कि० । २. क. ष्ठा या गु० । ३. पु. फ. म. 'प्राप्त्या' नास्ति । ४. प. ब. र्थला० ।

Cole. ; Ch. II, Sec. i, §§ 36—39.

स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितम् ॥

---

## बालंभट्टी

संसृष्टीत्यत्र भावे क्तः। पत्नीपदार्थमाह—परीति,-धर्मपरिणयनपूर्वकश्रौतस्मार्तकर्मसहाधिकृतेत्यर्थः। एवं पूर्वोपसंहारे ऊढाया इत्यस्याप्यर्थो बोध्यः। एवेन भरणोपयुक्तमात्रव्यवच्छेदः। यत्तु प्राच्याः एवं व्यवस्थायां बृहस्पतिविरोधः—"विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते ॥ यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन । न लुप्यते तस्य भागस्सोदरस्य विधीयते ॥ या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति । अनपत्यस्य धर्मोऽयमभार्यापितृकस्य[1] च ॥ संसृष्टानान्तु यः कश्चिद्विद्याशौर्यादिना धनम् । आप्नोति तस्य दातव्यो द्व्यंशश्शेषास्समांशिनः ॥" इति हि सः । तत्र चोपक्रमोपसंहारयोः संसृष्टविषयत्वात्तन्मध्यस्थस्य "यदा कश्चित्"इत्यादेरपि तद्विषयत्वेन तत्र च "अनपत्यस्य"इत्यनेनार्धेन पुत्रकन्यापत्नीपितॄणामभावे संसृष्टसोदरभ्रातुरधिकारबोधनेन कथं तस्य पत्नीबाधकत्वम्? किञ्चाविभक्तत्वे संसृष्टत्वे च भ्रात्रन्तरीयद्रव्यस्य मिश्रीकृतादेः पृथगप्रतीतौ लोपाशङ्कायां न लुप्यते इत्युपपद्यते, विभक्तासंसृष्टस्य धने तु विभागप्रतीत्या का लोपाशङ्का? तस्मात् संसृष्टविषयत्वमेवैषाम् । किञ्च पत्न्यादेः पूर्वं भ्रात्रधिकार[3]ज्ञापकशङ्खादीनां संसृष्टविषयत्वं वचनान्न्यायाद्वा? नाऽऽद्यः—तदभावात्। "संसृष्टिनस्तु"[4]इत्यादेस्तु भ्रात्रधिकारावसरे विशेषज्ञापनत्वेन भ्रात्रधिकारमात्रपरत्वानुपपत्तेः। किञ्च समीपोक्तबृहस्पतिवचसः संसृष्टविषये पुत्रादिपित्रन्ताभावे सोदरभ्रात्रधिकारज्ञापकत्वाद्विरुद्धत्वादसंसष्टविषयत्वमेव तावद्युक्तं तेषां, न तु तथा [5]संसृष्टत्वे । यदेकस्य भ्रातुर्धनं तदन्यस्याऽपि तत्रैकनाशेन तत्स्वत्वनाशोऽपि जीवतस्तत्त्वात्तस्यैव तत् न तु पत्न्याः भर्तृमरणेन पत्नीस्वत्वस्यापि नाशात्। यथा सत्सु पुत्रादिषु न तद्धनं पत्न्या इत्येवं द्वितीयपक्षोऽपि न। न हि संसृष्टत्वे यदेकस्य, तदेवान्यस्यापि; किन्तु अविज्ञातैकदेशविषयं[6] तत् द्वयोर्न तु समग्रमेव—तत्स्वामित्वकल्पनायां मानाभावात् । परिणयोत्पन्नभर्तृधने पत्न्याः स्वामित्वं तन्मृतेर्नश्यतीत्यत्र च मानाभावात् । सति तु पुत्रे तदधिकारशास्त्रादेव स्वत्वनाशोऽवगम्यते। नन्वत्राऽपि संसृष्टभ्रात्रधिकारशास्त्रात्तथेति चेन्न—संसृष्टभ्रातृगोचरत्वस्यासिद्धेः । सिद्धे हि भ्रातृसंसृष्टभर्तृमृत्या पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य संसृष्टविषयत्वं, सति तु तस्य तद्विषयत्वे पत्नीस्वामित्वनाश

---

१. प. फ. ब. मभावस्य समांशिनः । २.—२५. ७३, ७४, ७५, ७७.। ३. प. फ. ब. कारावसरेवि०। ४ व्य० १३८ । ५ भ. था अथ न्यायादभिधीयते । ६. तथाहि संसृ० । प. फ. ब. विशेषं ।

Cole.: Ch. II, Sec. i, § 39.

## बालंभट्टी

इत्यन्योन्याश्रयश्च । किञ्च शङ्खादेस्तत्त्वे भ्रात्रंशे तथा सत्त्वेऽपि तदभावे पितराविल्यत्र प्रागवद्विकल्पसंभवेन "पत्नी दुहितरश्चैव" इत्यादिना विभक्तासंसृष्टयोः पित्रोः पत्नीबाध्यत्वादाद्यपक्षस्य अविभक्तसंसृष्टभ्रातृसद्भावेऽप्यविभक्तपितृग्राह्यत्वस्य सर्वेषां मते विवादाभावेन द्वितीयपक्षस्य चासंभवः । किञ्च यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधने शरीरदातृतया "आत्मा वै जायते पुत्रः" इत्येकत्वस्मृतेः धनशरीरयोश्च प्रभुत्वात् तत्पितृदेयपितामहादिपिण्डत्रये च सपिण्डनेन च मृतस्य भोक्तृत्वात् जीवति च पितरि पुत्राणां पार्वणदानाभावात् भ्रातृतः पूर्वं पितुरधिकारः । तथाऽन्यत्रापि युक्तम् अविभागसङ्ख्योर्वाऽविशेषात् पितृभ्रात्रोस्तुल्यवदधिकारो युक्तः ; न तु तदभावे पितुरिति युक्तम् । किञ्च अविभक्तसंसृष्टौ पितराविति द्वित्वानुपपत्तिः—मात्रा सह विभागाविभागयोरभावात् । अत एव संसर्गाभावोऽपि ; यदाह बृहस्पतिः—"विभक्तो यः पुनः" इति, अतः संसर्गित्वाविभक्तत्वयोर्मात्रा सहासंभवात् कथं मातृगतो भ्रातृसद्भावाधिकारविरोधः समाधेयः । तस्माद्विष्ण्वादितः पुत्राद्यभावमात्रेण पत्न्यधिकारः स्पष्टोऽवगम्यते । तत्र पुत्रादीनां त्रयाणामादौ तत्त्वं पुन्नाम्नोनरकादित्यादिमनुविष्ण्वाद्युक्तेः प्रपौत्रपर्यन्ताभावे वैधव्यात्प्रभृति व्रतादिना भर्तुः परलोकहिताचरणेन पुत्रादतो जघन्या भार्येति तेषामभावे सैव धनाधिकारिणीति तत्त्वमिति तन्न—उक्तबृहस्पतिवाक्यस्य "संसृष्टिनस्तु" इति मूलस्य "विभक्ताः सह जीवन्तः" इत्यादिमनोरुक्तनारदस्य च समानार्थकत्वेन प्रकृताविषयत्वात् । अपत्यसत्त्वेनैवमित्युक्तम् । तत्र अनपत्येति अपवादप्रसङ्गादसंसृष्टविभक्तस्थलेऽप्यपवाद उक्तः । अभार्यापितृकेति लोपशङ्काऽपि मनुवद्बोध्या । पत्नीति मूलस्य पूर्वोत्तरवचनैस्तत्त्वे सति परिशेषन्यायेन शङ्खादेस्तद्विषयत्वं सिद्धमिति न दोषश्च । किञ्च भ्रात्रंश एवेदं न पित्राद्यंशे तत्रानुपदमेव प्रकारो वक्ष्यमाण इति न कोऽपि दोष इति दिक् । नन्वेतावता प्रपञ्चेन पत्नीत्यस्य भ्रात्रंशविरोधे परिहृते नारदसङ्गतावपि पित्राद्यंशे विरोधस्यापरिहृतत्वेन तदवस्थत्वेन मनुशङ्खकात्यायनादेः का गतिरिति चेन्न। नेदं क्रमपरमित्यादि आचार्योक्त्यनुवादकेन भगवता विज्ञानेश्वरेण सर्वविरोधपरिहारस्य सूचितत्वात् । तथा हि । तत्र तावत् "पिता हरेत्" इति मनुविरोधस्तु कण्ठतः परिहृत एव । तथा च तत्र वाशब्दो व्यवस्थितविकल्पे न स्वैच्छिकविकल्पे । व्यवस्था च मूलोक्तैवेति बोध्यम् । एवम् "अनपत्यस्य

---

१. प फ ब. साध्य० । २. प. फ. ब. षामभावे० । ३. प. फ. ब. शेषा० । ४. व्य० १३८. । ५.—९. २१०. । ६. प. फ. ब. नेदं । ७.—९. १८५. ।

Cole.: Ch. II, Sec. i, § 39.

## बालंभट्टी

पुत्रस्य माता " इति मनुरपि न विरुद्धः—तस्यापि क्रमाबोधकत्वात् मानाभावात् अधिकारप्रदर्शनमात्रपरत्वात् । तथा च मूलानुरोधेन तत्र चकारेण च वृत्तायामित्यस्य पूर्वत्रापि संबन्धेन पत्न्यां दुहितरि च वृत्तायां दौहित्रे च वृत्ते माता तस्य दायमाप्नुयादित्यर्थः । अग्रेऽपि अपिशब्दात् पित्रादिसमुच्चयेन पितरि भ्रातृषु तत्सुतेषु च वृत्तेषु पितामही हरेदित्यर्थः । इदमग्रेऽपि वक्तव्यम् । तत्रैव मातर्यपीत्यत्र कण्ठतो विज्ञानेश्वरेण तथोक्तत्वान्मात्रंशेऽपि तथैव तस्याभिमतम् । एवं शङ्खवचनमपि न विरुद्धं—तस्याविभक्तसंसृष्टभ्रातृविषयत्वस्य कण्ठतस्तेनोक्तत्वात् । किंच तत्र वाशब्दस्य समुच्चयार्थत्वेन तदभाव इत्यस्योभयत्रान्वयेन क्रमवैपरीत्येन च तदभावे विभक्तसंसृष्टभ्रात्रभावे ज्येष्ठा संयता पत्नी हरेत्तदभावे पत्न्यभावे चेन दुहितृदौहित्रयोरभावे पितरौ हरेयातामित्यर्थात् यथाश्रुतक्रमाबोधकत्वात् । कात्यायनवचनमपि न विरुद्धं—तत्र पुत्राभावे इत्यत्र पुत्रपदस्य पौत्राद्युपलक्षकत्वावश्यकत्वात् "अपुत्रा पुत्रवत्पत्नी" "यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा । पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥" इत्याद्युक्तया पुत्राभावे इत्यस्य पुत्रस्य पौत्रस्य पत्न्या दुहितुः दौहित्रस्य चाभावे इत्यर्थेनाग्रे क्रमवैपरीत्येन वा शब्दानां तत्तदभावरूपपक्षान्तरबोधकत्वेनाऽऽदौ जननी हरेद्वा, तदभावे पिता हरेद्वा, तदभावे भ्राता हरेत्, पुनरन्वयेनाथशब्दस्य समुच्चयार्थत्वेन वा तदभावेऽथ तत्सुता हरेयुः वा, तदभावे तत्पितुर्माता पितामही हरेदित्यर्थादेतादृशक्रमबोधनार्थमेव क्रमादिति सफलम् । अन्यथोक्तक्रमस्य पाठत एव लाभे तदुक्तिरफलेति स्पष्टमेव । गौतमवचनमपि न विरुद्धम् । तत्र वाशब्दस्य चार्थत्वेन अधिकारमात्रप्रदर्शनपरत्वेन उक्तरीत्यैव क्रमस्य विवक्षितत्वात् । तत्र पिण्डशब्दः सापिण्ड्यपरः—गोत्रशब्दसमभिव्याहारात् । न केवलं मूलस्यैव नारदादिविरोधः; किन्तु तेषामपि मिथो भूयानिति तत्रैकस्य सिद्धान्तत्वे सर्वनिर्वाहाभावाद्व्यापकत्वात् मूलाद्यनुरोधेनोक्तव्यवस्थयैव सर्वैकवाक्यतासम्पादनमुचितमिति गूढाकूतम् । अत्रेदं तत्त्वम्—यद्यपि पूर्वं विरोधदानावसरे नारदमनुशङ्खकात्यायनविरोधः क्रमेण व्याख्यात्रा संभवात् सामान्यतो बहुविषये दत्तः, तथाऽपि उपक्रमोक्तनारदवाक्याद्विशिष्य भ्रातृपत्न्योः क्रमाबोधकशङ्खाच्च मुख्यतया भ्रात्रंश एवाभिमतः । मनुकात्यायनोल्लेखस्तु मूलवत्तेषामपि मिथो विरोधो यथाश्रुत इति न तयोरपि क्रमव्यवस्थापकत्वमिति सूचयितुमानुषङ्गिकः । तत्र मनुद्वयांशे विरोधपरिहारोऽग्रे व्याख्यात्राऽन्यप्रसङ्गेन कण्ठतः कृत एवेति नात्र पुनर्विशिष्योक्तिः । तेनैव पित्रादौ शङ्खकात्यायनविरोधोऽपि परिहृतप्राय इति न

१.—९. २१७. । २. प. फ. ब. स्याभ्रात्रन्तरवण्ठ (?) । ३. भ. वा विवक्षि० ।

Cole. : Ch. II, Sec. i, § 39.

## बालंभट्टी

तथा भ्रात्रंशे तदुभयविरोधोऽपि—अन्यप्रसङ्गेन तयोः संसृष्टविषयत्वमुक्तवता परिहृत एव । तत्र संसृष्टेत्युपलक्षणमविभक्तस्यापि । इदमप्यन्यत्राविभक्ते संसृष्टिनि वेति उक्तवता तेन सूचितमेव । एवञ्च तस्मादित्याद्युपसंहारद्वयमपि मुख्यतात्पर्यविषयतया भ्रात्रंश एव फलितार्थकथनपर न तु शब्दार्थकथनपरम् । तल्लाभो यद्यपि प्रागुक्तरीत्या सिद्धः, तथाऽपि अत्रापि गमकमस्तीत्याशयेनाऽऽद्योपसंहारार्थे हेतुद्वयमुक्तं—विभागेत्यादि। स च मुख्यतया भ्रातॄणामेव प्रतिपादितः—शब्दतस्तथैव लाभात् । अत एवाग्रे एवं "विभागं चेत्"[1] इत्यादिना प्रबन्धेन समानजातीयानां भ्रातॄणां परस्पर पित्रा च सह विभागक्लृप्तिरुक्तेत्युक्तम् तेन किञ्च भ्रातॄणां तयोरूर्ध्वमनन्तरं विभाग उक्त इति तस्यैव विभागस्यात्र ग्रहणम् । अत एवैकवचनम् । एवं भ्रात्रंशे तादृशप्रकरणात्तथेति तद्भावः । ननु शाब्दमुख्यविभक्तत्वस्य तत्रोक्तत्वेऽपि अर्थानुषङ्गिकविभक्तत्वस्य पितरि मातरि च सत्त्वेन[2] तादृशविषये तयोरधिकारापत्तिः पत्नीत्यस्य सर्वविषयत्वेना[3]ग्रेष्ठेत्यादिवचनान्तरादि-त्यत उक्तं संसृष्टिनामिति । "संसृष्टिनस्तु"[4] इत्यस्य पत्नीत्यादिसर्वापवादत्वं न पत्नीमात्रांशस्य । अत एव पत्न्यादयो धनभाज इत्युक्तस्यापवादमाहेति वक्ष्यते तेन । एवं च तादृशपितृभ्रातृपितृव्यान्यतमस्थलेऽस्य वचनसंपूर्णस्याप्रवृत्तावप्यन्यत्र[5] विभागे अ-विभागे च सर्वत्र प्रवृत्तिरत एव वैरूप्यमपि नेदानीम् । अत एव संसृष्टविषयत्वमेव नारद-शङ्खयोः कण्ठत उक्तं न त्वविभक्तविषयत्वमपीत्यरुचिरुपसंहारद्वयमध्ये अविभक्ते संसृष्टिनि वेत्यत्रापि बोध्या । अत एवाऽऽद्ये उपसंहारे अयमर्थः सिद्धो भवतीत्युक्तम् ; न तु पत्नीत्यादे-रेतद्विषयतया व्यवस्थितिरित्युक्तम् । द्वितीयोपसंहारस्तु साकल्यांश इति न पौनरुक्त्यम् । किञ्च विभक्तभ्रातृस्त्रीविषयत्वं पत्नीत्यस्य धारेश्वरसम्मतत्वेन प्रागुक्तम्, न स्वसम्मतत्वेन। यद्यपि तत्रा नियोगो दूषितः कण्ठतः"अप्रती"[6]इत्यादिना, तथाऽपि तदितरांशस्य संभवदुक्तिक-स्यापि उक्तवक्ष्यमाणयुक्तिभ्यां स्वानभिहितत्वमेव । एतेन पत्नीत्यादिमूलस्य "अपुत्रा शय-नम्" इति मनोश्च व्याख्यायां विभक्तसंसृष्टधनविषयतया व्यवस्थापितत्वेन तद्भिन्नस्थले तयोरप्रवृत्त्या उक्तनारदमन्वादिना तत्र निर्वाह इति मिताक्षरासम्मतसिद्धान्त इति भ्रान्तोक्तमपास्तम्—तदभिमतार्थाज्ञानात्, विभागोक्त्या मूलस्य तद्विषयत्वलाभेऽपि उक्तम-नोस्तद्विषयत्वासंभवात् तथा तेनानुक्तत्वात् । मूलैकवाक्यतया तस्य तत्त्वेऽपि विरुद्धवाक्य-जातान्तर्गते"विभक्ते संस्थित"इत्यत्र विभक्ते इत्युक्तया तदेकवाक्यतया नारदमन्वादेरपि तद्वि-षयत्वापत्त्या त्वदुक्तार्थस्य बाधितत्वादन्यथा तेषां मिथो विरोधस्य स्पष्टत्वेनाव्यवस्था तदवस्थै-

१. व्य० ११४. । २. भ. नातादृ० । ३. भ. नाप्रकृत्या वच० । ४. व्य० १३८. । ५. प. फ. ब. त्वविभागे च । ६. पृ० ७३३. । ७. भ. दित० । ८. प. फ. ब. थैज्ञा० ।

Cole:. Ch. II, Sec. i, § 39.

बालंभट्टी

व । किञ्च तावताऽपि तैः सर्वत्रानिर्वाहः–तत्र स्वल्पोपादानात्। पत्नीत्यादेस्तु त्वदुक्तरीत्या उत्तरोत्तरस्य पूर्वपूर्वसापेक्षत्वेन तद्विषयत्वस्यैव युक्तत्वेन च संपूर्णस्यैव तद्विषयत्वापत्त्या तत्राप्रवृत्तेः । मूलसमानार्थविष्णुना निर्वाहे तु अस्मत्पक्षस्यैव सिद्ध्या द्रविडप्राणायामस्यासाङ्गत्यापत्तेः । किंचान्यत्र तेन निर्वाह इति[1] न विज्ञानेश्वरसम्मतम्–यदपि नारदवचनमित्यादि· तदुक्तिविरोधापत्तेः,तदप्यत्रभवानाचार्यो न मृष्यतीत्यादिविरोधापत्तेः,तत्र पितामही प्रथमं धन भाक् "मातर्यपि च वृत्तायाम्" इत्यादितदुक्तिविरोधापत्तेश्च, वचनस्यैकत्वेनोत्तरार्धस्यापि तन्मात्रविषयतया साङ्कर्यस्यैवाभावात् । एतेनाविभक्तैकपुत्रस्य स्वार्जितधनकस्य मृतपितृकस्य[2] मातृपत्नीभगिनीसमवाये उक्तरीत्या पत्नीत्यादेरप्रवृत्त्या " अनपत्यस्य पुत्रस्य माता " इति मनोर्मातैव धनभाक् न पत्नीत्यपास्तम् — तद्विरोधात्, त्वन्मते मात्रभावे तत्सत्त्वे तत्प्रवृत्तेः। किञ्च तथा सति तत्रैव पत्न्यां जीवन्त्यामपि त्वदुक्तरीत्या धनाभाक्त्वेन मातृधनस्य दुहितृगामित्वेन तत्कन्यासत्त्वे तद्गामित्वेन पत्न्या निरंशत्वापत्त्या जीवनाभावापत्तेः । किञ्च[3] तत्रैव पितृसत्त्वे किमुक्तमनोः मातुस्तत्त्वम् उत " पिता हरेत् " इति " विभक्ते संस्थिते " इति च कात्यायनाच्च पितुस्तत्त्वमित्यवस्था दुर्वारैव— निर्वाहकवचनान्तराभावात् , विष्णोर्मूलसमानार्थत्वात् " अनन्तरस्सपिण्डाद्यः " इति[4] मनूक्तप्रत्यासत्तेस्तत्त्वाङ्गीकारेऽपि तस्यास्तत्र तुल्यत्वेन तत्तादवस्थ्यमेव , अस्मन्मत प्रवेशापत्तिश्च । उक्तप्रत्यासत्त्यङ्गीकारेऽपि तद्वत् पितुरपि असमर्थस्य उक्तरीत्या निरंशत्वापत्तिः "अर्धो वा एष आत्मनो[5] यत्पत्नी " इत्यादिश्रुत्यादिबोधितप्रत्यासत्त्यतिशयस्य पत्न्यामेव सत्त्वञ्च । किञ्च पुत्रपौत्ररहितस्य दुहित्रादिगणाभावे पत्नीसत्त्वे विभागस्याभावे त्वदुक्तरीत्या पत्नीत्यादेरप्रवृत्त्या " श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन् " इति[6] गौतमात् तस्य तत्त्वापत्त्योक्तदोषापत्तेः । किञ्च तादृशस्य तस्य पत्नीसत्त्वे सपिण्डान्तर्गतदूरतरयत्किञ्चित्सत्त्वे विभागाभावे मूलात् प्रवृत्त्या " पुत्राभावे प्रत्यासन्नः सपिण्डः " इत्यापस्तम्बात्[7] तस्य तत्त्वापत्त्योक्तदोषापत्तिरेव । वचनान्तरन्तु न साधकमस्ति । उक्तश्रुत्या । पत्न्याः प्रत्यासन्नत्वादिना तत्त्वे तु तत्रापि तन्न दण्डवारितमित्यलं तदनभिज्ञोक्तिखण्डनेनेति । क्वचिदविशिष्टविरोधपरिहारस्त्वग्रेऽनुपदमेव स्फुटी भविष्यति इतिदिक् ॥

---

१. प. फ. ब. 'न' नास्ति। २.—९.१२७.। ३. प. फ. ब. किञ्च। पितृ०। ४.—९. १८७. । ५. प. फ. ब. त्मपत्नी। ६ —२८. ४१. । ७.—२. १४. २. । 'वेयःप्र' इति क्वचित्। ८. प. फ. ब. स्तं तत्त्वा० ।

Cole.: Ch. II, Sec. i, § 39.

1 ** तदभावे दुहितरः । दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानां च समविषमांशप्राप्त्यर्थम् । ** तथा च कात्यायनः—
2 "पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी । तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥" इति । बृहस्पतिरपि—"भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता॥ अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् । तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः॥"

## सुबोधिनी

दुहितर इति — अत्र दुहितृप्रकृत्या स्त्र्यपत्य मात्रमुच्यते[1] । तत्र स्त्र्यपत्यं भिन्नजातीयेष्वप्यविशिष्टम् । प्रत्ययेन जसा बहुत्वं प्रतीयते । तच्च विसदृशेष्वप्यविरुद्धम् । अतः प्रकृतिप्रत्ययाभ्यां समानासमानजातीया दुहितरः प्रतीयन्ते । ताश्च[2] "चतुस्त्रिद्व्येकभागाः स्युः" इत्यनेन[3] क्रमेण समविषमांशभाजो भवन्तीत्याह—दुहितर[4] इति बहुवचनमिति । अङ्गादङ्गात्[5] संभवतीति—

## बालंभट्टी

एवं पत्नीति व्याख्यायग्रिमं व्याचष्टे— तदभावे दुहितर इति इत्याद्यभिधानादित्यन्तेन । ननु पत्नीतिवज्जातावेकवचनेनैव सजातियानेकग्रहणलाभे बहुवचनं निर्बीजमत आह—बहुवचनमिति । प्रकृतिबोध्यस्त्र्यपत्यत्वस्य प्रत्ययबोध्यबहुत्वस्य च विजातीयास्वपि अविशिष्टत्वमविरुद्धत्वं चेति ताभ्यामुभयप्रतीत्या तासां "चतुस्त्रि" इत्युक्तक्रमेण समविषमांशभागप्राप्तिरिति भाव[6]: । एतदग्रे "सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।" इत्युत्तरार्धम् । तत्रोढाभावे अनूढावत् तथा सदृश्यभावेऽसदृशीति बोध्यम् । साध्वीत्यादिना पत्नीवदस्या अपि तदभावे अधिकार इति सूचितम् । दुहितॄणां धनसंबन्धे पोषयति—तथा चेत्यादिना। तत्राऽऽद्यं व्याख्यातम् ।तां विना—तदभावे। स्मृता—धनहरीत्यस्माऽऽदावनुषङ्गः।अङ्गादङ्गात्—सर्वेभ्योऽङ्गेभ्यः। संभवति उत्पद्यते "यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥" इति, "यदपत्यं भवेदस्यां तन्मम स्यात्" इत्युक्तमपत्यं धनभाक् , अतः पितरि मृतेऽनुत्पन्नपुत्रायाः धनहरत्वाप्राप्तावयं विधिकल्पकोऽर्थवादः । तत्र तस्यामात्मनि पुत्रनिमित्तं तिष्ठन्त्यामेव धनलाभो न पुत्रोत्पत्तिस्तदीयाऽपेक्षिता । यद्वा

१. थ. मभिधीयते तच्च स्त्र्य० । २. त. श्च द्वित्रिभागाभवेयुरि० । ३. व्य० १२५. । ४. त. र इति अङ्गा० । ५ त. अङ्गादिति । ६. भ. वः यद्यपि इदमपि तद्वदेव सिद्धं तथाऽपि तस्य स्फुटबोधकमिदमिति गूढाकूतम् एतेनादौ सवर्णा तदभावेऽसवर्णेति व्याख्यानमपास्तम्। दुहितॄ० ।

Cole.: Ch. II, Sec. ii, §§ 1—2.

इति। ** तत्र चोढानूढासमवायेऽनूढैव गृह्णाति—"तदभावे तु दुहिता यद्यनूढा भवेत्तदा।" इति विशेषस्मरणात्। ** तथा प्रतिष्ठिताप्रतिष्ठितासमवाय 3 4

## सुबोधिनी

सर्वेभ्योऽङ्गेभ्य उत्पद्यत इत्यर्थः। तथा प्रतिष्ठिताप्रतिष्ठितासमवाय इति,—प्रतिष्ठिताः सधनाः

## बालंभट्टी

तस्यामात्मभूतायां पितृरूपेण तिष्ठन्त्यामित्यर्थको मनुस्तु[2] न लिखितः— तत्र सामान्यवचन-दुहितृशब्दस्यापि प्रकरणात् पुत्रिकापरत्वेन मेधातिथिना व्याख्यातत्वात्। एतदर्थमेवा-र्थकथनम्। एतेन पुत्रवत्या एव तस्यास्तद्धनाधिकारो न दुहितृसामान्यस्य—"तुल्य-सन्तानदर्शनात्" इति नारदीयहेतुनिर्देशेन प्रत्यासत्तेस्साम्येऽपि उपकारा[3]तिशयेन तद-धिकारबोधनात्। यथा पुत्रत्वसाम्येऽप्यक्लीबादेः, तथा च पुत्रदुहित्रोस्तद्वत्त्वमेव तदधि-कारापादकं न स्वरूपमात्रम्; अन्यथा क्लीबादिपर्युदासस्यादृष्टार्थतापत्तेरिति भ्रान्तो-क्तमपास्तम्—मन्वादिविरोधात्, नारदार्थस्य वक्ष्यमाणत्वात्। क्लीबादेर्यथाकथञ्चित् पुत्रसत्त्वे कर्मानधिकारप्रयुक्तस्य वाचनिकस्य वा अनधिकारस्य सत्त्वादन्यथाऽपुत्रापुत्रा-देस्तत्त्वानापत्तेः योग्यतायाः पतितादावपि सत्त्वाच्चेति दिक्। यद्यनूढेति व्याचष्टे—तत्र चेति,—दुहितृषु चेत्यर्थः। अनेन यदि तयोस्समवायो भवेत्, तदा अनूढैवेति तत्र योजना सूचिता। तदेवाऽऽह—तदेति। धनं विनाऽविवा-हे तस्या ऋतुदर्शने पित्रादीनां नरकपातनश्रुत्या युक्तमेवेदं—ततो निस्तारात्; तथा च पैठीनसिः—"यावन्नोद्भिद्येते स्तनौ, तावदेव देया; अथ ऋतुमती भवति दाता प्रतिग्रही-ता नरकमाप्नोति पिता पितामहः प्रपितामहश्च विष्ठायां जायन्ते तस्मान्नग्निका देया" इति। पराशरोऽपि—"अपुत्र[4]स्य मृतस्य कुमारी ह्यर्थं गृह्णीयात्तदभावे चोढा" इति। देवलोऽपि—"कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु। अपुत्रस्य तु कन्या स्वा धर्मजा पुत्र-वद्भवेत्॥" इति। स्वा—सवर्णा। धर्मजा—धर्मपत्नीजा। नारदोऽपि—"स्यात्तु चेद्दुहि-ता तस्याः पित्र्यांशो भरणे मतः। आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः॥" इति[5] अत्र। हरेद्भागमिति ऊढानूढासाधारणं भरणांशे विशेषः। एतेन ऊढानूढासमवाये इति चिन्त्यम्—तादृशक्रमकल्पने मानाभावात्।"यद्यनूढा भवेत्"इ[6]त्यर्थस्योक्तनारदादनूढा पितृभागं न लभते; किन्तु आविवाहं भरणं विवाहोपयुक्तं द्रव्यं च तद्भागं तु विवाहानन्तरमेवेत्यर्थपर-त्वादिति भ्रान्तोक्तमपास्तम्। विशेषान्तरमाह—तथेति। प्रतिष्ठिता—सधना। अप्रतिष्ठिता

---

१.—२५.५५, ५६.। २. भ. स्तु रूपमातः तत्र। ३. प. फ. ब. रबोध०। ४. प. फ. ब. तस्य कु०। ५. (?)। ६. भ. त्यस्यो०।

Cole.: Ch. II, Sec. ii, § 2—4.

अप्रतिष्ठितैव, तदभावे प्रतिष्ठिता—"स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च"
5 इति गौतमवचनस्य पितृधनेऽपि समानत्वात्।**न चैतत्पुत्रिकाविषयमिति मन्त-
व्यम्। "तत्समः पुत्रिकासुतः" इति पुत्रिकायास्तत्सुतस्य च औरससमत्वेन पुत्रप्रकरणे

## सुबोधिनी

अप्रतिष्ठिता निर्धनाः। स्त्रीधनमिति—अविवाहितानां स्त्रीधनं तदभावे निर्धनानामित्यर्थः। नन्वेतत् गौतमवचनं मातृधनविषयं न पितृधनविषयमित्यत आह— पितृधनेऽपीति। 4 [अयमर्थः—"स्त्रीधनं दुहितॄणाम्" इति स्त्रीधनोद्देशेन दुहितृसम्बन्धविधानादुद्देश्यवि-शेषणत्वेन स्त्रीत्वस्याविवक्षितत्वान्न्यायस्य साधारणत्वमिति।]* ननु "पत्नी दुहितरः" इत्येतद्वचनं पत्न्यभावे पुत्रिकाया दुहितुर्धनसम्बन्धं ब्रवीति न तु दुहितृमात्रस्य— येनानूढा-भावेऽप्रतिष्ठता तदभावे प्रतिष्ठितेत्येष क्रमः स्यादित्याशङ्क्य नेत्याह—न चैतदित्यादिना।

## बालंभट्टी

निर्धना। स्त्रीधनमिति—तत्कन्यानां तासां मध्ये अपरिणीतानां तासां मध्ये निर्धनानामेवेत्यर्थः। नन्वेतच्छुत्या मातृधनविषयकमिति प्रकृते कथं प्रवर्तते? अत आह—पितृधनेऽपीति। स्त्रीधनोद्देशेन दुहितृसंबन्धविधाने उद्देश्यविशेषणत्वेन स्त्रीत्वस्याविवक्षितत्वात्तुल्यत्वमिति भावः। एतेन यद्यप्यादौ सपुत्राया एव मतं, तथाऽपि सर्वथाऽविशेषादुभयोरपि विभज्य धनग्रहणम्। एतेन तथेत्यादि चिन्त्यम्—तस्य स्त्रीधनविषयत्वान्न्यायस्य पितृधनविषये दुष्टत्वा-दिति तदुक्तमपास्तम्। ननु दुहितर इति वाक्यं पत्न्यभावे पुत्रिकारूपकन्याया धन-संबन्धमाह—उक्तमन्वनुरोधात् न तु तत्सामान्यस्य येनानूढादिक्रमः प्रागुक्तो भवेदित्याश-येनाऽऽह—न चैतदिति,—दुहितर इत्येतदित्यर्थः। व्याख्याभेदेनाऽऽह—तत्सुतेति। एवं च तत्रैवोक्त्या अत्रोक्तिः पुनरुक्तेत्यनुपपन्नैव स्यादित्यर्थः। मनुना तु द्वादशपुत्र-मध्ये शूद्रापुत्रो गणितो न पुत्रिकापुत्र इति तस्य तदुक्तिस्तथेति भावः। "अपुत्रधनं पत्न्यभिगामि" "तदभावे दुहितृगामि" इति प्रागुक्तविष्णुरपि, "दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्धनम्।" इति कात्यायनोऽपि, "मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः।" इति वक्ष्यमाणनारदोऽपि। यत्तु पत्न्यभावे स्नुषैव न दुहिता—तदधिकारस्य पुत्रपत्न्यन्यतमा-भाव एव संभवात्। पत्न्यभावेऽपि पुत्रार्धशरीरसत्त्वेन पुत्राभावविरहात्। तथा च बृहस्पतिः— "यस्य नोपरता भार्या देहार्धं तस्य जीवति। जीवत्यर्धे

---

१—२८. २४.। २. थ. द. न दुहितॄणामिति। ३. थ. द. पि समानत्वादिति। ४. भ. नामेव परिणीतानां मध्ये। ५. भ 'ननु' नास्ति। ६.—१७ ३, ४.। ७—१३. २.।
Cole.: Ch. II, Sec. ii. §§ 4—5.

अभिधानात्।**चशब्दाद्दुहित्रभावे दौहित्रो धनभाक्; यथाऽऽह विष्णुः—"अपुत्र 6

## सुबोधिनी

पुत्रप्रकरण एवाभिहितत्वात् पुनरप्यभिधानमनुपपन्नमित्यर्थः। "पत्नी दुहितरश्च[1]" इत्यत्र चशब्दमभिप्रायतो व्याचष्टे—च शब्दादिति[2][3]। अपुत्रपौत्रसन्तान इति,-पुत्रपौत्रादिरूपः सन्तानः पुत्रपौत्रसन्तानः[4] तदभावोऽपुत्रपौत्रसन्तानः तस्मिन् सति—पुत्रपौत्रदुहित्रभावे धनं दौहित्रा अवाप्नुयु.। पूर्वेषां मातामहादीनां स्वधाकारे श्राद्धादौ दौहित्रका दौहित्राः पौत्राः

## बालंभट्टी

शरीरेऽर्धे कथमन्यस्समाप्नुयात्॥" इति। न च दुहितुः साक्षात् पित्रवयवारब्धत्वेन पुत्रसहकारिस्नुषापेक्षया सन्निकृष्टत्वमिति वाच्यम्—दुहित्रपेक्षया सगोत्रासपिण्डायाः स्नुषायाः प्रत्यासत्त्यतिशयात्। पित्रादिष्वतिप्रसङ्गस्तु न—तेषां वचनेनैव व्यवस्थाविशेषस्य नियमितत्वात्। यत्रापि पतिमरणानन्तरं पत्न्येव लभते, तत्रापि मातृधनत्वेन तद्धनं दुहितृगामीति न भ्रमितव्यम्—जन्मना पुत्रस्येव विवाहात् स्नुषाया अपि भर्तृद्वारा श्वशुरधने स्वत्वोत्पत्त्या श्वशुरमरणे श्वश्रूस्नुषयोः स्वत्वसाम्यादिति भ्रान्तस्तन्न—वस्तुतस्तथा सत्त्वेऽपि तदभावाय तत्त्वस्य तस्याशब्दत्वात् पत्नीतः प्रागपि तदधिकारापत्त्या सकलव्याकुलीभावापत्तेः। "अर्धो वा एष आत्मनः" इति श्रुतिमूलस्योक्तबृहस्पतेः प्रत्यासत्त्या तादृशपतिधनविषये पत्न्या अधिकारबोधकत्वेन प्रकृते अप्राप्तेः तत्प्रत्यासत्त्यपेक्षया स्नुषायां तादृशप्रत्यासत्त्यतिशयाङ्गीकारे दुहितुरपि प्राक् पित्रादेरधिकारापत्त्या स्मृतिविरोधे बाहुल्याय तत्स्थानाविषयामित्यस्य स्नुषायामपि तुल्यत्वात्; तस्या अपि गोत्रजत्वात्। एतेन यत्रापीत्याद्यग्रिममपि निरस्तमिति दिक्। मूलस्थं चमन्यथा सर्वथाऽनुपपन्नमभिप्रायतो व्याचष्टे—च शब्दादित्यादिना इतीत्यन्तेन। एतेन दुहितर इति बहुवचनेन दौहित्रग्रहणमिति प्राच्योक्त पत्नीत्यादिक्रमसंबन्धात् सर्वान्ते दौहित्राधिकार इत्यन्योक्तञ्चापास्तम्—बहुवचनफलस्योक्तत्वात् राज्ञो भावाभावेनाधिकारापत्तेश्च। विष्ण्वाद्यनुरोधेनाऽऽह—दौहित्र इति। तदेवाऽऽह—यथाऽऽहेति,—अन्यथा तेषां निर्विषयता स्यादिति भावः। अपुत्रेति,—सन्तन्यते यस्यामिति व्युत्पत्त्या सन्तानशब्देन

---

१. थ. द. श्चेवेत्य०। २. थ. द. ब्दाद्दुहित्रभाव इति। ३. त. तिपुत्रपौ०। ४. थ. नः तस्मि० (?)। ५.—२५. ४७.। ६. भ. मव०। ७. भ. तिसन्तानशब्देन प्रत्यासत्त्या पौत्रापत्यं प्रपौत्र उच्यते सन्तानोऽपत्य०।

Cole.: Ch. II, Sec. ii, §§ 5—6.

पौत्रसन्ताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः॥" इति । मनुरपि—"अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥" इति ॥

## सुबोधिनी

मताः संमताः । त एवाधिकारिणः श्राद्धादौ, दौहित्रा एव पौत्रस्थानीया इत्यर्थः । अकृतेति—पुत्रिकात्वेन कृता वाऽकृता वा दुहिता सदृशात् सवर्णात् यं सुतं लभते, तेन सुतेन मातामहः पौत्री पौत्रवान् । स तस्य धनं गृह्णीयात् पिण्डमपि दद्यादित्यर्थः । पितरावित्यत्र एकशेषे

## बालंभट्टी

पत्नी दुहिता चोच्यते; अत एव नारदः—"पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् । पुत्रश्च दुहिता चोभौ पितुस्सन्तानकारकौ ॥" इति । "सन्तानोऽपत्यगोत्रयोः । "सन्ततौ देववृक्षे च" इति विश्वोऽपि । त्रयाणां द्वन्द्वोत्तरं बहुव्रीहिः । तस्मिन् पुरुषे मृते सतीत्यर्थः । अव्ययीभावेन व्याख्यानं तु अयुक्तं—तादृशाभावस्य भाष्यसम्मतत्वात् । सन्तानपदवैयर्थ्यापत्त्या कर्मधारयोऽप्ययुक्तः । तथा च पुत्रपौत्रपत्नीदुहित्रभावे सति तद्धनं दौहित्रा आप्नुयुरित्यर्थः । "यश्चार्थहरस्स पिण्डदायी" इति बृहस्पतेः "यो धनमाददीत स तस्मै श्राद्धं कुर्यात् पिण्डं च त्रिपूरुषं दद्यात्" इति वृद्धशातातपोक्तेश्चाऽऽह—पूर्वेषां त्विति । पूर्वेषां—मातामहादीनां । "मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव सः । दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥ दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् । स एव दद्याद्द्वौ पिण्डौ पित्रोर्मातामहाय च ॥" स्वधाकारे श्राद्धादौ—दौहित्रिकाः स्वार्थे कन्—पौत्रा एव मता इत्यर्थः । अत एव मनुः—"पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः । तयोर्हि माता पितरौ संभूतौ तस्य देहतः ॥" इति "दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥"[10] इति च। यद्यपि इदं सर्वं पुत्रिकापुत्रविषयं—प्रकरणात; व्याख्यातञ्च मेधातिना तथैव, तथाऽपि न्यायसाम्यादत्र सम्मतित्वेन लिखितम् । अत एव विज्ञानेश्वर एतत्सर्वं विहाय एतत्प्रकरणस्थमपि "अकृता वा" इत्युक्त्या साधारणं मनुवाक्यमात्रं सम्मतित्वेनाऽऽह—मनुरपीति,—पुत्रिकात्वेन[11] कृता अकृता वा दुहिता सदृशात् सवर्णात् यं सुतं पुत्रं विन्देत लभेत, तेन तत्सुतेन मातामहः पौत्री पौत्रवानेव । अत एव सा सुतः । उक्तहेतोः पाठक्रमादर्थक्रमस्य बलीयस्त्वात् तस्य धनं हरेत् गृह्णीयात् पिण्डं दद्याच्चेत्यर्थः । मेधातिथिना तु

१. वि० स्मृ० न दृश्यते । २. क. ङ. च. छ. अक्षता वा क्षता । ३.—९. १३६. । ४. थ. द कृता वाऽकृतावापीति । ५. थ. द. षोऽभिप्रेत इ०। ६.—१३. ५०. । ७. भ. त्रप्रपौत्राभावे । ८. म० ९. १३१, २. । ९.—९. १३३. । १०. म० ९ १३९. । ११. प. फ. ब. नाकृतावा दु० ।

**तदभावे पितरौ मातापितरौ धनभाजौ।** यद्यपि 2

## सुबोधिनी

इत्याह[1]—मातापितराविति।*[ननु दुहितृदौहित्राभावे पित्रोः धनभाक्त्वं विधीयते। तत्रैकशेषत्वात् मिलितयोर्वा धनग्रहणमुत प्रत्येकं, तत्राप्यैच्छिको वा क्रम उत प्रतिनियतो वा क्रम इत्याकाङ्क्षायामाह – यद्यपीति।]*अयमर्थः—"चार्थे द्वन्द्वः"[2]इति इतरेतरयोगे[3] विधीयमानो 2

## बालंभट्टी

अयमपि श्लोकः कैमुतिकन्यायेन पौत्रिकेयपरतयैव सिद्धान्तितः। बृहस्पतिरपि—"यथा पितृधने तस्याः तस्य सत्स्वपि बन्धुषु। तथैव तत्सुतानां च तदभावे तु धर्मतः॥" इति। अत्रेदं बोध्यम्[4]। यद्यपि मानवे पुंस्त्वैकवचनाभ्यां दौहित्रस्य धनभाक्त्वमायातीति तावदेव विज्ञानेश्वरेण च समुच्चेयमुक्तम्, तथाऽपि दौहित्राभावे दौहित्र्यास्तत्त्वमपि च समुच्चेयम्। "अप्रजस्त्रीधनं भर्तुः"[5] इति वक्ष्यमाणेनाप्रजस्त्रीधनोद्देशेन भर्तृदुहितृदौहित्र्यादेश्च संबन्धविधानेनोद्देश्यस्य[6] विशेषणत्वेन स्त्रीत्वादेरविवक्षितत्वेन "दुहितॄणां प्रसूता चेत्"[7] इत्यस्य पितृधनेऽपि तुल्यत्वादेवं रीत्या "मातुर्दुहितरः" इति नारदस्याप्यत्राऽऽनुकूल्यत्वात्। युक्तं चैतत्। यथा मातृधनग्रहणे दुहितृदौहित्रीदौहित्रपुत्रपौत्रादिकक्रमः, तथा पितृधने पुत्रपौत्रप्रपौत्रपत्नीदुहितृदौहित्रदौहित्र्यादिक्रमस्य प्रत्यासत्तितारतम्येन न्यायप्राप्तत्वात् "स्त्रीधनं दुहितॄणामप्रमत्तानामप्रतिष्ठितानां च"[10] इति गौतमवचनस्य पितृधनेऽपि समानत्वादित्यनुपदमेवोक्तवता विज्ञानेश्वरेण सूचितत्वात्तत्सम्मतमपीदम्—अन्यथा दौहित्र्याः पूर्वत्र वक्ष्यमाणेषु च स्वतो नोक्तत्वादनन्तर्भावाच्च। पितृधनविषये तु तस्या अनधिकारस्यैवाऽऽपत्तिरिति महान् दोषः। अग्रे यथाकथञ्चिदन्तर्भावे[11] तु प्रथमधनग्रहणे प्रत्यासत्तेर्नियामकत्वबोधकमन्वादिविरोधः स्पष्ट एव। अत एवाग्रे भ्रात्रनन्तरमेव तत्सुतोक्तिरितीति। अत्र प्रागुक्तविष्णुकात्यायनविरोधपरिहारस्तु अनुपदमेव स्फुटीभविष्यति। तत्राग्रिमं व्याचष्टे[12]—तदभावे इति। पितरावित्यत्र न स्वरूपैकशेषः किन्तु "पिता मात्रा"[13] इति—स्मृत्यन्तरानुरोधादित्याह—मातापितराविति। नन्वेवमपि एकशेषत्वादेव एकेनैवोभयप्रतीत्या मिलितयोरेव तयोर्धनसंबन्धः प्राप्नोति नैच्छिकेन प्रतिनियतेन वा क्रमेणेति स्मृत्यन्तरविरोधस्तदवस्थ एवेत्याशयेन शङ्कते—यद्यपीति। तत्र एता-

१. थ. द. हपितरौ मा० । २. अ० २. २. २९. । ३. त. द. रयोगसमाहारयोर्विधी० । ४. भ. तः अत्र शोध्यमेकं अत्रेदं बो० । ५.—२५. ५८. । ६. व्य० १४७. । ७. प. फ. ब. न्धातादृश्यस्य वि० । ८.—१३. २. । ९. प. फ. ब. 'पुत्र' नास्ति । १०.—२८. २४. । ११. प. फ. ब. दन्तरमेव तत्सु० । १२ प. फ. ब. ष्टे पित० । १३. अ० १. २. ७०. ।

युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते, तथाऽपि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपाता-

## सुबोधिनी

द्वन्द्वसमास उभयपदार्थप्रधानो भवति। अत एव पूर्वपदार्थरूपमुत्तरपदार्थरूपं चाधिकरणं युगपत् द्वन्द्वसमासोऽभिधत्ते, अपरथा उभयपदार्थप्राधान्याभावात् एवं स्थिते "पिता मात्रा" इत्येकपदलोपेन पितृशेषस्य विकल्पेन विधीयमानत्वात् मातापितराविल्यलुप्तपूर्वपदस्य द्वन्द्वस्यापवादकत्वेनैकशेषस्य पितराविल्यस्यापि युगपदिधकरणवचनत्वे यद्यपि समासे क्रमो न प्रतीयते, तथाऽपि माता च पिता चेति विग्रहवाक्ये "अभ्यर्हितं पूर्वम्" इति मातृशब्दस्य पूर्वनियतत्वात्, यदा त्वेकशेषाभावस्तदा समासेऽपि मातापितराविति पूर्वं मातृशब्दस्य श्रुतेरुभयथाऽपि मातृशब्दस्य पूर्वमुच्चरितत्वात् शब्दोच्चारणक्रमेणार्थक्रमप्रतीतेः प्रकृतेऽपि धनग्रहणे क्रमापेक्षायां क्रमान्तरेऽप्रतीते विग्रहसमासप्रतीतक्रमानुसरणेनैव मात्र-

## बालंभट्टी

वदेकदेशिमतेनाऽऽह — युगपदिति, — युगपदधिकरणानां द्रव्याणां वचनं यैः पदैः तेषां भावः तत्र तस्यामित्यर्थः। द्विवचनाद्यन्तेनैकशेषसाधनार्थमयं पक्षो भाष्ये "सरूप" सूत्रे एकदेशिनोक्तः। अग्रे तु भगवता सेयं युगपदधिकरणवचनता दुरुपपादा चेत्यनेन दूषितः। उत्सर्गापवादयोः साम्यादुत्सर्गेऽपि तथेत्याशयेनात्र द्वन्द्वस्मरणादि युक्तं तदेवाऽऽह—तदपेति। वस्तुतस्तु इतरेतरद्वन्द्वेऽपि समूहस्यैव प्राधान्यात् समाहारे तस्यानुद्भूतावयवभेदत्वमिति भेदाङ्गीकारादितरेतरविषये एवैकशेषाङ्गीकारात् समूहस्यैव प्राधान्येन प्रतीत्या तस्यैव तत्र निमित्तत्वप्राप्तिः। किञ्च एकशेषे एकपदलोपेन यः शिष्यत इति न्यायेन अवशिष्टस्यैव तत्समूहबोधकत्वेन तत्त्वम्। यत्र हि पृथगुपस्थितिः कारणान्तरं वा, तत्रैव क्रमबोधः तत्र गुपस्थित्यादेस्तन्त्रत्वादिति बोध्यम्। एतेन पूर्वपक्षोऽयुक्तस्तन्मतस्यासिद्धान्तत्वादित्यपास्तम्। क्रम इति,—यथाकथञ्चित् क्रम इत्यर्थः। तथा च स्मृत्यन्तरविरोधस्तदवस्थ एवेति भावः। एतेनेतरेतरयोगसमाहारयोर्विधयीमानद्वन्द्वस्य उभयपदार्थप्रधानत्वात्तदपवादैकशेषस्यापि युगपदधिकरणवचनत्वेन क्रमाप्रतीतिरिति व्याख्यानमपास्तम्—असिद्धान्तत्वादिति दिक्। समाधत्ते—तथाऽपीति। विग्रहेति—माता च पिता चेति

१. क. ङ. छ. याः। २. त. र्थस्वरू० । ३. थ. द. साभिधाने । ४. अ० १. २. ७०.। ५. थ. द. नान्यतरपितृशब्दावशेषस्य। ६. थ. द. एतदादि 'कशेष' इत्यन्तं नास्ति। ७. थ. द. त्वेनय०। ८. द. समोक्तेः क्र०। ९. थ. द. पिता च माता चे०। १०. त. थ पातात्। ११. त. स्य स्मृ० १२. अ० १. २. ६४.। १३. भ. नता दुः खादुरु०।

Cole.: Ch. II, Sec. iii, § 2.

दकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वश्रवणात् पाठक्रमादेवार्थक्रमावगमाद्धनसंबन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक् तदभावे पितेति गम्यते । **किंच पिता पुत्रान्तरेष्वपि साधारणः, माता तु न साधारणीति 3 प्रत्यासत्त्यतिशयात् "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।" इति वचनात् मातुरेव

सुबोधिनी

भावे पितुर्धनसम्बन्धो वेदितव्य इति । मातुः स्वपुत्रान् प्रत्यसाधारणत्वेन पित्रपेक्षया अत्यन्तं सन्निहितः सन्निकर्षः । पितुस्तु सवर्णायां जातपुत्रेभ्यः क्षत्रियादिस्त्रीभ्यो जातपुत्रेभ्यश्च पितृत्वं साधारणमिति मात्रपेक्षया साधारणत्वाकारेण व्यवहितः सन्निकर्ष इति मातुरधिकप्रत्यासत्तिः । ततश्च "अनन्तरः सपिण्डाद्यः" इत्यनेन यः सपिण्डात् सन्निहितस्तस्य सपिण्डसन्निहितस्य तस्य धनं सपिण्डस्य धनं भवेदिति विहितत्वान्मातैव प्रथमं धनभागिनीत्याह—किञ्च पितेत्यादिना। यद्यपि पुत्रे पित्रवयवबाहुल्यान्मात्रपेक्षया प्रत्यासत्त्यतिशयः, एतदेव च

बालंभट्टी

एकशेषविग्रहवाक्ये इत्यर्थः । ननु वाक्ये ऐच्छिकः प्रयोग इति न तथा नियमः पूर्वनिपातप्रकरणं हि समास एव तथा प्रयोगनियामकमतो युक्त्यन्तरमाह — एकशेषाभावपक्षे चेति । अत एव चः व्युत्क्रमे श्रवणादित्यग्रे बोध्यः । पूर्वमिति —अभ्यर्हितमित्यनेनेति भावः । पाठेति,—तत्र प्रयोगे तच्छब्दस्यैव पूर्वमुच्चारणेन तत्क्रमेणैवार्थक्रमप्रतीत्या मातापितृसमूहस्यैव बोधेऽप्युद्भूतावयवभेदत्वात् पूर्वोत्तरत्र प्रत्येकमेव तत्संबन्धस्य विजातीयानां बोधनात् स्मृत्यन्तरानुरोधाच्च अत्रापि प्रत्येकमेव धनसंबन्धः । तत्रापि धनग्रहणे क्रमापेक्षायामुपस्थितत्वमिति न्यायेनोपस्थितक्रमेणैवाऽऽदौ मातुस्तदभावे पितुर्धनसंबन्धस्य पर्यवसानमित्यर्थः । नन्वयुक्तमेतत् पितरावित्यत्रान्यशब्दस्थक्रममादाय तथा प्रतिपादने स्वारस्याभावात् "पितामात्रा" इत्यत्र तृतीयानिर्देशेन तस्या अप्राधान्यप्रतीतेः पितृशब्दस्यैवोच्चारणेन द्विवचनस्य सजातीयासजातीयानेकबोधत्वेनेष्टार्थबोधस्य तात्पर्यग्राहकैकसापेक्षत्वेन च पूर्वं पितुरेवोपस्थितेश्च । अत आह—किञ्चेति । पितृत्वस्य यावत्सवर्णासवर्णाजातपुत्रत्वनिरूपितत्वेन साधारणत्वात् । मातृत्वस्य स्वजातपुत्रत्वमात्रनिरूपितत्वेन मिथोऽपेक्षया मिथो व्यवहितोऽत्यन्तसन्निहितश्च सन्निकर्ष इति मातुस्ततोऽधिकप्रत्यासत्तिरिति भावः । ननु धनग्रहणे प्रत्यासत्त्यतिशयस्य नियामकत्व एव किं मानमत आह—अनन्तर इति,—मनूक्तिरियम् । सपिण्डादिति,— "दूरान्तिका-

---

१. ख. च. छ. वै श्र० । क. वैस्मरणा० । २.—७. १८७ । ३. थ. द च पिता पुत्रान्तरे ष्वित्या० । ४. प. फ. ब. कभावः शेषपाठेति (?) । ५ अ० १. २. ७०. । ६. प. फ. ब. यानेकबोधस्य । ७. प. फ. ब. र्णाजात० ।

4 प्रथमं धनग्रहणं युक्तम् । *"न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका, अपि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यत इति ।
5 **मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम् । तदभावे पिता

## सुबोधिनी

3 प्रत्यासत्तेर्मूलकारणं,*[तथाऽपि पुत्रान्तरेषु पितुःसाधारणत्वेन मातुरसाधारणत्वेन चैवंविधाव्यवहितसन्निकर्षसध्रीचीनतया पितराविल्येकपदोत्मिकया श्रुत्या स्वविग्रहवाक्यान्तर्गतक्रमस्थोपस्थपितत्वात् एष एव क्रमो ज्यायानित्यभिप्रायः ।] *नन्वनुगतं हि कारणं लोके दृश्यते। "अनन्तरः सपिण्डाद्यः" इत्यस्मिन् वचने सपिण्डपदोपादानेन सपिण्डेष्वेव प्रत्यासत्तिर्धनग्रहणे कारणं न समानोदकेषु ; तत्र तु कारणान्तरं वक्तव्यम्, तदेव सपिण्डेष्वपि भवतु, किमनया प्रत्यासत्त्या—इत्याशङ्क्य सपिण्डपदं समानोदकानामप्युपलक्षकम् । अतोऽनेनैव वचनेनोभयत्र प्रत्यासत्तिरेव धनग्रहणे कारणमित्याह — न च सपिण्डेष्वेवेत्यादिना ।

## बालंभट्टी

र्थात्" इति षष्ठ्यर्थे पञ्चमी । तथा च सपिण्डस्य योऽनन्तरः सन्निहितः, तस्य सपिण्डसन्निहितस्य धनं तस्य सपिण्डस्य भवेदित्यर्थः । एवञ्च प्रत्यासत्तेर्नियामकत्वं मनुना स्पष्टमेवोक्तम् । नन्वनुगतं कारणं हि लोके दृश्यते प्रकृते तु न तथा । अनन्तर इति मनुना सपिण्डदोक्त्या सपिण्डेष्वेव प्रत्यासत्तेर्नियामकत्वं न सोदकादिष्विति प्रतिपादनात् । तथा च तत्र कारणान्तरेऽवश्यं वक्तव्ये सपिण्डेष्वपि तदेवाऽऽस्तां किमनया प्रत्यासत्त्येत्याशयेनाऽऽह—न चेति,—नहीत्यर्थः । " बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥ " इति बृहस्पतेः तत्र सपिण्डपदं सोदकादीनामप्युपलक्षकमित्युभयत्र सैव नियामिकेत्याह—अपित्विति। तस्मादेवेति एवोऽप्यर्थे । पित्रोरिति निर्धारणे षष्ठी । अनेन "पत्नी दुहितरः " इत्यत्र सर्वत्र मृतनिरूपितप्रत्यासत्त्यतिशयस्यैव क्रमेण धनग्रहणाधिकारितावच्छेदकत्वं विवक्षितं मूलकृत इति सूचितम्।तदभावे पितेति,—अत एव च मनुना पितुरनन्तरमेव भ्रातुर्ग्रहणं कृतम् । यदि तु पूर्वं पितुस्ततो मातुरिति क्रमोऽत्र स्यात्, तदा तदनन्तरं तदुक्तिरसङ्गतैव स्यादिदमेव ध्वनयितुमग्रिमव्याख्याने अव्यवहितं तं मनुमेव वक्ष्यति । इदं सर्वं प्रागुक्तशङ्खवाक्यस्थे पितरावित्यत्राऽपि बोध्यम् ।

१. द. कयाश्रु० । २. म०. ७ १८७ । ३. थ. द. त्रका० । ४. त. यदे० । ५. त नचेत्या० । ६. अ० १. ३. २५. । ७. ब. 'न' नास्ति । ८.—२५. ६२. । ९. प. फ. ब. भृतिनि० ।

Cole.: Ch. II, Sec. iii, §§ 3—5.

धनभाक् ॥ *¹पित्रभावे भ्रातरो धनभाजः। तथा च मनुः— 1

## बालंभट्टी

वस्तुतस्तु आदौ पिता तदभावे मातेति क्रमो युक्तः । किञ्चेत्यस्यावतारणोक्तयुक्तेः[1] किञ्चेत्याद्युक्ततारतम्यसत्त्वेऽपि पुत्रे पित्रवयवबाहुल्यान्मात्रपेक्षया तत्र प्रत्यासत्त्यतिशयात् तदपेक्षया तस्याभ्यर्हितत्वात् क्षेत्राजविशेषविषये उक्तवैपरीत्यस्य सत्त्वेन तथा तस्यापि दुर्वचत्वाच्च । किञ्च तदेव हि प्रत्यासत्तेर्हि मूलकारणं " मातुर्दुहितरः " इत्यत्राऽपि तथैव विज्ञानेश्वरेण प्रतिपादितञ्च । अग्रे बन्धुपदव्याख्यावसरे च आत्मबान्धवैपि-[2] तृबान्धवमातृबान्धवा वृद्धशातातपाद्युक्तक्रमेणैव प्रतिपादिताः । स्त्रीधनविभागे वैपरी-[3] त्येनात्रैवमेवोचितञ्च । अत एव विष्णुकात्यायनौ— " प्रागुक्तमपुत्रधनं पत्न्यभि-गामि" "तदभावे दुहितृगामि" "तदभावे दौहित्रगामि"[4] "तदभावे पितृगामि" "तदभावे मातृगामि " इति,[5] " अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥" इति च । अन्यथा तयोरपि बोधकत्वेन तद्विरोधो दुष्परिहर एव । तदनुरोधेन तयोरन्यथानयनस्य कर्तुमशक्यत्वात् । इदन्तु तदनुरोधेनो-क्तरीत्या सुयोजमेव । देवलोऽपि—" तुल्या दुहितरो वाऽपि ध्रियमाणः पितापि वा[6] ।" इति। अत एव च न समुदितयोरधिकारः। "अनपत्यस्य" इति,[7]— प्रागुक्तं मानवम्, " भार्या-पुत्रविहीनस्य तनयस्य मृतस्य तु । मातारिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥" इति बार्हस्पत्यञ्च पितृपर्यन्ताभावपरमेवेति न विरोधस्तत्र तदनुज्ञयेत्युक्त्या तदभावे नाधिकार इति सूचितम्। शङ्खवाक्येऽप्येवमेवेति बोध्यम् । दौहित्रंशे[8] विष्णुविरोधोऽपि न—दौहि-त्रगामीत्यत्र एकशेषघटितसमासेन तस्या अपि परिग्रहात् । दौहित्रदौहित्र्यंशे कात्यायन-विरोधोऽपि न - तत्र अपिशब्देन उभयोस्समुच्चयात् । तत्र पुत्र इत्यस्य प्रत्यासत्त्या भ्रातु-ष्पुत्रा इत्यर्थः । अत्र माता जनन्यभावे सापत्न्यमाताऽपि । मात्रपदोक्तेः साम्यात् तथानिर्दे-शः । अग्रिमं व्याचष्टे —पित्रेति । भ्रातर इति तथेत्यादिः । भ्रातर इत्यत्र भ्रातृपुत्रा-वित्येकशेषेण प्रागुक्तसिद्धान्तरीत्या पूर्वं भ्राता तदभावे स्वसा ; अत एव —" भ्रातरो ये च संसृष्टा भागिन्यश्च सनाभयः ।" इति संसृष्टिधनविषये वक्ष्यमाणं सङ्गच्छत इति बोध्यम् । एवञ्चेति,- अत्र वा व्यवस्थितविकल्पे इति प्राक् प्रतिपादितम् । " तदभावे भ्रातृगामि" इति विष्णुवाक्येऽप्येवमेव बोध्यम् । कातीये भ्रातेति स्वसुरप्युपलक्षणं

---

१ भ. उक्तेः । २. व्य०. ११७.। ३. प. फ. ब. 'पितृबान्धव' नास्ति । ४. प. फ. ब. वि० स्मृ० 'तदभावे दौहित्रगामि' नास्ति । ५. वि० १७. ४—७. । ६. भ. च । ७.—९. २१७. । ८. प. फ ब. शेकात्या० ।

Cole. : Ch. II, Sec. iii, 5 ; Sec. iv, 1.

2 "पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।" इति।**यत्पुनर्धारेश्वरेणोक्तम् ' "अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥" इति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता, यतः पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति, पितामहीगृहीतं तु सजातीये-
3 ष्वेव गच्छतीति पितामह्येव गृह्णाति' इति,**एतदप्याचार्यो नानुमन्यते—विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् "चतुस्त्रिद्व्येकभागः स्युः" इत्यादिनेति।

## सुबोधिनी

2 रिक्थमिति। अत्र वाशब्दो व्यवस्थितविकल्पार्थः।*[मातुरभावे पिता रिक्थग्राह इत्युक्तम्। तदन्यैरन्यथा कृतं तत् परोक्तं निराकर्तुं सिंहावलोकन्यायेनानुभाषते—यत्पुनरित्यादिना।]* अयमभिप्रायः—पित्रा गृहीते तद्धनं पितृधनमिति मूर्धावसिक्तादीनां विजातीयपुत्राणामपि भवति। पितामह्या गृहीते तु मातृधनत्वेन तद्दुहितॄणां तदभावे दौहित्रपुत्रादीनां क्रमात् भवतीति सजातीयानामेव भवेदित्येवंरूपयुक्त्युपबृंहितमनुवचनेन मात्रभावे पितामही गृह्णीयादिति न्यायात् विश्वरूपाचार्यो नाङ्गीकुरुत इति निराकरोति—एतदिति।भवेदेवं, परं यदि विजातीयपुत्रस्य धनग्रहणे दोषः। न च तथा। अपि तु तेऽपि वचनेनैव रिक्थभाज इत्येकदेशिमतनिराकरणे हेतुमाह — विजातीयेति। "मातर्यपि तु वृत्तायां पितुर्माता हरेत्

## बालंभट्टी

2 बोध्यम्। *[मातुरभावे पिता धनभागित्युक्तं तस्य सिद्धिमन्वधीनोक्तरित्येति 'पित्रभावे' इत्यादि 'एव वेति' इत्यन्तं मध्ये उक्ता अन्यैरन्यथा सिद्धान्तितं निराकर्तुं सिंहावलोकनन्यायेनानुवदति—यत्पुनरिति,—यत्त्वित्यर्थः।]*वृत्तायां मृतायाम्। विजेति,—मूर्द्धावसिक्तादिष्वपीत्यर्थः। पित्रा गृहीते तद्धनस्य तदीयत्वादिति भावः। सजेति,—तया गृहीते तद्धनस्य मातृसंबन्धित्वेनाऽऽदौ तत् दुहितॄणां तदभावे दौहित्रादीनां क्रमाद्भवति सजातीयानामेव भवतीति भावः। उपसंहरति—इतीति,—इत्येवं मनोराशयादित्यर्थः। पितेति,—मातुरभावे इत्यादिः। निराकरोति—एतदपीति,—प्रागनूदितमित्यर्थः। आचार्यः न्यायविद्विश्वरूपाचार्यः। केनेत्याकाङ्क्षायामाह—चतुस्त्रीति,—

१.—९ १८५.। २. क दायादमा०। ३.—२१७.। ४. व्य० १२५.। ५. थ द. रिक्थं भ्रातर एववेति। ६. थ. द. नर्धारेश्वरेणेत्या०। ७ द. तं। ८. थ. द. त्रग्रह०। ९. त. तेपि च धनग्रहणेनैव। १०. थ. द. यपुत्राणामपीति। ११. प. फ ब. त्तायां विजे०। १२. प. फ. ब. र्थः तथा गृहीते तद्ध०।

**यत्पुनः "अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।"[1] इति मनुस्मरणं, तन्नृपाभिप्रायं न तु पुत्राभिप्रायम्। **भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुः—भिन्नोदराणां मात्रा विप्रकर्षात्, "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।"[3] इति स्मरणात्। **सोदराणामभावे भिन्नोदरा धनभाजः। **भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः। 4 5 6 7

## सुबोधिनी

धनम्" इति मनुवचनं न क्रमपरम्; अपि तु पितामह्यपि धनग्रहणेऽधिकारिणीत्येवमधिकारप्रदर्शनपरं व्याख्येयम्।अथ वा मात्रनन्तर पितृभ्रातृतत्सुताः क्रमेण धनभाजः। एषामप्यभावे पितामही गृह्णीयादित्येवमध्याहृत्य व्याख्येयम्। अथ वा नाध्याहारापेक्षा "पितुर्माता हरेत्" इत्युक्त्या तत्रत्यपितृशब्दः पितरं तत्कुलभूतं पुत्रं पौत्रं च लक्षयति। पितुर्मातेत्येतत् पदद्वयं तु तदनन्तरं पितामह्या धनसम्बन्धं बोधयतीति गम्यते, यतःसूत्रप्राया प्राचामुक्तिः। अत एव पितामहीति नोपात्तम् इति परमतं निराकृत्य यदुक्तं पित्रभावे भ्रातरो धनभाज इति, तदिदानीं विशेषकथनेनानुसन्धत्ते—भ्रातृष्वपीत्यादिना। तत्पुत्रा इति,—"अनेक-

## बालंभट्टी

एवञ्च तेषामपि वचनेनैव धनभागित्वस्योक्तत्वेनोक्तरीत्या परंपरया विजातीयपुत्राणां धनग्रहणेऽपि न दोष इति न तन्मतसंभव इति भावः। उक्तमनुवाक्यन्तु न क्रमपरं; किन्तु अधिकारमात्रप्रदर्शकम्। यद्वा मात्रनन्तरं पितृभ्रातृतत्सुताः क्रमेण धनभाजस्तेषामप्यभावे पितामहो हरेदित्येवमध्याहृत्य व्याख्येयम्। यद्वा नाऽऽध्याहारोऽपि; किन्तु पितुर्मातेत्यत्र पितृशब्दे तन्त्रं तत्रकः पितरं तदपत्यपुत्रं पौत्रं च लक्षयति, अनन्तरमिति शेषः। पितुर्मातेत्येतत्पदद्वयन्तु तदनन्तरं मातामह्या धनसंबन्धं बोधयतीति गम्यते—यतः सूत्रप्राया मुनीनामुक्तिः। अत एव पितामहीत्येव नोक्तमिति केचित्। वस्तुतस्तद्वचनस्य स्वरसार्थे[11] उक्तप्रकारत्रयं विनाऽपि प्राक् व्याख्यात इति बोध्यम्।अव्याहितार्थे प्रसक्तमनुविरोधं परिहरति—यत्पुनरिति,—प्रागवत्। नित्यं— सर्वथा। स्थितिः—शास्त्रमर्यादा। तन्नृपेति,—राजपदोक्तेः "सर्वेषामप्यभावे तु"[12] इति वक्ष्यमाणमानवादग्रे तदुक्तेश्चेति भावः। एवं परमतं निराकृत्य पित्रभावे भ्रातर इति प्रागुक्तम् बहुवचनान्तं भगिनीनामपि विभागं सूचयितुं विशदयति—भ्रातृष्वपि सोदरा इत्यादिना। अथाग्रिमं व्याचष्टे—भ्रातृणामपीति। "तदभावे भ्रातृपुत्रगामि"[13] इति विष्णुरप्युक्त एव। तत्पुत्रा इति,—भ्रातुः पुत्राः कन्याश्च स्वसुः पुत्राः कन्याश्चेत्यर्थः। उक्तन्यायेनाऽऽह—पितृक्रमेणेति,—*[सोदरासोदरपितृक्रमेणेत्यर्थः।]* 7

१.—९. १८९.। २ क. नृपमात्रा०। च. प्राय भ्रातृ०। ३. म० ९. १८७.। ४. म० ९. २१७.। ५. त. मध्याहृत्य व्या०। ६. थ. एतदादि 'व्याख्येयम्' इत्यन्त नास्ति। ७. द. एतेषा०। ८. थ. द पि सोदरा इत्या०। ९. थ. द. तत्पुत्राः पितृक्रमेण धनभाज इति। १० प. फ. ब. पुत्र०। ११. भ. स्वरत्यार्थ०। १२. म० ९. १८८। १३.—१७. ९।

Cole.: Ch. II, Sec. iv, §§ 4—7.

8 **भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः—भ्रात्रभावे भ्रातृपुत्राणामधि-
9 कारवचनात् । **यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसंबन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतः, तदा तत्पुत्राणां

## सुबोधिनी

7 पितृकाणां तु पितृतो भागकल्पना।"*[इत्यनेन न्यायेनभ्रातृसुतानामनेकत्वे द्वित्वे बहुत्वेऽपि स्वस्वपितृद्वारा भागकल्पना न स्वरूपद्वारेत्यर्थः।]* भ्रातृभ्रातृपुत्रसमवाय इति,—मृतस्य भ्रातरः केचन सन्ति ; तथा प्रमीतपितृका भ्रातृपुत्राश्च । तत्र भ्रातॄणां तत्पुत्राणां च समवाय इत्यर्थः । भ्रात्रभावे इति,—"पितरौ भ्रातरस्तथा । तत्सुता गोत्रजाः" इति भ्रात्रभावे तत्पुत्राणामधिकारप्रतिपादनादित्यर्थः। यदा त्वपुत्रे भ्रातरि स्वर्यात इत्यादि,—अयमर्थः—बहुषु भ्रातृषु विभक्तेषु सत्सु तेष्वेकोऽनपत्योऽपत्नीको मृतः पितरौ च न स्तः, तदेतरभ्रातॄणां तद्धनग्रहणाधिकारे प्राप्ते भ्रातृधनस्य विभागात् पूर्वमन्यो

## बालंभट्टी

यत्तु "अनेकपितृकाणाम्" इति पूर्वोक्तन्यायेन तत्सुतानामेकत्वे अवैलक्षण्येऽपि द्वित्वे बहुत्वे च
7 स्वस्वपित्रादिद्वारा भागकल्पना न स्वस्वरूपत इत्यर्थः इति, *[तन्न—भ्रातॄणां पूर्वमृतत्वेन भ्रातृधने स्वत्वानुत्पत्त्या भ्रातुष्पुत्राणामेव स्वामिनाशेन स्वत्वोत्पत्त्या पितृक्रमेण विभागानर्हत्वेन तदविषयत्वात्तस्य पितृस्वत्वादस्य द्रव्यविषयत्वात्।]* स्फुटीभविष्यति चेदमनुपदमेव। सर्वेत एवार्थं सिंहावलोकनन्यायेनात्रैवाशोकवनिकान्यायेन विशदयति—भ्रातृभ्रातुष्पुत्रेति,—मृतस्य भ्रातॄणां प्रमीतपितृकानां केषांचिन भ्रातुष्पुत्राणां च सद्भावे इत्यर्थः । कारवचनादिति,— "भ्रातरस्तथा । तत्सुताः" इत्यनेन तदभाव एव तेषामधिकारप्रतिपादनात् । एवेन तत्सत्त्वे तेषां तत्त्वनिरासप्रतिपादनाच्चेत्यर्थः । अयं न्यायस्सर्वत्र बोध्यः। यत्र मृतस्यैको भ्राता विद्यमानोऽनेके वा, प्रत्येकं तत्पुत्राश्चैकोऽनेके वा, तद्विषयमिदम्।भ्रातृभ्रातुष्पुत्रेतीति नातिप्रसङ्ग इति सूचयन् अनेकभ्रात्रादिस्थलविशेषे विशेषमाह—यदा त्विति,—विभक्तादीनां बहूनां भ्रातॄणां मध्ये एकस्मिन्नित्यादिः। अपुत्रे, अपत्न्यादिके च। धनविभागादिति,—मृत भ्रातृसंबन्धिधनविभागात्पूर्वमेवेत्यर्थः। अन्यतत्पुत्रास्तु सन्तीत्याह—तदा तदिति,—अनुपदोक्तस्य उभयसत्त्वे तेषामनधिकारात् भ्रातर एव विभज्य गृह्णीयुर्न तत्पु-

१. व्य० १२० । २. त. स्वपि० । ३ त. भ्रात्रिति । ४. थ. द. सद्भाव इ० । ५. थ. द. वे भ्रातृपुत्राणामिति । ६. द. रादित्य० । ७. थ. द. हुभ्रा० । ८. थ. द. मेवान्यो० । ९. भ. त्रान्वितैवार्थे (?) । १०. भ. तरप्रतिपाद० (?) । ११. भ. त्रेत्यर्थः । विशेषमाह । १२. ब. न पु० ।

Cole:. Ch. II, Sec. iv, §§ 8—9.

पितृतोऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभज्य ग्रहणे "पितृतो भागकल्पना"[1] इति युक्तम्॥
** भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः। गोत्रजाः पितामही सपिण्डाः समानोद- 1
काश्च। **तत्र पितामही प्रथमं धनभाक्। "मातर्यपि च वृत्तायां पितुर्माता धनं 2

## सुबोधिनी

मृतस्तस्य तु पुत्राः सन्ति, तादृशि स्थले भ्रातृभ्रातृपुत्रसमवाये भ्रातॄणामेव धनमित्युक्तत्वात् भ्रातर एव विभज्य न गृह्णीयुः,[3] किन्तु मृतभ्रातृपुत्रा अपि—तत्पितुर्धनसम्बन्धस्य प्राप्तत्वात्पितृद्रव्ये पुत्राणामधिकारात्। इयांस्तु विशेषस्तत्र भ्रातृभ्यो भ्रातृपुत्राणां—भ्रातरः स्वीयानंशान् लभन्ते भ्रातृपुत्रास्तु स्वपित्रंशमिति। गोत्रजाः पितामही सपिण्डाः समानोदकाश्चेति,—पितामही च सपिण्डाश्च समानोदकाश्चेति पदविभागः। ननु पितामह्या मात्रानन्तरं धनग्रहणे युक्ते भ्रातृसुतानन्तरं धनग्रहणोक्तिः कथमित्याशङ्क्याऽऽह—मातर्यपि च वृत्तायामित्यादिना। अयमभिप्रायः—"मातर्यपि च वृत्तायाम्" इत्यस्य मनुवचनस्य पूर्वोक्तरीत्या धनग्रहणाधिकारप्राप्तिमात्राद्यर्थपरत्वेन क्रमे तात्पर्याभावात्, पुत्रपौत्राभावे "पत्नी दुहितरश्चैव" इति पत्नीदुहितृदौहित्रा धनभाज इत्यभिधाय "पितरौ भ्रातरस्तथा। तत्सुताः" इति मातापित्रोरव्यवहितत्वात् तदनन्तरमेकगोत्रत्वे सति स्वपितृकुलत्वेनात्यन्तान्तरङ्गत्वादानन्तर्यपाठात् "पूर्वाभावे परः परः" इति वाक्यशेषाच्च भ्रातृतत्सुतपर्यन्तानां संसृष्टकर्मत्वेनैव तेषां मध्ये पितामह्या धनग्रहणविषयेऽप्रवेशात् भ्रातृसुतानन्तरपर्यन्तमपकृष्याप्यपुत्रा सती पितामही "मातर्यपि च

## बालंभट्टी

त्रा इत्यस्य च विषयता यद्यपि प्राप्ता, तथाऽपि पितृधनविभागप्रकरणोक्तन्यायविषयत्वसत्त्वात्तेन न्यायेनाऽऽह—पितृत इति। युक्तत्वे हेतुप्राप्तिः, तथा च तेषां स्वांशलाभस्तत्पुत्राणां च स्वपित्र्यांशलाभ इति भावः। अथाग्रिमं व्याचष्टे—भ्रातुष्पुत्राणामपीति। गोत्रजपदार्थं स्वरीत्याऽऽह—पितामहीति,—भिन्नं पदम्। एतदग्रे स्नुषा बोध्या। एवमग्रेऽपि। तथा च चत्वार इत्यर्थः। तत्र क्रममाह—तत्रेति,—तेषां मध्ये इत्यर्थः। यद्यपि धारेश्वरमतनिराकरणावसरे एवापेक्षितत्वाद्वक्तुमुचितमिदं, तथाऽपि तत्र हृदयारूढमेव कृत्वा अत्र मनुना मात्रानन्तरं पितामह्या धनग्रहणस्योक्तत्वात् भ्रातृसुतानन्तरं कथं तस्या धनग्रहणोक्तिरित्याशङ्कानिरासायाऽऽह—मातर्यपि चेति। इति— इत्यनेन तत्क्रमबोधकेन मनुना। अंशाभा-

---

१. क. दायक०। २. व्य०. १२०.। ३. थ. द. अपितु। ४. थ. द. भिसन्धिः। ५. म० ९. २१७.। ६. थ. द. त्तयुक्त्या। ७. थ. द. पाठे। थ द. दृष्ट०। ९. भ. स्यात्र वि०। ११. प. ब. रतन्नि०।

Cole.: Ch. II, Sec. iv, § 9; Sec. v, §§ 1—2.

## सुबोधिनी

वृत्तायां पितुर्माता धनं हरेत् । " इति प्रातीतिकक्रमस्यातःपरं बाधहेत्वभावात् भ्रातृसुतानन्तरं गोत्रजा इति पाठात् मनुवचनस्थप्रातीतिकक्रमानुसारेण पितामहाद्यपेक्षया पितामह्या एव सन्निहितत्वात् गोत्रजातत्वाच्च भ्रातृसुतानन्तरमेव रिक्थभागिनीति । अत्र केश्चिदेवमुक्तं— दौहित्रान्तरं पिता माता च धनग्रहणे युगपदधिकारिणौ —उभयोरपि सन्निहितत्वात् । अत एव तौ विभज्य गृह्णीयातां न तु माता पूर्वं तदभावे पितेत्येवं क्रमः । अनेनैवाभिप्रायेण याज्ञवल्क्येन पितरावित्येकशेषः कृतः । एकशेषे क्रमाप्रतीतौ पाञ्चमिकोन्याय उदाहृतः। तद्यथा —पञ्चमप्रथमपादाधिकरणम् "मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्" (॥१४॥)"सारस्वतौ भवतः" इति पुरोडाशहविष्कं यागद्वय विहितम् । सरस्वती देवताऽस्य सारस्वतः पुरोडाशः, सरस्वान् देवता अस्येति सारस्वतः । तौ सारस्वतावित्येकशेषः । एवं स्थिते स्त्रीदेवत्ययाज्यानुवाक्यायुगलमाम्नायपाठे प्रथमं पठितम् । ततश्च पुंदैवत्यया-ज्यानुवाक्ययुगलं पठितमिति मन्त्रपाठानुसारेण यागानुष्ठानक्रमः । एतावानधिकरणविषय-मूलविभागः । इतः परमधिकरणार्थचिन्ता । पुरोडाशयागस्येष्टिविकृतित्वादतिदेशेन चतुरो मुष्टीन् निर्वपतीति विहितो निर्वापः प्राप्तः । तत्र सन्देहः किमनियमेन कदा निर्वापः कर्तव्यः, उत स्त्रीदेवत्यं निरूप्य ततः पुंदेवत्यनिर्वापः इति । तत्रातिदेशप्राप्तनिर्वापे क्रमा-प्रतीतेरनियमेन निर्वाप इति प्राप्ते अभिधीयते—मुख्ययागक्रमेणैव निर्वापः कर्तव्यः, मुख्ययागयोस्तु याज्यानुवाक्यायुगलपाठक्रमेणानुष्ठानक्रमः । अतः प्रमितक्रमाविरोधाय मुख्यक्रमानुसारेणैव निर्वापानुष्ठानक्रम इति राद्धान्तः । एवमत्राधिकरणे "सारस्वतौ भवतः" इत्युत्पत्तिवाक्ये एकशेषत्वेन क्रमाप्रतीतेर्यतो याज्यानुवाक्यायुगलपाठक्रमेण यागयोरनुष्ठानक्रमोऽङ्गीकृतः, अतोऽत्रापि "पितरौ भ्रातरः" इति वचने एकशेषत्वेन पितरावित्यत्र क्रमाप्रतीतेः सामान्यतो दौहित्रानन्तरं मातापित्रोर्युगपद्धनप्राप्तिस्तदभावे भ्रातृणां तदभावे तत्सुतानामिति प्राप्ते न्यायमूलमिदं योगीश्वरवाक्यं कात्यायनवचनेनापोद्यते— सामान्यन्यायापेक्षया वचनस्य प्राबल्यात् । वचनं च "विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् । भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात्॥" अस्य चार्थ एवमभिहितः— पुत्रग्रहणमासन्नतरोपलक्षणार्थम् । तेन पुत्रपौत्रपत्नीदुहितृदौहित्राभावे प्रथमं पिता धनभागिति । मिताक्षराकारव्याख्याने दूषणान्यप्यभिहितानि ; तद्यथा—मातुः स्वपुत्रेष्व-

---

१. म०. ९. २१७. । २. त. द्याधः सु (?) । ३. थ. द. मभिहितम् । ४. थ द. यागस्ये० । ५. त. मेकदा । ६. त. वानुष्ठा० । ७. थ. द. स्यतिदेशवा० । ८. त. लं यो० । ९. थ. द. वचनं । १०. त. न्यभि० ।

Cole.: Ch II, Sec. v, § 2.

## सुबोधिनी

साधारणत्वात्[1] पितुः स्वपुत्रान्तरेष्वसाधारणत्वाच्च मातुरेव प्रत्यासत्त्यतिशय इति यदुक्तं तद[2]नुपपन्नम्--न हि जन्यजनकयोर्जन्यं प्रति सन्निकर्षतारतम्यमस्तीति । अन्यच्च । गोत्रजा इत्यनेन पितामही सपिण्डाश्च समानोदकाश्चोच्यन्ते । एवं च "पितरौ भ्रातरस्तथा" इति- पित्रादीनां भ्रातृसुतपर्यन्तानां च बद्धक्रमत्वेन मध्ये पितामह्याः प्रवेशाभावात् । "मातर्यपि च वृत्तायां पितुर्माता धनं हरेत् ।" [3]इति मात्र[4]न्ते पितामह्या न धनलाभः, अपि तु उत्कृष्टा सती भ्रातृ[5]सुतान्ते प्राप्नोतीति यदुक्तं तन्न[6]—गोत्रजा इति सरू[7]पैकशेषत्वेन पुंसामेव ग्रहणात् । तथा च पूर्वोक्तभ्रातृसुतैः सह गोत्रजानां पुरुषत्वेन बद्धक्रमत्वाविशेषेण तत्रापि पितामह्याः प्रवेशाभाव इत्यादीनि । तन्न । तथा हि न तावदेकशेषे क्रमाप्रतीतिः विग्रहवाक्ये चानेकशेषपक्षे च मातुः पूर्वपाठादेव क्रमप्रतीतेः । ननु"सारस्वतौ भवतः" इत्युक्तमिति चेन्न—तन्न्यायविरोधाभावात् । तथा हि—सारस्वतश्च सारस्वतश्च सारस्वताविति सरूपाणामेक[8]शेषत्वात् क्रमस्तत्र विग्रहवाक्येऽपि न प्रतीयते । अतः कोवाऽत्र[9] क्रम इत्यपेक्षायां"श्रौतो मन्त्रक्रमो युक्तः"इति याज्यानुवाक्यायुगलक्रमेण यागानुष्ठानक्रमो निरूपितः। नतु सर्वत्रैकशेषे क्रमप्रतीत्यभाव इत्यभिप्रायः । प्रकृते तु पितरावित्यत्र "पितामात्रा" [10]इति विजातीयैकशेषत्वात् विग्रहवाक्ये अवश्यं क्रमप्रतीतेः स[11] ग्राह्यः। यच्चोक्त—न हि जननीजनकयोर्जन्यं प्रति सन्निकर्षे तारतम्यमस्तीति, तदप्य[12]पेशलम् । गर्भधारणपोषणादिभिरत्यावश्यकत्वेन जन्येऽतिशयान्तरमुत्पादयति माता, पिता तु निषेककृदेव । अदृष्टात् दृष्टस्यैव प्राबल्ये[13] दृष्टोपकाराधिक्यान्मातुः सन्निकर्षातिशयोऽस्तीति । यदप्यु[14]क्तं गोत्रजा इति सरूपैकशेषत्वात् भ्रातृतत्सुता[15]दिभिः सह बद्धक्रमत्वात् पितामह्या भ्रातृसुतानन्तरमपि प्रवेशाभाव इति तन्न[16] । विजातीयानामपि स्त्रीणां पुंसां च गोत्र[17]जा इत्येकविभक्त्यन्तत्वाविरोधात् जातिद्रव्यगुणा इतिवत् । नापि बद्धक्रमता । पित्रादिभ्रातृसुत[18]पर्यन्तानां स्वसन्निहितत्वात् पितृकुलत्वाच्चान्तरङ्गत्वेन बद्धक्रमत्वं न पुंस्त्वेन । नापि पाठमात्रेण- (अतो भ्रातृणां गोत्रजानां च बद्धक्रमत ?)। अतः पत्न्यभावे दुहिता, तदभावे दौहित्रः, त-

---

१. त. 'पितुः' आरभ्य 'णत्वा' इत्यन्तं नास्ति । २. थ. द. दसत्। ३ म० ९. २१७.। ४. थ. द. त्रनन्तरं पितामही (न) धनं प्राप्नोति अपि तु । ५. थ. द तानन्तरं प्रा० । ६. थ. द. तदप्यसत् ।७. थ. द. एतदखिलमप्यचतुरश्रं तथा हि । ८. थ. द. एकविभक्ताविति सरूपैकशेषत्वात् । ९. थ. द. वा क्र० । १०. अ० १. २. ७०.। ११. थ. द. स क्रमो ग्राह्य एव। १२. थ. द. पि स्थवीयः । १३. थ. द. ल्यात् । १४. थ. द. पि चोक्तम् । १५. थ. सुतादि०। १७. थ. द. त्रजाश्च गोत्रजा इ० । १८. थ. द. तानं गोत्रजानां च (?) ।

Cole. : Ch. II, Sec. v, § 2.

## सुबोधिनी

दभावे माता, तदभावे पिता, तदभावे भ्राता[1], तदभावे भ्रातृसुतः, तदभावे पितामही[2]त्येव क्रमः । तथा बृहस्पतिः—"भार्या सुतविहीनस्य तनयास्य मृतस्य तु । माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥" इति[3] । अस्यार्थः—सुतविहीनस्य मृतस्यास्य रिक्थहरी भार्या, तदभावे तनया, तदभावे तत्पुत्रः, तदभावे माता । मात्रनुज्ञया मृतस्य भ्राता वा । भ्रात्रा गृहीतेऽपि मात्रनुज्ञया गृहीतत्वादेव मात्रा गृहीतमेवेति मातुरेव पितुः पूर्वं रिक्थभाक्त्वमिति । केचन बृहस्पतिवाक्ये[4]ऽपि तनयाशब्दो दु[5]हितृदौहित्रीपितॄणामुपलक्षक इति कथयन्ति । त[6]दनुपपन्नम् । अनुपपत्त्या हि लक्षकत्वं शब्दानाम् । एवञ्च स[7]र्वत्राविवादेन दुहितुरभावे दौहित्रस्य धनभाक्त्वं वचनेष्वविशिष्टमिति दुहित्रनन्तरं वचनान्तरविरोधरूपया दुहितृसन्ततिरूपया वाऽनुपपत्त्या दुहितृदौहित्रयोरेवोपलक्षको न पितुः—तावतैवानुपपत्तेः परिक्षीणत्वात् । तत्परिक्षयश्च मानवादिवचनान्तरेषु पितुर्दौहित्रानन्तर्यस्यानियतत्वेन । अतो यावत्यर्थे लक्षितेऽनुपपत्तिः शाम्यति, तावानेव तनयाशब्देन लक्ष्यत इति न पितुर्दौहित्रानन्तरं प्रतीतिः । यच्च कात्यायनवचनं "विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् - भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥" इति, अत्रापि वाशब्दश्रवणान्न क्रमपरता, अपि तु वचनोपात्ता[8] अधिकारिण इत्यधिकारमात्रप्रदर्शनपरतैव । स्वाम्याख्ये सिद्धरूपे वस्तुनि विकल्पाभावादपिशब्दार्थो वाशब्दः, न तु पूर्वोक्तरीत्या पूर्वाभावपरो वाशब्दः । अभावे वाशब्दस्य विशिष्टप्रयोगाभावात्, अप्यर्थे प्रयोगाच्च । अथशब्दोऽप्यानन्तर्यपरो नमात्रानन्तर्यमेव (?) पितामह्या धनसम्बन्धं बोधयति वाक्यस्योक्तरीत्या क्रमपरत्वाभावात् । अतो भ्रातृसुतानन्तरमेवाविरोधात् धनसम्बन्धं बोधयतु, तथाऽपि स्वार्थाहानात् । क्रमादिति च पदं "पूर्वाभावे परः परः" इति[9] योगीश्वरवचनशे[10]षपर्यालोचनया तत्रत्यमविरुद्धमेव क्रमं बोधयति न स्ववाक्यस्थम् अत्र क्रमादिति सामान्येनाभिधानाद्योगीश्वरेण पूर्वाभाव इति विशेषोपादानात् सामान्यं प्रति विशेषस्य बाधकत्वात् । तस्मादन्यैर्यत्किञ्चिदुक्तमिति मिताक्षराव्यवस्थानमेव युक्ततरमित्यन-

१. थ. द. तरः । २. थ. द. महीति च क्रमः यथाह ब० । ३.—२५. ६३. । ४. थ. द. वचनेऽपि । ५. थ. द. 'दुहितृ' नास्ति । ६. थ द. तन्मन्दम् । ७. त. सविशेषण वादेन । ८. थ. द. त्ता एते धि० । ९. व्य० १३२. । १०. त. षे पर्यालोचनीयं तत्र (?) ।

Cole.: Ch. II, Sec. v, § 2.

हरेत्।" इति मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात्, "पितुर्माता धनं हरेत्" इत्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णातीत्यविरोधः।

## बालंभट्टी

वादिति,—यद्यपीदं तदग्रेऽपि तुल्यं, तथाऽपि बान्धवाद्युत्तरं तस्याः प्रवेशस्योक्तरीत्याऽन्तरङ्गत्वेन चासंभवेन बन्धुशब्देन वक्ष्यमाणरीत्या ग्रहणासंभवेन गोत्राजानन्तरं प्रवेशस्य तथैवासंभवेन गोत्राजत्वस्य तत्रा सत्त्वेनान्तर्भावसंभवात्तत्रैव ग्रहणं युक्तमिति भावः। ननु बद्धक्रमाणामपि पञ्चवितीनां (?) मध्ये यां वै काञ्चिदिति विहितोपधानं मध्यमवाचिनो यथा तथाऽत्राऽपि स्यात्;अतो हार्दमेवाऽऽह-पितुर्मातेति,–मानवस्येति भावः। अधिकारमात्रेति,—तद्बोधनमात्रे इत्यर्थः। इदमुपलक्षणं प्रागुक्तान्यपक्षाणामपि। उत्कर्षे तत्सुतान्तरमिति पाठः। उत्कर्षेत्यस्यावश्यकेत्यादिः। उपरितनमृतानन्तरमिति पाठान्तरम्। उपरितनाः पित्रादयो भ्रातृसुतपर्यन्ताः तन्मरणानन्तरमिति तदर्थः। कातीयैकवाक्यतया तस्य क्रमपरत्वमपि न तद्वत् श्रौतं विनिगमनाविरहाग्रस्तं सिद्धान्तरत्या सर्वसुयोजञ्च। एतेन पित्रादीनामित्यादि चिन्त्यम्— वित्युपधानाविरोधात् कातीयैकवाक्यतया तस्य क्रमपरत्वाच्चेति भ्रान्तोक्तमपास्तम्[3]। अवीति,—गोत्रजत्वस्य तत्र सत्त्वेन केनापि सह विरोधाभावादित्यर्थः। उत्तमनोरुक्ताशयत्वेन वस्तुतः[4] क्रमे तात्पर्याभावेन मूलकृता पुत्राद्यभावे पत्न्यादीनां केषाञ्चित् तदधिकारमुक्त्वा पितराविर्त्यकशेषेण तयोरत्यन्ताव्यवधानोक्त्या मध्ये परोक्तमनूक्तक्रमेण तत्प्रवेशासंभवात्तदनन्तरमप्येकगोत्रत्वे[5] सति स्वपितृकुलत्वेनात्यन्तान्तरङ्गत्वादानन्तर्यपाठात् "पूर्वाभावे" इति वाक्यशेषाच्च तत्सुतान्तानामुक्त्या दृष्टक्रमत्वेनैव तेषां मध्ये तस्याः प्रवेशस्य दुष्करत्वात्तत्पर्यन्तमपकृष्य पृथगनुक्ताऽपि सती सा आपाततः परोक्तमनुप्रतीतक्रमस्यातःपरं बाधे मानाभावात्तत्परं[6] गोत्रजा इति पाठान्मनुप्रतीतक्रमानुसारेण पितामह्याद्यपेक्षया पितामह्या एव सन्निहितत्वात् गोत्रजत्वाच्च तदनन्तरमेव धनभागिति भावः। प्रागुक्तसिद्धान्ते तु न काऽपि शङ्केवेति बोध्यम्। तेन मृतस्य पितृसन्तानात्

१.—९. २१७. । २ क. घ. ङ. च. ज. धात्। ३ ब. म्। उक्त०। ४. भ. नः। ५. प. फ. ब. मध्यैक०। ६. भ. त्तदनन्तरं गोत्रजा इति पाठान्मनुप्रतीततादृशक्रमा०।

Cole,: Ch. II, Sec. v, § 2.

## बालंभट्टी

पूर्वं पित्रनन्तरं मातुरधिकारोक्त्या पितामहसन्तानात्पूर्वं पितामहानन्तरं पितामह्या अधिकारः सूचितः। अन्यथा पितरौ भ्रातर इति क्रमविरोधापत्तेरत एव च "मातर्यपि" इति मनुरपि इति प्राच्योक्तमपास्तम्—उक्तरीत्याऽनिर्वाहान् तदर्थाज्ञानाच्च। अत्र केचित्—दौहित्रानन्तरं मातापितरौ धनग्रहणे युगपदधिकारिणौ—उभयोरपि सन्निहित्वात्। अत एव तौ विभज्य गृह्णीयाताम्; न तु माता पूर्वं तदभावे पितेत्येवमुक्तक्रमः। इदमेव नाभिप्रेत्य मूले पितराविति एकशेषः कृतः। तत्र क्रमाप्रतीतौ पाञ्चमिकन्यायोऽपि। तथा हि। पञ्चमाद्यपादसप्तमाधिकरणम् "मुखक्रमेण चाङ्गानां तदर्थत्वात्" "सारस्वतौ भवतः" इत्यनेन पुरोडाशहविष्कं यागद्वयं विहितं सरस्वती देवताऽस्य सारस्वतः, सरस्वान् देवत अस्य सारस्वतः[2]; स च स च तौ सारस्वताविति एकशेषः। एवं सति स्त्रीदेवत्ययाज्यानुवाक्या-युगलमाम्नाये आदौ पठित्वा पुंदेवत्ययाज्यानुवाक्यायुगलपठनमिति[3] मन्त्रपाठानुसारेण यागानुष्ठानक्रम इत्येतावानधिकरणविषयमूलविभागः। इतःपरमधिकरणचिन्ता पुरोडाशयज्ञ-स्येष्टिविकृतित्वात् प्रकृतिवदित्यतिदेशेन चतुरो मुष्टीर्निर्वपतीति विहिते निर्वापस्तत्प्राप्तः। तत्र सन्देहः—किमनियमेन निर्वापः कर्तव्यः, उत स्त्रीदेवत्यनिर्वापं कृत्वा पुंदेवत्यनिर्वाप इति। तत्रातिदेशप्राप्तनिर्वापे क्रमाप्रतीतेरनियमेन निर्वाप इति पूर्वपक्षे राद्धान्तः—मुख्य यागक्रमेणैव निर्वापः कार्यः। तयोस्तु याज्यानुवाक्यायुगलपाठक्रमेणानुष्ठानक्रमः[4]। अतः प्रमितक्रमाविरोधाय मुख्यक्रमानुसारेणैव निर्वापानुष्ठानक्रम इति। एवं च तत्राधिकरणे सारस्वताविति उत्पत्तिवाक्ये इव एकशेषत्वेन क्रमाप्रतीत्या सामान्यतो दौहित्रानन्तरं माता-पित्रोर्युगपद्विभज्य धनप्राप्तिः तदभावे भ्रातॄणामित्यादीति प्रागुक्तन्यायमूलमिदं[5] मूलवा-क्यम् कात्यायनवचनेनापोह्यते—सामान्यन्यायापेक्षया वचनस्य प्राबल्यात्। वचनं च "विभक्ते संस्थिते द्रव्यम्" इति प्रागुक्तमेव। तस्य चायमर्थः—पुत्रग्रहणमासन्नतरोपलक्ष-णार्थं तेन पुत्रपौत्रपत्नीदुहितृदौहित्रदौहित्र्यभावे[6] प्रथमं पिता धनभाक् ततो माता ततो भ्रातेत्यादीति। व्याख्याकृदुक्तव्याख्याने दोषा अपि। तथा हि। यत्तु साधारणत्वासाधारणत्वाभ्यां ततस्तस्याः। प्रत्यासत्त्यतिशय उक्तस्तन्न—जनिजनकयो-र्जन्यं प्रति सन्निकर्षतारतम्याभावात्। यदपि गोत्रजपदार्थाश्रयः[7], तत्र तदादितदन्ता-नां बद्धक्रमत्वेन मध्ये तस्याः अप्रवेशेन मनूक्तया मात्रनन्तरं सा धनं न प्राप्नोति; अपि तूत्कृष्टा सती भ्रातृसुतानन्तरं प्राप्नोति इति तदपि न—गोत्रजा इति सरूपैकशेषत्वेन पुंसामेव ग्रहणात् तथा च पूर्वोक्त भ्रातृसुतैः सह गोत्रजानां पुरुषत्वेन बद्धक्रमत्वाविशेषेण तत्रापि

---

१. म० ९. २१७. । १. प. फ. ब तः पुरोडाशः सरस्वत्यादेर्वत्सस्य सा०। ३ भ. पठित०। ४. भ. वाक्याक्रमेणानुष्ठानक्रम इति। एवं च। ५. भ. प्राप्ते। ६. प. फ. ब. 'दौहित्र' नास्ति। ७. भ. त्रजपदार्थेत्र।

Cole.: Ch. II, Sec. v, § 2.

## बालंभट्टी

तस्याः प्रवेशासंभव एवेति दिगित्याहुः । इदमयुक्तम् । नहि तावदेकशेषे क्रमाप्रतीतिः ; विग्रहवाक्ये अनेकशेषपक्षे च मातुः पूर्वं पाठादेव तत्प्रतीतिसंभवात्। अधिकरणविरोधो[1] न—विषयभेदात् । तत्र हि सारस्वतश्च सारस्वतश्चेति सरूपैकशेषत्वाद्विग्रहवाक्येऽपि न क्रमप्रतीतिः। अतः को वा क्रम इत्याकाङ्क्षायां "श्रौतो मन्त्रक्रमो युक्तः" इति तत्क्रमेण यागानुष्ठानक्रमो निरूपितो न तु सर्वत्रैकशेषे क्रमप्रतीत्यभावस्तदभिप्रेतः । अत्र तु "पिता मात्रा" इति विजातीयैकशेषत्वाद्विग्रहवाक्यादवश्यं क्रमप्रतीतेः स क्रमो युक्त एव। यच्चोक्तं जननीजनकयोरिति, तदपि न—यतो गर्भधारणपोषणादिभिरत्यावश्यकत्वेन अन्येऽतिशयोत्कर्षमुत्पादयति माता, पिता तु निषेककृदेव। अदृष्टात् दृष्टस्यैव प्राबल्येन दृष्टोपकाराधिक्यान्मातुः सन्निकर्षातिशयोऽस्ति । यदपि गोत्रजा इतीत्यादिनोक्तं, तदपि न—विजातीयानामपि स्त्रीणां पुसां च एकविभक्त्यन्तत्वाविरोधात् गोत्रजा इति जातिद्रव्यगुणा इतिवदत्रापि[3] तथा बद्धक्रमता । यतः पित्रादितत्सुतान्तानां सन्निहितत्वात् सपितृकुलत्वाच्च अन्तरङ्गत्वेन बद्धक्रमत्वं न पुंस्त्वेन नापि पाठमात्रेण । अतस्तत्सुतानां गोत्रजानां च न बद्धक्रमता । अतः पत्न्यभावे दुहिता, तदभावे दौहित्रः, तदभावे माता, तदभावे पिता, तदभावे भ्राता, तदभावे तत्सुतः, तदभावे पितामहीत्येव क्रमः । तथा च बृहस्पतिः—"भार्या सुतविहीनस्य तनयाऽस्य मृतस्य तु । माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥" इति[4] । अस्यार्थः—सुतविहीनस्य मृतस्य धनहारी भार्या, तदभावे तनया, तदभावे तत्पुत्रः तदभावे माता, मात्रनुज्ञया मृतस्य भ्राता वा, भ्रात्रा गृहीतेऽपि मात्रनुज्ञया गृहीतत्वादेव मात्रा गृहीतमेवेति मातुरेव पितुः पूर्वं धनभाक्त्वमिति । यत्तु बृहस्पतिवाक्येऽपि तनयाशब्दो दुहितृदौहित्रपितॄणामुपलक्षक इति, तन्न—अनुपपत्त्या हि लक्षकत्वं शब्दानाम् । एवं च सर्वत्राविवादेन दुहितुरभावे दौहित्रस्य धनभाक्त्वं वचनेष्वविशिष्टमिति स्मृत्यन्तरविरोधरूपानुपपत्त्या दुहितृदौहित्रयोरेवोपलक्षको न पितुः—तावतैवानुपपत्तेः परिक्षयात् । तत्परिक्षयश्च मानवादिवाक्यान्तरेषु पितुर्दौहित्रानन्तर्यस्यानियतत्वेनातो यावत्यर्थे लक्षितेऽनुपपत्तिशान्तिः, तावानेव सुतशब्देन लक्ष्यत इति न सर्वथा पितुर्दौहित्रानन्तरं प्रतीतिः । यच्च कातीयं "विभक्ते संस्थिते" इति, तदपि वाबलान्न क्रमपरम् ; अपि तु वचनोक्ता अधिकारिण इत्येवमधिकारमात्रप्रदर्शनपरमेव । विकल्पाभावेऽप्यपिशब्दार्थो वाशब्दा न तु परोक्तरीत्या पूर्वपूर्वाभावपरास्ते । अभावे वाशब्दस्य शिष्टैरप्रयुज्यमानत्वात् , अप्यर्थे कोशात् प्रयोगाच्च । अथशब्दोऽप्यानन्तर्यपरो न

१ भ. धोपि न । २. अ० १. २. ७०. । ३. भ. वत् नापि । ४.—२५ ६३. ।

Cole.: Ch. II, Sec. v, § 2.

## बालंभट्टी

मात्रनन्तरमेव पितामह्या धनसंबन्धमाह--तस्योक्तरीत्याऽक्रमपरत्वात्। अतस्तत्सुतानन्तरमेवाविरोधत्वेन संबन्धं बोधयति, तथाऽपि स्वार्थाहानात् क्रमादिति च मूलपर्यालोचनाया मूलोक्तमविरुद्धमेव क्रमं बोधयति न स्ववाक्यस्थं—क्रमादिति सामान्योक्तेर्मूलोक्तविशेषणबोधनात्तत्रोपसंहाराच्चेति दिक्। तस्मात् व्याख्यानोक्तमेव युक्तमिति विज्ञानेशरानुयायिनोऽन्ये आहुः। वस्तुतस्तु प्रागुक्तरीत्या स क्रमो न युक्तः किन्तु स एवेति प्रागुक्तमेव—एकशेषे क्रमाप्रतीत्या द्वयोर्युगपत्त्वप्रतीतावपि प्रागुक्तविष्णुकात्यायनाभ्यां तथा क्रमस्य स्फुटतया प्रतीतेः। "विभक्ते संस्थिते" इति कात्यायनवचनमप्युक्तार्थे अनुकूलतरम्। तस्य चार्थः प्रागुक्त एव न भवदुक्तार्थः। मूले एकशेषस्तु लाघवेन छन्दोनुरोधेन च कृतो नोक्ताशयकः। पाञ्चमिकन्यायस्य[1] तु उक्तरीत्यैवाविषय[2] इति न न्यायमूलकत्वमपि मूलस्य। किं च प्रागुक्तरीत्या जतनीजनकयोर्जन्यं प्रति सन्निकर्षतारतम्यमस्त्येवेति तदुक्तमयुक्तमेव। यत्तु गर्भधारणेत्यादि, तन्न—गर्भधारणस्य पोषणस्य चातिप्रसक्तत्वेनाकिञ्चित्करत्वात्। अत एव बीजस्यैव प्राधान्यं सिद्धान्तितं मनुना। अत एव च माता न स्त्रीत्यादि सङ्गच्छते। यत्तु गोत्रजा इति सरूपैकशेषत्वेन पुंसामेव ग्रहणमिति, तन्न—तथा सति पितरावित्यत्रापि तदापत्तेः। अथ तत्र "पिता मात्रा" इत्येकशेषो[3] विशेषविहित इति चेत् इहापि "पुमान् स्त्रिया" इति[4] विशेषविहित इति पश्य। यदपि विजातीयानामपीत्यादि, तदपि न—सरूपैकशेषाभावेनैकविभक्त्यन्तत्वानुपयोगात्तत्रापि तस्यानिमित्तत्वाच्च, दृष्टान्ते द्वन्द्वसत्त्वेन लिङ्गभेदेऽपि प्रथमान्तत्वस्याऽऽवश्यकस्य सत्त्वेन ततो वैषम्याच्च। गोत्रजानां तत्सुतैस्सह बद्धक्रमत्वाभावस्तु उक्तरीत्यैव। बृहस्पतिवचनमप्यस्माकमेवानुकूलं न भवतां—यतो मात्रनन्तरं तत्र भ्रातैवोक्तो न पितेति तत्र तुशब्दस्य चार्थकत्वेन तनया चेत्यन्वयेन दुहितृदौहित्रदौहित्रीपितॄणां समुच्चयेन विरोधलेशोऽपि न[6]। एतेन तनयाशब्दस्योपलक्षकत्वोक्तिस्तद्दूषणोक्तिश्चापास्ता—तदुक्तरीत्यैव निर्वाहात्। तस्मात्तत्र तथैव क्रमो युक्तो न व्याख्याकारोक्त इति बोध्यम्। यद्यपि कल्पतरौ दायविभागे च विष्णुवाक्ये भ्रातृपुत्रगामीत्यग्रे"तदभावे बन्धुगामि" "तदभावे सकुल्यागामि"इति पाठेन तद्विरोधः, तथाऽपि "तदभावे सकुल्यागामि" "तदभावे बन्धुगामि"इति[7] मदनरत्नधृतपाठे न विरोधः। युक्तश्चायं—मूलसंवादात् संभवतीति न्यायात्। एवं च स पाठश्चिन्त्य एवेति न कश्चिद्दोषः—गोत्रजपदार्थसकुल्यपदार्थयोस्तुल्यत्वात्। एतेन तथा पाठं धृत्वाऽन्यथा व्याख्यातं यद्भ्रान्तेन, तदपास्तमिति दिक्। तेन स्नुषायाः समुच्चयः।

१. प. फ. ब. षष्टेकमिक (?)। २. प. फ ब. व विष०। ३. अ० १. २ ७०। ४. अ० १. २. ३७.। ५. भ. लंभ०। ६. प. ब. ततु तेन। ७. विष्णुस्मृ० अ० १७.।

Cole.: Ch. II, Sec. v, § 2,

**पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः—भिन्नगो- 3
त्राणां सपिण्डानां बन्धुशब्देन ग्रहणात् । ** तत्र च पितृसन्तानाभावे पितामही 4
पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । ** पितामहसन्तानाभावे प्रपितामही 5
प्रपितामहस्तत्पुत्रास्तत्सूनवश्च । इत्येवमासप्तमात्समानगोत्राणां सपिण्डानां धनग्रहणं
वेदितव्यम्॥** तेषामभावे समानोदकानां धनसंबन्धः । ते च सपिण्डानामुपरि सप्त 6
वेदितव्याः । जन्मनामज्ञानावधिका वा ; यथाऽऽह बृहन्मनुः—"सपिण्डता तु
पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेताऽऽचतुर्दशात् । जन्मनाम्नो-
स्मृतेरेके तत्परं गोत्रमुच्यते॥" इति ॥

## सुबोधिनी

वेद्यम्। एवं भ्रातृसुतानन्तरं पितामह्या धनग्रहणे युक्ततरे सति ततोऽपि क्रमं विविच्य दर्शयति— तत्र च पितृसन्तानाभाव इति,—पितृसन्तानो भ्रातृतत्सुतपर्यन्तः । जन्मनामेति,—सपिण्डानामुपरीत्यनुवर्तते । ततश्च सप्तपुरुषानन्तरं यावज्जन्म नाम च

## बालंभट्टी

सपिण्डत्वस्यातिप्रसक्तत्वेन मौलपदानुरोधेनाऽऽह—समानेति । तत्र हेत्वन्तरमप्याह— भिन्नेति।सपिण्डानां—तेषामपि।अस्य फलं अग्रे स्फुटीभविष्यति।तत्सुतानन्तरं तस्या धनग्राहित्वे निष्प्रत्यूहे तदारभ्य क्रमं विविच्याऽऽह--तत्र चेति,—तदुत्तरं उक्तरीत्या तस्या धनग्राहित्वे चेत्यर्थः । ततोऽन्तरङ्गाभावमाह—पित्रिति। स च तत्सुतान्तः। संभवादाह–पितृव्या इति। सापिण्ड्यस्य तावत्पर्यन्तमेव सत्त्वादाह—सप्तमादिति,—सप्तममभिव्याप्येत्यर्थः । अयमेव न्यायः सोदकेष्वपि बोध्यः । ते च—समानोदकास्तु। ननु एवमपि न्यूनतैव अत आह —जन्मनामेति । सपिण्डानामुपरीत्यनुवर्तते । तथा च सप्तपुरुषानन्तरं यावज्जन्म नाम च स्वकुले ज्ञायते, तावद्वा समानोदकसंज्ञा इत्यर्थः। चः—त्वर्थे । चतुर्दशानां पूरणश्चतुर्दशः तस्मादूर्ध्वं निवर्तेतेत्यर्थः । अधिकसङ्ग्रहाय पक्षान्तरमाह—जन्मनाम्नोरिति,—आ इत्यनुवर्तते जन्मनाम्नोस्स्मृतेः ज्ञानादा ऊर्ध्वं स निवर्ततेत्येके आहुरित्यर्थः। तथा च स्मृत्यन्तरानुसन्धानद्वारा विकल्पः फलितः । स चाधिकसङ्ग्रहाय न तु न्यूनसङ्ग्रहाय—तदग्रे उक्तेः। अन्यतरस्यातिप्रसक्तत्वादुभयोस्समुच्चयो बोध्यः । तच्छब्देन पक्षभेदेनान्वयपरामर्शः । गोत्रं—सगोत्रत्वम् ;—अर्श आद्यच् सामान्ये एकत्वं क्लीबत्वं च ।

१. क. व्यस्त० । २. क स्तद्भ्राता । ३. थ. द मिति सर्वे सुरतम् । ४. थ. द. नज्ञानावधिकेति ५. प. फ. ब. पिअग्रेस्फु० । ६. भ. न्मयते । ७ प. फ. ब. र्थः अधिक० ।

Cole.: Ch. II, Sec. v, §§ 3—6.

1 **गोत्रजाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधाः—आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम्—"आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया[1] आत्मबान्धवाः ॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रामातुर्मातृष्वसुः 2 सुताः। मातुर्मातुलपुत्राश्च विज्ञेय मातृबान्धवाः॥" इति। **तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो[2] धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः ॥

सुबोधिनी

ज्ञायते तावद्वा समानोदकसंज्ञा[3] इत्यर्थः। गोत्रजाभावे[4] इति,— पितामही[5] पितामहपितृव्यतत्पुत्राणां प्रपितामही[6]प्रपितामह[7] पितामह भ्रातृतत्पुत्राणां प्रपितामहमातृप्रपितामहपितृ[8]प्रपितामह[9]भ्रातृतत्पुत्राणां[11] प्रपितामहपितामहीप्रपिता[12]महपितामहप्रपितामहपितृ[13]भ्रातृतत्पुत्राणां प्रपितामहप्रपितामहीप्रपितामहप्रपितामहप्रपितामहपितामहभ्रातृतत्पुत्राणां समानोदकेष्वप्य-

बालंभट्टी

अथाग्रिमं व्याचष्टे—गोत्रजाभावे इति। बहुवचनान्तेन द्वन्द्व इत्याह—बन्धव इति। चः—त्वर्थे। वृद्धशातातपाद्युक्तक्रमेणाऽऽह—आत्मनेति(?)। बान्धवाश्चेति पाठान्तरं तमेवाऽऽह—यथोक्तमिति। अत्र पुत्रादिग्रहणेन कन्यानामपि ग्रहणं प्रागुक्तरीत्येति बोध्यम्। अत एव गार्गीबन्धुः कारीषगन्धीबन्धुः इत्यादिसङ्गतिः। तत्र क्रमे बीजमाह—तत्र चेति,—तेषां मध्ये चेत्यर्थः। प्रत्यासत्त्यतिशयात् अन्तरङ्गत्वं प्रागुक्तसिद्धान्तरीत्या आह—तदभावे पितृबन्धव इति। अत एव वृद्धशाता[15]तपोक्तिरपि सङ्गतेति भावः। एतेनाऽऽदौ बन्धुगामीति धृत्वा तेनाऽऽत्मभगिनीभागिनेयानामपि सगोत्रसपिण्डादिक्रमेण ग्रहणं व्याख्यायेदं चिन्त्यं तेषु सत्सु तेषां विप्रकर्षेण तथा क्रमानैचित्यादिति भ्रान्तोक्तमपास्तम्—आत्मभगिन्यादेः पूर्वमेवोक्तत्वात्। यद्यपि "भ्रातृबान्धवयोर्बन्धुः" इति विश्वादिकोशाद्बन्धुशब्दो बान्धवपरतयैव व्याख्यातो व्याख्यात्रा भ्रातॄणां पूर्वमुक्तत्वात्, तथाऽपि तस्य तावन्मात्रार्थत्वे बान्धवशब्द एव वाच्ये बन्धुशब्दोक्त्या भगवतोऽन्योऽप्यर्थोऽत्राभिमतः। न च तत्त्वमप्रसिद्धं ब्रह्मबन्धुरित्यादिप्रयोगात्[16] "आत्मैवह्याऽऽत्मनो बन्धुः" इत्यादिप्रयो-

---

१. ख. ग. याह्यात्म० । २. क बान्धवाः । ३ थ. द. ज्ञकाइ० । ४ थ. द. वे बन्धवो धनभाज इति । ५. थ. 'पितामही' नास्ति । ६ द. "प्रतितामहपितामह" नास्ति । ७. त. हप्रपि० । ८. त. णा र्प्रपतामहप्रपितामहमातृ० । ९. 'पितृप्रतितामह' नास्ति । १०. त. 'प्रतितामह भ्रातृ' नास्ति । ११. द एतदादि 'तत्पुत्राणां' इत्यन्तं नास्ति । १२. त. 'पितृप्रपितामाह' नास्ति । १३. थ. पितृव्यतत्पु० । १४. द. हभ्रातृ० । १५. प. फ. ब. तपेतेषां युक्तिर० १६. प. ब तृ प्रकृ० ।

Cole.: Ch. II, Sec. vi, §§ 1—2.

**बन्धुनामभावे आचार्यः । तदभावे शिष्यः—"पुत्राभावे यः प्रत्यासन्नः 1
सपिण्डः, तदभावे आचार्यः, आचार्याभावेऽन्तेवासी" इत्यापस्तम्बस्मरणात् ॥

**शिष्याभावे सब्रह्मचारी धनभाक् । येन सहैकस्मादाचार्यादुपनयनाध्यय- 2
नतदर्थज्ञानप्राप्तिः, स सब्रह्मचारी । *तदभावे ब्राह्मणद्रव्यं यः कश्चित् 3

बालंभट्टी

गाच्च तथा च प्रियकारिण्यपि प्रयोगात् प्रकृते तत्त्वेन स्मृत्यन्तरानुरोधेनाऽऽचार्योऽपि कृतैक शेषेणे[3] द्वन्द्वकरणात्तदर्थोऽभिमत इति गूढाशयेनाऽऽह[6] — बन्धूनामिति,—उक्तबान्धवा-नामित्यर्थः । अग्रिमं व्याचष्टे—तदभावे शिष्य इति,—अत्रापि कृतैकशेषेण तथा द्वन्द्व इति भावः । तेनानेकसजातीयसत्त्वे विभज्य तैर्ग्राह्यम् । तदेव स्मृत्यन्तरमाह—पुत्राभावे इति । यः प्रत्यासन्नः सपिण्डे इति अनेन पत्न्यादिबान्धवान्तानां सङ्ग्रहः । तस्य ततो मुख्यत्वायाऽऽह—आचार्याभावे इति । "अनन्तरस्सापिण्डाद्यः" इत्यग्रिमो मनुरपि । "अत ऊर्ध्वं सकुल्यस्स्यादाचार्यश्शिष्य एव वा ।" इति । अथाग्रिमं व्याचष्टे—शिष्या-भावे इति । चारीति एकवचनमन्तेवास्यभिप्रायम् । सन्दिग्धत्वात्तदर्थमाह—येनेति । साहित्यं प्राप्तौ । तदर्थेति—वेदार्थेत्यर्थः । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति ब्रह्मचारी समानश्चासौ ब्रह्मचारी च सब्रह्मचारी "सुप्यजातौ" इति णिनिः । "चरणे ब्रह्मचारिणि" इति सादेशः । तस्य समानत्वं वेदस्य व्रतस्य वा समान-त्वात् । तस्य तत्त्वं चाध्येतृभेदात् वेदभेदं व्रतभेदं वा परिकल्प्य बोध्यम् । तेन समानवे-दाध्ययननिमित्तब्रह्मचर्यवानित्यर्थः । समानं ब्रह्म वेदाध्ययनार्थं व्रतं चरतीत्यर्थः भा-ष्याल्लभ्यते । अत्र कृतैकशेषबहुवचनान्तसब्रह्मचारिशब्देन द्वन्द्वः । अन्यथा तद्बोधकं शब्दान्तरमेवोक्तं स्यात् । तत्र एकस्यार्थः उक्तः । द्वितीयस्य तु समानं ब्रह्म श्रौतं कर्म चरतीति ऋत्विक्[11] इति । अत एव "अन्तेवासी ऋत्विग्वा हरेत" इति शङ्खः सङ्गच्छते। तृतीयस्य तु[12] ब्रह्म वेदः तेन सहितं विशिष्टं सब्रह्म वेदे तदङ्गानि तच्चरति जानातीति सः श्रोत्रिय इति । तुरीयस्य तु ब्रह्मचारिणा सह सदृशः सब्रह्मचारीति तदेतत् सर्वं शिष्य-बुद्धिवैशद्यार्थं द्वितीयविशेषं च हृदि निधाय गूढाशयेन न्यूनतां परिहरन् तदग्रिमविशेषद्वयं सविशेषमाह—क्रमेण तदभावे च ब्राह्मण इति। यः कश्चित्— स्वपरजातिसाधारणो

---

१. । २. क. 'य' नास्ति । ३. भ. णतथाद्व० । ४. भ. त्तविधबा० । ५. प. फ. ब. ण्डाद्यइत्यग्रि० । ६. । ७. प. फ. ब. त्सैसिद्ध० । ८. अ० ३. २. ७८. । ९. अ० ६ ३. ८६. । १०. प. फ. ब. र्थः द्वि० । ११. प. फ. ब. सात्त्विक । १२. प. फ. ब. तु ब्रह्मचारिणा सह० ।

Cole.: Ch. II, Sec. vii, §§ 1—3.

श्रोत्रियो गृह्णीयात्—“ श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्” इति[1] गौतमस्म-
4 रणात् । **तदभावे ब्राह्मणमात्रम् ; यथाऽऽह मनुः—“सर्वेषामप्यभावे तु ब्राह्मणा
5 रिक्थभागिनः । त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥” इति[2] । **न कदा-
चिदपि ब्राह्मणद्रव्यं राजा गृहीयात्—“ अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति
स्थितिः।” इति[3] मनुवचनात्[4] । नारदेनाप्युक्तम्—“ ब्राह्मणार्थस्य[5] तन्नाशे

पत्नी स्यात् तदा भ्रातृपितरौ तत्र “पिता हरेदपुत्रस्य” इति वचनात् पितवै वा पूर्वोऽस्तु तदनुमते तु तत्पत्नी अननुमते तु ज्येष्ठा वा पत्नी । ज्येष्ठाशब्दस्सवर्णार्थः । सर्वा वा-शब्दाद्यदि सवर्णास्स्युः, एतेनैतदपि व्याख्यातम्। “भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा । विभजेरन् धनं तस्य भ्रातरः स्त्रीधनं विना॥” इति ॥ क्षत्रियादिषु पुत्राणान्तु पितरि मातुर-भावेति पितुर्माता हरेद्धनं इत्यन्यविषयः। भ्रातरस्तथेति तथा शब्दः प्रकारार्थः। सापत्न्यादि-

सुबोधिनी

नेन न्यायेन तेषां चाभाव इत्यर्थः। ब्राह्मणार्थस्य त[6]न्नाशे इति—ब्राह्मणार्थस्य कश्चन दायादो न चेत्, तदा[7] ब्राह्मणायैव दातव्यम् तदिति सामान्यनिर्देशोऽध्याहारेण ; कस्मिन् सति,

बालंभट्टी

ब्राह्मणः । श्रोत्रियः—वेदतदर्थज्ञः । तद्बहुत्वे सति गमके विभज्य गृह्णीयुरित्याह—श्रोत्रिया इति,—ब्राह्मणा इत्यर्थः। मात्रम् अवधारणे । तेन श्रोत्रियत्वव्यवच्छेदः । शिष्य एव वेत्यग्रिमं मनुमाह—यथाऽऽहेति । सर्वेषां—पत्न्यादिश्रोत्रियान्तानाम् । त-स्येति भावः । अपिः एवार्थे व्युत्क्रमे ब्राह्मणा एव । बहुवचनं प्रागवत् । वेदाध्यय-नधर्मानुष्ठितिमात्रमत्राप्यपेक्षितमित्याह -- त्रैविद्या इति, — वेदत्रयाध्ययनकर्तारः । शुचयः—धर्मानुष्ठातारः । अन्तरिन्द्रियनिग्रहोऽप्यावश्यक इत्याह—दान्ता इति । तथा सति राजेति शेषः । तस्मादिति पाठे राज्ञ इत्यर्थः । अन्यथा तु हानिरेवेति भावः । तदेव ध्वनयन्नाह—न कदाचिदिति । राजा—अभिषिक्तः शोत्रियोऽपीत्यर्थः । हीयत इत्यग्रिममेव । अहार्यमिति,—अग्राह्यमित्यर्थः । नित्यं—सर्वथा । स्थितिः—मर्यादा । उक्तमेव विशदयन् त्रैविद्यत्वादिगुणाभावेऽपि जातिब्राह्मणोऽप्यधिकारीति सूचयन् उ[8]क्तार्थे मानान्तरमप्याह—नारदेनाप्युक्तमिति । ब्राह्मणार्थस्येति,—तस्य स्वामिनो ब्राह्मणस्य

१.—२५. ४१.। २.—९. १८८. । ३.—९. १८९. । ४. क. स्मरणात् । ५. । ६. त. द. स्यकश्च० । ७. थ. द. तदा० । ८. थ. द. न्येन नि० । ९. प. फ. ब. क्तार्थस्य चेत् ।

Cole.: Ch. II, Sec. vii, §§3—5.

दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा॥" इति। ** क्षत्रियादि-धनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत्, न ब्राह्मणः; यथाऽऽह मनुः—"इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः।" इति ॥१३५॥१३६॥ 6

सर्वभ्रातृसंग्रहार्थः। तत्सुतास्तदनुसारेणैव। गोत्रजा अपि सपिण्डसमानोदकैकपुरुषैकर्षि-संबन्धाः क्रमेण द्रष्टव्याः। बन्धुर्मातुलादिः। आचार्योऽप्यर्थानुक्तोऽपि पितृसंस्तवात् गृह्यते। शिष्यउपनीतः सब्रह्मचार्येके चार्योपनीतः। एतेषां पूर्वाभावे पराधिकार इति। स्पष्ट-मन्यत् ॥ १३५ ॥ १३६ ॥

## सुबोधिनी

तन्नाशे तस्य स्वामिनो ब्राह्मणस्य नाशे सतीत्यन्वयः। अथ वा तदिति पृथक्पदम्। सर्वाभाव इति—सब्रह्मचारिपर्यन्तानामभाव इत्यर्थः ॥ १३५ ॥ १३६ ॥

## बालंभट्टी

नाशे सति। चेत्,—यदि ब्राह्मणार्थस्य तद्धनस्य कश्चन दायादो नास्ति, तदा तद्धनं ब्राह्मणायैव दातव्यमित्यर्थः। यद्वा तदिति भिन्नं पदं नाशे इत्यत्र स्वामिन इति शेषः। तत्—ब्राह्मणधनं सामान्येन नपुंसकत्वनिर्देशः, विधेयलिङ्गं वा। अन्यथा—स्वयंहरणे। ब्राह्मणद्रव्यमित्युक्तयाकाङ्क्षितविशेषमाह—क्षत्रियादीति। पत्न्यादीनामि-त्यादिस्सब्रह्मेत्यस्य। स्थितिरित्यग्रिममेवाऽऽह—यथाऽऽहेति। इतरेषां—प्रागुक्तब्राह्मण-भिन्नानाम्। धनमिति शेषः। सर्वाभावे—पत्न्यादिसब्रचारिपर्यन्तानामभावे। अत्र मन्वनुरोधेन गौतमस्य ब्राह्मणपरत्वम् न श्रोत्रियमात्रपरत्वम्। मनावपि श्रोत्रियपरत्वं त्रैविद्या इत्यादिना स्पष्टमेव। एवं च तदुभयं तत्रैव साधकम्। शुद्धब्राह्मणपरस्तु नारद एव इति परे। एवं मूलोक्तक्रमेण न कोऽपि दोष इति स्थितम् ॥

अत्र पुत्राद्ये तावत्पर्यन्तं यदुक्तं, तच्छेषतया किञ्चित् सिद्धान्ततत्त्वं गूढतममभिमतं स्पष्टार्थमुक्तानुवादसहितमुच्यते—पुत्रपौत्रप्रपौत्राणां विविधफलानि—दायहरणं, जीवतो वाक्यादिकरणं, वंशविच्छित्तिपरिहरणं, पिण्डादिकरणं, नामसङ्कीर्तिकरणम्, ऋणादिदोष-निवृत्तिकरणं, परलोककरणं चेत्यादीनि स्मृत्यादीनि प्रतिपादितानि। तत्र मनुः—"एक एवौ-रसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥" इति,

१......। २.—९. १८९.। ३. थ. वेहरेन्नृप इति। ४. प. फ. ब. तदुक्ता (?) ५. प. फ. ब. ढम०। ६.—९. १६३.।

Cole:. Ch. II, Sec. vii, §§ 5—9.

## बालंभट्टी

"न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।" इति च। अत्र द्वितीयेन दायहरणं सर्वेषामविशेषेण प्रतिपादितं प्रतिनिधीनां क्रमेण तत्तदभावे, औरसस्य तु पूर्वेणैव; मूलमपि प्रागुक्तमेव—"औरसो धर्मपत्नीजः तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतो मतः॥अक्षतायां क्षतायां वा जातः पौनर्भवस्सुतः।दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत्॥ क्रीतश्च ताभ्यां विक्रीतः कृत्रिमस्स्यात्स्वयंकृतः। दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नस्सहोढजः॥उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः॥ "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः॥"इति। अत्र तत्सम इत्युक्त्या औरसपुत्रिकापुत्रसमवाये समविभागस्सूचितः। अत एव मनुः—"पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। समस्तत्र विभागस्स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥" इति। द्विविधक्षेत्रजसमवाये षष्ठपञ्चमान्यतरांशहरः अन्ये चतुर्थांशहराः तदभावे तु प्रागुक्तरीतिरेव। यद्यपि "विभागं चेत्" इत्यादिना "विभागभावना ज्ञेया गृहक्षेत्रैश्च पौत्रकैः।" इत्यन्तेन प्रोक्तविभागप्रकरणमध्यस्थत्वेनास्य "पिण्डदः" इत्यस्यात्रानुपयोगः पूर्वाध्याये प्रोक्तश्राद्धप्रकरणेऽपेक्षिताधिकार्यनुक्तेः प्रासङ्गिकत्वे तु चरमोक्तिरुचिता तथा स्वारस्याभावश्च। अत एव विज्ञानेश्वरेण औरस इत्यादि अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यंस्तेषां स्वरूपं तावदाहेत्येवमवतार्य व्याख्याय च एवं मुख्यामुख्यपुत्राननुक्रम्य एतेषां दायग्रहणे क्रममाह—इत्येवमवतारितं पिण्डद इतीति। तथाऽपि यस्यांशहरत्वं तस्यैव पिण्डदत्वमित्यस्य मुख्यामुख्यातिदेशिकपुत्रान्यविषयत्वं तादृशपुत्रस्थले तस्य सधनत्वे तथा संभवेऽपि अतथात्वे तस्य पिण्डदत्वावश्यकत्वात् तादृशस्य तस्य तद्धर्मत्वान्न तद्विषयत्वम्। अत एव च "अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्॥" इति मनूक्तिः, "यश्चार्थहरस्सपिण्डदायी पुत्रः पितृवित्ताभावे पिण्डं दद्यात्" इति विष्णूक्तिश्च सङ्गच्छते इत्येतदर्थं तथोक्तिः। अत एव "क्षेत्रजादिसुतानेतानेकादशयथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥" इति मनुः। अत्र पराशरवाक्यम् शौद्रं गृहीत्वा एकादशत्वं इतोऽव्यवहितं प्राक् घटितानां तेषामेव तेनोक्तत्वात् पुत्रिकसुतस्य तु बहुव्यवधानेन पार्थक्येन तेनोक्तत्वात्। अत एव "औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः।" इति प्रागुक्तः। तेषां ततः प्रागुक्त्या "औरसः" इत्यादिद्वादशपुत्रक्रमानुरोधेन एतावत्पर्यन्तं लक्षणान्यु-

---

१ व्य० १२८—१३३. । २.—९. १६३. । ३. व्य० ११४—१४९. । ४.—९. १२७. । ५.—९. १८०. । ६. ब. त. अत० । ७. म० ९. १६५. ।

Cole.: Ch. II, Sec. vii. § 6.

## बालंभट्टी

क्तानि । क्रिया पिण्डादिकरणम् । व्यतिरेके हेतुः । तल्लोपं वीक्ष्येत्यर्थो वा, अकारप्रश्लेषो वा । प्रतिनिधित्वं चावयवान्वयेन न्यायसिद्धं वाचनिकं यथायथं बोध्यम् । अत एव तेन यथाक्रममेव पिण्डदः श्राद्धदः अंशहरः धनहरो वेदितव्य इति व्याख्यातम् । "अनूढा[1]स्तास्तु कानीनगूढोत्पन्नसहोढजाः । पौनर्भवश्च नैते स्युः पिण्डरिक्थांशभागिनः ॥" इति विष्णुवाक्येऽप्येवमेव बोध्यम् । मूलवाक्ये चकारेणान्यफलानामपि असाधारणानां समुच्चयः। एवमेव द्व्यामुष्यायणस्य क्षेत्रजस्य भागविशेषस्य प्रतिपादके विभागप्रकरणान्तर्गते "अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥" इति मूलोक्तेः । ततः पूर्वपद्ये तदुक्तिफलादि बोध्यम् । तत्र तथोक्तिस्तु प्रकरणानुरोधात् नियोगेनोत्पादनान्न तद्धनहारित्वमिति भ्रमनिरासार्थत्वात् तदर्थमेव तत्प्रवृत्तेश्चेति बोध्यम्[2]। अत एव तदपि तेन द्व्यामुष्यायणस्य भागाविशेषं दर्शयंस्तस्य स्वरूपमाहेत्येवमवतार्य यथाक्रमं व्याख्यायोभयोरपुत्रत्वे तस्य द्व्यामुष्यायणत्वेन प्रागुक्तं बोध्यम् । देवरादेः सपुत्रत्वे तु अद्व्यामुष्यायणः । स क्षेत्रिण एव पुत्रो भवतीति तस्यैव रिक्थी पिण्डदश्च न बीजिन इति न तद्रिक्थी पिण्डदश्च नियमेन; तदुक्तं मनुना—"क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥"[3] इति[4]। इत्येवं[5] तात्पर्यं प्रकटितम् । किं च मुख्यामुख्यमात्रपुत्रातिरिक्तस्थलेऽप्यंशहरत्वं न पिण्डदत्वं नियतम्। अत्र तु वैपरीत्यमिति सूचनार्थमपि तथोक्तिः।ततश्च पुत्रादीनां यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्वत्वाक्रान्तं तद्[6]पदायग्रहणं पुत्रत्वादिना अप्रतिबन्धं भवतीत्ययमप्रतिबन्धो दायः—पितृपितामहादिधने तेषां तत्त्वेन लोकप्रसिद्धजन्मतः सिद्धस्वत्वस्याविशिष्टत्वात् । पत्न्यादीनां तु पुत्राद्यभावे स्वाम्यभावे विषमविभागाभावे दानाभावे च संभवति तत्तद्रूपेणेति तत्तद्भावः प्रतिबन्धक इति सप्रतिबन्धो दायः । एवं च तद्द्वैविध्यं सिद्धम् । ननु भवतूक्तरीत्या पुत्रस्य, तत्पौत्रादेस्तत्स्वत्वे किं मानमिति चेत् शृणु । "अनेकपितृकाणां तु पितृतो भागकल्पना ॥ भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा । तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥" इति[7] तत्रैव मूलं, "पैतृकं तु पिता द्रव्यमनवाप्तमवाप्नुयात् । न तत्पुत्रैर्लभेत्सार्धमकामस्स्वयमर्जितम् ॥" इति मनुश्चेति । नन्वेवमपि द्वितीये किं मानमिति चेत् शृणु । "जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरि भोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता॥" इति देवलश्च, "पिता माता च संप्रीतौ स्यातां पुत्रगुणैर्यदि । स पुत्रस्सकलं धर्ममाप्नुयात्तेन

---

१ फ. अप्रशस्तस्तु । २. व्य० १२७. । ३. भ. व्यं रूपमाह । ४.—९. ५३, ५२. । ५. भ. बलीयपुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् । इति न भ्रातरो न नाक्रमणे तत्तद भावे औरसस्य तु प्रसूतीत्येवं ता० । ६. प. फ. ब. तं दा०। ७. व्य० १२०.१२१.।

Cole:. Ch. II, Sec. vii, § 6.

## बालंभट्टी

कर्मणा ॥" इति सत्यव्रतश्च "स पुत्रः पितरं यस्तु जीवन्तमनुवर्तयेत् । संस्थितं तर्पयेद्भक्त्या श्राद्धेन विविधेन च ॥" इति एवमग्रेऽपि क्रमेणोच्यते । "अपत्यं तु ममैवैकं कुले महति भारत । अपुत्रमेकपुत्रत्वमित्याहुर्धर्मवादिनः ॥ चक्षुरेकं च यश्चैकः पुत्रश्चास्ति च भारत । चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥ अनित्यतां च मर्त्यानां मत्वा शोचामि पुत्रकम् । सन्तानस्याविनाशन्तु कामये भद्रमस्तु ते ॥" इति भारतम् । "अनेन तु विधानेन पुरा चक्रे स्वपुत्रिकाम् । निवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षप्रजापतिः॥ ददौ स दश धर्माय कश्यपाय त्रयोदश । सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्॥ "[1] इति मनुवचनाच्च । पिण्डादिविषये मूलं तूक्तमेव । "न ह्यस्य युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ॥ नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।"[2] इति मनुः । "कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं न युञ्जीत मन्त्रोच्चारं न कारयेत् ॥ इति व्यासश्च । "अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिस्सुतः । पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ " इत्यत्रिश्च । एवेन पुत्रवतोऽनधिकारस्सूचितः । " अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः । पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनाय च ॥ " इति मनुः । " धर्मसङ्कीर्तनस्य च " इति बृहस्पतौ पाठान्तरं तुर्यचरणे । "त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते । चतुर्थस्सम्प्रदातैषां पञ्चमो नोपपद्यते ॥"[3] इति मनुश्च । "पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।" इत्यन्यत्र च । भ्रातावेत्यत्र"तद्वद्वा"इति पाठान्तरम् । " पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकासुत एव च ।" इति स्मृतिसङ्ग्रहे च । " पुत्रेषु वर्तमानेषु नान्यो वै कारयेत्स्वधाम् । पुत्रास्ते[4] हसकास्तेन यस्त्वेवं कुरुते नरः ॥" " आनुकूल्याद्वा पुत्रस्य श्राद्धं कुर्यात्सनाभिकः । " इति ऋश्यशृङ्गश्च । " उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः । अतस्तु विपरीतेन नास्ति तेन प्रयोजनम् ॥ काङ्क्षन्ति पितरः पुत्रान्नरकादतिभीरवः । गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ॥ करिष्यति वृषोत्सर्गमिष्टापूर्ते तथैव च । पालयिष्यति वार्धक्ये श्राद्धं दास्यति चान्वहम् ॥" इति बृहस्पतिश्च । " पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात् । पितरं चाऽऽब्दिकाच्चौलात्पैतृमेधेनकर्मणा ॥" इति सुमन्तुश्च । "नापुत्रस्य लोकोऽस्ति " इति, "जायमानो वै ब्राह्मणस्त्रिभि ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वाऽस्ति" इति, " ऋणमस्मिन्नयत्यमृतत्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् " इति च श्रुतिश्च । विष्णुवसिष्ठावप्येवम् । विन्दतीति पाठान्तरम् गच्छतीत्यत्र । तत्रापि विशेषः —"ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः । पितृणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ यस्मिन्नृणं सन्नयति येन चाऽऽनन्त्यमश्नुते । स पूर्वधर्मजः पुत्रः कामजानितरान्विदुः ॥

१ —९. १२८. । २.—२. १७१. २. । ३.— ९. १८६. । ४. भ. हिंसितास्ते० ।

Cole.: Ch. II, Sec. vii, § 6.

बालंभट्टी

पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन्यवीयसः। पुत्रवच्चापि वर्तेत ज्येष्ठे भ्रातरि धर्मतः॥ ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः। ज्येष्ठः पूज्यतमो लोके ज्येष्ठस्सद्भिरगर्हितः॥" इति, "पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नमाप्नोति विष्टपम्॥" इति च मनुः। "जातमात्रेण पुत्रेण पितॄणामनृणः पिता।" इत्यत्रिश्च। "अपुत्रस्य गतिर्नास्ति स्वर्गो नैव कदाचन। येन केनाप्युपायेन पुत्रं सम्पादयेत्स्वयम्॥" इति गारुडञ्च। शङ्खलिखितपैठीनसयश्च—"यत्र क्वचन जातेन पिता पुत्रेण नन्दति। तेन चानृणतां याति पितॄणां पिण्डदेन वै॥"इति। "अग्निहोत्रं त्रयो वेदा यज्ञश्च सहदक्षिणाः। ज्येष्ठपुत्राप्रसूतस्य कलां नार्हन्ति षोडशीम्॥ पुत्रापौत्राप्रतिष्ठस्य बहुपुत्रस्य जीवतः। अस्कन्नवेदयज्ञस्य हस्तमात्रं त्रिविष्टपम्॥" इति वसिष्ठः। "अनन्ताः पुत्रिणो लोका नापुत्रस्य लोकोऽस्ति" इति श्रूयते। "अप्रजास्सन्त्वपुत्रिणः" इत्यभिशापः। "प्रजाभिरग्ने अमृतत्वमस्याम्" इत्यपि निगमो भवतीति। ननु पुत्रजननमात्रेण पितुर्नानृण्यं; किन्तु सम्यगनुशिष्टेन पुत्रेण शास्त्रीयकर्मस्वनुष्ठितेषु पश्चादानृण्यम्। अत एव वाजसनेयि ब्राह्मणे पुत्रानुशासनविधिस्समाम्नातः—"तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति यद्यनेन किञ्चिदक्ष्णया कृतं भवति तस्मादेनं सर्वस्मात् पुत्रो मुञ्चति तस्मात्पुत्रो नाम पुत्रेणवास्मिंल्लोके प्रतितिष्ठति" इति। अयमर्थः—अस्ति किञ्चित् संप्रतिपत्तिनामकं कर्म यदा पितुर्मरणावसरो भवति, तदा पुत्रमाहूय वेदाध्ययने यज्ञे लौकिकव्यापारे च यद्यत्कर्तव्यजातं तस्य सर्वस्य पुत्रे संप्रदानं कर्तव्यं सेयं संप्रतिपत्तिः। तस्यां च संप्रतिपत्तौ यस्मादनुशिष्टः पुत्रोऽधिकारी, तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः। अत एव पुत्रानुशासनं कुर्युः पितरः स चानुशिष्टः पुत्रः स्वपित्रा शास्त्रीयं कर्म अक्ष्णया वक्रत्वेन कृतं शास्त्रवैपरीत्येन कृतं भवति। एतस्मात् सर्वस्मात् पापाद्धि स पितरं स्वयं कर्म सम्यगनुतिष्ठन्मोचयति। तस्मात् पुन्नाम्नो नरकात् त्रायत इति व्युत्पत्त्या पुत्रो नाम। अत एव मनुविष्णू—"पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः। तस्मात्प्रोक्तः पुत्र इति स्वयमेव स्वयंभुवा॥" इति। हारीतः—"पुन्नामा निरयः प्रोक्तः छिन्नतन्तुश्च वैनरः। तत्र वै त्रायते यस्मात् तस्मात्पुत्र इति स्मृतः॥ यस्य पुत्रश्शुचिर्दक्षः पूर्वे वयसि धार्मिकः। नियन्ता चाऽऽत्मदोषाणां सन्तारयति पूर्वजान्॥" इति। बृहस्पतिश्च—"पुन्नाम्नो नरकात्पुत्रः पितरं त्रायते यतः। सुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः॥ पौत्रोऽपि पुत्रिकापुत्रः स्वर्गप्राप्तिकारावुभौ। रिक्थपिण्डांबुदाने च सुतौ सुपरिकल्पितौ॥" इति। स च पिता स्वयंमृतः पुत्रशरीरेणैवास्मिन् लोके यथाशास्त्रं कर्म कुर्वन् प्रतितिष्ठतीति। एवं सति बहूनां मध्ये यथावदनुशास-

१.—९. १३७. । २ ब. नैक्य० । ३. प. फ. ब. दक्षाया (?) । ४. प. फ. ब. मैक्षुधाव (?) । ५ —९. १३८. ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

नं प्रज्ञामान्द्यादिप्रतिबन्धबाहुल्यात् कस्य चिदेव संबध्यते । अनुशिष्टेष्वपि बहुषु यथावदनुष्ठानं कस्यचिदेव अतः ज्येष्ठः कनिष्ठो वा यस्तादृशः स एवाऽऽनृण्यहेतुरिति कथं तथा प्रागुक्तमिति चेन्न । अनुशासनस्य संप्रतिपत्तिद्वारा विलक्षणपितृकृतपापनिवारणद्वारा प्रतिबन्धविलक्षणपरलोकप्राप्तिफलकत्वस्योक्तरीत्या प्रतीयमानत्वेनाऽऽनृण्यहेतुत्वात् । अत एव लौक्यमित्याद्यक्षरस्वारस्यम्। अत एव च प्रागुक्तश्रुतिस्मृत्यादिसङ्गतिश्च । अन्यथा तद्विरोधो दुष्परिहर एव । अत एव ज्येष्ठो न देयः—तस्यैव पुत्रकार्यकरणे मुख्यत्वादिति सफलं विज्ञानेश्वरादिभिरुक्तम् । एवं च पुत्रादेस्तत्त्वं सिद्धम् । तत्रापि विशेषः—सन्निहितत्वेऽपि पुत्रादीनां पतितत्वादिदोषे क्वापि नाधिकारः— "पतितो नाग्निसंस्कारं न क्रियां न च तर्पणम् । कुर्यादुन्मत्त एवापि नान्यथेत्यब्रवीद्यमः ॥" इति स्मृतेः । तथा च अस्वस्थोन्मत्तनास्तिकादिपुत्रसत्त्वे पौत्रादीनां पुत्रप्रतिनिधित्वेनाधिकारः । एवं "पितृद्विट् पतितष्षण्डो यश्च स्यादौपपातिकः । औरसा अपि नैतेऽशं लभेरन् क्षेत्रजाः कुतः ॥" इति नारदात्[1] दायग्रहणेऽपि तथा बोध्यम् । वक्ष्यते चेदमनुपदमेव मूलकृता । तदभावे विभक्तेऽसंसृष्टिनि पत्यौ स्वर्याते तादृशपरिणीता संयता पत्नी सकलमेव धनं प्रथमं गृह्णाति, तदभावे तादृशी दुहितेत्यादिदायहरणमात्रीयं क्रमं मूलकृदुक्तवान् "पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजो बन्धुशिष्यसब्रह्मचारिणः ॥ एषामभावे पूर्वस्य धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयंविधिः ॥" इति । अत पत्नीत्यनेन तादृशपरिणीतालाभः—"पत्युर्नः" इत्यनुशासनात् । "अपुत्राशयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्याच्च सा पिण्डं कृत्स्नमंशं लभेत च ॥" इति वृद्धमनोः, "पत्नी भर्तुर्धनहरी या स्यादव्यभिचाभिचारिणी । तद भावे तु दुहिता यद्यनूढा भवेत्तदा ॥" इति, "अपुत्स्याथ कुलजा पत्नी दुहितरोऽपिवा ।" इति च कात्यायनवचनाच्च संयतत्वस्य[3] साकल्यस्य च लाभः । आद्ये चद्वयं मिथस्समुच्चये । तेनांशहरत्वे तदावश्यकत्वं सूचितम् । एवं तदभावे तस्यास्तदावश्यकत्वं अन्येन तद्धरणे तस्यैव तदावश्यकत्वं न तस्या इति सूचितम् । धनहरीति तु पत्नीपदतात्पर्यत्वेन बाध्यम् । विभागकथनानन्तरमस्योक्तत्वाविभक्तत्वस्य लाभः । पत्नीत्वाद्यपवादस्य "संसृष्टिनस्तु संसृष्टी" इत्यस्य वक्ष्यमाणत्वादसंसृष्टिलाभः । यद्यपि "विभक्ते संस्थिते द्रव्यं पुत्रभावे पिता हरेत् । भ्रातुर्वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥" इति कात्यायनस्मृतौ क्रमादित्युक्तम् । तथा "स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी" इति शङ्खस्मृतौ तदभावे इत्युक्तमेवमन्यत्रापि । तच्च प्रागुक्तमेव । तथाऽपि न तानि क्रमबोधकानि—विक-

---

१.—१३. २१. । २. अ० ४. १. ३३. । ३. प. ब फ. तेत्यस्य साकल्यला० । ४. प. फ. ब. स्योक्तत्वस्यला० । ५. व्य० १३८. ।

Cole.: Ch. II, Sec vii, § 6.

## बालंभट्टी

ल्पस्य स्मरणात् मिथो विरोधात् "पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।" इति,[1] "अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥" इति च मनुविरोधात्। "भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा। विभजेरन्धनं तस्य शेषास्तत्स्त्रीधनं विना॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु॥" इति[2] नारदविरोधाच्च। एतेन "पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः।" इति दायग्रहणक्रमबोधकमित्यपास्तम् — तस्य श्राद्धप्रकरणस्थत्वाच्च। एवं च विकल्पघटितवाक्यानां न[4] क्रमबोधकत्वमिति सिद्धम्। स्पष्टश्चायमर्थः पूर्वमीमांसायां "तुल्यार्थास्तु विकल्पेरन्" इत्यधिकरणे[3]। एवं च तेषामधिकारप्रदर्शनमात्रपरत्वं तथा सति शङ्खवाक्यं नारदवाक्यं च संसृष्टिविषयकं—"संसृष्टानां तु यो भागस्तेषामेव स इष्यते।" इति[6] संसृष्टिनां प्रस्तुतत्वात्। तथा च तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिपादनपरं तदिति तत्त्वम्। न च "भ्रातॄणामप्रजाः प्रेयात्" इत्यस्य[3] संसृष्टिविषयत्वे "संसृष्टानां तु यो भागः" इत्यनेन पौनरुक्त्यमिति वाच्यम्—पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वस्य तत्स्त्रीणां भरणमात्रस्य च विधाने तात्पर्यात्। मनुवाक्यं कात्यायनवाक्यं च पत्न्यादिगणासत्त्वविषयतयाऽपि सुयोजमिति न कश्चिद्दोषलेशः। तत्र शङ्खीये तदभावे इत्यस्य मध्यमणिन्यायेनान्वयः। तत्र आद्ये तस्य पौत्राद्यभाव इत्यर्थः। द्वितीये संसृष्टिनो भ्रातुरभाव इत्यर्थः। तस्य तत्त्वाभाव इति यावत्। पत्न्याद्यसत्त्वे इति शेषः। यद्वा उक्तरीत्या उत्तरान्वय्येव तत्। एवं "पिताहरेदपुत्रस्य" इति[1] मनुवाक्यं "विभक्ते संस्थिते" इति कात्यायनवाक्यांशभूतं च संसृष्टिविषयमेव—तदेकवाक्यतानुरोधात्। संसृष्टत्वं च यतो न येन चित् सह अपि तु पित्रा भ्राता पितृव्येर्ण वा विभक्तो यः पुनः पित्रा भ्रात्रा च एकत्र संस्थितः "पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते।" इति बृहस्पतेः। "अनपत्यस्य पुत्रस्य" इति मनुवाक्यांशस्तु पत्नीदुहितृदौहित्राद्यभावपरः—उक्तहेतोः। अत एव "मातर्यपि च वृत्तायाम्" इति[2] "अपिच" इत्येतद्बलात् पित्रादिभ्रातृसुतान्तानामप्यभावपरम्। अत एव कातीये तत्पितुरिति पूर्वान्वयि। तत्पितुर्माता पितामहीत्यर्थः। अन्यथा पौनरुक्त्यादिति स्पष्टमेव। तत्र क्रमादित्यस्य पौत्रादिक्रमं वीक्ष्येत्यर्थः। ल्यब्लोपे पञ्चमी। यद्वा क्रमं वंशपरम्परां अत्ति भक्षयतीति क्रमात् सा। यद्वा क्रमं धनसंबन्धक्रमं अतति गच्छतीति क्रमात् सर्वविशेषणमिदम्। एवमन्य-

१.—९. १८५। २.—९. २१७। ३.—१३. २५. २६। ४. प. फ. ब. 'न' नास्ति। ५. प. फ ब. णेनारद०। ६. व्य० १६८। ७. प. फ. ब. ह्नविषये। ८. प. फ. ब. च ण वा। ९.—२५. ७२।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

त्रापि यथासंभवं योजना प्राक् प्रतिपादितैव । विकल्पादिरहितबहुविषयसङ्ग्राहक "एषामभावे" इत्यर्धघटितैकमूलानुरोधेनान्येषामेतादृशानामेव वाक्यानां अन्यथा योजनमुचितं —लाघवादन्यथा गौरवं स्पष्टमेव । अत्र सर्वत्र मृतनिरूपितप्रत्यासत्तिरेव तद्ग्रहणे[1] हेतुत्वेन विवक्षिता । अत एव "अनन्तरस्सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति[2] मनुः । "बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥" इति[3] बृहस्पतिः । "पुत्राभावे प्रत्यासन्नस्सपिण्डः" इत्यापस्तम्बश्च सङ्गच्छते । सा च प्रत्यासत्तिः शास्त्रतो लोकतश्च यथायथमवयवान्वयादिद्वारेण बोध्या । तथैव च पत्नीत्यादिना प्रदर्शितं तेन । अत एव पुत्रिकासुत इत्यत्र "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥" इति वसिष्ठोक्त्या "अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥" इति मनूक्त्या च संविदा दत्ता कन्या पुत्रिका तत्पुत्रत्वादेव औरससमत्वं इत्येकां व्याख्यां कृत्वा पुत्रिकैव तादृशी सुतः स औरससम एव पित्रवयवानामल्पत्वात् मात्रवयवानां बाहुल्याच्च ; अत एव वसिष्ठः—"तृतीयः पुत्रिकैव" इति व्याख्यान्तरं कृतं तेन । पत्नीत्यादिवाक्ये एवकारस्य सर्वत्र संबन्धः । अन्यव्यवच्छेदः । समवाये तत्फलं तत्फलितार्थ एव व्याख्यायां प्रथममिति प्रत्यासत्त्यतिशयादिति तद्भावः । तदभावे दुहिता "यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥" इति[6] मनुः । "भर्तृधनहरी पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् । तस्मात्पितृधनं त्वन्यः कथं गृह्णाति मानवः ॥" इति[9] बृहस्पतिः । "पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् । पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥" इति[10] नारदश्च । तत्र चोढानूढासमवाये अनूढैव—प्रागुक्तकात्यायनोक्तेः । एवमूढासु प्रतिष्ठितासमवाये अप्रतिष्ठितैव । तदभावे प्रतिष्ठिता "स्त्रीधनं दुहितॄणामप्रमत्तानां प्रतिष्ठितानां च" इति[11] गौतमवचनस्य पितृधनेऽपि तुल्यत्वात् । नेदं पुत्रिकाविषयं—"तत्समः पुत्रिकासुतः" इत्यस्य[12] पुत्रप्रकरणे उक्तत्वात् । चेन दौहित्रसमुच्चयः । अत एव "अपुत्रपौत्रे सन्ताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तत्स्वधाकारे पौत्रा दौहित्रका मताः॥" इति विष्णुः। "अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥" इति "दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् । स एव दद्याद्द्वौ पिण्डौ पि-

---

१. प. फ. ब. हैनवि० (?) । २—९ १८७. । भ. बृहस्पतिः पुत्रा० । ३.—२५. ६२ । ४.—२. १४. २. । ५.—१७. १७. । ६—९. १२७ । ७.—१७ १५. । ८.—९. १३०. । ९—२५. ५५, ५६. । १०.—१३. ५०. । ११.—२८. २४. । १२. व्य० १२८. ।

Cole.: Ch. II, Sec. vii. § 6.

## बालंभट्टी

वे मातामहाय च ॥ पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः । तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ " इति च मनुश्च सङ्गच्छते । अत्र चेन दौहित्र एव तदभावे दौहित्र्या अपि समुच्चय इति प्राक् प्रतिपादितमत्रापि बोध्यम् । तदभावे पितरौ । तत्र प्रथमं माता ततः पितेति व्याख्याकृत् । आदौ पिता ततो माता तत्त्वन्तु प्रागुक्तमेव । ततो भ्रातरः । तथेत्यस्यार्थं उक्त एव। आवृत्त्या द्वितीयस्य तथेत्यस्य प्रत्यासत्तिक्रमेणेत्यर्थः । तेन सोदरासोदरसमवाये प्रथमं सोदराः तदभाव असोदरा इति सूचितम् । अत्र भ्रातर इत्यनेन तथैकशेषेण भगिनीनामपि ग्रहणम् तत्रापि, क्रमो भ्रातृवदिति प्रागुक्तमेवेति बोध्यम्।तथेत्यस्य पितृक्रमेणेत्यर्थकस्य तत्सुता इत्यत्राऽपि मध्यमणिन्यायेनान्वयः । तत्सुता इत्यस्य तयोः भ्रातृभगिन्योः सुता इत्यर्थः । सुता इत्यत्र प्राग्वत् कन्यानामपि ग्रहणं बोध्यम्, तच्चोक्तं प्राक् । गोत्रजपदेन पितामही समानगोत्रजाः पितामहस्नुषादयः सप्त सपिण्डाः समानोदकाश्च सप्त तदुपरितनाः जन्मनामज्ञानावधिकाश्च । बन्धुशब्देन भिन्नगोत्रं बन्धुत्रयमाचार्यश्च । चार्थकतथाशब्दस्य चरमे उत्कर्षात् सब्रह्मचारिणश्चेत्यर्थः । तेन बन्धुशिष्यमध्यवर्त्याचार्यस्य ब्रह्मचार्यनन्तरस्य ऋत्विक्श्रोत्रियादेश्च समुच्चय इति केचित्[1] । तत्त्वन्तु प्रागुक्तम् । "प्रागुक्तसपिण्डाभावे आचार्यस्तदभावे अन्तेवासी " इत्यापस्तम्बः[2] । "अन्तेवासी ऋत्विग्वा" इति शङ्खः । "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति गौतमः[3] । "सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।" इति मनुः[4] । " ब्राह्मणार्थस्य तन्नाशे" इति नारदश्चेति । पत्नीत्यादि न पिण्डदानक्रमबोधकं—तस्यात्रानुक्तत्वात् । अत एव " पिण्डदोऽशहरश्चैषाम्" इत्यस्य[5] अनुवृत्तिसंभवेऽप्येषामभावे इत्याद्युक्तं तेन भगवता । अत एव च मुख्यगौणसुताभावे सर्वेषां दायक्रम उच्यते इत्येवमवतारितमिदं तेन । दायादशब्देन च रिक्थभागिनः—व्युत्पत्तेः " विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः । जनयामास पुत्रं तु तपोविद्याशमात्मकम् ॥" इति हरिवंशोक्तेः । " पुत्रे इव दायादानपि दापयेत् ।" इत्यादौ पुत्रभिन्नेऽपि तत्र तस्य प्रसिद्धत्वात् । अत एव "पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः । तेषां षड्बन्धुदायादाष्षडदायादबान्धवाः ॥ औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥" इति[9] मनुवाक्ये स्वपितृसपिण्डसमानोदकानां

---

१.—९. १३२.। २. भ हस्तु० । ३. भ. दश्च पत्नीत्याश्च तेत्तु तु(?)। ४.२.१४. ३.। ५.· भ. म्वः श्रात्रिं० । ६.—२८. ४१, ।·७.—९. १८८ । व्य०. १३२. ९.—९. १५८ —१६० ।

Cole.: Ch. II, Sec. vii, § 6.

बालंभट्टी

सन्निहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वं नोत्तरस्य, बान्धवत्वन्तु समानगोत्रत्वेन चोदकप्रदानादिकार्यैकरत्वं वर्गद्वयस्यापि सममेव। गोत्ररिक्थ इति मनुवाक्ये दत्त्रिमग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वादित्येवमुक्तमूलाविरोधाय तेन व्याख्यातम्। पित्रादिधने तु सर्वेषामविशेषश्चरमभिन्नानां पुत्रिकासुतघटितानां तेषाम् अस्मात् प्रागुक्तमनोश्च। अत एव तयोः मिथो विरोधोऽपि न। अग्रे साधकानि तु पूर्वमुक्तान्येव तस्मात् स्थितमेतत्तदभावे यथाक्रम पत्न्यादयो धनभाज इति। नन्वस्तु दायहरणे प्रागुक्तं, तथाऽपि अन्येषां पुत्रासाधारणकार्याणां केषाञ्चिद्यथायथं पत्न्यादिष्वसंभवेन तत्र विचारप्रसक्त्यभावे पिण्डदानादौ कथं क्रम इति चेत् श्रुणु। प्रागुक्तरीत्या दायहरणे सिद्धेन क्रमेणैव "यश्चार्थहरस्स पिण्डदायी" इति विष्णूक्तेः पिण्डदानादौ क्रम इत्युत्सर्गः। तत्र पत्नीविषये वाक्यमपि प्रागेव वृद्धमनूक्तमुक्तम्। तत्र "कृत्स्नमंशम्" इत्यादिना दायहरत्व एव तस्या अधिकारः सूचितस्तस्य सधनत्वे[1]। एतदर्थमेव तत्र तदुपादानमन्यथाभावे सैवाधिकारिणी। अत एव "भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च। श्वश्र्वादेस्तु स्नुषा चैव तदभावे तु सोदरः॥" इति, पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः। पुत्राभावे तु पत्नी स्यात् पत्न्यभावे सहोदरः॥" इति च शङ्खः। "पत्नी[2] कुर्यात्सुताभावे सहोदरः।" इति कौर्मम्, "भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्नविद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः॥" इति ब्राह्मं च सङ्गच्छते। दुहितुस्तु तद्धनहर्तृत्वादेव पिण्डादिदत्वम्। एवं च तदभावेन तस्यास्तत्प्रदत्वम्। दौहित्रविषये वाक्यमपि मन्वाद्युक्तं प्रागेवोक्तम्। तत्र हरेद्धनमित्यादिना तस्यापि दायहरत्व एवाधिकारः सूचितः। अत एव "श्राद्धं मातामहानां च ह्यवश्यं धनहारिणा। दौहित्रेण विधिज्ञेन कर्तव्यं विधिवत्सदा॥" इति लौगाक्षिस्सङ्गच्छते। अत एव मातामहश्राद्धं मासि श्राद्धे सूत्रभाष्यकारौ नोचतुरिति सुदर्शनेनोक्तम्। अत एव आश्वलायनेनापि सूत्रे मातामहश्राद्धं नोक्तम्। एवं च "यथा व्रतस्थोऽपि सुतः पितुः[3] कुर्यात् क्रियां नृप। उदकाद्यां महाबाहो दौहित्रोऽपि तथार्हति॥" इति मात्स्यम् भविष्यपुराणं च। "माता[4]महानामप्येवं श्राद्धं कुर्याद्विचक्षणः। मन्त्रो होमो यथान्यायं शेषमूहविवर्जितम्॥" इति विष्णुस्मरणम्। "मातुः पितरमारभ्यत्रयो मातामहास्स्मृताः। तेषां तु पितृवच्छ्राद्धं[5] कुर्युर्दुहितृसूनवः॥" इति पुलस्त्यस्मरणं चैकवाक्यतानुरोधेन तयोरन्यथा योज्यम्। पि-

१. भ. त्वेऽपि तदन्यथा एतदर्थमेव। २. भ. पत्नीनविद्य० (?)। ३. प. फ. ब. पिण्डः कु०। ४. भ. माता त्रयो माता०। ५. ब. वच्छ्राद्धं पार्वणेम्।

Cole.: Ch. II, Sec. vii, § 6.

बालंभट्टी

तृवत् श्राद्धं पार्वणं येषां सूत्रे तदुक्तं, तेषां तु सर्वथा तदावश्यकम् इति । यद्वा तानि पुत्रिकासुतविषयाणि । इदमग्रे स्फुटीभविष्यति । दौहित्र्या अप्येवम् । "न पुत्रस्य पितः चैव नानुजस्य तथाऽग्रजः ।" इति बोधायनाद्युक्तेस्तदभावे दायहरत्वेऽपि पित्रोर्न पिण्डदानादावधिकारः । भ्रातृतत्पुत्रयोस्तु यथाक्रमं, वचनमप्यनुपदमेवोक्तम् । अत एव सर्वथाऽपि तयोरनुक्रममधिकारः । "तस्य भ्रातृसुतश्चक्रे" इत्यादिप्रागुक्तमप्येवंपरमेव—उक्तमूलानुरोधात् । तत्र भ्राता कनिष्ठ एव न ज्येष्ठः; अंशहरत्वेऽपि उक्तनिषेधादिति बोध्यम् । ननु पिण्डदानादावप्येव क्रमे स्वीक्रियमाणे "भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥" इति मनोः, "यद्येकजाता बहवो भ्रातरस्तु सहोदराः । एकस्यापि सुते जाते सर्वे ते पुत्रिणस्सुताः ॥ बह्वीनामेकपत्नीनामेष एव विधिस्स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥" इति बृहस्पतेश्च का गतिः । अयं मनुस्मृत्यादौ पाठः । भट्टवार्तिके कौस्तुभे च "सर्वे तेनैव" इति पाठः । अन्यत्र "सर्वे ते तेन" इति पाठः । मेधातिथिसम्मतस्त्वाद्यपाठः। "यद्येक" इति कौस्तुभे पाठः । "पुत्रिण्यो मनुरब्रवीत्" इति कौस्तुभादौ पाठः । एतेषां यथाश्रुतार्थत्वे त्रयोदशपुत्रत्वापत्त्या "पुत्रान् द्वादश यानाह" इति मन्वाद्युक्तद्वादशसङ्ख्याविरोधापत्तेः, अपुत्रदायाधिकारिक्रमबोधकोक्तमूलवाक्ये भ्रातृसुतानां नवमस्थानस्थितिविरोधापत्तेः, पिण्डाद्यधिकारक्रमबोधकवाक्येऽपि "पत्नी भ्राता च तज्जश्च" इत्यादौ तृतीयस्थानस्थितिविरोधापत्तेः । तेषां तद्वत्पुत्रत्वे पत्न्याः पूर्वमेव निवेशौचित्यादिति चेत्—न । तेषां किञ्चित्कार्यवत्त्वातिदेशपरत्वात् तेन तेषां वंशाविच्छित्तेः परलोकस्य पितृऋणदोषापाकरणस्य च करणेन तदर्थं सर्वपुत्राभावे पत्न्यादिसत्त्वे दत्तकपरिग्रहो नेति तात्पर्यात् । अत एव "एकजातानाम्" इति हेतुगर्भं विशेषणमप्यर्थवत् । तत्र च "पुमान् स्त्रिया" इत्येकशेषः—सहोदर इति बृहस्पत्येकवाक्यत्वात् । अत एवं एकमातापितृणामिति व्याख्यातं मेधातिथिना । अनेन तेषामेव तथा नियमो न भिन्नपितृकाणां भिन्नमातृकाणां चेति सूचितम् । अत एवाभियुक्तः । अत्र एकजातग्रहणं भिन्नोदराणामेकपितृकाणामपि सपिण्डान्तरलाभदशायां भ्रातृसुतनियमो नेति ज्ञापनार्थं, न तु भ्रातृसुतस्याग्राह्यत्वज्ञापनार्थम्—"ब्राह्मणादित्राये नास्ति भागिनेयस्सुतः क्वचित् ।" इति वृद्धगौतमवदत्र निषेधस्मृतेरनुपलंभात् । पुत्रवानिति मतुपा न स्वैवैकमिति निषेधस्याऽत्रानवकाश इति[११] ।

१. बोधा०(?)। २.—९. १८२, ३. ३ (?) । ४ ९.—१५८ ।५.प. फ. ब. त्त्वात्सङ्ख्या ६. भ. धकमूलनवम०(?) । ७. भ. तृपुत्रकार्यकारित्वद्वारा पुत्री यकिञ्चित् । ८. प. ब. वैत्रा० । ९. अ० १. २. ६७. । १० प. फ. ब. एवमाता० । ११. प. स ब. धस्तत्रान० । १२. भ. शः पुत्राहिता इति ते० ।

Cole.: Ch II, Sec. vii, § 6,

## बालंभट्टी

अत एव च सपत्नीविषये वचनान्तरारंभः । भ्रातॄणामिति निर्धारणे षष्ठी । अत एव मध्ये इति तेन व्याख्यातम् । तेन ह्येकीयावयवान्वयेन एकमातापितृकत्वेन एकत्वं यथा तेषां, तथैकावयवान्वयेन सर्वावयवान्वयसत्त्वेन एकपुत्रत्वं सर्वेषामिति सूचितम् ; द्रौपदीवत् द्व्यामुष्यायणवच्च । अत एव तेनैकपुत्रेण सर्वान् भ्रातॄन् सपुत्रान् मनुराहेति तेन व्याख्यानम् । एतेन प्रागुक्तं पाठान्तरं निरस्तम् । अत एव च सर्वे ते इत्युक्तिसङ्गतिः—अन्यथाऽन्ये ते इत्यादि ब्रूयात् । भ्रातृपदं स्फुटतया भगिनीनिराससूचनद्वारा विषयप्रदर्शनार्थम् । यद्यपि भ्रातॄणामित्यत्र एकशेषस्यापि संभवः, तथाऽपि "ब्राह्मणादित्रये नास्ति भागिनेयस्सुतः क्वचित् ।" इति वृद्धगौतमोक्तेः पुमपत्यानामेव ग्रहणम् । एकः—एकोऽपि । अनेन द्व्यादेस्तत्त्वे सुतरां तथेति सूचितम् । पुत्रवानित्यत्र पुत्रपदमौरसपर–तत्रैव तस्य मुख्यत्वात, जात इति तदेकवाक्यत्वाच्च । अनेनान्यत्रायं नियमो नेति सूचितम् । अत्र पुत्रत्वेनैकानेकपुत्रप्रतीत्या सर्वविषयमिदम् । अग्रे तेनेत्याद्युक्तिस्तु एकत्र तथात्वे अनेकत्र तथात्वं निर्विवादमित्येवंपरा । चेदित्यनेन जनकस्यैवातत्त्वे सर्वेषां तत्त्वं दूरापास्तमिति सूचितम् । अत एव भवेदिति संभावने लिङ् । अत्र सर्वं वाक्यमिति न्यायेन "एकस्यैव द्वयोरेव त्रयाणामेव वा" इत्यादिक्रमेण बोध्यम् । अत एव अन्ये च पुत्ररहिता इति तेन व्याख्यातम् । किञ्च भ्रातॄणामित्यनेन न तत्र पुत्रत्वातिदेशः । तथा हि सति पुत्रिण इति[1] पुत्रवतीरिति च पदद्वयमधिकं स्यात् । तेन पुत्रेत्येकेनैव पुत्रत्वातिदेशसिद्धेः पुत्रित्वातिदेशस्तेनेति चेत् लाघवात्तदेवास्तु कृतं पुत्रत्वातिदेशेन । सोऽपि परिशेषात् कार्यातिदेशः—पुत्रिणः पुत्रवतीरिति श्रवणात् । तत्र तद्धर्मातिदेशस्य फलं तूक्तं वक्ष्यमाणं चेति दिक् । उक्तं चैतत् स्मृतिपादे शिष्टाचारप्रामाण्यप्रतिपादके"अपि वा कारणाग्रहणप्रयुक्तानि प्रतीयेरन्" इति सूत्रे भट्टाचार्यैः। रामभीष्मयोस्तु स्नेहपितृभक्तिवशात् विद्यमानधर्ममात्रार्थदारयोरेव साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोर्योगासिद्धिः । हिरण्मयसीताकरणं च लोकापवादभीत्या त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम् । भीष्मश्च "भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥" इत्येवं विचित्रवीर्यक्षेत्रजपुत्रं लब्ध्वा पित्रानृणत्वात् केवलं यज्ञार्थं पत्नीसंबन्ध आसीदित्यर्थापत्त्याऽनुक्तमपि[3] गम्यते । यो वा पिण्डं पितृपाणौ विज्ञातेऽपि न दत्तत्वात् "शास्त्रार्थातिक्रमात् भीतो यजते वाह्यसौ कथम् ॥ "इति । व्याख्यातं च न्यायसुधायां भट्टसोमेश्वरशर्मभिः–रामभीष्मयोर्यथा न विरुद्धाचरणकर्तृत्वं, तथा विवृणोति रामेति । रतिपुत्रार्थत्वनिरासाय मात्रशब्दः । ननु एवं सति "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छते । तस्या रजसि तं मासं पितरस्तस्य शेरते ॥ "[2] इति विहितातिक्रमात् प्रत्यवायस्स्यादित्याशङ्क्य स्नेहपितृ-

१. प. ब. सति पुत्रव० । २.—९. १८२. । ३. प. ब. नुक्रमेऽपि ।

Cole.: Ch. II, Sec. vii, § 6,

बालंभट्टी

भक्तिवशादित्युक्तम् । रामेण सीतास्नेहात् भार्यान्तरागमनव्रतग्रहणात् [1] भीष्मेण च शन्तनवे सत्यवती तत्पितरं याचिता त्वयि महाबले राज्याभिलाषुके तिष्ठति एतस्याः पुत्राणां राज्यालाभान्नेमां ददामीति तत्पित्रा प्रत्याख्याते तेन राज्यं नाहं कारिष्यामीति प्रतिज्ञाते त्वय्यनिच्छत्यपि त्वत्सन्ततिभयान्नतस्याः सन्ततीराज्यभागिनी स्यादिति तत्पित्रा पुनः प्रत्याख्याते "नापत्यहेतोरपि च करिष्ये तद्विनिश्चयम् ॥ अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति । " इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात् नैमित्तिकेन च व्रतेन नित्यस्य ऋतुकालगमनस्य बाधात् धर्ममात्रार्थमहं भार्यां परिणेष्यामीत्युक्त्या परिणीताया अगमनेऽप्यदोष इत्याशयः । एवमप्यनपत्यत्वेन पित्र्[2]णानपाकरणात् प्रत्यवायः स्यादित्याशङ्क्य साक्षादित्युक्तम् । साक्षादपत्याभ्यां कुशलवाभ्यां कृतपित्रानृण्यो रामः व्यवहितैर्विचित्रवीर्यस्यापत्यैर्धृतराष्ट्रादिभिः कृतपित्रानृण्यो भीष्मः । ननु रामस्य धर्मार्थं दारान्तरसद्भावे "यज्ञे यज्ञे प्रकुरुते सीतां पत्नीं हिरण्मयीम् । " इति हिरण्मयीसीताकरणमपार्थकं स्यादित्याशङ्क्याऽऽह—हिरण्मयीति । अपवादभीत्या त्यक्ता या सीता तद्गतं तद्विषयं यदानृशंस्यमनैष्ठुर्यं तदभावाशङ्कानिवृत्त्यर्थः । रावणापहारदूषितां सीतां रामो भजत इति लोकापवादभयमात्रेणासौ त्यक्ता; न सीताया दुष्टत्वात् नापि रामस्य सीतायां नैष्ठुर्यमिति द्योतयितुं—लोकापवादभीतिं प्रति त्यागस्य नित्यसापेक्षत्वात् । तत्प्रदर्शनाय त्यक्तशब्दस्य सीतापदेन सहसापेक्षसमासः कृतः । कथं व्यवहितापत्यकृतपित्रानृण्यता भीष्मस्येत्यपेक्षायामाह—भीष्मश्चेति । ननु तयोर्धर्ममात्रार्थं दारसद्भावः क्वचिदपि पुराणेतिहासयोरनुक्तः केन प्रमाणेन वा गम्यत इत्याशङ्क्याऽऽह — केवलमिति । अपिशब्देनापत्यहेतोरद्यप्रभृतीति विशेषणसामर्थ्यादेवमवगम्यत इति सूचितम् । ननु मोहादप्यनुष्ठानोपपत्तेर्नैकान्ततोऽर्थापत्तिस्संभवतीत्याशङ्क्य " श्राद्धकाले मम पितुः माया पिण्डस्समुद्यतः । तं पिता मम हस्तेन भित्त्वा भूमिमयाचत ॥ नैष कल्पो विधिदृष्ट इति निश्चित्य चाप्यहम् । कुशेष्वेव तदा पिण्डं दत्तवानविचारयन् ॥ " इति भीष्मस्यात्यन्तनैपुण्यान्मोहासंभवं दर्शयितुमाह—यो वेति । अत्र नैमित्तिकेन नित्यस्य बाध इत्यंशो धर्मार्थदारान्तरसद्भाव इत्यंशश्च न युक्त इति प्रतिपादितं गुरुचरणैर्मञ्जूषायां तत एव बोध्यम् । न चैवं द्वादशविधपुत्रप्रतिपादनानन्तरं यत्तु " भ्रातॄणामेकजातानाम् " [3]इत्यादि, तदपि भ्रातुष्पुत्रस्य पुत्रीकरणसंभवे अन्येषां पुत्रीकरणनिषेधार्थं न पुनः पुत्रत्वप्रतिपादनाय— " तत्सुतो गोत्रजो बन्धुः" इत्यनेन विरोधात् इति व्याख्याकृदुक्तिर्विरुद्धेति वाच्यम्—आशयानवबोधात् । तथा हि । किं तन्निषेधः शब्दार्थं उत तात्पर्या-

---

१. महाभराते, आदिप० १००. ७३, ४. । २. प. फ. ब. र्णात् । ३.—७. १८२. ।

Cole.: Ch. II, Sec. vii, § 6.

बालभट्टी

र्थः ? नाऽऽद्यः—अक्षरमर्यादया तदप्रतीतेः । नान्त्यः—संभावितशब्दत्यागेन तदङ्गीकारे निर्बीजत्वात् । तस्मान्नेदं युक्तम् । नन्वस्तु[1] यथाश्रुतसंभवः । अत आह—न पुनरिति,—पश्चादित्यर्थः[2] । द्वादशविधपुत्राभावे पत्न्यादिसत्त्वे इत्यर्थः । अत एवाऽऽह—तत्सुता इति । तथा सति इतरपुत्रवत् पत्न्याः पूर्वमेव निवेशौचित्येन तथोक्तिविरोधः स्पष्ट एव । तथा सति त्रयोदशपुत्रत्वापत्त्या "पुत्रान् द्वादश यानाह"[3] इति द्वादशसङ्ख्याविरोधापत्तिश्चे-त्यपि बोध्यम् । तथा च न तस्य तदर्थप्रतिपादने तात्पर्यम् ;किन्तु एतदर्थखण्डने इति बोध्यम्। एव वा तत्रैव हेतूपन्यासो न तु तत्रेति भावः । नन्वेवं कस्तर्हि वचनार्थ इति चेत् प्रागुक्त एव वार्तिकसम्मत इति बोध्यम्—तदनुक्तिस्तु अन्यत्र तस्योक्तत्वेन स्पष्टत्वात् । एतदुक्तिस्तु एकदेश्युक्तोऽर्थान्तरानिराससूचनापूर्वकविरोधखण्डनमात्रतात्पर्येणेति; तथा च तत्र नाऽऽग्रहोऽपि त्वत्रेति बोध्यम् । एतेन आशौचनिर्णयस्था गुरुचरणोक्तिरपि व्याख्याता ।तथा च वार्तिकैकवाक्यता सिद्धा।तथा च द्वादशपुत्रभिन्नेनापि भ्रातृसुतेन तादृशपितृव्यस्य प्रागुक्त-कार्यसिद्ध्या तदर्थं पत्न्यादिसत्त्वे पुत्रान्तरपरिग्रहो न कर्तव्य इति तत्त्वम्।एतेन भ्रातृणामिति सोदरभ्रात्रभावविषयमविभक्तविषयं वेति न पुत्रत्वातिदेशोऽयम्। अतस्तत्र सत्येकादश[4]पुत्र-प्रतिनिधयो न कार्याः स एव भ्रातृणां पिण्डदोऽशहरश्च इति वाचस्पतिमेधातिथिकल्पतरुरत्ना कराद्युक्तं परास्तम्—उक्तयुक्तेः, द्वादशपुत्राभावे पत्नीत्यादिमूलोक्तेश्च । अत एव तस्मात् दत्तकपुत्रप्रशंसेयमिति विज्ञानेश्वर इति निर्णयसिन्धूक्तं, दिनकराद्येनोक्तं भ्रातृणामित्यादि पुत्रित्वातिदेशपरम्।तन्मूलं[5] तु पुंनामनरकाप्राप्तिः पुंसः, स्त्रियः सपिण्डनार्हत्वमुभयोः कृत्रिमा-द्यकरणं चेति मिश्रादिभिरुक्तं चापास्तम् । न चैवमपि मन्वादिवाक्यस्योक्तार्थकत्वेन भीष्म-विषयेऽप्रवृत्तिः भीष्मविचित्रवीर्यौ भिन्नमातृकावेकपितृकौ व्यासविचित्रवीर्यावेकमातृकौ भिन्नपितृकौ यथाकथञ्चित् तस्य धृतराष्ट्रादिः क्षेत्रजो नौरसः । एवं च कथं वार्तिकादिसङ्ग-तिरिति चेत्—न । तत्र तदविषयत्वेन[6] तदंशेऽपि तस्यायुक्तत्वेऽपि मनुवाक्यस्य तदर्थकत्वं दोषाभावेन प्रकृतेष्टार्थसिद्धेरप्रत्यूहत्वात् । अत एव पितृभक्त्यैव तस्य पितृऋणापाकरणम् अग्निहोत्रादिना देवर्णमुक्तिः । किञ्च "त्रिभिरृणवा" इत्यादिश्रुतिः न नैष्ठिकब्रह्मचारि-विषया—तदृणापाकरणस्य ब्रह्मचर्येणा ग्निकार्यादिना च सिद्धेः स्मृतिषूक्तत्वादिति गुरुचर-णैरुक्तम् । तत्र यदि तु वार्तिकोक्तिरपि तदंशे योजनीयेति आग्रहस्तर्हि इत्थं योज्यम् । एकजातानामित्यत्र एकशब्दः प्रधानपरः—"माता भस्त्रा पितुः पुत्रो येन जातस्स एव

१. भ. नन्वेवमस्तु यथाश्रुतसंभावितः शाब्द एव सः अ० । २. ब. र्थः अत० । ३. म० ९. १५८ । ४ भ. दश मेधाति० (?) । ५. प. फ. ब तत्फलं । ६. प. ब. तद्विष० ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

सः । तस्माद्भरस्व दुष्यन्त मावमंस्थाश्शकुन्तलाम् ॥" इति भारतोक्तेः । "बीजस्यैव च योन्याश्च बीजमुत्कृष्टमुच्यते। सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥" इति मनूक्तेश्च। क्षेत्रजे तु वैपरीत्यं वाचनिकं तथा च एकपितृकत्वमात्रं विवक्षितम् । बृहस्पतिवाक्ये सहोदरत्वमपि पित्रुदरमादायैव अत एव सोदरा इत्यनुक्तिः । बहव इति तु तत्र स्पष्टार्थं,— बहवोऽपीति तदर्थः । यद्वा भूयांसोऽपीत्यर्थः । कपिञ्जलाधिकरणन्यायेन बहुत्वस्य बहुवचनबोधितस्य त्रित्वे पर्यवसानमिति व्यवच्छेदाय बहव इत्युक्तम् । अथवा तुशब्दस्य चार्थत्वेन व्युत्क्रमेण च सहोदराश्चेति वाक्यान्तरम्। तथा चोभयोरपि तत्प्रतिपादनं तदेकवाक्यतया ।मनुवाक्यस्यापि प्रागुक्तरीत्यार्थद्वयं बोध्यम् । अत एव "एकयोनिप्रसूतानाम्" इति स्मृतिसारसमुच्चयोक्तपाठस्सङ्गच्छते । अत एव पुत्रवानित्यत्र पुत्रपदं मातापित्रन्यतरजन्यपरं-- तत्राजाते इत्युक्तिस्वारस्याच्च । एवं च तद्विषयतया तत्र स्पष्टेवेति । नन्वेवमपि "अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । एवं तस्य प्रकुर्वीत श्राद्धं पिण्डोदकक्रियाम् ॥ बह्वीनामेकपत्नीनामेष एव विधिस्स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥ " इति बृहत्पराशरोक्तिविरोधएवेति चेत्—न—आशयानवबोधात् । तथाहि तत्र पूर्वार्धस्योक्त एवार्थः—तत्तुल्यत्वात् । अपुत्रस्य पितृव्यस्य भ्रातृजस्तत्पुत्र भवेदित्यन्वयः । अपुत्रपितृव्यत्वावच्छिन्नस्य भ्रातुस्सुता तस्यापि पितृव्यत्वावच्छिन्नस्यापि पुत्रो भवेदित्यर्थः—तदेकवाक्यत्वात् । सर्वं वाक्यमिति न्यायेन व्याख्याने तूक्तविरोधः शास्त्रान्तरविरोधश्च स्पष्ट एव । भ्रातृजः एकोऽपि । अत एव तदेकवाक्यता । अपुत्रस्येत्यनेन पुत्रसत्त्वे न तथेति सूचितम् ; अत एव पूर्वं तथा व्याख्यातम् । तद्व्याख्यानानुरोधेन पितृव्यस्य भ्रातृज इत्यनेनोभयसंबन्धः प्रागुक्तरूपः सूचितो भवेदित्यपि प्राग्वत् । अत्र पितृपत्न्यः सर्वा मातरस्स्मृता इतिवत् प्रागुक्तरूपपुत्रकार्यकारित्वं विधीयते। तेन तदेकवाक्यता इष्टसिद्धिर्दोषाभावश्चेति सिद्धम् ।नन्वेवमप्युत्तरार्धस्य का गतिरिति चेत् अत्रोच्यते—पूर्वार्धेन केषांचित् पुत्रकार्याणां सिद्धया तदर्थं तत्परिग्रहं प्रतिपाद्य प्रसङ्गाद्विषयविशेषे पिण्डादिरूपकार्यसिद्धिरपि अत एवेत्याह—स एवेति,—बुद्धिस्थो विलक्षणभ्रातृपुत्र एवेत्यर्थः । तस्य—तस्यापि। पितृव्यत्वावच्छिन्नस्यापि कुर्वीतेत्यनेन तस्य स्वधर्मत्वं सूचितम् । श्राद्धमेकोद्दिष्टादि । पिण्डपदेन दशसु दिनेषु दीयमानाः । उदकमञ्जलिदानादि । क्रियापदेन नाग्निसंस्कारादि । यद्वा क्रियापदेन कर्मधारयः । अत एव क्रियालोपादित्येव मनुनोक्तम् । तथा चोत्तरार्धं प्रागुक्तक्रमेणौरसादिभ्रात्रन्ताभावविषयम् ।

१.महाभा० आ० ७४. १०९. । २. प. फ. ब. यैव सो० । ३. प ब. यानुरोधा० । ४. प. फ. ब. त्रस्य भ्रा० । ५. प. फ. ब. धेन पितृपत्न्यः स०

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

एवेन गोत्रजादिव्यवच्छेदः । यद्वा भ्रातुस्सुतानां बहूनां सत्त्वेऽपुत्रपितृव्येण कनिष्ठस्य तस्यैव दत्तकत्वेन पुत्रीकरणे तद्विषयम् । एवेन पत्न्यादिव्यवच्छेदः । यद्वा अविभक्तभ्रातृसुतविषयम् । यद्वा विभक्तसंसृष्टाभ्रातृसुतविषयम् । अत्र पक्षद्वये यथा पत्नीसत्त्वेऽपि दायहरत्वं भ्रातुः, तथा पत्न्यादिसत्त्वे भ्रात्रभावे तस्या धनहारित्वेऽपि पिण्डदानादौ तस्यैवाधिकारो नांशहरणप्रयुक्तोऽन्यस्य तत्र भ्रातृसत्त्वे जीवत्पितृकनिषेधबाधकमिदं विशेषविहितत्वात् । अत्र पक्षे यथा "तस्य भ्रातृसुतश्चक्रे" इत्यादिना न विरोधस्तथोक्तं प्राक् । यद्वा इदं तादृशगतपितृकविषयकमेवास्तु । सर्वथा पत्न्यादिरेव व्यवच्छेद्यः । वस्तुतस्तु द्वादशविधपुत्राभावे पत्न्यादिसत्त्वे तेषां यथाक्रममुक्तरीत्या दायहरत्वेऽपि श्राद्धादिकमपि वंशाविच्छित्त्यादिवत् भ्रातृसुतेनैव कार्यमिति तदर्थमपि दत्तकपरिग्रहो नेत्यनेन प्रतिपाद्यत इति न पूर्वतो वैरूप्यम् । न च "यश्चार्थहरस्स पिण्डदायी" इति विष्णुस्मृतिविरोधः—तद्धाधनार्थमेवास्य प्रवृत्तेः । तथा च तत्र पुत्रः पितृवित्तेत्यत्र पुत्रपदेनैकादशप्रतिनिधिवदेतस्यापि ग्रहणेनोक्तनियमस्य तदन्यविषयत्ववदेतदन्यविषयत्वमपीति न तद्विरोधः । तत्राऽपि पितृवित्ताभावेऽपीत्यस्य तस्य निर्धनत्वेन तदसत्त्वेऽपीतिवदुक्तक्रमेण स्वस्याधिकारेऽपि तत्सत्त्वेनाधिकारेण तदप्राप्तावपीत्यर्थः । न चैवमपि कथं तस्य पितृत्वं तस्य साक्षज्जनक एव प्रसिद्धेरिति वाच्यम् "पितरो यत्र पूज्यन्ते पञ्चैते पितरस्स्मृताः ।" इत्यादौ साक्षाज्जनकभिन्नेऽपि पितृशब्दस्य प्रयोगात् । तथा च यन्निरूपितृपुत्रत्वं तत्कार्यकरत्वं च तस्येति तत्र ग्रहणमिति न दोषः । तथा च तस्य निर्धनत्वेऽपि तथा सधनत्वे तदीयौर्ध्वदेहिकाद्युपयोगितावत्पर्यन्तं तद्वृत्युपयोगिच तस्मै दत्त्वा अवशिष्टमधिकारिणा ग्राह्यम् । अत एव वित्ताभावेऽपीत्युक्तम्, न त्वंशाभावेऽपीति । अत एव च "अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत्॥" इति कात्यायनेनोक्तम् । न चैवमपि "पत्ये दद्याच्च सा पिण्डम्" इति वृद्धमनुविरोधः —तस्या अंशहरत्वेऽपि तद्दातृत्वपरत्वस्य तस्योक्तत्वेन तद्वैपरीत्यपरतया अत्र पक्षद्वये उक्तत्वादिति वाच्यम्—तस्य सङ्कल्पाग्निदानमात्रपरत्वात् । अत एव "पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम् । लभेत्पतिव्रता नारी धर्म एष सनातनः ॥ जङ्गमं स्थावरं सर्वं कुप्यं हेम रसांबरम् । आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम् ॥ पितृव्यगुरुदौहित्रान् भर्तुस्स्वस्त्रीयमातुलान् । पूजयत्केव्यपूताभ्यां वृद्धांश्चाप्यतिथींस्त्रियः ॥" इति प्रजापतिः सङ्गच्छते । किञ्च तथात्वेऽमन्त्राकक्रियापत्तिः सा चोक्तरीत्या तथा संभवति न युक्ता । अत एव— "सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम् ।" इति भविष्यपुराणे मार्कण्डेयपुराणे च, "कुलद्वयेऽपि चोत्स-

१. भ. द्धादिपरिग्रहो।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

न्ने स्त्रीभिः कार्या क्रिया नृप।" इति विष्णुपुराणं, "कुलद्वये समुच्छिन्ने स्त्रीभिः कार्या क्रिया नृप।" इति भारतं, "सर्वेषां पुत्रहीनानां स्वभर्तृणाममन्त्रकम्। सर्वबन्धुविहीनस्य पत्नी कुर्यात्सपिण्डनम्॥" इति स्मृत्यन्तरं च सङ्गच्छेते। अत एव तत्कर्तृकमग्निदानमात्र समन्त्राकमित्युक्तं स्मृतिषु। तथा च कात्यायनः—"असंस्कृते न पत्या च ह्यग्निदानं समन्त्रकम्। कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि॥" इति। अत एव च "अपुत्रस्य स्त्रिया कार्यं पिण्डं श्राद्धं तथोदकम्। क्रियालोपो न कर्तव्यः प्रेतस्य गतिकाङ्क्षिभिः॥" इति बोधायने क्रियालोप इत्याद्युक्तम्। अत एव च "पितृमातृसपिण्डैस्तु सामानसलिलैस्तथा। तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा॥ पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः। दौहित्रैर्वा नरश्रेष्ठ कार्यास्तु तनयैस्तथा॥" इति विष्णुपुराणे, पराशरेण पुत्राद्यैरेवे त्युक्तम्। तस्य च भ्रातृसन्तत्यन्तैरित्यर्थः। "पुत्रः पौत्र प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।" इति तेनैवोक्तत्वादिति केचित्। वस्तुतस्तु द्वितीयपक्षे शङ्काया एवाभावेऽपि प्रथमपक्षोक्तरीत्या अत्र सर्वाभाव इत्युक्त्या तस्य द्वादशपुत्राद्यभावे तादृशभ्रातृसुतयोरभावे चेत्यर्थेन कुलद्वयोच्छेदापरपर्यायेण तस्य सधनत्वे निर्धनत्वे च पत्न्यैव कार्यमिति परत्वं वृद्धमनोः तदप्युक्तरीत्या कुलद्वयोच्छेदे तावन्मात्रं समन्त्रकमन्यदमन्त्रकमेतदर्थमेवं "अपुत्रा पुत्रवत्पत्नी" इत्यातिदेशस्तथा च तदर्थं धर्मपुत्रो न विधेयः कुलद्वयान्तर्गतस्य कस्यचित्कनिष्ठस्य तत्त्वे तु तावन्मात्रे समन्त्रकं तया कार्यं अन्यदन्यद्वारा समन्त्रकमेव करणीयमिति न कश्चिद्विरोध इति बोध्यम्। एतेन दुहिताऽपि तादृशसद्भावे निरस्ता। एवं दौहित्रोऽपि सगोत्रसद्भावे भिन्नगोत्रस्य तदनधिकारात्। अत एव "पुत्राभावे सपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ" इति गौतमः सङ्गच्छते। अत एव न च दद्युरिति बहुवचनेन उदकदानवत् सर्वैः पिण्डदानं कार्यमित्याशङ्कनीयं किन्तु पुत्रेणैव कार्यं तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन तदभावे मातृसपिण्डादिना कार्यमिति विज्ञानेश्वरेण व्याख्यातमाशौचप्रकरणे। न चैवम् "असगोत्रस्सगोत्रो वा यदिस्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात स दशाहं समापयेत्॥" इति ब्रह्मपरिशिष्टस्य "असगोत्रस्सगोत्रो वा योऽग्निं दद्यात्सखे नरः। सोऽपि कुर्यान्नवश्राद्धं शुद्धयेत्तु दशमेऽहनि॥" इति दिवोदासीयस्य च का गतिरिति चेत् पुत्राद्यसन्निधानाविषयं तदिति गृहाण। न चैवं प्रागुक्तमनुविष्णुविरोध इति वाच्यम्—तस्यैतदभावविषयत्वात्। न च विनिगमना-

---

१. ब. तिभार०। २. (?)। ३. भ. त्राद्यैरेवचोत्तराः च भ्रातृ० (?)। ४. प. फ. ब. व अपुत्रव०। ५.—१५.१३.४.।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

विरहः पिण्डाधिकारिक्रमबोधकवाक्येषु प्रागुक्तेषु पुत्रः पौत्रः पत्नी भ्रातेत्यादिषु तदनन्तरं तदनुक्तेरेवं विनिगमिकायास्सत्त्वात् । न च यश्चेति विष्णूपोद्बलितपत्नीतिमूलोक्तक्रमस्य प्राबल्यं तदपेक्षया पुत्रस्येत्याद्युपोद्बलितप्रागुक्तवाक्यीयपिण्डदानादिक्रमस्यैवान्तरङ्गत्वेन प्राबल्यात् । न च पौत्रदौहित्रयोरित्यादिप्रागुक्तमनोः तस्येतोऽप्यन्तरङ्गत्वम्—भ्रातृणामित्याद्युक्त्याऽस्य पुत्रस्यानियमत्वेन ततोऽप्यन्तरङ्गत्वात् । अत एव उक्तवाक्यात् दौहित्रसत्त्वेऽपि सापत्न्यपुत्रस्यैव क्रियाकरणाचारः सङ्गच्छते इति दिक् । पित्रोस्तु प्रागुक्तरीत्यैव निरासः। नन्वेवमपि भ्रातृतत्पुत्रसमवाये उक्तरीत्या द्विविधया क्रमेण तयोः प्राप्तिरिति चेत्—शृणु । "नानुजस्य तथाग्रजः" इति बोधायनाद्युक्तनिषेधेन पिण्डाधिकारक्रमबोधकवाक्येषु भ्रातृपदस्य कनिष्ठभ्रातृपरत्वस्यावश्यं वक्तव्यत्वेन तयोरुक्तरीतिद्वयं न क्रमसत्त्वेऽपि भ्रातृणामित्यादावेकशब्दस्य प्राथमिकतया ज्येष्ठपरत्वेन तस्यानधिकारेण तद्विषयमिदमित्यविरोधः । यदि तु पत्नी भ्रातेति पुत्रः पौत्र इति च न तत्र क्रमबोधकं किन्तु तत्स्वरूपबोधकम् । एवं च न दोषलेशः । क्रमस्तु दायहरणीय एवोक्तविष्णुवाक्यादित्युच्यते । तदेकशब्दस्य तत्र सङ्ख्यार्थकत्वेनासङ्कोचेन तत्सत्त्वेऽपि सुत एवाधिकारीत्यनेन बोध्यते । एवं च भ्रातृणामित्यादि तत्र बहुवचनं[२] वारुणानितिवद्यथासंभवप्राप्तानेकत्वानुवादः।वस्तुतस्तु"हलोऽनन्तरा" इतिवदेकशेषस्तत्र बोध्य इति न दोष इति तत्त्वं बोध्यम् । एवं च "नापुत्रस्य लोकोऽस्ति" इत्यादिशास्त्रबोधितस्यापुत्रत्वप्रयुक्तदोषस्य निवृत्त्यादि प्रागुक्तं द्वादशविधपुत्रभिन्नेनापि भ्रातृसुतेनापुत्रस्य पितृव्यस्य भवतीति मन्वेकवाक्यतया यथा पूर्वार्धेन प्रतिपाद्यते । अत एव सुते जाते पुत्रवान् भवेदिति जनिसत्तामात्राभ्यां तेषां पुत्रवत्त्वसङ्कीर्तन तथोत्तरार्धेन पिण्डादिरूपकार्यमपि तत एव तस्य भवतीति अपूर्वं प्रतिपाद्यते । अत एव "सपितुः[४] पितृकुल्येषु ह्यधिकारो न विद्यते । न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥" इति कात्यायनस्य नात्र प्रवृत्तिः । तथा च तदुपयोग्यंशहरत्वमपि तत्सत्त्वे तदभावे सिद्धम् । युक्तञ्चैतत् स्वपुत्रेणेव भ्रातृसुतेनापि पिण्डादिनिर्वाहस्य समस्तपितृणां वंशविच्छेदपरिहारस्य ऋणापाकरणस्य परलोकस्य च संभवात् । एवं च तदर्थं केवलं भ्रातुष्पुत्रवतोऽपुत्रस्य दत्तकादिस्वीकारप्रवृत्तिनिरासः । एवं सति मन्वादिवाक्यस्य तत्परत्ववत् पिण्डदानादिपरत्वमपि[५] बोध्यम् । अत एव तदेकवाक्यता सर्वतः सिद्धा । एवं सति न कस्यापि विरोधोऽनेन, नापि मिताक्षराविरोधो नापि द्वादशसङ्ख्याविरोधो नापि मन्वादिवाक्ये क्रियाद्यध्याहारजदोषो नापि तत्स्थाननिवेशानुपपत्तिः । पुत्रत्वेनाकृतानां भ्रातृसुतानां[६]

१ (?) । २. भ. नं तावतो वारु० । ३. अ०. १. १. ७. । ४. प. ब. पितुः पि० । ५. भ. ण्डपर० । ६. प. फ. सुतानां तु तेषां ।

Cole.: Ch. II, Sec. vii, § 9

## बालंभट्टी

पत्न्यादिसत्त्वे तदभावे पुत्रकार्यऋणापाकरणादिकारिणामपि वचनाद्रिक्थग्रहणानधिकारसंभवात् तथा कृतानान्तु तेषां भवत्येव । ततः प्राक् तदधिकारः पत्न्यादितः पूर्वं मदीयपिण्डदानरिक्थाधिकारी कश्चिद्भवेदिति कामनायां भ्रातृसुतस्यैव दत्तकविधिना स्वीकार उचितं इत्यनेन सूचितं भवति। उक्तफलजनकतया पुत्रसदृशस्यैव तस्य पुत्रप्रतिनिधित्वेन स्वीकरणमुचितामिति षाष्ठप्रतिनिधिन्यायसिद्धमेवानेन व्यञ्जितं च भवतीत्यलम् । एतेन मनुवाक्यं प्राशस्त्यपर पराशरवाक्यं तु भ्रातृव्येण पितृव्यपार्वणश्राद्धमवश्यं कर्तव्यमित्येवंपरम् । पराशरेणैव तदग्रे "पार्वणं तेन कार्यं स्यात् पुत्रवद्भ्रातृजेन तु। पितृस्थाने तु तं कृत्वा शेषौ (?) पूर्ववदाचरेत् ॥" इत्यभिधानान्न तत्पुत्रत्वप्रतिपादकम् उभयं त्रयोदशपुत्रत्वापत्तेरित्यपास्तम् , --विधित्वादिसंभवरहितस्य यथाकथञ्चिद्विधिसंसृष्टस्यान्यथानुपपत्त्या द्विविधया शक्यार्थस्य प्रकृतानुपयोगेन वाक्यस्य लक्षणया प्राशस्त्यपरत्वस्य पूर्वमीमांसायां प्रथमस्य द्वितीये "वायुर्वै क्षेपिष्ठा देवता " इत्यादौ प्रतिपादितत्वेनात्रातथात्वेन[1] तदसंभवात् ; अत एव तदकल्पनात् ; अत एव च संसृष्टत्वाच्च । न चापुत्रेणेवेत्यादिविधायकं—तस्य पुत्रप्रतिनिधि-[2]त्वस्यैकादशस्यैव सत्त्वात् । तथा च "क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥" इति[3] मनुः । पुत्रप्रतिनिधीन्—औरसपुत्रिकाप्रतिनिधीन् । तेन तयोरभावे तदुपादानं मुख्याभावे प्रतिनिध्युपादानस्य शास्त्रार्थत्वात् । अत एव बृहस्पतिः—" आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः । तथैकादश पुत्रास्स्युः पुत्रिकौरसयोर्विना ॥" इति । तेन तयोरसत्त्व एव एते भवन्ति अत एवोक्तं— " सन्तानकारणं तेषामौरसः पुत्रिका तथा ।" इति । एतेन सर्वाभावे धर्मपुत्रपरं तद्वयासयमवाक्यम्--" अपुत्रेण[4] सुतः" इति । यादृक् तादृक् सपिण्डोऽसपिण्डो वा सजातीयोऽन्यजातीयो वा शूद्रान्य इति तदर्थ इति मिश्ररत्नाकराद्युक्तमपास्तम्—तस्य द्वादशपुत्रविधिनोपसंहारात् । अत्र " पुमांस एव पुत्रा मे जायेरन्" इति सूत्रे " पुमांसं पुत्रमाधेहि" इत्यादिश्रुतौ च पुत्रपदस्य कन्यावाचित्वदर्शनात् कन्यानामपि दानप्रतिग्रहौ स्त इति कृष्णमन्वादयः । वस्तुतस्तु चिन्त्यमिदं—लोकशक्यार्थविरुद्धत्वात्[6] । तत्र विशेषणं त्वतिशयितपुंस्त्वबोधनाय तत्त्वं चानुशिष्टत्वादि । स्पष्टं चेदं शब्दरत्नभावप्रकाशादौ । एवं च सीतायाः कुन्त्याश्च महाभारतादौ दत्तकत्वोपाख्यानात् तथैव शिष्टाचाराच्च[7] तथेत्ययुक्तमिति बोध्यम् । एतेन पुंस्त्वविवक्षा तत्रेति मतमपास्तमित्यग्रे स्फुटीभविष्यति । एतेन मनुवाक्यस्यापि तत्त्वं निरस्तम् । मिताक्षरा तु न विरुद्धा यथा, तथोक्तं प्राक् । एवमन्येषां सुयोजत्वे तथाऽस्तु अन्यथा प्रामादिकत्वमेवास्तु । एवं पराशरस्यापि तत्परत्वं

१. प. फ. ब. तंभव० । २. प. ब. 'न' नास्ति । ३. प. ब. 'पुत्र' नास्ति । ४.—९. १८०. । ५. प. फ. ब. ण इति यादृक् सपिण्डो वा सजा० (?) । ६. प. फ. ब. शास्त्रवि० । ७. भ च एतेन ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

न युक्तम्—संभवति प्रोक्तरीत्या शक्यार्थपरत्वे लक्षणानौचित्यात्। पूर्वार्धस्यैवकारस्योदकक्रिया इत्यस्य च भ्रान्तप्रलपितत्वापत्तेः। वक्ष्यमाणार्थमात्रप्रतिपादकत्वे च पौनरुक्त्यापातात्। उत्तरार्धस्य विवरणपरतया योजनेऽपि पूर्वार्धे तद्दोषतादवस्थ्यात् पूर्वमध्यमयोः क्रिययोरनधिकारापत्तेः। एकोद्दिष्टे तदापत्तेश्च। न च "सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि॥" इति कात्यानोक्तेः, "सपिण्डीकरणादूर्ध्वं यत्रयत्र प्रदीयते। भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च॥ मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्॥" इति वृद्धवसिष्ठाच्च प्राप्तैकोद्दिष्टबाधनार्थमेवेदमिति वाच्यम्—"पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः॥" इति चतुर्विंशतिमतविरोधापत्तेः। न चात एव तद्यथा कर्त्रपेक्षया कनीयःपितृव्यादिविषयमेवं तदपि ज्येष्ठपितृव्यविषयमिति वाच्यम्—सामान्यस्मृतेः सङ्कोचितन्यायेन मानाभावात्। पूर्वं तेषां मध्ये कनिष्ठपरत्वस्य उक्तत्वेऽपि कर्त्रपेक्षया तत्परत्वस्यानुक्तत्वेन तदविरोधात्। अत्र गुरुः मन्त्रोपदेष्टा विद्याप्रदाता च। मातृपदं च मातृसपत्नीपरं—जनन्याः पार्वणविधानादेकोद्दिष्टविधानानुपपत्तेः। मम तु पूर्ववाक्येन द्वयोरपि तयोः सकलक्रियाप्राप्तावुत्तरक्रिया कथं कार्या ज्येष्ठस्य इत्याकाङ्क्षायां तदेकवाक्यतया तेन तस्यैव पार्वणं विधीयत इति न दोषः। अत एव "अपुत्रस्य पितृव्यस्य श्राद्धादि पितृवद्भवेत्।" इति स्मृत्यन्तरमप्युपपन्नम्। यद्वा इदमुभयपरमस्तु पितृवदाचाराद्व्यवस्था। किञ्च पार्वणश्राद्धमवश्यं कर्तव्यमित्यत्रावश्यशब्दस्याङ्गीकारार्थत्वस्य निश्चयार्थत्वस्य चासंभवेनावधारणार्थत्वस्य वाच्यत्वेन तदेककर्तव्यमित्यर्थः। अथवा तत्कर्तव्यमेवेत्यर्थो वा। नाऽऽद्यः—प्रागुक्तस्मृत्या पितृवदाचारप्राप्तैकोद्दिष्टबोधापत्तेः; नान्त्यः—उक्तरीत्यैव तदकरणे दोषापत्तेरिति दिक्। यदपि नन्वित्यादि, तदपि न—"अपुत्रा पुत्रवत्पत्नी" इत्युशनस्स्मृतेः। पत्न्यां तत्त्वातिदेशेऽपि यथा न तदाधिक्यं, तथाऽत्र तदतिदेशेन तदप्रतिपादकत्वेन तदनाधिक्येन तदविरोधात्। अन्यत्रान्यशब्दः प्रयुज्यमानो विनाऽपि वतिं वत्यर्थं गमयतीति न्यायात्। अस्याप्रतिनिधित्वेन दायग्रहणक्रमबोधकवाक्ये तत्र पाठोपपत्त्या तदविरोधात् पिण्डादौ त्वयमेव ततः प्रबल इत्युक्तम्। किञ्चास्तु तदाधिक्यं न च तत्सङ्ख्याविरोधः—तदाशयानवबोधात्। तथा हि—याज्ञवल्क्येन औरसपुत्रादयो द्वादश पुत्रा गणिताः, ते च प्रागुक्ता एव। हारीतोऽपि—"षडबन्धुदायादाः षड्बन्धुदायादाः स्वयमुत्पादितः औरसः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गृहे गूढोत्पन्न इति बन्धुदायादाः। दत्तः क्रीतकोऽपविद्धः सहोढः स्वयमुपागतः सह-

---

१. भ. तव्याख्याने मा० । २. भ. न सक० । ३. ब. ०तुत्त० । ४. प. फ. ब. यंचोपनयेत्वि (?) । ५ ब. धात् पिण्डा० । ६. प. ब. प्रलय (?) । ७. प. फ ब. यानुरोधात् ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

सादृष्टश्चेत्यबन्धुदायादा इति । यमोऽपि—"पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः । तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥ स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजस्स्मृतः । तृतीयः पुत्रिकापुत्र इति धर्मविदो विदुः ॥ पौनर्भवश्चतुर्थस्तु कानीनश्चैव पञ्चमः । गृहे तु गूढ उत्पन्नः षडेते पिण्डदाः स्मृताः ॥ अपविद्धस्सहोढश्च दत्तः कृत्रिम एव च । पञ्चमः क्रीतकः पुत्रो यश्चोपनयते स्वयम् ॥ इत्येते मुनिभिः प्रोक्ताष्षडदायादबान्धवाः । " इति । औरसादीनभिधाय "एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः । आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥ तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् । " इति देवलोऽपि । औरसादीन् कृत्रिमरहितान् यत्रक्वचनोत्पादितसहितानभिधाय "तेषां यः पूर्वं स श्रेयान् । स एव दायहरः । स चान्यान् बिभृयात्" इति विष्णुरपि । "औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च । कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा । स्वयंचोपगतः पुत्रा द्वादशैते प्रकीर्तिताः ॥ एषां षड्बन्धुदायादाः षडदायादबान्धवाः । पूर्वः पूर्वस्स्मृतः श्रेष्ठो जघन्यो यो य उत्तरः ॥ क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने । श्रेयसः श्रेयसोऽभावे जघन्यस्तदवाप्नुयात्" ॥ इति नारदोऽपि । वसिष्ठोऽपि —"द्वादश पुत्राः पुराणदृष्टाः । स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायामौरसः प्रथमः । तदभावे नियुक्तायां क्षेत्रजो द्वितीयः । तृतीयः पुत्रिका विज्ञायते । पौनर्भवश्चतुर्थः । कानीनः पञ्चमः । " इत्यादि । मनुरपि—" पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः । तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥ औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ " इति । अत्र कैश्चित् पुत्रिकापुत्रं विहाय शौद्रमुररीकृत्य द्वादशत्व मुक्तम् । कैश्चिद्विपरीतमुक्तम् । कैश्चित् कृत्रिमं विहाय तमङ्गीकृत्य तदुक्तम् । न च शौद्रस्यौरसत्वेनैव संग्रहात् पृथगुक्तिर्व्यर्था; अत एव कैश्चित् तस्य गणनं न कृतम्; अत एव " चतुस्त्रिद्व्येकभागास्स्युर्वर्णशो ब्राह्मणादयः । क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ " इति भिन्नजातीयानां विभाग उक्तः; अत एव च "सजातीयेष्वयम्" इत्यत्र कानीनाद्यनुरोधेन सजातीयत्वमुररीकृत्य मूर्धावसिक्तादीनामौरसेऽन्तर्भावं स्वीकृत्य शूद्रापुत्रस्यौरसोऽपि कृत्स्नं भागमन्याभावेऽपि न लभते इति विज्ञानेश्वरेण व्याख्यातमिति वाच्यम्—तस्य तल्लक्षणानाक्रान्तत्वात् । तथा हि—द्विविधस्तावत् शूद्रापुत्रः तत्र "विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशस्त्रियाम् । अंबष्ठश्शूद्र्यां निषादो जातः पारशवोऽपि वा ॥ वैश्याशूद्र्योस्तु

१.—१५. २८—३०. । २—१७. १२. १३. १४. १५. १८. २१. । ३.—९. १५८.—६०. । ४. व्य० १२५. । ५. व्य० १३३. । ६. प. ब. णेनोक्तान्तत्वात् ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

राजान्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणश्शूद्र्यां विन्नास्वेष विधिस्स्मृतः॥" इति मूलेन प्रतिपादित एकः। विष्णुनाऽपि—"यत्र क्वचनोत्पादितश्च द्वादश" इति। वसिष्ठेनाऽपि-शूद्रापुत्र एव षष्ठो भवतीत्याहुः" इति । बोधायनेनापि—"द्विजातिप्रवराच्छूद्रायां जातः कामात्पारशवः" इति । मनुनाऽपि—" यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवस्स्मृतः ॥" इति । द्वितीयस्तु द्विजातेर्दास्यामुत्पन्नः । तत्राऽऽद्यस्य न तदभावेऽपि कृतस्य धनहारित्वम्—"यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽथवा भवेत् । नाधिकं दशमाद्द्यात् शूद्रापुत्राय धर्मतः ॥" इति मनूक्तेः । इत एव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सर्वे धनहरणं सिद्धम् । द्वितीयस्तु "जातोऽपि दास्यां शूद्रेण" इत्यत्र शूद्रग्रहणात् पितुरिच्छयाऽपि नांशं भजेत, नाप्यर्धं, दूरत एव कृत्स्नं; किन्त्वनुकूलश्चेज्जीवनमात्रं लभत इति । औरसलक्षणन्तु मूले—"औरसो धर्मपत्नीजः" इति । वसिष्ठोऽप्युक्तः। विष्णुः "अथ द्वादश पुत्रा भवन्ति। स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः।" इति । देवलोऽपि—"संस्कृतायां च भार्यायां स्वयमुत्पादितो हि यः । औरसो नाम पुत्रस्सः" इति । आपस्तंबोऽपि—"सवर्णा पूर्वशास्त्रविहितां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबद्धाः दायेनाव्यतिक्रमश्चोभयोः।" इति । बोधायनोऽपि—"सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्" इति । श्रुतिश्च "अङ्गादङ्गाच्च" इति । "आधत्त पितरो गर्भं कुमारं संस्करात्जम् । यथेह पुरुषस्याऽऽत्मा तस्मात्त्वमिह जायसे ॥ आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात् । सर्वेत्रा त्रायसे यस्मात् पुत्रस्तेनासि संज्ञितः ॥ " इति च । सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः सुतो मुख्य इत्यत एव विज्ञानेश्वरेण व्याख्यातम्। मनुनाऽपि—"स्वक्षेत्रे संस्कृतायान्तु पुत्रमुत्पादयेत्स्वयम् । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम्॥" इति।एवं च शूद्रापुत्रस्य द्विविधस्यापि तल्लक्षणानाक्रान्तत्वात् पृथगुक्तिः । अत एव मूर्धावसिक्तादीनामौरसेष्वन्तर्भाव इति विज्ञानेश्वरेणोक्तम् । शूद्रापुत्रस्तु औरसोऽपीत्यत्र तु सयौगिको न तु रूढः। केषांचित् ग..नाकरणे बीजन्तु कृत्स्न. धनहारित्वाभावादेव। मूलेन तु "चतुः" इत्यादिना क्षत्रियापुत्रादिवत्तस्य कथनं प्राकृतमेव । मनुनापि पूर्वं पुत्रिकापुत्रस्य "दौहित्र एव च हरेत्" इत्यादिना कथनात्तत्रानुक्तिरिति न न्यूनता । सर्वथा ततः पुत्राधिक्यलाभान्न द्वादशत्वं नियनम् । अत एव च क्षेत्रजाद्यपेक्षया पुत्रिकापुत्रस्याऽऽधिक्ये द्वादशसङ्ख्यातिरेक आप्नोति भवतु को दोषः त्रयोदशोऽयं

१. आ० ९१, ९२. । २.—१५. २७. । ३.—१७. ३८. । ४. ध० २. २. २९—३० । ५.—९. १७८. । ६.—९. १५४. । ७. व्य० ३६. । ८. व्य० १२८. । ९. भ. क्तः देव० । १०.—१५. १.—२. । ११.—ध० २. १३. १—२. । १२. ध० २. २. १४. । १३.—९ २६६. । १४. प. ब. णाक्रा० । १५. प. फ. ब. तुदूषणताक० । १६. व्य० १२५. ।

Cole.: Ch. II, Sec. vii , § 6.

## बालंभट्टी

पुंत्रोऽस्त्विति मेधातिथिना व्याख्यातम् । अत एव विज्ञानेश्वरेण भ्रातॄणामित्यस्य तथाव्याख्याने सङ्ख्याविरोधरूपदोषोद्भावनं न कृतम् । अत एव च बृहस्पतिः —" पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः । सन्तानकारणात्तेषामौरसः पुत्रिका तथा ॥ आज्यं विना यथा तैलं सद्भिः प्रतिनिधिस्स्मृतः । तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना ॥" इति । एवं च तत्र तत्र द्वादशत्वोक्तिस्तत्र तत्र परिगणितानां स्फुटतया सङ्ख्याबोधनद्वारा न्यूनत्वव्यवच्छेदनार्था नाऽऽधिक्यव्यवच्छेदार्था । तथाऽन्येषां यथासंभवमन्तर्भावमभिप्रेत्य वेति न दोषः । अन्यथा तेन तत्र तस्य गणनात्तस्यान्यत्रागणनान्मिथो विरोधः स्पष्टः । एवमेवकारोऽपि वासिष्ठो योज्यः । तस्मात्तदाधिक्ये न दोषः । एतेन कौस्तुभोक्तं तद्दूषणं निरस्तम् । द्वितीयदूषणमपि प्रागेव निरस्तप्रायम् । एवं च यथा सपत्नीपुत्रस्यागृहीतस्यापि पिण्डदानाद्यधिकारित्वात् पितृपत्न्य इत्यादिशास्त्रात् लोकव्यवहाराच्च पुत्रत्वं निर्विवादं, तथा तत्र तत्सहपाठात् भ्रातृसुतस्याप्यगृहीतस्यैव पुत्रत्वं विधीयत इत्युचितम्। मनुग्रन्थेऽपि तस्य तथाबोधकं वाक्यान्तरमस्ति । एवं च तदतिदिष्टस्य वित्तौला[1]भेऽपि तत्राधिकारो यथा, तथा तदतिदेशविषयाणां पत्न्यादीनामन्याभावे तस्य निर्धनत्वे[2] धनलाभं विनाऽपि श्राद्धाधिकारः । एवं च विष्णुवाक्ये पुत्रशब्देन सर्वविधपुत्रो गृह्यते।तत्र अतिदेशवाक्यानि तु "अपुत्रा पुत्रवत्पत्नी" इत्युशनाः, "यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा ।"[3] इति मनुः, "बह्वीनामेकपत्नीनाम्"[4] इति "पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन्यवीयसः । पुत्रवच्चापि वर्तेरन्ज्येष्ठे भ्रातरि धर्मतः ॥"[5] "यो ज्येष्ठो ज्येष्ठवृत्तिस्स्यान्मातेव स पितेव सः ॥"[6] इति चेत्यादीनि बोध्यानि । तदयं निर्गलितोऽर्थः। तत्राऽऽदौ दायग्रहणक्रमः—औरसपुत्रः,तत्पुत्रः, तत्पुत्रः; तत एकादश पुत्रिकापु[7]त्रादयः पूर्वपूर्वाभावे क्रमेण एवं तत्पुत्रादयोऽपि । अत एव मनुशङ्खलिखिताः—"श्रेयसश्श्रेयसोऽलाभे पापीयान् रिक्थमर्हति । बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः॥ "[8] इति। तदभावे पत्नी, ततो भ्राता, ततो भगिनी, ततस्तयोः क्रमेण सुतः सुता च, ततो गोत्रजादय इति । पिण्डदानादौ त्वेवं क्रमः—औरसपुत्रः, तदभावे पुत्रिकापुत्रादय एकादश क्रमेण, ततः पौत्रः, प्रपौत्रश्च, तथा ततः पत्न्यादिसत्त्वेऽपि भ्रातृसुतः, ततो भ्राता, ततः पिता, ततो दौहित्रः, ततः पत्नी, ततो दुहिता, ततो गोत्रजादय इति । इदमपि पुंविषये । स्त्रीविषये तु अनूढायाः पिता, तदभावे भ्रात्रादिः, ऊढायास्तु मुख्यपुत्राभावे पुत्रिकापुत्रः, तदभावे सपत्नीपुत्रः, तदभावे क्षेत्रजाद्याः प्रपौत्रान्ताः, तदभावे पतिः, तदभावे दुहितृदौहित्रौ क्रमेण, तदभावे

१, प. फ ब. त्तला० । २. प. ब. निर्धनला० । ३.—९. १३०. ४.—९. १८३ ५.—९. १०८.। ६.—९. ११०.। ७.—प. ब. स्तैका० । ८.—९. १८४. ।

Cole.: Ch. II, Sec vii, § 6.

बालंभट्टी

पत्युः भ्राता, तदभावे तत्पुत्रः, तदभावे स्नुषा, तदभावे पितृभ्रातृतत्पुत्रादयः पूर्वोक्ता इति बोध्यम्। एतेन पुत्रपौत्रप्रपौत्राभावे भार्या, तदभावे भ्राता, तदभावे तत्पुत्रः, "भ्रातुर्भ्राता" इति वचनात् इति मिश्राद्युक्तमपास्तम्। एवं सति भ्रातृसुतेनोक्तफलसिद्धावपि पत्न्यादितः प्राक् मदीयपिण्डदानरिक्थग्रहणोभयाधिकारी कश्चिद्भवेदिति कामनायां तदर्थं जीवतोर्वाक्यादिकरणार्थं नामसङ्कीर्तनार्थं च दत्तकस्वीकारः। "अपुत्रेणैव" इत्यत्र तु पुत्रपदं मुख्यौरसपरं—तत्यागे मानाभावात्, प्रतिनिधिपदसमभिव्याहारेण तथैव लाभात्, आतिदेशिकपुत्रत्वस्य पत्न्यामपि सत्त्वेन तदाऽपि तद्ग्रहणानापत्तेश्च। तच्च पौत्रादेरुपलक्षणमित्यन्यत्। तत्रापुत्रत्वम् मृतपुत्रत्वं अजातपुत्रत्वं वा "वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च।" इति शौनकोक्तेः। एवेन तादृशपुत्रवतोऽनधिकारस्सूचितः। अत एव "नामसङ्कीर्तनाय च" इति। तत्स्वरूपस्तु मन्वादिभिरुक्तम्— "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमस्सुतः॥" इति। अत्र वाशब्दस्समुच्चये—"वा स्यात्" इति कोशात्। यद्वा तयोरन्यतरग्रहणविकल्पार्थः सः। चं विनाऽपि गामश्वमितिवत् पूर्वत्र समुच्चयो बोध्यः। अभ्यर्हितत्वात् पूर्वं तदुक्तिः। अद्भिरित्यनेनान्यत्रोक्तविधिनोदकपूर्वमित्यर्थकेनान्यथा दत्तस्यातत्त्वं सूचितम्। अत एव "अविधाय विधानं यः प्रतिगृह्णाति पुत्रकम्। विवाहविधिभागं तं न कुर्याद्धनभाजनम्॥" इति वृद्धमनुः। परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्यं न धनदानं; किन्तु तत्र पत्न्यादय एव धनभाजः पिण्डदाश्च—विधिं विना तस्य पुत्रत्वानुत्पादात्। अत एव वृद्धगौतमः—"स्वगोत्रेण कृता ये स्युः दत्तक्रीतादयस्सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते॥" इति। "सपिण्डता तु सर्वेषां गोत्रतस्साप्तपौरुषम्।" इति प्रसक्तं सापिण्ड्यं न विधीयते; किन्तु प्रवराध्यायप्रसिद्धं त्रिपुरुषमित्यर्थः। इदं च द्व्यामुष्यायणदत्तकादिविषयमेव। वस्तुतस्तु इदं निर्मूलमेवेति स्वयं सापिण्डा प्रदीयते। अत एव मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्मै दीयते, स तस्य दत्तकः पुत्र इति विज्ञानेश्वरेण व्याख्यातम्। अत एव "वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्यच।" इति शौनकी विशेषश्रुतिसङ्गतिः। आपदि प्रतिग्रहीतुरपुत्रत्वे इत्यपरार्कः। दुर्भिक्षादौ वा। आपद्ग्रहणादनापदि न देयः दातुरयं प्रतिषेध इति विज्ञानेश्वरः। अत एव कात्यायनः — "आपत्काले तु कर्तव्यं दानं विक्रय एव वा। अन्यथा न प्रकर्तव्यमिति शास्त्रविनिश्चयः॥" इति। सादृश्यं न जातिः किन्तु कुलानुरूपैर्गुणैः।

१. प. फ. व. वे यत्पुत्र भा९। २. प. ब. तदग्र०। ३.—९. १६८.। ४ प. फ. ब. च्चयो बोध्यः। ५. प. फ. ब. षं सापि०।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

एवं च क्षत्रियादिरपि ब्राह्मणस्य दत्तको युज्यते इति मेधातिथिः । जातित एव सादृश्यम् अत एव "सजातीयेष्वयं प्रोक्तः" इति मूलं सङ्गच्छते। क्रीतलक्षणभूतमनुवाक्ये तु तदुक्तमेव व्याख्यातम् । अत एव तत्र हि "सदृशोऽसदृशोऽपि वा " इत्युक्तमित्यपरे । प्रीतिग्रहणं लोभभयातिषेधार्थः तथा च तत्क्रियाविशेषणम् । किञ्च एकः पुत्रो न देयः तथा च वसिष्ठः — "शुक्रशोणितसंभवो हि पुरुषो मातापितृनिमित्तकः तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत ।"न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् न तु स्त्रीपुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः" इति । एवं च पत्न्याः पतिसत्त्वे तदनुमत्यैव दातृत्वादि मृते तु स्वातन्त्र्यम्। न च "रक्षेत् कन्याम्" इति पूर्वाध्याये स्त्रीणां विहिते कर्मण्यपि स्वतन्त्राधिकारनिषेधकमुक्तमिति कथमेतदिति वाच्यम्—पूर्तादौ तासां स्वतन्त्राधिकारस्मरणात्, तस्य तद्रक्षणमात्रतात्पर्यकत्वात् धनस्वामित्वप्रतिषेधकमपि न तत्—"पत्नी दुहितरः" इत्यादिना तासामपि रिक्थग्राहित्वस्मरणात् तन्निषेधे सहाधिकारस्याप्यसंभवात् । न च स्थावरे तस्या अधिकारः—"यद्विभक्ते धनं किञ्चिदाध्यादिविविधं स्मृतम् । तज्जाया स्थावरं मुक्त्वा लभते मृतभर्तृका ॥ वृत्तस्थाऽपि कृतेऽप्यंशे न स्त्री स्थावरमर्हति ।" इति बृहस्पतेरिति वाच्यम्—अस्य वचनस्य जायापदोपेतस्य पत्नीभिन्नासुरादिविवाहोढाविषयत्वेन निबन्धेषु व्यवस्थापनात् । दुहितृराहितपत्नीपरमिदं—दुहितृमती तु स्थावरमपि लभत इति स्मृतिचन्द्रिकायाम् । दायादानुमतिं विना स्थावरविक्रयादिनिषेधपरमिति माधवः । यत्तु कात्यायनः—" मृते भर्तरि भर्त्रंशं लभते कुलपालिका । यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥ " इति, तद्बन्दिचारणाद्यर्थदानादिनिरर्थकप्रतिषेधपरम् । अदृष्टार्थदानतदुपयोग्यधमनादि तु भवत्येव— "जङ्गमं स्थावरं सर्वं हेम रूप्यं रसांबरम् ।आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम् ॥ पितृव्यगुरुदौहित्रान् भर्तुस्स्वस्त्रीयमातुलान् । पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यातिथींस्त्रियः ॥ " इति प्रजापतेः । " सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥" इति नारदोक्तेश्च । एवं च पत्नीति मूलवाक्यं पत्नीपदोक्तया स्थावरसहितसकलरिक्थग्रहणपरमिति प्रागुक्तं युक्तमेव । "क्रयक्रीता तु या नारी न सा पत्नी विधीयते । न सा दैवे न सापित्र्ये दासीनां कवयो विदुः ॥ इति स्मरणात् । भर्तृदत्ते तु स्थावरे न स्वातन्त्र्यम्—"भर्त्रा प्रीतेन यद्दत्तम् " इति नारदेनोक्तेः । एतेन पुत्रप्रतिग्रहे विधवाया नाधिकार इत्यपास्तम् । एवं तस्यापि तदनुमत्यैव तत् । आपदि तु तदनुम-

१ आ०। २ म० ९. १७४. । ३ प. फ. ब. शुक्रं हि पुरु०। ४. वसि १५. १—५. । ५. प. फ. ब. गुक्तमेव ।

Cole.: Ch II, Sec. vii, § 6.

## बालंभट्टी

त्यलाभे स्वातन्त्र्यमपि प्रागुक्तरीत्या तस्य प्राधान्यात् । तथा अनेकपत्रसद्भावे ज्येष्ठो न देयः —"ज्येष्ठेन जातमात्रेण" इति तस्यैव पुत्रकार्यकरणे मुख्यत्वात् । स च भ्रातृसुतसंभवे अन्यो न ग्राह्यः—प्रागुक्तषाड्न्यायात् । तस्य प्रतिकूलत्वे तु सपिण्डादिक्रमेणान्येऽपि ग्राह्याः । तत्रापि द्विजे भागिनेयदौहित्रवर्जं विरुद्धसंबन्धापत्त्या पुत्रत्वबुद्ध्यनर्हभ्रातृपितृव्यमातुलवर्जं च शूद्रे तु भागिनेयदौहित्रावपि — "ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसङ्ग्रहः । तदभावेऽसपिण्डेषु अन्यत्र तु न कारयेत् ॥ ब्राह्मणादित्रये नास्ति भागिनेयस्सुतः क्वचित् । दौहित्रा भागिनेयश्च शूद्राणां वाऽपि दाप्यते॥" इति"नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन । बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥" इति च शौनकः । अत्र नैकपुत्रेणेत्येव सिद्धे बहुपुत्रेणेत्युक्त्या द्विपुत्रेणापि न कार्यमिति सूचितमिति कश्चित् । तन्न—तस्य सर्वथा निषेधः अस्य तु तदावश्यकत्वमित्येतदर्थं तदुक्तेः । अत एव तत्र कदाचनेति अत्र प्रयत्नतः इति चोक्तं स्वरसतस्सङ्गच्छते । एवं च तस्य तद्विधिनिषेधोभयाविषयत्वेऽपि वचनान्तरात् आपदि दाने न दोष इति बोध्यम् । न च प्रतिकूलत्वादेस्तत्त्वं क्वापि न दृष्टमिति वाच्यम्—ऋश्यशृङ्गोक्तौ "आनुकूल्याद्वा पुत्रस्य" इत्युक्तत्वात् । "अपुत्रा योषितश्चैषां भर्तव्यास्साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥" इति योगीश्वरोक्तेः । "पितृद्विट्पतितषण्डो यश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥" इति अत्रिनारदावपि । अत एव "एक एवौरसः" इति, "षष्ठन्तु क्षेत्रजस्यांशम्" इति च मनुवाक्यं दत्तकादेरौरसप्रतिकूलत्वनिर्गुणत्वाभिप्रायेण व्याख्यातं विज्ञानेश्वरेण । किञ्च जीवतोर्वाक्यकरणरूपफलसंभवस्ततः । एवं च एकास्मिन् औरसे अन्यस्मिन्वाऽतादृशे सति अन्येऽपि ग्राह्या यावतोक्तफलसंपत्तिर्भवति । अत एव विश्वामित्रादीनां पुत्रवतामपि देवरातादेः पुत्रपरिग्रहः श्रौतादिस्सङ्गच्छते । किञ्च तस्य स्वयंदत्तत्वेन दत्तात्मत्वम् । अत एव परेच्छया तदङ्गीकारो न तु स्वस्य तदर्थं प्रवृत्तिः । एवं च तत्र तथैव । अत एव बह्वृचब्राह्मणे "यथैवाङ्गिरसस्समुपेयां तव पुत्रताम्" इत्यादिना "अधीयत देवरातो रिक्थयोरुभयो ऋषिः ।" इत्येवोक्तम् । एतेन पुत्रवतोऽपि पुत्रानुज्ञया पुत्रान्तरपरिग्रहः। यत्रा पिता सञ्जानीते तस्मिंस्तिष्ठामहे वयम् । पुरस्तात्सर्वे कुर्महे त्वामन्वञ्चोवयंस्स्मसीति श्रौतलिङ्गादित्यपास्तम् —उक्तयुक्तेः तस्य ज्येष्ठीकरणे लिङ्गत्वाच्च । अत एव "वत्सावतेत्वपुत्राय वसुदेवः प्रतापवान् । अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम् ॥ कण्डूषाय सपुत्राय विष्वक्सेनो ददौ सुताम् ।" इति हरिवंशे । रामायणे

१. प. ब. ज्येष्ठेन । २.—९. १०६.। ३. प. फ. ब. त्रेणेत्येवः(?) ४. व्य० १४२. ।

Cole.: Ch. II, Sec. vii, § 6.

## बालंभट्टी

अयोध्याकाण्डे सीतां प्रति श्रीरामानुशासने षड्विंशे--" औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः । समर्थान्संप्रगृह्णन्ति परानपि नराधिपाः ॥ " इति । तत्रैव कैकेयीवाक्यं दशरथं प्रति--" तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् । असमञ्ज इति ख्यातं तथाऽयं गन्तुमर्हति ॥" इति । तत्रैव सप्तोत्तरशततमे भरतं प्रति श्रीरामवाक्यम्—"एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः । तेषां वै समवेतानामपि कश्चिद्गयां व्रजेत् ॥" इति । " एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥" इत्यत्रिः। एवं च विधेयविशेषणमप्येकत्वं पुत्रप्रतिनिधिरित्यत्राविवक्षितम्—" श्रेयांसं न प्रबोधयेत् " इत्यादौ तन्मर्यादाया उल्लङ्घितत्वाच्च । एतेन " पुरोहितं वृणीते अध्वर्युं वृणीते " इत्यादाविव पुत्रप्रतिग्रहविधावपि प्रतिगृहीतस्य पुत्रकार्ये उपादेयतया तद्गतपुंस्त्वैकत्वयोर्विवक्षा । तेन एक एव पुमानेव च ग्राह्य इति मतमपास्तम् । अत एव च "श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति । बहवश्चेत्तु सदृशास्सर्वे रिक्थस्य भागिनः ॥" इति मनुः । औरसादीनां सर्वेषां पुत्राणां प्रकृतत्वादौरसादीनुपक्रम्य "तेषां पूर्वः पूर्वःश्रेयान् स एव दायहरः" "स चान्यान् बिभृयात्" इति विष्णुवचनादौरसादीनां पुत्राणां पूर्वपूर्वाभावे परः परः रिक्थमर्हति पूर्वसद्भावे तु परसंवर्धनं स एव कुर्यात् इत्येतदप्यपवादेतरविषयम् । यदि तु समानरूपा बहवः पुत्राः, तदा सर्वे एव विभज्य धनं गृह्णीयुरिति व्याख्यातारः । इदं च नौरसपरम्—" एक एवौरसः पुत्रः" " ऊर्ध्वं पितुश्च मातुश्च " इत्यादिनैव तद्विभागोक्तेः ; किन्तु गौणानेकपरम् । अनेन दत्तवत् कृत्रिमस्यापि सिद्धिः । न च " दत्तौरसेतरेषान्तु पुत्रत्वे न परिग्रहः ।" इति शौनकेन पुत्रान्तरस्य कलौ निषेधात् कथं कृत्रिमसिद्धिरिति वाच्यम्--दत्तपदेन तस्याप्युपलक्ष्यत्वात् , "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकस्सुतः ।" इति कलिधर्मप्रस्तावे पराशरस्मरणात् । न चैवं क्षेत्रजस्यापि तदापत्तिः—नियोगनिषेधेनैव तन्निषेधात् । तत्र क्षेत्रज इति त्वौरसविशेषणम् । यदि तु तत्र क्षेत्रजवत् कृत्रिमक इति दत्तस्य विशेषणममुख्यत्वसूचनद्वारा प्रतिनिधित्वसूचकं, तदा मास्तु सः । दत्तकांशे तु न विवाद इति दिक् । सचायं दत्तको द्विविधः—अद्व्यामुष्यायणो द्व्यामुष्यायणश्च। तत्राऽऽद्यो "माता पिता वा" इति "गोत्ररिक्थ" इति च मनूक्तः। कृतोपनयनो दत्तः प्रतिगृहीत्रा च तदुत्तरविवाहादिसंस्कारैः संस्कृतः स द्व्यामुष्यायणः । तत्त्वं च तच्छाखाद्वयगोत्रद्वयभागित्वमेव । एवं यः सोपाधिकदानेन दत्तः प्रतिगृहीत्रा जातकर्मादिभिः संस्कृतः, सोऽपि

---

१. अ० २६. ३६. । २. अ० १०७. १३. । ३.—९. १८४. । ४.—१५. ३०. । ५. म० ९. १६३. ६ ग. ऊर्ध्वं कृत्रिमस्या० (?) ७. म० ९. १०४. । ८. ग. कमिति तन्न फलाभावात् तदा । ९.— ९ १६८ । १० —९. १४२. ।

Cole.: Ch. II, Sec. vii. § 6.

बालंभट्टी

तथा । तत्र प्रतिग्रहकाले या विद्यमानैका अनेका वा, सा मुख्यमाता तदीया । तदीया एवैकोऽनेके वा मातामहाः । एकासत्त्वे तत्परिग्रहतोऽन्यापरिणये सा सापत्नमाता न तु तदीयमाता । मातामहोऽप्येवम् । तदा कस्या अप्यभावे ततः परिणये बोध्यम् । एवं क्षेत्रजोऽपि द्विविध इति प्रागुक्तम् । एवं च पूर्वोक्तं युक्तमेव । अत एव एकौरसत्वेऽपि ऋतौ पुनर्गमनमन्यथा तदपि न स्यात् । अत एव "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥ द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः । अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्मतस्तयोः ॥" इति क्षेत्रप्रकरणे मनुः । अत्र ईप्सितेत्युक्तिरकार्यक्षमपुत्रोत्पत्तौ पुनर्गमनार्था । अत एव "अर्थद्रव्यविरोधे अर्थो-द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात्" इत्यधिकरणे यदा पुनरतितनुत्वान्नियोजनस्या-प्ययोग्या खदिरलता भवति, तदाऽपि किं मुख्यत्वात् सैवोपादेया?न । नहि तयोपात्तयाऽपि काश्चिदर्थः—कार्याक्षमत्वात् । अतस्तादृशे लब्धेऽपि तदनादरेण प्रतिनिधिरेव खदिरः कार्य-क्षम उपादेय इत्युक्तम् । अन्ये पुनराचार्यनियोगात् पुत्रोत्पादनविधिज्ञाः अपुत्र एकपुत्र इति शिष्टप्रयोगादनिष्पन्नं नियोगप्रयोजनं मन्यमानाः स्त्रीषु पुत्रोत्पादनं द्वितीयं धर्मतो मन्यन्ते इति तद्व्याख्यातारः । तस्मात्तत्रैकत्वं यदि विवक्षितं स्यात्, तर्हि तदसङ्गतिर्निषे-धासङ्गतिश्च स्पष्टैव इति बोध्यम् । अत एव बहुपुत्रत्वविधिः—"एतमुपप्ररमगाधाशिष्टं तस्मान्मामवत्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मींस्त्वं पर्यावर्तय बहवो वैते भवि-ष्यन्ति छन्दोगाः"। अस्यचायमर्थः कौषीतकिर्नाम मुनिः स्वयमादित्यमण्डलमेक एवोपासीत उद्गानं कृत्वा तत्फलत्वेन पुत्रमेकं प्रतिलभ्य तमुवाचाहमेक एवाऽऽदित्यं ध्यानमकार्षं तस्मा-द्दोषान्मम त्वमेक एव पुत्रोऽसि एकपुत्रत्वं च न प्रशस्तम् अतस्त्वं बहुपुत्रताय रश्मीन् बहूनु-पास्ति वेलायामावर्तयेति । महाभारतमपि प्रागुक्तम् । "इमां त्वमिन्द्रमीढ्वस्सुपुत्रां सुभगां कृणु दशास्यां पुत्रानाधेहि" इत्यादिमन्त्राश्च । एवं सति बहुपुत्रत्वविधिमुपोद्बलयन्ति । एवं च "ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते ।" इति कौर्मं तादृशपुत्रपरतया योज्यमिति न विरोधः । अत एव "यादृशं फलमाप्नोति कुप्लवैस्सन्तरञ्जलम् । तादृशं फलमाप्नोति कुपुत्रैस्सन्तरंस्तमः ॥" इति मनुः । "ज्येष्ठेन जातमात्रेण" इति मनोरनु-शिष्टत्वरूपज्येष्ठत्ववत्तया जातमात्रेणेत्यर्थादपि न तद्विरोधः । एवमन्यत्रापि यथासंभवं बो-ध्यम् । मेधातिथिना तु उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति । तथा नापुत्रस्य लोकोऽस्ति इत्यलोकता परिहृता । तथा "प्रजया पितृभ्यः" इति श्रुतेः

१.—९. ५९. ६०. ६१. । २ भ. र्णां भवति (?) ३. फ. भ. प्रवादा० । ४. प. फ. बहुपुत्रपरत० । ५.—९. १६१ ६.—९. १०३. । ७. प. ब. पज्येष्ठेन सं० भ. ततश्च ।

बालंभट्टी

पुत्रेण जातमात्रेण पितॄणामनृणश्चेत्युक्तम् । यस्मिन्नृणमिति तु साधारणमत एव तत्र यस्मिन् जाते ऋणं शोधयति येन जातेनामृतत्वं च प्राप्नोति ; तथा च श्रुतिः—"ऋणमस्मिन्" इति। स एव पितुः धर्मेण हेतुना जातः पुत्रो भवति तेनैकेनैव ऋणापनयनाद्युपकारस्य कृतत्वात् । इतरांस्तु ऐच्छिकान्मुनयो जानन्ति इति तेनोक्तम् । सुब्रह्मण्याहूतं तु न प्रतिनिधिना किन्तु मुख्येनैव स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिरिति सत्याषाढोक्तः । "जन्मज्येष्ठेन चाऽऽह्वानं सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मनो ज्येष्ठता स्मृता ॥" इत्यौरसप्रकरणे मनूक्तेश्च । मेधातिथिनाऽपि तथैव व्याख्यातं—सत्याषाढोक्तेः । "तन्तवे ज्योतिष्मतीं तामाशिषः" इत्याशीराशंसनमपि तमादापन अत एव श्रुतिः—"यस्य पुत्रो जातः स्यातन्तवे ज्योतिष्मतीम् इति ब्रूयात्" इति दिक् । तस्मात् पुत्रातिदेशा अपि ये सोदरभ्रातृसुतसपत्नीपुत्रादयस्तेऽपि वित्तलाभाभावे पितृव्यसापत्नमातुश्च श्राद्धादिपुत्रकार्यकरणार्हाः । एवं कनीयानप्यग्रजस्याकिञ्चनस्यापि —"अपुत्रस्य पितृव्यस्य श्राद्धादि पितृवद्भवेत् ।" इति स्मृतेः । "ज्येष्ठो भ्राता पितुस्समः" इति च। "पितृपत्न्यस्सर्वा मातरः" इति सुमन्तूक्तेश्च। मनुस्तूभयत्रोक्त एव । एवं पत्नीस्नुषाशिष्यादीनामपि बोध्यम्—"अपुत्रा पुत्रवत्पत्नी" इत्यौशनसात्, "भार्या पिण्डम्" इत्यादिप्रागुक्तेश्च । न चापुत्रपितृव्यादेः पत्न्यां भ्रातृसुते च सति कथं कार्यमिति वाच्यम्—उभयत्र पुत्रत्वातिदेशसाम्येऽपि समन्त्रकामन्त्रकक्रियाकृतभेदस्यापि पूर्वोक्तत्वात् । तेन तत्पुत्रकर्तृकक्रियाप्राप्तावपि अतिदिष्टादुपदिष्टं बलीय इति न्यायेन भार्या पिण्डमित्यस्य साक्षाद्विधायकत्वेन अन्येषां दुर्बलत्वेन तत्र पत्न्यैककार्या क्रिया इति सिद्धान्तात् । न चामन्त्रकत्वापत्तिः—न्यायसिद्धेऽर्थे प्रागुक्तरीत्या सङ्कल्पादौ समन्त्रकत्वेनाग्रे तथात्वापत्त्याविष्टापत्तेः । अत एव "भ्रातुर्भ्राता" इति प्रागुक्तब्राह्मणसङ्गतिरिति केचित् । परे तु भार्यापिण्डमिति तदभावविषयमित्यादि प्रागुक्तमेवेत्याहुः । स्त्रियास्तु पत्या—"भार्या पिण्डम्" इति साक्षाद्विधेः, तदभावे सपत्नीपुत्रेण—"सर्वासाम्" इति वचनात् इति मिश्रादयः । अत्राऽपि तत्त्वं परे तु इत्युक्तमेवेति बोध्यम् । न च "यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथा नृप । तथौर्ध्वदेहिकं कर्म कुर्यात्साधर्मसंस्कृता ॥" इति स्कान्दात्तस्या अपि समन्त्रकक्रियैवेति वाच्यम्—निबन्धाधृतत्वेन तत्रानाश्वासात् । तत्सत्त्वे वा प्रागुक्तकात्यायनैकवाक्यतया अग्निदानमात्रपरत्वात् । एतेन स्कान्दात् सर्वा समन्त्रकक्रियैव । भविष्यपुराणादिकन्तु आसुरादिविवाहोढाविषयमित्यपास्तम् । स्त्रीशूद्रस्थलेऽन्यत्रेष्टापूर्तादावित्थं प्रसिद्धतरम् — उक्तसुमन्तुवाक्यात् । सपत्नीपुत्रे

१.—९. १२६. । २. प. फ. ब. त्वातिदे० । ३. भ. त्यैवका० ।

Cole.: Ch II, Sec. vii, § 6.

## बालंभट्टी

सति भर्तुरन्येषां च नाधिकारः। तथा च दौहित्रादितस्तस्य सापिण्ड्यविशेषादेव बलवत्त्वम्। एवं दौहित्रभ्रातृसुतसमवाये मृतस्य विभक्तत्वे दौहित्रस्य बलवत्त्वस्यांशहरणे सत्त्वेऽपि पिण्डादौ स एव बलवान्। अविभक्तत्वे तु भ्रातृसुतानामेव वांऽशहरत्वादपि। एवं भ्रातृतत्पुत्रसमवाये भ्रातुर्बलवत्त्वस्यांशहरत्वेऽपि तत्र तथैव। पत्नीस्नुषादिविषये वाक्यान्युक्तान्येव। किञ्च दंपत्योर्मिथश्शरीरार्धत्वात् स्नुषादेश्शरीरार्धोपचाराच्छिष्याचार्ययोस्तु पितापुत्रवदुपचारात्। न हि दक्षिणः पाणिरितरस्य पाणेरुपचाराद्विनाऽभ्यङ्गादि करोति। तस्माद्धनलाभं विनाऽप्येतेषां श्राद्धाधिकारः। अर्थहरत्वे तु सुतरां सर्वेषाम्। यस्त्वर्थमादायापि तन्न करोति, स शास्त्रातिक्रमकारित्वात् दण्डयो निन्द्यः परलोकच्युतश्च। कुर्वतान्तु सर्वमिष्टमेव। ये तु धनलाभेच्छां विनैव कारुण्यात् स्नेहाद्वा कुर्वन्ति, तेषामतिपुण्यम्; अकरणे च न प्रत्यवायः—शास्त्रनियमाविषयत्वात्। तस्मात् पुत्राभाव एव सर्वेषां यथाक्रममधिकारः; तथा च व्याघ्रपात्—"पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः। पुत्राभावे तु पत्नी स्यात्" इति। स्मृत्यन्तरमपि—"औरसे सति नान्यस्य श्राद्धादेरधिकारिता। तदभावे तु शिष्यादेः शास्त्राणामेष निश्चयः॥" इति। यदि पुत्रे सत्यप्यन्येषामधिकारः, तदा पत्न्या[1] किं पापमकारि येनासौ न करोतीति शङ्का स्यात्। इयमेव हिंसा तेषां ऋश्यश्रृङ्गेणोक्ता। तस्मात्तदभावे पत्न्यादीनामधिकार इति सिद्धम्। तत्र पत्न्यंशे अपवादः क्वचित्—"अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्तरि। श्राद्धं पिण्डोदकं कुर्याज्जलमेकन्तु पुत्रिणी॥" इति केचित्। वस्तुत इदं निर्मूलमिति बोध्यम्। अत्र सर्वत्र वाक्यान्यन्यान्यपि[2] सन्ति। तत्र तावद्बृहस्पतिः—"प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः। ज्ञातिबन्धुसुहृच्छिष्यैः ऋत्विग्भृत्यपुरोहितैः[3]॥" इति। प्रचेताः—"स्वामिभृत्यकलत्रेषु मातापित्रोर्गुरौ तथा। ऋत्विङ्मित्रे तथा शिष्ये श्राद्धं कार्यं प्रयत्नतः॥" इति। वृद्धशातातपः—"मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च। शिष्यश्चैव गुरोस्सख्युस्सखा मातामहस्य च॥ एतेषां चैव भार्यां : स्वसुर्मातुः पितुस्तथा। श्राद्धदानं तु कर्तव्यमिति वेदविदां स्थितिः॥ प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां वर्णिलिङ्गिनाम्। एवं कुर्वन्नरस्सम्यक् महतीं श्रियमाप्नुयात्॥" इति। "पितुः पुत्रेण कर्तव्यं न कुर्वीत पिता सुते। अतिस्नेहान्न कर्तव्यं सपिण्डीकरणं स्त्रियः॥ भ्राता वा भ्रातृपुत्रो वा बन्धुर्वा शिष्य एव वा। सपिण्डीकरणं कुर्यात् पुत्रहीने नरे खगे॥" इति गारुडं च। "पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च। पत्नी भ्राता च तज्जश्च पितामातास्नुषा तथा॥ भगिनीभागिनेयश्च सपिण्डस्सोदकस्तथा। असन्निधाने पूर्वेषामपरे पिण्डदाः स्मृताः॥" इत्यन्यत्र च। इत्यलमधिकविस्तृतेन प्रकृतमनुसरामः॥ १३५॥ १३६॥

१. प. फ. ब. दापत्न्यादीना०। २. प फ. ब क्यान्यपि। ३. भ. तैः इति वृद्धशा०। ४. भ. नरेखगेतिक०।

Cole.: Ch. II, Sec. vii, § 6.

पुत्राः पौत्राश्च दायं गृह्णन्ति तदभावे पत्न्यादय इत्युक्तम्, इदानीं तदुभयापवादमाह— 1

**वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।**
**क्रमेणाऽऽचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥ १३७॥**

**वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्यः, सच्छिष्यः, 2

एवं तावद्वर्णाश्रयो विभागविधिरुक्तः । अधुनाऽऽश्रमाश्रय उच्यते—**वानप्रस्थयतिब्रह्मचारिणो रिक्थेत्यादि ॥ १३७॥**

बालंभट्टी

व्यवहितसङ्गतिमव्यवहितेनासंभवादाह—पुत्रा इति। चेन प्रपौत्रसमुच्चयः । यद्यपि पैत्रप्रपौत्रयोस्तत्त्वं पूर्वं नोक्तं, तथाऽपि तत्रैवंक्रमो बोध्य इत्यत्रैव प्रसङ्गोक्त्या सूचितम् । तथा च मनुविष्णू— "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तस्स्वयमेव स्वयंभुवा॥" इति । हारीतेनाऽपि— "पुन्नामा निरयः प्रोक्तो भिन्नतन्तुश्च नौरयः। तत्रैव त्रायते यस्मात् तस्मात्पुत्र इति स्मृतः ॥" इति। शङ्खादिरपि—"पितॄणामनृणो जायेद्दृष्ट्वा पुत्रमुखं पिता । स्वर्गित्वेन न जातेन तस्मिन् सन्न्यस्यते ऋणम् ॥" इति । मनुशङ्खलिखितवसिष्ठहारीता अपि—"पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते। अथ पौत्रस्य पुत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ॥" इति । "लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।" इति मूलं च। अन्यान्यपि वचांसि प्रागुक्तानि । यद्यपि पौत्रांशे साक्षात्तत्त्वसाधकं मूलं मानवं च प्रागप्युक्तमेव, तथाऽपि प्रपौत्रांशे उक्तवचांस्येव साधकानि नान्यानि उपकारकत्वाविशेषादपि तस्य तत्त्वमिति क्रमेणेत्युभयत्र बोध्यम् । वानेति,—द्वन्द्वोत्तरपदको द्वन्द्वः । उत्तरार्धानुरोधेनैवमुक्तम् । तत्र तथोक्तिफलं तु व्याख्यात एवाग्रे स्फुटम् । क्रमेणेत्यस्य श्रुतक्रमेणेति नार्थः। तथा सति तदुक्तिं विनाऽपि शत्रुमित्यादिवल्लौकिकस्थानाख्यप्रमाणेनैव तस्य सिद्धत्वात्। अत आह—प्रतिलोमेति । यद्यपि वानप्रस्थस्याऽऽचार्यः संभवति, "दीक्षितोऽपि गुरुणाऽऽज्ञप्तो दिशमुपनिष्क्रम्य" इति वृद्धहारीतीयलिङ्गात् । "तत्रैनं विधि-

१. म० ९. १३८. । वि० १५. ४४. । २. म० ९. १३७. । व. १७. ५.। ३. प. फ. ब. स्वक्र० ।

Cole.: Ch. II, Sec viii, §§ 1—2.

3 धर्मभ्रात्रेकतीर्थी च, रिक्थस्य धनस्य भागिनः । **ब्रह्मचारी नैष्ठिकः । उपकुर्वाणस्य तु धनं मात्रादय एव गृह्णन्ति । नैष्ठिकस्य तु धनं तदपवादत्वेनाचार्यो गृह्णातीत्यु-
4 च्यते । **यतेस्तु धनं सच्छिष्यो गृह्णाति । सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतद्-

## सुबोधिनी

नैष्ठिकस्य धनमिति,—मात्रादिग्रहणापवादेनेत्यर्थः । सच्छिष्य इति,—शि-
1 ष्यस्य सम्यक्त्वमुपलक्षणम् ।*[अत आचार्यधर्मभ्रात्रेकतीर्थिनावपि सुवृत्तावेव धनग्राहि-

## बालंभट्टी

वद्राजा प्रत्यगृह्णात्कुरूद्वहम् । स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः ॥ शतरूपाश्रमे तस्मिन्निवासमकरोत्तदा । तस्मै सर्वविधिं राज्ञे राजा प्राह महामतिः ॥" इति धृतराष्ट्रस्य तत्त्वे भारताच्च । एवं च तत्र दीक्षापिता यः, स तदाचार्यः । यतेरपि महावाक्योपदेष्टा सः "संन्यस्याचार्यमुपतिष्ठेत ब्रह्मजिज्ञासायाम्" इति शङ्खात् । एवं चाऽऽचार्यादिचतुर्णां द्वन्द्वे क्रमेणेत्यस्याऽऽचार्यादिक्रमेणेत्यर्थसंभवः—आदावाचार्यः, ततश्शिष्यः, ततो धर्मभ्राता, तत एकतीर्थी इति। अत एव शिष्यसब्रह्मेत्येकवाक्यता । "वानप्रस्थधनमाचार्यो गृह्णीयाच्छिष्यो वा" इति विष्णुसङ्गतिश्च । तथाऽपि वानप्रस्थस्य ब्रह्मचारिणश्च शिष्याभावात् तथा व्याख्यानस्यात्रासंभवः। वैष्णवे तु वानेति तयोरप्युपलक्षणम् । चार्थवाशब्देन द्वयोर्ग्रहणम् । क्रमोऽयमेवेति गूढाशयः । एतेन तथा व्याख्यानं निन्द्यं च शङ्खाद्यदर्शनमूलकमिति उपेक्ष्यमिति भ्रान्तीयमपास्तम् । अत एव तदुक्तिसङ्गतिरपीति दिक् । विशेषमाह—ब्रह्मेति । इदमेव विशदयति —उपेति । स्वरीत्या आह —मात्रादय एवेति,—अन्यथा तस्य निर्विषयतापत्तेः। अत एवास्योभयापवादत्वमन्यथा ब्रह्मचार्यंशे प्रथमापवादत्वासंभवः स्पष्ट एवेति भावः। तदपेति मात्रादिग्रहणायेत्यर्थः । अन्यथा अस्य निर्विषयतापत्तेः । वैपरीत्यं तु न—प्रत्यासत्तितारतम्यात् । शिष्ये सत्त्वं न विद्यमानत्वं—विपरीतस्य ग्रहणस्यैवासंभवादित्यत आह—सच्छिष्यः पुनरिति,—स त्वित्यर्थः । अत एव योग्यतया आह—अध्यात्मेति । शिष्ये सम्यक्त्वमुपलक्षणतयाऽन्यत्राऽपि बोध्यम्। अतः अन्यावपि सुवृत्तावेव धनभाजौ । अत एव मूलकृतोभयत्रापि तत्संबन्धद्योतनार्थं सच्छिष्येति मध्ये पठितमित्या-

१. क. च. ज. णकस्य । २. क. श्र । ३. थ. द. नं तदपवादेनेति। ४. द. णावित्या(?) ५. त. क्षयति ।

Cole.: Ch. II, Sec. viii, §§ 2—4.

र्थानुष्ठानक्षमः । दुर्वृत्तस्याऽऽचार्यादेरपि भागानर्हत्वात् ।**वानप्रस्थस्य धनं धर्मभ्रात्रे- 5
कतीर्थी गृह्णाति। धर्मभ्राता प्रतिपन्नो भ्राता । एकतीर्थी एकाश्रमी ; धर्मभ्राता
चासौ एकतीर्थी च धर्मभ्रात्रेकतीर्थी। **एतेषामाचार्यादीनामभावे पुत्रादिषु सत्स्वप्ये- 6
कतीर्थ्येव गृह्णाति । **ननु "अनंशास्त्वाश्रमान्तरगताः" इति वसिष्ठस्मरणादाश्रमा- 7

## सुबोधिनी

णावित्याह—दुर्वृत्तस्येति[२] । अनेनैवाभिप्रायेण याज्ञवल्क्योऽपि "आचार्यसच्छिष्यधर्मभ्रा-
त्रेकतीर्थिनः" इत्युभयत्र सम्बन्धं द्योतयितुं[३] सच्छिष्य इति मध्ये परिगणयामास ।]* यद्वा[४]
सच्छिष्य इत्यनेनादुर्वृत्तत्वं नाभिधीयते, अपि त्वध्यात्मश्रवणादिसमर्थोऽभिधीयते । तच्च दु-
र्वृत्तानामाचार्यादीनां सर्वेषामपि भागानर्हत्वस्याविशिष्टत्वाच्छिष्यस्यैवादुर्वृत्तत्वकथनमनुप-
पन्नं स्यादित्यत आह—सच्छिष्यः[५] इत्यादिना भागानर्हत्वादित्यन्तेन। प्रतिपन्नो भ्रातेति—
भ्रातृत्वेनाङ्गीकृत इत्यर्थः । आचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनामभावे ब्रह्मचारियतिवानप्र-
स्थानां धनं को वा गृह्णीयादित्यत आह—एतेषामाचार्यादीनामभावे[६] इति ।

## बालंभट्टी

शयेनाऽऽह—दुर्वृत्तस्येति । आदिना अग्रिमपरिग्रहः । अपिना तस्यैव समुच्चयः ।
यद्वा शिष्ये सत्त्वं नादुर्वृत्तत्वमात्रं तथा सति आचार्यादेरपि दुर्वृत्तस्य भागानर्हत्वस्या-
विशिष्टत्वेन तस्यैव तत्त्वकथनासङ्गतेः । किन्तु योग्यतया अध्यात्मश्रवणादिसमर्थत्वमि-
त्याह—सच्छिष्यः पुनरित्यादिना भागानर्हत्वादित्यन्तेन । धर्मभ्रात्रेकतीर्थीत्येकम्—
अन्यथा यथासङ्ख्यानापत्तेरित्याह—धर्मेति । तत्राऽऽद्यार्थमाह — प्रतीति, —
भ्रातृत्वेनाङ्गीकृत इत्यर्थः । द्वितीयार्थमाह — एकाश्रमीति, — वानप्रस्थ एव
स्वाश्रमनिकटवासीत्यर्थः । "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । जनावतारे योनौ
च" इति विश्वाद्युक्तेः । नन्वेवं धर्मभ्रात्रेत्येवालंकृतमग्रिमेणेति चेन्न — आचार्या-
दीनामभावे तेषां सर्वेषां धनं को गृह्णीयादित्याशङ्कानिरासार्थं तदुपादानात् ।
तथा च तत्पृथक् निमित्तं न तु तेन समस्तमिति धर्मभ्रात्रन्तेन द्वन्द्वसमासं
कृत्वा पुनर्द्वन्द्व इति तत्सर्वान्वयीत्याशयेनाऽऽह — एतेषामिति ।· मूलायुक्तत्वं
शङ्कते—नन्वनंशा इति,—भागशून्या इत्यर्थः। आश्रमान्तरेति—गृहस्थान्येत्यर्थः ।

---

१. क. धनग्रहणान० । २. थ. द. स्याचार्यादेरपीति । ३. द. बोधयि० । ४. थ. द. अथवा । ५. थ. द ष्यः पुनरित्या० । ६. त, मित्यर्थः यो० (?) ।

Cole.: Ch. II, Sec, viii , §§ 4—7.

न्तरगतानां रिक्थसंबन्ध एव नास्ति कुतस्तद्विभागः । न च नैष्ठिकस्य स्वार्जित-
धनसंबन्धो युक्तः—प्रतिग्रहादिनिषेधात् । "अनिचयो भिक्षुः" इति गौतमस्म-
8 रणात् भिक्षोरपि न स्वार्जितधनसंभवः। **उच्यते—वानप्रस्थस्य तावत् "अह्नो-
मासस्य षण्णां वा तथा संवत्सरस्य वा । अर्थस्य निचयं कुर्यात्कृतमाश्वयुजे
त्यजेत्॥" इति वचनाद्धनसंबन्धोऽस्त्येव । यतेरपि—"कौपीनाच्छादनार्थं वा
वासोऽपि बिभृयात्तथा । योगसंभारभेदांश्च गृह्णीयात्पादुके तथा॥" इत्यादिवचनाद्व-
9 स्त्रपुस्तकसंबन्धोऽस्त्येव । नैष्ठिकस्याऽपि शरीरयात्रार्थं वस्त्रादिसंबन्धोऽस्त्येवेति ** त-
द्विभागकथनं युक्तमेव ॥ १३७ ॥

1 **इदानीं स्वर्यातस्य पुत्रस्य पत्न्यादयो धनभाज इत्युक्तस्यापवादमाह—

ब्रह्मचारी तु नैष्ठिकोऽभिप्रेतः।एकाचार्यं संबद्धो धर्मभ्राता।एकाश्रमसंबन्ध एकतीर्थ्यः । स्पष्टमन्यत् । नैष्ठिकवनस्थस्येति । व्यतिरिक्तानान्तु वर्णानां पारिशेष्यात्प्रागुक्तो विभाग-विधिः ॥ १३७ ॥

## सुबोधिनी

योगसम्भारेति—योगप्रतिपादकग्रन्थादीनित्यर्थः ॥ १३७ ॥

## बालंभट्टी

आदिना याजनादि । अनिचय इति — असङ्ग्रह इत्यर्थः । पूर्वपक्षिणा तृतीये विशिष्य असंभवाद्यादसंभवेनोक्त इत्याशयेन तावत्तत्राऽऽह--वानेति । अह्नः तन्मा-त्रभोजनपर्याप्तस्य । एवं सर्वत्र षष्ठयन्तानाम् । तथा—तद्वत् । निचयं—सङ्ग्रहम् । यतेरपीत्यस्याग्रेऽन्वयः । एव श्रौतवचनमुक्त्वा स्मार्तवचनमाह—तथेति । योगेति—योगस्य सामग्रीविशेषोऽपीत्यर्थः । तत्प्रतिपादकग्रन्थादीनिति यावत । आदिना पादुकाकमण्डल्वादि । "कौपीनाच्छादनार्थं हि वासो वै बिभृयाच्च सः ।" इति पूर्वार्धपाठे क्वाचित्कमेकवचनम् । यात्रा—संरक्षणम् ॥ १३७ ॥

प्राग्वत् पूर्वतो विशेषमाह—इदानीमिति । उक्तस्य—तन्मात्रस्य । अत एवानयोः पौर्वापर्यं । आहेति—द्वितीयपादरहितेनेत्यर्थः । संसृष्टिशब्दं निर्वक्तुं संसृष्टशब्दार्थमाह-

१.—३. ११.। २. क. ग च. ज. संबन्धः। ख. संबन्धसंभवः । ३. क. त्सतमा० । ४. ग. वै । ५. ख. ग. च सः । ६. क ह्युक्तं तस्या० । ख. ज. त्यस्या० । ७. थ. द. भारभेदांश्चेति ।

Cole.: Ch. II, Sec. viii, §§ 7—9; Sec. ix, § 1.

## संसृष्टिनस्तु संसृष्टी

**विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं तदस्यास्तीति संसृष्टी। **संसृष्टी[3] च न येन केनापि, किंतु पित्रा भ्रात्रा पितृव्येण वा ; यथाऽऽह बृहस्पतिः—"विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः। पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते॥" इति । 3

## संसृष्टिन इत्यादि ॥ १३८ ॥

विभक्तस्सन्निमित्तान्तराद्यः पित्रा भ्राता वा सन्धानार्थं संसृज्य वसति स संसृष्टी। तत्र यद्येवं सतां पितापुत्राणां सह वसतां पितापुत्राणां (?) पितुः पुत्रो जायेत, तस्याऽप्यंशो

### सुबोधिनी

संसृष्टिशब्दं निर्वक्तुं संसृष्टशब्दार्थमाह—विभक्तं धनमिति । मूलं[3] व्याचष्टे—

### बालंभट्टी

विभक्तमिति । पुनः—विभागोत्तरम् । कृतमिति—कर्मणि क्तः। संसृष्टं धनम्। "उभयं समीकृतम्" इति श्रुतेः । यदेकं सदुभौ याति, तदुभयं विभक्तमिति यावत् तत्समीकृतं साधारणीकृतं संसृष्टमिति तदर्थः। एवं च प्रत्यासत्त्या ययोर्विभागः, तयोरेव मिश्रणे तत्त्वमिति नान्यविभागेऽन्येन मिश्रणे तत्त्वमिति भावः। प्रसङ्गाद्विशेषमाह—संसृष्टं चेति,—तद्धन-संसर्गे तेषामपि संसर्गः संपन्न एवेति भावः । सहयोगे तृतीया । यो विभक्तः सन् पुनः पश्चादित्याद्यर्थः । एकत्र—गृहे । तत्र हेतुमाह—प्रीत्येति । तादिति—तेन संसृष्ट इत्यर्थः । अयं भावः—येषामेव हि पितृभ्रातृपितृव्याणां पितृपितामहार्जितद्रव्येणाविभक्त-त्वमुत्पत्तितस्संभवति, त एव विभक्तास्सन्तः मिथः प्रीत्या यदि पूर्वविभागनाशेन 'यत्त-व धनं तन्ममाऽपि यन्ममधनं तत्तवाऽपि' इत्येवम् एकत्र गृहे एकगृहिरूपतया संस्थिताः, त एव तथोच्यन्ते न पुनरेवं रूपाणां तथाकारिणामपि संसर्गित्वं नापि विभक्तानां[4] पूर्वोक्तप्रीति-पूर्वकाभिसन्धिं विना द्रव्यसंसर्गमात्रेण—" विभक्ता भ्रातरो येच संप्रीत्यैकत्र संस्थिताः ।" इत्युक्तेः । एवं च तत्संबन्धित्वमात्रानिरासेन पूर्ववत्साधारणीभूय भोग्यतापादनमेव एक-त्र स्थितिः । तच्चोक्तानुमतिरूपमेव । सा च क्वचिद्वाचनिकी क्वचिदनन्यथासिद्धव्यवहार-गम्या—" अनुक्ताऽपि वचः किञ्चित्कृतं भवति कर्मणा ।" इति विष्णुपुराणात् । एवं चायं

१. ख. सृष्टत्वं च । २ —२५. ७२.। ३. थ. द लवचनं। ४. भ. नां तथा तेषां द्रव्य०।

Cole.: Ch. II, Sec. ix, §§ 1—3

4 ** तस्य संसृष्टिनो मृतस्यांशं विभागं विभागकाले अविज्ञातगर्भायां भार्यायां पश्चादुत्पन्नस्य पुत्रस्य संसृष्टी दद्यात् । पुत्राभावे संसृष्टयेवापहरेत् गृह्णीयात् न पत्न्यादिः ॥

## सुबोधिनी

तस्य संसृष्टिन इत्यादिना संसृष्टयेवापहरेत् गृह्णीयान्न पत्न्यादिरित्यन्तेन । " नान्योदर्यो धनं हरेत् " इत्युपरितनवाक्यशेषस्थं[1] हरेदितिपदमपकृष्यैतद्वाक्यं पूरयति—अपहरेत् गृह्णीयादिति । तस्येति अनेन पूर्वोक्तं समासवाक्यं पूरयति । अत्र मृतस्येत्यर्थलभ्यं पदं प्रकरणलभ्यं वा । वचनान्तरविरोधपरिहाराय तदर्थेन वाक्यार्थं पूरयति–विभागकाल इति । अयमाशयः—यदा त्रिचतुरो भ्रातरस्संसृष्टिनः[3], तदा तेष्वेकस्मिन् भ्रातरि स्वभार्यायां गर्भमाधाय दिवं गते संसृष्टिनां जीवतामनेकत्वादैक्याभावाच्च विभागः प्राप्तः—एकत्वे ऐक्ये च विभागाभावात् । तस्मिन् विभागकालेऽस्पष्टगर्भत्वात् यदि गर्भो न विज्ञातः, विभागश्च[4] निष्पन्नः, कालान्तरे पुत्र उत्पन्नः,तदा तस्यै तत्पित्रंशो दातव्यः । तदभावे संसृष्टिव्यक्तिपर्यालोचनयांशकल्पनया संसृष्टिनो गृह्णीयुरिति।अत्र संसृष्टीत्यनुगतधर्मविवक्षयैकवचनम् अन्यथा व्यक्त्येकत्वे विभागाभावात् ॥

## बालंभट्टी

नियम एव।मानवमप्युक्तरीत्या वितयपरमेव; अन्यथा भ्रातृमात्रविषयमेवस्यात्।बृहस्पतेराशयस्तु उक्त एव । एतेन पित्रादिगणनं प्रपञ्चार्थं नान्यपरिसङ्ख्यार्थं—दोषत्रयापत्तेः, सामान्यतो मनूक्तेश्चेति भ्रान्तोक्तमपास्तम् । एवं पादार्थमुक्त्वा मूलाद्यपादं ससाधारणोत्तरार्धं व्याचष्टे—तस्य संसृष्टिन इति । तत्र चस्त्वर्थे मृतस्य तु । अंशमित्यस्य व्याख्या—भागमिति । वचनान्तरविरोधपरिहाराय तत्संभवं प्रतिपादयन् तदर्थेन वाक्यार्थं पूरयति—विभागेति,—समस्तो व्यस्तो वा पाठः सति सप्तमी । जातस्येत्यस्यार्थमाह—उत्पन्नस्येति,—शेषे षष्ठी। चात्रैवार्थे उत्पन्नाय पुत्रायैव नान्यस्मै।तत्र वा एवार्थे दद्यादेव न स्वयं गृह्णीयात्।द्वितीयोऽपि वा एवार्थे व्युत्क्रमे चेत्याह—संसृष्टयेवेति।अपहरेदित्यस्य व्याख्या—गृह्णीयादिति।जातस्येत्याद्युक्त्या नेदमपि प्राग्वदुभयापवाद-भूतं, किन्तु पत्नीत्यादिमात्रापवादभूतम्—अन्यथा तदसङ्गतिः स्पष्टेवेत्याशयेनाऽऽह—न पत्न्यादीति।*[अत्र मूले एकत्वमविवक्षितम्।अतस्तदनेकत्वे विभज्य ग्रहणं

4

१. व्य० १३९ ।२ थ. द. स्थित । ३. थ. द. भ्रात्रादयः । ४. थ. द. त्वेन य० । ५.त.ग एवनि०। ६. त.न्नस्तस्यै०। ७.अ. यतयैव(व?)च. नस्य स्यात्(?)।८.प. फ. ब. र्थमूला०।

Cole.: Ch. II, Sec. IX, § 4.

**"ससृष्टिनस्तु ससृष्टी" इत्यस्यापवादमाह— 5

सोदरस्य[1] तु सोदरः ।

दद्यादपहरेच्चांशं[2] जातस्य च मृतस्य च ॥ १३८ ॥

**ससृष्टिनस्ससृष्टीत्यनुवर्तते । अतश्च सोदरस्य ससृष्टिनो[3] मृतस्याश सोदरः 6 ससृष्टी अनुजातस्य सुतस्य दद्यात्, तदभावे अपहरेदिति पूर्ववत् सबन्धः । एव च सोदरासोदरससर्गे सोदरससृष्टिनो धन सोदर एव ससृष्टी गृह्णाति, न भिन्नोदरः

सुबोधिनी

पूर्ववाक्यानुवृत्तौ यो वाक्यार्थः सम्पद्यते, त दर्शयति—अतः सोदरस्य ससृष्टिन इति । जातस्य सुतस्येति—पूर्ववदेव विभागकालेऽस्पष्टगर्भायां पश्चादुत्पन्नस्येत्यर्थ. । "सोदरस्य तु सोदरः" इत्यनेन "संसृष्टिनस्तु संसृष्टी" इत्यस्यापवाद इत्युक्तम् । तदभिप्रायतः स्फोरयति—एव च सोदरासोदरससर्गे इति ॥ १३८ ॥

बालंभट्टी

तत्पत्न्याः पोषणं चेति भाव. । ]*अत एव तु: तद्वैलक्षण्ये । एतेन प्राचां व्याख्यानाभिप्रायो निरस्तः । अयं भावः—यदा ससृष्टिनः त्रिप्रभृतयः, तदा तेष्वेकस्मिन् भ्रातरि स्वभार्याया गर्भमाधाय दिव गते अवशिष्टाना जीवतामनेकत्वादग्रे ऐक्यासंभवाच्च विभागः प्राप्तः —एकत्वे ऐक्ये च विभागाभावात् । तत्र तत्र विभागकाले अस्पष्टगर्भत्वेन गर्भाज्ञाने विभागनिष्पत्तौ कालान्तरे पुत्रे उत्पन्ने तस्मै तत्पित्रंशो देयः; तदभावे संसृष्टिव्यक्तिपर्यालोचनेनाशकल्पनया संसृष्टिन एवं हरन्ति ॥

इत्यस्येति —पूर्वपादोक्तस्य द्वितीयपादेनेत्यर्थः । उत्तरार्धं तु साधारणमस्त्येव । अत एवाऽऽह—संसृष्टिनस्त्विति । तथा सति संपन्नं वाक्यार्थमाह—अतश्चेति — तदनुवृत्तेश्चेत्यर्थः । "संसृष्टिनो मृतस्यांशं धनम्" इति पाठः । सोदरः स एव । अनु पश्चात् । अनेन विभागकाले स्पष्टगर्भाया विभागोत्तरमिति सूचितम् । जातस्य—सुतस्य । पूर्ववदेवेति संसृष्टयेव गृह्णीयात् न पत्न्यादीत्येवमित्यर्थः । एवं सति अस्य तदपवादत्वमुक्तं नाप्राप्तिं विना न संभवतीति तदर्थ विशेषविषयतया विशदयति—एव चेति,—उक्तसबन्धे चेत्यर्थः । सोदरेति—उभयसंसर्गे इत्यर्थः । अत एव यमः—"अविभक्तं स्थावरं यत्सर्वेषामेव तद्भ-

१. वि० स्य च सोदरः । दद्याच्चापह० । २. क. घ. च इदमर्धं नास्ति । ३. च. नोधन मृ० । ४. क. ससृष्टयनु० । ख. ग. ङ. ससृष्टानु० । घ. च जातस्य । ५. क. पुत्रस्य । ६. स्मारय० । ७. भ. व स. । ८ प. फ. ब. र्थः अत ए० ।

Cole.: Ch II, Sec ıx §§ 5—6.

संसृष्टयपीति पूर्वोक्तस्यापवादः ॥ १३८ ॥

7 **इदानीं संसृष्टिन्यपुत्रे स्वर्याते संसृष्टिनो भिन्नोदरस्य, सोदरस्य चासंसृष्टिनः सद्भावे, कस्य धनग्रहणमिति विवक्षायां द्वयोर्विभज्य ग्रहणे कारणमाह—

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।
असंसृष्ट्यपि[1] वा दद्यात्संसृष्टो नान्यमातृजः ॥ १३९ ॥

देयः मृतस्य हर्तव्यः। "सोदरस्य च सोदरः" इत्येतत्तु मातृदो विभागपक्षे द्रष्टव्यम्; निर्धने च पितरि विभक्तजविषयम्। यत्तु गौतमीयम्—"अथ संसृष्टिविभागःप्रेतानां ज्येष्ठस्य" इति, अत्र ज्येष्ठः पितेहोच्यते। तस्य सोदर्यभ्रात्रन्तराभावे प्रेतानां पुत्राणां भ्रात्रन्तरासंसृष्टानां च धनभाक्त्वं; तदुक्तं "पिता हरेदपुत्रस्य" इति। अन्ये तु ज्येष्ठशब्दं भ्रातर्याहुः, तत्पुनर्विचार्यम्। स्पष्टमन्यत् ॥ १३८ ॥

अत्रापरे पूर्वश्लोकविवर्णस्थानीयमिति इमं श्लोकं पठन्ति — अन्योदर्यस्येत्यादि ॥ १३९ ॥

## सुबोधिनी

कस्य धनग्रहणमिति वीक्षायामिति,—वीक्षायां दर्शने ज्ञाने समुत्पन्ने जिज्ञासायां

## बालंभट्टी

वेत्। विभक्तं स्थावरं ग्राह्यं नान्योदर्यैः कथञ्चन ॥" इति। बृहन्मनुरपि—"एकोदरे जीवति तु सापत्नो न लभेद्धनम्। स्थावरेऽप्येवमेव स्यात्तदभावे लभेत वै ॥" इति। प्रजापतिरपि—"अन्तर्धनं तु यद्द्रव्यं संसृष्टानां च तद्भवेत्। भूमिं गृहं च संसृष्टाः प्रगृह्णीयुर्यथांशतः ॥" इति। "संसृष्टी गृह्णाति स्थावरवर्जं स्थावराणां सपिण्डसमता" इति वृद्धहारीतस्तु तथा योज्यम् ॥ १३८ ॥

उत्तरसङ्गतिमव्यवहितेनाऽऽह—इदानीमिति। संसृष्टिनीति,—भिन्नोदरेण सहेति भावः। विवक्षायामिति—विचारे समुत्पन्ने सतीत्यर्थः। जिज्ञासायां सत्यामिति यावत्। उभाभ्यां निमाभ्यामुभयोरपि प्राप्तेरिति भावः। अत एवाऽऽह—विभज्येति। कारणं—

१. वि० पि चादद्यात्सोदरो ना०। २.—२८. २७। ३. म० ९. १८५.। ४. त थ. विवक्षा। ५. प. फ. ब. भाभ्यामुभ०।

Cole.: Ch. II, Sec. ix, §§ 6—7.

**अन्योदर्यः सापत्नो भ्राता संसृष्टी धनं हरेत्, न पुनः अन्योदर्यो धनं हरेदसंसृष्टी । अनेनान्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वं धनग्रहणे कारणमुक्तं भवति ।**असंसृष्टीत्येतदुत्तरेणापि संबध्यते । अतश्चासंसृष्टयपि संसृष्टिनो धनमा- 8 9

## सुबोधिनी

सत्यामिति यावत्।मूलवचनद्वितीयार्धादिपदान्तमादित आरभ्य वाक्यद्वयमित्याह—अन्योद- र्यःसापत्नो भ्रातेति।अत्र संसृष्टिन इत्यस्य पदस्यानुवृत्तिर्द्रष्टव्या । अतः संसृष्टिनो धन- मित्यर्थः । संसृष्टिनो भिन्नोदरस्य धनहारित्वविधानरूपेणान्वयेनासंसृष्टिनो भिन्नोदरस्य धनहारित्वनिषेधरूपेण च व्यतिरेकेण (च?) योऽर्थो निष्पन्नः, तं निष्कृष्य दर्शयति— अनेनान्वयव्यतिरेकाभ्यामिति ।*[असंसृष्टीत्येतत्पदं काकाक्षिवदुभयत्र सम्बध्यते।]* 9 अतः 'असंसृष्टयपि वा दद्यात्' इत्यन्तमन्यद्वाक्यमित्याह—संसृष्टीत्येतदुत्तरेणापीति । एतद्वाक्यार्थमाह —अतश्चासंसृष्टयपीति । संसृष्टयधिकारत्वादेव संसृष्टिन इति लभ्यते ।

## बालंभट्टी

पूर्वनियमद्वयसूचितमेव । अन्योदर्य इति,—अत्र वाक्यचतुष्टयं विधिर्निषेधः विधिर्निषेधश्चेति। तत्र प्रथमपादेन विधिमाह—अन्योदर्य इति,—धनं हरेदित्यस्यापकर्षः। तदाह —धनमिति,— पूर्वतः संसृष्टिन इत्यस्यानुवृत्त्या संसृष्टिनो धनमित्यर्थः । अथ द्वितीयपादेन तृतीयपादाद्यपदार्थसहितेन निषेधमाह—न पुनरिति,—न त्वित्यर्थः । अतो यन्निष्पन्नं तदाह—अनेनेति,—पूर्वार्धेनेत्यर्थः । अन्वयेति संसष्टिनो भिन्नोदरस्य धनस्य हारित्वविधिरूपेण च अन्वयेन असंसष्टिनो भिन्नोदरस्य धनस्य हारित्वनिषेधरूपेण च व्यतिरेकेणेत्यर्थः । असंसष्टीत्येतत् मध्यमणिन्यायेनाग्रेऽपि संबध्यत इति तृतीयपादेन विधिमाह —संसृष्टेत्येतादिति । अतश्च तत्सबन्धाच्च तदनुवृत्तिः प्राग्वदेवेत्याह— संसृष्टिन इति । वा चार्थे इति भावः। न केवलमेतावदेवैकं वाक्यम्, अपि तूत्तरपादाद्य-

१. त. चने अपि वेति पदा० । २. थ. द. स्यमेवा० (?) ।

Cole.: Ch.II, Sec. ix, §§ 8—9.

ददीत । कोऽसावित्यतआह–संसृष्ट इति । संसृष्ट एकोदरसंसृष्टः सोदर इति यावत् । अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तम् । **संसृष्ट-इत्युत्तरेणापि संबध्यते । तत्र च[1] संसृष्टः संसर्गीत्यर्थः ; नान्यमातृजः[2] । अत्रैव-

## सुबोधिनी

संसृष्ट इत्युत्तरपदं पूर्ववाक्यशेषत्वेन योजयति–कोऽसाविति । पूर्वोक्तसंसृष्टशब्दार्थमाह—संसृष्ट एकोदरेति[3],—एकस्मिन् मातुरुदरे[4] मिलित इत्यर्थः । एतत् पितुरप्युपलक्षणपरम् "पति-र्जायां प्रविशति गर्भो भूत्वा स मातरम् ।" इति जायाया अपि मातृत्वश्रवणस्य श्रौतत्वात् पिता असंसृष्टयपि पुत्र[5] एव । एवं पुत्रोऽप्यसंसृष्टीति[6] पितुः भ्रातुः परेतस्यान्यस्मात् संसृष्टिनो भागं हरेदिति तात्पर्यार्थः । संसृष्टपदप्रयोगस्यामुमे[7]वार्थं[8] प्रकटयति—सोदर इति यावदिति । "असंसृष्टयपि वा दद्यात् संसृष्टः" इत्येतस्य वाक्यस्य तात्पयार्थमाह — अनेन सोदरस्येति । पूर्वोक्तेनैव न्यायेन पूर्ववाक्यान्तर्गतं संसृष्टपदं "नान्यमातृजः" इत्युत्तरपद-सन्दर्भेणाऽप्यन्वेतीत्याह—संसृष्ट इत्युत्तरेणाऽपीति । उत्तरवाक्यशेषत्वे संसृष्टशब्दस्याभिप्रे-तार्थमाह[9]—तत्र च संसृष्ट इति । नान्यमातृज इत्यतदेवशब्दाध्याहारेण पूरयितुं प्रती-कमुपादत्ते— नान्यमातृज इति । अध्याहृतै[10]वकारोपेतस्य "संसृष्टो नान्यमातृज एव" इत्यस्य

## बालंभट्टी

पदघटितं प्राग्वदेवेत्याह—कोऽसाविति । तत्र संसृष्टार्थं पूर्वोक्तभिन्नमाह—संसृष्ट एकोदरेति,—एकस्मिन् मातुरुदरे जात इत्यर्थः । यत्तु[11] एतत्पितर्यपि बोध्यम्—"पति-र्जायां प्रविशति गर्भो भूत्वा स मातरम् ।" इति जायाया अपि मातृत्वस्य श्रौतत्वात् । एवं च पितुः पुत्रत्वेन सोदरत्वे तद्भ्रातुरपि तत्सोदरत्वात् तत्त्वं बोध्यमिति असंसृष्टयपि पिता पुत्र एवेति तादृशः सोऽसंसृष्टयपि तद्भ्रातुः परेतस्यान्येन संसृष्टिनो भागं हरेदिति तात्पर्यं संसृष्टपदप्रयोगस्येति केचित्[12] तत्रानिष्टापत्तेस्तदेतद्धनयन्नेवाऽऽह—सोदर इति यावदिति । अस्य तात्पर्यार्थमाह—अनेनेति—पादनत्येर्थः । असंसष्टस्यापि–असंसृष्टि-नोऽपि । प्राग्वदेवाऽऽह—संसृष्ट इत्युक्तयेति । तत्र च नाव्यवहितोक्तोऽर्थः, अपि तु प्रागुक्त एवेत्याह—तत्र चेति,—उत्तरवाक्ये शेषभूते संसृष्ट इत्यत्रेत्यर्थः । अर्थ आद्यजिति भावः । तुर्यपादं व्याख्यातुं प्रतीकं धत्ते–नान्येति । मन्वनुरोधेन सर्ववाक्यमिति न्यायेनाऽऽह–अत्रै-

१. क. च. 'च' नास्ति । २. क. तृकः । ३. थ. द. रसंसृष्ट इ० । ४. त. रे इ० । ५ थ. द. त्रस्य एव । ६. थ. ष्टीपि० । ७. द. गादमु० । ८. थ. द. वाभिप्रायं प्र० । ९. थ. द. तमर्थं० । १०. त. हृतस्यसं (?) । ११. भ. तुप्र । १२. भ. त् तत्राह ।

Cole.: Ch. II Sec. ix, §§ 9—10.

शब्दाध्याहारेण व्याख्यानं कार्यम्। संसृष्ट्यप्यन्यमातृज एव संसृष्टिनोधनं नाऽऽदद्यीते-ति। ** एवं च "असंसृष्ट्यपि वा दद्यात्" इत्यपिशब्दश्रवणात्, "संसष्टो नान्यमातृज एव" इत्यवधारणनिषेधाच्चासंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्तव्यमि-त्युक्तं भवति—द्वयोरपि धनग्रहणकारणस्यैकैकस्य सद्भावात्। *- एतदेव स्पष्टीकृतं मनुना—"विभक्तास्सहजीवन्तो विभजेरन्पुनर्यदि।"इति संसृष्टिविभागं प्रक्रम्य "येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः। म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते॥ सोदर्या विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च स-

11

12

## सुबोधिनी

वाक्यस्य[1] व्याख्याप्रकारमेव दर्शयति—संसृष्ट्यप्यन्यमातृज एवेति।"असंसृष्ट्यपि चादद्यात्" इत्यस्योत्तरार्धस्य सकलस्यापि तात्पर्यार्थमाह—एवञ्चासंसृष्ट्यपि वा दद्यादिति। तत्र हेतुमाह—द्वयोरपीति,—भिन्नोदरस्य संसृष्टित्वं धनग्रहणे हेतुः, सोदरस्य सोदरत्वमेव हेतुर्न संसृष्टित्वमित्यर्थः। संसृष्टिविभागमिति,—सह जीवन्त इत्युक्त्या तत्प्रक्रम

## बालंभट्टी

वेति। तथा तस्य तदेवाऽऽह -संसृष्ट्यपीति। इदं सर्वमनुवृत्तिलभ्यम्। उत्तरार्ध-स्य संपूर्णस्य तात्पर्यार्थं पूर्वप्रतिज्ञातमाह—एवं चेति,—उत्तरार्धस्योक्तार्थकत्वे चेत्यर्थः। अवधारणेति,—तन्निषेधादित्यर्थः। असंसृष्टेत्यादि प्राग्वत्। "कृत्यानाम्" इति कर्तरि षष्ठी। तत्र हेतुमाह—द्वयोरपीति। एकैकस्यैति—प्रागुक्तस्यैवेत्यर्थः। *[भिन्नोदरस्य संसृष्टित्वं धनग्रहणे हेतुः। सोदरस्य तत्त्वमेव हेतुः; न संसृष्टित्वमिति भावः।]* उक्तं द्रढयति—एतदेवेति। मनुनेति—अस्य "विभक्ताः" इत्यादि "वदता" इत्यन्तं विशेषणम्। इति इत्यनेन। प्रक्रम्येति,—सह जीवन्त इत्युक्त्या तत्प्रक्रम इति भावः। "समस्तल-विभागस्स्याज्ज्यैष्ठ्यं तत्र न विद्यते।" इति अस्योत्तरार्धम्। पूर्वं कथमपि विभागेऽ-पीदानीं सम एव विभागः; "ज्येष्ठस्य विंश उद्धारः" इत्युक्तोद्धारो नास्तीति तदर्थः।

11

---

१. क. घ. धादसं०। २. त. 'स्यव्या' इत्यादि 'सकल' इत्यन्तं नास्ति। ३. थ. द. गं प्रक्रम्येति। ४. अ० २. ३. ७१.। ५. म० ९. ११२.।

Cole.: Ch. II, Sec. ix, §§ 10—12.

13 नाभयः॥" इति वदता--येषां भ्रातॄणां संसृष्टिनां मध्ये ज्येष्ठः कनिष्ठो मध्यमो वांऽशप्रदानतोंऽशप्रदाने सार्वविभक्तिकस्तासिःविभागकाल इति यावत् हीयेत स्वांशात् भ्रश्येत आश्रमान्तरपरिग्रहेण ब्रह्महत्यादिना वा म्रियेत वा, तस्य भागो न लुप्यते--अतःपृथगुद्धरणीयो न संसृष्टिन एव गृह्णीयुरित्यर्थः। तस्योद्धृतस्य विनियोगमाह--"सोदर्या विभजेयुस्तम्"

संसृष्ट्यप्यन्यमातृजसोदर्ये सति न धनभाक् असंसृष्टयपि सोदर्य एव धनभागित्यर्थः। स एव तु धनभाक् स्यात्, तेनैव भ्रातरस्तत्सुताश्चैवंरूपाः ॥ १३९ ॥

## सुबोधिनी

इत्यनुसन्धेयः। "येषां ज्येष्ठः कनिष्ठो वा" इति मनुवचनं व्याचष्टे--येषां भ्रातॄणामित्यादिना। आद्यन्तयोर्ज्येष्ठकनिष्ठयोरुपादानान्न्यायसाम्याच्च मध्यमोऽपि विवक्षित इत्यनेनाभिप्रायेणाऽऽह--मध्यमो वेति। अंशाद्भ्रंशे निमित्तानि दर्शयति-- आश्रमान्तरेति। अस्यैव मनुवचनस्य तात्पर्यमाह--अतः पृथगुद्धरणीय इति। "सोदर्या विभजेयुः" इत्येतन्मनुवचनं व्याख्यातुमवतारयति--तस्योद्धृतस्येति। "भ्रातरो ये च संसृष्टाः" इत्यत्र संसृष्टपदोपादानात् सोदरा असंसृष्टा इति गम्यते। अत एवार्थलभ्यासंसृष्टपदान्वयेन

## बालंभट्टी

'येषाम्" इत्यादिमानवं व्याचष्टे--येषामित्यादि। प्रक्रमादेवाऽऽह--संसृष्टिनामिति,--मिथ इत्यादिः। आद्यन्तयोरुक्तेर्न्यायसाम्याच्च मध्यमोऽप्युपलक्षणत्वेन वा विवक्षित इत्याशयेनाऽऽह--मध्यमो वेति। प्रदानपदोक्तेराधिक्यादाह--अंशप्रदाने इति। अत एव तदुपपत्तिमाह--सार्वेति,--तथा चांशस्य प्रदानं यस्मिन्निति भावल्युडन्तेन व्यधिकरणबहुव्रीहिणा कालो विवक्षित इति नाऽऽधिक्यं तस्येति भावः। तदाह--विभागेति। अर्थादाह--स्वांशादिति। ततो भ्रंशे हेतुमाह--आश्रमान्तरेति,--वानप्रस्थादीत्यर्थः। मौलमेव हानितो विकल्पमाह--म्रियेत वेति,--अन्यतरोऽपीति शेषः। अन्यतम इत्यर्थः। उपात्तापेक्षया तथोक्तिः। अपिः द्व्यादिसमुच्चये। अस्यैव तात्पर्यमाह--अत इति,--अलोपादित्यर्थः। तस्याऽपि तात्पर्यमाह--न संसृष्टीति। "सोदर्या" इति मानवं व्याख्यातुमवतारयति--तस्योद्धृतस्येति। माहेति,--द्वितीयश्लोकेन स एवेति भावः।

---

१.--९. ११०--११२.। २ त अंशोद्धारे। द. इदं वाक्यं नास्ति। ३. थ. द. तरपरिग्रहेणेति। ४. थ. द. यार्थमा०। ५ थ. द. भ्यार्थासं०।

Cole.: Ch. II, Sec. ix, §§ 12--13.

इति । तमुद्धृतं भागं सोदर्याः सहोदरा असंसृष्टा अपि समेत्य देशान्तरगता अपि समागम्य सहिताः संभूय समं न न्यूनाधिकभावेन, ये च भ्रातरो भिन्नोदराः संसृष्टाः, ते च सनाभयो भगिन्यश्च समं विभजेयुः—समं विभज्य गृह्णीयुरिति तस्यार्थः ॥ १३९ ॥

## सुबोधिनी

पूर्वार्धं व्याचष्टे—तमुद्धृत भागमिति। सनाभयो भगिन्य इति—सहोदर्यो भगिन्य इत्यर्थः ॥ १३९ ॥

## बालंभट्टी

" भ्रातरो ये च संसृष्टाः" इत्युत्तरार्धे संसृष्टपदोक्त्या अत्र तन्मात्रोक्त्या सोदरा असंसृष्टा अपीत्यर्थलभ्यासंसृष्टाअपीतिपदान्वयेन पूर्वार्द्धं व्याचष्टे—तमित्यादिना । अपिना तेषां सङ्ग्रहः । तथा च साधारणमिदम् । आगमनस्य विप्रिसाकाङ्क्षत्वादाह—ये देशान्तरे गतास्तेऽपीति। देशान्तरगता अपीति पाठान्तरम्। सहिता इत्यस्य व्याख्या— संभूयेति,- मिलित्वेत्यर्थः । समनित्यस्य व्याख्या—न न्यूनेति।उत्तरार्धार्थमाह—ये चेति। अत्र चोक्तेर्भ्रातर इत्युक्तेः पूर्वत्र सोदरा इत्युक्तेश्चाऽऽह—भिन्नोदरा इति । अन्यथा तद्वैयर्थ्यं स्पष्टमेव। सनाभयः—सहोदर्यः । विभजेयुरित्यस्य व्याख्या —विभज्येति,—सममित्यत्राऽपि बोध्यम् । क्वचित्त्वत्राऽपि ततः प्राक् तत्पाठ एव। तस्य "सोदर्या" इत्यस्य। *[अत्र भिन्नोदराः भ्रातरः समानजातीया बोध्याः । असमानजातीयभिन्नोदरसंसृष्टिभ्रातॄणां तु"चतुस्त्रि" इत्याद्युक्तक्रमेण विभागः । समशब्दस्य भिन्नजातीयभ्रातृभिन्नसमानजातीयभिन्नोदरभ्रातृविषयत्वे " चतुस्त्रि " इत्येतद्बाधकत्वे मानाभावात् ।]* बृहस्पतिरपि—"संसृष्टानां तु यः कश्चित् विद्याशौर्यादिनाऽधिकम् । प्राप्नोति तस्य दातव्यो द्व्यंशश्शेषास्समांशिनः॥" इति । द्व्यंशदानं तदधिकधनप्राप्तौ ज्ञेयम् । शङ्खोऽपि प्रागुक्त एव—" भ्रातॄणाम्" इति। नारदोऽपि—" संसृष्टानां तु यो भागस्तेषामेव स इष्यते । अतोऽन्यथानंशभाजो निर्बीजेष्वितरानियात् ॥" इति । कात्यायनोऽपि—"संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक् स्थिताः । अतो विंशहरा ज्ञेया निर्बीजान्योन्यभागिनः॥"इति। अतोऽन्यथा संसृष्टिनामभावे निर्बीजेषु सन्तानरहितेषु संसृष्टिषु तेषां भागः इतरानंशहराति (?) यावत् । अत्रायं निष्कर्षः—भि-

१. क. येदेशान्तरगतास्ते । २. क. ति ॥ पु० । ख. स्पष्टो ऽर्थः । ३. त. उद्धृ० । ४. थ. द. न्यश्चेति । ५. भ. ष्टा तेषां (?) । ६. प. फ. ब. दरभ्रातृ० । ७. व्य० १२५. । ८. (?) । ९. प. फ. ब. भागान् । १० १३.—२४. । ११. प. ब. नग्रहर० ।

Cole.: Ch. II, Sec. ix, § 13.

बालंभट्टी

न्नोदरसंसृष्टिभ्रात्रभावे सोदराणां मध्ये यः संसृष्टिसोदरः, स एव संसृष्टिनः सोदरस्य मृतस्य धनमादद्यादित्यादि। भिन्नोदरेषु तु सजातीयासजातीयत्वकृतभेदयुक्ता एव । यदा सोदराः असोदराश्च संसृष्टिनः, तदा सोदरा एव गृह्णीयुः । यदा त्वसंसृष्टाः सोदराः संसृष्टाश्च भिन्नोदराः, तदोक्तरीत्या उभाभ्यां ग्राह्यम् । एतद्वैपरीत्ये तु सोदरैरेव । सोदराणां मध्येऽपि केचित् ससृष्टा नान्ये, तदा सोदरत्वसंसृष्टत्वाभ्यां संसृष्टिभिरेवेति । यत्तु एकमातृजत्वभिन्नमातृजत्वयोः विशेषेण भ्रातृषु या व्यवस्था दर्शिता, सा साक्षात् पितृव्ये सापत्नपितृव्येऽपि योज्या—न्यायस्य तुल्यत्वादिति, तन्न—"सोदरस्य तु" इति विधिवाक्ये सोदरत्वस्य विवक्षायां बीजाभावात् सोदरपदस्य पितृव्योपलक्षकत्वाभावात् लोकेऽत्यन्तविरुद्धत्वात् वचनविरोधाच्च न्यायस्य तत्राप्रवृत्तेरिति दिक्।एतेनापुत्रधनं भ्रातृणामित्युक्तम्। तत्र विशेषमाह—संसृष्टिन इति सर्वमेकम् वाक्यम्। तस्मिन् मते जातस्य पुत्रस्य दद्यादिति तु प्रासङ्गिकम् ; सोदर्यत्वाभावे तु नांशभाक्त्वमिति स्पष्टयति—अन्योदर्य इति। यदा त्वन्योदर्य एव संसृष्टी न सोदरः, तदाऽऽह—असंसृष्टयपीति, इत्यपरार्कोक्तमपास्तम्—अस्य भ्रातृमात्रविषयत्वे पित्रादिसंसर्गविध्यानर्थक्यापत्तेः तन्निर्णायकवचनान्तर एवाभावात् प्रकरणविच्छेदकतुशब्दद्वयवैयर्थ्यात् "वान"इत्यादिना तद्विच्छेदात् सोदर्यनियमादेवान्यव्यावृत्तौ तदुक्तिवैयर्थ्यात् संसृष्टिनोंऽशभाक्त्वे नारदादिविरोधाच्च । एतेनेदानीमित्याद्यवतरणमन्योदर्य इत्यस्य चिन्त्यम्—"अतोऽन्यथा" इत्यादिनारदादिविरोधात् । पूर्वान्वितयोरग्रेऽनुषङ्गे संसृष्टपदस्यार्थद्वयकल्पने एवकाराध्याहारे प्रमाणाभावाच्च । अनेनान्वयेत्याद्यपि चिन्त्यम्—संसृष्टिपदस्यार्थे वाक्यस्य पत्न्याद्यपवादत्वोक्त्यैव तदर्थसिद्धेर्वाक्यानर्थक्यात् पित्रादेरपि संसृष्टित्वे पृथगन्योदर्ये तदुक्तिवैयर्थ्याच्च।"विभक्ता"इति मनोः तथा व्याख्यानमपि चिन्त्यम्—तयोः विशेष्यविशेषणभावेनैव बृहस्पत्येकवाक्यतया अर्थान्तरकल्पनाया अन्याय्यत्वात्।चकारात् तथा कल्पने नारदादिविरोधात् । चद्वयस्य द्वन्द्वविग्रहवदुपपत्तेः । विशेषणानर्थक्यन्तु भगिनीविशेषणवद्भिन्नोदरवारणार्थत्वात् । तस्मात् स धनं हरेत् नान्योदर्यः। सोदरः संसृष्टी न चेत् असंसृष्टयपि आदद्यात् संसृष्टो नान्यमातृजश्चेदिति व्याख्यानमुचितमिति भ्रान्तोक्तमपास्तम्—आशयानवबोधात्। अत्रांशमिति सामान्योक्तया स्थावरेऽप्येवम्। अत एव प्रागुक्तयमादिसंसर्गविधेरेतेनांशमिति सामान्योक्तावपि स्थावरविशेषो वृद्धहारीताद्युक्त इति भ्रान्तोक्तमपास्तम् ॥ १३९ ॥

---

१. प. फ. ब. ष्टिमृत० । २. प. फ. ब. ष्टास्सोदराणां । ३. भ. ष्टिवाक्य० ।

Cole.: Ch. II, Sec. ix, § 13.

** पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तं, तस्यापवादमाह— 1

## क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
## अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ॥ १४० ॥

** क्लीबः तृतीयाप्रकृतिः ; 2

## पतितस्तत्सुतः क्लीब इत्यादि ॥ १४० ॥

तत्सुतः पतितोत्पन्नः; एवं उन्मत्तो ग्रहगृहीतः ; जडः सर्वदा प्रज्ञाहीनः ; कुष्ठाद्यसमाधेयपापरोगग्रस्तोऽचिकित्स्यरोगी; च शब्दः स्मृत्यन्तरोक्तबधिरादिप्राप्त्यर्थः । स्पष्टमन्यत् ।

### सुबोधिनी

पुत्रपत्न्यादिसंसृष्टिनामिति—पुत्रपदेन पौत्रोऽपि लक्ष्यते, आदिपदेन दौहित्रा-

### बालंभट्टी

सङ्गतिमाह—पुत्रेति,——पुत्रश्च पत्नीच पुत्रपत्न्यौ ते आदी येषां ते पुत्रपत्न्यादयः ते च संसृष्टी च तेषां त्रयाणामित्यर्थः । आदिभ्यां पौत्रादेर्दुहित्रादेश्च ग्रहणमिति न न्यूनता । एतेनाऽऽद्ये उपलक्षणतया व्याख्यानमपास्तम् । तृतीयेति,— स्त्रीपुंसभिन्नेत्यर्थः । अमरे तथोक्तेः, "तृतीयां प्रकृतिं गतः" इति च भारतम् । प्रकृतिः स्वभावः प्रकार इति यावत् । समस्तं व्यस्तं वा । तथा च स्वाभाविकतत्त्ववत्तस्तेन ग्रहणं तेन कदाचित् कृत्रिमतत्त्ववतो निरासः। अत एव कात्यायनः—"न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति । मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीबस्स उच्यते॥" इति। नारदोऽपि—"यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्डकः। चतुर्दशविधश्शास्त्रे पण्डो दृष्टो मनीषिभिः । चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥ निसर्गषण्डो बध्नश्च पक्षषण्डस्तथैव च । अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥ ईर्ष्याषण्डश्च सेव्यश्च वातरेता मुखेभगः। आक्षिप्तो मोघबीजी च शालीनोऽन्यापतिस्तथा ॥" *[निसर्गषण्डः—स्वभावतो लिङ्गवृषणहीनः। बध्नः—छिन्नमुष्कः]*। पञ्चदशादिनानि स्त्रियामसेव्य सकृद्भोगक्षमः——पक्षषण्डः। गुरुशापषण्डादयः त्रयः स्पष्टाः । ईर्ष्यया पुंस्त्वमुत्पाद्यते यस्य स—ईर्ष्याषण्डः । स्युपचारविशेषेण पुंस्त्वशक्तिर्यस्य स—सेव्यषण्डः । वातोपहतरेतस्को—वातरेताः । यस्य मुख एव पुंस्त्वशक्तिः न योनौ, स मुखेभगः । रेतोनिरोधात् षण्डीभूत आक्षिप्तषण्डः । गर्भाधानासमर्थबीजो मोघबीजी । अप्रगल्भतया क्षोभाद्वा I

१. वि० रोगी च भर्तव्याश्च । २. थ. द. शब्दे। ३. थ. द. शब्देन। ४. १३.—१०—१३.।

Cole.: Ch. II, Sec. x, §§ 1—2.

पतितो ब्रह्महादिः ; तज्जः पतितोत्पन्नः ; पङ्गुः पादविकलः ; उन्मत्तकः वातिकपैत्तिकश्लैष्मिकसान्निपातिकग्रहावेशलक्षणैरुन्मादैरभिभूतः ; जडो विकलान्तःकरणः, हिताहितावधारणाक्षम इति यावत् ; अन्धो नेत्रेन्द्रियविकलः; अचिकित्स्यरोगः अप्रतिसमाधेयक्षयादिरोगग्रस्तः ; **आद्यशब्देनाऽऽश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम्।यथाऽऽह वासिष्ठः--"अनंशास्त्वाश्रमान्तरगताः" इति। नारदोऽपि—"पितृद्विट् पतितः षण्डो यश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन्क्षेत्रजाः कुतः॥" इति । मनुरपि—"अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥" इति ।**निरिन्द्रियो निर्गतमिन्द्रियं यस्माद्व्याध्यादिना स निरिन्द्रियः । **एते क्लीबादयोऽनंशा रिक्थभाजो न भवन्ति।केवलमशनाच्छादनदानेन पोषणीया

बालंभट्टी

नष्टपुंस्त्वः शालीनः । यस्य भार्याव्यतिरेकेण अन्यासु पुरुषभावः सोऽन्यापतिः इति । मूले—अथशब्दस्समुच्चये । क्लीबस्य जनकत्वासंभवादाह—*[पतितोत्पन्न इति, —अकृतप्रायश्चित्तोत्पन्न इत्यर्थः]* । ग्रहेति—तादृशा ये ग्रहाः, तदावेशस्वरूपैरित्यर्थः । सर्वथा चैतन्यशून्यत्वस्यासंभवादाह — विकलान्तरिति । तस्यापि तात्पर्यार्थमाह — हिताहितेति । नेत्रेन्द्रियेति,—नेत्ररूपेन्द्रियेत्यर्थः । अनेनापि स्वभाविकमेव तत्त्वं विवक्षितमिति सूचितम् । अत एवाग्रे निरिन्द्रियग्रहणं मानवे जात्यन्धग्रहणं च । तादृशरोगस्वरूपमाह -- क्षयादीति, — आद्यशब्देनेति पाठः । तेषां निरंशकत्वांशे मानमाह–यथाऽऽहेत्यादिना।*[आश्रमान्तराणि—नैष्ठिकवानप्रस्थान्तिमाश्रमाः।क्षेत्रजाः—तदादयः। अत एवैतदन्येषां सामान्येनोक्तिः। जात्यन्धेति,—जात्या स्वभावेन अन्धबधिरावित्यर्थः। तथा उन्मत्तेति—द्वन्द्वोत्तरपदको द्वन्द्वः । वर्णानुच्चारको मूकः । ननु निरिन्द्रियग्रहणेनैव जात्यन्धपरिग्रहे सिद्धे तदुक्तिर्व्यर्था । नच ब्राह्मणवसिष्ठन्यायेन निर्वाहः—सति गमक एव तन्न्यायविषयत्वादत आह—-व्याध्यादिनेति । पदार्थानुक्त्वा मूलवाक्यार्थमाह—एते इति । ननु मानवादौ तावन्मात्रोक्त्या मूलस्यापि तत्रैव तात्पर्य-

---

१. क. इत्यादिना । २. ख. ग. सन्निपात० ३. ख. ग. यक्ष्मादि० । ४. १७.—५२ । ५. क. ख. देनापि । ६.—१३. २१. । ७. ९—२०१. । ८. क. निरशाः ।

Cole.: Ch. II, Sec. x, §§ 2—5.

भवेयुः ; अभरणे तु पतितत्वदोषः—"सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्॥" इति मनुस्मरणात्। अत्यन्तं यावज्जीवमित्यर्थः। *एतेषां विभागात्प्रागेव दोषप्रातावनंशत्वमुपपन्नं न पुनर्वि- 6
भक्तस्य। **विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव— 7

## बालंभट्टी

मस्तु न भरणे अत आह—अभरणे त्विति। सर्वेषामिति शेषे षष्ठी अंशानर्हाणां क्लीबादीनामित्यर्थः। अनंशावित्यग्रिमोऽयम्। तुः एवार्थे व्युत्क्रमे च दातुमेवेत्यर्थः। न्याय्यम्—न्यायप्राप्तम्। शक्त्येति अनेन न्यूनाधिकभावो निरस्तः। ग्रासेति समाहारद्वन्द्वः। एवार्थं स्फुटयति—पतित इति। हि यतः। अत्यन्तमित्यस्य पूर्ववाक्यान्वयिनोऽर्थमाह—यावदिति। एतेन शक्त्येत्यनेन अत्यन्तमिति विरुद्धमित्यपास्तम्। *[यद्यपि देवलेन पतितवर्जं भरणमुक्तम्— "मृते पितरि न क्लीबकुष्ठयुन्मत्तजडान्धकाः। पतितः पतितापत्यं लिङ्गी दायांशभागिनः॥ तेषां पतितवर्जेभ्यो भक्तं वस्त्रं प्रदीयते। तत्सुताः पितृदायांशं लभेरन्दोषवर्जिताः॥" इति—लिङ्गी प्रव्रजितादिः, अत्र निषेधे पतितपदेन तत्सुतोऽपि—पतितोत्पन्नत्वेन पतितत्वात्, अत एव बोधायनः— "अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुरन्धजडक्लीबव्यसनिव्याधितादींश्चाकर्मिणः पतिततज्जातवर्जम्" इति, तथाऽपि तत्प्रायश्चित्तयोग्यतदिच्छुपरम्। अत एव मानवे "सर्वेषाम्" इति "अत्यन्तम्" इति चोक्तम्। अत एव तद्विरोधो नेति दिक्]*। क्वचिद्विशेषमाह—एतेषामिति,—*[पतितादीनां स्वाभाविकदुष्टभिन्नानामित्यर्थः]*। अत एव अग्रे वक्ष्यति— 6
पतितादिष्विति। दोषप्राप्तौ अप्रत्याख्येत्यादिः। न पुनः—न तु। अग्रे दोषेत्याद्यनुषङ्गः। तत्रानंशत्वमित्यस्य तत्पर्यावर्तनमित्यर्थः। तदानीं तत्त्वाभावात्। तच्च विशेषणं न तूपलक्षणमिति भावः। तत्राऽपि विशेषमादिपुराणेन सूचितमाह—विभागोत्तरेति,—"कालाध्वनोः" इति द्वितीया। विभागात् प्रागेव दोषप्राप्तौ विभागकाले दोषदुष्टस्यापीति शेषः। तथा च स्वाभाविकवत् कृत्रिमदोषेऽपि विभागात् पूर्वजाते: यत्राचिकित्स्यत्वं, तत्रैवानंशत्वं नान्यत्रेति निर्गलितमिति तात्पर्यम्। आदिना—प्रायश्चित्तस्यापि ग्रहणम्। नन्विदं केवलमयुक्तं—अनन्तरं तेन तन्निरासेऽपि तदानीं तस्य सत्त्वात् तस्य विशेषण-

१. ९—२. २. । २. प फ. ब. ह्री अनं० । ३. अ० २. ३. ५. ।

Cole.: Ch. II, Sec. x. §§ 5—7.

8 "विभक्तेषु सुतो जातः सवर्णायां विभागभाक्।"[1] इत्यस्य समानन्यायत्वात्। **पतितादिषु पुंल्लिङ्गमविवक्षितम्[2]। अतश्च पत्नीदुहितृमात्रादीनामप्युक्तदोषदुष्टानामनंशित्वं वेदितव्यम् ॥ १४० ॥

9 **क्लीबादीनामनंशित्वात्तत्पुत्राणामप्यनंशित्वे प्राप्ते इदमाह—

पङ्ग्वादिवचनान्यग्निहोत्राद्यनधिकृतानां सर्वेषामुपलक्षणार्थानीति केचित्। तदसत्—पुरुषार्थत्वाद्द्रव्यस्य वैद्यस्यानधिकृतस्यैव द्रव्यार्हत्वदर्शनात्; यथाऽऽह गौतमः—"स्वयमार्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्" इति, "अवैद्याः समं विभजेरन्"[3] इति च। अतः प्रतिषेधादेवैषामनंशत्वं न त्वनधिकारात्। जन्मान्तरीयमहापातकलिङ्गयोगाद्वा निरंशत्वं पितामहद्रव्यसंबधस्त्वपतितानामन्धादीनामस्त्येवेति संप्रदायः। सामर्थ्येनैव तु भरणमात्रातिरिक्तद्रव्यविनियोगाशक्तेः औचित्यानुवादोऽयमित्यवसेयं। तथा च स्वायम्भुवः— "येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः। म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥" इति। एवं च स्वयमेवैते निरंशकाः॥ १४० ॥

## सुबोधिनी

दयः। पुत्त्रश्च[4] पत्न्यादिश्च संसृष्टी चेति विग्रहः। विभक्तेषु[5] सुतो जातः सवर्णायां विभागभागित्यस्य सामान्यन्यायत्वादिति—विभागादूर्ध्वमुत्पन्ने पुत्रे (स्वपुत्रोत्पत्तिरिति?)[6] धर्मधर्मिणोरुत्पत्तिमात्रभेद एव नान्यो भेदोऽस्ति इति विषयमात्रभेदात् समानन्यायत्वमित्यर्थः। उक्तदोषदुष्टानामिति—क्लीबत्वादिभिः दोषैरित्यर्थः॥ १४० ॥

## बालंभट्टी

त्वाङ्गीकारात्। अत आह—विभक्तेष्विति,—मूलोक्तिरेवेयम्। विभागादूर्ध्वमुत्पन्ने पूर्वं तदीयविभागाभावेऽपि स्वरूपोत्पत्त्या धर्मोत्पत्तिः। एवं तदानीं तत्सत्त्वेन तदभावेऽपि विभागोत्तरं तद्दोषविनाशे तत्त्वस्याभावेन योग्यतया तदुत्पत्तिरिति तस्मिन् पुरुषे समानन्यायत्वमित्यर्थः। क्लीबे असंभवात् पतितादौ विशेषान्तरमाह—पतीति,—उद्देश्यगतत्वेन तदविवक्षा बोध्या। ऋदन्तानामेव द्वन्द्वान्तात् दुहितृशब्द आनङ् न। उक्तदोषेति—पतितत्वादिदोषदुष्टानामित्यर्थः। तत्रापि प्रागुक्तरीतिस्सर्वा बोध्या॥ १४०॥

सङ्गतिमव्यवहितेनाऽऽह—क्लीबादीनामिति,—इदं वक्ष्यमाणप्रतिप्रसवरूपम्।

१ व्य० १२२. । २. क. च लिङ्गं । ख. पुल्लिङ्गत्वम० । ३. २८.—३०, ३१. । ४. थ. द. त्राश्च पत्न्यादिगणाश्च संसृष्टिनश्चेति समासः। ५. त. इद प्रतीकं नास्ति। ६. स्वरूपोत्पत्तिरेवेधत्पत्तिहेतुस्तविभागादूर्ध्वमिन्मन्वादिदोषविनाशे तु तस्मिन् पुरुषे समानन्यायत्वमित्यर्थः (?)।

Cole,: Ch. II, Sec x, §§ 7—9.

औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।

** एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लैब्यादिदोषरहिता भागहारिणोंऽशग्राहिणो भवन्ति। **तत्र क्लीबस्य क्षेत्रजः पुत्रः संभवति अन्येषामौरसो अपि । औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् ॥ १४०-॥ 10 11 12

** क्लीबादिदुहितॄणां विशेषमाह —

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥ १४१ ॥

** एषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता भवन्ति, तावद्भरणीयाः चशब्दात्संस्कार्याश्च ॥ १४१ ॥ 13 14

**क्लीबादिपत्नीनां विशेषमाह—

औरसक्षेत्रजास्त्वित्यादि ॥ १४१ ॥

औरसक्षेत्रजादयस्तु पुत्राः पङ्ग्वादीनामपि निर्दोषास्सन्तो भागहारिण एव। क्लीबस्यापि क्षेत्रजादयो भवन्त्येव; सुताश्चैषां प्रभर्तव्याः दुहितरश्चापुत्रिकाः पङ्ग्वादीनां तद्रिक्थग्राहिभिः प्रकर्षेण ग्रासाच्छादनादिना प्रभर्तव्याः यावदुचितभर्तृभिरसंयोजिताः तैश्च गृहाधिपत्येन सात्कृताः ॥ १४१ ॥

## बालंभट्टी

इदमः प्रक्रान्तार्थकत्वादाह—क्लीबादीनामिति । तुर्वार्थ इत्याह—वेति । अन्यादृशदोषशून्यत्वस्य प्रकृते अनुपयोगादाह—अंशेति। उभयग्रहणफलमाह—तत्रेति,—तयोर्मध्ये इत्यर्थः । अपिना तस्य समुच्चयः । मूले बहुवचनं क्लीबादिसर्वाभिप्रायम् । अत एव बहुवचनादन्येषां ग्रहणशङ्का नेत्याह—औरसेति । अन्यथा औरसादय इत्येव ब्रूयात् । सार्थमिति,—तथा च तेषामंशाभाव एव । औरससमत्वात् पुत्रिकाऽपि प्राप्नोति साऽप्यौरसपदेनैवोपात्ता ॥ १४०- ॥

वै निश्चय । भर्तृसात्कृताः इत्यस्यार्थमाह— विवाहसंस्कृता भवन्तीति,—तथा च तत्र भूतत्वमविवक्षितोमात भावः। चशब्दादिति,—व्युत्क्रमणीयादित्यर्थः॥१४१॥

१. क. सोऽपि ।

Cole.: Ch. II, Sec. x, §§ 9—14.

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ १४२ ॥

15 *एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्तव्याः भरणीयाः; व्यभिचारिण्यस्तु निर्वास्याः। प्रतिकूलास्तथैव च निवार्स्याः, भरणीयाश्चाव्यभिचारिण्यश्चेत्। न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्तव्यम् ॥ १४२ ॥

1 *"विभजेरन्सुताः पित्रोः" इत्यत्र स्त्रीपुन्धनविभागं संक्षेपेणाभिधाय पुरुषधनविभागो विस्तरेणाभिहितः। इदानीं स्त्रीधनविभागं विस्तरेणाभिधास्यंस्तत्स्वरूपं तावदाह—

किं च अपुत्रा योषितश्चेत्यादि ॥ १४२ ॥

अव्यभिचारिण्योपि स्त्रीधनाद्यवष्टंभेन प्रतिकूलाः स्वतन्त्रवृत्तयः तथैव निर्वास्याः। चशब्दात् स्त्रीधनोचिता एवेत्यभिप्रायः ॥ १४२ ॥

बालंभट्टी

साधुवृत्तयः इति हेतुगर्भं विशेषणमित्याह— चेदिति । तत्फलमेवाऽऽह— व्यभीति । तुर्यपादं प्रतीकपूर्वतो विशेषसत्त्वात् पृथक् व्याचष्टे—प्रतीति । यद्यपि अव्यवहितत्वान् निर्वास्या इत्येव प्राप्तं, तथाऽपि चशब्दलात् भर्तव्या इत्यस्यापि सबन्ध इत्याह—भरणीयाश्चेति । नन्वेवं व्यभिचारिणीषु प्रतिकूलासु अनेनोभयं प्राप्तम् ; तृतीयपादेन तु निर्वासनमेव प्राप्तम् ; तत्र हि निर्वास्या इत्यस्य सर्ववाक्यमिति न्यायेन निर्वास्या एवेत्यर्थ इति मिथो विरोधः । अत आह—अव्यभीति । तथा च भिन्नविषयत्वान्न विरोधः । अत एव विभिन्ननिमित्तोक्ति सङ्गतिः[५]। नपुनः—नतु अकरणे दोषश्रवणादिति भावः ॥ १४२ ॥

अथ व्यवहितसङ्गतिमाह—विभजेरन्निति । तत्र तदपवादत्वेन "मातुर्दुहितर." इत्युक्तावपि प्रकारान्तरानुक्त्या न विस्तर इति भावः । अभिहित इति — "औरसो धर्मपत्नीजः" इत्यादिना "अपुत्रा योषितः" इत्यन्तनेति भावः । अभिधास्यन् — "अतीयायाम्" इत्यादिना । तत्स्वरूपं — स्त्रीधनस्वरूपम् ।

१. ख. ग स्या भवति । २. व्य.० ११७. । ३ क तस्य स्व० । ४. प. ब. स्वातुरो० । ५. प. फ. ब. तत्र तदपवादत्वेन मातुरकरणे (?) । ६. व्य. १२८—१४२—१४४. ।
Cole.: Ch. II, Sec. x, §§ 14—15, cole.: Ch. II, Sec. xi. § 1.

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ १४३ ॥

**पित्रा मात्रा पत्या भ्रात्रा च यद्दत्तं, यच्च विवाहकालेऽग्नावधिकृत्य मातुला- 2
दिभिर्दत्तं, आधिवेदानिकं अधिवेदननिमित्तं "अधिविन्नास्त्रियै दद्यात्" इति वक्ष्यमाणं

किं पुनः स्त्रीधनमित्युच्यते ?

पितृमातृसुतेत्यादि ॥ १४३ ॥

अध्यग्न्युपागतं विवाहकाले लब्धं आधिवेदनिकं अधिविन्नायै पत्न्यै प्रदत्तं अधिवेदनार्थं वा । चशब्दात् स्मृत्यन्तरोक्तमलंकारादि । एतत् स्त्रीधनं अवसेयम् ॥ १४३ ॥

## सुबोधिनी

अग्नावधिकृत्येति—*[अग्निसन्निधावित्यर्थः ।]* *[अधिवेदननिमित्तमिति—अधिवेदनं 2
नाम[1] धर्मपत्न्यां सत्यां रागत एव विवाहान्तरकरणम् ।]* "षड्विधं स्त्रीधनम्[2]" इति मनुवचे- 3
नान्मनुपरिगणितेष्वेव षट्सु अश्वकर्णादिवत् स्त्रीधनशब्दोऽयौगिक इति केचन वदन्ति,

## बालंभट्टी

पित्रिति अत्र द्वन्द्वोत्तरपदकद्वन्द्वगर्भो द्वन्द्वः। द्वितीयपादस्याग्निसमीपं प्राप्तमिति शाब्दोऽर्थः। तत्फलितं वक्ष्यमाणकातीयानुरोधेनाऽऽह—यच्च विवाहेति। नित्यसमासत्वेनास्वपदविग्रहत्वादाह—अग्नावधिकृत्येति,—अग्निसन्निधावित्यर्थः। एतेन विवाहकाले कन्यादानकाले अग्निसन्निधौ होमकाले चेति कातीयव्याख्यानं कस्यचिदपास्तम्। उपागमनबीजमाह—मातुलेति। आदिना पितृव्यमातृष्वस्त्रादिग्रहणम् । अधीति—अधिवेदनं निमित्तं यस्येत्यर्थः । अधिवेदनं च सत्यां धर्मपत्न्यां रागत एव विवाहान्तरकरणम् । तदस्य निमित्तमित्यधिकारस्स्पष्टम् । अत्र मानमाह—अधीति,—मूलकृतेति भावः। *[अत्र "आधिवेदनिकं चैव" I
इति प्राच्यधृतपाठो न युक्तः—एवस्य वैयर्थ्यात्, न्यूनतापत्तेर्वचनान्तरविरोधापत्तेश्च ।]* तत् ध्वनयन्नाह—आद्यशब्देनेति । तत्र रिक्थस्य स्त्रीधनत्वे मानन्तु "पत्नी दुहितरश्चैव" इति प्रागुक्तं मूलं स्पष्टमेव । नारदोऽपि—"अध्यग्न्यध्यावहनिकं भर्तृदायस्तथैव च । भ्रातृदत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥" इति। कात्यायनोऽपि—"भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः । विद्यमानेषु संरक्षेत्क्षपयेत्तत्कुलेऽन्यथा ॥ " इति।

१. वि० कंचन । २. व्य. ४८ । ३ थ. द. 'नाम' नास्ति । ४. थ. द. नं स्मृत । ५. थ. द चनबलान्म० । ६. 'अयौगिक' इत्यादि 'प्राबल्याच्च' इत्यन्त नास्ति । ७. द. वर्णयन्ति तदसाधुवच० । ८. व्य०. १३५. । ९.—१३. ८. ।

Cole.: Ch. II, Sec. xi, §§ 1—2.

आद्यशब्देन रिक्थक्रयसंविभागपरिग्रहाधिगमप्राप्तमेतत् स्त्रीधनं मन्वादिभिरुक्तम् ।

## सुबोधिनी

तन्न–वचनान्तरविरोधात् शिष्टाचारविरोधादलब्धात्मिकाया रूढेः यागस्य प्राबल्याच्च यौगिक एवेत्यनेनाभिप्रायेणाऽऽह—स्त्रीधनशब्दश्च यौगिक इति ॥ १४३ ॥

## बालंभट्टी

मृते इति तदा तदनुमत्यनपेक्षा सूचिता । स्वातन्त्र्यापवादमाह—विद्येति । दुहित्रादिदाया-देषु तु संरक्षेत् न स्वेच्छया व्ययीकुर्यात् । अन्यथा दुहित्राद्यभावे । अत्र मृते स्वातन्त्र्यो-क्त्या जीवति तन्नेति गम्यते । यथेष्टविनियोगाभावे तत्कुले भर्तृकुले क्षपयेत् विनियोजयेत् इत्यर्थः । व्यासोऽपि—"द्विसहस्रपणो दायः स्त्रियै देयो धनस्य तु । यच्च भर्त्रा धनं दत्तं 2 सा यथावद्वाप्नुयात्॥" इति। इयं सङ्ख्या प्रत्यब्दे देये, सकृदेवानेकाब्दपर्याप्तधनदाने तु नेयं सङ्ख्या; नाऽपि स्थावरनिषेधः—"दद्याद्धनं वा पर्याप्तं क्षेत्रांशं वा यदीच्छति ।" इति बृहस्पतिः । एतेन "पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै । यथा शक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥" इति कातीयमपि व्याख्यातम् । एतेन "भर्त्रा प्रीतेन" इति मन्वाद्येकवाक्यतया भर्तृदाय इत्यस्य भर्तृदत्तमिति प्राच्यानाम्, इदं भर्तृदत्तं द्विविधजङ्गमसौदायिकविषयं भर्तृदायोपक्रमात्, एतदग्रिमम् "अपुत्राशयनम्" इति तु स्थावरविषयमिति भ्रान्तादेश्च व्याख्यानमपास्तम्— भर्तृदत्तमित्यपि पाठे दोषले-शाभावेन तथा पाठस्य निर्बीजत्वापत्तेः । तावताऽपि याज्ञवल्क्यादिविरोधस्य दुष्परिहर त्वात् । अत्राऽपि वचनान्तरैकवाक्यतया स्वत्वस्योक्तप्रायत्वाच्च, तदाशयस्योक्तत्वाच्च । संविभागलब्धस्यापि तत्त्वे मानन्तु "यदि कुर्यात्समानंशान् पत्न्यः कार्यास्समांशिकाः ।" न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ।" इति, "पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ।" इति "दत्ते त्वर्धांशहारिणी" इति च मूलं प्रागुक्तमेव । क्रयादिलब्धस्य तत्त्वं सामान्यतो लोकप्रसिद्धमेव । देवलोऽपि—"वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत । भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि ॥" इति । अन्यत्र सर्वत्र मानन्तु स्वत्वकारकहेतू-नामष्टानां परिगणनपरो गौतम एव—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" "ब्राह्म-णस्याधिकं लब्धं" "क्षत्रियस्य विजितं" "निर्विष्टं वैश्यशूद्रयोः" इति। इदं प्राग्व्याख्यातम् । स्वत्वस्य स्वत्वहेतूनाञ्च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावेऽपि गौतमतवचनं नि-यमार्थमित्यपि प्रागुक्तमेव । एवं पदार्थानुक्त्वा वाक्यार्थमाह— एतदिति,—एकादशधोक्तं सर्वमित्यर्थः । अप्रामाण्यशङ्कानिरासायाऽऽह— मन्वादिभिरिति । यत्तु "षड्विधं स्त्रीध-नम्" इति मनोस्तत्परिगणितेषु षट्सु अश्वकर्णादिवत् रूढ एव स्त्रीधनशब्द इति कैश्चिदु-क्तत्वादाद्यशब्देन कथं तेषां परिग्रह इति, तन्न—वचनान्तरविरोधात् शिष्टाचारविरोधाच्च ।

१. (?) । २. व्य.० ११५. । ३. व्य० १२३. । ४. व्य० १४८. । ५. १०. ३९—४२. ।

Cole:. Ch, II. Sec xi § 2

*¹स्त्रीधनशब्दश्च यौगिको न पारिभाषिकः—योगसंभवे परिभाषाया अयुक्तत्वात् । 3
*²यत्पुनर्मनुनोक्तम्—"अध्यग्न्यध्यावहानिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं 4
षड्विधं स्त्रीधनं स्मृतम्॥" इति स्त्रीधनस्य षड्विधत्वं, तन्न्यूनसङ्ख्याव्यवच्छेदार्थं नाधि-
कसङ्ख्याव्यवच्छेदाय ।*³अध्यग्न्यादिस्वरूपं च कात्यायनेनाभिहितम्—"विवाहका- 5
ले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । अध्यावहनिकं नाम स्त्रीधन तदुदाहृतम्॥

## बालंभट्टी

तस्माद्यौगिक एवायं दृष्टान्तवैषम्यादित्याह—स्त्रीधनेति । चः त्वर्थे । एवमग्रेऽपि । योग इति अक्लृप्तेति न्यायात् । न च रूढिर्योगमिति न्यायेन वैपरीत्यं शङ्क्यम्—लब्धात्मिकाया एव रूढेः ततः प्राबल्यस्य तन्न्यायविषयत्वात् । एवं चालब्धात्मकरूढितो योगस्यैव प्राबल्यमिति भावः । किं चास्य तथात्वे पुरुषधनशब्दे स्त्रीपुरुषधनशब्दे मातृधनशब्दे पितृधनशब्देऽपि तथा वक्तव्यत्वापत्तेः; तद्वदत्राऽपि निर्वाहाच्च; सौदायिकं धनं प्राप्येत्यनेन योगस्यैव बोधनाच्च । न चैवं पुरुषधनादिवदेतस्याप्यकथनमेवोचितमिति वाच्यम्—तस्या अस्वातन्त्र्येण अर्जनाद्यनधिकारात् । धनाभावेन मातृधनं दुहितृगामीत्यस्यासङ्गतिनिरासाय मनूक्तस्त्रीधनषट्त्वस्य न्यूनतानिरासे तात्पर्यं सूचयितुं मूलकृदादिभिः बहुभिः मुनिभिः बहूनि तान्युक्तानीति दिक् । नन्वेवं मनुविरोधः अत आह—यत्पुनरिति,—यदित्यर्थः । एवमग्रेऽपि । भ्रातृमातृ इत्यत्रोभयत्र शाकपार्थिवादिसमासः; अत एवानङ् न । मूलवचनान्तरानुरोधेनाऽऽह—तन्न्यूनेति,—युक्तं चैतत् । अन्यथा हि षड्विधमध्येऽपि मूलतो मानवे नारदीये च प्रागुक्तविशेषस्य सत्त्वेन तत्राऽपि विरोधदार्ढ्यमेव । किं च तेनापि तदग्र एव "अन्वाधेयं च यद्दत्तम्" इत्यादिना तदधिकमुक्तमिति तस्यापि मिथोऽन्यथा विरोध एवेति । अभिहितमिति,—मानवोक्तक्रमेणेति भावः । स्त्रीभ्यः—कन्याभ्यः प्रकृतत्वात् । हि निश्चये । तत्—दानेन तदीयत्वात् स्त्रीधनम् अध्यग्निकृतमिति सद्भिः परिकीर्तितमित्यन्वयः । एवमग्रेऽपि । पुनः त्वर्थे उक्तवैलक्षण्ये । अध्यावहनं तता नयनं तदस्ति हेतुत्वेन यस्येति "अत" इति ठन् । नाम निश्चये । *[प्रीतिदत्तं द्विविधं—प्रथमदर्शने प्रीत्या पादवन्दन- 4

---

१.—९. १९४. । २.—९. १९५. । ३. अ० ५. २. ११५. ।

Cole.: Ch. II, Sec. xi §§ 3—5.

प्रीत्या दत्तं तु यत्किञ्चिच्छ्वश्र्वा वा श्वशुरेण वा। पादवन्दानिकं चैव प्रीतिदत्तं तदुच्यते ॥ ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा। भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥" इति॥ १४३ ॥

किंच

6 **बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च।

बन्धुभिः कन्याया मातृबन्धुभिः पितृबन्धुभिश्च यद्दत्तं, शुल्कं यद्गृहीत्वा कन्या

अत्र विप्रविभागः— बन्धुदत्तं तथेत्यादि ॥ १४४ ॥

पित्रादिदत्तं बन्धुदत्तं; आधिवेदनिकादि शुल्कं; अन्वाधेयकं अन्वयभोग्यतया दत्तम्;

बालंभट्टी

निमित्तकं तदुत्तरं सेवया प्रत्या दत्तं च। तत्राऽऽदौ द्वितीयमाह—प्रीत्येति। आद्यमाह—पादेति,—तत्प्रीतिदत्तमेवोच्यत इत्यन्वयः। अनेन मानवे प्रीतिकर्मणीति समाहारद्वन्द्वात् सप्तमी। कर्म च पादवन्दनमेव। सङ्ख्याविरोधस्तूक्तरीत्या नेति बोध्यमिति सूचितम्।]*भ्रातृप्राप्ताद्याह—ऊढयेति। यद्यपि कन्याशब्द ऊढायामप्यक्षतयोन्यां, तथाऽपि तत्साहचर्यादनूढापरमेव। *[ऊढया पत्युस्सकाशात् लब्धं भ्रातुः सकाशात् पित्रोर्वा सकाशाल्लब्धं वा

5 अथवा कन्यया पितृगृह स्थितयापि वा अन्यत्र स्थितया वा भ्रातुः पित्रोः मातापित्रो. सकाशाद् लब्धं तत्सर्वं सौदायिकं स्मृतमित्यर्थः। सुदाय एव सौदायिकं स्वार्थिकष्ठञ्; सुदायतो लब्धमिति वा।सुदायसंबन्धिभ्यो लब्धमिति तु प्राञ्चः।]*पूर्वं रिक्थपदार्थस्तु एतदन्यो ग्राह्यः॥१४३

किञ्चेति—अन्यदपि स्त्रीधनं मूलकृदाहेत्यर्थः। अत एव मूले तथेति—उक्तवदित्यर्थः। प्रकृतत्वादनूढावस्थायां दत्तस्यैव तत्त्वाच्चाऽऽह—कन्याया इति। "भ्रातृबान्धवयोर्बन्धुः" इति कोशेऽपि भ्रातुः प्रागुपादानादाह—मात्रिति। स्वसमान-

6 त्वादात्मबन्धूनामग्रहणम्। *[यदिति—तथा चाऽऽर्षासुरादिविवाहविषयमिदम्। अत एव गौतमीयं[2] "भगिनीशुल्कं सौदर्याणामूर्ध्वं मातुः" "पूर्वं चैके"[3] इति वक्ष्यमाणं भगिनशुल्कमासुरादिविवाहोढाया भगिन्या धनमिति कल्पतरुणा व्याख्यातम्।]*कात्यायनेन त्वन्यथैतदुक्तम्—"गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम्। मूल्यं लब्धन्तु यत्किञ्चिच्छुल्कं तत्परिकीर्तितम्॥" इति। गृहं प्रसिद्धम्; उपस्कर उलूखलादिः; वाह्या वृषादिः; दोह्यो गवादिः; आभरणं

१. क. प्रीतिद०। २. प. फ. ब. यं भगिनीशुल्कमासु०। ३.—२८. २५. २६.।

Cole.: Ch. II Sec. xi §§ 5—6.

दीयते। अन्वाधेयकं परिणयनादनु पश्चादाहितं दत्तम्। ** उक्तं च कात्यायनेन— 7
"विवाहात्परतो यच्च लब्धं भर्तृकुलात्स्त्रिया। अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा॥" इति। स्त्रीधनं परिकीर्तितमिति गतेन संबन्धः॥ १४३८॥

## बालंभट्टी

प्रसिद्धम्। कर्मिणामिति पाठे ते दासाद्याः एतेषां मूल्यं यल्लब्धं, तच्छुल्कमित्यर्थः। व्यासेन त्वन्यथैतदुक्तम्—"यदानीतं भर्तृगृहे शुल्कं तत्परिकीर्तितम्।"इति। भर्तृगृहगमनार्थमुल्कोचादि यद्दत्तं, तदित्यर्थः। इदं चोभयं ब्राह्मादिष्वप्यविशिष्टम्। अन्वाधेयकं— स्वार्थे कन् इत्याशयेन योगार्थमाह—परीति। आधेये भूतत्वं विवक्षितमित्याह—आहितमिति। तदर्थमाह—दत्तमिति। मूले एवः एतदन्यव्यवच्छेदे। तृतीये मानमाह—उक्तं चेति,—स्पष्टोऽर्थः। भर्तृकुलात् श्वशुरादेः। पितृकुलात् मातापितृकुलात्। अन्यदपि तत्तेनैवोक्तम्—"ऊर्ध्वं लब्धन्तु यत्किञ्चित्संस्कारात्प्रीतितस्त्रिया। भर्तुः पित्रोस्सकाशाद्वा अन्वाधेयं तु तज्जगुः॥" इति। ततः प्रीतिप्रयुक्तोऽत्र विशेषः। मूलस्य साकाङ्क्षत्वात्तथेत्यनेन सूचितमेवाऽऽह—स्त्रीधनमिति। अत एव विष्णुः—"पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकम्" इति[1]। "प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्तुस्स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम्॥" इति तत्तु महानिबन्धेऽदर्शनान्निर्मूलं; समूलत्वेऽपि वा तदेत्युक्तिसाफल्याय भर्तरि जीवत्युभयविषयमात्रे तस्य स्वाम्यम्। अन्यत्सर्वं तस्या एव; उभयमपि भर्तुरभावे तस्या एवेत्यर्थः। पूर्वैकवाक्यतैव; यद्वा वक्ष्यमाणदुर्भिक्षाद्याशयकम्। तदा दुर्भिक्षादौ। शेषं भर्तरि जीवत्यपि दुर्भिक्षाद्यभाववदित्यर्थात्। अत एव सौदायिके सदा स्त्रीणामित्यत्र सदेत्युक्तम्। तत्राऽपि सदेति पाठे तु भर्तुरित्यस्य मध्यमणिन्यायेनान्वयात् भर्तुः शिल्पैः तन्तुवायादिस्त्रीभिः यद्वस्तु वयनादिना प्राप्तं भर्तुः प्रीत्या च यदन्यैर्दत्तं, तत्र भर्तुः स्वामित्वमित्यर्थः। युक्तं चैतत्—अन्यथा स्वार्जनस्य स्वत्वानापादकत्वापत्तेरिति। एवमन्योऽपि स्त्रीधनत्वापवादः; तथा च कात्यायम्—"तत्र सोपाधि यद्दत्तं यच्चै योगवशेन वा। पित्रा भ्रात्राथ पत्या वा न तत्स्त्रीधनमिष्यते॥" इति। उत्सवादौ शोभा उपाधिः। संभोगाद्यर्थच्छलं योगः। स्त्रीणां सर्वथाऽस्वातन्त्र्यस्य पूर्वमुक्तत्वात् स्वधनव्ययेऽपि भर्त्राद्यनुमतिरपेक्षितौ

---

१ प. फ. ब. हे शुभभर्तृगृहग०। २.—१७. १८.। ३. प. ब. चायासव०। ४. प. ब. फ. ता संभवेऽन्यापदि अत०।

Cole.: Ch. II, Sec. xi, §§ 6—7.

बालंभट्टी

सदेत्युक्तम्।(संभवेऽनापदि?) अत एव "तदस्तु पारतन्त्र्यं धनस्वीकारे को विरोधः" इति पूर्वं मिताक्षरा। सौदायिके तु न तथा; तथा च कात्यायनः—"ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा। भ्रातुस्सकाशात्पित्रोर्वा लब्धं सौदायिकं भवेत् ॥ सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजविनम् ॥ सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम्। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि॥" इति। एतदग्रे "भर्तुर्दायम्" इति ततोऽग्रे "अपुत्रा शयनम्" इति च पूर्वोक्तपाठः। सदेत्यस्य भर्तरि जीवत्यजीवति आपद्यनापदि चेत्यर्थः। आनृशंस्यमनुकम्पा। तन्निमित्तं प्रजीवनं जीवनप्रकर्षाधायकम्। एतेन सौदायिकमिति स्त्रीधनमात्रोपलक्षणम् यस्मात्तदेति हेतोस्सर्वत्र सत्त्वादिति भ्रान्तोक्तमपास्तम्। अत एवाग्रेऽन्यथोक्तिः। दायांशे स्थावरे तु भर्तृदत्तमात्रे न स्त्रिया दानाद्यधिकारः—"भर्त्रा प्रीतेन यद्दत्तम्" इति प्रागुक्तनारदात्। एतेन "मृते भर्तरि" इति प्रागुक्तकातीयमपि व्याख्यातम्। तद्दत्तस्थावरादन्यत् स्थावरं श्वशुरादिदत्तं तु देयमेव—उक्तकातीयात्, "स्थावरादिर्धनं स्त्रीभ्यो यद्दत्त श्वशुरेण तु। न तच्छक्यमपाकर्तुं पुत्रैरपि हि कर्हिचित्॥"इति बृहस्पतेश्च। अन्यथा मिथो विरोधः। न च स्त्रिया दाने नाधिकार[1] इति वाच्यम्—श्रुतिस्मृतिपुराणादौ बहुशो व्रतेष्टापूर्तादौ तत्प्रतिपादनात्, "पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवे[2]।" इति पूर्वं मूलोक्तेः, स्वत्वाभावे परस्वत्वेन दानेऽनधिकारेण तदसङ्गतेश्च; कथञ्चित् कृतेऽपि चौर्यदण्डापत्तेश्च; अनुमत्या कृते फलाभावापत्तेश्च; भर्तृदानस्यापि पुराणे प्रसिद्धत्वात्; दुर्भिक्षाद्यन्यत्र तु न कस्यापि तद्धनग्रहणेऽधिकारः; तथा च कात्यायनः—"न भर्ता नैव च सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥ यदि ह्येकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात्। स वृद्धिं प्रतिदाप्यस्स्याद्दण्डं चैव समाप्नुयात्॥ तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्। मूलमेव तदा दाप्यो यदा स धनवान्भवेत् ॥ अथ चेत्स द्विभार्यस्स्यान्न च तां भजते पुनः। प्रीत्या[3] विसृष्टमपि चेत् प्रतिदाप्यस्स तद्बलात् ॥ ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः। तत्र स्वमाददीत स्त्री विभागं ऋक्थिनां तथा॥"इति। एतेन अनियतसङ्ख्यस्त्रीधनमङ्गीकृत्य षट्त्वसङ्ख्याया अविवक्षामुक्त्वा वचनानां स्त्रीधनकीर्तनमात्रपरत्वमङ्गीकृत्य च यत्प्रजल्पितं प्राच्यैः, तदेव च स्त्रिया धनं यद्भर्तृतः स्वातन्त्र्येण ददाति विक्रीणीते भुङ्क्ते च; तदिदं किञ्चित् संक्षिप्य कात्यायनेनोक्तं "प्राप्तं शिल्पैस्तु" इति। तेन स्त्रीधनमपि न तत् सौदायिकन्तु न तथेति तदपास्तम्—अनेकवचनविरोधापत्तेः, कातीयाशयस्योक्तत्वाच्चेति दिक् ॥ १४३ ॥

१. प. फ. ब. न च स्त्रिया दाने। २. व्य० १२३. । ३. प. ब. त्या भीष्टमपिचेत्प्रजल्पि०

Cole.: Ch. II, Sec. xi, § 7.

** एवं स्त्रीधनमुक्तं, तद्विभागमाह— 8

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ॥ १४४ ॥

**तत्पूर्वोक्तं स्त्रीधनमप्रजसि अनपत्यायां दुहितृदौहित्रीदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां मृतायां बान्धवा भर्त्रादयो वक्ष्यमाणा गृह्णन्ति ॥ १४४ ॥ 9

**सामान्येन बान्धवा धनग्रहणाधिकारिणो दर्शिताः । इदानीं विवाहभेदेनाधिकारिभेदमाह— 10

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ १४५ ॥

**अप्रजसः स्त्रियाः पूर्वोक्तायाः ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु 11

---

एतच्चानपत्यायां मृतायां बान्धवाः सोदर्या भ्रातरो गृह्णीयुः; तथा च गौतमः—"भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः" इति । अस्माच्चोर्ध्वमेव ॥ १४४ ॥

मातुरयमाचार्योक्तकल्पः ; शुल्कादिव्यतिरेकेणतु अप्रजस्त्रीधनमित्यादि ॥ १४५ ॥

ब्राह्मादिविवाहचतुष्टये यत्तु स्त्रीधनं, तदप्रसूतायां भर्तुः; प्रसूता चेद्दुहितॄणामेव ॥ १४५ ॥

---

बालंभट्टी

तदित्यस्य व्याख्या—पूर्वोक्तमिति,—सर्वमित्यर्थः । अप्रजसीत्यसिजन्तं तदर्थः—अनपेति । कन्यादौ मात्रवयवान्वयबाहुल्यात्तस्यापि स्पष्टमर्थं प्रागुक्तस्य "मातुर्दुहितरः" इत्यस्यानुरोधेनाऽऽह—दुहित्रिति,—एतत्पञ्चकरहितायामित्यर्थः । अन्यत्र बान्धवशब्दस्य बन्धुत्रयपरत्वेऽपि प्रकृते वक्ष्यमाणानुरोधेनान्यार्थपरत्वमित्याह—भर्त्रादयो वक्ष्यमाणा इति,—अनुपदमेवेति शेषः । विधिर्न विवक्षित इत्याह—गृह्णन्तीति ॥ १४४ ॥

सङ्गतिमाह—सामान्येनेति,—भर्त्रादित्वसामान्येनेत्यर्थः। अधिकारिभेदमिति,—तथा च पूर्वव्यवस्थापकमेवाग्रिममिति भावः । एतेन "अतीतायाम्" इत्यर्धं "बन्धुदत्तम्" इत्यनेन पूर्वत्रानन्वितेन संबद्धमित्यपास्तम्—मध्ये पाठासाङ्गत्याद्यापत्तेः । *[पूर्वोक्तायाः—दुहित्रादिपञ्चकरहितायाः तस्याः।]* ब्राह्मणादेर्धनसंबन्ध इत्याह—ब्राह्मेति । सप्तम्युपपत्तये 11

---

१. २८ २५. वि० अप्रजायामतीतायां बान्धवाश्च तदाप्नुयुः । २. ख. तीपु० । ३. जाद्वि० । ४. —२८. २५. । ५. प. फ. ब. मित्यर्थः । ६. व्य० ११७. ।

Cole.: Ch. II, Sec. xi, §§ 8—11.

भार्यात्वं प्राप्ताया अतीतायाः पूर्वोक्तं धनं प्रथमं भर्तुर्भवति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। शेषेषु आसुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि। एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्।

12 **सर्वेष्वेव विवाहेषु प्रसूताऽपत्यवती चेद्दुहितॄणां तद्धनं भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणां 'मातुर्दुहितरः शेषम्' इत्यत्रोक्तत्वात्।

सुबोधिनी

दुहितॄणां प्रसूता चेदिति मूलस्थं पदं व्याचष्टे—सर्वेष्वपि विवाहेष्विति। दुहितृदु-

बालंभट्टी

आह— भार्यात्वमिति। प्रकृतत्वादाह—अतीताया इति,—तत्राऽऽर्षस्समासो लुप्तावि-भक्त्यन्तं तत् पृथग्वा पदमिति भावः। अत एव धनमपि यत्किञ्चिदित्याह—पूर्वोक्तमिति,—सर्वमित्यर्थः। भर्तुरेकस्योपादानादाह—प्रथममिति। व्युत्क्रमेणापि-ना समुच्चेयमाह—तदभावे इति। तदधिकारतावच्छेदकं प्रागुक्तमन्वादेराह—तत्प्रत्येति। पाठक्रमादार्थक्रमो बलीयानिति न्यायेनाऽऽकाङ्क्षितत्वात् तस्योभयशेषत्वाच्चाऽऽह—शेषेष्विति। उक्तान्यत्वादाह—आसुरेति[3],—सति सप्तमी। तदित्यस्यार्थः—अप्रजस्त्रीति। पितृशब्दे प्रागवदेकशेषोऽभिमत इत्याह—माता चेति। तत्र क्रमोऽपि प्रागुक्त एवेत्याह—एकेति। अत एव कात्यायनः—"आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं भवेत्। अभावे तदपत्यानां मातापित्रोस्तदिष्यते॥" इति। इदमुपलक्षणमित्याह—तदभावे इति,—उभयाभावे यथाक्रमं उभयप्रत्यासन्नानामित्यर्थः। सर्वशेषं तृतीयपादं व्याचष्टे—सर्वेष्वपीति। सर्वेष्वेवेति पाठान्तरम्। एवः अन्यतरकोटिव्यवच्छेदे। विवाहेष्वित्यनुवृत्तौ अत एव विष्णुः "सर्वेष्वेव प्रसूतायां यद्धनं तद्दुहितृगामि" इति। मध्यपठितस्य दुहितॄणामित्यस्य काकाक्षिगोलकन्यायेन उभयत्रान्वयं मुन्यभिमतमभिसन्धाय तथैवाऽऽह—प्रसूतेति,—प्रसूत प्रसवः तदस्यास्तीति प्रसूतेत्यर्श आद्यजिति भावः। तथा च दुहितॄणां प्रसूतवती चेत् दुहितॄणां तद्धनं भवतीत्यर्थः। अन्यथा तु भर्त्रादेरिति भावः। विशेषमपौनरुक्त्यायाऽऽह — अत्रेति,—श्लोके इत्यर्थः। दुहितृरिति—कन्यायाः कन्या इत्यर्थः। अत्र बीजं तदेवाऽऽह—साक्षादिति। इत्यत्र इत्यत्रैव। तथा सति प्रागुक्तानुरोधादिनैवात्राऽऽ-

१. घ. ष्वेवुवि०। २. व्य० ११७.। ३. भ. तितादि०। ४.—१७. २१.।
Cole.: Ch. II, Sec. xi, §§ 11—12.

**अतश्च मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति, तत्र चोढानूढासमवायेऽनूढा गृह्णाति, तदभावे परिणीता, तत्राऽपि प्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति; तदभावे प्रतिष्ठिता; यथाऽऽह गौतमः—"स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च"[1] इति। तत्र च शब्दात् प्रतिष्ठितानां च। अप्रतिष्ठिता अनपत्या निर्धना वा[2]। 13

**एतच्च शुल्कव्यतिरेकेण। शुल्कं तु सोदर्याणामेव—"भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः"[3] इति गौतमवचनात्। 14

**सर्वासां दुहितॄणामभावे दुहितृदुहितरो गृह्णन्ति—"दुहितॄणां प्रसूता चेत्" इत्यस्माद्वचनात्। 15

**तासां भिन्नमातृकाणां विषमाणां समवाये मातृद्वारेण भागकल्पना—"प्रतिमातृ[4] वा स्ववर्गे भागविशेषः"[5] इति गौत- 16

सुबोधिनी

हितर इति—दुहितृपुत्र्य इत्यर्थः। **[सोदर्याणामूर्ध्वं मातुरिति—मातुरभावे सोदर्या गृह्णीयुरित्यर्थः।] 14 **[यदा दुहितरो बह्व्यः, ताश्च न सन्ति तत्पुत्र्यश्चैकस्या एकैवान्यस्या द्वे अपरस्यास्तिस्र इत्येवं वैषम्यं, तदा मातामहीधने दौहित्रीणां कथं विभागकल्पनेत्याशङ्क्य पौत्राणां पि[6]तामहधनोक्तमेव न्यायं स्मारयति—तासां भिन्नमातृकाणामिति। प्रतिमातृतो वा स्ववर्ग इति अस्यार्थः — दौहित्रीवर्गे प्रतिमातृ मातरि मातरि स्वस्वमातृविषये 15

बालंभट्टी

दितः क्रममाह—अतश्चेति,—तासामपि तत्त्वे चेत्यर्थः। वृत्तायां—मृतायाम्। दुहितरः,— साक्षात्। अत्राऽपि तथैवेति सूचयन् प्रागुक्तमेवाऽऽह— तत्र चेति,— तासां मध्ये चेत्यर्थः। अनूढाः अनूढा एव। एवमग्रेऽपि। तत्रापि परिणीतामध्येऽपि। द्वितीयपक्षोक्त्या प्रतिष्ठितानां प्राप्तमेवेत्याशयेनाऽऽह—तत्र चशब्दात्प्रतीति,—गौतमीय इत्यर्थः। स्वोक्तशुल्के विशेषमाह—एतच्चेति,—मातृधन दुहितॄणामीत्युक्त चेत्यर्थः। शुल्कं तु—तद्रूपं स्त्रीधनम्[7]। तद्दाने तद्ग्रहणमिति तत्त्वात्तस्य स्त्रीधनत्वं भगिनीशुल्कमिति वा। ऊर्ध्वमिति—मातुर्मरणादनन्तरमित्यर्थः। कल्पतरुरप्येवम्। अस्य वाक्यशेषोऽपि प्रागुक्तः। माता चात्र भगिन्येव। तथा च तद्रूपाया मातुरभावे दुहित्रादिषु पौत्रपर्यन्तेषु सत्स्वपि स्वभागिनीशुल्कं सोदर्या एव गृह्णीयुरित्यर्थः। एवेन दुहित्रादिव्यवच्छेदः। तथा च तद[8] भावे तेषाम्। एतेन ऊर्ध्वमित्यस्य सोदर्याणामभावे इत्यर्थमभिप्रेत्य आदौ तेषां ततो मातुरुभयाभावे पितुः—वक्ष्यमाणबौधायनादिति भ्रान्तोक्तमपास्तम्। ननु यद्यनेककन्यानां मृतानां वैषम्येण कन्याः, तदा तासां मातामहीधने कथं विभागकल्पनेत्याशङ्कायाम् "अनेकपितृकाणाम्"[9] इत्यनेन[10] पौत्राणां पैतामहधनविषये उक्तमेव न्यायं स्मरन्नाह—तासामिति,—कन्यानामित्यर्थः। अत्र वचनमित्याह—प्रतीति। वा एवार्थे।

१—२८. २४। २. च. छ. 'वा' नास्ति। ३—२८. २५। ४. ख. तृतो वा स्ववर्गेण भा०। ५.—२८ १७। ६. थ. द. पैता०। ७. भ. नम् ऊर्ध्वं०। ८. ष. फ. ब. व माता। ९. या० १२०। १०. भ. नेनस्मर०।

Cole:. Ch. II, Sec. xi §§ 13—16.

17 मस्मरणात् ।** दुहितृदौहित्रीणां समवाये दौहित्रीणां किञ्चिदेव दातव्यम्; यथाऽऽह मनुः—"यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः । मातामह्या धनात्किञ्चित्प्रदेयं
18 प्रीतिपूर्वकम् ॥ " इति । ** दौहित्रीणामप्यभावे दौहित्रा धनहारिणः, यथाऽऽह नारदः—"मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः । इति" ।

सुबोधिनी

भागविशेषः कर्तव्यो न स्वस्वरूपापेक्षयेति । मातुर्दुहितरोभाव इति अस्यार्थः—

बालंभट्टी

स्ववर्गे दौहित्रीवर्गे । प्रतिमातृ मातरि मातरि। स्वस्वमातृविषये यो भागविशेषः, तत्कल्पना कर्तव्या नस्वस्वरूपापेक्षयेति। नन्वेवं भ्रातृतत्पुत्रसमवाये उक्तप्रकारस्यात्राऽप्यापत्तिरत आह —दुहितृदौहित्रीणामिति, — दुहितरश्च दुहितृकन्याश्च तासामित्यर्थः । किञ्चिदेवेति अनेन मातृद्वारकभागकल्पनस्य सर्वथा तदभावस्य च निरासः । तासां प्रागुक्त कन्यानाम् । जनन्यामित्यग्रिममिदम् । अग्रे शेषषष्ठी । यथार्हतः — यथायोग्यम्
14 द्रव्याल्पत्वबहुत्वादियोग्यतानुसारेण । सार्वविभक्तिकस्तसिः । *[मातुरिति,—अत्राभाव इति दुहितॄणामिति च यथेष्टमन्वेति । तदन्वय इति च तन्त्रेण सप्तम्यन्तं प्रथमान्तं च । भजेरन्नित्यस्य चानुवृत्तिः ।]* तथा च मातुरभावे तद्धनं साक्षाद्दुहितरो गृह्णीयुः, दुहितॄणामभावे तदन्वये दुहितृसन्तानमध्ये आदौ दुहितॄणां दुहितरः, तदभावे तदन्वयः दुहितॄणा-
18 मन्वये दौहित्रा इत्यर्थः।*[तथा च तदन्वय इत्युक्त्या पुत्रीसन्तानरूपाणां दौहित्राणां ग्रहणमन्यथा तदुक्तिर्व्यर्थैव स्यात् । यद्वा तदन्वय इति सप्तम्यन्तपाठ एव । मातुर्धनं दुहितर आप्नुयुः, तदभावे दुहितॄणां तद्दुहितॄणां दौहित्रीणां, तदभावे तदन्वये जाता दौहित्राः तेषामित्यर्थः । प्रथमान्तमात्रपाठेऽप्येवम् । अग्रे यथायोग्यं क्रियाध्याहारः पक्षद्वयेऽपि । तदन्वया इति प्रथमाबहुवचनान्तपाठस्तु युक्ततरः, तदा आद्यैव व्याख्या]*। ननु तच्छब्देन मातृपरामर्शः कन्यापरामर्शो वा कुतो नेति चेन्न—आशयानवबोधात् । तथा हि । मातुरभावे दुहितरः, तासां दुहितॄणामभावे तदन्वय इत्येतावन्मात्र हि मूलोक्तसमंअभिमतं स्यात्, तदा आद्यपक्षो भवेत् न तु तथा—दुहितॄणां दुहितरः इत्यन्यतरस्यानोतप्रयोजनकत्वापत्तेः, मूलवत्तद्विनैव निर्वाहात्, पदाधिक्यापत्तेश्च । द्वितीये पक्षद्वयविधेयत्वेन प्राधान्यस्य द्वितीये पाठसन्निधेश्च सत्त्वेऽपि आद्ये पाठसन्निधेः पक्षद्वयेऽपि आर्थसन्निधेरवयवसन्निधेश्च सत्त्वात् दौहित्रापेक्षया दौहित्रीसन्ततेर्विप्रकृष्टत्वात् ।

---

१.—९. १९३ । २.—१३. २। ३. द. तत्र (?) । ४. भ. ग्यं सार्व० । ५. प. फ. ब. युः दौहि० । ६. प. फ. ब. तॄणां तदभावे । ७. प. ब. यातुराधा० ।

Cole:. Ch. II, Sec. xi §§ 16—18

तच्छब्देन सन्निहितदुहितृपरामर्शात्* दौहित्राणामभावे पुत्रा गृह्णन्ति—"ताभ्य ऋतेऽ 19 न्वय" इत्युक्तत्वात्।मनुरपि दुहितॄणां पुत्राणां च मातृधनसंबन्धं दर्शयति —"जनन्यां संस्थितायां तु समं सर्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः॥" इति। —मातृकं रिक्थं सर्वे सहोदरा समं भजेरन्, सनाभयो भगिन्यश्च समं भजेरन्निति संबन्धः, 20 न पुनः सहोदरा भगिन्यश्च संभूय भजेरन्निति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः,

सुबोधिनी

मातुरूर्ध्वं तद्धनं दुहितरो गृह्णीयुः, तदभावे तदन्वये दुहितृसन्ताने प्रथमतो दुहितॄणां दौहित्रीणां भवति, तदभावे तदन्वय इत्यभिधानात् पुत्रीसन्तानरूपाणां दौहित्रीणां भवति अन्यथा तदन्वय इत्युक्तेरानर्थक्यादिति ।]* ननु तच्छब्दः सन्निहितपरामर्शकः, तथा च दुहितृदुहितॄणामेव पाठक्रमेण सन्निहितत्वात् दौहित्र्यन्वयो वंश एव लभ्यते, न दुहितृसन्तानरूपा दौहित्रा लभ्यन्त इत्यत आह—तच्छब्देनेति । अयमभिसन्धिः — अस्यार्थसान्निध्येरत्रयवसान्निध्येश्च विद्यमानत्वात् साक्षाद् दुहितृपरामर्श एव युज्यते इति । "जनन्यां संस्थितायां तु" इति मनूक्तं व्याचष्टे— मातकमिति । ननु सहोदराः सनाभयो भगिन्यश्च मिलित्वा भजेरन्नित्येकान्वयोऽस्तु किमिति भिन्नान्वय इत्याशङ्क्य नेत्याह—न पुनरिति । *[तत्र हेतुमाह—इतरेतरयोगस्येति । अयमाशयः— 20

बालंभट्टी

तदाह—तच्छब्देन सन्निहितेति,—यदीयं धनं तत्सन्निहितेत्यर्थः । अत एव तत्पदसार्थक्यम् । अत एव उक्तनारदं विहायाऽऽह—ताभ्य इति,—मूल एवेति भावः । "दुहिणामभावे तु रिक्थं पुत्रस्य तद्भवेत् ।" इति कातीयमप्येवंपरम् । इत्याशयिकैव मनूक्तिरिति । अत्र तत्सम्मतिमप्याह—मनुरपीति । संबन्धं तन्मात्रं न तु क्रमं नापि समुच्चयमिति भावः । संस्थितायां मृतायाम् । शब्दतः समुच्चयप्रतीतेरभिमतं मन्वर्थमाह—मातृकमिति, — तत आगामीत्यर्थः । सनाभयः सोदर्यः । ननु शब्दतः प्रतीतेरभिमतः परोक्त एकान्वय एवास्तु, किं भिन्नान्वयेन अत आह—न पुनरिति, न त्वित्यर्थः । संभूय मिलित्वा । समं भजेरन्निति पाठः । संबन्धइत्यस्याग्रेऽनुषङ्गः । तत्र हेतुमाह—इतरेतरेति,—द्वन्द्वैकशेषयोरभावादित्यर्थः । इतरेतरयोगे मिलितस्यैकधर्माव-

१ —९. १९२. । २. त. णां दुहितृदुहितॄणां दौ० । ३. थ. द. मर्शी । ४. थ. अस्य प्रतीकस्यावकाशो विसृष्टः । ५ थ. द. इदमत्राकृतम् आर्थ० । ६. थ. द. मनुवचनं व्याचष्टे मातृकं रिक्थमिति । ७. थ. द. परिहरति न पुनस्सहोदरा इति । ८. त. एतदादि 'इतरेतरयोग' इत्यन्तं नास्ति । ९. प. फ. ब. तः परोक्त० ।

Cole:. Ch. II, Sec. xi §§ 18—20.

विभागकर्तृत्वान्वयेनापि चशब्दोपपत्तेः;

## सुबोधिनी

चत्वारश्चार्थाः समुच्चयान्वाचयेतरेतरयोगसमाहाराः। "चार्थे द्वन्द्वः"[1]। तत्र समुच्चयान्वाचययोरसामर्थ्यात् द्वन्द्वसमासो नास्ति। इतरेतरयोगसमाहारयोरेव समासः। इतरेतरयोगप्रतीतौ च मनुवचने भ्रातृभगिन्योः[2] सम्भूय विभागप्रतीतिः इतरेतरयोगप्रतीतिश्च द्वन्द्वेन कृतेनैकशेषद्वारा वा। यथा धवखदिरपलाशा इति तथा भ्रातृभगिन्य इति सजातीयैकशेषे वृक्षा इतिवच्चापत्यानीति वा। यद्वा[3] विजातीयैकशेषे "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्"[4] इति भ्रातृस्वस्रोरेकशेषे भ्रातराविति वा, पुत्रदुहित्रोरेकशेषे पुत्राविति वा। एतेषामन्यतमसद्भावे भवति तत्प्रतीतिः। न च तथा। तस्मान्नेतरेतरयोगप्रतीतिरिति। किञ्च चशब्दस्य प्रकारान्तरेणाप्युपपत्तेः न भ्रातृभगिन्योः सम्भूय विभागप्रतीतिरित्याह—विभागकर्तृत्वान्वयेनापीति। अथ[5] वा ननु द्वन्द्वैकशेषाभावेऽपि चशब्दबलादितरेतरयोगप्रतीतिरस्त्वित्यत आह–विभा-

## बालंभट्टी

च्छिन्नेतरान्वयः। मेलनं च समूहरूपता। समूह एव च इतरेतरयोगपदवाच्यः। अत एव तद्विग्रहवाक्ये चद्वयादिप्रयोगः। तेन ह्यन्योन्यस्मिन्नन्योन्यसाहित्यं गम्यते। तेन समूहरूपतासिद्धिः। अत एव चैत्रश्च मैत्रश्च पचत इत्यादौ नित्यद्विवचनाद्यन्ताख्यातप्रयोग एव—एकत्वेन द्वित्वादेर्विरोधेऽपि समूहबुद्धिविषयगतनानैकत्वेनाविरोधात्। तस्य प्रतीतिर्हि द्वन्द्व एकशेषे च भवति यथा धवखदिरपालाशा इति सजातीयैकशेषे वृक्षा इति विजातीयैकशेषे भ्रातराविति भ्रातृपुत्राविति वा। तस्मान्नेतरेतरयोगप्रतीतिरिति भावः। ननु चकाराभावेऽपि तु इत्यस्य चार्थत्वात् चस्य चैकत्रात्र सत्त्वात् साङ्काश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इत्यादाविव तत्प्रतीतिस्स्यादेव; अत आह– विभागेति। कर्तृत्वान्वयेनापीति पाठः विभागे कर्तृत्वेनान्वयेनापीत्यर्थः। क्वचित्तथा पाठ एव। तथा च दृष्टान्ते प्रकारान्तरावगततात्पर्यवशात् मिथस्साहित्यावगतावप्यक्षेश्वरं गुरुं च भजस्वेत्यादाविव एकस्यान्यसहितस्यान्वयेऽप्येकस्य केवलस्यैवैकधर्मावच्छिन्नेऽन्वयाच्च समभिव्याहृतस्य किंचिदप्राधान्यप्रतीत्या एकरूपावच्छिन्ने एकरूपेणान्वयसत्त्वात् तत्कर्तृत्वांशे समुच्चयेऽपि न तथेति भावः। अपिः उक्तरीतिसमुच्चये[6] एवार्थो वा। विभागकर्तृत्वेनान्वाचयेनापीत्यपपाठः—असंबद्धत्वात्। यत्र हि चस्य क्रियान्वयः, तत्र प्रायेणान्वाचयस्तत्र च समभिव्याहृतमानुषङ्गिकमितरसाहित्यं च भाक्तं फलति। तथा च क्रिययोर्मध्ये सर्वं आद्यं

---

१. अ० २. २. २९. । २. थ. द. 'भ्रातृ' आरम्य 'तथा' इत्यन्तं नास्ति । ३. थ. द. अथवा । ४. अ० १. २. ६८. । ५. त. अथैवैकशे० । थ. 'अथ' आरम्य 'विभागेति' इत्यन्तं नास्ति । ६. भ. चायकः वा० ।

Cole:. Ch. II, Sce. xi, § 20.

यथा देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेति ।
** समग्रहणमुद्धारविभागनिवृत्त्यर्थम् । सोदरग्रहणं भिन्नोदरनिवृत्त्यर्थम्। ** अनपत्यहीनजातिस्त्रीधनं तु भिन्नोदराऽप्युत्तमजातीयसपत्नीदुहिता गृह्णाति, तदभावे तदपत्यम् ; तथा च मनुः—"स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन । ब्राह्मणी तद्धरेत्क- 22

## सुबोधिनी

गोति[1] । तत्र दृष्टान्तमाह[2]—यथा देवदत्त इति । स्त्रियास्तुयत् भवेद्विवित्तामिति—

## बालंभट्टी

चान्यनिष्पादकफलं निष्पाद्य तमेवं च तद्व्याप्य(?)यत्रैका मुख्या परा गौणी तत्रान्वाचयविषयत्वमिति । एवं च चस्यान्यथाऽप्युपपत्तेर्न तयोः संभूयैव विभागप्रतीतिरिति भावः।तत्र दृष्टान्तमाह—देवेति । यत्तु एवं सति "समं स्यादश्रुतत्वात्" इति[3] न्यायत एव समत्वप्राप्तेः तदानर्थक्यमिति तदेव तयोः संभूयग्रहणार्थत्वे गमकमिति भ्रातृभगिन्योस्तुल्यवज्जननीधनाधिकारित्वे समताविधानं युक्तमिति, तन्न—तत्राऽपि पक्षे तन्न्यायत एव तत्प्राप्त्या तदानर्थक्यस्य तदवस्थत्वात्, अत्रापि पक्षे पितृधन इव मातृधनेऽपि विंशोद्धारादिप्रसक्तिनिवर्तकतया[4] तस्य सार्थक्याच्च ; तदेतदभिप्रेत्याऽऽह— समेति । कल्पतरौ तु सर्वे पुत्रा इति पाठः। तथा च सोदर्यो भगिन्यः साक्षात् स्वमातृदुहितरः[5], तथा तदभावे तद्दौहित्रपर्यन्ताः, तदभावे सोदराः मृतायाः साक्षात् पुत्राः न सपत्नीपुत्राः, तदभावे पौत्रा इति मनुतात्पर्यार्थः । एतेन " स्त्रीधनं स्यादपत्यानां दुहिता च तदर्हति। अपुत्रा चेत्समूढा तु लभते मानमात्रकम् ॥" इति बृहस्पतिः, " समं सर्वे सोदर्या मातृकं रिक्थमर्हन्ति कुमार्यश्च " इति शङ्खलिखितौ चेत्यादि सर्वं व्याख्यातप्रायम् । आद्ये "अप्रत्ता चेत्समूढा तु न लभेन्मातृकं धनम् ।" इत्युत्तरार्धे पाठान्तरम्[6] । "अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्।" इति वा । सविशेषं प्रागुक्तमनुसूचितमेवाऽऽह—सोदरेति,—सहोदरैरत्यर्थः[7] ।]* तथा च स्वपुत्राद्यभाव एव सपत्नीपुत्रादयः। विशेषान्तरमाह—अनपत्येति । दुहितेति—सैवेत्यर्थः ; न तु हीनजातीयः सापत्नपुत्रो, नापि ब्राह्मदैवत्यादितः प्राग्व्यवहितपद्यद्वयोक्तो यथायथं भ्राता माता पिता इति भावः । तदपत्यं—तादृग्विधो दौहित्रः । अत्र मानमाह—यथाऽऽहेति । तथा चेति पाठान्तरम्। अत्र स्त्रिया इति पित्रेति ब्राह्मणीति

१. द. विभागकर्तृत्वान्वयेनापीति । २. त. हृदे० । ३. मी० १२. ३. १०. ५३. । ४. प. ब. कस्यात्तस्यासा० (?) । ५. प. फ. ब. रस्तावत्तस्मात्तद० । ६. प. फ. ब. रं सवि०। ७. प. फ. ब रेत्यर्थः नतुही० ।

23 न्य तदपत्यस्य वा भवेत्॥" इति।** ब्राह्मणीग्रहणमुत्तमजात्युपलक्षणम् । अतश्चानपत्य-
24 वैश्याधनं क्षत्रियाकन्या गृह्णाति । **पुत्राणामभावे पौत्राः पितामहीधनहारिणः—
"रिक्थभाज ऋणं प्रतिकुर्युः इति गौतमस्मरणात्, "पुत्रपौत्रैर्ऋणं देयम्" इति पौ-
25 त्राणामपि पितामह्यृणापाकरणेऽधिकारात्। ** पौत्राणामप्यभावे पूर्वोक्तभर्त्रादयो बान्धवा

## सुबोधिनी

अव स्त्रिया इति पित्रेति ब्राह्मणीति कन्येति चोपादानादुक्तार्थप्रतीतिः । अनपत्यवैश्याधनं क्षत्रियाकन्या गृह्णातीति—एव शूद्राधनेऽपि द्रष्टव्यम् । रिक्थभाज ऋणं प्रतिकुर्युरिति—

## बालंभट्टी

कन्येति चोपादानादुक्तार्थप्रतीतिः । तथा हि—पित्रा दत्तं कथमपि स्त्रिया धनं कन्या हरेदित्युक्ते स्वापेक्ष्यैव स्त्री स्वापेक्षयैव कन्येति स्त्रीकन्याशब्दयोः मिथः सापेक्षशब्दत्वा-भावात् सापत्नमाता सापत्नदुहितेति च गम्यत इति। तदपत्येति—ब्राह्मण्यपत्यस्येत्यर्थः। वा व्यवस्थित विकल्पे, तेन तदभाव इति लभ्यते । पूर्ववत्संग्रहेऽप्युक्तम्—" ब्राह्मणी तु भवेत्कन्या हरेद्रिक्थं तु मात्रकम् । पितुस्सापत्नमातुश्च भ्रातुश्चापि हरेद्धनम् ॥" इति । अत एव पितृपत्न्य इति सुमन्तुरपि । न च सापिण्डशौचमात्रविषयस्सः—सङ्कोचे मानाभावात् विनिगमनाविरहाच्च । अत्र न्यूनतां निराचष्टे — ब्राह्मणीति। क्षत्रिया कन्या—सापि तेन ब्राह्मणी समुच्चयः । एव शूद्रास्त्रीधनं ब्राह्मणी क्षत्रिया वैश्या च कन्या गृह्णातीत्यपि बोध्यम् । अत्र उत्तमजातीयाय[1] एव सापत्नकन्यकाया धनग्रहणाभिधानात् हीनजातीयपत्नीदुहितॄणामप्युत्तमजातीयसपत्नीपुत्रसद्भावे धनग्रहणं नास्तीति गम्यते ; तथा च स्वतः प्रजाशून्यत्वात् ब्राह्मेत्याद्यव्यवहितश्लोकद्वयेन भर्त्रादेरधिकारप्राप्तौ तदपवादोऽनेन क्रियत इति तयोरयं न विषय इति भावः । अत्र कथञ्चनेत्यनेन कथमपि प्रकारान्तरेण लब्धमपीत्यर्थकेन पितृदत्तातिरिक्तसर्वसङ्ग्रहः; तेन सर्वविषयत्वमस्य। एतेन पित्रा दत्तमिति विशेषणाद्विवाहसमयादन्यत्राऽपि पितृमातृदत्तं कन्याया एवेत्येतदर्थकमिदमिति मिश्राद्युक्तमपास्तम् । रिक्थभाज इति—ये ऋणप्रतिकर्तारः, ते रिक्थभाज इत्यर्थेन पौत्रस्यापि तादृशत्वेन पुत्राभावे स पितामहीधनभागित्यर्थः । ननु ऋणनिवारकत्वमेव तस्यासिद्धम् ; अत आह—पुत्रपौत्रैरिति,—मूलोक्तिरियं प्राक्। अपकर्षणं दूरीकरणम्। तथा च वचनद्वयपर्यालोचनयोक्तार्थलाभः । " अतीतायाम्" इत्यादिसार्धश्लोकस्य तृतीयपादरहितस्य विषयमाह—पौत्राणामपीति । पूर्वपूर्वोक्ता इत्यनेन क्रमस्सूचितः । *[यत्तु प्राच्याः—" जनन्यां संस्थि-
20

१.—९. १९८.। २.—१२.४०.। ३. व्य० ५०. १४. द. पुनरिति (?)।५. त. जः ऋणप्र०। ६. प. फ. ब. तीयाः समं सर्वे सोदर्या इति शंखलिखिताभ्यां "सापत्न्यं पुत्रकन्यानां मृतायास्त्री स्त्रिया । " एव सापत्नकत्वात् ब्राह्मे० । ७. प. फ. ब. दर्थेन पौत्रस्यापि तादृ० ।

Cole.: Ch. II, Sec. xi, §§ 22—25.

धनहारिणः ॥ १४५ ॥

सुबोधिनी

ये ऋणप्रतिकर्तारस्ते रिक्थभाज इत्युक्तत्वात् वचनद्वयपर्यालोचनया पौत्रस्यापि तादृशत्वेन पुत्राभावे पौत्रः पितामहीधनभागित्यर्थः ॥ १४५ ॥

बालंभट्टी

तायाम्'' इति मनोः ''स्त्रीधनं स्यादपत्यानाम्'' इति बृहस्पतेः ''समं सर्वसोदर्याः'' इति शङ्खलिखिताभ्यां ''सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् । अप्रजायां हरेद्भर्ता माता भ्राता पिताऽपि वा ॥'' इति देवलाच्च आद्यत्रये द्वन्द्वश्रवणेऽपि तत्तुल्यार्थसमुच्चयवाचकानुगतचश्रवणात् तत्र सर्वत्र प्रथमं पुत्रोपादानात् मातृधने पुत्रस्याप्यधिकारादितरेतरयुक्तयोर्भ्रातृभगिन्योः विभज्य तावद्धनग्रहणम् सममेव सर्ववचनतात्पर्यभूतोऽर्थः, देवलवाक्ये तु द्वन्द्वश्रवणात् तथा व्यक्तमेव, किञ्च कुमार्या एव सर्वमातृधनाधिकारित्वे यौतकधने मन्वादेर्विशेषवचनं व्यर्थं स्यात् ,तथा च पुत्रकुमार्योस्तुल्यवदधिकारः, तयोरन्यतराभावे अन्यतरस्य तद्धनं,द्वयोरपि तयोरभावे ऊढायाः पुत्रवत्याः, संभावितपुत्रवत्याश्च तुल्याधिकारः—स्वपुत्रद्वारेण पार्वणपिण्डदानसंभवात् । अत एव प्रागुक्तो दुहित्रभावे दौहित्रस्यैवैं धनाधिकारः—''दौहित्रोऽपि'' इति मनोः, न तु वन्ध्या तादृशविधवादुहित्रोः स्वसुतादिना पार्वणपिण्डदानाभावात्, अत एव नारदः—''पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात् ।'' इति , पौत्रदौहित्रयोस्तु समवाये पौत्रस्यैव सः पुत्रेण परिणीतदुहितुर्बाधात् , बाधकपुत्रेण बाध्यपुत्रबाधस्य न्याय्यत्वात् , उक्तानां सर्वेषां दौहित्रपर्यन्तानामभावे वन्ध्यातादृशविधवयोरपि सः—द्वयोरपि तत्प्रजात्वात् , प्रजायां अभाव एव च अन्येषामधिकारात् , प्रागुक्तानि गौतमनारदकात्यायनयाज्ञवल्क्यवचांसि तूक्तदेवलादिविरोधात् यौतकद्रव्यमात्रविषयाणि, अत एव मनुः—''मातुस्तु यौतकं यत्स्यात् कुमारी भाग एव सः । '' इति, यौतकं परिणयनलब्धं ''यु मिश्रणे'' इति धातोः युतपदं मिश्रता च एकशरीरिता तयोर्विवाहात् भवति—''अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचम्'' इति श्रुतेः, अतो विवाहकाललब्धं यौतकम् , कल्पतरुरप्येवम्, अत एव वसिष्ठः—''मातुः परिणाय्यं स्त्रियो भजेरन्'' इति, परिणाय्यं परिणयनधनमिति, तन्न—मुनीनामाशयानभिज्ञानात्। तथा हि । चार्थसमुच्चयस्य सहाधिकारं विनापि व्याख्यात्रोपपत्तिस्तत्र तावत्कृतैव, युक्ता च सैवेत्युक्तं च । किं च उपादानमात्रेण तस्य तत्राधिकारलाभेन प्रथमोपादानस्य न तत्त्वहेतुत्वं प्रत्युत ततः तस्याः प्रथममेवाधिकारापत्तिरिति न भवदिष्टसिद्धिः । किंच तदपि न—गौतमादिवाक्ये तासामेवोपादानात् प्रत्युत नारदादिभिः त्रिभिः क्रमस्य स्पष्टतया सामान्येन प्रतिपादनात् । ''मातुर्दुहितरः'' इत्यत्र युक्तं चैतदित्यादिनो-

१—९ १९२. । २.—९. १३२. । ३.—१३. ५०. । ४. ९. १३१. । ५.—१७. ४६. । ६. व्य० ११७. ।

Cole,: Ch. II, Sec xi, §§ 25.

बालंभट्टी

क्तप्रकारेण प्रत्यासत्त्यतिशयस्य तस्यामेव सत्त्वेन तस्यैव धनग्रहणाधिकारितावच्छेदकत्वस्य मन्वाद्युक्तत्वेन च तथैवौचित्याच्च। किञ्च सहाधिकारित्वे उभयसत्त्वे एवाधिकारो नान्यतरसत्त्वे इति तत्रानधिकारापत्तेः। तथा सति तयोरित्याद्यग्रिमस्यासङ्गतिः। न हि दंपत्योस्सहविहितमाधानादिकमन्यतराधिकारिकं कस्यापि सम्मतं, लोकेऽपि सहाधिकारिकं कर्मान्यततरेण न क्रियते। किञ्च अनूढेत्यंशस्य कुतो लाभः। न हि तेषु सर्वेषु तदुपादानमस्ति। गौतमीयं तु अन्यविषयतया योजित भवद्भिरेव। अत एव च तद्विरोधोऽपि दुष्परिहरः। कन्याशब्दस्य चाक्षतयान्यां शक्तिः कुमारीशब्दस्य च प्रथमवयोविशिष्टायां शक्तिः; अन्यैकवाक्यतया तद्दुहितृसामान्यपरत्वमेवान्यथा न्यूनतापत्तेः। बृहस्पतिवाक्यन्तु गौतमीयसमानार्थम्। किंच तत्राप्रत्ता चेत्युत्तरान्वयि न पूर्वान्वयि अन्यथा समृद्धयोः कदापि तदभावे गौतमीयत्वासङ्गतिः स्मृत्यन्तरविरोधापत्तिश्च। भर्त्रुल्लिखितवचनातिरिक्तं नापि तथा बोधकं वचनमत्रास्ति। किं च तत्र मनोर्गतेरुक्तत्वेन शङ्खलिखितवाक्यस्य स्पष्टमेव तत्समानार्थत्वेन अदोषः। बृहस्पतिवाक्यस्यापि तत्तत्समानार्थतया विभक्ततया स्यात्पदघटितानिर्देशेन भवदभिमतार्थस्याक्षरमर्यादयाऽलाभेन चस्यैवार्थकत्वेन आदौ दुहितैव तदंशिनी तदभावे अपत्यानां पुत्राणां स्त्रीधनं स्यात् संभावनलिङा तत्सत्ता संभवेदित्यस्यैवार्थतया लाभाच्चादोषः। देवलवाक्यं तु मातृधनं पुत्रमात्रसत्त्वे तेनैव ग्राह्यं कन्यामात्रसत्त्वे तयैव ग्राह्यमित्येवं सत्तामात्रबोधकं न क्रमबोधकं, नापि सहाधिकारबोधकमिति न दोषः। किं च नारदादित्रयानुरोधेन मन्वादिचतुष्टयस्य तथा तत्परत्वमेव युक्तं[1] न तु "मातुस्तु"[2] इत्येकमन्वनुरोधेन तेषां सामान्यानां विशेषपरत्वं कृत्वा तेषां तत्परत्वं युक्तं—बहूनामनुरोध इति न्यायविरुद्धत्वात्। किञ्च चतुर्णां वचनानां सहाधिकारिताबोधकत्वेन तदन्यचतुर्णां मन्वेकवाक्यतया यौतकविषयकत्वस्योक्तत्वेन तयोरन्यतरस्याभावे इत्याद्यर्थस्य भवदुक्तस्य निर्मूलत्वापत्तिः। तेषामपि तत्त्वे स्वविरोधोऽस्मन्मतप्रवेशश्च। किञ्च तस्य न भवदुक्तोऽर्थः किन्त्वन्य एवेत्यनुपदमेव स्फुटीभविष्यति। किञ्च स्वपुत्रेत्यादिहेतुरप्ययुक्तः—यश्चार्थहरस्स पिण्डदायीत्यौत्सर्गिकनियमसत्त्वेऽपि यस्य पिण्डदत्वं तस्यैव तद्धरत्वमिति नियमाभावस्य प्रागेव प्रपञ्चितत्वात्; अत एव—"पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः।"[3] इति पूर्वार्धोक्तेः "तयोर्हि मातापितरौ संभूतौ तस्य देहतः।"[4] इत्युत्तरार्धेन हेतुरुक्तो मनुना। दुहित्रभावे दौहित्रस्येत्यपि न युक्तं—प्रत्यासत्त्यतिशयस्य तद्दुहितर्यामेव सत्त्वात् "दौहित्रोऽपि"[5] इति मनोः प्रकरणात् पुत्रिकापुत्रविषयत्वाच्च। व्याख्यातं च तथैव मेधातिथिप्रभृतिभिः—उक्तहेतोरेव। ननु वन्ध्येत्याद्यग्रिममपि न युक्तं—भवदुक्तनारदस्य पितृधनविषयस्य स्पष्टत्वाच्च। अत एव पौत्रेत्याद्यधिकारादित्यन्तमपि न युक्तं—वासिष्ठे "मातुः पारिणेयं स्त्रियो विभजेरन्"[6] इति पाठस्य सत्त्वेन भवदुक्तपाठस्यैव खपुष्पायमाणत्वेन तथार्थस्य दूरोत्सारितत्वात्। अत एव वासिष्ठ

१. ब. रिकं कर्मा०। २. भ. त्तं बहू०। ३ म० ९.—१३२. । ४. ९.—१३३. । ५.—९. १३२. । ६. १७. ४६. ।

Cole.: Ch. II, Sec. xi, § 25.

## बालंभट्टी

इत्याद्यपि चिन्त्यम्—परिणाय्यमिति प्रयोगस्यासाधुत्वाच्च। अत एव "आनाय्योऽनित्ये" "प्रणाय्योऽसम्मतौ" "पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु" इति निपातन पाणिनीयं सङ्गच्छते । अत एव कल्पतर्वादिभिरपि तथा पाठ धृत्वा पारिणाह्यं परिच्छेदः आदर्शकङ्कणादिरिति व्याख्यातम् । अत एव च स्त्रीपुरुषधर्मप्रकरणे "शौचे धर्मेऽन्नपङ्क्त्यां च परिणाय्यस्य रक्षणे।" इति मन्वेकवाक्यताऽपि सिद्धा। तत्राऽपि कल्पतरुणा तथैव व्याख्यातम्। णिजन्ताद्यो पतिस्त्वर्थासङ्गतिनिवृत्तप्रेषणादिति (?) तस्य सत्त्वेऽगतिका गतिः। यदपि प्रत्यासन्नदुहितृपदेनैवान्वयपदस्यान्वयात् दुहित्रभावे दौहित्राणामेव स इति नारदार्थो न युक्तः—दुहितृपदस्य जन्यविशेषवचनत्वेन जनकाकाङ्क्षत्वेन तस्य जन्यान्तरणान्वयपदोपनेयपुत्रेणान्वयस्य समत्वेनासंभवात्, न चाधिष्ठानलक्षणयान्वयः—मात्रन्वयेनैव सर्वेषां मुख्यत्वसंभवात्, मातृपदान्वये च दुहितृपदमुख्यत्वस्य स्वीकारात्; न च तदन्वया इति तच्छब्दोपात्तदुहितुरन्वययोग्यता—तच्छब्दस्यापि प्रकृतवाचितया दुहितृत्वरूपेणैवोपपादकत्वात्, किंच मूलवाक्ये दुहितर इति प्रथमान्तं ताभ्यामिति पञ्चम्यन्तं च षष्ठ्यन्तान्योपयोग्यन्वयपदेन नान्वेति किन्तु व्यवहितमपि मातुरित्येवेति । तत्र तथा निश्चये नारदीयादावपि तथैवाविरोधात् इति, तदपि न—प्रागुक्तस्य नारदार्थस्य अज्ञानात्, प्रत्यासत्तेः प्रागुक्तायास्सत्त्वेन त्वदिष्टप्रत्यासत्तेरभावेन दोषस्याज्ञानविलसितत्वात्, मूलसमानार्थत्वे तदन्यस्य तत्पदस्य चाऽऽनर्थक्यापत्तेः; अत एव दुहितृपदेनात्मकं नान्वयपदान्वय एवेति सर्वथा दुहितृपदस्य इत्याद्युक्तेरयुक्तत्वात्। तच्छब्दस्य प्रकृतपरामर्शकत्वेऽपि बुद्धिस्थत्वेनैव तद्बोधकतया दुहितृत्वरूपेण तदभावेनान्वययोग्यतायाः षष्ठ्यन्ततया सत्त्वेनात्र जनकाकाङ्क्षाया अभावेन प्रत्युत संबन्ध्याकाङ्क्षाया एव सत्त्वेन लक्षणायाश्चाभावेन प्रागुक्तस्य नचेत्याद्युक्तेश्चासङ्गतत्वात्। तस्माद्विज्ञानेश्वरोक्तमेव युक्तमिति। "स्वस्त्वङ्गजेषु वसु तद्धामि" इति बोधायनीयं तु पितृद्रव्यविषयकमिति ततो न व्यवहितदौहित्राधिकार इति सत्यपि तदुक्तं चिन्त्यमेव। एतेन विवाहलब्धं स्त्रीधनं दुहितुरेव न पुत्राणां; तत्रैव क्रमार्थं गौतमीयं तत्र पूर्वमनूढानां, तदभावे सपुत्राणां, तदभावे समूढानां दुहितृणामिति सामान्यप्राप्तेः अप्रत्तानामित्यादेस्तु क्रमार्थत्वेनोपसंहारसमत्वादिति परास्तं—विशेषाभावात्। यदपि "अप्रजस्त्री" इति मूलमपि विवाहलब्धविषयमेव। ब्राह्मादिविवाहेषु यल्लब्धं अध्यग्निधनं तत् (अभावे?) आदौ दुहितृणां तत्रापि प्रथमं कन्यायां तदभावे सपुत्रायाः तदभावे ऊढायाः सर्वदुहित्रभावे च पुत्रस्याधिकारः । अप्रजस्त्रीधने च भर्तुरधिकारः बृहस्पतिनाऽप्यप्रत्तापदेनाप-

---

१. अ० ३. १. १२७.—१२९ । २. प. फ ब. ङ्कायाश्चाभावे० ।

Cole:. Ch.-II, Sce. xi, § 25.

## बालंभट्टी

त्यान्तराभावे समूढाया अप्यधिकारः सूचित इति, तदपि न—तस्य सर्वपरतयैवाऽऽचार्येण व्याख्यातत्वात् । किंच भवदुक्तव्याख्यानेऽप्यपिना तदन्यस्य सर्वस्य समुच्चयात् । न चापि समुच्चेयं प्रागन्यदुक्तमिति वाच्यं–शेषेष्वितिवदत्राप्युपलक्षणत्वेनैव तदर्थलाभेन तत्र तस्यात्यन्तमनुपयोगात् । किंच साक्षात् दुहितृपरतया अस्य व्याख्याने "मातुर्दुहितरः" इत्यनेन[1] पौनरुक्त्यापत्तेः । यदपि न च यौतकमात्रधनाभिप्रायकमिदं किन्तु ब्राह्मादिना विवाहिताया यथावद्धनं यौतकं वा तदभिप्रायकमिदमिति वाच्यं— तथा सति "बन्धुदत्तम्" इत्यव्यवहितप्रागुक्तसंपूर्णश्लोकस्य निर्विषयतापत्तेरिति, तदपि न— बन्धुदत्तमित्यर्धेन तथाऽऽदिशब्दस्वारस्येन स्त्रीधनस्यैवोक्तान्यस्य प्रतिपाद्यत्वेन तस्य पूर्वशेषत्वेन उत्तरार्धेन सामान्येन तद्विभागस्य प्रतिपाद्यत्वेन "अप्रजस्त्री" इत्यस्य तद्व्यवस्थापकत्वेनादोषात्, संपूर्णस्य तस्यैकवाक्यत्वे च तत्पदानर्थक्यापत्तेः । किंच मनुना "अध्यग्नि" इत्यादिना[2] षड्विधं स्त्रीधनमुक्त्वा सप्रजास्थले "अन्वाधेयं च यद्दत्तं प्रीत्या प्रीतेन चैव यत् । पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥" इत्यनेनाऽऽद्यचेनोक्तषड्विधसङ्ग्रहो[3] द्वितयिचेन तदन्यसर्वसङ्ग्रहः अन्यथा न्यूनतापत्तेरित्यर्थकेन तथोक्त्वा तच्छून्यस्थले ब्राह्मेत्यादिश्लोकत्रयेण व्यवस्थया तथोक्तत्वेन तद्विरोधापत्तेश्च । एतेन यत्पुनः[4] विवाहोत्तरं पितुर्मातुश्च कुलोभयाल्लब्धं, तद्भ्रातॄणामेव तदुक्तं मूले "बन्धुदत्तम्" इत्यादि "तदवाप्नुयुः" इत्यन्तेन ; बन्धुदत्तं मातृपितृदत्तम्, तत्पुत्राः भ्रातर एव बान्धवाः । तदाह वृद्धकात्यायनः—"पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् । अप्रजायाः प्रमीतायाः भ्रातृगामि तु सर्वदा ॥" इति, अप्रजत्वमात्रनिमित्तत्वेन भ्रात्रधिकारावगतेः सर्वदा सर्वाविवाहेषु स्थावरपदात् दण्डापूपन्यायादेवास्य धनस्य सिद्धिः, बन्धुदत्तपदेन कन्यादशायां यत् पितृभ्यां दत्तं तदुच्यते विवाहात्परतो लब्धस्यान्वाधेयपदोपात्तत्वात्, विवाहकालीने च भर्तुः पित्रोर्वाऽधिकारात् इत्यपि तदुक्तमपास्तम्—बान्धवादिपदस्य तत्राशङ्केश्च वृद्धकातीयगातिस्तु वक्ष्यत इति दिक्। न चैवमपि मूलस्य व्याख्यानस्य च मनुविरोधः मूलेन चतुर्णां विवाहानां ग्रहणं "ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु । अप्रजायामतीतायां भर्तुरेव तदिष्यते॥यत्त्वस्यास्स्याद्धनन्दत्तं विवाहेष्वासुरादिषु।अप्रजायामतीतायाम्मातापित्रोस्तदिष्यते॥" इति[5] मानवे आदौ पञ्चानामग्रे त्रयाणामिति तयोर्विरोधः । व्याख्यात्रा पुनः ब्राह्मादिषु चतुर्षु विवाहेषु भार्यात्वं प्राप्ता या अतीता इत्यादि व्याख्यातम्।(मानवेतु ब्राह्मादीनामासुरादीनां च शब्दानाम्?)"अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत॥" इत्युपक्रम्य[6] "ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः।"

१. व्य०. ११७. । २. भ. स्य इत्यस्य तद्व्य० । ३.—९ १९४, १९५. । ४. भ. यत्तु वि० । ५.—९. १९६, १९७. । ६. म०. ३. १०. ।

Cole.: Ch. II, Sec. xi, §—25.

## बालंभट्टी

इत्यादिमनोः, "अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिताः। ब्राह्मस्तु प्रथमस्तेषाम्" इत्यादिनारदात्, "अष्टौ विवाहा भवन्ति" "ब्राह्मो दैवः" इत्यादिविष्णोश्च। एवं च तल्लक्षणविवाहपरत्वेऽपि वर्तमानसंबन्धेन विवाहकाललक्षणया तेषां कालार्थतया निर्देशेन "अस्याः स्याद्दत्तम्" इत्यग्रिमस्य पूर्वत्रानुषङ्गौचित्येन तत्रतत्र काले यद्धनं दत्तमिति संबन्धेन वैवाहिकधनमात्रप्रतीतेः न तदीययावद्धनविषयत्वमिति तयोर्विरोधः। अत एव यमः—"आसुरादिषु यद्द्रव्यं विहाहेषु प्रदीयते।" इत्यादि। विवाहक्रियायां पूर्वापरीभूतायां यद्द्रव्यं प्रदीयते इत्यादि तदर्थः। तथा च यौतकधनमात्रविषयत्वमेव तस्य। न चैवं विवाहात् पूर्वमनन्तरं वा लब्धस्य धनस्य का गतिः तेनानुक्तत्वात् अतो ब्राह्मादिपदं स्त्रीपरमिति वाच्यम्—तत्रान्यथागतेर्वचनान्तरैः प्रतिपादितत्वात् "तेषां स्त्रीपरत्वे च एकत्वेन षष्ठ्या च निर्देशस्योचितत्वात्। "यत्त्वस्यास्स्यात्" इतिवत् लक्षणायास्तुल्यत्वेऽपि अतिक्रान्तविवाहसंबन्धेनेदानीं सेति जघन्यायास्तस्या अनौचित्यात् ब्राह्मादिपदस्य ऊढस्त्रीवाचकत्वं प्रागुक्तमन्वादिविरुद्धमेवेति प्राच्योक्तं युक्तमिति वाच्यम्—आर्षत्वाविशेषेणैकवाक्यताया असंभवेन विरोधात् गान्धर्वांशे विकल्पस्वीकारेग तयोरविरोधस्य प्रागुक्तत्वात्। मानवे एवंच गाधर्वांशे विकल्पसंभवात्। एकवाक्यतायां दुराग्रहेतु अपिशब्दे तन्त्राङ्गीकारादावृत्त्या द्वितीयेन तेन शेषेस्विवतिवदुपलक्षणत्वेन निर्वाहेण यथाश्रुतेन तेन वा तदनुरोधेन गान्धर्वस्य समुच्चयात्। ब्राह्मादिष्वित्यत्र ब्राह्मेति भिन्नं सविभक्तिकं पदं वाऽस्त्विति पिऽयमादिशब्दे वाकारप्रश्लेषः। स चाजशब्दैकदेशो विनापि प्रत्ययमिति न्यायात् इति आः आजः ब्राह्मः आदिर्येषां दैवादिचतुर्णां तदन्येषामित्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तदन्यचतुर्णां ग्रहणेन तेन सह पञ्चत्वलाभाच्च तत्संभवेनादोषात्। एतं प्रकारद्वये व्याख्यानविरोधस्याप्यभावात् परन्तु द्वितीये पक्षे प्राजापत्यस्त्वित्यत्र व्याख्यानमूलोक्तये शेषास्तथाऽऽषाढ एव वा तेन गान्धर्वसमुच्चयोऽग्रेच शेषेषु आसुरराक्षसपैशाचेष्विति पाठः। गान्धर्वघटितोऽपपाठ इति बोध्यम्। नचैवमप्यन्यथा प्रागुक्तव्याख्यानविरोध एवेति वाच्यम्—मनुना "संस्थितस्यानपत्यस्य सगोत्रात्सुतमाहरेत्। तत्र यद्रिक्थजातं स्यात्तत्तस्मिन् प्रतिपादयेत्॥" इति तन्मरणोत्तरमपि वाग्दत्तादिविषये नियोगविधिना सगोत्रात्सुतस्य उत्पादितस्य धनाधिकारित्वमनुविधीय इत्येवं पितृधने उक्त्वा "द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने। तयोर्यद्यस्यपित्र्यं स्यात्तत्स गृह्णीत नेतरः॥" इत्यनेन "यद्येकरिक्थिनौ स्यताम्" इत्यौरसक्षेत्रजयोरुक्तम् इदन्तु औरसपौनर्भवविषयम्। यदोत्पन्नौरसामृतभर्तृकत्वाद्बालापत्यतया स्वा-

१.—३. २१। २.—१२. ३८। ३—२४. १७, १८। ४. प. फ. ब. त्यातमबहुव्रीहिणां तद०। ५. भ. त्रात्सुतस्य०। ६.—९. १९०, १९१। ७.—९ १९२।

Cole.: Ch. II, Sec. xi, § 25.

बालंभट्टी

मिधनं स्वीकृत्य पौनर्भर्तुस्सकाशात् पुत्रान्तरं जनयेत, तस्यापि मृतत्वात् रिक्थहराभावात् धनं गृहीतवती पश्चात् द्वाभ्यां जातयोः प्रौढयोस्तयोस्तादृशस्त्रीधनविषये विवादेऽपि स्वस्वपितृयमेव तेनतेन ग्राह्यं नान्यदीयमन्यजेनेत्यर्थकेनोक्त्वा स्त्रीधनं तर्हि केन ग्राह्यमिति शङ्कानिरासाय "जनन्यां संस्थितायां तु" इत्यनेन तद्विषये प्रागुक्तरीत्योक्त्वा प्रागुक्तरीत्या पितृधनवत् शङ्कानिरासाय "यास्तासां स्युर्दुहितरः" इत्यनेन प्रागुक्तरीत्यैवोक्त्वा स्त्रीधनं कीदृशमिति शङ्कानिरासाय "अध्यग्नि" इत्यादिना षड्विधं स्त्रीधनमुक्त्वा षट्त्वं न्यूनसङ्ख्या-व्यवच्छेदकं नाधिकसङ्ख्याया इति ध्वनयन् "प्रजा स्यात्सन्ततौ जने" इति कोशात् तस्य सन्ततिपरत्वेन "जनन्याम्" इति प्रागुक्तपद्ये पूर्वं पुत्रः तदभावे कन्या द्वयोः संभूय वा ग्रहणमित्यसिद्धान्तसंभावित पक्षद्वयनिरासाय कृतेन प्रजाया इति स्त्रीलिङ्गनिर्देशेन पूर्वं कन्यादेः ततः पुत्रादेरिति सूचनद्वारा न्यूनतानिरासाय "जनन्याम्" इत्येकवाक्यतयैव दत्तयत्पदद्वयसहितेन एवस्याग्रेऽन्वयेन यत् अन्वाधेयं प्रीतेन यत् पत्या दत्तं च यच्चान्यत्, तत्प्रजाया एव सर्वं स्त्रीधनं न भर्त्रादेरित्यर्थकेन "अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत्। पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत्॥" इत्यनेनोक्त्वा तच्छून्यस्थलेऽपि न्यूनतानिरासाय सर्वां तद्धनगतिं विवाहभेदेन प्रतिपादयता "यत्त्वस्या-स्स्याद्धनं दत्तम्" इत्यस्य तथोपात्तस्य यथासंभवमुभयत्रान्वयेन तोश्चार्थकत्वेन क्वचित्तथैव पाठेन विवाहेष्वित्युक्त्या ब्राह्मादीनां विवाहमात्रवाचकत्वेन काललक्षणाया अप्यभा-वेन सति सप्तम्या तेषु आद्येषु सत्सु अस्या इति शेषषष्ठ्या अस्यै दत्तं धनं स्यात् विवाहात्प्रागुत्तरत्र वा चेनान्यसर्वसमुच्चयः। तत्सर्वं तस्यां तादृश्यामतीतायां भर्तुरेवेष्यते। आसुरादिषु तेषु सत्सु पूर्ववत् तद्धनं मातापित्रोरिष्यते न तु भर्तुः। तत्राऽऽदौ मातुः तदभावे पितु.—उच्चारणक्रमात्। यौगपद्ये हि पित्रोरित्येव ब्रूयादित्यर्थकेन ब्राह्मदैवेत्यादिश्लोकद्वयेन उक्त्वा तत्रैवोभयापवादत्वेनोक्तरीत्या "स्त्रियास्तु यद्भवेद्वित्तम्" इत्यनेन सर्वधनविषये उक्तत्वेन अन्यथा मनुनान्यस्यानुक्तत्वेनाध्यग्नीत्यादिवैयर्थ्यापत्त्या स्वोक्तमध्य एव सर्वथा मनुन्यूनता-या दुष्परिहरत्वेन तद्रीत्या च व्याख्यात्राऽपि ब्राह्मादीनां विवाहमात्रवाचकत्वं न तु क्वापि लक्षणा सतिसप्तमी च। भार्यात्वं प्राप्तायाः इति तु फलकथनमिति आद्येषु सत्सु तस्या-स्तादृश्याः तत्सर्वं धनं भर्तुः, द्वितीयेषु सत्सु तद्वत् तद्धनं सर्वं आदौ मातृगामि तदभावे पितृगामि मन्वनुरोधादेवेत्युक्तमिति तच्छङ्काया एवाभावात्। अत एव कुल्लूकभट्टेन

---

१. म० ९. १९२. । २. म० ९. १९३. । ३. म० ९. १९४. । ४. म० ९. १९५.। ५. म० ९. १९७. । ६. म० ९. १९८. ।

Cole:. Ch. II, Sec. xi §§ 25.

## बालंभट्टी

सर्वधनपरतयैव ब्राह्मेत्यादि यस्त्वित्यादि पूर्वं च व्याख्यातम्। एतेन मनुविरोधात् "अप्रजस्त्री" इत्यस्य प्रागुक्ततदन्यतराभिप्रायकत्वं न युक्तमित्यपि मिश्राद्युक्तमपास्तम्--द्वितीये ब्राह्मेत्यादेर्वैयर्थ्यापत्तेश्चेति दिक्। अत्र केचित्--मनुना मातापित्रोरित्यनेन एकदेशानुमतिद्वारा शुल्कधनविषयोऽपि गौतमबोधायनोक्तः सूचित इति न न्यूनता नापि विरोधः। तथा च बोधायनः--"रिक्थं मृतायाः कन्याया गृह्णीयुस्सोदरास्स्वयम्। तदभावे भवेन्मातुस्तदभावे भवेत्पितुः॥" इति। सममिति पाठान्तरम्। इतोऽपि मातापित्रोरित्यादौ तथैव क्रमो विवक्षितः। गौतमस्तु प्रागुक्त एव। "पितृभ्यां चैव यद्दत्तं दुहितुस्स्थावरं धनम्। अप्रजायामतीतायां भ्रातृगामि तु सर्वदा॥" इति वृद्धकात्यायनोक्तं तु निर्मूलम्। समूलत्वेऽपि यथासंभवं प्रागुक्तशुल्कविषयम्। अत एव सर्वदेत्युक्तम्। तच्च सर्वविवाहेष्वित्यर्थकम् अतो व्याख्याने उक्तशुल्कविषयता नेति न तद्विरोधोऽपि--मनुना तस्यैवानुक्तत्वात्। "बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि यत्।" इति कातीयमपि शुल्कविषयमेव--बन्धूनामित्यस्य भ्रातृणामित्यर्थात्। प्रागुक्तदेवलवाक्ये तु पूर्वार्धवदुत्तरार्धमपि सर्वसाधारणमेवेत्याहुः। एतेनातो विवाहकाललब्धस्त्रीधनविषयं ब्राह्मादिवचनम्, आसुरादिविवाहलब्धस्त्रीधनं तु जीवत्यपि भ्रातरि मातुरादौ तदभावे पितुः, मानवेऽप्येवम्--अन्यथा पित्रोरित्येव ब्रूयात्, कन्याधने च मातुरभावे पितुरधिकारश्रवणात्, अत्रापि तथैवौचित्यात्तथा च "रिक्थम्" इति बोधायनोक्तं कन्याधनविषयकम्, न च कन्याधन इवात्रापि पूर्वं भ्रातुरधिकारापत्तिः--तद्वदत्र वचनाभावात् पित्रोरेव तत्र श्रुतेः, तदेवमादिकमप्रजस्त्रीधनमादौ भ्रातरो गृह्णीयुः, न चाऽऽसुरादिविवाहेषु यत्कन्याभ्यः शुल्कदानं तदभिप्रायम्--आसुरमात्रगोचरत्वात्तच्छुल्कस्य--"आसुरो द्रविणादानात्" इत्युक्तेः, अतो राक्षसादौ शुल्काभावात् तत्साहचर्येण आसुरादिष्वेव यद्धनं तन्मात्रस्य भ्रातृगामित्वाभिधानं हेयमेव, तथा तस्य स्त्रीधनत्वाभावाच्च पित्रादिगृहीतधनस्यैव शुल्कत्वात्, तथा च मनुः--"न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि। गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी॥" इति, पितेत्युपलक्षणं तेन भ्रात्रादिरपि तत् गृह्णन् शुल्कग्राही, तेन पित्रादिगृहीतमेव परशुल्कं भवतीत्युक्तं भवति, अतो यदुक्तमासुरादिष्वेव शुल्करूपस्त्रीधनसंभवात् तदेकवाक्यतापन्नयोः बन्धुदत्तान्वाधेययोरपि आसुरादिविवाहगोचरयोरेव भ्रातुरधिकार इति, तन्निरस्तम्, किन्तु उक्तशुल्करूपस्त्रीधन-

१. आ० ६१. । २.—३. ५१. । ३. भ. र्ण भवति ।

Cole:. Ch. II, Sec. xi §§ 25.

बालंभट्टी

स्य सर्वविवाहेष्वेव संभवात्, सर्वत्रैव भ्रातुरधिकारो वाक्यविशेषानवगमात्, प्रागुक्तगौतमीयमपि कातीयतुल्यार्थम्[2], अयंहि—तस्यार्थः आदौ सोदर्याणां तत्, तदभावे मातुः पूर्वं चैके इति परमतं अत आदौ सोदराणां, तदा तदभावे मातुस्तदभावे पितुस्तेषामभावे भर्तुरिति तथा च कातीयं बन्धुदत्तं त्विति, बन्धूनामभाव इत्यनेन भ्रातुरभावे इत्यपि सूचितं भ्रातुरभावे पित्रोर्धनाधिकारस्य दण्डापूपन्यायात् सिद्धिः इत्यपि तदुक्तमपास्तम्—तस्य सर्वविषयत्वात्; बोधायनाद्युक्तस्य शुल्कविषयत्वात्; अत एव नचेत्यादेरयुक्तत्वात्। त्वद्रीत्या देवलवाक्यस्य सत्त्वात् अत एव तदेवमित्याद्युपसंहारस्यायुक्तत्वात् यथासंभवमुक्तवचनानां शुल्कविषयत्वेन न त्वासुरादीत्यादेरयुक्तत्वात्। त्वयाऽप्यग्रे किन्त्वित्यादिना तथैवोक्तत्वेनास्य बोधायनोक्तकन्याधनविषयकमित्यस्य च तेन विरुद्धत्वात् तस्य स्त्रीधनत्वस्य प्रागुक्तत्वात् पित्रादिगृहीतस्येव तत्त्वस्य मन्वादितोऽलाभात् तस्य तन्निषेधकथनद्वारा ब्राह्मादिविवाहप्राशस्त्यपरत्वात् तवाप्युपलक्षणत्वेन भ्रात्रादीत्यनेन मातुरपि ग्रहणसंभवेन मिथो विरोधात्। अत एवोपसंहारस्यायुक्तत्वात् अत एवास्माकं तन्मतस्यैवाभावेन तन्निरासस्यादोषावहत्वेन अत इत्यादेरसंबद्धत्वात् गौतमीयकातीययोर्भिन्नार्थत्वस्य प्रागुक्तत्वेन तुल्यार्थत्वाभावात् उभयत्र मध्ये अध्याहारेण व्याख्यानस्य निर्बीजत्वात्।अन्यथानुपपत्त्या हि सः न तु सा तत्रास्ति प्रागुक्तरीत्या निर्वाहात्। अत एव कल्पतरुणापि गौतमीयं तथैव व्याख्यातम्। ऊर्ध्वं पदसमभिव्याहारे तथैव ऋषिशैलीयत्वात्। बन्धूनामभाव इत्यस्यैव तथार्थकत्वेन सूचितमित्यस्यासंबद्धत्वात् अत[3] एवाग्रिमोक्तेरपि क्लिष्टत्वाच्चेति दिक्। "मातुस्तु यौतकम्"[4] इति पुत्रिकाप्रकरणस्थमानवमपि सर्वैकवाक्यतानुरोधेन सर्वधनविषयकम्। अत एव मातुर्यत् धनं स्यात्, तत् तस्यां मृतायां कुमारीभाग एवेति सामान्यत एव तद्व्याख्यातम्। मेधातिथिनापि यौतकं पृथग्भूतमित्येवं व्याख्यातम्—यु मिश्रणामिश्रणयोरिति धात्वनुसारात्। युक्तं चैतत् "विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः।"[5] इत्यग्रिममूलवाक्ये तथैव सर्वसम्मतत्वात्। तद्रीत्यापि तोश्चार्थकत्वेन समुच्चायकतया सर्वधनग्रहणसंभवात्।एवं सति"अन्वाधेयंच"[6] इति"अत्यध्यग्न्यधि"इत्यग्रिममूढाविषयं क्रमेण दौहित्राद्यर्थं चेति न वैयर्थ्यं तस्य। अत एवानुरोधेनापि समञ्जसवचनानामाकुलीकरणमसङ्गतमेव तेषामिति दिक्। वस्तुतस्तु कातीयद्वयस्योढामात्रविषयत्वेन प्रागुक्तान्यार्थासंभवेऽपि

१. प. फ. ब. र्थं तुस्तेषां। २. भ. क्तवचनानां शुल्केना० । ३ भ. अत एवाग्रिमोऽपि शैलासत्त्वात् बन्धूनाभावे इत्यस्यैव तथार्थकत्वेन सूचितामित्यस्यासंबद्धत्वात् ४.—९. १३१. । ५. व्य० १४९. । ६. म० ९. १९५।

Cole.: Ch. II, Sec. xi, § 25.

## बालंभट्टी

बोधायनमनूढा या वाग्दत्ता जीवन्ती अवाग्दत्ता वा तद्विषयकम् — कन्याशब्दस्याक्षतयोनिमात्रवाचकस्य साधारणतया तत्रापि प्रवृत्तेः। तदीयधनमपि पितामहादिदत्तमेव। वक्ष्यते चेदं व्याख्यात्राऽनुपदमेव। न तु शुल्कपरं तत् —मानाभावात्। अत एव रिक्थपदोक्तिः। तत्र तस्य दायवाचकत्ववत् सामान्यधनवाचकत्वस्यापि कोशतस्सत्त्वेन तत्रापि प्रवृत्तिसंभवात्। अत एव मातापित्रोरिति मनुना तस्यैकवाक्यता न—तस्य विवाहविशेषाविषयत्वात् यावत्स्त्रीधनविषयत्वाच्च। गौतमस्यापि ऋषिसिद्धार्थस्योक्तत्वेन तदेकवाक्यतापि ¹योर्न—तस्य शुल्कमात्रविषयत्वस्य स्पष्टत्वाच्च। यद्यपि पाणिनीये "तदस्मिन्वृद्ध्²य" इति सूत्रे आयादिसाहचर्यात् संज्ञावृद्धेः उपदेति टाबन्तं उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः, ग्रामादिषु स्वामिग्राह्यो भागः आयः, विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः, रक्षानिमित्तभृतिरूपो राजभागः शुल्कं, उत्कोचः उपदा उपहार इत्यन्ये। शुल्कग्रहणं प्रपञ्चार्थम्। तस्याप्यायविशेषत्वात् तथा चाशौल्कशालिक इति "ठगायस्थानेभ्यः" ³इति ठक् भवतीत्यभियुक्तैर्व्याख्यातम्। तथाऽप्यत्रत्यपरिभाषा भिन्नेति तात्पर्यम्। तथा च व्याख्यात्रुक्तशुल्कधनं न प्रजामात्रस्य भर्त्रादेश्च; किन्तु सोदर्याणां, तदभावे मातुः, तदभावे पितुः, तदभावे तत्प्रत्यासन्नानामिति। एवं तदुक्तबन्धुदत्तं न प्रजामात्रस्य मात्रादेश्च। किन्तु बन्धूनां भ्रातॄणां, तदभावे भर्त्रादेः—"बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्।" इति कातीयादिति बोध्यम्। एवं वृद्धकातीयस्य समूलत्वेन तदपि जङ्गमस्थावरान्यतमसौदायिकधनविशेषे"⁴अप्रजस्त्रीधनम्"इत्यादिसर्वविवाहेष्वा दावप्यपवादकं तदभावे तथैव। तत्र चेन भ्रातृपितृव्यादि। एवेन भर्तृकुलव्यवच्छेदः। धनं धनं च। अप्रजायामित्यर्थम् अत एवान्यैर्गृहीतो "अप्रजायामतीतायां बान्धवाः" इति मूलपाठो व्याख्यात्रा त्यक्तः। मानवद्वयेऽपि तथैव बोध्यमिति तदाशयः। तुः चार्थे। तेन तदभावे तथेत्यस्य समुच्चयः। सर्वदा सर्वविवाहेषु। प्रजासत्त्वे तु तस्या एवोक्तरीत्येति बोध्यम्। "अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन। धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन्॥"⁵इति मनुस्तु भर्तुरपूर्वधनसंबन्धबोधकः सच पुत्रिकाप्रकरणस्थः। संविस्कृता पुत्रिका तदन्वितेन कथञ्चनेत्यनेन तथा न कृता किन्तु अभिमता तस्या अपि ग्रहणम्। अत एव"भ्रातृमतीम्"इति विशेषणं तत्र सफलमित्युक्तं प्राक्। अत एव अपुत्रायां कथंचन पुत्रिकायां मृतायां प्रकरणात् पैतृकरिक्थरूपतदीयधनं पितृसत्त्वेऽपि तद्भर्तैवाविचारयन्

---

१. प. फ ब. धनाविषयं पिता (?)। २. अ० ५. १. ४७.। ३. अ० ४. ३. ७५.।
४.—९. १३५.। ५. आ० ५३.।

Cole.: Ch. II, Sec xi, § 25.

## बालंभट्टी

गृह्णीयात् पुत्रिकायाः पुत्रसमत्वेन अनपत्यपत्नीरहितस्य मृतस्य पुत्रस्येव पित्रादेर्धनग्रहणप्रसङ्गे तन्निरासार्थमिदं वचनमिति तद्व्याख्यातारः। "प्रेतायां पुत्रिकायां न भर्ता द्रव्यमर्हत्यपुत्रायां कुमार्यां मात्रा स्वस्रा वा तद्ग्राह्यम्" इति पैठीनसिस्तु निर्मूलः। समूलत्वे वा आर्षत्वाविशेषाद्विकल्पोऽस्तु परं तु तत्रापि मनोः प्रामाण्यातिशयात्तदेवानुष्ठेयं न तदित्यननुष्ठानलक्षणमप्रामाण्यमेव तस्येति दिगिति बोध्यम्। एतेन "अस्यां यो जायते पुत्रः" इति पुत्रिकाविषयं मानवम्, इयं मे पुत्र इति पुत्रिकाविषयं पैठीनसमिति। एवं भगिनीशुल्कमिति गौतमीये ऊर्ध्वं भ्रातुः सोदर्याणामभावे मातुरिति व्याख्याय तदुभयाभावे पितुरित्युक्त्वा तत्र बोधायनीयं मानत्वेन संलिख्य रिक्थं शुल्कमिति व्याख्याय पित्राद्यभावे तु भर्तृगाम्येवेत्युक्ते बन्धुदत्तं त्विति कातीयं मानत्वेन संलिख्य बान्धवाः पित्रादय इति तथा स्त्रीधनविषये इत्थं व्यवस्था तत्राध्यग्निकृतं तास्वपि कुमार्य एव लभन्ते नोढाः—मातुस्तु" इति मनोः। तत्र यौतकं प्राच्योक्तमेव—उक्तविशिष्टत्वात्। पारिणेय्यमित्यस्य स एवार्थः। स्त्रियः कुमार्यः। "कुमारीवदप्रतिष्ठितापि स्त्री धनम्" इति गौतमात् स्त्रीधनं पैतृकं कुमार्यभावे अनूढापि कन्यैव लभते न पुत्रः गुणलेपे तु मुख्यस्येति न्यायात्तद्दुहितृपदसामर्थ्याच्च। एवमप्रतिष्ठिताया अभावे प्रतिष्ठताऽपीति। अन्वाधेयं तु स्त्रीपुन्नपुंसकसाधारणप्रजायाः—"अन्वाधेयं तु यद्दत्तं पत्या प्रीतेन वा पुनः"। इति मनोरिति। यत्तु पत्युः रिक्थत्वेन मात्रा लब्ध, तत्पुत्रैः दुहितृभिश्च समं विभाज्यं—"जनन्याम्" इति मनोः, "भगिन्यः कुमार्यस्समम्" इति शङ्खलिखिताभ्यां "सामान्यम्" इति देवलाच्च "ऊढास्तु तुर्यांशमात्रां लभन्ते न समं स्त्रीधनम्" इति बृहस्पतेः। अनूढानां पितृधन इव ऊढानां मातृधने तथैवेत्युक्तं प्राक्। यत्तु "अप्रत्तायास्तु दुहितुस्स्त्रीधनं परिकीर्तितम्। पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक्॥" इति, तत्तु अप्रत्तासद्भावेऽपि प्रत्तायां चतुर्थांशस्मरणात् तदभावे समांशस्य न्यायप्राप्तप्राप्तत्वमित्येवंपरं—"भगिन्योर्बान्धवैस्सार्धं विभजेरन्समंततः। स्त्रीधनस्येति धर्मोऽयं विभागस्तु समस्स्मृतः॥" इति कातीयात्। एतेन भ्रातृभगिन्योः संभूयांशहरत्वं नास्ति, इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेरिति परास्तम्—"चार्थे द्वन्द्वः" इत्यनेन तस्य चार्थत्वात, देवलीये द्वन्द्वश्रवणाच्च; यौतकभिन्ने सर्वत्र दुहितृदौहित्रीसमवाये तस्या अपि किञ्चिद्देयं—"यास्तासाम्" इति मनोः। मृतमातृकाणां तु तासां "पितृत" इति न्यायात् पुत्रदुहित्रादिभिस्समवाये समांशभाक्त्वमेव। दुहित्रभावे तु पुत्र एवेति उभयत्र तदभावे तत्प्रत्यासन्नानां ग्रहणं

---

१. (?)। २. म०. ९. १३१.। ३.—९. १९५.। ४.—९. १९२.। ५. अ०. २. २. २९.। ६.—९. १९३.।

Cole:. Ch. II, Sec. xi § 25.

बालंभट्टी

तु "अनन्तरस्सपिण्डाद्यः" इत्यादिमन्वाद्यनुरोधेन पत्न्यादौ पूर्वं शुल्केत्यनेन न्यायेनोक्तम्। "अनन्तरः" इत्यस्य सामान्यस्योक्तौरसाद्यनन्तरमुक्त्या तन्मात्रपरत्वे तस्य सामान्यस्य वैयर्थ्यापत्त्या अनुक्तपत्न्यादिदायपरत्वमिवैतत्परत्वमपि। तत्राऽऽनन्तर्यमपि प्रागुक्तताद्दश-प्रत्यासत्त्यतिशयकृतमेवेति तत्क्रमेणैव तदधिकार इति न कोऽप्यग्रे दोष इति विज्ञानेश्वरा-शयः। विशेषवचनानि तु प्रकृतविषयेऽग्रे नोपलभ्यन्ते। पत्न्यादिविषये विद्यमानान्यपि च वचनानि तदनुरोधेनैव योजितानि—तस्यैव मुख्यबीजत्वात्। एवं च "मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥ यदासामौरसो न स्यात् सुतो दौहित्र एव वा। तत्सुतो बान्धवस्तासां स्वस्रीयाद्यास्समाप्नुयुः॥" इति बृहस्पतिः अयमधिकारिमात्रबोधको न क्रमबोधक इति तदनुरोधेनैव योज्यः प्रागुक्तरीत्या। तथा हि। औरसपदेन कन्यापुत्रयोर्ग्रहणम्—तयोस्सर्वापवादकत्वात्। सुत इत्यनेन सपत्नीकन्यापुत्रयोर्ग्रहणम्। इदं च दायग्रहणांशे। स्वस्रीयो भगिनीसुतः। आद्यपदेन स्वभर्तृभागिनेयदेवरपुत्रस्वभ्रातृपुत्रजामातृदेवराणां ग्रहणम्। यथासङ्ख्य-मन्वयः। दौहित्र इत्यनेन दौहित्रीदौहित्रयोर्ग्रहणम्—"सर्वसाम्" इति मनोः। औरस-विशेषणत्वं तु न—वैयर्थ्यात् अन्यथा सपत्नीपुत्रसद्भावेऽपि स्वस्रीयाद्यधिकारापत्तेः। बान्धवशब्देन भ्रातुः भर्तुः मातुः पितुरित्यादेर्ग्रहणम्। तदभावे स्वस्रीयादयः। तत्क्रमे-णैवेत्यर्थः। एवं "मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च। श्वशुरस्य गुरोश्चैव सख्यु-र्मातामहस्य च॥ एतेषां चैव भार्याभ्यस्स्वसुर्मातुः पितुस्तथा। श्राद्धदानन्तु कर्तव्यमिति वेदविदां स्थितिः॥" इति वृद्धशातातपीये पिण्डदानांशेऽपि बोध्यम्। पिण्डदत्वं न रिक्थहा-रित्वव्याप्यम् अपि तु विपरीतं तदप्यौत्सर्गिकमित्यादि हि प्रागेव प्रपञ्चितमिति न विस्मर्तव्यम्। एतेन पुत्राभावे दौहित्रः, तदभावे दौहित्रपुत्रः, तस्याप्यभावे स्वस्रीयाद्या अविशेषेण सर्वधनभाजः — "मातृष्वसा" इति बृहस्पतिः। आद्यशब्देन यस्य मातुलानी स इत्यादि। पूर्वजोऽग्रजः। यद्यप्यत्र पुत्राभावे दौहित्रः श्रूयते, तथाऽपि पुत्रदुहितृसद्भावेऽपि दौहित्रीणां किञ्चित् धनसंबन्धश्रवणात् तद-भावे सर्वधनसंबन्धस्याप्रतिबन्धात् मातामह्यवयवाधिक्येन च दौहित्रापेक्षया प्रत्या-सन्नत्वाच्च दौहित्र्यभावे दौहित्रो धनभाक्। अत्राप्ययं विशेषः — यत्पितृकुलादा-गतं तत्स्वस्रीयाद्याः, यद्भर्तृकुलादागतं तद्देवराद्याः, जामाता तूभयमविशेषादिति भ्रान्ताद्युक्तमपास्तम्। एतद्वचनबलान्मनूक्तित्यागेनान्यथा क्रमेण यदधिकारप्रतिपादनं प्राच्यानां तथा हि तदेतेषां पुत्रादीनां भ्रात्रादिभर्तृपर्यन्तानां चाभावे सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु भगिनीपुत्रादीनां धनाधिकारिता—अनन्यगतेर्वचनात्।

१.—१८७। २.भ. पूर्वक्लोप्तेन। प. फ. ब. तु तस्यैव। ४. भ. णम् औरसयोः सपत्नी-पुत्रयोश्चाभावे अनयोरधिकारात् तत्सुत इत्यनेनौरससुतोभयजन्यपौत्रग्रहणं न तु दौहित्रपुत्रस्य पिण्ड-दानांशेऽनधिकारात् बान्धव०। ५.—९. १८३.। ६. भ. थाङ्कशे मन्वयधिकार (?)।

Cole.: Ch. II, Sec. xi, § —25

26 **स्त्रीधनप्रसङ्गेन वाग्दत्ताविषयं किञ्चिदाह—

दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम्।

आसुरादिविवाहप्रसङ्गादिदमुच्यते। भर्तृतो धनमादाय ततः — दत्त्वा कन्यामित्यादि १४६॥

बालंभट्टी

स्त्रीणां मातृतुल्यताप्रतिपादनेनामीषां पुत्रत्वज्ञापनपिण्डदत्वसूचनस्य दायप्रकरणे धनाधिकारज्ञापनैकप्रयोज्यत्वात् तत्र "स्वस्त्रीयाद्याः" इति वचनात् पूर्वपूर्वाभावे सर्वशेषे देवरस्यैवाधिकारापत्तेः महाजनविरोध इति वस्तुबलमालंब्योच्यते। तत्र "त्रयाणाम्" इति "अनन्तरः" इति पूर्वदायभागप्रकरणस्थमनोः "पिण्डदोऽश" इति मूलेन च पिण्डदानेनाधिकारदर्शनात् पुत्रस्यापि सातिशयपिण्डदानेन नरकत्राणकारणतया मुख्यत्वेनाधिकारावगतेः "मातुल" इत्यादिवृद्धशातातपवचने अमीषां पिण्डदत्वप्रतिपादनादयं पिण्डदानविशेषादधिकारक्रमः। आदौ देवरः तद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वात् सपिण्डत्वाच्च तद्धनाधिकारी, तदभावे भ्रातृश्वशुरदेवराणां सुतः स्वभर्तृदेयपूर्वपुरुषद्वयपिण्डदातृत्वात् सपिण्डत्वाच्च पितृव्यस्त्रीधनेऽधिकारी। तदभावे त्वपिण्डोऽपि भगिनीपुत्रः तत्पुत्रदेयपित्रादित्रयीपिण्डदानात मातृष्वसृधनेऽधिकारी, तदभावे स्वभर्तृभागिनेयः पुत्राद्भर्तुः दुर्बलत्वात् तत्स्थानपातिनोऽपि तथैव बलाबलस्य न्याय्यत्वात् तद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदानात् तत्पिण्डदानाच्च मातुलानीधनेऽधिकारी, तदभावे भ्रातृसुतः तत्पितृपितामहयोः तस्याश्च पिण्डदानात् पितृष्वसृधनेऽधिकारी, तस्याप्यभावे श्वशुरयोः पिण्डदानात् जामाता श्वश्रूधनेऽधिकारी इत्ययं क्रमो ग्राह्यः। स्वस्त्रीयाद्या इति न क्रमार्थं किन्त्वधिकारितामात्रपरम्। षण्णां पुनरेतेषामभावे श्वशुरादेस्सपिण्डनेऽधिकृतो धनाधिकारो बोद्धव्यः। न च सपिण्डाभावे सतीदं वचनमिति वाच्यम्—अस्यामधिकारशृङ्खलायां देवरदेवरसुतयोः भ्रातृश्वशुरस्य तस्य चाधिकारस्य ज्ञापनात् आसन्नतरश्वशुरभ्रातृश्वशुरादेः परित्यागादिति तच्चापास्तम्—अज्ञानप्रलपितत्वात् दोषगुणस्योक्तत्वात् अन्यस्मृतितो मनोः प्रामाण्यातिशयेन प्राबल्यस्यान्यत्र प्रतिपादनाच्चेति मात्सर्यमुत्सार्य विचारणीयमिति दिक्॥ १४५॥

प्रकृतासंबन्धत्वादाह— प्रसङ्गेनेति। किञ्चित्—अर्धश्लोकोक्तम्। मुख्यदानेऽ-

---

१. वि० दाप्यश्च। २.—९. १८६, १८७। ३. व्य० १३२.। ४. प. फ. ब. वे स्वभर्तृ०।

Cole:. Ch. II, Sce. xi, § 26.

**कन्यां वाचा दत्त्वाऽपहरन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः। एतच्चा- 27
पहरणकारणाभावे। सति तु कारणे "दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्।"
इत्यपहाराभ्यनुज्ञानान्न दण्ड्यः। **यच्च वाग्दाननिमित्तं वरेण स्वसंबन्धिनां कन्यासंबन्धि- 28
नां चोपचारार्थं धनं व्ययीकृतं, तत्सर्वं सोदयं सवृद्धिकं कन्यादाता वराय
दद्यात्॥ १४५ख॥

**अथ कथञ्चिद्वाग्दत्ता संस्कारात्प्राक् म्रियेत, तदा किं कर्तव्यमित्यत आह— 29

**मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम्॥ १४६॥**

**यदि वाग्दत्ता मृता तदा यत्पूर्वमङ्गुलीयकादि शुल्कं वा वरेण दत्तं, 30
तद्वर आददीत परिशोध्योभयव्ययम्—उभयोरात्मनः कन्यादातुश्च यो व्ययः, तं

**कन्यां दत्वा हरन् राज्ञा दण्ड्यः कार्यो भर्त्रेच वृद्धिकन्यायं दाप्यः; मृतायान्तु भर्त्रा य-
द्दत्तं तत्प्रत्यादद्यात्॥ १४६॥**

सुबोधिनी

द्रव्यानुबन्धेति—**अनुबन्धो दोषोत्पादो दोष इति यावत्। "दोषोत्पादेऽनुबन्धः
स्यात्" इत्यमरः॥ १४५ख॥**

उभयोरात्मनः कन्यादातुश्चेति। *[**अयमभिप्रायः—विवाहोद्यतैः कन्यादातृप्रति- 30
ग्रहीतृतत्पित्रादिभिस्तन्निमित्तं व्ययीकृतं धनं तस्मात् कन्याधनात् गृहीत्वाऽवशिष्टं वराय**

बालंभट्टी

**पहारस्यैवासंभवादाह**—वाचेति। द्रव्येति—**अनुबन्धो दोषोत्पादः दोष इति यावत्।**
"**दोषोत्पादेऽनुबन्धस्स्यात्**" **इत्यमरात्। द्वन्द्वसमासः।** आदिना **जातिगुणयोर्ग्रहणम्। अत्रैव**
**विशेषमाहाविरोधाय**—एतच्चेति,—**दण्डनं चेत्यर्थः।** चार्थमाह—यच्चेति। वरेणेति—
**तत्पित्रादिना वेत्यपि बोध्यम्। एवमग्रेऽपि। स्वं वरः।** उपचारो **व्यवहारः। व्ययमित्यस्य**
**कर्मप्रत्ययान्तस्यार्थमाह**—व्ययीकृतमिति॥ १४५ख॥

**अथेति प्रश्ने। तमेवाऽऽह**—कथञ्चिदिति। *[**संस्कारात्**—**पाणिग्रहणादितः।]** "**स्वं** 29
**च शुल्कं वोढार्हति" इति गौतमोक्तत्वादाह**—वर इति। **किं कृत्वेति शङ्कायामाह**—
परीति। उभयोरिति **कन्यादातृप्रतिगृहीतृतत्पित्रादिभिः विवाहोद्यतैः वर्गद्वयस्थैः विवा-**
**हनिमित्तं वाग्दाननिमित्तं वा यद्धनं व्ययीकृतं, तत् तस्मात् कन्याधनात् गृहीत्वा अवशिष्टं**

**१. ख, वोप०। २ ख,च. यते। ३. थ. द. न्धाद्यनुसारेणेति। ४. ना० तृ० ना० २५५। ५. (?)।**

परिशोध्य विगमय्यावशिष्टमाददीत । यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा क्रमायातं, तत्सहोदरा भ्रातरो गृह्णीयुः "रिक्थं मृतायाः कन्यायाः गृह्णीयुः सोदरास्तदभावे मातुस्तदभावे पितुः" इति बौधायनस्मरणात् ॥ १४६ ॥

31 **मृताप्रजस्त्रीधनं भर्तृगामीत्युक्तम् । इदानीं जीवन्त्याः सप्रजाया अपि स्त्रिया धनग्रहणे क्वचिद्भर्तुरभ्यनुज्ञामाह—

**दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।**
**गृहीतं स्त्रीधनं भर्ता न [3]स्त्रियै दातुमर्हति ॥ १४७ ॥**

32 **दुर्भिक्षे कुटुम्बभरणार्थे, धर्मकार्ये अवश्यकर्तव्ये, व्याधौ च संप्रतिरोधके, बन्दिग्रहणनिग्रहादौ, द्रव्यान्तररहितः स्त्रीधनं गृह्णन् भर्ता न पुनर्दातुमर्हति ।

शङ्कितमुक्त्वा प्रकृतमेवाऽऽह—**दुर्भिक्षे धर्मेत्यादि ॥ १४७ ॥**

**भर्त्रवचनादन्यो भर्त्रादिः दुर्भिक्षादिगृहीतमपि दद्यादिति गम्यते । सम्प्रत्ये-**

सुबोधिनी

**दद्यादिति]**[१] । तदभावे मातुस्तदभावे पितुरिति—**सोदराभावे मातुर्भवति तदभावे पितुर्भवतीत्यर्थः ॥ १४६ ॥**

बालंभट्टी

30 **तस्मै दद्यादित्यर्थः।** *[विगमय्य परिहृत्य। विगणय्येत्यपपाठः]* **अविरोधाय विशेषमाह—** यत्त्विति । आदिना **पितृव्यादिग्रहणम्** । दत्तं **वाग्दानसमये ततः पूर्वं वा प्रीत्या तस्या एव स्वत्वं कृत्वा समर्पितम्** । शिर इति **उभयान्वयि** । **पक्षान्तरमाह**—वा क्रमेति,—**क्रमायातं वेत्यर्थः** । तदभावे इति—**सोदराभावे तन्मातुर्भवति तदभावे पितुर्भवतीत्यर्थः ॥ १४६ ॥**

**प्रकृतसङ्गतिमाह**—मृतेति । इदानीमिति—**प्रसक्तानुप्रसक्त्येति शेषः** । अपिना **तदन्यसमुच्चयः** । क्वचित्—**न तु सर्वत्र । मौलश्चो व्युत्क्रमे इत्याह**—रोधके चेति । **अन्त्यार्थमाह**—बन्दीति,—**तत्पुरुषगर्भद्वन्द्वगर्भो बहुव्रीहिः** । निग्रहः—**ताडनम्** ।

32 **सर्वशेषमाह**—द्रव्यान्तरेति । पुनः—**पश्चात् द्रव्यलाभोत्तरम्।** *[अर्हतीति—**अवश्यदेयमिति नियमो नास्तीत्यर्थः।अन्यथा न देयमित्येव ब्रूयात्।**]* **निमित्तविशेषोल्लेखफलमाह—**

१. ख. ग. ङ. च. छ. गण० । ख. गतं । ३. वि० भर्त्रा न स्त्रियो ।

Cole.: Ch. II, Sec. xi, §§ 30—32.

प्रकारान्तरेणापहरन्दद्यात्। भर्तृव्यतिरेकेण जीवन्त्याः स्त्रिया धनं केनापि दायादेन 33
न ग्रहीतव्यम्—"जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः। तां शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः॥" इति दण्डविधानात्। तथा—"पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन्दायादा भजमानाः पतन्ति ते॥" इति दोषश्रवणाच्च ॥ १४७ ॥

आधिवेदनिकं स्त्रीधनमुक्तं तदाह— 34

**अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।**
**न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥ १४८ ॥**

वादत्वा मायास्यतीत्येवंरोधोद्धरणं (?) सम्प्रतिरोधकं नगरोपरोध इत्यन्ये। स्पष्टमन्यत् ॥ १४७ ॥

किंच—अधिपन्नास्त्रियै इत्यादि ॥ १४८ ॥

बालंभट्टी

प्रकारान्तरेति। भर्त्रेत्युक्तेः फलमाह—भर्तृव्येति,—तस्यैव उक्तनिमित्तेऽप्यभ्यनुज्ञा नान्येषामिति भावः। जीवन्त्या इति—मृतायास्तु उक्त एव प्रकार इति भावः। तत्—धनम्। स्वबान्धवाः—दायादाः। शिष्यात्—शिक्षयेत्। नारदोक्तिरियम्। मानवमप्याह—तथेति,—तद्वदित्यर्थः। दायादाः—पुत्रादयः। तस्मिन् मृतेऽपीति भावः। पतन्ति—पतिता भवन्ति। विष्णुरप्येवम्। एतेन विभागकाले पुत्रादयः तं जीवति पत्यौ न भजेरन्, किन्तु यस्याः सोऽलङ्कारः तत्पतिभागत्वेनैव देयो यथा सैव तं परिदध्यात् न तु जीवति पत्यौ यो धनः स मृतेऽप्यविभाज्य इति—अदृष्टार्थतापत्तेः। एतेन सर्वथाऽसावविभाज्य इत्यपि निरस्तम्। जीवतीति विशेषणान्मृते तस्मिन्नन्येनापि ग्रहणे न दोष इति भ्रान्तोक्तमपास्तम् ॥ १४७ ॥

प्रकृतसङ्गतिमाह—आधीति। तत्—सविधिप्रकारतत्स्वरूपम्। अधीत्यादिचतुर्थ्यन्तमेकं पदम्। विन्नमिति अत्र भावेक्तः। अधि उपरि विन्नं वेदनमिति सुपेति समासः।

१. क तद्भर्तृ०। २. म० ८. २९। ३. ९. २००। ४. प. फ. ब. पत्यैवतं।

Cole.: Ch. II, Sec. xi, 32—34.

35 **यस्या उपरि विवाहः सा आधिविन्ना सा चासौ स्त्री च तस्यै अधिविन्नस्त्रियै आधिवेदानिकं अधिवेदनानिमिमित्तं धनं समं यावदधिवेदनार्थं व्ययीकृतं तावद्दद्यात्; यस्यै श्वशुरेण भर्त्रा वा स्त्रीधनं न दत्तम्; दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्धं दद्यात्। अर्धशब्दश्चात्र समविभागवचनो न भवति

यस्या उपरि परिणीतं तस्यै यत् परिणयने द्रव्यं गतं तत्समं देयं। यदि पूर्वं स्त्रीधनं नदत्तम् अथ तु दत्तं ततोऽर्धं देयं। एतच्चाधिवेदनिमित्तमन्तरेणाधिविन्नायै द्रष्टव्यं ॥१४८॥

## सुबोधिनी

विवाहान्तरमेव पूर्वस्या धर्मपत्न्या धनदाने निमित्तमित्यतं आह—अधिवेदननिमित्तमिति। तत् कियदित्याकाङ्क्षायामाह— *[समं यावदधिवेदनार्थमिति। अत्र मूलस्थमर्धं पदं न क्लीबं येन समविभागवाचकम्; अपि तु पुल्लिङ्गम्। अत एवांशमात्रवचन इत्यभिप्रायेणाऽऽह—अर्धमिति। "पुंस्यर्धोऽर्धं समेंऽशके" इत्यमरः]* ॥ १४८ ॥

इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां रिक्थविभागप्रकरणम्।

## बालंभट्टी

तदस्ति यस्या इति अर्श आद्यच्। तत्फलितमाह—यस्या इति। उपरि योग्यतायाः सत्त्वे। विवाहः ऐच्छिकः। अधिवेदनं प्रागवत् तदनन्तरं तस्य निमित्तमिति वगाहीय (?) इत्याह—अधीति,—बहुव्रीहिः। तादृशविवाहान्तरमेव पूर्वस्या धर्मपत्न्या धनदाने निमित्तमिति भावः। तत् कियदित्याशङ्कायामाह—सममिति। तस्य सापेक्षत्वेन प्रकृतत्वादाह—यावदिति। व्ययीकृतम् अलङ्करणादिरूपेण। अत्र विशेषबोधकमुत्तरार्धमित्याह —यस्या इति। त्वर्थमाह — पुनरिति। साकाङ्क्षत्वेन प्रकृतत्वादेवाऽऽह —अधीति। प्रकल्पयेदित्यस्यार्थमाह—दद्यादिति। एतेन प्रकीर्तितमित्यपपाठस्सूचितः। नन्वेवं नियतसमत्वासिद्धिः–कदाचित् न्यूनाधिकभावस्यापि संभवात् अत अत आह*[अर्धेति,
35 —किन्तु अंशमात्रपर इति भावः। मौलमर्धपदं न नपुंसकलिङ्गं येन समविभागवाचकं भवेत् "अर्धं समेंऽशके" इति अमरात्; अपि तु पुंलिङ्गम् अत एव अंशमात्रवाचकम् तत्सम-

१. ख. चेत्यधिविन्नस्त्री तस्यै। २. क अस्यैव। ३. क. 'न' नास्ति। ४. त. हानन्त?) ५. थ. द. त्याह। ६. थ. द. तं धनमिति। ७. थ. द. नपुंसकलिङ्गम्। ८ थ. द. त्यनेनाभि०। ९. थ. द. अर्धशब्दश्चातेति। १०. ना० प्र० दि० ८८।

Cole.: Ch. II, Sec. xi, § 35.

अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः ॥ १४८ ॥

**एवं विभागमुक्त्वा इदानीं तत्सन्देहे निर्णयहेतूनाह— 1

**विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।**
**विभागभावना[3] ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ १४९ ॥**

**विभागस्य निह्नवे अपलापे ज्ञातिभिः पितृबन्धुभिर्मातृबन्धुभिः मातुलादिभिः २ साक्षिभिः पूर्वोक्तलक्षणैर्लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्यः ; तथा यौतकैः पृथक्कृतैर्गृहक्षेत्रैश्च । **पृथक्कृष्यादिकार्यप्रवर्तनं पृथक् 3

एवमयं रिक्थविभागो निरूपितः । यदि कश्चिवदविभक्तोऽहमित्येवं विभागनिह्नवं कुर्यात् तत्र कथम्? इत्यत आह—**विभागे इत्यादि ॥ १४९ ॥**

बालंभट्टी

त्वस्यैव हि अभिमतत्वमिति केचित्। वस्तुतस्तु "अर्ध एकार" इत्यादिमहाभाष्यप्रयोगात् अमरे वापुंसीति पूर्वार्धान्वयात् अर्धः अर्धं च समेंऽश इत्यर्थात् पुंल्लिङ्गस्यापि समांशवाचित्वेन नेदं तत्साधकमपितु तत्समत्वस्यैव विवक्षितत्वन तदनुरोधेनात्र तस्यांशमात्रवाचित्वं ग्रामार्ध इत्यादाविव; न तु तद्वाचित्वमिति बोध्यम्।]*तदाह—अतश्च यावतेति। एतावतापि स्त्रीधनस्य पित्रादिधनविभागकालेऽविभाज्यत्वमेवेति न तद्बोधकवचनविरोध इति बोध्यम् ॥ १४८ ॥

महाप्रकरणे शेषतया तेन सङ्गतिमाह—एवमिति । एतदिति[4]—विभागसन्देहे सतीत्यर्थः । अपलापे—विभागानन्तरं कालान्तरे विभागो न जात इत्येवं रूपे अन्यतरेण कृते सति । मूले प्रायो बहुवचनान्तेन द्वन्द्व इत्याह—ज्ञातिभिरित्यादि,—तेषां बहूनामेकसाधकत्वात् । पितृबन्धुभिरिति—इदमुपलक्षणमन्यस्यापि । वस्तुतस्तु ज्ञातिभिरित्यस्य उदासीनैः सजातीयैरित्यर्थः बन्धुभिरित्यत्र बन्धुत्रयैः भ्रात्रादिभिश्चेत्यर्थः उचित इति बोध्यम् । अभिलेखितेत्यस्यार्थमाह—लेख्येन चेति । अत्र बहुत्वानुपयोगोऽनिष्टावहं च तत्सत्त्वं प्रत्युत इति भावः । सर्वसमक्षं लिखयापि तामिति तदर्थः । तथा च तद्वत् युमिश्रणामिश्रणयोरित्यनुशासनानुरोधेन तदर्थमाह—पृथगिति। गृहेति[5]—बहुवचनान्तद्वन्द्वः।च समुच्चये। न्यूनतानिरासायाऽऽह—पृथगिति,—पृथक्कृतगृहक्षेत्रासत्त्वेऽपीति भावः। विभागेति—दायादानां विभागरूपधर्मसन्देहे सतीत्यर्थः। अग्रे ज्ञेय इति शेषः। भागलेख्येन विभागपत्रेण भोगलेख्येनेति[6] पाठे समाहारद्वन्द्वः । पृथक्कार्येति—कृष्यादिरूपेत्यर्थः । द्वितीयमाह—

१. क. च. कृतैस्त० । २. च. तुमा० । ३. वि० देया क्षेत्रकयौ० । ४. प. फ. ब. वमिति विभा० । ५ प फ. ब. ति भावः । ६. प. ब. विभागलेख्ये० ।

Cole.: Ch. II, Sec xii, §§ 1—3.

पञ्चमहायज्ञादिधर्मानुष्ठानं च ; नारदेन विभागलिङ्गमुक्तम्—"भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥"[1] इति। *तथाऽपराण्यपि विभागलिङ्गानि तेनैवोक्तानि—"साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन॥"[2] इति ॥ १४९ ॥

इति रिक्थविभागप्रकरणम्

विभागनिह्नवे जात्यादिभिर्विभागभावना कार्या। ज्ञातिः मातुलादिः बन्धुः पितृव्यपुत्रादिः; एते हि प्रायशो विभागमध्यपातिनः सन्निहिताश्च भवन्ति अन्ये वा साक्षिणः लेख्यं वा यद्विभागप्रज्ञापकं कृतम्; यथाऽऽह बृहस्पतिः—"कार्यमुच्छ्रावणं लेख्यं विभक्तैर्भ्रातृभिर्मिथः। साक्षिणे पापरोधार्थं विभजद्भिरनिर्दिताः ॥" इति। अन्यत्र वा साक्ष्यमन्योन्यमुपलभ्यमानं विभागचिह्नं अभिलिखितं वा प्रतिग्रहव्यवस्थाद्यर्थं तदीयगृहक्षेत्रकयौतकैः आदेयं दानग्रहणं गृहक्षेत्रकयौतकं पृथक् क्षेत्रगृहादिपरिग्रहेणावास्थितिः; तथा च नारदः "साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथंचन॥" इति ॥१४९॥

बालंभट्टी

भ्रातॄणामिति। तथा—तद्वत् । तेनैव—नारदेनैव। प्रातीति— प्रतिभूत्वमित्यर्थः । नावीति—अन्यथा करणे दण्डाद्याम्नानात् । इदमपि क्रियमाणं तल्लिङ्गमिति भावः। कथं चनेति —अत एव विभक्तकृत्यमपि तेनैवोक्तम् "यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः। पृथग्धर्मगुणोपेता न चेत्कार्येषु सङ्गताः ॥ स्वभागानपि दद्युस्ते विक्रीणीयुरथापि वा । कुर्युर्यथेष्टंतत्सर्वमीशास्ते स्वधनस्य वै ॥" इति । "विभक्ता ह्यविभक्ता वा " इति बृहस्पतेराशयस्तु उक्त एव । उक्तरीत्याप्यनिर्णये पुनर्विभागमाह मनुः—"विभागे यत्र सन्देहो दायादानां परस्परम् । पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥" इति । "सकृदंशो निपतति " इति मानवन्तु उक्तरीत्या शक्यनिर्णयाभिप्राय इति केचित् । वस्तुतस्तु आद्यं विभागे न्यूनाधिकभावांशे मिथस्सन्देहाभिप्रायम् द्वितीयं निर्णयाभिप्रायम् । मौलन्तु यथास्थितं जातस्य तस्यैवान्यतरकृतापलापाभिप्रायमत एव तत्र बृहस्पतिः—"स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् । स राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥" इतीति बोध्यम् ॥ १४९ ॥

॥ इति दायविभागः ॥

१.—१३. ३७, ३९. । २. ना० १३. ४२, ४३. । ३. (?) । ४ म० ९ ४७. । ५. प.फ. ब. भिगामीति ।

Cole.: Ch. II, Sec. xii, §§ 3—4.

# अथ सीमाविवादप्रकरणम् ९

अधुना सीमाविवादनिर्णय उच्यते ।

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः[1] ।
गोपाः सीमाकृषाणाश्च[2] सर्वे च वनगोचराः ॥ १५० ॥

नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः । 5
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम्[3] ॥ १५१ ॥

क्षेत्रादीनां पृथक्त्वेनावस्थितानां सन्देहापाकरणमुक्तम् । क्षेत्रादीनामेव तु सीमाविवादे कथं स्यादिति ? उच्यते— सीम्नो विवादे क्षेत्रस्येत्यादि ॥ १५० ॥

सीम्नो मर्यादायां विवादे संशये विवादीभूतक्षेत्रस्य सामन्ताः सर्वतः समीपक्षेत्रिणः स्थविरा गणाश्च समूहानि चातुर्वैद्यादीनि तेषामपि हि सीमाज्ञातृत्वात्; यथाऽऽह बृहस्पतिः —"राजा क्षेत्रं दत्वा चातुर्वैद्यवणिग्दारिकासर्वग्रामीणः तन्महत्तमस्वामिषु पुरुषाधिष्ठितं परिछिन्द्यात् शासनं वा कुर्यात् " इति। अतो गौणः सीमाविवादे प्रमाणम् । किञ्च गोपग्रहणाः सर्वपशुपालोपलक्षणार्थं तथान्ये सीम्नः कृषाणः वृद्धबालिकास्सर्वे च वनगोचराः व्याधशाक-कादयः नृपब्राह्मणाधिष्ठिताश्च—नयेयुरेते सीमान्तामित्यादि ॥ १५१ ॥

तुषाङ्गारादीनि प्रच्छन्नचिह्नानि, निम्नस्थलद्रुमादीनि प्रकाशानि, एतैः सीमान्तं चिह्नैस्संपादयेयुः इति । स्पष्टमन्यत् ॥ १५० ॥ १५१ ॥

बालंभट्टी

दायान्तर्गतस्थावरान्तर्गतगृहक्षेत्रप्रसङ्गेनाऽऽह—अधुनेति,—मनुक्रमस्तु नैवाभि-

१. वि० रागणाः । गोपास्सीम्नः कृषाणोन्ये । २. क. च. ये । ३. वि० तम् ।

ग्रामद्वयसबन्धिन· क्षेत्रस्य सीम्नो विवादे तथैकग्रामान्तर्वर्तिक्षेत्रमर्यादाविवादे च सामन्ताद्य स्थलाङ्गारादिभि. पूर्वक्तैः सीमालक्षणैरुपलक्षिता चिह्निता सीमा नयेयु. निश्चिनुयु । सीमा क्षेत्रादिमर्यादा; सा चतुर्विधा—जनपदसीमा, ग्रामसीमा, क्षेत्रसीमा गृहसीमा, चेति, सा च यथासंभव पञ्चलक्षणा, तदुक्त 5 नारदेन—"ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता । राजशासननीता च सीमा पञ्चविधा स्मृता ॥" इति । ध्वजिनी वृक्षादिलक्षिता–वृक्षादीना प्रकाशत्वेन ध्वजतुल्यत्वात्, मात्स्यिनी सलिलवती—मत्स्यशब्दस्य स्वाधारजललक्षणत्वात्;

## सुबोधिनी

जनपदसीमेति–जनपदो देश· । सा च यथासम्भवामिति—नावश्य वक्ष्यमाणे पञ्चभिर्लक्षणैरुपेतैव सीमा, अपि तु क्वचिदेकेन क्वचित् द्वाभ्यां क्वचित् बहुभिरिति यत्र यथा प्राप्तिसम्भवः, तमनतिक्रम्येत्यर्थः । ध्वजिनी वृक्षादिचिह्नितेति[४] । मत्स्यिनी सलिलवती, नैधानी निखाततुषाङ्गारादिमतीति । तथा च व्यासः—'ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः । समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥ स्वच्छन्दगा बहुजला[५] झषकूर्मसमन्विता । नित्यप्रवाहिणी यत्र सा सीमा मत्स्यिनी मता ॥ तुषा-

## बालंभट्टी

मतोऽस्येति भावः । एवमग्रेऽपि बोध्यम् । विवादे सतीति शेष· । सीमशब्दो नान्त टाबन्तश्च । स्त्रीलिङ्गौ द्वौ । ग्रामद्वयसंबन्धिक्षेत्रसीम्न इति पाठ· । संबन्धित्व क्षेत्रविशेषणम् । व्यस्तपाठेऽग्रेऽपि व्यस्त एव पाठः । युक्तं चैतत्—मूले तथैव पाठात्[१] । विनिगमकाभावादाह—तथैकेति,–तद्वदित्यर्थः । सर्वविधसीमानिर्णायकत्वमेतेषामिति सिद्धान्ताया ऽऽकाङ्क्षितं विशेष मूलानुक्तमाह—सीमाक्षेत्रादीति । साचेति–विषयभेदादिति भावः । जनपदो ग्रामसमूहो देशः । साच,—चतुर्विधाऽपि । यथासभव,—सभवमनतिक्रम्येत्यर्थः । न नियमेन वक्ष्यमाणपञ्चलक्षणरूपैव सर्वा सीमा, अपि तु क्वचिदेकेन क्वचित् द्वाभ्यां क्वाचित् बहुभिरिति यत्र यथाप्राप्तिस्तथैवेति भाव । लाक्षिता,—कृता गौणी । योगार्थमप्याह—वृक्षादीनामिति । अत इति सर्वत्र (?) अत्र शुद्धतया तमप्याह—मत्स्येति, —तद्विना तदस्थिते· । स्वाधारेत्यनेन तन्मूलसबन्धो दर्शित । निधीयत इति निधानं

१ (?) । २. क. क्षकत्वा० । ३ थ द लाक्षतेति । ४. त तिनैधा० । ५. थ, द ती च । ६ त. स्तुबहुला ।

नैधानी निखाततुषाङ्गारादिमती—तेषां निखातत्वेन निधानतुल्यत्वात्; भयवर्जिता अर्थिप्रत्यर्थिपरस्परसंप्रतिपत्तिनिर्मिता; राजशासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता; एवंभूतायां षोढा विवादः संभवति; यथाऽऽह कात्यायनः—"आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च। अभोगभुक्तिः सीमा च षड्विवादस्य हेतवः॥"

## सुबोधिनी

ङ्गारकपालैस्तु कुम्भैरायतनैस्तथा। सीमा प्रवर्तिता कार्या नैधानी सा निगद्यते॥" इति। अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्तिनिर्मितेति—वादिप्रतिवादिनोः सत्यसन्धत्वेन परस्परमत्यन्तविश्वस्तत्वात् 'इयं मदीया भूरियं मदीया' इति स्वस्वचित्तानुसन्धानपुरस्सरं वाङ्मात्राभिर्विरचिता इत्यर्थः। अत्रार्थित्वं प्रत्यर्थित्वं च प्रातिवेश्यत्वेन तद्योग्यत्वाभिप्रायेण, न मत्सरग्रस्तत्वेनेति ज्ञेयम्। ज्ञातृचिह्नाभाव इति— ज्ञातारो वक्ष्यमाणाः साक्षि-

## बालंभट्टी

तदेव नैधानं स्वार्थेऽण्। तदर्थमाह--निखातेति। अत्राऽपि गौणीवृत्तिरित्याह—तेषामिति,— तुषाङ्गारादीनामित्यर्थः। निखातत्वेन खनित्वा अन्तर्गुणतया स्थापितत्वेन। उक्तहेतोरेवाऽऽह — निधानेति। भयवर्जितेत्यस्यार्थमाह—अर्थीति,— वादिप्रतिवादिनोः सत्यसन्धत्वेन मिथोऽत्यन्तं विश्वस्तत्वेन 'इयं मदीया भूरियं मदीया' इति स्वस्वचित्तानुसन्धानपुरस्सरं मिथः सम्मत्या वाङ्मात्रादिनिर्मितेत्यर्थः। अत्रार्थित्वं प्रत्यर्थित्वं च प्रातिवेश्यत्वेन तद्योग्यत्वाशयेन न मत्सरग्रस्तत्वेनेति ज्ञेयम्। ज्ञातृचिह्नेति—ज्ञातारश्च चिह्नानि च तेषामभाव इत्यर्थः। ज्ञातारः साक्षिसामन्तादयः चिह्नानि वृक्षादीनि। व्यासेन तु अन्यथा भेदानुक्त्वा विवृताः; तद्यथा—"निम्नोन्नता च ध्वजिनी नैधानी राजकारिता। स्थिरा पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता। ग्रामयोरुभयोर्यत्र गर्भस्सीमाप्रवर्तकः। निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता॥ शरकुब्जकवल्मीका यत्र देवगृहस्तथा। अश्मकूटाश्च दृश्यन्ते ज्ञेया सा तु समुन्नता। ग्रामयोरुभयोस्सीम्नि वृक्षा यत्र समुन्नताः। समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता॥ इष्टकाङ्गारसिकताः शर्करास्थिकपालिकाः। निहिता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता। तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा। सीमा प्रतिष्ठिता कार्या नैधानी सा निगद्यते॥ साक्ष्यभावे द्वयोर्यत्र प्रभुणा परिकीर्तिता। सामन्ता तु मता सीमा सा ज्ञेया राजकारिता॥ स्वच्छन्दगा बहुजला झषकूर्मसमन्विता। नित्यप्रवाहिणी यत्र सा सीमा मत्स्यिनी मता॥" इति। एवंभूतायाम्—उक्तप्रकारेण यथासं-

१. थ. द. चिह्निता। २. त. र्थीति। ३. थ. द. ग्रन्थं। ४. त. हेति।

इति। तथा हि—ममात्र पञ्चनिवर्तनाया भूमेराधिका भूरस्तीति केनचिदुक्ते पञ्चनिव र्तनैव नाधिकेति आधिक्ये विवादः, पञ्चनिवर्तना मदीया भूमिरित्युक्ते न ततो न्यूनैवेति न्यूनतायाम्, पञ्चनिवर्तनो ममांश इत्युक्ते अंश एव नास्तीत्यस्तिना- स्तित्वविवादः, मदीया भूः प्रागविद्यमानभोगैव भुज्यते इत्युक्ते न सन्तता चिरन्त
5 न्येव मे भुक्तिरित्यभोगभुक्तौ विवादः, इयं मर्यादेयं वेति सीमाविवादः,

सुबोधिनी

सामन्तादयः । चिह्नानि वृक्षादीनि ज्ञातारश्च चिह्नानि च तेषामभाव इत्य- र्थः । भूविवादे षट्प्रकारत्वं कात्यायनवचनव्याख्याने दर्शयंस्तत्र प्रथमप्रकार- माह—ममात्रेति । द्वितीयमाह—पञ्चेति । तृतीयं तुर्यं चाऽऽह —पञ्चनिर्वर्तनो ममांश इति,—अत्र पञ्चनिर्वर्तनो ममांश इत्युक्ते अंशोऽस्ति, पञ्चनिर्वर्तन इत्येतन्नास्तीति तृतीयपक्षं व्याख्यातृबुद्धिपरीक्षार्थं स्फुटमकथयित्वा उत्तरः पक्ष एव व्यक्तीकृतः । अत एवा- स्तिनास्तित्वविवाद इति सम्भूयोपसंहारः । पञ्चमषष्ठावाह—मदीया भूः प्रागिति । इयं मर्यादेयं वेति । अथवा पञ्चनिर्वर्तनो ममांश इत्यत्रैक एव प्रकारः । इयं मर्यादेयं मर्यादा वेति पञ्चमः प्रकारः । इयं सीमा इयं वेति षष्ठः । अनेनैवाभिप्रायेणाऽऽह—इयं मर्यादेयं वेति सीमाविवाद इति । मर्यादायाः सीम्नश्च भेदं दर्शयिष्यति। "मर्यादायाः प्रभेदे

बालभट्टी

भवं पञ्चलक्षणलक्षितायां भूम्यामित्यर्थः । चांशे इति पाठः । उक्तं भूविवादे षट्प्रकारत्वं कातीयव्याख्याने प्रदर्शयन् तत्राऽऽदौ प्रथमप्रकारमाह—ममात्रेति,—प्रदेशे इत्यर्थः । निवर्तनं भूपरिमाणमादावुक्तम् । द्वितीयमाह—पञ्चनीति। नेत्यग्रे । किन्त्विवति शेषः। एवमग्रेऽपि विवाद इत्यस्यानुषङ्गः । अंश इत्युत्तरान्वयीति तृतीयं तुर्यं चाऽऽह—पञ्च- निवर्तन इति । अत्र तथोक्ते अंशोऽस्ति पञ्चनिवर्तनेत्येतन्नास्तीति तृतीयपक्ष व्याख्यातृ- बुद्धिपरीक्षार्थं स्फुटमनुक्त्वा अग्रिमं पक्षमेव व्यक्तीकरोति—अंश एव नास्तीति । अत एव संभूयोपसंहरति—अस्तिनास्तित्वेति। पञ्चममाह—मदीयेति। सन्ततेत्यस्यैव व्या- ख्या – चिरन्तेति,—तथाचाभोगभुक्तिरित्यस्य प्रागविद्यमानभोगकस्य क्षेत्रादेर्भुक्तिरित्यर्थः। षष्ठमाह—इयं मर्यादेयं वेतीति।यद्वा पञ्चनिवर्तनो ममांश इत्यत्र एक एव प्रकारः। मदीया भूरिति तुर्यः। सीमाशब्देनोभयं तत्र पञ्चम इयं मर्यादेयं वेति । इयं सीमेयं वेति षष्ठः । अनेनवाऽऽशयेन तथा सीमाविवाद इत्युक्तम् । मानवे मर्यादायाः सीम्नश्च भेदं दर्शयि-

१. क. कभू० । २. ख. ग. घ. दः संभवति म० । ३. त नितयोरभा० (?) । ४. थ. द. त्र पञ्चनिवर्तनाया इति । ५. थ. द. पञ्चनिवर्तनेति । तृतीयं चतुर्थं । ६. त. रः इयं म० । ७. त. इयमिति ।

इति षट्प्रकारएव विवादः संभवति। षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि निर्णीयमानत्वात् सीमानिर्णयप्रकरणे तस्यान्तर्भावः। समन्ताद्भवाः सामन्ताः चतसृषु दिक्ष्वनन्तरग्रामादयस्ते च प्रतिसीमं व्यवस्थिताः—"ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम्। गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि॥" इति कात्यायनवचनात्। ग्रामादिशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते ग्रामः पलायित इति यथा। सामान्तग्रहणं  5
च तत्संसक्ताद्युपलक्षणार्थम्; उक्तं च कात्यायनेन—"संसक्तकास्तु सामान्ताः

## सुबोधिनी

तु" इत्यत्र। अस्तिनास्तित्वविवादे पक्षद्वयाङ्गीकरणे सीम्नो मर्यादायाश्चैकत्वेन व्यवहारः। अत्र भेदे पूर्वत्रैकत्वम्। अथवा[2] आधिक्यं न्यूनत्वम् अस्तित्वं नास्तित्वमभोगभुक्तिः सीमा चेत्यमी षट् हेतवः क्वचिद्व्यस्ताः क्वचिन्मिलिता इति। एवं पूर्वोक्ताभिप्रायगर्भितमुपसंहरति—षट्प्रकार एवेति। श्रुत्यर्थाभ्यामिति—यत्र साक्षात् सीमाविवादः, तत्र श्रुत्या इतरत्रार्थादिति[3] विवेकः। तत्संसक्ताद्युपलक्षणार्थमित्युक्तम्। तत्राऽऽदिशब्दगृहीतानाह—उक्तं च कात्यायनवचनेन। संसक्तकास्त्विति। अस्यार्थः—सामन्तास्तु संसक्तकाः प्रकीर्तिताः

## बालंभट्टी

ष्यति "मर्यादायाः प्रभेदे तु" इत्यत्र। तथा चाल भेदं पूर्वत्रैक्यम्। भेदे तत्र सीमामर्यादयोरेकत्वेन व्यवहार इति बोध्यम्। यद्वा आधिक्य न्यूनत्वं अस्तित्वं नास्तित्वं अभोगभुक्तिः सीमा चेत्यमी षट् हेतवः कुचिद्व्यस्ताः कुचिन्मिलिता इति। एवमुक्ताऽऽशयगर्भितमुपसंहरति—इति षट्प्रकार एवेति। नन्वेवं प्रकरणासङ्गतिरत आह—षडिति।श्रुत्यर्थाभ्यामिति—यत्र साक्षात् सीमाविवादः तत्र श्रुत्याऽन्यत्रार्थेनेति विवेकः। अपिना भूसमुच्चयः। तस्य—षड्विधभूविवादस्य। अथ मौलं सामन्ता इत्यादि व्याचष्टे—समन्तादित्यादिना,—सामन्तशब्दः पृषोदरादिः। ननु तत्रापि अन्यपार्श्ववर्तिनां सीमानिर्णायकत्वं कथमत आह—ते चेति। आदिसङ्ग्राह्यं प्रकटयन् अत्र मानमाह—ग्रामस्येति,—ग्रामजनो ग्रामजनस्य सामन्त इत्यर्थः। एवं क्षेत्रादावपि। सामन्त इत्यस्याग्रे उभयत्रानुषङ्गः। तत्र हेतुमाह—समन्तादिति। हि यतः समन्तात् परिरभ्य सम्बन्धव्यवस्थिता इत्यर्थः। यथाश्रुतेऽनुपपत्तेराह—ग्रामादीति। आदिना क्षेत्रादिपरिग्रहः। तत्स्था इति—ते च तत्स्वामिनो अन्ये वा। न्यूनतां निराचष्टे—सामेति,—तस्यापीत्यर्थः। अत्राऽऽदिसङ्गृहीतान् दर्शयन् उक्तार्थे सम्मतिमाह—उक्तं चेति। निकटवर्तिनः संसक्तकाः सामन्ता इति।

१. ख. यित। २. त. 'अथवा' नास्ति। ३. त. 'विवेकः' नास्ति।

तत्संसक्तास्तथोत्तराः । संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः ॥ ”
इति। स्थविरा वृद्धा.। आदिग्रहणेन मौलोद्धृतयोर्ग्रहणम्। वृद्धादिलक्षणं च तेनैवोक्तम्—
“निष्पद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः। वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्ति-
ताः॥ ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः। तन्मूलत्वात्तु ते मौला ऋषिभिः
5 परिकीर्तिताः॥ उपश्रवणसंभोगकार्याख्यानोपचिह्निताः। उद्धरन्ति पुनर्यस्मादुद्धृतास्ते
ततः स्मृताः॥” इति॥ गोपाः गोचारकाः; सीमाकृषाणाः सीमासंनिहितक्षेत्रकर्षकाः;
सर्वे च वनगोचराः वनचारिणो व्याधादयः; ते च मनुनोक्ताः—“व्याधान् शाकुनिकान्

## सुबोधिनी

तथा तदनन्तरस्थितास्तत्संसक्तका उत्तरा इति च कथिताः। अत एव संज्ञात्वान्न सर्वनामसंज्ञा। तथा तदनन्तरस्थिताः संसक्तसक्तसंसक्ताः पद्माकारा इति चो-च्यन्ते। सामन्तादयः त्रयोऽपि संज्ञाद्वययुक्ता इत्यर्थः। तत्कार्यं तद्गुणान्वितै-रिति—तत्कार्यं सीमानिर्णयादिरूपम्। तद्गुणान्वितैः सीमानिर्णयादिषु निपुणम-तित्वरूपगुणयुक्तैरित्यर्थः। उपश्रवणसम्भोगेति— अत्रेयं स्थितिरिति सभ्येभ्यः श्रवणमुपश्रवणं च सम्भोगरूपं कार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः। व्याधेति—

## बालंभट्टी

तथा तद्वत्। तत्संसक्ताः तदनन्तरस्थिताः। संसक्तसक्तसंसक्ताः तदनन्तरस्थिताः : उत्तरा इति पद्माकारा इति च प्रकीर्तिता इत्यर्थः। सामन्तादयः त्रयोऽपि संज्ञाद्वयभाज इति यावत्। अत एव न सर्वनामसंज्ञा। आदीति—स्थावरादय इत्यादीत्यर्थः। वृद्धत्वं पारिभाषिकमित्याह—वृद्धादीति। तेनैव कात्यायनेनैव। तत्कार्यमिति—सीमा-निर्णयादिरूपं कार्यं सीमानिर्णयादिविषयकनिपुणमतित्वरूपगुणयुक्तैर्निष्पाद्यमानं यैर्दृष्टं ते इत्याद्यर्थः। यदि वा वृद्धा इत्यत्राकारप्रश्लेषः। तत्र विषये। तन्मूलत्वात्—सामन्तत्वस्य पूर्वस्थितत्वात्। उपेति— अत्रेयं स्थितिरिति सभ्येभ्यः श्रवणमुपश्रव-णम्; उपश्रवणं च संभोगकार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः। सीम्नि कर्षणासंभवादाह—सीमासन्नीति। व्याधादीति “इमानप्यनुयुञ्जीत पुरुषान्वनगो-चरान्।” इत्यस्य पूर्वशेषः। व्याधाः— लुब्धकाः; शाकुनिकाः पक्षिवधजी-

१. ख. ग. ष्पाद्य०। २. थ. द. धान् शाकुनिकानिति।

गोपान् कैवर्तान् मूलखातकान् । व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥"
इति ॥ स्थलमुन्नतो भूप्रदेशः; अङ्गारोऽग्नेरुच्छिष्टम् ; तुषा धान्यत्वचः;
द्रुमा न्यग्रोधादयः; सेतुर्जलप्रवाहबन्धः ; चैत्यं पाषाणादिबन्धः ; आद्यशब्देन
वेणुवालुकादीनां ग्रहणम् ; एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि ; तथा
च मनुः—" सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् । शाल्मलीशालतालांश्च 5
क्षीरिणश्चैव पादपान्॥ गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च। शरान्कुब्जक-

## सुबोधिनी

व्याधा लुब्धकाः; शाकुनिकाः पक्षिवधजीविनः; कैवर्ताः तटाकादिखननवृत्तयः; मूलखाता वृक्षादिमूलोत्पाटनजीविनः ; व्यालग्राहाः सर्पग्राहिण अहितुण्डिकाः ; उञ्छवृत्तयः शिलोञ्छवृत्तयः; वनगोचराः फलाद्यर्थमरण्यचारिणः। गुल्मानिति—गुल्मा अप्रकाण्डस्तम्बा. "अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः। तृणजङ्गा वा। कुप्यकगुल्मांश्चेति—कुप्यसम्बन्धिनो गुल्माः कुप्यगुल्माः कुप्यमेव कुप्यकं, कुप्यं सुवर्णरजतव्यतिरिक्तं ताम्रादि। हेमरूप्ये कृताकृते

## बालंभट्टी

विनः; कैवर्ताःतटाकादिखननवृत्तयः;मूलखातका. वृक्षादिमूलोत्पाटनजीविनः; व्यालग्राहाः सर्पग्राहिण अहितुण्डिकाः; उञ्छवृत्तयः "उञ्छः कणश आदानं कणिशानर्जशीलनम् ।" इति यादवः। अन्येच वनचारिणः फलपुष्पाद्यर्थमरण्यचारिणः। अथ स्थलाङ्गारादि व्याचष्टे —स्थलमित्यादि । निम्नभूप्रदेशस्य निम्नपदेन वक्ष्यमाणत्वादाह—उन्नत इति। उच्छिष्टं कोलासिति माहाराष्टभाषया प्रसिद्धम् । द्रुमाणामुक्तत्वादाह—पाषाणादीति । विशेषमाह—एतानि चेति,— उक्तलक्षणमित्यर्थः । सीमावृक्षानिति—तत्प्रकाशकवृक्षानेतान् तथा कुर्वीत यथा सीमेत्यर्थः। अत्रोभयत्र द्वन्द्वोत्तरपदको द्वन्द्वः । "पिच्छिला पूरणी मोचा स्थिरायुश्शाल्मलिर्द्वयोः।अनोकहः कुटस्सालः।" भागवते पञ्चमे तु भेदा उक्ताः—"वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः ।" इति । पुष्पं विना फलतीति वनस्पतिः वटोदुंबरादिः । फलपाकान्ता ओषधयो गोधूमादिधान्यानि । आश्रयेणाऽऽरोहति सा लता तांबूलादि ; "वल्लीतु व्रततिर्लता" इति तु सामान्यम् ; त्वक्सारावंशादिः; विनाऽऽश्रयेण रोहन्तीति वीरुधो लताविशेषाः ; समयेन फलन्तीति द्रुमाः आम्रादय इति तदर्थः ; गुल्माः अप्रकाण्डस्तंबाः - "अप्रकाण्डस्तंबगुल्मौ" इत्यमरः तृणसङ्घो वा ; स्थलं कृत्रिमोन्नतभूभागः ; दण्डकगुल्मांश्चेति पाठे गुल्मांशे पौनरुक्त्यमिति न स पाठः किन्तु कुप्यकगुल्मांश्चेति ।

१.—८. २६०. । २. ख. कुब्ज । ३. थ. द. लपुष्पाद्य० । ४ थ. द. न्वेणुंश्चाविविधानिति । ५. ना० द्वि० व० ५५. ।

गुल्मांश्च यथा सीमा न नश्यति ॥ तडागान्युदपानानि वाप्यः प्रस्रवणानि च । सीमासन्धिषु कार्याणि देवतायतनानि च ॥" इति प्रकाशरूपाणि, "उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् । सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥ अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः । करीषविष्टकाङ्गारशर्करावालुका-
5 स्तथा ॥ यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् । तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥ एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः॥" इति प्रच्छन्नलिङ्गानि । एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामान्तादिप्रदर्शितैः सीमां प्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा ॥ १५० १५१ ॥

## सुबोधिनी

ताभ्यां यदन्यत् तत् कुप्यमित्यर्थः । कुप्यकस्थमलापकर्षणवर्णोत्कर्षपरस्परसंश्लेषादिषूपयोगित्वात् तत्सम्बन्धित्वम् । अत एवाधिकोपयोगित्वेन गुल्मेभ्यः पृथग्ग्रहणमिति भेदः । तटाकादीनीति—उदपानानि कूपाः । "कूप उदपानं तु पुंसि वा" इत्यमरः । वाप्यः पाषाणादिबद्धा दीर्घिकाः–"वापी तु दीर्घिका" इत्यमरः प्रसवणानि निर्झरादयः ॥ १५० ॥ १५१ ॥

## बालंभट्टी

तत्र कुप्यकसंबन्धिनो गुल्माः कुप्यगुल्माः कुप्यमेव कुप्यकम् स्वार्थे कन् सुवर्णरजताभिन्नं ताम्रादि कुप्यम् "हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्कुप्यम्" इत्यमरात् । कुप्यकस्य मलापकर्षणवर्णोत्कर्षे मिथः संश्लेषादिषु उपयोगित्वात्तत्संबन्धित्वम् । अत एवाधिकोपयोगित्वेन गुल्मेत्यस्य पृथग्ग्रहणमिति भेदः । एवन्तु सोऽपि पाठः कथञ्चित् सुयोजः । तत्रैव पाठे प्रचुरोपभोगत्वेनाऽऽदरार्थं पृथङ्निर्दिष्ट इति तद्व्याख्यातारः । तथेति व्याख्यातम् । यद्वा तथा कृते सति सीमा न नश्यतीत्यर्थः । तटाकशब्दोऽर्द्धर्चादिः । उदपानानि—कूपाः "कूप उदपानं तु पुंसि वा" इत्यमरः । वाप्यः–पाषाणादिबद्धा दीर्घिकाः "वापी तु दीर्घिका" इत्यमरः। प्रस्रवणादिः निर्झरादयः । उपच्छन्नेति—गुप्तसदृशानि सीमाया ज्ञाने । नित्यं सर्वदा । विपर्ययं वैपरीत्यम् । वीक्ष्येति पूर्वान्वयि । अन्यस्य पुनः करणे हेतुरनेन सूचितः । अन्यानेवाऽऽह—अश्मन इत्यादि । आनन्त्याद्विरमन्नन्यान्यपि सूचयन्नुपसंहरति -- यानीति,—उक्तसदृशान्यन्यानीत्यर्थः । सीमायां बोधनीयायाम् । सन्धिषु तत्सन्धिषु । नयेत् निश्चयेन प्रतिपादयेत् । राजेति मनुमात्रार्थमाह —एतैरिति । उभयोपसंहारोऽयमित्याह—प्रकाशाप्रेति। सीमामित्यस्योभयत्रान्वय इत्याह—सीमां प्रतीति। द्वितीयस्य फलितमाह—सीमानिर्णयमिति,—ग्रामद्वयसन्धिस्थनद्यादिसन्देहेन चेति तदर्थः॥१५०॥१५१॥

१.—८. २४६—२५२ । २. त. वोप० । ३ त. त्मस्य । ४. थ द. न्युदपानानीति ५. ना० प्र० वा० ६१, ६२. । ६. ना० द्वि० वै० ६६६. । ७. फ निस्सरणा। ८. फ. तान्येवा०।

यदा पुनश्चिह्नानि न सन्ति, विद्यमानानि वा लिङ्गालिङ्गतया सन्दिग्धानि, तदा निर्णयोपायमाह—

**सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।**
**रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५२ ॥**

सामन्ताः पूर्वोक्तलक्षणाः समग्रामाश्चत्वारोऽष्टौ दशापि वेति एवं समसङ्ख्याः प्रत्यासन्नग्रामीणाः रक्तस्रग्विणो रक्ताम्बरधरा मूर्ध्न्यारोपितक्षितिखण्डाः 5

**सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशाथवेत्यादि ॥ १५२ ॥**

समाः अपक्षपातिताः समाश्च ते ग्रामाश्च समग्रामाः । वा शब्दश्चशब्दार्थे। पूर्वोक्ताः क्षेत्रसामन्तादयः समग्रामास्सामन्ताश्च येषां मध्ये चत्वारोऽष्टौ अथवा दश अथवेति स्मृत्यन्तरोक्तकल्पार्थः त्रयो द्वावेको वेति, तेच रक्तस्रग्वसनाः क्षितिधारिणो भूत्वा नयेयुः रक्तकरवीरादिपुष्पमालिनः रक्तवाससश्च क्षितिमृदं मूर्ध्नि कुर्युः। विशेषाभिधानेऽपि चैतद्द्विजातीनामेव; शूद्राणान्तु यथाऽऽह बृहस्पतिः—"यदि शूद्रो नेता स्यात्तं क्लैब्येनालंकारेणालंकृत्य शवभस्मना मुखं विलिप्याऽऽग्नेयस्य पशोः शोणितेनोरसि पञ्चाङ्गुलानि कृत्वा ग्रीवायामाला-

## सुबोधिनी

सामन्ता[1] वा समग्रामा इति—समग्रामा इति सामन्ताविशेषणं न पृथक् ; सीमा-

## बालंभट्टी

अथाग्रिमसङ्गतिमाह--यदा पुनरिति,—यदा त्वित्यर्थः। सर्वथा असत्ताया विरुद्धत्वादाह—विद्येति । सन्देहे बीजं कोटिद्वयमाह--सीमालिङ्गेति । समग्रामा इति सामन्तविशेषणं न पृथगित्याह—समेति । तदर्थमाह — प्रत्येति,—संसक्ता इत्यर्थः । चत्वार इत्यादि दिक्प्रदर्शनं न परिगणनं तत एव अपिः । तेन तादृशबहूपादानात् तादृशा एव समुच्चीयन्ते । वा विकल्पे इत्याह--इत्येवामिति,—उक्तप्रकारेण समसङ्ख्या न तु विषमसङ्ख्या नाप्येत एवेत्यर्थः । रक्तत्वमुभयविशेषणमित्याह— रक्तस्रगिति,— नीलरूपवदितिवत् प्रयोगो[2]ऽयम् । मूलन्तु सम्यगेव । क्षितिधारिणः इत्यस्यार्थमाह—मूर्धेति, — क्षितिशब्दो विशेषपरः धारणमपि स्थलविशेष एव—

१. त. न्ता इति सामन्त० । २. फ. गद्यम ।

सीमानं[1] नयेयुः—प्रदर्शयेयुः । सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्य-भिप्रायम्; यथाऽऽह मनुः—"साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः।"[2]इति । तत्र च साक्षिणां निर्णेतृत्वं मुख्यं, तदभावे सामन्तानाम्; तदुक्तम्—"साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः । सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥"

5 इति[3] । तदभावे तत्संसक्तादीनां निर्णेतृत्वम्; यथाऽऽह कात्यायनः—"स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् । तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥ संस-क्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः । कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजान-ता ॥" इति । सामन्ताद्यभावे मौलादयो ग्राह्याः; तेषामभावे सामन्तमौलवृद्धोद्धृतादयः—"स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणा" इति कात्यायनेन क्रमाभिधानात्[5] ।

10 एते च सामन्तादयः सङ्ख्यागुणातिरेकेण संभवन्ति—"सामन्ताः साधनं पूर्वं

सुबोधिनी

संसक्तका इत्यर्थः । वार्थो[6] ग्रन्थ एव स्पष्टः । स्वार्थसिद्धौ प्रदुष्टेष्विति—

बालंभट्टी

वक्ष्यमाणमनोरिति भावः । सीमामित्यस्य व्याख्या— सीमानमिति । एवं सति वाऽसङ्गतिं निराचष्टे—सामान्ता वेतीति । साक्षीति—"यदि संशय एव स्याल्लिङ्गाना-मपि दर्शने ।" इत्यस्य पूर्वशेषः। एवः अप्यर्थे । तत्र क्रममाह—तत्रेति,—तयोर्मध्ये इत्यर्थः । तदुक्तमिति मनुनैवेति शेषः । चत्वार इति—तदादिसमसङ्ख्योपलक्षणम् । प्रयता इति अनेन अव्यवस्थितानां दुष्टानां तत्त्वं निरस्तम् । अत एव "प्रदुष्टेषु दुष्टा" इति कातीये उक्तम् । स्वार्थेति—तद्विषये । अर्थगौरवात्— नल्लोभात् दोषयुक्तेषु सामन्तेषु सत्स्वित्यर्थः। तात्पर्यार्थमुपसंहरति—कर्तव्या इति । सामन्ताद्यभावे इति—आदिना तत्संसक्तादिग्रहणम् । अनेन "सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।" इति मानवे सामन्तशब्दस्त्रितयपर इति सूचितम् । अत एवाविरोधः । एवमग्रिम-कातीयेऽपि । तेषां साक्षिणाम् । सामन्ताः संसक्तादयः त्रयः। मौलेति—पूर्वपूर्वाभावे परः परः । एवं च मूलं न क्रमपरमिति भावः । विशेषान्तरमाह—एते चेति,—संसक्तादयस्त्रय इत्यर्थः । सङ्ख्याश्च गुणाश्च ताभ्यामाधिक्येन भवन्तीत्यर्थः । अत्र मानं कातीयमेवाऽऽह—सामन्ता इति—पूर्वं साधनं सामन्ता निर्दोषाः स्युः उत्तरास्तु गुणान्विता[7] द्विगुणाश्च ; तृती-

१. क. सीमां । २.—८ २५३. । ३. म० ८. २५८. । ४. घ. संसक्तेषु सदोषेषु । ५ ख. घ. क्रमविधा० । ६. थ. द. वाशब्दार्थो । ७. त. द्वाविति ।

निर्दोषाः स्युर्गुणान्विताः। द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥" इति स्मरणात्। ते च साक्षिणः सामन्तादयश्च स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः—"शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः। सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥" इति मनुस्मरणात्। नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य—"एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्। रक्तमाल्याम्बरधरो भूमिमादाय मूर्धनि॥" 5 इति नारदेनैकस्याभ्यनुज्ञानात्। योऽयं "नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि। गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता॥" इत्येकस्य निषेधः, स उभयानुमतधर्मविद्व्यतिरिक्तविषय इत्यविरोधः। स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञाने उपायविशेषो नारदेनोक्तः—"निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु। तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात्॥" इति। निम्नगाया नद्या अपहृतेनापहरणेनोत्सृ- 10

## सुबोधिनी

सामन्तेषु दोषयुक्तेषु सत्स्वित्यर्थः। नयेयुरिति बहुवचननिर्देशादेकस्य द्वयोर्न सीमानिर्णेतृत्वं स्यादित्यत आह—नयेयुरिति बहुवचनमिति। "निमग्नापहृतोत्सृष्टे" इति नारदवचनं व्याचिख्यासुरस्य पदस्य समासमाह—निम्नगाया नद्या इति।

## बालंभट्टी

या अपि गुणान्विताः त्रिगुणाश्चेत्यर्थः। द्वैगुण्यादि च प्रागुक्तचतुष्ट्वादितो बोध्यम्। विशेषान्तरमाह—ते चेति,—स्मृत्यन्तरोक्ताश्चेत्यर्थः। स्वैः स्वैरिति यज्जातीयो यः, तदीयसुकृतैरित्यर्थः। उर्वी—तत्खण्डम्। तां—सीमाम्। समञ्जसमिति क्रियाविशेषणम्। नयेयुरिति बहुवचनादेकस्य द्वयोश्च तन्निर्णेतृत्वं न स्यादत आह—नयेयुरितीति। अत एव मूलादौ चत्वार इत्यादौ चोक्तम्। एवं च तत्रापि तदेकवाक्यतया समा एव ग्राह्या न विषमा इत्यर्थः। भूमिं तत्खण्डम्। अव्यवहिते तत्प्राग्वर्तिनारदविरोधमेव तस्य परिहरति—योऽयमिति। प्रत्ययः विश्वासः। अस्य सीमानिर्णयरूपस्य। उभयेति अर्थिप्रत्यर्थीत्यर्थः। अत एव बृहस्पतिरपि—"ज्ञातृचिह्नविनाशे तु एकोऽप्युभयसम्मतः। रक्तमाल्यांबरधरो मृदमादाय मूर्द्धनि॥ सत्यव्रतस्सोपवासस्सीमां सन्दर्शयेन्नरः।" इति। विशेषान्तरमाह—स्थलादीति। आदिना तेषामेव न तु अन्येषाम्। नारदीयं व्याचिख्यासुरादौ सन्दिग्धतया समासपूर्वकं पदार्थमाह—निम्नगयेति। भावेक्त इत्याह—अपहर-

१.—८. २५६. । २—११. १०, ९. । ३—११. ६. ।

ष्टानि स्वस्थानात्प्रच्युतानि नष्टानि[1] वा लिङ्गानि यासु मर्यादाभूमिषु, तत्र तत्प्रदेशा-
नुमानादुत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्रदण्डपरिमितं
क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा प्रत्यर्थिसमक्षमविप्रतिपन्नाया
अस्मार्तकालोपलक्षितभुक्तेर्वा निश्चिनुयुः। बृहस्पतिना चात्र विशेषो दर्शितः—
5 "आगमं च प्रमाण च भोगं[2] कालं च नाम च। भूभागं[3] लक्षणं चैव ये विदु-
स्तेऽत्र साक्षिणः॥" इति। एते च साक्षिसामन्तादयः शपथैः श्राविताः सन्तः कुला-

## सुबोधिनी

अस्मिन् वचने उपायत्रयमभिहितम्[4]। तत्र "तत्प्रदेशानुमानात्" इत्युपात्तमुपा-
यस्वरूपं विविच्य दर्शयति—तत्रेति[5]। "प्रमाणात्" इत्युपात्तमुपायस्वरूपं विवि-
नक्ति—ग्रामादारभ्येति। "भोगदर्शनात्" इत्येतद्व्याचष्टे—प्रत्यर्थिसमक्षमिति। बृह-
स्पतिना चात्र विशेषोऽदर्शित इति। अत्रेति परमप्रकृतसाक्षिसामन्तादिविषय इत्यर्थः।

## बालंभट्टी

णेनेति। निम्नगयेत्यस्य उत्सृष्टादौ कर्तृत्वेनान्वयः। अत एव "न लोक" इति निषे-
धात् तत्र षष्ठी न कृता। अपहरणस्य तत्र करणत्वेनान्वयः। उत्सृष्टानीति पाठः। अत
एव तथार्थमाह—सेति। कल्पतरौ तु उत्सृष्ट इति पाठो धृतः। अर्थस्स एव। यौग
पद्यासंभवादाह—नष्टानि वेति,—फलितार्थेऽपि समासस्तु द्वन्द्वगर्भो बोध्यः। भूमिपदं
प्रकरणाद्विशेषपरमित्याह — मर्यादेति। अत्र वाक्ये उपायत्रयमुक्तम्। तत्रा-
ऽऽद्यस्वरूपं विविच्याऽऽह—तच्चेति,— तेषां त्रयाणां मध्ये इत्यर्थः। तत्पदेनो-
त्सृष्टादिचिह्नपरामर्शः। तदाह—उत्सृष्टेति। प्रार्थमाह —प्राचीनेति। द्वितीयस्व
रूपमाह—ग्रामादिति। दण्डः— परिमाणविशेषः प्रागुक्तः। चः वार्थे। उभय-
त्रान्वयीत्याह—वेति। तृतीयस्वरूपमाह—प्रत्यर्थीति,—एतत्समक्षं कदापि विप्रतिपत्ति-
मप्राप्ताया इत्यर्थः। समुन्नयेयुस्सीमानमित्यनुवृत्तिमभिप्रेत्याऽऽह—निश्चीति। मनुरप्येत-
द्विषयकः प्रागुक्त एव "पूर्वभक्त्या तु" इति। चः त्वर्थे। एवमग्रेऽपि। अत्र
परमप्रकृतसाक्षिसामन्तादिविषये सीमानिर्णये वा। आगमादिस्वरूपं प्रागुक्तंचेति
पाठः। साक्षिपदं सामन्तादीनामप्युपलक्षणम्। विशेषान्तरमाह — एते चेति।

१. क. प्रन०। २. ख. घ. गका०। ३ ख. घ. गेल०। ४. त. मुक्तम्। ५. थ. द.
त्रतत्प्रदेशानुमानादिति। ६. अ०२ ३. ६९. ७.। अत्र 'तत्र' इति भाव्यम्।

दिसमक्षं राज्ञा प्रष्टव्याः; यथाऽऽह मनुः—"ग्रामेयककुलानां च समक्षं सीम्नि साक्षिणः । प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥" इति । तेच पृष्टाः साक्ष्यादयः समस्ताः ऐकमत्येन सीम्नि निर्णयं ब्रूयुः ; तैर्निर्णीतां सीमां तत्प्रदर्शितसकललिङ्गयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत् ; उक्तं च मनुना—" ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् । निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः॥" इति । एतेषां साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणादिनादारभ्य यावत्त्रिपक्षं राजदैविकं व्यसनं चेन्नोत्पद्यते, तदा तत्प्रदर्शनात्सीमानिर्णयः । अयं च राजदैविकव्यसनावधिः कात्यायनेनोक्तः—"सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च । त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते॥" इति ॥ १५२ ॥ 5

णि प्रतिमुच्य सव्येन पाणिना सीमालोष्टं मूर्ध्नि धारयेदिति । अत्र चाऽऽग्नेयः पशुश्चागमरक्तकर्मपटवसनादिः क्लैब्योऽलङ्कारः । स्पष्टमन्यत् ॥ १५२ ॥

## सुबोधिनी

अथ वा अत्र सीमानिर्णय इत्यर्थः । "ये विदुस्तेऽत्र साक्षिणः" इत्यत्र साक्षिग्रहणं सामन्ताद्युपलक्षणार्थम् । ग्रामेयककुलानां त्विति--ग्रामेयका ग्राम्याः । तेषां च " पूगश्रेणीकुलानाम्" इत्युक्तलक्षणकुलानां च वादिप्रतिवादिनोश्च समीप इत्यर्थः । अथवा ग्राम्यजनानां समूहाः कुलानि तेषामिति ॥ १५२ ॥

## बालंभट्टी

ग्रामेयकेति ग्रामेयका ग्राम्यजनाः । कुलानि पूगश्रेणीकुलानीत्युक्तानि।एतेषां समक्षमित्यर्थः। यद्वा ग्रामेयकाः ग्राम्यजनाः तेषां कुलानि समूहाः तेषामित्यर्थः । सीम्नि विषये । एवमग्रेऽपि । ये साक्षिणः ते तानि पृष्टव्या एव द्विकर्मकोऽयं गौणे कर्मणि तव्यः । विवादिनोस्तयोश्च समक्षमित्यस्यानुषङ्गः । सीमसाक्षिण इति पाठान्तरम् । निबध्नीयात्— पत्रे लेखयेत्। तान् सर्वान् साक्ष्यादीन् । चेन सकललिङ्गसमुच्चयः । मूलं सङ्गत्याऽवतारयितुं विशेषान्तरमाह—एतेषां चेति । राजेति—राजिकं दैविकं च दुःखमित्यर्थः । अत्र मानमाह—अयं चेति । चः त्वर्थे । कोशः प्रागुक्तः । त्रिपक्षेति बहुव्रीहिः यथासङ्ख्यमन्वयः । आर्षत्वात्साधुत्वम् । अस्य पूर्वनिपातानियमो धर्मादित्वात् ॥ १५२ ॥

१ ख. ग. घ. तु । २.—८. २५४. । ३. ख. ग. घ. तत्तद्य० । ४.—८. २६१. । ५. थ. द. ग्राम्यजना ग्रामेयकाः । ६. त. वामात्यज(?) ।

यदा त्वमीषामुक्तसाक्ष्यवचसा त्रिपक्षाभ्यन्तरे रोगादि दृश्यते, अथवा प्रतिवादिनिर्दिष्टाभ्यधिकसङ्ख्यागुणसाक्ष्य तरविरुद्धवचनता, तदा ते मृषाभाषितया दण्डनीया., तदाह—

**अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ।**

अनृते मिथ्यावेदने निमित्तभूते सति सर्वे सामन्ता· प्रत्येक मध्यमसाहसेन चत्वारिंशदधिकेन पणपञ्चशतेन दण्डनीयाः । सामन्तविषयता चास्य साक्षिमौलादीना स्मृत्यन्तरे दण्डान्तरविधानादवगम्यते , तथाच मनुः—“ यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः । विपरीत नयन्तस्तु दाप्या' स्युर्द्विशत दमम् ॥” इति । नारदोऽपि—“ अथ चेदनत ब्रूयुः सामन्ता. सीमानिर्णये । सर्वे पृथक् पृथक् दण्डया राज्ञा मध्यमसाहसम् ॥”[1] इति सामन्ताना मध्यमसाहस दण्डमभिधाय “शेषा-

एते च सीमाप्रणेतारः—**अनृते तु पृथग्दण्ड्या इत्यादि ॥ १५३ ॥**

तुशब्दो निश्चितार्थ.—उक्तचिह्नव्यभिचारात् । चिह्नान्तरदर्शनाद्वा स्पष्टीकृतेऽरितवादित्वे(?)राज्ञा मध्यमसाहसं पञ्चकार्षापणशतान्येकैकशो दण्डयाः।राजवचनं तत्समक्षं सीमानयनं

सुबोधिनी

ननु “अनृते तु पृथग्दण्डयाः” इति सामान्योक्तेः केवलसामन्तविषयता कथमित्यत आह—सामन्तविषयता चेति,—सामन्तव्यतिरिक्ताना स्मृत्यन्तरेष्वेतद्विरुद्धदण्डान्तरवि-

बालभट्टी

एवं सति सङ्गत्या मूलमवतारयति—यदा त्विति। अमीषा साक्ष्यादीनाम् । साक्ष्य च वचांसि च तान्युक्तानि यैरित्यर्थ. । त्रिपक्षशब्दः पात्रादिः । अभ्यधिकौ सङ्ख्यागुणौ यत्र तानि । साक्ष्याद्यन्तरेति पाठः । ते इति वादिनिर्दिष्टसाक्ष्यादय. । राहूपराग इतिवत् सप्तमीत्याह—निमित्तेति । सर्वे—पार्श्वस्थाः । पृथगर्थमाह—प्रत्येकमिति । पञ्चशतशब्दो बहुव्रीहिः तत्परिच्छिन्नपणेनेत्यर्थः । एवमग्रेऽपि । ननु अनृतेत्विति सामान्योक्तस्य सामन्तमात्रविषयतैव कथमत आह — सामन्तेति,—तन्मात्रेत्यर्थः । यथोक्तेन-- यथा शास्त्रोक्तप्रकारेण । नारदोऽपीति अस्य ल्यबन्तस्पर्शपूर्वकमुक्तवानित्यत्रान्वयः।सर्वे इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । मध्यमेति कर्म । दण्डयाः ग्राह्याः। ग्रहणार्थोऽत्र दण्डि. न तु निग्रहार्थः । व्यापारद्वयार्थत्वेन द्विकर्मकताऽस्य । एव मूलेऽपि । अग्रेऽपि च । शेषाः

१ ङ च वादे । २—८. २५७ । ३—११. ७. । ४ त तेति । ५. फ. ठः ।
नतेति—वादिनिर्दिष्टसाक्ष्यादीनाममीषामिति भावः । ते ठ० ।

श्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि । प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥ ''
इति तत्संसक्तादिषु प्रथमसाहसमुक्तवान् । मौलादीनामपि तमेव दण्डमाह—
'' मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक् । विनेयाः प्रथमेनैव साहसेनानृते
स्थिताः ॥ '' इति । आदिग्रहणेन गोपशाकुनिकव्याधवनगोचराणां ग्रहणम् । यद्यपि
शाकुनिकादीनां पापरतत्वाल्लिङ्गप्रदर्शन एवोपयोगो न साक्षात्सीमानिर्णये, तथापि 5
लिङ्गदर्शन एव मृषाभाषित्वसंभवाद्दण्डविधानमुपपद्यत एव। '' अनृते तु पृथग्दण्ड्याः''
इत्येतद्दण्डविधानमज्ञानविषयम्—'' बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम् ॥'' इति ज्ञानविषये साक्ष्यादीनां कात्याय-
नेन दण्डान्तरविधानात् । तथा साक्षिवचनभेदेऽप्ययमेव दण्डस्तेनैवोक्तः—'' की-
र्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् । '' इति । एवमज्ञानादिनाऽनृतवदने 10

सुबोधिनी

धानाद्योगीश्वरोक्तदण्डस्य सामन्तविषयत्वमेव युक्तमित्यर्थः । जघन्यास्त इति—जघन्या दुष्टा इत्यर्थः । एतद्दण्डविधानमज्ञानविषयमिति—''अनृते तु पृथग्दण्ड्याः'' इत्यारभ्य यो दण्डः प्रदर्शि योगीश्वरमनुनारदाद्युक्त, तद्विधानमित्यर्थः। तत्र हेतुमाह—बहूनामित्यादिना, —अत्र भयाद्वा लोभाद्वेति हेतूपादानात् ज्ञानविषयत्वं स्फुटम ॥ १५२८ ॥

बालंभट्टी

-- सामन्तभिन्नाः साक्ष्यादयः भूसीमानिर्णयप्रेरिताः । जघन्याः—दुष्टाः । विनेयाः—दण्ड्याः । तमेव—प्रथमसाहसाख्यमेव । दण्डगत्या—दण्डशास्त्रोक्तरीत्या दण्डज्ञेनन । नारद एवायम् । नारदोक्तादिसङ्ग्राह्यमाह — आदीति । साक्षादिति अधार्मिकत्वात्। तथा च तत्र दण्डस्य नोपयोग इति कथं तेषामादिना ग्रहणमिति भावः । विशेषान्तर-माह—अनृतेत्विति। इत्येतादिति—इत्यारभ्य यन्मूलमनुनारदादिप्रदर्शितमित्यर्थः । अत्र हेतुमाह—बहूनान्त्विति,—निर्णेतृत्वेन समाश्रितानां बहूनां साक्ष्यादीनां मध्ये यदि सर्वेऽपि साक्ष्यादयः प्रत्येकमुक्तहेतुतो निर्णयं न कुर्युरित्याद्यर्थः ; अत्र भयाद्वा लोभाद्वेति हेतूक्त्या ज्ञानविषयत्वं स्पष्टमेव । तदाह—ज्ञानेति । विशेषान्तरमाह—तथेति,—किञ्चेत्यर्थः तद्वदित्यर्थो वा । अयमेव उत्तमसाहसाख्य एव । तेनैव कात्यायनेनैव । एवमग्रेऽपि । विशेषान्तरमाह—एवमिति,—उक्तप्रकारेणेत्यर्थः। आदिना ज्ञानग्रहः ।

१. ना० ११. ८. । २ ख. शब्देन ; घ. ग्रहणात् । ३. क. वचने । ४ थ. द. प्रदर्शितः । ५. थ. द नां तु गृहीतानामि० । ६. प. ब सारो० ।

साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्तयितव्यः। "अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत्।" इत्युक्त्वा—"त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह। संमिश्रय कारयेत्सीमामेवं धर्मविदो विदुः॥" इति निर्णयप्रकारस्तेनैवोक्तः॥१५२॥

यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति, तदा कथं निर्णय इत्यत आह—

5 **अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता॥ १५३॥**

ज्ञातॄणां सामन्तादीनां लिङ्गादीनां च वृक्षादीनामभावे राजैव सीम्नः प्रवर्तिता प्रवर्तयिता। अन्तर्भावितोऽत्र ण्यर्थः। ग्रामद्वयमध्यवर्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्य 'अस्येयं भूरस्येयम्' इत्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्यात्। यदा तस्यां भूमावन्यतरस्योपकारातिशयो दृश्यते, तदा तस्यैव ग्रामस्य सकला भूः 10 समर्पणीया; यथाऽऽह मनुः—"सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशे-

## सुबोधिनी

यदा तस्यामिति—विवादास्पदीभूतायां भुव्यन्यतरस्य ग्रामस्याधिकोपकारसम्भवे यावत्युपयुक्ता भूः, तावती सर्वापि देयेत्यर्थः। सीमायामिति। अस्यार्थः—लिङ्गसाक्ष्याद्यभावेन सीमनि परिच्छेत्तुमशक्यायां धर्मज्ञो राजा स्वयं पक्षपातरहितस्सन् यस्य ग्रामस्य यावति भूभागे उपकारातिशयस्तावानुपकारातिशयवशात् तस्य ग्रामस्य प्रदिशेत् निर्दिशेदिति॥ १५३॥

## बालंभट्टी

अत्र मानमाह—अज्ञानोक्ताविति,— "ज्ञानेन हि विमुच्यन्ते सामन्ता निर्णयं प्रति।" इत्यस्याऽऽदिः। यत इत्यादिः। संमिश्रय मिश्रीकृत्य॥ १५२॥

मूलमवतारयति— यदेति। पुनः तु। चिह्नानामिति द्वन्द्व इत्याह—ज्ञातृणामिति। साक्षिणां मूलानुक्तत्वादाह—सामन्तेति। चिह्नानामित्यस्यार्थो—लिङ्गानाञ्चेति। उक्तहेतोरेवाऽऽह—राजैवेति। यथाश्रुते बाधादाह—प्रवर्तयितेति। तदुपपादयति—अन्तरिति,—व्यापारद्वयार्थत्वं तस्येति भावः। तत्प्रकारमाह—ग्रामेति। समंस्यादिति न्यायेनाऽऽह— सममिति। तत्र विशेषमाह—यदेति,—विवादास्पदीभूतायां भुवि अन्यतरस्य ग्रामस्याधिकोपकारसंभवे यावत्युपयुक्ता तावती सर्वापि तस्य देयेत्यर्थः। सीमायामिति।लिङ्गाद्यभावेन परिच्छेत्तुमशक्यायां सीमायां धर्मज्ञोऽन्यासंभवाद्राजैव स्वयं

१. ज्ञाति २. क. घ यंभूरित्यु०। ३ थ. द. स्यांभूमाविति। ४. थ द. यामविषह्यायामिति। ५. त. सीम०।

द्भूमिमेकेषामुपकारादिति स्थितिः ॥" इति ॥ १५३ ॥

असत्यामप्यतद्भावाशङ्कायामस्याः स्मृतेर्न्यायमूलतां दर्शयितुमतिदेशमाह—

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ १५४ ॥

यथा स्यात्तदा प्रछन्नप्रकाशानि ज्ञानचिह्नानि न स्युः, तदा राजा प्रवर्तिता यदृच्छया सीमाकारक इत्यर्थः ॥ १५३ ॥

योऽयं क्षेत्रसीमादिरुक्तः आरामायतनग्रामेत्यादि ॥ १५४ ॥

## सुबोधिनी

अतिदेशे ह्यधिकम् (आकाङ्क्षत ?) इति न्यायेन यत्राधिकाशङ्का, तत्र पूर्वोक्तविपर्या-सादृश्यप्रतीतेस्तद्भावाभावेनातद्भावाशङ्कायां पूर्वोक्तवदेवैतदपीत्यतिदेशो वक्तव्यो यथा-ऽऽहिताग्नेः पिण्डपितृयज्ञं विधाय एवमनाहिताग्नेरित्यनाहिताग्नेरतिदेशः । प्रकृते तु "सीम्नो विवादे क्षेत्रस्य" इत्यादिना यो न्यायोऽभिहितः, तस्याऽऽरामादीनामत्यन्ततुल्यत्वेन तेष्वतिदे-शानपेक्षत्वात् "आरामायतन" इति वक्ष्यमाणवचनं निष्प्रयोजनमित्याशङ्क्य, भवत्वेवं तथाऽपि न्यायप्रभवान्यपि वाक्यानि सन्तीति शिष्यशिक्षार्थं पूर्वोक्तन्यायसिद्धार्थमेव विषयान्तरेष्वपि वाक्येन सङ्गृह्णातीत्याह-असत्यामप्यतद्भावाशङ्कायामिति,—तत् तादृक् स्वरूपमस्या-

## बालंभट्टी

पक्षपातरहितस्सन् येषामुपकारातिशयः तेषामेव ततः प्रदिशेत्—निर्दिशेदित्यर्थः ॥ १५३ ॥

उत्तरसङ्गतिमाह— असत्यामिति । तत् तादृक् स्वरूपमस्यास्तीति तद्वत् तद्वतो भावः तद्भाव; ततो नञ्समासः; तस्यामाशङ्का;—तस्यामसत्यामपीत्यर्थः । अस्याः—वक्ष्यमाणायाः । अयं भावः—"अतिदेशो हि अधिकमाकाङ्क्षते" इति जैमिनीयन्यायेन यत्राधिकाशङ्का तत्र पूर्वोक्तविषयसादृश्याप्रतीतेस्तद्भावाभावेना-तद्भावाशङ्कायां पूर्वोक्तवदेतदपीत्यतिदेशो वाच्यः — यथा आहिताग्नेः पिण्ड-पितृयज्ञं विधाय एवमनाहिताग्नेरिति तस्यातिदेशः । प्रकृते तु सीम्नो विवाद इत्यादिना यो न्याय उक्तः क्षेत्रादिसीमायां, तस्याऽऽरामादेस्तस्यामत्यन्ततुल्यत्वेन संभवेन तेष्वतिदेशानपेक्षत्वेन "आराम" इति वक्ष्यमाणवचनं निष्फलं यद्यपि, तथाऽ-पि न्यायप्रभवान्यपि वचांसि सन्तीति शिष्यबोधार्थमुक्तन्यायसिद्धार्थमपि विषयान्तरेषु

१.—८. २६५. । २. वि० वहेषु च । ३. त. शोद्य० । ४. त. यायाः सा० । ५. थ. द. वमेवाना० । ६. व्य० १५०. । ७. त. द. त्येव । ८. थ. द. वचनानि । ९. थ.द. वचनेन ।

आरामः पुष्पफलोपचयहेतुर्भूभागः; आयतनं निवेशनं पलालकूटाद्यर्थे विभक्तो भूप्रदेशः; ग्रामः प्रसिद्धः,—ग्रामग्रहणं च नगराद्युपलक्षणार्थम्; निपानं पानीयस्थानं कूपवापीप्रभृतिकम्; उद्यानं क्रीडार्था भूमिः; वेश्म गृहम्—एते-ष्वारामादिष्वयमेव सामन्तसाक्ष्यादिलक्षणो विधिः ज्ञातव्यः। तथा प्रवर्षणोद्भूतजल-
5 प्रवाहेषु अनयोर्गृहयोर्मध्येन जलौघः प्रवहति अनयोर्वेत्येवं प्रकारे विवादे। आदि-ग्रहणात्प्रासादादिष्वपि प्राचीन एव विधिर्वेदितव्यः। तथा च कात्यायनः—"क्षेत्रकूपतडागानां केदारारामयोरपि। गृहप्रासादावसथनृपदेवगृहेषु च॥"इति॥१५४॥

सीमानिर्णयमुक्त्वा तत्प्रसङ्गेन मर्यादाप्रभेदनादौ दण्डमाह—

**मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा।**
**10 क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः॥ १५५॥**

उक्तमर्यादक्षेत्रादीनां च—मर्यादायाः प्रभेदे चेत्यादि॥ १५५॥

साहसदण्ड्या इत्यर्थशेषः। मर्यादाभेदे प्रथमसाहसः—सार्धं द्विशतं; क्षेत्रहरणे तु उत्तमसाहसः साशीतिः पणसाहस्रः; सीमातिक्रमणे मध्यमः॥ १५५॥

## सुबोधिनी

स्तीति तद्वतो भावस्तद्वद्भावः तस्याऽऽशङ्का, तस्यामसत्यामपि इत्येवं समासयोजना। आयतनं निवेशनमित्युक्त्वा तदेव विविच्य दर्शयति—पलालकूटाद्यर्थमिति॥ १५४॥

## बालंभट्टी

वचनेनातिदिशतीति तदर्थभूतानिवेशनमेव विशदयति—पलालेति। कूटं समूहः। आदिना तृणान्तरकाष्ठादिपरिग्रहः। न्यूनतां निराचष्टे—ग्रामेति। चो—व्युत्क्रमे। तदु-पलक्षणार्थमपिः। यद्यपि "आहावस्तु निपानं स्यादुपकूपजलाशये।" इत्यमरेणोक्तम्, तथाऽप्युपलक्षणत्वेनाऽऽह—पानीयेति। प्रभृतिना अन्यस्यापि ग्रहणम्। एवं पदार्थानुक्त्वा वाक्यार्थमाह—एतेष्विति।अग्रिमं स्वतन्त्रमित्याह—तथेति। प्रवहशब्दो भयादित्वात् (?) साधुः।"केदारो वप्रमस्त्रियाम्"। गृहं सामान्यम्। यद्यपि "प्रासादो देवभूभुजाम्" इत्य-मरः, तथाऽप्यत्र तयोः पृथगुक्तेः प्रासादो महागृहम् प्रासादोऽपि। उभयत्राधिकरणे घञ्। आर्ङधिकः। आद्ये आवसथमग्निमत् गृहम्॥ १२४॥

तथाशब्दस्समुच्चये। सीमातिक्रमणं तमुल्लङ्घ्य गमनं न विवक्षितं दण्डविशेषोक्ते-

१. ख. वापीकूप०। ज. कूपप्र०। २. ख. डावनम्। ३. वि० क्षेत्रस्य हरणे तथा। सीमातिक्रमणे दण्ड्याद्यध०। ४.—प्र० वा० २६१.। ५ (?)। ६.—दि० पु० २७.

पालो दातुमर्हति । यदि देशे च काले च स्वामिनः स्वस्य शंसति॥" इति। दैवेमृता-
ना पुनः कर्णादि प्रदर्शनीयम्—"कर्णौ चर्म च वालाश्च बस्तिं स्नायुं च रोचनाम्। पशुषु स्वामिना दद्यान्मृतेष्वङ्गानि दर्शयन्॥" इति मनुस्मरणात्॥१६४॥

परिच्छिन्नवेतनो दत्तवेतनो वा गोपः प्रातर्यथार्पितान् सायं प्रत्यर्पयेत् अर्पणवचनाच्चा-
समर्पितप्रणाशेनापराध । गोपवचन च पशूनित्युपक्रमात् सर्वपशुपालोपलक्षणार्थं प्रमादे-
नोपेक्षया मृता प्रणष्टा वा ये पशव, ते च पालेनैव देया । राजन्यनिवेदितस्य पूर्वो मावेदि-
तत्पुरुष (?) ॥ १६४ ॥

## सुबोधिनी

दातु पालो नार्हति, यदि तस्मिन्नेव देशे हरणोत्तरकालमेव स्वस्वामिने कथयतीत्यर्थः । कर्णाविति—चर्म त्वक् ; वाला लोमानि चिह्नभूतानि , वस्तिर्मूत्राधाराङ्गविशेषः । स्नायुर्वस्नसा , "अथ वस्नसा । स्नायुः" इत्यमरः, रोचना गोरोचना , एतानि स्वामिषु दद्यात् । पशुषु मृतेष्वन्यान्यप्यङ्गानि ज्ञापकानि दर्शयेत् । "अङ्कांश्च दर्शयेत्" इति पाठे पशुदेहस्थितान् मुद्रादीनपि चिह्नानि दर्शयेदित्यर्थः ॥ १६४ ॥

## बालभट्टी

घुद्घोषेण प्रसिद्धमपहृत पालो दातु नार्हति यदितस्मिन्नेव देशे हरणे तस्मिन्नेव काले हरणोत्तर मेव स्वस्य स्वामिने कथयतीत्यर्थः शेषत्वविवक्षया षष्ठी अन्यथातु दाप्य एव। अत एव तत्र न पालं दातुमर्हतीत्युक्तम् , न तुनदाप्य इति। तु पुन —पुनरित्येव पाठे त्वर्थः सः । चर्म- त्वक् , वालान् लोमानि चिह्नभूतानि , बस्तिः मूत्राधारोऽङ्गविशेषः। "वास्तिर्नाभेर्द्वयो रथः" इत्यमरः। स्नायुर्वसा "अथ वस्नसा स्नायु. स्त्रियाम्"इत्यमरः । पायूनीति पाठान्तरम्। रोचना--गोरोचन, एतानि पशुस्वामिषु वैवक्षिकसप्तमी दद्यात्। तुः चार्थे। मृतेष्वित्युभया- न्वयि। तथा च तेषु मृतेषु अन्यान्यगानि ज्ञापकानि शृङ्गखुरादीनि दर्शयेदित्यर्थः। अङ्कांश्चदे- पाठे पशुदेहस्थितान्मुद्रादिचिह्नानपि दर्शयेदित्यर्थ. । अङ्कानीति पाठे तेषु मृतेषु अंकान् चिह्नानि दर्शयन् सः कर्णादिकं तेभ्यो दद्यादित्यर्थ । अगानीति पाठेऽप्येवम् । इति मनुवचनादिति पाठः इति स्मरणादिति पाठऽपि तथा॥१६४॥

---

१.—८ २३३, २३४ । २. ख ग. वराजमृ० । ३. क घ ङ च छ ज पायूनि। ४ ख. ग शुषुस्वामिना। ५ थ द र्णौ चर्मचेति । ६ —२ म० ३३२. । ७ फ क्षाया । ८.—२. म० ३२५. ।

परकीयां भूमि[1]मपहरन् नाशयन्नपि सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्र[2]तिषेध्यः; स चेदीषत्पीडाकरो बहूपकारकश्च भवति। कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पबाधो बहूदकत्वेन [3]बहूपकार[4]कः, अतो नैव निवारणीयः। कूपग्रहणं च वापीपुष्करिण्याद्युपलक्षणार्थम्। यदा पुनरसौ [5]सर्वक्षेत्रवर्तितया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया अल्पोपकारकः तदाऽसौ निषेध्य इत्यर्थादुक्तं भवति। सेतोश्च द्वैविध्यमुक्तं नारदेन—"सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च। तोयप्रवर्तनात्खेयो बन्ध्यः स्यात्तन्निवर्तनात्॥" [6]इति। यदा त्वन्यानिर्मितं सेतुं भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्यात्; यथाऽऽह नारदः—"पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः। सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत्॥ मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि मानवे। राजानमामन्त्र्य [7]ततः कुर्यात्सेतुप्रवर्तनम्॥" [8]इति॥ १५६॥

ततः क्षेत्रस्वामिना न निवारणीयः। तथा च तदागोपालं प्रसिद्धमेव "परभूमिं हरेत्कूपस्स्वल्पक्षेत्रो बहूदकः।" इति। स्वल्पक्षेत्रमध्येन क्षेत्रान्तरप्रसेचनार्थं नीयमानाभिः कुल्याभिः परकीयां भूमिं हरेत्कूप इति प्रवादादिदमवगच्छामः—सेतुर्न प्रतिषेध्यत इति। यद्वा अस्यायमर्थः। यस्य क्षेत्रे स्वल्पदोषो बहूदकः खन्यमानः कूपः स्यात्, तस्यासौ खन्यमानो राजोपकारकत्वेन क्षेत्रस्वामिनो भूमिं हरेदिति॥ १५६॥

## बालंभट्टी

परेति पूर्वान्वयीत्याह—परेति। जलप्रेति पाठः। सार्वत्रिकमित्याह—स इति। त्वर्थमाह—चेदिति। अल्पेत्यस्यार्थः—ईषदिति। कल्याणेत्यस्यार्थः—बह्विति। प्राग्वदेवाऽऽह—कूपेति। चः प्राग्वत्। द्वितीये विशेषणसूचितं विशेषमाह—यदा पुनारीति। असौ—कूपादिः। तोयेति—यत्राधो जलप्रवाहः स खेयः, तत्रोपर्येव खनित्वा काष्ठाद्यारोपणात् यत्र सर्वात्मना जलनिरोध एव स बन्धनीयत्वात् बन्ध्य इत्यर्थः। अत एव तेनैवोक्तम्—"नास्तरेणोदकं सस्यनाशश्चात्युदके भवेत्। [9]यत्र त्वाऽनुदके दोषः स एवात्युदके भवेत्॥" [10]इति। पूर्वेति—पूर्वस्थितमित्यर्थः। स्वामिनीत्यग्रेऽध्याहारापकर्षाभ्यां तद्वंश्यमामन्त्र्येत्यादेः संबन्धः। तद्वंश्ये मानवेऽपि, पुनस्तु मृते राजानमित्याद्यन्वयः। अन्यथा द्वितीयपादानर्थक्यं स्पष्टमेव॥ १५६॥

---

१. क. मिं ह०। २. क. निषे०। ३. ख. कल्याणकारकश्चातो बहूदको नै०। ४. ग. घ. को नै०। ५. क. घ. समप्रक्षे०; ङ. च छ. समक्षे०। ६.—१५ १८.। ७. क. पुनः, च. सतम्। ८.—१३. २०. २१.। ९. फ. य एवानु०। १०. ना० ११ १९.

क्षेत्रस्वामिनं प्रत्युपदिष्टम्; इदानीं सेतोः प्रवर्तयितारं प्रत्याह—

**स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।**

**उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १५७ ॥**

क्षेत्रस्वामिनमनभ्युपगम्य तदभावे राजानं वा यः परक्षेत्रे सेतुं प्रवर्तयति, असौ न फलभाग् भवति; अपि तु तदुत्पन्ने फले क्षेत्रस्वामिनो भोगः, तदभावे राज्ञः। तस्मात्प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीय इति तात्पर्यार्थः ॥ १५७ ॥

क्षेत्रस्वामिना सेतुर्न प्रतिषेध्य इत्युक्तम्; इदानीं तस्यैव प्रसक्तानुप्रसक्तया कंचिद्विध्यन्तरमाह-

**फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत्।**

एवं च सति क्षेत्रस्वाम्यननुज्ञयाऽपि सेतुप्रवृत्तिप्रसक्तावाह— **स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रकल्पयेदित्यादि ॥ १५७ ॥**

यत्तु स्वामिनाऽर्पितं क्षेत्रं कर्षको हलाङ्कितं कृत्वा केयादिना न कुर्यात्(?) न कारयेद्वा, तत्र कथमित्यपेक्षित आह- **—फालाहतमपि क्षेत्रमित्यादि ॥ १५८ ॥**

सुबोधिनी

इदानीमिति । तस्यैव क्षेत्रस्वामिन एव । स्वामिसम्बन्धि क्षेत्रं तत्सम्बन्धी

बालंभट्टी

सङ्गतिमाह— क्षेत्रेति । अनिवेद्येत्यस्य लाक्षणिकमभिमतमर्थमाह अनभ्युपेति । यथाश्रुते तु विरोधः स्पष्ट एव । न्यूनतां नारदतः प्राप्तां निराचष्टे— तदभावे इति । आर्षत्वात् कर्मणि चतुर्थी । अर्थादाह— परेति । लिङर्थोऽविवक्षित इत्याह— प्रवर्तयतीति । फलितार्थमाह— तस्मादिति ॥ १५७ ॥

व्यवहितसङ्गतिमाह — क्षेत्रेति । तस्यैव— क्षेत्रस्वामिन एव । प्रसक्तेति —प्रस्तुतसीमानिर्णयप्रसक्तमर्यादाप्रभेदनादिदण्डानुप्रसक्तिः तन्निषेधकक्षेत्रस्वामिदण्डतयेत्यर्थः । स्वामिसंबन्धिक्षेत्रं तत्संबन्धात् क्षेत्रगतविचार इति भावः । क्वचित् —न तु सर्वत्र । विध्यन्तरम् — अन्यविधिम् । अङ्गीकारं विना तदसंभवादाह —

१. ख. यम् । २. थ. द. नीं तस्यैवप्रसक्तयानुप्रसक्तयेति ।

**स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ १५८ ॥**

यः पुनः क्षेत्रस्वामिपार्श्वे अहमिदं क्षेत्रं कृषामीति अङ्गीकृत्य पश्चादुत्सृजति, न चान्येन कर्षयति, तच्च क्षेत्रं यद्यपि फालाहतं ईषद्धलेन विदारितं न सम्यग्बीजवापार्हं, तथाऽपि तस्याकृष्टस्य फलं यावत्तत्रोत्पत्त्यर्हं सामान्तादिकल्पितं, तावदसौ 5 कर्षको दापनीयः। तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्यान्येन कारयेत् ॥ १५८ ॥

॥ इति सीमाविवादप्रकरणम् ॥

---

सुबोधिनी

क्षेत्रगतविचारः, एवं प्रसक्तानुप्रसक्तिरन्यत्र द्रष्टव्या। तं प्रदाप्येति[1]—तम् अकृष्टशदं प्रदाप्येत्यन्वयः। अकृष्टशदमित्येतत् पदं व्याचष्टे—तस्याकृष्टस्य फलमिति ॥ १५८ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां सीमाविवादप्रकरणम् ॥

बालंभट्टी

क्षेत्रस्वामिपार्श्वे इति। योग्यतया आदौ द्वितीयपादार्थमाह — पश्चादिति। आद्यपादार्थमाह—तच्च क्षेत्रमिति। अपिसूचितमाह—यद्यपीति। आङः फालादेश्चार्थानाह — ईषादिति। तत्फलितमाह—नेति "स प्रदाप्यः कृष्टफलम्" इति पाठेनाऽऽह—तस्येति। ईषत्कर्षणात् कृष्टार्थमाह—अकृष्टस्येतिस इत्यस्यार्थमाह—असाविति। प्रदाप्य इत्यस्यार्थमाह—दापेति। कृष्टशदमिति पाठेऽपि शदशब्देन फलमेव। एतेन तं प्रदाप्याकृष्टशदामिति तं अकृष्टशदं प्रदाप्येत्यन्वयः। अकृष्टशदमिति व्याचष्टे — तस्याकृष्टस्य फलमिति प्राच्योक्तमपास्तम् — असंबद्धत्वात् व्याख्यानविरोधाच्च ॥ १५८ ॥ इति सीमाविवादः ॥

१. थ. द. प्याकृष्टशदमिति।

---

# अथ स्वामिपालविवादप्रकरणम् १०

व्यवहारपदानां परस्परहेतुहेतुमद्भावाभावात् "तेषामाद्यमृणादानम्" इत्यादिना पाठक्रमो न विवक्षित इति व्युत्क्रमेण स्वामिपालविवादोऽभिधीयते-

**माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।**
**दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ १५९ ॥**

परसस्यविनाशकारिणी महिषी अष्टौ माषान्दण्डनीया ; गौस्तदर्धं—चतुरो माषान् ; अजा मेषाश्च माषद्वयं दण्डनीयाः। महिष्यादीनां धनसंबन्धाभावात्तत्स्वामी पुरुषो लक्ष्यते । माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः—"माषो विंशतिमो भागः पणस्य परिकीर्तितः ।" इति नारदस्मरणात् । एतच्चाज्ञानविषयम् । 5

यदि तु पशुपालापराधात् स्वाम्यपराधाद्वा पशवः सस्योपघातं कुर्युः, तत्र कथं ?

तत्रापि हि—**माषानष्टौ तु महिषीत्यादि ॥ १५९ ॥**

कार्षापणविंशतिभागो- -माषः । स्पष्टमन्यत् ॥ १५९ ॥

## बालंभट्टी

व्यवहिताव्यवहितसङ्गत्यभावेऽपि महाप्रकरणसङ्गतिमाह—व्यवेति। क्रमः—मनूक्तः। अर्थादाह—परेति । इदं सर्वं विशेषणं यथासंभवम् । तदर्धमिति—समांशवाचित्वेऽपि पाक्षिकषष्ठीतत्पुरुषः । अजाविकमिति— समाहारद्वन्द्वः पाक्षिक इत्याह— अजा इति । असङ्गतिं परिहरति—महीति । अग्रिमोपयोगिनं विशेषमाह—माषश्चेति । एवमग्रे सर्वत्र बोध्यम् । ताम्रिकेति "ताम्रिकः कार्षिकः पणः" इति मूल्याध्याये कात्यायनेन द्विरुक्तेः, मूलेऽपि उक्तत्वाच्च । इदं सर्वं मूल्याध्यायविवरणे मत्कृते स्पष्टम् । तत एव

१. वि० जादिकम् । २. क. ण्डयाः । ३. त. गृह्यते । ४. ख. तिमो । ५. क. ङ. च. छ तितमो । ६. (?) । ७ क. वचनात् ।

ज्ञानपूर्वे तु "पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा। तथाऽजाविकवत्सानां पादो दण्डः प्रकीर्तितः॥" इति स्मृत्यन्तरोक्तं द्रष्टव्यम्। यत्पुनर्नारदेनोक्तम् "माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा। तथाऽजाविकवत्सानां दण्डः स्यादर्धमाषिकः॥" इति, तत्पुनः प्ररोहयोग्यमूलावशेषभक्षणाविषयम्॥ १५९॥

5 अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह-

**भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः।**

यदि पशवः परक्षेत्रे सस्यं भक्षयित्वा तत्रैवानिवारिताः शेरते, तदा यथोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्यः; सवत्सानां पुनर्भक्षयित्वोपविष्टानां यथोक्ताच्चतुर्गुणो

उपहत्य प्रपलायितानामेवं; यदि तु तत्रैव उपविशेयुः ततः—**भक्षयित्वोपविष्टानां द्विगुणो वसतां दम इत्यादि॥ १६०॥**

भक्षयित्वोपविष्टानामवसतां पूर्वोक्ताद्द्विगुणो दण्डः कार्यः। वसतां तु चतुर्गुणः

## सुबोधिनी

ज्ञानपूर्वे तु पणस्येति—गां प्रति द्वौ पादौ पणस्य दण्डः; महिषीं प्रति तद्द्विगुणं सम्पूर्णः पणो दण्डः; अजाविकवत्सानां तु पणस्य चतुर्थो भागो दण्डः इत्यर्थः। दण्डाधिक्यादेव ज्ञानविषयत्वं गम्यते॥ १५९॥

यथोक्ताद्द्विगुणो दण्डो वेदितव्य इति। अज्ञाने तु "माषानष्टौ तु महिषी" इत्यादिनोक्तात् द्विगुणदण्डः। ज्ञानपूर्वकत्वे तु "पणस्य पादौ द्वौ गाम्" इत्यादिनोक्तात् द्विगुणो दण्ड इति विवेक्तव्यम्। यथोक्तादिति—अत्रापि पूर्ववदेव विवेको द्रष्टव्यः॥ १५९॥

## बालंभट्टी

बोध्यम्। विंशतिमित्यार्षम्। कातीयमाह—पणस्येति। गां प्रति द्वौ पादौ पणस्यार्धभागो दण्डः। महिषीं प्रति तद्द्विगुणम् - संपूर्णः पणो दण्डः। अजादीनां तु पणस्य चतुर्थो भागो दण्ड इत्यर्थः। अत्र दण्डाधिक्यादेव ज्ञानविषयतेति गम्यते—अन्यथा विरोधापत्तेः। अन्यविरोधं परिहरति—यत्पुनरिति। तथाशब्द उभयत्र समुच्चये सादृश्ये वा। तत्पुनरिति—दण्डस्य न्यूनत्वात्॥ १५९॥

क्वाचित्—नारदाद्युक्तभिन्नविषये। यथोक्तादिति—अज्ञाने "माषानष्टौ" इति

१.—११. ३१.। २. थ. स्य पादौ द्वौ पादौ पणस्यार्धे (?) द. स्य पादौ गामिति। ३. द. स्यार्धौ (?)। ४. त. क्तेति। ५. थ. द. त् दण्डात् द्विगुणो द०। ६. थ. द. क्ताच्चतुर्गुण इति। ७. प. फ. ब 'उक्तहेतोरेवाह—उक्ते सर्वत्रेति,—उक्तसर्वस्य स्वयमित्यादिः, इति अधिकं, मूलाननुगुणम्।

दण्डो वेदितव्यः—"वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः ।" इति वचनात् ॥ १५९ ॥

क्षेत्रान्तरे पथ्यन्तरे वाऽतिदेशमाह—

## सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ १६० ॥

विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः, तदुपघातेऽपीतरक्षेत्रदण्डेन समं दण्डमेषां महिष्यादीनां विद्यात् । खरश्च उष्ट्रश्च[1] खरोष्ट्रं,—तन्महिषीसमम् । महिषी यत्र यादृशेन दण्डेन दण्ड्यते, तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम् । सस्योपरोधकत्वे[2] खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वा-

स्मृत्यन्तरात् यच्चैतत् क्षेत्रोपघाते निरूपितं, तदेषां महिष्यादीनां विवीतेऽपि समं तथैवेत्यर्थः। विवीते च गोप्रचारक्षेत्रे खरोष्ट्रं महिषी समम्। एवं पीडानुसारात् । हस्त्यादिष्वपि दण्डकल्पना राजदण्डवच्चेति ॥ १६० ॥

### सुबोधिनी

महिषीति[3]—यत्र यस्मिन् क्षेत्रे यादृशो यादृक्परिमाणो दण्डो[4] विहितः, तादृशेन तत्समेन दण्डेन खरो दण्डनीयः[5] । उष्ट्रोऽपि तथैव स्वापराधे दण्डनीयो न तूभयमपि विशिष्टं दण्डनीयमित्यर्थः । तत्र हेतुमाह—सस्योपरोधकत्व इति ॥ ॥१६० ॥

### बालंभट्टी

मूलोक्तात् द्विगुणो दण्डः ; ज्ञानपूर्वके "पणस्य" इति कातीयात् द्विगुणो दण्डः; अज्ञानपूर्वके तादृशे नारदोक्तात् द्विगुण इति विवेकः । एवं चतुर्गुण इत्यत्रापि विवेको बोध्यः । कातीयमेवाऽऽह— वसतामिति,—अवत्सानामिति भावः ॥ १५९ ॥

आहेति—यथाक्रमं पादाभ्यामिति भावः । विवीत इति प्राप्त्यर्थस्य विदॢधातो रूपम्; विशेषेण वीतं व्यापनं तृणादेर्यस्मिन्निति व्युत्पत्तेः; तदाह–प्रचुरेति। अत एव रक्ष्येति। अत एव परीति । तस्य स्वरूपतो निमित्तत्वादाह—तदुपेति। इतरेति—सस्येत्यर्थः । "वृक्षादीनां फलं सस्यम्" इत्यमरः । योग्यतयाऽऽह—विद्यादिति । महिषीसाम्यं वैवक्षिकमाह--महिषीति । यत्र क्षेत्रे यादृशो यत्परिमाणो दण्डस्तस्या विहितः, तत्र तादृशेनैव तत्समेनैव दण्डेन खर उष्ट्रश्च तथैव स्वापराधे दण्डनीयो, न तु विशिष्टमुभयमपीत्यर्थः । ननु समाहारद्वन्द्वात्तथैवोचितमतोऽत्र हेतुमाह--सस्योपेति,—तयोस्तन्नाशकत्वे

१. ख. ग. राश्च उष्ट्राश्च । २. ख. कत्वेन । ३. थ. द. षी यत्र यादृशेनेति । ४. थ. द. ण्डोऽभिहितः। ५. थ. द. य इत्यर्थः।

दण्डस्य चापराधानुसारित्वात्खरोष्ट्रमिति समाहारो न विवक्षितः ॥ १६० ॥

परसस्य[1]विनाशे गोस्वामिनो दण्ड उक्तः; इदानीं क्षेत्रस्वामिने फलमप्यसौ दापयीय इत्याह—

**यावत्सस्यं विनश्येत्तु तावत्स्यात्[2]क्षेत्रिणः फलम्।**
**गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ॥ १६१ ॥**

5 सस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम्; यस्मिन्क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्विनाशितं, तावत्क्षेत्रफलमेतावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः; गोपस्तु ताडनीय एव न फलं दापनीयः; गोपस्य च[3] ताडनं पूर्वोक्तधनदण्डसहितमेव पालदोषेण सस्यनाशे द्रष्टव्यम्—"या[4]नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् । न तत्र गोमिनो[5] दण्डः पालस्तं दण्ड-

**यावत् यस्यां विनश्येतेत्यादि ॥ १६१ ॥**

सुबोधिनी

"गोपस्ताड्यस्तु" इति वचनात् तस्य धनदण्डाभावे प्राप्तेऽपवादमाह—गोपस्य [6]चेति[7] । पालो गोपालः। स्वदोषेणेति यावत्। पालनं पालः। तद्दोषेणेति वा[8]व्याख्येयम् ।

बालंभट्टी

प्रत्येकं तयोस्तत्तुल्यत्वादित्यर्थः । आहाराद्यंशेऽत्यन्तभेदाभावादिति भावः । ननु वचनात्तथैव कुतो न? अत आह—दण्डस्य चेति। अनन्वेवं कथं समाहारः? अत आह—खरोष्ट्रमिति। अत एव पूर्वं स्वयमितरेतरयोगः कृतः ॥ १६० ॥

गोस्वामिनः—गवादिस्वामिनः । क्वचित् स्वामिन इत्येव पाठः । दण्डः —राजग्राह्यः । न्यूनतानिरासायाऽऽह—सस्येति । अत एव विवीतस्यापि ग्रहणं, तदेवाऽऽह—यस्मिन्निति। व्यवस्थार्थमाह—एतावतीति। फलितार्थमाह—तत्क्षेत्रेति न फलितमिति(?)। एतद्वैलक्षण्यबोधक एव तुः । नन्वेवं धनदण्डोऽपि तस्य वचनान्न स्यादतोऽपवादकं क्वचिदाह—गोपस्य चेति । अत एव न फलमित्येव प्रागुक्तम् । क्वाचित्कत्वमेवाऽऽह—पालेति,—गोपालेत्यर्थः। स्वदोषेणेति यावत् । पालनं पालः तद्दोषेणेति वाऽर्थः । अत्र मानं कार्तीयमाह—येति । नष्टा-अदृश्यतां प्राप्ता। गोमिनः—गोस्वामिनः । तुर्यपादं व्याचष्टे—

---

१ क. स्याधिना० । वि० तावत्क्षेत्री फलं भवेत् । पालस्ताडयेत गोमी पूर्ववद्द० । ३. ख. ग. च. छ. 'च' नास्ति । ४. क. योनष्टः। ५. ख. च. छ. नां। ६. ध. द. च ताडनमिति। ख. 'च' नास्ति। ७. त. तिपालनं पा० । ८. त. 'वा' नास्ति ।

मर्हति॥" इति वचनात् । गोमी पुनः स्वापराधेन सस्यनाशे पूर्वोक्तं दण्डमेवार्हति न ताडनम् । फलदानं पुनः सर्वत्र गोमिन एव—तत्फलपुष्टमहिष्यादिक्षीरेणोपभोगद्वारेण तत्क्षेत्रफलभागित्वात् । गवादिभक्षितावशिष्टं पलालादिकं गोमिनैव ग्रहीतव्यम्—मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायकत्वात्; अत एव नारदः— "गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते । सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥ 5 पलालं गोमिनो देयं धान्यं वै कर्षकस्य तु ।" इति ॥ १६१ ॥

क्षेत्रविशेषे अपवादमाह—

## सुबोधिनी

"गोमी तु पूर्वोक्तं दण्डमर्हति" इत्यमुमंशं व्याचष्टे—गोमी पुनरिति । गोमी गोस्वामी "गोमान् गोमी" इत्यमरः । गोभिस्त्विति,—अस्यार्थः—गोभक्षितं सस्यं यः प्रतियाचते, तस्मै सामन्तपरिकल्पितं तत्क्षेत्रवापितं धान्यं धान्यादिमूल्यं देयम् । पलालं भक्षितावशिष्टं तृणबुसादिकं गोस्वामिने दद्यात् । यो नरः प्रतियाचते तस्मै देयमिति सामान्याभिधानेन विशेषाकाङ्क्षायामर्थप्रकरणसिद्धमपि विशेषं स्पष्टीकुर्वन्नाह—धान्यमिति,—तस्मा एव क्षेत्रस्वामिने प्रदातव्यमित्यर्थः ॥ १६१ ॥

## बालंभट्टी

गोमी पुनरिति । "गोमी गोस्वामी गोमान्" इत्यमरः। निपातितोऽयम् । अत्रापि तु सूचितमाह—दण्डमेवार्हति न ताडेति । फलांशे तु तुल्यतैवेत्याह—फलेति । विशेषमाह—गवादीति । मध्यस्थेति—सामन्तादीत्यर्थः । तस्य पृथक् तदभावादाह—प्रायेति । गोभिरिति गोभिः तदादिभिर्भक्षितं सस्यं यः क्षेत्रस्वामी प्रतियाचते परावृत्य याचते, तस्मै सामन्तादिपरिकल्पितं यत्तत्र क्षेत्रे वापितं, तावद्धान्यं तदुत्पाद्यं तदादि तन्मूल्यं वा देयम्; पलालं भक्षितावशिष्टं तदादि तृणबुसादिकम् । शेषषष्ठी; गोस्वामिने देयम् यो नर इति सामान्योक्तं, विशेषाकांक्षायामर्थप्रकरणसिद्धमपि विशेषतः स्पष्टीकुर्वन्नन्यग्राह्यत्वभ्रमाभावाय विशदयति—धान्यमिति । वै—निश्चये । तस्मात् क्षेत्रस्वामिना सर्वथा तन्नाहर्तव्यमिति तात्पर्यार्थः ॥ १६१ ॥

अपवादमिति—उभयोरपि प्रागुक्तसर्वापवादमित्यर्थः । अन्तशब्दः समीपवाची त्रयाणां द्वन्द्वोत्तरं षष्ठीसमासः, षष्ठीतत्पुरुषोत्तरपदकद्वन्द्वगर्भः स वा; व्याख्यात्राऽभिमतो

१. ख. गोस्वामि० । २. घ. प्राह्यं । ३. ग. स्वामिने; च. छ. स्वामिनां ४. त. मीति । ५. थ. ति गोमान्० । ६.—११. ३८. । ७. थ. द. स्तुभक्षितं सस्यमिति । ८. थ. द. न्यंवैकर्षकस्य त्विति ।

**पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।**
**अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १६२ ॥**

पथि मार्गसमीपवर्तिनि क्षेत्रे, ग्रामविवीतसमीपवर्तिनि च क्षेत्रे अकामतो-गोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः । दोषाभावप्रतिपादनं दण्डाभावार्थं विनष्टसस्यमूल्यदानप्रतिषेधार्थं च । कामचारे कामतश्चारणे चौरवत् चौरस्य यादृशो दण्डस्तादृशं दण्डमर्हति । एतच्चानावृतक्षेत्रविषयम् ;—"तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥" इति दण्डाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात् । आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोऽस्त्येव । वृतिकरणं च तेनैवोक्तम् — "वृतिं च तत्र कुर्वीत

अत्रापवादः—**पथि ग्रामविवीतान्तक्षेत्रदोषो न विद्यते । अकामतः** इति च्छेदः । ग्रामान्ते विवीतान्ते यत् क्षेत्रं तत्र प्रमादादवतीर्णेषु महिष्यादिषु नापराधः ।

---

सुबोधिनी

ग्रामेति—ग्रामसमीपवर्तिनि विवीतसमीपवर्तिनीति प्रत्येकमभिसम्बध्यते । ग्रामसम्बन्धि यत् विवीतं तत्समीपवर्तिनीति वा । ग्रामात् बहिर्यो गवादिस्थित्यर्थो भूप्रदेशस्तद्विवीतशब्देन लक्ष्यते । तत्समीपवर्तिनीति वा व्याख्येयम् । अत्र गोभिरित्युपलक्षणम् । एतदिति—वृतिरहितविषयमित्यर्थः । वृतिं चेति,—अस्यार्थः— तत्र क्षेत्रपार्श्वे समन्ततः

बालंभट्टी

ऽत्र द्वितीय एव।तदाह—मार्गेति । पथि मार्गे इत्यपपाठः। आद्ये ग्रामविवीतेत्यत्र ग्रामसमीपवर्तिनि विवीतसमीपवर्तिनि च क्षेत्रे इत्यर्थः । द्वितीये ग्रामसंबन्धि यद्विवीतं, तत्समीपे इत्याद्यर्थः । ग्रामाद्बहिर्यो गवादिस्थित्यर्थो भूप्रदेशः स विवीतपदेन लक्ष्यते तत् समीपवर्तिनीत्याद्यर्थो वा । अकामत इति पूर्वान्वयीत्याह—अकामेति । गोभिः—तदादिभिः। ननु प्रत्यक्षदोषस्य पापस्य च सत्त्वात् कथमदोषत्वम् ?अत आह–दोषाभावेति । शिष्टं व्याचष्टे -- कामेति । अनावृत्तेति—आवरणरहितेत्यर्थः। वृञ् वरणे इत्यस्य रूपम् । एवमग्रे सर्वत्र। तत्र—परिहारस्थाने क्षेत्रे । आदिना ग्रामादि।नन्वावरणमेव नोक्तम्?अत आह—वृत्तीति। तेनैव-मनुनैव। वृत्तिं—आवृत्तिं कण्टकादिमयीम् । तत्र—क्षेत्रसमन्तात् । तादृशीमुन्नतामिति शेषः ।

१. ख. यत्रा० । २.—८. २३८ । ३. थ द. ग्रामविवीतसमीपवर्तिनि च क्षेत्र इति ।४. त. त इति व्या० (?) । ५. थ. द. एतच्चानावृतक्षेत्रविषयमिति । ६. थ. द. च तत्र कुर्वीतेति ।

यामुष्ट्रो नावलोकयेत् । छिद्रं निवारयेत्सर्वं श्वसूकरमुखानुगम् ॥" इति ॥ १६२ ॥

पशुविशेषेऽपि दण्डाभावमाह—

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां च ते मोच्या दैवराजपरिप्लुताः ॥ १६३ ॥

महांश्चासावुक्षा च महोक्षो वृषः सेक्ता; उत्सृष्टपशवः वृषोत्सर्गादिविधानेन 5

अभिप्रायावतरणेत्याह—कामकारे चोरवद्दण्डमर्हति ॥ १६२ ॥

पालास्वामी वा ; यद्वोभावपि ॥ १६२ ॥

उक्तग्रामसमीपादिव्यतिरेकेणापि महोक्षोत्सृष्टेत्यादि ॥ १६३ ॥

ते मोच्या इति व्यवहितकल्पना । स्पष्टमन्यत् ॥ १६३ ॥

## सुबोधिनी

उष्ट्रावलोकनायोग्यां प्राकारसदृशीं वृतिं कुर्यात् । तत्र यानि छिद्राणि श्वादिमुखप्रवेशयोग्यानि तान्यपि निरुन्ध्यात् । यदा "छिद्रं वा वारयेत्" इति पाठस्तदा श्वादिमुखप्रवेशयोग्यसर्वच्छिद्ररहितं यथातथा वाऽत्यन्तोन्नतां वृतिं कुर्यादिति प्रकारान्तराभिधानम् ॥ १६२ ॥

## बालंभट्टी

कीदृशीत्याह— यामिति । अभिलक्ष्य परपार्श्वे इति शेषः । उष्ट्रोऽपि—उन्नतोऽपि धान्यादि न पश्येदित्यर्थः । वा चार्थे। क्वचिच्च वेत्येव पाठः नेतिपाठान्तरम् , यथाश्रुतो वा। तयोर्मुखमनु तत्समीपे गच्छति येन तादृशमित्यर्थः । स्वोन्मितमिति पाठान्तरम्; अयं भावः—तत्र क्षेत्रे समंततः उष्ट्रकर्तृकधान्यादिकर्मकावलोकनायोग्यां प्राकारसदृशीं अत्युन्नतां अवृत्तिं कुर्यात् । तत्र यानि छिद्राणि श्वादिमुखप्रवेशयोग्यानि तान्यपि निबध्यात् तस्य यथाश्रुतत्वे श्वादिमुखप्रवेशयोग्यसर्वच्छिद्ररहितं यथा तथाऽत्युन्नतां तां कुर्यादिति तत्करणे प्रकारान्तरकथनमिति ॥ १६२ ॥

अपिः पूर्वसमुच्चये । पूर्वार्धे पदद्वयम् । यथासंभवं द्वन्द्व उभयत्रेत्याह–महानिति । निपातितोऽयम्। सेक्ता वृष इत्यन्वयः। साण्ड इति प्रसिद्धः वक्ष्यमाणभिन्नः।कर्मधारयोऽग्रेपि।

१. क. खोन्मितं । ङ. खागतं । २.मनुः—८. २३९. । ३. वि० कीचगौः । ४. क. गैवि०

देवतोद्देशेन त्यक्ताः; सूतिका प्रसूता अनिर्दशाहा ; आगन्तुकः स्वयूथात्परिभ्रष्टो देशान्तरादागतः ; एते मोच्याः परसस्यभक्षणेऽपि न दण्डयाः । येषां च पालो[2] विद्यते, तेऽपि दैवराजपरिप्लुताः दैवराजोपहताः सस्यनाशकारिणो[3] न दण्डयाः। आदिग्रहणाद्धस्त्यश्वादयो गृह्यन्ते । ते चोशनसोक्ताः—"अदण्डया हस्तिनो ह्यश्वाः
5 प्रजापाला हि ते स्मृताः । अदण्डयौ काणकुण्ठौ[4] च ये शश्वत्कृत[5]लक्षणाः ॥ अदण्डयाऽऽगन्तुकी गौश्च सूतिका वाऽभिचारिणी। अदण्डयाश्चोत्सवे गावः श्राद्धकाले तथैव च ॥" इति। अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्डयत्वासंभवात् दृष्टान्तार्थमुपादानम् 'यथोत्सृष्टपशवो न दण्डयाः एवं महोक्षादयः' इति ॥ १६३ ॥

## सुबोधिनी

अदण्डयौ काणकूटा[6]विति—काण एकाक्षः; कूटः पादरहितः पङ्गुरिति यावत् । शश्वत्कृतलक्षणाः वारंवारं सस्यनाशकत्वेन दण्डिता अङ्केन ग्रहणादिभिर्वेत्यर्थः ॥ १६३ ॥

## बालंभट्टी

तेन तेषां तद्भिन्नानां च ग्रहणम् । "अनिर्दशाहां गां सूतां वृषां देवपशूंस्तथा। सपालान् वा विपालान् वा अदण्डयान्मनुरब्रवीत् ॥" इति मनोराह—अनिर्देति,—अनिर्गतदशाहा गौः इत्यर्थः । मानवे चक्रशूलाङ्कितोत्सृष्टा वृषाः हरिहरादिप्रतिसंबन्धिपशवो देवपशव इति कुल्लूकभट्टः। चबलान्निमित्तान्तरपरतयोत्तरार्धं व्याचष्टे—येषां चेति । विभिन्नविभक्तिकत्वेन यथाश्रुतान्वयासंभवादाह—विद्यते इति,—अध्याहारः । सस्येति—परेत्यादिः । मोच्या इत्यस्यैवार्थं प्राग्वदाह—न द्रव्या इति । ते चोशनसोक्ता इति पाठः । तथा च मनुरित्यपपाठः–तथा तत्र पाठात्। तत्र हेतुमाह—प्रजेति।हि–यतः राजसंबन्धित्वात्।एकाक्षिविकलः—काणः।पादरहितः–कुण्ठः पङ्गुरिति यावत्।शश्वत्—वारंवारम्।सस्यनाशकत्वेन कृतं लक्षणं अङ्कनं धनग्रहणादि वा येषां ते च पुनः पुनः सस्यनाशकत्वेन दण्डिता इति यावत्।आगन्तुकी सूतिका अभिसारिणी गर्भाधानार्थमभिसरति सा चेति, त्रिविधा गौश्चादण्डया । राजगृहे उत्सवे श्राद्धसमये चेत्याद्यर्थः । असङ्गतिमंशे परिहरति— अत्रोत्सृष्टेति । उत्सृष्टवृषाणामपि गर्भार्थं गोकुले पालैर्धारणात् सपालत्वसंभव इति तु मनुव्याख्यातारः। यथेति—भिन्नं पदम् तदर्थो गणेति ॥ १६३ ॥

---

१. ख. नवात्य० । २. ख. ग. लो नवि० । ३. क. विनाश० । ४. ख. ग. ज. कुब्जौ । ५. घ. रेखाकृत० । ६. अयमपरःपाठः । ७.—म० ८. २४२. ।

गोस्वामिन उक्तम्; इदानीं गोपं प्रत्युपादिश्यते—

**यथार्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा ।**
**प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६४ ॥**

गोस्वामिना प्रातःकाले यथा गणयित्वा समर्पिताः पशवः, तथैव सायंकाले गोपो गोस्वामिने पशून् विगणय्य प्रत्यर्पयेत् । प्रमादेन स्वापराधेन मृतान्नष्टांश्च 5 पशून् कृतवेतनः कल्पितवेतनो गोपः स्वामिने दाप्यः । वेतनकल्पना च नारदे-नोक्ता—"गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः । प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥" इति । प्रमादनाशश्च मनुना स्पष्टीकृतः — "नष्टं जग्धं च कृमिभिः श्वहतं विषमे मृतम् । हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥" इति । प्रसह्य चौरैरपहृतान् न दाप्यः ; यथाऽऽह मनुः—" विघुष्य तु हृतं चौरैर्न 10

अयं स्वामिपालयोरन्योन्यनियमः— **यथार्पितान् इत्यादि॥१६४॥**

## सुबोधिनी

नष्ट जग्धं च कृमिभिरिति,—अस्यार्थः—गोपालसम्बन्धिरक्षणाख्यपुरुषव्यापाररहितं सन्तं नष्टं दृष्टिगोचरातीतं कृमिभिर्भक्षितं श्वादिभिर्हतं विषमे श्वभ्रादिप्रदेशे पतनान्मृतं च गोपाल एव स्वामिने दद्यादिति। प्रसह्येति—चौरैर्बलादपहृतात् पालात् स्वामिने न पशुर्दाप्य इत्यर्थः । विघुष्य तु हृतामिति—चौरैः पटहाद्युद्घोषेण प्रसिद्धमपहृतं

## बालंभट्टी

तथेत्यस्य अर्थः—तथैवेति । तस्य च विगणय्यैवेत्यर्थः। मृतेति—मृतनष्टेति द्वयेनैकं अन्यतरवैयर्थ्यापत्तेरित्याह—मृतानीति। कृतत्यनेन न तदभावे। भृतिः—वेतनम्। प्रतीति—पूर्वान्वयि। गोपे इत्युभयान्वयि। भृतिरित्यस्याग्रेऽप्यनुषङ्गः। नाशश्च—नाशादिच। नष्टमिति—तृतीयपादस्य सर्वत्र पूर्वत्रान्वयः । गोपालसंबन्धिरक्षणाख्यपुरुषव्यापारेण हीनं रहितं सत्—श्वहतं, नष्टं दृष्टिगोचरातीतं, कृमिभिर्जग्धं, भक्षितं श्वभिः, उपलक्षणत्वेन श्वापादादिभिर्हतं, विषमे श्वभ्रादिप्रदेशे पतनेन मृतं च गोपालक एव स्वामिने दद्यादित्यर्थः । प्रसह्येति—चौरैर्बलादपहृतानेतान् गवादीन् स्वामिने गोपालो न दाप्य इत्यर्थः । एतेन चौरैर्बलादपहृतत्वात् पालात् स्वामिने पशुर्न दाप्य इति व्याख्यानमपास्तम् । विघुष्येति—चौरैः पटहा-

---

१.—६.१०.। २. क. च. । ३ —म० ८. २३२.। ४. ख. ग विक्रम्य। च. छ. विदुष्य । ५ थ. द. तनेनमृ० । ६. थ. द. ह्यचौरैरपहृतान्न दाप्य इति । ७. थ. द. तं चौरैरिति । ८. त. तिपट० ।

ग्रामेच्छया ग्राम्यजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा गोप्रचारः कर्तव्यः—गवादीनां प्रचारणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। द्विजस्तृणाद्यन्तराभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्वतः स्ववदनिवारित आहरेत्। फलानि त्वपरिवृतादेव—"गोग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्"[1]इति गौतमस्मरणात्। एतच्च परिगृहीतविषयम्—अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः। यथा तेनैवोक्तम्—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु"[3]इति। यत्पुनरुक्तम्—"तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति॥"इति॥तत् द्विजव्यतिरिक्तविषयमनापद्विषयं वा गवाद्व्यतिरिक्तविषयं वेति॥ १६६॥

## सुबोधिनी

तृणाद्यन्तराभाव इति-अस्वामिकतृणाद्यन्तराभाव इत्यर्थः। अनिवारित आहरेदिति-निवारितः सन्न गृह्णीयादित्यर्थतो गम्यते। एतच्च परिगृहीतविषयमिति—"द्विजस्तृणैधःपुष्पाणि" इत्यादिनोक्तमित्यर्थः॥ १६६॥

## बालंभट्टी

विरोधात् ग्रामशब्दस्तत्स्थजनपरः। प्राग्वदित्याह-ग्राम्येति। द्वितीयपादार्थद्वयमाह-भूम्येति। अर्थमाह—गवादीनामिति चरक्षेति। चरणेतिपाठान्तरम्। तृणेति। अस्वामिकतृणाद्यन्तराभावे इत्यर्थः। गवाग्नीत्यनेनान्यार्थं तदभावः सूचितः। सर्वतः—आवृतादनावृतात्। स्ववत्—स्वतुल्यं वतिसूचितमाह—अनिवारित इति। अनेन निवारितः सन्न गृह्णीयादिति सूचितम्। इदमेव ततो न्यूनत्वम्। सर्वत इति पुष्पाणीति च सूचितमाह—फलानि त्वपरिवृतादेवेति,—आवरणरहितादेवाहरेन्न तु सर्वत इत्यर्थः। तत्र हेतुमाह—गोऽग्न्यर्थमिति। वैकल्पिकत्वादवङ् न। इदं देवताया अप्युपलक्षणम्। एधांसि,—काष्ठानि वीरुदित्युभयान्वयीत्यर्थः। तेनैव,—गौतमेनैव। नारदविरोधं परिहरति—यत्पुनरिति। मूलेद्वीत्यस्योक्तत्वादाह—द्विजव्यतीति। अनापृच्छन्नित्यनेन तस्य परिगृहीतविषयता(?)एव लाभादिति भावः। तृणाद्यन्तराभावे इत्युक्तस्तत्सत्वे द्विजस्यापि तत्र प्रश्नपूर्वकमेव ग्रहणम् नान्यथा—अन्यलाभेनानन्यगतेरभावादित्याशयेनाऽऽह— अनापदिति। गवादीत्यनेनान्यार्थमग्रहणं सूचितम्; तदाह गवादीति॥ १६६॥

---

ख. ग. णेन्धनाद्यभावे। २.—१२, २८। ३.—१०.३९। ४ त दिति गम्यते द्विज०। ५ फ. मि० चार०। ६. तं इद (?)। ७. फ. द्विजस्यो०।

इदमपरं गवादीनां स्थानासनसौकर्यार्थमुच्यते—

**धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्।**
**द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ १६७ ॥**

ग्रामक्षेत्रयोरन्तरं धनुःशतपरिमितं परीणाहः सर्वतोदिक्कं अनुप्तसस्यं कार्यम्। खर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य द्वे शते परीणाहः। नगरस्य बहुजनसंकीर्णस्य धनुषां चतुःशतपरिमितमन्तरं कार्यम् ॥ १६७ ॥ 5

॥ इति स्वामिपालविवादप्रकरणम् ॥

---

किञ्च **धनुश्शतमित्यादि ॥ १६७ ॥**

ग्रामनगरोभयधर्मयुक्तं—कर्पटम् स्पष्टमन्यत् ॥ १६७ ॥

## सुबोधिनी

प्रचुरेति—कण्टकिवृक्षाद्याक्रान्तस्येत्यर्थः ॥ १६७ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां स्वामिपालविवादप्रकरणम् ॥

## बालंभट्टी

इदं वक्ष्यमाणम्। स्थानं—स्थितिः गतिनिवृत्तिः, आसनं—उपवेशनम्। अन्तरं—व्यवधानम् चतुर्हस्तं धनुः—धनुषां शतं; तस्य परिच्छेदत्वेनान्वयादाह—धनुःशतपरिमितमिति। यद्यपि "परिणाहो विशालता" इत्यमरः, तथाऽपि सामानाधिकरण्याय धर्मिपरमत्र तदाह—सर्वत इति। सस्यमित्यादेः भूस्थानमिति विशेष्यं बोध्यम्। अत एव मनुः—"धनुः शतं परिणाहो ग्रामस्य स्यात्समन्ततः। शम्यापातांस्त्रयो वाऽपि त्रिगुणो नगरस्यतु॥" इति। शम्यदण्डयष्टि. सा बाहुवेगेन प्रेरिता यत्र भूस्थाने निपतति, तादृशास्त्रय इत्यर्थः। त्रैगुण्यमुक्तान्यतरापेक्षया। प्रचुरेति—खर्वटशब्दार्थः। कण्टकानां सन्तानो विस्तारो यत्र ते प्रचुरास्ते यत्र तस्येत्यर्थः—बहुकण्टकिवृक्षाक्रान्तस्येति यावत्। ग्रामस्य क्षेत्रस्य चान्तरं धनुषामिति शेषः ॥ १६७ ॥ इति स्वामिपालविवादप्रकरणम् ॥

१. वि० कर्पट०। २. क. ज. दिक्षु ख. ग. दिशं। ३. थ. द. प्रचुरकण्टकसन्तानस्येति। ४.—२. म० ११४.। ५. फ. हारो। ६.—८. २३७।

## अथास्वामिविक्रयप्रकरणम् ११

संप्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते । तस्य च लक्षणं नारदेनोक्तम्—
"निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा । विक्रीयतेऽसमक्षं यत्
स ज्ञेयोऽस्वामिविक्रयः ॥" इति । तत्र किमित्याह—

5 स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहोहीनमूल्ये वेलाहीने च तस्करः ॥ १६८ ॥

स्वमात्मसंबन्धि द्रव्यं अन्यविक्रीतमस्वामिविक्रीतं यदि पश्यति, तदा लभेत गृह्णीयात्—अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । विक्रीतग्रहणं दत्ताहितयोरुपल-

---

उक्तो द्रव्याणां स्वत्वसंबन्धः; इदानीं स्वामिविक्रयं दर्शयति—स्वं लभेतान्यविक्रीतं क्रेतुर्दोषे प्रकाशिते इत्यादि ॥ १६८ ॥

### सुबोधिनी

विक्रीयतेऽसमक्षमिति — स्वामिनोऽसमक्षं परोक्षम् अनुज्ञामन्तरेणेति यावत । एवंविधे अस्वामिविक्रयस्थलेऽस्वामिविक्रेतृविषये शास्त्रविधानं कीदृशं भवति ? इत्याशङ्कापुरस्सरं मूलवचनमवतारयति — तत्किमित्याहेति ।

### बालंभट्टी

उपक्रमते—वक्तुं प्रारभते । आद्येन मूलकृदिति शेषः । निक्षिप्तमिति—निक्षिप्तं परद्रव्यं लब्धं वा परद्रव्यमपहृतं वा यत्स्वामिनोऽसमक्षं विक्रीयत इत्याद्यर्थः। तत्र स्वामिनोऽसमक्षमित्यस्य परोक्षमित्यर्थः तदनुज्ञामन्तरेणेति यावत् । अथ मूलमवतारयति—तत्रेति,—तत्र एवंविधेऽस्वामिविक्रयस्थले स्वामिविक्रेतृविषये किं शास्त्रे विधानं कीदृशं भवतीत्याशङ्कायामाहेत्यर्थः । स्वशब्द आत्मीयपर इत्याह—आत्मेति । ततश्चार्थात् धनमेवेत्याह—द्रव्यमिति । शेषं पूरयति—यदीत्यादि । प्राग्वदाह—विक्रीतेति । तयोः—

---

१.—७. १ । २. थ. द. लवचन० । ३. मि० तत्र । ४. फ. ति अगत्यायदीति० ।

क्षणार्थम्—अस्वामिक्रीतत्वेन तुल्यत्वात् । अत एवोक्तम्— "अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ।" इति । क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति । तथा हीनात्तद्रव्यागमोपायहीनात् रहसि चैकान्ते संभाव्य द्रव्यादपि हीनमूल्येनाल्पतरे च मूल्येन वेलाहीने—वेलया हीनो वेलाहीनः—क्रयो रात्र्यादौ कृतस्तत्र च क्रेता तस्करो भवति—तस्करवत् दण्डभाग्भवतीत्यर्थः ; यथोक्तम्— "द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् । प्रकाशं क्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयात् ॥" इति ॥ १६८ ॥ 5

अन्येन स्वामिना विक्रीतं द्रव्यं दृष्टस्वामी गृह्णीयात, क्रेतुश्चादोषः स्यात्—अप्रकाशिते क्रये; प्रकाशक्रये तु मूल्यमात्रप्रणाशः न तु स्तेयदोषः। क्व तर्हि दोषः? हीनाद्दासादिहस्ताद्गृहीतः । तथा रहः प्रच्छन्नं हीनमूल्यं च स्तेयसंभावनया गृहीते वेलाहीने च तस्करः क्रेता स्यादित्यर्थः । तथा च नारदः—"द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी समाप्नुयात् । प्रकाशं क्रयतश्शुद्धिः क्रेतुस्तेयं रहस्कृते ॥ अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः । हीनमूल्यमवेळायां क्रीणंस्तद्दोषभाग्भवेत् ॥" १६८ ॥

## सुबोधिनी

सम्भाव्येति—यद्वस्तु यावन्मूल्यं द्रव्यमर्हति तस्मादपि न्यूनेन मूल्येनेति यावत् । प्रकाशं क्रयतः शुद्धिरिति — प्रकाशं यथा स्यात् तथा यः क्रयः क्रियते, तस्मादित्यर्थः ॥ १६८ ॥

## बालंभट्टी

तयोरपि । उक्तं—कात्यायनेन । द्वितीयपादार्थमाह—क्रेतुरिति । उत्तरार्धार्थमाह—तथेति । हीनादित्यादीनां तस्करत्वेऽन्वयः; क्रयः सर्वत्र विशेषणभूतो बोध्यः । तद्द्रव्येति — अपहर्त्राद्यभीप्सितमूल्यभूतद्रव्येत्याद्यर्थः । मूले रह इत्यव्ययं, तदर्थमाह—रहसि चेति । उक्तेनापौनरुक्त्यायाऽऽह—संभाव्येति,—यद्वस्तु यावन्मूल्यद्रव्यमर्हति, तस्मादपि न्यूनेन मूल्येनेत्यर्थः । प्रकारान्तरमाह—अल्पेति । तस्करत्वातिदेशफलमाह—तस्करवदिति,—तदीयदण्डादीत्यर्थः । आदिना शासनादि । यथोक्तमिति— नारदेनेति भावः । समाप्नुयादिति पाठः। प्रकाशं यथा स्यात्तथा यः क्रयस्तस्मात्। सार्वविभक्तिकस्तसिः। अपादाने इति वा । क्रेतुः—तत्कर्तुरित्यर्थः । क्रेतुरित्यग्रेऽप्यन्वेति ॥ १६८ ॥

---

१. ख. क्रये । २. क. तत्तद्रू० । ख. नाद्रू० । ३. ख. शक्र० . ४. ना० ७. २. ३. ५. । ५. थ. द. व्यद्रव्यादपि हीनमूल्ये (ने) ति । ६. ख. इदं प्रतीकं नास्ति । ७ थ. द. शो यथा भवति त०।

स्वाम्यभियुक्तेन क्रेत्रा किं कर्तव्यमित्यत आह—

**नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।**
**देशकालातिपत्तौ च[1] गृहीत्वा स्वयमर्पयेत् ॥ १६९ ॥**

नष्टमपहृतं वाऽन्यदीयं क्रयादिना प्राप्य हर्तारं विक्रेतारं नरं ग्राहयेत्—
5 चौरोद्धरणकादिभिः—आत्मविशुद्धयर्थं राजदण्डाप्राप्त्यर्थं च । अथाविदितदेशान्तर
गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तेर्विक्रेतारमदर्शयित्वैव स्वयमेव
तद्धनं नाष्टिकस्य समर्पयेत् । तावतैवासौ शुद्धो भवतीति श्रीकराचार्येण व्याख्यातम् ;

किञ्च **नष्टापहृतमित्यादि ॥ १६९ ॥**

नष्टं वाऽपहृतं द्रव्यं अन्येन गृहीतमासाद्योपलभ्य द्रव्यग्राहिणं हर्ताऽयमिति व्यपदिश्य
राजपुरुषैः व्यवहारनिर्णयाय ग्राहयेत् । यदि तु राजकीयासनं(?) निधानं (?) देशकालातिप-
त्तिं (?) चाशकेत, तदा स्वयमेव गृहीत्वा राज्ञे हर्तारमर्पयेत् ।नन्वेतत् स्वभावसिद्धत्वादेवावा-
च्यं ; सत्यं, स्वातन्त्र्येण ददतो गृह्णतस्तेनं च ददतो दोषाभावज्ञापनार्थमेतत् । अन्या व्याख्या—

सुबोधिनी

एकदेशिमतं दूषयितुमाह—नष्टमित्यादिना । अयमभिप्रायः—नष्टं चापहृतं चा[3]-
न्यदीयद्रव्यं क्रयप्रतिग्रहादिभिः अस्वामिनः सकाशात् यः कश्चन प्राप्य स्वयमप्यन्यस्मै
विक्रीणीते, तं विक्रेतारं तस्मात् क्रेता पुरुषो रजनीचरादिभिः राजपुरुषैर्ग्राहयेत् स्वचौर्यनि-
वृत्त्यर्थं राजदण्डाप्राप्त्यर्थं च । अथ केनापि कारणेन तं ग्राहयितुं प्रदर्शयितुं चासमर्थस्तदा

बालंभट्टी

दूषयितुमेकदेशिमतमनुवदति— नष्टमित्यादिना । मूले समाहारद्वन्द्व इति भावः ।
तत्फलमाह—आत्मेत्यादि। उत्तरार्धार्थमाह—अथेति। देशकालयोरिति सुप्सुपेति सप्तमी-
समासः। तत्राऽऽद्ये अतिपत्तिर्गमनम्। देशशब्दश्च विशेषपरः,कालशब्दोऽपि। द्वितीये अतिपत्ति-
र्मरणमित्याह-आविदितेति । मूलेति—विक्रेत्रित्यर्थः । यद्वा मूल्येत्यर्थः क्वचित्तथैव पा-
ठः । तद्धनं—गृहीत्वेति शेषः। शुद्धः—अराजादण्डश्च। अयं भावः—नष्टं वा अपहृतंवाऽन्यदी
यद्रव्यं क्रयप्रतिग्रहादिभिरस्वामिनः सकाशाद्यः कश्चन प्राप्य स्वयमप्यन्यस्मै विक्रीणीते,
स तस्मात् क्रेतारं रजनीचरादिभीराजपुरुषैर्ग्राहयेत् स्वचौर्यनिवृत्त्यर्थं राजदण्डाप्राप्त्यर्थं च ।

१. वि० वा । २ थ. द. शिव्याख्यानमनुभाषते दूषयितुं नष्टमपहृतं चेत्या० । ३. त.
चादाय द्रव्यं प्रतिं० ।

तदिदमनुपपन्नम्—"विक्रेतुर्दर्शनाच्छुद्धिः" इत्यनेन पौनरुक्त्यप्रसङ्गात्; अतोऽन्यथा व्याख्यायते नष्टापहृतमिति । नाष्टिकं प्रत्ययमुपदेशः। नष्टमपहृतं वाऽऽत्मीयद्रव्यमासाद्य क्रेतृहस्तस्थं ज्ञात्वा तं हर्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत् । देशकालातिपत्तौ देशकालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात् प्राक् पलायनाशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्पयेत् ॥ १६९ ॥ 5

ग्राहिते हर्तरि किं कर्तव्यमित्यत आह—

**विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।**
**क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ १७० ॥**

यद्यसौ गृहीतः क्रेता 'न मयेदमपहृतमन्यसकाशात्क्रीतम्" इति वक्ति, तदा

---

नष्टापहृतमासाद्य क्रीत्वा स्वामिना प्रार्थ्यमाने हर्तारं ग्राहयेत् । मूल्यमर्पयेदित्यर्थः। देशकालातिपत्तौ सा अप्रकाशक्रियेणापि गृहीत्वा स्वयमर्पयेत्; तदाप्यदोष इत्यभिप्रायः ॥ १६९ ॥

हर्तृतया राजन्यावेदितस्य **विक्रेतुर्दर्शनादित्यादि** ॥ १७० ॥

---

## सुबोधिनी

तस्मात् गृहीतं द्रव्यं मूलस्वामिने समर्प्य स्वयं शुद्धो भवतीति । दूषयति—तदिदमिति । तत्र हेतुमाह—विक्रेतुर्दर्शनादिति । वक्ष्यमाणमूलवचनेनास्य पौनरुक्त्यमित्यर्थः । स्वाभिप्रेतमर्थं दर्शयितुमुपक्रमते—अतोऽन्यथा व्याख्यायत इति । मूलवाक्यस्थमासाद्येत्येतत्पदं व्याचष्टे—क्रेतृहस्तस्थं ज्ञात्वेति । तद्विज्ञापनेति—स्थलपालादिभ्यः कथनात् प्रागित्यर्थः ॥ १६९ ॥

## बालंभट्टी

अथ केनापि प्रकारेण तं ग्राहयितुमाह— विक्रेतुरिति,-वक्ष्यमाणेन मूलेनेत्यर्थः। स्वेष्टार्थमाह—अत इति । नाष्टिकं प्रति—न तु द्वितीयक्रेतारं प्रति। अत एव तद्विरुद्धमाह—आत्मीयामिति । आसाद्येत्यस्यार्थमाह—क्रेति । तं—नरम् । देशकालातिपत्ताविति षष्ठीतत्पुरुष इत्याह — देशकालातिक्रमे इति,—तयोरतिक्रमणे इत्यर्थः— तदिति । द्वितीयस्थानपालादिभ्यः कथनकालादित्यर्थः । गृहीत्वा—तमिति शेषः ॥ १६९ ॥

हर्तरि—क्रेतरि । किमिति—तेनैवेति भावः । गृहीतः—ग्राहितः। हृतमिति—

---

क. त्वा तं मम० । २. वि० तत्र वि० । ३. त. एतदादि 'हस्तस्थं' इत्यन्तं नास्ति । ४. थ. द. नकालात्प्रागिति ।

तस्य क्रेतुर्विक्रेतुर्दर्शनमात्रेण शुद्धिर्भवति । न पुनरसावभियोज्यः , किंतु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः ; यथाऽऽह बृहस्पतिः—"मूले समाहृते क्रेता नाभियोज्यः कथञ्चन । मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥" इति । तस्मिन् विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदा तस्य नष्टापहृतस्य गवादि-
5 द्रव्यस्य यो विक्रयी विक्रेता तस्य सकाशात्स्वामी नाष्टिकः स्वीयं द्रव्यमवाप्नोति ; नृपश्चापराधानुरूपं दण्डं, क्रेता च मूल्यमवाप्नोति । अथासौ देशान्तरगतस्तदा योजनसंख्ययाऽऽनयनार्थं कालो देयः—"प्रकाशं वा क्रयं कुर्यान्मूलं वाऽपि समर्पयेत् । मूलानयनकालश्च देयस्तत्राध्वसंख्यया ॥" इति स्मरणात् । अथाविज्ञातदेशतया मूलमाहर्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति—"असमाहार्यमूलस्तु
10 क्रयमेव विशोधयेत् ।"इति वचनात् ॥ यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूलं च न प्रदर्शयति तदा स एव दण्डभाग्भवतीति—"अनुपस्थापयन्मूलं क्रयं वाऽप्यविशोधयन् ।यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥"इति स्मरणात् ॥ १७० ॥

विक्रेतारं दर्शयित्वा क्रेतुर्निर्दोषत्वं, स्वामिनश्च तदा द्रव्यलाभः, विक्रयिणश्च हस्तात्क्रेतुर्मूल्यप्राप्तिः, दण्डप्राप्तिश्च राज्ञ इत्यवसेयम् ॥ १७० ॥

सुबोधिनी

मूले समाहृत इति—मूले विक्रेतरीति यावत् । क्रयं शोधयित्वैव शुद्धो भवतीति—स्वक्रये साक्ष्यादिप्रदर्शनेनेति भावः ॥ १७० ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां अस्वामिविक्रयप्रकरणम् ।

बालंभट्टी

किं स्विति शेषः । मात्रपदलब्धमेवाऽऽह—न पुनरिति,—पश्चादपीत्यर्थः । मूले विक्रेतरि यस्मात क्रीतोऽस्मिन्निति यावत् । एवमग्रेऽपि सतिसप्तमी । कथंचन—कथमपि । नाष्टिकस्य—नष्टधनस्वामिनः । अथाग्रिमार्थमाह—तस्मिन्नित्यादिना। आदौ तुर्यपादार्थमाह—तस्येति । तस्मादित्यस्यार्थमाह—तस्य सकाशादिति । दण्डाभ्रमायाऽऽह —स्वीयमिति विशेषानुक्तेराह—अपेति । विशेषमाह—अथासाविति,—विक्रीतेत्यर्थः कातीयमाह—प्रकाशमिति । तत्र—विवादे । क्रयं शोधेति—स्वक्रये साक्ष्यादिप्रदर्शनेनेत्यर्थः । शुद्धः—अतस्करः। तमेवाऽऽह—असमेति। स एव—क्रेतैव तमेवाऽऽह—अनुपेति,—अप्रदर्शयन्नित्यर्थः । यथेति—आभयुज्यमानमनतिक्रम्येत्यर्थ । दमं च राज्ञेति शेषः। सः—क्रेतेति विशेष्यम् ॥ १७० ॥

१. क. ग. ज. मनुवच० । २. क. ख. मनुस्म० । ३. त. यमिति । ४. थ. द. त्यर्थः ।

"स्वं लभेतान्यविक्रीतम्"[1] इत्युक्तम्; तल्लिप्सुना किं कर्तव्यमित्यत आह—

**आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।**
**पञ्चबन्धो दमस्तस्य[2] राज्ञे तेनाविभाविते ॥ १७१ ॥**

आगमेन रिक्थक्रयादिना उपभोगेन च 'मदीयमिदं द्रव्यं तच्चैवं नष्टमपहृतं वा' इत्येपि[3] भाव्यं साधनीयं तत्स्वामिना । अतोऽन्यथा तेन स्वामिना अविभाविते पञ्चबन्धो नष्टद्रव्यस्य पञ्चमांशो दमो नाष्टिकेन राज्ञे देयः । अत्र चायं क्रमः— पूर्वं स्वामी नष्टमात्मीयं साधयेत् ; ततः क्रेता चौर्यपरिहारार्थं मूल्यलाभाय च विक्रेतारं आनयेत्; अथाऽऽनेतुं न शक्नोति, तदाऽऽत्मदोषपरिहाराय क्रयं साधयित्वा द्रव्यं नाष्टिकस्य समर्पयेत् इति ॥ १७१ ॥

तथा पुनः स्वाम्युपगतिः । उच्यते—**आगमेनेत्यादि ॥ १७१ ॥**

आगमेन लेख्यादिनाऽस्खलित चिरभोगेन वा नष्टं द्रव्यं अन्यहस्तगतं मदीयमित्येवं भाव्यम् ; अतः प्रकारद्वयादन्यथा मदीयमिति वदतो विवादीभूतद्रव्यात् पञ्चबन्धः पञ्चमो भागो दमस्स्यात्।तच्च द्रव्यमितरेणापि पूर्वोक्तप्रकारद्वयेनाऽऽत्मीयमिति भाव्यं राजगाम्यवसेयम् ॥ १७१ ॥

बालंभट्टी

व्यवहितसङ्गतिमाह–स्वमिति । तदिति—तल्लाभेच्छुना स्वामिनेत्यर्थः । तेन बेति पाठः। एवम्—एवं प्रकारेण।नष्टमित्युपलक्षणमित्याह —अपेति।मूलेऽतोऽन्यथेत्यस्यैव विवरणं—तेनाविभाविते इति। तदर्थमाह—तेन स्वामिनेति,—नाष्टिकेनेत्यर्थः। अविभाविते असाधिते तस्येत्यस्यार्थमाह—नष्टद्रव्यस्येति। तत्रेति तत्र पाठान्तरम्, अर्थः स एव। यद्यपि "बन्ध आधौ च बन्धने" इति कोशः, तथाऽप्युभयत्र लक्ष्यार्थमाह—पञ्चमांश इति । तच्छोधनेनैव शुद्धत्वाभावसन्देहाभावाय[4] प्रागुक्तक्रमं स्पष्टयति—अत्र चेति। आत्मदोषेति —चौर्येत्यर्थः । साधेति—साक्ष्यादिभिरिति भावः । द्रव्यं—तदीयम्[5] ॥ १७१ ॥

१. व्य०१६८ । २. वि० दमस्तत्र राज्ञस्तेनापि भाव्यते । ३. क. चेति भा० । घ चेति विभावनीयं सा०। ४. ख. ग. ज शोध० । ५. फ. द्धदानाभाव० ।

तस्करस्य प्रच्छादकं प्रत्याह—

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ १७२ ॥

हृतं प्रनष्टं वा चौरादिहस्तस्थं द्रव्यम् 'अनेन मदीयं द्रव्यमपहृतम्' इति नृपस्या-
5 निवेद्यैव दर्पादिना यो गृह्णाति असौ षडुत्तरान् नवतिं पणान् दण्डनीयः—त-
स्करप्रच्छादकत्वेन दुष्टत्वात् ॥ १७२ ॥

राजपुरुषानीतं प्रत्याह—

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ १७३ ॥

10 यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वे

हृतं प्रनष्टमित्यादि ॥ १७२ ॥

स्पष्टार्थः श्लोकः ॥ १७२ ॥

किञ्च शौल्किकैस्स्थानपालैर्वेत्यादि ॥ १७३ ॥

अर्वाक् संवत्सरात्स्वामी गृह्णीयात्; परतो नृपतिः गृह्णीयात् ॥ १७३ ॥

बालंभट्टी

प्रच्छादकमिति—स्वेनैव द्रव्यस्य ततो ग्राहात्फलाभावेन कालुष्येन च राजाद.व प्रकाशकमित्यर्थः।ज्ञानाय मूले परहस्तादित्युक्तम्। यद्वा परहस्तं अनति गच्छतीति व्युत्पत्त्या प्रथमान्तं द्रव्यविशेषणम् तदाह—चौरादिहस्तस्थमिति। आदिना उदासीनादिग्रहणम्। तथा चाऽऽदौ अग्रे च तस्करग्रहणमप्युपलक्षणमिति भावः।नृपस्येति—शेषे षष्ठी।आदिना अभयप्रार्थना। लिङ्गर्थोऽविवक्षित इत्याह—गृह्णातीति—प्राग्वदाह। षडिति,—त-त्परिमितान् पणान्। तत्र दोषान्तराभावाद्धेतुमाह—तस्करेति ॥ १७२ ॥

शुल्कं—राजग्राह्यः करः।आहृतमित्यस्यार्थमाह—राजेति। परत इत्यस्यार्थमाह—

१. वि० लभेत ।

प्रत्यानीतं तदा संवत्सरादर्वाक् प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमाप्नुयात्[1] ; ऊर्ध्वं पुनः संवत्सराद्राजा गृह्णीयात् । स्वपुरुषानीतं च द्रव्यं जनसमूहेषूद्घोष्य यावत्संवत्सरं राज्ञा रक्षणीयम् ; यथाऽऽह गौतमः—"प्रनष्टस्वामिकमधिगम्य[3] राज्ञे प्रब्रूयुः। विख्याप्य संवत्सरं राज्ञा रक्ष्यम् ।" इति । यत्पुनर्मनुनाऽवध्यन्तरमुक्तम्—"प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्। अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्॥" इति तच्छ्रुतवृत्तसंपन्नब्राह्मणविषयम । रक्षणनिमित्तषड्भागादिग्रहणं च तेनैवोक्तम्—"आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः । दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन्॥"इति । तृतीयद्वितीयप्रथमसंवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः । प्रपञ्चितं चैतत्पुरस्तात् ॥ १७३ ॥

## बालंभट्टी

ऊर्ध्वमिति । विशेषमाह—स्वेति । प्रब्रूयुः—पुरुषाः । विख्याप्य—जनसमूहेषु उद्घोष्य। विरोधं परिहरति—यत्पुनरिति,—प्रनष्टस्वामिकमिति पाठः । पाठान्तरे अदृष्टस्वामिकमित्यर्थः एवं गतिद्वयं प्रागपि । तत्र व्यस्तपाठोऽपि । श्रुतेति—वेदशास्त्रसदाचरणपूर्णेत्यर्थः । उत्तरसङ्गतये प्राग्वदाह—रक्षणेति । बहुव्रीहिः एवमग्रेऽपि । आद्यर्थो वचने एव स्फुटः । तेनैव—मनुनैव । अथ— रक्षणानन्तरम् । षडभागं—षट्त्वसंख्यापूरकभागम् । प्रनष्टेति —अधिगमेः कर्मणिक्त् ; प्रणष्टादधिगम्यमानात् द्रव्यादित्यर्थः । यद्वा प्रणष्टस्याधिगमात् प्राप्तिपूर्वकरक्षणाद्धेतोरित्यर्थः।व्यवस्थामाह—तृतीयेति । भागानुसारेण व्युत्क्रम इति भावः। बृहस्पतिः—"राजाऽऽददीत षड्भागं नवमं द्वादशं तथा। शूद्रविट्क्षत्रजातीनां विप्रात् गृह्णीत विंशकम् ॥ त्र्यब्दादूर्ध्वं तु नागच्छेत्तत्र स्वामी कथंचन। तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत् ॥" इति। बौधायनः "अब्राह्मणस्य प्रनष्टस्वामिकं रूक्थं संवत्सरं परिपाल्य राजा हरेत्"इति। नारदः-"अस्वामिकमदायादं दशवर्षस्थितं ततः।राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥" इति। एतेषामपि व्यवस्था प्रागेवोक्ता । तदाह— पञ्चीति । अत्र च प्रनष्टस्वामिकद्रव्ये एकवर्षत्रिवर्षदशवर्षधारणविकल्पानां व्यवस्था दूरतमदेशवर्तितदीयपुत्रादिदायादवार्त्तायां सत्यां नानाविधानेकगमनप्रतिबन्धसंभवेवाऽवगन्तव्येति तु कल्पतरुः । पुरइति—अत्रैवाध्याये इति भावः ॥ १७३ ॥

१. घ. स्वद्रव्यमवाप्नु । ङ. को द्र० । २. ख. मवाप्नु० । ३. 'ष्टमस्वा०' इति च पाठः। ४.—१० २६. ३०. । ५. ख ग. ङ. विध्य० । च. छ. अवध्युत्तरं । .६—८. ३०. । ७. ख गग्र० । ८.—८. ३३. । ९.—१. १०. १६. ।

मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे अपवादमाह—

**पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।**
**महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥**

एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात् । मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान् महिषोष्ट्रगवां रक्षणनिमित्तं प्रत्येकं द्वौ द्वौ पणौ; अजाविके पुनः प्रत्येकं पादं पादम् । दद्यादिति सर्वत्रानुषज्जते। अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात्प्रत्येकं संबन्धोऽवगम्यते॥ १७४॥

इत्यस्वामिविक्रयप्रकरणम् ॥

पारितोषिकान् राज्ञे **पणानेकशफे इत्यादि ॥ १७४ ॥**

---

**बालंभट्टी**

महिषोष्ट्रगवामिति—आर्षत्वात् साधुः । आदाने निमित्तमाह— रक्षणेति । द्वन्द्वात् समुदाये प्राप्तावाह—प्रत्येकमिति। उभयत्र अजाविके इति प्राग्वत्। तत्र द्वितीये उपपत्तिमाह—अजेति। वीप्सेति—एवं प्रागपि बोध्यम् ॥१७४॥ इत्यस्वामिविक्रयप्रकरणम् ॥

---

१. घ. माहारनि° ।

# अथ दत्ताप्रदानिकप्रकरणम् १२

अधुना विहिताविहितमार्गद्वयाश्रयतया दत्तानपकर्म दत्ताप्रदानिकमिति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदं अभिधीयते[1]। तत्स्वरूपं च नारदेनोक्तम्—

"दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति। दत्ताप्रदानिकं नाम व्यवहारपदं हि तत्॥"[2]इति। असम्यगविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन्[3] विवाद-पदे तद्दत्ताप्रदानिकं—दत्तस्याप्रदानं पुनर्हरणं यस्मिन्दानाख्ये तद्दत्ताप्रदानिकं नाम 5

## सुबोधिनी

अस्मिन् प्रकरणेऽभिधेयं प्रमेयं निष्कृष्य दर्शयति—अधुनेति,[4]— विहितमार्गाश्रयं दत्तानपकर्म अविहितमार्गाश्रयं दत्ताप्रदानिकमित्यवान्तरभेदः। सामान्यतस्तु दानाख्यं व्यवहारपदमित्यर्थः।"दत्त्वा द्रव्यम्[5]" इत्येतन्नारदवचनं व्याचष्टे— असम्यगिति[6]। अस्मिन्नेव वचने दत्ताप्रदानिकमित्यस्य समस्तस्य पदस्य विग्रहवाक्यं दर्शयति—दत्तस्येति[7]। अविहि-तमार्गाश्रितदत्ताप्रदानिकस्वरूपनिरुक्त्यैव एतद्विपरीतरूपस्य दत्तानपकर्मणः स्वरूपमर्थसि

## बालंभट्टी

अधुनेति—दानप्रसङ्गादिति भावः।तत्र तावदेतत्प्रकरणाभिधेयं प्रमेयं निष्कृष्टमाह—विहितेति,—यथासंख्यमन्वयः। विहितमार्गाश्रयं दत्तानपकर्माख्यं अविहितमार्गाश्रयं दत्ताप्रदानिकाख्यमित्यवान्तरभेदः। तदाह— इति चेति,—किं चेतीत्यर्थः। उभयसामान्य-माह—दानाख्यमिति। चस्त्वर्थे। तत्रैकोक्तेर्न्यूनतानिरासाय नारदीयं व्याचष्टे—असम्य-गिति। अस्यैवार्थमाह—अविहितेति। तत्र य इत्यस्य कश्चिदित्यर्थः। अत एव संभवान्न तस्य तच्छब्देन परामर्श इत्याकांक्षानिरासाय शेषं पूरयति—यस्मिन्निति। तस्य योगार्थ-मप्याह—दत्तस्येति। अप्रदानमिति छेदः। अत एवाऽऽह—पुनरिति। षष्ठीसमासगर्भो मत्वर्थीयष्ठन्। अविहितेत्यादिना तत्स्वरूपनिरुक्त्यैव तद्विपरीतरूपस्य दत्तानपकर्मणः

१. क. ते। असम्यग०। २.—४. १.। ३. क. यत्र व्यवहारपदे। ४. थ. द. ना विहिता-विहितेति। ५. थ. द. व्यमसम्यग्य इत्ये०। ६. थ. द. म्यगविहितमार्गाश्रयेणेति। ७. थ. द. स्याप्रदानमिति।

व्यवहारपदम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपकर्मे-
त्यर्थादुक्तं भवति । दत्तस्यानपकर्म अपुनरादानं यत्र दानाख्ये विवादपदे तद्दत्तान-
पकर्म। तच्च देयादेयादिभेदेन चतुर्विधम्; यथाऽऽह नारदः—"अथ देयमदेयं च
दत्तं वाऽदत्तमेव च । व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥" इति । तत्र देयमित्य-
5 निषिद्धदानक्रियायोग्यमुच्यते। अदेयमस्वतया निषिद्धतया वा दानानर्हम्। यत्पुनः प्रकृ-
तिस्थेन दत्तमव्यावर्तनीयं तद्दत्तमुच्यते । अदत्तं तु यत्प्रत्याहरणीयं तत्कथ्यते ।

## सुबोधिनी

द्धमेवेति न पृथक् निर्दिष्टमित्याह—विहितमार्गाश्रयत्वेनेति । दत्तानपकर्मस्वरूपं निर्व-
क्ति— दत्तस्यानपकर्मेति,—शास्त्रविहितमार्गेणैव दत्तत्वात् पुनरादानस्य निषिद्धत्वेन न
पुनर्ग्रहणमित्यर्थः । तच्च देयादिभेदेनेति —तत् दानाख्यं व्यवहारपदमित्यर्थः ।
अथ देयमदेयमिति—दत्तं देयं च द्वयमपि दत्तानपकर्मभेदः; अदेयम् अदत्तं च द्वयमपि
दत्ताप्रदानिकभेदः । एवं दानमार्गश्चतुर्विध इत्यर्थः । अनिषिद्धेति—अनिषिद्धं च तत्
दानक्रियायोग्यं चेति समासः । तद्यथा कुटुम्बाविरोधि स्वकीयं द्रव्यम्। अस्वतयेति—
अन्वाहितादिकमस्वतया दानानर्हं कुटुम्बपोषणापर्याप्तं यद्द्रव्यं दातुमिच्छति तन्निषिद्धतया
दानानर्हमिति ज्ञेयम् । अव्यावर्तनीयमिति—अपुनराहार्यमित्यर्थः । नारदवचनोक्तार्थपर-

## बालभट्टी

स्वरूपमर्थसिद्धमेवेति हि ना सूचितमेवेति न पृथक्कथितमित्याह—विहितेति । तदेव—
दानाख्यमेव। तद्योगार्थमाह—दत्तस्येति।अनपेत्यस्यार्थः— अपुनरिति,—शास्त्रविहितमार्गे-
णैव दत्तत्वात् पुनरादानस्य निषिद्धत्वेनापुनर्ग्रहणमित्यर्थः।तच्च—द्विविधं दानाख्यं यद्व्यवहा-
रपदं च।एकैकस्य द्वैविध्याच्चतुर्विधत्वं तदाह—अथ देयमिति,—देयं दत्तं चेति द्वयं दत्ता-
नपकर्मभेदः, अदेयमदत्तं चेति द्वयं दत्ताप्रदानिकभेदः, एवं तत्र दानमार्गश्चतुर्विधो विज्ञे-
य इत्यर्थः। तत्र—तेषां मध्ये। आनिषिद्धेति—अनिषिद्धा या दानक्रिया तद्योग्यमित्यर्थः ।
कुटुम्बाविरोधि स्वीयद्रव्यं हि तादृशम्। अस्वेति—अन्वाहितादिकमस्वतया दानानर्हं कुटुम्ब-
पोषणपर्याप्तं तन्मात्रपर्याप्तं वा स्वं द्रव्यं निषिद्धतया दानानर्हमिति विवेकः। अव्येति--
अपुनर्ग्राह्यमित्यर्थः। यत्प्रत्येति--यथाकथंचिद्दत्तं पुनर्ग्राह्यमित्यर्थः। नारदोक्तार्थपरतया मूल-

---

१.—४.२ । २. त. ति शास्त्रवि०। ३. थ. द. दत्त्वा । ४.त.थेति । ५. थ. द. द्धदान-
क्रियायोग्यमिति । ६. थ. द. या निषिद्धतयाचेति । ७. त. एतदादि 'अस्वतया दानानर्हं' इत्यन्तं
नास्ति ।

तदेतत्संक्षेपतो निरूपयितुमाह—

## स्वं कुटुम्बाविरोधेन देयं

स्वमात्मीयं कुटुम्बाविरोधेन कुटुम्बानुपरोधेन[2] कुटुम्बभरणावशिष्टमिति याव-त्तद्द्यात्—तद्भरणस्यावश्यकत्वात् । तथा च मनुः—"वृद्धौ च मातापितरौ[3] साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥" इति । कुटुम्बावि-रोधेनेत्यनेनानदेयमेकविधं[4] दर्शयति । स्वं दद्यादित्यनेन चास्वभूतानामन्वाहितयाचित-

पारितोषिकदानप्रसङ्गेनादृष्टार्थेऽपि साधारणो विधिरुच्यते—**स्वकुटुंबाविरोधेने-त्यादि ॥ १७५ ॥**

स्वशब्दो विभक्तपुत्रादिनिवृत्त्यर्थः । अविरोधश्च ग्रासाच्छादनमात्रसमुपलक्षणो विज्ञेयः ।

सुबोधिनी

त्वेन मूलवचनमवतारयति—तदेतत् संक्षेपत इति । पूर्वमस्वतया दानानर्हं निषिद्धतया दानानर्हं चेत्यदेयं द्विविधं नारदवचने प्रतिपादितम् । तत्र च निषिद्धतया यदेकप्रकारमदेय तन्मूलवचने (स्वं?) कुटुम्बाविरोधेनेति पदेन व्यतिरेकतो दर्शयति[5]—कुटुम्बाविरोधेनेत्यने-नेति,—स्वकुटुम्बपोषणायापर्याप्तं[6] न देयमित्यर्थः । अस्वतया यददेयमुक्तं तद्दर्शयति—स्वं दद्यादित्यनेनेति । अयमभिप्रायः—अस्वमदेयं स्वमपि कुटुम्बपोषणापर्याप्तं न देय-

बालंभट्टी

मवतारयति—तदेतादिति,—पूर्वोक्तं सर्वमित्यर्थः । प्राग्वदाह—आत्मीयमिति । स्वतस्त-स्य तदाविरोधादाह—अनुपेति । तदविघातेनेत्यर्थः।तस्यापि तात्पर्यार्थमाह—कुटुम्बेति । देयमित्यस्यार्थमाह—दद्यादिति । [7]शेषेण फलमाह—तादिति,—कुटुम्बेत्यर्थः । वृद्धौ—अशीत्युत्तरसंख्याकौ;शिशुः—षोडशन्यूनः। अकार्यशतमपि—अकार्यदुष्प्रतिग्रहाद्यानन्त्य-मपि। मनुरिति—इत्यादिः एवमग्रेऽपि। पूर्वं नारदोक्त्या अस्वेत्यादिना अदेयं द्विविधमुक्तम्। अतः संक्षेपप्रकारमेवाऽऽह—स्वमिति । आद्यमदेयं व्यतिरेकेण मूलकृता दर्शितमित्याह—स्वं दद्यादिति । अन्वाहितेति—अत्र क्रमस्य वक्ष्यमाणनारदीयस्य विवक्षितत्वान्न दोषः । द्वन्द्वोत्तरपदकद्वन्द्वो वा एवं कुटुम्बेत्यनेन तदपर्याप्तं निषिद्धतया न देयमिति द्वितीयमप्य-देयं व्यतिरेकेणैव दर्शितमित्यपि बोध्यम् । तथा चास्वमदेयं स्वमपि तदपर्याप्तमदेयमिति द्विविधमदेयमिति सिद्धमिति तात्पर्यम् । व्याख्यात्राऽन्वाहितादिपञ्चानामदेयत्वमुक्तम् ;

१. वि॰. देयं यच्चान्यसंश्रितम् । २. ग. छ. 'कुटुम्बानुपरोधेन' नास्ति । ३.—८. ३५. ४. क. च. ज. तेननदे॰ । ग छ. नेनदे॰ । ५. त. तिस्वंदद्या॰ । ६. थ. प्र नदेयमिति द्विवि॰ ७. फ. विशेषणफ॰ ।

काधिसाधारणनिक्षेपाणां पञ्चानामप्यदेयत्वं व्यतिरेकतो दर्शितम् । यत्पुनर्नारदेनाष्ट-विधत्वमदेयानामुक्तम्—"अन्वाहितं याचितकमाधिः साधारणं च यत् । निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥ आपत्स्वपि च कष्टासु वर्तमानेन देहिना । अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥" इति, एतददेयत्वमात्राभिप्रायेण ; न पुनः
5 स्वत्वाभावाभिप्रायेण—पुत्रदारसर्वस्वप्रतिश्रुतेषु स्वत्वस्य सद्भावात् । अन्वाहितादीनां स्वरूपं च प्रागेव प्रपञ्चितम् ॥

स्वं दद्यादित्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गप्रतिषेधमाह—

दारसुतादृते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥१७५॥

## सुबोधिनी

मिति द्विविधमदेयमिति । नन्वस्वत्वेनान्वाहितादिपञ्चको गणोऽदेयत्वेन त्वयाऽभिधीयते ; नारदेन त्वष्टको गणोऽदेय इत्यभिहितम् ; अतस्तद्विरोध इत्याशङ्क्ते विरोधं परिहर्तुं—यत् पुनर्नारदेनेति । परिहरति—एतदिति,—एकगणपाठोऽन्वाहितादीनामष्टानामदेयत्व-मात्रसामान्येन न पुनरस्वत्वाभिप्रायेणेत्यभिप्रायः । तत्र हेतुमाह—पुत्रदारसर्वस्वेति ॥

"स्वं कुटुम्बाविरोधेन देयम्" इत्यमुमंशं व्याख्याय "दारसुतादृते" इत्याद्यवशिष्टं व्याख्यातुमवतारयति—स्वं दद्यादित्यनेनेति ॥ १७५ ॥

## बालंभट्टी

नारदेन त्वष्टानामिति तद्विरोधमाह— यत्पुनरिति । कष्टास्वित्यापद्विशेषणम् । हि—यतः । कष्टासु अत्यन्तदुःखदास्वापत्स्वपि वर्तमानेनेत्याद्यर्थः । काष्ठास्विति पाठे सर्वासु दिक्षु आपत्स्वपीत्याद्यर्थः । तं परिहरति—एतदिति। मात्र—कार्त्स्न्ये । न पुनः नतु । अन्वा-हिताद्यष्टानामेकगणपाठोऽदेयत्वमात्रसाम्येन मन्यस्वेति भावः । अत्र हेतुमाह—पुत्रेति । श्रुतेषु त्रिषु । चः त्वर्थे ॥

एवमाद्यपादं व्याख्याय द्वितीयपादं व्याख्यातुं अवतारयति — स्वमिति । दारसुतग्रहणमुपलक्षणमित्याह — दारसुतादेरिति, — समाहारद्वन्द्वस्तत्र । तदाह —

---

१. क. रेकेण । २. क. घ. राश्र । ३.—४.३.४.। ४. घ. नाश्च स्व०। ५. ख. पं प्रा०। ६. ज. प्राक्प्र० । ७. इ तिनन्व० । ८. थ. द. एतददेयत्वमात्राभिप्रायेणेति । ९. ख ग. सा-म्येन । १०. थ द. भिसान्धिः ।

दारसुताद्दते दारसुतव्यतिरिक्तं स्वं दद्यात् न दारसुतमित्यर्थः। तथा पुत्रपौत्राद्यन्वये विद्यमाने[1] सर्वं धनं न दद्यात्— "पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेत्।" इति स्मरणात्। तथा हिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मै न देयम्॥ १७५॥

एव दारसुतादिव्यतिरिक्तं देयमुक्त्वा प्रसङ्गाद्देयधनग्रहणं च प्रतिग्रहीत्रा प्रकाशमेव कर्तव्यमित्याह— 5

**प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः।**

प्रतिग्रहणं प्रतिग्रहः सः प्रकाशः कर्तव्यः विवादनिराकरणार्थम्। स्थावरस्य च विशेषतः प्रकाशमेव ग्रहणं कार्यम्—तस्य सुवर्णादिवदात्मनि स्थितस्य दर्शयितुमशक्यत्वात्॥ १७५॥

दारसुतग्रहणं च सर्वज्ञातिधर्मोपनतादिलक्षणार्थम्। नान्वये सर्वस्वं,—पृथक्कुटुंबतयाऽवस्थितेऽपीत्यर्थः। देयं यच्चेत्यत्र देयं प्रत्यर्पणीयं निक्षेपादि अन्यसंश्रितं साधारणं पराधीनं वा स्वमे(?)वा। अस्य पाठान्तर"यच्च प्रतिश्रुतम्"इति—देयत्वेनान्यस्मै प्रतिश्रुतमित्यर्थः।तथा च नारदः—"अन्वाहितं याचितकमाधिस्साधारणं च यत्। निक्षेपं पुत्रदाराश्च सर्वस्वं चान्वये सति॥ आपद्यपि च कष्टायां वर्तमानेन देहिना। आदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥" इति॥ १७५॥

आदेयव्यतिरिक्तानां तु देयानां—**प्रतिग्रहः प्रकाश इत्यादि॥ १७६॥**

## सुबोधिनी

स्थावरस्य विशेषतः प्रकाशप्रतिग्रहे हेतुमाह— तस्य सुवर्णादिवदिति॥१७५॥

## बालंभट्टी

दारसुतमिति। तृतीयपादं व्याचष्टे—तथेति। मनुमाह— पुत्रानिति। वृत्तिं--जीविकाम्। तुर्यपादं व्याचष्टे—तथेति। यत्पदार्थमाह—हिरण्यादिति॥ १७५॥

उत्तरसङ्गतिमाह—एवमिति,—उक्तप्रकारेणेत्यर्थः।चो वाक्यालङ्कारे। आहेति—अर्धेनेति भावः। अत एव तदवतरणपूर्वकं वक्ष्यति। प्रतिग्रहे भावे घञित्याह—प्रतिग्रहणमिति। स्यादिति विधिरित्याह—कर्तव्य इति। तत्फलमाह—विवादेति,—इदमुभयान्वयि। तस्य विशेषेण तथा प्रतिग्रहे हेतुमाह—तस्येति,—स्थावरस्येत्यर्थः॥१७५॥

---

घ. खं ध०। २. ख. ददेय०। ३. ना० ४. ४, ५.।

एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरन्नाह—

**देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥ १७६ ॥**

देयं प्रतिश्रुतं चैव,—यद्यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव यद्यसौ धर्मात्[1]प्रच्युतो न भवति । प्रच्युते[2] पुनर्न दातव्यम्—"प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्"[3] इति गौतमस्मरणात् । दत्त्वा नापहरेत्पुनः, – न्यायमार्गेण[4] यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम्, किं तु तथैवानुमन्तव्यम् । यत्पुनरन्यायेन दत्तं तददत्तं[5] षोडशप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति । नारदेन च "दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् ।"[6] इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्—"पण्यमूल्यं भृतिस्तुष्टया स्नेहात्प्रत्युपकारतः । स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥ अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः ।

## सुबोधिनी

पूर्वोक्तमूलस्यैवोत्तरार्धं प्रकरणसम्बद्धमवतारयति-एवमिति । यद्यसौ धर्मात् प्रच्युतो न भवतीति—यस्मै दातुं प्रतिश्रुतं स इत्यर्थः । देयादेयविषयं वक्तव्यमभिधाय दत्तादत्तविषयं वक्तव्यमुपक्रमते[11]—न्यायेति । दत्तस्यानपहरणकथनेनैव तत्प्रतिपक्षभूतस्यादत्तस्य प्रत्याहरणमर्थसिद्धमेवेत्याह — यत्पुनरन्यायेनेति[12] । अदत्तं तु भयक्रोधेति—भयं च

## बालंभट्टी

द्वितीयार्धं प्रकरणसंबद्धमवतारयति-- एवामिति । यदि तु प्रतिग्रहशब्देन प्रकरणात् पुत्रोत्सर्गो दानाख्य एवोच्यते तदपि प्रकृतसंबद्धमेवेति बोध्यम् । पादभेदेन वाक्यद्वयं न तु देयादिभेदेनेत्याह—यदिति । विशेषमाह—धर्मार्थमिति,—अनेनान्यस्यातथात्वं सूचितम् । प्रागवदेवोक्तहेतोराह—यद्यसाविति,—यस्मै दातुं प्रतिश्रुतं स इत्यर्थः । एवं देयादेयविषयं वक्तव्यमभिधाय दत्तादत्तविषयं व्यक्तव्यं वक्तुं[13] तस्य द्वितीयपादं सप्रतीकं व्याचष्टे—दत्त्वेत्यादि । पुनः--पश्चात् । दत्तानपहरणकथनेनैव तत्प्रतिपक्षभूतस्यादत्तप्रत्याहरणस्यापि कथनमर्थसिद्धमेव नारदवदित्याह—यत्पुनारिति । चोऽप्यर्थे । दत्तं सप्तेति—"तत्र

१. क. र्मेप्र० । २. ख. ग. ते न पुनर्दा० । ३.—५. २३ । ४. ज. यमार्गेण तद्दत्तं षो० । ५.क. दद्दत्ते । घ. तदत्तं षो० । च छ. अन्यायेन दत्तं षो० । ६. ना० ४.३. । ७. ना० स्मृ० स्त्री· भक्तयनु० । घ शुल्केनु० । च. छ शुल्कं तु गवाद्यंच । ८. ख. ग ना० स्मृ० रुगन्वि० । ९. द लश्लोकस्यै० । थ. लश्लोकोत्तरार्धस्यैव प्रकरणसंबन्धमव० । १०. थ. द. वं प्रासङ्गिकमिति । ११. थ. द. व्यं वक्तुमुपक्रमते न्यायमार्गेण यद्दत्तमिति । १२. त. नरिति । अदत्तं त्विति । १३ . ब. 'वक्तुं' नास्ति ।

तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् ॥ अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसं-
हिते । यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥" इति।अयमर्थः—पण्यस्य क्रीतद्र-
व्यस्य यन्मूल्यं दत्तम् , भृतिर्वेतनं कृतकर्मणे दत्तम् , तुष्ट्या बन्दिचारणादिभ्यो
दत्तम् , स्नेहाद्दुहितृपुत्रादिभ्यो दत्तम् , प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण 5
दत्तम् , स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम् , यच्चानुग्रहार्थमदृष्टार्थं दत्तं,—
तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम् । भयेन बन्दिग्राहादिभ्यो दत्तम् , क्रो-
धेन पुत्रादिवैरनिर्यातनायान्यस्मै दत्तम् , पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम् ,
उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम् , परिहासेनोपहासेन दत्तम् ;
एकोऽपि स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः ; छलयो- 10

## सुबोधिनी

क्रोधश्च शोकश्च भयक्रोधशोकाः तेषां वेगस्तेन रुक् तयेति समासः । पूर्वोक्त
नारदीयवचननिचयं व्याख्यातुमुपक्रमते -- अयमर्थ इति । तत्रैवाऽऽद्यं "पण्यमूल्यम्"
इति वचनं व्याचष्टे — पण्यस्येति । नारदवचनस्थं दत्तमिति पदं पण्यमूल्या-
दिशेषतया स्वतन्त्रतया च तन्त्रेणोपात्तमित्यभिप्राय प्रकटयन्नाह—यच्चादृष्टार्थमिति ।

## बालंभट्टी

ष्टावदेयानि देयमेकविधं स्मृतम्।"इत्यस्याऽऽदि नारदीयम्।सर्वं क्रमेण व्याचष्टे अयमर्थ इति।
कृतेति—बहुव्रीहिः। तुष्ट्या सन्तोषेण । दुहित्रिति—दुहितुः पुत्रादिभ्य इत्यर्थः । दृष्टस्योक्त-
त्वात् अनुग्रहपदेन तदित्याह—अदृष्टेति । सर्वं वाक्यमिति न्यायेनाऽऽह—दत्तमेवेति ।
एवव्यावर्त्यमाह—न प्रेति । नारदीये दत्तपदं पण्यमूल्यादिविशेष्यतया स्वतन्त्रतया च तन्त्रे-
णोत्पन्नमिति भावः । यच्चादृष्टार्थमित्येव पाठे अनुग्रहार्थमित्यस्यैव व्याख्यानं तद्बोध्यम् ।
"अदत्तं तु"इति व्याचष्टे—भयेनेत्यादि।तत्र भयं च क्रोधश्च शोकश्च ते,तेषां वेगः तेन रुजा पीडा
तया अन्वितैरिति शाब्दोऽर्थः। तत्फलितमाह— भयेनेत्यादि। बन्दीति—कारागाराधिकृता-
दिभ्य इत्यर्थः । निर्यातनं दूरीकरणं अन्यस्मै येन साकं पित्रादीनां वैरं तस्मै पुत्रादी-
ति पाठान्तरम् । छलसम्बद्धमेव योगपदं नान्येन । योगत इति तृतीयान्तात्सार्वविभक्ति-
कस्तसिरित्याह — उत्कोचेनेति । तस्मा इति—तस्मा एव तदन्यद्वा ददातीत्यर्थः ।

१. क. ख. ग. च. छ. वाध° । २. ख. संयुते । ३. ना० ४. ८, ९, १० : ११. ।
४. क हात्तुदु° । ५. घ. च. छ. ज. यच्चादृष्टा० । ६. ख. दिभ्यो वै० । ७. क. त्रादिवि० ।
८. थ. द. षामावेगः! ९. थ. द. रदवच० । १०. फ. रागृहाधि° ।

गतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य ददाति; बालेनाप्राप्तषोडशवर्षेण, मूढेन लोकवेदानाभिज्ञेन, अस्वतन्त्रेण पुत्रदासादिना, आर्तेन रोगाभिभूतेन, मत्तेन मदनीयमत्तेन, उन्मत्तेन वातिकाद्युन्मादग्रस्तेन वा, अपवर्जितं दत्तम्; तथा 'अयं मदीयमिदं कर्म करिष्यति' इति प्रतिलाभेच्छया दत्तम्; अचतुर्वेदाय 'चतुर्वेदोऽहम्'इत्युक्तवते दत्तम्; यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तम्,— 5
इत्येवं षोडशप्रकारमपि दत्तमदत्तमित्युच्यते—प्रत्याहरणीयत्वात्। आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्—"स्वस्थेनाऽऽर्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥" इति कात्यायनस्मरणात्। तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम्—"योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यस्य चाप्युपधिं

## सुबोधिनी

सहस्रमिति परिभाष्य ददातीति—शतं दीयत इति मनसि विचार्यान्तःकरणोच्छ्वासादिवशात् सहस्रं दीयत इत्युक्तौ सत्यां मनसोऽनभिप्रेतमप्युक्तयनुसारेण यत् दीयते तत् इत्यर्थः। कात्यायनेनैव सर्वविवादसाधारणं वचनमुक्तमित्याह—तथेदमपरमिति ॥१७६॥

इति विश्वेश्वरभट्टविरचितायां सुबोधिन्यां दत्ताप्रदानिकं नाम प्रकरणम् ॥

## बालंभट्टी

शतं दानमिति-शतं दीयमानमिति मनसि निधाय,कारणेच्छादिवशात् सहस्रं दीयते इत्युक्तौ सत्यां मनसोऽनभिप्रेतमप्युक्तानुसारेण यद्दीयते तदित्यर्थः।उन्मत्तान्तेन द्वन्द्वोत्तरपदकद्वन्द्वेनापवार्जितमित्यस्य दत्तमित्यर्थकस्य समास इत्याह—बालेनेत्यादि।मदनीयेनेति—तत्साधनद्रव्येण या मदस्तेनेत्यर्थः।कर्तेति व्याचष्टे—तथेति।ममेदमित्यस्यार्थो—मदीयमिति। तेति लुडर्थोऽनद्यतनत्वमात्रं न विवक्षितमित्याह— करीति । अपात्रे इति—तस्य तत्त्वविवक्षायां सप्तमी—अपात्रायेत्यर्थः। तदाह—अचतुरिति। उक्त इत्यत्रांशे आद्यच् । अकार्ये इति छेदः, सप्तम्युभयत्र प्राग्वत् । धर्मसंहितो यो नेति, वाहिताग्न्यादिः। कर्तव्यत्वेन धर्मं ब्रुवते आकार्ये न कार्यं यस्य तस्मै अकार्ये इति कर्त्रे अविज्ञानात् यद्दत्तं स्यादित्यर्थस्तदाह— यज्ञमिति। विशेषमाह— आर्तेति। वेत्यस्य उभयत्रान्वयः। दत्तमित्यस्य संकल्पितमित्यर्थः। अत एव साधारणमाह—अदत्त्वेति । मृते—तस्मिन् सति।पूर्वं पूर्णदाने पुनः परावृत्तिरिति तु न सूचितम् । कात्यायनेनैव सर्वविवादसाधारणमन्यदप्युक्तमित्याह— तथेदमिति,—

१. ध. तं मानम० । २. क. यथे०। ३. थ. द. णोल्लासादि० । ४. त. र्वापवादसा०। ५. त. यथेदमि० ।

पश्येत्तत्सर्वं विनिवर्तयेत् ॥" इति। योग उपाधिः। येनाऽऽगामिनोपाधिविशेषेणाऽऽधि-विक्रयदानप्रतिग्रहाः कृताः, तदुपाधिविगमे तान् क्रयादीन्विनिवर्तयेदित्यस्यार्थः। यः पुनः षोडशप्रकारमपि अदत्तं गृह्णाति यश्चादेयं प्रयच्छति, तयोर्दण्डो नारदेनोक्तः— "गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति । अदेयदायको दण्ड्यस्तथा दत्तप्रतीच्छकः ॥" इति ॥ १७६ ॥ 5

॥ इति दत्ताप्रदानिकं नाम प्रकरणम् ॥

यत्त्वप्रकाश्यं दानमिति तद्दानविषयम्; इदन्तु प्रतिग्रहविषयमित्यविरोधः । स्पष्ट-मन्यत् ॥ १७६ ॥

## बालंभट्टी

वक्ष्यमाणं अपरं उक्तभिन्नम्। तदर्थमाह—योग इति,—उभयत्रेति भावः। कृतसमाहार-द्वन्द्वाभ्यां योगयोरतृतीयासमास इत्याह—योगेनेत्यादि। आधमनादीनाह— आधीति। विशे-षेण क्रीतमित्याह-क्रयेति,-भावे क्त इति भावः। विगमे-ज्ञाने। अस्यापरस्य विशेषान्तरमाह —यः पुनरिति। यस्तु तं गृह्णातीति पाठः। तद्ग्रहणे मूलमाह-लोभादिति। अत एवाज्ञः स इति भावः। यद्यपि तावुभावपि दण्ड्यावित्येव सिद्धं, तथाऽपि स्फुटार्थं व्युत्क्रमेण सान्निध्यादा-ह —अदेयदायक इति। तथा चार्थः। अदत्तप्रतीच्छक इति तथा चवर्गः प्रतीच्छधातुर्ग्र-हणार्थः। धातुगणो बाहुलकोक्तेरिति भावः॥ १७६ ॥ इति दत्ताप्रदानिकम् ॥

---

१. म०. ८. १६५. । २. क ग. येनोपा० ।

# अथ क्रीतानुशयप्रकरणम् १३

क्रीतानुशयः कथ्यते । तत्स्वरूपं च नारदेनोक्तम्—"क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥" इति । तत्र च यस्मिन्नहनि पण्यं क्रीतं तस्मिन्नेवाह्नि तदविकृतं प्रत्यर्पणीयमिति तेनैवोक्तम्—"क्रीत्वा मूल्येन यत्पण्यं दुःक्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम्॥" इति । द्वितीयादिदिने तु प्रत्यर्पणे विशेषस्तेनैवोक्तः—"द्वितीयेऽह्नि दद-त्क्रेता मूल्यात् त्रिंशांशमावहेत् । द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥" इति । परतोऽनुशयो न कर्तव्य इत्यर्थः । एतच्च बीजादि व्यतिरिक्तोपभोगादिविनश्वर वस्तुविषयम् ।

## सुबोधिनी

द्विगुणं तु तृतीयेऽह्नीति—पूर्वोक्तत्रिंशांशात् द्विगुणं पञ्चदशांशमित्यर्थः । "परतः क्रेतुरेव हि" इत्यमुमंशं तात्पर्यतो व्याचष्टे—परतोऽनुशय इति । एतच्च बीजादिव्यति-रिक्तेति—बीजादिव्यतिरिक्तं च तदुपभोगविनश्वरं चेति समासः ॥

## बालंभट्टी

प्राग्वदाह—क्रीतेति। तत्र सङ्गतिं सूचयन्नाह—तदित्यादि। बहु—विपुलं सम्यगिति यावत्। तत्र च—तदनुशये च । तेनैव—नारदेनैव। एवमग्रेऽपि षष्ठी प्राग्वत्। वाह्न्यविक्ष-तमिति पाठः। नाशरहितमिति तदर्थः। अविवक्षितमिति पाठेऽप्येवम् । आवहेत्—त्यजेत् तस्मै दद्यात् । तावता न्यूनं मूल्यं ग्राह्यमिति यावत् । द्विगुणं—पूर्वोक्तत्रिंशांशाद्विगुणं पञ्च-दशांशमिति यावत् । तुर्यापादस्य तात्पर्यार्थमाह—परत इति । अनुशयो—विचारपूर्वक-पश्चात्तापः । सङ्गतये विशेषमाह—एतच्चेति,—नारदोक्तं चेत्यर्थः । बीजादीति—बीजादिव्यतिरिक्तं च तदुपभोगादिविनश्वरं च तत् वस्तु च तद्विषयकमित्यर्थः । भोगव-स्त्विति पाठे स्पष्टार्थं भोगेति भोग्येत्यर्थः ॥

१. ख. अथ क्री० । २. ख. छ. 'च' नास्ति । ३—९. १. । ४.—९. २. । ५.—९. ३. । ४. ख. जातिरि० ।; घ. ङ. चव्य ५. थ. द, पयोग० । ६. प. ब. नत० (?) ।

बीजादिक्रये पुनरन्य एव प्रत्यर्पणावधिरित्याह—

**दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ।**
**बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ १७७ ॥**

बीजं व्रीह्यादिबीजम्, अयो लोहं, वाह्यो बलीवर्दादिः, रत्नं मुक्ताप्रवालादि, स्त्री दासी, दोह्यं महिष्यादि, पुमान् दासः ; एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेयः । परीक्ष्यमाणे च बीजादौ यद्यसम्यक्त्वबुद्ध्याऽनुशयो भवति तदा दशाहाद्यभ्यन्तर एवः ; क्रयनिवृत्तिर्न पुनरूर्ध्वमित्युपदेशप्रयोजनम् । यत्तु मनुवचनं "क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाऽऽददीत च॥"इति, तदुक्तलोहादिव्यतिरिक्तोपभोगविनश्वरगृहक्षेत्रयानशयनासनादिविषयम्। सर्वं चैतदपरीक्षितक्रीतविषयम् । यत्पुनः परीक्षितं

अस्वामिविक्रयो निरूपितः; स्वामिविक्रये च—दशैकपञ्चसप्ताहेत्यादि ॥१७७॥

## सुबोधिनी

एवं स्मृत्यन्तरोक्तं मनसि निधाय पूर्वोक्तव्यतिरिक्तविषये योगीश्वरः प्रत्यर्पणप्रकारं दर्शयतीत्याह— बीजादिक्रये पुनरिति । परीक्षापूर्वक्रये विशेषमाह— यत्पुनः परीक्ष्येति ॥ १७७ ॥

## बालंभट्टी

एवं स्मृत्यन्तरोक्तं मनसि निधायोक्तान्यविषये मूलकृत् प्रत्यर्पणप्रकारं दर्शयतीत्याह — बीजादीति । दशैकेति पूर्वार्धे समाहारद्वन्द्वोऽग्रे पूर्वमितरेतरद्वन्द्वपूर्वकसमाहाराद्द्विगुः । अत एव वक्ष्यति दशाहादिक इत्यादि । उत्तरार्धे इतरेतरद्वन्द्वः। क्रमस्य विवक्षितत्वान्न दोषः। तदाह—बीजमित्यादि। अय इत्युपलक्षणमित्याह—लोहादीति। परीक्षणपदार्थमाह— परीक्षाकाल इति,—करणल्युटा कालसामान्यवाचकं तदिति भावः । एतत्कथनफलमाह —परीक्ष्येति। मनुविरोधं तेनैकस्यैव कालस्य सामान्योक्तत्वात प्राप्तं मूलनारदयोः परिहरति—यत्त्विति । इह—व्यवहारे । द्वितीये आह —आददीत चेति। विचारस्य तुल्यत्वात् तदेकतयैव मनुनोक्तत्वान्मूलकृताऽप्येकतयैवोक्तं न तु भेदेन; कल्पतर्वादीनां भेदेनोक्तिस्तु स्पष्टार्थेति बोध्यम्। मूलाविरोधायाऽऽह--- उक्तलोहादिति। नारदविरोधायाऽऽह—उपभोगवीति। सर्वं- मनुमूलनारदोक्तम्। परीक्षापूर्वकक्रये विशेषमाह-यत्पुनरिति,

१. क ग. ज. णेऽव० । ख. णवि० । २. क. हं मा० । ३. ख. हादि । ४ ख. दिकं । ५. ख. ग. ज. हाभ्य० । ६ —८. २२२. । ७ क. घ. ज. यनादि० । ८. ख. घ. ङ. च. छ. रीक्ष्य ।

'न पुनः प्रत्यर्पणीयम्' इति समयं कृत्वा क्रीतं तद्विक्रेत्रे न प्रत्यर्पणीयम्; तदुक्तम्—"क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः॥" इति ॥ १७७ ॥

दोह्यादिपरीक्षाप्रसङ्गेन स्वर्णादेरपि परीक्षणमाह—

5 अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते।

अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥ १७८ ॥

वह्नौ प्रताप्यमानं सुवर्णं न क्षीयते, अतः कटकादिनिर्माणार्थं यावत्स्वर्णकारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम्; इतरथा क्षयं दाप्या दण्ड्याश्च।

परीक्षाकालाच्चोर्ध्वं क्रीतंविक्रीतं वा स्यात् यत्तदनुपहतम्; यत्तु स्वायंभुवं-"क्रीत्वा विक्रीय वा द्रव्यं यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाऽऽददीत वा॥" इति, तत्परीक्ष्य क्रीते द्रष्टव्यम्। दशाहादिक्रमेण बीजादीनां, एकाहश्चायसः। अयोग्रहणं सर्वताम्रादिलक्षणार्थम्। एवं वाह्यादिष्वपि योज्यम्। वाह्यं बलीवर्दादयः; रत्नानि मरकतादीनि; स्त्रियो दास्याद्याः; दोह्यं गवादि; पुमांसो दासादयः ॥ १७७ ॥

किं च— अग्नौ सुवर्णमक्षीणमित्यादि ॥ १७८ ॥

## सुबोधिनी

यद्यपि "बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्" इति बीजादिक्रमेण परिगणितं, तथाऽपि दोह्ये महिष्यादौ प्रतिसवनदोहेन परीक्षायाः प्रयोगताल्पत्वमहत्त्वाभ्यां सुज्ञानत्वात् तत्प्राधान्येनाऽऽह —दोह्यादिपरीक्षाप्रसङ्गेनेति ॥ १७८ ॥

## बालंभट्टी

—परीक्षितं सदिति शेषः। परीक्ष्येति पाठान्तरम्। पुनः— पश्चात्। तदुक्तमिति — नारदेनेति शेषः। प्राक्—क्रयात्। गुणदोषाभ्यां सार्वविभक्तिकस्तसिः। परीक्षेति— परीक्षया अभिमतमित्यर्थः। परीक्ष्येति पाठान्तरम्। पुनः—पश्चात् ॥ १७७ ॥

यद्यपि "बीजाय" इति बीजादिक्रमेण मूले परिगणितं, तथाऽपि दोह्यमहिष्यादौ प्रतिसवनदोहनेन तत्--परिक्षयाऽभीष्टाल्पत्वमहत्त्वाभ्यां सुज्ञानत्वात् प्राधान्येनाऽऽह-दोह्यादीति। परीक्षेति--तत्काले इत्यर्थः। इतरथा-तन्न्यूयत्वेऽयं तात्पर्यार्थः— शतशब्दः प्रत्यासत्तेः पलपर

१. ना० ९. ८. । २. ख. ग. क्षामा० । ३. वि० द्विपलं रजते शतम्। अष्टौ तु त्रपुसीसे च। ४. थ द. नदोहनेन।

रजते तु शतपले प्रताप्यमाने पलद्वयं क्षीयते। अष्टौ त्रपुणि सीसे च–शत इत्यनुवर्तते—त्रपुणि सीसे च शतपले प्रताप्यमानेऽष्टौ पलानि क्षीयन्ते। ताम्रे पञ्च; दशायसि;—ताम्रे शतपले पञ्चपलानि अयसि दशपलानि क्षीयन्ते। अत्रापि शत इत्येव। कांस्यस्य तु त्रपुताम्रयोनित्वात्तदनुसारेण क्षयः कल्पनीयः[1]। इतोऽधिकक्षयकारिणः शिल्पिनो दण्ड्याः ॥ १७८ ॥ 5

क्वचित्कम्बलादौ वृद्धिमाह—

**शते दशपला वृद्धिरौर्णे कार्पासि[2]सौत्रिके।**

**मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता ॥ १७९ ॥**

स्थूलेनौर्ण[3]सूत्रेण यत्कम्बलादिकं क्रियते तस्मिन् शतपले दशपला वृद्धिर्वेदितव्या। एवं कार्पाससूत्रनिर्मिते पटादौ वेदितव्यम्। मध्ये अनतिसूक्ष्मसूत्रनिर्मिते पटादौ 10

आवर्तनायाग्नौ क्षिप्तं सुवर्णमक्षीणं तावदेवेत्यर्थः। रजतादौ द्विफलशतं द्विपलाधिकः क्षयः। अनेन प्रकारेणोपक्षीणं सुवर्णकारादयो दापनीयाः ॥ १७८ ॥

कौलिकादिभिस्तु वस्त्रनिर्माणायार्पिते सूत्रे **शते दशपलेत्यादि** ॥ १७९ ॥

सुबोधिनी

पटादौ पञ्चपला वृद्धिरिति—अत्र यद्यपि "और्णे कार्पाससौत्रिके" इति कम्बलस्याऽऽ-

बालंभट्टी

शतपले इति। द्विपलमिति बहुव्रीहिस्तदाह—पलद्वयमिति। प्राग्वदाह—शतपले इति। अनुवृत्तिरग्रेऽपि। पञ्च दशेति, पदद्वयं तदाह—पञ्चपलानीति। इत्येवेति—तच्च पलपरमेव। प्रताप्यमाने इत्यप्युभयत्र बोध्यम्। न्यूनतां परिहरति—कांस्यस्येति,-कांस्ये त्विति पाठान्तरम्। त्रपुताम्रेति—बहुव्रीहिः तदनुसारेण क्वचित्तथैव पाठः। एवं पित्तलेऽपि बोध्यम्। तदर्थमत्राऽऽह—अतोऽधिकामिति ॥ १७८ ॥

क्वचित्कंबलादाविति—समूलार्थः। निर्मिते इति—रोपधेतो. प्राचामिति वुञ् तत्र तेन सूचितः स हि शैषिकः। शतपले कम्बलादौ वृद्धिरित्यर्थः। दशपलेति बहुव्रीहिरेव। मध्ये इति—तृतीयपादप्रतीकम्। अत एवाऽऽह—अनतीति। पटादाविति— यद्यप्यौर्णं इत्यादिना

---

१. ख. ग. घ ङ. कल्प्यः। २. वि० कार्पासिकेऽथवा। मध्ये पञ्चपला हानिः (?)। ३. क. स्थूलमूर्णासू०। ङ. स्थूलेनोर्णा०। ज. नौर्णासू०। ४. ख. ग. क्ष्मनि०। ५. त. लादि०। ६. फ. सुमू०।

पञ्चपला वृद्धिः । सुसूक्ष्मसूत्रराचिते शते त्रिपला वृद्धिर्बोद्धव्या । एतच्चाप्रक्षालितवासोविषयम् ॥ १७९ ॥

द्रव्यान्तरे विशेषमाह—

**कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः ।**
5 **न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च॥१८० ॥**

कार्मिकं कर्मणा चित्रेण निर्मितम् । यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत्कार्मिकमित्युच्यते। यत्र प्रावारादौ रोमाणि बध्यन्ते स रोमबद्धः

---

पलशते दशपलान्यौर्णकार्पासिकयोर्वृद्धी स्थूले स्यात् मध्यमे तूक्तवृद्धितः पञ्चपलाऽन्या वृद्धिरित्यर्थः ; सूक्ष्मे तु त्रिपला वृद्धिः; तथा च नारदो दशपलावृद्धिमुक्त्वाऽऽह—"स्थूलसूक्ष्मे च तामेषां मध्यानं पञ्चकं शतम् । त्रिपलं तु सुसूक्ष्माणाम्" इति ॥ १७९ ॥

अस्य विशेषोऽपवादः—चार्मिके रोमबन्धे चेत्यादि ॥ १८० ॥

## सुबोधिनी

द्वित्वेन परिगणनं, तथाऽपि पटादावित्युक्तिरुपपन्ना—प्रतिलोमाभिप्रायत्वात् ॥ १७९ ॥

यत्र प्रावारादाविति—प्रावार उत्तरासङ्गः "द्वौ प्रावारोत्तरासङ्गौ समौ" इत्यमरः॥१८०॥

इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां क्रीतानुशयप्रकरणम् ॥

## बालंभट्टी

कम्बलादीनां कंबलादितया ग्रहणं कृतं, तथाऽपि पटादावित्युक्तिः प्रतिलोमाभिप्रायेति नानुपपत्तिरिति भावः। शते इति बोध्यम्। सुसूक्ष्मेति—अतिसूक्ष्मेत्यर्थः। अप्रेति—तथा च प्रक्षालितेनेयमेव वृद्धिरिति भावः ॥ १७९ ॥

विशेषमिति—क्षयमुभयाभावं च स्थलविशेषेणेत्यर्थः। कार्मिकमित्यस्य व्याख्या—कर्मणेति। चित्रं सूत्रम्। अत एव तस्यापि व्याख्या—यत्रेति। मेचकं मयूरपिञ्छनेत्रम्। अधिकरणे घञित्याह—यत्रेति। प्रावारः—उत्तरासङ्गः "द्वौ प्रावारोत्तरासङ्गौ समौ" इत्यमरः।

---

१. ख. सूक्ष्म० । २. ख. घ. वेदितव्या । ३. घ. बन्धेच । ४ ख ग. घ. ङ. च. छ. वल्क० । वि० वाल्कले तथा । ५. घ. ङ. रुचक० । च. चक्रक० । बालं० मेचकं। ६. घ. बन्धः । ७.—९. १४.। ८. द्वि० म० ११७.।९.(?) । प. ब. 'कंबलादीनां' नास्ति ।

तत्र त्रिंशत्तमो भागः क्षयो वेदितव्यः । कौशेये कोशप्रभवे वाल्कलेषु वृक्षत्वङ्निर्मितेषु वसनेषु वृद्धिह्रासौ न स्तः; किंतु यावद्वयनार्थे कुविन्दादिभ्यो दत्तं तावदेव प्रत्यादेयम् ॥ १८० ॥

द्रव्यानन्त्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह—

देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम् ।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥ १८१ ॥

शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते द्रव्याणां कुशलाः द्रव्यवृद्धिक्षयाभिज्ञाः

चार्मकृतं चार्मिकं कुरु....दि; रोमबन्धं पटादि, तत्र हि छेदनात् त्रिंशद्भागक्षयः। कौशेयवाल्कलयोस्तु साम्यमेव । कौशेयं त्रसरीमयम् । स्पष्टमन्यत् ॥ १८० ॥

वृद्ध्यनुसारेणैव क्षयमालोच्य रजताभिर्वस्त्रादीनाम्—

देशं कालं च भोगं चेत्यादि ॥ १८१ ॥

स्वदेशोत्पन्नं परदेशोत्पन्नं चिरन्तनमल्पकालिकभुक्तमभुक्तं दुर्लभमदुर्लभं वेत्येवं नष्टे द्रव्ये बलाबलं ज्ञात्वा द्रव्याणां बलाबलज्ञानकुशलाः यन्मूल्यं ब्रूयुः तन्निर्विचारं नाशयिता दद्यात्; राज्ञा च तद्दाप्यः । एवं परीक्ष्य क्रीते तु व्यभिचरतो

बालंभट्टी

तत्र उभयत्र त्रिंशच्छब्दो भागपर इत्याह—त्रिंशत्तम इति । तात्पर्यार्थमाह—किन्त्विति ॥ १८० ॥

उत्तरसङ्गतिमाह—द्रव्यानन्त्यादिति। क्षयवृद्धीति—धर्मादित्वात्साधुत्वम्। एवमग्रेऽपि । अत एव वृद्धिक्षयेत्यग्रिमाविरोधो नेति बोध्यम्। उक्तभिन्नविषयमेवास्य साफल्यायाऽऽह—शाणेत्यादिः। शाणं शणसूत्रनिर्मितं क्षौमं क्षुमा—अतसी तत्सूत्रनिर्मितम्।नष्ट इति मूलार्थमाह—ह्रासमिति।सर्वथा नाशोऽत्र नाभिमतः—प्रकरणादिबलात्। तथा किंच तद्वद्वा प्रत्यास-

१. ख. ग. घ. ङ. च. छ. वल्क० । २. ख. ग. च. वयना० । ३. क. तद्धा० । ४. वि० मृणद्वयम्।

देशं कालमुपभोगं तथा नष्टद्रव्यस्य बलाबलं सारासारतां च परीक्ष्य यत्कल्पयन्ति तत्संशयं शिल्पिनो दाप्याः ॥ १८१ ॥

॥ इति क्रीतानुशयप्रकरणम् ॥

राजदण्डादिप्रसङ्गः । न च विक्रेता व्यभिचरन्नपि विक्रीतं प्राप्नुयादिति स्थितम्; तथा च स्वायंभुवः—"परेण तु दशाहस्य न दद्यान्नापि दापयेत् । आददानो ददच्चैव दण्ड्यो राज्ञा शतानि षट् ॥" इति ॥ १८१ ॥

## बालंभट्टी

तदाह—नष्टेति,—तत्त्वविवक्षया सप्तमीति भावः । एकः चो व्युत्क्रमे इत्याह—तां चेति । ज्ञात्वेत्यस्य व्याख्या परीक्ष्येति । तुर्यपादार्थमाह—यदिति । दाप्यमित्यस्य शिल्पिकर्तृकमिति विशेष्यम् । तदाह—शिल्पिन इति ॥ १८१ ॥ इति क्रीतानुशय-प्रकरणम् ॥

# अथाभ्युपेत्याशुश्रूषाप्रकरणम् १४

साम्प्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते । तत्स्वरूपं च नारदेनोक्तम्—" अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते"॥ इति । आज्ञाकरणं शुश्रूषा, तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम् । शुश्रूषकश्च पञ्चविधः—शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दास इति; तेषामाद्याश्चत्वारः कर्मकरा इत्युच्यन्ते । ते च शुभकर्मकारिणः। दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः। तदिदं नारदेन स्पष्टीकृतम्—"शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥ शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् । एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनी- 5

## सुबोधिनी

अपरमिति—" तेषामाद्यमृणादानम् " इत्यत्रानुपात्तत्वादपरं विवादपदमित्यर्थः । " अभ्युपेत्य तु शुश्रूषाम् " इत्येतन्नारदवचनं व्याचष्टे— आज्ञाकरणमिति । शिष्यान्तेवासिभृतकाधिकर्मकृतां सामान्यसंज्ञामाह—तेषामाद्या इति। सामान्यमिति। अस्यार्थः—

## बालंभट्टी

सांप्रतमिति--गृहीतानुशयप्रसङ्गेनेतिभावः। अपरामिति—"तेषामाद्यम्" इत्यादौ मनुनाऽपरिगणितत्वात्ततो भिन्नमेवेत्यर्थः । नारदीयं व्याचष्टे—आज्ञाकरणमिति । प्रतीत्यस्यार्थमाह—संपेति । मूले व्युत्क्रमेणान्वय इत्याह—अभ्युपेत्येति । शिष्यादिचतुर्णां सामान्यसंज्ञामाह—तेषामिति,—मध्ये इत्यर्थः । कर्मकरा इति—"कर्मणि भृतौ" इति टः। यद्यपि भृतके तत्त्वं सूत्रसिद्धं—भृतावित्युक्तेः, तथाऽपि साहचर्यादन्येषामपि तत्त्वं बोध्यम्। वक्ष्यमाणानुरोधेन तेषां तत्त्वं योगरूढ्येत्याह—चेति,—चत्वार इत्यर्थः । तदिदं—सर्वं शास्त्रप्रोक्तमित्यर्थः। चतुर्विधः—आदितः। तेषां मध्ये। त्रिपञ्चका इति—त्रिः पञ्चेति त्रिपञ्च, ते परिमाणं येषां ते सुजर्थसमासः तद्धितः कन्।तदेव विशदयति—शिष्यान्तेवासीति। सामान्यामिति—एषां शिष्यादीनां पञ्चानां मध्ये स्वतन्त्रत्वं नाम सामान्यं साधारणध-

१.—५. १.। २. क. राशुचिस्थानरथ्यागृहद्वाराव०।च. राशुचिस्थानरथ्याव०३. क.श्रा०। ४.थ. द.अपरं विवादपदमिति।५. म० ८. ४.।६. थ. द. न्यमस्वतन्त्रत्वमिति।७.अ०३.२.२२.।

षिणः। जातिकर्मकृतस्तूक्तो[1] विशेषो वृत्तिरेव च॥कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्[2]॥ गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥ इच्छतः[3] स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम्॥"इति। तत्र शिष्यो वेदविद्यार्थी; अन्तेवासी
5 शिल्पशिक्षार्थी; मूल्येन यः कर्म करोति स भृतकः; कर्मकुर्वताम् अधिष्ठाताऽधिकर्म-

## सुबोधिनी

एषां शिष्यादीनां पञ्चानामस्वतन्त्रत्वं नाम सामान्यं साधारणो धर्म इत्याहुर्मनीषिणो महर्षयः; एषां मध्ये शिष्यादिचतुष्टयसमुदायेऽवान्तरजात्या कर्मकर इति विशेष उक्तो मनीषिभिः। कर्मकरत्वं चतुर्णामप्यवान्तरजातिरित्यर्थः। तथा वृत्तिर्वर्तनं[6] शुभकर्मकरत्वेन विशिष्टम्। शुभकर्मकरत्वं विशिष्टा वृत्तिरिति पूर्वोक्तमर्थं विविच्य दर्शयति—कर्मापीति[7]। "शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वाधिकर्मकृत्" इत्यमुं नारदीयवचनांशं व्याचष्टे—तत्र शिष्य इत्यादिना। "गृहद्वाराशुचिस्थान" इत्यत्राशुचिस्थानावस्करोज्झनपदानि व्याचष्टे—

## बालंभट्टी

र्म इत्येवं मनीषिणो महर्षयः आहुरित्यर्थः। जातीति—तेषां पञ्चानां मध्ये शिष्यादिरूपचतुर्विधसमुदायस्य जात्या स्वस्वजात्यनुरूपामिति यावत्। तादृशं कर्म कुर्वतस्तु कर्मकर इत्येवंरूपोऽवान्तरविशेषो मनीषिभिरुक्त इत्यर्थः। कर्मकरत्वं चतुर्णामप्यवान्तरजातिरित्यर्थः। वृत्तिरेव चेति—विशेष इत्यनुवर्तते; तथा वृत्तिर्वर्तनमपि शुभकर्मकरत्वेन विशेषः। विशिष्टं शुभकर्मकरत्वं विशिष्टा वृत्तिरेवेत्यर्थः। अत एव चसङ्गतिः। उक्तमेव विविच्याऽऽह—कर्मापीति। कर्मकृतां चतुर्णाम्। तत्राशुभमाह—गृहद्वारेत्यादि,—अत्र द्वन्द्वोत्तरपदकसमाहारद्वन्द्वः। अग्रे यथासंख्यमन्वयः। इच्छत इति—इच्छतः स्वामिनः स्वाङ्गैरन्ततः—पर्यन्ते उपस्थानं सेवनं चेत्यर्थः। शुभमिति—अतोऽन्यत् परं केवलं उत्कृष्टं वा शुभमित्यर्थः।"शिष्यान्तेवासि" इत्यादिनारदवचनांशं विशिष्य व्याचष्टे—तत्रेति,—तेषां मध्ये इत्यर्थः। वेदग्रहणं शास्त्रस्याप्युपलक्षणम्। शिल्पं—कौशलम्। अधिष्ठाता—

१. ख. ग. छ. करस्तू॰। २. ज. स्मृतमिति। तत्राशि॰। ३. क. ङ. च. छ. ना॰ स्मृ॰ इष्टतः। ४. ना॰ अथोन्ततः। ५.—५. २.—७.। ६. थ. द. नमपि-शु॰। ७. थ. द. पि द्विविधमित्यादिना। ८. त. 'तत्र' नास्ति।

कृत् ; अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम् ; अवस्करो गृहमार्जितपांस्वादि-निचयस्थानम् ; उज्झनं त्यागः । भृतकश्चात्र त्रिविधः ; तदुक्तम्—"उत्तमस्त्वा-युधीयोऽत्र मध्यमस्तु कृषीवलः। अधमो भारवाही[1] स्यादित्येवं त्रिविधो भृतः॥"[2]इति । दासाः पुनः—"गृहजातस्तथा[3] क्रीतो लब्धो दायादुपागतः। अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥ मोक्षितो महतश्चर्णाद्युद्धप्राप्तः[4] पणे जितः । तवाहमित्युपगतः 5 प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चाऽऽत्मनः शास्त्रे दासाः पञ्चदश स्मृताः[5]॥"[6] गृहे दास्यां जातो गृहजातः; क्रीतो मूल्येन; लब्धः प्रतिग्रहादिना ; दायादुपागतः पित्रादिदासः; अनाकालभृतो दुर्भिक्षे यो दासत्वाय मर-णाद्रक्षितः;आहितः स्वामिना धनग्रहणेनाऽऽधितांनीतः;ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः ; युद्धप्राप्तः समरे विजित्य गृहीतः; पणे जितः 'यद्यस्मिन् विवादे परा- 10 जितोऽहं तदा त्वद्दासो भवामि' इति परिभाष्य जितः;तवाहमित्युपगतः 'तवाहं दासः'

## सुबोधिनी

अशुचीत्यादिना । "शिष्यान्तेवासिभृतकाः" इत्युद्दिष्टानां मध्ये भृतकस्य त्रैविध्यमाह—भृतकश्चेति । दासाः पुनः पञ्चदशप्रकारा इत्युक्तम्; तत् प्रपञ्चयति —दासा इत्यादिना।

## बालंभट्टी

नियन्ता । अशुचीत्यादि तथैव व्याचष्टे—अशुचीति । शिष्याद्युद्दिष्टानां मध्ये भृतकत्रैविध्यमाह— भृतेति । अत्र एषां मध्ये । तदुक्तमिति — नार-देनेति शेषः। अत्रेति प्राग्वत् । आयुधजीवी आयुधीयः। भारेति—तद्वहनशीलः। भारवाह इति पाठान्तरम् । "दासास्त्रिपञ्चका ज्ञेयाः दासास्तु गृहजादयः" इत्युक्तं तत्प्रपञ्चयति—दासाः पुनरिति,–दासास्त्वित्यर्थः; उच्यन्ते इति शेषः।तानेव नारदोक्त्या आह—गृहजात इत्यादि। क्रमेण व्याचष्टे—गृहे इत्यादि। तत्र पत्नीपरगृहशब्दस्य लक्ष्यार्थमाह–दास्यामिति। तद्वदित्यर्थकेन तथेत्यनेन किंचिन्न्यूनता सूचिता अनाकाले इत्यास्यार्थो दुर्भिक्षे इति भृत इत्य-स्य रक्षित इति। आधितामिति—अन्यत्रेति भावः | अहं—स्याम् । परीति,–परिभाष-

---

१. ना० वाहः । २ ना० ५. २२.। ३. ना० गृहे० । ४. क. तश्चैव । ना० तो लोके। ५. ना० प्राप्तो युद्धात्प० । ६ –५.२६ ।७. थ. द. चिस्थानमि०। ८. थ. द. साः पुनरित्या०।

इति स्वयं संप्रातिपन्नः; प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः; कृतः 'एतावत्कालं त्वद्दासः' इति अभ्युपगमितः ; भक्तदासः सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः; वडवाहृतः, वडवा गृहदासी, तया हृतः तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः; य आत्मानं विक्रीणीते असावात्मविक्रेता ; इत्येवं पञ्चदशप्रकाराः। यत्तु मनुना "ध्वजाहृतो भक्त-
5 दासो गृहजः क्रीतदत्रिमौ। पैतृको दण्डदासश्च सप्तैते दासयोनयः॥"इति सप्तविधत्वमुक्तम्, तत्तेषां दासत्वप्रतिपादनार्थम्; न तु परिसंख्यार्थम्। तत्रैषां शिष्यान्तेवासिभृतकाधिकर्मकृद्दासानां मध्ये शिष्यवृत्तिः प्रागेव प्रतिपादिता— "आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्।" इत्यादिना। अधिकर्मकृद्भृतकानां तु वेतनादानप्रकरणे वक्ष्यते—"यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्।" इत्यादिना।

## सुबोधिनी

ध्वजाहृत इति दण्डदासश्चेति च — युद्धप्राप्तो ध्वजदासः। पारिव्राज्यच्युतस्य प्रायश्चित्तमकुर्वतः पुंसो दण्डार्थमेवाऽऽमरणात् दास्यं राज्ञः कृते भवतीति दण्डदासः पारिव्राज्यच्युत इति विवेकः। नतु परीति—परिगणितव्यतिरिक्तनिषेधार्थं नेत्यर्थः। एवं प्रकरणोपात्तत्वेन स्मृत्यन्तरोक्तमभिधाय मूलवचनविषयं विवेचयति — तत्रैषामित्यादिना।

## बालंभट्टी

यित्वेत्यर्थः। स्वयं सामिति,—स्वयमेवाऽऽगत इत्यर्थः। प्रव्रज्या—सन्न्यासित्वम्। दास इति—त्वद्दास इति पाठेऽग्रे इत्यभ्युपगमित इति पाठः।दास इति पाठे'अहं तव दासः'इत्यर्थेन अग्रे इत्युपगत इति पाठः। एतावत्कालमहं त्वद्दास इत्यङ्गीकारित इति मदनरत्नेऽप्युक्तम्। भक्तम्—अन्नम्। एवेनान्यव्यवच्छेदः।मनुविरोधमनुवदति—यत्त्विति,—मानवे भक्तदासः, गृहजः, क्रीतश्च प्रागुक्त एव, पैतृकः पितुरागतः सोऽपि, दायादुपगत एव दत्रिमोऽपि कृत एव ध्वजाहृतः ध्वजेन तद्वता युद्धेन वाहृत इति सोऽपि युद्धप्राप्त एव प्रव्रज्यातश्च्युतस्य प्रायश्चित्तमकुर्वतः, पुंसो दण्डार्थमेव आमरणात् दास्यं राज्ञो भवतीति दण्डदासः प्रव्रज्यावसित एवोत बोध्यम्। दासेति,—अयं धर्मपरः दासत्वाश्रयाः दासा इति यावत्। परिहरति—तदिति। तथा च सप्तग्रहणं न्यूनसंख्याव्यवच्छेदार्थम्; न तु परिगणितभिन्ननिषेधार्थम्। तदाह—न तु परीति। एवं प्रकरणोपोद्घातत्वेन स्मृत्यन्तरोक्तमुक्त्वा मूलविषयं विवेचयितुं तदवतारयितुं चाऽऽह—तत्रैषामित्यादि। तत्र—तथा सति। अधीति— अभ्यर्हितत्वात् पूर्वनिपातः, भृतकवैविध्याद्बहुवचनम्। वृत्तिरित्यनुषज्यते॥

१. छ. मनुवचन। २.—८. ४१५.। ३. ख. दनपरम्। ४. आ० २७.। ५. य० १९६.। ६.थ. परिव्रज्या०। ७. थ. द. परिसङ्ख्यार्थमिति।

दासान्तेवासिनोस्तु धर्मविशेषं वक्तुमाह—

**बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।**
**स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥ १८२ ॥**

बलात् बलावष्टम्भेन यो दासीकृतः, यश्चौरैरपहृत्य विक्रीतः,—अपिशब्दा-दाहितो दत्तश्च—स मुच्यते । यदि स्वामी न मुञ्चति तर्हि राज्ञा मोचयितव्यः । उक्तं 5 च नारदेन—"चौरापहृतविक्रीता ये च दासीकृता बलात् । राज्ञा मोचयितव्यास्ते दास्यं तेषु हि नेष्यते।।"इति। चौरव्याघ्राद्यवरुद्धस्य स्वामिनः प्राणान् यः प्रददाति रक्षति असावपि मोचयितव्यः । तदिदं सर्वदासानां साधारणं दास्यनिवृत्तिकारणम्—"यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभाग लभेत च।।" इति

अन्यापवादार्थमाह— **बलाद्दासीकृतश्चौरैरित्यादि ॥ १८२ ॥**

**दास्यकरणगृहजत्वाद्यभावेऽपि बलाद्यो दासीकृतः, चौरैर्वा स्वहस्ते दास्यत्वेन विक्रीतः,**

सुबोधिनी

अथ मूलमवतारयति—दासान्त इति । अपिशब्दादाहितो दत्तश्चेति— **चौरैरित्यनुवर्तते। चौरैराहितो दत्तश्चेत्यर्थः—स्वाम्याहितादिविषय उत्तरत्राभिधास्यमानत्वात्।** यदीति—**बलाच्चौरक्रयादिना वा य स्वामीव स इत्यर्थः।"भक्तत्यागात्"इत्यमुं मूलवचनांशं**

बालंभट्टी

मूलमवतारयति— दासान्तेवासीति । अपिशब्दादिति— **चौरैरित्यनुवर्तते, चौरैरपहृत्याऽऽहितोदत्तश्चेत्यर्थः। चः सर्वसमुच्चये इत्याह**—दत्तश्चेति । **सः सर्वविधः। अत एव स्वाम्याहितादिविषये पृथक् आह** — यदीति,—**बलादिनेति भावः । चो ह्यर्थे।** चोरेति,— **चोरेणापहृताः सन्तो विक्रीता इत्यर्थः।** हि—**यतः दास्यं तदेव। उत्तरार्धैकदेशं व्याचष्टे**—चोरेति। **उत्तरसङ्गतये आह**—तदिदमिति,—**मूलोक्तं स्वामिप्राणरक्षकत्वमित्यर्थः । यो वैषामिति—एषां दासानां पञ्चदशानां मध्ये य एव कश्चिदित्यर्थः । न केवलं तावन्मात्रं किन्त्वन्यदपीत्याह**— पुत्रेति,—**तद्भागसदृशभागमित्यर्थः । नन्वेवं भक्तत्या**

१. वि० भाक्थस्तत्त्यागान्निष्क्रया० । २. ना० स्मृ० दासत्वं तेषु ने० । ३.—५. ३८ । ४. क. ख. घ. ज. यो वैषां । ५.—५. ३०. । ६. थ द. अधुना मूलवचनमव० । ७. थ· द. न्तेवासिनोरिति । ८. त. अपीति । ९. थ. द. यदि स्वामी न मुञ्चतीति । १०. त. ना संभक्षि० ।

नारदस्मरणात् । भक्तदासादीनां प्रातिस्विकमपि मोक्षकारणमुच्यते । अनाकाल-भृतभक्तदासौ भक्तस्य त्यागाद्दासभावादारभ्य स्वामिद्रव्यं यावदुपभुक्तं तावद्दत्वा मुच्येते । आहितर्णदासौ तु तन्निष्क्रयात् यद्गृहीत्वा स्वामिना आहितो, यच्च दत्वा धनिनोत्तमर्णान्मोचितः तस्य निष्क्रयात्सवृद्धिकस्य प्रत्यर्पणान्मुच्यते । नारदेन
5 विशेषोऽप्युक्तः—"अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्।संभक्षितं यद्दुर्भिक्षे न तच्छुद्ध्येत कर्मणा॥" "भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते।" "आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत्॥""ऋणं तु सोदयं दत्वा ऋणी दास्यात्प्रमुच्यं-

स मोक्तव्यः । नात्र क्रेतुर्दोषप्रसङ्गः । यस्यापि हि कारणमस्ति सोऽपि हि स्वामिनः प्राण-

सुबोधिनी

व्याचष्टे—भक्तदासादीनामित्यादिना । सम्भक्षितमिति[1]— दुर्भिक्षे यत् भक्षितं न तत् कर्मणाशुद्ध्येत। यदीयं भक्तमुपभुङ्क्ते तदीयव्यापारकरणमात्रेण न शुद्धिर्दास्यान्न निर्मुक्तिः, अपि तु तत्कर्मकरणेन गोयुगदानेन च शुद्धिरित्यर्थः । अयमेव[2] याज्ञवल्क्योक्तेर्विशेष इति ज्ञेयम्। प्रतिशीर्षकदानेनेति-तुल्यव्यापारेण पुरुषान्तरदानेन मुच्येरन्।कर्मणि स्वसदृशपुरुषा-

बालंभट्टी

गादित्यादि निष्फलमत आह—भक्तेति,—आदिशब्दः प्रकारे; तेषां केषाचिदित्यर्थः। अत एवोक्तक्रमेणाऽऽह—अनाकालेति । भक्तत्यागो मुक्तिदिनादारभ्य न विवक्षितस्तस्य तत्राहेतुत्वादत आह—दासभावादिति । तस्य—धनस्य। निरर्थमाह—सवृद्धीति । सामान्यार्थस्य प्रकरणात् कृधातोर्विशेषपरत्वमित्याह—प्रत्येति । विशेषोऽपीति—अनाकालभृतांशमात्रे इति भावः।संभक्षितमिति—दुर्भिक्षे यत्संभक्षितं तत् कर्मणा न शुद्ध्यतेत्यर्थः। यदीयमुपभुक्तं तदीयव्यापारेणमात्रेण शुद्धिर्न दास्यान्न निर्मुक्तिः;किंतु तत्कर्मकरणेन गोद्वयदाने न च शुद्धिरिति यावत्। अयमेव मूलतो विशेष इति बोध्यम्। भक्तस्येति—प्रागुक्त एवार्थः। सद्यः—तत्कालमेव न तु पूर्ववदन्यदानापेक्षेति भावः। धनं सोदयमित्यस्यापकर्षः। प्रमुच्यते इत्यस्यानुषङ्गः। "स्वामीयद्येव नोद्धरेत्" इति पाठः। यदि स्वामी नैवोद्धरेत्—तदा आहितोऽपि सोदयं धनं दत्त्वा दास्यात् प्रमुच्यते इत्यर्थः। यद्येनमुद्धरेदिति पाठे तत्र तत्संमतिं विना नैव मुक्तिरिति बोध्यम् । ऋणदासे आह-—ऋणं त्विति ।

१ थ. तं यद्दुर्भिक्ष इति । २. त. व च विशेषो या० ।

ते ।" इति॥ तथा 'तवाहम्' इत्युपगतयुद्धप्राप्तपणजितकृतकवडवाहृतानां च प्रातिस्विकं मोचनकारणं तेनैवोक्तम्— "तवाहमित्युपगतो युद्धप्राप्तः पणे जितः । प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥" "कृतकालव्यपगमात्कृतकोऽपि विमुच्यते ।" "निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः ।" इति । दासेन सह संभोगनिरोधादित्यर्थः । तदेवं गृहजातक्रीतलब्धदायप्राप्तात्मविक्रायिणां स्वामिप्राणप्रदानतत्प्रसादरूपसाधारणकारणव्यतिरेकेण मोक्षो नास्ति—विशेषकारणानभिधानात् । दासमोक्षश्चानेन क्रमेण कर्तव्यः—"स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः । स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥ साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत् । अदास इत्यथोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत् ॥" इति तेनैवोक्तम् ॥ १८२ ॥

संशयात् स्वप्राणत्यागनिश्चयावष्टम्भेन मोक्षयित्वा दास्यान्मुच्यते । यस्तु भाक्तः भक्तदासः तत्त्यागान्निष्क्रयाद्वा मुच्यते । अपि शब्दात्स्वामिप्रसादादिपरिग्रहः ॥ १८२ ॥

## सुबोधिनी

न्तरं दत्त्वा मुच्येरन्नित्यर्थः । "निग्रहात् बडवायास्तु" इत्यस्य तात्पर्यमाह— दासेनेति । तेन चोक्तमिति—तेन नारदेन ॥ १८२ ॥

## बालंभट्टी

तथा—किंच। क्रमेणाऽऽह —तवाहमित्यादितानां च —तेषामपि।तेनैव—नारदेनेव।प्रतीति—प्रतिनिधिः प्रतिशीर्षपदार्थः । तुल्यं कर्म यस्य तेन तुल्यव्यापारेण —पुरुषान्तरदानेनेत्यर्थः कर्मणि स्वतुल्यपुरुषान्तरं दत्त्वा मुच्येरन्निति यावत् । निग्रहादित्यस्यार्थमाह—दासेन सहेति,—वडवाया इति शेषः।वडवा दासी स्वामिकृतादिति भावः।प्रागुक्तफलितं प्रागुक्तमेवोपसंहरन्नाह—तदेवमिति । तत्—तस्मात्—उक्तप्रकारेणेत्यर्थः । क्रमेणाऽऽह—गृहेति। स्वामिप्राणप्रदत्वमुपलक्षणमित्याह—तत्प्रसादेति,—स्वामिप्रसादेत्यर्थः । स च तथा वाऽन्यथा वेति भावः । यद्वा स्वामिप्राणप्रदत्वस्य साक्षान्मोचने कारणत्वाभावादाह—तदिति,—तेन यस्तत्प्रसाद इत्यर्थः । तन्मोचने विधिमाह—दासेति । अनेन—वक्ष्यमाणेन । स्वं—स्वीयम् । तस्य—दासस्य । स्कन्धात् सजलं कुम्भमादायाऽसौ स्वामी भिन्द्यात् भूमावित्यर्थः । त्रिरिति—पूर्वान्वयि । तेनैव—नारदेनेव यत इति शेषः ॥ १८२ ॥

---

१.—५. २१, २६, २२, २३. । २. ख. यथा तवा० । ३. ना० स्मृ० ध्वजप्रा० । ४. स्मृ० मुच्यते तु० । ५.—५. २४, २३, २७. । ६. ना० ५, ४२, ४३. । ७. थ. द. यर्थमाह—दासेन सहेति । ८. थ. इद प्रतीकं नास्ति ।

प्रव्रज्यावसितस्य तु मोक्षो नास्तीत्याह—

**प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।**

प्रव्रज्या संन्यासः ततोऽवसितः प्रच्युतः अनभ्युपगतप्रायश्चित्तश्चेद्राज्ञ एव दासो भवति । मरणमेव तद्दासत्वस्यान्तो नान्तरा प्रतिमोक्षोऽस्ति ॥ १८२ ॥

5 वर्णापेक्षया दास्यव्यवस्थामाह—

**वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १८३ ॥**

ब्राह्मणादीनां वर्णानामानुलोम्येन दास्यम्—ब्राह्मणस्य क्षत्रियादयः, क्षत्रियस्य वैश्यशूद्रौ, वैश्यस्य शूद्र इत्येवमानुलोम्येन दासभावो भवति; न प्रातिलोम्येन।स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापि दासत्वमिष्यत एव; यथाऽऽह नारदः—

एवं दास्यान्निर्मोचनप्रायम्; अपवादः—

**प्रव्रज्यावसित इत्यादि ॥ १८३ ॥**

प्रव्रज्य प्रतिनिवृत्तो राज्ञो दासः स्यात् । न चात्र स्वामिप्राणरक्षणेनापि मोक्षः । ब्राह्मणोऽपि प्रव्रज्यावसितो राज्ञो दासः स्यात् प्रातिलोम्येनापि; अतोऽन्यत्र वर्णानामानुलोम्येन दास्यम्।यथा, "मोक्षितो महतश्च वर्णात्" इत्येवमादौ न प्रातिलोम्येन प्रत्येतव्यं,

## बालंभट्टी

अवशिष्टगतिमाह—प्रव्रज्येति । तुः वैलक्षण्ये । एवं सति प्रायश्चित्तविध्यानर्थक्यापत्तेराह—अनभ्युपेति,—तथासति तु पुनस्तस्य प्रव्रज्यैवेति भावः । एवेनान्यव्यवच्छेदः। अवतरणार्थमेव प्रतिपादयन्नामेत्यस्यार्थमाह—मरणमेवेति । अन्तो—मोक्षः। अन्तरा—मध्ये जीवनदशायाम्[1] । प्रातमोक्षः—तत्प्रतिपक्षभूतो मोक्षः । एतेन आसमन्तात् मरणमेवान्तो यस्स एव तथेति[2] स्वार्थे कनितिसूचितम् ॥ १८२ ॥

दासभावः दासत्वम्। प्रतिलोमशब्दो धर्मपरः। तृतीयान्तात्तसिरित्याह —न प्रतीति। नन्वेवं मूलस्योक्तलक्षणविरोधोऽत आह—स्वधर्मेति । पुनस्तु निषेधशेषमाह—

१. ख अन्यस्मिन् काले न मो० । २. फ. ति विनयादित्वात् स्वार्थे हिमति सू० (?) ।

"वर्णानां प्रातिलोम्येन दासत्वं न विधीयते। स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता॥" इति॥ १८३॥

अन्तेवासिधर्मानाह—

**कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे।**

**अन्तेवासी गुरुप्राप्तभोजनस्[2]तत्फलप्रदः॥ १८४॥** 5

अन्तेवासी गुरोर्गृहे कृतकालं 'वर्षचतुष्टयमायुर्वेदादिशिल्पशिक्षार्थं त्वद्गृहे वसामि' इति यावदङ्गीकृतं तावत्कालं वसेत् यद्यपि वर्षचतुष्टयादर्वागेव लब्धापेक्षितशिल्पविद्यः। कथं निवसेत ? गुरुप्राप्तभोजनः—गुरोः सकाशात् प्राप्तं भोजनं येन

स्मृत्यन्तराच्च दासत्वमिति तानि गृहजत्वादीनि दास्यनिर्मोचनप्रकाराश्चान्वेष्याः। सर्वथा प्रतिलोम्येन दास्याभाव इति स्थितम्॥ १८३॥

यत्र पारितोषिकमुभयोरनुमते दास्यमन्यच्चातः तथैव कर्तव्यं यतश्चैतदेवमतः

**कृतशिल्पोऽपि निवसेत्कृतं कालं गुरोर्गृहे इत्यादि॥ १८४॥**

शिल्पशिक्षणार्थं प्रतिपन्नशिष्यभावोऽन्तेवासी; स यदा परिभाष्यो 'वदं तत्कालं त्वद्गृहे मया शिल्पविद्या शिक्षणीया; वासितव्याम्' इत्यास्ते, अन्तराले च कृतविद्यः स्यात्, तदाऽपि हि कृतं पारिभाषिकं कालं गुरोर्गृहे निवसेत्। गुरुणाऽपि च तस्य भोजनपरिधानादिकं देयम्। यच्चासौ शिल्पेनार्जयेत् तद्गुरोरेवार्पयेदित्यवसेयम्॥ १८४॥

## सुबोधिनी

दारवद्दासतेति—यथाऽऽनुलोम्येनैव विवाहो न प्रातिलोम्येन, तथा दासत्वमपीत्यर्थः॥ १८३॥

## बालंभट्टी

स्वधर्मेति। एवं निषेधमुक्त्वा विधिमाह—दारवदिति,—यथा आनुलोम्येनैव विवाहो न प्रातिलोम्येन, तथा दासत्वमपीत्यर्थः॥ १८३॥

अन्ते इति—एवं दासधर्मानुक्त्वेत्यादिः। कृतेति—तद्विशेषणार्थं पूर्वशेषमाह—यद्यपीति। सर्वशिल्पग्रहे कालाद्यभावादाह—अपेक्षितेति। तत्र प्रकारजिज्ञासामाह—कथमिति।

१.—५. ३९.। २. वि० नं तत्फ०।

स तथोक्तः, तत्फलप्रदः—तस्य शिल्पस्य फलमाचार्याय प्रददातीति तत्फलप्रदः,–एव-भूतो वसेत् । नारदेन विशेषोऽप्यत्र दर्शितः—"स्वशिल्पमिच्छन्नाहर्तुं बान्धवाना-मनुज्ञया । आचार्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम् ॥ आचार्यः शिक्षयेदेन स्वगृहे दत्तभोजनम् । न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत ॥ शिक्षयन्तमसदुष्ट य आचार्यं परित्यजेत् । बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥ शिक्षितोऽपि कृत कालमन्तेवासी समाप्नुयात् । तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥ गृही-तशिल्पः समये कृत्वाऽऽचार्यं प्रदक्षिणम् । शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तते ॥" इति । वधशब्दोऽत्र ताडनार्थः—दोषस्याल्पत्वात् ॥ १८४ ॥

॥ इत्यभ्युपेत्याशुश्रूषाख्य विवादपदम् ॥

## सुबोधिनी

स्वशिल्पमिच्छन्निति—स्वजातिविहितं शिल्पमित्यर्थः ॥ १८४ ॥ इति भट्टविश्वे-श्वरविरचितायां सुबोधिन्याम् अभ्युपेत्याशुश्रूषाख्यं विवादपदम् ॥

## बालभट्टी

फल—भृतिम् । स्वशिल्पमिति—बान्धवानां भ्रात्रादीनां आज्ञया स्वस्वजातिविहितं शिल्पं ग्रहीतुमित्याद्यर्थः । अन्ते—अन्तिके । एवं तद्धर्ममुक्त्वा आचार्यधर्ममाह—आचा-र्य इति । पुनस्तद्धर्ममाह—शिक्षयन्तमिति । बलादिति—तद्बान्धवैराज्ञयेति भावः । अत एवाऽऽह—वधेति । शिक्षितोऽपीति—कृतकालात्प्रागिति भावः । समेति—तन्नि-कटे समापयेदित्यर्थः ।तत्र—तद्गृहे। समये—अतीत सति।प्रदाक्षिण सप्रदक्षिणं अर्श आद्यज-न्तम् यथाश्रुत वा । आचार्यप्रदक्षिणामिति पाठान्तरे शक्तितश्चान्विति पाठः । एवमाचार्यं यथाशक्ति अनुमान्य तोषयित्वा स्वगृहं प्रति परावर्त्य आगच्छतीत्यर्थः । ताडेति—दण्डा-दिकृतेत्यर्थः ॥ १८४ ॥ इत्यभ्युपेत्याशुश्रूषाख्य विवादपदम् ॥

१. ना० न्तमदुष्टं य आचार्यं संप० । २. —५ १६—२०. ।

# अथ संविद्व्यतिक्रमप्रकरणम् १५

संप्रति संविद्व्यतिक्रमः कथ्यते। तस्य च लक्षणं नारदेन व्यतिरेकमुखेन द-र्शितम्—"पाषण्डिनैगमादीनां स्थितिः समय उच्यते। समयस्यानपाकर्म तद्विवाद-पदं स्मृतम्॥" इति। पारिभाषिकधर्मेण व्यवस्थानं समयः, तस्यानपाकर्माव्यतिक्रमः परिपालनं तद्व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः।

तदुपक्रमार्थं किञ्चिदाह—

5

**राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।**
**त्रैविद्यं वृत्तिमद्ब्रूयात्स्वधर्मः पाल्यतामिति॥ १८५॥**

---

परिभाषितस्याऽन्यथान्यथाकरणप्रसङ्गेन भूयस्समयानपाकरणार्थं समूहक्रियामुपोद्घातत्वेनाऽऽह—राजा कृत्वा पुरे स्थानमित्यादि॥ १८५॥

सुबोधिनी

"पाषण्डिनैगमादीनाम्" इति[3] नारदोक्तं व्याचष्टे—पारिभाषिकेति। पूर्वं व्यतिरेकमुखेन दर्शितमित्युक्तम्। तद्दर्शयति— तद्व्यतिक्रम्यमाणमिति। अयमाशयः— "समयस्यानपाकर्म" इत्यन्वयमुखेन संविद्व्यतिक्रमाख्यविवादपदस्य प्रतिपक्षरूपमभिधाय तद्विवादपदं स्मृतमित्यभिधानादुक्तव्यतिरेकरूपं विवादपदमिति व्यतिरेकाभिधानमिति॥

मूलमवतारयति[6]— तदुपक्रमेति॥ १८५॥

बालंभट्टी

संप्रतीति—अङ्गीकारत्यागस्य पूर्वमत्र सत्त्वेन तत्प्रसङ्गादिति भावः। आदिना श्रेण्यादित्रैविध्यात् घोषग्रहणम्। अस्यार्थमाह—पारीति—धर्मशास्त्रपरिभाषाकृत्यर्थः। एतेन तत्र स्थितिशब्दो विशेषपर इति सूचितम्। तस्यार्थमाह—परीति। यद्यपि तच्छब्दस्य प्रक्रान्तपरामर्शित्वात् परिपालनस्यैव विवादपदत्वं प्राप्नोति, तथाऽपि बाधात्तदसंभवः। कर्मेत्यन्तेनान्वयमुखेन संविद्व्यतिक्रमाख्यविवादपदस्य प्रतिपक्षभूतमुक्त्वा तद्विवादपदं स्मृतमित्युक्तम्। तदाह—तद्व्यतीति॥

मूलमवतारयति—— तदु-

१—१० १.। २. क. व्यवहारप०। ३—१०. १.। ४. द. इत्येतन्नारदवचनं व्या० ४. थ. द. कधर्मेणेति। ५. थ. द. इदमत्राकृतम्। ६. थ. द. लवचनमवतारयति—तदुपक्रमार्थमिति। ७. प. ब. र्वत्वस०।

राजा स्वपुरे दुर्गादौ स्थानं धवलगृहादिकं कृत्वा तत्र ब्राह्मणान् न्यस्य स्थापयित्वा तद्ब्राह्मणव्रातं त्रैविद्यं वेदत्रयसंपन्नं वृत्तिमद्भूहिरण्यादिसंपन्नं च कृत्वा स्वधर्मो वर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितो भवद्भिरनुष्ठीयतामिति तान् ब्राह्मणान् ब्रूयात् ॥ १८५ ॥

5 एवं नियुक्तस्तैर्यत्कर्म कर्तव्य तदाह—

**निजधर्माविरोधेन यस्तु सामयिको भवेत् ।**

**सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ १८६ ॥**

श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेव-

यदुक्तं—"तत्र दुर्गाणि कुर्वीत जनकोशात्मवृद्धये।" इति, तद्गुणविधानायैवायमारम्भः । राजा कृत्वा पुरे दुर्गे स्थानस्थलीं भाविकालसंरक्षणार्थं ब्राह्मणान्न्यस्य समुदायादेव नावस्थाप्य त्रैविध्यं ऋग्यजुस्सामपारगं सदाचारब्राह्मणात्मकं वृत्तिमत्कृत्वा ब्रूयात् 'स्वधर्मः पाल्यताम्' इति। वर्तनहेतुः वृत्तिः तदुक्तं—"वृत्तिमद्ग्रामग्रहक्षेत्रादयः" निध्यादिस्थापितमर्थं दत्त्वेत्यर्थः। स्वधर्मो वर्णाश्रमस्थित्यव्यभिचारः। राज्ञश्चान्यथा वृत्तिम् उपदेशेन सन्मार्गावतरणम्। स्पष्टमन्यत् ॥ १८५ ॥

किंच—**निजधर्माविरोधेन यस्तु सामयिको भवेदित्यादि ॥ १८६ ॥**

श्रुतिस्मृत्युक्तो निजधर्मः, तदविरोधेनार्थाद्वा गुणः तदनुगुणो वा यो हि सामयिकः स्वपरिभाषाकृतो भवेत; यथोक्तं "राज्ञा प्रयत्नेन सम्यक् ग्रहणीयः धर्मो राजकृतश्च यः ।

## बालंभट्टी

पेति। प्रत्यासत्तेराह—स्वेति। नपुंसकत्वोपपत्तये बहुवचनलब्धं तत्पदार्थमाह—ब्राह्मणेति। त्रैविद्यत्वादेरन्यनः सिद्धौ राजनियोज्यत्वासंभवादाह—कृत्वेति,—शेषोऽयं कृत्वा चेत्यर्थः । अत एव बृहस्पतिः—"वेदविद्यापरान् विप्रान् श्रोत्रियानग्निहोत्रिणः । आहूय स्थापयेत्तत्र निष्ठां वृत्तिं प्रकल्पयेत् ॥ अनाच्छेद्यकरास्तेभ्यः प्रदेया गृहभूतयः ।" इति । स्वार्थमाह—वर्णेति,—बहुव्रीहिः । धर्मार्थमाह—श्रुतीति ॥ १८५ ॥

तैः—ब्राह्मणैः। निजेत्यस्यार्थः—श्रौतेति—वर्णाश्रमनिमित्तकेत्यादिः । समयात्—

१. क. जातं । २. २ आ० ३२१ । ३. फ. प्रदद्याद्गृहभूमयः । ४.—१७ २—३. ।

गृहपालनादिरूपः सोऽपि यत्नेन पालनीयः। तथा राज्ञा च निजधर्माविरोधेनैव सामयिको धर्मो 'यावत्पाथिकं भोजनं देयमस्मदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीयाः' इत्येवंरूपः सोऽपि रक्षणीयः॥ १८६॥

एवं समयधर्मः परिपालनीय इत्युक्त्वा तदतिक्रमादौ दण्डमाह—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः। 5
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥१८७॥

यः पुनर्गणस्य ग्रामादिजनसमूहस्य संबन्धि साधारणं द्रव्यमपहरति, संवित्समयस्तां समूहकृतां राजकृतां वा यो लङ्घयेदतिक्रामेत्तदीयं सर्वं धनमपहृत्य स्वरा-

---

यथैव स्वनिवेशितस्थाने तथैव राजान्तरकृतस्थनान्तरेष्वपि ब्रह्मशालानिवेशयात्रोत्सवादिकः। तथा च नारदः— "यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः। यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा॥" इति। धर्मो राजकृत इत्यत्र पुनर्धर्मवचनं न राजान्तरकृतत्वात् पालनीयं किं तर्हि धर्मानुगुण्येन धर्मत एवेत्यभिप्रायः। तथा च नारदः समूहधर्मानुपसंहरन्नाह—"दोषवत् करणं यत्स्यादनाम्नायप्रकल्पितम्। प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत्॥" इति॥ १८६॥

पालनव्याजेन गणद्रव्यं हरेद्यस्तु इत्यादि॥१८७॥

यो गणद्रव्यं हरेत् धर्माविरोधिनीं संविदं परिभाषां समूहकृतां च लङ्घयेत्, तमपहृत्य

---

बालंभट्टी

पारिभाषिकधर्मेण व्यवस्थानात्। अपिना निजधर्मसमुच्चयः। एवमग्रेऽपि। तथा—तद्वत् धर्म इति—कृत इति शेषः।यावादिति—वीप्सायामव्ययीभावः॥ १८६॥

धर्मः—सोऽपि। आदिना—गणद्रव्यहरणग्रहणम्। पुनः—तु। आदिना — देशः। अत एवाऽऽह— साधेति। दण्डबाहुल्यादाह—

---

१. क. च कृतोनि॰। २. क. ले। ३. वि॰ राजावि॰। ४. क. राज्ञा कृ॰। ५. क, क्रमे॰। ६.—१०. ३.। ७.—१०. ७.।

ष्ट्राद्विप्रवासयेन्निष्कासयेत्[1] । अयं च दण्डोऽनुबन्धाद्यतिशये द्रष्टव्यः । अनुबन्धाल्पत्वे तु "यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् । विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥ निगृह्य दापयेदेनं समयव्यभिचारिणम् । चतुः सुवर्णं षण्णिष्कं शतमानं च राजतम् ॥"[2] इति मनुप्रतिपादितदण्डानां निर्वासनचतुःसुवर्णषाण्णिष्कशत-
5 मानानां चतुर्णामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः ॥ १८७ ॥

सर्वस्वं राष्ट्राद्राजा विप्रवासयेत् । तच्चापहृत्य समूहायैवार्पयेत् न तु स्वयं गृह्णीयात् । कृत्वेति वचनात् कर्तैव राजा न ग्रह्णीतेति गम्यते । स्वायंभुवेऽप्येवमभिप्रायः प्रतिषेधः—"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् । राष्ट्रात्त्वेनं बहिष्कुर्यात्समग्रधनमक्षतम् ॥" इति । अतस्समूहार्पणमनवद्यम् । एवमन्यत्राऽपि समूहार्थं दण्डनादि योज्यम् । नन्वयम् भिन्नाभिप्रायपुरुषाधीनत्वात् समूहधर्मो दुःश्लिष्ट एव। मैवं—कार्यव्यपेक्षया एकाभिप्रायत्वोपपत्तेः ॥ १८७ ॥

## सुबोधिनी

अनुबन्धेति[3]--अनुबन्धो दोषोऽपराध इति यावत् ॥१८७॥

## बालंभट्टी

अयं चेति । अनुबन्धः — दोषः अपराध इति यावत् । आदिना जात्यादिपरिग्रहः । एवमग्रेऽपि।ग्रामदेशशब्दौ तत्स्थजनबोधकौ जघन्यवृत्त्या । सङ्घो वणिगादिसमूहः।'इदमस्माभिः कार्यं परिहार्यं वा'इत्येवंरूपं संकेतं सत्यादिशपथेन कृत्वा तन्मध्ये यो नरो लोभादिनाऽतिक्रमेदित्याद्यर्थः। पक्षान्तराण्याह—निगृह्येति,—निबध्येत्यर्थः सम्विद्व्यतिक्रमकारिणम्। चतुरित्यादि समाहारद्विगुः चतुःसुवर्णानिति पाठान्तरम् । राजतं शतमानं च विंशत्यधिकरत्तिकाशतत्रयपरिमितं रजतम् । निर्वासनेति— सर्वस्वहरणाभावात् केवलनिर्वासनेत्यर्थः।चतुरिति—सुवर्णाश्चत्वारः। षण्णिष्कामिति—शतेति[4]—राजतेत्यादिः । इदं त्रयं विषयलाघवगौरवापेक्षया व्यस्तं समस्तं वेति तु तद्व्याख्यातारः ॥ १८७ ॥

---

१. क. ग. निः कास० । २.—८. २१९, २२०. । ३. थ. द. न्धाद्यतिशय इति । ४. फ. रः । निष्कं सुवर्णाश्चत्वारः षण्निष्कमितं शतेति (?) ।

इदं च तैः कर्तव्यमित्याह——

**कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।**

गणिनां मध्ये ये समूहहितवादनशीलाः तद्वचनमितरैर्गणानामन्तर्गतैरनुसरणीयम् ॥ १८७ ॥

अन्यथा दण्ड इत्याह——

**यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥१८८॥**

यस्तु गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी स राज्ञा प्रथमसाहसं दण्डनीयः ॥ १८८ ॥

---

किंच **कर्तव्यं वचनं सर्वैस्समूहहितवादिनः।** समुदायिनोऽन्यस्य वा । **यस्तत्र विपरीत इत्यादि ॥ १८८ ॥**

राज्ञा समूहायैवेत्यर्थः । महता हि प्रयत्नेन राज्ञा समूहधर्मः पालनीयः । धर्माभिवृद्ध्या समूहस्य राजोपकारित्वात् ॥ १८८ ॥

---

## सुबोधिनी

राज्ञेति——अस्मिन् ग्रन्थे यच्छब्दोपादानात् स इति तच्छब्दोऽप्यर्थसिद्ध इति स इति शब्दो नोपात्तः। शेषं सुबोधम्॥ १८८॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां संविद्व्यतिक्रमप्रकरणम् ॥

## बालंभट्टी

इदंच—इदमपि। तैः—ब्राह्मणैः। गणिनां——समूहिनाम्। एवमग्रेऽपि। सर्वैरित्यस्य प्रकृतार्थमाह—इतरैरिति। अनतिप्रसङ्गायाऽऽह—गणान्तर्गतैरिति । अन्यवचनस्य अन्यकर्तृककरणसंभवादाह—अन्विति १८७ ॥

अन्यथा—तदननुसरणे। तत्रेत्यस्यार्थो—गणिनामिति। विपेर्त्यस्यार्थः—समूहेति। प्रतिबन्धेति—प्रतिषेधेति पाठान्तरम्। राज्ञेति स इति मौल एवाऽऽदिः । यच्छब्दोपादानेन तस्यासिद्धत्वात्तु तदनुक्तिरिति भावः। दममित्यस्यार्थः—साहसमिति ॥ १८८ ॥

---

१. थ. दं. प्रथमं साहसमिति । २. प. ब. विप्रेत्य० (?) ।

राज्ञा चेत्थं गणिषु वर्तनीयमित्याह—

समूहकार्य आयातान्कृतकार्यान् विसर्जयेत् ।
स दानमानसत्कारैः पूजयित्वा महीपतिः ॥ १८९ ॥

समूहकार्यनिर्वृत्त्यर्थं स्वपार्श्वं प्राप्तान् गणिनो निर्वर्तितात्मीयप्रयोजनान् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत् ॥ १८९ ॥

यतश्चैतदेवमतः समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ।

क्षिप्रं कार्यान्तराणि परिहाप्यापीति शेषः ।

स दानमानसत्कारैः पूजयित्वा महीपतिः ॥१८९॥

ननु च परस्वत्वापात्तिपर्यन्तत्वाद्दानस्य समूहिनां च प्रत्येकं स्वत्वायोग्यत्वात् व्यतिरिक्तस्वत्वापत्तिक्षमसमूहलक्षणार्थाभावात् समूहदानमनुपपन्नमेव। अतएव च गणद्रव्यं प्रार्थ्यमाना वक्तारो भवन्ति 'नेदमद्याप्यस्मदीयं भवति' इति । तथा चर्त्विजामपि न परिषदं प्रत्युत्सर्गं इष्यते । अतोऽयमुत्सर्गमात्रे गौणो दानव्यपदेश इति केचित् । तथा च सति तु समूहद्रव्यहरणे न दोषः स्यात्।इष्यते च दण्डदर्शनात्।अतो वक्तव्यमेतत्।तत्रान्ये पण्डितम्मन्याः पाषण्डादिवत् दृष्टप्रयोजनान्येव दण्डादिवचनानीति वर्णयन्ति। तथाऽपि च धर्मार्थस्समूहदानादिव्यवहारोऽनालम्बन एव स्यात्। अत्रोच्यते। सत्यं समुदायिनां स्वत्वाभावः। समुदायस्य तु स्वत्वसंबन्धः केन वार्यते, यस्तु व्यतिरिक्तः समुदायो नेत्युक्तं तथैव तत्।समुदायिन एवैककार्यावच्छेदनेतरेतरापेक्षास्समुदायतां प्रतिपद्यन्ते । शक्यते चैवमेकैकस्य इतरेतरापेक्षस्य स्वत्वसंबन्ध इति वक्तुम्। न चैवंभूतानां दानचोदना नास्ति।गवादीनामविभक्तदक्षिणावचनादन्यत्र बहूनामपि दानसंबन्ध इति गम्यते । ब्राह्मणाय च दानं चोदितं

---

बालंभट्टी

समूहकार्ये इति—सति सप्तमी तथा च निमित्तत्वं फलितम्। कार्यशब्दश्च तन्निष्पत्तिपरः तदाह—कार्यनिवृत्त्यर्थमिति,—तेनोभयथार्थान्तरनिरासः। प्रकृतत्वादाह—स्वेति।कृतेत्यस्यार्थो—निवर्तितेति।मानः—अभ्युत्थानादिकृतः। सत्कारः—अर्घ्यपाद्यादिकृतः। स महीपतिरित्यन्वय इत्याह—स राजेति। पूजेत्यस्य तात्पर्यार्थे मुख्याभावादाह —परीति ॥ १८९ ॥

---

१. फ. फलति । २. प. ब. परम् । ३. फ. परेति ।

समूहदत्तापहारिणं प्रत्याह—

**समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।**
**एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥ १९० ॥**

समूहकार्यार्थं महाजनैः प्रेरितो राजपार्श्वे यवसहिरण्यादिकं लभते तदप्रार्थित एव महाजनेभ्यो निवेदयेत् । अन्यथा लब्धादेकादशगुणं दण्डं दापनीयः॥१९०॥ 5

एवंप्रकाराश्च कार्यचिन्तकाः कार्या इत्याह—

न च सापेक्षत्वे न देयमिति । न चेयं स्वत्वाभिमानभ्रान्तिः—बाधानुपलम्भात् । तत्रैतत्स्यात् । सर्वसमुदाय्यसन्निधाने कथं दानोपपत्तिरिति । तदप्यसत् ग्रहीतॄणामितरेतरापेक्षाणांमेव स्वत्वयोगात् समयसामर्थ्याच्चर्त्विग्यजमानानामिव शरीरेन्द्रियमनस्साधारण्यात् प्रवसद्यजमानवच्च समयबलेन मनस्सान्निध्यात् । शास्त्रचोदितत्वाच्च—समूहस्थितेर्ऋत्विग्यजमानसाम्यमेव।यत्तु समुदायिनामनात्मीयत्वाभिधानं तन्नैरपेक्ष्याभिप्रायम्।विभागविधानाच्चार्त्विजां परिषदं प्रत्युत्सर्गो न्यायानपेक्षत्वेऽप्यव्याहत एव । ये तु समुदायिदानासंभवादृत्विजां दक्षिणाविभागं मन्यन्ते, तेषामश्वो दक्षिणेत्येवमादौ द्रव्यैकत्वेन विभागासंभवान्मूल्यदानायोगाच्च दुःश्लिष्टतैवेत्यलं प्रसङ्गेन ॥ १८९ ॥

इममेव न्यायं मनसि कृत्वाऽऽह—समूहकार्यप्रहित इत्यादि॥ १९० ॥

शास्त्रनिबन्धनत्वाच्च समूहस्थितेः

---

बालंभट्टी

समूहेति—समूहाय दत्तस्यापहारिणं मध्यस्थमित्यर्थः । समूहकार्याय प्रहितः इति सुप्सुपेति समास इत्याह—समूहकार्यार्थमिति,—तन्निष्पत्त्यर्थमित्यर्थः । प्रत्यासत्तेराह—महेति। एवमग्रेऽपि । लिङर्थो न विवक्षित इत्याह–लभते इति। विधिफलमाह—अप्रार्थित एवेति। अत एवाग्रे स्वयमित्युक्तम्। तुर्यपादार्थमाह—अन्यथेति । साकांक्षत्वादाह—लब्धादिति। एकादशगुणं एकादशभागम्—अपराधस्याल्पत्वात् ॥ १९० ॥

एवमिति—वक्ष्यमाणेत्यर्थः । चः त्वर्थे व्युत्क्रमे च । विनिगमनाविरहादाह—

---

१. क. हरणं । २. प्रहीति सु० ।

धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः ।
कर्तव्यं वचनं तेषां समूहाहितवादिनाम् ॥ १९१ ॥

श्रौतस्मार्तधर्मज्ञा बाह्याभ्यन्तरशौचयुक्ताः अर्थेष्वलुब्धाः कार्यविचारकाः कर्तव्याः । तेषां वचनमितरैः कार्यमित्येतदादरार्थं पुनर्वचनम् ॥ १९१ ॥

5 इदानीं त्रैविद्याना प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशन्नाह—

श्रेणिनैगमपा[1]षण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् ॥ १९२ ॥

एकपण्यशिल्पोपजीविनः श्रेणयः; नैगमाः ये वेदस्याऽऽप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः ; पाषाण्डिनो ये वेदस्य प्रामाण्यमेव नेच्छन्ति 10 नै[2]ग्नाटकसौगतादयः ; गणो व्रातः आयुधीयादीनामेककर्मोपजीवि

---

वेदज्ञाश्शुचयोऽलुब्धाः भवेयुः कार्यचिन्तकाः । स्मृत्यन्तराच्चतुःषष्ट्यादिसंख्यायुक्ताः । कर्तव्यं वचनं तेषामित्यादि ॥ १९१ ॥

सर्वैस्समुदायिभिरिति शेषः ॥ १९१ ॥

योऽयं ब्राह्मणानां समूहविधिरुक्तः श्रेणिनैगमपाषण्डीत्यादि॥१९२॥

---

बालंभट्टी

श्रौतेति।एवमग्रेऽपि ।धर्मलुब्धत्वस्य गुणत्वादाह—अर्थेष्विति।चिन्तनमात्रस्यानुपयोगादाह—विचेति। भवेयुरित्यत्र ण्यर्थान्तर्भाव इत्याह—कर्तव्या इति । अत एवावतरणमपि सङ्गतम्। तेषामिति—समूहेत्यादिः। प्रत्यासत्तेराह—इतरैरिति,—उक्तोऽर्थः । पौनरुक्त्यं परिहरति—आदरेति ॥ १९१ ॥

इदानीं—तदनन्तरम् । एकेति—एकाभ्यां पण्यशिल्पाभ्यामित्यर्थः । ये वेदेति—तत्राध्ययनपूर्वकानुष्ठातार इत्यर्थः । आदिना नैयायिकादयश्च । नग्नः—दिगंबरः । आयुधीयादीति—आयुधजीव्यादीनामित्यर्थः । साधारणमाह—एकेति । समानकर्मकराः कारवः

---

१. ख. पाखण्ड० । २. ख. नग्नाः ।

नामेषां चतुर्विधानामप्ययमेव विधिः—यो "निजधर्माविरोधेन" इत्यादिना प्रतिपादितः। एतेषां श्रेण्यादीनां भेदं धर्मव्यवस्थां नृपो रक्षेत्; पूर्वोपात्तां च वृत्तिं पालयेत्॥१९२॥

॥ इति संविद्व्यतिक्रमप्रकरणम् ॥

---

कर्मकरादिशिल्पिसमूहः श्रेणिः, सार्थवाहसमूहो नैगमः, गुलिकादिसमुदायः पाषण्डाः, वाणिक्समूहो गणः, हस्त्यारोहादिसमूह इत्यन्ये। पूगादिलक्षणार्थो वा गणशब्दः; तथा च नारदः—"पाषण्डनैगमश्रेणिपूगव्रातगणादिषु। संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥" इति[2]। नैगमश्चात्र ब्राह्मणसमूहः, पूगो ग्रामेयकादिसमूहः, शस्त्रकर्तृसमूहो व्रातः। किञ्च भेदश्चैषामन्योन्यं समुदायिनां वा राज्ञा रक्षणीयः। चशब्दादन्यसङ्घातराजादिविरोधिव्यवहारश्च। तथा च नारदः—"प्रतिकूलं च यद्राज्ञः प्रकृत्यपसरं च यत्। बाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत्॥ मिथः सङ्घातकरणमहिते शस्त्रधारणम्। परस्परोपतापञ्च तेभ्यो राजा निवर्तयेत्॥" इत्यादिकान्विरोधान् राजा प्रतिकुर्यात्। पूर्वकल्पितां च धर्माविरोधिनीं वृत्तिं पालयेत्। च शब्दात् स्वयं च वर्धयेदित्यभिप्रायः॥ १९२॥

---

बालंभट्टी

श्रेणयः; नानापौरसमूहा नैगमाः; प्रव्रज्यावसिताः पाषण्डिनः; गणो ब्राह्मणसमूहः; इति कल्पतरुः। एवं पदार्थानुक्त्वा वाक्यार्थमाह—एषामिति। उत्तरार्धमाह—एतेषां चेति। प्रसिद्धार्थासंभवात् प्रकृतार्थमाह—धर्मेति। पूर्वोपात्तां—पूर्वदत्ताम् अत एव नारदः—"पाषण्डिनैगमश्रेणिपूगब्राह्मगणादिषु। संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥ यो धर्मः कर्म यच्चैषामुपास्थानां विनिश्चयः। यत्तेषां वृत्त्युपादानमनुमन्येत तत्तथा॥" इति॥ १९२॥

इति संविद्व्यातिक्रमप्रकरणम्॥

१. व्य० १८६. । २.—१०. २. । ३.—१०. ४, ५. । ४. फ. र्धार्थमा० । ५.—१०. ५. ।

## अथ वेतनादानप्रकरणम् १६

संप्रति वेतनस्यानपाकर्माख्यं व्यवहारपदं प्रस्तूयते । तत्स्वरूपं च नारदेनोक्तम्—"भृतानां[1] वेतनस्योक्तो दानादानविधिक्रमः। वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्॥" इति[2]।

अस्यार्थः—भृतानां वेतनस्य वक्ष्यमाणश्लोकैरुक्तो दानादान-
5 विधिक्रमो यत्र विवादपदे तत् वेतनस्यानपाक-
र्मेत्युच्यते ; तत्र निर्णयमाह—

**गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ।**
**अगृहीते समं[3] दाप्यो भृत्यै रक्ष्य उपस्करः ॥ १९३ ॥**

गृहीतं वेतनं येनासौ स्वाङ्गीकृतं कर्म त्यजन् अकुर्वन् द्विगुणां भृतिं स्वामिने दद्यात्। यदा पुनरभ्युपगतं कर्म अगृहीते एव वेतने त्यजति तदा समं याव-

---

परिभाषाप्रसङ्गेन स्वामिकर्मकरयोः परिभाषानुसारिव्यवहारव्यभिचारे विनयं वक्तुमाह—
**गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेदित्यादि ॥ १९३ ॥**
गृहीत्वा वेतनं कर्म तुल्यं न कुर्यात् ततो गृहीतवेतनो द्विगुणमावहेद्दद्यादित्यर्थः। अगृ-

### सुबोधिनी

एवं स्मृत्यन्तरोक्तलक्षणे वेतनस्यानपाकर्माख्ये विवादपदे योगीश्वरो निर्णयं दर्शयतीत्याह-तत्रे-

### बालंभट्टी

संप्रतीति—तत्प्रसङ्गादेवेति भावः। भृतानां—भृत्यानां क्वाचित्तथैव पाठः। दानादानयोर्विधी तयोः क्रम[5] इत्यर्थः। पूर्वं नोक्तोऽस्यैवाऽऽरम्भे उक्तत्वादत आह—वक्ष्येति,—अत्रैवेति भावः। तदुक्ते शेषमाह—यत्रेति। एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादे निर्णयप्रदर्शको मूलकृदिति मूलमवतारयति—तत्रेति,—उक्ताख्यविवादपदे इत्यर्थः।आवहेदित्यस्यार्थो—दद्यादिति। तृतीयपादार्थमाह—यदेति।सर्वं वाक्यमिति न्यायेनाऽऽह—अगृही-

---

१. ख. घ. भृत्यानां ।२—६. १.। ३. वि० समं कार्यं भृत्यैः पाल्य उपस्करः । ४. थ. द. तत्र निर्णयमाहेति । ५. फ. प्रक्रम ।

द्वेतनमभ्युपगतं तावद्दाप्यो न द्विगुणम्; यद्वाऽङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्यः—"कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्।"[1] इति नारदवचनात्।भृतिरपि तेनैवोक्ता—"भृताय[2] वेतनं दद्यात्कर्मस्वामी यथाक्रमम्। आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम्॥"[3] इति। तैश्च भृत्यैरुपस्कर उपकरणं[4] लाङ्गलादीनां प्रग्रहयोक्त्रादिकं यथाशक्तया रक्षणीयम्—इतरथा कृष्यादिनिष्पत्त्यनुपपत्तेः ॥ १९३ ॥    5

---

हीते तु वेतने समं यावत्पारिभाषिकं वेतनं दद्यात्कर्म कार्यं कारयितव्यम्। सर्वकर्मकरैश्चाऽऽप्तवेतनैरुपस्कारः समर्पितो यः कर्मकारणार्थं स पालनीयः; तथा च नारदः—" कर्मोपकरणं चैषां क्रियां प्रति यदर्पितम्। आप्तभावेन तत्पाल्यं न जिह्मेन कथञ्चन ॥ कर्माकुर्वन् प्रतिश्रुत्य कार्यो दद्याद्भृतिं बलात्। भृतिं गृहीत्वा कुर्वाणो द्विगुणं भृतमावहेत॥" इति॥१९३॥

---

## सुबोधिनी

ति। भृताय वेतनं दद्यादिति—भृतो भृत्य इत्यर्थः, यथाक्रममादिमध्यावसानेष्वैच्छिकक्रमेणोक्तसमयमनतिक्रम्येति यावत्। "कर्मणो यद्विनिश्चितम्" इत्यनेन कर्मानुसारेण मध्यस्थपरिकल्पितं द्रव्यं[6] भृतिरिति भृतिस्वरूपोक्तिर्द्रष्टव्या ॥ १९३ ॥

## बालंभट्टी

तेति। एवेति तत्फलमाह—न द्वीति[7]। अत्रैव विषये पक्षान्तरमाह—यद्वाङ्गीति। असममिति छेदः तस्य बलादित्यर्थः। दद्यादिति दाप्य इत्यस्य दत्त्वा कारणीय इत्यर्थः इति भावः। प्रतिश्रुत्य–अङ्गीकृत्येति पूर्वान्वयी। कार्यः - कारणीयः। तेनैव—नारदेनैव। तुर्यपादेनेति भावः।भृतायेति—स्वामी भृताय भृत्याय आदिमध्यावसानेषु यथाक्रमं ऐच्छिकक्रममनतिक्रम्य उक्तसमयमैच्छिकमनतिक्रम्येति यावत्। तेन क्रमेण वेतनं दत्त्वा कर्म कारयेदिति शेषः। वेतनस्वरूपमाह—कर्मण इति,— कर्मणोऽनुसारेण यन्मध्यस्थैर्निश्चितं कल्पितं द्रव्यं, तद्वेतनमित्यर्थः। तथा चानेन भृतिस्वरूपमप्युक्तम्। तुर्यपादार्थमाह—तैश्चेति। उपकरणं—तत्तत्कर्मयोग्यसामग्री।तत्र तां कृषावाह— लाङ्गेति। प्रग्रहो—रज्जुः; योक्त्रं केशादिनिर्मितम्। विधिसाधक्यायाऽऽह—इतरथेति ,—तदरक्षणे इत्यर्थः ॥ १९३ ॥

१.—६. ५. । २. ख. घ. भृत्याय। ३.—६. २.। ४. ख. उपस्कर०। ५.—६. ४, ५.। ६. त. व्यं भृतिस्व० (?)। ७. प ब. हीति।

भृतिमपरिच्छिद्य यः कर्म कारयति तं प्रत्याह—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षितां ॥ १९४ ॥

यस्तु स्वामी वणिक् गोमी क्षेत्रिको वा अपरिच्छिन्नवेतनमेव भृत्यं कर्म कारयति स तस्माद्वाणिज्यपशुसस्यलक्षणात्कर्मणो यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीयः ॥ १९४ ॥

अनाज्ञप्तकारिणं प्रत्याह—

देशं कालं च योऽतियाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ १९५ ॥

अपरिभाष्य वेतनं कर्मणि कृते यद्यपरिभाषितत्वव्याजेन स्वामी न किंचित् दातुमिच्छेत्, तत्र कथमित्यपेक्षित आह—दाप्यस्तु दशमं भागमित्यादि॥ १९४ ॥

स्वयं च न दद्यादिति शेषः । अपरिभाष्य वाणिज्यं पाशुपाल्यं कृषिं वा यः करोति तस्य तदुत्पन्नोपचयदशमभागभाक्त्वमित्यवसेयम् ॥ १९४ ॥

यथा स्वामिनाऽनिर्दिष्टकर्मकरः—देशं कालं चेत्यादि ॥ १९५ ॥

स्वाम्युक्तदेशकालादिविपर्ययेणान्यथा वा कर्मणि कृते भृतिदानं प्रति स्वामिनः स्वेछा, विनयातिरेकाच्च कर्मकरैरधिके कर्मणि कृते स्वामिना स्वेच्छयैवाधिकन्देयम् ॥१९५॥

बालंभट्टी

अपरिछिद्य—अनिश्चित्य। यः—स्वामी । वाणिज्यादिभेदात् त्रिविध इत्याह—वणिगित्यादि। लिङर्थोऽविवक्षित इत्याह——कारयतीति। सः—त्रिविधः स्वामी। तस्य साकाङ्क्षत्वादाह—तस्मादिति । वाणिज्यं च पशुश्च सस्यं चेति समाहारद्वन्द्वात् पञ्चम्यन्तात् सार्वविभक्तिकस्तसिरित्याह—वाणिज्येति । पशुसस्यशब्दौ तत्कर्मोपलक्षकावित्याह—कर्मण इति। यल्लब्धं तस्येति—अनेनासंबद्धत्वं मूले निरस्तम् ॥ १९४ ॥

कारिणं—आज्ञामुल्लङ्घ्यकारिणं भृत्यम्। कालञ्चेत्यस्य दर्पादिनोल्लङ्घयेदित्यत्रान्वयः।

१. वि. भृता । २. वि° यो यावत्कर्म° ।

यस्तु भृत्यः पण्याविक्रयाद्युचितं देशं कालं च पण्यविक्रयाद्यकुर्वन् दर्पादिनोल्लङ्घयेत्तस्मिन्नेव वा देशे काले च लाभमन्यथा व्ययाद्यतिशयसाध्यतया हीनं करोति तस्मिन् भृतके भृतिदानं प्रति स्वामिनः छन्दः इच्छा भवेत्—यावदिच्छति तावद्द्यान्न पुनः सर्वामेव भृतिमित्यर्थः। यदा पुनर्देशकालाभिज्ञतया अधिको लाभः कृतस्तदा पूर्वपरिच्छिन्नाया भृतेरधिक[1]मपि धनं स्वामिना भृत्याय दातव्यम् ॥ १९५ ॥ 5

अनेकभृत्यसाध्यकर्मणि भृतिदानप्रकारमाह—

**यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्।**
**उभयोर[2]प्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥ १९६ ॥**

यदा पुनरेकमेव कर्म नियतवेतनमुभाभ्यां क्रियमाणं उभयोरप्यसाध्यं चेद्व्याध्याद्यभिभवादुभाभ्यां अपिशब्दाद्बहुभिरपि यदि न परिसमापितं तदा यो भृत्यो 10

---

असमाप्तकर्मत्यागे तु वेतनहानिप्राप्तावपवादः—**यो यावदित्यादि॥१९६॥**

यथेच्छयेत्यर्थः। स्वाम्यपि शाठ्येनाकारयन् यथाकृतं वेतनं दाप्यः ॥ १९६ ॥

---

सुबोधिनी

यस्तु भृत्य इति—अत्रोचितं देशं कालं च दर्पादिनोल्लङ्घयेदित्यन्वयः ॥ १९५ ॥

अनेकभृत्यसाध्ये कर्मणीति—'एकेन द्वित्रादिभिर्वा मिलित्वा एतत् कर्म एतावत्या

बालंभट्टी

किं भूतो अत आह—पण्येति,—तत्रैवेत्यादिः। आदिना क्रयः। अन्यत्रा[3]ऽऽदिनाऽऽलस्यादिः। अतीयादित्यस्यार्थः—उल्लङ्घयेदिति। द्वितीयपादार्थमाह—तस्मिन्नेवेति। चो वार्थ इत्याह—वेति। प्राग्वदाह—करोतीति। तत्रेत्याद्यर्थमाह—तस्मिन्नित्यादि। तत्फलमाह—न पुनरिति,—न त्वित्यर्थः। तुर्यपादार्थमाह— यदेति,— स्वामितोऽपीत्यर्थः ॥ १९५ ॥

अनेकभृत्येति—'द्विप्रभृतिभिर्मिलित्वा एतत्कर्म एतावता भृत्या क्रियते' इति परिभाष्य क्रियमाणे कर्मणीत्यर्थः। पादत्रयस्यैकोऽर्थ इत्याह—यदा पुनरिति। आदावनेकभृत्यसाध्यकर्मस्वरूपमाह—एकमेवेति। उभयोरसाध्यं चेदित्यस्यार्थमाह—व्याध्याद्यभिभवादिति, — अन्यथाऽङ्गीकारस्यैवासम्भवापत्तेरिति भावः। तस्येति शेषे षष्ठीत्याह—

---

१.ख. भृतेरपि किमपि धनमधिकं स्वा०। २.वि० उभयोरप्यशाठ्यं चेच्छाठ्ये कुर्याद्यथाकृतम्।
३. फ. तत्राऽऽदिनाऽऽल०।

यावत्कर्म करोति तस्मै[1] तत्कृतकर्मानुसारेण मध्यस्थकल्पितं वेतनं देयं न पुनः समम्। न चावयवशः कर्मणि वेतनस्यापरिभाषितत्वाददानमिति मन्तव्यम्। साध्ये तूभाभ्यां

## सुबोधिनी

भृत्या क्रियते' इति परिभाष्य क्रियमाणे कर्मणीत्यर्थः। न पुनरिति[2]—एकस्मिन् कर्मणि पञ्चभि[3]: कर्मकरैः दशभिः पणैर्भृत्या क्रियमाणे व्याध्यादिवशात् तैः सर्वैरपि तत् कर्म न निष्पन्नं कियदेव च निष्पन्नं, तत्र प्रतिपुरुषं पणद्वयं[4] पणद्वयं विभज्य साम्येन न दातव्यम्, अपि तु तत्तत्कृतकर्मानुसारेण न्यूनाधिकं देयमित्यर्थः। एतेनैव तत्कर्मणि निष्पन्ने परिभाषितवेतनमपि स्वामिना दत्तं कर्मकरा अपि स्वस्वकृतव्यापारानुरोधेनैव विभज्य गृह्णीयुरिति गम्यते। ननु न पुनः समं देयमित्युक्त्या तत्तत्कृतकर्मानुसारेणैव[5] वेतनं देयमित्युक्तं स्यात्। तथा चैतदुक्तं भवति—अवयवशो[6] इत्येतदनुपपन्नं यतः कर्मणि नियतमेव वेतनं कर्मकरेभ्यः समुदितमेव परिभाषितं न पृथक् पृथक् परिभाषानुसारेण वेतनादानमुचितमिति; इमामाशङ्कां परिहरन्नाह[7]—न चेति। अयमाशयः[8]—यद्यपि विभज्य दानमपरिभाषितं, तथाऽपि कर्मानुसारेण दातुमुचितत्वात्[9] वचनाच्च विभज्य दीयत इति। अयं हि परिहारः सुबोध इति ग्रन्थे निबन्धकारेण न निबद्धः। साध्ये तूभाभ्यामिति—उभाभ्यामित्युपलक्षणम्—अतो बहुभिर्वा साध्ये॥ १९६॥

## बालंभट्टी

तस्मा इति। वेतनस्वरूपस्य पूर्वमुक्तत्वात् तदनुरोधेन तावत्पदार्थमाह—तत्कृतेति। तत्फलमाह—न पुनरिति,—एकस्मिन् कर्मणि पञ्चभिः कर्मकरैः दशभिः पणैः भृत्या क्रियमाणे व्याध्यादिना चाशक्तैः सर्वैरपि तत्कर्म न निष्पादितं किं तु कियदेव तत्र प्रतिपुरुषं पणद्वयं विभज्य साम्येन न देयमपि तु तत्कर्मानुसारेण न्यूनाधिकन्देयमित्यर्थः। एतेन तत्कर्मणि निष्पन्ने पूर्णे परिभाषितवेतनम् परिभाषिस्वामिदत्तं कर्मकरा अपि स्वकृतव्यापारानुरोधेनैव विभज्य गृह्णीयुरिति सूचितम्। ननु न पुनः सममित्युक्त्या तत्कृतकर्मानुसारेण वेतनदानप्राप्त्याऽवयवशो विभज्य देयमिति लब्धं, तच्चानुपपन्नं—कर्मणि समुदितनियतवेतनस्यैव परिभाषितत्वेन पृथक्पृथक् तदनुक्त्या परिभाषानुसारेण तत्र वेतनदानस्यैवौचित्यात्; अत आह—न चेति,—नापीत्यर्थः। यद्यपि विभज्य दानमपरिभाषितं, तथाऽपि व्याध्यादिना तदसमाप्तेस्तत्र दोषाभावेन कर्मानुसारेण दातुमुचितमेवेति भावः। तुर्यपादार्थमाह—साध्ये त्विति। अस्यार्थमाह—उभेति,—उभाभ्यामित्युपलक्षणं बहुभिरित्यपि

१. ख. तावत्तस्मै। २. थ. द. नस्सममिति। ३. द. ञ्चभिः पणैः (?)। ४. थ. द. 'पणद्वयं' नास्ति। ५. त. रेण देयमित्यभिहितं स्यात्। ६. थ. द. शो विभज्य दातव्यमित्येत॰। ७. थ. द. ह—अवयवश इति। ८. त. मभिप्रायः। ९. त. 'त्वात्' आरभ्य 'तूभाभ्यां' इत्यन्तं नास्ति।

कर्मणि निर्वर्तिते यथाश्रुतं यावत्परिभाषितं तावदुभाभ्यां देयं न पुनः प्रत्येकं कृत्स्न-वेतनं नापि कर्मानुरूपं परिकल्प्य देयम् ॥ १९६ ॥

आयुधीयभारवाहकौ प्रत्याह—

अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥ १९७॥ 5

न विद्यते राजदैविकं यस्य भाण्डस्य तत्तथोक्तम् ; तद्यदि प्रज्ञाहीनतया

स्मृत्यन्तरानुसाराच्छाठ्येनैव च—अराजदैविकान्नष्टमित्यादि ॥ १९७॥

## सुबोधिनी

अभ्युपेत्याशुश्रूषाख्ये विवादपदे "शुश्रूषकः पञ्चविधः" इत्युपक्रम्य "चतुर्विधः कर्मकर-स्तेषां दासास्त्रिपञ्चकाः। शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिककर्मकृत्॥" इति शुश्रूषकं पञ्चवि-धमुक्त्वा भृतकस्यैव त्रैविध्यं दर्शितम्—"उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः। अधमो भारवाही स्यादित्येवं त्रिविधो मतः॥" इति। तत्र "गृहीतवेतनः कर्म" इत्यनेन कृषीवल-भृतकं प्रति वेतनविषयेऽभिहितम् । अधुनाऽऽयुधीयभृतकभारवाहकभृतकौ प्रति विशेषं दर्शयतीत्याह—आयुधीयेति । भाण्डमिति—पात्रादिकं "सर्वमावपनं भाण्डं पात्रामत्रे

## बालंभट्टी

बोध्यम् । यथाश्रुतमित्यस्य व्याख्या—यावदिति । प्राग्वदाह—न पुनरिति ॥ १९६॥

अभ्युपेत्याशुश्रूषाख्यविवादपदे "शुश्रूषकः पञ्चविधः" इत्युपक्रम्य "चतुर्विधः कर्म-करः" इत्यादिना तस्य तत्त्वमुक्त्वा भृतकत्रैविध्यं दर्शितं—"उत्तमस्त्वायुधीयोऽत्र" इत्यनेन । तत्र "गृहीतवेतनः कर्म" इत्यनेनात्र कृषीवलभृतकवेतनविषये उक्तम् । अत एव तुर्यपादस्तत्र तथैव व्याख्यातः । सांप्रतमायुधीयभारवाहकभृतकौ प्रति विशेषं दर्शयतीत्याह—आयुधीयेति । यद्यप्यग्रे वचनव्युत्क्रमः, तथाऽपि पूर्वक्रमेण पूर्वनि-पातनियमेन वक्ष्यमाणाशयेन चैवमुक्तम् । भाण्डं — पात्रादिकम् । " सर्वमावपनं भाण्डं पात्रामत्रे च भाजनम् ।" इत्यमरः । "स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणि-

१. वि° कर्तोच। २. त. त्येति शिश्रू° (?)। ३. नां०५—२,३,२२ । ४ व्य० १९३. । ५. त. वाहकौ प्र० । ६. थ. द. धीयभारवाहकाविति । ७. त. एतदादि 'धने' इत्यन्तं नास्ति । ८. फ. ख्ये वि० । ९. प. ब. ति शे (?) । १०. ना० द्वि० ६१०.।

वाहकेन नाशितं तदा नाशानुसारेणाऽसौ तद्भाण्डं दापनीयः; तदाह नारदः—"भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः । दाप्यो यत्तत्र नश्येत्तु दैवराजकृतादृते ॥" इति । यः पुनः विवाहाद्यर्थं मङ्गलवति वासरे प्रतिष्ठमानस्य तत्प्रस्थानौपयिकं कर्म प्रागङ्गीकृत्य तदानीं 'न करिष्यामि' इति प्रस्थानविघ्नमाचरति तदाऽसौ द्विगुणां भृतिं दाप्यः—अत्यन्तोत्कर्षहेतुकर्मनिरोधात् ॥ १९७ ॥

किञ्च

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन्[2] ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ १९८ ॥

प्रक्रान्ते अध्यवसिते[3] प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति असौ भृतेः सप्तमं

कर्मकारवच्च स्वाम्यपि—प्रक्रान्ते सप्तमं भागमित्यादि ॥ १९८ ॥

सुबोधिनी

च भाजनम् ।"[4] इत्यमरः । तथा नानार्थे स एव—"स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।"[5] इति । वाहकेन[6] नाशितमिति—वाहकपदमायुधियस्याप्युपलक्षकम् ॥ १९७ ॥

बालंभट्टी

ग्धने ।" इति स एव नानार्थप्रकरणे । तत्—तादृशं भाण्डम् । वाहकेनेत्युपलक्षणमायुधीयस्यापि । नष्टमित्यत्रान्तर्भावितो ण्यर्थ इत्याह—विनाशीति । नाशानुसारेणेत्यत्र मानमाह—तदाहेति । व्यसनं—नाशम् । दोषतः—दोषेण बुद्धिहीनत्वरूपेण । तत्र—भाण्डे । अनेनोक्तार्थलाभः । उत्तरार्धार्थमाह—यः पुनरिति । वासरः-दिनम् । तदानीं—प्रस्थानलग्नवेलायाम् । द्वैगुण्ये हेतुमाह—अत्यन्तोत्कर्षेति,—विवाहादिहेतुभूतप्रस्थाननिरोधादित्यर्थः । एवं च स्वतो दोषाल्पत्वेऽपि परतो दोषबाहुल्यमिति भावः ॥ १९७ ॥

किञ्चेति—अत्रैवान्यदप्याहेत्यर्थः । प्रक्रान्ते इत्यस्य प्रकृतत्वात् प्रस्थानमेव विशेष्यम् अध्यवेति तदर्थस्तदाह—प्रक्रान्ते इति । प्रत्यासत्तेराह—भृतेरिति । स्वविरोधमेव

१.—६. ९. । २. वि० त्यजेत् । ३. क. व्यवसिते । ४. ना० द्वि० ६१०. । ५. ना० तृ० २००. । ६. त. नेति वा० ।

भागं दाप्यः। नन्वत्रैव विषये प्रस्थानविघ्नकृदित्यादिना द्विगुणभृतिदानमुक्तम्; इदानीं सप्तमो भाग इति विरोधः। उच्यते—भृत्यन्तरोपादानावसरसंभवे स्वाङ्गीकृतं कर्म यस्त्यजति तस्य सप्तमो भागः। यस्तु प्रस्थानलग्नसमय एव त्यजति तस्य द्विगुण-भृतिदानमित्यविरोधः। यः पुनः पथि प्रक्रान्ते गमने वर्तमाने सति कर्म त्यजति स भर्तेश्चतुर्थं भागं दाप्यः। अर्धपथे पुनः सर्वां दापनीयः। यस्तु त्याजकः कर्मात्य-जन्तं त्याजयति स्वामी पूर्वोक्तप्रदेशेष्वसावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दाप-नीयः। एतच्चाव्याधितादिविषयम्—"भृत्योऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्॥" इति मनुवचनात्। यदा पुनर्व्याधावपग-तेऽन्तरितदिवसान्परिगणय्य पूरयति तदा लभत एव वेतनम्—"आर्तस्तु कुर्यात्स्व-

## सुबोधिनी

भृत्यान्तरेति—आपादनं सम्पादनम्। एतच्चेति—प्रस्थाने विघ्नकृच्चेत्यारभ्य यदुक्तं, तावदित्यर्थः। एवं विषयविभागः कथमवगम्यत इत्याशङ्क्य व्याध्याद्यपीडिते मनुना दण्डान्तरविधानादित्याह—भृत इति। भृतो भृत्यः; नार्तो व्याध्यादिरहितः। अत्र "न देयं तस्य वेतनम्" इति मनुस्मरणादित्युपरितनवाक्यशेषेणान्वयः।

## बालंभट्टी

स्वस्याऽऽह—नन्विति। अत्रैव—प्रस्थानविघ्नकरणरूपे एव। भाग इत्यस्योच्यत इति शेषः। अवसरेति—तदवसरस्ततः पूर्वमेव। अत एवाध्यवसिते इति व्याख्यातम् न तु कृते इति। लग्नेति—अत एव तत्र तथैव व्याख्यातम्। द्वितीयपादार्थमाह—यः पुनरिति,—प्रक्रान्ते इत्यनुवर्तते मार्गे समाक्रान्ते इति। त्याजकोऽपि चेति व्याचष्टे—यस्त्विति। प्रत्यास-त्तेराह—पूर्वोक्तेति,—त्रिष्वित्यर्थः। एतच्चेति—प्रस्थानविघ्नकृदित्यारभ्य यदुक्तं तत् सर्वमित्यर्थः। ननु एवं विषयविभागे किं मानमत आह—भृत इति,—यो भृतः भृतिपरि-क्रीतः भृत्यः। तथा पाठ एव वा। अनार्तः—व्याध्यादिरहितः दर्पादहंकाराद्यथापरिभा-षितं कर्म न कुर्यात् स कृष्णलानि अष्टौ दण्ड्यः। गुञ्जापरिमितं सुवर्णं कृष्णलं कृष्णलानित्यप-पाठः। यावत् कर्म कृतं तस्य वेतनं च न देयमित्यर्थः। इतीत्यग्रे। अनार्ते मनुना सदण्डतद्-

१. क. भृत्यश्च०। २. ख. ग. र्वां भृतिं दाप्यः। घ. र्वां दाप्यः। ३.—८. २१५। ४. घ. व्याध्यान्तरि०। ५. थ द. न्तरापादनेति—आपादनमुपादानं सम्पा०। ६. थ. द. च्चाव्याधि-तादिविषयमिति। ७. थ. द च्चैवेत्यारभ्य यदुक्तं तदित्यर्थः। ८. थ. द. भतो नार्त इति। ९. फ. त्तेरेवाह—पू०।

स्थः सन् यथाभाषितमादितः। स दीर्घस्यापि कालस्य स्वं लभेतैव वेतनम् ॥" इति मनुस्मरणात्। यस्त्वपगतव्याधिः स्वस्थ एवाऽऽलस्यादिना स्वारब्धं कर्माल्पोनं न करोति परेण वा न समापयति तस्मै वेतनं न देयमिति; "यथाऽऽह मनुः—"यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत्। न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥" इति ॥ १९८ ॥

॥ इति वेदनादानप्रकरणम् ॥

प्रक्रान्तादिसप्तमभागादिक्रमेण त्याजकस्वाम्यपि कर्मकरेभ्यो दाप्यः। स्पष्टमन्यत्॥१९८॥

## सुबोधिनी

यस्त्वपगतव्याधिः स्वस्थ एव चेति— व्याध्युपसृष्टः पश्चान्निवृत्तव्याधिरपगतव्याधिः। व्याध्यसंसृष्टः स्वस्थ इति भेदः ॥ १९८ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां वेतनादानप्रकरणम्।

## बालंभट्टी

दानविधानादिति शेषः। आदितः—आदौ यथा उक्तं तथा कुर्यात्। स दीर्घेति—हेतौ शेषषष्ठी, चिरकालादपीत्यर्थः। अपगतेति— व्याध्युपसृष्टः पश्चान्निवृत्तव्याधिराद्यः व्याध्याऽसंसृष्ट एव द्वितीयः। आदिना दर्पग्रहणम्। वेतनमिति—किंचिच्छेषकस्य कृतस्य कर्मण इत्यादिः। सुस्थो वा स्वस्थो वेति पाठान्तरम्। तत्र स्वारब्धेत्युपलक्षणं न कुर्यादित्यपि बोध्यम्। अल्पेन कर्मणा न्यूनस्य कृतस्यापि कर्मणः वेतनं तस्य तस्मै न देयमित्यर्थः ॥ १९८ ॥ इति वेतनादानप्रकरणम् ॥

---

१.—८. २१६.। २. ख. ग. ङ. एव वाल०। ३.—८. २१७.। ४. त. यस्त्वयमिति।

# अथ द्यूतसमाह्वयप्रकरणम् १७

अधुना द्यूतसमाह्वयाख्यं विवादपदमधिक्रियते । तत्स्वरूपं नारदेनाभिहितम्—"अक्षबध्नशलाकाद्यैर्देवनं जिह्मकारितम् । पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥" अक्षाः पाशकाः, बध्नश्चर्मपट्टिका, शलाका दन्तादिमय्यो दीर्घचतुरस्राः, आद्यग्रहणाच्चतुरङ्गादिक्रीडासाधनं करितुरङ्गरथादिकं गृह्यते ; तैरप्राणिभिर्यद्देवनं 5 क्रीडा पणपूर्विका क्रियते ; तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः चशब्दान्मल्लमेषमहिषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते तदुभयं यथाक्रमेण द्यूतसमाह्वयाख्यं विवादपदम् । द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । तदुक्तं मनुना —"अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ॥" इति ॥ 10

## सुबोधिनी

अधुनेति—द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । एवमाख्या यस्मिन् विवादपदे तत् तथोक्तम् ; अप्राणिभिरक्षादिभिः साध्यं देवनं द्यूतम् । प्राणिभिः कुक्कुटादिभिः साध्यं समाह्वयः । तदेतदुभयम् "अक्षबन्ध" इति नारदवचनं व्याचक्षाणो दर्शयति—अक्षा इत्यादिना ॥

एवं लक्षणलक्षिते द्यूतसमाह्वयाख्ये प्रकरणे द्यूतसभाधिकारिणो वृत्तिं याज्ञवल्क्यो

## बालंभट्टी

अधुनेति—महाप्रकरणसङ्गत्येति भावः । द्यूतं च समाह्वयश्च तावाख्ये यस्य विवादपदस्य तदित्यर्थः । करणभेदेऽपि तत्स्वरूपस्यैक्यादेकत्वेन निर्देशः । अप्राणिभिरक्षादिभिः साध्यं देवनं द्यूतं प्राणिभिः कुक्कुटादिभिः साध्यं देवनं समाह्वय इति विवेकः । तदेतदुभयं नारदीयव्याख्यानेन दर्शयति—अक्षा इत्यादिना । पाशक इत्यत्राल्पार्थे कन् अत एवाग्रे दीर्घेति वक्ष्यते । बध्नः-दन्त्युष्ट्रादि । दन्तेति—गजदन्तादिविकारभूता इत्यर्थः । आदिना उष्ट्रादिपरिग्रहः । देवनमित्यस्यैव व्याख्या—क्रीडेति । अत्र शाकपार्थिवादिसमास इत्याह—पणपूर्वेति । तदुभयमिति—जिह्मेन सभिकेन कारितमिति बोध्यम् । तत्र द्यूतेति नामनामिनोरभेदस्तदाह—द्यूतेति । पदमित्यस्यार्थो—विवादेति । एकवचनोपपत्तये आह—द्यूतं चेति, —समाहारद्वन्द्व इति भावः । क्रियमाणः—क्रीडाविशेषः ॥

---

१. —१६. १. । २. —९. २२३. । ३. थ. द. ना द्यूतसमाह्वयाख्यमिति ।४. थ. द. क्षाः पाशका इत्या० । ५. थ. द. ख्ये विवादपदे द्यू० । ६ फ. धूर्तं वेति (!) ।

तत्र द्यूतसभाधिकारिणो वृत्तिमाह—

**ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।**

**गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥ १९९ ॥**

परस्परसंप्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते । तत्र ग्लहे तदाश्रया शतिका शतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः तस्माद्धूर्तकितवात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात् । पञ्च पणा आयो यस्मिन् शते तच्छतं पञ्चकं "तदस्मिन्वृद्ध्यायलाभ" इत्यादिना कन् । जितग्लहस्य विंशतितमं भागं गृह्णीयादित्यर्थः।सभा कितवनिवासार्था यस्यास्ति असौ सभिकः । कल्पिताक्षादि-

---

विसंवादप्रसङ्गेन अखिलविसंवादैककारणभूतं द्यूतसमाह्वयव्यवहारमाह—**गलत्सभिकवृद्धिस्तु सभिक इत्यादि ॥ १९९ ॥**

तुशब्दोऽवधारणार्थः । गलत्सभिकवृद्धिरेव सभिकस्य ; नान्यदपि— स्वपरिभाषितमुख-

---

सुबोधिनी

दर्शयतीत्याह—तत्रेति । तदाश्रयेति—तदाश्रिता ग्लहाश्रिता शतपरिमिता वृद्धिस्तदधिका चेत्यर्थः । एतदुक्तं भवति—यस्मिन् यस्मिन् द्यूते शतेन वा तदधिकैर्वा काकि-

बालंभट्टी

एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादपदे सभिकवृत्तिप्रदर्शकं मूलमि तदवतारयति—तत्रेति,—उक्तपदे इत्यर्थः । संप्रतिपत्तिः,—सम्वादः । पण इति—न तु वराटिकानामित्यादिर्लक्षित इति भावः । तदाश्रया—ग्लहाश्रया । शतशब्दो न्यूनसङ्ख्याया व्यवच्छेदको नाधिकसंख्याया इति तस्या अप्युपलक्षणमित्याह—तदधिकेति । वक्ष्यमाणस्यात्राऽपि संबन्ध इत्याह—तस्मात् धूर्तेति । यत्र द्यूते शतेन तदधिकैर्वा काकिण्यादिभिः परिकल्पितं पणं जयति, स जेता शतिकादिवृद्धिः । तस्मात् द्यूतकारात्तज्जेतुः सभाधिकारी पञ्चकाकिण्यादीन् गृह्णीयादिति भावः । तदाह—जितग्लहस्येति । प्रागुक्तसभापतिरत्र नेति सूचयन् तद्व्युत्पत्तिमाह—सभेति,—न राजादिसभेति भावः। "व्रीह्यादि"[६] इति ठन् । फलितमाह —कल्पितेति,—अक्षादिरूपाणि निखिलक्रीडाया उपकरणानि सामग्री-

---

१. ख. तत्पञ्चकं शतं । २. अ० ५ १. ४७. । ३. थ. द. तत्र द्यूतसभाधिकारिण इति । तदाश्रया शतिकेति । ४. त. शतं वा तदधिकं वा का० । ५. प. ब. स्याप्युप० । ६. अ० ५. २. ११६.

निखिलक्रीडोपकरणस्तदुपाचितद्रव्योपजीवी सभापतिरुच्यते । इतरस्मात्पुनरपरिपूर्ण-शतिकवृद्धेः कितवाद्दशकं शतं जितद्रव्यस्य दशमं भागं गृह्णीयादिति यावत् ॥१९९॥

एवं क्लृप्तवृत्तिना सभिकेन किं कर्तव्यमित्याह—

**स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।**
**जितमुद्ग्राहयेज्जेत्रे[1] दद्यात्सत्यं वचः क्षमी ॥ २०० ॥** 5

य एवं क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्तकितवेभ्यो रक्षितस्तस्मै राज्ञे

त्वादित्यभिप्रायः । गलितं निर्गतं यत्सभिकहस्तात्पराजितानां देवनार्थं द्रव्यं यच्च द्यूतोपकरणमक्षादि तद्गलत्सभिकं द्रव्यं, तदर्थां वृद्धिर्गलत्सभिकवृद्धिः, तां साभिको द्यूतसभाप्रयोजको धूर्तमण्डलात् परिगृह्णीयात् । कियन्ति पञ्चकं शतं धूर्तकितवात् जेतुः धूर्तोपकरणनिमित्तमितरात् पराजितात् प्रयुक्तस्वद्रव्यनिमित्तं दशकं शतमित्यर्थः ॥ १९९ ॥

स्वार्थहेतोरेव च राज्ञा **स सम्यक्पालित इत्यादि ॥ २०० ॥**

यथा कृतं यथा परिभाषितं यथा वा स्मृत्यन्तरे निरूपितमित्यर्थः । तथा च बृह-

---

सुबोधिनी

ण्यादिभिः परिकल्पितं पणं जयति, स जेता शतिकवृद्धिरित्युच्यते । तस्मात् द्यूतकाराच्छतकाकिण्यादिके[2] जिते तत्सभाधिकारी पञ्च काकिण्यादीन् गृह्णीयादिति ॥ १९९ ॥

बालंभट्टी

रूपाणि कल्पितानि संपादितानि येनेत्यर्थः । तत्र हेतुं सूचयन्नाह—तदुपेति । उत्तरार्धार्थमाह—इतरस्मादिति । अस्यैव व्याख्या—परीति । अत एवायं कितव एव न तु धूर्त इति केचित् । वस्तुतो अत्रापि तथैव पाठः ॥ १९९ ॥

इत्यत आहेति पाठः। इत्याहेति पाठे इत्याशङ्कायामाहेत्यर्थः। कुत्रेत्याकाङ्क्षायामाह—राज्ञेति।

---

१. वि० मुद्रासयेज्जेत्रे दद्यात्सत्यवचाः क्षमी । २. त. ण्यादिजेतुस्तस्त० ।

यथासंप्रतिपन्नमंशं दद्यात् ; तथा जितं य[1]द्रव्यं, तदुद्ग्राहयेत् । बन्धकग्रहणेनासेधादिना च पराजितसकाशादुद्धरेत् ; उद्धृत्य च तद्धनं जेत्रे जयिने सभिको दद्यात् ; तथा क्षमी भूत्वा स[2]त्यं वचो विश्वासार्थं द्यूतकारिणां दद्यात् ; तदुक्तं नारदेन—"सभिकः कारयेत् द्यूतं देयं दद्याच्च तत्कृतम् ।" इ[3]ति ॥ २०० ॥

5 यदा पुनः सभिको दापयितुं न शक्नोति तदा राजा दापयेदित्याह—

**प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले ।**
**जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ २०१ ॥**

प्रसिद्धे अप्रच्छन्ने राजाध्यक्षसमन्विते ससभिके सभिकसहिते कितवसमाजे सभिकेन च राजभागे दत्ते राजा धूर्तकितवमविप्रतिपन्नं जितं पणं दापयेत् । अन्य-

**स्पैता—" राजवृद्धी स कितवात् सभिकाद्दशकं शतम् । यथा समयं वा स्यात् " इति । किं च जितं यत्तु कितवैः तच्च जितं तेभ्यः सभिक उद्ग्राहयेत् जेत्रे च येन जितं तस्मै सभिक एकसत्यवचनो भूत्वा आविसंवादेन क्षमी चानुतापवान् पुनर्दद्यादित्यवसेयम् ॥२००॥**

**यथा कृत एव—**प्राप्ते नृपतिनेत्यादि ॥ २०१ ॥

---

सुबोधिनी

**मूलवचनस्थं स्थानपदं व्याचष्टे—**अवि[4]प्रतिपन्नमिति,—**स्थाने युक्तमविप्रतिपन्नमिति यावत् ॥ २०१ ॥**

बालंभट्टी

जितं यदिति — [6]द्यूतत **इति भावः ।** कारिणामिति — **शेषे षष्ठी दद्यादित्य-स्यानुषङ्गः । तृतीयपादार्थे संमतिमाह**—तदुक्तमिति । तत्कृतं—**कितवेन पणीकृतं देयं तत उद्धृत्य ॥ २०० ॥**

सभिकेति—**धूर्तेत्यस्यार्थः**—कितवेति । **प्राप्ते इत्यादिव्याख्या**—सभीति । **मूले स्थाने इति अव्ययं युक्तमित्यर्थकम् । तदर्थमाह**—अवीति । **अर्थादाह**—पणमिति ।

---

१. ख. जितं द्रव्यमुद्रा० । २. क. त्यं च । ३.—१६. २. । ४. थ. द. न इति प० । ५. त. प्रेति । ६. फ शब्दत इति भावः । रिणामिति ।

था प्रच्छन्ने सभिकरहिते अदत्तराजभागे द्यूते जितं पणं जेत्रे न दापयेत् ॥२०१॥

जयपराजयविप्रतिपत्तौ निर्णयोपायमाह--

द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।

द्यूतव्यवहाराणां द्रष्टारः सभ्यास्त एव कितवा एव राज्ञा नियोक्तव्याः; न तत्र "श्रुताध्ययनसंपन्नाः" इत्यादिनियमोऽस्ति। साक्षिणश्च द्यूते द्यूतकारा एव कार्याः; 5 न तत्र "स्त्रीबालवृद्धकितव" इत्यादिनिषेधोऽस्ति ॥ २०१ ॥

क्वचित् द्यूतं निषेद्धुं दण्डमाह--

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ॥ २०२ ॥

किं च—द्रष्टारो व्यवहाराणामित्यादि ॥ २०२ ॥

स्पष्टार्थौ श्लोकौ ॥ २०१ ॥ २०२ ॥

सुबोधिनी

क्वचित्तु द्यूतं निषेद्धुमिति—कूटाक्षादिभिर्दीव्यतो दण्डविधानात् तादृशैरक्षादिभिः

बालंभट्टी

अन्यथेत्यनेन उक्तत्रितयव्यतिरेक उच्यते इत्याह उक्तक्रमेण — प्रच्छन्ने इत्यादिः । तेऽदेति—राजेति भावः ॥ २०१ ॥

प्रकृतत्वादाह—द्यूते इति । एतदर्थमाह—सभ्या इति । एवफलमाह—न तत्रेति,—तद्विषये इत्यर्थः । वाक्यान्तरमाह—साक्षिणश्चेति । त एवेत्यस्य संबन्धादाह—द्यूतकेति । प्राग्वदाह—न तत्रेति,—तद्विषय इत्यर्थः ॥ २०१ ॥

क्वचित्—न तु सर्वत्र । कूटाक्षादिभिः दीव्यतो दण्डविधानात् तादृशैरक्षादिभिः देवनं निषिद्धम् । एवं सभिकराजाध्यक्षरहितस्थलेऽपि देवनं निषिद्धमिति बोध्यम् ।

१. ख. व्याः तत्र... नियमो नास्ति । ग. न पुनः श्रु० । २. घ. च. संपस्त्यादिनि० । ज. संपन्नादिनि० । ३. ड्य० ७०.। ४. वि. चिह्नानि निर्वास्या सकूटोपधिदे० । ५. त. चिदिति । ६. प. ब. तत वेत्य०।

कूटैरक्षादिभिः उपधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत् । नारदेन तु निर्वासने विशेष उक्तः— "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् । कण्ठेऽक्षमालामासज्य स ह्येषां[1] विनयः स्मृतः ॥" इति[2] । यानि च मनुवचनानि द्यूतनिषेधपराणि—"द्यूतं समाह्वयं
5 चैव यः कुर्यात् कारयेत वा । तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥" इत्यादीनि[3], तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकरहितद्यूतविषयतया च योज्यानि ॥ २०२ ॥

किंच

## द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।

10 यत्पूर्वोक्तं द्यूतं तदेकमुखं एकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्यम्—राजाध्य-

नन्वेतत् द्यूतं स्वयंभुवा निषिद्धम्—"प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।" इति, तथा चोक्तं—"प्रच्छन्नं वा प्रकाशं वा द्यूतं राष्ट्रे निवारयेत् ।" इति च । वेदेऽपि—"अक्षैर्मा दीव्यः" इति प्रतिषेधः । सत्यम् । प्रतिषेधातिक्रमेण प्रवृत्तौ श्येनादिवदयं विधिरित्यविरोधः । मानवस्तु दण्डविधिर्धर्मविरोधितया नानामुखत्वेन वा । प्रयोजनान्तरापेक्षया तु

## द्यूतमेकमुखं कार्यमित्यादि ॥ २०३ ॥

### सुबोधिनी

देवनं सभिकरहितस्थले च देवनमर्थान्निषिद्धमिति गम्यते ॥ २०२ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां द्यूतसमाह्वयाख्यं प्रकरणम् ॥

### बालंभट्टी

कूटैः—सकपटैः।अक्षपदमुपलक्षणमित्याह–अक्षादीति। अक्षमालां—प्रकृताक्षादिमालाम्, सर्वज्ञानायेति भावः । हि—यतः।सः–कण्ठेऽक्षमालासंबन्धपूर्वकविवासः । एषां—कूटाक्षदेविनाम् । विनयः—शिक्षेत्यर्थः । विरोधं परिहरति—यानि चेति । कूटेत्युपलक्षणमुपधेरपि[4] । राजेति—अत एव पूर्वं तथा प्रतिपादितम् ॥ २०२ ॥

किंचेति[5]—अन्यत्राऽपि तन्निषिद्धमन्यदपि द्यूतविषये आहेत्यर्थः । मुखपदार्थः—प्रधानमिति । विशिष्टतात्पर्यार्थमेवाऽऽह—राजाध्यक्षेति । कार्यते अनेनेति व्युत्पत्त्या

१. ना० ह्येषु । २. १६. ६. । ३.—९. २२४. । ४. प. ब. मुपाधे० । ५. फ. चेति ।

क्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः । तस्करज्ञानकारणात्— तस्करज्ञानरूपं प्रयोजनं पर्यालोच्य प्रायशश्चौर्यार्जितधना एव कितवा भवन्ति अतश्चौरविज्ञानार्थमेकमुखं कार्यम् ॥ २०२ ॥

द्यूतधर्मं समाह्वयेऽतिदिशन्नाह—

**एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०३ ॥** 5

एकमुखमेकमार्गं एकस्मिन् प्रदेशे राजकीयराजपुरुषाद्यधिष्ठितं तस्करादिप्रजाकादाभिकपरिज्ञानार्थमधर्मरूपमपि धर्मान्तरोपायतया महतेऽभ्युदयाय तथा स्वायंभुवे दण्डादिवचनान्यवसेयानि । एतेन पाषण्डादिधर्मो व्याख्यातः । यश्चायमक्षाद्यप्राणिदेवने द्यूताख्ये त्रिविरुक्तः, समाह्वयसंज्ञकेऽपि कुक्कुटमेषा-

बालंभट्टी

कारणशब्दः फलपरः । कर्मधारयः ल्यब्लोपे पञ्चमीत्याह— तस्करेति । अन्यथा कारणादित्यस्य वैयर्थ्यं स्पष्टमेव । तात्पर्यार्थमाह—प्रायश इति । अत एव मनुः—"द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् । राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ । तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥" "कितवान् कुशीलवांश्चौरान् पाषण्डस्थांश्च मानवान् । विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः । विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥ द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं महत् । तस्मात् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः । तस्य दण्डविकल्पस्स्याद्यथेष्टं नृपतेस्तथा ॥ क्षत्रविट्छूद्रयोनिस्तु दण्डं दातुमशक्नुवन् । आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैश्शनैः॥ स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् । शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥" इति ॥ २०२ ॥

१.—९. २२१—२ ; २२५—२३०. ।

"ग्लहे शतिकवृद्धेः"[1] इत्यादिना यो द्यूतधर्म उक्तः, स एव प्राणिद्यूते मल्लमेषमहिषादिनिर्वर्त्ये समाह्वय[2]संज्ञिके ज्ञातव्यः ॥ २०३ ॥

॥ इति द्यूतसमाह्वयाख्यं प्रकरणम् ॥

---

दिभिस्सपणप्राणिद्यूते अयमेव विधिः ज्ञेय. । सभिकाधीनत्वराजवृद्धिदानादिक इत्यभिप्रायः ॥ २०३ ॥

बालंभट्टी

अस्य द्यूतत्वाभावात् लक्ष्यार्थं तस्याऽऽह—निर्वर्त्ये इति ॥ २०३ ॥ इति द्यूतसमाह्वयाख्यं प्रकरणम् ॥

---o---

---

१. व्य० १९९. । २. ग. ज्ञके ।

# अथ वाक्पारुष्यप्रकरणम् १८

इदानीं वाक्पारुष्यं प्रस्तूयते। तल्लक्षणं चोक्तं नारदेन—"देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते[1]॥" देशादीनामाक्रोशन्यङ्गसंयुतम् उच्चैर्भाषणमाक्रोशो न्यङ्गमवद्यं तदुभययुक्तं यत्प्रतिकूलार्थमुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यं कथ्यते। तत्र कलहप्रियाः खलु गौडा इति देशाक्रोशः। नितान्[2]त लोलपाः खलु विप्रा इति जात्याक्रोशः। क्रूरचरिता ननु वैश्वामित्रा इति कुलाक्षेपः। आदिग्रहणात् स्वविद्याशिल्पादिनिन्दया विद्वच्छिल्पादिपुरुषाक्षेपो गृह्यते। 5

## सुबोधिनी

"देशजाति" इति नार[3]दोक्तं व्याचष्टे—देशादीनामिति। देशाद्याक्रोशानुदाहृत्य दर्शयति—[4]तत्रेत्यादिना। आदिग्रहणात् स्वविद्येति—साक्षादितरपुरुषनिन्दामकुर्वंस्त[5]न्निन्दाभिप्रायेणैव स्वयं विद्वान् सन्नप्यविद्वान्[6] वा यस्मिंस्तर्कविद्यादिविशेषे परस्य नैपुण्यमस्ति यस्यां वा शिल्पविद्यायां कुशल[7]ः परस्तत्तर्कविद्याशिल्पादिनिन्दया विद्वज्जनाद्यधि-

## बालंभट्टी

प्राग्वदाह—इदानीमिति। जातिः—ब्राह्मणत्वादिः। कुलं—वंशपरंपरा। नारदीयं व्याचष्टे—देशादीनामिति। अवद्यमिति—प्रत्येकयुक्तत्वं न विवक्षितमित्याह—तदुभयेति। अर्थशब्दः प्रयोजनवाचीत्याह—उद्वेगे इति। देशाद्याक्रोशानामुदाहरणमत आह—तत्रेति,—तेषां मध्ये इत्यर्थः। देशाक्रोशः—देशनिन्दा। लोलुपः—सतृष्णः। चरितम्—आचरणम्। वैश्वामित्राः—तत्पुत्रादयः। स्वविद्येति—साक्षात् पुरुषनिन्दामकुर्वता तन्निन्दाशयेनैव स्वयं विद्वान् अविद्वानिव स्वीयविद्याशिल्पादिनिन्दया यत्र तद्विद्याविषयनिन्दानैपुण्यमस्ति यत्र वा शिल्पविद्यायां परः कुशलः तद्विद्वज्जनाद्यधिक्षेप इत्यर्थः।

---

१.—१५. १.। २. ख. न्तं खलु लो०। ३. थ. द. दवचनं। ४. थ. द. त्रकलहप्रिया इत्या०। ५. थ. द. तत्र नि०। ६. त. द्वानिव य०। ७. त. लस्त०।

तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैवोक्तम्—
"निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्। गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद्गुरुः॥ साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम्। पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः॥" इति। तत्र 'धिङ्मुर्ख जाल्मम्' इत्यादि साक्षेपम्। अत्र न्यङ्गमित्यसभ्यम् अव-
5 द्यं भगिन्यादिगमनं तद्युक्तमश्लीलम्। 'सुरापोऽसि' इत्यादिमहापातकाद्याक्रोशैर्युक्तं वचस्तीव्रम्।

## सुबोधिनी

क्षेप इत्यर्थः। एवंविधे वाक्पारुष्ये दण्डवैषम्याभिधानार्थं निष्ठुराश्लीलतीव्रत्वरूपसंज्ञाभेदेन त्रिरूपमत्वभिधाय निष्ठुरादिलक्षणमपि नारदेनैवोक्तमित्याह— तत्र च दण्डतारतम्येत्यादिना। अत्र च निष्ठुराक्षेपो लघीयान् तीव्राक्षेपो गरीयानिति भेदः। पूर्वं न्यङ्गमवद्यमित्युक्तम्। तच्चावद्यं निष्ठुरादिषु त्रिषु वाक्पारुष्यभेदेषु साधारणमिति अश्लीलं न्यङ्गसंयुतमिति अश्लीलरूपवाक्पारुष्यस्य विशेषलक्षणाभिधानमनुपपन्नं स्यादित्यसभ्यरूपोऽवद्यविशेषोऽत्र न्यङ्गशब्देनाभिप्रेत इत्याह— अत्र न्यङ्गमिति॥

## बालंभट्टी

तस्य चेति—वाक्पारुष्यस्येत्यर्थः। त्रैविध्येऽन्वयः। दण्डेति—दण्डवैषम्यविधानार्थमित्यर्थः। त्रैविध्यं निष्ठुरेति—तदीयसंज्ञाभेदेनेत्यर्थः। तल्लक्षणं—निष्ठुरादिलक्षणमपि। तेनैव—नारदेनैव। तदपि—वाक्पारुष्यमपि। तस्य—त्रिविधस्य। निष्ठुराक्षेपादश्लीलाक्षेपो गुरुः ततः तीव्राक्षेपो गुरुरित्यर्थः। साक्षेपमित्यादि व्याचष्टे—तत्रेति,—तेषां मध्ये इत्यर्थः। त्वामित्यस्य विशेषणद्वयम्। धिग्योगे द्वितीया। "जाल्मोऽसमीक्ष्यकारी स्यात्" । ननु पूर्वं न्यङ्गमवद्यमित्युक्तम्। तच्चावद्यत्वं निष्ठुरादिषु त्रिषु वाक्पारुष्यभेदेषु साधारणमिति अत्राश्लीलरूपवाक्पारुष्यस्य न्यङ्गसंयुतमिति विशेषलक्षणकथनमयुक्तम्; अत आह—अत्रेति,—तथा च असभ्यरूपोऽवद्यविशेषो न्यङ्गशब्दार्थ इति भावः। तत्स्वरूपमाह—भगिनीति। साकाङ्क्षत्वात् शेषमाह—युक्तमिति॥

---

१. क. ज दस्य। २. ना० १५—२. ३.। ३. त. तंत्रेति। ४. तृ० वी० १४।

तत्र निष्ठुराक्रोशे सवर्णविषये दण्डमाह—

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ॥ २०४ ॥

न्यूनाङ्गाः करचरणादिविकलाः, न्यूनेन्द्रिया नेत्रश्रोत्रादिरहिताः, रोगिणो दुश्चर्मप्रभृतयः; तेषां सत्येनासत्येनान्यथास्तोत्रेण च निन्दार्थया स्तुत्या यत्र नेत्रयुगल- 5
हीन एषोऽन्ध इत्युच्यते तत्सत्यम्, यत्र पुनश्चक्षुष्मानेषोऽन्ध इत्युच्यते तदसत्यम्, यत्र विकृताकृतिरेव 'दर्शनीयस्त्वमसि'इत्युच्यते तदन्यथास्तोत्रम्; एवंविधैर्यः क्षेपं भर्त्सनं

प्रायेण द्यूतप्रभवत्वाद्वाग्दण्डपारुष्ययोर्विनाशकारणत्वसामान्याद्वा द्यूतव्यवहारा-न्तरारम्भः । तत्राऽपि दण्डपारुष्यस्यापि कारणभूतत्वाद्वाक्पारुष्यमेव तावदुच्यते—

सत्यासत्यान्यथास्तोत्रैर्हीनाङ्गेत्यादि ॥ २०४ ॥

हीनाङ्गाः खञ्जादयः; हीनेन्द्रियाः काणादयः ; कुष्ठाद्यभिभूता रोगिणः ;तेषां यद्यन-

सुबोधिनी

अधुना मूलमवतारयति—तत्रेति । सत्यादिस्तोत्रस्वरूपमुदाहृत्य दर्शयति—यत्र नेत्र-युगलहीन इत्यादिना । ननु मनुना "कार्षापणावरम्" इति कार्षापणादन्यूनदण्डोऽभि-

बालंभट्टी

अथ मूलमवतारयति—तत्रेति,—तेषां मध्ये इत्यर्थः । असवर्णविषये वक्ष्यमाण-त्वादाह—सवर्णेति । न्यूनाङ्गेत्यत्र द्वन्द्वोत्तरपदकबहुव्रीहिपूर्वपदकद्वन्द्व इत्याशयेनाऽऽह—न्यूनाङ्गा इति । न्यूनेन्द्रिया इत्यस्य व्याख्या—विकेति । तद्व्याख्या—नेत्रेति । यथासङ्ख्येन नान्वय इत्याह—तेषामिति । अन्यथेत्यादेर्व्याख्या—निन्दार्थेति । सत्या-दिस्वरूपमुदाहरणेन वाक्यार्थमध्य एवाऽऽकाङ्क्षानिवृत्तये आह—यत्रेति । क्षेपार्थो—भर्त्सनमिति । "अर्धोऽधमेषु" इति वक्ष्यमाणकमूल्यकल्पनालाघवानुरोधेन अर्धन्यूना-

---

१. वि॰ दश । २. ख. र्थतया स्तुत्या यो ने॰ । ३. ख. निर्भ॰ । ४. थ. द. लवचनम-वतारयति—तत्र निष्ठुराक्रोशे इति । ५. द ण्डो विहि॰ । ६. व्य॰ २०६. ।

करोत्यसौ अर्धाधिकत्रयोदशपाणान् दण्डनीयः । "काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥" इति यन्मनुवचनं, तदतिदुर्वृत्तवर्णविषयम् । यदा पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डनीया इति तेनैवोक्तम्—"मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आक्षारयन् 5 शतं दाप्यः पन्थानं चाददद्गुरोः॥" इति । एतच्च सापराधेषु मात्रादिषु गुरुषु निरपराधायां च जायायां द्रष्टव्यम् ॥ २०४ ॥

पराधिनामेव चापलाद्विद्यमानेन्द्रियवैकल्यादिना सत्येनेव दुष्टया वाचा क्षेपं कुर्यात् ; असत्येनापि हि काण इत्यकाणमेवाधिक्षिपेत् ; अन्यथा स्तोत्रेण वा सातिशयस्तुतिपदैः प्रसिद्धमूर्खं हि चतुर्वेदिन् इत्येवं वदन् अर्धत्रयोदशपणान्राजवेदने कृते दण्ड्यः । स्मृत्यन्तराच्च तस्यापि प्रसादनं कार्यम् ॥ २०४ ॥

## सुबोधिनी

हितः । अतस्तेन विरोधोऽर्धाधिकद्वादशपणात्मकदण्डविधानस्येत्याशङ्क्याऽऽचारादिभिरत्यन्तनिकृष्टेन वर्णिना यद्याक्षिप्यते सवर्ण एव, तदा स आक्षेपकः कार्षापणावरं दण्डं दण्ड्यो न सर्वविषये[3] एष दण्ड इति भेदेन विरोधं परिहरति—काणं[4] वाप्यथ वा खञ्जमित्यादिना,—कार्षापण अवरो यस्मिन् दण्डे स तादृशः, न ततो न्यून इत्यर्थः ॥ २०४ ॥

## बालंभट्टी

त्रयोदशेति मूले समास इत्याशयेनाऽऽह—अर्धाधिकद्वादशेति । नन्वेवं मनुना कार्षापणादन्यूनदण्डाभिधानात् तस्य च षोडशपणात्मकत्वात् तेन विरोध इत्याह—काणं वेति,—पादविकलमन्याङ्गविकलमपि वा । तथ्येन—सत्येनापि काणादिशब्देन । अपिना असत्यादिसमुच्चयः । कार्षापणः अवरो यस्मिन् दण्डे स तादृशः, अत्यन्ताल्पः कार्षापणः न तु ततो न्यून इत्यर्थः । तं परिहरति—तदतीति,—आचारादिभिरत्यन्तनिकृष्टसवर्णेत्यर्थः । तथा च तादृशसवर्णेन यदि सवर्ण एवाऽऽक्षिप्यते, तदा तद्विषय एव स दण्डो न सर्वविषय इति विषयभेदात् न विरोध इति भावः । विशेषमाह — यदा पुनरिति,—शतं—पणाः । तेनैव—मनुनैव । आक्षारयन् — अभिशपन् । अददत्— अत्यजन् । ननु जायाभिशापे मात्राद्यभिशापसाम्येन दण्डविधानं न युक्तम्; अत आह—एतच्चेति । गुरुषु—

१.—८. २७४. । २.—८. २७५. । ३. त. य इति । ४. त. कार्षापणावरमित्या° ।

अश्लीलाक्षेपे दण्डमाह—

**अभिगन्ताऽस्मि भगिनीं मातरं वा तवेति ह[1] ।**
**शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥ २०५ ॥**

'त्वदीयां भगिनीं मातरं वा अभिगन्ताऽस्मि' इति शपन्तं 'अन्यां वा त्वज्जायामभिगन्ताऽस्मि' इति शपन्तं राजा पञ्चविंशतिकं पणानां पञ्चाधिका विंशतिर्यस्मिन्दण्डे 5 स तथोक्तः तं दमं दापयेत् ॥ २०५ ॥

एवं समानगुणेषु वर्णिषु दण्डमभिधाय विषमगुणेषु दण्डं प्रतिपादयितुमाह—

**अर्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ।**

राजावेदन एव च **अभिगन्ताऽस्मि भगिनीमित्यादि ॥ २०५ ॥**
अयं च समवर्णानां समानगुणानां च दण्डकल्पः । गुणवर्णवैषम्ये पुनः
**अर्धोऽधमेषु द्विगुण इत्यादि ॥ २०६ ॥**

## सुबोधिनी

मूलस्थहशब्दद्योत्यमर्थमाह[2]—अन्यामिति[3] ॥ २०५ ॥
अश्लीलाक्षेप एव स्थलविशेषे दण्डविशेषमाह—एवमित्यादिना,[4]—पूर्ववाक्यस्थसं-

## बालंभट्टी

पूज्येषु (गुरुभिन्नं निमित्तं?) एतेन भार्यादीनां तत्साम्येन दण्डविधानं समाधेयमिति कुल्लूकभट्टोक्तं समाहितम् । मेधातिथिस्तु आक्षारणं भेदनमुक्त्वा तनयं गुरुमिति पाठमङ्गीकृत्य मात्रादीनां मिथो भेदनकर्तुरयं दण्डविधिरिति व्याख्यातवान् ॥ २०४ ॥

मूले हः चार्थे । तत्समुच्चयमाह—अन्यां वेति । तदर्थमेवाऽऽह—त्वज्जायामिति । पञ्चविंशतिकमित्यस्य व्याख्या—पणानामिति ॥ २०५ ॥

अश्लीलाक्षेप एव स्थलविशेषे दण्डविशेषप्रतिपादकं मूलमित्याह—एवमिति । गुणो—वृत्तादि । वर्णिषु—सवर्णेषु । गुणेषु—तेष्वेव । पूर्ववाक्यस्य सङ्ख्यापेक्षया

---

१. वि० हि । २. थ. द. लवचनस्थ० । ३. थ. द. न्यां वा त्वज्जायामिति । ४. थ. द. वं समानगुणेष्वित्या० ।

अधमेष्वाक्षेप्त्रऽपेक्षया न्यूनवृत्तादिगुणेष्वर्धो दण्डः पूर्ववाक्ये पञ्चविंशतेः प्रकृतत्वात्तदपेक्षयाऽर्धः—सार्धद्वादशपणात्मको द्रष्टव्यः । परभार्यासु पुनरविशेषेण द्विगुणः—पञ्चविंशत्यपेक्षयैव पञ्चाशत्पणात्मको[1] वेदितव्यः। तथोत्तमेषु च स्वापेक्षयाऽधिकश्रुतवृत्तेषु दण्डः पञ्चाशत्पणात्मक एव ॥ २०५ ॥

## सुबोधिनी

ल्यापेक्षयाऽस्मिन् वाक्येऽर्धद्वैगुण्यादिप्रतिपादनादश्लीलाक्षेप एवेति गम्यते । परभार्या[2]स्विति—आक्षेप्त्रपेक्षया न्यूनवृत्तस्याधिकवृत्तस्य [3]समवृत्तस्य वा भार्या भवतु, यथाकथञ्चित् परभार्यात्वमत्र विवक्षितम्; अत एवाविशेषेणेत्युक्तिरिति द्रष्टव्यम् । ननु पूर्ववाक्यव्याख्यानावसरे अन्यां वा त्वज्जायामभिगन्तेत्युपादाय पञ्चविंशतिको दमोऽभिहितः, अत्र तु पञ्चाशत्पणात्मको दमोऽभिधीयत इति परस्परविरोध इति चेत् मैवम्—पूर्वत्र भार्याद्वारा पुरुषस्याऽऽक्षेपे दण्डविशेषोऽभिहितः ; साम्प्रतं परभार्याया एवाऽऽक्षेपे विशेषोऽभिधीयत इतिभेदः ॥ २०५ ॥

## बालंभट्टी

अर्धद्वैगुण्यादिप्रतिपादनात् अश्लीलाक्षेपविषयकमेवेदम् इति ध्वनयन् वक्ष्यति व्याख्याने—पूर्वेत्यादि । साकाङ्क्षत्वादाह—आक्षेप्त्रिति । अधमत्वं न जातिकृतं तत्र तस्य वक्ष्यमाणत्वात् अत आह—न्यूनवृत्तेति । आकाङ्क्षानिरासायाऽऽह—पूर्वेति । अविशेषेणेति—आक्षेप्त्रपेक्षया न्यूनवृत्तस्य अधिकवृत्तस्य समवृत्तस्य वा भार्येति यथाकथञ्चित् परभार्यात्वमत्र विवक्षितम् अत एव अविशेषेणेत्युक्तम् । न्यूनवृत्तसंबन्धित्वे भेदेनोक्तयसङ्गतिर्द्विगुणदण्डासङ्गतिश्च । अधिकवृत्तादिसंबन्धित्वेऽप्याद्यदोष एव । समवृत्तादिसंबन्धित्वेऽपि तथा पूर्वत्र एव प्राप्तत्वात् । तस्मात् त्रितयभिन्नविषयकं तदिति भावः । न च पूर्वपद्यव्याख्यावसरे अन्यां वा त्वज्जायामित्याद्युक्त्वा पञ्चविंशतिको दम उक्तः, इह तु पञ्चाशत्पणात्मक इति मिथो विरोध इति वाच्यम्—पूर्वत्र भार्याद्वारा पुरुषस्याऽऽक्षेपे दण्डविशेष उक्तः ; अत्र तु परभार्याया एवाऽऽक्षेपे विशेष उच्यत इति भेदात् ॥ २०५ ॥

१. क. द्रष्टव्यः । २. थ. द. र्यासु पुनरविशेषेणेति । ३. थ. द. इदं पदं नास्ति ।

वर्णानां मूर्धावसिक्तादीनां च परस्पराक्षेपे दण्डकल्पनामाह—

## दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥ २०६ ॥

वर्णा ब्राह्मणादयः जातयो मूर्धावसिक्ताद्याः वर्णाश्च जातयश्च वर्णजातयः, उत्तराश्च अधराश्च उत्तराधराः वर्णजातयश्च ते उत्तराधराश्च वर्णजात्युत्तराधराः तैः वर्णजात्युत्तराधरैः परस्परमाक्षेपे क्रियमाणे दण्डस्य प्रणयनं प्रकर्षेण नयनमूहनं वेदितव्यम्।तच्च दण्ड- 5 कल्पनमुत्तराधरैरिति विशेषोपादानादुत्तराधरभावापेक्षयैव कर्तव्यमित्यवगम्यते । यथा

---

निरूप्येति शेषः । उक्तदण्डादर्धत्रयोदशपणावधिकाद्गुणगुणाद्यधमेष्वर्धदण्डः । द्विगुणश्च परस्त्रीषु परशब्द उत्कृष्टार्थः परैरुत्कृष्टैः गुणतो वर्णतः परिणीताः परस्त्रियः तास्वधिक्षिप्तासूत्तमेषु च गुणवर्णादिभिः पुरुषेषु स्त्रीषु वा। अर्धवचनं द्विगुणं चोभयमपि यथार्हदण्डोपलक्षणार्थमित्येतद्दर्शयति दण्डप्रणयनं कार्यमिति। न्यूनतयाऽऽधिक्येन वा यथार्हं वर्णजात्युत्तराधरमूलाच्चेत्यभिप्रायः । जातिशब्दश्च जन्मनिमित्तत्वाद्वयोवचनतया गुणलक्षणार्थोऽवसेयः ॥ २०६ ॥

### सुबोधिनी

उत्तरेरेति—वर्णजातिगतन्यूनाधिकत्वतारतम्यापेक्षयेत्यर्थः।एतदेवोद्धृत्य दर्शयति—यथा मूर्धावसिक्तमित्यादिना,—अत्र ब्राह्मणकर्तृको मूर्धावसिक्तविषय आक्षेपः । "प्रातिलोम्ये" इति "वर्णानामानुलोम्येन" इत्युपरितनवाक्ये क्षत्रियकर्तृकब्राह्मणविषयाक्षेपे ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपे च शतपणकं पञ्चाशत्पणकं च दण्डं वक्ष्यमाणं सिद्धवत्कृत्य

### बालंभट्टी

वर्णानां—ब्राह्मणादीनाम् । कल्पनां—न तु दण्डम् । चतुर्णां युगपत् द्वन्द्वभ्रमाभावायाऽऽह—वर्णाश्चेत्यादि,—क्रमविवक्षया न दोषः । यथासङ्ख्यमप्यत एव सिद्धम् । प्रत्यासत्तेरन्यस्याभावाच्चाऽऽह—परस्परमिति । कल्पनामेवाऽऽह—प्रकर्षेणेति । विशेषं तत्राऽऽह—तच्चेति । विशेषः—विशेषणम् । शेषे इति पाठेऽप्येवम् । उत्तराधरभावेति—वर्णकर्तृको जातिविषयकः जातिकर्तृको वर्णविषयको वा य आक्षेपः, तदनुरोधेनेत्यर्थः । तत्र ब्राह्मणकर्तृकमूर्द्धावसिक्तविषयकाक्षेपे आह —यथेति । "प्रातिलोम्य" इति वक्ष्यमा-

१. क' शेषणोपा° ; च. शेषेणोपा० । २. थ. द. उत्तराधरभावापेक्षयेति । ३. त. 'न्यूनां इत्यादि 'अत्र' इत्यन्तं नास्ति । ४. थ. द. म्यापवादेष्विति । ५. थ. द. वचने । ६. त. इदं पदं नास्ति ।

मूर्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टं चाऽऽक्रुश्य ब्राह्मणःक्षत्रियाक्षेपनिमित्तात्पञ्चाशत्पणदण्डात्किंचिदधिकं पञ्चसप्तत्यात्मकं दण्डमर्हति । क्षत्रियोऽपि तमाक्रुश्य ब्राह्मणाक्षेपनिमित्ताच्छतदण्डादूनं पञ्चसप्ततिमेव दण्डमर्हति । मूर्धावसिक्तोऽपि तावाक्रुश्य

## सुबोधिनी

अत्रोपन्यस्यति — क्षत्रियाक्षेपनिमित्तादित्यादिना । [२]किञ्चिदधिकामिति—किञ्चिदिति पादाभिप्रायेण । स चात्र शतापेक्षया चतुर्थांश इति ज्ञेयम् । अनेनैवाभिप्रायेणाऽऽह—पञ्चसप्तत्यात्मकमिति,—शतापेक्ष[३]ायां पञ्चविंशतिः पादः । पञ्चाशतः पञ्चसप्ततिः किञ्चिदधिका पादाधिकेत्यर्थः । क्षत्रियकर्तृकमूर्धावसिक्तविषयाक्षेपे दण्डमाह—क्षत्रियोऽपि तमिति । तं मूर्धावसिक्तम् । अत्र ब्राह्मणविषयक्षत्रियकर्तृकाक्षेपनिमित्ताच्छतदण्डात् पादोनः पञ्चसप्ततिर्दण्डः मूर्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वात् क्षत्रियापेक्षयाऽधिकत्वात् । क्षत्रियकर्तृ[४]ब्राह्मणा[५]क्षेपनिमित्ताच्छतदण्डात् पादन्यूनो ब्राह्मणकृतक्षत्रियाक्षेपनिमित्तात् पञ्चाशत्परिमितात् पादाधिकः पञ्चसप्तत्यात्मको दण्डः क्षत्रियकर्तृके । मूर्धावसिक्तोऽपीति—तौ ब्राह्म-

## बालंभट्टी

णवचनेन क्षत्रियकर्तृकब्राह्मणविषयाक्षेपे ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपे च क्रमेण प्रतिपादितं शतपणं पञ्चाशत्पणात्मकं च बुद्धिस्थीकृत्याऽऽह—क्षत्रियाक्षेपेति,—ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपेत्यर्थः । किञ्चिदधिकं यस्मिन्निति बहुव्रीहिः पदद्वयं वा । किञ्चिदिति पादाशयकम् । स चात्र शतापेक्षया चतुर्थांशः। तथा च तत्पादाधिकं तत्स्वरूपमाह—पञ्चसप्तत्यात्मकमिति । क्षत्रियकर्तृकमूर्द्धावसिक्तविषयाक्षेपे दण्डमाह—क्षत्रियोऽपीति । तम्—मूर्द्धावसिक्तम् । ब्राह्मणाक्षेपेति—क्षत्रियकर्तृकब्राह्मणविषयकाक्षेपेत्यर्थः । ऊनं—पादोनम् । तदेवाऽऽह—पञ्चेति,—अर्हतीत्यस्यानुषङ्गः । मूर्द्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वात् क्षत्रियापेक्षया अधिकत्वात् क्षत्रियकर्तृकब्राह्मणाक्षेपनिमित्तात् शतदण्डान्न्यूनः ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तात् पञ्चाशत्पणादधिकः पञ्चसप्तत्यात्मक एव दण्ड इत्यर्थः । द्वितीये आह—मूर्द्धावसिक्तोऽपीति । तावाक्रुश्येति—ब्राह्मणक्षत्रियावाक्रुश्येत्यर्थः । यद्यपि

१. क. द्धीनं । २. त. इदं प्रतीकं नास्ति । ३. थ. द. क्षया प० । ४. त. कृतात् ब्राह्मणापेक्षया निकृष्टा० (?) । ५. द. णक्षत्रियनिमित्तात् पञ्चाशत्परिमितत्वादधिकः (?) ।

तमेव दण्डमर्हति । मूर्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः

## सुबोधिनी

णक्षत्रियौ। मूर्धावसिक्तस्य क्षत्रियापेक्षयाऽधिकत्वेन क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्तश-तदण्डापेक्षया पादोनशतं पञ्चसप्ततिरेव दण्डो मूर्धावसिक्तेन ब्राह्मणाक्षेपे कृते, तथा मूर्धा-वसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वेन ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तदण्डात् पञ्चाशत्पणपरि-मितात् पादाधिकः पञ्चसप्ततिदण्डो मूर्धावसिक्तेन क्षत्रियाक्षेपे कृते इत्युभयथाऽपि तावानेव दण्ड इत्यभिप्रायः । एवं वर्णजात्योः परस्पराक्षेपे दण्डमभिधाय जातिष्वेव ब्राह्मणात् क्षत्रि-यायां वैश्यायां च जातयोर्मूर्धावसिक्ताम्बष्ठयोरन्योन्याक्षेपे दण्डमाह--मूर्धेति । अत्र ब्रा-ह्मणस्थानीयो मूर्धावसिक्तः, क्षत्रियस्थानीयोऽम्बष्ठः, अम्बष्ठेन मूर्धावसिक्ताक्षेपे सति शतं विपरीते तु पञ्चाशदिति व्यवस्था विज्ञेया । वर्णानुलोमप्रतिलोमापवादेन पूर्वोक्तन्यायेन

## बालंभट्टी

तद्भेदेनापि दण्डव्यक्तिर्भिन्ना, तथाऽपि जात्यैक्यादाह—तमेव दण्डमिति,—मुर्द्धावसि-क्तस्य क्षत्रापेक्षयाऽधिकत्वेन क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्तकशतदण्डापेक्षया पादोनं शतं पञ्चसप्तत्यात्मक एव दण्डो मूर्द्धावसिक्तेन ब्राह्मणाक्षेपे कृते, तथा मूर्द्धावसिक्तस्य ब्रा-ह्मणापेक्षया न्यूनत्वेन ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तदण्डात् पञ्चाशत्पणात्मकात् पादाधिकः पञ्चसप्तत्यात्मक एव दण्डो मूर्द्धावसिक्तेन क्षत्रियाक्षेपे कृते इत्युभयथाऽपि तावानेव दण्ड इत्यर्थः । एवं वर्णजात्योर्मिथ आक्षेपे दण्डमुक्त्वा जातिष्वेव ब्राह्मणात् क्षत्रियायां वैश्यायां च जातयोः मूर्द्धावसिक्ताम्बष्ठयोः मिथ आक्षेपे दण्डमाह -- मूर्द्धेति,—अत्र ब्राह्मणस्थानी-य आद्यः, क्षत्रियस्थानीयोऽन्त्यः; तथा चाम्बष्ठेन मूर्द्धावसिक्ताक्षेपे शतं विपरीते तु पञ्चा-शदिति व्यवस्था विज्ञेया। वर्णानुलोमप्रतिलोमापवादे तु पूर्वोक्तन्यायेन पादोनःपादाधिको दण्डः । ब्राह्मणेन अम्बष्ठाक्षेपे सार्धसप्तत्रिंशत्पणानां दण्डः । अत्र पञ्चाशदपेक्षया पादक्लृ-प्तिः न तु शतापेक्षया । तथा च क्षत्रियापेक्षया अम्बष्ठस्य न्यूनत्वात् वैश्यापेक्षया अधिक-त्वात् ब्राह्मणेन क्षत्रियाक्षेपे यो दण्डः पञ्चाशदात्मकः तदपेक्षया पादन्यूनः ब्राह्मणेनैव वै-श्याक्षेपे यो दण्डः—पञ्चविंशत्यात्मकः, तस्मात् पादाधिकः सार्धसप्तत्रिंशदात्मको दण्डो भवति । ब्राह्मणेन निषादाक्षेपे पादोनैकोनविंशतिः पणानां दण्डः । अत्र पञ्चविंशत्यपेक्षया

१. त. 'कृते' नास्ति । २. थ. द. न ब्राह्मणकर्तृकत्वेन ब्रा० । ३. थ. द. परि० । ४. थ. द. मूर्द्धावसिक्तयंबष्ठयोरिति । ५. फ. क्षात्रक० । ६ फ. को दण्डः अत्र प० । ७. फ. या दण्डः। अत फ. पुस्तके किञ्चित् व्यत्यस्तं वर्तते ।

परस्पराक्रोशनिमित्तकौ यथाक्रमेण दण्डौ वेदितव्यौ । एवमन्यत्राप्यूहनीयम् ॥ २०६ ॥

## सुबोधिनी

पादोनः पादाधिको दण्डः कल्पनीय इत्याह—एवमन्यत्राऽपीति। कल्पनाप्रकारस्तु ब्राह्मणकर्तृकमूर्धावसिक्तविषयाक्षेपे दर्शितो "यथा मूर्धावसिक्तम्" इत्यनेन ब्राह्मणकर्तृकाम्बष्ठविषयाक्षेपे सार्धसप्तत्रिंशत्पणात्मको दण्डः।अत्र पञ्चाशदपेक्षया पादपरिक्लृप्तिः न शतापेक्षया; तथा च क्षत्रियापेक्षयाऽम्बष्ठस्य न्यूनत्वात् वैश्यापेक्षयाऽधिकत्वात् ब्राह्मणेन क्षत्रियाक्षेपे यो दण्डः पञ्चाशत्पणात्मकः, तस्मात् पादोनो ब्राह्मणेनैव वैश्याक्षेपे यो दण्डः पञ्चविंश

## बालंभट्टी

पादव्यवस्था। ततश्च वैश्यापेक्षया न्यूनत्वान्निषादस्य शूद्रापेक्षयाऽधिकत्वाच्च ब्राह्मणेन वैश्याक्षेपे यो दण्डः पञ्चविंशत्यात्मकः, तदपेक्षया पादन्यूनः ब्राह्मणेनैव शूद्राक्षेपे यः सार्धद्वादशपणात्मको दण्डः तदपेक्षया पादाधिकः पादोनैकोनविंशत्यात्मको दण्डः। निषादेन ब्राह्मणाक्षेपे पञ्चसप्तत्यधिकं शतं दण्डः। अत्रापि पुनश्शतापेक्षयैव पादव्यवस्था। तथा च शूद्रापेक्षया निषादस्याधिकत्वेन वैश्यापेक्षया च न्यूनत्वेन शूद्रेण ब्राह्मणाक्षेपे यो दण्डो वधात्मकः शारीरः, तस्मादर्धदण्डस्य न्यूनत्वेन शूद्रकृतब्राह्मणाक्षेपनिमित्तकदण्डात् किञ्चित् न्यूनो वैश्येन ब्राह्मणाक्षेपे यो दण्डः सार्धशतं, तस्मात् किञ्चिदधिकः पञ्चसप्तत्यधिकं शतं दण्डो भवति। अम्बष्ठेन ब्राह्मणाक्षेपे पञ्चविंशत्यधिकं शतं दण्डः। वैश्यतोऽम्बष्ठस्य अधिकत्वेन क्षत्रियतो न्यूनत्वेन च वैश्येन ब्राह्मणाक्षेपे सार्धशतं यो दण्डः तस्मान्न्यूनः क्षत्रियकर्तृकब्राह्मणाक्षेपे यो दण्डः शतात्मकः, तस्मादधिकः पञ्चविंशत्यधिकं शत दण्डो भवति, मूर्द्धावसिक्तकर्तृकब्राह्मणविषयाक्षेपे यः पूर्वं दर्शितः, स एव वर्णजात्यानुलोम्यप्रातिलोम्यापवादे कल्पनाक्रमः। जातिष्वेवाऽऽनुलोम्यप्रातिलोम्यापवादे तु ब्राह्मणक्षत्रियविशामिव मूर्द्धावसिक्ताम्बष्ठनिषादानामपि यथाक्रमं पञ्चाशत् पञ्चविंशति सार्धद्वादशसार्धशतपञ्चाशदात्मकदण्डस्योहनं ज्ञेयम्। यथा सन्निहिताधिकापेक्षया अधिको दण्डो व्यवहिताधिकाक्षेपे, तथैव सन्निहितन्यूनापेक्षया न्यूनो दण्डो व्यवहितन्यूनाक्षेपे इति। तदाह—एवमिति ॥ २०६ ॥

१ त. क्षायां पादापेक्षया (?)। २. त. एतदादि 'वैश्याक्षेपे' इत्यन्त नास्ति।

एवं सवर्णविषये दण्डमभिधाय वर्णानामेव प्रतिलोमानुलोमाक्षेपे दण्डमाह—

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।

एतदेवोदाहरणेन स्पष्टयति—प्रतिलोमापवादेषु चतुस्त्रिद्विगुणा इत्यादि ॥ २०७ ॥

सुबोधिनी

त्यात्मकः तस्मात् पादाधिकः सार्धसप्तत्रिंशत् दण्डो भवतीत्यर्थः । ब्राह्मणेन निषादाक्षेपे पादोनैकविंशतिः पणानां दण्डो भवति। अत्र पञ्चविंशत्यपेक्षया पादव्यवस्था । ततश्च वैश्यापेक्षया न्यूनत्वान्निषादस्य शूद्रापेक्षयाऽधिकत्वाच्च ब्राह्मणेन वैश्याक्षेपे दण्डो यः पञ्चविंशतिस्तदपेक्षया पादन्यूनो ब्राह्मणेनैव शूद्राक्षेपे यः सार्धद्वादशपणात्मको दण्डः, तस्मात् पादाधिक: पादोनैकविंशतिर्दण्ड इत्यर्थः । निषादेन ब्राह्मणाक्षेपे पञ्चसप्तत्यधिकं शतं दण्डः । अत्रापि पुनः शतापेक्षयैव पादव्यवस्था । तथा च शूद्रापेक्षया निषादस्याधिकत्वेन वैश्यापेक्षया च न्यूनत्वेन शूद्रेण ब्राह्मणाक्षेपे यो दण्डो वधात्मकः शारीरः तस्मादर्थदण्डस्य न्यूनत्वेन शूद्रकृतब्राह्मणाक्षेपनिमित्तात् दण्डात् किञ्चिन्न्यूनो वैश्येन ब्राह्मणाक्षेपे यो दण्डः सार्धशतं तस्मात् किञ्चिदधिकः पञ्चसप्तत्यधिकं दण्डो भवतीत्यर्थः । अम्बष्ठेन ब्राह्मणाक्षेपे पञ्चविंशत्यधिकशतदण्डः। वैश्यापेक्षयाऽम्बष्ठस्याधिकत्वेन क्षत्रियापेक्षया च न्यूनत्वेन वैश्येन ब्राह्मणाक्षेपे सार्धशतं यो दण्डस्तस्मान्न्यूनः क्षत्रियकर्तृकब्राह्मणाक्षेपे यो दण्डः शतात्मकस्तस्मादधिकः पञ्चविंशत्यधिकं शतं दण्डो भवतीत्यर्थः । मूर्धावसिक्तकर्तृकब्राह्मणविषयाक्षेपे पूर्वदर्शितः। स एष वर्णजात्योरानुलोम्यप्रातिलोम्यापवादे कल्पनाक्रमः। जातिष्वेवाऽऽनुलोम्यप्रातिलोम्यापवादे तु ब्रह्मक्षत्रविशामिव मूर्धावसिक्ताम्बष्ठनिषादानामपि यथाक्रमं पञ्चाशत् पञ्चविंशति सार्धद्वादश सार्धशत शतपञ्चाशदात्मकं दण्डस्योहनं विज्ञेयम् । एतदुक्तं भवति—स्वस्मात् सन्निहिताधिकापेक्षयाऽधिको दण्डो व्यवहिताधिकाक्षेपे, तथैव सन्निहितन्यूनापेक्षया च न्यूनो दण्डो व्यवहितन्यूनाक्षेप इति । प्रकृतमनुसरामः ॥ २०६ ॥

एवं सर्ववर्णविषय इति—सर्वे च वर्णाश्चेति समासः, सर्वे मूर्धावसिक्तादयः ।

बालंभट्टी

एवं सर्ववर्णेति—सर्वे च वर्णाश्चेति समासः, सर्वे मूर्द्धावसिक्तादयः । वर्णाः—ब्राह्मणादयः। एवेन— जातिव्यवछेदः । मिथ इति शेषः । प्रातिलोम्यानुलोम्याभ्यामाक्षेपे

---

१. त. तथा क्षत्रियापेक्षयाम्बष्ठस्य न्यूनत्वात् वैश्यापे० (?) । २. त. ण्डः अत्रापि (?) ।

वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥ २०७ ॥

अपवादा अधिक्षेपाः, प्रातिलोम्येनापवादाः प्रातिलोम्यापवादाः, तेषु ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोर्यथाक्रमेण पूर्ववाक्यात् द्विगुणपदोपात्तपञ्चाशत्पणापेक्षया द्विगुणाः शतपणाः त्रिगुणाः सार्धशतपणा दण्डा वेदितव्याः। शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाच्छेदनं वा भवति ; यथाऽऽह मनुः—"शतं ब्राह्मणमाकुश्य क्षत्रियो दण्डमर्हति । वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥" इति ।

वर्णान्त्याः शूद्राः; तेषां प्रतिलोमापवादे ब्राह्मणादिक्रमेणोक्तदण्डस्य चतुर्गुणादिकल्पनम् । एवं वैश्यक्षत्रियानुलोमान्तरप्रभवयोः गुणाद्युत्कर्षेऽपि योज्यम् । आनुलोम्येन तु तस्मादेवार्धहानतः—उक्तदण्डादर्धादपचयेन शूद्रापवादे अर्धदण्डो वैश्यस्य, पादः क्षत्रियस्य अर्धपादो ब्राह्मणस्य । एवं गुणाद्यानुलोम्येऽपि योज्यम् ॥ २०७ ॥

सुबोधिनी

पूर्ववाक्यात् द्विगुणपदोपात्तेति—"अर्धोऽधमेषु द्विगुणः" इत्यत्रेत्यर्थः ; द्वैगुण्यं त्रैगुण्यं चोदाहृत्य दर्शयति—शतपणाः सार्धशतपणा इति च,—अत्र दण्डा इति बहुवचनं निमित्तभूतवर्णापराधबाहुल्याभिप्रायेण । तथा हि—क्षत्रियवैश्याभ्यां ब्राह्मणो वैश्यशूद्राभ्यां क्षत्रियः शूद्रेण वैश्यः—एवमानुलोम्येनापीत्यपराधबाहुल्यम् । शूद्रस्य ब्राह्मणाक्षेपे शारीर एव दण्डो नार्थदण्डः । ब्राह्मणविषयक्षत्रियकर्तृकापराधे यो न्यायोऽभिहितस्तं क्षत्रियविषय-

बालंभट्टी

इत्यर्थः । अपवादो बाधो नात्र विवक्षित इत्याह—अधिक्षेपा इति,—"अपवादस्तु निन्दायामाज्ञाविस्रंभयोरपि ।" इति विश्वः । ब्राह्मणेति—तद्विषयकेत्यर्थः । पूर्ववाक्यीयद्विगुणेति — "अर्धोऽधमेषु द्विगुणः" इत्यत्र उपात्तद्विगुणपदेत्याद्यर्थः । वाक्याद्वेति पाठे तत्सम्बन्धिद्विगुणपदेत्याद्यर्थः । द्वैगुण्यं त्रैगुण्यं चोदाहरणेनाऽऽह — शतेत्यादि । अविरोधाय उभयोक्तेः फलं कथयन् न्यूनतां निराचष्टे — शूद्रस्येति,—ब्राह्मणविषयकाक्रोशे इत्यर्थः । अध्यर्धेति—सार्धशतमित्यर्थः । तत्रैव पक्षान्तरमाह—द्वे वेति,—लाघवगौरवापेक्षया विकल्पः । वधं—ताडनादिरूपम् । अत्र दमा इति बहुवचनं निमित्तभूतवर्णापराधबाहुल्याभिप्रायेण । तथा हि । क्षत्रियवैश्याभ्यां ब्राह्मणे वैश्यशूद्राभ्यां क्षत्रिये शूद्रेण वैश्ये एवमानुलोम्येनापीति तद्बाहुल्यम् ; तदेतदभिप्रेत्यैव ब्राह्मणविषयक्षत्रियवैश्यकर्तृकापराधे यो न्याय उक्तः, तं क्षत्रियविषयवैश्यशूद्र-

१. वि० वर्णान्त्या-नुलोम्येन तस्मादेवार्धहानतः । २.—८. २६७. । ३. त. क्येति । ४. व्य० २९६. । ५. फ. यकेन व्यव० (?)।

विट्शूद्रयोरपि क्षत्रियादनन्तरैकान्तरयोस्तुल्यन्यायतया शतमध्यर्धशतं च यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम्; शूद्रस्य वैश्याक्रोशे शतम्; आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणनाऽऽक्रोशे कृते तस्माद्ब्राह्मणाक्रोशनिमित्ताच्छतपरिमितात्क्षत्रियदण्डात्प्रतिवर्णमर्धस्यार्धस्य हानिं कृत्वाऽवशिष्टं पञ्चाशत्पञ्चविंशत्यर्धत्रयोदशपणात्मकं यथाक्रमं ब्राह्मणो दण्डनीयः; तदुक्तं मनुना—"पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंस- 5

## सुबोधिनी

विट्च्छूद्रकर्तृकापराधेऽप्यतिदिशति—विट्च्छूद्रयोरिति। अनन्तरः सन्निहितः; एकान्तरः एकेन व्यवहितः; यथा ब्राह्मणादनन्तरैकान्तरयोः क्षत्रियवैश्ययोः ब्राह्मणापराधे दण्डः तथैव क्षत्रियादनन्तरैकान्तरयोः वैश्यशूद्रयोरपीत्यर्थः। ब्राह्मणानन्तरभाविना क्षत्रियेण ब्राह्मणाक्रोशे शतमिव वैश्यानन्तरभाविना शूद्रेण वैश्याक्रोशेऽपि शतमित्याह—शूद्रस्य चेति। वर्णानामानुलोम्येनेति द्वितीयार्धं व्याचष्टे—आनुलोम्येन त्विति। ब्राह्मणेति—क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्ताच्छतदण्डादित्यर्थः। प्रतिवर्णमर्धस्यार्धस्येति—ब्राह्मणेन क्षत्रियाक्षेपे कृते शतादर्धं पञ्चाशद्दण्डः। तेनैव वैश्याक्षेपे कृते पञ्चाशतोऽर्धं पञ्चविंशतिः;

## बालंभट्टी

कर्तृकापराधेऽप्यतिदिशति—विडिति। एकान्तरः—एकेन व्यवहितः। यथा ब्राह्मणादनन्तरैकान्तरयोः क्षत्रियवैश्ययोः, तथा क्षत्रियादनन्तरैकान्तरयोः वैश्यशूद्रयोरपीत्यर्थः। ब्राह्मणानन्तरेण क्षत्रियेण ब्राह्मणाक्रोशे शतमिव वैश्यानन्तरेण शूद्रेण वैश्याक्रोशेऽपि शतमित्याह—शूद्रस्य चेति। वर्णानामित्युत्तरार्धं व्याचष्टे—आनुलोम्येन त्विति। शेषमाकाङ्क्षितं, प्रकृतमाह—आक्रोशे इति। तस्मादिति मौलस्य व्याख्या—ब्राह्मणाक्रोशेति, —क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्तक्षत्रियसंबन्धिशतपरिमितदण्डादित्यर्थः। प्रत्यासत्तेराह—प्रतीति। ब्राह्मणेन क्षत्राक्षेपे कृते शतादर्धं पञ्चाशत् दण्डः। तेनैव वैश्याक्षेपे कृते पञ्चाशतोऽर्धं पञ्चविंशतिः। तेनैव शूद्राक्षेपे कृते पञ्चविंशतेरर्धं सार्धद्वादशपणा इति विवेकः। अर्धस्यार्धस्येति—वीप्सेयम्। हानित इत्यपादानपञ्चम्यन्तात्तसिरित्याह—हानिं कृत्वेति। अत एव शेषं साकाङ्क्षमाह—अवशिष्टमिति। अर्धेति—अर्धन्यूनत्रयोदशेत्यर्थः। पञ्चाशत्पणान् क्षत्रियविषयके इत्यर्थः।

---

१. ख. तिसार्धद्वादश०। ग अर्धद्वादश०। २. थ. द. योरपीति। ३. त. एतदादि 'आह' इत्यन्तं नास्ति। ४. थ. द. ब्राह्मणाक्रोशनिमित्तादिति। ५. त. वर्णमिति। ६. फ. श्यशूद्रयो०। ७. फ. क्षत्रस०।

ने। वैश्यः स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः॥" इति। क्षत्रियेण वैश्ये शूद्रे वाऽऽक्रुष्टे यथाक्रमं पञ्चाशत्पञ्चविंशतिकौ दमौ। वैश्यस्य च शूद्राक्रोशे पञ्चाशदित्यूहनीयम्—"ब्राह्मणराजन्यवत्क्षत्रियवैश्ययोः" इति गौतमस्मरणात्, "विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः।" इति मनुस्मरणाच्च॥ २०७॥

## सुबोधिनी

तेनैव शूद्राक्षेपे पञ्चविंशतेरर्धं सार्धद्वादशपणा इति विवेकः। शूद्रे द्वादशको दम इति—अत्र सार्धं इति शेषः। क्षत्रियेण वैश्ये शूद्रे चेति—अत्र गौतमोक्तिं प्रमाणयति—ब्राह्मणेति। वैश्यस्य च शूद्रेति—अत्र मनूक्तिं प्रमाणयति—विट्च्छूद्रयोरिति॥ २०७॥

## बालंभट्टी

वैश्ये अभिशस्ते सति। एवमग्रेऽपि। ब्राह्मणो दण्ड्यः स्यादित्यर्थः। द्वादशक इति—सार्धेत्यादिः। परिमाणे कन्। उक्तरीत्यैवोक्तन्यायमन्यत्राऽप्याह—क्षत्रियेणेति। अत्राऽऽद्ये गौतमसम्मतिमाह—ब्राह्मणराजन्यवदिति,—तयोः तादृशयोः यथा न्यायः, तथा अनयोरपि तादृशयोरित्यर्थः। द्वितीये मनुसम्मतिमप्याह—विडिति,—वैश्यशूद्रयोः। स्वजातिं प्रति—अन्योन्यजातिं प्रति आक्रोश। एवमेव—ब्राह्मणक्षत्रियवत्—वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यमसाहसः इत्येवं रूपं दण्डप्रणयनं जिह्वाच्छेदरहितं तत्त्वतो यथावत् कर्तव्यमिति शास्त्रनिश्चय इत्यर्थः। अस्य हि "छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः।" इत्युत्तरार्धम्। "ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्यो विजानता। ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः॥" इति [७] पूर्वं पद्यं च। ब्राह्मणक्षत्रियाभ्यां मिथः पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः। दण्डमेव विशेषेणाऽऽह—ब्राह्मेति, —ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यः, ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहस इति तदर्थः। एवं च तदपि पतनीयाक्रोशविषयमेव यद्यपि, तथाऽपि तुल्यन्यायतः अत्रोपन्यस्तं व्याख्यात्रा। अनेन च मनुना—"एकजातिर्द्विजातिस्तु वाचा दारुणया क्षिपन्। जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥" इति स्वयमेव प्रागुक्तो जिह्वाच्छेदो वैश्यनिवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवाऽवतिष्ठते। शूद्रो द्विजातीन् पातकादिना वाचा आक्रुश्य जिह्वाच्छेदं लभते—यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जातः इति तदर्थः॥ २०७॥

१.—८. २६८. । २.—१२. १४. । ३.—८. २७७. । ४. थ. द. मवचनं प्र०। ५. थ. द. शूद्राक्रोश इत्यत्र मनुवचनं प्र० । ६. थ. द. योरेवमेवेति। ७.—मनुः. ८. २७६.। ८.—मनुः. ८. २७०.।

पुनर्निष्ठुराक्षेपमधिकृत्याऽऽह—

**बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।**
**शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ २०८ ॥**

बाह्वादीनां प्रत्येकं विनाशे वाचिके वाचा प्रतिपादिते 'तव बाहू छिनद्मि' इत्येवंरूपे शत्यः शतपरिमितो दण्डो वेदितव्यः । पादनासाकर्णकरादिषु आदिग्रहणात 5 स्फिगादिषु वाचिके विनाशे तदर्धिकः तस्य शतस्यार्धं तदर्धं तद्यस्यास्ति असौ तदर्धिकः—पञ्चाशत्पणिको दण्डो वेदितव्यः ॥ २०८ ॥

वधप्रतिज्ञया तु वाक्पारुष्ये **बाहुग्रीवानेत्रसक्थीत्यादि ॥ २०८ ॥**

'बाह्वादिच्छेदस्ते मया कर्तव्यः' इत्येवम्, तथा करणसमर्थस्य ब्रुवतः शत्यो दमः कार्यः; शतेनाभिनिवृत्तः शत्यः—शतं दण्डय इत्यर्थः । पादादिच्छेदनप्रतिज्ञायां तु ततोऽर्धं पञ्चाशदित्यर्थः । आदिशब्दश्च दण्डपारुष्योक्तदन्तभागादित्यर्थः । ऊर्वस्थि सक्थीत्युच्यते । स्पष्टमन्यत् ॥ २०८ ॥

## सुबोधिनी

"सत्यासत्यान्यथा स्तोत्रैः"[1] इत्येतेन निष्ठुराक्षेपे दण्डमभिधायाश्लीलाक्षेपे दण्डं प्रस्तुत्य सिंहावलोकनन्यायेन निष्ठुराक्षेपमधिकरोतीत्याह–पुनर्निष्ठुराक्षेपमिति । वाचा प्रतिपादनमेवोदाहृत्य दर्शयति—तव[2] बाहूमिति ॥ २०८ ॥

## बालंभट्टी

"सत्यासत्यान्यथा स्तोत्रैः" इत्यनेनोक्तत्वादाह—पुनरिति,—सिंहावलोकनन्यायेनेति भावः । अधीति — बुद्धिस्थीकृत्येत्यर्थः । द्वन्द्वतोऽर्थान्तरनिरासायाऽऽह — प्रत्येकमिति, — युगपत्तदसंभवादिति[3] भावः । वाचिके इत्यस्य व्याख्या— वाचेति । तदेवोदाहरणेनाऽऽह — तवेति । करादिष्विति विषयसप्तमीत्याह— वाचीति । अत्र वाचिके इत्युक्त्या अस्य निष्ठुराक्षेपविषयत्वं स्पष्टम् । एवमग्रेऽपि ॥ २०८ ॥

१. श्लो० २०४. । २. त. तवेति । ३. फ ति वाचि० ।

किंच—

**अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश ।**

**तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २०९ ॥**

यः पुनर्जरादिना क्षीणशक्तिः 'त्वाद्बाह्वाद्यङ्गभङ्गं करोमि' इत्येवं शपत्यसौ दश प-
5 णान्दण्डनीयः। यः पुनः समर्थः क्षीणशक्तिं पूर्ववदाक्षिपत्यसौ पूर्वोक्तशतादिदण्डोत्तर-
कालं तस्याशक्तस्य क्षेमार्थं प्रतिभुवं दापनीयः ॥ २०९ ॥

तीव्राक्रोशे दण्डमाह—

**पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।**

**उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१० ॥**

पातित्यहेतुभिर्ब्रह्महत्यादिभिर्वर्णिनामाक्षेपे मध्यमसाहसो दण्डः ।

प्रागुक्तशक्तसंबन्धितया बाह्वादिच्छेदवाक्यम् **अशक्तस्तु वदन्नेवमित्यादि ॥ २०९ ॥**

वाङ्मात्रेणापि वधं कर्तुमशक्तस्य दशपणो दण्डः; शक्तस्तु प्रागुक्तदण्डं दाप्यः, त्रासापनोदनाय च समर्थं क्षेमाय प्रतिभुवं दाप्यः ॥ २०९ ॥

'ब्रह्महा गोघ्नो वात्वम्' इत्येवमादिकेक्षेपे

**पतनीयकृते क्षेपे दण्ड्यो मध्यमसाहस इत्यादि ॥ २१० ॥**

सुबोधिनी

वर्णिनामिति—वर्णिपदं मूर्धावसिक्तादिजातीनामुपलक्षणार्थम्। तथा च जातिष्वपि परस्परं पतनीयैराक्षेपे प्रथमसाहस इत्येव निर्णयः। वर्णजात्योः परस्परमाक्षेपेऽपि पूर्वोक्त-

बालंभट्टी

किञ्चेति—अन्यदपि तद्विषये उच्यत इत्यर्थः। त्वर्थमाह—यः पुनरिति । एवं वदन्नित्यस्यार्थमाह—त्वदिति । शक्त इत्यस्यार्थ इति अर्थादाह—क्षीणशक्तिमिति । तथेत्यस्यार्थः—पूर्ववदिति । अत्र विषये दण्डस्योक्तत्वात् अत्रानुक्तिरित्याह—पूर्वोक्तेति ॥ २०९ ॥

पतनीये करणे अनीयरित्याह—पातित्यहेतुभिरिति । वर्णिनामिति—मिथ इति

---

१. क. ख. ग ज. ज्वरा०। २. क. क्षेमाय । ३. क. स दण्डयः । ४. थ. द. नामापेक्षे

उपपातकसंबद्धे[1] पुनः 'गोघ्नस्त्वमसि' इत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्ड-नीयः ॥ २१० ॥

किं च—

**त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।**
**मध्यमो जातिपूगानां[2] प्रथमो ग्रामदेशयोः ॥ २११ ॥**   5

त्रैविद्याः वेदत्रयसंपन्नाः तेषां राज्ञां देवानां च[3] क्षेपे उत्तमसाहसो दण्डः।ये पुनर्ब्रा-ह्मणमूर्धावसिक्तादिजातीनां[4] पूगाः संघाः तेषां आक्षेपे मध्यमसाहसो दण्डः । ग्रामदे-

---

तथा—**त्रैविद्यनृपदेवानां क्षेप उत्तमसाहस इत्यादि** ॥२११॥

नृपग्रहणमाचार्यपितृश्रोत्रियादीनामपि सामान्यलक्षणार्थम् । पूगशब्दश्चात्र गणमा-त्रवचनः ; ततश्च जातिपूगानां जातिमतां गणानां क्षत्रियादिसमुदायानाम् । स्पष्ट-मन्यत् ॥ २११ ॥

---

सुबोधिनी

एव दण्डः । वर्णिष्वपि न्यूनाधिकभावमन्तरेण मध्यमसाहसादिदण्डविधानादितरत्रापि कल्पनापत्तेः प्रामाणिकत्वात् ॥ २१० ॥

ये पुनरिति—ब्राह्मणसङ्घः, मूर्धावसिक्तसङ्घः, एवं क्षत्रियादिसङ्घः इति प्रत्येकं सङ्घश-

बालंभट्टी

शेषः । इदमपि क्षत्रियकर्तृकब्राह्मणाक्षेपविषयं—प्रागुक्तमनोः । अन्यत्र तथैव कल्पना बो-ध्या इति केचित् । वर्णिपदं मूर्द्धावसिक्तादिजातीनामप्युपलक्षणम् । तथा च जातिष्वपि मिथः पतनीयैराक्षेपे मध्यमसाहसः उपपातकैराक्षेपे प्रथमसाहस इत्येवं निर्णयः । वर्णजा-त्योर्मिथ आक्षेपेऽपि पूर्वोक्त एव दण्डः । वर्णिष्वपि न्यूनाधिकभावं विना मध्यमसाहसादि-दण्डविधानादितरत्रापि तथा कल्पनस्य प्रामाणिकत्वादिति बोध्यम् । युक्ते स्वित्यर्थमाह—संबन्धे पुनारिति ॥ २१० ॥

किञ्चेति—प्राग्वत् । अत्र जातिपदमुभयपरमित्याह—ये पुनर्ब्राह्मणेति,—अन्यथा न्यूनतापत्तेरिति भावः । जातिपूगानामित्येकं निमित्तं न तु द्वन्द्व इत्याह—जाती-नां पूग इति । अयं चात्र सामान्यतस्समुदायवाचीत्याह—सङ्घा इति । अत्र बहुवचन-

---

१. ख. संयुक्ते ; ग. युक्ते । २. वि० जातरूपाणां । ३. क. चाक्षेपे । ४. थ. द. नर्ब्रा-ह्मणमूर्द्धावसिक्तादीनामिति ।

शयोः प्रत्येकमाक्षेपे प्रथमसाहसो दण्डो वेदितव्यः ॥ २११ ॥

॥ इति वाक्पारुष्यं नाम विवादप्रकरणम् ॥

## सुबोधिनी

ब्दान्वयः ; मिलितान्वयो वा । उभयथाऽपि स एव दण्डः ॥ २११ ॥ इति भट्टविश्वेश्वर-विरचितायां सुबोधिन्यां वाक्पारुष्यप्रकरणम् ॥

## बालंभट्टी

बलात् तेषां प्रत्येकं सङ्घा यथाकथञ्चित् मिलितानां वा सङ्घा इति विवक्षितम् । सर्वथाऽपि स एव दण्ड इति बोध्यम् । प्राग्वदाह—प्रत्येकामिति ॥ २११ ॥ इति वाक्पारुष्यप्रकरणम् ॥

---o---

## अथ दण्डपारुष्यप्रकरणम् १९

[1]दण्डपारुष्यं संप्रति प्रस्तूयते । तत्स्वरूपं च नारदेनोक्तम्—"परगात्रेष्व-भिद्रोहो हस्तपादायुधादिभिः। भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥" इति। परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैः—आदिग्रहणाद्ग्रावादिभिः—योऽभिद्रोहो हिंसनं दुःखोत्पादनं, तथा भस्मना—आदिग्रहणाद्रजःपङ्कपुरीषाद्यैश्च—य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनं तदुभयं दण्डपारुष्यम् । दण्डयतेऽनेनेति दण्डो देहः, तेन 5 यत्पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्डपारुष्यम् ; तस्य [3]चावगोरणादिकरण-भेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्यरूपकर्मत्रैविध्यात् पुनस्त्रैविध्यं तेनैवोक्तम्—

---

### सुबोधिनी

दण्डपारुष्यस्वरूपं नारदवचनानुसारेणाभिधाय तद्वचनानुसारेणैव तद्भेदानप्याह — तत्र चावगोरणादिरूपकरणभेदेनेति,— अवगोरणादिरूपकरणकारकभेदेन साधनभेदे-नेति यावत् । द्रव्यरूपकर्मत्रैविध्यादिति—कर्मकारकत्रैविध्यादित्यर्थः। एतदुक्तं भवति—

### बालंभट्टी

अथ द्वितीयं पारुष्यमाह—दण्डेति । चः त्वर्थे । गात्रशब्द उपलक्षणमन्यस्यापि । तच्च विनिगमकाभावात् सर्वमित्याह—स्थावरेति । तात्पर्यार्थद्वयं—हिंसनमित्यादि । अत्र दुःखं कायिकं बोध्यम् । करीषेति पाठः । उपघातपदस्य तस्यासंभवादन्वयासंभवेन पृथगुक्तेराह— संस्पर्शनेति । अत एवाऽऽह—मन इति । अस्यान्वर्थत्वमाह--दण्ड्यते इति—पर इति शेषः, दुःखयुक्तः क्रियत इत्यर्थः । एवं नारदोक्त्या दण्डपारुष्यस्वरूप-मुक्त्वा तयैव तद्भेदानप्याह—तस्य चेति,—दण्डपारुष्यस्य चेत्यर्थः । गूरणादिकरण-भेदेनेति—तद्रूपसाधनभूतकारकभेदेनेत्यर्थः । द्रव्यरूपकर्मेति—तद्रूपकर्मकारकत्रैवि-ध्यादित्यर्थः । पुनः—पुनरपि । त्रैविध्यं—तदेव । तेनैव—नारदेनैव । दण्डपारुष्यं—शरीरस्य विरुक्षीकरणम् । तत्र विरुक्षीकरणाख्यव्यापारे अवगोरणादीनि त्रीणि करणानि

---

१. क. संप्रति दण्डपारुष्यं कथ्यते ; ख. दण्पारुष्यं नाम सं० । २.—१५. ४. । ३. ख. त्ववगो० ।

"तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् । अवगोरणनिःसङ्कपातनक्षतदर्शनैः ॥ हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमात् । त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम् ॥" इति । निःसङ्कपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि

## सुबोधिनी

दण्डपारुष्यं नाम शरीरस्य विरूपीकरणम् । तत्र विरूपीकरणाख्ये कर्मणि अवगोरणं निस्सङ्कपातनं क्षतजदर्शनं चेति त्रीणि करणानि । एवं करणभेदात् त्रैविध्यम् । यत्र शरीरे विरूपीकरणं जायते तत्कर्मकारकं । तस्य कर्मकारकस्य हीनत्वेन मध्यमत्वेनोत्तमत्वेन च त्रैविध्यमिति । तस्यापीति—तस्य दण्डपारुष्यस्यावगोरणनिस्सङ्कपातनक्षतजदर्शनैः करणैः हीनमध्यमोत्तमानां द्रव्याणां समतिक्रमात् हीनमध्यमोत्तमक्रमात् त्रैविध्यं द्रष्टव्यमित्यन्वयः । अवगोरणादिषु करणेषु पाठक्रमादेव हीनत्वादिकं विज्ञेयम् । ननु करणकारकभेदात् कर्मकारकभेदाच्च षड्विधत्वे सिद्धे त्रैविध्योक्तिरनुपपन्नेत्याशङ्क्याऽऽह—त्रीण्येव साहसानीति । तत्रैवंविधे दण्डपारुष्ये कण्टकशोधने दुष्टशिक्षायां क्रियमाणायामपराधानुसारेण शिक्षार्थं दण्डपारुष्यरूपाणि साहसानि हीनदण्डपारुष्यमध्यमदण्डपारुष्योत्तमदण्डपारुष्याणीति त्रीण्येवेति नियम्यते । अयमर्थः—कर्मकरणभेदेऽपि

## बालंभट्टी

तद्भेदात् त्रैविध्यं यत्र शरीरे विरूपीकरणं भवति तत् कर्मकारकं तस्य हीनत्वादिनाऽपि त्रैविध्यमेवेत्यर्थः । तस्यापीति—तस्य दण्डपारुष्यस्य । हीनमध्योत्तमक्रमात्—तत्क्रममादाय ल्यब्लोपे पञ्चमी । प्रवृत्तैरवगूरणादिभिः त्रिभिः करणैः हीनमध्योत्तमानां द्रव्याणां समतिक्रमात् त्रैविध्यमपि दृष्टमित्यर्थः । चः पादपूरणे । तथा च अवगूरणादिषु करणेषु पाठक्रमादेव हीनत्वादिकं बोध्यम् । ननु करणकारककर्मकारकभेदात् षड्विधत्वे त्रैविध्यमनुपपन्नमत आह—त्रीण्येवेति । "स्त्वत्र कण्टकशोधने" इति पाठः—अत्र एवंविधे पारुष्ये कण्टकशोधने दुष्टशिक्षायां क्रियमाणायां अपराधानुसारेण शिक्षार्थं दण्डपारुष्यरूपाणि साहसानि हीनदण्डपारुष्यमध्यमदण्डपारुष्योत्तमदण्डपारुष्यरूपप्रकारत्रययुक्तानि त्रीण्येवेत्यर्थः । कर्मकरणभेदेऽपि हीनत्वादिनानुगमेन तद्व्यपदेशयुक्तत्वात् त्रिप्रकारकमेवेति भावः । ननु साहसतोऽस्य भेदस्य वक्ष्यमाणत्वात् कथं साहसानीत्यत आह—त्रीण्येवेति,—साहससा-

---

१. ना० मृदुम० । २. ना० क. ज. निःशङ्क । ३. ना. णामपकर्षणात् । ४. ना०. १५—५, ६. । ५. द. पि दृष्टं त्रैविध्यमिति । ६. त. इदं पदं नास्ति ।

त्रिप्रकाराण्येव ; सहसा[1] कृतानि दण्डपारुष्याणीत्यर्थः । तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न केवलं तस्य दण्डाभावः ; किंतु पूज्य एव । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च बद्धवैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा द्वयोरपराधविशेषापरिज्ञाने[2] दण्डः समः । तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डदापने[3]ऽधिकारिणः तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादित्येवं पञ्च प्रकारा विधयस्तेनैवोक्ताः-"विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि[4]।""पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः। स मान्यते यः क्षमते दण्डभाग्योऽ- 5

## सुबोधिनी

हीनमध्यमोत्तमव्यपदेशत्रित्वात् त्रिप्रकारकत्वमेवेति । एवं दण्डपारुष्यस्वरूपं सभेदमभिधाय वाक्पारुष्यदण्डपारुष्यसाधारणधर्मानाह-तथा[5] वाग्दण्डपारुष्ययोरुभयोरिति। बद्धवैरानुसन्धातुरिति—पूर्ववैरानुस्मर्तुरित्यर्थः। विधिरिति[6]— एतयोरुभयोर्वाग्दण्डपारुष्ययोः पञ्चविधः पञ्चप्रकारो विधिर्विधानमित्यर्थः । तानेतान् पञ्च विधीनाह--पारुष्येत्यादिना,—

## बालंभट्टी

मान्यलक्षणाक्रान्तत्वस्य अत्रापि वक्ष्यमाणत्वादिति भावः । एवं नारदोक्त्या सभेदं दण्डपारुष्यस्वरूपमुक्त्वा वाक्पारुष्यसाधारणधर्मान् तयैव प्रतिपादयितुं तेषां स्वरूपं क्रमेणाऽऽह —तथेति । उभयोरपीति—विषयसप्तमी, प्रवृत्तकलहयोः द्वयोर्मध्ये इत्यन्वयः । एवः अप्यर्थे । तृतीयप्रकारमाह—कलहे चेति । बद्धं अनुबद्धं यत् पूर्ववैरं तत्स्मर्तुरित्यर्थः । एवेन अन्यव्यवच्छेदः । सज्जना एव—आर्या एव । दापने—भृत्यादिद्वारा । तेषाम्—आर्याणाम्। स्फुटार्थमेवव्यवच्छेद्यमाह—नार्थमिति,—न धनमित्यर्थः। तेनैव—नारदेनैव । एतयोरुभयोरपि—वाग्दण्डपारुष्ययोः । पञ्चविधाः प्रकारा यस्य तादृशो विधिः विधानमुक्तमित्यर्थः । तान्येवाऽऽहोक्तक्रमेण—पारुष्ये सतीत्यादिना । तदेव ध्वनयन्नाह—दण्डेति,—योऽतिक्रम्य गच्छति, स दण्डभागित्यर्थः । एवं प्रथममतमुक्त्वा

१. ख. ज. साहसात्कृतानि । घ. साहसकृ० । २. क. तयोर्द्वयोर० । ३. क. ज. पातने। ४. ना० १५. ७. । ५. थ. एतदादि 'पारुष्य' इत्यन्तं नास्ति । ६. त. तथेति । ७. त. इदं प्रतीकं नास्ति । ८. थ. द. विधिः पञ्चविधस्तूक्त इति । ९. थ. द. न दर्शयति—पारुष्ये सतीत्यादिना ।

तिवर्तते ॥" "पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥ द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः । स तयोर्दण्डमाप्नोति पूर्वो वा यदि[1]वेतरः ॥ पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः। विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ॥ श्वपाकषण्डचण्डाल[2]व्यङ्गेषु वधवृत्तिषु । हस्तिपव्रात्यदासेषु

5 गुर्वाचार्यान्[3]तगेषु च ॥ मर्यादातिक्रमे सद्यो घात एवानुशासनम् ।

## सुबोधिनी

संरम्भात् पारुष्ये उत्पन्ने सति क्रुद्धयोर्द्वयोर्मध्ये यः क्षमते, स मान्यत इत्यन्वयः। द्वयोरापन्नयोरिति—तुल्यमापन्नयोः कलहं प्रति प्राप्तयोर्मध्ये यः पुनर्वैरमनुबध्नाति, स एव दण्डभाक्। प्रथमप्रवृत्तो वा पश्चात् प्रवृत्तो वेत्यर्थः। श्वपाकषण्डेति—अस्यार्थः—श्वप[4]चादिदासान्तेषु सद्यो घात एवानुशासनम्। कस्मिन् सति गुर्वाचार्यान्तगेषु विषये मर्यादातिक्रमे सतीति। अन्तं चरममाश्रमं गच्छतीत्यन्तगो यतिः। चशब्दो भिन्नक्रमः। तथा चायमन्वयः सम्पद्यते—वधवृत्तिषु श्वपाकादिषु हस्तिपव्रात्यदासेषु च सद्योघात एवानुशासनं गुर्वाचार्यान्तगेषु विषये मर्यादातिक्रमे सतीति। अथ वाऽन्यैव व्याख्या—अन्तं नाशं गच्छतीत्यन्तगः, गुर्वाचार्यान्तगेषु गुर्वाचार्यद्रोहिष्वि[5]त्यर्थः। ततश्चायमन्वयः—श्वपाकादिगुर्वाचार्यान्[6]तगेषु सद्योघात एवानुशासनम्। कस्मिन् सति? रुत्सु विषये मर्यादातिक्रमे सति। सत्स्विति पदमुत्तरश्लोकपर्यालोचनयाऽर्थलभ्यम् ॥

## बालंभट्टी

द्वितीयमाह—पूर्वमिति। आक्षारयेत्—पारुष्यं कुर्यात्। नियतम्—अवश्यम्। पश्चाद्यः आक्षारयेत्। असत्कारी—दोषभाक्। विशेषमाह—पूर्वे त्विति। विनयः—दण्डः। कलहे चेत्युक्तं तृतीयप्रकारमाह—द्वयोरिति। तुल्यम्—अन्यूनाधिकं कलहम्। आपन्नयोः—प्राप्तयोः द्वयोः मध्ये यः पुनः यस्तु वैरमनुबध्नाति दण्डान्तरमनुबद्धं स्मरति, तयोर्मध्ये स एव दण्डभाग्भवति। पूर्वो वा—प्रवृत्तो वा। यदि वा—अथ वा। इतरः—पश्चात् प्रवृत्त इत्यर्थः। चतुर्थमाह—पारुष्येति,—स्पष्टम्। पञ्चममाह—श्वपाकेति। वधेति—श्वपाकादेरेव विशेषणम्; वधजीविष्विति तदर्थः। अत एवैतदवान्तरभेदा एव। अत्र नृपेष्विति विषयसप्तमी। चो भिन्नक्रमः। तथा च वधवृत्तिषु श्वपाकादिषु चतुर्षु हस्तिपव्रात्यदासेषु च सद्यः तद्घात एवानुशासनम्। कस्मिन् सति गुर्वाचार्यनृपविषये मर्यादातिक्रमे सतीत्यर्थः। "चार्यान्तगेषु च" इति पाठान्तरम्। तत्र अन्तं चरममाश्रमं गछतीति अन्तगो—यतिः। यद्वा अन्तं नाशं गच्छन्ति गमयन्तीति अन्तगाः

---

१. घ. वापरः; च. ग. चेतरः; ना० वोत्तरः। २. ज-पण्ड०; ना०। मेद०। ३. ख. ग. नृपेषु ना० घ. तिगेषु। ४. थ. द. पाकादि० । ५. थ. द. ष्विति यावत्। ६. थ. दन्तगान्तेषु।

यमेव ह्यतिवर्तेरन्नेते[1] सन्तं जनं नृषु। स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः॥मला ह्येते मनुष्याणां[2] धनमेषां मलात्मकम्। अतस्तान्घातयेद्राजा[3] नार्थदण्डेन दण्डयेत्॥" इति।

एवंभूतदण्डपारुष्यनिर्णयपूर्वकत्वाद्दण्डप्रणयनस्य तत्स्वरूपसन्देहे निर्णयहेतुमाह—

**असाक्षिकहते चिह्नैर्युक्तिभिश्चाऽऽगमेन च।**

**द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो[5] भयात्॥ २१२॥** 5

यदा कश्चिद्रहस्यहननेना[4]ऽहत इति राज्ञे निवेदयति तदा चिह्नैर्व्रणादिस्वरूपगतैर्लिङ्गैः, युक्त्या कारणप्रयोजनपर्यालोचनात्मिकया, आगमेन च[7] जनप्रवादेन

वाक्पारुष्यपूर्वकत्वाद्दण्डपारुष्यस्यानन्तरमारम्भः। पाण्यादिनाऽभिघातादिकं दण्डपारुष्यं तत्र निर्जनेऽभिहत्य 'न मयाऽभिहतः' इत्येवं मिथ्यावादित्वे दौष्ट्यातिशयाद्वा क्षताद्यात्मनः कृत्वा निर्दोषजनाद्यारोपे कथं स्यादित्यपेक्षित आह—

**असाक्षिकहते चिह्नैरित्यादि॥ २१२॥**

---

## सुबोधिनी

अधुना मूलमवतारयति-एवम्भूतेति। कारणप्रयोजनेति—कारणपर्यालोचनप्रयो-

## बालंभट्टी

गुर्वाचार्ययोरन्तगाः तेषु गुर्वाचार्यद्रोहिषु। अत्र चो यथाश्रुत एव। तथा च वधवृत्तिषु श्वपाकादिषु हस्तिपादिषु गुर्वाचार्यान्तगेषु च सद्यो घात एवानुशासनं—शिक्षा उत्तरश्लोकपर्यालोचनया सत्स्वित्यर्थः। लभ्यं कस्मिन् सति सत्सु विषये मर्यादातिक्रमे सतीत्यर्थः। "चार्यानुगेषु" इति पाठेऽप्येवम्। आद्यपेक्ष नृपेत्याद्युपलक्षणमिति सूचयन् घातमेव द्वाभ्यामाह—यमेवेति। नृषु—नृणां मध्ये। एते—श्वपाकादयः। यमेव हि सन्तं जनमित्याद्यर्थः। विनयं—दण्डम्। एवव्यवच्छेद्यमेवाऽऽह—न तादिति। एते पूर्वोक्ताः॥

एवं स्मृत्यन्तरोक्तमुक्त्वा तत्सङ्गत्या मूलमवतारयति-एवंभूतेति,—उक्तं प्रकारं प्राप्तेत्यर्थः। प्रणयनस्य—वक्ष्यमाणमूलोक्तस्य। तदिति—दण्डपारुष्यस्वरूपेत्यर्थः। हेतुमिति—जातावेकवचनम्। असाक्षिकं हतं—हननं यत्र निवेदने इति बहुव्रीहिः—तदाह—यदेत्यादि यतीत्यन्तेन। व्रणादिभिरिति स्वरूपगतैः स्वरूपं प्राप्तैः। युक्त्येति—जातावेकवचनम्। व्याख्याने तत्स्वरूपमाह—कारणेति,—द्वन्द्वगर्भषष्ठीतत्पुरुषादिरयम्। कारणपर्यालोचनात्मिकया चेत्यर्थः। आगमोऽत्रान्य एवेत्याह—जनेति। मौलमेकं चशब्दं

---

१. ना. तैंत नीचः। २. ना० ष्येषु। ३. ना० अपि। ४. ना० १५.—९, १०, ८, ११—१४.। ५. वि० कृताद्भयात्। ६. ख. हत इ०। ७ ख. 'च' नास्ति। ८. थ. द. लश्लोकमव०। थ. द. पर्यालोचनप्रत्येकमभिसंबध्यते साधन०।

—चशब्दाद्दिव्येन वा—कूटचिह्नकृतसंभावनाभयात्परीक्षा कार्या ॥ २१२ ॥

एव निश्चिते साधनविशेषेण दण्डविशेषमाह—

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः ततः ॥ २१३ ॥
5 समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च।

---

असाक्षिकेऽभिहने क्षतादिभिः चिह्नैः तदभिचरन्नरः कूटचिह्नकारी दुष्टपुरुषः भयाद्वा व्यवहार एव प्रागुक्तन्यायेन चतुष्पाद्युक्त्यागमानुसारेणैव विद्वज्जनसमक्षं स्वयं वा राज्ञा द्रष्टव्यः। अयं च सर्वव्यवहारपदसाधारणः श्लोकः कार्यगौरवप्रतिपत्त्यर्थमिहाऽऽम्नात इत्यवसेयम्। किञ्च "यत्र नोक्तो दमस्सर्वैः प्रमादेन महात्मभिः। तत्र कार्यं परिज्ञाय कर्तव्यं दण्डधारणम्॥" नाभिधानभ्रान्त्याऽनध्यवसायः कार्यः। उक्तमनुक्तं वाऽऽद्यैः गुणादिभिश्च स्वरूपमालोच्य पीडानुसारेण सर्वत्र दण्डमानकर्तव्यताध्यवसानमित्यभिप्रायः॥ २१२ ॥

एतदेवोदाहरणमात्रतया प्रपञ्चयति—भस्मपङ्करजस्स्पर्श इत्यादि ॥ २१३ ॥

मेध्यत्वे भस्मकर्दमधूलिप्रक्षेपणे निर्दोषस्य कृते दशपणो दण्डः स्मृत इत्यल्पोऽपि स्मरणानुसारादविरुद्ध इत्यवसेयम्। अमेध्यादिस्पर्शे तु ततो द्विगुणः विंशतिपण इत्यर्थः। निष्ठ्यूतग्रहणं निष्ठ्यूतसदृशोमध्यप्रतिपत्त्यर्थम्। तथा च पुरीषादौ दण्डातिरेकसिद्धिः॥ २१३ ॥

यच्चैतदुक्तं समेष्वेवं पुरस्त्रीषु द्विगुण इत्यादि ॥ २१४ ॥

कृतव्याख्यानमेतत् ॥ २१४ ॥

## सुबोधिनी

जनपर्यालोचनात्मिकयेत्यर्थः ॥ २१२ ॥

साधनविशेषेणेति — वक्ष्यमाणभस्मादयः साधनविशेषाः।

## बालंभट्टी

व्याचष्टे—चशब्दादिति,—सर्वसमुच्चायकम्। द्वितीयं तमाह—येन चेति। मूले कृतो भयादित्यत्र कृदिति सम्पदादित्वात् भावे क्विप् तस्य करणस्य भयादित्यर्थः। तस्य निश्चयादाह—कृतसंभावनाया इति,—करणसंभावनाया इत्यर्थः। तृतीयपादार्थमाह—परीक्षेति ॥ २१२ ॥

एवं—व्यवहितोक्तप्रकारेण। निश्चिते—दण्डपारुष्ये। न समुदायस्पर्शो विव-

---

१. ख. ग. स्मृतः। २. त. एतदादि 'षिकेति' इत्यन्तं नास्ति।

हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥ २१४ ॥

भस्मना पङ्केन रेणुना वा यः परं स्पर्शयत्यसौ दशपणं दण्डं दाप्यः । अमेध्यमिति अश्रुश्लेष्मनखकेशकर्णविड्दूषिकाभुक्तोच्छिष्टादिकं च गृह्यते । पार्ष्णिः पादस्य पश्चिमो भागः ; निष्ठ्यूतं मुखनिःसारितं जलम्; तैः स्पर्शने ततः पूर्वाद्दशपणात् द्विगुणो विंशतिपणो दण्डो वेदितव्यः। पुरीषादिस्पर्शने पुनः कात्यायनेन विशेष उक्तः--"छर्दिमूत्रपुरीषाद्यैरापाद्यःस चतुर्गुणः।षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः

---

सुबोधिनी

कर्णविड्दूषिकेति— कर्णविट् कर्णमलम् ; दूषिका नेत्रमलम् । मूलवचनस्थं "द्विगुणः स्मृतः" इत्यमुमंशं व्याचष्टे—तते इति,—ततो द्विगुणो दण्ड इत्यन्वयः । ततः कुत इत्यपेक्षायामाह —पूर्वाद्दशपणादिति —"पूर्वादिभ्यो नवभ्यो वा" इति विकल्पेन ङसौ सर्वनामसंज्ञा । पुरीषादिस्पर्शन इति—पुरीषादिभिः स्पर्शने कृते इत्यर्थः । छर्दिमूत्रेति—अस्यार्थः,—छर्द्यादिभिः परगात्राभिद्रोहे स दण्डश्चतुर्गुणः कर्तव्यः; दशपणापेक्षया चातुर्गुण्यं—चत्वारिंशत् पणा इत्यर्थः। कायमध्ये नाभेरुपरिष्टान्मुखादर्वाक् छर्द्यादिभिरभिद्रोहे षड्गुणो दण्डः स्यात् । पारिशेष्यात् पूर्वोक्तश्चतुर्गुणो दण्डो नाभेरधस्ताद्द्रोहे विज्ञेयः । षड्गुणाः

बालंभट्टी

क्षित इत्याह—रजसा वेति,—तेषां स्पर्शभूतहेतौ सतीति वाच्योऽर्थः । तत्फलितमाह—य इति । कर्णविट्—कर्णमलम् । दूषिका—नेत्रमलम् । त्रयाणां द्वन्द्व इत्याह—तैरिति । "द्विगुणस्ततः" इति मूले व्युत्क्रम इत्याशयेन तदर्थमाह—ततः पूर्वादिति,—पूर्वोक्तात् तस्मात् । पुरीषादीति—तैः स्पर्शने कृते त्वित्यर्थः। छर्दिमूत्रेति—छर्दिः वमनं छर्द्यादिभिः परगात्राभिद्रोहे आपात् पादमारभ्य नाभिपर्यन्तं यो दण्डः रू चतुर्गुणः । दशपणापेक्षया तत्त्वं चत्वारिंशत्पणः स्यात् । कायमध्यं—नाभेरूर्ध्वं मुखादर्वाक् । तैस्तथा सति षड्गुणस्स्यात् । मूर्ध्नि तु तैस्तथा सति अष्टगुणः—अशीतिपणः स्मृत इत्यर्थः । एतेन

---

१. क. स्पृशति । २. त. ततः पूर्वादिति । ३ थ. द. त इति कु० । ४. अ० ७. १. १६. । ५. त. छर्दीति ।

स्मृतः॥" इति । आद्यग्रहणाद्वसाशुक्रासृङ्मज्जानो गृह्यन्ते। एवंभूतः पूर्वोक्तो दण्डः सवर्णविषये द्रष्टव्यः; परभार्यासु चाविशेषेण । तथोत्तमेषु स्वापेक्षया अधिकश्रुतवृत्तेषु पूर्वोक्ताद्दशपणाद्विंशतिपणाच्च दण्डाद्द्विगुणो दण्डो वेदितव्यः । हीनेषु स्वापेक्षया न्यूनश्रुतादिषु पूर्वोक्तस्यार्धदमः पञ्चपणो दशपणश्च वेदितव्यः । मोहश्चित्तवैकल्यम्; मदो मद्यपानजन्योऽवस्थाविशेषः—आदिग्रहणात् ग्रहावेशादिकम् ;–एतैः युक्तेन भस्मादिस्पर्शने कृतेऽपि दण्डो न कर्तव्यः ॥ २१३ ॥ २१४ ॥

## सुबोधिनी

षष्टिपणाः, अष्टगुणोऽशीतिः पणा इति । "समेष्वेवम्" इत्यमुमंशं व्याचष्टे—एवमिति । परस्त्रीगात्रे स्वापेक्षयाऽधिकश्रुतवृत्तेषु च भस्मादिभिः स्पर्शने दशपणात् द्विगुणो विंशतिपणः; अमेध्यादिभिः स्पर्शने तु विंशतिपणात् द्विगुणः चत्वारिंशत्पणश्च दण्डो भवतीत्याह—परभार्यास्विति,— सवर्णत्वोत्तमवर्णत्वहीनवर्णत्वविशेषमन्तरेणेत्यर्थः । पञ्चपणो दशपर्ण इति—भस्मादिभिः स्पर्शन इत्यर्थः ॥ २१३ ॥ २१४ ॥

## बालंभट्टी

पारिशेष्यात् पूर्वोक्तश्चतुर्गुणो दण्डो नाभेरधस्तात् द्रोहे विज्ञेय इति व्याख्यानमपास्तम्—आपादित्यस्यार्थाज्ञानात् । समासान्तस्तत्र लोप आर्षः । कातीयं व्याचष्टे—आद्येति । समेष्वेवमिति व्याचष्टे—एवमिति । तत्र एवमित्यस्य एवंभूत इत्यादि व्याख्या । समेष्वित्यस्य च सवर्णेति । परस्त्रीषु द्विगुण इत्यादि व्याचष्टे—परेति । अवेति—सवर्णत्वोत्तमवर्णत्वहीनवर्णत्वविशेषमन्तरेणेत्यर्थः। तथा च परस्त्रीगात्रे भस्मादिभिः स्पर्शने दशपणात् द्विगुणो विंशतिपणः, अमेध्यादिभिः स्पर्शने विंशतिपणात् द्विगुणः चत्वारिंशत्पण इत्यर्थः। एवमुत्तमेषु चेत्यत्रापीत्याह—तथेति । अत्रोत्तमत्वं न जातितः—तत्रानुपदमेव वक्ष्यमाणत्वादत आह—स्वेति । एवमग्रेऽपि । हीनेष्विति व्याचष्टे—हीनेष्विति । आदिना—वृत्तादि । दशपणश्चेति—भस्मादिभिः स्पर्शन इत्यर्थः । तुर्यपादं व्याचष्टे—मोह इति। उपलक्षणे तृतीयेत्याह—युक्तेनेति ॥ २१३ ॥ २१४ ॥

१. क नवृत्तश्रु० । २. थ. द. एवंभूतः पूर्वोक्त इति । ३. थ. द. र्यासु चाविशेषेणेति । ४. थ. द. णश्चेति । ५. फ. त् द्वि द्वि० । ६. फ. तथोत्तेति ।

प्रातिलोम्यापराधे दण्डमाह—

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु[1]।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे[2] तु तदर्धिकः॥ २१५॥

ब्राह्मणानां पीडाकरमब्रह्माणस्य क्षत्रियादेर्यदङ्गं करचरणादिकं तच्छेत्तव्यम्। क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्याङ्गच्छेदनमेव--"येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः। छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्॥" इति[3]। द्विजातिमात्रस्यापराधे शूद्रस्याङ्गच्छेदविधानाद्वैश्यस्यापि क्षत्रियापकारिणोऽयमेव दण्डः-तुल्यन्यायत्वात्। उद्गूर्णे वधार्थमुद्यते[4] शस्त्रादिके प्रथमसाहसो[5] वेदितव्यः। शूद्रस्य पुनरुद्गूर्णेऽपि हस्तादिच्छेदनमेव—"पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति।" इति[6] मनुस्मरणात्।

अयं चान्योन्यविशेष.—विप्रपीडाकरमित्यादि॥ २१५॥

सुबोधिनी

श्रेयांसमिति—उत्तमजातिं द्विजातिमिति यावत्। उक्तन्यायम(न्य)त्राप्यतिदिशति—वैश्यस्यापीति,-वैश्यस्यापि क्षत्रियानन्तरभावित्वेन न्यूनत्वेनान्त्यजत्वात् क्षत्रियस्य

बालंभट्टी

प्रातीति[8]—तेनापराधे इत्यर्थः। बहुवचनान्तेन समास इत्याह—ब्राह्मेति। अत्र वर्णत्वेन सादृश्यादाह—क्षत्रियादेरिति। विशेषमाह—क्षत्रियेति। श्रेयांसम्—उत्तमजातिं द्विजातिमिति यावत्। अत एवाऽऽह-अन्त्यज इति,—अङ्गमध्ये अन्त्यात् निकृष्टात् पादात् जात इत्यर्थः। अन्ते भवोऽन्त्यः शूद्रवर्णः, तस्माज्जात इति वा। अन्त्यः सर्वत इति वा। अस्य—शूद्रस्य। मात्रं—कार्त्स्न्ये, तन्मात्रविषयकापराधे इत्यर्थः। अत्र तेन तत् साक्षात्परंपरासाधारणं बोध्यम्। तदित्यस्य इदमित्यर्थः। मनुग्रहणमादरार्थम्। मानवमेवेदम्। उक्तं न्यायमन्यत्रातिदिशति—वैश्यस्यापीति,—वैश्यस्य क्षत्रियानन्तरभावित्वेन न्यूनत्वेन अन्त्यजत्वात् क्षत्रियस्य तदपेक्षया ज्यायस्त्वेनोत्कृष्टत्वात् शूद्रतुल्यत्वेन अयमेव अङ्गच्छेदनरूपो दण्ड इत्यर्थः। शस्त्रादीति—शस्त्रादेः स्पर्शे इत्यर्थः। तदर्धिक इति प्राग्वत्। तत्फलितमाह—प्रथमेति। ननु भस्मादिभिः निष्ठ्यूतान्तैः प्रागुक्तैः प्राति-

१. क. च। २. स्पर्शने तु तदर्धकः। ३.—म० ८. २७९.। ४. क. वधाद्यर्थमु०। ५. ख. सो दण्डो वे०। ६.—म० ८. २८०.। ७. त. ति- द्विजातिः। ८. फ. प्रतीति।

उद्गोरणार्थं शस्त्रादिस्पर्शने तु तदर्धिकः प्रथमसाहसादर्धदण्डो वेदितव्यः । भस्मादिसंस्पर्शे पुनः क्षत्रियवैश्ययोः "प्रातिलोम्यापवादेषु द्विगुणात्रिगुणा दमाः।"इति वाक्पारुष्योक्तन्यायेन कल्प्यम् । शूद्रस्य तत्रापि हस्तच्छेद एव—"अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः । अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ॥" इति मनुस्मर-
5 णात् ॥ २१५ ॥

उद्गूर्य निपाते प्रथमसाहसो दण्डः। प्रहारयोर्गुरुणेनैव तु विस्रंभणाब्राह्मणस्य ब्राह्मण शरीरस्पर्शनेऽर्धदण्डः । स्पष्टमन्यत् ॥ ३१५ ॥

## सुबोधिनी

तदपेक्षया ज्यायस्त्वेन श्रेयस्त्वाच्छूद्रतुल्यन्यायत्वेनायमेवाङ्गच्छेदनरूपो दण्ड इत्यर्थः । ननु "भस्मपङ्करजस्स्पर्शे" इत्यत्रोक्तैर्भस्मादिभिर्निष्ठथूतान्तैः कृत्वा प्रातिलोम्यापराधे को वा दण्ड इत्याकाङ्क्षायामाह—भस्मादिसंस्पर्शने त्विति । अयमभिसन्धिः—यत्र भस्मपङ्करजोभिः स्पर्शने सवर्णविषये दशपणो दण्डः, तत्र क्षत्रियेण ब्राह्मणं प्रति भस्मादिभिरभिद्रोहे कृते प्रतिलोमापवादत्वेन द्विगुणो विंशतिपणो दण्डः ; तैरेव वैश्यकर्तृके ब्राह्मणविषयेऽभिद्रोहे तत्रोक्तात् विंशतिपणात् द्विगुणश्चत्वारिंशत्पणो दण्डः; तैरेव वैश्यकर्तृके ब्राह्मणविषयेऽपराधे विंशतिपणादेव त्रिगुणः षष्टिपणो दण्ड इति ॥ २१५ ॥

## बालंभट्टी

लोम्यापराधे को दण्ड इत्यत आह—भस्मादीति । उक्तमूलमाह—प्रातीति,—भस्मादिस्पर्शने सवर्णविषये दशपणो दण्ड उक्तः, तस्यैव प्रातीत्यनेन तथोक्तत्वात् स एवात्रापि । तत्र क्षत्रियेण ब्राह्मणं प्रति भस्मादिभिरभिद्रोहे प्रातिलोम्यापवादत्वेन द्विगुणो विंशतिपणो दण्डः, तैरेव वैश्यकर्तृके क्षत्रियापराधे तत्रोक्तात् विंशतिपणात् द्विगुणः चत्वारिंशत्पणो दण्डः, तैरेव वैश्यकर्तृकब्राह्मणापराधे विंशतिपणादेव त्रिगुणः षष्टिपणो दण्ड इति बोध्यम्। तत्रापि—भस्मादिकरणकब्राह्मणापराधेऽपि । दर्पादिति—निष्ठीवनादौ हेतुः । अवेति —एते अवमानसूचकाः ॥ २१५ ॥

१. क. शैन पु० । २. व्य० २०७. । ३. म० ८. २८२. । ४. व्य० २१३. । ५. थ. द. 'वा' नास्ति । ६. त. दीति अयमभिप्रायः भस्म० । ७. थ. द. याभिद्रो० । ८. थ. द. यापरा० । ९. फ. दिभिः स्प० ।

एवं प्रातिलोम्यापराधे दण्डमभिधाय पुनः सजातिमधिकृत्याऽऽह—

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः[1] ॥ २१६ ॥

हस्ते पादे वा ताडनार्थमुद्गूर्णे यथाक्रमं दशपणो विंशतिपणश्च दण्डो वेदितव्यः । परस्परवधार्थं शस्त्रे उद्गूर्णे सर्वेषां वर्णिनां मध्यमसाहसो दण्डः ॥२१६॥

किं च—

पादकेशांशुककरोल्लुञ्चनेषु पणान् दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे[2] शतं दमः ॥ २१७ ॥

---

अनुत्कृष्टविषयत्वेत उद्गूर्णेहस्तपादे तु दशेत्यादि ॥ २१६ ॥

तुशब्दः प्रत्येकमवधारणार्थः। हस्त एवोद्गीर्णे दशकः, पाद एव विंशतिकः। तथा च समुच्चये समुच्चयसिद्धिः ॥

पादकेशांशुककरोल्लुञ्चनेषु पणान्दशेत्यादि ॥ २१७ ॥

पादकेशवस्त्राणामालुञ्चनेन अवधूनने साक्षेपं दशपणो दण्डः स्यात्। पीडाकर्षाञ्जनेन

---

## सुबोधिनी

परस्परवधार्थमिति—सर्वेषां वार्णनां सर्वेष्ववे च परस्परंवधार्थे शस्त्र उद्गूर्ण इत्यर्थः ॥ २१६ ॥

## बालंभट्टी

व्यवहितसङ्गतिमाह—एवमिति । पुनः—पुनरपि । सजातिं—सवर्णम् । सिंहाह्यावलोकनन्यायेनेति भावः । हस्तेति समाहारद्वन्द्व इत्याह—हस्ते इति । उद्गूर्णे—उद्यते । दशेत्यत्र द्वन्द्वोत्तरं परिमाणे कनित्याह—यथेति । परस्परमित्यस्य लक्ष्यार्थमाह—परस्परेति । सर्वेषामित्यस्य मध्यमणिन्यायेनान्वयः । वर्णानामिति तदर्थः । उद्गूर्ण इत्यस्यानुवृत्तिः, तदाह—उद्गूर्णे इत्यादि ॥ २१६ ॥

किञ्चेति—सवर्णविषये अन्यदप्याहेत्यर्थः । एवमग्रेऽपि । पादेति—अत्र करशब्दस्यापूर्वनिपातः-तत्प्रकरणस्यानित्यत्वात्।अत एवाग्रे करपादेत्युक्तिसङ्गतिः।मूले वस्त्रम-

---

१. सम् । २. वि० र्षाञ्जनावेष्टय० ।

पादकेशवस्त्रकराणामन्यतमं गृहीत्वा य उल्लुञ्चति झटित्याकर्षयति असौ दशपणं दण्ड्यः । पीडा चाऽऽकर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासं तस्मिन् समुच्चिते शतं दण्ड्यः । एतदुक्तं भवति—अंशुकेनाऽऽवेष्ट्य गाढमापीड्याऽऽकृष्य च यः पादेन घट्टयति तं शतं पणान् दमयेदिति ॥ २१७॥

5 किं च—

शोणितेन विना दुःखं कुर्वन्काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान्दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥ २१८ ॥

यः पुनः शोणितं यथा न दृश्यते तथा मृदुताडनं काष्ठलोष्टादिभिः करोति-

त्वावेष्ट्य ग्रीवादौ पादन्यासे शतं दण्डः।आञ्जनं श्यामीकरणं पीडयाऽऽकर्षणेनाऽऽञ्जनं पीडाकर्षाञ्जनम् । आञ्जनेन श्यामीकरणेन तु आवेष्ट्य वशं नीत्वेत्यर्थः । स्पष्टमन्यत् ॥ २१७ ॥

स्वाम्य एव शोणितेन विनाऽऽकर्षन्दुःखं काष्ठादिभिर्नर इत्यादि ॥ २१८ ॥

बालंभट्टी

हणाश्च समाहार इत्याह—कराणामिति । अत एवाऽऽह—अन्यतममिति । मुख्यार्थोऽत्र न विवक्षित इत्याह—सामिति। समाहारद्वन्द्वाद्दण्डबाहुल्याविरोधाच्चाऽऽह — समुच्चिते इति। असंभवनिरासायाऽऽह—एतदिति। मूले भावे प्रत्यय इत्याह— अंशुकेनाऽऽवेष्ट्येत्यादिः । अध्यासपदार्थमाह—घट्टेति,—सङ्घट्टयति ॥ २१७ ॥

चः दण्डसमुच्चायको न तु समुच्चयनिमित्तत्वसूचकः—सर्वत्र तथैव सत्त्वात्, तद्व्याख्यातृभिरपि तथैव व्याख्यातत्वाच्च। एतेन समुच्चिते शतदण्डो न त्वङ्मात्रभेदके—चस्य समुच्चयबोधकत्वात् इति व्याख्यानमपास्तम्। नन्वेवं चतुष्षष्टिपणो दण्डो मूले रक्तद-

१. ग. ज. त्वा उ० । घ. च. त्वा यो झटि० । २. ख. दापये० ३. वि० । णान्दाप्यो । ४. फ. त्यादविरो० ।

असौ द्वात्रिंशतं पणान् दण्ड्यः। यदा पुनर्गाढताडनेन लोहितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुःषष्टिपणान् दण्डनीयः[1]। त्वङ्मांसास्थिविभेदे पुनर्मनुना विशेषो दर्शितः—"त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः। मांसभेत्ता च षण्निष्कान्प्रवास्यस्त्वस्थिभेदकः॥" इति[3]॥ २१८॥

किं च—

**करपाददतो भङ्गे छेदने कर्णनासयोः।**
**मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा॥ २१९॥**

करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं छेदने रूढव्रणस्योद्भेदने

असृजो लोहितस्येत्यर्थः। स्पष्टमन्यत् ॥ २१८॥

निकृष्टविषयत्वे तु **करपाददन्तभङ्ग इत्यादि ॥ २१९॥**

साम्ये हि शस्त्रोद्गूरणमात्र एव मध्यमस्योक्तत्वान्निकृष्टविषयमेतदिति व्याख्येयम् ऋज्वन्यत॥ २१९॥

## सुबोधिनी

त्वग्भेदकं इति—यस्त्वग्भेदको लोहितस्य च दर्शकः, स शतं दण्ड्यो न तु त्वङ्मात्रभेदकः—यतः चशब्दः समुच्चयं प्रत्याययति। ननु याज्ञवल्क्येन चतुष्षष्टिः पणानां दण्डोऽभिहितो रक्तदर्शने मनुना शतमिति परस्परविरोध इति चेत् मैवम्—मर्मस्थले परगात्रेषु रक्तदर्शकस्य शतं पणो दण्डः इतरत्र चतुष्षष्टिरिति विवेक्तव्यम् ॥ २१८॥

## बालंभट्टी

र्शने उक्तः मनुना तु शतमिति मिथो विरोध इति चेत्, मर्मस्थले तद्दर्शकस्य मनूक्तम्; अन्यत्र मूलोक्तमिति विवेकात्। अग्रे च: त्वर्थे ॥ २१८॥

करेतिसमाहारद्वन्द्वे पाददन्तेति दर्शक इत्याह—करेति। अग्रिमानुरोधेन दण्डस्य तुल्यत्वाच्चाऽऽह—प्रत्येकमिति। मूले कर्णेत्यार्षं; तत्सूचक इतरेतरद्वन्द्व एवेत्याह—कर्णनासस्य चेति। प्रत्येकमिति आह —रूढेति अपूर्वव्रणोत्पत्तेरत्रानुद्देश्यत्वं किन्तु जातव्रणभङ्गस्येत्याह— रूढेति,—जातेत्यर्थः। ननु करादिभङ्गस्याल्पत्वेन एकरूपेण

१ क. दण्ड्यः। २ क. उक्तः। ३. म० ८. २८४.। ४. थ. द. करशतं दण्ड्य इति। ५ थ द. ना तुं श०।

मृतकल्पो यथा भवति तथा हते ताडिते मध्यमसाहसो [1]विज्ञेयः। अनुबन्धादिना विषयस्य साम्यमत्रापाऽऽदनीयम् ॥ २१९ ॥

किं च—

**चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।**

**कन्धराबाहुसक्थ्नां च भङ्गे[2] मध्यममाहसः ॥ २२० ॥**

---

तथा च **चेष्टाभोजनवाग्रोध इत्यादि ॥ २२० ॥**

चेष्टादिप्रतिरोधकेऽभिघाते अक्ष्यादीन्द्रियाधिष्ठानप्रत्येकभेदने कन्धरादिभेदने चोत्तम-

---

## सुबोधिनी

ननु कर्णनासच्छेदाद्यपेक्षया करपाददन्तभङ्गस्याल्पत्वेनैकरूप्येण सर्वत्र मध्यमसाहसदण्डविधानमनुपपन्नं स्यादित्यत आह–अनुबन्धादिनेति.–अनुबन्धो दोषोत्पादः "दोषोत्पादेऽनुबन्धः स्यात्" इत्यमरः[3]। आदिशब्दाद्यवहारासौकर्यं गृह्यते। कर्णनासाच्छेदनरूढव्रणोद्भेदनादौ दोषाधिक्यं प्रत्यक्षसिद्धम्। करपादयोस्तु साक्षाच्छरीरावयवत्वेन तद्भङ्गे व्यवहारसौकर्याभावेन शरीरयात्राया दुर्लभत्वाद् दोषाधिक्यम्[4]; दन्तभङ्गेऽभ्यवहरणसौकर्याभावेन परम्परया जीवनसंकोचात् दोषाधिक्यम्, इत्यनुबन्धादिना करपाददन्तभङ्गादिरूपस्य विषयस्य साम्यमूह्यमित्यर्थः ॥ २१९ ॥

## बालंभट्टी

सर्वत्र मध्यमसाहसदण्डविधानमयुक्तमत आह—अनुबन्धादिति,—अनुबन्धो दोषोत्पादः "दोषोत्पादोऽनुबन्धस्स्यात्" इत्यमरः[3]। आदिना—व्यवहारासौकर्यम्। कर्णनासाच्छेदनादौ दोषाधिक्यं प्रत्यक्षसिद्धं; करपृष्ठादेस्तु साक्षात् शरीरावयवत्वेन तद्भङ्गे व्यवहारसौकर्याभावेन[5] शरीरस्य दुर्लभत्वात् दोषाधिक्यम्; एवं दन्तभङ्गेऽभ्यवहरणसौकर्याभावेन परम्परया जीवनसङ्कोचात् दोषाधिक्यम्। इत्थमनुबन्धादिना करादिभङ्गादिरूपविषयस्य साम्यमूह्यमित्यर्थः ॥ २१९ ॥

चेष्टेति—अत्र वाचोऽपूर्वनिपातः प्राग्वत्। एवं कन्धरेत्यत्रापि। तत्रेतरेतरयो-

---

१. ख. वेदितव्यः। २. वि० भङ्ग उत्तमसा०। ३. तृ० नाना० ९८.। ४. त क्यमित्यनु। ५. प. ब. न परम्परया जीवन०।

गमनभोजनभाषणनिरोधे नेत्रस्य—आदिग्रहणाज्जिह्वायाश्च—प्रतिभेदने; कन्धरा ग्रीवा, बाहुः प्रसिद्धः, सक्थि ऊरुः,--तेषां प्रत्येकं भञ्जने मध्यमसाहसे दण्डः ॥ २२० ॥

अपि च[1]—

**एकं घ्नतां बहूनां च यथोक्ताद्द्विगुणो दमः ।** 5

यदा पुनर्बहवो मिलिता एकस्याङ्गभङ्गादिकं कुर्वन्ति तदा यस्मिन्यस्मिन् अपराधे यो योदण्ड उक्तः तत्र तस्माद्द्विगुणो दण्डः प्रत्येकं वेदितव्यः—अतिक्रूरत्वात्तेषाम्। प्रातिलोम्यानुलोम्यापराधयोरप्येतस्यैव सवर्णविषयेऽभिहितस्य दण्डजातस्य वाक्पारु-

---

साहसो दण्डः । चेष्टानिरोधो भोजननिरोधाद्यभिघाताद्गोक्तुमशक्तिः; वाग्वारणाशक्तिर्वा- ग्रोधः ; कन्धरा गलस्कन्धसञ्चारिणी सिरा । स्पष्टमन्यत् ॥ २२० ॥

सर्वत्रैवास्मिन् प्रकरणे— **एकं घ्नतां बहूनां त्वित्यादि ॥ २२१ ॥**

## सुबोधिनी

एवं सवर्णविषयापराधे दण्डमभिधाय तं दण्डं वाक्पारुष्योक्तन्यायेन प्रातिलोम्यानुलोम्यापराधयोर्योजयति–प्रातिलोम्यानुलोम्येति,-प्रातिलोम्यापराधे दण्डस्य वृद्धिः,आनुलोम्य पराधे तु दण्डस्य हानिरिति विवेकः । ननु "विप्रपीडाकरं छेद्यम्" इत्येतद्वचनव्याख्यान-

## बालंभट्टी

गोऽप्येवम् । अत एवाऽऽह चेष्टार्थो—गमनेति । प्रत्येकमिति वक्ष्यति। मूले चः व्युत्क्रमे सर्वसमुच्चये ॥ २२० ॥

अग्रे मूले चः त्वर्थे । यथोक्तादित्यस्यार्थमाह —यस्मिन्निति । अपराधबहुत्वादाह— प्रत्येकमिति । तदेवाऽऽह— अतीति। एवं सवर्णविषयापराधे मूलोक्तदण्डवाक्पारुष्योक्तन्यायेन अत्र तदनुक्तत्वात् प्रातिलोम्यानुलोम्यापराधयोर्योजयति– प्रातिलोम्येति । अस्यैव—मूलीयस्यैव । जातस्य—तत्समूहस्य । प्रातिलोम्यापराधे दण्डस्य वृद्धिः आनुलोम्यापराधे दण्डस्य हानिरित्यर्थः । न च "विप्रपीडाकरम्" इति मूलव्याख्यावसरे भस्मादि-

---

1. क. किं च ।

ष्योक्तक्रमेण हानिं वृद्धिं च कल्पयेत्—"वाक्पारुष्ये य एवोक्ताः प्रतिलोमानुलोमतः।[1]
त एव दण्डपारुष्ये दाप्या राज्ञा यथाक्रमम्॥" इति स्मरणात्[2] ॥ २२०८ ॥

**कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥ २२१ ॥**

कलहे वर्तमाने यद्येनापहृतं तत्तेन प्रत्यर्पणीयम् । अपहृतद्रव्याद्विगुणश्चाप-
5 हारनिमित्तो दण्डो देयः ॥ २२१ ॥

कलहापहृतमित्यर्थः । एतच्चाभिहतायैव देयं राजदण्डव्यतिरेकेणेत्यवसेयम् । तथा च बृहस्पतिः—"दण्डस्त्वभिहतायैव दण्डपारुष्यकल्पितः। हृते तद्द्विगुणं चान्यद्राजदण्डस्ततोऽधिकः॥" इति । यत्तु नारदीयम्—"यमेव ह्यतिवर्तेत नीचः सन्तञ्जनं नृषु । स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः॥" इति एतच्छूद्रविषयं द्रष्टव्यम्। शूद्राणां उत्कृष्टापराधो राज्ञाऽर्थदण्डो न ग्राह्यः। किं तर्हि ? अनावेद्य स्वयमेवोत्कृष्टैः अर्थदण्डेन विनयं कार्यम् । राज्ञा त्वावेदिते वध एव। तौचानन्तरमेवाऽऽह—"मला ह्येते मनुष्येषु धनमेषां मलात्मकम्। अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥"[4] इति । स्पष्टमन्यत् ॥ २२१ ॥

---

## सुबोधिनी

समये "भस्मादिसंस्पर्शे पुनः" इत्यनेनासावर्थोऽभिहितः, स एवार्थोऽत्राभिधीयत इति पौनरुक्त्यं स्यादिति चेत्, मैवम्। भस्मादिभिः कारणविशेषैः प्रातिलोम्यापराधे सति तत्रैवापराधे पूर्वमभिहितः प्रातिलोम्यापराधदण्डप्रसङ्गेन ; अत्र तु प्रातिलोम्यानुलोम्यापराधयोरपि वाक्पारुष्योऽस्य सकलस्यापि दण्डस्य कल्पनाप्रकारो बालबोधार्थमभिधीयत इति न पौनरुक्त्यदोषः ॥ २२०८ ॥

## बालंभट्टी

संस्पर्शे पुनरित्यादिना अयमर्थः तदुक्तः। स एवात्रोच्यत इति पौनरुक्त्यमिति वाच्यम्—भस्मादिभिः कारणविशेषैः प्रातिलोम्यापराधे सति तत्रैवापराधे प्रागुक्तः प्रातिलोम्यापराधे दण्डप्रसङ्गेन ; अत्र तु प्रातिलोम्यानुलोम्यापराधयोरपि वाक्पारुष्योक्तस्य सकलस्यापि दण्डस्य कल्पनाप्रकारो बालबोधार्थमुच्यत इति भेदात् । मानवे प्रतीतिधर्मपरं पञ्चमीद्विवचनान्तात्तसिः। कार्याः—कर्तव्याः "दण्डा दाप्याः" इति पाठान्तरम् ॥ २२०८ ॥

कलहेति—सप्तमीसमासः; तदाह—कलहे इति । वर्तमाने—न तु समाप्ते । तत इत्यस्यार्थमाह—अपहृतेति । तत्र हेतुं सूचयन्नाह—अपेति,—बहुव्रीहिः ॥ २२१ ॥

---

१. ख. ज. प्रातिलोम्यानु० । २. क. ज. मनुस्म० । ३.—१५. १३ । ४. ना० १५. १४ ।

किं च

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः ॥ २२२ ॥

यो यस्य ताडनाद्दुःखमुत्पादयेत्स तस्य व्रणरोपणादौ औषधार्थे पथ्यार्थे च यो व्ययः क्रियते त दद्यात् । समुत्थानं व्रणरोपणम् । यस्मिन्कलहे यो दण्डस्तं च दद्यान्न समुत्थानजव्ययमात्रम् ॥ २२२ ॥ 5

किञ्च–दुःखमुत्पादयेद्यस्तु स इत्यादि ॥ २२२ ॥

यो दुःखमुत्पादयेत्तेन यावत्सम्यगस्योत्थानं निर्दुःखता भवति, तावद्यो व्ययः स समुत्थानजो व्ययः; स देयः । चकाराद्राजावेदनप्रवृत्त्युपक्षयश्च राज्ञे च यथोदाहृतो दण्डः। स्वयंचाददद्राज्ञा दाप्यः । स्पष्टमन्यत ॥ २२३ ॥

इदानीं दण्डपारुष्ये सामान्यात् साहसव्यवहारमाह—

तौरिकस्थलजं[1] शुल्कं गृह्णन् दाप्यः पणान् दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६३ ॥

तारिकस्य स्थलनिर्णिकरजतादिशुल्कग्रहणे ब्राह्मणदर्पाच्च यो ब्रप्रातिवेश्यब्राह्मणानिमन्त्रणे दशपणो दण्डः। ब्राह्मणग्रहणं च गुणार्थत्वाच्च सर्वत्रैवर्णिकार्थम् । दर्पकृतत्वाच्चवमादे स्साहसत्वम् ॥ २६३ ॥

बालंभट्टी

ताडनात्—ताडितादिति पाठे भावे क्तः । समुत्थानजमित्यादेरर्थमाह-- तस्य व्रणेति । क्रियते—तेनैव । सम्यगुत्थानमिति व्युत्पत्त्या आह—व्रणरोपणमिति,—तस्य सम्यक् स्वरूपतत्करणमित्यर्थः । तथा च मानवम्--"अङ्गावपीडनायां च व्रणशोणितयोस्तथा । समुत्थानव्ययं दाप्यस्सर्वदण्डमथापि वा ॥ " इति । अङ्गानां करादीनां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिरूपसमुत्थानसंबद्धो भवति, तावता कालेन यथौषधादिना व्ययो भवति तमसौ दापनीयः । यदि त व्ययं पीडोपपादको न दातुमिच्छति, तदा यः समुत्थानव्ययो, यश्च दण्डः, तमेव सर्वं राजा दण्डत्वेन दाप्य इत्यर्थः,—इति तद्व्याख्यातारः ॥ २२२ ॥

१. वि० दण्डश्च । २. सभूयसमुत्थानप्रकरणस्थोऽयं श्लोकः। ३.—८. २८६. ।

परगात्राभिद्रोहे दण्डमुक्त्वाऽनन्तरं बहिरङ्गार्थनाशे दण्डमाह—

**अभिघाते तथाच्छेदे भेदे कुड्यावपातने ।**

**पणान्दाप्यः पञ्च दश विंशतिं तद्व्ययं तथा ॥ २२३ ॥**

मुद्गरादिना कुडयस्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डो वेदितव्यः। अवपातने पुनः कुडयस्यैते त्रयो दण्डाः समन्विता ग्राह्याः । पुनः संपादनार्थं च धनं स्वामिने दद्यात् ॥ २२३ ॥

दर्पणेत्र च **आभिघाते तथा भेदेच्छेद इत्यादि ॥ २२३ ॥**

प्रातिवेशिकग्रहणाद्वाराभ्यात् पाषाणग्रहणादिनाऽभिघाते गृहे पञ्चपणान्दाप्यः । तथा भेदेऽभिघाते रन्ध्रसाजाते दश पणान् दाप्यः । छेदने तु तद्द्वैधीभावे कुड्यावपातने वा विंशातः। व्ययं तु स व्यापन्नसमानार्थं व्ययं गृहिणे दद्यात् ॥ २२३ ॥

## सुबोधिनी

उत्तरवचनस्य प्रासङ्गिकी सङ्गतिरित्याह—परगात्राभिद्रोह इति । अयमर्थः—अन्तरङ्गभूतहस्तपादादिष्वभिद्रोहे दण्डमभिधायाङ्गप्रसङ्गात् बहिरङ्गभूतगृहभित्त्यभिघातादौ दण्डोऽभिधीयत इति ॥ २२३ ॥

## बालंभट्टी

उत्तरवचनस्य प्रसङ्गसङ्गतिरित्याह— परगात्रेति,—गृहादितो हस्तादीनामन्तरङ्गत्वात् तदपराधे तावत् एवं दण्डमुक्त्वा अन्तरङ्गप्रसङ्गात् बहिरङ्गगृहकुडयाभिपातादौ दण्डकथनमित्यर्थः। एतेन वैपरीत्येन कथनशङ्काऽपि निरस्ता । अर्थः—गृहादिरूपः। भेदे—छेदे इति पाठः । पञ्चेत्यादि पदत्रयम् । योग्यतया आह—मुद्गेति। प्रत्यासत्तेराह—कुडयस्येति । अभिघातः—आघातमात्रम् । भेदे इत्यस्यार्थः— विदेति। छेदे इत्यस्यार्थः—द्वैधीति । चतुर्दण्डाभावादपराधबाहुलयाच्चाऽऽह—एते त्रय इति। तद्व्ययमित्यस्यार्थमाह—पुनरिति ॥ २२३ ॥

---

१. क. द्विधा० ।

अपि च—

**दुःखोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं तथा ।**
**षोडशाद्यः पणान्दाप्यो द्वितीयो मध्यमं दमम् ॥ २२४ ॥**

परगृहे दुःखजनकं कण्टकादिद्रव्यं प्रक्षिपन् षोडशपणान् दण्ड्यः । प्राणहरं पुनर्विषभुजङ्गादिकं प्रक्षिपन् मध्यमसाहसं दण्ड्यः ॥ २२४ ॥ 5

पशुभिद्रोहे दण्डमाह—

**दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।**
**दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥ २२५ ॥**

क्षुद्राणां पशूनां अजाविकहरिणप्रायाणां ताडने दुःखोत्पादने असृक्स्रावणे

सर्वत्र साहसिकत्वात् परकीये—दुःखोत्पादि गृहे द्रव्यमित्यादि॥२२४॥

दुःखोत्पादि द्रव्यं कण्टकादि ; प्राणहरं सर्पादि; स्पष्टमन्यत् ॥ २२४ ॥

दुःखेऽथ शोणितोत्पादे शाखाङ्गछेदने तथेत्यादि ॥ २२५ ॥

---

## बालंभट्टी

अर्थादाह—परेति । दुःखोत्पादीति द्रव्यविशेषणमित्याह—दुःखेति,—"जनिवध्योः"[1] इति वृद्धिनिषेधः । जननमिति पाठान्तरम् । करणे ल्युट् । द्रव्यस्वरूपमाह—कण्टेति,—अत्राऽऽद्यः द्वितीय इति च यथासङ्ख्यान्वयसिद्धार्थकथनपरं नातिसकलं वाक्यभेदाभावादित्याशयेन तद्विहायैवाऽऽह—पन् षोडशेति । प्राणेति—"हरतेरनुद्यमने च"[2] इत्यच् ॥ २२४ ॥

पशुपदोक्तेराह—अजावीति,—अजश्चाविश्चेत्यादि द्वन्द्वः । अत एव तस्य पूर्वनिपातः । औचित्यादाह—ताडेति । लक्ष्यार्थमाह—दुःखोत्पेति । मुख्यार्थबाधादाह—

1. अ० ७. ३. ३५. । 2. अ० ३. २. ९. ।

शाखाङ्गच्छेदने—शाखाशब्देन चात्र प्राणसंचाररहितं शृङ्गादिकं लक्ष्यते; अङ्गानि करचरणप्रभृतीनि—शाखा चाङ्गं च शाखाङ्गं, तस्य छेदने; द्विपणप्रभृतिर्दण्डः। द्वौ पणौ यस्य दण्डस्य स द्विपणः। द्विपणः प्रभृतिरादिर्यस्य दण्डगणस्यासौ द्विपणप्रभृतिः। स च दण्डगणो द्विपणश्चतुःपणः षटपणोऽष्टपण इत्येवरूपो न पुनर्द्विपणस्त्रिश्चतुष्पणः पञ्चपण इति। कथमिति चेदुच्यते—अपराधगुरुत्वात्तावत्प्रथमदण्डाद्गुरुतरमुपारितनदण्डत्रयमवगम्यते। तत्र चाश्रुतत्रित्वादिसंख्याश्रयणाद्वरं श्रुतद्विसंख्याया एवाभ्यासाश्रयणेन गुरुत्वसंपादनमिति निरवद्यम्॥ २२५॥

द्विगुण इति शेषः। शाखाङ्गच्छेदने-श्रृङ्गकर्णान्; तेषूत्तरोत्तरो द्विगुणः। खुरादीनिक्षुद्रादीन्यङ्गानि; क्षुद्रपशवः छागादयः। स्पष्टमन्यत्॥ २२५॥

## सुबोधिनी

“द्विपणप्रभृतिः क्रमात्” इत्यमुमंशं स्वाभिप्रायानुसारेण विविच्य दर्शयति—स चेत्यादिना।[1] पूर्वोक्तमर्थमाक्षिप्य समाधत्ते—कथमिति।[2] समाधातुं सिद्धार्थमनुवदति—अपराधेति।[3] ततः किमित्यत आह—तत्रेति।[4] एतदुक्तं भवति—“द्विपणप्रभृतिः क्रमात्” इति द्वित्वं तावत् श्रुतम्। श्रुतद्वित्वसंख्यात[5] आधिक्यमश्रुतत्रित्वरूपधर्मिकल्पनया वा श्रुतद्वित्वसंख्यागताभ्यासात्मकचतुष्टरूपधर्मकल्पनया वा भवति; एवञ्च त्रित्वेनाऽऽधिक्यकल्पनायाम्[6] श्रुतकल्पना धर्मिकल्पना चेति गौरवम्; चतुष्टेनाऽऽधिक्यकल्पनायां तु[7]

## बालंभट्टी

शाखाशब्देनेति। अत्र—अत्रैव। आदिना—खुरपरिग्रहः। समाहारद्वन्द्वः—प्राण्यङ्गत्वात्। दण्डशब्द उभयत्र तत्समूहपर इत्याह—दण्डगणस्येति। क्रमादिति तु व्युत्क्रमभ्रमनिरासाय तुर्यपादोक्तमेवाभिप्रायतो विवेचयति—स चेति। न पुनः—न तु। दार्ढ्याय उक्तमाक्षिपति—कथमिति। समाधातुं सिद्धार्थमनुवदति—तावदिति,—अवगमनेऽन्वयः। ततः किम्? अत आह—तत्र चेति,—उपरितनदण्डत्रये चेत्यर्थः। द्विपण इत्यत्र द्वित्वं तावत् श्रुतं, तत्र च श्रुतद्वित्वसङ्ख्यात आधिक्यमश्रुतत्रित्वादिरूपधर्मिकल्पनया वा श्रुतद्वित्वगताभ्यासात्मकचतुष्टादिरूपधर्मकल्पनया वा भवति। तत्राऽऽद्ये अश्रुतकल्पना चेति गौरवम्; द्वितीये तु श्रुताद्वित्वगताभ्यासरूपधर्मकल्पन[8] लाघवमिति[9] भावः॥ २२५॥

१. थ. द. एतदादि स्यादिना इत्यन्ततं नास्ति। २. थ. द. ०मिति चेदिति। ३. थ. द. राधगुरुत्वादिति। ४. थ. द. तत्र चाश्रुतेति। ५. त. 'श्रुत' इति नास्ति। ६. थ. द. संख्येति नास्ति। ७. त. 'मश्रुत....यां तु नास्ति। ८. फ. न तावदादाविति। ९. फ. धर्मक भावः।

किं च—

लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ २२६ ॥

तेषां क्षुद्रपशूनां लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः, स्वामिने च मूल्यं दद्यात् । महापशूनां पुनर्गोगजवाजिप्रभृतीनामेतेषु स्थानेषु ताडनलोहितस्राव- 5 णादिनिमित्तेषु पूर्वोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्यः ॥ २२६ ॥

स्थावराभिद्रोहे दण्डमाह—

प्ररोहिशाखिना शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥ २२७ ॥

लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्य एव चेत्यादि ॥२२६॥

स्वकीयेषु द्विपणादिमध्यमान्ता यथास्थानं दण्डाः; परकीये तु दण्डो मूल्यश्चेति योज्यम् । महापशवो गवादयः । तेषां प्रागुक्तशोणितदुःखोत्पादादिषु स्थानेषु द्विगुणाद्युक्त- दण्डाः । द्विगुणा यथास्थानं दण्डाः कार्याः ॥ २२६ ॥

आरामारोपितानां सपरिग्रहाणाम् प्ररोहिशाखिकाशाखेत्यादि॥२२७॥

सुबोधिनी

श्रुतद्वित्वगताभ्यासरूपधर्मकल्पनेति लाघवम् : तथा च न्यायविदो मन्यन्ते "धर्मिकल्प- नातो वरं धर्मकल्पना" इति । अतश्च श्रुतद्वित्वाभ्यासाश्रयणमेवोचितमिति ॥ २२५ ॥

ताडनलोहितस्रावणादिति—"दुःखे च शोणितोत्पादे" इत्यादिनोक्तेषु निमित्ते- ष्वित्यर्थः ॥ २२६ ॥

बालंभट्टी

पूर्वार्धे पूर्वशेष इत्याह तेषामिति,—पूर्वोक्तानामित्यर्थः । मृत्युशब्दस्य लक्ष्यार्थ- माह—मारणेति,—अत एव तयोस्सामानाधिकरण्यम् । उत्तरार्द्धार्थमाह महेति । स्थानशब्दो निमित्तपर इत्याह—ताडनेति,—तत्कृतदुःखोत्पादेत्यर्थः । आदिना—शाखा- ङ्गच्छेदनादिसङ्ग्रहः । दुःखे चेत्याद्युक्तनिमित्तेष्वित्यर्थः । द्विर्गुणः—चतुष्पणादिः ॥ २२६ ॥

१. ख घ. मरणे । २. घ॰ राद्य॰ । ३. त. इदं प्रतीकं नास्ति । ४. परमद्विगुणः ।

प्ररोहा अङ्कुरास्तद्वन्त्यः शाखाः प्ररोहिण्यः; याश्छिन्नाः पुनरुप्ताः प्रतिकाण्डं प्ररोहन्ति ताः शाखा येषां वटादीनां ते प्ररोहिशाखिनः; तेषां शाखाच्छेदने यतो मूलशाखा निर्गच्छन्ति स स्कन्धस्तस्य छेदने, समूलवृक्षच्छेदने च यथाक्रमं विंशतिपणदण्डादारभ्य पूर्वस्मात्पूर्वस्मादुत्तरोत्तरो दण्डो द्विगुणः। एतदुक्तं भवति—विं-
5 शतिपणः, चत्वारिंशत्पणः, अशीतिपण इत्येवं त्रयो दण्डा यथाक्रमं शाखाच्छेदनादिष्वपराधेषु भवन्तीति । अप्ररोहिशाखिनामप्युपजीव्यद्रुमाणामाम्रादीनां पूर्वोक्तेषु स्थानेषु पुनर्वृक्षेषु पूर्वोक्ता एव दण्डाः । अनुपजीव्याप्ररोहिशाखिषु कल्प्यम् ॥ २२७॥

वृक्षविशेषान्प्रत्याह[3]—

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
10 जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥ २२८ ॥

---

उपजीव्यद्रुमा आम्रादयः; तेषां प्ररोहच्छेदने विंशतिपणो दण्डः। शाखादिछेदनेषूत्तरोत्तरद्विगुणकल्पना । प्ररोहः पल्लवः ; आल्पशाखाः शाखिकाः । स्पष्टमन्यत् ॥ २२७ ॥

उपजीव्यमानमेव च चैत्यश्मशानसीमान्तपुण्येत्यादि ॥ २२८ ॥

## बालंभट्टी

पुनः स्पष्टार्थं तदर्थमाह—या इति।उप्ताः—क्षेत्रनि (क्षि) प्ताः। प्रतिकाण्डं—काण्डं प्रति । ताः शाखा येषामिति—"शाखादिभ्यः" इति इनिः तदन्तादपि बोध्यः । मूलेति,—मूलसंबद्धशाखा इत्यर्थः । "अस्त्री प्रकाण्डस्स्कन्धस्स्यान्मूलाच्छाखावधेस्तरोः।" इत्यमरः । सर्वेत्यस्यार्थमाह—स मूलेति । मूलेति पाठे अर्शाद्यच् बोध्यः । विदेत्यस्य सर्वत्र संबन्धः । क्रमादित्यनुवृत्तेः स्थानाख्यलोकप्रमाणाद्वा आह—यथेति । विंशतेरिति पञ्चमी न तु षष्ठीत्याह—विंशतीति । तदुपपत्तये आह—आरभ्येति । फलितमाह—तदिति । वैयर्थ्यं परिहरन्नुत्तरार्धार्थमाह—अप्रेति । उपेति—पत्रपुष्पफलादिनेति भावः। पूर्वेष्विति—प्रागुक्तेषु निमित्तेष्वित्यर्थः । पूर्वोक्ता एव—विंशतिपणादयः। दमशब्दः तत्समूहपर इत्याह—दण्डा इति । न्यूनतां निराचष्टे—अनुपेति ॥ २२७ ॥

---

१. ख. वृक्षा । २. ङ. कल्पन्ते : ३. क. घ. ङ. ष प्र। ४. द्वि० व० १०.। ५. फ. ब. तिसंपद्ध० । -

चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्वोक्ताद्दण्डाद्द्विगुणः। विश्रुते च पिप्पलपलाशादिके द्विगुणो दण्डः ॥ २२८ ॥

गुल्मादीन् प्रत्याह—

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥ २२९ ॥ 5

गुल्मा अनतिदीर्घनिबिडलतामालत्यादयः; गुच्छा अवल्लीरूपाः असरलप्रायाः कुरण्टकादयः; क्षुपाः करवीरादयः सरलप्रायाः; लता दीर्घयायिन्यो द्रा-

---

चातुर्थिकाद्यपनोदनसमर्थः पिप्पलादिवृक्षो विश्रुतः। स्पष्टमन्यत् ॥ २२८ ॥

चैत्यादीनामेव तु गुल्मगुच्छक्षुपलतेत्यादि ॥ २२९ ॥

गुल्मादीनामुक्तेषु चैत्यादिस्थानेषु जातानां कृन्तने प्रागुक्तप्ररोहादिक्रमेणैव स्मृता-

---

## सुबोधिनी

चैत्यादिषु जातानामिति—अत्र शाखाच्छेदने स्कन्धच्छेदने समूलवृक्षच्छेदने यथाक्रमं चत्वारिंशत्पणोऽशीतिपणः षष्ट्याधिकशतपणश्चेति विवेकः ॥ २२८ ॥

## बालंभट्टी

द्विगुण इति—शाखाच्छेदनादिषु यथाक्रमं चत्वारिंशत्पणः, अशीतिपणः, षष्ट्यधिकशतपणश्चेत्यर्थः। अन्यत्राप्येवेत्याह—विश्रुते इति। अथशब्दार्थमाह—चेति। तत्स्वरूपमुक्तभिन्नमाह—पिप्पलेति। अत्र विश्रुतत्वं प्रसिद्धत्वं, तच्च शास्त्रीयं बोध्यमिति नातिप्रसङ्गः ॥ २२८ ॥

प्रत्याहेति—तदभिद्रोहमभिलक्ष्य दण्डमाहेत्यर्थः। एवं प्रागपि। अनतीति—त्रयाणां कर्मधारयः। बहुव्रीह्युत्तरपदयोः द्वयोः कर्मधारयो वा। यद्यपि लतात्वं सामान्यं, तथाऽपि समभिव्यवहारादाह—दीर्घेति,—"अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता।

क्षातिमुक्ताप्रभृतयः ; प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः; ओषध्यः फलपाकावसानाः शालिप्रभृतयः ; वीरुधः छिन्ना अपि या विविधं प्ररोहन्ति ताः गुडूचीप्रभृतयः;—एतेषां पूर्वोक्तेषु स्थानेषु विकर्तने छेदने पूर्वोक्ताद्दण्डादर्धदण्डो वेदितव्यः ॥ ७२९ ॥

॥ इति दण्डपारुष्यप्रकरणम् ॥

5

देकगुणादर्धदण्डाः कल्प्याः। गुल्मः गुञ्जादि; गुच्छं कुन्दादि; क्षुपो जात्यादिविटपः; लता प्रसिद्धा; प्रताना वल्लरी; ग्राम्या औषधयः; आरण्या वीरुधः ॥ २२९ ॥

## सुबोधिनी

पूर्वोक्तात् दण्डादर्धदण्डो वेदितव्य इति[1]—प्रकृतिभूतविंशतिचत्वारिंशदशीति पणरूपात् पूर्वोक्तात् दण्डादर्धदण्डो दशविंशतिचत्वारिंशदात्मक इत्यर्थः ॥ २२९ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां दण्डपारुष्यप्रकरणम् ॥

## बालंभट्टी

लता प्रताननी वीरुद्गुल्मिन्युलप इत्यपि ॥" इत्यमरः[2]। अवसानं—समाप्तिः नाश इति यावत्। पूर्वोक्तादित्यादि—प्राग्वत् पूर्वस्मादित्यर्थः।—पूर्वोक्तादिति,—प्रकृतिभूतविंशतिचत्वारिंशदादीति पणरूपात् पूर्वोक्ताद्दण्डादर्धदण्डो दशविंशतिचत्वारिंशत्पणात्मक इत्यर्थः । अत्र मनुः—" प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः । मनुष्यमारणे क्षिप्रं चोरवत्किल्बिषं भवेत् ॥ प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु । क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः ॥ पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु । गर्दभाजाविकानान्तु दण्डस्स्यात्पाञ्चमाषिकः॥ माषिकस्तु भवेद्दण्डः श्वसूकरनिपातने । भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः । प्राप्तापराधास्ताड्यास्स्यू रज्वा वेणुदलेन वा ॥ पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन । अतोऽन्यथा तु प्रहरन् प्राप्तस्याच्चोरकिल्बिषम् ॥ " इति । "प्राकारस्य च भेत्तारं परिखाणां च भेदकम् । द्वाराणां चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥ " इति विष्णुः । गजाश्वोष्ट्रगोघातित्वे राजताश्च तेषां समक्षककरं पादः कार्यः। विमांसविक्रयी ग्रामपशुघाती कार्षापणशतं दण्ड्यः। पशुस्वामिने च तन्मूल्यं दद्यात् । आरण्यपशुघाती पञ्चाशतं कार्षापणान् ; पक्षिघाती मत्स्यघाती च दश कार्षापणान् कीटोपघाती कार्षापणमिति । विमांस सृगालादिमांसम् ॥ २२९ ॥ इति दण्डपारुष्यप्रकरणम् ॥

१. त. इदं प्रतिकं नास्ति । २. द्वि व. ९. ।

# अथ साहसप्रकरणम् २०

संप्रति साहसं नाम विवादपदं व्याचिख्यासुस्तल्लक्षणं तावदाह—

**सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम् ।**

सामान्यस्य साधारणस्य यथेष्टंविनियोगानर्हत्वाविशेषेण परकीयस्य द्रव्यस्यापहरणं साहसम्। कुतः?—प्रसभहरणात्, प्रसह्य हरणाद्बलावष्टम्भेन हरणादिति

---

स्तेयमपि प्रसह्यकृतं साहसमेव यस्मात्, अतो नात्र स्तेयदण्डः। किं तर्हि?—

**सामान्यद्रव्यप्रसभहरणादित्यादि ॥ २३० ॥**

सामान्यद्रव्यं द्वयोरन्यतरेण प्रसभं प्रसह्यान्यतरं परिभूयते तत् स्तेयमपि प्रसह्य हरणात् साहसमिति स्मृतं महर्षिभिः यस्मात्,तस्मान्न तत्र स्तेयदण्डः। किं तर्हि? अपहृतद्रव्यमूल्या-

---

## सुबोधिनी

मूलवचनस्थं सामान्यद्रव्यमिति पदमुपलक्षकम्। अतस्तेन परकीयद्रव्यमपि लक्ष्य-त इत्यभिप्रेत्योपलक्षकत्वे हेतुं दर्शयन्नभिप्रेतमर्थमाह—यथेष्टेति। अयमभिप्रायः—साधारणद्रव्यस्य यथा न यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति तदपहरणमपि साहसं

## बालंभट्टी

आहेति—मूलकृदर्थेनेति भावः। शब्दार्थमाह—साधेति। मौलं सामान्येत्युपल-क्षणं परकीयस्यापि। तत्र साधारणधर्मस्य हेतुत्वप्रदर्शनद्वाराऽनुगतं अभिमतं लक्ष्यार्थं तस्य सूचयन्नाह—यथेष्टेति। यौगपद्यासंभवादाह—वेति। साधारणस्यानेकस्वत्वाक्रा-न्तस्य न यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति। तदपहरणमपि साहसं भवतीति भावः। कुत इति—यौगो वा रूढिर्वेति प्रश्नाशयः। प्रसभं हरणादिति समासः, तदाह—प्रसह्येति,—तथा च यौगिकोऽयमिति भावः। नन्वेवं मूलस्य न्यूनता, तथाऽपि तदवस्थैव स्मृत्यन्तराविरोधोऽपीति चेत्, न—हेतुनैवान्यसङ्ग्रहस्यापि सूचनेन दोष-

---

१. थ. 'उपलक्षकत्वे...प्रकृतमनुसरति तत्रेति' नास्ति। २. द. भिमतम्।

यावत्। एतदुक्तं भवति—राजदण्डं जनाक्रोशं[1] चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणपरदारप्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम्। अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति। नारदेनापि साहसस्य स्वरूप विवृतम्—"सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः।
5 तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते॥" इति[2]। तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसंग्रहणेषु व्यासक्तमपि बलदर्पावष्टम्भोपाधितो[3] भिद्यते इति दण्डातिरेकार्थं

## सुबोधिनी

भवतीति। राजदण्डं जनाक्रोशं चेति—राजदण्डभयं जनाक्रोशभयं चोल्लङ्घ्येत्यर्थः। राजपुरुषाश्च इतरजनाश्च राजपुरुषेतरजनाः तेषां समक्षमिति समासः। ननु सहसा कृतं साहसमित्येतल्लक्षणं चौर्यादिष्वनुस्यूतं तथाऽप्यवान्तरोपाधिभेदादितरेभ्य एतत्प्रकरणं भिद्यत इति पृथगुपादानं युज्यत इत्याह—तदिदमिति। अयमभिप्रायः—सहसा कृतं साहसमित्येतत् सामान्यलक्षणम्। अत एव चौर्यादिषु सर्वत्रानुस्यूतम्। अत्र तु बलं दर्पश्चोपाधिः अनेनैवोपाधिना विशेषलक्षणेन लक्षितं साहसपदाभिधेयम्। एवं चौर्यादिष्वपि विशेषल-

## बालंभट्टी

लेशाभावात्, तदेतत् ध्वनयन् तत्फलितमेवाऽऽह—एतदिति। राजदण्डभयं जनाक्षेपभयं चेत्यर्थः। राजेति—राजपुरुषाश्च इतरजनाश्च तेषां सममित्यर्थः। असमक्षन्तु क्रियमाणस्य स्तेयत्वमेवेति भावः। यत्किंञ्चिदर्थमेवाऽऽह—माराणमिति। साहसामिति—सहसा क्रियमाणत्वात् साहसमिति साहससामान्यलक्षणमित्यर्थः। अत एवाऽऽह—अत इति,—उक्तहेतोरित्यर्थः। अपिना—तत्समुच्चयः। तत्र आदिना एतस्यापि परिग्रहः। एवं च सर्वं मूलमुपलक्षणमिति स्वयमेव सूचितमिति न दोषः। अत एवाऽऽह—नारदेनापीति। साहसस्य—तत्सामान्यस्य। बलस्य दर्पो गर्वः सञ्जातो येषां तैः। ननु सहसा कृतं साहसमिति योगमात्रं लब्धं तत्सामान्यलक्षणं चौर्यादिष्वप्यविशिष्टमिति तेष्वेवान्तर्भावादस्य प्रकरणस्य पृथगुक्तिरयुक्तेत्यत आह — तदिदमिति,— पूर्वोक्तं साहससामान्यलक्षणमित्यर्थः। व्यासक्तमपि — संबद्धमपि संबंधिदर्पावष्टम्भरूपोपाधितो भिद्या इत्यर्थः। नन्वेवं किमित्येवं भेदाङ्गीकारोऽत आह—दण्डेति,—तद्भेदस्य शास्त्रकृद्भिः प्रतिपादनादित्यर्थः।

1. ख. च. वा। 2.—14. 1. 3. क. भिना।

पृथगभिधानम् । तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैव विवृतम्—"तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा । उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥ फलमूलोदकादीनां क्षेत्रोपकरणस्य च । भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥ वासः पश्वन्नयानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥ व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् । प्राणोपरोधि 5

## सुबोधिनी

क्षणं मृग्यमिति । तस्य चेति—तस्य साहसस्य । प्रथमेति—प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदेनेत्यर्थः । एतानि प्रथमसाहसादीनि कर्मनामधेयानि न तु दण्डनामधेयानि । तेनैवेति—तेन नारदेन। भङ्गेति—भङ्गो भञ्जनम् । आक्षेपो—दोषोत्पादः।उपमर्दो म्लानतापादनम् । आदिशब्दाच्छेदनादिकं गृह्यते । एतेनेति—भङ्गादिभिरेव क्रिया करणं कर्मेति

## बालंभट्टी

यद्यपीदं प्रागुक्तसामान्यलक्षणं तत्र सर्वत्रानुस्यूतम्, तथाऽपि तादृशावान्तरोपाधिभेदोद्भिन्नमिति तद्घटितविशेषलक्षणेन लक्षितं साहसपदवाच्यमिति रूढमपि तत्र तु शुद्धयौगिकमिति भावः । यदि तु तत्साधारणं लक्षणमपीष्टं, तर्हि योगमात्रलब्धं तदप्यस्तु ; प्रकरणभेदस्तु उक्तनिमित्तकः। तदा चौर्यादिष्वपि विशेषलक्षणानि वक्ष्यमाणानि बोध्यानि। बलदर्पयोरवष्टम्भयोरुपाधित्वमिति व्याख्यानन्तु बलावष्टम्भेनेति व्याख्याविरोधात् सहोबलमिति नारदविरोधाच्चोपलक्ष्यम् । तदेतम् ध्वनयन्नेवाऽऽह—तस्य चेति,—साहसविशिष्टस्येत्यर्थः। प्रथमेति—प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदेनेत्यर्थः । एतानि कर्मनामानि । न तु दण्डस्येति बोध्यम् । तल्लक्षणं—तेषां त्रयाणां लक्षणानि । जातावेकवचनम् । तेनैव—नारदेनैव । तत्पुनः—तत्तु शास्त्रेष्वित्युत्तरान्वयि । तस्य—त्रिविधस्य । क्षेत्रोपकरणं—तत्सामग्री । एवमग्रेऽपि । भङ्गो भञ्जनम्; आक्षेपो—दोषोत्पादः । उपमर्दो—म्लानतापादनम् । आद्यशब्देन छेदनादिकम् । वासो—वस्त्रम्। पूर्वनिपातप्रकरणस्यानित्यत्वान्न दोषः। एतेनैवेति—प्रागुक्तभङ्गादिनैवेत्यर्थः । व्यापादो—मारणम् । प्राणोपेति—तन्नाशक-

---

१. द. प्रथमभेदेनेति । २. द. भङ्गापेक्षेति । ३. द. तेन प्रकारेणेति ।

यच्चान्यदुक्तमुत्तमसाहसम् ॥ तस्य दण्डः क्रियाक्षेपः प्रथमस्य शतावरः । मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥ उत्तमे साहसे दण्डः सहस्रावर इष्यते । वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥ तदङ्गच्छेद इत्युक्तो दण्ड उत्तम साहसे ।" इति । वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः ॥

5 तत्र परद्रव्यापहरणरूपे साहसे दण्डमाह—

**तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥ २३० ॥**

तस्यापहृतद्रव्यस्य मूल्यात् द्विगुणो दण्डः।यः पुनः साहसं कृत्वा 'नाहमका-

---

## सुबोधिनी

यावत् । प्रथमसाहसरूपकर्मापेक्षा मध्यमसाहसरूपकर्मापेक्षा उत्तमसाहसरूपकर्मापेक्षा इत्यर्थः। एतदेव विविच्य दर्शयति-प्रथमस्येत्यादिना । समस्ता व्यस्ता वेति—समस्ता मिलिताः, व्यस्ता भिन्नाः ॥ २२९ ॥

स्मृत्यन्तरोक्तान् विशेषानभिधाय प्रकृतमनुसरति—तत्रेति । यः पुनरिति—निह्नवानन्तरं साक्ष्यादिभिर्भावितः सन् चतुर्गुणं दण्डमर्हति, न तु निह्नवमात्रेणेत्यभिप्रायः । ननु

## बालंभट्टी

मित्यर्थः । तस्य—त्रिविधस्य । क्रिया—करणं, कर्मेति यावत् तदपेक्षः, प्रथमसाहसादिरूपकर्मापेक्षः न तद्विरुद्धः। तदेव विविच्याऽऽह —प्रथमस्येति । पञ्चशतेति बहुव्रीहिः। तृतीये अन्यदप्याह—वध इति । उत्तमसाहसे इति सप्तम्यन्तपाठः। कर्मनामेदम् व्याख्यातमिदम् प्राक् । सहस्रावरदण्डस्य नियतत्वेऽप्यग्रे कथमिति शंकानिरासायोक्तमेव ध्वनयन् व्यवस्थामाह—वधेति । समस्ताः—मिलिताः,व्यस्ताः—भिन्नाः ॥ २२९ ॥

एवं स्मृत्यन्तरोक्तं विशेषमुक्त्वा तत्सङ्गत्या प्रकृतमवतारयति तत्रेति,—तेषां मध्ये इत्यर्थः। आदिना—सामान्यद्रव्यपरिग्रहः। अत एव तच्छब्दस्य प्रक्रान्तपरामर्शित्वात्तस्येत्यस्योभयं सङ्ग्रहायार्थमाह — अपहृतद्रव्यस्येति । अत्र साहसं कृत्वेत्यनेन सूचितं निह्नवानन्तरं साक्ष्यदिभिर्भावितोऽपि पुनस्तथैव करोति स चतुर्गुणं दण्डनीयः न निन्हव-

---

१. ना० १४. ३—९. । २. क. दमः। ३. त. इदं प्रतीकं नास्ति । ४. द. तत्र परद्रव्यापहरणरूपे । ५. थ. द. नः साहसं कृत्वेति ।

र्षाम्' इति निह्नुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति । एतस्मादेव विशेषदण्डविधानात्प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयं गम्यते ॥ २३० ॥

---

द्विगुणस्साहसिकदण्ड इत्यभिप्रायः । प्रसह्यापहृत्य निह्नवे कृते मूल्याच्चतुर्गुणः । सामान्यद्रव्यहरणं चोदाहरणार्थम् । अन्यदपि तु यत् स्तेयं प्रसह्य स्तेयमन्यद्वा क्रियते तत्सर्वं साहसमेव । तथा च नारदः—"साहसं क्रियते कर्म यत्किंचिद्बलदर्पितैः ॥ तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥" इति ॥ २३० ॥

---

## सुबोधिनी

प्रथमसाहसादिष्वपराधेषु शतावरादयो दण्डा विहिताः पूर्वम्[2] । अधुना[3] मूल्यद्विगुणश्चतुर्गुणो दण्डोऽभिधीयते । ततश्च परस्परविरोधादप्रामाण्य वा पक्षे प्रामाण्यमङ्गीकृत्य विकल्पो वाऽष्टदोषदुष्टः समाश्रयणीयः स्यादित्यत आह—एतस्मादेवेति । अयमभिप्रायः—नाप्रामाण्यं, न वा विकल्पः, अपि तु विशेषस्य सामान्यापवादकत्वेनापहाररूपे विषयविशेषे द्वैगुण्यचातुर्गुण्यविधायकेन विशेषवाक्येन सामान्यविधायकं बाध्यत इति ॥ २३० ॥

## बालंभट्टी

मात्रेणेति। ननु प्रथमसाहसादिषु नारदेन शतावरादयो दण्डाः उक्ताः, मूले तु द्विगुणचतुर्गुणावुक्ताविति मिथोविरोधादप्रामाण्यम् । पाक्षिकं प्रामाण्यं तु विकल्पस्याष्टदोषदुष्टत्वादयुक्तमत आह—एतस्मादेवेति,—मूलोक्तादेवेत्यर्थः । विधानं—नारदीयम् । अपहारद्रव्येति—अपह्रियमाणद्रव्येत्यर्थः । अपहारव्यतीति पाठस्तु सुगम एव । द्रव्यापहारव्यतीति पाठान्तरम्।अत्र विशेषसामान्यपदोल्लेखेन तक्रकौण्डिन्यन्यायविषयता सूचिता। तथा च नाप्रमाण्यं नापि विकल्पः । किंतु विशेषस्य सामान्यापवादकत्वेनापहाररूपविषयविशेषे द्वैगुण्यादिविधायकेनानेन विशेषवाक्येन सामान्यतो विधायकं नारदीयं बाध्यत इति भावः ॥ २३० ॥

---

१.—१४. १. । २. त. पूर्वमिति नास्ति । ३. थ. द. थमू । ४. त. न्यात्मक ।

साहसिकस्य[1] प्रयोजयितारं प्रत्याह—

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाऽहं[2] दाता कारयेत्स चतुर्गुणम् ॥ २३१ ॥

यस्तु 'साहसं कुरु' इतिवाचैव कारयति असौ साहसिकाद्दण्डात् द्विगुणं दण्डं 5 दाप्यः । यः पुनः 'अहं तुभ्यं धनं दास्यामि, त्वं कुरु' इत्येवमुक्त्वा साहसं कारयति स चतुर्गुणं दण्डं दाप्योऽनुबन्धातिशयात्[3] ॥ २३१ ॥

साहसिकविशेषं प्रत्याह—

अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः ।

अन्येनापि प्रयोक्तृतया यस्साहसं कारयतीत्यादि ॥ २३२ ॥

पूर्वोक्तात् द्विगुणं दण्डं कारयिता दाप्यः यस्त्वेवमुक्त्वा कारयेत् 'क्रियतामिदं; यद्यत्र कश्चिद्विरोधो भविष्यति ततोऽहमेव निर्वहणं करिष्यामि' इति स चोक्तद्विगुणदण्डाच्चतुर्गुणं दण्ड्य इत्यवसेयम् ॥ २३१ ॥

साहसिकत्वादेव च—अर्घ्याक्रोशातिक्रमकृदित्यादि ॥ २३२ ॥

## सुबोधिनी

अनुबन्धेति—अनुबन्धाधिक्याद् दोषाधिक्यादिति यावत् ॥ २३१ ॥

## बालंभट्टी

साहसं विद्यते यस्य स साहसिकः । "अत इनि"[4] इति ठन्। तस्य प्रयोजयितारं द्विविधं प्रति एवेनार्थदानव्यवच्छेदः । अत एवापौनरुक्त्यं साकांक्षत्वात् प्रत्यासत्तेराह–साहेति,– पूर्वोक्तादित्यर्थः । दातेति तृजन्तस्य भावित्वाद्भविष्यामि इत्यध्याहारः । तत्फलितमाह— दास्यामीति । यद्वा भविष्यत्सामान्ये व्यत्ययेन लुट् । न्यूनतां निराचष्टे—त्वामिति । लिङर्थो विवक्षित इत्याह—यतीति, एवमग्रे सर्वत्र बोध्यम्। तत्र हेतुमाह–अनुबन्धेति; दोषाधिक्यादित्यर्थः ॥ २३१ ॥

१. ख. घ. साहसस्य । २. ख त्येवमुक्त्वा । ३. थ. द. ०न्धातिशयादिति । ४. अ० ५. २. ११५. ।

संदिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३२ ॥
सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २३३ ॥

अर्घ्यस्यार्घार्हस्याचार्यादेः आक्षेपमाज्ञातिक्रमं च यः करोति, यश्च भ्रातृभार्यां ताडयति तथा संदिष्टस्य प्रतिश्रुतस्यार्थस्याप्रदाता, यश्च मुद्रितं गृहमुद्घाटयति, 5 तथा स्वगृहक्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनां कुलिकानां स्वकुलोद्भवानां—आदिग्रहणात् स्वग्राम्यस्वदेशीयानां च—योऽपकर्ता,—ते सर्वे पञ्चाशत्[१]पणपरिमितेन दण्डेन दण्डनीयाः ॥ २३२ ॥ २३३ ॥

किं च—

स्वच्छन्द[२]विधवागामी विक्रुष्टे नाभिधावकः ।
अका[३]रणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशेत् ॥२३४॥
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।

सामान्तकुलिकादीनामित्यादि ॥ २३३ ॥

स्पष्टार्थौ श्लोकौ ॥ २३३ ॥ २३४ ॥

तथा स्वच्छन्दविधवागामीत्यादि ॥ २३४ ॥

शूद्रप्रव्रजितानां चेत्यादि ॥ २३५ ॥

---

सुबोधिनी

अर्घ्येति—अर्घ्याक्रोशश्चातिक्रमश्च तौ करोतीति तत्कृदिति समासः । ते सर्वे—

बालंभट्टी

अर्घ्यः—"पादार्घाभ्यां च" इति यत् । अर्घ्यस्याऽऽक्रोशातिक्रमौ करोतीति समासः । तदाह—अर्घ्यस्यार्घार्हेति। तस्य सापेक्षत्वादन्यार्थे पूर्वेण सिद्धत्वाच्चाऽऽह—आज्ञेति । नात्र भेदो विदारण्—समुद्रेत्यस्य वैयर्थ्यापत्तेः । तत्र दण्डान्तरविधानाच्चात आह—उद्घाटेति । सामान्तपदार्थमाह—स्वगृहेति। कुलिकेत्यत्र"अत इनि"इति ठन्। तत्फलितमाह—स्वेति । ते सर्वे इति—प्रत्येकमिति भावः ॥ २३२ ॥ २३३ ॥

---

१. च त्पणदण्डेन । ख. घ. परिमितेन दण्डनीयाः । २. ख. घ. ०दं वि । ३. क. ०णं च । ग. ०णेन । ४. अ० ५. ४. २५. । ५. अ० ५. २. ११५. ।

अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २३५ ॥

वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।

साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २३६ ॥

पितापुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।

5 एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २३७ ॥

नियोगं विना यः स्वेच्छया विधवां गच्छति, चौरादिभयाकुलैर्विक्रुष्टे यः शक्तोऽपि नाभिधावति, यश्च वृथाक्रोशं करोति, यश्चण्डालो ब्राह्मणादीन् स्पृशति, यश्च शूद्रप्रव्रजितान् दिगम्बरादीन् दैवे पित्र्ये च कर्मणि भोजयति, यश्चायुक्तं 'मातरं ग्रहीष्यामि' इत्येवं शपथं करोति, तथा यश्च अयोग्य एव शूद्रादिर्योग्यकर्मा-

वृक्षक्षुद्रपशूनां चेत्यादि ॥ २२६ ॥

पितापुत्रेत्यादि ॥ २२७ ॥

एतदपि श्लोकचतुष्टयं स्पष्टार्थमेव ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

---

## सुबोधिनी

इति—ते सर्वे प्रत्येकं पञ्चाशत्पणपरिमितेन दण्डनीया इत्यर्थः ॥ २३२ ॥ २३३ ॥

इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां साहसप्रकरणम् ॥

## बालंभट्टी

किंचेति—साहसिकविशेषान्तरं प्रत्यन्यदप्याहेत्यर्थः। स्वच्छन्दमिति क्रियाविशेषणम्। तदर्थमाह—नियोगमिति,—ताच्छील्ये णिनिः । तत्र विक्रुष्टे महताशब्देनाऽऽह—शक्तोऽपीति,—तन्निवारणे इत्यादिः । एतेन अशक्तस्य दण्डाभावस्तथा कुर्वतः सूचितः । अपिर्विरोधेऽनौचित्ये वा, न तु समुच्चये । अकारणे इत्यस्यार्थो—वृथेति। अत्र विक्रोशे

---

१. क. घ. वृक्ष । २. ०ष्टे च यो ।

ध्ययनादि करोति, वृषो बलीवर्दः क्षुद्रपशवोऽजादयः—तेषां पुंस्त्वस्य प्रजननशक्तेः विनाशकः,–वृक्षक्षुद्रपशूनामिति पाठे हिङ्ग्वाद्यौषधप्रयोगेण वृक्षादेः फलप्रसूनानां पातयिता—साधारणमपलपति[1] साधारणद्रव्यस्य वञ्चकः, दासीगर्भस्य पातयिता च, ये च पित्राद्योऽपतिता एव सन्तोऽन्योन्यं त्यजन्ति ते सर्वे प्रत्येकं पणशतं दण्डार्हा भवन्ति ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥ 5

॥ इति साहसप्रकरणम् ॥

साहसप्रसङ्गात्तत्सदृशापराधेषु निर्णेजकादीनां दण्डमाह—

## वसानस्त्रीन्पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
## विक्रयावक्रयाधाने[2]याचितेषु पणान्दश ॥ २३८ ॥

नेजको वस्त्रस्य धावकः स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदाऽसौ पणत्रयं दण्डयः । यः पुनस्तानि विक्रीणीते अवक्रयं वा

---

प्रक्षालनार्थं समर्पितं **वसानस्त्रीनित्यादि ॥ २३८ ॥**

परांशुकमुत्कृष्टं वस्त्रम्; तत्परिधाने रजकस्य त्रिपणो दमः । एवं मध्यमाधमेषु

### सुबोधिनी

तत्सदृशेति—साहससदृशापराधा वस्त्रधावकादिभिः क्रियमाणा परवस्त्रवसनादयः । तेष्वपराधेषु तत्तत्कर्तॄणां दण्डो विधीयत इत्यर्थः । अवक्रयं वेति—अवक्रयं वा

### बालंभट्टी

र्निर्देश्याह—आक्रोशामिति । शूद्रस्सन् प्रव्रजितानित्येकम् तदाह—दिगम्बेति । पाठे—पाठे तु । फलेति—तथा च प्रजननशक्तेनांशेन वन्ध्यता तेषां सम्पन्नेति भावः । एषां—पित्रादीनां मन्ये अपतितम्, अन्योन्यं मिथस्त्यजतीति शाब्दोऽर्थः । तत्र फलितमाह—पित्रेति ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥ इति साहसप्रकरणम् ॥

एतदवान्तरप्रकरण सङ्गतिमाह—साहसेति । तत्सदृशेति—यथा तेषां समक्षं तत् क्रियमाणं साहसं, तथा वस्त्रधावकादिभिरपि सकलजनसमक्षं परवस्त्राच्छादनादि क्रियमाणमिति । तस्य तत्सादृश्यात्तत् प्रसङ्गात्तदपराधकर्तॄणां तेषां दण्डमाहेत्यर्थः । निजको—वस्त्रधावकः । आदिना—वक्ष्यमाणसर्वपरिग्रहः । अत एव दण्डामिति जातावेकवचनम् । निर्णेजनं—प्रक्षालनम् । अवेति — करोतीति । शेषमाह—

---

१. 'साधारणमपलपति ' क्वचिन्नास्ति । २. वि. यापक्र० ।

'एतावत्कालमुपभोगार्थं वस्त्रं दीयते मह्यमेतावद्धनं देयम्' इत्येवं भाटकेन यो ददाति, आधित्वं वा नयति, स्वसुहृद्भ्यो याचितं वा ददाति असौ प्रत्यपराधं दश पणान् दण्डनीयः। तानि च वस्त्राणि श्लक्ष्णशाल्मलीफलके क्षालनीयानि न पाषाणे, न च व्यत्यसनीयानि, न च स्वगृहे वासयितव्यानि; इतरथा दण्ड्यः—"शाल्मले फलके- 5 श्लक्ष्णे निज्याद्वासांसि नेजकः। न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्॥" इति' मनुस्मरणात्। यदा पुनस्तानि प्रमादान्नाशयति तदा नारदेनोक्तं द्रष्टव्यम्—"मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः। द्विः पादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव च॥ अर्धक्षयात्तु परतः पादांशापचयः क्रमात्। यावत्क्षीणदशं जीर्णं जीर्णस्यानियमः क्षये॥" इति। अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्याष्टमभागोनपणं

पणापचयकल्पना; तथाऽभ्यासापेक्षयाऽप्यतिरेककल्पना। विक्रयादिकरणेषु तु स्वामिने मूल्यं राज्ञे दण्डश्चेत्यवसेयम्। भाटकेनार्पणमपक्रमः; आधमनमाधानम्। स्पष्टमन्यत्॥२३८॥

## सुबोधिनी

यो ददातीत्युत्तरेणान्वयः। अवक्रयस्वरूपमेवं दर्शयति—एतावत्कालमिति,—भाटकं यथा भवति तथेत्यर्थः। मूल्याष्टभाग इत्यादिनारदवचनजातं व्याचष्टे—अष्टपणक्रीतस्येति

## बालंभट्टी

एतावदिति ददातीत्यन्तेन। भाटकमिति पाठे तत्त्वेनोपलक्षितं कृत्स्नमित्यर्थः। इत्येवमिति—संभाष्य। शाटकं—वस्त्रमित्यर्थः। तथा च तथा दानमवक्रय इति भावः। अत्र न धनग्रहणमित्याह—स्वेति। विशेषमाह—तानि चेति। शाल्मलेर्विकारे दारुणि। "पिच्छिलापूरणी-मोचा स्थिरायुः शाल्मलिर्द्वयोः।" इत्यमरः। व्यत्यासेति—विनिमयं प्रापयेत्। प्रमादादिति—अप्रमादे तु, अन्यथाद्रष्टव्यमिति भावः। नारदीयमादितो व्याचष्टे—अष्टपणेति। बहुव्रीहिः मूल्यमन्यपदार्थः। अवधिंविना अष्टमांशादितो न्यूनताया दुर्वचनत्वात्, दिङ्मात्र-प्रदर्शनार्थेदमुक्तमिति बोध्यम्। क्षये इति चरमे इक्तेराह—नाशीति पणन्यूनं,

१.—८. ३९६. । २. द्वि. व. ४६. ।

मूल्यं देयम् ; द्विर्धौतस्य तु पादोनं; त्रिर्धौतस्य पुनस्तृतीयांशन्यूनम् ; चतुर्धौतस्यार्धं पणचतुष्टयं देयम्। ततः परं प्रातनिर्णेजनमवशिष्टं मूल्यं द्विपणोनम् पादपादापचयेन देयं यावज्जीर्णं जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम्॥ २३८ ॥

## सुबोधिनी

इत्यादिना। अवधिमन्तरेणाष्टमांशादिभ्यो न्यूनताया वक्तुमशक्यत्वाद् दिङ्मात्रप्रदर्शनायाष्टपणमूल्यकथनम्। अष्टमभागोनं सप्तपणा इत्यर्थः । पादोनमिति चतुर्थांशकान्न्यूनाम्। "अर्धक्षयात्तु परतः" इत्यमुमंशं व्याचष्टे— ततः परमिति। अयमभिप्रायः—अष्टपणक्रीतस्य वाससश्चतुर्थे प्रक्षालने नष्टस्य मूल्यादर्धस्य पणचतुष्टयस्य क्षयो जायते । पञ्चमप्रक्षालनादिषु नष्टस्यार्धमूल्यक्षयादुपरि क्षयो जायते। एवं स्थिते पञ्चमप्रक्षालने नष्टस्य पादन्यूनं मूल्यमवशिष्टपणचतुष्टयान्मूल्यात् त्रयः पणाः। षष्ठे तु क्षालने नष्टस्यावशिष्टपणात्रितयाच्चतुर्थांशन्यूनमिति। एवं यावता कालेन वस्त्रं जीर्णं भवति तावदेव चतुर्थांशन्यूनं मूल्यं देयम्। जीर्णता च दशासु क्षीणासु भवतीति। "जीर्णस्यानियमः पुनः" इत्यमुमंशं व्याचष्टे— जीर्णस्य पुनरित्यादि। अयमर्थः—जीर्णस्य नाशे परीक्षकाणामिच्छैव मूल्यदानकल्पनायां प्रमाणं न पूर्वोक्तरीत्या वचनप्रवृत्तिर्नापि स्वेच्छाप्रवृत्तिरिति ॥ २३८ ॥

## बालंभट्टी

सप्तपणात्मकं। धौतस्येत्यादेऽरग्रेऽपि सम्बन्धादाह—द्विर्धौतेति। पादोनं चतुर्थांशन्यूनं । तदाह—पणेति । षट्पणात्मकमित्यर्थः । अर्धक्षयादिति व्याचष्टे—ततः परमिति। इदं परत इत्यन्तस्य व्याख्यानम् सार्वविधिभक्तिकः प्रथमान्तात्तसिः। प्रतीति वीप्सायामव्ययीभावः। अवशिष्टं अर्धांशकेन तत्क्रमेण। क्वचित्तथैव पाठः। जीर्णमित्यन्तं पूर्वान्वयीत्याह—यावज्जीर्णमिति।जीर्णता च दशासु क्षीणासु ज्ञेयेत्येतदर्थं मूले क्षीणदशमित्युक्तम्। अर्धक्षयोत्तरं पञ्चमप्रक्षालनादिषु अवशिष्टस्यार्धमूल्यस्य पादपादाय च तत् क्रमेण मूल्यक्रमेणेति पञ्चमप्रक्षालने पणचतुष्टयात्मकमूल्यादेकपणोनं पणत्रयात्मकम् । षष्ठे तत्र । पणत्रयादस्मात्, पादोनं सपादपणद्वयात्मकं । सप्तमे तत्र, सपादपणद्वयात् पादोनं, किंचिदधिक सार्धपणात्मकमित्यादि बोध्यमिति भावः । जीर्णस्यानियम इति व्याचष्टे—जीर्णस्येति। अनियम इति अस्य प्राग्वाचनिकनियमाभाव इत्यर्थः। तथा सति सर्वथा तदभावो नेति ध्वनयितुं नियमपदसूचितमाह—इच्छात इति। परीक्षकाणामिछात इत्यर्थः। तथा च जीर्णनाशे परीक्षकाणामिच्छैव मूल्यदानकल्पनायां प्रमाणं नप्रागुक्तवचनप्रवृत्तिर्नापि स्वेच्छाप्रवृत्तिरिति भावः ॥ २३८ ॥

---

१. ग. घ. च. पादप॰। ख. पादाव।

पितापुत्रविरोधे तु साक्षिणां त्रिपणो[1] दमः ।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो[2] दमः ॥ २३९॥

पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न पुनः कलहं निवारयति असौ पणत्रयं दण्ड्यः। यश्च तयोः सपणे विवादे पणदाने प्रतिभूर्भवत्यसौ—चकारात्तयोर्यः कलहं वर्धयति सोऽपि—त्रिपणादष्टगुणं चतुर्विंशतिपणान्दण्डनीयः । दम्पत्यादिष्वयमेव दण्डोऽनुसरणीयः ॥ २३९ ॥

---

एवमादेयव्यवहारे तावद्दण्डव्यवस्थोक्ता । पितृकृते त्वनादेयव्यवहारे— पितापुत्रविरोधादावित्यादिः ॥ २३९ ॥

सर्वत्र पितापुत्रादिविरोधेनादेयव्यवहारे साक्षिणो द्रष्टारो वा ये स्युः—साक्षिवचनस्य लक्षणार्थत्वात्—तेषां द्विशतो दमः । यस्तु पिता पुत्रादीनां विश्लेषकरस्मात् तस्याप्यशतम् । यद्वा तयोरेव पिता पुत्रयोः यः स्रान्तरः स्यात् - व्याजस्यवहर्तेत्यर्थः । द्वयमप्येतत् । अविरोधाद्युक्तं स्वाभिप्रेत व्यवहारसिद्ध्यर्थम् ॥ २३९ ॥

सुबोधिनी

पूर्वं निर्णेजकादीनां दण्डमाहेत्युक्तम् । तत्रादिशब्दवाच्यानां दण्डान् दर्शयति पिता। इत्यादिभिः ‘ पणस्योपरि संस्थाप्य ’ इत्यन्तैः पञ्चदशभिः श्लोकैः । कलहनिवारणसमर्थः सन्नपि यः कलहमीदृशस्थलेऽनिवारयन् साक्ष्यमङ्गीकरोति तस्य दण्ड इत्यनेनाभिप्रायेणाह— पितापुत्रयोरिति । दम्पत्यादिष्वपीति—आदिसब्दात् गुरुशिष्यप्रभृतयो गृह्यन्ते ॥ २३९ ॥

बालंभट्टी

अथ प्रागुक्तादिशब्दसंग्राह्याणां क्रमेण दण्डानाह—पितेत्यादि पण्यस्योपरीत्यन्तैःपञ्चदशभिः पद्यैः।केवलं तत्साक्षिणो दण्डो नाभिमतः;तथा सति साक्षित्वोच्छेदापत्तेः।तदभावे क्वचित् विवादपरिसमाप्त्यभावापत्तेश्च;किन्तु यः कलहनिवारणसमर्थः सन्नपि तमनिवारयन् साक्ष्यमङ्गीकरोति तस्य दण्ड इत्याशयेन व्याचष्टे-पितेति। तथा च न तावन्मात्रदण्डप्रयोजकं किन्तु अन्यदपीत्याह नपुनः कलहमिति। इदमग्रेऽप्युभयत्र ज्ञेयम्। त्रिपणं इति बहुव्रीहिरित्याह—पणत्रयमिति। साकांक्षत्वात् प्रत्यासत्तेराह— त्रिपणादिति। चतुर्विंशतिरिति व्यस्तपाठः। तुल्यन्यायत्वादाह— दम्पत्यादिति । आदिना गुरुशिष्यादिपरिग्रहः । पूर्वोक्तं पृथगाध्यायान्ते उक्तम् ॥ २३८ ॥

---

१. वि. द्विशतो । २. वि. ष्टशतो ।

तुला शासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥ २४० ॥

तुला तोलनदण्डः ; शासनं पूर्वोक्तम् ; मानं प्रस्थद्रोणादि; नाणकं मुद्राचिह्नितं द्रम्मनिष्कादि;—एतेषां यः कूटकृत् देशप्रसिद्धपरिमाणादन्यथा न्यूनत्वमाधिक्यं वा द्रम्मादेरव्यवहारिकमुद्रात्वं वा ताम्रादिगर्भत्वं वा करोति यश्च तैः 5 कूटैर्जानन्नपि व्यवहरति तावुभौ प्रत्येकमुत्तमसाहसं दण्डनीयौ ॥ २४० ॥

नाणकपरीक्षिणं प्रत्याह—

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥ २४१ ॥

यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रम्मादिकं सम्यगिति ब्रूते सम्यक् च 10 वा कूटकमिति असावुत्तमसाहसं दण्ड्यः ॥ २४१ ॥

तुलाशासनमानानामित्यादि ॥ २४० ॥

शासनग्रहणं सर्वलेख्यलक्षणार्थम्। मानानि........प्रस्थप्रभृतीनि। स्पष्टमन्यत्॥२४०॥

जानन्नपि तु लोभादिना—अकूटं कूटकमित्यादि ॥ २४१ ॥

तुशब्दः सुवर्णमाणिक्यादावपि उक्तदण्डज्ञापनार्थः ॥ २४१ ॥

---

बालंभट्टी

राजपत्रं द्रम्मनिष्कादयो मूल्याध्यायविवृतौ प्रपञ्चिताः।कूटं कैतवं तत्स्वरूपं सर्वं क्रमेण प्रतिपादयन् कूटकृदिति व्याचष्टे—देशेत्यादि। स्थलत्रयेऽन्यथेत्यन्तं तत्स्वरूपं सर्वत्र क्रमेणप्रति पादयन् तदपि द्वेधेत्याह—द्रम्मादेरिति। उत्तरार्धं व्याचष्टे—एतैरिति कूटैरिति। अर्शाद्यच् । पूर्वोक्तैः कूटकृद्भिरित्यर्थः । जानन्नित्यनेन अज्ञानतो व्यवहारे दण्डाभावः सूचितः । व्यवहारमात्रं न तावद्दण्डप्रयोजकं दोषस्यतुल्यत्वादिति जानन्नित्युक्तमिति बोध्यम् । परीक्षकं दण्डमिति शेषः । कुर्यादिति ब्रूयादित्यर्थः। क्वचित्तथैवपाठः।उभयत्र स्वार्थेकन् । सनाणेत्यस्य सान्निध्यात् व्यतिक्रमेण व्याचष्टे-ताम्रादिति ।इतीत्यस्य उभयत्र ब्रूयादिति शेषः ॥ २४०॥

वितयं सहैव लाघवेन व्याचष्टे—यः पुनरिति ॥ २४१ ॥

---

१. थ ज. मुद्रादि । २. ख घ. च. मुद्रात्वं ।

चिकित्सकं प्रत्याह—

**भिषङ्मिथ्याचरन्दाप्यस्तिर्यक्षु प्रथमं दमम् ।**
**मानुषे मध्यमं राजपुरुषेषूत्तमं दमम् ॥ २४२ ॥**

यः पुनर्भिषक् मिथ्या आयुर्वेदानभिज्ञ एव जीवनार्थं 'चिकित्सितज्ञोऽहम्' इति तिर्यङ्मनुष्यराजपुरुषेषु चिकित्सामाचरत्यसौ यथाक्रमेण प्रथममध्यमोत्तमसाहसान् दण्डनीयः । तत्रापि तिर्यगादिषु मूल्यविशेषेण वर्णविशेषेण राजप्रत्यासत्तिविशेषेण दण्डस्य लघुगुरुभावः कल्पनीयः ॥ २४२ ॥

अज्ञानाद्विपरीते वा **भिषङ्मिथ्याचरन्नित्यादि** ॥ २४२ ॥

पशवो वर्णापशदास्तिर्यञ्चः । विट्छूद्रा मानुषा क्षत्रियब्राह्मणाश्च । राजमानुषमेवं मिथ्याचरतो वैद्यस्य प्रथमसाहसादयो दण्डाः । उदाहरणार्थं चैतत् । सर्वथा चिकित्स्यस्वरूपं पीडाविशेषं च वैद्यकृतमालोच्य यथार्हदण्डकल्पनेत्यवसेयम् ॥ २४२ ॥

## सुबोधिनी

तिर्यगादिष्विति — तिर्यक्षु मूल्यविशेषेण मानुषेषु ब्राह्मणत्वादिवर्णविशेषेण राजपुरुषेषु प्रत्यासत्तिविशेषेण दण्डस्य गुरुत्वं लघुत्वं च कल्पनीयमित्यर्थः ॥२४२ ॥

## बालंभट्टी

मिथ्यायुरिति—चरन्नित्याद्यर्थम् । सहेतुकमाह—जीवेति। जीवनार्थमित्यस्य अग्रिमचिकित्सादान्वयः। इतीत्यस्य ब्रुवन् इतिशेषः। तिर्यञ्च. पशुपक्ष्यादयः विशेषमाह—तत्रापीति। उक्तदण्डेष्वपीत्यर्थः। द्विषुयथा क्रमेणाह— मूल्येत्यादि। तिर्यक्षु मूल्यविशेषेण मानुषेषु ब्राह्मणत्वादिवर्णविशेहेण राजपुरुषेषु तत्प्रत्यासत्तिविशेषेण दण्दस्य गुरुत्वं लघुत्वं च कल्पनीयमित्यर्थः ॥ २४२ ॥

---

१. ख. दण्डयः ।

अबध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ २४३ ॥

यः पुनर्बन्धनानर्हमनपराधिनं राजाज्ञया विना बध्नाति यश्च बद्धं व्यवहारार्थमाहूतं अनिर्वृत्तव्यवहारं चोत्सृजत्यसौ उत्तमसाहसं दाप्यः ॥ २४३ ॥

मानेन तुलया वाऽपि योंऽशमष्टमकं हरेत् । 5
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥ २४४ ॥

यः पुनर्वणिक् व्रीहिकार्पासादेः पण्यस्याष्टममंशं कूटमानेन कूटतुलया वा अन्यथा वा परिहरति असौ पणानां द्विशतं दण्डनीयः । अपहृतस्य द्रव्यस्य पुनर्वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये ॥ २४४ ॥

अबध्यं यश्च बध्नातीत्यादि ॥ २४३ ॥

अप्राप्तव्यवहारो व्यवहारेण स्पष्टीकृतः ॥ २४३ ॥

अकूटेनैव कौशलात् मानेन तुलया वाऽपीत्यादि ॥ २४४ ॥

## सुबोधिनी

"अप्राप्तव्यवहारम्" इत्यस्य पदस्यार्थमाह— अनिर्वृत्तेति ॥ २४३ ॥

कूटमानादिनाऽपहृतस्य द्रव्यस्याष्टमांशादप्यधिकत्वे न्यूनत्वे वा दण्डद्रव्यस्यापि द्विशताद्वृद्धिं हानिं च कल्पयेदित्याह—अपहृतद्रव्यस्येति ॥ २४४ ॥

## बालंभट्टी

विशेषशब्दपरा. । अहेतुकत्वं सूचयन्नाह—अनपेति । अत एवाऽऽह—राजाज्ञेति । अस्यानुषंगेणाग्रे उभयत्र मुख्य उपयोग इति तत्त्वम् । प्रमुंचतीत्यस्य मध्यमणिन्यायेनोभयत्रान्वय इत्याह-यश्च बद्धमिति। अप्राप्तव्यवहारमित्यस्यार्थमाह —अनिवृत्तेति ॥ २४३ ॥

अपण्यस्य विक्रेयस्य योग्यतया आह — कूटेति । अपिसमुच्चयमाह— अन्यथावेति । मूले द्विशतमिति बहुव्रीहिः। दण्डः अन्यपदार्थः । तत्फलितमाह—पणानां द्विशतमिति । अत्रापि बहुव्रीहिरेव। समूहोऽन्यपदार्थ इति विशेषः।तुर्यपादं व्याचष्टे-अपेति। कूटमानादिनाऽपहृतस्याष्टमांशादप्यधिकत्वे न्यूनत्वे वा दण्डद्रव्यस्यापि द्विशताद्वृद्धिर्हानिश्च कल्पय इत्यर्थः ॥ २४४ ॥

भेषजस्नेहलवणगन्धधान्यगुडादिषु ।

पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश ॥ २४५ ॥

भेषजमौषधद्रव्यम् ; स्नेहो घृतादिः ; गन्धद्रव्यमुशीरादि ;—आदिशब्दा-द्धिङ्गुमरीचादि—एतेष्वसारं द्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः ॥२४५॥

5

किंच—

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।

अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ २४६ ॥

न विद्यते बहुमूल्या जातिर्यस्मिन्मृच्चर्मादिके तदजाति; तस्मिन् जातिकरणे

---

एतदपि स्तेयद्रव्यसारतापेक्षया व्यवस्थापनीयम् । स्पष्टमन्यत् ॥ २४४ ॥

सादृश्यादिना क्रेतुः भ्रमं चिकीर्षुः भेषजस्नेहेत्यादि ॥ २४५ ॥

हीनं हीनमूल्यम् । ऋज्वन्यत् ॥ २४५ ॥

क्रेतुः पण्यस्वरूपाज्ञत्वमभिप्रेत्य मृच्चर्ममणिसूत्राय इत्यादि ॥२४६॥

---

बालंभट्टी

भेषजेति—द्वंद्वे गतिः प्राग्वद्गन्धशब्दोऽत्र तादृशद्रव्यावाची । हीनपदार्थ-माह—असारेति ॥ २४५ ॥

किं चेति—ईदृशो विषयोऽन्योऽप्युच्यत इत्यर्थः । मूले वाससीति सप्तम्यन्तं समाहारद्वन्द्व इत्याह—न विद्यते इति । जातिरुत्कर्ष इत्याह—बह्विति। तस्मिन्निति—जातिशून्यमृदादिके इत्यर्थः । तृतीयादिष्विति वा पुंवद्भावात्पुम्नेति भावः ।

विक्रयार्थं गन्धवर्णरसान्तरसञ्चारणेन बहुमूल्यजातीयसादृश्यसम्पादने ; यथा—मल्लिकामोदसञ्चारेण मृत्तिकायां सुगन्धामलकमिति; मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति; स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति; कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति ; कालायसे वर्णोत्कर्षाधानेन रजतमिति; बिल्वकाष्ठे चन्दनामोदसञ्चारणेन चन्दनमिति; कङ्कोले त्वगाढ्यं लवङ्गमिति; कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति; विक्रेयस्याऽऽपादितसादृश्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्यः ॥ २४६ ॥ 5

## समुद्रपरिवर्तं च सारभाण्डं च कृत्रिमम् ।

मृदादीनामजात्यं जात्यमित्यपि कृत्वा विक्रीणन्नुक्तषोडशपणाष्टगुणं दण्ड्यः । स्पष्टमन्यत् ॥ २४६ ॥

यदि तु मुद्रकादिस्थं दर्शयित्वा समुद्रकान्तरपरिवर्तनेन कर्पूरादिद्रव्यं कृत्रिमकरणेन वा कश्चिदाधानं विक्रयं वा कुर्यात् तस्यापि व्याजव्यवहारिणः **समुद्रपरिवर्त-**

### सुबोधिनी

विक्रेयस्येति— अयमभिप्रायः, — वर्णान्तराद्याधानेनाऽऽपादितपद्मरागाद्यात्मकस्य स्फटिकादेर्विक्रेयद्रव्यस्य यन्मूल्यं तस्मादष्टगुणो दण्डो ग्राह्य इति ॥ २४६ ॥

### बालंभट्टी

जातिकरणे इत्यत्रमुख्यजातेः— तत्र ब्राह्मणाऽपि दुष्करत्वात्—सहेतुकमर्थमाह—चित्रेत्यादि । सम्पादने इत्यन्तेन गन्धेत्यादिद्वन्द्वगर्भो मयूरव्यंसकादिः। जातीयेति—जातीयस्य सादृश्येत्यर्थः । उक्तमेवोदाहरणेन विशदयति— यथेत्यादि — तदेकान्तत्वाभावात् सुगन्धेत्यत्रैवं न आमलकं मृत्तिकाया एव बोध्यम्। गुणकाष्ठेति गुणोत्कर्षेत्यर्थः। क्वचित्तथैव पाठः। एवमग्रेऽपि—कार्ष्णेति,—कृष्णायसविकारादावित्यर्थः।पुनर्गन्धोदाहरणमाह—बिल्वेति । सोदाहरणमाह—कङ्कोले इति । प्रसिद्धादेव कुसुमव्यावृत्तये आह—त्वगिति । तद्रसमध्ये तन्निक्षेपेण तद्रसाभिव्यक्तेरिति भावः । पुनर्वर्णस्योदाहरणमाह—कार्पेति,—तत्सूत्रनिर्मितमित्यर्थः।विक्रेयेत्यस्य व्याख्या—पण्यस्येति। तत्स्वरूपमाह—मृदिति । गन्धान्तराद्यापादनेन आपादित सुगन्धामलकत्वादेर्मृदादेरित्यर्थः । अष्टेति—यन्मूल्यं तस्मादिति शेषः ॥ २४६ ॥

आधानं विक्रयं वाऽपि नयतो दण्डकल्पना ॥ २४७ ॥

भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते।

द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥ २४८॥

मुद्रः पिधानं, मुद्रेण सह वर्तत इति समुद्रं करण्डकं; परिवर्तनं व्यत्यासः; योऽन्यदेव मुक्तानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेव स्फाटिकानां पूर्णकरण्डकं समर्पयति यश्च सारभाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधिं वा नयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या। कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने न्यूनपणमूल्य इति यावत् तस्मिन् कृत्रिमे विक्रीते पञ्चाशत्पणो दण्डः।

---

चेत्यादि॥ २४७॥

उक्तार्थः श्लोकः ॥ २४७ ॥

किं स्वमत्यैव दण्डकल्पना? नेत्याह—भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यत इत्यादि ॥ २४८ ॥

---

सुबोधिनी

"भिन्ने पणे तु पञ्चाशत्" इत्यमुं श्लोकं व्याचष्टे—कृत्रिमेत्यादिना ॥२४७॥२४८॥

बालंभट्टी

करण्डेति—"समुद्गकः सम्पुटकः" इत्यमरः। महाभाष्ये तु नेत—रूपं किन्त्वुपसर्गद्वयपूर्वका...रन्येष्वपीति उत्युक्तम्। परिवर्ते भावे क्त इत्याह—परीति। परिवर्तुंचेत्यस्यापि नयत इत्यत्रान्वयः। अतस्तात्पर्यार्थमाह—योऽन्येति। अन्यदेवेत्यस्य व्याख्या—मुक्तानां पूर्ण इति। शेषे षष्ठी। एवमग्रेऽपि। सारभाण्डमित्यस्य सरभाख्यस्याण्डोद्भवमित्यर्थः। तदाह—कस्तूरीति। अर्थाच्छेषमाह—कृत्वेति। वक्ष्येति—भिन्ने पणेत्वित्यनेनैवेति भावः। तामेव कथयन् तत्पद्यमुक्तरीत्योक्तव्युत्क्रमेण व्याचष्टे—कृत्रिमेति। आदिना तत्परिवर्तग्रहः। मूल्येति—वस्तुत इति भावः। विभिन्नत्वमन्यत्वम्। तच्च द्वेधा। तत्र वृद्धेर्वक्ष्यमाणत्वादाह—न्यूने इति। तात्पर्यार्थमाह—न्यूनेति; बहुव्रीहिः। एवमग्रेऽपि। तदाह—तस्मिन्निति,—तादृश इत्यर्थः। पंचेति—बहुव्रीहिः। शब्दार्थस्योक्तत्वात्तात्पर्या-

---

१. द्वि. म, १३९.।

पणमूल्ये पुनः शतं, द्विपणमूल्ये द्विशतो दण्ड इत्येवं मूल्यवृद्धौ दण्ड वृद्धि-रुन्नेया ॥ २४७ ॥ २४८ ॥

वणिजः प्रत्याह—

संभूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम् ।
अर्घस्य ह्रासं वृद्धिं वा जानता दम उत्तमः ॥ २४९ ॥ 5

राजनिरूपितार्घस्य ह्रासं वृद्धिं वा जानन्तोऽपि वणिजः संभूय मिलित्वा कारूणां रजकादीनां शिल्पिनां चित्रकारादीनां सबाधं पीडाकरमर्घान्तरं

अनिर्दिष्टविषये तु द्रव्ये मूल्यानुसारिणी दण्डकल्पनेत्यभिप्रायः ॥ २४८ ॥

एवं तावत्प्रत्येकव्यतिक्रमेऽनुशासनमुक्तम् । इदानीं कारुकादीनां संभूय व्यतिक्रमे शासनमाह—संभूय कुर्वतामर्घमित्यादि ॥ २४९ ॥

संभूयैकमत्येन कारुशिल्पिनां साबाधं पीडाकरमन्यशिल्पिजनस्य तद्‌द्रव्यस्य वा कुर्वतां कार्षापणसहस्रदण्डः शिल्पार्घस्य हानौ वृद्धौ वा कर्तव्यः । ये हि भाजनादीनि द्रव्याणि स्वयमेव कृत्वा विक्रीणन्ति ते शिल्पिनः कांस्यकारादयः।ये तु परकीयाण्येव गृहादीनि निष्पादयन्ति ते कारवः । तेषामागंतुकशिल्पिजनस्यानवकाशार्थं कारयितृजनार्थीताशया द्वा अर्घस्य हानिं वृद्धिं वा यदा कुर्युः तदाऽयं दण्ड इत्यवसेयम् ॥ २४९ ॥

बालंभट्टी

र्थमाह—पणेति । एवमग्रेऽपि । द्विपणेति बहुव्रीहिगर्भो बहुव्रीहिः। अनेनैव वृद्धेरुक्तत्वा-त्तुर्यपादवैयर्थ्यं परिहरति—इत्येवमिति,—अनेन प्रकारेणेत्यर्थः । तथा चाधिकसंग्रहार्था तदिति भावः ॥ २४७ ॥ २४८ ॥

वणिज इति समुदितात् प्रतीत्यर्थः— दोषस्य समुदायनिष्ठत्वात् । पूर्वं तु प्रत्येकं प्रति तत्तद्दोषेणोक्तमिति ततोऽस्य भेदः । वक्ष्यमाणोक्तेराह—राजेति । आबा धजनकत्वात् साबाधत्वमित्याह—पीडेति। उक्तहेतोरेवाघमित्यस्यार्थमाह—अर्घान्तरामिति

लाभलोभात्कुर्वन्तः पणसहस्रं दण्डनीयाः ॥ २४९ ॥

किं च—

**संभूय वणिजां पण्यमनर्घेणोपरुन्धताम् ।**

**विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ २५० ॥**

5 ये पुनर्वणिजो मिलित्वा देशान्तरादागतं पण्यमनर्घेण हीनमूल्येन प्रार्थयमाना उपरुन्धन्ति, महार्घेण वा विक्रीणते तेषामुत्तमसाहसो दण्डो विहितो मन्वादिभिः ॥ २५० ॥

केन पुनरर्घेण पणितव्यमित्यत आह—

**राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।**

10 **क्रयो वा निःस्रवस्तस्माद्वणिजां लाभकृत्स्मृतः ॥ २५१ ॥**

---

उक्तादेवहेतोः— **संभूय वाणिजां पण्यमित्यादि ॥ २५० ॥**

केन तर्ह्यर्घेण पण्यानां विक्रय इत्युच्यते। राजनि स्थाप्येते योऽर्घः प्रत्यहं तेन विक्रयः क्रयो वा कार्य इति शेषः। यश्चासौ राजकुलाधिष्ठितनिपुणवणिग्निरूपितो दिवसार्घः तेन विक्रीतानां पूर्वक्रमः ॥ २५० ॥

कस्मात्— **यस्माच्च विक्रयो वाऽपि वणिजां लाभतः स्मृतः ॥ २५१ ॥**

बालंभट्टी

बीजमाह——लाभेति । यद्यपि मूलमतेऽशीत्यधिकसहस्रपणात्मक उत्तमसाहसः, तथाऽपि विहिते इति वक्ष्यमाणोक्तेः,—“ पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्चविज्ञेयः सहस्रे त्वेवचोत्तमः ॥ ” इति मन्वनुबोधेनाऽऽह—— पणेति ॥ २४९ ॥

समुदितान् प्रत्येवान्यदप्युत इत्याह—किंचेति। अर्थादाह—देशान्तरेति।अनर्घेणेत्यत्र न ज्ञापनार्थे इत्याह—हीनेति। मानाः सन्तः उपरुन्धान्ति प्रतिबद्धविक्रयकं कुर्वन्ति । यथास्थितविक्रये दोषाभावादाह—महेति वर्तितव्यं व्यवहर्तव्यत् ॥ २५० ॥

१.—८. ८३१. ।

राजनि संनिहिते सति यस्तेनार्घः स्थाप्यते निरूप्यते तेनार्घेण प्रतिदिनं क्रयो विक्रयो वा कार्यः। निर्गतः स्रवो निःस्रवोऽवशेषः, तस्माद्राजनिरूपितार्घाद्यो-निःस्रवः स एव वणिजां लाभकारी, न पुनः स्वच्छन्दपरिकल्पितात्। मनुना चार्घकरणे विशेषो दर्शितः—"पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथागते। कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥" इति ॥ २५१ ॥ 5

स्मृत इति वचनाल्लाभेनापि विक्रयो धर्म इति ज्ञायते ॥ २५१ ॥

## सुबोधिनी

पञ्चरात्र इति—अस्यार्थः,—अस्थिरार्घाणां पदार्थानां पञ्चसु पञ्चसु दिनेषु गतेषु सत्सु स्थिरार्घाणां पक्षेपक्षे गते एषां पूर्वोक्तानामर्घं राजा स्वसमक्षं कुर्यादिति। अत्र वीप्सया दशसु दिनेषु मासे चातीतेऽर्घनिरूपणमिति न मन्तव्यम्। अपि तु पञ्चरात्रा-नन्तरं पक्षानन्तरमित्येव। वीप्सा त्ववश्यकर्तव्यत्वेन नित्यतां बोधयति वसन्ते वसन्ते ज्योतिषेतिवत्[3] ॥ २५१ ॥

## बालंभट्टी

राजनीति—वटेगाव इतिवत् सीमापिकमधिकरणमित्याह — सान्नीति। अर्थादाह— यस्तेनेति,—राज्ञत्यर्थः। प्रत्यहमिति शेषः। मूले निस्रव इत्यस्य नितान्तं स्रव इति नार्थः। तस्मादित्यस्यानन्वयापत्तेराह—निरिति। वणिगिच्छाकल्पितार्घादवशेष इत्यर्थः। मनुविरोधपरिहारं स्पष्टत्वाद्रूवानुसंदधान आह — मनुनेति। च-स्त्वर्थे। पंचेति — तथेत्यनेनान्यत्राप्युभयत्र वीप्सा सूचिता। तथा चास्थिरार्घानां पंचसु दिनेषु गतेषु किंचित् स्थिरार्घाणां पक्षे गते स्थिरार्घाणां मासेगते सति, राजा आप्तपुरुषैरेषां सर्वविदां वणिजां प्रत्यक्षं स्वसमक्षमित्यादि तद्व्याख्यातारः। एषां पूर्वोक्तानां सति राजा आप्तपुरुषैरेषां सर्वविदां वणिजां प्रत्यक्षं स्वसमक्षं कुर्यादित्यर्थः इत्यन्ये। "तुलामानं प्रतीमानं सर्वं च स्यात् स्वलक्षितम्। षट्सु षट्सु च च मासेषु पुनरेव परीक्षयेत्॥" इत्यपि तेनोक्तम्। "पक्षे पक्षेऽथवागते" इति पाठान्तरं व्याख्याकृदादिसंमतं। अत्र वीप्साषोडशसु दिनेषु मासे वा गते इति नार्थः; किन्तु पंचदिनान्तरं पक्षान्तरमित्यव। वीप्सा तु अवश्यकर्तृतया यावज्जीवं कर्तव्यतया च नित्यतां बोधयति। वसन्ते वसन्तज्योतिषा इति भावः॥ २५१ ॥

---

१. ख. ज. झ. निःसवो विशेषस्तस्मा०। २. —८.४०१.। ३. थ. द. ०तिष्टोमे।

किं च—

**स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ।**
**दशकं पारदेश्ये तु यः सद्यःक्रयविक्रयी ॥ २५२ ॥**

स्वदेशप्राप्तं पण्यं गृहीत्वा यो विक्रीणीते असौ पञ्चकं शतं पणशते पणपञ्चकं लाभं गृह्णीयात् । परदेशात्प्राप्ते पुनः पण्ये शतपणमूल्ये दश पणाल्लाभं[1] गृह्णीयात् यस्य पण्यस्य ग्रहणदिवस एव विक्रयः संपद्यते । यः पुनः कालान्तरे[2] विक्रीणीते तस्य कालोत्कर्षवशाल्लाभोत्कर्षः कल्प्यः । एवं च यथार्घे निरूपिते पणशते पञ्चपणो लाभो भवति तथैवार्घो राज्ञा स्वदेशपण्यविषये स्थापनीयः ॥ २५२ ॥

लाभकल्पना तु वणिग्भिः यदृच्छयैव नेत्युच्यते। कथं तर्हि?—**स्वदेशपण्ये तु शतमित्यादि ॥ २५२**

**यो यस्य पण्यस्य सद्यः क्रयविक्रयी सद्यः तस्य दशकं पञ्चकं वा गृह्णीयादित्यर्थः ॥ २५२ ॥**

## सुबोधिनी

**राज्ञार्घो निरूपणीयः । वणिग्भिरपि स्वदेशप्राप्ते पण्ये पणशते[3] पञ्चपणा लाभः परदेशप्राप्ते तु दशपणलाभो ग्राह्य इत्युक्तम् । एवं स्थिते राज्ञा केन प्रकारेणार्घः स्थापनीय इति विवक्षायामुपरितनवचने परदेशप्राप्तपण्येऽर्घस्थापनस्य वक्ष्यमाणत्वात् तन्न्यायेनार्थसिद्धमर्घनिरूपणप्रकारं स्वदेशप्राप्तपण्ये दर्शयति—**एवं च यथार्घ इति ॥ २५२ ॥

## बालंभट्टी

**पूर्वोत्तरयोराजधर्म इत्यनेन मध्यमस्य असंबन्द्धत्वादप्रमाण्यनिरासायाऽऽह—**किंचेति,—**अर्थकरणे विशेषान्तरमाहेत्यर्थः। प्रति इति शेषः। तत्फलितमाह—**प्राप्ते इति,—**परदेशात् प्राप्ते पण्ये त्वित्यर्थः।** शतेति—**त्रिपदो बहुव्रीहिः।तुर्यपादोक्तमुभयोः शेष इत्याह—**यस्येति,—**वणिज इत्यर्थः । एतेन** य इति **व्याख्यातम्। क्रयेत्यत्र द्वन्द्वान्मत्वर्थे इनिरित्याह—**यथेति। **सद्यः पदार्थो—**दिवेति। **एतत्फलितं वक्ष्यमाणक्रयीत्याऽऽह—**यः पुनरिति। **नन्वत्र वणिग्धर्मस्योक्तत्वेन राजानं प्रत्यनुक्तत्वात् ,** किंचेति **संगतेर्मध्येऽसंबद्धत्वापत्तिश्च। अत आह—**एवं चेति,—**उक्तार्थस्य शब्दत्वे चेत्यर्थः । यथायादर्शैः** नीय इति।**फलितमिति शेषः;अन्यथा परदेशविषये वक्ष्यमाणत्वे नात्रानुक्तौ न्यूनतेति भावः ॥२५२ ॥**

१. ज. दशपणं लाभ० । २. झ. कालान्तरे तु क्रीणी० । ३. त. 'पणशते... स्वदेशप्राप्तपण्ये' इति' न ।

पारदेश्यपण्येऽर्घनिरूपणप्रकारमाह—

**पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।**
**अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च ॥ २५३ ॥**

देशान्तरादागते पण्ये देशान्तरागमनप्रत्यागमनभाण्डग्रहणशुल्कादिस्थानेषु यावानुपयुक्तोऽर्थस्तावन्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा यथा पणशते 5 दशपणो लाभः संपद्यते तथा क्रेतृविक्रेत्रोरनुग्रहकार्यर्घो राज्ञा स्थापनीयः॥ २५३ ॥

॥ इति साहसे प्रासङ्गिकप्रकरणम् ॥

राज्ञा तु किं यदृच्छयैवार्घस्थाप्यः? नेत्याह-**पण्यस्योपरि संस्थाप्येत्यादि॥२५३॥**

## सुबोधिनी

पण्यस्योपरि संस्थाप्येति—नन्वत्र सामान्येनार्घनिरूपणप्रकारस्य प्रतीयमानत्वात् पारदेश्यपण्यार्घनिरूपणपरत्वकथनमनुपपन्नमिति चेन्नैवम् । "व्ययं पण्यसमुद्भवम्" इति हेतूपादानात्तत्परत्वं प्रतीयते । अयमाभिप्रायः—परदेशादानीयमानस्यैव द्रव्यस्य व्ययसम्भवात् तत्परत्वमिति सूक्तम् ॥ २५३ ॥ इति निर्णेजकादि दण्डविधानं नाम प्रासङ्गिकप्रकरणम् ॥

## बालंभट्टी

तदेवाऽऽह—पारदेश्येति। यद्यप्यत्र सामान्यार्घ्यनिरूपणप्रकारः प्रतीयते इतीदमवतरणमयुक्तं, तथाऽपि "व्ययं पण्यसमुद्भवम्" इत्युक्तेः पारदेश्यं तादित्याह—देशान्तरादित्यादिना। भाण्डेति—तदुपयोगिपात्रादिग्रहणेत्यर्थः । व्ययं पण्यस्योपरीत्यस्यार्थमाह—पण्यमूल्येनेति। प्रागुक्तैकवाक्यतया आह—यथेति । अनुग्रहकृदीत्यस्यार्थमाह—अनुग्रहकार्यर्घ इति । कार्य इत्यस्यार्थं स्थापनीयः इति। मनुरपि—"आगमं निर्गमस्थानं तथा वृद्धिक्षयावुभौ। विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ।" इति ॥ २५३ ॥ इति प्रासङ्गिकप्रकरणम् ॥

---

झ. ०णे प्रका । २. क. ०ग्रहणसमुद्भवं शु । ३. त. एतदादि 'पण्यार्घनिरूपण' इत्यन्तं नास्ति । ४. त. त्वमनु । ५.—८. ४०१. ।

# अथ विक्रीयासंप्रदानप्रकरणम् २१

प्रासङ्गिकं परिसमाप्याधुना विक्रीयासंप्रदानं प्रक्रमते । तत्स्वरूपं च नारदेनाभिहितम्—"विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते । विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥" इति[१] । तत्र विक्रेयद्रव्यस्य चराचरभेदेन द्वैविध्यमभिधाय पुनः षड्विधत्वं तेनैव प्रत्यपादि—"लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा । षड्विध-[२]
5 स्तस्य तु बुधैर्दानादानविधिः स्मृतः[३] ॥ गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ।" इति[३] ।
गणिमं क्रमुकफलादि ; तुलिमं कनककस्तूरीकुङ्कुमादि ; मेयं शाल्यादि ; क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि[४] ; रूपतः पण्याङ्गनादि; श्रिया दीप्त्या मरकतपद्मरागादीति ॥

---

## सुबोधिनी

अथ विक्रीयासंप्रदानप्रकरणम् ॥ चराचरभेदेनेति — चरं जङ्गमम् अचरं स्थावरम् । षड्विधं[५] इति—तस्य पण्यस्य[६] । बुधैः मन्वादिभिः । दानस्यादानस्य च विधिः क्रमो विधानक्रमः करणप्रकारः षड्विधः कथित इत्यस्यार्थः । रूपत इत्यत्र सार्वविभक्तिकस्तसिः । अतश्च रूपेणेति तृतीयार्थे । सापितृतीयोपलक्षणार्थेत्यनेनैवाभिप्रायेणोऽऽह[८]— रूपतः पण्याङ्गनादिति ।

## बालंभट्टी

संगतिमाह—प्रासङ्गिकमिति । विक्रयप्रसङ्गादाह—अधुनेति । मूल्येन तस्य ग्रहणेन । क्रेतुरिति—संबंधे षष्ठी। एवमग्रेऽपि तत्र प्रारभ्यमाणे विवादपदे घटकत्वं सप्तम्यर्थम्। चराचरेति—जङ्गमस्थावरेत्यर्थः । पुनरिति—द्विविधस्य तस्येत्यर्थः । तेनैव—नारदेनैव। तस्य त्विति—तस्य द्विविधस्य पण्यस्य। बुधैः—मन्वादिभिः। दानादानयोर्विधिक्रमः विधानक्रमः करणप्रकारः । यथासंभवं षड्विधः कथित इत्यर्थः । कल्पतरौ तु "लोकेस्मिन् द्विविध पण्यं जङ्गमं स्थावरं तथा । क्रयविक्रयधर्मे तु सर्वं तत्पण्यमुच्यते ॥ षड्विधस्तस्य तु बुधैः दानादानविधिः स्मृतः ॥" इति पाठः । तदेवाऽऽह—गणितमिति । संज्ञाशब्दा एते रूपत इति तृतीयान्तात्तसिः । कर्पूरेति—कुङ्कुमादीति पाठान्तरम् । अनन्वयनिरासायाऽऽह—उपेति । एवमग्रेऽपि उभयत्र । पण्याङ्गना वेश्या । आदिना वस्त्रादि उक्तम् ।

---

१.—८. १. । २. क. ख. झ. क्रमः । गणितं तुलितं मेयं । ग. गणिकं तुलिमं मेय । ख. गणितं तुलितं मेयं । ३.—८. २, ३. । ४. क. दिकयोप० । ५. थ. द. धस्तस्य तु बुधैः । ६. त. धनस्य । ७. त. तः स्वरू । ८. थ. द. त्यनेनाभि ।

एतत्षट्प्रकार[1]मपि पण्य विक्रीयासंप्रयच्छतो दण्डमाह—

**गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।**
**सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ २५४ ॥**

गृहीतं मूल्यं यस्य पण्यस्य विक्रेता तद्गृहीतमूल्यं, तद्यदि विक्रेता प्रार्थयमा-

आयविक्रयप्रसंगाद्विक्रयासंप्रदानमिदानीमाह—

**गृहीतमौल्यं यत्पण्यं क्रेतुर्नैवमित्यादि ॥ २५४ ॥**

## सुबोधिनी

अधुना मूलवचनमवतारयति—इत्येतदिति । "सोदयं तस्य दाप्यः" इत्यत्रो-दयश्चतुर्धा सम्भवति । तद्यथा — विक्रयकालापेक्षया कालान्तरे समर्घत्वे[2] साम्ये महार्घत्वे च समर्घत्वे तावत् पञ्चभिः पणैः पण्ये क्रीते कालान्तरे चतुर्भिर्लभ्ये सति समर्घत्वेन पण्यस्योदयः । तदा चतुर्भिरेव पणैः पण्यं क्रेत्रे दाप्यमित्येक उदयो वृद्धिः । एतादृशि स्थले लौकिका: समर्घं पण्यमित्याचक्षते । क्रयकालापेक्षयाऽ-र्घस्य कालान्तरे साम्ये तु द्वेधा उदयः—यस्मिन्नगरादौ हट्टादिप्रदेशेषु पण्यं क्रीत्वा क्रयस्थानादन्य[3]गृहादिषु विक्रीणीते[4] तस्य कश्चन लाभ उदयः । यद्वा[5] येन द्रव्येण पण्यं गृहीतं तस्मिन्नेव द्रव्ये उद्धारत्वेन दीयमाने "अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुः पञ्चकम[6]न्यथा॥" इत्यनेन प्रकारेण या काल[7]वृद्धिः सोऽन्य उदयः । महार्घत्वे त्वेकः—पञ्चभिः पणैः क्रीते कालान्तरे षड्भिर्दशभिर्वा लभ्ये सति तदा वस्त्रगृहप्रभृतिषु परिधाने स्थित्यादिरूपो य उपभोग स उपभोगात्मक एव लाभोऽपर उदय इति । एतदुक्तं भवति —समर्घत्वे वस्तुनः समर्घतैवैक उदय इत्याद्यः पक्षः । अर्घस्य साम्ये एकस्मिन्नेव वा देशे क्रयस्थानादन्यत्र विक्रीते यो लाभः स द्वितियः । पण्यमूल्य-द्रव्ये ऋणत्वेन दत्ते मासि मासि या वृद्धिः स तृतीयः । महार्घत्वे वस्तूनामुपभोग एव चतुर्थ इति । एतेषु चतुर्ष्वपि पक्षेषु क्रेतुरिच्छया सोदयं पण्यं दाप्यो मूल्यं गृ-

## बालंभट्टी

सङ्गत्या मूलमवतारयति—एतदिति।तस्य तत्त्वेन विवक्षाया षष्ठी। तच्चेत्याह—क्रेत्रे

---

१. ख. एकम० । २. त. 'समर्घत्वे...म्ये सति नास्ति । द. समर्घत्वे तावत् । ३. थ. द न्यत्र गृ । ४. थ. द. णानस्य यः कश्चनलाभः स एक उदयः । ५. थ. द. अथ वा । ६. व्य० ३७. । ७. त. कलावृ । ८. थ. 'मन्यथे...चेदित्यनेन पक्षा' नास्ति ।

नाय स्वदेशवाणिजे क्रेत्रे न समर्पयति, तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरेऽल्पमूल्येनैव लभ्यते, तदाऽर्घह्रासकृतो य उदयो वृद्धिः पण्यस्य स्थावरजङ्गमात्मकस्य तेन सहितं पण्यं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति, किं तु क्रयकाले यावदेवेयतो[1] मूल्यस्येयत्पण्यमिति प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादिप्रतिपादितवृद्धिरूपोदयेन वा सहितं क्रेतृवाञ्छावशाद्दापनीयः[2]; यथा[3]ऽऽह नारदः—"अर्घश्चेदवहीयेत सोदयं पण्यमावहेत्[4]। स्थानिनामेष नियमो दिग्लाभं दिग्विचारिणाम्॥" इति। यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा तस्मिन्पण्ये वस्त्रगृहादिके य उपभोगस्तदाच्छादनसुखनिवासादिरूपो विक्रेतुस्तत्सहितं पण्यमसौ

सुबोधिनी

हीत्वा प्रयच्छन्[5] विक्रेतेत्यभिधास्यन् प्रथमं पक्षं तावदाह—तच्चेति[6]। अयमर्थः—पञ्चभिः पणैर्विक्रीय मूल्यमपि गृहीत्वा क्रेतरि प्रार्थयमानेऽपि तं पण्यं यदि विक्रेता न ददाति कालान्तरे चतुर्भिर्लभ्यते एकेन वा, तदा कालान्तरमूल्येनैतस्मै क्रेत्रे दत्त्वाऽवशिष्टं पूर्वगृहीतं मूल्यमपि विक्रेत्रा देयमिति। द्वितीयं पक्षमाह—यदेति[7]। एतदुक्तं स्यात्—स्वक्रयकाले कालान्तरे चार्घस्यैकरूपत्वे हट्टादिस्थानेषु क्रीत्वा गृहादिषु विक्रीणानस्य यो लाभस्तत्सहितं पण्यं देयमिति। तृतीयं पक्षमाह—द्विकमिति[8]। अर्घस्य ह्रासे साम्ये च सोदयं पण्यं दापयेदित्युक्तम्। तत्र पक्षद्वयेऽपि नारदवचनं प्रमाणयति—अर्घश्चेदिति। चेदित्यनेन पक्षान्तरं द्योत्यते यदार्घोऽवहीयेत अर्घह्रासः पण्यस्य समर्घता भवति तदा सोदयं[10] समर्घमूल्येन पण्यं दद्यात्। चेद् अर्घो नावहीयते साम्यमेवार्घस्य, तदाऽपि सोदयं दद्यात्। अत्र सोदयदानं[11] पूर्वोक्तं द्रष्टव्यम्। एष नियमः स्थानिनां स्वदेशस्थितानामेव। दिग्विचारिणां दिग्लाभं वक्ष्यमाणप्रकारं दद्यादिति। तुर्यं[12] पक्षमाह—यदा त्वर्घमहत्त्वेनेति।

वालंभट्टी

क्रेत्रे इति। तस्यैव अन्यथा अर्थमाह—यदेति। यावदित्यस्य प्रतीत्रान्वयः। यतः यस्य प्रतीति निश्चितमित्यर्थः। तावदेवेति—अस्तीति शेषः। किन्त्वित्यस्यात्रान्वयः। यत्रैवपक्षे उदयांशे। पक्षान्तरमाह—द्विकमिति। अनयोर्व्यवस्थामाह—क्रेतृ वाञ्छेति आवहेद्दद्यात्। अत्रावहानिरुक्तस्याप्युपलक्षणम्। स्थानिनां स्वदेशमात्रस्थितिकानां वणिजाम्। अत इतीनिः। स्थापितानामितीति कल्पतरौ पाठः। विशेषमाह—यदा त्विति। उपयोग-

१. ख. ग. ज. देव य। २. ख. क्रेतुः वा। ३. तथा। ४. क. पण्यमाहियेत्। ५. ८. ५.। ५. त. त्वानिच्छत्। ६. द तच्च पण्यं (च ही ?) यदीत्या। ७. द. यदा मूल्यह्रास कृत इति। ८. द. भवति। ९. द. कं त्रिकमित्यादीति। १०. त. 'समर्घ—सोदयं' नास्ति। ११. त. यज्ञानं। थ. द. चतुर्थं प।

दाप्यः; यथा[1]ऽऽह नारदः—"विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम्॥" इति विक्रेतुरुपभोगः क्षय उच्यते—क्रेतृसंबन्धित्वेन क्षीयमाणत्वात्, न पुनः कुडयपातसस्यघातादिरूपः—तस्य तु "उपहन्येत वा पण्यं दह्येतापह्रियेत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः॥" इत्यत्रो क्तत्वात् । यदा त्वसौ क्रेता देशान्तरात्पण्यग्रहणार्थमागतः तदा तत्पण्यमादाय 5

## सुबोधिनी

अयमभिप्रायः— विक्रयकाले पञ्चभिः पणैर्लभ्यं पण्यं कालान्तरे षड्भिर्दशभिर्वा लभ्यं स्यात्, तदा विक्रयकालमूल्येनैव क्रेत्रे दापयित्वा विक्रयकालादारभ्यदानकालमध्ये योऽयमुपभोगस्तन्मूल्यमपि दापयेत्। न तु साक्षादुपभोगदानं तस्य सर्ववस्तुषु दातुमशक्यत्वाद् इति। जङ्गमस्येति—जङ्गमस्य दास्यादेः क्रियाफलं शुश्रूषादिफलमित्यर्थः। नारदवचनस्थ क्षयशब्दार्थमाह—विक्रेतुरिति । तत्र हेतुः क्रेतृसम्बन्धित्वेनेति विक्रीयासंप्रयच्छत इत्यत्रोक्तत्वादिति । अत्रास्मिन् वचने नारदेन कुड्यावपातने विक्रेतुर्हानिरित्युक्तत्वेन पुनरपि क्षयं दाप्य इत्यत्राभिधीयमाने पौनरुक्त्यं स्यादित्यर्थः । "दिग्लाभं वा दिगागते" इत्यमुं मूलवचनांशं व्याचष्टे— यदा त्वसाविति ।

## बालभट्टी

स्वरूपमाह—तदयाच्छेति। मूल्येन—न तद्ग्रहणेन। स्थावरस्य—ग्रामक्षेत्रादेः। जङ्गमस्य गवादेः। क्रियाफलं दोहादेः क्षीरादिकम् यन्मूल्यं सस्याद्युपघातनोपक्षयमिति कल्पतर्वादयः।तत्र पौनरुक्त्यापत्तेः इत्याह—विक्रेतुरिति । ननु तस्य तत्त्वम् विरुद्धमत आह—क्रेत्रेति । तावत्पर्यन्तं तत्संबन्धस्य तत्र क्षीणत्वात्तद्वैशिष्ट्येण तस्यापि क्षीणत्वमिति भावः। क्षय इत्यत्र कर्मण्यच्। नारदमाह—उपेति । इत्यत्रेति— इत्यनेनेति पाठान्तरम्। वस्तु तस्तु क्षिनिवासगत्योरित्युक्तेः क्षयो निवास इत्युक्तैश्च अयं निवासार्थक इति न कोऽपि क्लेश इति बोध्यम्। तुर्यपादं व्याचष्टे-यदा त्विति।तत्रोभयत्र सप्तमीपञ्चमीसमासादित्याह—देशान्तेति । मूले वाचार्थः पण्यसमुच्चयः। तत्फलितमाह—तेनैति । वक्ष्यमाणेन

१. क. तथाऽऽह । २.—८. ४. । ३. 'द्रव्यं' इति क्वचित्। ४. क. पक्रियेतवा। ५. —८. ६.। ६. स्य क्रियाफलमिति। ७. त. रदोक्तक्षय। ८. थ द. तु रुपभोग इति। ९. त. नपुनरिति। अस्तिन् वचने। १० त. बनूक्तमिति०।

देशान्तरे विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः। अयं च क्रीतपण्यसमर्पणनियमोऽनुशयाभावे द्रष्टव्यः। सति त्वनुशये "क्रीत्वा विक्रीय वा किञ्चिद्" इत्यादि मनूक्तं वेदितव्यम् ॥ २५४ ॥

किं च—

5 **विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति।**
**हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ २५५ ॥**

यदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति तदा विक्रीतमपि पण्यमन्यत्र विक्रेयम्। यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति, तच्च पण्यं राजदैविकेनोपहतं, तदा क्रेतुरेवासौ हानिर्भवेत्— पण्याग्रहणरूपेण क्रेतृदोषेण नाशि-
10 तत्वात् ॥ २५५ ॥

**विक्रीतमपीत्यादि ॥ २५५ ॥**

° **यदि तत्रान्यथा मूल्यं क्रेता च पण्यं न गृहीयात् तदा क्रेतुरेव दोषः। अन्यथा तु विक्रेतुरेवेत्याभिप्रायः ॥ २५५ ॥**

सुबोधिनी

अनुशयाभाव इति–अनुशयो नामानुचितमूल्येन विक्रीयम्।इत्यादि मनूक्तं वेदितव्यमिति– "यस्येहानुशयो भवेत्।सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत वै॥"इति श्लोकशेषः॥२५४॥

तत्क्रेतुरेवासौ हानिरिति—तस्य पण्यस्य क्रेतुरित्यर्थः ॥ २५५ ॥

बालंभट्टी

अवान्तरप्रकरणसङ्गत्यर्थमाह – अयञ्चेति। क्रीतस्य समर्पणेत्यर्थः। मनूक्तमिति क्रयविक्रयानुशयाख्यविवादप्रकरणे इति भावः। एवञ्च मनुना तेनैवास्य कथितप्रायत्वादिदंपृथङ्नोक्तमिति बोध्यम्। "तस्येहानुशयो भवेत्। सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीतवा ॥" इति तच्छेषः ॥ २५४ ॥

अत एवानुशयोऽन्यदप्युच्यते इत्याह—किं चेति। तदेवाऽऽह—जातेति। पूर्वेत्युभयान्वयि। तत्राद्ये धातोः तदिच्छाषालक्षणेत्याह—जिघृक्षेति। अज्ञातानुशयेनाऽऽह——यदा पुनरिति। आलस्यादिरग्रहणे हेतुरत्र न क्षणेति भावः ॥ २५५ ॥

---

१—८. २२२.। २. त तुरिति।

अपि च—

राजदैवोपघतेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ २५६ ॥

यदा पुनः केत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति, अजातानुशयोऽपि, तच्च राजदैविकेनोपहतं भवति—तदाऽसौ हानिर्विक्रेतुरेव । अतोऽन्यददुष्टं 5 पण्यं विनष्टसदृशं केत्रे देयम् ॥ २५६ ॥

किं च—

अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि ।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥ ´५७ ॥

यः पुनर्विनैर्वानुशयमेकस्य हस्ते विक्रीतं पुनरन्यस्य हस्ते विक्रीणीते सदोषं वा 10

गृहीतमूल्ये तु राजदैवोपघातेनेत्यादि ॥ २५६ ॥

'ममेह पण्यमर्पय' इत्येवं याचितस्याप्यनर्पयत्येवं याचितस्याप्यनर्पयतो यस्तस्यापजयः स विक्रेतुरेवेत्युक्तम् । यदि तु राजदैविकाद्वा पर्जन्यादिदोषात् पण्यं दोषवत्स्यात् तत्र या मूल्यहानिः साविक्रेतुरेवेत्यवसेयम् ॥ २५६ ॥

क्रेत्रा भूत्संकलितमेव हि--अन्यहस्ते तु विक्रीतमित्यादि ॥ २५७ ॥

---

सुबोधिनी

विक्रेतुरेवासावित्यत्रैवकारद्योत्यमाह— अतोऽन्यददुष्टमिति ॥ २५६ ॥

बालंभट्टी

अपि चेति—प्रागवत् । एवमग्रेऽपि। अपिनाजातानुशयसमुच्चयः । राजदैवे इदम् अर्थेन इति फलितमाह—राजतेति । तात्पर्यार्थमाह—अत इति ॥ २५६ ॥

---

१. क.पुनर्विदितानु । २. थ. द. त्यमर्थमा ।

पण्यं प्रच्छादितदोषं विक्रीणीते तदा तत्पण्यमूल्याद्द्विगुणो दमो वेदितव्यः । नारदे-
नाप्यत्र विशेषो दर्शितः—" अन्यहस्ते च विक्रीय योऽन्यस्मै तत्प्रयच्छति । द्रव्यं
तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥ निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।
स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु ॥" इति सर्वश्चायं विधिर्दत्तमूल्ये पण्ये
5 द्रष्टव्यः । अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये क्रेतृविक्रेत्रोर्नियमकारिणः समयादृते
प्रवृत्तौ निवृत्तौ वा न कश्चिद्दोषः ; यथाऽऽह नारदः—"दत्तमूल्यस्य पण्यस्य विधि-
रेष प्रकीर्तितः। अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः॥" इति ॥ २५७ ॥

---

यस्त्वन्यत्र क्रेत्रा तु सङ्कलितमेव विक्रीतमपि पुनर्विक्रीणीयात् अदुष्टमिति वा कृत्वा दुष्टमपि तस्य द्रव्यं मूल्याद्द्विगुणो दण्ड. । क्रेतुश्च मूल्यं द्रव्यं वा प्रत्यर्पणीयम् । स्पष्ट-मन्यत् ॥ २५७ ॥

## सुबोधिनी

"प्रासङ्गिकं समाप्य" इत्यादिनाऽभिहितस्य दण्डादिविधानस्य विषयं दर्शयति—सर्वश्चेति । अस्यार्थः—यस्य पण्यस्य यावन्मूल्यमुभयसम्प्रतिपन्नं तावद्गृहीत्वा विक्रेता यत्र पण्यं क्रेत्रे न ददाति तद्विषयमित्यर्थः । नियमेति—मूल्यमदत्वाऽपि यदैतत्पण्यस्य मूल्यद्रव्यं त्वदीयं, पण्यं तु मदीयमिति योऽयं नियमः स समयः । तेन विना विक्रयादौ प्रवृत्तौ सत्यां निवृत्तौ वा न दोष इत्यर्थः ॥ २५७ ॥

## बालंभट्टी

अदुष्टवदिति तत्त्वम् । तस्यार्थमाह—प्रच्छेति । तदेति—तत्रेति । शेषो मौल एव। विक्रेतरीति तदर्थः। अत्र—उक्तविषये; अपिः भिन्नक्रमः; विशेषोऽपीत्यर्थः। अपिना उक्तसमुच्चयः। मूले मूल्यांशे न्यूनाधिके च भावानुक्तत्वे न समताप्राप्तौ तत्र द्वैगुण्यरूपो विशेषः । दण्डांशे द्वैगुण्यं तु तुल्यमेवेति भावः । यद्वा यथाश्रुत एव अपिः, अन्यमुनि समुच्चायकः । विनय : दण्डम्। तावत्—अव्ययमिदम्। तावन्तमेव द्विगुणमेव। विशेषमा-ह—सर्वत्रेति । न त्वव्यवहितोक्त एवेति भावः। अयं विधिस्सकल दण्डविधिः । अदत्ते पण्ये ॥ २५७ ॥

१. क. विनयस्ता व० । २.—८. ८. । ३. क. वाङ्मात्रका ये क्रेतृ० । ४.—१०. ५. थ. श्चायं विधिरिति । ६. थ. द. 'यमकारिणः समयादृते इति । ७. थ. द. र्थः । न विक्रेतु-रविक्रयः ।

विक्रयानुशयोऽभिहितः, क्रीतानुशयस्वरूपं तु प्राक् प्रपञ्चितम्; अधुना तदुभयसाधारण धर्ममाह—

क्षयं वाद्धिं च वणिजा[1] पण्यानामविजानता।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥ २५८॥

परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाणतोऽर्घकृतां वृद्धिमपश्यता क्रेत्राऽनुशयो न कार्यः, विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम्। वृद्धिक्षयपरिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो भवतीति व्यतिरेकादुक्तं भवति। अनुशयकालावधिस्तु नारदेनोक्तः—"क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं

---

इदानीं क्रयविक्रयस्यानुशयस्य विषयं प्रदर्शयति—क्षयं वृद्धिं च वणिजेत्यादि ॥ २५८ ॥

चन्द्रगत्यादिवशेन पण्यानामर्घहानिर्वृद्धिर्वा भवति। तच्चैवं विजानता वणिजा क्षयं

## सुबोधिनी

विक्रयेति[2]—"गृहीतमूल्यम्[3]" इत्यादिना "अन्यहस्ते तु विक्रीतम्" इत्यन्तेन ग्रन्थजातेनाभिहितमित्यर्थः। क्रीतेति—दत्ताप्रदानिकप्रकरणानन्तरं पूर्वं प्रपञ्चितमित्यवगन्तव्यम्। परीक्षित[5] क्रीतपण्यानामित्यादि—अयमाशयः,—अदुष्टं पण्यं चतुर्भिः पणैः क्रीत्वा

## बालंभट्टी

अवान्तरप्रकरणसमाप्तिमाह—इति विक्रयेति। न्यूनतां पौनरुक्त्यं च परिहरति—क्रीतेति,—क्रयेत्यर्थः। भावे क्तः। परोक्षाभावेऽनुशये दोषाभावादाह—परीति। कर्मधारयो क्रीत्वेत्यार्थः। क्रयोत्तरेति— परिमाणमर्थान्मूल्यत्वविशेषणेन व्यावर्तितमाबोधितमर्थमाह—वृद्धिनिषेधस्य शब्दत्वेन तदसंभवादाह—व्यतीति। पदात् इत्यर्थः। पूर्वमुक्तमपि पुनराभिप्रायं वक्तुमाह— अनुशयेति। च त्वर्थे। क्रीत्वेति—व्याख्यातमिदम्

---

१. क ज. वणिजां। २. थ. द इदं प्रतीकं नास्ति। ३. थ. द. ल्यं यः पण्यमि। ४. थ. द. तानुशयस्वरूपमिति। ५. त. परीक्षितेत्यादि।

मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् । द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्॥" इति ॥ अपरीक्षितक्रयविक्रये पुनः पण्यवैगुण्यनिबन्धनानुशयावधिः "दशैकपञ्चसप्ताह" इत्यादिना दर्शित एव । तदनया वाचोयुक्त्या वृद्धिक्षयपरिज्ञानस्यानुशयकारणत्वमवगतम्यते, 5 तथा पण्यपरीक्षाविधिबलात्पण्यदोषाणामनुशयकारणत्वम् । अतः पण्यदोषतद्वृद्धिक्षयकारणत्रितयाभावेऽनुशयकालाभ्यन्तरेऽपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डनीयः । अनुशयकारणसद्भावेऽप्यनुशयकालातिक्रमेणानुशयं कुर्वतोऽप्ययमेव दण्डः । उपभोगेनाविनश्वरेषु स्थिरार्घेष्वनुशयकालाक्रमेणानुशयं कुर्वतो मनूक्तो

## सुबोधिनी

शास्त्रोक्तानुशयकालमध्ये पणत्रयादिरूपार्घवृद्धिमज्ञात्वा क्रेत्रा नानुशयः कार्यः तथा विक्रेत्राऽपि पण्यपञ्चकादिरूपमर्घह्रासमजानता नानुशयः कार्य इति। पण्यवैगुण्यनिबन्धनेति—पण्यगतदोषनिबन्धनेत्यर्थः। इत्यादिनेति— क्रीतानुशयप्रकरण एव दर्शितोऽवधिरित्यर्थः । क्रयकालार्घपरिमाणापेक्षयाऽर्घस्य वृद्धिक्षयपरिज्ञानेऽनुशयः कार्यः, अपरिज्ञाने तु नेत्यन्वयव्यतिरेकावभिहितौ । ताभ्यां सिद्धमर्थं निष्कृष्य दर्शयति—तदनया वेति । दृष्टान्तव्याजेनानुशये हेत्वन्तरमपि दर्शयति—यथा पण्ये परीक्षेति—"क्रेता पण्यं परीक्षेत"इति परीक्षावि-

## बालंभट्टी

प्राग्विरोधपरिहारमपि प्रागुक्तमेव । तथाऽऽह—अपरीति;— अपरीक्षितवस्तुक्रयेत्यर्थः । दशकेति –इदमानवमम् । उक्तफलितार्थमुपसंहरति—तदिति,–तस्मादित्यर्थः। अनया–क्षयं वृद्धीति विशेषघटितयेत्यर्थ.। अभिप्रायमेव प्रकाशयति—यथेति । दोषाणामिति—अनुशयकारणत्वमवगम्यते इत्यस्यानुषङ्गः । तुर्यपादार्थमाह —त इति । ते यातस्य च तत्कारणत्वादित्यर्थः । तन्मूल्यक्षयेति एतद्रूपकारणत्रितयस्यर्थः। कालेति—नारदोक्तानुशयकालादिमध्येऽपीत्यर्थः । पूर्वसाम्यप्रदर्शन साफल्याय तुल्ययुक्त्याऽऽह— अनुशयेति । एतत्प्रसङ्गेन विशेषमाह—उपेति । अनेन पण्यदोषाभावस्सूचितः । स्थिर इत्यनेन

१.—९. २ —३. । २. क. ग. छ. ज. यथा । ३.—छ. णाम् । अतः । ४. ल. पण्येति। ५. थ. द त्यादिना दर्शित एवेति । ६. थ. द. या वाचोयुक्तया ।

दण्डो द्रष्टव्यः—"परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्॥" इति ॥ २५८ ॥

॥ इति विक्रीयासंप्रदानं नाम प्रकरणम् ॥

वृद्धिं वा निरूप्य विरोधे सति क्रीत्वा विक्रीय वाऽननुशयः कार्यः। कुर्वतो वा पण्यमूल्यषड्भागो राजदण्डः। स्पष्टमन्यत् ॥ २५८ ॥

## सुबोधिनी

धिवशात् परीक्षायां क्रियमाणायां यदि दोषाः स्युस्तदाऽनुशयो भवतीति दोषाणामप्यनुशयकरणत्वमस्तीत्यर्थः ॥ २५८ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां विक्रीयासम्प्रदानं नाम प्रकरणम् ॥

## बालंभट्टी

वृद्धिक्षयाभावस्सूचितः । परेणेति—क्रीत्वाविक्रीयेत्यग्रिमोऽयं ; क्रीतमिति शेषः। न दद्यात् न त्यजेत् न दापयेत् । विक्रेता बलेन न ग्राहयेत् । विक्रीत बलेन गृह्णन् परीत्यर्थः ॥ २५८ ॥

---

१.—८. २२३.।

# अथ संभूय समुत्थानप्रकरणम् २२

सभूय समुत्थानं नाम विवादपदमिदानीमभिधत्ते[1]—

**समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।**
**लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥ २५९ ॥**

'सर्वे वयमिदं कर्म मिलिताः कुर्मः' इत्येवंरूपा संप्रतिपत्तिः समवायः तेनये
5 वणिङ्नटनर्तकप्रभृतयो लाभलिप्सवः प्रातिस्विकं कर्म कुर्वते तेषां लाभालाभावुपच-

वाणिज्यप्रसङ्गात् संभूयोत्थानमाह—**समवायेन वणिजामित्यादि ॥२५९॥**
सर्वैं समवायीकृत्य तथा द्रव्यं विभागः कार्यः—लाभस्य मूल्यानुसारित्वात् ।

## सुबोधिनी

वणिजामिति मूलस्थपदमन्येषामप्युपलक्षकम्[3] । अतो[4] नटादयोऽपि गृह्यन्ते इत्यनेनाभिप्रा॰
येणाऽऽह—ये वणिङ्नटनर्तकप्रभृतय इति । अयमर्थः—पञ्चभिर्मिलित्वा[2] वाणिज्यमन्यद्वा
कर्म यदा क्रियते तत्रैकेन वणिजा पञ्चनिष्का अपरेण दश अन्येन पञ्चदशेत्येवं प्रत्येकं द्रव्यं दत्वा
परिभाषाक्रमेणाहमहमिकया तस्मिन् कर्मणि क्रियमाणे मूलभूतद्रव्यस्य त्रिंशन्निष्कात्मकस्य
लाभवशात् षट्त्रिंशन्निष्कत्वे यस्य पञ्चमूलं सषण्निष्करूपाल्लाभादेकं निष्कं यस्य तु दश
मूलं[6] स निष्कद्वयं यस्य पुनः पञ्चदशमूलं स निष्कत्रयमित्येवं स्वस्वद्रव्य[7]मूलानुसारेण
गृह्णीयात् । एवं मूलद्रव्यादपचयेऽपचयो द्रष्टव्य इति । " यथा वा संविदा

## बालंभट्टी

वणिजामित्युपलक्षणमित्याह — वणिङ्नटेति । द्वितीयपादार्थमाह —
लाभेति ;— लभ्यत इति लाभः, तल्लाभेच्छयेत्यर्थः । लिप्सव इति पाठा-
न्तरम् । तथा सत्वेऽपि तस्य प्रत्येकसाध्यत्वादाह—प्रतीति । अर्थादाह—प्रतीति ।

---

१. ख भिधीयते । २ ज. लित्वा । ३. थ . द. लवचनस्थ । ४. थ. द. तो वणिक्प-
देन नटा । ५. त. णिगिति । ६. थ. एतदादिमूलमित्यन्तं नास्ति । ७. थ. द. स्वमूलद्रव्यात्तु ।

यापचयौ यथाद्रव्यं येन यावद्धनं पण्यग्रहणार्थं दत्तं तदनुसारेणावसेयौ । यद्वा—प्रधानगुणभावपर्यालोचनयाऽस्य भागद्वयमस्यैको भाग इत्येवंरूपया संविदा समयेन यथासंप्रतिपन्नौ तथा वेदितव्यौ ॥ २५९ ॥

किं च—

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ।
स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक् ॥ २६० ॥

5

तेषां संभूय प्रचरतां मध्ये पण्यमिदमित्थं न व्यवहर्तव्यमिति प्रतिषिद्धमाचरता यन्नाशितम्, अनादिष्टमननुज्ञातं वा कुर्वाणेन, तथा प्रमादात्प्रज्ञाहीनतया वा येन यन्नाशितं स तत्पण्यं वणिग्भ्यो दद्यात् । यः पुनस्तेषां मध्ये चौरराजादिजनि-

कर्मापेक्षया वा यथासंवित् । परिभाषामन्योन्यमकृता मर्यादाकृतेत्यर्थः । स्पष्टमन्यत् ॥ २५९ ॥

एवं कृतसमयानां व्यवहारापेतं स्वच्छन्दात्— —प्रतिषिद्धामनादिष्टमित्यादि ॥ २६० ॥

प्रतिषिद्धमनादिष्टम् असत्यैर्वणिग्भिरनुष्ठितमिति शेषः । किं च— प्रमादाद्यच्च

सुबोधिनी

कृतौ" इत्यस्याभिप्रायमाह— यद्वेति । प्रधानो मुख्यः गुण उपसर्जनभूतः । मुख्यस्याधिकोऽशः उपसर्जनस्य तस्मान्न्यूनः।ततो न्यूनत्वादिपरिकल्पनया न्यूनतरन्यूनतमांशपरिकल्पनमित्यर्थः ॥ २५९ ॥

बालभट्टी

यथा द्रव्यमिति—योग्यतायामव्ययीभावः । तदाह—येनेति । तुर्यपादार्थमाह—यद्वेति,—कृतावित्यर्थः । संप्रतीति,—अर्थादाह—तथेति । एवं प्रागपि ॥ २५९ ॥

अन्यदप्याह—किं चेति,तथा यन्नाशितं प्रमादादित्यस्य व्याख्या—प्रज्ञेति।चो वार्थे इत्याह—वेति । तथा च नाशितमित्यस्य सर्वत्र संबन्ध इति भावः। वणिग्भ्यः स्वसमवायिभ्यः । अत एव प्रातिस्विकमिति प्रागुक्तम् । विप्लवाद्यर्थमाह—य इति। विनेवार्थमाह

१. ग. ज. यथा संप्रतिपन्नौ तथा । २. क. मिति निषिद्धमाच । ३. थ. द. यद्वा प्रधानगुणेति ।

ताद्व्यसनात्पण्यं पालयति स तस्माद्रक्षितात्प-याद्दशममंशं लभते ॥ २६०॥

**अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।**

**व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥२६१॥**

इयतः पण्यस्येयन्मूल्यमित्यर्घस्तस्य प्रक्षेपणात् राजतो निरूपणाद्धेतोरसौ मूल्या द्विंशतितममंशं शुल्कार्थं गृह्णीयात्। यत्पुनर्व्यासिद्धमन्यत्र न विक्रेयमिति राज्ञा प्रति-

5 षिद्धं यच्च राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपि तद्राज्ञे ऽनिवेद्य लाभलोभेन विक्रीतं चेद्राजगामि मूल्यदाननिरपेक्षं तत्सर्वं पण्यं राजाऽपहरेदित्यर्थः ॥ २६१ ॥

नाशितं स तद्दद्यात् ॥ अन्यानपेक्षयैव विप्लवात्तु रक्षिता दशमांशभाक्,—रक्षितद्रव्यात् रक्षितलाभात् दशमांशं प्राप्नुयादित्यर्थः ॥ २६० ॥

इदानीं राजभाव्यं निरूपयति—**अर्घप्रक्षेपणाच्छुल्कमित्यादि ॥२६१ ॥**

योऽर्घो राजप्रक्षिप्तः स्थापितः तत एवार्घस्थापनाद्विक्रीतानां विंशतिभागो राजभाव्यः शुल्कः । क्रेतृविक्रेतृभ्यामन्येच्छयाऽन्यतरणैव देयः । यच्च राज्ञा व्यासिद्धं राजयोग्यं च हस्त्यादिद्रव्यं राजन्यनावेद्यानाख्याय विक्रीतं तद्राजगाम्यवसेयम् ॥ २६१ ॥

## सुबोधिनी

राजत इति—राज्ञो निरूपणादित्यर्थः । असाविति राज्ञो निर्देशः। अयमर्थः—अर्घस्य राज्ञा निरूपितत्वाद् यस्य पण्यस्य विंशतिः पणा मूल्यं, तस्मादेकं पणं राजा गृह्णीयादिति । राजगामीति—मूल्यदाननिरपेक्षं तद्राजगामीत्यर्थः । अस्यैव तात्पर्यार्थं दर्शयति—तत्सर्वमिति ॥ २६१ ॥

## बालंभट्टी

—व्यसेति,—नाशादित्यर्थः। स्वशक्त्येति भावः। इदमाधिकम् । तस्य ततो लाभादि तु प्रागुक्तमेव । तथा नारदोऽपि—"दैवतस्करराजाग्नि व्यसने समुपस्थिते । यस्तत् स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृतः॥" इति उक्त्वाऽऽरादाह—अर्घ्येति ॥ २६० ॥

एवं त्वेषां मनुरपि "शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः। कुर्युरर्घं यथा पण्यम् अतो विंशं नृपो हरेत् ॥ राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च । तानि निर्हरतो लोभात् सर्वहारं हरेन्नृपः ॥ " इति अर्घस्येति पाठान्तरग्रहणे हेतुपञ्चमीत्याह—हेताविति । असौ नृपः शुल्कमित्यर्थः । शुल्कार्थमिति—करार्थमित्यर्थः । पूर्वेण पौनरुक्त्याऽऽह—प्रतीप्तेति । राजगामित्वे विक्रीतत्वं दोषो हेतुरित्याह--लाभेति । अन्यत्रेति शेषः । अत एवफलितमाह—मूल्येति । सर्वं द्विविधम् ॥ २६१ ॥

---

१. क. ज. अर्थ । २. क. मित्यर्घप्रक्षे । ३. राजनिरू । ४. थ. द. तो निरूपणादिति । ५. थ. द. ज्ञानि । ६. मि' मूल्यदाननिरपक्षेमि॥ ।

मिथ्यावदन्परीमाणं शुल्कस्थानादपासरन् ।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी ॥ २६२ ॥

यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निह्नुते, शुल्कग्रहणस्थानाद्वाऽपसरति यश्चास्येदमस्येदं वेत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा ते सर्वे पण्यादष्टगुणं दण्डनीयाः ॥ २६२ ॥

5

अपि च—

तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६३ ॥

शुल्कं हि द्विविधं स्थलजं जलजं च । तत्र स्थलजम् " अर्घप्रक्षेपणाद्विंशं

राजभाव्य शुल्कमिति पण्यद्रव्यादेः—मिथ्यावदन् परीमाणमित्यादि ॥ २६२ ॥

सुबोधिनी

'ते सर्वे इति—ते सर्वे प्रत्येकं दण्डनीयाः न समुच्चिता इति बोद्धव्यम्—अपराधस्य समत्वात् ॥ २६२ ॥

बालंभट्टी

अथ दण्डमाह—मिथ्येति । राजदण्डे बीजमाह—शुल्केति । शुल्कपदं लाक्षणिकमित्याह—शुल्कग्रहणेति । क्रयश्च विक्रयश्च विक्रयौ । व्याजो विवादः,तत्सहितस्य पण्यस्य तौ। ततो मत्वर्थे इनिरित्याह—यश्चेति । मनुरपि "शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी । मिथ्यावादी च सङ्ख्यानेऽदाप्योऽष्टगुणमत्ययम् ॥" इति ॥ २६३ ॥

दण्डान्तरमाह—अपि चेति । वचनम् व्याख्यातुमुपोद्घातमाह—शुल्कं हीति । मूलमाह— अर्घप्रक्षे पणमिति । प्रतितारनौकादौ यानं रिक्तशकटादिक प्रतिपणं दाप्यः। पौरुषेषु पुरुषभावविषये तरेऽर्धपणं दाप्यः पशुर्गवादिः, योषिद्वक्ष्यमाणाभिन्नस्त्रीमात्रं ,पणचतुर्थांशो दाप्यः।रिक्तकः भाररहितः पूमान् मनुष्यः पादार्धपणाष्टमभागं दप्यः। भाण्डं पण्यद्रव्यं तेन पूर्णानि यानानि शकटादीनि सारतः द्रव्यगतोत्कर्षापेक्षया तार्ये

१. थ. द. ते सर्वे पण्यष्टगुणमिति ।

भागं शुल्कं नृपो हरेत् ।" इत्यत्रोक्तम्; जलजं तु मानवेऽभिहितम्—"पणं यानं तरे दाप्यः पुरुषोऽर्धपणं तरे । पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः । रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः ॥" इति । शुल्कद्वयेऽप्ययमपरो विशेषः । "न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृतावशेषे न

## सुबोधिनी

पणं यानं तरे इति—अस्यार्थः—"भाण्डपूर्णानि यानानि" इति वक्ष्यति अतोऽत्र रिक्तयानं गृह्यते । रिक्तं यानं शकटादिकं कर्तृ । तरं तरणं तेन मूल्यं लक्ष्यते । तरं तरणमूल्यं दाप्यम् । यानादिशब्दैर्यानादिस्वामी लक्ष्यते । किं तन्मूल्यमित्याकाङ्क्षायामाह—पणमिति।पणपरिमितमिति यावत्। पौरुषः पुरुषवाह्यो भारः सोऽर्धपणं तरं दाप्यः।पशुर्गवादिकं स्त्री च पादं पणचतुर्थांशं दाप्यौ । रिक्तकः पुमान् भाण्डरहितः पुरुषः पणाष्टभागं दाप्यः । द्रव्यपूर्णानि शकटादीनि यानानि सारतः द्रव्यगतोत्कर्षापकर्षवशात् तार्यं तरणमूल्यं दाप्यानि । रिक्तभाण्डानि पुरुषरहितानि शुकमञ्जूषादीनि यत्किञ्चिदल्पं दाप्यानि । पुमांसश्चापरिच्छदाः" विक्रेयवस्तुरहिता वणिक्प्रभृतयः पुमांसश्च यत्किञ्चिद्दाप्याः । पूर्वोक्तं "पादार्धं रिक्तकः पुमान्" इति तु वणिगादिव्यतिरिक्तविषयमिति । न भिन्नेति—अयमर्थः,—भिन्नकार्षापणं न्यूनकार्षापणं—कार्षापणन्यूनमूल्यमिति यावत्—तत् प्रति शुल्कं नास्ति । तथा शिल्पवृत्त्यादिषु । हृतावशेषे तस्करादिभिर्हृतावशिष्टद्रव्ये

## बालंभट्टी

तरणमूल्यम् दाप्यानि । रिक्तभाण्डानि पण्यद्रव्यरहितानि गोप्यादीनि अपरिच्छदा दरिद्राश्च उक्तपादार्धदानापेक्षया किञ्चिद्दापनीय इत्यर्थः।किञ्चिद् "दीर्घाध्वनि यथादेशं यथा कालतरो भवेत् । नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम् ॥ " इति मनुः ॥ पूर्वं पारावारे तरणार्थमुक्तम्, इदानीं नदीमार्गेण दूराध्वनि गन्तव्ये प्रबलवेगास्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया तरमूल्यं कल्पनीयम् । एतच्च नदीतीरे बोध्यम् । समुद्रे तु वाताधीनपोतगमनत्वात्स्वायत्ताभावे तरपणविशेषज्ञापकम् । नदीव योजनगमादिकं तत्र नास्ति । ततस्तत्रोचितमेव तरमूल्यं ग्राह्यमिति तद्व्याख्यातारः । द्वयेऽपि जलजे स्थलजे च । नाभिन्नेति मानवं वासिष्ठञ्चेदम् । भिन्ने न्यूनः कार्षापणोमूल्यं यस्य । वस्तुनस्तु तथा तोन्नामित्त्वतः

१.—८. ४०४, ४०५. । ख. "गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मण लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥" (४०७) इत्यधिकम् । २. थ. द. तरे दाप्य इति । ३. थ द. तो यानं रिक्तं गृ । ४. थ. द. 'पण' इति नास्ति । ५. थ. न्युरुर । ६. द मूषकम ।

श्रोत्रिये प्रव्राजिते न यज्ञे ॥" इति। तीर्यतेऽनेनेति तरः नावादिः तज्जन्यशुल्केऽधिकृतस्तारिकः; स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा दशपणान् दण्डनीयः। वेशोवेश्म प्रतिवेश इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते; तत्र भवाः प्रातिवेश्याः; ब्राह्मणाश्च ते प्रातिवेश्याश्च ब्राह्मणप्रातिवेश्याः;–तेषां श्रुतवृत्तसंपन्नानां श्राद्धादिषु विभवे सत्यनिमन्त्रणे एतदेव दशपणात्मकं दण्डनं वेदितव्यम् ॥ २६३ ॥ 5

## सुबोधिनी

शुल्कं न। यज्ञे तदुपयुक्तद्रव्येष्वानीयमानेषु तदर्थं गच्छत्सु च मनुष्येषु च शुल्कं नास्तीति। अधुना मूलवचनं व्याचष्टे—तीर्यतेऽनेनेतीत्यादिना ॥ २६३ ॥

## बालंभट्टी

शुल्कोऽपि भिन्नकार्षापणः। तेन कार्षापणादर्वाक् यस्य मूल्यं तस्य शुल्को न ग्राह्य इत्यर्थः। शुल्कशब्द अर्धचादिः। शिल्पवृत्तिर्यस्य तत्र भैक्ष्यवृत्तं वर्तनं जीवनं यस्य तत्र भैक्ष्यलब्ध इति पाठान्तरम्। हतादवशेषो यस्य तत्र यज्ञस्तदुपकरणम्। दीक्षितो वा तत्र गन्तुकामो जनसमूहो वा। मनुरपि "गर्भिणी तु द्विमासादिः; तथा प्रव्रजितो भिक्षुः; मुनिर्वानप्रस्थः, ब्राह्मणश्चलिङ्गिनो ब्रह्मचारिणश्च तरमूल्यं तरेण न दाप्याः इत्यर्थः। अथ मूलार्थमाह—तीर्यत इति। स च शुल्के लाक्षणिकस्ततः "अत इति" इति ठन् तत्फलितमाह—तज्जन्येति। वेश्मेति प्रतीति,—सामीप्येऽव्ययीभावः। तदाह—स्ववेश्मेति,—गृहमिति शेषः। तत्रेति— अव्ययीभावाच्चेति भावः। विशेषानाऽऽह——श्रुतेत्यादि प्रेतपदार्थो मृत इति। द्रव्यपदं योग्यताया विशेषपरमित्याह—तदीयमंशामिति। तदित्यस्य तत्रान्वय इति भावः ॥ २६३ ॥

---

१.—१९. ३७.। २. ज. मुखः। ३. ज. स्थश्चो। ४. ख. संपूर्णानां। ५. लं व्या।
६.—५. २. ११५.।

देशान्तरमृतवणिग्रिक्थं प्रत्याह—

**देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः।**
**ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः॥ २६४॥**

यदा संभूय कारिणां मध्ये यः कश्चिद्देशान्तरगतो मृतस्तदा तदीयमंशं दायादाः पुत्राद्यपत्यवर्गाः[1], बान्धवो मातृपक्षा[2] मातुलाद्याः, ज्ञातयोऽपत्यवर्गव्यतिरिक्ताः[7]; सपिण्डा वा, आगताः संभूय[3] व्यवहारिणो ये देशान्तरादागतास्ते[4] वा गृह्णीयुः। तैर्विना दायादाद्यभावे राजा गृह्णीयात्। वाशब्देन च[5] दायादादीनां वैकल्पिकमधिकारं दर्शयति। पौर्वापर्यनियमस्तु "पत्नी दुहितरः" इत्यादिप्रतिपादिता[6] एवात्रापि वेदितव्यः।

अथ किं संभूय व्यवहरतामन्तः विपत्तौ तदीयद्रव्यमन्यैर्वणिग्भिर्गृहीतव्यम्? नेत्युच्यते। किं तर्हि? **देशान्तरगते प्रेते इत्यादि॥ २६४॥**

देशान्तरगते आयुर्व्ययविशुद्धं तदीयमंशं यथाविभजमानं रिक्थिनोऽन्येयगृह्णीयुः। तद-

## सुबोधिनी

संभूय कारिणामिति—मिलित्वा वाणिज्यादिकं कुर्वतामित्यर्थः। ज्ञातय इति—अत्र सपिण्डा वा अपत्यवर्गव्यतिरिक्ता वा ज्ञातय इत्येवं नान्वयः, अपि त्वपत्यवर्गव्यतिरिक्ताः सपिण्डा ज्ञातय इति। एवञ्च वाशब्दो वक्ष्यमाण आगतशब्दवाच्यैः सहापत्यवर्गादिसपिण्डान्तानां विकल्पद्योतनार्थः। स च विकल्पो व्यवस्थित एव नैच्छिकः। अयमेवार्थ उत्तरत्र स्फुटीभविष्यति। ननु वाशब्दो यदि वैकल्पिकाधिकारद्योतनार्थस्तथा च व्रीहियववदैच्छिकविकल्पे सति "पत्नीदुहितर" इति क्रमाभिधायकवचनविरोधः स्यादित्यत आह—पौर्वापर्येति। अयमाशयः—व्यवस्थितोऽयं विकल्पः। व्यवस्था च "पत्नी दुहि

## बालंभट्टी

यद्यपि दायादशब्दोऽन्यत्राप्यस्तीति प्रागुक्तम्, तथाऽपि ब्राह्मणवसिष्ठन्यायेनाऽऽह—पुत्रेति। मातृपक्षे भवाः दिगादित्वाद्यत्। सपिण्डेति। सगोत्रसपिण्डेत्यर्थः। आदिन.—सेदकरहितैरित्यनेन सर्वपरामर्श इत्याह—दायेति। चस्त्वर्थेऽपि एवमग्रेऽपि। वैकेति न तु युगपदिति भावः। नन्वेवम् क्रमेनियामका भावे नैच्छिक विकल्पापत्तौ व्रीहियवादिवत् "पत्नी "दुहितरः" इति क्रमबोधकवचनविरोधापत्तिरत आह—पौर्वापर्येति। तथा च

---

१. ख. वर्गः ब। ग. दायादः पुत्राद्यपत्यवर्गः बन्ध। २. ज. पक्षीयाः। ३. संभूय संभूय व्यव। ४. क देशान्तरगताः। छ. देशान्तरंगताः। च णो दे ५. क. वाशब्देन च दायादीनां। ६ व्य०. १३५। ७. थ. द. योऽपत्यवर्गव्यतिरिक्ता इति।

शिष्यसब्रह्मचारिब्राह्मणानिषेधो वणिक्प्राप्तिश्च वचनप्रयोजनम्। वणिजामपि मध्ये यः पिण्डदानर्णदानादिसमर्थः स गृह्णीयात्। सामर्थ्यविशेषे सर्वे वणिजः संसृष्टिनो विभज्य गृह्णीयुः। तेषामप्यभावे दशवर्षं दायादाद्यगमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णीयात्। तदिदं नारदेन स्पष्टीकृतम्—"एकस्य चेत्स्यान्मरणं दायादोऽस्य तदाप्नु-

## सुबोधिनी

तरः" इति प्रतिपादितपौर्वापर्याबाधेन विज्ञेयेति। यदि पत्न्यादिक्रमेणैव रिक्थभाक्त्वं तर्हि प्रयोजनाभावाद् "देशान्तरगते प्रेते" इत्यादिवचनमनारम्भणीयं स्यादित्यत आह—शिष्येति। अयमाशयः—"गोत्रजा बन्धुशिष्यसब्रह्मचारिणः" इति[2] बन्धूनामभावे शिष्यसब्रह्मचारिणौ क्रमेण धनभाजौ, तदभावे "सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।" इति ब्राह्मणा रिक्थभाज इति पूर्वप्रतिपादितशिष्यादिनिवृत्तिर्वणिक्प्राप्तिश्च प्रयोजनम्। अतः पुत्रादीनां बन्धुपर्यन्तानामभावे संभूयकारिणो वणिजो गृह्णीयुरिति। वणिजामप्यभावे दशवर्षपर्यन्तं स्थापयेदित्युक्तं तदेतन्नारदेन स्पष्टीकृतमित्याह—तदिदमिति। एकस्येति[3]—संभूय कर्म कुर्वतां वणिजां मध्ये एकस्य चेन्मरणं स्यात् तद्वस्तु दाया-

## बालंभट्टी

व्यवस्थितोऽयं विकल्पो न स्वेच्छिकः। व्यवस्था "च पत्नी दुहितरः" इति बोधित पौर्वापर्याबाधेन ज्ञेयेति भावः। न त्वेवं सति फलाभावात् देशान्तरेतारतम्यम आह—शिष्येति। गोत्रजा बन्धुशिष्येत्यनेन सर्वेषामप्यभाव इत्यनेन च क्रमेण प्रतिपादिताधिकारित्वकाशिष्यादिनिवृत्तिर्वणिजस्तत्रानुक्तत्वेन तत्प्राप्तिश्चैतद्वचनप्रयोजनमित्यर्थः। अतः पुत्रादिबन्धुपर्यन्तानामभावे संभूयकारिणो वणिजो गृह्णीयुरिति भावः। तत्र विशेषमाह—वणिजामपीति। पिण्डदातृत्वस्य तदा व्याप्यत्वस्य प्रागुक्तत्वादाह—ऋणेति। ऋणं प्रतिकुर्युरित्यनेनेदमुक्तं प्राक्। आदिना दत्त ऋणोद्धरपरिग्रहः। विशेषान्तरमाह—समर्थ्येति। विभज्य ग्रहणे हेतुं सूचयन्नाह — सृष्टिरिति। यद्यपि नात्र मुख्यं संसृष्टित्वम्, तथाऽपि तेन व्याजेनात्रापि तथेति भावः। विशेषान्तरमाह—तेषामपीति। दशेति बहुव्रीहिः। तदिदमिति दशवर्षपर्यन्तं स्थापनामित्यर्थः।

---

१. ज. सामर्थ्याभावे सर्वे। २.—व्य० १३५। ३. थ. द. तस्य चेत्स्यान्मरणमिति।

यात्। अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव ते ॥ तदभावे तु गुप्तं तत्कारयेद्दश-वत्सरान् । अस्वामिकमदायादं दशवर्षस्थितं ततः ॥ राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥" इति ॥ २६४ ॥

किं च—

5 जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत ।

जिह्मो वञ्चकः तं निर्गतलाभं[2] लाभमाच्छिद्य त्यजेयुर्बहिष्कुर्युः । यश्च

भावे तु राजा गृह्णीयात् । किमर्थं पुनरिदमुच्यते ऋणदाने हि प्रतिषेधात्?तथा च गौतमः– "प्रातिभाव्यवाणिक्छुल्कमद्यद्यूतदण्डा न पुत्रानध्यापयेयुः"इति । ऋणवच्च धनसंबंधोऽपीति तदभाक्त्वमेव युक्तमित्याशंकानिवृत्त्यर्थमेव तत् । स्पष्टयन्यत् ॥ २६४ ॥

संभूय च प्रवृत्तानां स्वामिकर्मकरादीनामन्योन्यमयं विधिः— जिह्मं त्यजेयु-रित्यादि ॥ २६५ ॥

सुबोधिनी

दपुत्रबान्धवान्तो जनः पूर्वपूर्वा भावे उत्तर उत्तर आप्नुयात् । दायादेऽसति अन्यो वणिग्वा पिण्डदानादिसमर्थ आप्नुयात् । असामर्थ्ये पिण्डदानादावेकस्य ते सर्वे वणिज आप्नुयुरित्यर्थः । तदभावे त्वित्यादि सुगमम् ॥ २६४ ॥

बालंभट्टी

एकेति संभूय कर्मकुर्वतां वणिजां मध्ये यद्येकस्य मरणं भवेत् तदाऽस्य मृतस्य तद्धनं तु दायादः पुत्रादिर्बन्धवन्तो जनः । पूर्वपूर्वाभावे उत्तर आप्नुयात् । दायादे उक्तरूपे असति अन्यो वणिग्वा शक्तश्चेत् तदृणदानादिसमर्थश्चेत् आप्नुयात् । एकस्य तत्रासामर्थ्ये सर्वेषां च सामर्थ्ये तादृशास्ते वणिजः सर्व एवाऽऽप्नुयुरित्यर्थः । तदभावे तु वणिजामभावे गुप्तं रक्षितं तत् तदीयं धनं ततः तावत्पर्यन्तं स्थापनान्तरमस्वामिकत्वादि विशिष्टं तद्धनं राजा स्वीयं कुर्यात् । एवं सति न धर्मस्य हानिरित्यर्थः ॥ २६४ ॥

वणिजं प्रति अन्यदप्युच्यते इत्याह - किंचेति । बहुव्रीहिः । तस्याप्यर्थमाह— लाभमिति । तमदत्वेत्यर्थः । संभूय कारिण इति शेषः । अशक्त इत्यस्यार्थमाह—

१. क. तद्वार । २. छ. ज. निर्गतलाभमाच्छिद्य ।

संभूय कारिणां मध्ये भाण्डप्रत्यवेक्षणादिकं कर्तुमसमर्थोऽसावन्येन स्वकं[1] कर्म भाण्डभारवाहनेतदायव्ययपरीक्षणादिकं कारयेत् ॥[2]

प्रागुपदिष्टं वणिग्धर्ममृत्विगादिष्वतिदिशति—

## अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् ॥[3]

अनेन लाभालाभौ यथाद्रव्यमित्यादिवणिग्धर्मकथनेन ऋत्विजां होत्रादीनां कृषीवलानां नटनर्तकतक्षादीनां[4] च शिल्पकर्मोपजीविनां विधिर्वर्तनप्रकार आख्यातः। तत्र[5] च ऋत्विजां धनविभागे विशेषो मनुना दर्शितः "सर्वेषामर्धिनो मुख्यास्तदर्धे नार्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥" 5

### सुबोधिनी

कर्मिपदवाच्यानाह—नटनर्तकेति। श्रुतिविहितदक्षिणाया विभागप्रकारस्यास्मिन् मनुवचनेऽभिधीयमानत्वात् दक्षिणाप्रापकवचनमाह—तमिति[6]। अस्यार्थः,— पूर्वं गवां प्रस्तुतत्वात् शतेन— गवां शतेन—तं यजमानमध्वर्य्वादयो दीक्षयन्तीति।यदा "नतं शतेनं" इति पाठस्तदा नतं नतिमानतिं यजममानायत्तत्तं[7] प्रति शतेन दीक्षयन्तीत्यर्थः। यतो दक्षिणाग्रहणेनर्त्विजो यजमानायत्ता भवन्ति। नन्वस्मिन् वाक्ये दीक्षोद्देशेन गोशतप्र-

### बालंभट्टी

संभूयेति। भाण्डेति—भाण्डस्य यो भावः,—संरक्षणादिरूपः तस्य वहनमित्यर्थः। तद्भाण्डं नारदोऽपि—"भाण्डं पिण्डव्ययोद्धारभारसारान्ववेक्षणम्। कुर्युस्ते व्यभिचारेण समये स्वे व्यवस्थिताः॥" इति। भाण्डविक्रेयद्रव्यं पिण्डः पाथेयं प्रागिति प्रकरणारम्भे इत्यर्थः॥ आदि ग्राह्यं वचन एव स्फुटम्॥ २६४८॥

अनेनेत्यस्यैव तत्प्रकरणादौ उक्तेनेत्यर्थः,—अन्यथा असंभवात्। तदाह—लाभेति। श्रुतिक्रमेणाऽऽह— होत्रेति। कर्षकपदार्थमाह—कृषीति। कर्मिपदे "अत इति" इतिः। तत्पदार्थनाह—नटेति। कर्मपदाथर्माह—शिल्पेति। तत्र च तेषां मध्ये च श्रुतिविहि-

१. ख. ज. स्वक। २. ख. ज. हनं त। ३. क. कर्षककर्मणाम्। छ. कर्षकधर्मणाम्। ४. क. नटनर्तकादीनाम्। ५. तत्रर्त्विजाम्। ५. त. गकरण। ६. थ. द. तं शतेन दीक्षयन्तीति। ७.—२. ४.।

इति। अस्यायमर्थः ज्योतिष्टोमेन "तं शतेन दीक्षयन्ति" इति वचनेन गवां शतमृत्विगानतिरूपे दक्षिणाकार्ये विनियुक्तम्। ऋत्विजश्च होत्रादयः षोडश। तत्र कस्य कियानंश इत्यपेक्षायामिदमुच्यते। सर्वेषां होत्रादीनां षोडशर्त्विजां मध्ये ये मुख्याश्च-

## सुबोधिनी

हणं प्रतीयते, न दक्षिणाविधिः। अतः कथं दक्षिणाप्रापकमेतद्वचनमित्यत आह—इति वचनेनेति। अयमाशयः—यथा भुजिक्रियासाध्ये तृप्त्यात्मके कार्ये पयसा तृप्तिः कुर्वीतेति पयोद्रव्ये विहिते तत्पयो भोजनसाधनस्यौदनस्य स्थाने निपतति, तद्वदत्रापि दीक्षियन्तीति दीक्षाकरणमानतिरूपं दक्षिणादानकार्यम्। आनतिर्नाम नम्रीभावः। स्वायत्तता भृतिं गृहीत्वा भृत्या इव दक्षिणां गृहीत्वा स्वायत्ता भवन्ति हि ऋत्विजः। तस्मिन्नानतिरूपे दक्षिणादानकार्ये गोशतं विधीयमानं दक्षिणादानरूपव्यापारसाधने दक्षिणास्थाने निपततीत्यर्थात् गोशतमेव दक्षिणा भवतीति दक्षिणाप्रापकं वचनमिति। एतदुक्तं भवति—गोशतं दक्षिणात्वेन विधीयत इति अधुना "सर्वेषामर्धिनः" इत्येतन्मनुवचनं व्याख्यातुमवतारयति—ऋत्विजश्चेति। ते गोशतस्यार्धिन इत्युक्ते शतापेक्षया

## बालंभट्टी

तद्दक्षिणाप्रापकं वचनमाह—"तं शतेन दीक्षयन्ति" इति। पूर्वं गवां प्रस्तुतत्वात् शतेन—गवां शतेन—तं यजमानम् अध्वर्यादयो दीक्षयन्तीत्यर्थः; यतो दक्षिणाग्रहणेन यजमानयुता भवन्ति। नन्वितो दीक्षोद्देशेन गोशतग्रहणं प्रतीयते न दक्षिणाया विधिस्तत्कथं दक्षिणाप्रापकम् इदमत आहेति वचनेनेत्यय भावः। यथाभुजिक्रियासाध्ये तृप्त्यात्मके कार्ये पयसा तृप्तिं कुर्वीतेति पयोद्रव्ये विहिते तत्पयो भोजनसाधनस्यौदनस्य स्थाने निपतति तथा अत्रापि दीक्षयन्तीति णिजर्थभूतं दीक्षाकारणम् ऋत्विजामानतिरूपं दक्षिणादानस्य कार्ये तेषाम् आयतिनेषभावः स्वापततेति यावत्। भृतिं ग्रहीत्वा अल्पा इव दक्षिण गृहीत्वा स्वायत्ताभवन्तिहि ऋत्विजस्तस्मिन् तेषामानतिरूपे दक्षिणादानस्य कार्ये गोशतविधीयमानदक्षिणादानरूपव्यापारसाधनभूतदक्षिणायाः स्थाने नियतोत्यर्थात् गोशतमेव दक्षिणाभवतीति दक्षिणाप्रायकमिदं वचनमिति गोशतं दक्षिणात्वेन विधीयत इति। अथमानं वा व्याख्यातुमवतारयति— ऋत्विजश्चेति। अत तेषां मध्ये गोशते वा। इदं

१.—८. २१०. । २. क. मेतं । ३. थ. द. न्तीह ऋ । ४. त. स्मादान ।

त्वारो होत्रध्वर्युब्रह्मोद्गतारः, ते गोशतस्यार्धिनः; सर्वेषां भागपूरणोपपत्तिवशादष्टाचत्वा-
रिंशद्रूपार्धेनार्धभाजः। अपरे मैत्रावरुणप्रातप्रस्थातृब्राह्मणाच्छासिप्रस्तोतारस्तदर्धेन तस्य
मुख्यांशस्यार्धेन चतुर्विंशतिरूपेणार्धभाजः।ये पुनस्तृतीयिनः अच्छावाकनेष्ट्राग्नीध्रप्रति-
हर्तारस्ते तृतीयिनो मुख्यांशस्य षोडशगोरूपतृतीयांशने तृतीयांशभाजः।ये तु पादिनः
ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्तेमुख्यभागस्य यश्चतुर्थांशो द्वादशगोरूपस्तद्भाजः । ननु 5
कथमयमंशनियमो घटते? न तावदत्र समयो, नापिद्रव्यसमवाय[1], नापि वचनं, यद्व-

## सुबोधिनी

पञ्चाशतोऽर्धत्वात् तथैव विभागप्राप्तावभिप्रायमाविष्कुर्वन् विशेषमाह—सर्वेषामिति ।
विभागपरिपूर्णार्थमुपपत्तिः। तस्या वशस्तदनुसरणं ; तेनायातः प्राप्तः स नासावष्टाचत्वा-
रिंशद्रूपार्धः तेनेति समासः । प्रकारान्तरेणार्धादिना दक्षिणाविभागस्य कर्तुमशक्यत्वा-
दित्यर्थः । तस्य मुख्यांशस्येति—मुख्यांशोऽष्टाचत्वारिंशद्रूपः । न तावदिति—प्रधान-

## बालंभट्टी

मानवम् । अथ व्याचष्टे — सर्वेषामिति । उक्तरीत्यैवाऽऽह—होत्रेति । ब्रह्मत्वस्याभयसा-
धारण्यादाह—ब्रह्मेति । शतार्धत्वस्य पञ्चाशतित्वात्तथैव विभागप्राप्तौ आशयं प्रकाशयन्
विशेषमाह—सर्वेषांभागेति । भागस्य विभागस्य यत्परिपूरणम् तस्या वशेन तदधीनतया
तदनुरोधेनायातः । प्राप्तश्चासावष्टाचत्वारिंशद्रूपत्वाश्चासौ अर्थश्च तेन धान्येन धनवानितिवत्
तृतीयान्त सामान्यविशेषयोरभेदान्वयः । तद्रूपार्धभाज इत्यर्थः । एवमग्रेऽपि । मत्वर्थीये
इनिः । सर्वत्र प्रकारान्तरेण दक्षिणाविभागस्य कर्तुमशक्यत्वात् यन्न्यूनत्वेऽपि सामीप्येन
तद्ग्रहणमिति भावः । तच्छब्देन श्रुतानुमितयोरिति न्यायेन श्रुतपरामर्शस्यैव औचित्या-
दाह— शस्येति । अष्टाचत्वारिंशद्रूपस्येत्यर्थः । एतेनावशिष्टद्विपञ्चाशद्रूपस्यैव कुतो नपरा-
मर्श इत्यपास्तम् । उक्तरीत्या स्थलद्वयनिर्वाहेऽप्यन्ते अनिर्वाहाच्च तृतीयिनः पादि-
न इति तयोः श्रौतीसंज्ञायोगोऽपि उक्त एव तृयीयांशा इति बहुव्रीहिः। एवमग्रेऽपि ।
तत्फलितमाह—मुख्यांशेति । प्रत्यासत्तेरिति भावः । एवमग्रेऽपि । षोडशगवरूपेति
पाठः । गोरूपेत्यपि पाठः । एवं द्वादशगवरूपेत्यत्रापि अयं मनूक्तः । बृहस्पतिरप्येवमेव ।
तत्र मूलोक्तप्रकारद्वयविषयत्वमाह— न यावदिति च प्रधानस्याधिकांशे न्यूनत्वं अन्येषां

१. थ. द दत्रस ।

## सुबोधिनी

स्य।धिकांशः, अन्येषां न्यूनन्यूनतरन्यूनतमांशा इति समयः कृतः, न चैकेन दशान्येनाष्टा-वपरेण षडित्येव वाणिज्य इव द्रव्यसमुदायः कृत इत्यर्थः।दशमतृतीयपादाधिकरणं—"समं स्यादश्रुतत्वात्" ज्योतिष्टोमे श्रूयते "गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिण इति। पूर्वतराधिकरणे गवां द्वादशशतम् इतराण्य-श्वादीनि च दाक्षिणेति च प्रतिपादितम्। पूर्वाधिकरणे त्विग्भ्यमेव दक्षिणा विज्ञेत्यपि चोक्तम्। अत्र तु स्थिते विभागे चिन्त्यते किं समो विभागः स्याद् उत प्रयासानुरूपः, अथवा अर्धिना इत्यादिसमाख्यानुरूपः इति सन्देहः। तत्र विशेषाश्रवणात् समो विभागः सर्वेषामृत्विजां स्यादिति प्राप्ते सिद्धान्तैकदेश्याह लोकवत् प्रयासानुरूपेण विभाग इत्येवं प्राप्ते सिद्धान्तः— द्वादशाहे दीक्षाक्रमवाक्ये "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं ततो होतारं ततस्तं दीक्षयित्वाऽर्धिनो दीक्षयति। ततस्तं नेष्टादी-क्षयित्वा तृतीयिनो दीक्षयति ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति। ततस्तं प्रतिप्रस्थाता दीक्षयति' इत्येवं विधेऽर्ध्यादिसमाख्याः श्रूयन्ते। अतस्तद्वशाद् ब्राह्मणा-च्छंसि प्रभृतीनां तदनुरूपो विभागो द्वादशाहप्रकृतौ ज्योतिष्टोमेऽध्यवसेय इति प्रकृतमनु-

## बालंभट्टी

न्यूनतरन्यूनतमांशा इति न समवायः कृतः। नाप्येकेन दशाम्येनाष्टावन्येन षडित्यादि-रूपेण वाणिज्ये इव द्रव्यसमुदायः कृत इत्यर्थः। नापि वचनं श्रौतं यद्वशात् यद्बलात् अतः परिशेषात् युक्तमित्यत्रान्वयः। दशमतृतीयपादाधिकरणं "समं स्यात् श्रुतत्वात्" इति ज्योतिष्टोमे श्रूयते—गावश्च अश्वाश्च अश्वतराश्च गर्दभाश्च अजाश्च आवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति पूर्वाधिकरणे गवां द्वादशशतमितराणि इतरा-ण्यश्वादीनि च दक्षिणेति प्रतिपादितम्। पूर्वाधिकरणे तु इयमेव दक्षिणाविभाज्येति उक्तम्। तत्र स्थिते विभागे चिन्ता किम्। समो विभाग उत प्रयासानुरूप उत अर्धिना इत्यादिसमाख्यानुरूप इति संशयः। तत्र विशेषश्रवणात् समो विभागः सर्वेषां ऋत्विजां स्यादिति प्राप्ते सिद्धान्त्येकदेशी आहलो कवत्प्रयासानुरूपेण विभाग इति तदभिप्रेत्योभयं

---

१. त. नचैकत्र।

शाङ्गागानियमः स्यात्, अतः 'समं स्यादश्रुतत्वाद्' इति न्यायेन सर्वेषां समांशभाक्त्वं कर्मानुरूपेण वांऽशभाक्त्वमिति युक्तम्। अत्रोच्यते। ज्योतिष्टोमप्रकृतिके द्वादशाहेऽर्धिनस्तृतीयिनः पादिन इति सिद्धवदनुवादो न घटते । यदि तत्प्रकृतिभूते ज्योति-

---

अन्योन्यं स्वामिकर्मकरसामाजिकादायो जिह्मं कुटिलं व्यभिचारिणं त्यजेयुः । तथा लाभशून्यं प्रवृत्तस्तु स्वयमशक्तोऽप्यन्येनाविरोधिना स्वकार्यं सामाजिकं कारयेत् । योऽयं संभूय स्थाने विधिरुक्तः । अनेनैव विधिना निरूपितमृत्विं

---

## सुबोधिनी

सरामः। पूर्वपक्षिणो मतं सिद्धान्तैकदेशिमतं चावलम्ब्य शङ्कावाद्याह—समं स्यादश्रुतत्वा-दिति विशेषश्रवणात् सममिति पूर्वपक्षयाशयः। ऋत्विजां स्वस्वकर्मणि वैषम्यात् कर्मानुरूपणेति सिद्धान्तैकदेश्यभिप्रायः । सिद्धान्तावलम्बनेन परिहरति —तत्रोच्यत इत्यादिना । अयमभिप्रायः—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या इति षट् प्रमाणानि शेषत्वबोधकानि । समाख्या नाम संज्ञा । ज्योतिष्टोमविकृतिभूते द्वादशाहे अर्धिन इति समाख्या श्रूयते । समाख्याप्रमाणबलात् तत्प्रकृतौ ज्योतिष्टोमे तथैव दक्षिणाविभागः कर्तव्यः, अन्यथा विकृतौ द्वादशाहे अर्धिन इत्यादिसिद्धानुवादो न स्यादिति । एतदुक्तं

## बालंभट्टी

शङ्कत इति आह—सममिति। विशेषश्रवणं सममित्यर्थः । सर्वेषाम् ऋत्विजां कर्मेति ऋत्विजां स्वस्वकर्मणि वैषम्यात् कर्मानुरूपेणेत्यर्थः । अथैवं प्राप्ते तत्र सिद्धान्ती आह— द्वादशाहे दीक्षाक्रमवाक्ये अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रति प्रस्तोता दीक्षयित्वाऽर्धिनो दीक्षयति ततस्त नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयतीत्येवं विधा अध्वर्य्वादि-समाख्याः श्रूयन्ते । अतस्तद्वशात्त्रिब्राह्मणाच्छंसीप्रभृतीनां तदनुरूपो विभागो द्वादशाह-प्रकृतौ ज्योतिष्टोमेऽध्यवसीयत इति तदिमं सिद्धान्तमवलम्ब्याऽऽह—ज्योतिष्टोमेति। कदेत्याकाङ्क्षायामाह—यदीति । तत् द्वादशाहः । उपसंहरति—अत इति । श्रुत्यादीनि

ष्टोमे अर्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनां न स्यादतो वैदिकार्धिप्रभृतिसमाख्याबलात् प्रागुक्तोंऽशनियमोऽवकल्प्यत इति निरवद्यम् ॥ २६५ ॥

॥ इति संभूय समुत्थानप्रकरणम् ॥

गाद्यनुष्ठानमपि द्रष्टव्यम्, स्मृत्यन्तरात्तुवैशेषिकमृत्विगाद्यनुष्ठानप्रपञ्चोद्रष्टव्यः । स्पष्टमन्यत् ॥ २६५ ॥

## सुबोधिनी

स्यात्—विकृतिगतसमाख्यान्यथानुपपत्त्या प्रकृतौ पूर्वोक्तो दक्षिणाविभागः कल्प्य इति ॥ २६५ ॥ इति भट्टविश्वेश्वरविरविरचितायां सुबोधिन्यां सम्भूयसमुत्थानं नाम प्रकरणम् ॥

## बालंभट्टी

षट्प्रमाणानि शेषत्वबोधकानि समाख्यानामयौगिकसंज्ञा ज्योतिष्टोमविकृतिभूते द्वादशाहे अर्धिन इत्यादयः समाख्याः श्रूयन्ते । अतः समाख्यारूपप्रमाणबलात् प्रकृतौ ज्योतिष्टोमेन तथैव दक्षिणाविभागः कार्यः । अन्यथा विकृतौ द्वादशाहेऽर्धिन इत्यादिसिद्धानुवादो न स्यात् । तथा च विकृतिगतसमाख्यान्यथानुपपत्त्या प्रकृतौ प्रागुक्तदक्षिणाविभागावसाय इत्यर्थः । तदुक्तम् तथोवोविश्ववेदा विभजन्त्विति ता यजमानश्चतुर्धा कृष्णाजिनेन व्युत्काचतुर्थमध्वर्युभ्यो विभजति यावदध्वर्यवे ददाति तस्यार्धं प्रति प्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे एतेनैवेतरेषां दानं युक्तमिति ॥ २६५ ॥

—o—

१, थ. द. भवति ।

# अथ स्तेयप्रकरणम् २३

इदानीं स्तेयं प्रस्तूयते। तल्लक्षणं च मनुनाऽभिहितम्—"स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम्। निरन्वयं भवेत् स्तेयं कृत्वापह्नूयते च यत्॥" इति। अन्वयवत् द्रव्यरक्षिराजाध्यक्षादिसमक्षम्; प्रसभं बलावष्टम्भेन यत्पर-धनहरणादिकं क्रियते तत्साहसम्; स्तेयं तु तद्विलक्षणं निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधनहरणं तदुच्यते। यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भया- 5 न्निह्नुते तदपि स्तेयम्। नारदेनाप्युक्तम्—"उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः॥" इति॥

## सुबोधिनी

अथ स्तेयप्रकरणम्॥ "स्यात् साहसं त्वन्वयवद्" इत्येतन्मनुवचनं व्याच अन्वयवदित्यादिना। "कृत्वापह्नूयते च यत्" इत्यस्यांशस्य तात्पर्यार्थमाह—यच्चेति।

## बालंभट्टी

महाप्रकरणसङ्गत्या आह—इदानीमिति। च स्त्वर्थे। मानवं व्याचष्टे—अन्वयेति। मनुम तमिदमग्रेऽन्वयः सम्बन्धः स चक्षुरादेर्विवक्षित इति। द्रव्येति—द्रव्यस्वामीत्यर्थः। कर्मपदार्थमाह—परेति। आदिना साधारणद्रव्यहरणम्। दत्वोऽपकृतमिति भूतत्वमविव-क्षतमित्याह—क्रियते इति। अतस्तत्र स्तेयदण्डो न कार्यः। एतदर्थमेव प्रकरणभेद इति भावः। तदाह—स्तेयन्त्विति—तत्साहसात्। आदिना राजाध्यक्षादिबलावष्टम्भोनात्रे-त्याह—एवञ्चेति। कृत्वायन्निह्नुतेभयात् तुर्यपादपाठं व्याचष्टे—यच्चेति। अपिना निरन्वयसमुच्च यः। परधनहरणादिकमिति शेषः। कृत्वापह्नूयते च यदिति पाठान्तरम्। कृत्वाऽ पव्ययते च यदिति तु प्रचुरः पाठः। तदा अयं तात्पर्यार्थो बोध्यः। अपव्ययते संवृणोति आच्छादयति इति यावदिति। तुशब्दोऽर्थः व्येञ् संवरणइत्युक्तेः। वञ्चयित्वेत्यस्य समूलत्वं ध्वनयन् स्तेय-लक्षणांशे मानान्तरमप्याह—नापीति। एषां द्रव्यस्वामिनां सुप्तादीनाम्। कर्मणि शेषषष्ठी चेत्यन्वयः। द्रव्यस्येति शेषः। सुप्तादेरपकर्षणोऽन्वयः॥

---

१.—८. ३३२.। २.—१४ १७.। ३. थ. द. द्रव्यरक्षीत्या। ४. थ. द. यत्सा-क्षेप्यपीति।

तत्र तस्करग्रहणपूर्वकत्वाद्दण्डनस्य, ग्रहणस्य च ज्ञानपूर्वकत्वात्, ज्ञानोपायं तावदाह—

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥ २६६ ॥

यश्चौरोऽयमिति जनैर्विख्याप्यते असौ ग्राहकै राजपुरुषस्थानपालप्रभृतिभि-
5 र्गृहीतव्यः । लोप्त्रेणापहृतभाजनादिना वा चौर्यचिह्नेन नाशदर्शादारभ्य चौर्यपदानु

यदि पुनः प्रत्येकं प्रतिग्रहादिना संभूयर्त्विजादिना वा कृत्स्नार्जितं कश्चिदपहृत्य गच्छेत् स कथं ज्ञतव्यः, ज्ञातस्य वा किं तस्य कर्तव्यमित्यपेक्षिते तत्स्वरूपनिरूपणायाऽऽह—
ग्राहकैर्गृह्यते चोर इत्यादि ॥ २६६ ॥

अपहृतद्रव्यस्थाभिः चोरत्वप्रतिपादनेन ग्राहकैर्गृह्यते चोरः; अथ वा लोप्त्रेण अपहृत-द्रव्येण अपहरणदेशाद्वा निपुणैरुन्नीयमानेन पादेन यद्वा आत्मपूर्वकर्मणा सम्भावितचौर्या-पराधात्तथाऽन्यैरपि स्मृत्यन्तरोक्तचोरत्वप्रतिपादकैः वक्ष्यमाणैरशुद्धवासकादिभिः । अशुद्धो

सुबोधिनी

मूलमवतारयति— तत्रेति। अपहृतभाजनादिना वेति— यस्य गृहे यन्नष्टमपहृतादिना

बालंभट्टी

मूलमवतारयति— तत्रेति । प्रारभ्यमाणे स्तेये इत्यर्थः। ज्ञानेति तस्करत्वज्ञानेत्यर्थः । यद्यपि योगिना ग्राहकग्राह्यत्वमैव तत्रोपाय उक्तः, तथाऽपि तत्रापि निमित्तमाह— य इति। राजपुरुषाश्च स्थानपालाश्चेति द्वन्द्वान्यदीयमलोमा(?)पदार्थमाह— येति । अगृह्यते इति लेडि-त्याह— ग्रहीति । अपहारतो नष्टं वस्त्रादिर्यस्य गृहे हस्ते वा दृश्यते तेन चिह्नेन स पुरुषो ग्राह्य इत्यर्थः। अथशब्दार्थमाह— वेति । पदेन वेति व्याचष्टे— नाशेति । पूर्वकर्मचौर्याख्य-

१. ख. स्मैः स्था : २. ख. ग. शदिवसादा । ३. थ. ब. लवचनम् ।

सरणेन वा ग्राह्यः । यश्च पूर्वकर्मापराधी प्राक्प्रख्यातचौर्यः अशुद्धोऽप्रज्ञातो वासः स्थानं यस्यासौ अशुद्धवासकः सोऽपि ग्राह्यः ॥ २६६ ॥

किं च—

अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २६७ ॥   5

परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २६८ ॥

न केवलं पूर्वोक्ता ग्राह्याः किं त्वन्येऽपि वक्ष्यमाणैर्लिङ्गैः शङ्कया ग्राह्याः। जा-

वासो यस्य असावशुद्धवासकः । कुतस्त्योऽयमित्यविज्ञायमानो लुब्धवेश्यादिगृहनिवासी लोप्त्रादिवच्च ॥ २६६ ॥

अन्येऽपि शङ्कया ग्राह्या इत्यादि ॥ २६७ ॥

परद्रव्यगृहाणां चेत्यादि ॥ २६८ ॥

सुबोधिनी

तत् यस्य गृहे हस्ते वा दृश्यते तेन चिह्नेन स पुरुषो ग्राह्य इत्यर्थः । वासः स्थानमिति— उष्यते अस्मिन्निति वासो निवासः पुंसि । तस्यैव प्रतिपदं स्थानमित्येतत्, न तु वास-स्थानमित्येकं पदमित्यवबोद्धव्यम् ॥ २६६ ॥

"शुष्कभिन्नमुखस्वराः" इत्यत्र शुष्कमुखो भिन्नस्वर इति च प्रकृत्या द्वावेवोपात्तौ

बालंभट्टी

मेव भूम्नि इनिरित्यहि—प्रागिति । अत एव परिग्रहः । वास इति—उष्यते अस्मिन्निति वासः । निवासः पुंस्ययम् । तदाह—स्थानमिति । न तु वासस्थानमित्येकं पद-मिति भावः। तथा चेति समुच्चये इत्याह— सोऽपीति ॥ २६६ ॥

तत्र उपायान्तरमोत्याह— किञ्चेति । केवलमवधारणे शङ्कायाम् । जातिनिह्नवादेः हेतुमित्याह—वक्ष्येति । तान्येवाह—जातीति । निह्नवपदस्य प्रत्येकं सम्बन्धः ।......

तिनिह्नवेन नाहं शूद्र इत्येवंरूपेण । नामानिह्नवेन नाहं डित्थ[1] इत्येवंरूपेण । आदि ग्रहणात्स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः । द्यूतपण्याङ्गनामद्यपानादिव्यसनेष्वतिप्रसक्ताः तथा कुतस्त्योऽसि त्वमिति चौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति तर्ह्यसावपि ग्राह्यः । बहुवचनात् स्विन्नललाटादीनां ग्रहणम्। तथा ये निष्कारणं कियदस्य धनं किं वाऽस्य गृहमित्येवं[2] पृच्छन्ति, वेषान्तरधारणेनाऽऽत्मानं गूहयित्वा ये चरन्ति, ये चाऽऽयाभावेऽपि बहुव्ययकारिणः, ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामविज्ञातस्वामिकानां विक्रयकाः ते सर्वे चौरसंभावनया ग्राह्याः।

## सुबोधिनी

प्रत्ययेन तु जसा बहव उपात्ताः । अतः प्रकृतिप्रत्यययोः परस्परविरोधादनुपपन्नं पदं स्यादित्याशङ्क्याह— बहुवचनादिति । अयमभिप्रायः—प्रकृतिरन्येषामप्युपलक्षिका तेन स्विन्नललाटादयोऽपि गृह्यन्ते । एवञ्च बहुत्वविवक्षायामेव बहुवचनविधानाच्च प्रकृतिप्रत्य-

## बालंभट्टी

ए................संज्ञादेशो व्यापकः । ग्रामो वा व्याप्यः । उपलक्षणोऽयम् । तृतीयेत्याह— लक्षिता इति। द्यूतेति—द्वन्द्वोत्तरपदको द्वन्द्वः । समभिहारात् स्त्रीविशेषरूपा न तु सामान्यभूतेत्याह—द्यूतपण्याङ्गेति । इदमुपलक्षणमित्याह —आदीति। तात्पर्यार्थमाह— अनीति । शुष्कञ्च भिन्नश्च शुष्कभिन्नौ मुखञ्च स्वरश्च तौ ततो बहुव्रीहिः । यथा सङ्ख्यंचेत्याह— यदिति । अत्र कारणमुक्तम्—कुतस्त्वमसीत्यादिना । न तु अत्र द्वयेरेवोक्तत्वात् जात्या सर्वत्र ग्रहणे सिद्धिव्यक्त्याशयेन बहुत्वाशयानुपयोगात् बहुवचनासङ्गतिश्च । अत आह— बह्वीति । तथा च प्रकृतिरन्येषामपि उपलक्षणम् । अर्धर्चा इतिवत्वेति । तद्विवक्षायां बहुवचनम् । अत एव प्रकृतिप्रत्ययविरोधेऽपि नेति भावः । अनतिप्रसङ्गायाऽऽह— निष्केति । गूढमथाचरन्तीति शब्दोऽर्थः । तत्फलितमाह— वेषान्तरेति । गूढेति— आच्छादयित्वेत्यर्थः । आवश्यकव्ययेऽदोषादाह—बह्विति । भूम्नि तत्र मतुप् । विनष्टद्रव्याणि विक्रीणते इति पचाद्यच् । गङ्गाधरवत् । तत्फलितमाह—येवेति । विक्रायकाः तत्कर्तारः एव लब्धम् । शङ्कयेत्यस्य अत्राप्यन्वय इत्याह— चौरसमिति । वक्ष्यमाणसङ्गतये

१. ख. लपित्थः । २. ख. गृहमिति पृ ।

एवं नानाविधचौर्यलिङ्गान्पुरुषान् गृहीत्वा एते चौराः किं साधव इति सम्यक्परीक्षेत न पुनर्लिङ्गदर्शनमात्रेण चौरनिर्णयं कुर्यात्—अचौर्यस्यापि लोप्त्रादिलिङ्गसंबन्धसंभवात्; यथाऽऽह नारदः—"अन्यहस्तात्परिभ्रष्टमकामादुच्छ्रितं भुवि। चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत् ॥" तथा—"असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः। दृश्यन्ते विविधा भावास्तस्मादुक्तं परीक्षणम् ॥" इति ॥ २६७ ॥ २६८ ॥ 5

एवं चौर्यशङ्कया गृहीतेनाऽऽत्मा संशोधनीय इत्याह—

**गृहीतः शङ्कया चौर्ये नाऽऽत्मानं चेद्विशोधयेत् ।**
**दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ २६९ ॥**

---

प्रमाणान्तरमूलत्वादस्यास्स्मृतेः तदनुसारेणैव विविच्य व्याकार्या : पदार्थास्तु निगदोक्ता एव ॥ २६७ ॥ २६८ ॥

उक्तन्यायानुसारेण च—**गृहीतश्शंकया चौर्य इत्यादि ॥ २६९ ॥**

---

## सुबोधिनी

यविरोध इति । अन्यहस्तादिति—अन्यस्य चोरादेर्हस्तादस्य गृहे च्युतं वा, भुविखन्यमानायां तत्र पूर्वमन्यैः स्थापितमनिच्छया प्राप्तं वेति परीक्षणं कर्तव्यमित्यर्थः ॥ २६७॥२६८॥

मानुषेण दिव्येन वाऽऽत्मा शोधनीय इत्युपदेशो नोपपन्नः प्रमाणस्य भावगोचरत्वेन

## बालंभट्टी

तत्सूचितमेव शेषमाह—एवम् इति । नानेति बहुव्रीहिः । मात्रपदेन परीक्षाव्यवच्छेदः । चौर्येति—चौर एवायम् इति निश्चयमित्यर्थः । अन्येति—कात्यायनोऽप्येवमेव । अन्यस्य चौर्यस्य हस्तात् परिभ्रष्टं च्युतं भुवि खन्यमानायां अर्थमत एवाकामादनिच्छयोत्थितं प्राप्तमन्यदीयं पूर्वं प्रतिक्षिप्तम् त्यक्तमित्यर्थः । तथा चेदमेवमुत्थानेनापहृतमिति परीक्षा कार्येति भावः। तदाह—यत्नादिति । नारदान्तरमाह—तथेति। यत इति शेषम् । यतो द्विविधा भावः पदार्थः । दृश्यते तस्मादित्याद्यर्थः । द्वैविध्यमेवाऽऽह—असत्याः सत्येति । अत एव विविधा इत्यपि पाठः ॥ २६७ ॥ २६८ ॥

अत एवाऽऽह— एवमिति । उक्तप्रकारेणेत्यर्थः । आत्मास्वरूपं चौर्य इति विष-

---

ख. छ. दुस्थितं । २. क. त्मा शो । ३. ख. गतम् ।

यदि चौर्यशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानं न शोधयाति तर्हि वक्ष्यमाण-धनदापनवधादिदण्डभाग्भवेत्। अतो मानुषेण तदभावे दिव्येन वाऽऽत्मा शोधनीयः। ननु 'नाहं चौरः' इति मिथ्योत्तरे कथं प्रमाणं संभवति—तस्याभावरूपत्वात्। उच्यते। दिव्यस्य तावद्भावाभावगोचरत्वं "रुच्यावाऽन्यतरः कुर्यात्" इत्यत्र प्रतिपा-
5 दितम्। मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न संभवति, तथाऽपि कारणेन संसृ-

स्मृत्यन्तरानुसारेण यथार्हं दण्डकल्पना ॥ २६९ ॥

## सुबोधिनी

निस्स्वरूपेऽभावात्मके तुच्छे मिथ्योत्तरे प्रमाणप्रसराभावादित्यभिप्रायेणाऽऽक्षिपति—ननु नाहमिति। समाधत्ते—उच्यत इति। मानुषमिति–अत्र तथाऽपि कारणसंसृष्टमिथ्योत्तरे मानुषमभावमपि गोचरयत्येव। कथम्, भावरूपमिथ्याकारणसाधनमुखेनेत्यन्वयः। अयं भावः—शुद्धमिथ्योत्तरस्याभावरूपत्वेन यद्यपि तत्र मानुषं प्रमाणं प्रसरत्येवेति। एतदुक्तं भवति—शुद्धमिथ्योत्तरे दिव्यमेव, संसृष्टे तु मानुषमपि सम्भवतीति। एतदेवोदाहृत्य

## बालंभट्टी

यसप्तमी। शङ्कायामन्येति तदाह—यदि चौर्येति। तत् ततः तच्छङ्कातः। लिङर्थो न विवक्षित इत्याह—यदीति। उत्तरार्धमग्रिमस्य विशेषस्य सामान्येनानुवादोऽन्यथापौनरुक्त्यापत्तेः। अत आह—वक्ष्ये इति। अनुपदमेवेति भावः। धनदाने इति पाठः। यद्यपि-दापनं वक्ष्यमाणम्, तथाऽपि तस्य राजधर्मत्वेन चौरानिसृष्टत्वात्तु ततोऽर्थसिद्धस्य ग्रहणम्। अत एव दापनेत्यपपाठः। आदिना तदग्रिमपरिग्रहः। अनुवादत्वादेवाऽऽह—दण्डभाग्भवेदिति। सम्भावने लिङ्। अनुवादफलं प्रदर्शयन् वचनसार्थक्यतात्पर्यार्थं प्रतिज्ञातमाह—अत इति। नन्वयमपि अस्य नार्थः। प्रमाणस्य भावगोचरत्वेन निस्वरूपेऽभावात्मके तुच्छे मिथ्योत्तरे प्रमाणप्रसक्तेरित्याशयेन शङ्कते—नन्विति। उक्तत्वादाह—दिव्येति। साक्षात्तद्विषयतया तथाऽपीति मानुषं कारणं संसृष्टे मिथ्योत्तरे भावरूपमिथ्यात्वे यत् कारणम् तस्य यत्साधनं तन्मुखेन तद्वारा अभावमपि गोचरयत्येवेत्यन्वयः। अत एव पूर्वपक्षे साक्षादित्युक्तम्। तथा च शुद्धमिथ्योत्तरे दिव्यमेव। संसृष्टे तु मानुषमपि

१. थ. द. हं चोर इतीति। २. थ द. इत्यादिता। ३. थ. द. षं पुनरिति। ४. थ. द. माणम् एतदुक्तं भवति प्रसरत्येवेति (?) शु।

ष्टे' भावरूपमिथ्याकारणसाधनमुखेनाभावमपि गोचरयत्येव। यथा 'नाशापहारकाले अहं देशान्तरस्थः' इत्यभियुक्तैर्भाविते चौर्याभावस्याप्यर्थात्सिद्धेः शुद्धिर्भवत्येव॥२६९॥

चौरदण्डमाह—

**चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः।**

यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्यस्तं स्वामिने अपहृतं धनं स्वरूपेण मूल्यकल्पनया वा दापयित्वा विविधैर्घातैर्घातयेत्। एतच्चोत्तमसाहसदण्डप्राप्तियोग्योत्तमद्रव्यविषयम्। न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम्—"साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्र- 5

---

लोप्त्रादिभिश्चौर्ये स्पष्टीकृते—चौरं प्रदाप्यापहृतं घातयेदित्यादि॥

---

## सुबोधिनी

दर्शयति—यथेति। चौर्यशङ्कयाऽभियुक्तः 'द्रव्यनाशकाले चाहं देशान्तरस्थः' इति साक्ष्यादिभिः साधिते चौर्याभावस्याप्यर्थात्सिद्धेः शुद्धिर्भवत्येवेत्यर्थः॥ २६९॥

उक्तार्थे नारदवचनं प्रमाणयति—साहसेषु य एवोक्त इति। साहसेषु साहसाख्येषु कर्मसु त्रिषु उत्तममध्यमाधमरूपेषु यो दण्ड उक्तः स एव स्तेयेऽपि। त्रिषु द्रव्येषु उत्तमसाहसमध्यमसाहसाधमसाहसयोग्येषु[3] द्रव्येष्वनुक्रमात् दण्डो भवतीत्यर्थः। अने-

## बालंभट्टी

पारिस्थेति भावः। एतदेवोदाहरणेन विशदयति—यथा नाशेति। 'द्रव्यनाशापहारयोः कालेऽहं देशान्तरस्थितः' इति चौर्यशङ्कया गृहीतेनाभियुक्तैः साक्ष्यादिभिर्भाविते साधिते चौर्याभावस्याप्यर्थात्—सिद्धेः तस्य शुद्धिरेवेत्यर्थः॥ २६९॥

चारपदं तथापरमित्याह—स्वरूपेणेति। स्मृत्यन्तराविरोधायाऽऽह—एतच्चेति। द्रव्येति—द्रव्यापहारेत्यर्थः। अत्र मानमाह—साहेति। साहसाख्येषु प्रागुक्तेषु त्रिषु

---

१. ख. ऽमिथ्या। २. ख. चारेदण्ड। ३. एतदादि 'साहस' इत्यन्त थ पुस्तके। नास्ति। ४. थ द. यथा ना शापहारकाले। ५. थः द एतदादसाहस इत्यन्तं नास्ति।

मात् ॥'' इति नारदवचनेन वधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापितत्वात् ॥ यत्पुनर्वृद्धमनुवचनम्—''अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् । अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत्॥' इति तदपि महापराधविषयम्॥२६९॥

चौरविशेषेऽपवादमाह—

5 सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥२७०॥

---

स्मृत्यन्तरोक्तदण्डैश्शारीरैश्च नेत्राद्युद्धरणलक्षणैः प्राणहरणशूलारोपणादिभिश्चेत्यभिप्रायः॥

एवमब्राह्मणं ; ब्राह्मणं तु—सचिह्नं ब्राह्मणं कृत्वेत्यादि ॥ २७० ॥

---

## सुबोधिनी

एतदुक्तं भवति—उत्तमद्रव्यापहारे उत्तमसाहसदण्डविधानात् वधस्याप्युत्तमसाहसात्मकदण्डत्वेनोत्तमद्रव्यापहारविषयत्वमेव युक्तमिति ॥

## बालंभट्टी

कर्मसु उत्तममध्यमाधमरूपेषु यो दण्ड उक्तः उत्तममध्यमसाहसरूपः स एव त्रिषु द्रव्येषु उत्तममध्यमाधमरूपेषु स्तेयेऽपि तद्विषये स्तेयाख्ये कर्मण्यपि अनुक्रमानतिक्रमेण दण्डो भवतीत्यर्थः । तथा चोत्तमद्रव्यापहारे उत्तमसाहसदण्डविधानात्वधस्याप्युत्तमसाहसात्मकदण्डत्वेनोत्तमद्रव्यापहारविषयत्वमेव युक्तमिति भावः ॥ तदाह—वधेति । परिहारविषयत्वमेव युक्तमिति भावः। तदाह–वधेति। अन्यविरोधं परिहरति—यत्पुनरिति । अन्येति । बहुव्रीहिः एषां चोराणां वृद्धशातातपोऽप्येवम आहेति– वधस्येति भावः । महत्यपराधे इति—तथा च गौतमः–''न शारीरो ब्राह्मणस्य दण्डकर्मवियोगविख्यापनविवासनाङ्ककरणानि अवृत्तौ प्रायश्चित्ती सः'' इति। शारीरस्ताडनच्छेदनरूप । कस्तर्हि दण्ड इत्याह—कर्मेत्यादि ; कर्मवियोगः मन सह सर्वं क्रियानारंभः विख्यापनं डिण्डिमकेनपरिभ्रामणं स्तेयलक्षणं स्तेयप्रकाशनार्थं विवासनं देशान्निष्कासनं अङ्ककरणं श्वपदेनाङ्कनं

---

१.—१४. २१. । २. क दण्डयेत् ' इत्येतन्मह्यं ।

ब्राह्मणं पुनश्चौरं महत्यप्यपराधेऽपि न घातयेत्, अपि तु ललाटेऽङ्कयित्वा स्वदेशान्निष्कासयेत्। अङ्कनं च श्वपदाकारं कार्यम्। तथा च मनुः—"गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः। स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्॥" इति[2]। एतच्च दण्डोत्तरकालं प्रायश्चित्तमचिकीर्षतां द्रष्टव्यम्; यथाऽऽह मनुः—"प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम्॥" इति[4]॥ २७०॥ 5

चौरादर्शने अपहृतद्रव्यप्राप्त्युपायमाह—

घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते।

विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके॥ २७१॥

---

सचिह्नं श्वपदाद्यङ्कनम्। स्पष्टमन्यत्॥ २७०॥

प्रयत्नेनान्विष्यमाणघातचोराद्यनुपलब्धौ तु कथमिति—घातितापहृते दोषो ग्रामभर्तुरनिर्गते॥

पादादौ प्रयातचिह्ना इति शेषः॥

विवीतभर्तुस्तु पथि

विवीताद्युपकंठ इति शेषः। तुशब्दोऽन्यस्यापि यथा सन्निधानं दोषवत्त्वज्ञापनार्थः॥

चोरोद्धर्तुरवीतके॥ २७१॥

---

### सुबोधिनी

एतच्च दण्डोत्तरकालमिति,—एतच्छ्वपदाकारमङ्कनम्॥ २७०॥

### बालंभट्टी

आवृत्तौ, अन्येन प्रकारेण जीवनासंभवेन यदि स्तेयं करोति तदा तस्य प्रायश्चित्तमात्रं न दण्डः इति तदर्थः। वक्ष्यमाणमनोराह—ललाटे इति। आकार शब्दः सदृशवाची विशेषमाह— एतच्चेति। श्वपदाकारमङ्कनं चेत्यर्थः। अनेन दण्डप्रायश्चित्तयोः क्रमः सूचितः। पूर्वं ब्राह्मणक्षत्रियविशः। यथोदितं यथा शास्त्रविहितं प्रायश्चित्तमित्यन्वयः॥ २७०॥

---

१. ख. महत्यपराधे। २.—९. २३७.। ३. ख र्षतो। ४—९. २४०.। ५. त एतच्चेति।

यदि ग्राममध्ये मनुष्यादिप्राणिवधो धनापहरणं वा जायते तदा ग्रामपतेरेव चौरोपेक्षा[1] दोषः; तत्परिहारार्थं स एव चौरं गृहीत्वा राज्ञेऽर्पयेत्। तदशक्तौ हृतं धनं धनिने दद्यात्[2] यदि चौरपदं स्वग्रामान्निर्गतं न दर्शयति। दर्शिते पुनस्तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चौरं धनं वाऽर्पयेत्। तथा च नारदः—"गोचरे यस्य मुष्येत[3] तेन चौरः प्रयत्नतः। ग्राह्यो दाप्योऽथवाऽशेषं पदं यदि न निर्गतम्॥ निर्गते पुनरेतस्मान्न चेदन्यत्र पातितम्। सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत्॥"[4] इति। विवीते त्वपहारे विवीतस्वामिन एव दोषः। यदा त्वध्वन्येव तद्धृतं भवत्य-

सुबोधिनी

तद्विषयेति— तद्देशाधिपति रित्यर्थः। चौरं धनं चेति — चौरमर्पयेत् तदशक्तौ धनमित्यर्थः। अथवाशेषमिति — अशेषमिति पदविभागः।

बालंभट्टी

ग्रामेत्युक्तेराह—यदि ग्रामेति। घातितापहृतयोर्भावयोर्विकल्प इत्याह — मनुष्येति। सर्वं वाक्यमति न्यायेनाऽऽह—एवेति। तत्प्रयुक्तदोष इत्यर्थः। प्रतिज्ञातं तात्पर्यार्थमाह— तत्परीति। अनिर्गते सति इति तत्र प्रतियोगी लक्ष्योऽर्थ इत्याशयेन तात्पर्यार्थं तद्व्याचष्टे—तदशेति। तद्विषयेति—तद्देशाधिपतिरित्यर्थः। एतेन ग्रामपतिनिरासः। चौरं धनं वेति—आदौ चौरमर्थं, द्वितीये तु तदशक्तौ धनमित्यर्थः। गोचरे विषये ग्रामादिरूपे ग्राह्यः ग्रहणीयः पुनस्तं तथैव एतस्मात्तद्विषयात्। नेति—उभयं कुर्यादिति शेषः। निर्गते तु पदे दद्यादिति पाठान्तरम्। तमिति—यदितदेति शेषः। यदि तत्पदमन्यत्र पातितं तदा यथासंभवं सामन्तादीन् दापयेदित्यर्थः। अत एव चेदन्यत्रेति पाठान्तरम् एतेन तद्व्यावृत्तिः। उत्तरार्धमाह— विवीते त्वित्यादिना। प्रचुरतृणकाष्ठो वक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीतः इति स्वामिपालप्रकरणे उक्तम्। प्राग्वद्विवीते इत्यर्थाल्लब्धम् अथोत्तरामार्गाविवीतकयोर्विकल्पोऽर्थात्; अत एव चौरोद्धर्तुरित्यस्यार्थद्वयमित्याह— यदा त्विति,

१. क. छ. पेक्षया दोषः। २. ख. धनं चापि। क. वा दापयेत् तथा। ३.— लुप्येत। ४. परि १६.—७.। ५. अ. द. तद्विषयाधिपतिरिति।

वीतके वा विवीतादन्यत्र क्षेत्रे तदा चौरोद्धर्तुर्मार्गपालस्य दिक्पालस्य वाऽपराधः ॥ २७१ ॥

किं च—

स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ २७२ ॥ 5

यदा पुनर्ग्रामाद्बहिः सीमापर्यन्ते क्षेत्रे मोषादिकं भवति तदा तद्ग्रामवासिन एव दद्युः यदि सीम्नो बहिश्चौरपदं न निर्गतम्। निर्गते पुनर्यत्र ग्रामादिके चौरपदं

पूर्वोक्ताद्यभावे चोरोद्धर्तुरेव दोषः। सर्वथा चापहृतं द्रव्यं प्रयत्नेनान्विष्य राज्ञा लब्धव्यमित्यभिप्रायः। यद्वाऽपहृते द्रव्ये घातिते च सद्रव्यके चोरे द्रव्यानुपलब्धौ कस्य दोष इत्यपेक्षिते ग्रामभर्तुरनिर्गत इत्यादिसमानम् ॥ २७१ ॥

असंनिहिते तु ग्रामभर्तरि— स्वसीम्नि दद्याद्ग्रामस्त्वित्यादि ॥२७२॥

## सुबोधिनी

विवीते त्वपहार इति—प्रचुरतृणकाष्ठो रक्षमाणः परिगृहीतो भूप्रदेशो विवीत इति स्वामिपालप्रकरणेऽभिहितो द्रष्टव्यः ॥ २७१ ॥

[1]विकल्पेनेति—अपहृतभूप्रदेशाद्ये ग्रामाः संनिहितास्त एव दद्युर्नतु पुनः पञ्चग्राम्येव दशग्राम्येवेत्येवं नियम इति नियमनिवृत्त्यर्थम्। अथवेति विकल्पवचनमित्यर्थः। यदीति[2]—

## बालंभट्टी

अविवीतके इत्यस्यार्थो विवीतादिति। यथासंख्येनाऽऽह-मार्गेति ॥ २७१ ॥

स्वसीम्नीत्यस्यार्थमाह—सीमेति। ग्रामाद्बहिरित्यनेन ग्रामपतिव्यवच्छेदः। अत एव मग्रेऽपि। आदिना वधः।ग्रामपदं जने लाक्षणिकमित्याह—तद्ग्रामेति।पदं वेति-व्यवस्थितविकल्प इत्याह— यदीत्यादि। आदिना विवीतादिपरिग्रहः। आदिना धनार्पणादि। इदमेकग्रा-

१. ख वा दोषः। २. थ. द. विकल्पवचनं तु यथा प्रत्यासत्तीति। ३. थ. द. न पुनः। ४. थ. द. यदि तस्मिन् दाप्येति।

प्रविशति स एव चौरार्पणादिकं कुर्यात् । यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिः-
प्रदेशे घातितो मुषितो वा चोरपदं च जनसंमर्दादिना भग्नं तदा पञ्चानां ग्रामाणां
समाहारः पञ्चग्रामी दशग्रामसमाहारो[1] दशग्रामी वा दद्यात् । विकल्पवचनं तु यथा
तत्रत्यास्त्यपहृतधनप्रत्यर्पणादिकं कुर्यादित्येवमर्थम् । यदा त्वन्यतोऽपहृतं द्रव्यं दाप
5 यितुं न शक्नोति तदा स्वकोशादेव राजा दद्यात्—"चौरहृतमवजित्य यथास्थानं
गमयेत्, स्वकोशाद्वा दद्यात्" इति गौतमस्मरणात् । मुषितामुषितसन्देहे मानुषेन दि-

सुबोधिनी

चोर इति गृहीते तस्मिन् पुरुषे धनं दाप्यमाने सति मोषे चौर्ये यदि सन्देहो भवेत्,

बालंभट्टी

मादिपरं; उत्तरार्द्धं हि तत्समूहपरमित्याह—यदा त्विति। एकवचनादाह—क्रोशमात्रादिति तत्तत्
ग्रामादित्यादिः। घातित—इत्यादिप्रथमान्तपाठः। प्रागुक्ताविषयत्वायाऽऽह—चौरेति। आर्थि-
कविकल्पमाह—वादद्यादिति, ग्रामसमूहसंख्याया अनियतत्वादिदमपि दिक्प्रदर्शनम्
अत एव यथासंभवं व्यवस्थितविकल्पोऽयम्। न चेदेवं अथवापुनरिति व्यर्थम्, उक्तरीत्याऽनि-
यतपक्षद्वयस्यैवाभावेन । तत्परतयाऽपि तस्यात्यन्तमनुपयोगादित्यत आह – विकल्पेति ।
प्रत्यासत्तिमनतिक्रम्येत्यव्ययीभावः । तत्रेति पाठे तयोः प्रेत्याद्यर्थः । अप-
हाराधारभूप्रदेशाद्ये ग्रामाः । प्रत्यासन्नास्ते एव दधुर्न तु पञ्चग्रम्येव दशग्राम्येवेत्येवं निय-
मनिवृत्त्यर्थमथवेति विकल्पवचनमित्यर्थः। विशेषमाह—यदा त्विति । अन्यतः, चोरग्रामाधि-
पादितः दापनेऽन्वयः । अवजित्य परावर्त्यपरीक्षणोत्तरमपि दापनसमये कारणान्तरवशात्
संदेहे विशेषमुक्तरीत्यैवाऽऽह—मुषितेति। यदीति—तस्मिन् उक्तलिङ्गवशाच्छंकया ग्रहणोत्तरं
परीक्षिते चौर इति निश्चित्य गृहीते पुरुषे धनं दाप्यमाने सति यदिमोषे चौर्ये सन्देहो-
भवेत्, कारणान्तरतः तदा बन्धुभिः साधयेत्। सन्देहनिवृत्तिं कुर्यात्। अथवा शपथं दाप्यः
स इत्यर्थः। यद्यप्यत्रादौ दिव्यमुक्तं, तथाऽप्यस्य क्रमाबोधकत्वात्तयोः क्रमस्य पूर्वं स्पष्टमुक्त-
वत् तथैवेति भावः। अत एव प्रतिज्ञायां तथैवोक्तं शुद्धमिथ्योत्तरं तदसंभवादस्यैवावश्य

१. ग. ज. . माहारो वा दद्यात् । २. ख. ग. यथा तत्रत्यास । ३.—१०. ४६—७. ।

ऽयेन वा निर्णयः कार्यः—"यदि तस्मिन् दाप्यमाने भवेन्मोषे तु संशयः। मुषितः शपथं दाप्यो बन्धुभिर्वाऽपि साधयेत् ॥" इति वृद्धमनुस्मरणात् ॥२७२॥

अपराध[1]विशेषेण दण्डविशेषमाह—

**बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः।**
**प्रसह्य घातिनश्चैवशूलानारोपयेन्नरान् ॥ २७३ ॥**

5

बन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च नरान् शूलनारोपयेत् । अयं च वधप्रकारविशेषोपदेशः — कोष्ठागारायुधागारदेवतागारभेदकान् । हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन् ॥" इति मनुस्मरणात् ॥ २७३ ॥

---

स्वशब्दो धनमित्यर्थः । यत्र द्विपदचतुष्पदादि अनवरतं संचरति सा स्वसीमा। स्पष्टमन्यत् ॥ २७२ ॥

चोरादिविवादेषु तु वधप्रकारमाह—बन्दिग्राहांस्तथेत्यादि ॥ २७३ ॥

## सुबोधिनी

तदा शपथं दाप्यः । अथ वा बन्धुभिर्धर्मबन्धुभिः साक्ष्यादिभिः साधयेत् सन्देहनिवृत्तिं कुर्यादित्यर्थः ॥ २७२ ॥

ननु "शूलानारोपयेन्नरान्" इत्यनेन बन्दिग्राहादीनां शूलारोपणमात्रं प्रतीयते न वधः। ततश्च "श्रोत्रियायोपकल्पयेत्" इत्यत्र स्पर्शेन यथा विधिसिद्धिः, तद्वदत्रापि शूलारोपणमात्रेणैव विधिसिद्धेस्तन्मात्रमेव कृत्वोत्सारणीया न वध्याः स्युरित्यत आह अयं चेति ।

## बालंभट्टी

कत्वमभिप्रेत्य मुनिना तथोक्तं, एतदभिप्रायेणापि दिव्यस्येति प्रागुक्तं व्याख्यात्रेति बोध्यम्। तथाशब्दः किंचेत्यर्थे आद्ये बोध्यः ॥ २७२ ॥

बन्दिग्राहादिकं चोरविशेषणमित्याह—बन्दीति। आदिना वाजिकुंजरहारिग्रहणम्। प्रसह्येत्याद्यर्थो बालवानुक्तां श्चेदिति तथैव पाठः। नरानित्यस्य व्याख्या-चौरानिति।बन्दिनिरोधस्थानं ग्राहयन्ति ते बन्दिग्राहाः। ननु शूलानारोपयेदित्यनेन तेषां तावन्मात्रं प्रतीयते न वधः; तथा च "श्रोत्रियायोपकल्पयेत्" इत्यत्रेवात्रापि तावन्मात्रेणैव विधिसिद्धे तन्मात्रमेव कृत्वा पुनरुत्तरणं कार्यं न वध इत्यत आह— अयं च वधेति। अत्र मानमाह— अग्न्यगारेति हेतुश्चेति पाठः। अविचारयन्—अविलम्बयन्। अनेन तेषामपि एक देशानुमति

---

१. ख. वोऽपिदापयेत् । २. क. विशेषे दण्ड । ३.—आ० १५६. । ४. थ द. तथा शू। ५. थ. द. कृत्वा पुनरुत्तारणे। ६. द. अयं च वधप्रकारेति. थ. च वधप्रकारेण। ७.—९. २८०.।

किं च—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥ २७४ ॥

वस्त्राद्युत्क्षिप्य योऽपहरतीत्युत्क्षेपकः; वस्त्रादिबद्धं स्वर्णादिकं विस्रस्योत्कृत्य वा
5 योऽपहरत्यसौ ग्रन्थिभेदकः ; तौ यथाक्रमं करेण सन्दंशसदृशेन तर्जन्याङ्गुष्ठेन[1] च
हीनौ कार्यौ। द्वितीयापराधे पुनः करश्च पादं च करपादं तच्च तदेकं च करपादैकं तद्धीनं

---

तथाशब्दः प्रकारार्थः; नरवचनमब्राह्मणार्थं; स्पष्टमन्यत् ॥ २७३ ॥

द्रव्यादिविशेषापेक्षया तु—उत्क्षेपकग्रन्थिभेदावित्यादि ॥ २७४ ॥

उत्क्षेपकः पटाक्षेपकः, ग्रन्थिभेदको ग्रन्थिभेत्ता ; उभावपिकरसंदंशहीनकौ प्रथमेऽ-

---

सुबोधिनी

"अग्न्यागारे" इति मनुवचनेनैव तेषामपि वधसिद्धौ केन प्रकारेण वध इत्याकाङ्क्षायां शूल
रोपणरूपप्रकारविशेषोऽस्मिन् वचनेऽभिधीयत इत्यर्थः ॥ २७३ ॥

तौ यथाक्रममिति । उत्क्षेपकः करेणहीनः ग्रन्थिभेदकः तर्जन्यङ्गुष्ठेन हीन इति

बालंभट्टी

द्वारा वधे सिद्धे केन प्रकारेण स इति विशेषाकाङ्क्षायां शूलारोपणरूपप्रकारविशेषो मूले
उक्त इति भावः ॥ २७३ ॥

संदंशपरं गौणलाक्षणिकमित्याह—संदंशेति । तर्जेति । मध्यमपदलोपी समासः ।
इदमर्थात् प्रथमापराधविषयम् । अत एवाऽऽह— द्वितीयापराधे पुनरिति पादैकमिति ।
यद्यपि पूर्वकालैकेति समासे वपरीत्यमुचितं, तथाऽपि बाहुलकान्मयूरव्यंसकादित्वा-
द्वा निर्वाहो बोध्यः । प्रागवत् प्रतीयमानयथासंख्यस्य वक्ष्यमाणमन्वनुरोधेन निरासाय

---

१. ख. तर्जन्याङ्गुष्ठेन च ।

ययोस्तौ करपादैकहीनकौ कार्यौ । उत्क्षेपकग्रन्थिभेदकयोरेकमेकं करं पादं च छिन्द्यादित्यर्थः। एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम्—"तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः।" इति नारदवचनात् । तृतीयापराधे तु वध एव ; तथा च मनुः —"अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हति॥" इति जातिद्रव्यपरिमाणतो मूल्याद्यनुसारतो दण्डः कल्पनीय इति ॥२७४ ॥ 5

जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह—

**क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।**
**देशकालवयःशक्ति सञ्चिन्त्य दण्डकर्मणि ॥ २७५ ॥**

क्षुद्राणां मध्यमानामुत्तमानां च द्रव्याणां हरणे सारतो मूल्याद्यनुसारतो दण्डः 10

---

पराधे कार्यौ। करसंदंशोऽङ्गुलयः तद्धीनाः। यद्वा करसंपुटः करसंदंशः तद्धीनौ, अन्यतरहस्तच्छेदनमित्यर्थः। द्वितीये त्वपराधे त्वेको हस्तः पादश्च। स्पष्टमन्यत् ॥ २७४ ॥

यश्चायमुक्तश्शारीरो दण्डः यश्च स्मृत्यन्तरोक्तो धनदण्डः तत्र सर्वत्र साधारणोऽयं न्यायबीजसंक्षेपः—— **क्षुद्रमध्यमहाद्रव्येत्यादि ॥ २७५ ॥**

---

सुबोधिनी

विवेकः। प्रथमे ग्रहे इति—प्रथमग्रहे ग्रहणे प्रथमचौर्ये इति यावत् ॥ २७४ ॥

परिग्रहविनियोगेति—ब्राह्मणपरिगृहीतायागोंहरणेऽधिको दण्ड इति ब्राह्मणप_

बालंभट्टी

आह—उत्क्षेपकेति । विशेषमाह—एतदपीति । अपिना पूर्वसमुच्चयः । द्रव्येति—तदपहारेत्यर्थः । तत्र मानमाह—तदङ्गेति । न्यूनतां निराचष्टे—तृतीयेति। अङ्गुली इति —द्विवचनं ; तदयं च तर्जन्यंगुष्ठात्मकमेकसंभवेन संदंशपदेन तस्यैव ग्रहणात् । प्रथमे इति—प्रथमे ग्रहणे इत्यर्थः । प्रथमचौर्ये इति यावत्। हस्तेति—अत्रेतरेतरद्वन्द्व आर्षः । जातिं च द्रव्यं च परिमाणं चेति द्वन्द्वः, ततो यन्मूल्यादि तदनुबोधेन इत्यर्थः । अनुक्तदण्डस्थले इति भावः । इतीति इत्यन्यत्रोक्तत्वादित्यर्थः ॥ २७४ ॥

इदमप्युपलक्षणमित्याह—जातीति । जातिश्च द्रव्यं च परिमाणं च परिग्रहश्च वि-

---

१.—१४. ८. । २. क. हस्तपादौ तु तृ० । ३.—९. २७७. । ४. द. ग्रह इति प्रथम ग्रहणे ।

कल्पनीयः। क्षुद्रादिद्रव्यस्वरूपं च नारदेनोक्तं—"मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् । शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥ वासः कौशेयवर्जं च गोवर्जं पशवस्तथा। हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि॥ हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः । देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम ॥"[1] त्रिप्रकारेष्वपि
5 द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमस्तेनैव दर्शितः—"साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्॥"

## सुबोधिनी

रिग्रहोऽधिकदण्डकारणम् । तथा सा गौर्होमाय यद्यग्निहोत्रे विनियुक्ता, तस्या हरणे ततोऽप्यधिको दण्ड इति विनियोगोऽप्यधिकदण्डकारणम् । एवंविधपरिग्रहविनियोगयोरभावे तावेव न्यूनदण्डकारणे इत्येवं बोद्धव्यम् । "साहसेषु य एवोक्तः" इत्यनेन नारदवचनेन क्षुद्रमध्यमोत्तमद्रव्यापहारेष्वविशेषेण यथाक्रमं प्रथममध्यमोत्तमसाहस-

## बालंभट्टी

नियोगश्च वयश्च शक्तिश्च गुणश्च देशश्च कालश्च तदादीनां स्मृत्यन्तरोक्तानामित्यर्थः । तत्र ब्राह्मणपरिगृहीताया गोर्हरणेऽधिको दण्ड इति ब्राह्मणपरिग्रहोऽधिकदण्डकारणम् । तथा यदि सैवाग्निहोत्रार्थदोहाय विनियुक्ता, तदा तस्या हरणे ततोऽप्यधिकदण्डकारणमिति विनियोगोऽप्यधिकदण्डकारणम् । एवंविधपरिग्रहनियोगयोरभावे तावेव न्यूनदण्डकारणे इति बोध्यम्। महदर्थः—उक्तेति; बहुवचनान्तानां द्वन्द्व इति भावः। उत्तरार्द्धं व्याख्यातुमेतद्विषयं विवेचयितुं चोपयुक्तमाह—क्षुद्रादीति । मृद्भाण्डेति—यथा अत्र प्रयोगसिद्धिर्भवति, तथा द्वन्द्वाः कार्याः । एवं हिरण्यरत्नेत्यत्रापि मृद्भाण्डं मृन्मयं, शमीधान्यं माषादि "माषादयः शमीधान्ये शूकधान्ये यवादयः।"[2] इत्यमरः । कृतान्नं साधितान्नं तदन्नादि । वर्जमिति—णमुल्। वर्जयित्वेत्यर्थः। लोहं च रजतादिकम्। मध्यमिति–द्रव्यमुदाहृतमित्यस्यानुषङ्गः। अत्र सर्वानुषङ्गो यथासंभवम्। व्रीहि इति—बहुवचनान्तयोः"विभाषावृक्ष"[3] इति पाक्षिक इतरेतरद्वन्द्वः।गोगजेति–एवं च गोवर्जम् इत्यत्र गोपदमनयोरप्युपलक्षणमिति भावः।देवेति–अभ्यर्हितत्वात्पूर्वनिपातश्च। द्रव्यं–द्रव्याणि च। एतत् प्रसङ्गादविबोधायाऽऽह- त्रीति। औत्सर्गिकः, सामान्यविहितः।तेनैव,-नारदेनैव।तच्चानु-

---

१.—१४. १४—६. । २.—१४ २२. । ३. द्वि० वै० ५९९.। अ० २. ४. १२.।

इति ॥ मृन्मयेषु मणिकमल्लिकादिषु गोवाजिव्यतिरिक्तेषु च महिषमेषादिपशुषु ब्राह्मणसंबन्धिषु च कनकधान्यादिषु तरतमभावोऽस्तीति[2] उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः । तत्र च[3] दण्डकर्मणि दण्डकल्पनायां तद्धेतुभूतं

## सुबोधिनी

दण्डप्राप्तौ विशेषप्रापकं मूलवचनं पूर्वार्धं तात्पर्यतो व्याचष्टे — मृन्मयेष्विति । अत्र मृन्मयेष्विति[4] क्षुद्रस्य[5] द्रव्यस्योपलक्षकं गोव्यतिरिक्तेष्विति मध्यमस्य ब्राह्मणसम्बन्धिष्विति उत्तमस्येति विवेकः । "मूल्याद्यनुसारेण दण्डः कल्पनीयः" इत्युक्तम् । तत्राऽऽदिशब्दवाच्यान् प्रदर्शयितुं मूलवचनस्योत्तरार्धं व्याचष्टे — तत्र च दण्डकल्पनायामिति । नन्वत्र वचन उपात्ता देशकालवयश्शक्तस्य एव किं दण्डकल्पनायां हेतव इत्याशङ्क्य, नैवम्, अपि तु हेत्वन्तराण्यप्यनेन देशादिकेनोपलक्ष्यन्त इत्याह

## बालंभट्टी

पदमेव व्याख्यातम्। नन्वेवं मूलविरोधस्तस्येति मूलस्य का गतिरत आह—मृन्मयेष्विति ; मणिकादयः, तत्पात्रविशेषाः । इदं क्षुद्रद्रव्यमात्रोपलक्षणं। गोवेति—इदं मध्यद्रव्यमात्रस्य अभ्यर्हितत्वान्महिषस्य पूर्वनिपातः । एवं कनकेत्यत्रापि । इदमप्युत्तमद्रव्यमात्रस्योपलक्षणम्। तरतमभावोऽस्तीति पाठः। तारतम्येति पाठे स्वार्थेष्यन्। यद्वा तारतम्यस्य-अवान्तरवैलक्षण्यस्य, भावः सत्ता अस्तीत्यर्थः । प्रत्येकमिति शेषः । अत एव त्रिष्वपि मणिकादीत्यादिना प्रत्येकमुत्तमाधमयोर्ग्रहणं कृतम्। उच्चावचेति — यद्यप्ययं मयूरव्यंसकादिस्तत एवोदक्च। अवाक्चोच्चावचमित्यभियुक्तैर्व्याख्यातम् ; तथाऽप्युच्चनीचमित्यर्थे स इति मतेनेदं तत्र लक्षणमेवेति भावः । तथा च नारदादितो यथाक्रमं तेषु त्रिषु त्रिविधोक्तरूपदण्डस्याविशेषेण प्राप्तौ अवान्तरतारतम्येन तद्विशेषाकाङ्क्षायां विशेषबोधकं मूलवचनपूर्वार्द्धमिति । अयं तात्पर्ये इति आशयः । मूल्यादिति— आदिशब्दं संग्राह्य प्रदर्शकमूलोत्तरार्द्धं व्याचष्टे—तत्र चेति। तस्यां पूर्वोक्तायामित्यर्थः । दण्डकर्मणीति मौलस्य व्याख्या—दण्डकल्पनायामिति ।

१.—१४. २१. । २. ग. ज. तारतम्यभावोस्तीति । ३. क. तत्र दण्ड । ४ थ. द. 'क्षु माणिमल्लिकादिष्विति' । ५. त. 'द्रव्यो प' ।

देशकालवयःशक्तीति सम्यक् चिन्तनीयम् । एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणम् । तथाहि। "अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य। द्विगुणोत्तराणीतरेषां प्रतिवर्णम्। विदुषोऽतिक्रमे दण्डभूयस्त्वम्" इति।अयमर्थः।किल्बिषशब्देनात्र दण्डो लक्ष्यते। यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्तृकेऽपहारे अष्टगुण आपादनीयः।
5 इतरेषां पुनर्विट्क्षत्रब्राह्मणानां विदुषां द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतु-

## सुबोधिनी

—एतच्चेति । जात्यपेक्षया गुणापेक्षया वा दण्डविधिं दर्शयति—तथाह्यष्टापाद्यमिति । विट्क्षत्रियब्राह्मणानामिति—अत्र विदुषामित्येतद्विट्क्षत्रियादिविशेषणम् । शूद्रत्वादि-जात्यपेक्षया विद्वत्त्वरूपगुणापेक्षया च दण्डविधानमिति जातिगुणापेक्षा । ननु "हरतोऽभ्यधिकं वधः" इति मनुना वधदण्डोऽभिहितः । वधशब्देन च ताडनादिप्राणवियोजनान्ता

## बालंभट्टी

बीजमाह—तद्धेत्विति । शक्तीति—अनेन मूलेऽपि समाहारद्वन्द्वः सूचितः ; पूर्वानिपातः प्राग्वत्।समर्थमाह—सम्यगिति । नन्वेत्रैते एव चत्वार उक्ताः; अवतरणे त्वन्येऽप्युक्ता इति विरोधोऽत आह—एतच्चेति । इत्यादिनां तेषामपि आदिना विनियोगादिपरिग्रहः । तथा चात्रोपात्त एव दण्डकल्पनायां हेतव इति नु ; किन्तु उपलक्षणतया स्मृत्यन्तरोक्तं अन्यपीति भावः । तदेव स्मृत्यन्तरानुज्ञातमनुक्रमेण दर्शयति—तथा हीत्यादिना । तत्र तावद्वर्णरूपजात्युपेक्षया च स्तेयविशेषेणदण्डाविशेषबोधकं वासिष्ठमाह—अष्टापाद्यमिति । अत्र दण्डानुक्तेरसंबद्धत्वनिरासायाऽऽह—अयमर्थ इति । लक्ष्यते इति—तस्य तत्कार्यत्वात् । विदुष इति उपात्तं शूद्रस्य । एवमेवाग्रेऽपि विशेषणमित्याह — विदुषामिति । विशेषणं अतिक्रमे इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयस्तदाह —सविद्वादिति । अष्टन्शब्दोऽपि लाक्षणीक इत्याह —अष्टगुण इति । विदुष इति वचनविपरिणामेनविदुषामिति स्तेये प्रतिवर्णमिति शेषः। द्विगुणोत्तेति । उत्तरमुत्तर द्विगुणमित्यर्थः । मयूरेति समासः । तदर्थमाह—षोडशेति

१. ख. परिणामं । २. ख. अष्टपाद्यं । ३. गौतमः १२. १५—७. । ४. ग. विट्-छूद्र । ५. ख. ग. ब्राह्मणादीनां । ६. थ. द. 'तच्चजाति द्रव्येति ।' ७. त. तथाविडिवि ।

ष्षष्टिगुणा दण्डा आपादनीयाः—यस्माद्विद्वच्छूद्रकर्तृकेऽपहारे दण्डभूयस्त्वम्। मनुनाऽप्ययमेवार्थो दर्शितः—"अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् । षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥ ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् । द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः ॥" इति ॥ तथा परिमाणकृतमपि दण्डगुरुत्वं दृश्यते; यथाऽऽह मनुः—"धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्याधिकं वधः। शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥" इति ॥ विंशतिद्रोणकः कुम्भः। हर्तृह्रियमाणस्वामि-

## सुबोधिनी

व्यापाराः कथ्यन्ते। ते सर्वत्र समुचिता एव प्रयोक्तव्या इत्यत आह—हर्तृह्रियमाणेति। हर्तुर्गुणापेक्षया ह्रियमाणस्य द्रव्यस्य स्वामिनो गुणापेक्षया चेत्यर्थः।—द्विजे इति—क्षीणवृत्तिः क्षीणपाथेयः अध्वगः पथिकः, द्विजो द्विजातिः, अध्वगः क्षीणवृत्तिरिति

## बालंभट्टी

उक्तं विदुषोऽतिक्रमे इत्यादि हेतुपरमित्याह—यस्मादिति। अनेन यत इति शेषः सूचितः। तत्र इतिरर्थसमाप्तौ। अपिना येन दोषेण शूद्रस्य दण्डो भवति धर्मतस्तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवतीति कार्यसमुच्चयः। अष्टेति—अर्थः प्राग्वत् एवं पद्यैकदेश एव पूर्वोत्तरयोरपि संबध्यते। तद्दोषेत्यस्य तु सर्वत्र पद्यद्वये संबन्धः। तस्य वस्तुनो दोषगुणयोर्वेदने ज्ञाने सतीत्यर्थः। एवं वासिष्ठे विद्वत्ताऽप्येतद्विषय एव। तदर्थमेव मनूक्तिः। तद्दोष गुणविद्विष इति तत्र पाठान्तरं कल्पतर्वादिसंमतम्। गुणविद्विष इति त्वपपाठः। अर्थासंगतेः ब्राह्मणस्य। तत्रापि गुणाद्यपेक्षया पक्षत्रयमाह—ब्राह्मणस्येति। अत एव पूर्वत्रैवकारः सफलः। तथा चायं दण्डः शूद्रत्वादि जात्यपेक्षो विद्वत्त्वरूप गुणापेक्षश्चेति तयोरत्र हेतुत्वमिति भावः। द्रव्यपरिमाणेऽपि भिन्नमिति सूचयन् व्युत्क्रमेणाऽऽह—तथा परीति। धान्यामिति—दशसंख्येभ्यः कुम्भोऽभ्यधिकं धान्यं हरतो वधः। शेषेति पाठः। अपिस्त्वर्थे। शेषे त्विति पाठान्तरम्। एकस्मादारभ्य दशकुंभापेतहरणे अपहृतादेकादशगुणं दण्डो दाप्यः। स्वामिनश्चापहृतं धनं दाप्य इत्यर्थः। कुंभोऽत्र न प्रसिद्धः, किन्तु परिमाणविशेष इत्याह—विंशतीति।

---

१. क. यस्माद्विट्छूद्र। २.—८. ३३७—८.। ३.—३२०.। ४. क. ख. हर्तुर्ह्रिय।
४- द. 'याचेत' ५. थ द. 'जोऽध्वगः क्षीणवृत्तिरिति.

गुणापेक्षया सुभिक्षदुर्भिक्षकालापेक्षया[1] वा ताडनाङ्गच्छेदनवधरूपा दण्डा योज्याः। तथा संख्याविशेषादपि दण्डविशेषो रत्नादिषु । "सुवर्णरजतादीनामुत्तमानां च वाससाम्। रत्नानां चैव सर्वेषां शतादभ्यधिके वधः॥ पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्॥" इति[2]॥ तथा द्रव्यविशेषादपि। "पुरुषाणां कुलीनानां नारीणां च[3] विशेषतः। रत्नानां[4] चैव सर्वेषां हरणे वधमर्हति॥" अकुलीनानां तु दण्डान्तरं "पुरुषं हरतो दण्ड उक्त उत्तमसाहसः। स्त्र्यपराधे तु सर्वस्वं कन्यां तु हरतो वधः॥"[5]इति। क्षुद्रद्रव्याणां[6] तु माषन्यून[7]मूल्यानां

बालंभट्टी

द्विपलशतं द्रोणः। नन्वत्र वधदण्ड उक्तः। स च ताडनादिप्राणप्रेक्षया प्राणवियोजनान्तव्यापाररूपस्तथा सर्वत्र समुच्चया पत्तिरत आह—हर्तृद्रव्येति। हेतुगुणापेक्षया ह्रियमाणस्य

द्रव्यस्य स्वामिनो गुणोपक्षाचेत्यर्थः। परिमाणशब्दः परिच्छेदकमात्रपर इत्याह—तथासंख्येति। तत्रादौ नारदमाह—सुवर्णेति। सर्वेषां साधारणानां अभ्यधिकमिति पाठः। एवं प्रागपि मनुमामाह—पंचेति। तथा धरितमेयानां शतादभ्यधिकं वधः। सुवर्णरजातादीनामुत्तमानां च वाससाम्॥" इति॥ पूर्वमितः धरितमेयानां तुलापरिच्छेद्यानां पूर्वोक्तानामेव पंचाशतोऽभ्यधिके हस्तच्छेदः। अत्र शतादि पलसंबन्धि बोध्यं, शेषेषु एकपलादारभ्य पंचाशत्पर्यान्तमपहारेऽपहृतद्रव्यमूल्यादेकादशगुणं दण्डं एकं दापयेदित्यर्थः। स्वामिने वस्तुदानं तु समानमेवेति भावः। तदपि दण्डगुरुत्वं दृश्यते इत्यस्यानुषङ्गः। मनुमाह—पुरुषाणामिति। मुख्यानां चैव रत्नानाम् इति सर्वसम्मतस्तृतीयपादे पाठः। रत्नानां चैव सर्वेषां इत्यपपाठः। अत एव प्रागुक्तनारदविरोधोन अत एव च महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां महाकुलप्रसूतानां श्रेष्ठानां च रत्नानां वज्रवैडूर्यादीनामपहारे वधमर्हतीति तद्व्याख्यातारः। कुलीनानामित्युक्तेः फलमाह—अकुलीति। स्त्रीणां पुरुषाणां चेत्यर्थः। नारदमाह—पुरुषमिति—अपराध तु तदपहारे सर्वस्वं तदपहारो दण्डः प्रोक्तः। स्त्र्यपहारे तु सर्वस्वमिति पाठान्तरम्। तत्रैव विशेषमाह—कन्यामिति। वधो दण्डः प्रोक्तः "सर्वस्वं हरतो नारीम्" इति कल्पतरौ तृतीयपादपाठः कात्यायनोऽपि "सर्वस्वं हरतः स्त्रीतु कान्यापहरणे वधः। वाजिवारणवालानां चाददीत बृहस्पतिः इति सर्वस्वम् इत्यस्यानुषंगः।

१. ख. कालाद्यपेक्षया। २.—८. ३२१—२.। ३. ख. वा। ४. 'मुख्यानां चैव'—इति क्वचित्। ५.—८. ३२३। ६. छ. द्राक्षाद्रव्याणां ७. क. ख. मावतो। न्यून०।

मूल्यात्पञ्चगुणो दमः—"काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च । वेणु-वैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥ शाकानामार्द्रमूलानां हरणे फलमूलयोः । गोरसेक्षुविकाराणां तथा लवणतैलयोः । पक्वान्नानां कृतान्नानां मत्स्यानामामिषस्य च । सर्वेषामल्पमूल्यानां[1] मूल्यात्पञ्चगुणो दमः ॥" इति[2] नारदस्मरणात् । यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चाशत्पर्यन्तो-[3]ऽसौ माषमूल्ये तदधिकमूल्ये वा यथायोग्यं व्यवस्थापनीयः । यत् पुनर्मानवं क्षुद्र-द्रव्यगोचरवचनं "तन्मूल्याद्द्विगुणो दमः" इति[4] तदल्पप्रयोजनशरावादिविषयम् । तथाऽपराधगुरुत्वादपि दण्डगुरुत्वम्-"सन्धिं छित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः। तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥" इति[5] । एवं सर्वेषामानन्त्यात्प्रति-द्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरुलघुभावः कल्पनीयः । पथि-[6]कानां पुनरल्पापहारे न दण्डः ; यथाऽऽह मनुः—"द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥"[7] तथा—"चणकव्रीहि-गोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्गृहीतव्यो मुष्टिरेकः पथिस्थितैः ॥ तथैव

## बालंभट्टी

एवं दण्ड गुरुत्वमुक्त्वा क्षुद्रद्रव्यविषये एव संभवादल्पानुसारेण लघुदंडमाह—क्षुद्रेति । माषेति—माषतो न्यूनेत्यर्थः क्वचित्तथैव पाठः। अत्र मानमाह काष्ठेति । तस्य भांडेत्यर्थः । अभ्यर्हितत्वात् पूर्वनिपातः । एवं वेणुवैणेत्यत्रापि वेणुश्च तद्विकारभाण्डानि चेति जलाहरण-पात्राणि यच्चान्यत् पशुसंभवं, मृगचर्म खड्गश्रृगादि अन्येषामप्येवंविधानां असा-रप्रायाणां मनःशिलादीनां षट्कानामोदनाभिन्नानामपूपादीनां अन्येषां प्रसिद्धानां चापहारे कृते मूल्याद्द्विगुणो दण्ड इति तद्व्याख्यातारः । अल्पमूल्य उक्तत्वादाह—अल्पप्रयोजनेति। इदं च कपालादीनामपि संग्राहकम्। दंडाल्पत्वे दंडगुरुत्वे तत्संग्राह्यमाह—तथाऽपेति । उक्तं मनुनेति शेषः । सन्धिमित्यदि । उक्तमुपसंहरति—एवमिति । उक्तप्रकारेणेत्यर्थः । विशेषमाह—पथिकेति । कर्तरि षष्ठी । तादृशद्विजकर्तृकाल्पापहारे इत्यर्थः । अध्वगः पथिकः । क्षीणवृत्तिः क्षीणपाथेयश्च । द्विजो द्विजातिरित्यर्थः । अन्यदपि तदुक्तमेवाऽऽह—तथेति । व्रीह्यादिद्वन्द्वान्तरपदको द्वन्द्वः। अनिषिद्धैः स्वाम्यादिकृतानिषेध-

---

१. ख. ख. सर्वेषां मूल्यभूतानां । २. पारि. २२—४. । ३. ख. ग. ज. शतावरः मध्यशतपर्यंतो । ४.—८. ३२९. । ५.—८. ३७६. । ६ ख. पथिकादीनां पुनरल्पापराधे ज. पथिकादीनां पुनः । ७.—८. ३४१. ।

सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः॥"
इति ॥ २७५ ॥

अचौरस्यापि चौरोपकारिणो दण्डमाह—

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।

5 दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः ॥ २७६ ॥

भक्तमशनम्, अवकाशो निवासस्थानम्, अग्निश्चौरस्य शीतापनोदाद्यर्थः, उदकं तृषितस्य, मन्त्रश्चौर्यप्रकारोपदेशः, उपकरणं चौर्यसाधनं व्ययः अपहारार्थे देशान्तरं गच्छतः पाथेयम्, एतानि चौरस्य, हन्तुर्वा दुष्टत्वं जानन्नपि यः प्रयच्छ-

---

अन्यत्रापीति शेषः ॥ २७५ ॥

किं च —भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययानित्यादि।२६७॥

सुबोधिनी

पदे द्विजविशेषणे । हीनेति — हीनकर्मणोऽल्पाचाराद्धर्तव्यं न पुनरुत्कृष्टादित्यर्थः २७५ ॥

बालंभट्टी

रहितैः। भक्तं अन्नम्। सप्तमे भक्ते चतुर्थदिनस्थे तस्मिन् प्राप्ते सति अश्वस्तनेति द्वितीयदिवसे यथा नोर्धरति तेन प्रकारेणेत्यर्थः। हीनेति —अल्पाचाराद्धर्तव्यं न तत्कृष्णान्नापि हीनजातेरित्यर्थः। किं च "वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च । तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥" इति मनुः। अनिरुद्धेति प्रागुक्तगौतमादपरिवृतवनस्पत्यादीनां वानस्पत्यं पत्रपुष्पादिमूलं फलं होमीयाग्न्यर्थं दारुगोग्रासार्थं तृणं परकीयमस्तेयं मनुराह, तस्मान्नदण्ड इत्यर्थः ॥ २७५ ॥

चौरेपेति—तथा च अथ तदतिदेश उच्यते इति भावः। भक्तेति द्वन्द्वः। प्राग्वत् । अज्ञाने दोषाभावाय जानतः इति पदार्थानाह—भक्तमित्यादि । चौरस्यातदादेः । एवमग्रेऽपि बोध्यम्। वाक्यार्थमाह—एतानीति । भक्तादिव्ययान्तानि वस्तूनीत्यर्थः । एतानिति पाठस्तु सम्यगेव। उभयसंग्रहायाह—दुष्टत्वमिति। मनुरपि—"ग्रामेष्वपि च येकेचिच्चोराणां

---

१.—११. १६. । २. थ. द. नकर्मण इति । ३.—८. ३३९. ।

ति तस्योत्तमसाहसो दण्डः। चौरोपेक्षिणामपि दोषः—"शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः।" इति नारदस्मरणात् ॥ २७६ ॥

किं च—

**शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः।**
**उत्तमो वाऽधमो वाऽपि पुरुषस्त्रीप्रमापणे ॥ २७७ ॥** 5

परगात्रेषु शस्त्रस्यावपातने, दासीब्राह्मणगर्भव्यतिरेकेण गर्भस्य पातने,

---

चोरोऽस्य साहसिको वा प्रसह्य हन्तीत्येवंजारश्चोरसाहसिकयोः भक्तादिदानं कुर्वतो दण्ड उत्तमसाहसः। स्पष्टमन्यत् ॥ २७६ ॥

स्त्रीष्वदुष्टासु चोरयितुं—**शस्त्रवपातोगर्भस्येत्यादि ॥ २७७ ॥**

ब्राह्मणस्त्रीशस्त्रावपातने गर्भस्यैवाविशेषेण व्यापत्तौ उत्तमोदण्डः कार्यः—वधमित्यर्थः। उत्तमो वा ब्राह्मणः; अधमो वा शूद्रादिः; अपिशब्दान्मध्यमोऽपि क्षत्रियादिः पुरुषः स्त्रीप्रमापणे वध्य एवेत्यभिप्रायः। तथा च कात्यायनः—"गर्भस्य पातने स्तेनो ब्राह्मण्यां शस्त्रपातने। अदुष्टां योऽपि तं हत्वा हन्तव्यो ब्राह्मणोऽपि हि ॥" इति[1] ॥ २७७ ॥

## बालंभट्टी

भक्तदायकाः। भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत्। राष्ट्रेषु रक्षाधिकृतान् सामन्तांश्चैव चोदितान्। अभ्याघातेषु मध्यस्थान् शिष्याच्चोरानिव द्रुतम्'इति[2]" यश्चापि धर्मसमयात् प्रच्युतो धर्मजीवितः। दण्डेनैवतमप्योषेत् स्वकाद्धर्म्मादविच्युतम्। ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्वाश्याः सपरिच्छदाः। राज्ञः कोशापहर्तृंश्च प्रतिकूलेषु च स्थितान्। घातयेद्विविधैर्दंडैररीणां चोपजापकान् अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान्। संधातृश्च मोषस्य हन्याच्चैवावनीश्वरः॥ इति[3]॥"योऽदत्तादायिनो हस्ताल्लिप्सते ब्राह्मणो धनम्। याजनाध्यापनेनापि यथा स्तेनस्तथैव सः इति[4] रक्षेति ग्रामनिवासिचौरादिभिरपहारेक्रियमाणे मध्यस्थान् प्रेक्षकान् चौरवद्दण्डयेत्। हिताभंगः परक्षेत्रोत्पन्नसस्य विनाशनमोषादि- अभिदर्शने, अपहृतदर्शने। मोषस्य अपहृतद्रव्यस्य अदत्तावायिनः चौरस्य हस्ताद्यो ब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीयधनं ज्ञात्वा लब्धामिच्छेत्,स चौरतुल्य दण्डः इत्यर्थः। विशेषमाह चौरपेक्षीति दोषः ॥ २७६ ॥

किंचेति—अतिदेशप्रसंगादन्यस्यापि दंडमाहेत्यर्थः, । एवमग्रेऽप्युभयत्र ।

१.—१४. १९ । २—९. २७१. । ३. ९. २७८. । ४. ८. ३४०.

चोत्तमो दमः दण्डः। दासीगर्भनिपातने तु—"दासीगर्भविनाशकृत्" इत्यादिना शतदण्डोऽभिहितः। ब्राह्मणगर्भे तु "हत्वा गर्भमविज्ञातम्" इत्यत्र ब्रह्महत्यातिदेशं वक्ष्यति। पुरुषस्य स्त्रियाश्च प्रमापणे शीलवृत्ताद्यपेक्षयोत्तमो वाऽधमो वा दण्डो व्यवस्थितो वेदितव्यः॥ २७७॥

5 अपि च—

**विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।**
**सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत्॥ २७८॥**

विशेषेण प्रदुष्टा विप्रदुष्टा, भ्रूणघ्नी स्वगर्भपातनी च, या च पुरुषस्य हन्त्री

---

स्तेयव्यतिरेकेणापि तु **विषप्रदां स्त्रियं चैवेत्यादि**॥ २७८॥

च शब्दात् पुरुषं च एवकारोन्यत्रस्त्रीवधाभावज्ञापनार्थः। वधाभावेऽपि विषादि-मृत्युनिमित्तप्रयोक्त्री हंतव्येत्यर्थः। पुरुषघ्नी साहसिकपरपुरुषप्रसंगातिशयात् पुरुषमरणनिमित्तभूता जात्या या च गर्भं पातयित्वा अगर्भिण्यहमिति या वदति तामगर्भिणीमाहुः। तथा च स्मृत्यन्तरं "या पातयित्वा स्वं गर्भं ब्रूयादहमगर्भिणी। तामप्सु प्रक्षिपेद्राजा जारैश्च नरमारिणीम्॥" इति॥ सेतुः कुल्यासंक्रमः मर्यादा वा। स्पष्टमन्यत्॥ २७८॥

## सुबोधिनी

शतेति—साहसप्रकरणेऽभिहित इत्यर्थः। ब्रह्महत्यातिदेशं वक्ष्यतीति—प्रायश्चित्ताध्याये वक्ष्यत इत्यर्थः। पुरुषस्य स्त्रियाश्च प्रमापण इति—शीलाचारवतः पुरुषस्य तथा स्त्रियाश्च मारण उत्तमसाहस एव दण्डः, शीलाचाररहितायास्तु मारणेऽधमसाहस एवेति विकल्पव्यवस्था ज्ञेया। ईषच्छीलाचारवतोस्तु प्रमापणे पारिशेष्यान्मध्यमसाहसदण्डो व्यवतिष्ठते॥ १७७॥

## बालंभट्टी

पुरुषस्त्रीति—आर्षम्। स्मृत्यन्तराविरोधायाऽऽह-दासीत्रीहीति तदेवाऽऽह दासीत्यादिना। साहसप्रकरणे इतिभावः। विनाशेतु विनाशनेतु। वक्ष्यतीति—प्रायश्चित्ताध्याये इति भावः। प्रमापणे मारणे नायमैच्छिकविकल्प इत्याहम् शीलेति। शीलं, स्वभाववृत्त आदिना धर्मः। तद्विशिष्टस्य पुरुषस्य तथा स्त्रियाश्च मारणे उत्तमसाहसम् तद्राहित्येतु प्रथमसाहसम् इति विकल्पव्यवस्था द्वितीयवाशब्देनेषच्छीलादिवैशिष्टये तथासति पारिशेष्यान्मध्यमपरिग्रह इति बोध्यम्॥ २७७॥

विप्रेण दुष्टमित्यर्थनिरासायाऽऽह—विशेषणेति। तस्यार्थद्वयमाह—भ्रूणेति।

१. । २. क ख. ब्राह्मणगर्भविनाशेतु। ३. । ४. भ. द. शतं दण्डोऽभिहित इति।

सेतूनां भेत्री च,—एता गर्भरहिताः स्त्रीर्गले शिलांबध्वा अप्सु प्रवेशयेत्, यथा न प्लवन्ते ॥ २७८ ॥

किं च—

विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥ २७९ ॥ 5

अगर्भिणीमित्यनुवर्तते । या परवधार्थमन्नपानादिषु विषं ददाति क्षिपति, या च दाहार्थं ग्रामादिष्वग्निं ददाति, तथा या च निजपतिगुर्वपत्यानि मारयति तां छिन्नकर्णकरनासौष्ठीं कृत्वा अदान्तैर्दुष्टबलीवर्दैः प्रवाह्य मारयेत्। स्तेयप्रकरणे यदेतत्साहसिकस्य दण्डविधानं तत्प्रासङ्गिकमिति मन्तव्यम् ॥ २७९ ॥

भर्त्रादीनां तु विषप्रदानादौ वधप्रकारमाह—विषाग्निदामित्यादि ॥ २७९ ॥
निजगुरुः श्वशुरादिः निजाः भर्त्रादयः। स्पष्टमन्यत् ॥ २७९ ॥
विषाग्निदानेन च वधसिद्धौ अयं मारणविधिः।भर्त्रादीनां त्विदानीं सामान्येनावि-

---

बालंभट्टी

सेतुभेदकरीमित्यत्र डप्रत्ययः।तदाह—सेतूनामिति। अगर्भिणीमिति सर्वविशेषणं । स्त्रियमिति सर्वविशेष्यमित्याह—एतागर्भेति । साकांक्षत्वादाह—गले इति । तात्पर्यार्थमाह—यथेति । तथा च घाते तात्पर्यम् । तत्र न तात्पर्यमिति भावः ॥ २७८ ॥

विषेति आर्षम्। विकर्णेत्य प्यप्येवम्। युक्तिसाम्यादाह—अगार्भिणीमिति। अन्यथा दानेऽदोषायाऽऽह—परेति दाहार्थमिति। च अत्र क्रियानुषंगः निजत्वं सर्वविशेषणमित्याह—निजपतीति। स्पष्टार्थमिदमितिबोध्यम् । तां सर्वां वीत्यस्यार्थः—छिन्नेति। कर्णकरेति प्राग्वत् । अन्यथा तदसंभवादाह—अदान्तैरित्यादि । प्रवाह्य वाहयित्वा । ननु शस्त्राव पाते इत्यादेरत्रानुपयोगस्तस्य साहसत्वादत आह—स्तेयेति । तत्फलन्तु विशेषलक्षणभेदेऽपि तत् समान्यलक्षणस्यात्रापि सत्वमिति सूचनम् । कस्य तदवच्छिन्नवस्तुनः । सामान्ये नपुंसकं । दण्डविधानं तदभिधानम् क्वचित्तु तथैव पाठः ॥ २७९ ॥

१. ख. नप्लवन्ति । २. क. स्वेयपकारेणयदे ।

अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह—

अविज्ञातहतस्याशु कलहं सुतबान्धवाः ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥ २८० ॥

अविज्ञातपुरुषेण घातितस्य संबन्धिनः सुताः, प्रत्यासन्नाश्च बान्धवाः 'केनास्य कलहो जातः' इति कलहमाशु प्रष्टव्याः । तथा मृतस्य संबन्धिन्यो योषितो याश्च परपुंसि रता व्यभिचारिण्यस्ता अपि प्रष्टव्याः ॥ २८० ॥

कथं प्रष्टव्या इत्याह—

स्त्रीद्रव्यवृत्तिकामो वा केन वाऽयं गतः सह ।
मृत्युदेशसमासन्नं पृच्छेद्वाऽपि जनं शनैः ॥ २८१ ॥

---

ज्ञातकर्तृवधनिष्पन्नावन्वेषणप्रकारमाह—अविज्ञातहतस्याश्वित्यादि ॥ २८० ॥

हन्तुरविज्ञानेऽनन्तरमेव हतस्यपुत्रास्स्वजनाश्च प्रष्टव्याः कलहं केन सहास्य कलहो भूतपूर्वः । साक्षारः क एनं प्रतीत्यर्थः । योषितश्चान्यभार्यायाः किं क्वापि परपुरुषे सक्ता इति । एवं पृथक् पृथक् ज्ञातयः प्रष्टव्याः तत्प्रातिवेश्यादौ वा याः परपुंसिरताः योषितः पृथक् पृथक् एकैकशः प्रष्टव्याः। तदीयभार्या एव वा सपत्न्यः परपुरुषप्रसक्तीमन्योन्यं प्रष्टव्याः। प्रमाणान्तरमूलत्वादस्यार्थस्य तदनुसार्यन्वेषण कार्यम् ॥ २८० ॥

किं च— स्त्रीवृत्तिद्रव्यकामो वेत्यादि ॥ २८१ ॥

स्त्र्यादिकामो वाऽस्य कीदृश इत्येवं च पुत्रादयः प्रष्टव्याः । किमस्य कुचित् परस्त्रीप्रसङ्ग आसीत् ।, कावाऽस्य वृत्तिः, किं वाऽस्य द्रव्यमभिप्रेतं, शरीरलग्नं वा केन वा स-

---

बालंभट्टी

एतत्प्रसंगादेवाग्रिममित्याऽऽह—अवीति । अविज्ञातेनऽऽह तेन हत इति समासइत्याहारीति अविज्ञातेन हत इति समास इत्याह—अवीति । तस्य कलहे—शब्दे । चान्वय इत्याह—संबन्धीति । बान्धवपदार्थः—प्रत्यासन्ना इति । अस्येत्यस्यार्थो—मृतेति । चो व्युत्क्रमेइत्याह—याश्चेति । न वेश्या विवक्षिताः, शब्दस्वारस्याभावादित्याह—व्यभतीति । पृथगिति शेषः ॥ २८० ॥

चरमे एवोक्तज्ञानाभावाद्विशेषशंकेत्याह— कथमिति । इत्यत आहेति पाठः; इत्याशंकायामाहेत्यर्थः । वृत्तिः नियतजीवनं । द्वन्द्वान्ते श्रूयमाणकामस्य प्रत्येकं संबन्धा-

किमयं स्त्रीकामो द्रव्यकामो वृत्तिकामो वा, तथा कस्यां किंसंबन्धिन्यां वा स्त्रियामस्य रतिरासीत्, कस्मिन् वा द्रव्ये प्रीतिः, कुतो वा वृत्तिकामः, केन वा सह देशान्तरं गत इति नानाप्रकारं व्यभिचारिण्यो योषितः पृथक्पृथक् विश्वास्य प्रष्टव्याः। तथा मरणदेशनिकटवर्तिनो गोपाटविकाद्या ये जनास्तेऽपि विश्वासपूर्वकं प्रष्टव्याः। एवं नानाप्रकारैः प्रश्नैर्हन्तारं निश्चित्य तदुचितो दण्डो विधातव्यः ॥२८१॥ 5

किं च—

**क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।**
**राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ॥ २८२ ॥**

क्षेत्रं पक्वफलसस्योपेतं, वेश्म गृहं, वनमटवी क्रीडावनं वा, ग्रामं, विवीत-

---

हार्थं गृहान्निर्गतः, । केन वाऽस्य मैत्रमनेकविधत्वाद्दुष्टजनचेतसां सर्वमेवमादि प्रष्टव्यम्। यत्र वाऽसौ व्यापादितस्तं देशमासन्नो गोपालादिजनः शनैः प्रष्टव्यः कोऽत्र तदानीं भवद्भिर्दृष्ट इत्येवमनुमानकुशलतया घातकोऽन्वेष्टव्यः। घातश्चात्रोदाहरणार्थः ॥ सर्वेषामेव स्वकार्यकारिणामेवमन्वेषणप्रकार इत्यवसेयम् ॥ २८१ ॥

अन्विष्यघातकाः तथा वक्ष्यमाणाश्च—

**क्षेत्रवेश्मग्रामवनेत्यादि ॥ २८२ ॥**

## बालंभट्टी

दाह—किमयमिति। एवं स्त्रीद्रव्येति सामान्येन व्याख्याय संभवात्तदेव विशिष्य व्याचष्टे—तथेति। तत्रापि प्रकारद्वयमाह—कस्यामिति। कुतो,राजादितः। द्वितीयपादं व्याचष्टे— केन वेति, तथेति। तत्रापि इष्टासिद्धेराह—विश्वास्येति। अभयं दत्वेत्यर्थः। उत्तरार्धं व्याचष्टे—तथेति। गोपाश्च आटाविकाश्च तदाद्याइत्यर्थः। मूले जातावेकवचनमिति भावः। शनैरित्यस्यार्थः—विश्वासेति। तात्पर्यार्थमाह—नानेति। एवमित्यादिः। क्वचिदस्य पाठ एव ॥ २८१ ॥

पक्वानि फलानि येषां तादृशानि यानि सस्यानितदुपेतं पक्वाभ्यां फलसस्याभ्यामु-

---

१. ख. पृथग्विश्वा. २. ग. स्तेपिविश्वास्यप्रष्ट।

मुक्तलक्षणं, खलं वा ये दहन्ति, यश्च राजपत्नीमभिगच्छति तान्सर्वान् कटैर्वीरण-मयैर्वेष्टयित्वा दहेत् । क्षेत्रादेर्दाहकानां मारणदण्डप्रसंगाद्दण्डविधानम् ॥ २८२॥

॥ इति स्तेयप्रकरणम् ॥

---

चशब्दः श्रोत्रियादिसमुच्चयार्थः। स्पष्टमन्यत् ॥ २८२ ॥

5

## सुबोधिनी

कटैरिति—यस्य तृणस्योशीरं मूलं, तत् तृणं वीरणम् । "स्याद्वीरणं वीरतरं मूले-ऽस्योशीरमस्त्रियाम्" इत्यमरः ॥ २८२ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां स्तेयप्रकरणम् ॥

## बालंभट्टी

पेतं युक्तं वा। यद्यप्ययंद्वन्द्वः, स्तथाऽपि यौगपद्यासंभवादाह—खलं वेति। खल खर्पाण इति-प्रसिद्धं करसंबद्धाग्निनेत्यर्थः। इष्टासिद्धेराह—कटैरिति । ततश्च तत्र मध्यमपदलोपीसमास इति भावः। यस्य तृणस्योशीरं मूलं स तृणविशेषो"वारसीस्या द्वीरतरं मूलोस्योशीरमस्त्रियां ननु इदमपि नोपयुक्तमत्रेत्यत आह—श्रोत्रादेरिति। इति स्तेयप्रकरणम् ॥ २८२ ॥

———o———

---

१. क. दण्डा मिधानम् । २. थ. द. कटै वींरणमयैरिति। ३. द. णविशेषोपी(?)। ४. थ. सतृणविशेषोपी । ५. द्वि. व. २१०. ।

## अथ स्त्रीसंग्रहणप्रकरणम् २४

स्त्रीसंग्रहणाख्यं विवादपदं व्याख्यायते । प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं व्यासेन विवृतम्—"त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम्। अदेशकालसंभाषा[1]र्निर्जने च परस्त्रियाः[2] ॥ कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ॥ प्रलोभनं चान्नपानैर्मध्य[3]मं साहसं स्मृतम् । सहासनं विविक्ते[4] तु परस्परमुपा[5]श्रयः ॥ केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम् ॥ 5
स्त्रीपुंसयोर्मिथुनीभावः[6] संग्रहणम् ॥

संग्रहज्ञानपूर्वकत्वात्तत्कर्तुर्दण्डविधानस्य, तज्ज्ञानोपायं तावदाह—

### पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ।

---

राजपत्न्याभिगमनप्रसङ्गात् परपरिग्रहीतस्त्रीमात्रश्रं विधिमाह—**पुमान् संग्रहणे ग्राह्याः इत्यादि ॥ २८३ ॥**

### सुबोधिनी

परस्परेति[7]—आलिङ्गनां स (त?) हस्तावलम्बनादिभिरन्योन्यं संश्रय इत्यर्थः । सम्यगिति—सम्यग्यथावत्सम्पूर्णमुत्तमं सङ्ग्रहणमिति यावत् ॥

सङ्ग्रणस्य त्रैविध्यमुक्त्वा मूलमवतारयति–सङ्ग्रहणज्ञानपूर्वकत्वादिति। केशाकेशीत्यत्रक

### बालंभट्टी

साहसप्रकरणादाह—स्त्रीति । प्रथमादिभेदेन तत्संग्रहणं—मध्येति। समाहारद्वन्द्वः। तत्राद्यमाह—अदेशेति। अदेशे अकाले च संभाषा संभाषणमित्यर्थः । निर्जने च अरण्ये चाक्वाचित्तथैव पाठ । संभाषणमिति शेषः । कटाक्षेत्यत्रार्शआद्यच् । सकटाक्षावेक्षणमित्यर्थः । परस्त्रिया इति षष्ठ्यन्तस्य सर्वत्रान्वयः, क्वचित्तृतीयान्तपाठः । द्वितीयमाह—प्रेषणमिति । सृष्टेति शुद्धेत्यर्थः । समीचीनेति पाठान्तरम् । उभयविशेषणमिदम् । तृतीयमाह—सहेति । शय्यासने इति पाठान्तरम् । विविक्ते एकान्ते । उभयान्वयीदम् । परस्परमिति—आलिङ्गनहस्तावलम्बादिभिरन्योन्यसंश्रय इत्यर्थः। वक्ष्यमाणाशयेनाऽऽह—

---

१. ग. काल भाषार्यांनिर्जे । २. ग. ख. घ परास्त्रिया । ३. क. मध्यमम् समुदाहृतम् । ४. ख. विविक्तेषु पर ५. क. स्परमपाश्रयः । ६. ख. सङ्ग्रहम् । ७. थ. स्परमुपाश्रय । द. स्परमाश्रय । ८. त. ङ्गनापहस्ता । ९. थ. द. म्यक्सग्रहणम् ।

**सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥ २८३ ॥**

संग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः। परस्परकेश-ग्रहणपूर्विका क्रीडा केशाकेशि।"[1]तत्र तेनेदम् इति सरूपे" इति बहुव्रीहौ सति "[2]इच्कर्मव्यातिहारे" इति समासान्त इच्प्रत्यय। अव्ययत्वाच्च लुप्त[3]तृतीयाविभक्तिः।

पुंग्रहणं पुंसो दमातिरेकग्रहणार्थम्। केशाकेशी वचन यन्त्रारूढग्रहणार्थं साध्यैर्वा कामजैश्चिह्नैर्नखदन्तक्षतादिः द्वयोरेव वा संप्रतिपत्तौ अनुमानकौशलान् प्रत्यक्षोपलम्भना-

## सुबोधिनी

कथं वाशब्दनिष्पत्तिरित्यकाङ्क्षायामाह—तत्रेति।"तत्र तेनेदमिति सरूपे"[4] तत्रेति सप्तम्यन्ते सरूपे पदे। तेनेति तृतीयान्ते सरूपे पदे इदमित्येतस्मिन्नर्थे समस्येते समासोऽत्र बहुव्रीहिसंज्ञो भवतीत्यस्य सूत्रस्यार्थः। केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तमिति विग्रहः। "इच् कर्म-व्यतिहारे" अन्यसम्बन्धिन्या क्रियाया अन्येन करणं कर्मव्यतीहारः, तत्र यो बहुव्रीहिः "तत्र तेनेदमिति सरूपे" इति विहितस्तस्मादिच्प्रत्ययो भवतीत्यस्यार्थः। "[5]अन्येषा-मपि दृश्यते" इत्यनेन पूर्वपदस्य दीर्घत्वम्। समासप्रत्ययान्तत्वेन प्रातिपदिकसंज्ञायां "तिष्ठद्गुप्रभृतीनि च" इत्यनेन सूत्रेण तिष्ठद्गुणपाठात् केशाकेशीत्यस्याव्ययीभावसंज्ञायाम् "[6]अव्ययीभावश्च" इत्यव्ययसंज्ञायाम् "[7]अव्ययादाप्सुपः" इति सुपस्तृतीयाविभक्तेर्लुकि केशाकेशीति शब्दो निष्पन्नो भवतीत्यर्थः। ननु नखादिकृतवर्णरूपैर्लिङ्गैः सङ्ग्रहणं प्रवृत्त

## बालंभट्टी

आभिदीरिति। अर्थादाह—लिङ्गैर्ज्ञात्वेति। ननुकेशाकेशीति किमर्थकं, कथं वा तृतीयंतत आह—परस्परेति। एतल्लाभार्थमाह—तत्रेति। सप्तम्यन्ते क्रियाविषये स-रूपे पदे इदं क्रियारूपं वस्त्वित्यर्थे समस्ये ते। कर्मव्यतीहारे स बहुव्रीहिसंज्ञ इति तदर्थः। इति शब्दादयं विषयविशेषो "कर्मेति" लभ्यते इच् कर्मव्यतीहारे यो बहुव्रीहि-स्तस्मादिच् समासान्त इति तदर्थः। क्रियाविनिमयः। कर्मव्यतिहारे इति कर्मव्यति-हारबहुव्रीहौ पूर्वपदान्तस्य दीर्घ इत्यर्थकेनान्येषामपि दृश्यते इत्यनेन पूर्वपदे दीर्घः। अव्येति—षुद्गुप्रभृतित्विच् प्रत्यय पाठादव्ययी भावत्वेऽव्ययत्वे च तृतीयाया अनद-

---

१. अ० २. २. २७. । २. अ. ५. ४. १२७.। ३. क. लुक्तृतीयाविभक्तेः। ४. अ० ६.३. १३७.। ५. अ० २. १. १७। ६. अ. १. १. ४१.। ७. अ०. २. ४. ८२.।

ततश्चायमर्थः—परभार्यया सह केशाकेशिक्रीडनेनाभिनवैः कररुहदशनादिकृतव्रणैः रागकृतैर्लिङ्गैर्द्वयोः सम्प्रतिपत्त्या वा ज्ञात्वा संग्रहणे प्रवृत्तो ग्रहीतव्यः। परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदासार्थम् ॥ २८३ ॥

आनुलोम्यादिविशेषस्मृत्यन्तरानुसाराद्धनदण्डवधदण्डयोर्यथार्हं व्यवस्था कल्पनीया। उदाहरणार्थं चैतदाचार्येणोक्तमित्यवसेयम्। ऋज्वन्यत् ॥ २८३ ॥

## सुबोधिनी

मिति ग्रहीतुं न शक्यते क्रोधप्रमादादिभिरपि तत्सम्भवादित्यत आह—रागेति। द्वयोः सम्प्रतिपत्त्या वेति—द्वयोः स्वैरिणीजारयोः सम्प्रपत्त्याऽङ्गीकारे चेत्यर्थः। परस्त्रीग्रहणमिति—यद्यपि नियुक्तायां नखक्षतादिचिह्नानि योनि सन्ति घृताभ्यङ्गविधानेन मिथुनीभावविधानात् नखक्षतादिकरणस्य निषिद्धत्वात्, तथाऽपि द्वयोः सम्प्रतिपत्तिरस्तीति तेन लिङ्गेन न ग्राह्यो नियोगविधिसम्भवात्। अवरुद्धादीनां साधारणत्वात् पूर्वोक्तैश्चिह्नैरपि तद्विषये ग्रहणमुचितम्। अतो नियुक्तादयः परस्त्रीशब्देन व्युदस्यन्त इत्यर्थः, अवरुद्धादीनां साधारणत्वमवसरे स्फुटीभविष्यति ॥ २८३ ॥

## बालंभट्टी

न्तत्वेनाव्ययादाविति लुगिति भावः। विशिष्यार्थमाह—तथा चेति। तस्य तथार्थकत्वे सतीत्यर्थः। परस्त्रिय इति मूलं सह युक्त इति तृतीयान्तमित्याह—परेति। लिङ्गान्तरमाह—अभीति। सद्य इत्यस्यार्थोऽयं—करजेति। कररुहेति पाठान्तरम्। ननु नखादिकृतव्रणानां नैतल्लिंगत्वं, क्रोधप्रमादादितोऽपि तत्संभवादत आह—रागकृतैरिति। कामजैः चिह्नैरित्यस्यार्थोऽयम्। तुर्यपादार्थं तृतीयं तदाह—द्वयोरिति। पत्ताविति सतिसप्तम्या फलितमाह—संप्रतीति। द्वयोः स्वैरिणीजारयोः। संप्रतिपत्त्या अङ्गीकारेणेत्यर्थः। ननु परग्रहणं व्यर्थं स्वभार्यायां तथाकरणे दोषाभावात्, वेश्यायां दोषस्य वक्ष्यमाणत्वादत आह-—परेति। अत एव परभार्ययेत्येवं तद्व्याख्यातम् वैधपाणिग्रहणे एवं भार्यात्वात्। यद्यपि नियुक्तायां नखक्षतादि चिह्नाभावः; घृताभ्यंगविधानेन मिथुनीभावविधानान्नखक्षतादिकरणस्य निषिद्धत्वात्; तथाऽपि द्वयोः संप्रतिपत्तिरस्तीति बोध्यम्। अवरुद्धादिषु तु पूर्वोक्तानि सर्वाणि साधारणानि लिङ्गानि सन्ति, तथा च तैर्ग्रहणे प्राप्ते परभार्येत्यनेन तद्व्युदासः आद्यायां नियोगत्वेन तदावश्यकत्वादन्यस्यामप्यवरुद्धत्वेनैव तत्त्वासंभवादिति भावः॥२८३॥

---

१. ग. व्रणैरागकृतैः। क. व्रणैः रागकृतैर्लिं। २. ग. द्धादिनिरासार्थम्। ३. थ. द. रागकृतै र्लिङ्गैरिति। ४. द. इदं प्रतीकं नास्ति। ५. थ. द. एतदादि नियोग इन्तन्तं नास्ति।

किं च—

**नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।**
**अदेशकालसंभाषं सहैकस्थानमेव च ॥ २८४ ॥**

यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्धरुहादिस्पर्शनं साभि-
5 लाष इवाऽऽचरति ; तथा अदेशे निर्जने जनताकीर्णे वाऽन्धकाराकुलेऽकाले संलाप-
नं करोति ; परभार्यया वा सहैकमञ्चकादौ रिरंसयैवावतिष्ठते सोऽपि संग्रहणे प्रवृत्तो
ग्राह्यः। एतच्चाशंक्यमानदोषपुरुषविषयम्, इतरस्य तु न दोषः। तथाऽऽह मनुः—"यस्त्व-

---

अन्यतरानिच्छायां तु पुमान् योषिद्वा— **नीवीस्तनप्रावरणेत्यादि॥२८४॥**

---

## सुबोधिनी

यस्त्विति—नाक्षारितो न निन्दितः असौ विट इति न निन्दितः ॥ २८४ ॥

## बालंभट्टी

उपायान्तरमप्युच्यते इत्याह—किं चेति। "नीवीवस्त्रांशुकग्रन्थिः" इति कोशा-
दाह—परेति। तद्ग्रन्थिदेशेत्यर्थः। स्तनौ प्रत्येकमिति आह—कुचेति। इदमप्युपलक्ष-
णमित्याह—आदीति। अन्यथा दोषाभावादाह—साभीति। अस्यायोग्यत्वादाह—
इवेति। अन्वयाय योग्यक्रियां पूरयति—आचेति। एवमग्रेऽपि बोध्यम्। अदेशेत्यनेन व्यासो-
क्तोभयं संगृह्णाति निर्जने जनताकीर्णे वेति। तथा च तत्रादेशे इत्यनेन जनताकीर्णे इत्य-
स्यैव ग्रहः। निर्जने इत्यस्य पृथगुपादानादिति बोध्यम। तथाच मनुः—"परस्त्रियं योऽभिवदेत्
तीर्थे शून्ये वनेऽपि वा। नदीनां चापि संभेदे स संग्रहणमाप्नुयात्॥" इति। अकाले
इत्यस्यार्थो अन्धकाराकुले काले चेति। अकाले इतिच्छेदः। सहैकेत्यस्य तया सहैकत्र स्थानं
स्थितिं करोतीति शब्दोऽर्थः। तत्फलितमाह—परेति। तत्र एवोऽप्यर्थे। तदाह—सोऽपीति।
विशेषमाह—एतच्चेति। संग्रहणप्रवृत्तग्रहणं चेत्यर्थः। आशंक्येति—बहुव्रीहिः।
यस्त्विति—यः पूर्वमनाक्षारितः परस्त्रीप्रार्थनाभीप्सारहितः असौ विट इति न-

---

१. ख. सहैकासन। २. छ ज झ कुलसंलापं। ३. ज. परनार्या। ४ ख रिरंसयैव। क. रिरंसयाव। ग. रिरंसयैवाव। ङ वादौ चिरंतिष्ठति। ५. ख ङ. एतच्च शङ्कुच। ६. ज यमन्यस्यन। ७.—८. ३५६.।

नाक्षारितः पूर्वमाभिभाषेत कारणात् । न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रमः ॥" इति ॥ यः परस्त्रिया स्पृष्टः क्षमते असावपि ग्राह्यः इति तेनैवोक्तम्—"स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा । परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥" इति । दश्च मयेयं विदग्धाऽसकृद्रमितेत्यचरीति श्लाघया भुजंगजनसमक्षं ख्यापयत्यसावपि ग्राह्य इति तेनैवोक्तम्—"दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् । पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥" इति ॥ २८४ ॥ 5

प्रतिषिद्धयोः स्त्रीपुंसयोः पुनः सम्भाषादिकरणे दण्डमाह—

**स्त्री निषेधे शतं दद्याद्द्विशतं तु दमं पुमान् ।**
**प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥ २८५ ॥**

प्रतिषिद्धयत इति प्रतिषेधः पतिपित्रादिभिर्येन सह संभाषणादिकं निषिद्धं 10

---

स्त्री निषिद्धा शतं दण्ड्या इत्यादि ॥ २८५ ॥

नीव्यादिस्पर्शनादेशकालसंभाषणसहावस्थानादि पुंसा निवारिता स्त्री कुर्वन्ती शतं

---

सुबोधिनी

प्रतिषिद्धेति–'अनेन सह त्वया न वक्तव्यम्, अनया सह त्वया न वक्तव्यम्' इति

बालंभट्टी

निन्दितः केन चित्कारणेन जनसमक्षमप्यभिभाषणं कुर्यात्, न स दण्ड्यत्वादिदोषं प्राप्नुयात्; यस्माच्च कश्चित्तस्यापराधोऽस्तीत्यर्थः । एवं भिक्षुकादावपि न दोष इत्यपि तेनैवोक्तम्—"भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा । संभाषणं सहस्त्रीभिः कुर्युरप्रतिवारिताः ॥" इति । भिक्षुकाः भिक्षाजीविनः, ये वन्दिनः स्तुतिपाठकाः, दीक्षिताः यज्ञार्थकृतदीक्षाः, कारवः तैयंकारादयः एते भिक्षादिकार्यार्थं गृहस्त्रीभिः सह संभाषणमनिवारिताः कुर्युरेवं चैषां संभाषणं ता अपि कुर्युरित्यर्थः । निवारणे तु नैवमित्यप्रतीत्यनेन सूचितम् । विशेषान्तरमाह–य इति । तेनैव मनुनैव । एवमग्रेऽप्युभयत्र—स्त्रियमिति । यस्मात् स्प्रष्टुमनुचिते स्तनजघनादिदेशे परस्त्रियं स्पृशेत्तया वा वृषणादिके (देशे) स्पृष्टः क्षमते, तथाऽन्योन्याङ्गीकरणे सति यत् प्रवर्तमानसंग्रहणमिदं सर्वं संग्रहणं मन्वादिभिः स्मृतमित्यर्थः । असकृदिति ॥ २८४ ॥

"भूतपूर्वेचरट्" इतिचरट्-प्रत्ययाति। अनेन सह त्वया न संभाष्यमनया च सह त्वयेत्येवं

---

१.—८. ३५५. । २. क. मर्षयेत्ततः ३.—८. ३५८. । ४. क कृद्रमितेति सुतभुजङ्गसमक्षम् । ग. ङ. कृद्रमितचरेति भुजङ्ग । ख. द्रमितचरेति । ५. मा० १२. ६९. । ६. क. शतम् दण्ड्या । ७.—८. ३६०. । ८. अ० ५. ३. ५३. ।

तत्र प्रवर्तमाना स्त्री शतपणं दण्डं दद्यात् । पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो द्विशतं दद्यात् । द्वयोस्तु स्त्रीपुंसयोः । एतच्च चारणादिभार्याव्यतिरेकेण—"नैष चारणदारेषु विधिर्नात्मोपजीविषु । सज्जयन्ति हि ते नारी निगूढाश्चारयन्ति च ॥" इति मनुस्मरणात् ॥ २८५ ॥

दण्ड्या; स्त्रिया निवारितः पुमान् द्विशतं दण्ड्यः । द्वयोरपि त्वन्योन्यमिच्छया संग्रहणोक्त एव दण्डः नीवीरशनावारिवर्तिकादे रहोविवक्षया संभाषणमदेशकालसंभाषणम् । स्पष्टमन्यत् ॥ २८४ ॥ २८५ ॥

## सुबोधिनी

पूर्वं प्रतिषिद्धयोः स्वैरिणीजारयोरित्यर्थः । नैष चारणदारेष्विति— चारणो नटादय आत्मोपजीविषु वेशवृत्तिजीविदारेष्विति भावः ; यस्मात् ते परपुरुषेषु सज्जयन्ति निगूढाश्च व्यवाये चारयन्तीत्यर्थः ॥ २८५ ॥

## बालंभट्टी

पूर्वं प्रतिषिद्धयोः स्वैरिणीजारयोरित्यर्थः। पुनः पश्चात् । प्रत्यासत्तया प्रतिषेधपदार्थमाह—प्रतीति कर्मणि घञ् । अनेन निषेधे इत्यलाप्येवमिति सूचितम् । वाक्यार्थमाह—प्रतीति । शेषमाह प्रवर्तेति। द्वितीयपादार्थमाह—पुरुष इति। उत्तरार्द्धमतिदेशविधिरित्याह—द्वयोस्त्विति। अनुक्तत्वादाह—वक्ष्यते इति। सर्वं वाक्यमिति न्यायेनाऽऽह—स एवेति। विशेषमाह—एतच्चेति। उक्तदण्डनं चेत्यर्थः।चारणाः नटादयः आत्मानो जीविनश्च; तद्भिन्नाः वेश्यवृत्तिजीविनां दाराः।विधिर्नात्मोपेति पाठान्तरं, तथा चैषः परस्त्रियं नाभिवदेदित्यादि संभाषणादिनिषेधविधिः नटगायकादिदारेषु नास्ति । तथा भार्यापुत्राः स्वकाः इत्युक्तत्वात् भार्यैवाऽऽत्मा, तयोपजीवन्ति धनलाभाय तस्या लाभं क्षमन्ते ये तेषां नटादिभिन्नानां ये दारास्तेष्वपि निषेधाविधिर्नास्ति हि यस्मात्ते चारणा आत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्यां संश्लेषयंते स्वयमागतांश्च पुरुषान् प्रच्छन्ना भूत्वा स्वाज्ञानं विभावयन्तो व्यवहारयन्तीत्यर्थः।तत्रापि विशेषस्तेनैवोक्तः"किंचिदेव तु दाप्यः स्यात् संभाषन्ताभिराचरन् । प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥"इति । रहः निर्जने देशे चारणादिस्त्रीभिः संभाषणं कुर्वन् स्वल्पं लेशं राज्ञा दाप्यः—तासामपि परकीयत्वात् । तथा दासीभिरवरुद्धाभिर्ब्रह्मचारिणीभिः संभाषां कुर्वन् किंचिद्दण्डमात्रं दाप्य इत्यर्थः । तमिति— यस्यातिदेशः पूर्वं कृतस्तमित्यर्थः ॥ २८५ ॥

१.—८. ३६२. । २.—८. ३६३. ।

तमिदानीं सङ्ग्रहणे दण्डमाह—

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।

प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥ २८६ ॥

चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरदाराभिगमने साशीतिपण-सहस्रं दण्डनीयः । यदा त्वानुलोम्येन हीनवर्णां स्त्रियमगुप्तामभिगच्छति तदा म-ध्यमसाहसं दण्डनीयः । यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा

संग्रहणप्रायत्वात् वा स्पष्टीकृते सङ्ग्रहणं— स्वजातौ उत्तमो दण्डः इत्यादि ॥ २८६ ॥

## सुबोधिनी

पूर्वं "यदा पुनः सवर्णामगुप्तां व्रजेति, आनुलोम्येन गुप्तां वा व्रजेति" इति विषय-द्वयमभिहितम् । तत्रागुप्तसवर्णागमने दण्डमाह—सहस्रमिति । अस्यार्थः—अत्र पूर्वार्धे तु सजातावुत्तमो दण्ड' इति याज्ञवल्क्योक्तेन समानविषयम् । अत्र ब्राह्मण इति क्षत्रियादेरप्युपलक्षणम् । तथा विप्रपदमपि । अतः क्षत्रियादीनामपि गुप्तसवर्णपरदारा-भिगमने एष एव विधिः । एतच्च पूर्वार्धं प्रकरणशुद्ध्यर्थं निबन्धकारेण परिपठितम् । प्रकृतो-पयुक्तमुत्तरार्धमेव । तस्यायमर्थः । पूर्वार्धे गुप्तामित्युपादानादत्र च विपरीतार्थस्याभिलक्षि-

## बालंभट्टी

स्वजातावित्युक्तिस्वारस्यादाह—चतुर्णामिति । मूलानुरोधेनाऽऽह—साशीति इति । द्वितीयपादार्थमाह—यदात्विति । आनुलोम्यादौ स्वार्थे अभिगमने इति शेषः । सर्वत्र तत्फलितमाह—आनुलोम्येनेति । उभयत्र दत्तयोर्गुप्तत्वागुप्तत्वयोर्मूलानुक्तयोर्विशेषणयोः फले आह—यदा पुनरिति । तत्रादौ अगुप्तसवर्णागमने दण्डमाह—सवर्णामिति । अत्र पूर्वार्द्धे स्वजातावेिति मूलप्रथमपादोक्तसमानविषयं ब्राह्मणपदं, विप्रपदं च क्षत्रि-यादेरप्युपलक्षणम् । तथा च क्षत्रियादीनामपि गुप्तसवर्णपरदारगमने एष एव विधिर्ज्ञेयः एतदुपयोगस्तु गुप्तां बलादिति विषयविशेषस्य तत्र लाभः । एवं च पूर्वप्रकरणासिद्धिः

---

१. ख. तदिदानीम् । ग. तद्द्विविधमिदानीं संग्र । कं. विविधमिदानीं संग्र । २. त. 'जातामात्र' । ३. त. जतां निषिद्धद्ध । ४. भ. द. संत्राह्मणो दण्ड्य इति ।

गमने विशेष उक्तः—"सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजेन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः॥ सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशो: सहस्रं तु भवेद्दमः॥" इति। एतच्च गुरुसखिभार्याव्यतिरेकेण द्रष्टव्यं —"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥ दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा

5

## सुबोधिनी

हत्वादगुप्तामिति पदमर्थलभ्यम्। तथा चागुप्तया अरक्षितया इच्छन्त्या सवर्णया सह सङ्गतः पञ्चशतानि दण्ड्य इति आनुलोम्येन गुप्तायां गमने दण्डमाह—सहस्रमिति। अयमर्थः—क्षत्रियावैश्ययोः प्रकृतत्वात् ते क्षत्रियावैश्ये गुप्ते अनिच्छन्त्यौ व्रजन् गच्छन् ब्राह्मणः सहस्रं दण्डं दाप्यः। शूद्रायां रक्षितायां ग-

## बालंभट्टी

अन्य सिद्धिरपीति पाठान्तरम्। इदमपि व्याख्यात्रोक्तम्। प्रकृतोपयुक्तं तूत्तरार्धमेव। तथा च रक्षितां सवर्णां सवर्णो बलेनोपगच्छन् सहस्रं दण्ड्यः स्यात्। व्रजन्नित्यत्र व्रजेदिति पाठे वाक्यभेदो बोध्यः। उत्तरार्द्धे इच्छन्त्येति बलादित्यस्य विपरीतोक्त्या तस्योक्तविपरीतार्थपरत्वावधारणेनागुप्तयेत्यर्थात् लब्धम्। तथा चारक्षितया इच्छन्त्या सवर्णया तु सहसंगतः सकृन्मैथुनः पञ्चशतानि दण्ड्यो भवेदित्यर्थः। आनुलोम्येन गुप्तागमने दण्डमाह—सहस्रमिति। इदं च तत्र पूर्वतः पद्यचतुष्टयेन व्यवहितं तत्रेतोऽव्यवहितम्।"वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः॥" इत्यस्ते क्षत्रियावैश्ययोः प्राकृतत्वात्ते क्षत्रियावैश्ये गुप्ते रक्षिते अनिच्छन्त्यौ गच्छन् ब्राह्मणः सहस्रं दापनीयः। शूद्रायां रक्षितायां गमने क्षत्रियवैश्ययोरपि सहस्रमेव दण्डो भवेदित्यर्थः। अगुप्तास्थले तेनैवतदग्रे उक्तम्—"क्षत्रियायामगुप्तायां वैश्ये पञ्चशतं दमः। मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा॥ अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन्। शतानि पंचदण्ड्यः स्यात् सहस्रांश्चान्त्यजस्त्रियम॥" इति। मूत्रं गर्दभस्य, दण्डनस्य दण्डस्य च विकल्पः। दण्डश्च पंचशतरूपः। शूद्रामित्यत्रापि अगुप्तामिति बोध्यम्। अन्त्यजः चांडालादिः। विशेषमाह—एतच्चेति। मूलाद्युक्तमुभयं चेत्यर्थः। सखा मित्रम्। आदिग्राह्यं वचनं व्यक्तम् माता सपत्नमाता स्त्रीत्वस्य तिषु संबन्धः। अभ्यर्हितत्वात्तस्य पूर्वनि-

१ ग. विशेषः अभिहितः। २. क बलाद्व्रजन्। ३. क. सङ्गतः तथा सहस्र ब्राह्मणो दाप्यः। ४. क साहस्रो वेवोदति। ख. सहस्रमेवैभवे। ५.—८. ३७८. ३८३.। ६. त. इच्छन्तः पञ्चशतानि दण्ड्या इति। ७ थ. तथेति आनु। ८. थ. द. स ब्राह्मणो दण्डं दाप्य इति। ९. थ. द. अरयाय। १०. थ. द. व्रज। ११. त. इदं पदं नास्ति। १२.—८. ३८२.। १३.—८. ३८४, ५.।

च या ॥ आसामन्यतमां गच्छन् गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनं तत्र नान्यो दण्डो विधीयते ॥" इति नारदस्मरणात् । प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः । एतच्च गुप्ताविषयमन्यत्र तु धनदण्डः—"उभावपि हि तावेव ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

## सुबोधिनी

मनं कुर्वतोः क्षत्रियवैश्ययोरपि सहस्रं दण्डो भवेदिति । समानन्यायत्वात् वैश्यास्त्रियं रक्षितां गच्छतः क्षत्रियस्यापि सहस्रं दण्ड इत्युक्तं भवति । मूलस्य द्वितीयार्धं व्याचष्टे — प्रातिलोम्ये इत्यादिना । उभाविति—तावेव क्षत्रवैश्यौ रक्षितया ब्राह्मण्या सह संसक्तौ शूद्रवत् दण्ड्यौ । "गुप्तां सर्वेण हीयते" इत्यत्रोक्तप्रकारेण सर्वेण शरीरेण धनेन च हीनौ कर्तव्यौ सर्वस्वं गृहीत्वा वध्याविति भावः। कटाग्नीति—मारणप्रकारविशेषोपदेशः । कटाग्निदाहप्रकारस्तु स्तेयप्रकरणे अभिहितः । इदं चात्यन्तश्रोत्रियदारगुणवद्ब्राह्मणीविषयं द-

## बालंभट्टी

पातः। आर्या गुरुः, प्रव्राजिता बौद्धभिक्षुकी, धात्री उपमाता, साध्वी पतिव्रता । वर्णोत्तमेति पुरुषोत्तम इतिवत् समासः, बहुव्रीहिर्वा । अतिदेशमाह— गुर्विति। अत एवाऽऽह शिश्नेति । उत्कर्तनात् छेदनात् । अन्ययोगे पंचमी । अन्यः धनदण्डः । मूलद्वितीयार्द्धं व्याचष्टे - प्रातीति । इदं लाक्षणिकमित्याह— उत्कृष्टेति । पुंसः इत्यस्यार्थः— क्षत्रेति । विशेषमाह - एतच्चेति । वधरूपदंडनं चेत्यर्थः । अन्यत्र तु अगुप्तायां तु यद्यपि मानवे वक्ष्यमाणवाक्ययोर्व्युत्क्रमेण व्यवस्थितः पाठः, अत एव ताविन्यनेन वैश्यक्षत्रियपरामर्शः, तथाऽपि अत्रैतच्चेति मूलोक्तेः अन्वयं चोक्तक्रमेणैव मानवांशेऽपि एतत्क्रमेण कथनम् । आदावाद्यं मानमाह— उभावपीति। हि निश्चये । तावेव पूर्वोक्तावेव । तथा च क्षत्रियवैश्यावुभावपि रक्षितया ब्राह्मण्या सह विप्लुतौ संगतौ कृतमैथुनौ शूद्रवत् दण्ड्यौ; गुप्तां सर्वेण हीयत इत्यत्रोक्तप्रकारेण सर्वेण शरीरेण धनेन च हीनौ कार्यौ; सर्वस्वं गृहीत्वा वध्यावित्यर्थः । पक्षान्तरमाह - कटेति । अत्र सर्वस्वग्रहणं नास्ति। कटाग्नीति मारणप्रकारविशेषोपदेशः। स च स्तेयप्रकरणे उक्तः वसिष्ठेन तत्र विशेष उक्तः—'शूद्रश्चेद्ब्राह्मणी-

---

१.—१२. ७३—५ । २. थ. द. मूलवचनस्य । ३. म. उत्कृष्टस्त्रीगमन इत्या । ४. थ. द. उभावपि तावेवेति । ५. थ. द. त्रियवै । ६. थ. सहकृतमैथुनौ । ७. थ. द. भिन्नावाद्यध्याविति।

ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ। वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम्॥" इति मनुस्मरणात्॥शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतो लिङ्गच्छेदनसर्वस्वापहारौ। गुप्तां तु व्रजतस्तस्य वधसर्वस्वापहाराविति तेनैवोक्तं-"शूद्रो गुप्तमगुप्तं वा द्वैजातं व-

---

## सुबोधिनी

ण्डगुरुत्वात् "वैश्यः सर्वस्वदण्ड्यः स्यात्" "सहस्रं क्षत्रियो दण्ड्यः" इति चेतरत्र दण्डविधानाच्च।"एतच्चगुप्ताविषयम्"इति पूर्वत्राभिहितम्। तत्र मानवीं सम्मतिमभिधाय "अन्यत्र तु धनदण्डः" इत्यत्रापि मनुवचनं प्रमाणयति-ब्राह्मणीं यद्यगुप्तामिति। अरक्षितां ब्राह्मणीं गच्छन्तं क्षत्रिय सहस्रं दण्डयेत्। रक्षायामधिकृतत्वेन क्षत्रस्य वैश्यापेक्षयाऽधिकदण्डविधिरिति भावः।"शूद्रो गुप्तमगुप्तं वा"इति-शूद्रो यदि भर्त्रादिरक्षितामरक्षितां वा द्विजा-

## बालंभट्टी

मभिगच्छेत् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कृत्वा सर्पिषाभ्यज्य संग्रामं खरमारोप्य महापथमनुव्राजयेत् पूता भव इति विज्ञायते। वैश्यश्चेद्ब्राह्मणीमभिगच्छेत्, लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् अग्रे प्राग्वत्। राजन्यश्चेत् ब्राह्मणीमभिगच्छेत्, शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् अग्रे प्राग्वत् एवं वैश्यो राजन्यायां मैथुनमाचरन् शूद्रश्च राजन्यावैश्ययोः"इति इदं च प्राणान्तकं दण्डविधानं अत्यन्तश्रोत्रियदारत्वादिगुणवद्ब्राह्मणीविषयं, दण्डगुरुत्वात् "वैश्य स दण्डः संवत्सर निबोधितः। सहस्रं क्षत्रियो दण्डयो सूत्रेण वा" इति मनुना इतःपूर्वमन्यत्र दण्डान्तरविधानाच्च एवमदि संमतिरुक्ता द्वितीये तामाह—ब्राह्मणीमिति। सेवेतामिति पाठः। गच्छेतामिति तदर्थः। पंचशतमित्यत्र बहुव्रीहेरंशे आद्यच्। अरक्षितां ब्राह्मणींतु यदि वैश्यक्षत्रियौ गच्छतस्तदा। वैश्यं पंचशतं दंडयुक्तं कुर्यात्, क्षत्रियं तु सहस्रदण्डोपेतं कुर्यात् इत्यर्थः। रक्षार्थमाधिकृतत्वेन क्षत्रियस्य वैश्यादपि क्षत्रियेऽधिकदण्डविधिरिति भावः। वैश्ये वा यं पंचशतदण्डः शूद्राश्रमादिना, निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः। तद्भिन्नब्राह्मणीगमने तु सहस्रंदण्ड एवेति बोध्यम्। अथ शूद्रे आह—शूद्रस्येति। गुप्तां तु उत्कृष्टवर्णां। तस्य शूद्रस्य। तेनैव मनुनैव—शुद्र इति। अत्र सर्वत्र सामान्ये नपुसकम्। द्विजातामत्यडा

१.—८. ३७७ ३७६.। २. —२१. १—७.।

र्णमावसन्[1] । अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते ॥" इति । नार्याः पुनर्हीनवर्णं व्रजन्त्याः कर्णयोः—आदिग्रहणान्नासादेश्च—कर्तनम् । आनुलोम्येन[2] सवर्णं वा व्रजन्त्या दण्डः

## सुबोधिनी

तिस्त्रियं गच्छति तदा वक्ष्यमाणो दण्डो ज्ञेयः । तमेव दण्डं विभज्य दर्शयति—अगुप्तैकाङ्गेति । अगुप्तां गच्छन् एकाङ्गसर्वस्वी एकाङ्गं लिङ्गं सर्वस्वं च दण्डोऽस्यास्तीत्येकाङ्गसर्वस्वी। लिङ्गं छित्वा सर्वस्वेन दण्ड्य इति भावः। रक्षितां गच्छन् शरीरेण सर्वस्वेन च हीयते सर्वस्वं गृहीत्वा वध्य इत्यर्थः[3]। "नार्याः कर्णादिकर्तनम्" इत्यमुमंशं व्याचष्टे—नार्या[4] इति। प्रातिलोम्येन गच्छन्त्याः स्त्रियाः कर्णाद्यङ्गविच्छेदविधानात् प्रातिलोम्यातिरिक्तगमने[5]ऽल्पदोषत्वेनाङ्गच्छेदा[6]भावस्य (यु ?) क्तिगम्यत्वात् आनुलोम्यगमने गुणवदगुणवदपेक्षयो[7]चितो धनदण्डः सवर्णागमने तु धिक्कारादिभिर्वाग्दण्ड इति देशाद्यनुसारेण दण्डः कल्प्य इत्यनेनाभिप्रायेणाऽऽह—

## बालंभट्टी

"तस्येदम्" इत्यण्[8]। गच्छेदिति यदि तदेति च शेषः। "अगुप्तं सांगसर्वस्वौ गुप्तं सर्वेण हीयते।" इत्युत्तरार्द्धपाठः । तथा च भर्त्रादिभी रक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तदा तयोर्मध्ये अरक्षिताम् आवसन् गच्छन् अंगं च सर्वस्वं च ते दण्डयो यस्य तादृशो भवति । अत्र विशेषाश्रवणेऽपि अंगंलिंगमेव, आर्यस्त्र्यभिगमने लिंगोद्धारः, सर्वस्वहरणं च—"गुप्तां चेद्वधोऽधिकः" इति गौतमवचनात्[9] । तथा च लिंगच्छेदः, सर्वस्वहरणं च कार्यम् । रक्षितां तु गच्छन् धनेन शरीरेण च हीनः कार्यः । सर्वस्वं गृहीत्वा वध्य इत्यर्थः । अंगसर्वस्वैः इति पाठे व्यक्त्यभिप्रायं बहुवचनम् । अत्र पाठान्तरं धृत्वा प्राच्यं व्याख्यानम् असंबद्धं स्पष्टमेवेत्युपेक्षितम् । आविशेदिति पाठान्तरम्। अभिगच्छेदिति तदर्थः। येनांगेनापराद्धो तेन हीन— इति कल्पतरूक्तं तन्न युक्तं, उक्तगौतमविरोधात् । नार्याः इति तुर्यपादं व्याचष्टे—नार्याः पुनरिति । निगमनस्य स्थलद्वये मनूक्तया न्यूनतापत्तिं निराचष्टे—आनुलोम्येनेति[10] । गुणवदगुणत्वेन वा—सवर्णं वेति—प्रातिलोम्यस्थले प्रोक्त[11]दण्डाविधानात्तदन्यत्र गमनेऽल्पदोषत्वेनागच्छेदभावस्य युक्तिसिद्धत्वेनानुलोमगमने गुणवदगुणवदाद्यपेक्षयोचितधनदण्डः, सवर्णगमने त्वधिकारादिदण्ड इति देशाद्यनुसारेण दण्डः कल्प्य इत्यर्थः। मनुना तु "न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत्। निषिद्धाभाषमाणस्तु सुवर्णं दण्डमर्हति ॥" [12]इति सामान्ये

१. क. वर्णमाचरन् । २ ख. ग. आनुलोम्ये स । ३. थ द. त्यस्यार्थः। थ. द. नार्याः पुनरिति । ५. ग. प्रातिलोम्यगमनव्यतिरिक्ते (न) गमने । ६. त. थ. तने नाङ्ग इत्यादि सवर्ण इत्यन्तं नास्ति । ७ थ. म्यगमने गुणव दपेक्षा । ८. अ. ४. ३. १२०. । ९.—१२. ३. । १०. फ. ति सवर्णं वेति । ११. फ. 'विधा नात्...उचितधनदण्डः' नास्ति । १२.—८.३६१.।

कल्प्यः।अयं च वधाद्युपदेशो राज्ञ एव—तस्यैव पालनाधिकारान्न द्विजातिमात्रस्य। तस्य "ब्राह्मणः परीक्षार्थमपि शस्त्रं नाऽऽददीत" इति शस्त्रग्रहणनिषेधात्। यदा तु राज्ञो निवेदने कालविलम्बनेन कार्यातिपाताशङ्का तदा स्वयमेव जारादीन् हन्यात् "शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुद्ध्यते।"तथा मनुः"नाऽऽततायिवधे दोषो हन्तुर्भ-
5 वति कश्चन। प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति।।" इति शस्त्रग्रहणाभ्यनु-

---

बालंभट्टी

नोक्तम्। षोडशमाषात्मकं सुवर्णम्। विशेषमाह—अयं चेति। राज्ञः अभिषेकादिगुणयुक्तस्य दुष्टशासनकर्तव्यतयेति भावः। न द्विजातीति—न वर्णत्रयस्येत्यर्थः। मात्रं कार्त्स्न्ये। गौतममाह—ब्राह्मण इति। तत्रापि विशेषमाह—यदा त्विति। स्वयमेव द्विजातिरेव कार्यातिपातशङ्काया हेतुत्वस्योक्तत्वाद्धेत्वन्तरं मानवमाह—शस्त्रमिति। उपरुध्यते इत्यग्रे नेत्यतः पूर्वं "द्विजातीनां च वर्णानां विप्लवे कालकारिते। आत्मनश्च परित्राणे दक्षिणानां च सङ्करे॥ स्त्रीविप्राद्युपपत्तौ च घ्नन् धर्मेण न दुष्यति। गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्॥ आततायिनमायान्तं हन्यादेवाविचारयन्॥" इति पाठः। एतत्सूचनार्थमेव मध्ये तथेत्युक्तं ब्राह्मणादिभिः खड्गाद्यायुधं ग्राह्यं; यत्र काले वर्णानामाश्रमाणां च साहंकारादिभिर्धर्मः कर्तुं न दीयते। तथा तेषामराजकेषु परचक्रादिना कालजनितसंगरादौ आत्मरक्षार्थं च दक्षिणानां गोधनापहारनिमित्ते संग्रामे च स्त्रीब्राह्मणापत्तिनिवारणार्थं च धर्मयुद्धेनानन्यगतिकतया परान् हिंसन् न दोषभाक् भवति। परमारणेऽप्यत्र साहसदण्डो न कार्यः। गुरुबालवृद्धबहुश्रुतब्राह्मणानाम् अन्यतमं वधोद्यतमागच्छन्तं विद्यावित्तादिभिरुत्कृष्टं पलायनादिभिरपि स्वनिस्तारणाशक्तौ निर्विवादं हन्यात्। अत एवोशनाः "गृहीतशस्त्रमाततायिनं हत्वा न दोषः।" कात्यायनोऽपि "आततायिनि चोत्कृष्टे तपः स्वाध्यायजन्मभिः। वधस्तत्र तु नैव स्यात् पापे हीने वधो भवेत्॥" इति। मेधातिथिगोविन्दराजौ तु स्त्रीविप्रेति पूर्वस्यायमनुवादः, गुर्वादीनपि हन्यात्; किमुतान्यानिति व्याचक्षते। नातेति—जनसमक्षे रहसि वा॥ २८६॥

१.—८. ३५१.।

ज्ञानाच्च । तथा क्षत्रियवैश्ययोरन्योन्यस्याभिगमने यथाक्रमं सहस्रपणशतपणात्मकौ दण्डौ वेदितव्यौ । तदाह मनुः—"वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् । यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥" इति ॥ २८६ ॥

पारदार्यप्रसङ्गात् कन्यायामपि दण्डमाह—

अलङ्कृतां हरन्कन्यामुत्तमं ह्यन्यथाऽधमम् ।  5
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥ २८७ ॥

विवाहाभिमुखीभूतामलङ्कृतां सवर्णां कन्यामपहरन्नुत्तमसाहसं दण्डनीयः । तदनभिमुखीं सवर्णां हरन् प्रथमसाहसम् । उत्कृष्टवर्णजां कन्यामपहरतः पुनः क्षत्रियादेर्वध एव । दण्डविधानाच्चापहर्तुस्सकाशादाच्छिद्यान्यस्मै देयेति गम्यते ॥२८७॥

कन्याहरणमपि प्रसंगादाह—अलंकृतां हरन्कन्यामुत्तमं त्वन्यथाऽधमम्।

## सुबोधिनी

आनुलोम्येनेति। क्षत्रियवैश्ययोरन्योन्येति—अत्र न समुच्चयो विवक्षितः—प्रत्येकमेव पापहेतुत्वात् । तत्रापि रक्षितागमन इत्येव बोद्धव्यम्। वैश्यश्चेत् क्षत्रियामिति—अ(त्र) ब्राह्मण्या अरक्षिताया गमने प्रोक्तः "वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम्," इति,तं दण्डं यथाक्रमेणार्हत इति । क्षत्रियस्य वैश्यापेक्षयोत्कृष्टत्वेऽपि रक्षायामधिकृतत्वादाधिकदण्ड इति ज्ञातव्यम् ॥ २८६ ॥

तदनभिमुखीमिति—विवाहानभिमुखीमित्यर्थः ॥ २८७ ॥

## बालंभट्टी

विवेति—उत्तमं दण्डं दद्यादित्यस्यार्थः।उत्तमेति—अन्यथेत्यस्यार्थः । तदनेति—विवाहानभिमुखीमित्यर्थः । सवर्णामित्यनेन सवर्णामिति पाठः सूचितः । सवर्णास्विति पाठे भिन्नं वाक्यं तद्विषये पूर्वोक्तं बोध्यमित्यर्थः । तुर्यपादार्थमाह—उत्कृष्टेति । ब्राह्मणस्य तदसंभवादाह—क्षत्रीति । प्रातीति तत्र तद्धर्तृपरमिति भावः । तात्पर्यार्थमाह—दण्डेति । तत्र दुष्टत्वेनायोग्यत्वेनानधिकृतत्वेनानधिकारिणा कृतमकृतमेवेति न्यायेन तस्याः कन्यात्वाक्षत्या विवाहो भवत्येवेति भावः ॥ २८७ ॥

१. ख. सहस्रशतपणा । २.—८. ३८२. । ३. ख. हरेत्कन्याम् ।

आनुलोम्यापहरणे[1] दण्डमाह—

**सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।**

यदि सानुरागां हीनवर्णां कन्यामपहरति तदा दोषाभावान्न दण्डः । अन्यथा त्वनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः ॥

कन्यादूषणे दण्डमाह—

5

**दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ २८८ ॥**

अनुलोमास्वित्यनुवर्तते । यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य कर[2]श्छेत्तव्यः । यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन्दूषयति तदा मनूक्तषट्शतसहितोऽङ्गुलिच्छेदः। "अभिषह्य[3] तु यः कन्यां कुर्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम्॥" इति[4]। यदा पुनः सानुरागां पूर्व[5]-

10

**सकामास्वनुलोमासु सकामस्तद्यथादमः ।**

**दूषणे तु करछेद उत्तमायां वधस्तथा ॥ २८८ ॥**

सुबोधिनी

अविषह्येति[6]—यो बलात्कारेण दर्पादिभिः कन्यामङ्गुलिप्रक्षेपयोगेन योनौ[7] क्षतवतीं कुर्यात्, तस्य अङ्गुलिद्वयं छेत्तव्यम् षट्छतं[8] दण्डं चार्हतीत्यस्यार्थः[9]।सानुरागामिति[10]। अङ्गुलि

बालंभट्टी

दण्डमिति—दण्डाभावपूर्वकं दण्डमित्यर्थः । तात्पर्यार्थमाह—न दण्ड इति । अन्यथा त्वित्यस्यैव व्याख्या—अनिच्छन्तीमिति। अधम इत्यस्यार्थः—प्रथमेति ॥ २८७॥

कन्येति— एवमपहारदण्डमुक्त्वाऽऽदिः । अत्र सर्वत्र कन्यापदमविवाहितापरम्। लक्षणया प्रातिलोम्यादौ वक्ष्यमाणत्वादाह — अनुलोमास्विति । आद्यपादं व्याचष्टे —यदिति।सकामादौ विशेषेण वक्ष्यमाणत्वादाह—अकामामित्यादिना ।नखक्षतादिनेत्यस्य फलमाह—यदा पुनरिति । तामेवाऽऽह कल्पतरुः। दर्पेणेति— दर्पादिभिः । समानजातीयां कन्यां गमनवर्जमंगुलिप्रक्षेममात्रेणैव कुर्यात् । नाशयेत् योनिक्षतवतीं कुर्यादिति यावत्तस्य शीघ्रमेव अङ्गुलीद्वयं छेत्तव्यम्।स षट्शतं दण्डं चार्हतीत्यर्थः । अकामामित्यस्य फलमाह—यदा पुनरिति । अत एव हि न बलात्कार इति भावः। पूर्ववत् अङ्गुलिप्रक्षेपादिमात्रेण योनिक्षतकरणेन । तेनैव मनुनैव । एवमग्रेऽपि । यस्तुल्यो

१. ख. ग. घ. ङ. आनुलोम्येपहरणे । २. ग. करच्छेदः कर्तव्यः । ३. ख. ग. अविषह्य तु । ४.—८. ३६७.। ५. क रागं पूर्वं दूषयति । ६ थ. द. अभिषह्य तु यः कन्यामिति । ७. थ. द. पेणयोनौ ८. थ. द. तथाष । ९. द. त्यर्थः । १०. थ. द. गांपूर्ववद्दूषयतीति ।

वद्दूषयति तदाऽपि तेनैव विशेष उक्तः—"सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमर्हति । द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥" इति[2] । यदा तु कन्यैव कन्यां दूषयति, विदग्धा वा[3], तत्रापि विशेषस्तेनैवोक्तः—"कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः । या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति ॥ अङ्गुल्योरेव च[4] च्छेदं खरेणोद्वहनं तथा॥" इति[5] । कन्यां कुर्यादिति कन्यां योनिक्षतवतीं कुर्यादित्यर्थः। तदा पुनरुत्कृष्टजातीयां कन्यामविशेषात् सकामामकामां वाऽभिगच्छति तदा 5

इच्छन्तीषु कन्यासु सवर्णास्वनुलोमासु वा प्रदुष्य अप्रहतासु न दोषः– गान्धर्वविवाहविषयत्वात् । यस्त्वनलंकृतापहरणे समो दंडः सोऽन्यथा निष्कामास्वित्यर्थः

## सुबोधिनी

प्रक्षेपादिना योनिक्षतं कुर्वन् दूषयतीत्यर्थः । " उत्तमायां वधस्तथा " इत्यमुमंशं व्याचष्टे —तदा[6] पुनरुत्कृष्टजातीयामिति ॥ २८८ ॥

## बालंभट्टी

नांगुलीति पाठः । तुल्यः समानजातिः । इच्छन्तीकन्यामंगुलिप्रक्षेपमात्रेण नाप्ययमंगुलिच्छेदं नार्हति न प्राप्नोति, किन्तु अतिप्रसक्तिनिवारणाय द्विशतं दण्डं दाप्य इत्यर्थः। यत् कन्यां नांगुलीति पाठान्तरं दूषयानस्तु नांगुलीति च। विशेषान्तरमाह—यदा त्विति। ऐवन पुरुषव्यवच्छेदः। एवं मानवेऽपि। अत एवाऽऽह–विदग्धा वेति। तत्रापि उभयत्रापि। विशेषः इत्यादि जातावेकवचनम्।कन्यैवेति या कन्यैव परां कन्यामंगुलिप्रक्षेपमात्रेण कुर्यात् नाशयेत् तस्याः द्विशतो दण्डः स्यादित्यर्थः। अस्योत्तरार्द्धं "शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश।" इति; सा तत्कन्याशुल्कं, यत्तु द्विगुणं तत् कन्यापित्रे दद्याद्दशशिफा अत्र जटारज्वादि प्रहारास्तांश्चाप्नुयादिति तदर्थः । एवमभिधाय द्वितीयायामव्यवहितमाह — या त्विति। अत्र स्त्रीति सामान्यमप्यर्थाद्विदग्धापरं; या तु विदग्धाकन्यां प्रकुर्यात् प्रगतं कुर्यात् नाशयेत्, दूषयेत् अंगुलिप्रक्षेपमात्रेण सा सद्यस्तत्क्षणमेव शिरोमुण्डनम् अर्हति। तथेति च समुच्चये । विदग्धात्वादेवाङ्गुलिद्वयव्यापार इत्याह— अङ्गुल्योरिति । तर्जन्यङ्गुष्ठयोरित्यर्थः। तयोश्छेदनं चार्हति, गर्दभेन राजमार्गे वहनं चार्हतीत्यर्थः। अपि वेति

१. क. दूषयन् कन्यां नाङ्गुलिच्छेदमर्हति । ख. ग. ङ. दूषयानस्तु नाङ्गुलिच्छेद । घ. सकामींदूषमाणस्तु । २.—८. ३८६. । ३. ग. वातदोतेनैवविशेषोक्तः । ४. क. रेव वा छेदम् । ५.—३६९, ७०. । ६. थ. द. यदेति ।

हीनस्य क्षत्रियादेर्वध एव—"उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।" इति मनुस्मरणात्[1] । यदा सवर्णां सकामामभिगच्छति तदा गोमिथुनं शुल्कं तात्पित्रे दद्यात् यदीच्छति; पितरि तु शुल्कमनिच्छति दण्डरूपेण तदेव राज्ञे दद्यात् । सवर्णामकामां तु गच्छतो वध एव; यथाऽऽह मनुः—"शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि[3] ॥ योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति । सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः[4] ॥" इति[5] ॥ २८८ ॥

किं च—

**शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसिता ।**

---

दूषणे तु कन्याभिगमने करच्छेदः; अनिच्छाया अभिगमने अन्यथा त्वङ्गच्छेदः स्मृत्यन्तरानुसारात् । प्रातिलोम्येन तु कन्यादूषणे वध एव । तथा शब्दः स्मृत्यन्तरोक्तशूलारोपणादिप्रकारार्थः । स्पष्टमन्यत् ॥ २८७ ॥ २८८ ॥

दूषयितुर्दण्ड उत्तमः दूष्या तु कन्याशतम्—

**शतं स्त्रीदूषणे दाप्यो द्वे तु मिथ्याभिशंसिता इत्यादि ॥२८९॥**

---

बालंभट्टी

पाठे अपि वा चार्थे।एवेति एवेचेति पाठेऽप्येवम्।आद्ये मानवे कुर्यादित्यस्य निकुर्यात् दूषयेदित्यर्थः तत्फलितमाह—कन्यामिति । उत्तमायामिति द्वितीयपादं व्याचष्टे—यदा पुनरिति। अस्याभिगमनपरत्वे संमतिमाह—उत्तमामिति । हीनजातिः उत्कृष्टामिच्छन्तीं गच्छन् जात्यपेक्षयां गच्छेद्मारणात्मकं वधमर्हतीत्यर्थः । अनुक्तविशेषानाह—यदेत्यादिना। मिथुनं तद्रूपं शुल्कमिति।पिता यावदेवगोमिथुनमेव।सर्वत्र मानमाह--यथाऽऽहेति।शुल्कमिति इदं तदुत्तरार्द्धम्।समं समानजातीयान्तु इच्छन्तं गच्छन् यदि पिता इच्छेत् तदा पितुः शुल्कं दद्यांदात्मनुरूपं तथा च न दण्डयः,सा च कन्या तेनैवोढव्येत्यर्थः।तृतीये मानमाह---योऽकामामिति। तत्पूर्वं एकव्यवहितः अयं श्लोकः यस्तुल्यजातिरनिच्छन्तीं कन्यामभिगच्छति स तत्क्षण एव विप्रेतरो लिङ्गच्छेदनादिकं वधमर्हति इत्यर्थः । इच्छेदिति सूचितं। द्वितीये मानमाह —सकामामिति । इच्छन्तीं तु गच्छन्न वधार्हो मनुष्यो भवति; किन्तु तत्प्रोक्तरीतिरेवेत्यर्थः ॥ २८८ ॥

किंचेति—कन्यास्थले प्रसंगादप्याहेत्यर्थः । पूर्वोक्त वाक्यत्वायाह —

---

१—८. ३६६. । २. क. स सकामां गच्छतो वध एव यथा । ३.—८. ३६६. । ४. ग. प्राप्नुयात्ततः ५.— ८. ३६४.।

पशून्गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम् ॥२८९॥

स्त्रीशब्देनात्र प्रकृतत्वात्कन्याऽवमृश्यते। तस्या यदि कश्चिद्विद्यमानानेवापस्मार-राजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान्प्रकाश्येयमकन्येति दूषयत्यसौ शतं दाप्यः। मिथ्याभिशंसने पुनरविद्यमानदोषाविष्कारेण दूषणे द्वेशते दापनीयः। गोव्यतिरिक्तपशुगमने तु शतं दाप्यः। यः पुनर्हीनां स्त्रियमन्त्यावसा- 5

## सुबोधिनी

संसृष्टेति—संसृष्टं प्राप्तं मैथुनं सम्भोगो ययेत्येकपदं समासान्तर्गतम् ॥ २८९ ॥

## बालंभट्टी

स्त्रीति। अपस्मारेति — गौतिप्रसिद्धः। राजयक्ष्मा क्षयः। आदिना कुष्ठ इत्यादि-रूपाः दीर्घाः अचिकित्स्याः कुत्सिता रोगाः। संसृष्टं प्राप्तं मैथुनं संभोगो यया, तस्याभावः स एव ते च ते दोषाः तानित्यर्थः। मिथ्येत्यस्यैव व्याख्यानम्—अविद्येति। न च "अदुष्टां च त्यजन् दण्ड्यो दूषयंस्तु मृषा शतम्।" इति प्राक्स्वोक्तविरुद्धमिदं, तत्र मिथ्याशंसने शतस्योक्तत्वादिति वाच्यं। तस्य प्रकृतत्वाद्वरविषयत्वादेतस्य तदन्य विषयत्वादिति भावः। मनुरपि भावि। कन्यैवं कन्यामिति मनूक्तविषयकत्वाद्यदुक्तं, मिथ्येत्यत्र भावप्रत्ययान्तादर्श आद्यजन्तादरस्त्रीविशेषणभूता, तथा च तादृशस्त्रीविषयको द्वितीयपाद इति न विरोधशंकाऽपि आद्ये मूलोक्तमनूक्तयोर्विकल्प इति गोः पृथग्वक्ष्यमाणत्वादाह—गोव्यतीति। गौतमोऽपि "पशून् शतं दाप्यः" इत्यादि। मात्स्येपि "तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते। स शतं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकाम्॥" इति। हीनाम् इत्यस्य व्याख्या—अन्त्येति। अन्त्यगामिनीं, न त्वन्यामित्यर्थः—तत्र विशेषस्य वक्ष्यमाणत्वात्। अत एव नारदः—'पशुयोनावतिक्रामन्विनेयः सततं शतम्। मध्यमं साहसं गोषु भवेदंत्यावसायिषु॥' इति। "अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेणैव नरः। सततं प्राप्नुयाद्दण्डं तस्य दोषमदर्शयन्॥" इति। मनुरपि 'दूषयंस्तु मृषा शतम्'' इति। मूलोक्तसमानविषयस्तु मृषाशतमिति तस्या इत्यादि हेतुगर्भविशेषणं यत उक्तदोषं क्षतयोनित्वादिकमविभावयन्नतो युक्तोऽयमयं गणशतात्मको दण्ड इत्यर्थः "यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति

---

१. ग. दापनीयः। २ ख. मिथ्याभिशंसने तु पुनः। ख. घ शंसनेपशू। ङ. मिशंसिते पशू। ३. ग. मन्त्यावसायिनीम्। ४. थ. द. दुष्टत्वादिति। ५ त. ययेति तथा उक्तेति। ६.—आ० ६६.।

यिनीमाविशेषात्सकामामकामां वा गां चाभिगच्छत्यसौ मध्यमसाहसं दण्ड-
नीयः ॥२८९ ॥

साधारणस्त्रीगमने दण्डमाह—

**अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।**
**गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम् ॥ २९० ॥**

स्त्रीत्वेनोपगम्य दूषिता कन्या स्त्रीत्युक्ता । दूषणे कृते शतं दण्डथा । यदि त्वदुष्टामेव दूषितेयमिति ब्रूयात्ततो मिथ्याभिशंसिता द्वे शते दण्डयः । गोव्यतिरिक्ताश्वादिपशुग-मने शतं दण्डयः। हीनां अनुलोमां स्त्रियं गां च गच्छतो मध्यमो दण्डः।हीनस्त्रीवचनं गवादि-ष्वपि स्त्रीवद्दण्डदानदृष्टान्तत्वेन । अन्यथा तु प्रागेवोक्तत्वात् पुनरुक्तयैव स्यात् । तस्मात् पश्वादिष्वपि स्त्रीष्विवागंतुकदण्डादिकल्पनं परिग्रहविशेषाश्रयं योज्यम् ॥ २८९ ॥

परिग्रहानुसारेणैव च—

**अवरुद्धासु दासीषु इत्यादि ॥ २९० ॥**

### बालंभट्टी

तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणम् ॥" इति । अत्रैवानुशयप्रसंगे प्राग्वन्मनूक्तन्तु "अनाख्याय ददद्दोषं दण्ड उत्तमसाहसम् ।" इति मूलोक्तविषये पक्षान्तरं बोध्यम् । नोन्मत्ताया इति सामान्येनोक्तत्वात्तत्र दण्डविशेषोक्त्यर्थं तत् । अत एव दोष उन्मादादिः । स्वयमित्यादरार्थम् । यत्तु " पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः । नाकन्यासु कचिन्नृणां लुप्तधर्मक्रिया हि ताः॥[1]" इति तत्रैव मनुः। तस्यायं भावः। अर्यमणं देवं कन्या अग्निमयन्त" इत्यादयो वैदिका मनुष्याणां विवाहसंबन्धिनो मन्त्राः कन्याशब्दश्रवणात् कन्यास्वेव व्यवस्थिताः । अकन्याविषये क्वाचिद्धर्मशास्त्रविवाहसिद्धये न व्यवस्थिताः— असमवेतार्थतापत्तेः । अत एव हि यतः ताः क्षताः वैवाहिकमन्त्रैः संस्क्रियमामाणा अपि अगतधर्माविवाहादिशालिन्यो भवन्ति, नासौ विवाहो धर्म इत्यर्थः । न तु क्षतयोनेर्विवा-हादि मन्त्रहोमादिनिषेधकमिदं, "गर्भिणीसंस्क्रियते" तथा "वोढुः कन्यासमुद्भवम्" इति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्योक्तत्वात्। देवलेन तु "गान्धर्वेषु विवाहेषु पुनर्वैवाहिको विधिः।कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥" इति गान्धर्वेषु विवाहेषु मन्त्रादिविधिरु-क्तगान्धर्वश्चोपगमनपूर्वकोऽपि भवति तस्य क्षत्रियविषये स्वधर्मत्वमपि मनुनोक्तम् । अतः सामान्यविशेषन्यायेनान्यविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेश इति। सा चेति— तत्त्वं च सर्वपुरुषगामित्वम् ॥ २८९ ॥

१.—८. २२६. ।

गच्छन्नित्यनुवर्तते। उक्तलक्षणा वर्णस्त्रियो दास्यः, ता एव स्वामिना शुश्रूषाहानि-व्युदासार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धाः अवरुद्धाः। पुरुष-नियतपरिग्रहाः भुजिष्याः। यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुस्तदा—तासु[1] तथा च शब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां[2] ग्रहणम्—तासु[3] च सर्व-पुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणं[4] दण्डनीयः—परपरिगृहीतत्वेन 5
तासां परदारतुल्यत्वात्। एतच्च स्पष्टमुक्तं नारदेन—"स्वैरिण्यब्राह्मणी वेश्या दासी

---

## सुबोधिनी

उक्तलक्षणा वर्णस्त्रियो दास्य इति—अभ्युपेत्याशुश्रूषाप्रकरणे "गृहजातस्तथा क्रीतः"[5]इत्यादिनोक्तलक्षणा इत्यर्थः। स्वैरिणीति[6]—स्वैरिणी चासौ ब्राह्मणी च[7]। ब्राह्मणी-चेत्युपलक्षणम्[7]। अतः क्षत्रियादिस्त्रियोऽपि स्वैरिण्यो गृह्यन्ते। तथा वेश्या दासी निष्कासि-

## बालंभट्टी

अन्वयाय—गच्छन्निति। उक्तेति— अभ्युपेत्य शुश्रूषाख्यप्रकरणे "गृहजातस्तथा क्रीतः" इत्यादिना साम्यादुक्तप्रायलक्षणाः इत्यर्थः। निमित्तान्तरत्वनिरासायाऽऽह—ता एवेति। अत एव नारीष्विति कल्पतर्वादिपाठे नैकवाक्यता। पुरुषान्तेति—स्वभोग्य-त्वन्तु नैवेति भावः। पुरुषेति—स्वामिभिन्नेत्यर्थः। एवं पदार्थानुक्त्वा वाक्यार्थमाह—यदेति। एवो दास्यइत्यत्रान्वेतीत्याह — चेति। समुच्चयार्थकात् समुदितादित्यर्थः। "स्वैरिणी या पतिं हित्वा सवर्णं कामत श्रयेत्।" इत्युक्तलक्षणा स्वैरिणी। आसां साधार-णत्वं प्रागवदेव।सान्निध्यात् संभवाच्चाऽऽह-भुजीति। तदेवाऽऽह—सर्वेति। गम्यास्वपीत्यनेन सूचितमिदम्; अनुवृत्तिलब्धमाह—गच्छन्निति।अपि:विरोधे।ननु साधारणत्वे कथं दण्डोऽत आह—परेति। एतदर्थमेव विशेषणद्वयमिति भावः। ब्राह्मणीति—स्वैरिण्या विशेषणम्। तादृशी सा च ब्राह्मणीत्युपलक्षणम्। अतः क्षत्रियादिस्त्रियोऽपि स्वैरिण्यो गृह्यन्ते। दासी चासौ निष्कासिनी चेति व्याख्यानमपास्तं मूलाशुद्धेः, कल्पतर्वाद्यसम्मतत्वात्, पूर्वानिपातवैपरि-त्यापत्तेः, पृथक्पदत्वस्य व्याख्यातृसम्मततया स्पष्टत्वाच्चेतिदिक्। दोषमुपपादयति—

---

१. ख. सु यथा। २. क. ष्याणां च ग्रह। ३. क तासु सर्वेपु। ४. क. पञ्चाशतपणं दण्डा ख. शतपणान् दण्डं। ग. ज. त्पणं दण्डं दण्डनयिः घ. त्पणे दण्डनी। ख. शतपणानदण्ड। ५. ना० ४. २६.। ६. थ. द. णी ब्राह्मणीति। ७. त. चेप्युप।

निष्कासिनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यतस्ताः सपरिग्रहाः॥"इति। निष्कासिनी स्वाम्यनवरुद्धा दासी । ननु च स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम् । नहि जातितः शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते । तथा हि । स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव—"स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् । वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः॥"इति स्मरणात् । न च वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते—"दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः । परिचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥ कामं

## सुबोधिनी

मीति विवेकः । दास्यश्च तावद्वर्णस्त्रिय एवेति— अत्र वर्णशब्दोऽनुलोमजातीनामुपलक्षकः। अतः मूर्धावसिक्ताद्यनुलोमजातिष्वपि दास्यमस्तीति ज्ञेयम्। ननु भवन्तु स्वैरिण्याद्या वर्णस्त्रिय एव ; तथाऽप्यासां साधारणत्वाभावः कथमित्याशङ्क्य स्वपुरुषपरत्वविधानात् पुरुषान्तरनिषेधपरत्वविधानाच्च साधारणत्वाभाव इत्याह—न च वर्णस्त्रीणामित्यादिना।तथेति तथाविधाया रक्षिताया अदुष्टाया इति यावत् । ननु सूतकादिवशात् स्वधर्मभूतसन्ध्याद्य

## बालंभट्टी

गम्यास्वपीति,—आस्वित्यर्थः । गम्या अपीति पाठान्तरम् । हि:निश्चये । यतः यस्मात्ताः भुजिष्याः स्वैरिण्यादयः परेषां परिग्रहो यासामित्यर्थः। यास्तामिति पाठे हिर्हेतौ । निष्केति पृथक्पदं दासीविशेषणमिति आह—निष्केति । तदर्थं कथयन्नाद्ये आह—स्वैरिणीति । द्वितीये आह —वर्णानामिति । अध्यायभेदेन भिन्नमिदम् । नन्वस्तु आसां वर्णस्त्रीत्वं, तथाऽपि सर्वपुरुषगामित्वेन साधारणत्वमित्यविरोधेन तत्कथनं युक्तमेवेति तदभावः कथम् अत आह—न च वर्णस्त्रीणामिति।स्वपुरुषपरत्वविधानात् ,पुरुषान्तरपरत्वनिषेधाच्चेति भावः। तत्राऽऽद्यं तु "स्वदारनिरतः सदा" इत्यत्र स्फुटीभविष्यति । द्वितीयमाह—दुःशील इति,—दुष्टस्वभावः । कामेति—यथेच्छचारी इदं जीवद्विषयम्; अथ मृते आह—कामं-

---

१. ख. ग. याद्यत्ताः परप । २.—१२. ७८, ७९. । ३. क. श्रतावर्णास्त्रियः । ४. ख. इति मनुस्मरणात् । ५. थ. द तथाविधाया एवेति । ६. थ. द. या एवर । ७. थ. एतदादि 'दासी भावात्' इत्यन्तं नास्ति ।

तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु॥"
इति निषेधस्मरणात्। नापि कन्यावस्थायाः साधारणत्वम्—पित्रादिपरिरक्षिताyाः कन्याया एव दानोपदेशात्; दात्रभावेऽपि तथाविधाया एव स्वयंवरोपदेशात्।
न च दासीभावात् स्वधर्माधिकारच्युतिः। पारतन्त्र्यं हि दास्यं, न च स्वधर्मपरित्यागः।
नापि वेश्या साधारणी—वर्णानुलोमजव्यतिरेकेण गम्यजात्यन्तरासंभवात्। तदन्तः-

## सुबोधिनी

धिकाराभावः, तद्वत् दासीभावात् स्वधर्मभूतस्वपुरुषपरत्वादिधर्माधिकारच्युतिर्भविष्यति।
तथा च सर्वपुरुषसाधारणत्वमस्त्वित्यनेनाभिप्रायेणाऽऽशङ्क्य परिहरति—न चेति। अयमभिप्रायः—सूतकादौ तु वचनादधिकाराभावो न स्वरूपेण। अत्र तु न वचनं नापि स्वरूपतः
यतो दास्यं नाम पारतन्त्र्यमेव शिष्यत्वादिवत्। अतो न स्वधर्मत्यागः येन साधारण्यं
स्यादिति। ननु मा भूत् स्वैरिणीदास्योः साधारणत्वाभावात् गम्यत्वम्। वेश्यायाः साधारणत्वेन गम्यत्वं भवत्वित्याशङ्क्य इत्येवं वदता वक्तव्यं किमियं वेश्या ब्राह्मणादिवर्णमूर्धावसिक्ताद्यनुलोमजव्यतिरिक्तगम्यजात्यन्तरान्तःपातित्वेन गम्या उत वर्णानुलोमजान्तःपातित्वेन, अथवा प्रतिलोमजान्तःपातित्वेनेति विकल्प्य दूषयितुमुपक्रमते—नापि वेश्येति।
आद्यं दूषयति—वर्णानुलोमजेति। तादृशजात्यन्तराभावादेव तदन्तःपातित्वेन गम्यत्वं नास्तीत्यर्थः। न द्वितीय इत्याह—तदन्तरिति। वर्णानुलोमजान्तः पातित्वे तासां पतिपरायण-

## बालंभट्टी

त्विति। मानवमिदं वचनद्वयं—तथाविधेति। रक्षिताया इत्यर्थः। अदत्ताया इति
यावत्। न च दासीति—दासीत्वादित्यर्थः। यथा सूतकादित्यर्थः। यथा सूतकादिवशात्
स्वधर्मभूतसन्ध्याद्यधिकाराभावस्तथा दासीत्वात् स्वधर्मभूतस्वपुरुषपरत्वाद्यभावेन सर्वपुरुषगामित्वेन साधारणत्वमिति भावः। हि यतः। सूतकादौ तदभावो न स्वरूपेण
अपि तु वचनात्। अत्र तु स्वरूपतः पत्यौ दास्यं पारतन्त्र्यमेव, शिष्यत्वादिवत्। अतो न
स्वधर्मपरित्यागो येन साधार्ण्यं स्यादिति भावः। ननु माभूद्दासीस्वैरिण्योः
साधारणत्वाभावाद्गम्यत्वं, वेश्यायास्तु तत्त्वेन तत्त्वं भवत्वित्यत आह—नापीति।
किमियं वेश्या वर्णानुलो-मजभिन्नगम्यजात्यन्तरान्तः पातिनी[7] उतनवर्णानुलामाजान्तः
पातिनो तत्राद्यं दूषयति। वर्णानुलोमेति—तादृशजात्यन्तराभावादेव तदन्तः
पातित्वेन गम्यत्वाभाव इत्यर्थः। न द्वितीय इत्याह— तदन्तरिति। तत्त्वे च
सति स्वैरिण्यादिवदेव तासां पतिपरायणत्वविधानादगम्यत्वमित्यर्थः। नापि तृतीय इत्याह

1.—५. १५४, १०७. । २. क. ख. न स्वधर्मपरि। ३. थ. द. सकलपु। ४. थ. द.
नच दासीभावादिति। ५. थ. द. न्त्र्यमात्रमेव। ६. त. नधर्मपरित्या। ७. प.

पातित्वे च पूर्ववदेवागम्यत्वम् । प्रतिलोमजत्वे तु तासां नितरामगम्यत्वम् । अतः पुरुषान्तरोपभोगे तासां निन्दितकर्माभ्यासेन पातित्यात्, पतितसंसर्गस्य निषिद्धत्वाच्च न सकलपुरुषोपभोगयोग्यत्वम् । सत्यमेवम् । किं त्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदण्डभयादिदृष्टदोषाभावाद्गम्यत्वं वाचोयुक्तिः । दण्डाभावश्च "अवरुद्धासु दासीषु" इति नियतपुरुषपरिग्रहोपाधितो दण्डविधानात्तदुपाधिरहिता-

5

## सुबोधिनी

त्वविधानादेव पूर्ववत् स्वैरिणीवत् दासीवच्च न गम्यत्वमित्यर्थः । नापि तृतीय इत्याह —प्रतिलोजत्व इति।प्रतिलोमजानां दुष्टत्वेन तद्गमनस्य निषिद्धत्वादित्यर्थः। किञ्च वर्णानुलोमजप्रतिलोमजादीनां सर्वासामपि परपुरुषोपभोगस्य निषिद्धत्वात् निषिद्धकर्माचरणे च पातित्यात् पतितसम्पर्कस्यापि निषिद्धत्वाच्च स्वैरिण्यादयः परपुरुषगम्या इत्याक्षेपोपसंहारव्याजेनाऽऽह-परेति। समाधत्ते-सत्यामिति। अयमभिप्रायः—दोषो हि द्विविधः दृष्टोऽदृष्टश्चेति । तत्रादृष्टदोषसद्भावेऽपि दृष्टदोषरूपं यद्रक्षकपित्रादिभ्यस्ताडनादिभयं राज्ञो दण्डभयं चेति' तदभावादुभयदोषवत्सु परदारेषु यथा सर्वात्मना गम्यत्वाभावस्तद्वन्न स्वैरिण्यादिष्विति साधरण्येन गम्यत्वकथनमिति । अस्तु नाम गम्यत्ववाचोयुक्तिः, तद्गमने दण्डाभावः कथमित्यत आह-दण्डाभावश्चेति।अयमभिप्रायः"अवरुद्धासु दासीष्वि इत्यनेन वचनेनैकैकस्मिन् पुरुषे नियतानामवरुद्धादीनामन्यपुरुषोपभोगे उपभोक्तुर्दण्डविधानान्नियतपुरुषपरिग्रहो

## बालंभट्टी

—प्रतीति। नेतरामिति—अतिशायितगम्यत्वाभाव इत्यर्थः। नितरामिति पाठे न तासामिति पाठः प्रतिलोमजानां दृष्टत्वेन तद्गमनस्य निषिद्धत्वादित्यर्थः । गम्यात्वमिति पाठः । गम्यत्वमिति पाठे सामान्येनपुंसकम्। एवमन्यत्रापि स्वैरिण्यादयो न परपुरुषगम्याः इत्याक्षेपमुपसंहरति—अत इति,—उक्तहेतुजातादित्यर्थः। तासां—वर्णानुलोमप्रतिलोमजानां सर्वासां स्वैरिण्यादीनाम्।निन्दितेति—परपुरुषोपभोगस्य निषिद्धत्वात् तस्या अपि। समाधत्ते—सत्यामित्यादिना । सत्यमित्यर्द्धाङ्गीकारे; तथाऽपि योजयति—किन्त्विति । अत्र नारदीयादौ—पित्रादीति । पित्रादिरक्षकश्च राजदण्डश्च तयोर्भयादिरूपदृष्टदोषाभावाद्गम्यत्वरूपवाचोयुक्तिर्वचनमात्र इत्यर्थः । अयं तासामेव दण्डोऽस्त्वत आह—

१. ज. नुलोमजत्वन्यति । २. थ. द. न्तःपातित्वे इति । ३. थ. द. जानाम् । ४. थ. द. त्कर्मा । ५. षोपग । ६. थ. द. अतः परपुरुषान्तरोपभोग । ७. थ. द. सत्यमेवमित्यादिना । ८. थ. दोषो द्वि । ९. थ. द. तादृष्टेदोषरूपम् । १०. थ. द. ज्ञः सकाशाद्दण्डात्मकं भयं च तद । ११. थ. द. स्तथा न स्वै । १२. थ. द. माशयः ।

स्वर्थादि गम्यते। स्वैरिण्याद्यानां पुनर्दण्डाभावो विधानाभावात् "कन्यां भजन्तीमुत्कृष्टां न किञ्चिदपि दापयेत्।" इति लिङ्गनिदर्शनाच्चावगम्यते। प्रायश्चित्तं तु स्वधर्मस्खलननिमित्तं गम्यानां गन्तृणां चाविशेषाद्भवत्येव। यत्पुनर्वेश्यानां जात्यन्तरा-

---

## सुबोधिनी

दण्डग्रहणे हेतुरित्युक्तं स्यात्। तथा च यत्र हेत्वभावस्तत्र दण्डाभाव इत्यर्थसिद्धत्वात् तादृशहेत्वभावेन स्वैरिण्यादिगमने दण्डाभाव इत्यर्थः। ननु मा भूत् स्वैरिण्यादिगन्तुः पुरुषस्य दण्डः। स्मर्यित्रीणां स्वैरिण्यादीनामेव दण्डोऽस्त्वित्यत आह—स्वैरिण्याद्यानामिति। अत्रैव हेत्वन्तरमाह—कन्यामिति। अयमर्थः—उत्कृष्टंभजन्तीं कन्यां किमपि न दापयेदिति कन्याया दण्डनिषेधो लिङ्गम्। एवं लिङ्गदर्शनञ्च स्वैरिण्यादीनां दण्डभाव इति। एतदुक्तं भवति—लिङ्गदर्शनं नामनिमित्तमात्रं, नाव्यभिचरितो हेतुः। कन्याऽपि स्त्री स्वैरिण्यादयोऽपि स्त्रियः। अत उभयत्र स्त्रीत्वाविशेषात् कन्याया इव स्वैरिण्यादीनामपि दण्डाभाव इति हेतुमात्रमेतत्। मुख्यहेतुस्तु तद्दण्डविध्यभाव एवेति। यद्येवं दण्डाभावस्तर्हि प्रायश्चित्तमपि न स्यादित्यत आह—प्राय इति। कैश्चिदुक्तं वेश्यानां वर्णाद्यन्तःपातित्वम्। तद्दूषणपुरस्सरं स्वमतमभिधातुं तदनुभाषते—यत्पुनरिति। अनुमानशिक्षा त्वेवं कर्तव्या। वेश्या वर्णानुलोमान्तःपातिन्यो भवितुमर्हन्ति—प्रतिलोमजात्यन्तरासम्भवे सति मनुष्यजात्याक्रा-

## बालंभट्टी

स्वैरिण्याद्यानामिति। हेत्वन्तरं मानवमाह—कन्यामिति। संभोगार्थमुत्कृष्टं उत्कृष्टजातिं पुरुषं भजन्तीं सेवमानां कन्यां किञ्चिदपि स्वल्पमपि दण्डं न दापयेदित्यर्थः। अयं निषेधः कन्याया एव; न स्वैरिण्यादीनाम्। अत आह—लिङ्गेति। लिङ्गदर्शनं निमित्तमात्रं अव्यभिचारिनामहेत्वन्तरतः। कन्याऽपि स्त्री, स्वैरिण्यादयोऽपि स्त्रिय इत्युभयत्र स्त्रीत्वाविशेषात् कन्याया इव स्वैरिण्यादीनामपि दण्डाभाव इति भावः। ननु यदि दण्डाद्यभावस्तर्हि प्रायश्चित्तमपि न स्यात्; अत आह—प्रायश्चित्तमिति। स्वधर्मेति—बहुव्रीहिणा पूर्वविशेषणम्। गम्यानां स्त्रीणां उक्तानां गन्तृणां पुरुषाणाम्। वेश्यास्थले विशेषं प्रतिपादयितुं वेश्याया वर्णाद्यन्तःपातित्वं कस्यचिदनुमानप्रमाणकमभिमतं, तन्मतमाह—यत्पुनरिति। वेश्येति; पक्षः-

---

१. क. ख. र्थादवग.। २. क. स्वैरिणीनां पुनः। ३. थ. द. क्तं भवति। ४. एवमपिस्त्रीणां। ५. थ. द. न्यां भजन्तीमिति। ६. थ. द. वांविधाति। ७. त. र्शनं नि। ८. त दण्डविध्याभावचेति। ९. थ. द. यश्चित्तन्त्विति। १०. नः सर्ववेश्यानां।

संभवे न वर्णान्तःपातित्वमनुमानादुक्तं—वेश्याः वर्णानुलोमाद्यन्तःपातिन्यो, मनुष्यजात्याश्रयत्वात्, ब्राह्मणादिवदिति । तन्न—कुण्डगोलकादिभिरनैकान्तिकत्वात् । अतो वेश्याख्या काचिज्जातिरनादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्नापुरुषसंभोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धबलादभ्युपगमनीया[1] । न च निर्मूलेयं 5 प्रसिद्धिः । स्मर्यते हि स्कन्दपुराणे 'पञ्चचूडा नाम काञ्चनाप्सरसः, तत्सन्ततिर्वेश्याख्या पञ्चमी जातिः' इति । अतस्तासां नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमने नादृष्टदोषो नापि दण्डः । तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डः, तथाऽप्यदृष्टदोषोऽस्त्येव—"स्वदारनियतः सदा" इति नियमात्, "पशुवेश्याभिगमने प्राजापत्यं विधीयते ।" इति प्रायश्चित्तस्मरणाच्चेति 10 निरवद्यम् ॥ २९० ॥

## सुबोधिनी

न्तत्वात् । यत्र यत्र उक्तहेतुः तत्र तत्र वर्णाद्यन्तःपातित्वं यथा ब्राह्मणादिष्विति । हेतोरनैकान्तिकत्वेनानुमानं दूषयति—तन्नेत्यादिना । कुण्डगोलकादीनामाचाराध्याये वर्णाद्यन्तःपातित्वाभावस्योक्तत्वेन तत्रोक्तहेतुसद्भावेऽप्युक्तसाध्याभावादित्यर्थः । इदानीं स्वमतमाह—अतो वेश्येति । तामेव जातिमाह—उत्कृष्टे[3]ति । अनिषिद्धपुरुषोत्पन्नत्वे सति पुरुषसम्भोगवृत्तित्वं जातिरित्यर्थः । पञ्चमीति—ब्राह्मणत्वादिजात्यपेक्षया वेश्याजातिः पञ्चमीत्यर्थः । पश्विति—पश्वभिगमने वेश्यागमने चेत्यर्थः ॥ २९० ॥

## बालंभट्टी

वर्णेति । साध्यम् । आदिना प्रतिलोमपरिग्रहः । हेतोर्व्यभिचरितत्वेन दूषयति—तत्र कुण्डेति । तैर्हेतोर्व्यभिचरितत्वादित्यर्थः । कुण्डादीनामाचाराध्याये वर्णान्तःपातित्वाभावस्योक्तत्वेन तत्र हेतुसत्त्वेऽपि साध्यस्याभावादिति भावः । स्वमतमाह—अत इति—उक्तहेतोरित्यर्थः । तामेव जातिमाह—वेश्यायामिति । अनिषिद्धपुरुषोत्पन्नत्वे सति तत्पुरुषसंभोगवृत्तित्वं वेश्यात्वमित्यर्थः । एतत्घटकवेश्याया अपदिमेव लक्षणमिति ध्वनयन् दृष्टान्तमाह—ब्राह्मेति । अनादित्वाच्च संसारस्य न दोषः । एतत्सूचनार्थमेवानादिरित्युक्तं । हि यतः । पञ्चमीति । ब्राह्मणत्वादिचतुष्टयापेक्षया पञ्चमीत्यर्थः । प्रकृतमवसरविशेषे आह—अत इति । इदमनवरुद्धायाम् । तत्रापि विशेषमाह—तासु चेति । वेश्यास्वपीत्यर्थः । पशुवेश्येति—पश्वभिगमने, वेश्याभिगमने चेत्यर्थः ॥ २९० ॥

१. ख. ग. भ्युपगमनीयम् । २. घ. ङ. ब्राह्येति । ३. ष्टजातेरिति ।

"अवरुद्धासु दासीषु" इत्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतस्ता-
स्वभुजिष्यासु दण्डो नास्तीत्यर्थादुक्तं ; तस्यापवादमाह—

**प्रसह्य दास्याभिगमे दण्डो दशपणः स्मृतः।**
**बहूनां यद्यकामाऽसौ चतुर्विंशतिकः पृथक् ॥ २९१ ॥**

पुरुषसंभोगजीविकासु दासीस्वैरिण्यादिषु शुल्कदानविरहेण प्रसह्य बलात्कारे- 5
णाभिगच्छतो दशपणो दण्डः। यदि बहव एकामनिच्छन्तीमपि बलात्कारेणाभिग-
च्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणपरिमितं दण्डं दण्डनीयः। यदा पुनस्तदि-
च्छया भाटिं दत्त्वा पश्चादनिच्छन्तीमपि बलाद्व्रजन्ति तदा तेषामदोषः यदि

भुजिष्या कर्मकारिण्यो दास्यः। तास्वपि स्वामिकर्मपरिहापणेनाक्रम्य गच्छतो दण्डः। गम्यास्वपि शूद्रादीनामुपरतभर्तृकासु भ्रातृभार्यासु पुष्पांजल्याद्यनुपनीतासु पुंवचन-पत्यज्ञापनार्थमदत्त्वैव शुल्कम् ॥ २९० ॥

**प्रसह्य दास्यभिगमे दण्डो दशपणस्स्मृतः। बहूनां यद्यकमाऽसौ चतुर्विंशतिकः पृथक् ॥ २९१ ॥**

अकामाभिगमने बहूनामेकस्यामेव दास्यां प्रत्येकं चतुर्विंशतिपणो दण्डः ॥ २९१ ॥

अविशेषेणैव तु —

## बालंभट्टी

उत्तरसंगत्यर्थं फलितमाह—अवरुद्धास्विति। विदधत इत्यस्येव विशेषणम् दण्डविधाना-दिति पाठान्तरम्। तास्वभुजीति पाठः। तस्य अभुजिष्यागमने दण्डाभावस्य तत्र हेतु सूचयन्नाह —पुरुषेति। दासीग्रहणमुपलक्षणमित्याह —स्वैरीति। प्रसह्येत्यस्य व्याख्या –बलादि ति। तस्यैव विवरणं —शुल्केति। अत एवाभुजिष्यास्वपि अस्य दण्डः। एतावतैवास्य सार्थक्यमाहअन्यथा असंबद्धत्वं,वैयर्थ्यं च। स्पष्टमेव उत्तरार्द्धतात्पर्यार्थमाह— यदि बहव इति। मूले असौ दास्यादिः अत एव व्याख्यानं सामान्येन। पर्राति—तत्परिच्छिन्नं समुदितं बऽऽस्स्वित्यर्थः। विशेषमाह —यदा पुनरिति। भाटिं सर्वमूल्यम्—तेषां बहूनां शुल्कस्य दत्तत्वात्। तत्र विशेषमाह—यदीति। तथा च तत्र तथाकेरण पुनरपि तेषां दोष एवेति भावः। अपि संग्राह्यं वचने एव व्यक्तम्। वडवा—गृहदासी ॥ २९१ ॥

---

१. ख. तदप।

व्याध्याद्यभिभवस्तस्या न स्यात्--"व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा । आमन्त्रिता चेन्नागच्छेददण्ड्या वडवा स्मृता ॥" इति नारदवचनात् ॥ २९१ ॥

**गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत् ।**
**अगृहीते समं दाप्यः पुमानप्येवमेव च ॥ २९२ ॥**

5 यदा तु शुल्कं गृहीत्वा स्वस्थाऽप्यर्थपतिं नेच्छतितदा द्विगुणं शुल्कं दद्यात् । तथा शुल्कं दत्त्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव । "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् । अनिच्छन्दत्तशुल्कोऽपि शुल्कहानिमवाप्नुयात् ॥" इति तेनैवोक्तम् । तथाऽन्योऽपि विशेषस्तेनैव दर्शितः—"अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् । अक्रमेण च संगच्छन् घातदन्तनखादिभिः ॥ अयोनौ वाऽभिगच्छेद्यो बहु

## सुबोधिनी

वडवा स्मृतेति—वडवागृहदासी ॥ २९१ ॥

आक्रमण चे सङ्गच्छान्निति—अनिच्छन्तीं ताडनदन्तनखादिभिः करणैराक्रम्य गच्छन्नित्यर्थः बहुभिरिति । शुल्कार्थं शुल्कं वा दत्त्वा यो बहुभिः सङ्गमयाति स इत्यर्थः ॥२९२॥

## बालंभट्टी

ननु यदा पुनरित्यादिना तेषां दोषा भाव एवे इत्यादिप्रतिपादनेन तस्या एव तत्र दोषसंभवेन स वक्तव्योऽत आह—गृहीतेति। मौलमिदम्। किञ्चित्यपपाठः। अत्रापि वेश्याग्रहणमुपलक्षणम्। अत एवसामान्येय व्याचष्टे यदाविति—नारदोक्तेरेवाऽऽह—च स्थापिति तृतीयपदस्यायममर्थः, शुल्के निश्चितेऽप्यगृहीतं सति नेच्छन्ती सा समं यावन्निश्चितं तावदेव दाप्येति स्पष्टत्वाद्व्याख्यात्रा नोक्तम्। तुर्यपादार्थमाह-तथेति। स्वयं स्वयमेव। शुल्कोति-यद्दत्तं तस्य हानिरेवेत्यर्थः। स्पष्टत्वाय नारदीयमाह—शुल्कमिति। यतः इत्यादि तथा तद्वत् । तेनैव नारदेनैव । अप्रेति। शुल्कमप्रयच्छन् । पुमान् तथा बलात्कारेण व्याध्याभिभूतां स्त्रियं भुक्त्वा शुल्कमष्टगुणं यावन्निर्णीतं, तदष्टगुणं दाप्यः। घातस्ताडनं; पादेति पाठान्तरम्। तथा च

१. ग. नारदस्मरणात् । २. क ग. किञ्च । यद्यशु । ३. घ. ग. सुस्यापि नेच्छा। ङ. ग स्वस्थापि नेच्छ क. स्वस्थापि तं नेच्छ । ख. स्वस्थापि पण्यस्त्रनिच्छ । ४. ख. घ. ङ. अक्रमेण च. सङ्ग ५. थ. द. भिर्वापिवासयेन् । ६. त. थ शुल्कमदत्वा वा एकमेव शुल्कम् दत्त्वावायो ।

भिर्वाऽपि वासयेत् । शुल्कमष्टगुणं दाप्यो विनयं तावदेव तु ॥ वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः॥"इति॥२९२॥

किं च—

अयोनौ गच्छतो योषां पुरुषं वाऽभिमेहतः ।
चतुर्विंशतिको दण्डस्तथा प्रव्राजितागमे ॥ २९३ ॥

5

यस्तु स्वयोषां मुखादावभिगच्छति पुरुषं वाऽभिमुखो मेहति तथा प्रव्रजितां वा गच्छत्यसौ चतुर्विंशतिपणान्दण्डनीयः ॥ २९३ ॥

---

अयोनौ गच्छतो योषां पुरुषं वाऽभिमेहतः ।
विद्वान्दशपणो दण्डः तथाप्रव्रजितागमे ॥ २९३ ॥

आस्यपाय्वादौ पुरुषस्य शिश्नप्रक्षेपणं पुरुषमेहनम्। व्यभिचारिणीत्वात् ज्ञातिभिस्त्यक्ता स्त्री प्रव्रजिता । स्पष्टमन्यत् ॥ २९३ ॥

सुबोधिनी

पुरुषमिति—पुरुषपदं काकाक्षिवदुभयत्र सम्बध्यते। ततश्च पुरुषं वा मुखादावभिग-

बालंभट्टी

ताडनदंतक्षतनखक्षतादिभिः करणैर्य आक्रमो वशीकरणं तेन संमूर्च्छश्च। अयोनौ योनिभिन्ने इत्यर्थः। मुखादौ योऽभिगच्छेत् स च, तथा शुल्कमदत्त्वा एकमेव वा शुल्कं दत्त्वा यो बहुभिर्वासयेत् सङ्गमयति तां सोऽपि तथेत्यर्थः। विनयं दण्डम्। ननु कथं दोषनिर्णयस्तत्रात आह—वेश्या इति। तत्र तदीयगृहे वा । कामुक्यः साभिलाषाः तद्गृहवासिन्यः। प्रधानाः वृद्धाः वेश्याः सन्ति ताः मिथः समुत्पन्नविवादरूपकार्यविषयकसंशये सति तत्परिहाराय निर्णयं जानन्तीत्यर्थः। वेश्याः प्रधानाः ये तत्र कामुकाः इति पाठान्तरम्। तदा तत्र वेश्यैव प्रधानमुपजीव्यमेषामेतादृशास्तद्गृहनिवासिनो ये कामुकाः विटाः सन्तीत्याद्यर्थः ॥ २९२ ॥

किंचेति—एतत्प्रसङ्गादन्यदप्युच्यते इत्यर्थः। एवमग्रेऽपि। अन्यत्र दण्डाल्पत्वस्य गमनादौ सत्वादाह—स्वेति। अयोनावित्यस्यार्थो—मुखादाविति। आदिना पायुपरिग्रहः। पुरुषमेति—तदाभिमुखः सन्मेहति मूत्रादिकं करोति सोऽपि। वा चार्थे। प्रव्रजिता प्रागुक्ता । नन्विदं

---

१ ख. ग. वाऽपिमेहतः। २. क. यः स्वेच्छयास्वयोषाम् मुखा। ग. ङ. यस्तुयोषां मुखादौ। ३. थ. द. पुरुषं वाऽभिमुखो मेहतीति । ४. द. वाऽपिमु । थ. वाऽभिमु ।

किं च—

**अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत्।**
**शूद्रस्तथाऽन्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥ २९४ ॥**

अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान्प्रायश्चित्तानभिमुखात् "सहस्रं त्वन्त्यजस्त्रियम्"

कामतस्तु त्रैवर्णिकानां—अन्त्याभिगमने त्वङ्क्य इत्यादि ॥२९४॥

अन्त्यशब्दोऽयं शूद्रान्निकृष्टापशदवचनं तामन्त्यामभ्यासादेतद्द्रष्टव्यम्। ततश्च शूद्रस्याप्रवासनम्। दास्यत्वज्ञापनार्थं दासीकृत्य च प्रायश्चितं कारयितव्यम्। अन्त्यस्य त्वपशदस्य शूद्राद्यार्यस्त्र्यभिगमने वध एव। अनया दिशा संग्रहणस्वरूपोपायदण्डप्रपञ्चः कार्यः॥२९४॥

## सुबोधिनी

च्छति, पुरुषं प्रत्यभिमुखः सन् मेहति मूत्रादिकं करोति चेत्यन्वयः। नन्वत्र प्रव्रजितागमने चतुर्विंशतिपणात्मकदण्डः। नारदेन तु—"राज्ञी प्रव्रजिता धात्री"[2] इत्युपक्रम्य—आसामन्यतमाङ्गच्छन् गुरुतल्पग उच्यते। शिश्नस्योत्कतनात् तत्र नान्यो दण्डो विधीयते॥" इति शिश्नोत्कर्तनं दण्डोऽभिहितः। अतः परस्परविरोध इति चेन्नैवम्। अत्यन्तगुणवत्प्रव्रजितागमनाविषयं तत्रैवाऽभ्यासविषयं वा नारदवचनम्। एतद्विपरीताविषयं योगीश्वरवचनमिति न किञ्चिदेतत्॥ २९३ ॥

## बालंभट्टी

"राज्ञीप्रव्रजिताधात्री" इति प्रयुक्तनारदविरुद्धम्; अत्र हि पणानां चतुर्विंशतिदण्ड उक्तः, तत्र शिश्नस्योत्कर्तनं दण्ड उक्तः इति चेत्— न। अत्यन्तगुणवत्प्रव्राजितागमनविषयकं, तत्रैवाभ्यासविषयकं वा। नारदीयमिदन्तु तदन्यविषयकमिति भेदात् त्वङ्क्येति ल्यबन्तपाठः। त्वङ्क्ययतिपाठे आर्षव्याख्यानानुसारात् यदा त्वङ्क्यः इति प्रथमान्तपाठः। तेनाङ्कयित्वा प्रवासयेदित्यर्थः॥ २९३ ॥

तदा व्याख्यानफलितार्थकथनपरतया नेयं शूद्रस्याग्रे विशिष्योक्तेराह—त्रैवर्णीति। न्यूनं मध्ये समूलं पूरयति—सहस्रमिति। बध्यते इति बन्धः; कुत्सितश्चासौ बन्धश्च कुबन्धः।

---

१ क. स्वङ्कय कुब। ग. त्वङ्कय कुब। २—१२. ७४.। ३.—१२. ७५.।

इति मनुवचनात्पणसहस्रं दण्डयित्वा कुबन्धेन कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत्। प्रायश्चित्ताभिमुखस्य पुनर्दण्डनमेव। शूद्रः पुनश्चाण्डाल्यभिगमेऽन्त्य एव चाण्डाल एव भवति। अन्त्यजस्य पुनश्चाण्डालादेरुत्कृष्टजातिस्त्र्यभिगमे बध एव ॥ २९४ ॥

॥ इति स्त्रीसंग्रहणप्रकरणम् ॥ 5

## सुबोधिनी

दण्डनमेवेति—नाङ्कनमित्यर्थः ॥ २९४ ॥ इति भट्टविश्वेश्वरविरचितायां सुबोधिन्यां स्त्रीसंग्रहणप्रकरणम् ॥

## बालंभट्टी

तदर्थमाह—भगेति, प्रागुक्तमनोरिति भावः। तद्विशेषणफलमाह—प्रायश्चित्तेति। दण्डनमेवेति—नांकनमित्यर्थः। तथेत्यस्यार्थः-चाण्डाल्यभीति। सर्वसंग्रहायाऽऽह-उत्कृष्टेति ॥२७४॥ इति स्त्रीसंग्रहणप्रकरणम् ॥

———.o:———

1.—८, ३८५।

## अथ प्रकीर्णकप्रकरणम् २५

व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यमप्यपरं विवादपदं मनुनारदाभ्यां विवृतम्। तत्र नारदः—"विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते। स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते॥" इति॥ मनुरप्याह—"अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे॥" इत्यादि। यद्यपि

### सुबोधिनी

विवाहेति—यत्र विवादपदे स्त्रीणां पुंसां च विवाहादिविधिः कीर्त्यते तद्विवादपदं स्त्रीपुंसयोगसंज्ञमुच्यत इत्यन्वयः। एतदुक्तं भवति—यत्र विवाहे स्त्रीपुंसयोगव्यतिक्रमो भवति तद्यथा—कन्यका त्वेकं वृणीते, व्रियमाणश्च पुमान् न तां दोषशङ्कादिभिः; एवमेव पुरुषः परिणेतुमिच्छति कन्यकां, कन्यका तु न तं दोषशङ्कादिभिः;— एतादृशी स्थले व्यवहारः प्रवर्तते। तथा विवाहादीत्यादिपदात् परपुरुषेभ्यः स्त्री रक्षणीया, सर्वात्मना स्त्रियाऽपि भर्तृपरया भवितव्यमित्यादिनियमव्यतिक्रमे च विवादो भवति

### बालंभट्टी

स्त्रीपुंसयोगाख्यमपरमपीत्यर्थः। विवाहादीति—यत्र विवादपदे स्त्रीणां पुंसां च विवाहादिविधिः कीर्त्यते अनुमति तदभावाभ्यां प्रसिद्धो भवति तद्विवादपदं स्त्रीपुंसयोगसंज्ञमुच्यते इत्यर्थः। यत्र विवाहे स्त्रीपुंसयोर्व्यतिक्रमो भवति, तद्यथा कन्यकावरमयं कंचित् वृणीते, स व्रियमाणः पुमान् न तां दोषशंकादिना; एवमेव पुरुषोऽपि यांकांचित् कन्यकां परिणेतुमिच्छति, कन्या तु न तं दोषशंकादिना;— एवं चैतादृशस्थले तत्र व्यवहारप्रवृत्तिरेव। विवाहादीत्यादिना परपुरुषतः स्त्री रक्षणीया सर्वात्मना, स्त्रियाऽपि भर्तृपरया भाव्यमित्यादिनियमपरिग्रहः। एतत्सर्वं स्त्रीपुंसयोगाख्यविवादपदमिति भावः। आदिम्राम्नमेवाऽऽह—मनुरपीति। अत एवाऽऽदौ नारदमुक्त्वाऽग्रेमनूक्तिरिति बोध्यम्। स्वैः स्त्रीयः भ्रात्रादिभिः। दिवानिशं सदा विषयेषु अनिषिद्धेष्वपि रूपरसादिविषयेषु सज्जन्त्यश्च

---

१.—१२. १.। २.—९. २.। ३. थ. द. विवाहादिविधिः स्त्रीणाम्। ४. त. णः सपु। ५. थ. एवमेवेत्यादिभिः। ६. थ. द. त्यत्रादि। ७. त. व्यति एतत् (?)।

स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धः ; तथाऽपि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्पराभिचारे[1] दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ ; इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्ममध्येऽस्य स्त्रीपुंसधर्मजातस्योपदेशः । एतच्च विवाहप्रकरण एव सप्रपञ्चं प्रतिपादितमिति योगीश्वरेण न पुनरत्रोक्तम् ॥ 5

सांप्रतं प्रकीर्णकाख्यं व्यवहारपदं प्रस्तूयते, तल्लक्षणं च कथितं नारदेन— "प्रकीर्णके पुनर्ज्ञेया[2] व्यवहारा नृपाश्रयाः। राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं[3] तथा ॥ पुनः

## सुबोधिनी

एतत् सर्वं स्त्रीपुंसयोगाख्यं विवादपदमिति । तत्कर्मकरणं यथेत्यादि—तत्कर्मकरणं राजकर्मकरणम्[4] । पुनः प्रदानं कृतस्य कर्मणः प्रत्यर्पणं राज्ञे । "पुरः प्रदानम्[5]" इति पाठे दुर्गगुल्मस्थलादिरूपपुराणां पालनाय दानम् । संभेदः प्रकृतीनां संमेलनम् । यद्वा प्रकृतीनां संभेदोऽन्तर्जातः[6] परस्परविरोधः । प्रतिग्रहविलोपः प्रतिग्रहस्य विलोपो नाशः; यथा ब्राह्मणाय प्रतिग्रहयोग्याय पात्रभूताय दानम्, अथ[7] वा शूद्रादौ प्रति-

## बालंभट्टी

प्रसक्ता अपि आत्मनो वशे आयत्ततायां संस्थाप्याः। आत्मवशाः कार्याः इत्यर्थः।"पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः। संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान् ॥"[8] इत्यादिः । इत्यादीत्यादिना " पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥"[9] इत्यादिपरिग्रहः । इदं च यथासंभवं द्रष्टव्यम् । निषिद्ध इति—पूर्वमिति भावः। प्रत्यक्षेण—साक्षात् । अभिचारे—व्यतिक्रमे जातस्य तत्स मूहस्य । न्यूनतामत्र परिहरति—एतच्चेति। स्त्रीपुंसधर्मजातमित्यर्थः । पुनः—पश्चात् ॥

इति स्त्रीपुंसयोगप्रकरणम् ॥

चस्त्वर्थे । एवं पुनरपि। यथेति पाठे आदौ स योज्यः । तानेव दर्शयतीत्यर्थः । तत्कर्मेति—राजकार्याज्ञाविषय कर्मेत्यर्थः । पुनः प्रदानमिति—कर्ता अकृतस्य कर्मणः

१. ख. परम्परातिचरे । २. क. प्रकीर्णकेषु विज्ञेयाः । ३. क. तत्कर्मकरणम् । ४. त. "मेराज्ञांकर्मकरणम् । ५. थ. द. रप्रदा । ६. थ. द. न्तजो यः । ७. थ. द. अथवा । ८. मनुः ९. १. । ९. मनुः ९. ३. ।

प्रदानं संभेदः प्रकृतीनां तथैव च। पाषण्डिनैगमश्रेणिगणधर्मविपर्ययाः॥ पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः। प्रतिग्रहविलोपश्च कोप आश्रमिणामपि॥ वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा। न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके॥" इति प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात्। एवं च वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णकमित्यर्थाल्लक्षितं भवति॥

## सुबोधिनी

सिक्तता स्वधर्मभ्रंश इति यावत्। अथ वाऽश्रमिणां परस्परविरोधः कोपः। न दृष्टं यच्च पूर्वेषु—पूर्वोक्तेषु ऋणादानादिपदेषु यच्च व्यवहारपदं न दृष्टं तदित्यर्थः। इत्येवं परिगणितानां विवादानां निर्णयो यत्र तत् प्रकीर्णकमिति भावः। एवं चेति—केवलनृपनिर्णेयो यो व्यवहारः स इत्यर्थः॥

## बालंभट्टी

प्रत्यर्पणं राज्ञे इत्यर्थः। पुरप्रदानमिति पाठे दुर्गगुल्मस्थानादिरूपपुराणां पालनाय दानमित्यर्थः। पुत्रप्रधानसंभेदः इति कल्पतरुपाठः। प्रकृतीनां संभेदो मेलनं, अन्तर्जातिः, परस्परविरोधो वा। पाषंडयादि चतुर्णां लक्षणान्युक्तानि। तेषां धर्मव्यत्यया इत्यर्थः। प्रतिग्रहस्य विलोपो नाशः; यथा ब्राह्मणाय प्रतिग्रहयोग्याय पात्रभूतायदानम्। यद्वा प्रतिग्रहस्य शूद्रादौ प्रतिग्रहप्रवृत्तेः विलोपः। सः प्रतिग्रहे विवादश्चेति पाठान्तरम्। आश्रमिणां ब्रह्मचार्यादीनां, कोपः उद्रेकः। स्वधर्मांशे इति यावत्। मिथो विरोधो वा, तेषां कोपः। लोपश्चाऽऽश्रमिणामपि इति कल्पतरौ पाठः। वर्णसंकरयोर्दोषश्च तेषां वर्णानां संकराणां च वृत्तेर्नियमः। व्यस्तपाठो न युक्तः। पूर्वोक्तेष्वर्णादानादिपदेषु व्यवहारपदं न दृष्टम् तच्च सर्वं प्रकीर्णके स्यादित्यर्थः। "प्रकीर्णकं पुनर्ज्ञेयो व्यवहारो नृपाश्रयः।" इति कल्पतरूक्तपाठो भ्रमायातम्। तावन्मात्रं प्रतिज्ञासिद्ध्यर्थं व्याचष्टे—प्रकीर्णके इति। तदाख्ये इत्यर्थः। नृपाश्रयाः इति व्याचष्टे—नृपसमेति। तात्पर्यार्थमाह—नृप एवेति। एवेन प्राड्विवाकादिव्यवच्छेदः। तत्र तद्विषयविवादेषु आस्थाय निश्चित्य न चैतावताऽपि तल्लक्षणं नोक्तमिति प्रतिज्ञाहानिरेवात आह—एवं वदतेति। इत्येवं परिगणितानां विवादानां निर्णयोऽत्र प्रकीर्णके इति वदता नारदेनेत्यर्थः। एवं च वदतो इति पाठान्तरम्। यो नृपेति—केवलनृपाश्रयः तन्मात्रनिर्णेयो व्यवहारः इत्यर्थः॥ २९५॥

---

१ ख. श्रेणी. २.—१७.१—४.। ३. ग. त्प्रकीर्णकमिति।

तत्रापराधविशेषेण दण्डविशेषमाह—

ऊनं वाऽभ्यधिकं वाऽपि लिखेद्यो राजशासनम्।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ २९५ ॥

राजदत्तभूमेर्निबन्धस्य वा परिमाणान्न्यूनत्वमाधिक्यं वा प्रकाशयन्[1] राजशासनं यो लिखति[2], यश्च पारदारिकं चौरं वा गृहीत्वा राज्ञेऽनर्पयित्वा मुञ्चति 5 तावुभावुत्तमसाहसं दण्डनीयौ ॥ २९५ ॥

प्रसङ्गान्नृपाश्रयव्यतिरिक्तव्यवहारविषयमपि दण्डमाह—

अभक्ष्येण द्विजं दूष्य दण्ड्य उत्तमसाहसम्।
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम् ॥ २९६ ॥

---

यत्पूर्वप्रकरणेष्वनुक्तं पूर्वनिर्णीतव्यवहारपरिपूरणायेदानीमाह —न्यूनमभ्यधिकं वाऽपीत्यादि ॥ २९५ ॥

शासनवचनं वर्णलेख्यलक्षणार्थम्। लेखयिता लेखको वा न्यूनातिरिक्तादिलेख्यदोषकर्ता। रक्षणायापि तं पारदारिकं भोक्तुकाम उत्तमसाहसं दण्ड्यः ॥ २९५ ॥

यो राजप्रसादाद्यवष्टम्भात् प्रसह्य साहसिकत्वेन—अभक्ष्यैर्दूषयन् विप्रं दण्ड उत्तम साहसम्। क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्धिकम्॥२९६॥

---

सुबोधिनी

अधुना मूलमवतारयति— तत्रापराधविशेषेणेति ॥ २९५ ॥

बालंभट्टी

अथ मूलमवतारयति—तत्रेति;—प्रकीर्णके इत्यर्थः। पारेति समाहारद्वन्द्वः, समुद्राभ्रादितिवत् प्रयोगः। तदाह—पारेति॥ २९५ ॥

असंबद्धत्वादाह — प्रसङ्गादिति। अपिना तस्यापि समुच्चयः।

---

१. क. ख. वा अप्रकाशयन्। २ क. योऽभिलिखति। ३. क. दूष्यं दण्डमुत्त ग. प्रकाशयद्राजशासनम्। ४. त. त्रेति। ख. दूष्यदण्ड च.

मूत्रपुरीषादिना भक्ष्यानर्हेणान्नपानादिमिश्रणेन स्वरूपेण वा ब्राह्मणं दूषयित्वा खादयित्वोत्तमसाहसं दण्डयो भवति; क्षत्रियं पुनरेवं दूषयित्वा मध्यमम् । वैश्यं दूषयित्वा प्रथमम् ; शूद्रं दूषयित्वा प्रथमसाहसस्यार्धं—दण्डयो भवतीति संबन्धः । लशुनाद्यभक्ष्यदूषणे तु दोषतारतम्याद्दण्डतारतम्यमूहनीयम् ॥ २९६ ॥

5 किं च—

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥ २९७ ॥

उपपतनीयभक्ष्यैर्लशुनादिभिरयं दण्डेऽवसेयः । स्पष्टमन्यत् ॥ २९६ ॥

प्रच्छन्नतास्कर्ययोगात्तु—कूटस्वर्णव्यवहारीत्यादि ॥ २९७ ॥

सुबोधिनी

दण्डतारतम्यमूहनीयमिति— प्रायश्चित्तविधिबलाद् दोषतरतमभावं ज्ञात्वा ब्राह्मणादिवर्णसगुणनिर्गुणत्वादिपर्यालोचनया च दण्डः कल्प्य इत्यर्थः ॥ २९६ ॥

बालंभट्टी

अभक्ष्ये आहारार्थे कृत्य इत्याह—भक्षयानर्हेणेति । क्षत्रियादेरग्रे उपादानाद्द्विजपदं ब्राह्मणपरमित्याह —ब्राह्मणमिति। तत्रापि संभवात् प्रकारद्वयमाह— अन्नपानेति। दूष्येत्यत्रार्षो ल्यबित्याह—दूषयीति । तत्तात्पर्यार्थमाह—खादेति। दण्डः तथाकारकः । एवं उक्तप्रकारेण अस्याग्रेऽप्यनुषङ्गः। प्रत्यासत्तेराह—प्रथमेति । अर्द्धिकेति—इनीति ठन्। न्यूनतां निराचष्टे—लशुनाद्येति । भक्षार्हत्वेऽपि निषेधात्तत्त्वम्। ऊहनीयमिति—दोषतारतम्यं च प्रायश्चित्तविधिपर्यालोचनया च ज्ञेयमिति भावः ॥ २९६ ॥

किञ्चेति—प्रकृते अपराधविशेषेण दण्डविशेषान्तरमाहेत्यर्थः। एवमग्रेऽपि । कूटे-

---

१. ख. दिना अभक्ष्येण। २. ख. पानादिति मिश्रेण : क. मिश्रेण द्रव्यरूपेणवा । ग. मिश्रेण दूष्यान्नपाना। ३. ख. ग. दूषयित्वोत्तमसाहसम् । ग. साहसंदण्डोभ। ४. क. वैश्यंपुनर्दू। ५. त. दण्डेति । ६. त. लात्तर ।

रसवेधाद्यापादितवर्णोत्कर्षैः कूटैः स्वर्णैर्व्यवहारशीलः यः स्वर्णकारादिः, यश्च विमांसस्य कुत्सितमांसस्य श्वादिसंबद्धस्य विक्रयशीलः सौनिकादिः—चशब्दात्कूटरजतादिव्यवहारी च—ते सर्वे प्रत्येकं नासाकर्णकरैस्त्रिभिरङ्गैर्हीनाः कार्याः । चशब्दादङ्गच्छेदेन समुच्चितमुत्तमसाहसं दण्डं दाप्याः । यत्पुनर्मनुनोक्तं—"सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः । प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः॥" इति 5 तद्देवब्राह्मणराजस्वर्णविषयम् ॥ २९७ ॥

दूषितरजतादिकूटस्वर्णं श्वसृगालादिप्रभवं विमांसं तद्विशेषापेक्षयैव धनदण्डः । त्र्यंशहीनत्वं च व्यस्तसमस्तया योज्यम् । द्वौ हस्तौ एकश्च पादस्त्र्यंशानि । स्पष्टमन्यत्॥२९७॥

---

## सुबोधिनी

"विमांसस्य च विक्रयी" इत्यत्रस्थचशब्दार्थमाह—चशब्दात् कूटेति । "दाप्यश्चोत्तमसाहसम्" इत्यत्रस्थचशब्दाभिप्रायमाह—चशब्दात्त्र्यङ्गेति । अयमर्थः—त्र्यङ्गच्छेदमपि कृत्वोत्तमसाहसदण्डमपि दापनीया इति ॥ २९७ ॥

## बालंभट्टी

रित्यस्य व्याख्या सत्यादिः । रसवेधः रसान्तरप्रवेशः । आदिना तेन घर्षणं । णिन्यर्थमाह—शील इति।एवमग्रेऽपि। विर्विरोधे इत्याह—कुत्सितेति।तत्स्वरूपमाह—श्वादिसंबन्धस्येति। सौनिकः—सूना वधस्थानं तत्र भवः सौनिकः।आद्यचार्थमाह—चशब्दादिति। त्र्यंगेति—सामान्योक्तावपि स्मृत्यन्तरानुरोधेनोऽऽह—करनासाकर्णरूपै स्त्रिभिरिति।नासाकर्णकरैस्त्रिभिरित्यपि पाठः। दोषद्वयसत्वान्मूले यथाश्रुते दण्डद्वयम्। दण्डद्वयं चोक्तमिति यथासंख्यं प्रत्येकं दण्ड इति भ्रमनिरासाऽऽय द्वितीयचार्थमाह—चशब्दादिति । त्र्यंगच्छेदनसमुच्चितमिति पाठः। पूर्वचेन तृतीयस्य समुच्चयाद्दण्डत्रयं दण्डद्वयमिति वैषम्याद्यथासङ्ख्याप्रवृत्तेरिति भावः । मनुविरोधं परिहरति— यत्पुनरिति । कण्टकाः दुष्टास्तेषु पापिष्ठं लवशः ॥ २७९ ॥

१.—९. २९२. । २. त. त्र चश । ३. त 'च श' इत्यादि 'माह' इत्यन्तं नास्ति । ४. थ. ब्दादङ्गेति । ५. द. त्र्यङ्गभेदनमपि । थ. अङ्गच्छेदम ।

विषयविशेषे दण्डाभावमाह—

**चतुष्पादकृतो दोषो नापैहीति प्रजल्पतः ।**
**काष्ठलोष्टेषु पाषाणाबाहुयुग्यकृतस्तथा ॥ २९८ ॥**

चतुष्पादैर्गोगजादिभिः कृतो यो दोषो मनुष्यमारणादिरूपोऽसौ गवादि-
5 स्वामिनो न भवति अपसरेति प्रकर्षेणोच्चैर्भाषमाणस्य । तथा लगुडलोष्टसायक-
पाषाणोत्क्षेपणेन बाहुना युग्येन च युगं वहताऽश्वादिना कृतो यः पूर्वोक्तो दोषः
सोऽपि काष्ठादीन्प्रास्यतो न भवत्यपसरेति प्रजल्पतः । काष्ठाद्युत्क्षेपणेन हिंसायां

---

अक्रमतस्तु प्रवृत्तत्वात्—**चतुष्पादकृतो दोषो नापैहीति प्रभाषतः ।**
**काष्ठलोष्टेषु पाषाणबाहुयुग्यकृते तथा ॥ २९८॥**
'दुष्टोऽयं बलीवर्दादिः, अपसर्पणाय त्वर्यताम्' इत्येवंवादिनः स्वामिनश्चतुष्पादकृतेऽपराधे

सुबोधिनी

पाषाणोत्क्षेपणेन बाहुनेति—बाहुना कर्त्रा पाषाणोत्क्षेपणेन करणेन यो दोषः कृतः सः इत्यर्थः । पाषाणोत्क्षेपणकेन इत्यपि पाठोऽस्ति । एतदुक्तं भवति हस्तेन लगुडादिक उत्क्षिप्यमाणे प्रमादाद्यस्यकस्याप्युपरिपतनेनाङ्गभङ्गादिके जातेऽपि दोषभाक् स नभवतीति ॥ २९८ ॥

बालंभट्टी

चतुष्पादेत्यत्र समासान्तविधेरनित्यत्वाल्लोपोऽनित्य इत्याह—चतुष्पादैरिति । किं सर्वस्यनेत्यत आह—अपेति । अपैहीत्यस्यायमर्थः। प्रार्थमाह – प्रकेति। तस्याप्यर्थमाह—उच्चैरिति। काष्ठलोष्टपत्रेषुपाषाणयोर्द्वन्द्वं कृत्वा काष्ठलोष्ठाभ्याम् द्वन्द्वे मत्वर्थीयाच्च कृत्वा बाहुशब्देन कर्मधारयं कृत्वा युग्यशब्देन शाकपार्थिवादिः, द्वन्द्वो वा पूर्वानि-पातप्रकरणमनित्यमिति बोध्यम् । तदाह—तथेति। काष्ठपदार्थो लगुडेति।लोष्टं मृत्पिण्ड इत्यर्थः।सायकेति–पाषाणमुत्क्षेपणं येनेति बहुव्रीहिणा बाहुविशेषणम् । पाषाणोत्क्षेपकेणेति पाठान्तरम्।एतेन बाहुना कृत्वापाषाणोत्क्षेपेणमिति पाठान्तरम्।एतेन बाहुना कृत्वा पाषाणोत्क्षेपणं तत्करणे यो दोषः कृतः स इत्यर्थः इति व्याख्यानमपास्तम् । पूर्वोक्तःमनुष्यमारणादिरूपः

---

१. ग. कृतास्तथा । २. क. कृतो दोषः । ख हस्तेनेत्यादि काष्ठमित्यन्तम् नास्ति । ३. क अपसर्पेति ।

दोषाभावकथनं दण्डाभावप्रतिपादनार्थम् । प्रायश्चित्तं पुनरबुद्धिकरणनिमित्तमस्त्येव। काष्ठादिग्रहणं च शक्तितोमरादेरुपलक्षणार्थम् ॥ २९८ ॥

किं च—

छिन्ननस्येन यानेन तथा भग्नयुगादिना ।
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् ॥ २९९ ॥ 5

नसि भवा रज्जुर्नस्या, छिन्ना शकटादियुक्तबलीवर्दनस्यारज्जुर्यस्मिन् तत् छिन्ननस्यं शकटादि तेन, तथा भग्नयुगेन—आदिग्रहणाद्भग्नाक्षचक्रादिना च—यानेन पश्चात्पृष्ठतोऽपसरता,—चशब्दात्तिर्यगपगच्छता—प्रतिमुखं वाऽऽगच्छता च मनुष्यादिहिंसने स्वामी प्राजको वा दोषभाक् न भवति—अतत्प्रयत्नजनितत्वाद्धिंसनस्य ।

न दोषः। एवमेव चास्यासावर्थः। काष्ठादिक्षिपतो बाहुयुग्येन वा संरब्धयोस्तथा। शब्दानभिष्टे सदोषतैवेति गम्यते। अनभिप्रेतत्वादेव च ॥ २९८ ॥

छिन्ननस्येन यानेनेत्यादि ॥ २९९ ॥

---

बालंभट्टी

प्रास्यतः प्रक्षिपतः।अपैहीत्यादेर्मध्यमणिन्यायेनान्वय इत्याह— अपेति।बाहुःस्वतन्त्रं निमित्तं व्याख्यातभिमतमित्यन्ये । दृष्टदोषाभावेऽप्यदृष्टदोषोऽस्त्येवेति प्राग्वदाह—काष्ठादीति । अल्पत्वाय।ह— अबुद्धीति बहुव्रीहिः।न्यूनतां परिहरति—काष्ठादीति। चोऽप्यर्थे, व्युत्क्रमे च । तोमरादिकस्यापि ॥ २९८ ॥

अन्यत्रापि दोषाभावमाह—किंचेति। फलितार्थमाह—नसीति। निमित्तान्तरमाह—पश्चात्पृष्ठतइति।भूमिवैषम्यादिनेति भावः।यानेत्यस्यानुषङ्गः।अत एवाऽऽह—चशब्दादिति। हिंसने तत्रैव। एवस्यात्रान्वयात्तेनान्यत्र दोषसत्तासूचिता। स्वामिग्रहणमुपलक्षणमित्याह—प्रेति। यन्तेत्यर्थः ।नायं पर्युदासः, किन्तु प्रसज्य प्रतिषेध इत्याह—दोषभागिति। अत्रानुक्तं बीजमाह—अतदिति । तस्य तत्वाभावादित्यर्थः। वादिसंग्राह्यांशे मानं कथयन्नाह—

१. ख. प्रतिमुखंचाग ।

तथा च मनुः—"छिन्ननस्ये भग्नयुगे तिर्यक्प्रातिमुखागते। अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च॥ छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च। आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत्॥" इति॥ २९९॥

उपेक्षायां स्वामिनो दण्डमाह—

नस्यादिरहितबलीवर्दादियुक्तं छिन्ननस्यम्। तथा शब्दः प्रकारार्थः। स्पष्टमन्यत्॥ २९९॥

## सुबोधिनी

छेदने चैव यन्त्राणामिति—यन्त्राणां चर्मबन्धनानाम्। योक्त्रं युग्यं बलीवर्दग्रिवासम्बद्धकाष्ठम्। रश्मयो रज्जवः। एतेषां छेदने 'अपेहि' इति आरावे सति स्वामिनो न दण्ड इत्यर्थः॥ २९९॥

## बालंभट्टी

तथा चेति। यानस्य चैव यातुश्च। यानस्वामिन एव च दशातिवर्तनान्याहुः। शेषे दण्डो विधीयते इत्यस्यादिः। यानस्य रथादेर्यन्तुः सारथ्यादेः यानस्वामिनश्च। यस्य तद्यानं तेषां छिन्नमस्मादीति दशनिमित्तानि दण्डमतिक्रम्य वर्तन्ते। एषु निमित्तेषु दण्डो नानुष्ठीयते इति तदर्थः। छिन्नेति—इदं पूर्वार्द्धोक्तम्। सर्वं पूर्वोक्तरीत्या यानविशेषणं। नस्येत्यत्र शरीरावयवादिति यत्। सा च। तादृशबलीवर्दादिसंबन्धिरज्जुः; न तु या काचिदिति प्रागुक्तमेव। यानं च यथासंभवं बलीवर्दादिकं बोध्यम्। युगं काष्ठविशेषः। तादृशे रथादौ। भूमिवैषम्यादिना यानस्य चक्रान्तः प्रविष्टाकाख्यकाष्ठभंगे च। यंत्राणां चर्मबंधनानां छेदने च। तथैव योक्त्ररश्म्योश्छेदने च। योक्त्रं युगबलीवर्दादि ग्रीवासन्धिरज्जुः। काष्ठं वा। रश्मिः सामान्यरज्जुः प्रहरणं वा। दशमं निमित्तमाह—आक्रन्देपीति। अपसरेत्युच्चैः शब्दे सारथ्यादिना कृते च। यानेन प्राणिहिंसाद्रव्यनाशयोः कृतयोः। सारथ्यादेर्दण्डो नास्तीति मनुराहेत्यर्थः। चैवेत्येवं प्राग्वत्। "यत्रापवर्तते युग्यं वैगुण्यात् प्राजकस्य तु। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम्॥" इति मनोः यत्र सारथेरकौशल्यात्यानमन्यथा व्रजति तत्र हिंसायामशिक्षितसारथ्यनियोगात् स्वामी द्विशतं दाप्यः॥ २९९॥

---

१. ग. तथा प्रति मुखा। क. योक्त्ररश्म्यौ। २. ख. चक्रसगे। ३. क. आक्रन्दनेवाय। ग. आक्रन्दे वाप्य। ख. आक्रन्दने सत्यपै। ४.—८. २९१, २.।

शक्तोऽप्यमोक्षयन्स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ॥ ३०० ॥

अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः, शृङ्गिभिर्गवादिभिर्वध्यमानं समर्थोऽपि स्वामी यद्यमोक्षयन् उपेक्षते तदा अकुशलप्राजकनियोजननिमित्तं प्रथमसाहसं दण्डं दद्यात्। यदा तु 'मारितोऽहम्' इति विक्रुष्टेऽपि न मोक्षयति तदा द्विगुणम्। 5 यदा पुनः प्रवीणमेव प्राजकं प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी; यथाऽऽह मनुः—"प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति।" इति। प्राजको यन्ता; आप्तोऽभियुक्तः। प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः; यथाऽऽह मनुः—"मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषी भवेत्। प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहया-

हिंसतः परिगृहीतस्वबलीवर्दादेः—शक्तोऽप्यमोक्षयन् स्वामी शृंगिणो दंष्ट्रिणस्तथा। प्रथमं साहसं दाप्यो विक्रुष्टे द्विगुणं तथा॥३००॥

---

## बालंभट्टी

स्यादित्यर्थस्यानुरोनाह—अप्रवीणेति। तत्र शेषषष्ठीत्याह—गजादिभिरिति। शेषमाह—वध्येति। तत्र तथा वार्थे। आद्यर्थमाह—यद्येति। नियोजनेति बहुव्रीहिः। विक्रुष्टेऽपि, आक्रोशनेऽपि। विशेषमाह—यदापुनरिति। तदेति—अन्यथाभावे इति शेषः। अभियुक्तः, कुशलः। यदि स तादृशस्तदा स एवोक्तं द्विशतं दण्डम्। वक्ष्यमाणं च मनुष्यमारणे इत्यादिना तं सर्वमपीति न स्वामीत्यर्थः। किंच। "युग्याः रथाःप्राजकेनाप्तेनेतसर्वे दण्डयाः शतंशतं सचेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा प्रमापयेत् प्राणभूतस्तत्र दण्डो विचारितः" इति मनुः। अकुशले तस्मिन्। स्वामिसारथिभिन्ना अन्येऽपि यानारूढाः—अकुशलसारथिकयानारोहणात्। सर्वे प्रत्येकं शतं शतं दण्ड्याः। सचेत् प्राजकः प्रचुरगत्यादिभिरिथान्तरेण वा संरुद्धः, स्वरथगमनानवधानात् प्रत्येकसमर्पणंक्षमः। तुरगैः रथेन रथावयवैर्वा प्राणिनो व्यापादयति, तत्राविचारितो दण्डः कार्य एवेत्यर्थः। विशेषान्तरमाह—प्राणीति। तस्मादपीत्यर्थः। उक्तसर्वस्थले एवेति भावः।

---

१. ग. दंष्ट्रिभिः शृङ्गिभिः। २. ग. हमित्यवक्रुष्टेपि। ख. हमितिक्रुष्टेपि। ३. ख. चौरवत् किल्बिषं। भवेत्।

दिषु ॥ क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः । पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः । माषकस्तु भवेद्दण्डः श्वशूकरनिपातने॥" इति ॥ ३०० ॥

किं च—

5 जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् ।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥ ३०१ ॥

स्ववंशकलङ्कभयाज्जारं पारदारिकं 'चौर निर्गच्छ' इत्यभिवदन् पञ्चशतं पणानां पञ्च शतानि यस्मिन् दमे स तथोक्तस्तं दमं दाप्यः । यः पुनर्जारहस्ता-

तथाशब्दोऽपराधविशेषानुसारेण दण्डविशेषकल्पना प्रतिपत्त्यर्थः।प्रसिद्धमन्यत्॥३००॥
लोभादिना प्रच्छन्नं यदि तु--जारं चोरेत्यतिवदन्नित्यादि ॥ ३०१ ॥

बालंभट्टी

मनुष्यमारणे प्राजकस्यानवधानाद्यानेन कृते।शीघ्रमेव तद्वत् किल्बिषी दण्डवान् भवेत्। किल्बिषमिति पाठान्तरं तत्र चौरदण्डः उत्तमसाहसरूपो भवेत्, न तु मारणरूपः । अग्रे अर्धमिति श्रवणात् गवादिषु महत्सु प्राणिषु हतेषु उत्तमसाहसस्यार्धपंचशतात्मको भवेत्। क्षुद्रकानां पशूनाम् अपचितपरिमाणकाः।क्षुद्रकास्तुद्विधावयसा, जातिस्वभावतोवा।आद्याः वत्सकिशोरादयः।अन्याः अजादयः।तत्रान्त्येषु वक्ष्यमाणत्वादाद्यानामेवात्रग्रहणम्।तथा च वत्सकिशोरादीनां मारणे द्विशतो दण्डः स्यात्। शुभेषु आकारतो लक्षणतश्च । मृगेषु रुरुपृषतादिषु। पक्षिषु च शुकहंससारसादिषु हतेषु पंचाशद्दण्डो भवेत्।स्वार्थे कन्। द्वन्द्वोत्तरपदको द्वन्द्वः।गर्दभछागैडकादीनान्तु मारणे रूप्यं पंचमाषपरिमितो दण्डःस्यात् । सौवर्णमानग्रहणंतु तत्र, उत्तरांत्तरे लघुदण्डोक्तेः। श्वसूकरनिपातने रौप्यमाषपरिमितो दण्डः स्यादित्यर्थः । पंचमाषकः माषकः इति पाठः । परिमाणे कन् । पञ्चमाषिकादिपाठे अत इति ठन् ॥

अन्यदप्युच्यते।इत्याह —किञ्चेति।एवमग्रेऽपि।जारस्यार्थः--पारेति। सकांक्षत्वादाह—निरिति। एकवचनोपपत्तये तद्युत्पत्तिमाह-- पणानामिति । समाहारद्विगौ तु पञ्चशतीति

१. छ. द्विगुणो दमः। २. क. श्वसूकय । ३.—८. २९६, ७. ८. । ४. शतं दमः। ५. ख. चौरं ।

द्रव्यमुपजीव्य उत्कोचरूपेण गृहीत्वा जारं मुञ्चत्यसौ यावद्गृहीतं तावदष्टगुणीकृतं दण्डं दाप्यः ॥ ३०१ ॥

किं च—

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाऽऽक्रोशकारिणम् ।
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥  5

राज्ञोऽनिष्टस्यानभिमतस्यामित्रस्तोत्रादेः प्रकर्षेण भूयोभूयो वक्तारं, तस्यैव राज्ञ आक्रोशकारिणं निन्दाकरणशीलं तदीयस्य च मन्त्रस्य स्वराष्ट्रविवृद्धिहेतोः परराष्ट्रपक्षयकरस्य वा भेत्तारम्[3] अमित्रकर्णेषु जपन्तं तस्य[4] जिह्वामुत्कृत्य स्वराष्ट्रान्निष्कासयेत् । कोशापहरणादौ पुनर्वध एव—"राज्ञः कोशापहर्तॄंश्च[5] प्रतिकूलेषु च स्थितान्।घातयेद्विविधै

चौरातिक्रम्यचौरमतिक्रम्यान्यं चोरमिति वदतःपञ्चशतो दमः। द्रव्यम् उपजीव्यं मुञ्चतः तदेवोपभुङ्क्ते द्रव्यमष्टगुणं दण्ड चेत्युक्तम् । ऋज्वन्यत् ॥ ३०१ ॥

प्रसह्यकारितया तु— राज्ञोऽनिष्टप्रवक्तारं तस्यैवाऽऽक्रोशकं तथेत्यादि ॥ ३०२ ॥

बालंभट्टी

स्यादिति भावः । उत्कोच उपदानजकर इति प्रसिद्धः । तदेवेतिव्याचष्टे— यावदिति । अनुषङ्गेणाऽऽह—दण्डमिति ॥ ३०२ ॥

अनिष्टप्रति—शेषषष्ठ्या समासः। अमित्रेति—शत्रुस्तुत्यादेरित्यर्थः। सकृत्तथाकरणे दोषाभावाय।प्रार्थमाह-प्रकर्षेति।तस्याप्यर्थमाह—भूयइति।तस्यैवेत्यस्य व्याख्या-राज्ञइति। णिन्यर्थमाह--शीलमिति।तन्मन्त्रेतिव्याचष्टे-तदीयेति।राजकीयेत्यर्थः।स चाद्विविध इत्याह—स्वराष्ट्रेत्यादिः। परस्यराष्ट्रपक्षयोः क्षयकरस्येत्यर्थः।कृत्याहोत्विति ढः।परराष्टापक्षयकरेति पाठान्तरम्।तस्यभेदनादसंभवादाह—अमित्रेति।तस्य राज्ञः शत्रुकर्णेष्वित्यर्थ.।विशेषमाह—कोशेति राज्ञाःइत्यादिः।राज्ञइति-नित्यसाकांक्षत्वादेकदेशान्वयः।प्रतीति-धर्मपरं।तस्य प्रातिकूल्यविषये

१. ग.त्यसौ यावदष्ट गुणीकृतम् दण्डम् । २. क. तस्यचक्रोश । ङ. तस्यैवाक्रोशकंत । ३. ग. करस्य च भेत्तारम् । ४. ख. ग. ङ. जपन्तं तस्याजि । ५. ग. राजाकोशा ।

दण्डैररीणां चोपजापकान्॥" इति मनुस्मरणात्।विविधैः सर्वस्वापहाराङ्गच्छेदवधरूपैरित्यर्थः।सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तन्नापहर्तव्यं चौर्योपकरणं विना ; यथाऽऽह नारदः—"आयुधान्यायुधीयानां वाह्यादीन्वाह्यजीविनाम्। वेश्यास्त्रीणामलङ्कारान् वाद्यातोद्यादि तद्विदाम् ॥ यच्च यस्योपकरणं येन जीवन्ति कारुकाः। सर्वस्वहरणेप्येतन्न राजा हर्तुमर्हति॥" इति ॥ ब्राह्मणस्य पुनः "न शारीरो दण्डः" इति निषेधाद्वधस्थाने शिरोमुण्डनादिकं कर्तव्यम्—"ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने। ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु॥" इति मनुस्मरणात् ॥३०२॥

किं च—

**मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।**
**राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ ३०३ ॥**

---

तन्मन्त्रस्य च भोक्तारं छित्त्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥

**मृताङ्गलग्नविक्रेतुरित्यादि ॥ ३०३ ॥**

**बालंभट्टी**

इत्यर्थः।उपजापकाः प्रोत्साहकाः। घातयेदिति--स्वारस्यात् क्रमेणाऽऽह—सर्वस्वेति।तथा च घातो नाश इति बोध्यम्।तत्राऽऽद्ये विशेषमाह-सर्वस्वेति। तत्रापि विशेषमाह—चौर्योपेति। आयुधैर्जीवन्ति ते तथा वाह्यैर्वहनीयैर्बलीवर्दादिभिर्ये जीवन्ति ते तथा।अत्र वाह्यग्रहणमुपलक्षणमित्युक्तं वाह्यादीनिति।वेश्यारूपस्त्रीणां तद्विदान्तज्ज्ञानां।वाद्यं चातोद्यं च तदादि।यद्यपि चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्।इति अमरात् पर्यायता,तथाऽपि वीणामृदङ्गाद्यवान्तर भेदाभिप्रायकं पृथगुपादानम्। आनन्त्यात्सामान्येनाह-यच्चेति। कारुकाः शिल्पिनः। एतत् प्रागुक्तमुपकारणत्वावच्छिन्नम्। तृतीयेविशेषमाऽऽह-ब्राह्मेति। गौतमसंमानमाह—नशारीरइति। आदिग्राह्यं वचने एव व्यक्तं, तच्च प्राग्व्याख्यातम्। लग्नविक्रेतुरिति शेषे षष्ठीसमासः। एवमग्रेऽपि ॥ ३०३ ॥

१. ख. चापकारकान्। ख. घ. रीणांचापजापकान्। २.—९. २७५.। ३. 'शिल्पद्रव्याणि शिल्पिनाम्' इति क्वचित्। ४.—१७. १०, ११.। ५. गौ० १२. ४६ । ६. क. ललाटेवाऽभि।

मृतशरीरसंबन्धिनो वस्त्रपुष्पादेर्विक्रेतुः गुरोः पित्राचार्यादेस्ताडयितुः तथा राजानुमतिं विना तद्यानं गजाश्वादि आसनं सिंहासनादि आरोहतश्चोत्तमसाहसो दण्डः ॥ ३०३ ॥

किं च—

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।    5
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ३०४ ॥

यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति, यश्च ज्योतिःशास्त्रविद् गुर्वादिहितेप्सुव्यतिरिक्तो राज्ञो द्विष्टमनिष्टं'संवत्सरान्ते तव राज्यच्युतिर्भविष्यति इत्येवमादिरूपमादेशं करोति, तथा च यः शूद्रो भोजनार्थं यज्ञोपवीतादिब्राह्मणलिङ्गानि धारयति तेषामष्टशतो दमः । अष्टौ पणशतानि यस्मिन्दमे स तथोक्तः । श्राद्धभोजनाय    10
पुनः शूद्रस्य विप्रवेषधारिणः''तप्तशलाकया यज्ञोपवीतवद्वपुष्यालिखेत्''इति स्मृत्यन्तरो

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा इत्यादि ॥ ३०४ ॥

द्विनेत्रग्रहणं कृत्स्नेंद्रियलक्षणार्थं, एतच्च पशुविषयं द्रष्टव्यम्, राजद्वेषो यस्य स राजाद्विट् स्पष्टमन्यत् ॥ ३०३ ॥ ३०४ ॥

बालंभट्टी

अङ्गं नैकदेश इत्याह—शरीरेति । गुरुपदमुपलक्षणमित्याह—पित्रेति । अनुमतौ दोषाभावायाह—राजानुमतिमिति । आरोहति तस्येति पाठः। आरोहतश्चेति पाठान्तरम्। तथेति—समुच्चये ॥ ३०३ ॥

भेदनेऽनुक्तं निमित्तमाह— क्रोधेति। आदिना लोभादिः व्यवहारदशायामपीति भावः। द्विनेत्रेति—अत्र समाहाराद्विगुः, पात्रादित्वं च । तदाह—नेत्रद्वयमिति । तत्र योग्यत्वायाह—ज्योतिरिति । ननु तेनापि तथोक्तावनिष्टापत्तिरत आह—गुर्वादीति । आदिना स्वस्यापि ग्रहणम् । द्विष्टं द्वेषविषयः तदाह—अनिष्टमिति । तत्स्वरूपमाह—संवत्सरे । द्विष्टादेशेति कर्मधारय इत्याह—रूपमादेशमिति । आदिश्यमानं वचनं भाषते इत्यर्थः । जीवतः इत्यस्यार्थमाह —भोजेति । विप्रत्वस्य वस्तुतस्तत्रबाधादाह—यज्ञोपेति । तेषां त्रयाणां प्रत्येकं तथोक्तिफलविशेषमाह—श्राद्धेति । विप्रवेषेति—यज्ञोपवीतादिलि-

१. क. वपुष्याभिलि ॥

क्तं द्रष्टव्यम् । वृत्त्यर्थं तु ब्राह्मणलिङ्गधारिणो वध एव—"द्विजातिलिङ्गिनः शूद्रा न्घातयेत्" इति स्मरणात् ॥ ३०४ ॥

रागलोभादिनाऽन्यथा व्यवहारदर्शने दण्डमाह—

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
5 सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥ ३०५ ॥

दुर्दृष्टान्स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाऽऽशङ्क्यमानान् व्यवहारान्पुनः स्वयं सम्यग्विचार्य निश्चितदोषाः पूर्वसभ्याः जयिसहिताः प्रत्येकं विवादपदे यो दमः पराजितस्य तद्द्विगुणं दाप्याः । अप्राप्तजेतृदण्ड-

यश्चायं व्यवहारमार्ग उक्तः तत्र सर्वस्मिन्नेवायं राजाश्रयः साधारणोविधिः—

दुर्दृष्टांस्तु...............विवादद्विगुणं पृथक् ॥ ३०५ ॥

प्रागस्योक्तत्वात् पुनरारम्भो राज्ञा स्वयं दृष्टत्वेन प्रयत्नेनातिरेकार्थः । यथाविजितो दण्ड्यो मिद्रा (?) उक्थ्याभिधानात् ॥ ३०५ ॥

बालंभट्टी

ङ्गीत्यर्थः।एवमग्रेऽपि।क्वचित् तथा पाठ एव। विशेषान्तरमाह—वृत्त्यर्थमिति। यावदायुर्जीविकावृत्तिधारिणः शूद्रस्य । व्यधिकरणबहुव्रीहेः गमकसाध्यत्वादाह — द्विजातिलिङ्गिन इति ॥ ३०४ ॥

दर्शने सभ्यादीनामिति शेषः दुर्दृष्टानित्यत्र "मतिबुद्धि" इति वर्तमानेक्त इत्याशयेन तदर्थमाह—स्मृत्येत्याद्याशंक्यमानानित्यन्तेनरागेत्यादि उभयान्वयि पुनर्दृष्ट्वेति व्याचष्टे-पुनरिति। पश्चादित्यर्थः। स्वयं राजा विवादविषयभूतधनादिति नार्थः। प्रागुक्तयुक्तेरत आह—विवादेति। अस्य रागाल्लोभाद्भयाद्वाऽपि इत्यनेन प्रागुक्तेन पौनरुक्त्यं परिहरति—अप्राप्तजेतृदण्डेति। यः पूर्वव्यवहारे जितस्तस्य सदोषत्वं यदि विचार्यमाणेऽस्ति तदा दुष्टत्वेन स जयी दण्ड्य इत्यनेन जेतृदण्डो विधीयते; वचनान्तरेणाप्राप्तत्वात्, इतरांशे तु तेनाप्तत्वादनुवाद इति

---

१. ग. र्थन्तु ब्राह्मणलिङ्ग० । ख. वृत्यर्थम् यज्ञोपवीतादिब्राह्मण ३. ख. स्वयं राजास । ४. क. सभ्याः सजयिनः प्रत्ये । ५. ३. २. १८७.

विधिपरत्वाद्वचनस्य "रागाल्लोभात्" इत्यादिना श्लोकेनापौनरुक्त्यम् । यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिण एव दण्ड्या न जयी नापि सभ्याः। यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः—"पादो गच्छति कर्तारं पादः साक्षिणमृच्छति । पादः सभासदः सर्वान् पादो राजानमृच्छति॥" इति वचनात् । एतच्च प्रत्येकं राजादीनांदोषप्रति 5

## सुबोधिनी

"दुर्दृष्टान्"इत्यस्य वचनस्य—"रागाल्लोभाद् भयाद्वाऽपि स्मृत्यपेतादिकारिणः । सभ्याः पृथक्पृथक् दण्ड्याः विवादाद्विगुणं दमम् ॥ " इत्यनेन पौनरुक्त्यं परिहरति अप्राप्तेति । यः पूर्वव्यवहारे जितवान्, स यदि विचार्यमाणे दोषी तदा दुष्टत्वेन स जयो दण्ड्य इतिजेतृदण्डो विधीयते"दुर्दृष्टांस्तु"इत्यनेन । वचनान्तरेण प्राप्तत्वादितरांशेत्वनुवाद इति न पुनरुक्तिरित्यर्थः । राजसहिताः सभ्या दण्डनीया इत्युक्तम् । तत्र वचनं प्रमाणयति—पादो गच्छतीति । कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादकवचनबलात् दुष्टत्वने दण्ड्या इत्यर्थः । नन्वेकस्यैव पापस्य कर्त्रादीनामंशतः प्राप्तौ दण्डोऽप्येतेषामेकएव स्यात्, न पृथक् पृथक् इत्यत आह—एतच्च प्रत्येकामिति। एतत् वचनम्। अस्य वचनस्य

## बालंभट्टी

न पुनरुक्तः।तत्र हि सभ्यमात्रग्रहणं न जयिनोऽपीति भावः।विशेषान्तरमाह—यदा पुनरिति। दोषेण दोषेणैव विशेषान्तरमाह—यदात्विति । उक्तप्रतिज्ञायां मानमाह—पादोगच्छतीति । कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादनेनैतद्वचनबलात् सर्वेऽपि दुष्टत्वेन दण्डया इत्यर्थः। नन्वेकस्यैव पापस्य कर्त्रादीनां पादरूपांशतः प्राप्तिरिति लाभेन दण्डोऽप्येतेषामेक एव स्यान्न पृथक् पृथक् इत्यत आह—एतच्चेति । उक्तवचनंचेत्यर्थः । अस्य वचनस्य दोषप्रतिपादने तात्पर्यं, नत्वंशतो दोषप्रापणे इत्यर्थः । उक्तेऽर्थे न्यायस्य जैमिनीयस्य

१. व्य० ४. । २. ग. रस्यदुष्टता तदा । ३. क. दातुराज्ञोतुमन्या । ४. मनु० ८. १७. ५. स्मरणात् । ६. व्य० ४. । ७. थ.द.प्राप्ताजेतृदण्डाविधिपरत्वादिति । ८. त. जितः । ९.थ. द. स विचार्यमाणेयदि दोषवान् । तदा। १०. ख. द. शेऽनु। ११. त. सभ्यादण्डायइत्युक्याह ।

पादनपरं न पुनरेकस्यैव पापापूर्वस्य विभागार्थं—कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य ॥ ३०५ ॥

न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तुयितुर्दण्डमाह—

**यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।**
**5 तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥ ३०६ ॥**

यः पुनर्न्यायमार्गेण पराजितोऽपि औद्धत्यान्नाहं पराजितोऽस्मीति मन्यते तथैव—**यो मन्येताजितोऽस्मीतीत्यादि ॥ ३०६ ॥**

स्पष्टार्थः श्लोकः ॥ ३०६ ॥

---

## सुबोधिनी

दोषप्रतिपादनमात्रे तात्पर्यं न त्वंशतो दोषप्रापणायेत्यर्थः । तत्र हेतुमाह कर्त्रिति । अयमर्थः— "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्" इत्यनेन न्यायेन यः कर्ता तस्मिन्नेव फलं समवेतमिति । तच्च फलं द्विविधम् ऐहिकं पारलौकिकं चेति । ऐहिकं तु धर्मशास्त्रोक्तं दण्डादि । "पारलौकिकं" तु नरकादि । एवंस्थिते, "रागात्" इत्युपक्रम्य "सभ्याः पृथक् पृथक् दण्ड्या विवादात् द्विगुणं दमम्" इति प्रतिपुरुषं दण्डरूपसम्पूर्णफलसम्बन्धाविधानात् अपूर्वस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव फलोत्पादकस्वभावत्वाच्च प्रत्येकं समग्रफलसम्बंधाविध्यन्यथानुपपत्त्या प्रत्येकं समग्रदुरितापूर्वसम्बन्ध इति ॥ ३०५ ॥

## बालंभट्टी

मानत्वं सूचयन् हेतुमाह—कर्तृसमेति । इतः प्राक् यथोक्तमित्यपपाठः "शास्त्रफलं प्रयोक्तरि, तल्लक्षणत्वात्" इति जैमिनीयन्यायेन यः कर्ता तस्मिन्नेव फलं संमतमिति लभ्यते। तत्र फलं द्विविधम्, ऐहिकं,पारलौकिकंच। तत्र प्रकृते ऐहिकं धर्मशास्त्रोक्तदण्डादि, पारलौकिकं नरकादि।एवंस्थिते "रागाल्लोभात्"इत्युपक्रम्य "सभ्याः पृथक् पृथक् दण्ड्याः" इति प्रतिपुरुषमैहिकदण्डरूपसम्पूर्णफलसम्बंधाविधानात् अपूर्वस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव फलोत्पादकत्वस्वभावकत्वात् प्रत्येकं समग्रफलसम्बन्धविध्यनुपपत्त्या प्रत्येकं समग्र एवापूर्वसम्बंधः इति भावः। प्रत्यावर्त्तयितुः वादिप्रतिवाद्यन्यतरस्य औद्धत्यादिना इति भावः ॥ ३०५ ॥

अपिर्व्युत्क्रमे इत्याह—पराजितोऽपीति। लिङर्थोऽविवक्षितः इत्याह—मन्यते इति

---

१. ख. न पुनरेककैस्यैव । २. ख. ग. ङ. विभागाय । यथोक्तम् । कर्तृसमवा । ३ थ. द. पाभिप्रायेणेत्य । ४. थ. द. कर्तृसमवायीति ५. तल्लक्षणत्वादित्येतदुत्तरं 'तस्मात् स्वयं प्रयोगेस्यात्' इति सूत्रशेषः । ६. थ. द. तस्मि ७.—२. ७. १०.

तमायान्तं कूटलेख्याद्युपन्यासेन पुनर्धर्माधिकरणमधितिष्ठन्तं धर्मेण पुनः पराजयं नीत्वा द्विगुणं दण्डं दापयेत् ॥ नारदेनाप्युक्तं—"तीरितं चानुशिष्टं च यो मन्येत विधर्मतः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्॥" इति । तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम् । अनुशिष्टमुद्धृतदण्डं दण्डपर्यन्तं नीतमिति यावत् ॥ यत्पुनर्मनुवचनं–"तीरितं चानुशिष्टं च यत्र क्वचनाविद्यते । कृतं तद्धर्मतो ज्ञेयं 5

ऋणादानाद्यखिलव्यवहारसंबंधितया यथास्थानं युक्त्याऽऽगमानुसारेण प्राप्तोऽपि हि

## सुबोधिनी

नारदवचनस्थतीरितशब्दार्थमाह— तीरितमित्यादिना अनुद्धृतदण्डमित्यन्तेन । अनुशिष्टशब्दार्थमाह—अनुशिष्टमित्यादिना यावदित्यन्तेन । ननु तीरितं चेति नारदोक्तौ निर्णीतस्य व्यवहारस्य दण्डावष्टम्भ (दृष्ट?) पुरस्सरं पुनःकरणं प्रतीयते, मनुवचनेत्वेतद्वैपरीत्यम् । अतः परस्परविरोध इत्याशङ्क्य परिहरति—यत्पुनर्मनुवचनमित्यादिना । अयमभिप्रायः—धर्मतो व्यवहारो निर्णीत इति निश्चिते पुनः स एव व्यवहारो न निवर्तनीय इत्युच्यते, न पुनर्धर्मतो निर्णीतं न वेति सन्देहे न निवर्तनीय इत्युच्यत इति । एतदुक्तं भवति । नारदवचनं संशयविषयं मनुवचनं निश्चितविषयमिति ॥ ३०६ ॥

## बालंभट्टी

आयान्तमित्यस्य व्याख्या—कूटेति। आदिना तथा साक्ष्यादिपरिग्रहः । पुनः—पश्चात् । एवमग्रेऽपि । धर्मेति—तन्निर्णयस्थानमित्यर्थः । अधिशीङिति कर्मत्वं तेनाधर्मे कृतेऽपि स्वयमधर्मो न कार्यो दोषादित्याह—धर्मेणेति । विरोधं परिहर्तुं सविशेषनारदसम्मतिमाह—नारेति । तीरितमित्यस्य व्याख्या—साक्षीति । आदिना भुक्त्यादिपरिग्रहः । अन्विति—अगृहीतदण्डमित्यर्थः । अनुशिष्टमित्यस्य व्याख्या—उद्धृतेति । गृहीतदण्डमित्यर्थः। तथानिर्णयपूर्वकमिति भावः।तदाह—दण्डेति। विधर्मतः इत्यत्र तृतीयान्तात्तसिः अधर्महेतुकं मन्येतेत्यर्थः । तमिति शेषः । आस्थाय—दापयित्वा। पुनः—पश्चात् उद्धरेत्, निश्चिनुयात् । ननु नारदतोनिर्णीतस्यापि व्यवहारस्य तथासतिदण्डावष्टंभपुरःसरंपुनःकरणं प्रतीयते, मानवे तु तद्वैपरीत्यमिति मिथो विरोध इत्यत आह— यत्पुनरिति । यत्र क्वचन धर्माधिकरणे यद्व्यवहारपदं धर्मतस्तीरितं-पारतीरकर्मससाप्तौ—तथानिश्चितं असौ न पुनः प्रवर्तेत; यचनकेवलं वाचासत्यत्वेनोक्ते किन्त्वनुशब्दोत्तरं शिष्टं सदण्डं च कृतं

१. ख. ङ. चानुशिष्टं वा यो । २.—९. २३३. । ३. स्थतामाहेत्यादि । ४. त. अन्विति अनुशिष्ट । द. नुशब्दा । ५. थ. द. नारदवचनेनि । ६. थ. द. दण्डावष्टम्भपुरस्सरणं थ. अत्राय । ८. स. श्री (य) ते । ९. त. तमिति।

न तत्प्राज्ञो निवर्तयेत्॥" इति तदर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याऽधर्मतो वृत्तत्वाशङ्कायां पुनर्द्विगुणदण्डप्रतिज्ञापूर्वकं व्यवहारं प्रवर्तयेत्, न पुनर्धर्मतो[1] वृत्तत्वनिश्चयेऽपि राज्ञा लोभादिना[2] प्रवर्तयितव्य इत्येवंपरम्। यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निवार्तितं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम्—"न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत्।तदप्यन्यायविहितं पुनर्न्याय्येनिवेशयेत्॥"इति स्मरणात्॥३०६

अन्यायगृहीतदण्डधनस्य गतिमाह—

**राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम्।**
**निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम्॥ ३०७॥**

अन्यायेन यो दण्डो राज्ञा लोभादिना गृहीतस्तं त्रिंशद्गुणीकृतं वरुणाये-

---

**—राज्ञाऽन्यायेन यो दण्डो इत्यादि॥ ३०७॥**

प्रागुक्तदानविध्यनुसारेण देयम्। चोदनामूलत्वाच्चास्यां स्मृतेरकरणेऽन्यथाकरणे वा प्रत्यवाय इत्येवं व्याख्येयम्। अन्यायेन वा राज्ञा यो दण्डो गृहीतः स्वयमेवान्येनाशक्योऽपि कारयितुं त्रिंशद्गुणं वरुणाय निवेद्य विप्रेभ्यो दद्यादिति सर्वं चैतत् श्रुतिस्मृत्यनुसारन्यायमेवे

---

सुबोधिनी

माता पुण्यचरित्रकीर्तिविमला[3] यस्याम्बिका नामतः शाकल्यापरमूर्तिरार्यचरितः श्री पेद्दिभ[4]ट्टः पिता। सोऽयं कौशिकवंशभूषणमणिः श्रीभट्टविश्वेश्वरो विज्ञानेश्वरसूक्तिभावविवृतौ दक्षश्चिरं वर्धते॥ १॥ अत्रानुक्तं दुरुक्तं किमपि यदि भवेत् तद्विसूक्तं कृषीरन् सङ्ख्यावन्तो

बालंभट्टी

तत्प्राज्ञो राजा कृतमेव विद्वान्न पुनर्निवर्तयेदित्यर्थः।अग्रेऽस्यान्वयः। तत्राऽऽदौनारदतात्पर्यमाह—अर्थीति। वृत्तत्वं निष्पन्नत्वम्। अत एव तत्र विधर्मतः इत्युक्तम्।पुनः पश्चात् मनुतात्पर्यमाह—न पुनरिति—नास्तीत्यर्थः। अत एव तत्र धर्मतः इत्युक्तं पुनः पश्चात् धर्मतो व्यवहारो निर्णीतः इति निश्चये न पुनस्तथेति नारदतात्पर्यम्। तथा च नारदीयं संशयविषयं मानवं निश्चितविषयमिति भावः। विशेषमाह—यत्पुनरिति। न्यायापेतं तद्रहितं। न्यायापेतत्वे हेतुः—अज्ञानकृतमिति। पुनःकरणे हेतुमाह—अन्यायविहितमिति। अन्यायविहितं तदपीत्यर्थः॥ ३०६॥

गृहीतेति—अन्यायेन गृहीतस्य दण्डरूपस्य धनेनेत्यर्थः। क्वचिद्दण्डस्येत्येव पाठः। अन्यायेनेति छेद इत्याह-अन्यायेनेति। तत्र निमित्तमाह—लोभेति।वरुणाय निवेद्येत्यस्यार्थमाह—वरुणायेदमिति। न ममेति शेषः। स्वयञ्च स्वयमेवदोषख्यापनार्थमिदम्।

---

१. क. न पुनरधर्म। २. ख. 'लोभाद्' ३. थ. द. विभवा। ४. त. 'पोथिभि' ५. पद्दिभ। ५. त. त्तिमात्रावी।

दमिति संकल्प्य ब्राह्मणेभ्यः स्वयं दद्यात् । यस्माद्दण्डरूपेण यावत्गृहीतमन्यायेन तावत्तस्मै प्रतिदेयम्[1]–इतरथाऽपहारदोषप्रसङ्गात् । अन्यायेन[2] दण्डग्रहणे पूर्वस्वामिनः स्वत्वविच्छेदाभावाच्च[3] ॥ ३०७ ॥

इति श्रीमत्पद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्यविज्ञाने

श्यवसेयमिति प्रथमोदयानुरक्तो निखिलमहीमण्डलं निजं कृत्वा पालयति । सततमुर्वी मिति बलवानेषनृपसविता इति निरस्तव्यसनक्रमः कृतविपक्षचरित्रविपर्ययः नृपतिराशु-समुद्धृतकंटकोहरिरिवेष्टमायतनं श्रियः ॥ इति याज्ञवल्कीये परमभट्टारकप्रणीते धर्मशास्त्रे विश्वरूपकृतविवरणबालक्रीडायां द्वितीयोऽध्यायस्समाप्तः ॥

## सुबोधिनी

महान्तो यदुपकृतिविधौ शीलमेषामतन्त्रम्। आलोकं लोकहेतोः दधति हि नि.बिडध्वान्तमुद्रा सयन्तः प्रालेयांशुप्रदीपद्युमणिमणिगणास्तत्र को हेतुरास्ते ॥ २ ॥

॥ इति श्रीमहापण्डितसूरिश्रीपेट्टिभट्टविश्वेश्वरविरचितायां मिताक्षराव्याख्यायां सुबोधिन्याख्यायां व्यवहारलोको द्वितीयोऽध्यायः ॥

## बालंभट्टी

न्यूनतां परिहरति—यस्माच्चेति । चः समुच्चये व्युत्क्रमे च। विपक्षे बाधकमाह—इतरथा इति । तददाने इत्यर्थः । ननु दण्डस्वामित्वं राज्ञ एवेति क्रमापहारदोषः। अत —आह अन्यायेति। सातिसप्तमी । एवञ्च परस्वग्रहणं तथोति बोध्यम् । यत्तु मनुनोक्तं—''अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् । श्रुतवृत्तोपसम्पन्ने ब्राह्मणे प्रतिपादयेत् ॥ ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः । ईशस्सर्वस्य जगतो ब्राह्मणो वेदपारगः''[5]। इति तत्पातकविषयम् न्यायगृहीतविषयम् । अत एव ''नाददीत नृपस्साधुः महापात-किनो धनम् । आददानस्स तल्लोभात्तेन दोषेण लिप्यते ॥''[6] इतिपूर्वमव्यवहितम् 'यत्र वर्जयते राजा पापकृद्भयो धनागमम् । तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥ निष्पद्यन्ते च सस्यानि यथोक्तानि विशां पृथक् । बालाश्च न प्रमीयन्ते विकृतन्न च जायते ॥''[7] इत्यग्रे च तथोक्तम् । प्रवेश्य प्रक्षिप्य वरुणायेदमिति प्राग्वत् ईश इति पूर्वस्य प्रतिपत्तिविधेरर्थवादोऽयम् । एवमग्रीयावापि । जायन्ते इति वर्तमान मविवाक्षितम् । विकृतं करणादिहीनमित्यर्थः ॥ ३०७ ॥ इति शिवम् ॥

इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजोमाङ्गजवैद्यनाथार्धाङ्गभूतलालाकृ-ष्णजननीपायगुण्डोपाख्यश्रीलक्ष्मीदेवीविरचिते लक्ष्माभिधे व्यवहारप्रकरणं समाप्तम्॥

---

१. क. प्रतिदेयामेत । २. ख. अन्यायदण्ड । ग. घ. अन्यायेद । ३. ख. घ. दाभावत् । ४. क स्यपरमभ । ५.—९ २४४, ६.—९, २४३. । ७.—९. २४६.—७. ।

श्वरभट्टारककृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ द्वितीयोऽध्यायः सम्पूर्णः॥

अस्मिन्नध्याये प्रकरणानुक्रमणिका कथ्यते—


१ आद्यं व्यवहारमातृकाप्रकरणम्
२ साधारणासाधारणव्यवहार-मातृका प्रकरणम्
३ ऋणादानम्
४ निःक्षेपप्रकरणम्
५ साक्षिलक्षणम्
६ लेख्यलक्षणम्
७ दिव्यस्वरूपकथनम्
८ दायविभागः
९ सीमाविवादः
१० स्वामिपालविवादः
११ अस्वामिविक्रयः
१२ दत्ताप्रदानिकम्
१३ क्रीतानुशयः
१४ अभ्युपेत्याऽशुश्रूषा
१५ संविद्व्यतिक्रमः
१६ वेतनादानम्
१७ द्यूतसमाह्वयाख्यम्
१८ वाक्पारुष्यम्
१९ दण्डपारुष्यम्
२० साहसम्
२१ विक्रीयाऽसंप्रदानम्
२२ सम्भूयसमुत्थानम्
२३ स्तेयप्रकरणम्
२४ स्त्रीसंग्रहणम्
२५ प्रकीर्णकम्


इति पञ्चविंशतिप्रकरणानि ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः

धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥

---

# अथ प्रायश्चित्ताध्यायः

## तत्राऽऽशौचप्रकरणम् १

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः । गृहस्थाश्रमिणां नित्यनैमित्तिका धर्मा उक्ताः; अभिषेकादिगुणयुक्तस्य गृहस्थविशेषस्य गुणधर्माश्च प्रदर्शिताः[1]; अधुना तदधिकारसंकोचहेतुभूताशौचप्रतिपादनमुखेन तेषामपवादाः प्रतिपाद्यन्ते[2]। आशौचशब्देन च कालस्नानाद्यपनोद्यः[3] पिण्डोदकदानादिविधेः अध्ययनादिपर्युदासस्य[4] च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते न पुनः कर्मानधिकारमात्रम्—"अशुद्धा बान्धवाः सर्वे"[5] इत्यादावशुद्धशब्दाभिधानात्[6]; अशुद्धशब्दस्य च[7] वृद्धव्यवहारेऽनाहिताग्निदीक्षितादावनधिकारिमात्रे प्रयोगाभावात् वृद्धव्यवहारव्युत्पत्तिनिबन्धनत्वाच्च शब्दार्थावगतेः । किं च यद्याशौचिनां दानादिनिषेधदर्शनात् तदयोग्यत्वमाशौचशब्दाभिधेयं[8] कल्प्यते, तर्हि उदकदानादिविधिदर्शनात् तद्योग्यत्वमप्यभिधेयं स्यात् । तत्रानेकार्थकल्पनादोषप्रसंग इत्युपेक्षणीयोऽयं पक्षः ॥

तत्राऽऽशौचिभिः सपिण्डाद्यैर्यत्कर्तव्यं तत्तावदाह—

**ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।**
**आश्मशानादनुव्रज्य[9] इतरो ज्ञातिभिर्मृतः ॥ १ ॥**
**यमसूक्तं तथा गाथा[10] जपद्भिर्लौकिकाग्निना ।**
**स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥**

ऊने अपरिपूर्णे द्वे वर्षे यस्य[11] स ऊनद्विवर्षस्तं प्रेतं निखनेत् भूमाववटं

---

१. क. धर्माश्च दर्शिता० । २ ख. ग. पवादः प्रतिपाद्यते० । ३. ख. कालः स्नाना० । ४. क. दासस्य न निमि० । ५ मनुः ५. ५७ । ६. ख. ग. वशुद्धत्वाभिधानात् । अत्राशु० । ७. ग शब्दस्य च वृद्धव्यवहारेणाऽऽहिताग्नि० । ख. शब्दस्य च व्यवहा० । ८. ख. तदप्ययोग्यत्वमा० । ९. ख. स्मशानादनु० । १०. ग. गाथां जपद्भि० । ११. ख. ग. यस्यासावूनद्वि० ।

कृत्वा निदध्यान्न पुनर्दहेदित्यर्थः । न च "स कृत्प्रसिञ्चन्त्युदकम्" इत्यादिभिः प्रेतोद्देशेन विहितमुदकदानाद्यौर्ध्वदेहिकं कुर्यात् । अयं च गन्धमाल्यानुलेपनादिभिरलङ्कृत्य शुचौ भूमौ श्मशानादन्यत्रास्थिनिचयैरहितायां बहिर्ग्रामान्निखननीयः ; यथाऽऽह मनुः—"ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलङ्कृत्य शुचौ भूमावस्थिसंचयनादृते ॥ नास्य कार्योऽग्निसंस्कारो नास्य कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु ॥" "अरण्ये काष्ठवत्त्यक्त्वा"इत्यस्यायमर्थः—यथाऽरण्ये काष्ठं त्यक्त्वोदासीनास्तद्विषये भवन्ति तथोनद्विवार्षिकमपि निखातायां भूमौ परित्यज्य तद्विषयश्राद्धाद्यौर्ध्वदेहिकेषु उदासीनैर्भवितव्यमित्याचारादिप्राप्तश्राद्धाद्यभावोऽनेन दृष्टान्तेन सूच्यते । शवश्च घृतेनाभ्यज्य यमगाथा गायद्भिर्निधातव्यः । "ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्बहिः । यमगाथा गायमानो यमसूक्तमनुस्मरन् ॥" इति यमस्मरणात् ॥

ततस्तस्मादूनद्विवार्षिकादितरः पूर्णद्विवर्षो यो मृतोऽसौ श्मशानपर्यन्तं ज्ञातिभिः सपिण्डैः समानोदकैश्च ज्येष्ठपुरःसरैरनुव्रज्योऽनुगन्तव्योऽस्मादेव वचनादूनद्विवर्षस्यानुगमनं नियतमिति गम्यते। अनुगम्य च "परेयिवांसम्" इत्यादि यमसूक्तं यमदैवत्या गाथाश्च जपद्भिर्लौकिकेनासंस्कृतेनाग्निना दग्धव्यो यदि जातारणिर्नास्ति; तत्सद्भावे तु तन्माथितेन दग्धव्यो न लौकिकेन—तस्याग्निसंपाद्यकार्यमात्रार्थत्वेनोत्पत्तेः । लौकिकश्च चाण्डालाग्न्यादिव्यतिरिक्तो ग्राह्यः—"चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् । पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः ॥" इति देवलस्मरणात् । लौगाक्षिणा चात्र विशेष उक्तः—"तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥" इति । अयमर्थः—चौलकर्मान्तरकालं नियमेनाग्न्युदकदानं कार्यम् । अन्यत्रापि नामकरणादूर्ध्वमकृतचूडेऽपीच्छया प्रेताभ्युदयकामनया द्वयमग्न्युदकदानात्मकं तूष्णीं कार्यं, न नियमेनेति

१. प्रा० ४. । २. क. निचयपरिरहितायां० । ३. ख. क्षिपेयु० । ४.—५, ६८, ९. । ५. ग. त्यक्त्वेत्ययम० । ६. ख. ग. मपिखातायां० । ७. ख. ग. तद्विषये श्राद्धा० । ८. ख. स च घृतेनाभ्य० । क. शव घृते० । ९. ख. ग गाथाः पठ० । क. निधातव्यम् । १०. ख. स्मशान० । ११. ख. ग. गमनमनियत० । १२. ऋ०. अ. ७, अ. ६, व. १४, ५, ६. । १३. ख. ग. लौकिकाग्निश्च० । १४. ख. ग. चिता इति० । १५ ख. ग. काले नि० । १६. क. दानकार्यं । १७. क. कृतचोलेऽपीं १८. क. कार्यं नियमेनेति वि० ।

विकल्पः। मनुनाऽप्यत्र विशेषो दर्शितः—"नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि[1] कृते सति ॥"इति[2]। उदकग्रहणं साहचर्यादग्निसंस्कारस्याप्युपलक्षणार्थम्[3]—"नात्रिवर्षस्य" इति वचनात्। कुलधर्मापेक्षया चूडोत्कर्षेऽपि वर्षत्रयादूर्ध्वमग्न्युदकदाननियमोऽवगम्यते[4]। लौगाक्षिवचनाद्वर्षत्रयात्प्रागपि कृतचूडस्य तयोर्नियम इति विवेचनीयम् ॥

उपेतश्चेद्यद्युपनीतस्तर्हि आहिताग्न्यावृता आहिताग्नेर्दानप्राक्रियया स्वगृह्यादिप्रसिद्धया लौकिकाग्निनैव दग्धव्यः। अर्थवत्प्रयोजनवत्। अयमर्थः—यद्यस्य क्लृप्तद्वारं कार्यरूपं प्रयोजनं संभवति भूमिजोषणप्रोक्षणादि तदुपादेयम्[5]। यत्पुनर्लुप्तप्रयोजनं पात्रयोजनादि तन्निवर्तते। तथा लौकिकाग्निविधानेनोपनीतस्यानाहिताग्नेर्गृह्याग्निना दाहविधानेन चापहृतप्रयोजनत्वादाहवनीयादेरपि निवृत्तिरिति[6] ॥ अग्न्यन्तरविधानं च वृद्धयाज्ञवल्क्येनोक्तम्—"आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥" इति। न च शूद्रेण श्मशानं प्रति अग्निकाष्ठादिनयनं कार्यम्—"यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च[7]। प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते ॥" इति यमस्मरणात्। तथा दाहश्च स्नपनाद्यनन्तरं कार्यः—"प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम्।" इति स्मरणात्। प्रचेतसाऽप्युक्तं "स्नानं प्रेतस्य[8] पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः[9]। नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ॥" इति—किञ्चिद्देयमिति—शववस्त्रैकदेशं श्मशानवास्यर्थे देयं परित्यजेदित्यर्थः[10]। तथा प्रेतस्य निर्हरणेऽपि मनुना विशेषो दर्शितः—"न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्[11]। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषिता ॥"[12] अत्र च स्वेषु तिष्ठत्सु इत्यविवक्षितम्—अस्वर्ग्यत्वादिदोषश्रवणात् ॥ "दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः ॥"[13]

१. क. वाऽभिकृते०। ख. ग सति। उदकग्र०। २.—५. ७०.। ३. ख. ग. प्युपलक्षणार्थम्। नात्रि०। ४. ख. दकदानादिनिय०। ५. ख. तत्तदुपादे०। ६. क. विधानेनाहिताग्नेः स्वगृह्या०। ग. विधानेनोपनीतस्याहिताग्नेः स्वगृह्याग्नि०। ७. क. तृणकाष्ठहवींषि च०। ८. क. स्नातप्रेतस्य०। ९. क. पूजनं तथा०। १०. ख. दित्यर्थः। प्रेतनिर्ह०। ११. ग. न विप्रः स्वेषु तिष्ठत्सुमृतं शू०। १२.—५. १०४.। १३.—५. ९२.।

तथा हारीतोऽपि---"न ग्रामाभिमुखं प्रेतं हरेयुः" इति । यदा तु प्रोषितमरणे शरीरं न लभ्यते तदाऽस्थिभिः प्रतिकृतिं कृत्वा तेषामप्यलाभे पर्णशरैः शौनकादिगृह्योक्तमार्गेण प्रतिकृतिं कृत्वा संस्कारः कार्यः । आशौचं चात्र दशाहादिकमेव—"आहिताग्निश्चेत्प्रवसन्[1] म्रियेत पुनः संस्कारं कृत्वा शववदाशौचम्" इति[2] वसिष्ठस्मरणात्॥ अनाहिताग्नेस्तु[3] त्रिरात्रं—"सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाऽग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा[4] तु बान्धवैः ॥ एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।" इति वचनात् । ततश्चायमर्थः—नामकरणादर्वाङ्निखननमेव, न चोदकदानादि; तत ऊर्ध्वं यावत् त्रिवर्षं वैकल्पिकमग्न्युदकदानम्; ततः परं यावदुपनयनं तूष्णीमेवाग्न्युदकदानं नियतम्; वर्षत्रयात्प्रागपि कृतचूडस्य उपनयनादूर्ध्वं पुनराहिताग्न्यावृता दाहं कृत्वा सर्वमौर्ध्वदैहिकं कार्यम् । अयं तु विशेषः उपनीतस्य लौकिकाग्निना दाहः कार्यः, अनाहिताग्नेर्गृह्याग्निना दाहो यथासंभवं पात्रयोजनं च कार्यम्॥ १॥२॥

संस्कारानन्तरं[5] किं कर्तव्यमित्यत आह—

**सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः ।**
**अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥**

सप्तमाद्दिवसादर्वाग्दशमादिवसाद्वा ज्ञातयः समानगोत्राः सापिण्डाः समानोदकाश्च "अपनः शोशुचदघम्" इत्यनेन[6] मन्त्रेण दक्षिणाभिमुखाः[7] अपः अभ्युपयन्ति । अभ्युपगमनेन तत्प्रयोजनभूतोदकदानविशिष्टमभ्युपगमनं लक्ष्यते[8]—"एवं मातामहाचार्य" इत्यनन्तरं[9] उदकदानस्यातिदेशदर्शनात् । एतच्चायुग्मासु तिथिषु कार्यम्—"प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया"[10] इति गौतमस्मरणात्[11] ॥ एतच्च स्नानानन्तरं कार्यम्—"शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति" इति शातातपस्मरणात्॥ तथा प्रचेतसाऽप्यत्र विशेषो दर्शितः—"प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः

१. क. सन्मृतः पुन० । ग. सन्म्रियते । २.—४. ३७. । ३. ख. अनाहिताग्निस्तु० । ४. ख. स्युक्त्वासबान्ध० । ५. ग. नन्तरं कर्तव्य० । ६. अ.० १, अ. ७, व. ५. । ७. ख. दक्षिणामुखा० । ८. ग. भूतमुदकदानं विशिष्टं लक्ष्यते० । ९. प्रा० ४. । १०. ख. मसप्तमेषूदक० । ११.—१४. ४०. ।

प्राङ्मुखाश्च राजन्यवैश्ययोः" इति । स्मृत्यन्तरे तु यावन्त्याशौचादिनानि तावदुदकदानस्यावृत्तिरुक्ता ; यथाऽऽह विष्णुः—"यावदाशौचं तावत्प्रेतस्योदकं पिण्डं च दद्युः" इति । तथा प्रचेतसाऽप्युक्तम्—"दिने दिनेऽञ्जलीन्पूर्णान्प्रदद्यात्प्रेतकारणात् । तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते॥" इति ॥ प्रतिदिनमञ्जलीनां वृद्धिः कार्या यावद्दशमः पिण्डः समाप्यत इत्यर्थः । यद्यप्यनयोर्गुरुलघुकल्पयोरन्यतरानुष्ठानेनापि शास्त्रार्थः सिद्धः ; तथाऽपि बहुक्लेशावहत्वेन गुरुतरकल्पे प्रवृत्त्यनुपपत्तेः प्रेतस्योपकारातिशयो भविष्यतीति कल्पनीयम् । अन्यथा गुरुतरकल्पाम्नानस्यानर्थक्यप्रसंगात् । वसिष्ठेनापि विशेषोऽभिहितः—"सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्" इति ॥ ३ ॥

वक्ष्यमाणसकृत्प्रसेकनामगोत्रादिगुणैर्विशिष्टोदकदानस्यासमानगोत्रेषु मातामहादिष्वतिदेशमाह—

**एवं मातामहाचार्यप्रेतानामुदकक्रिया ।**

**कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥ ४ ॥**

यथा सगोत्रसपिण्डानां प्रेतानामुदकं दीयते तथा मातामहानामाचार्याणां च प्रेतानां नित्यमुदकक्रिया कार्या । सखा मित्रं, प्रत्ताः परिणीता दुहितृभगिन्यादयः, स्वस्रीयो भागिनेयः, श्वशुरः प्रसिद्धः, ऋत्विजो याजकाः, एतेषां सख्यादीनां प्रेतानां कामोदकं कार्यम् । काम इच्छा, कामेनोदकदानं कामोदकं; प्रेताभ्युदयकामनायां सत्यामुदकं देयम्, असत्यां न देयमिति अकरणे प्रत्यवायो नास्तीत्यर्थः ॥ ४ ॥

उदकदाने गुणविधिमाह—

**सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।**

तच्चोदकदानमित्थं कर्तव्यम् । सपिण्डाः समानोदकाश्च मौनिनो भूत्वा प्रेतस्य नामगोत्रे उच्चार्य अमुकनामा प्रेतोऽमुकगोत्रस्तृप्यत्विति सकृदेवोदकं प्रासि-

---

१.—१९. १३ । २. ख. वृद्धिः प्रक० । ३. ग. शास्त्रार्थसिद्धिः । ४. ख. ल्पाम्नातस्य० । ५.—४. १२. । ६. ख. गोत्रादिभिर्गुणैर्विशिष्टस्योदकदानस्य समान० । ७. विशिष्टस्योदक० । ७. ख. ग. एषां सख्यादी० ।

ञ्चेयुः, त्रिर्वा—"त्रिः प्रत्येकं कुर्युः प्रेतस्तृप्यतु" इति प्रचेतःस्मरणात् । प्रतिदिनमञ्जलिवृद्धिस्तु प्रतिपादितैव । तथा अयमपि विशेषस्तेनैवोक्तः[1]—"नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् । वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥ सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः । पाषाणं तत आधार्य विप्रे[2] दद्याद्दशाञ्जलीन् ॥ द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः । त्रिंशच्छूद्राय दातव्यास्ततः संप्रविशेद्गृहम् ॥ ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ।" इति ॥

सपिण्डानां मध्ये केषांचिदुदकदानप्रतिषेधमाह—

**न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥ ५ ॥**

ज्ञातित्वे सत्यपि ब्रह्मचारिणः समावर्तनपर्यन्तं, पतिताश्च प्रच्युतद्विजाति[3]धर्माधिकारा, उदकादिदानं न कुर्युः । ब्रह्मचर्योत्तरकालं पूर्वं मृतानां सपिण्डादी[4]नामुदकदानमाशौचं च कुर्यादेव ; यथाऽऽह मनुः—"आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा[5] त्रिरात्रमशुचिर्भवेत् ॥" इति[6]। आदिष्टी "ब्रह्मचार्यस्यपोशानकर्म कुरु दिवा मा स्वाप्सीः"[7]इत्यादिव्रतादेशयोगाद्ब्रह्मचार्युच्यते। एतच्च पित्रादिव्यतिरेकेणेति वक्ष्यति—"आचार्यपित्रुपाध्यायान्"[8] इत्यत्र । आचार्यः पुनरेवं मन्यते—आदिष्टीति प्रक्रान्तप्रायश्चित्तः कथ्यते तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तरूपव्रतसमाप्त्युत्तरकालमुदकदानाशौचविधिरिति । तथा क्लीबादीनां चोदकदायित्वं निषिद्धम्—"क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः। गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः॥" इति वृद्धमनुस्मरणात् ॥ ५ ॥

एवमुदकदानेऽकर्तृविशेषप्रतिषेधमुक्त्वा संप्रदानविशेषेण[9] प्रतिषेधमाह—

**पाषण्ड्यनाश्रिताः[10] स्तेनो भर्तृघ्न्यः कामगादिकाः ।**
**सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥**

नरशिरःकपालादिश्रुतिबाह्यलिङ्गधारणं पाषण्डं, तद्विद्यते[11] येषां ते पाषण्डिनः;

---

१. क. स्तेनैवदर्शितः—"नदी० । २. ख. तत्र आदाय वि० । ३. ख. ग. जातिकर्माधि० । ४. क. सपिण्डानामुद० । ५. ख. तूदकं दत्त्वा त्रिरा० । क० तूदकं कुर्यात्त्रिरा० । ६.—५. ८८. । ७. आश्वला० १. २२. २. । ८. प्रा० १५. । ९. ख. ग. विशेषप्रति० । १०. ख. ग. श्रिताः स्तेना भर्तृ० । ११. ख० पाखण्डं तद्येषां तेपा० ।

अनाश्रिताः अधिकारे सत्यप्यकृताश्रमविशेषपरिग्रहाः; स्तेनाः सुवर्णाद्युत्तमद्रव्यहारिणः; भर्तृघ्न्यः पतिघातिन्यः; कामगाः कुलटाः;–आदिग्रहणात्स्वगर्भब्राह्मणघातिन्यो गृह्यन्ते—सुराप्यो यासां या सुरा प्रतिषिद्धा तत्पानरताः; आत्मत्यागिन्यः विषाग्न्युदकोद्बन्धनाद्यैरात्मानं यास्त्यजन्ति । एते पाषण्डयादय. "त्रिरात्रं दशरात्रं वा" इति वक्ष्यमाणस्याऽऽशौचस्योदकदानाद्यौर्ध्वदेहिकस्य च भाजना न भवन्ति । भाजयन्तीति भाजनाः, सपिण्डादीनामाशौचादिनिमित्तभूता न भवन्ति; अतस्तन्मरणे सपिण्डैरुदककदानादि न कार्यमित्येतत्प्रतिपादनपरं वचनम्[3] । सुराप्य इत्यादिषु लिङ्गमविवक्षितम्[4]— अनुपादेयगतत्वात्* । एतच्च बुद्धिपूर्वविषयम् ; यथाऽऽह गौतमः–"प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्" इति । प्रायो महाप्रस्थानम्, अनाशकमनशनं, गिरिशिखरादवपातः प्रपतनम् । अत्र चेच्छतामिति विशेषणोपादनात् प्रमादकृते दोषो नास्तीत्यवगन्तव्यम् । "अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया॥" इत्यङ्गिरःस्मरणात् तथा मृत्युविशेषादपि आशौचादिनिषेधः—"चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते । नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥" इति । एतदपीच्छापूर्वहननविषयम्—गौतमवचनेनेच्छापूर्वकमेवोदकेन हतस्याऽऽशौचादिनिषेधस्योक्तत्वात् । अत्रापि "चाण्डालादुदकात्सर्पात्" इति तत्साहचर्यदर्शनाद्बुद्धिपूर्वविषयत्वानिश्चयः । अतो दर्पादिना चाण्डालादीन् हन्तुं गतो यस्तैर्मारितस्तस्य "सर्वत एवात्मानं गोपायेत्" इति विध्यतिक्रमनिमित्तः पिण्डदानादिनिषेधः । एवं दुष्टदंष्ट्र्यादिग्रहणार्थमाभिमुख्येन दर्पादागच्छतो मरणेऽयं निषेध इत्यनुसंधेयम् । अयं चाशौचनि-

* "लिङ्गं च वचनं देशः कालोऽयं कर्मणः फलम् । मीमांसाकुशलाः प्राहुरनुपादेयपञ्चकम् ॥"

१. क. विषाग्न्युद्बन्ध० । २. प्रा० १८. । ३. ख वचनम् । अत्र च सुरा० । ४. ख. वक्षितम्। "लिङ्गं च वचनं देशः कालोऽयं कर्मणः फलम्। मीमांसाकुशलाः प्राहुरनुपादेयपञ्चकम् ॥" इत्यनुपा० । ५.—१४. १२. । ६. ख. ग. पूर्वमात्महनन० । ७. ख. स्याशौचनिषे० । ८. क यस्तैर्मारितो हतस्य० । ख. ग. मारितस्तस्यायं 'सर्व० । ९. ख. शौचप्रतिषेधो० ।

षेधोदशाहादिकालावच्छिन्नस्य—"हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्" इति सद्यः शौचस्य वक्ष्यमाणत्वात् । तथा दाहादिकमप्येषां न कार्यम्—"नाऽऽशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च । ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥" इति यमस्मरणात् । ब्रह्मदण्डहेता ब्राह्मणदण्डहताः । प्रेतवहनसाधने खट्वादि कटशब्देनोच्यते न चाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येतत्—श्रुतिविहिताग्नियज्ञपात्रादिप्रतिपत्तिलोपप्रसङ्गात् । अयं स्मार्तो दाहादिनिषेधो विप्रादिहताहिताग्निविषयं नास्कन्दतीत्याशङ्कनीयं — यतश्चाण्डालादिहताहिताग्निसंबन्धिनामग्नियज्ञपात्राणां स्मृत्यन्तरे प्रतिपत्त्यन्तरं विधीयते—"वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥" इति । तथा तच्छरीरस्यापि प्रतिपत्त्यन्तरमुक्तम्—"आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥" इति स्मरणात् । तस्मादविशेषेण सर्वेषां दहनादिनिषेधः । अतः स्नेहादिना निषेधातिक्रमे प्रायश्चित्तं कर्तव्यम्—"कृत्वाऽग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् । रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति ॥" इति स्मरणात् । एतच्च प्रत्येकं बुद्धिपूर्वे वेदितव्यम् । अबुद्धिपूर्वकमरणे तु "एषामन्यतमं प्रेतं यो वहेत दहेत वा । कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥" इति संवर्तोक्तं द्रष्टव्यम् । यः पुनः "तच्छवं केवलं स्पृष्टमश्रु वा पातितं यदि । पूर्वोक्तानामकारी चेदेकरात्रमभोजनम् ॥" इति स्पर्शाश्रुपातयोरुपवास उक्तः। "असौ कृच्छ्रेष्वशक्तश्च तथा बन्धनच्छेदने वा मासं भैक्षाहारस्त्रिषवणं च" इति सुमन्तुना भैक्षाशित्वमुक्तं तदप्यशक्तस्यैव । एवमन्यान्यपि तद्विषयाणि स्मृतिवाक्यानि व्यवस्थापनीयानि । अयं च दाहादिप्रतिषेधो नित्यकर्मानुष्ठानासमर्थजीर्णवानप्रस्थादिव्यतिरिक्तविषयः—तेषामभ्यनुज्ञादर्शनात्—"वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्याताभिषयक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥" इति स्मरणात् ॥

एवं येनयेनोपाधिना आत्महननं शास्त्रतोऽभ्यनुज्ञायते तत्तद्व्यतिरिक्त-

---

१. क विप्रगोनृपहतानामन्व । २. प्रा० २१. । ३ क. न दाहाद्यं क्रमं चरेत् । ४. क. दण्डहता ब्राह्मणहताः० । ५. क. अतिस्नेहादिनानिषेधातिक्रमणेप्राय०। ६. क. सप्तकृच्छ्रेषु शुध्य०।

मार्गेणाऽऽत्महनने श्राद्धाद्यौर्ध्वदेहिकेषु निषिद्धेषु किं पुनस्तेषां कार्यमित्यपेक्षायां वृद्धयाज्ञवल्क्यछागलेयाभ्यामुक्तं—"नारायणबलिः कार्यो लोकगर्हाभयान्नरैः। तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः॥ तस्मात्तेभ्योऽपि दातव्यमन्नमेव सदक्षिणम्॥" इति व्यासेनाप्युक्तं—"नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते। तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा॥" इति॥ एवं नारायणबलिः प्रेतस्य शुद्ध्यापादनद्वारेण श्राद्धादिसंप्रदानत्वयोग्यतां जनयतीति और्ध्वदेहिकमपि सर्वं कार्यमेव[1]। अत एव षट्त्रिंशन्मतेऽपि और्ध्वदेहिकस्याभ्यनुज्ञा दृश्यते—"गोब्राह्मणहतानां च पतितानां तथैव च। ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम्॥" इत्येवं संवत्सरादूर्ध्वमेवं[2] नारायणबलिं कृत्वौर्ध्वदेहिकं कार्यम्॥

नारायणबलिश्चेत्थं कर्तव्यः[3]—कस्यांचिच्छुक्लैकादश्यां विष्णुं वैवस्वतं यमं[4] च यथावदभ्यर्च्य[5] तत्समीपे मधुघृतप्लुतांस्तिलमिश्रान्दशपिण्डान्विष्णुरूपिणे प्रेतमनुस्मरन्प्रेतनामगोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो दत्त्वा गन्धादिभिरभ्यर्च्य पिण्डप्रवाहणान्तं कृत्वा नद्यां क्षिपेत्, न पत्न्यादिभ्यो दद्यात्। ततस्तस्यामेव रात्र्यामयुग्मान्ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्याह्ने विष्ण्वाराधनं कृत्वा एकोद्दिष्टविधिना ब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा पिण्डपितृयज्ञावृतोल्लेखनाद्यवनेजनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय च परिवारसहिताय चतुरः पिण्डान्दत्वा नामगोत्रसहितं तं[6] प्रेतं संस्मृत्य विष्णोर्नाम संकीर्त्य पञ्चमं पिण्डं दद्यात्। ततो विप्रानाचान्तान्दक्षिणाभिस्तोषयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिभिरतिशयेन संतोष्य ततः पवित्रपाणिभिर्विप्रैः प्रेताय तिलादिसहितमुदकं दापयित्वा स्वजनैः सार्धं भुञ्जीत॥

सर्पहते त्वयं विशेषः—संवत्सरं यावत्पुराणोक्तविधिना पञ्चम्यां नागपूजां विधाय पूर्णे संवत्सरे नारायणबलिं कृत्वा सौवर्णं नागं दद्यात्, गां च प्रत्यक्षाम्। ततः सर्वमौर्ध्वदेहिकं कुर्यात्॥

नारायणबलिस्वरूपं च वैष्णवेऽभिहितं यथा—"एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम्। विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा॥ दश पिण्डान्घृताभ्यक्तान्दर्भेषु मधुसंयुतान्। तिलमिश्रान्प्रदद्याद्वै संयतो दक्षिणामुखः॥ विष्णुं

१. क. सर्वं कर्तव्यमेव०। २. क. दूर्ध्वमिवनारायण०। ३. ख. ऽत्थं कार्यः। ४ क. विष्णुं वैवस्वत यमं यथा०। ५ ख. यथावदभ्यर्च्यपिण्डप्रवाहणा०। ६. ख. ग. सहितं प्रेतं संस्मृ०।

बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् । नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा ॥ धूपदीपप्रदानं च भक्ष्यं भोज्यं तथा परम् । निमन्त्रयेत विप्रान्वै पञ्च सप्त नवापि वा ॥ विद्यातपःसमृद्धान्वै कुलोत्पन्नान्समाहितान् । अपरेऽहनि संप्राप्ते मध्याह्ने समुपोषितः ॥ विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् । उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥ मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः । आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ॥ तृप्तान् ज्ञात्वा ततो विप्रांस्तृप्तिं पृष्ट्वा यथाविधि । हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥ पञ्च पिण्डान्प्रदद्याच्च दैवं रूपमनुस्मरम् । प्रथमं विष्णवे दद्याद्ब्रह्मणेऽथ शिवाय च ॥ यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् । मृतं संकीर्त्य मनसा गोत्रपूर्वमतः परम् । विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत्क्षिपेत् ॥ विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् । एकं विद्वत्तमं विप्रं हिरण्येन समर्चयेत् ॥ गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् । ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ॥ क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च । हविर्गन्ध तिलाम्भस्तु तस्मै दद्युः समाहिताः । मित्रभृत्यजनैः सार्धं पश्चाद्भुञ्जीत वाग्यतः । एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ॥ समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा ॥'' सर्पदंशनिमित्तं सौवर्णं नागदानं प्रतिकृतिरूपेण भविष्यत्पुराणे सुमन्तुनाऽभिहितं—'' सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् । व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥'' इति ॥ ६ ॥

एवमुदकदानं सापवादमभिधायानन्तरं किं कार्यमित्यत आह—

**कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।**
**स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥**

कृतमुदकदानं यैस्तान्कृतोदकान् स्नातान्सम्यगुदकादुत्तीर्णान्मृदुशाद्वले नवोद्गततृणप्रचयावृते भूभागे सम्यक्स्थितान्पुत्रादीन्कुलवृद्धाः पुरातनैरितिहासैर्वक्ष्यमाणैरपवदेयुः शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ॥ ७ ॥

१. क. बुद्धौ प्रतिष्ठाप्यनद्यम्भ० । २. क. भक्ष्यभोज्य० । ३. क. तृप्तान् क्षान्त्वाततो विप्रांस्तृप्तान्पृष्ट्वा० । ४. क. दद्याच्चदेवरूपमनुस्मरेत् । ग० देवरूपम० । ५. ख. ग. ह्मणे च शिवा० । ६. ग. गृहीत्वै व पञ्चम० । ७. ख. ग. एकं वृद्धतमं विप्र० । ८. ग. हस्तै गैव्यसम० । ९. क. नृण्यमाप्तवान्निति । ख. मात्पवान् । १० ख. तृणचयावृतभूभागे० ।

शोकानरसनसमर्थेतिहासस्वरूपमाह—

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स संमूढो जलबुद्बुदसन्निभे ॥ ८ ॥

मनुष्यशब्देन जरायुजाण्डजादिचतुर्विधभूतजातं लक्ष्यते, तस्य भावो मानुष्यं; तत्र ससरणधर्मित्वेन कदलीस्तम्भवदन्तःसाररहिते जलबुद्बुदवदाचिरविनश्वरे संसारे सारस्य स्थिरस्य मार्गणमन्वेषणं यः करोति स[1] संमूढः अत्यन्तविनष्टचित्तः। तस्मात्संसारस्वरूपवेदिभिर्भवद्भिरित्थं न कार्यम् ॥ ८ ॥

किं च—

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ९ ॥

जन्मान्तरात्मीयशरीरजनितैः कर्मबीजैः स्वफलोपभोगार्थं पञ्चधा पृथिव्यादिपञ्चभूतात्मकतया पञ्चप्रकारं संभृतो निर्मितः कायः स यदि फलोपभोगानिवृत्तौ पञ्चत्वमागतः पुनः पृथिव्यादिरूपतां प्राप्तः; तत्र भवतां किमर्था परिदेवना। निष्प्रयोजनत्वान्नानुशोचनं कार्यम्[2]। वस्तुस्थितेस्तथात्वात् न हि केनचिद्वस्तुस्थितिरतिक्रमितुं शक्यते[3] ॥ ९ ॥

किं च—

गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको[4] न यास्यति ॥ १० ॥

नेदमाश्चर्यं[5] मरणं नाम; यतः पृथिव्यादीनि महान्त्यपि भूतानि नाशं गच्छन्ति, तथा समुद्रा अपि जरामरणादिरहिणोऽमरा अपि प्रलयसमयेऽवसानं गच्छन्ति कथमिवास्थिरतया फेनसन्निभो मरणधर्मा भूतसंघो विनाशं न यास्यति। उचितमेव हि मरणधर्मणः[6] प्रायणम्; अतो निष्प्रयोजनः शोकसमावेशः ॥ १० ॥

अनिष्टापादकत्वादप्यनुशोचनं न कार्यमित्याह[7]—

श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।

१. क. करोति सम्यक्मूढः अत्यन्तनष्टचि० । २. ख. न कर्तव्यम् । वस्तु० । ३. ख. शक्यते ॥ ९ ॥ गन्त्री० । क. ग. किंच—गन्त्री०। ख. अपि च नेद । ४. ग. मर्त्यलोकेनया० । ५. ग. क. अपि च नेद० । ६. ख. रणधर्मिणः प्रयाण० । ग. र्मणः प्रयाण० । ७. क. कार्यमित्याह—श्लेष्माश्रुयस्मादकामोऽपिप्रेतो० ।

**अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥११॥**

यस्मादनुशोचद्भिर्बान्धवैर्वदननयनविनिर्गमितं श्लेष्माश्रु वा यस्मादवशोऽकामोऽपि प्रेतो भुङ्क्ते तस्मान्न रोदितव्यं, किं तु प्रेतहितेप्सुभिः स्वशक्त्यनुसारेण श्राद्धादिक्रियाः कार्याः ॥ ११ ॥

**इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।**
**विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १२ ॥**
**आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् ।**
**प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥ १३ ॥**

एवं कुलवृद्धवचांसि सम्यगाकर्ण्य त्यक्तशोकाः सन्तो बालानग्रतः कृत्वा गृहं गच्छेयुः । गत्वा च वेश्मनो द्वारि स्थित्वा नियताः संयतमनस्काः निम्बपत्राणि विदश्य दशनैः खण्डयित्वा वमनं कृत्वाग्न्युदकगोमयगौरसर्षपानालभ्य आदिग्रहणात् "दूर्वाप्रवालमग्निवृषभौच॥" इति शंखोक्तौ दूर्वाङ्कुरवृषभावपि स्पृष्ट्वाऽश्मनि च पदं निधाय शनैरद्रुतं वेश्मनि प्रविशेयुः ॥ १२ ॥ १३ ॥

अतिदेशमाह—

**प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।**
**इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १४ ॥**

यदेतत्पूर्वोक्तं निम्बपत्रदंशनादिवेश्मप्रवेशनान्तं कर्म तन्न केवलं ज्ञातीनामपितु परेषामपि धर्मार्थे प्रेतालङ्कारानिर्हरणादिकं कुर्वतां भवति । प्रवेशनादिकमित्यत्राऽऽदिशब्दो माङ्गलिकत्वात्प्रतिलोमक्रमाभिप्रायः । तेषां च धर्मार्थनिर्हरणादौ प्रवृत्तानां तत्क्षणाच्छुद्धिमिच्छतामसपिण्डानां स्नानप्राणायामाभ्यामेव शुद्धिः; यथाऽऽह पराशरः—"अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदेपदे यज्ञफलमनुपूर्वं लभन्ति ते ॥ न तेषामशुभं किञ्चित्पापं वा शुभकर्मणां । जलावगाहनात्तेषां सद्यः शौचं विधीयते॥" इति । स्नेहादिना निर्हरणे तु मनूक्तो विशेषः—"असपिण्डं द्विजं प्रेतं

१. ख. नयननिर्गतं श्लेष्मा० । २. ख. दशनैः खण्डनं कृत्वाखादित्वा वमनं कृत्वाऽग्नु० । ३. ख. गोमयसर्षप० । ४. ख वृषभौवेति० । ५ क. ङ. रवृषावपि० । ५. ग. ख. शनैरस्खलितं० । ख. वेश्मप्रवि० । ६. ख. पत्रदशना० । ७. क. ब्राह्मणप्रेतं ये० ।

विप्रो[1] निर्हृत्य बन्धुवत् । विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति । अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥" इति ॥ अत्रेयं व्यवस्था—यः[3] स्नेहादिना शवनिर्हरणं कृत्वा तदीयमेवान्नमश्नाति[4] तद्गृहे च वसति तस्य दशाहेनैव शुद्धिः; यस्तु[5] केवलं तद्गृहे वसति न पुनस्तदन्नमश्नाति तस्य त्रिरात्रं; यः पुनर्निर्हरणमात्रं करोति न तद्गृहे वसति[6] न चाश्नाति तस्यैकाह इति । एतत्[7]सजातीयविषयम् । विजातीयविषये पुनर्यज्जातीयं प्रेतं निर्हरति तज्जा-[8]तिप्रयुक्तमाशौचं कार्यम्; यथाऽऽह गौतमः—"अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वावरं[9] तत्र तच्छवोक्तमाशौचम्" इति[10] । उपस्पर्शनं निर्हरणम् । विप्रस्य शूद्र-निर्हरणे मासमाशौचं शूद्रस्य[11] तु विप्रनिर्हरणे दशरात्रमित्येवं शववदाशौचं कार्य-मित्यर्थः ॥ १४ ॥

ब्रह्मचारिणं प्रत्याह—

**आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।**
**सकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥ १५ ॥**

आचार्य उक्तलक्षणः, माता च पिता च पितरौ, उपाध्यायः[12] पूर्वोक्तः, एतान्निर्हृत्यापि व्रती ब्रह्मचारी व्रत्येव न पुनरस्य व्रतभ्रंशः । कटशब्देनाशौचं लक्ष्यते; तत्सहचरितमन्नं सकटान्नं तद्ब्रह्मचारी नाश्नीयात्, न चाशौचिभिः सह संवसेत् । एवं[13] वदताऽऽचार्यादिव्यतिरिक्तप्रेतनिर्हरणे[14] व्रतलोप एवेत्यर्थादुक्तं भवति । भवति । अत एव वासिष्ठेनोक्तं—"ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः" इति ॥ १५ ॥

आशौचिना नियमविशेषमाह—

**क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्[15]क्षितौ ।**
**पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १६ ॥**

१. क. विप्रोनिर्दह्यबन्धु० । २.—५. १०१, २. । ३. क. स्था—स्नेहादि० । ४. ख. तदीयमन्न० । ५. क. तद्गृहेवसति । ६ ख. वसति न च तदन्नमश्ना० । क० वसति नवाश्ना० । ७. क. एतत्समानजातीय० । ग. एतत्सजातीय विषयेनविजातीयविषये । पुन० । ८. क. रति तज्जातीयप्र० । ९ क. वावरं तच्छवोक्ता० । ग. वावरंतततस्तच्छवो० । १०.—१४. २९. । ११. क. शूद्रस्यविप्रेनिर्हरणेदशाहमित्येवं शतात्र० । १२ क. ग. उपाध्यायश्चपूर्वो० । १३. क. एवं च वदना० । १४. ख. निर्हरणे तु ब्रह्मचारिणो व्रतलोप इत्यर्थो० । १५. ख. पृथक् पृथक् । पिण्डं ।

क्रीतमयाचितलब्धं वाऽशनं येषां ते क्रीतलब्धाशनाः; भवेयुरिति शेषः। क्रीतलब्धाशननियमात् तदलाभेऽनशनमर्थात्सिद्धं भवति। अत एव वसिष्ठः—"गृहान्व्रजित्वा अधः प्रस्तरे त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन्" इति। अधःप्रस्तर आशौचिनां शयनासनार्थ एव। तृणमयः प्रस्तरः। ते च सपिण्डा भूमावेव पृथक् शयीरन् न खट्वादौ। मनुनाऽप्यत्र विशेषो दर्शितः—"अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्। मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ॥" इति। तथा गौतमेनापि विशेष उक्तः—"अधः शय्यासनिनो ब्रह्मचारिणः शवकर्मिणः" इति। तथा पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया प्रेताय दिनत्रयं पिण्डरूपमन्नं तूष्णीं क्षितौ देयम्; यथाऽऽह—मरीचिः—"प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम्। प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः॥" इति। दर्भमन्त्रविवर्जितत्वमनुपनीतविषयम्—"असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु" इति प्रचेतस्मरणात्॥

तथा कर्तृनियमश्च गृह्यपरिशिष्टाद्विज्ञेयः—"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्॥" इति। तथा द्रव्यविनिमयश्च शुनःपुच्छेन दर्शितः—"शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत्। प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्॥ तूष्णीं प्रसेकं पुष्पं च दीपं धूपं तथैव च।" इति। पिण्डश्च पाषाणे देयः—"भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युः" इति शंखस्मरणात्। न च दद्युरिति बहुवचनेनोदकदानत्सर्वैः पिण्डदानं कार्यमित्याशङ्कनीयं, किं तु पुत्रेणैव कार्यम्।

तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन, तदभावे मातृसपिण्डादिना कार्यम्—"पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्याः" इति गौतमस्मरणात्। पुत्रबहुत्वे पुनर्ज्येष्ठेनैव कार्यम्—"सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम्। द्रव्येण वाऽविभक्तेन सर्वैरेव कृतं भवेत्॥"

१. ख. चितं लब्धं वा०। १, क. गृहात्प्रवाजित्वाऽद्यप्रस्तरे०। २. क. क्रीतायुत्पन्नेनाववतिष्ठेरन्निति०। ३. क. अधप्रस्तर आशौ०। ४. ख. सनार्थस्तृणम०। ५ ख. ग. पृथक्पृथक् शयी०। ६—५. ७३.। ७. क. गौतमेनविशेषो दर्शितः—अध०। ८. ख. ग. ब्रह्मचारिणः सर्व इति तथा०। ९.—१४. ३०.। १०, क. क्रियया प्राचीनावीति भूत्वेति रूपया०। ११. क. कुशेषु' इति। तथाकर्तृ०। १२. ग. द्रव्येण चाविभ०। ख, द्रव्येण वा विभ०।

इति मरीचिस्मरणात् । पिण्डसंख्यानियमश्च ब्राह्मणस्य दश पिण्डाः क्षत्रियस्य द्वादशैवेत्येवमाशौचदिवससंख्यया विष्णुनाभिहितः—“यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः” इति । तथा स्मृत्यन्तरेऽपि—“नवभिर्दिवसैर्दद्यान्नव पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥” इति। शुचित्ववचनमपरेद्युः क्रियमाणश्राद्धार्थब्राह्मणनिमन्त्रणाभिप्रायेण । योगीश्वरेण तु पिण्डत्रयदानमभिहितम् । अनयोश्च गुरुलघुकल्पयोरुदकदानविषयोक्ता व्यवस्था विज्ञेया । अत्रापरः शातातपीयो विशेषः—“आशौचस्य तु ह्रासेऽपि पिण्डान्दद्याद्दशैव तु।” इति । त्रिरात्राशौचिनां पुनः पारस्करेण विशेषो दर्शितः—“प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसचयनं तथा ॥ त्रींस्तु दद्यात्तृतीयेऽह्निवस्त्रादि क्षालयेत्तथा॥” इति ॥ १६ ॥

किं च—

## जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।

जलं क्षीरं च मृन्मये पात्रद्वये पृथगाकाशे शिक्यादावेकाहं स्थापनीयम् । विशेषानुपादानात्प्रथमेऽहनि कार्यं तथा परस्करवचनात् । ‘प्रेतात्र स्नाहि’ इत्युदकं स्थाप्यं, ‘पिबचेदम्’ इति क्षीरम् ॥

तथाऽस्थिसचयनं च प्रथमादिदिनेषु कार्यम् । तथाऽऽह संवर्तः—“प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह॥” इति । क्वचित् द्वितीये त्वास्थिसंचय इत्युक्तम् । वैष्णवे तु “चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात् तेषां च गङ्गाम्भासि प्रक्षेपः” इति । अतोऽन्यतमस्मिन्दिने स्वगृह्योक्तविधिनाऽस्थिसंचयनं कार्यम् । आङ्गिरसो चात्र विशेषो दर्शितः—“अस्थिसंचयने यागो देवानां परिकीर्तितः । प्रेतीभूतं तमुद्दिश्य यः शुचिर्न करोति चेत् । देवतानां तु यजनं तं शपन्त्यथ देवताः”॥ देवताश्चात्र श्मशानवासिन्यो भूतपूर्वदग्धाः—“श्मशानवासिनो देवाः शवानां परिकीर्तिताः।” इति तेनैवोक्तम् । अतस्तान्देवानचिरमृतं च प्रेतमुद्दिश्य धूपदीपादिभिः पिण्डरूपेण चान्नेन तत्र पूजाकार्येत्युक्तं भवति । तथा वपनं च दशमेऽहनि कार्यं—“दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च॥” इति देवलस्मरणात् । तथा स्मृत्यन्तरेऽपि—

१. क. दशपिण्डान्श्च । ओ० । २. ख. पात्रद्वये पृथक् पृथगाकाशे० । ३, ख. अत्रविशेषा० । ४. ख. तथाह० । ५. क. अङ्गिरसात्रवि० । ६. क. अतस्तद्देवान० ।

"द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः। तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः॥" इति श्राद्धप्रदानादर्वागानियम इति यावत्। वपनं च केषामित्याकाङ्क्षायामापस्तम्बेनोक्तम्—"अनुभाविनां च परिवापनम्" इति। अयमर्थः-शावं दुःखमनुभवन्तीत्युनुभाविनः सपिण्डाः, तेषां चाविशेषेण वपनमुताल्पवयसामित्यपेक्षायामिदमेवोपातिष्ठते—"अनुभाविनां परिवापनम्" इति, अनु पश्चाद्भवन्तीत्यनुभाविनोऽल्पवयसस्तेषां वपनमिति। अनुभाविनः पुत्रा इति केचिन्मन्यन्ते—"गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ। आधानकाले सोमे च वपनं सप्तसु स्मृतम्॥" इति नियमदर्शनात्॥

अशुचित्वेन सकलश्रौतस्मार्तकर्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञातार्थमाह—

**वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्॥ १७॥**

वितानोऽग्नीनां विस्तारस्तत्र भवा वैतानाः त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः[1] क्रिया उच्यन्ते, प्रतिदिनमुपास्यत इत्युपासनो[2] गृह्योग्निस्तत्र भवा[3] औपासनाः सायंप्रातर्होमक्रिया उच्यन्ते ता वैतानौपासनाः वैदिक्यः क्रियाः कार्याः। कथं वैदिकत्वमिति चेत्—श्रुतिचोदनात्। तथा हि। "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिश्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव। तथा "अहरहः स्वाहा कुर्यात्; अन्नाभावे केनचिदाकाष्ठात्[4] इति" श्रुत्यौपासनहोमोऽपि चोद्यते। अत्र च श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं[5] गम्यते। अत एव वैयाघ्रपादेनोक्तम्—"स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्॥" इति। श्रौतानां च कार्यत्वाभिधानं नित्यनैमित्तिकाभिप्रायेण; यथाऽऽह पैठीनसिः—"नित्यानि[6] निवर्तेरन्वैतानवर्जं[7] शालाग्नौ चैके" इति। "नित्यानि निवर्तेरन्" इत्यविशेषेणावश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां "वैतानवर्जम्" इत्यग्नित्रयसाध्यावश्यकानां पर्युदासः, "शालाग्नौ चैके" इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः। अतस्तेष्वाशौचं नास्त्येव। काम्यानां पुनः शौचाभावादिननुष्ठानम्[8]। मनुनाऽप्यनेनैवाभिप्रायेणोक्तम्—

१. पौर्णमास्याद्या। २. ख. पासनोगृह्याग्निस्त०। ३. क. भवा उपासना०। ४ क. दाकाष्ठदिति०। ५. ख. दीनां मनुष्टान०। ६. क. ग. नित्यानिनिवर्तेर०। ७. ख. वैतानवर्ज्यां शाला० ८. क ख. शौचाभावादनुष्ठा०।

"प्रत्यूहेन्नाग्निषु क्रियाः" इति । "अग्निषु क्रिया न प्रत्यूहेत्" इत्यनग्निसाध्यानां पञ्चमहायज्ञादीनां निवृत्तिः । अत एव संवर्तः—"होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा । पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ॥" इति । वैश्वदेवस्याग्निसाध्यत्वेऽपि वचनान्निवृत्तिः—"विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।" इति तेनैवोक्तत्वात् । "सूतके कर्मणां त्यागः संध्यादीनां विधीयते ।" इति यद्यपि संध्याया विनिवृत्तिः श्रूयते, तथाप्यञ्जलिप्रक्षेपादिकं कार्यम्[2]—"सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्" इति पैठीनसिस्मरणात् ॥ यद्यपि "वैतानौपासनाः कार्याः" इति सामान्येनोक्तम्, तथाप्यन्येन कारयितव्यम्—"अन्य एतानि कुर्युः" इति पैठीनसिस्मरणात् । बृहस्पतिनाप्युक्तम्—"सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ॥" इति । तथा स्मार्तत्वेऽपि पिण्डपितृयज्ञश्रवणाकर्माश्वयुज्यादिकश्च[3] । नित्यो होमः कार्य एव—"सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥" इति जातुकर्ण्यस्मरणात् । यद्यपि साङ्गे कर्मण्य-कर्तृत्वम्[4], तथापि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात्—तस्यानन्यानिष्पाद्यत्वात् । अत एवोक्तं "श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ।" इति । यत्पुनः—"दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ।" इति होमप्रतिषेधः स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा [illegible]पनीयः । तथा सूतकान्नभोजनमपि न कार्यम्—"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।" इति यमस्मरणात् । उभयत्र जननमरणयोः । "दशाहानि" इत्याशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य संबन्ध्यन्नमसकुल्यैर्न[5] भोक्तव्यं, सकुल्यानां[6] पुनर्न दोषः । "सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ।" इति तेनैवोक्तत्वात् । अयं च निषेधो दातृभोक्त्रोरन्यतरेण जनने[7] मरणे वा ज्ञाते सति वेदितव्यः—"उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥" इति षट्त्रिंशन्मते[8] दर्शनात् । तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव—"विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके, पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः ॥"

---

१.—५ ८४ । २. ख पादिकं कुर्यात्—'सूत० । ३. ख युज्यादिकं च नित्यहोमः । ङ. नित्यहोम० । ४. ख. कर्मण्यकर्तृत्व० । ५. क. मसत्कुल्यै० । ६. क. सत्कुल्या० । ७. क. जननमरणे ज्ञाते० । ८. क. त्रिंशन्मतदर्श० ।

इति बृहस्पतिस्मरणात् । तथाऽपरोपि विशेषः षट्त्रिंशन्मते दर्शितः—"विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्य च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु त्वरान्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः॥" इति ॥ तथाऽऽशौचपरिग्रहत्वेऽपि केषुचिद्द्रव्येषु दोषाभावः; यथाऽऽह मरीचिः—"लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च[1] ॥ तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥" इति । पक्वं भक्ष्यजातं मोदकादि; अपक्वं तण्डुलादि; "स्वयंग्रहः" इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः । पक्वापक्वाभ्यनुज्ञानमन्नसत्रप्रवृत्तविषयम्[2]—"अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥" इत्यङ्गिरःस्मरणात् अत्र पक्वशब्दो भक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे त्वङ्गिरसा विशेष उक्तः—"आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥" इति । तदाशौचं केवलं गृहमेधिन एव न पुनस्तद्गृहेभवानां भार्यादीनां तद्द्रव्याणां च भवेदित्यर्थः । अतिक्रान्ताशौचेऽप्ययमेवार्थः स्मृत्यन्तरे दर्शितः— "अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही । त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित् ॥" इति ॥ १७ ॥

एवामाशौचिनो विधिप्रतिषेधरूपान्धर्मानभिधायाधुनाऽऽह शौचनिमित्तं कालनियमं चाऽऽह—

**त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।**
**ऊनद्विवर्षे उभयोः सूतकं मातुरेव हि ॥ १८ ॥**

शवनिमित्तं शावम् । सूतकशब्देन[3] च जननवाचिना तन्निमित्तमाशौचं लक्ष्यते । एवं च वदता जननमरणयोराशौचनिमित्तत्वमुक्तं भवति। तच्च जननमरणमुत्पन्नं ज्ञातमेव निमित्तम्—"निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।" इत्यादिलिङ्गदर्शनात्; तथा "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥" इत्यादिवाक्यारम्भसामर्थ्याच्च । उत्पत्तिमात्रापेक्षत्वे

---

१. ख. ङ. सर्पिः पयेच० । २. क. पक्वाभ्यनुज्ञानम० । ख. भ्यनुज्ञातमन्नं सत्रप्र० ।
३. क. सूतकशब्देन जननमरणमुत्पन्नं ज्ञानमेव० ।

ह्याशौचस्य दशाहाद्याशौचकालनियमास्तत्तत्प्रभृतिका ऐवत्यनिर्देशाज्ज्ञातिमरणश्रवणे दशरात्रशेषमेवाऽऽशौचमर्थात् सिध्यतीति—"यच्छेषं दशरात्रस्य" इत्याद्यनारम्भणीयं स्यात्। तस्माज्ज्ञातमेव मरणं जननं च निमित्तम्। तच्चोभयनिमित्तमप्याशौचं त्रिरात्रं दशरात्रं च "इष्यते" मन्वादिभिः। अत्राऽऽशौचप्रकरणेऽहर्ग्रहणं रात्रिग्रहणं वाऽहोरात्रोपलक्षणार्थं; "मन्वादिभिः "इष्यत" इति वचनं तदुक्तसपिण्डसमानोदकरूपविषयभेदप्रदर्शनार्थम्। तथा हि। "दशाहं शावमाशौचं सपिण्डेषु विधीयते। जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम्॥ जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते। शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदायिनः॥" इत्येतैर्वाक्यैस्त्रिरात्रदशरात्रयोः समानोदकसपिण्डविषयत्वेन व्यवस्था कृता। अतः सपिण्डानां सप्तमपुरुषावधिकानामविशेषेण दशरात्रं, समानोदकानां त्रिरात्रमिति। यत्पुनः स्मृत्यन्तरवचनं—चतुर्थे दशरात्रं स्यात्षण्निशाः पुंसि पञ्चमे। षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु॥"इति तद्विगीतत्वान्नाऽऽदरणीयम्॥ यद्यप्यविगीतम्, तथाऽपि मधुपर्काङ्गपश्वालम्भनवल्लोकविद्विष्टत्वान्नानुष्ठेयम्— "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु।" इति[1] मनुस्मरणात्। न च सप्तमे प्रत्यासन्ने सपिण्ड एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्यहमिति युक्तम्। एवमविशेषेण सपिण्डानामाशौचे प्राप्ते क्वचिन्नियमार्थमाह। ऊनद्विवर्षे संस्थिते उभयोरेव मातापित्रोर्दशरात्रमाशौचं न सर्वेषां सपिण्डानाम्। तेषां तु वक्ष्यति—"आदन्तजननात्सद्यः"[2] इति[3]। तथा च पैङ्गयः—"गर्भस्थे प्रेते मातुर्दशाहं, जात उभयोः, कृते नाम्नि सोदराणां, च" इति। अथवा अयमर्थः—ऊनद्विवर्षे संस्थिते उभयोर्मातापित्रोरेवास्पृश्यत्वलक्षणमाशौचं, न सपिण्डानाम्[4]। तथा च स्मृत्यन्तरे—"ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषाम्" इत्यस्पृश्यत्वलक्षणमाभिप्रेतम्। इतरस्य पुनः कर्मण्यनधिकारलक्षणस्य—सपिण्डेष्वपि "आदन्तजन्मनः सद्यः" इत्यादिभिर्विहितत्वात्। अत्र दृष्टान्तः—"सूतकं मातुरेव हि" इति। यथा सूतकं जननिमित्तमस्पृश्यत्वलक्षणमाशौचं मातुरेव केवलं तथोनद्विवर्षोपरमे

---

१ आ० १५६.। २. एतदनुरोधादग्र 'आदन्तजन्मनः सद्य' इति पाठोऽप्रामाणिक इति विश्वीयते। आनन्दाश्रममुद्रितापरार्कटिप्पण्यनुरोधाच्च। वस्तुतस्त्रिशतश्लोकव्याख्याने 'आदन्तजन्मन इति पाठा तथापिक्वाचिदेवं क्वचिदिति पाठभेदश्चि शादित्यर्थ प्रदर्शनायविज्ञानेश्वरेणपाठभेद आदतोत। ३. प्रा० २३.। ४ ख. ग. न सपिण्डानां। स्मृत्यन्तरे०।

मातापित्रोरेवास्पृश्यत्वमित्यूनद्विवर्षे सपिण्डानामस्पृश्यत्वं प्रतिषेधताऽन्यत्रास्पृश्यत्वमभ्यनुज्ञातं भवति। तथा च देवलः—"स्वाशौचकालाद्विज्ञेयं स्पर्शनं च त्रिभागतः। शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम् ॥" इति। एतच्चानुपनीतप्रायणनिमित्तेऽतिक्रान्ताशौचे च त्रिरात्रादौ वेदितव्यम्। उपनीतविषयेऽपि तेनैवोक्तं—"दशाहादित्रिभागेन कृते संचयने क्रमात्। अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः। त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु। भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैः ॥" इति। द्व्युत्तरैर्दशभिः, त्र्युत्तरैर्द्वादशभिः, षडुत्तरैः पञ्चदशभिरिति द्रष्टव्यम् ॥ १८ ॥

जननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह—

**पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्।**
**तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ १९ ॥**

सूतकं जननिमित्तामस्पृश्यत्वलक्षणमाशौचं पित्रोर्मातापित्रोरेव न सर्वेषां सपिण्डानाम्। तच्चास्पृश्यत्वं मातुर्ध्रुवं दशाहपर्यन्तं स्थिरमित्यर्थः। कुतः?—तदसृग्दर्शनात् तस्याः संबन्धित्वेनासृजो दर्शनात्। अत एव वासिष्ठः—"नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति। रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥" इति। पितुस्तु ध्रुवं न भवति, स्नानमात्रेणास्पृश्यत्वं निवर्तते; यथाऽऽह संवर्तः—"जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते। माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥" इति। "माता शुद्ध्येद्दशाहेन" इत्येतत्संव्यवहारयोग्यतामात्रम्। अदृष्टार्थेषु पुनः कर्मसु पैठीनसिना विशेष उक्तः—"सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत्, मासेन स्त्रीजननीम्" इति। अङ्गिरसा च सपिण्डानामस्पृश्यत्वाभावः स्पष्टीकृतः—"सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते। संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥" इति। यस्मिन्दिवसे कुमारजननं तदहर्न प्रदुष्येत तन्निमित्तदानाद्यधिकारापहारकृन्न भवतीत्यर्थः। यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां पुत्ररूपेण जन्म उत्पत्तिः तस्मात्तदहर्न प्रदुष्येत। तथा च वृद्धयाज्ञवल्क्येनोक्तम्—"कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः। हिरण्यभूगवाश्वा-

---

१.—४. २३. । २. क. मात्रम् । दृष्टार्थे० । ३. ख. सूतिकावर्ज्यं संस्प० । ४. ग. श्वानां वासः श० ।

जवासः शय्यासनादिषु ॥ तत्र सर्वं प्रतिग्राह्यं कृतान्नं न तु भक्षयेत् । भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत्॥''इति।व्यासेनाऽप्यत्र विशेष उक्तः-''सूतिकावासनिलया जन्मदानाम देवताः । तासां यागनिमित्तं तु शुचिर्जन्मनि कीर्तिता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥'' मार्कण्डेयेनापि—''रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मादीनां तथा बलिः ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥'' इति ॥ १९ ॥

आशौचमध्ये पुनर्जनने मरणे वा जाते ''प्रतिनिमित्तं नैमित्तिकमावर्तते'' इति न्यायेन पुनर्दशाहाद्याशौचप्राप्तौ तदपवादमाह—

**अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ।**

वर्णापेक्षया वयोवस्थापेक्षया वा यस्य यावानाशौचकालस्तदन्तरा तत्समस्य ततो न्यूनस्य वाशौचस्य निमित्तभूते जनने वा जाते पूर्वाशौचावशिष्टैरेवाहोभिर्विशुद्ध्यति, न पुनः पश्चादुत्पन्नजननादिनिमित्तं पृथक्पृथगाशौचं कार्यम् ॥ यदा पुनरल्पाद्वर्तमानाशौचाद्दीर्घकालमाशौचमन्तराऽऽपतति तदा न पूर्वशेषेण शुद्धिः; यथाऽऽहोशनाः—''स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यति ॥'' इति । यमोऽप्याह—''अर्घवृद्धिमदाशौचं पश्चिमेन समापयेत् ॥'' इति । अत्र च ''अन्तरा जन्ममरणे'' इति यद्यप्यविशेषणाभिहितं, तथाऽपि न सूतकान्तर्वर्तिनः शावस्य पूर्वाशौचशेषेण शुद्धिः; यथाऽऽहाङ्गिराः—''सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥'' इति । तथा षट्त्रिंशन्मतेऽपि—''शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी ॥'' इति । तस्मान्न सूतकान्तःपातिनः शावस्य पूर्वशेषेण शुद्धिः किं तु शावान्तःपातिन एव सूतकस्य । तथा सजातीयान्तःपातित्वेऽपि शावस्य क्वचित्पूर्वशेषेण शुद्धेरपवादः स्मृत्यन्तरे दर्शितः—''मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः

१. क. यित्वा च तन्मो० । २. ख. येनाप्युक्तम् । रक्ष० । ३. क. ग. विशुध्यति । ४. ख. क. अहोवृद्धि० । ५. क. क्वचिद्विशेषेण शुद्धेर० ।

शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥ " इति । अयमर्थः—मातरि पूर्वं मृतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमः स्यात् तदा न पूर्वशेषेण शुद्धिः, किं तु पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः कार्या। तथा पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः किं तु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षिपेदिति । तथाशौचसन्निपातकालविशेषकृतोऽप्यपवादो गौतमेनोक्तः—"रात्रिशेषे सति द्वाभ्यां, प्रभाते तिसृभिः" इति। अयमर्थः—रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचान्तरं सन्निपतेत् तर्हि पूर्वाशौचं समाप्यानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः। प्रभाते पुनस्तस्या रात्रेः पश्चिमे यामे जननाद्याशौचान्तरसन्निपाते सति तिसृभी रात्रिभिः शुद्धिः न पुनस्तच्छेषमात्रेण । शातातपेनाप्युक्तम्—" रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्।" इति ॥ प्रेतक्रिया पुनः सूतकसन्निपातेऽपि न निवर्तेत इति तेनैवोक्तम्—"अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः॥ प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् । तथैवाऽऽशौचपिण्डास्तु शेषान्दद्याद्यथाविधि ॥ " इति ॥ तथा शावाशौचयोः सन्निपातेऽपि प्रेतकृत्यं कार्यं—तुल्यन्यायत्वात् । तथा जातकर्मादिकमपि पुत्रजन्मनिमित्तमाशौचान्तरसन्निपातेऽपि कार्यमेव ; यथाऽऽह प्रजापतिः—"आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥" इति ॥

पूर्णप्रसवकालजननाशौचमभिधायाधुनाऽप्राप्तकालगर्भनिःसरणनिमित्तमाशौचमाह—

**गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥ २० ॥**

स्रवतिर्यद्यपि लोके द्रवद्रव्यकर्तृके परिस्यन्दे प्रयुज्यते ; तथाऽप्यत्र द्रवाद्रवद्रव्यसाधारणरूपेऽधःपतने वर्तते । कुतः—द्रवत्वस्य प्रथममास एव संभवात् ; तत्र च " मासतुल्या निशाः" इति बहुवचनानुपपत्तेः । गर्भस्रावे यावन्तो गर्भग्रहणमासास्तत्समसंख्याका निशाः शुद्धेः कारणम् । एतच्च स्त्रिया एव—" गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां—स्नानमात्रमेव पुरुषस्य " इति वृद्धवसिष्ठस्मरणात् । यत्पुनर्गौतमेन " त्र्यहं च " इति त्रिरात्रमुक्तं तन्मासत्रयादर्वाग्वेदितव्यं—" गर्भस्रुत्यां यथामासमचिरेतूत्तमे त्रयः । राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥ अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता॥" इति मरीचिस्मरणात्। अचिरे मासत्रया-

१ ख. प्रभाते सतिति सु० । २.—१४. ७, ८. । ३. ख य । ४.—१४. १८. ।

दर्वाक् गर्भस्रावे उत्तमे ब्राह्मणजातौ त्रिरात्रमित्यर्थः। एतच्च षण्मासपर्यन्तं द्रष्टव्यं; सप्तमादिषु पुनः परिपूर्णमेव प्रसवाशौचं कार्यं—तत्र परिपूर्णाङ्गस्य जीवतो निर्गमदर्शनात् तत्र च लोके प्रसवशब्दप्रयोगात्—षण्मासाभ्यन्तरे यावद्गर्भस्रावो भवेद्यदा। तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते॥ अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते। सद्यः शौचं सपिण्डानां गर्भस्य पतने सति॥" इति स्मरणात्॥ एतच्च सपिण्डानां सद्यः शौचविधानं द्रवभूतगर्भपतने वेदितव्यम्। यत्पुनर्वसिष्ठवचनम्—"ऊनाद्विवार्षिके प्रेते गर्भस्य पतने च सपिण्डानां त्रिरात्रम्" इति तत्पञ्चमषष्ठयोः कठिनगर्भपतनविषयम्—"आ चतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः। अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्। पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्॥" इति मरीचिस्मरणात्। सप्तममासप्रभृति मृतजनने जातमृते वा सपिण्डानां जननिमित्तं परिपूर्णमाशौचं—"जातमृते मृतजाते वा सपिण्डानां दशाहम्" इति हारीतस्मरणात्; अन्तः सूतके चेदोत्थानादाशौचं सूतकवत्" इति पारस्करवचनाच्च। ओत्थानादा सूतिकाया उत्थानाद्दशाहमिति यावत्। सूतकवदिति शिशूपरमानिमित्तोदकदानरहितमित्यर्थः। बृहन्मनुरपि—"दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्तव्यं सूत्याशौच विधीयते॥" इति। तथा च स्मृत्यन्तरेऽपि —"अन्तर्दशाहोपरतस्य सूतकाहोभिरेवाशौचम्" इति। एवमादिवचननिचयपर्यालोचनया सपिण्डानां जननिमित्ताशौचसंकोचो नास्तीति गम्यते। यत्पुनर्बृहद्विष्णुवचनं—"जाते मृते मृतजाते वा कुलस्य सद्यः शौचम्" इति। तच्छिशूपरमानिमित्तस्याशौचस्य स्नानाच्छुद्धिप्रतिपादनपरं न प्रसवनिमित्तस्य विद्यमानत्वात्—"जीवञ्जातो यदि प्रेयात्सद्य एव विशुद्ध्यति।" इति प्रेताशौचाभिप्रायम्। तथा हि शङ्खेनोक्तं—"प्राङ्नामकरणात्सद्यः शौचम्।" इति। यत्पुनः कात्यायनवचनम्—"अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया॥" इति तदपि वैष्णवेन समानार्थम्। यदा तु "न प्रेतं नैव सूतकम्" इति पाठः—तदा सूतकमस्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः।

---

१. ख पूर्णाङ्गगर्भस्य जीव०। २. क. गर्भपाते०। ३.—४ ३४। ४. क. ऊर्ध्वं तु प्रसवो दशाह०। ५. क. जाते मृते०। ६. ग. स्मृत्यन्तरमतेपि—'अ०। ७. ग. मृते मृते जाते वा०। ८. ख. तथा च श०।

अथवायमर्थः—अन्तर्दशाहे यदि शिशूपरवः तदा न प्रेताशौचं यदि तत्र सपिण्डजननं तदा सूतकमपि नैव कार्यं, किं तु पूर्वाशौचेनैव शुद्धिरिति। यत्तु बृहन्मनुवचन—"जीवञ्जातो यदि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥" इति, यच्च बृहत्प्रचेतोवचनं—"मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति। मातुः शुद्धिर्दशाहेन सद्यः शौचास्तु गोत्रिणः ॥" इति, तत्रेयं व्यवस्था—जननानन्तरं नाभिवर्धनात्प्राङ्मृतो पित्रादीनां जनननिमित्तमाशौचं दिनत्रयं; सद्यःशाचं त्वग्निहोत्रार्थम्—"अग्निहोत्रार्थस्नानोपस्पर्शनात्तत्कालं शौचम्" इति शङ्खस्मरणात्। नाभिवर्धनोत्तरकालं तु शिशुप्रायणेऽपि जनननिमित्तं संपूर्णमाशौचं सपिण्डानाम्—"यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते॥" इति जैमिनिस्मरणात्। मनुनाऽप्ययमर्थो दर्शितः—"रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला॥" इति पूर्वभागस्यार्थो दर्शितः। उत्तरस्य त्वयमर्थः—रजसि निःसरणादुपरते निवृत्ते रजस्वला स्त्री स्नानेन साध्वी दैवादिकर्मयोग्या भवति, स्पर्शनादिविषये पुनरनुपरतेऽपि रजसि चतुर्थेऽहनि स्नानाच्छुद्धा भवति। तदुक्तं वृद्धमनुना—"चतुर्थेऽहानि संशुद्धा भवति व्यावहारिकी।" इति तथा स्मृत्यन्तरं—"शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति॥" इति। पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणार्थम्। यदा रजोदर्शनादारभ्य पुनः सप्तदशदिनाभ्यन्तरे रजोदर्शनं तदाऽशुचित्वं नास्त्येव; अष्टादशे त्वेकाहाच्छुद्धिः; एकोनविंशे द्व्यहात्; तत उत्तरेषु त्र्यहाच्छुद्धिः; यथाऽऽहात्रिः—"रजस्वला यदि स्नाता पुनरेव रजस्वला। अष्टादशदिनादर्वागशुचित्वं न विद्यते॥ एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम्। विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्॥" इति। यत्तु "चतुर्दशदिनादर्वागशुचित्वं न विद्यते।" इति स्मृत्यन्तरं, तत्र स्नानप्रभृतित्वमभिप्रेतमतो न विरोधः। अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयः, यस्याः पुनरारूढयौवनायाः प्रागे

१. ग. अथवा अवा अयम०। २. क. पूर्णाशौचेनशुद्धि०। ३. ख. जवितोबालः०। ४. ख. सद्यः शुद्धास्तुगोत्रि०। ५. क. नाभिवर्द्धन उत्तर०। ६. ख. शिशुप्रयाणे०। ७. क स्नानाच्छुद्धिर्भव०। ८ क भवति स्पर्शादिविषयेषुनरनुपरते पि रजसि चतुर्थे व्यावहारिकीति०। ९. ख "चिर्भवेत्" इति। चतुर्दश०।

वाष्टादशादिनात्प्राचुर्येण रजोनिर्गमस्तस्यास्त्रिरात्रमेवाशौचम् । तया च यावत्त्रिरात्रं स्नानादिरहितया स्थातव्यं—"रजस्वला त्रिरात्रमशुचिर्भवति । सा च नाञ्जीत, नाभ्यञ्जीत, नाप्सु स्नायादधः शयीत, न दिवा स्वप्यात्, न ग्रहान्निरीक्षेत, नाग्निं स्पृशेत्, नाश्नीयान्न रज्जुं सृजेत्, न च दन्तान्धावयेत्, न हस्तेन च किञ्चिदाचरेत्, अखर्वेन पात्रेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वेति विज्ञायत" इति वसिष्ठस्मरणात् । आङ्गिरसेऽपि विशेषः—"हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी । रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥" इति पराशरेऽपि विशेषः—"स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥" इति ॥ उशनसाऽप्यत्र विशेषो दर्शितः—"ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥ चतुर्थेऽहनि संप्राप्ते स्पृशेदन्याऽशुचिः च स्त्रियम् । सा सचैलावगाह्यापः स्नात्वास्नात्वा पुनः स्पृशेत् ॥ दश द्वादशकृत्वो वा आचमेच्च पुनःपुनः ॥ अन्ते च वाससां त्यागस्ततः शुद्धा भवेच्च सा । दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति॥" इति। अयं चातुरमात्रे स्नानप्रकारोऽनुसरणीयः-"आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वास्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः ॥" इति पराशरस्मरणात् । यदा तु रजस्वलायाः सूतिकाया वा मृतिर्भवति तदाऽयं स्नानप्रकारः—"सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः । कुम्भे सलिलमादाय पञ्चगव्यं तथैव च॥ पुण्यर्भिराभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥" रजस्वलायास्तु—"पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥" इति । एतच्च रजोदर्शनपुत्रजन्मादि यद्युदयोत्तरकालमुत्पन्नं तदा तद्दिवसप्रभृत्याशौचाहोरात्रगणना कार्या । यदा तु रजन्यां रजोदर्शनपुत्रजन्मादि जातं तदार्धरात्रात्प्राग्जननाद्युत्पत्तौ पूर्वदिवसैकदेशाव्याप्तित्वेऽप्याशौचस्य तत्पूर्वदिवसप्रभृत्येव गणना कार्येत्येकः कल्पः;

---

१. ख. ग्रहान्वीक्षेतनाग्निं। ग. न ग्रहान्निरेक्षेत०। २.—४. ५, ६, ७.। ३. ग. स्पृशेदन्यां तु सास्त्रियम् । क. स्पृशेदन्याशुचिः स्त्रियम् । ४.—७. १०.। ५. क. पुण्याभिरभि० ।

रात्रिं त्रेधा विभज्याऽऽद्ये भागद्वये जननादौ जाते पूर्वदिनं ग्राह्यमिति द्वितीयः; प्रागुदयादित्यपरः ; यथाऽऽह कश्यपः— "उदिते तु यदा सूर्ये नारीणां दृश्यते रजः । जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥ अर्धरात्रावधिः कालः सूतकादौ विधीयते । रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु । उत्तमोंऽशः प्रभातेन युज्यते ऋतुसूतके । रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥ पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः।" इति । एतेषां च कल्पानां देशाचारानुसारतो व्यवस्था विज्ञेया । इदं चाऽऽशौचमाहिताग्नेरुपरमे संस्कारदिवसप्रभृति कर्तव्यम्, अनाहिताग्नेस्तु मरणदिवसप्रभृति; संचयनं तूभयोरपि संस्कारदिवसप्रभृतीति विवेचनीयम्; यथाऽऽहाङ्गिराः—"अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः । शुद्धिः संचयनं दाहान्मृताहस्तु यथातिथि ॥" इति । "साग्नेः संस्कारकर्मणः" इति श्रवणादाहिताग्नौ पितरि देशान्तरमृते तत्पुत्रादीनामासंस्कारात्संध्यादिकर्मलोपो नास्तीत्यनुसंधेयम् । तथा च पैठीनसिः—"अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु । दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥" इति ॥ २० ॥

सपिण्डत्वादिना दशाहादिप्राप्तौ क्वचिन्मृत्युविशेषेऽपवादमाह—

**हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ।**

नृपोऽभिषिक्तः क्षत्रियादिः; गोग्रहणं शृङ्गिदंष्ट्र्यादितिरश्चामुपलक्षणार्थम्; विप्रग्रहणमन्त्यजोपलक्षणम्; एतैर्हतानां संबन्धिनो ये सपिण्डास्तेषाम् । विषोद्बन्धनादिभिः बुद्धिपूर्वमात्मानं ये व्यापादयन्ति ते आत्मघातिनः । आत्मघातिग्रहणं— "पाषण्डयनाश्रिताः" इत्येकयोगोपात्तपतितमात्रोपलक्षणार्थम् । तत्सबन्धिनां चान्वक्षमनुगतमक्षमन्वक्षं सद्यः शौचमित्यर्थः. न पुनर्दशाहादिकम् । तथा च गौतमः—"गोब्राह्मणहतानामन्वक्षम् । राजक्रोधाच्च । युद्धे प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्" इति । क्रोधग्रहणं प्रमादव्यापादितानिरासार्थम् ।

---

१. ग. जाते आशौच पूर्वदि० । २. ख. उत्तरांशः प्रभा० । ग उत्तमांशः प्रभा० । ३. ग. ऋतुसूतके । पूर्वमेव० । ४. ख. यावन्नोदयते रवि० । ५ ख. देशाचारतो व्यव० । ६. क. व्यवस्था विज्ञेयाः । ७. ग. यथाविधीति० । ८. ख. विशेणापवाद० । ९. विप्रगोनृपहतानामन्वक्षमित्यपरार्कपाठः। १० प्रा० ६.। ११. क. मात्रोपलक्षणम् । १२ ग. मित्यर्थः। तत्सम्बान्धिनां च सान्वक्षयावद्दर्शनमाशौचम् । नपुन० । १३.—१४ ९, १०, ११, १२, ।

अयुद्धग्रहणं युद्धहतस्यैकाहमशौचकमिति[1] ज्ञापनार्थम्—"ब्राह्मणार्थे विपन्नाये[2] योषि-तां गोऽग्रहेऽपि च[3]। आहवेऽपि हतानां च एकरात्रमशौचकम् ॥" इति स्मरणात्। एतच्च युद्धकालक्षतेनैव कालान्तरविपन्नस्य, समरमूर्धनि हतस्य पुनः सद्यः शौ-चम्; यथाऽऽह मनुः—"उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः संतिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः॥" इति[4]॥

ज्ञातस्यैव जननादेराशौचनिमित्तत्वाज्जन्मादिना[5]तदुत्तरकालेऽपि ज्ञाते दशहादिप्राप्तावपवादमाह[6]—

**प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः ॥ २१ ॥**

प्रोषिते देशान्तरस्थे यत्रस्थेन प्रथमदिवस[7] एव सपिण्डजननादिकं न ज्ञायते तस्मिन्सपिण्डे कालस्य दशाहाद्यवच्छिन्नस्य यः शेषोऽवशिष्टकालः स एव शुद्धि-हेतुर्भवति, पूर्णे पुनराशौचकाले दशाहादिके प्रेतायोदकं दत्त्वा शुद्धिर्भवति। उद-कदानस्य स्नानपूर्वकत्वात्स्नात्वोदकं[8] दत्त्वा शुचिर्भवति। तदुक्तं मनुना—"निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥" इति[9]॥ "पूर्णे दत्त्वोदकं शुचिः" इति प्रेतोदकदानसहचरितस्याशौचकालस्य शुद्धिहेतुत्व-विधानाज्जन्मन्यतिक्रान्ताशौचं सपिण्डानां नास्तीति गम्यते। पितुस्तु निर्दशेऽपि जनने स्नानमस्त्येव—"श्रुत्वा पुत्रस्य जन्मच" इति वचनात्। एतच्च पुत्रग्रहणं जन्मनि सपिण्डानामतिक्रान्ताशौचं नास्तीत्यत्र[10] ज्ञापकम्। अन्यथा "निर्दशं ज्ञाति मरणं श्रुत्वा जन्म च निर्दशम्।" इत्येवावक्ष्यत् न चोक्तम्[11]। तथा च देवलः—"नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि।" इति। तस्माद्विपत्तावेवातिक्रान्ता-शौचमिति[12] स्थितिः॥ केचिदन्यथेमं श्लोकं पठन्ति—"प्रोषिते कालशेषः स्याद-शेषे त्र्यहमेव[13] च। सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः॥" इति। प्रोषिते प्रेते सर्वेषां ब्राह्मणक्षत्रियादीनामविशेषेण कालशेषः शुद्धिहेतुः अशेषे पुनरतिक्रान्ते दशाहादौ सर्वेषां त्र्यहमेवाऽऽशौचं संवत्सरे पूर्णे यदि प्रोषितप्रायणमवगतं[14] स्यात्तदा सर्वो ब्राह्मणादिः स्नात्वोदकं दत्त्वा शुचिः स्यात्। तथा च मनुः—"संवत्सरे व्यतीते

१ ख. काहमाशौच मस्तीति०। ग. च एकाहाशौ च मस्तीतिज्ञा०। २ ख. विपन्नाना योषि०। ३. क. ग्रहेपिवा०। ४.—५. ९८.। ५ ख. जन्मदिनां। ६. ख. वादमह०। ७ क. प्रथमदिवसेऽपि०। ८. क. स्नानोदकं दत्वा०। ९.—५. ७७.। १०. ग. नास्तीति ज्ञापक०। ११. ग. ख. ट. नचोक्तमिति नास्ति। १२. ग. मितिस्थितम्०। १३. ख. त्र्यह एवतु०। १४. ख. ग. ट. प्रोषितप्रयाणं।

तुस्पृष्ट्वैवापो विशुध्यति ।" इति अयं च त्र्यहो दशाहादूर्ध्वं मासत्रयाद-र्वाग्द्रष्टव्यः पूर्वोक्तं सद्यःशौचं तु नवममासादूर्ध्वमर्वाक्संवत्सराद्द्रष्टव्यम् । यत्पुनर्वासिष्ठं वचनम्—"ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रम्" इति तदूर्ध्वं षण्मासेभ्यो यावन्नवमम् । यदपि गौतमवचनं—"श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी" इति—तन्मास-त्रयादूर्ध्वमर्वाक् षष्ठात् । तथा च वृद्धवसिष्ठः—"मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥" इति । एतच्च माता-पितृव्यतिरिक्तविषयं—"पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥" इति पैठीनसिस्मरणात् । तथा च स्मृत्य-न्तरेऽपि—"महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना । अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि ॥" इति । संवत्सरादूर्ध्वमपि प्रेतकार्यमाशौचोदकदानादिकं कार्यं, न पुनः स्नानमात्राच्छुद्धिरित्यर्थः । पितृपत्न्यामपि मातृव्यतिरिक्तायां स्मृत्यन्तरे विशेषो दर्शितः—"पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः । संवत्सरे व्यतीतेऽपि त्रिरा-त्रमशुचिर्भवेत् ॥" इति । यस्तु नद्यादिव्यवहिते देशान्तरे मृतस्तत्सपिण्डानां दशाहा-दूर्ध्वं मासत्रयादर्वागपि सद्यः शौचम् । "देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः ॥" इति । देशान्तरलक्षणं च बृह-स्पतिनोक्तं—"महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्दे-शान्तरमुच्यते ॥ देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्यन्ये त्रिंश-दन्ये तथैव च ॥" इति । इदं चातिक्रान्ताशौचमुपनीतोपरमविषयं, न पुनर्वयो-वस्थाविशेषाशौचविषयमपि । तथा चोक्तं व्याघ्रपादेन—"तुल्यं वयसि सर्वेषाम-तिक्रान्ते तथैव च । उपनीते तु विषमं तस्मिन्नेवातिकालजम् ॥" इति । अयमर्थः—वयसि त्रिवर्षादिरूपे यदाशौचम्—"आदन्तजन्मनः सद्यः" इत्यादिवाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टम्; अतिक्रान्ते च दशाहादिके त्र्यहादि यदाशौचं तदपि सर्वेषामविशिष्टम्; उपनीते पुनरुपरमे दश द्वादश पञ्चदश विं-शद्दिनानीत्येवं विषमाशौचं ब्राह्मणादीनां; तस्मिन्नेवोपनीतो परम एव अतिकालज-मतिक्रान्ताशौचं भवति, न वयोवस्थाशौचातिक्रम इति ॥ २१ ॥

१.—७. ७६. । २.—४. ३६. । ३.—१४. १९ । ४. ख. मातृवर्ज्यं द्वि० । ५. तथैव च । इदं चा० । ६.—प्रा० २३. । ७. क. दीनां वर्णानां० । ८. ख. क्रान्ते दशा० । ९. ख० रूपरमेदश० । १०. ख. विषमाशौ० ।

क्षत्रियादिषु दशरात्रस्य सपिण्डाशौचस्यापवादमाह—

**क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।**
**त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥ २२ ॥**

क्षत्रियवैश्यशूद्राणां सपिण्डजनने तदुपरमे च यथाक्रमेण द्वादश पञ्चदश त्रिंशद्दिनान्याशौचं भवति । न्यायवर्तिनः पुनः शूद्रस्य पाकयज्ञाद्विजशुश्रूषादिरतस्य तदर्धं तस्य मासस्यार्धं पञ्चदशरात्रमाशौचम् । एवं च "त्रिरात्रं दशरात्रं वा"[1] इत्येतद्दशरात्रमाशौचं पारिशेष्यात् ब्राह्मणविषये व्यवतिष्ठते। स्मृत्यन्तरेषु तु क्षत्रियादीनां दशाहादयोऽप्याशौचकल्पा दर्शिताः; यथाऽह पराशरः—"क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः। तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ॥" तथा च शातातपः—"एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा । शूद्रो विंशतिरात्रेण शुध्येत[2] मृतसूतके ॥" वसिष्ठस्तु "पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्यः" इति। अङ्गिरास्त्वाह--"सर्वेषामेव वर्णानां सूतके मृतके तथा। दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्॥" इत्येवमनेकोच्चावचाशौचकल्पा[3] दर्शिताः—तेषां लोके समाचाराभावान्नातीव व्यवस्थाप्रदर्शनमुपयोगीति नात्र व्यवस्था प्रदर्श्यते । यदा पुनर्ब्राह्मणादीनां क्षत्रियादयः सपिण्डा भवन्ति तदा हारीताद्युक्ताशौचकल्पोऽनुसरणीयः[4]— "दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु। षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु॥" इति । विष्णुरप्याह—"क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्राभ्यां । वैश्यस्य[5] शूद्रे सपिण्डे षड्रात्रेण॥"[6] शुद्धिः । हीनवर्णानां तूत्कृष्टेषु सपिण्डेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिः"[7] इति। बौधायनेन त्वविशेषेण दशाह इत्युक्तं—"क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बन्धवाः। तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते॥" इति। अनयोश्च पक्षयोरापदनापद्विषयत्वेन व्यवस्था । दास्यादीनां तु स्वामिशौचेन[8] स्पृश्यत्वं कर्मानधिकारस्तु मासावधिरेव । तदाहाङ्गिराः—"दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्यां मासस्तु सूतकम् ॥" इति । प्रतिलोमानां त्वाशौचभाव एव —"प्रतिलोमा धर्महीनाः" इति

१.—प्रा० १८. । २. क. शुध्यते मृत० । ३. क. शौचकालादर्शि० । ४. ग. द्युक्तो शौचक० । ५. क. वैश्यसपिण्डे० । ६.—२२. २३, ४. । ७.—२२. २१ । ८. ख. स्वाम्याशौचे० ।

स्मरणात् । केवलं मृतौ प्रसवे च मालापकर्षणार्थं मूत्रपुरीषोत्सर्गवत् शौचं भवत्येव ॥ २२ ॥

वयोवस्थाविशेषादपि दशाहाद्याशौचस्यापवादमाह—

**आदन्तजन्मनः सद्य आ चूडान्नैशिकी स्मृता ।**
**त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ २३ ॥**

यावता कालेन दन्तानामुत्पत्तिस्तस्मिन्कालेऽतीतस्य[2] संबन्धिनां सद्यः शौचं, चूडाकरणादर्वाङ्मृतस्य संबन्धिनां नैशिकी निशायां भवा अहोरात्रव्यापिन्यशुद्धिः । व्रतादेश उपनयनम् । ततोऽर्वाक् चूडायाश्चोर्ध्वममीतस्य त्र्यहमशुद्धिः । अत्र च "आदन्तजन्मनः सद्यः" इति यद्यप्यविशेषेणाभिधानम् । तथाऽप्यग्निसंस्काराभावे द्रष्टव्यम्—"अदन्तजाते बाले प्रेते सद्य एव नास्याग्निसंस्कारो नोदकक्रिया" इति वैष्णवेऽग्निसंस्काररहितस्य सद्यः शौचविधानात्, सति त्वग्निसंस्कारे "अहस्त्वदत्तकन्यासु बालेषु च" इति[3] वक्ष्यमाण एकाहः । तथा च यमः—'अदन्तजाते तनये शिशौ गर्भच्युते तथा । सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥ " इति नामकरणात्प्राक्सद्यः शौचमेव निर्यतं[4]—"प्राङ् नामकरणात्सद्यः शौचम्" इति शङ्खस्मरणात् । चूडाकर्म प्रथमे तृतीये वा वर्षे स्मर्यते—"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥" इति स्मरणात् ॥ ततश्च दन्तजननादूर्ध्वं प्रथमवार्षिकचूडाकर्मपर्यन्तमेकाहः[5], तत्र त्वकृतचूडस्य[6] दन्तजनने सत्यपि त्रिवर्षं यावदेकाह एव । तथा च विष्णुः—"दन्तजातेऽप्यकृतचूडेऽहोरात्रेण शुद्धिः" इति[7] । तत ऊर्ध्वं प्रागुपनयनात् त्र्यहः । यत्तु मनुवचनं—"नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते॥" इति[8] तस्याप्ययमेव[9] विषयः ॥ यत्तूनद्विवर्षमधिकृत्यं[10] तेनैवोक्तम्—

---

'आदन्तजननात्सद्य' इति 'आदन्तजन्मनः सद्य' इति पाठाद्वये मत्रैवमिताक्षाराया मष्टादश श्लोकव्याख्याया मुत्तरपाठान्तरं च मित्वक्षरायां प्राक्तनग्रन्थेषु बहुषुस्थलेषु दृश्यते । अपरार्के पुनरयं श्लोकः पुण्यपत्तनमुद्रिते पुस्तके न व्याख्यात. इतित्यक्तः । व्याख्यानकरणस्य श्लोकसद्भावासद्भावं प्रत्यकारणत्वाच्चिन्त्य एवायं प्रमाद इति । २. ख. तीतस्य बालस्य तत्सम्ब० । ग. तस्य बालस्य सम्बन्धि० । ३.—प्रा० २४. । ४. क. मेवनियम्यते । प्राङ्० । ५. क. ख. चूडापर्यन्त०। ६. ग. त्वकृतेन चूडान्तजस्यदतसत्यपि० । ७.—२२.२९.। ८.—५. ६७.।९. क. 'ययमेवाविशेषः।१०. क. तेनोक्तम् अरण्ये काष्ठवत्त्यस्काक्षपेतत्र्यह० ।

—"अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु।" इति, यच्च वासिष्ठवचनम्—"ऊन-द्विवर्षे प्रेते, गर्भपतने वा सपिण्डानां त्रिरात्रम्" इति—तत्संवत्सरचूडाभिप्रायेण॥ यस्त्वाङ्गिरोवचनं—"यद्यप्यकृतचूडो वै जातदन्तश्च संस्थितः। तथाऽपि दाहयित्वैनमाशौचं त्र्यहमाचरेत्॥" इति तद्वर्षत्रयादूर्ध्वं कुलधर्मापेक्षया चौलोत्कर्षे वेदितव्यं—"विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी।" इति तेनैवाभिहितत्वात्॥ न चायमेकाहो दन्तजननाभाव इति शङ्कनीयम्—न हि न्यूनत्रिवर्षस्य दन्तानुत्पत्तिः संभवति, तथा सत्यपि दन्तजननेऽकृतचूडस्यैकाहं वदता विष्णुवचनेन विरोधश्च दुष्परिहरः स्यात्। तस्मात्प्राच्येव व्याख्या ज्यायसी। यत्तु कश्यपवचनं—"बालानामदन्तजातानां त्रिरात्रेण शुद्धिः" इति तन्मातापितृविषयं—"निरस्य तु पुमाञ्छुक्रमुपस्पृश्यैव विशुध्यति। बैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहम्" इति जन्यजनकसंबन्धोपाधिकतया त्रिरात्रस्मरणात्। ततश्चायमर्थः—"प्राङ्नामकरणात्सद्यःशौचं, तदूर्ध्वं दन्तजननादर्वागग्निसंस्कारक्रियायामेकाह, इतरथा सद्यः शौचं, जातदन्तस्य च प्रथमवार्षिकाच्चौलादर्वागेकाहः, प्रथमवर्षादूर्ध्वं त्रिवर्षपर्यन्तं कृतचूडस्य त्र्यहः, इतरस्य त्वेकाहः, वर्षत्रयादूर्ध्वमकृतचूडस्यापि त्र्यहम्, उपनयनादूर्ध्वं सर्वेषां ब्राह्मणादीनां दशरात्रादिकमिति॥ २३॥

इदानीं स्त्रीषु च वयोवस्थाविशेषणापवादमाह—

## अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्।

अदत्ता अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात्प्रागहोरात्रं विशेषेण शुद्धिकारणं सपिण्डानाम्। सापिण्ड्यं च कन्यानां त्रिपुरुषपर्यन्तमेव—"अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते" इति वासिष्ठस्मरणात्। बालेषु चानुत्पन्नदन्तेष्वग्निसंस्कारे सत्येकाहो विशोधनम्, अकृतचूडायां तु कन्यायां सद्यः शौचं विधीयते" इत्यापस्तम्बस्मरणात्। वाग्दानादूर्ध्वं तु संस्कारात्प्राक्पतिपक्षे पितृपक्षे च त्रिरात्रमेव; यथाऽऽह मनुः—"स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः।

१. ख. क्षिपेयुस्त्र्यह०। २.—५. ६९.। ३.—४. ३५.। ४. क. जातदन्तस्तुस०। ५. क दाहयित्वा तथाप्येनमा शौच०। ६. क. स्यैकाहं विदधता विष्णु०। ७. ख मुपस्पर्शाद्विधी। ८ ख दनुरुन्ध्यादद्य०। ९ क. ग दन्तस्य प्रथम०। १०.—४. १८। ११. ख अकृतचूडाया०।

यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥" इति । बान्धवाः पतिपक्षास्त्रिरात्रेण शुध्यन्ति, सनाभयस्तु पितृपक्षाः सपिण्डा यथोक्तेनैव कल्पेन "निर्वृत्तचूडाकानाम्" इत्यादिनोक्तेन त्रिरात्ररूपेण न पुनर्दशरात्ररूपेण,—विवाहात्प्राक् तस्यायुक्तत्वात् । अत एव मरीचिः—"वारिपूर्वं प्रदत्ता तु या नैव प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥" इति । उभयोः पतिपितृपक्षयोः । विवाहादूर्ध्वं तु विष्णुना विशेषो दर्शितः—"संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च ॥" इति । तत्र प्रसवे एकाहः, प्रायणे त्रिरात्रमिति व्यवस्था । इदं तु वयोवस्थाशौचं सर्ववर्णसाधारणं—"क्षत्रस्य द्वादशाहानि" इतिवद्वर्णविशेषोपादानेनाभिधानात् । अत एव मनुनाऽनुपात्तवर्णविशेषाशौचविधेः साधारण्यप्रतिपादनार्थं चातुर्वर्ण्याधिकारे सत्यपि पुनः "चतुर्णामपि वर्णानां यथावदनुपूर्वशः" इत्युक्तम् । तथाऽङ्गिरसाप्युक्तम्—"अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥" इति । व्याघ्रपादवचनं च "तुल्यं वयसि सर्वेषाम्" प्राक्प्रदर्शितम् । अतो यथा "पिण्डयज्ञावृता देयम्" इत्यादिः पिण्डोदकदानविधिः सर्ववर्णसाधारणः, यथा वा समानोदकाशौचविधिः, "अन्तरा जन्ममरणे" इति सन्निपाताशौचविधिश्च, यद्वद्वा च—"गर्भस्रावे मासतुल्या निशा" इति स्रावाशौचविधिः, "प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु," इति विदेशस्थाशौचविधिश्च, यथा वा गुर्वाद्याशौचविधिः, सर्ववर्णसाधारणः—तथा वयोवस्थानिमित्तमप्याशौचं सर्ववर्णसाधारणमेव भवितुमर्हति । अत एव "क्षत्रे षड्भिः कृते चौले वैश्ये नवभिरुच्यते । ऊर्ध्वं त्रिवर्षाच्छूद्रे तु द्वादशाहो विधीयते ॥" तथा "यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते । तत्र शूद्रे द्वादशाहः षण्णवः क्षत्रवैश्ययोः ॥" इत्यादीनि ऋष्यश्रृङ्गादिवचनानि विगीतबुद्ध्यानाद्रियमाणैर्धारेश्वरविश्वरूपमेधातिथिप्रभृतिभिराचार्यैरयमेव साधारणः पक्षोऽङ्गीकृतः । अविगीतानि चार्तानार्तक्षत्रियादिविषयतया व्याख्येयानि ॥

---

१—५. ७२. । २. ग. रात्ररूपेण पितृपक्षेविवाहात्प्राग्' इत्यु० । ३. ख. त्रिरात्रं वेति० । ४.—२२, ३३, ४. । ५. ख. ग. प्रयाणे त्रिरा० । ६.—प्रा० २२. । ७. क पादानेन न विधा० । ख. ग. ङ पादानेनाभिधानात् । ८. प्रा० १६. । ९. प्रा० २०. । १०. ख विधिश्च-यदूर्ध्वं गर्भस्रा० । ११. प्रा० २०. । १२. प्रा० २१. । १३. क. शौचं साधारणमेव० । १४. ख. विगीतत्वबुद्ध्यया० ।

गुर्वादिष्वतिदेशमाह—

## गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ २४ ॥

गुरुरुपाध्यायः; अन्तेवासी शिष्यः; अनूचानोऽङ्गानां प्रवक्ता; मातुलग्रहणेनाऽऽत्मबन्धवो मातृबन्धवः पितृबन्धवश्च योनिसम्बन्धा उपलक्ष्यन्ते—ते च "पत्नी दुहितरः" इत्यत्र दर्शिताः; श्रोत्रिय एकशाखाध्यायी—"एकां शाखामधीते श्रोत्रियः" इति बौधायनस्मरणात्; एषूपरतेष्वहोरात्रमाशौचम्। यस्तु मुख्यो गुरुः पिता तदुपरमे सपिण्डत्वाद्दशाहमेव। यस्तु पिता पुत्रानुत्पाद्य संस्कृत्य वेदानध्याप्य वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति तस्य महागुरुत्वात्तदुपरमे द्वादशरात्रं वा—"महागुरुषु दानाध्ययने वर्जयेरन्" इत्याश्वला[1]यनेनोक्तं द्रष्टव्यम्। आचार्योपरतौ[2] तु त्रिरात्रमेव; यथाऽऽह मनुः—"त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः॥" इति[3]। यदा त्वाचार्यादेरन्त्येष्टिं करोति तदा दशरात्रमाशौचम्—"गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत्[4]। प्रेताहारैः समं तत्र दशाहेन विशुध्यति॥" इति[5] तेनैवोक्तत्वात्। श्रोत्रियस्य तु समानग्रामीणस्यैतदाशौचम्—"एकाहं सब्रह्मचारिणि; समानग्रामीणे च श्रोत्रिये" इत्याश्वलायनस्मरणात्। एकाचार्योपनीतः सब्रह्मचारी। एतच्चासन्निधौ[7] द्रष्टव्यं, सन्निहिते तु शिष्यादौ त्रिरात्रादि; यथाऽऽह मनुः—"श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत्। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च॥" इति[8]। उपसंपन्ने मैत्रीप्रातिवेश्यत्वादिना[9] संबद्धे शीलयुक्ते वा। मातुलग्रहणं मातृष्वस्रादेरुपलक्षणार्थम्। बान्धवा इत्यात्मबन्धवो, मातृबन्धवः, पितृबन्धवश्चोच्यन्ते। तथा[10] च बृहस्पतिः—"त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्।" इति। तथा प्रचेताः—"मृते चर्त्विजि याज्ये च त्रिरात्रेण शुध्यति।" इति। तथा च वृद्धवसिष्ठः—संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥ पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्। त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः॥ श्वशुर[11]योर्भगिन्यां च मातुलान्यां च मातुले।

१. व्य० १३५.। २. ख. परमेतु०। ३.—५. ८०.। ४. ख. समारभेत्। ५.—५ ६५.। ६.—४. ४. २६, २७। ७. ख. न्निधानेद्रष्टव्य०। ८.—५. ८१.। ९. ख. दिनासम्बन्धेशील०। १० ग. तथाऽऽह बृहस्प०। ११. ग. श्वशुरयोश्च भगि०।

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्॥" तथा "मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च। आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥" तथा गौतमः—"पक्षिणीमसपिण्डे योनिसंबद्धे सहाध्यायिनि च" इति। योनिसंबद्धा मातुलामातृष्वस्रीयपितृष्वस्रीयादयः। तथा जाबालिः—"एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम्। मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥" इति। विष्णुः—"असपिण्डे स्ववेश्मनि मृत एकरात्रम्" इति। तथा वृद्धः—"भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते। मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते॥ शालके तत्सुते चैव सद्यः स्नानेन शुध्यति। ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि॥ शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात्। ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्॥ ग्रामस्य तावदाशौचं निर्गते शुचितामियात्।" इत्यादीन्याशौचविशेषप्रातिपादकानि स्मृतिवचनान्यन्वेषणीयानि ग्रन्थगौरवभयात्त्वत्र न लिख्यन्ते। तेषु चैकविषयगुरुलघ्वाशौचप्रतिपादकतया परस्परविरुद्धेषु सन्निधिवेशास्थापेक्षया व्यवस्थाऽनुसंधातव्या॥ २४॥

किं च—

## अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च।

अहरित्यनुवर्तते। अनौरसाः क्षेत्रजदत्तकादयः तेषु जातेषूपरतेषु चाहोरात्रमाशौचम्। तथा स्वभार्यास्वन्यगतास्वन्यं प्रतिलोमव्यतिरिक्तमाश्रितासु अतीतासु चाहोरात्रमेव, न पुनः सत्यपि सापिण्ड्ये दशरात्रं। प्रतिलोमाश्रितासु त्वाशौचाभाव एव—"पाषण्डयनाश्रिता" इत्यनेन प्रतिषेधात्। एतच्च भार्यापुत्रशब्दयोः संबन्धिशब्दत्वाद्यत्प्रतियौगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचं सपिण्डानां त्वाशौचाभाव एव। अत एव प्रजापतिः—"अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता॥" इति। स्वैरिण्याद्यास्तु यमाश्रितास्तस्य तु त्रिरात्रमेव; यथाऽऽह विष्णुः—"अनौरसेषु पुत्रेषु

१. ख. ग. तथा च गौत०। २. ख. योनिसम्बन्धे०। ३—१४ २०.। ४. ख. योनिसम्बन्धा०। ५—२२. ४६.। ६. ख. ग. भयादत्र। ७. क. लिख्यते०। ८. ख. एषु चैक०। ९. क. क्षेत्रिकदत्त०। १०. ख ग. रतेषुवाहो०। ११. ख. तासु अत्राहोरा०। १२. ख. तासुचाशौ०। १३. प्रा० ६। १४. क. पुत्रयोः सम्बन्धित्वाद्यत्प्रतियौगि०। १५. ख. शौचाभावः। अत०।

जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥" इति त्रिरात्रमत्र प्रकृतम् । अनयोश्च त्रिरात्रैकरात्रयोः सान्निधिविदेशस्थापेक्षया व्यवस्था । यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रमं ; यथाऽऽह मरीचिः— "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥" इति ॥ २४ ॥

किं च—

## निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥ २५ ॥

निवसन्त्यस्मिन्निति निवासः,-स्वदेश उच्यते;तस्य यो राजा स्वामी विषयाधिपतिः स यस्मिन्नहनि अतीतस्तदहर्मात्रं शुद्धिकारणं, रात्रौ चेदतीतस्तदा रात्रिमात्रम् । अत एव मनुः—"प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः।" इति । ज्योतिषा सह वर्तते इति सज्योतिराशौचम् । अह्नि चेद्यावत्सूर्यदर्शनं, रात्रौ चेद्यावन्नक्षत्रदर्शनमित्यर्थः ॥ २५ ॥

अनुगमनाशौचमाह—

## ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
## अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः॥ २६ ॥

ब्राह्मणेन असपिण्डेन द्विजो विप्रादिः शूद्रो वा प्रेतो नानुगन्तव्यः । यदि स्नेहादिनाऽनुगच्छति तदाऽम्भसि तडागादिस्थे स्नात्वाऽग्निं स्पृष्ट्वा घृतं प्राश्य शुचिर्भवेत् । अस्य च घृतप्राशनस्य भोजनकार्यविधाते प्रमाणाभावान्न भोजनप्रतिषेधः । इदं च समानोत्कृष्टजातिविषयम्; यथाऽऽह मनुः—"अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च । स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ॥" इति । ज्ञातयो मातृसापिण्डाः; इतरेषां तु विहितत्वान्न दोषः ॥ निकृष्टजात्यनुगमने तु स्मृत्यन्तरोक्तं द्रष्टव्यम् । तत्र शूद्रानुगमने—"प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।

---

१.—२२ ४३. । २. ग. तदहः शुचिका०। ३. ख. निवसत्यस्मि०। ४. विषये स्थितिरिती त्यानन्दाश्रममुद्रितापरार्कपुस्तके पाठान्तरम् । ग. तथा । ५.—५. ८. । ६. ख. भुग्शुचिः । ७. क. प्राश्यशुद्धिर्भवे० । ८. क. ख. ग. ङ. कार्यविधाने प्रमाणा० । ९.—५. १०३. ।

अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥ त्रिरात्रे तु ततश्चीर्णे[1] नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥" इति पराशरोक्तं; क्षत्रियानुगमने त्वहोरात्रं—"मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रं शवानुगमने चैकम्" इति वसिष्ठोक्तं;वैश्यानुगमने पुनः पक्षिणी[2], तथा—"क्षत्रियस्यानन्तरं[3] वैश्यानुगमने अहोरात्रमेकान्तरशूद्रानुगमने पक्षिणी[4], वैश्यस्य शूद्रानुगमने एकाहः" इत्यूहनीयम् ॥ तथा रोदनेऽपि पारस्करेणोक्तं—"मृतस्य बान्धवैः साध कृत्वा तु परिदेवनम् । वर्जयेत्तदहोरात्रं दानं[5] श्राद्धादिकर्म च ॥"इति ॥ तथाऽलङ्करणमपि न कार्यं—"कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते । अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥" इति शङ्खेन प्रायश्चित्तस्याम्नातत्वात् ॥ २६ ॥

सपिण्डाशौचे क्वचिदपवादमाह—

**महीपतीनां नाऽऽशौचं हतानां विद्युता तथा ।**
**गोब्राह्मणार्थे संग्रामे यस्य चेच्छति भूमिपः ॥ २७ ॥**

यद्यपि महीशब्देन कृत्स्नं भूगोलकमभिधीयते, तथाऽप्यत्र सकलायाः क्षितेरेकभर्तृकत्वानुपपत्तेः महीपतीनामिति बहुवचनानुरोधाच्च, तदेकदेशभूतानि मण्डलानि लक्ष्यन्ते । तत्पालनाधिकृतानां क्षत्रियादीनामभिषिक्तानां नाऽऽशौचं, तैराशौचं न कार्यमित्यर्थः । तथा विद्युद्धतानां गोब्राह्मणरक्षणार्थं विपन्नानां च संबन्धिनो ये सपिण्डास्तैरप्याशौचं न कार्यम् । यस्य च मन्त्रिपुरोहितादेर्भूमिपो[6]ऽनन्यसाध्यमन्त्राभिचारादिकर्मसिद्ध्यर्थमाशौचाभावमिच्छति तेनापि[7] न कार्यम् । अत्र च महीपतीनां यदसाधारणत्वेन विहितं प्रजापरिरक्षणं तद्येन दानमानसत्कारव्यवहारदर्शनादिना विना न संभवति तत्रैवाऽऽशौचाभावो न पुनः पञ्चमहायज्ञादिष्वपि । तथा च मनुः—"राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते । प्रजानां परिरक्षार्थमासनं चात्र कारणम् ॥" इति[8] । गौत-

१ ग. ततस्तीर्णे नदीं । २. क. पक्षिणीं तथा० । ३. ख. नन्तरं वैश्या० । ४. ग. पक्षिणीं वैश्य० । ५. क. दानश्राद्धादिं० । ६. ख. मिपतयोऽनन्य० । ग. मिपानन्य० । एतच्छ्लोकस्यपाठो 'महीपतीनाम्' इत्येकश्लोकपाठोत्तरमपरार्कपुस्तके आनन्दाश्रममुद्रिते दृश्यते । ७. ख. मिच्छन्तितैरपि० । ८.—५. ९८. ।

मेनाप्युक्तं—"राज्ञां च कार्याविघातार्थम्" इति। राजभृत्यादेरप्याशौचं न भवति ; तथाऽऽह प्रचेताः—"कारवः शिल्पिनो वैद्या दासीदासास्तथैव च। राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिताः ॥" इति। कारवः सूपकारादयः; शिल्पिनश्चित्रकारचैलनिर्णेजकादयः। अयं चाऽऽशौचाभावः किंविषय इत्यपेक्षायां कर्मनिमित्तैः शब्दैस्तत्तदसाधारणस्य कर्मणो बुद्धिस्थत्वात्तत्रैव द्रष्टव्यः। अत एव विष्णुः—"न राज्ञां राजकर्मणि, न व्रतिनां व्रते, न सत्रिणां सत्रे, न कारूणां कारुकर्माणि" इति प्रतिनियतविषयमेवाऽऽशौचाभावं दर्शयति। शातातपीयेऽप्युक्तं—"मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च। स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः॥" इति॥ इयं च दासादिशुद्धिरपरिहरणीयतया प्राप्तस्पर्शविषयेत्यनुसंधेयम्। अत एव स्मृत्यन्तरं—"सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः।" तथा—"चिकित्सको यत्कुरुते तदन्येन न शक्यते। तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः॥" इति॥ २७॥

किं च—

**ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्।**
**सत्त्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा॥ २८॥**

**दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।**
**आपद्यपि हि कष्टायां सद्यः शौचं विधीयते॥ २९॥**

ऋत्विजो वरणाभरणसम्भृताः वैतानौपासना कर्तृविशेषाः, दीक्षया संस्कृता दीक्षिताःतेषां ; यज्ञियं यज्ञे भवं च कर्म कुर्वतां "सद्यः शौचं विधीयते" इति सर्वत्रानुषङ्गः। दीक्षितस्य "वैतानौपासनाः कार्याः" इत्यनेन सिद्धेऽप्यधिकारे पुनर्वचनं याजमानेषु स्वयं कर्तृत्वविधानार्थं सद्यः स्नानविध्यर्थं च। सत्त्रिग्रहणेन सन्ततानुष्ठानतुल्यतयान्न सत्त्रप्रवृत्ता लक्ष्यन्ते—मुख्यानां तु सत्त्रिणां दीक्षितग्रहणे नैव सिद्धेः। व्रतिशब्देन कृच्छ्रचान्द्रायणादिप्रवृत्ताः, स्नातकव्रतप्रायश्चित्तप्रवृत्ताश्चो-

१.—१४.४५। २.—२२. ४८, ४९, ५०, ५१। ३. ग. शुद्धिः परिह०। ४. क वरणभरणसंभृताः। कर्तृ०। ख. ऋत्विजोवरणसंभृताः कर्तृविशे०।५.—प्रा० १७.। ६. क. ग. सद्यः स्नानविशुद्धयर्थं च०।

च्यन्ते । तथा ब्रह्मचर्यादिव्रतयोगिनः श्राद्धकर्तुर्भोक्तुश्च ग्रहणम् । तथा स्मृत्यन्तरं —"नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रयणादिषु । निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ गृहीतनियमस्यापि नेस्यादन्यस्य कस्यचित् । निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥ निमन्त्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च । देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् ॥ प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा ।" इति ॥ सत्रिणां व्रतिनां सत्रे व्रते च शुद्धिर्न कर्ममात्रे संव्यवहारे वा । तथा च विष्णुः —"न व्रतिनां सत्रे" इति । ब्रह्मचार्युपकुर्वाणको नैष्ठिकश्च । यस्तु नित्यं दातैव न प्रतिग्रहीता स वैखानसो दातृशब्देनोच्यते, ब्रह्मविद्यतिः, एतेषां च त्रयाणामाश्रमिणां सर्वत्र शुद्धिः—विशेषेण प्रमाणाभावात् । दाने च पूर्वसंकल्पितद्रव्यस्य नाऽऽशौचं—"पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति।" इति क्रतुस्मरणात् । स्मृत्यन्तरे चात्र विशेष उक्तः—"विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । शेषमन्नं परैर्देयं दातॄन्भोक्तॄंश्च न स्पृशेत् ॥" वृषोत्सर्गादौ विवाहे च पूर्वसंभृतसंभारे । तथा च स्मृत्यन्तरे—"यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि ।" इति, सद्यः शौचमत्र प्रकृतम् । विवाहग्रहणं पूर्वप्रवृत्तचौलोपनयनादिसंस्कारकर्मोपलक्षणम् । यज्ञग्रहणं च पूर्वप्रवृत्तदेवप्रतिष्ठारामाद्युत्सवमात्रोपलक्षणं—"न देवप्रतिष्ठोत्सवविवाहेषु न देशविभ्रमे नाऽऽपद्यपि च कष्टायामाशौचम्" इति विष्णुस्मरणात् । संग्रामे युद्धे । "संग्रामे समुपोढे राजानं संनाहयेत् ।" इत्याश्वलायनाद्युक्तसंनहनविधौ प्रास्थानिकशान्तिहोमादौ च सद्यः शुद्धिः । देशस्य विस्फोटादिभिरुपसर्गैः, राजभयाद्वा विप्लवे तदुपशमनार्थे शान्तिकर्मणि सद्यः शौचम् । विप्लवाभावेऽपि क्वचिद्देशविशेषेण पैठीनसिना शुद्धिरुक्ता—"विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥" इति । तथा कष्टायामप्यापदि व्याध्याद्यभिभवेन मुमूर्षावस्थायां, दुरितशमनार्थे दाने, तथा सङ्कुचितवृत्तेश्च क्षुत्परिश्रान्तमातापित्रादिबहुकुटुम्बस्य तद्भरणोपयोगिनि प्रतिग्रहे सद्यः शुद्धिः । इयं च शुद्धिर्यस्य सद्यः शौचं विनाऽऽर्त्युपशमो न भवत्यश्वस्तनिकस्य तद्विषया । यस्त्वे-

१. ग. निवृत्ते कृच्छ्र० । २. तस्मादन्य० । ३.—२२. ४९,५०. । ४. ख. विशेषप्रमाणा० । क. विशेषेप्रमाणा० । ५. ६. ख. ष्ठोत्सर्गविवा० । ख. तथा स्मृत्य० । ७. क. प्रवृत्तप्रातिष्ठारा । ८. लक्षम् । नदे० । ९—२२. ५३, ४, ५. । १०. क. ग. मुपोढे राजानं० । ११.—३. १२. १. । १२. क होमादौसद्यः ।

काहपर्याप्तसंचितधनस्तस्यैकाहः, यस्त्र्यहोपयोगिसंचर्यो तस्य त्र्यहः, यस्तु चतुरहार्थमापादितद्रव्यः कुम्भी धान्यः तस्य चतुरहः, "कुसूलधान्यकस्य दशाहः" इत्येवं यस्य यावत्कालमार्त्यभावस्तस्य तावत्कालमाशौचम्—आपदुपाधिकत्वादाशौचसङ्कोचस्य। अत एव मनुना—"कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा। त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा।" इत्यत्र[1] प्रतिपादितचतुर्विधग्रहस्थाभिप्रायेण "दशाहं शावमाशौचं सपिण्डेषु विधीयते। अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव च॥" इति[2] कल्पचतुष्टयं प्रतिपादितम्। समानोदकविषयाश्च सङ्कुचिताशौचकल्पाः पक्षिण्येकाहः सद्यः शौचरूपाः स्मृत्यन्तरे दृष्टाः वृत्तिसङ्कोचोपाधिकतयैव योज्याः। अयं चाशौचसङ्कोचो येनैव प्रतिग्रहादिना विनाऽऽर्तिस्तद्विषयो न सर्वत्रेत्यवगन्तव्यम्। मनुः—"एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु[3] द्विहीनो दशभिर्दिनैः॥" इत्यादिस्मृत्यन्तरवचनपर्यालोचनयाऽध्ययनज्ञानानुष्ठानयोगिनामेकाहादिभिः सर्वात्मना शुद्धिरित्येवं[4] कस्मान्नेष्यते? उच्यते—"दशाहं शावमाशौचं सपिण्डेषु विधीयते॥" इति सामान्यप्राप्तदशाहबाधपुरःसरमेव हि "एकाहाद्ब्राह्मणः शुद्ध्येत्"[5] इति विधायकं भवति। बाधकस्य चानुपपत्तिनिबन्धनत्वाद्यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम्। अतः कियदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्य "अग्निवेदसमन्वितः" इति वाक्यशेषस्य[6] दर्शनादग्निवेदविषयेऽग्निहोत्रादौ[7] कर्मणि स्वाध्याये च[8] व्यवतिष्ठते, न पुनर्दानादावपि। एवं चाग्निवेदपदयोः कार्यान्वयित्वं भवति। इतरथा येनाग्निवेदसाध्यं कर्म कृतं तस्यैकाहाच्छुद्धिरिति पुरुषविशेषोपलक्षणत्वमेव स्यात्। न चैवं[9] युक्तम्[10]। एवं च सति "प्रत्यूहेन्नाग्निषु क्रियाः[11], "वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्[12]।" तथा "ब्राह्मणस्य स्वाध्यायानिवृत्यर्थं सद्यः शौचम्" इत्येवमादिभिर्मन्वादिवचनैरेकवाक्यता भवति। तथा[13] "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।" इति दशाहपर्यन्तं भोजनादिकं प्रतिषेधयद्भिर्यमादिवचनैरविरोधोऽपि सि-

१.—४, ७.। २.—५. ५९.। ३. ख. दस्तुविर्हीनो०। ४. ख. हादिनाशुद्धि०। ५.—५. ५७.। ६. ख. वाक्यविशे०। ७. क. स्वाध्यायेनव्यव०। ८. ख. त्रादिक, क. न पुनर्दावपि०। ९. ख. ग. न चेतद्युक्तं एव च०। १०. ख. ग. त चैतद्युकम्। एवं च। ११. मनु० ५. ८४.। १२. क. चोदनात्। तथा०। १३. ख. ततः उभ०

ध्यति । अतः कोचित्कर्मेवेदमाशौचसंकोचविधानं, न पुनः संव्यवहारादिगोचर-मित्यलमतिप्रपञ्चेन ॥

इदं च स्वाध्यायविषये सद्यःशौचविधानं बहुवेदस्य ब्रह्मोज्झत्वकृतायामार्तौ द्रष्टव्यम्; इतरस्य तु "दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते।" इति प्रतिषेध एव । एवं ब्राह्मणादिमध्ये यस्य यावत्कालमाशौचमुक्तं स तस्यानन्तरं स्नात्वा शुध्येत् न तत्कालातिक्रममात्रात्; यथाऽऽह मनुः—"विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥" इति । अयमर्थः—कृतक्रिय इति प्रत्येकमभिसंबध्यते, विप्रोऽनुभूताशौचकालः कृतक्रियः कृतस्नानो हस्तेनापः स्पृष्ट्वा शुध्यति । स्पृष्ट्वेति स्पर्शनक्रियैवोच्यते न स्नानमाचमनं वा—वाहनादिषु तस्यैवानुषङ्गात्। अथवा कृतक्रियो यावदाशौचं कृतोदकादि-क्रियः तदनन्तरं विप्रादिरुदकादि स्पृष्ट्वा शुध्येदित्याशौचकालानन्तरभाविस्ना-नप्रतिनिधित्वेनोच्यत इति, क्षत्रियादिर्वाहनादिकं स्पृष्ट्वा शुध्येदिति ॥ २८ ॥ २९ ॥

कुलव्यापिनी शुद्धिमभिधायेदानीं प्रसंगात्प्रतिपुरुषव्यापिनी शुद्धिमाह—

**उदक्याऽशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।**
**अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥ ३० ॥**

उदक्या रजस्वला, अशुचयः शवचाण्डालपतितसूतिकाद्याः शावाशौ-चिनश्च, एतैः संस्पृष्टः स्नायात् । तैः पुनरुदक्याशुचिसंस्पृष्टादिभिः संस्पृष्ट उपस्पृशेत् आचमेत् । आचम्याऽऽब्लिङ्गानि "आपो हिष्ठा" इत्येवमादीनि त्रीणि मन्त्रवाक्यानि जपेत्—त्रिष्वेव बहुवचनस्य चरितार्थत्वात् । तथा गायत्रीं च सकृन्मनसा जपेत् ॥

ननु उदक्यासंस्पृष्टः स्नायादित्येकवचननिर्दिष्टस्य कथं तैरिति बहुवचने परामर्शः । सत्यमेवम् । किंत्वत्र उदक्यादिसंस्पृष्टव्यतिरिक्तस्नानार्हमात्रस्पर्शेऽप्याचम-नविधानार्थं तैरिति बहुवचननिर्देश इत्यविरोधः । ते च स्नानार्हाः स्मृत्यन्तरतोऽ-

१. ख. चित्कर्मविशेषेण इद० । २. ख. पुनः सर्वसंव्य० । ३. ख. ब्रह्मोद्धानत्वाकृता । ग. ब्रह्मोदानकृ० । ४.—५. ९९. । ५. ख. शुध्येदिति इत्याशौ चकाल । ग. शुध्यतीत्या० । ६. ख नन्तरं भावि० । ७.—ऋ० अ० ७ अ० ६. व० ५. । ८. ख. तरेवग ।

वगन्तव्याः; यथाऽऽह पराशरः—"दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि। चितियूपश्मशानास्थ्नां[1] स्पर्शने स्नानमाचरेत् ॥" इति। तथा च मनुः—"वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्। आचामेदेव भुक्त्वाऽन्नं स्नानं मैथुनिनः स्मृतम् ॥" इति[2]। मैथुनिनः स्नानमृतुकालविषयम्—"अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्।" इति बृहस्पतिस्मरणात्। अनृतावपि कालविशेषेण[3] स्मृत्यन्तरे स्नानमुक्तम्—"अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम्। कृत्वा सचैलं स्नात्वा[4] च वारुणीभिश्च[5] मार्जयेत् ॥" इति। तथा[6] च यमः—"अजीर्णेऽभ्युदिते वान्ते तथाऽभ्यस्त[7]मिते रवौ। दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥" इति। तथा बृहस्पतिः—"मैथुने कटधूमे च सद्यः स्नानं विधीयते।" इति। एतत् सचैलस्पर्शविषयं; सचैलेन[8] तु चित्यादिस्पर्शे सचैलमेव स्नानम्; यथाऽऽह च्यवनः—"श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजिनं सोमविक्रयिणं यूपं चितिं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृशं[9] रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचैलमम्भोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं[10] जपेत्, घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्" इति। एतच्च बुद्धिपूर्वविषयम्, अन्यत्र स्नानमात्रं—"शवस्पृशं[11] दिवाकीर्तिं चितिं यूपं रजस्वलाम्। स्पृष्ट्वा त्वकामतो विप्रः स्नानं कृत्वा विशुध्यति ॥" इति बृहस्पतिस्मरणात्। एवमन्यत्रापि वक्ष्यमाणेषु विषयसमीकरणमूहनीयम्। तथा[12] च कश्यपः—"उदयास्तमययोः स्कन्दित्वा[13] अक्षिस्पन्दने कर्णाक्रोशने चित्यारोहणे यूपसंस्पर्शने च सचैलं स्नात्वा "पुनर्माम" इति जपेत्, महाव्याहृतिभिः सप्ताज्याहुतीर्जुहुयात् ॥" इति। तथा स्मृत्यन्तरेऽपि—"[14]स्पृष्ट्वा

१. ख. श्मशानस्थां स्व०। २.—५. १४४.। ३. ख. कालविशेषेण स्मृत्य०। ४. क. सचैलः स्नात्वा वारु०। ५. ग. वारुणाभि०। ६. क. यथाहयमः 'अ०। ७. ख. तथाप्यस्त०। तथाह्यस्तमिते इत्यपार्के ग्रन्थे आनन्दाश्रम मुद्रितपुस्तके पाठः। ८. ख. सचैलेतु०। ९. ख. शवस्पृष्टं रज०। १०. ख. गायत्री मष्टवारं जपेत्। घृत०। ११. ख. शवस्पृष्टं दि०। १२. क. तथा कश्य०। ग. तथाहक०। १३ ख. स्कन्दयित्वा०। ख. स्नानं पुनर्मं०। ग. क. स्नात्वा 'पुनर्मन' इति०। १४ ख. स्मृत्यन्यरे स्पृष्ट्वा०। ग. तथा च स्मृत्यन्तरे स्पृष्ट्वा०।

देवलकं चैव सवासा जलमाविशेत् । देवार्चनपरो विप्रो वित्तार्थी[1]वत्सरत्रयम् ॥ असौ देवलको नाम हव्यकव्येषु गर्हितः ।" तथा ब्रह्माण्डपुराणे—"शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान्द्विजाञ्शूद्रान्स-वासा जलमाविशेत् ॥" इति। तथा—"अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसं-पर्कदूषिता ।" इति लिंगाच्च शूद्रस्पर्श[2]निषेधः ॥ तथाऽङ्गिराः—"यस्तु च्छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति । तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति ॥" इति । तथा व्याघ्रपादः—"चाण्डालं पतितं चैव दूरतः परिवर्जयेत् । गोवालव्यजनादर्वाक्सवासा जलमाविशेत् ॥" इति । एतदतिसंकटस्थल[3]विषयम् । अन्यत्र तु बृहस्पतिनोक्तं—"युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम् । चाण्डालसूतिकोदक्यापतितानामधः क्रमात् ॥" इति। तथा पैठीनसिः—"काकोलूकस्पर्शने सचैलं स्नानम्, अनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृतिहोमश्च"। "अनुदकमूत्रपुरीषप्रकरणे" इत्येतच्चि-रकालमूत्रपुरीषाशौचाकरणपरम् । तथाऽङ्गिराः—"भासवायसमार्जारखरोष्ट्रं च श्वसूकरान् । अमेध्यानि च संस्पृश्य सचैलो जलमाविशेत्॥" इति मार्जारस्पर्श-निमित्तं स्नानमुच्छिष्टसमयेऽनुष्ठानसमये च वेदितव्यं—समाचारात् । अन्यदा तु "मार्जारश्चैव[4] दर्वी च मारुतश्च सदा शुचिः।" इति स्नानाभावः। श्वस्पर्शे तु स्नानं नाभेरूर्ध्वं वेदितव्यम्, अधरतात्तु क्षालनमेव—"नाभेरूर्ध्वं करौ मुक्त्वा शुना यद्युपहन्यते । तत्र स्नानमधस्ताच्चेत्प्रक्षाल्याचम्य शुध्यति ॥" इति तेनैवोक्तत्वात् । तथा पक्षिस्पर्शे विशेषो जातूकर्ण्येनोक्तः—"ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गं संस्पृशेत्खगः । स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति ॥" इति । अमेध्यस्पर्शेऽपि विष्णुना विशेषो दर्शितः—"नाभेरधस्तात्प्रबाहुषु[5] च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याऽऽचान्तः शुध्येत्, अन्यत्रो-पहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नायात्, तैरिन्द्रियेषूपहतस्तूपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्च" इति[6] । एतच्च परकीयामेध्यस्पर्शविषयम्। आत्मीयमलस्पर्शे

---

१. ख. वित्तार्थे व० । २. ख. शूद्रस्यर्शनेनिषे० । ३. क. संकटस्थानवि० । ४. मार्जारच्चैव । ५. ग. रधस्ताद्बाहुषुच० । 'रधस्तात्प्रहुचकायि' इत्यानन्दाश्रममुद्रितपुस्तकेऽपारर्कग्रन्थे पाठः । ६.—२२. ७७, ७८, ७९, ८०.।

तु ऊर्ध्वमपि नाभेः क्षालनमेव; यथाऽऽह देवलः—"मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी। मज्जानं शोणितं वाऽपि परस्य यदि संस्पृशेत्॥ स्नात्वा प्रमृज्य लेपादीनाचम्य स शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात्॥" इति। तथा शङ्खः—"रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा तथा। नाभेरूर्ध्वं नरः स्पृष्टः सद्यस्स्नानेन शुध्यति॥" इति। यमेनाप्यत्र विशेष उक्तः—"सकर्दमं तु वर्षासु प्रविश्य ग्रामसङ्करम्। जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः॥" इति। ग्रामसङ्करं ग्रामसलिलप्रवाहप्रदेशं[1] सकर्दमं प्रविश्येत्यर्थः[2]। मारुतशोषिते तु कर्दमादौ न दोषः—"रथ्याकर्दमतोयानि रपृष्टान्यन्त्यश्ववायसैः। मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च॥" इति[3] प्रागुक्तत्वात्। अस्थनि तु[4] मनुना विशेष उक्तः—"नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुध्यति। आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम्॥" इति[5]। इदं द्वैजातास्थिविषयम्[6]। अन्यत्र वसिष्ठोक्तं—"मानुषास्थिस्निग्धे स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम्"। अमानुषे तु विष्णूक्तम्—"भक्ष्यवर्ज्यं पञ्चनखशवं[7] तदस्थि च सस्नेहं स्पृष्ट्वा स्नातः पूर्ववस्त्रं प्रक्षालितं बिभृयात्।" इति[8]॥ एवमन्येऽपि स्नानार्हाः स्मृत्यन्तरतो[9] बोद्धव्याः। एवं स्नानार्हाणां बहुत्वात्तदभिप्रायं तैरिति बहुवचनमविरुद्धम्। "उदक्याशुचिभिः स्नायात्॥" इत्येतच्च[10] दण्डाद्यचेतनव्यवधानस्पर्शे वेदितव्यम्। चेतनव्यवधाने तु मानवं—"दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनं[11] चैव स्पृष्ट्वा स्नानेन शुध्यति॥" इति[12], तृतीयस्य त्वाचमनमेव—"तत्स्पृष्टिनं स्पृशेद्यस्तु[13] स्नानं तस्य विधीयते। ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥" इति संवर्तस्मरणात्। एतच्चाबुद्धिपूर्वविषयं[14]; मतिपूर्वे तु तृतीयस्यापि स्नानमेव; यथाऽऽह गौतमः—"पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचैलमुदकोपस्पर्शनाच्छुध्येत्"

---

१. प्रवाह प्रवेशं सकर्द०। २. क. प्रविश्येति। मारुत०। ३.—आ० १९७.। ४. ख. अस्थिनिमनु०। ५.—५. ८७.। ६. क. इदं द्विजाता०। ७. क. पञ्चनखं शव०। ८.—२२. ७०.। ९. ख. तरतोऽवबोद्ध०। १०. ख. दित्येतच्चण्डालाद्यचे०। ११. क. शवं च स्पृष्टिन०। १२.—५. ८५.। १३. ख. तमेव तु स्पृशेद्य०। १४. ख. पूर्वकविष०।

इति । चतुर्थस्य त्वाचमनम्—" उपस्पृश्याशुचिस्पृष्टं तृतीयं वाऽपि मानवः। हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥" इति देवलस्मरणात् । अशुचीनां[2] पुनरुदक्यादिस्पर्शे देवलेन विशेष उक्तः—" श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् । सूतिकां साविकां नारीं रजसा च परिप्लुताम् ॥ श्वकुक्कुटवराहांश्च ग्राम्यान्संस्पृश्य मानवः । सचैलः सशिराः स्नात्वा तदानीमेव शुध्यति ॥ अशुद्धान्स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । विशुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः ॥" इति । साविका प्रसवस्य कारयित्री ; कृच्छ्रः श्वपाकादिविषयः । श्वादिषु तूपवास इति व्यवस्था ॥ ३ ।

अधुना कालशुद्धौ दृष्टान्तत्वेन द्रव्यशुद्धिप्रकरणोक्तांस्तथैतत्प्रकरणे वक्ष्यमाणांश्च शुद्धिहेतूननुक्रामति—

**कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् ।**
**पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥ ३१ ॥**

यथाऽग्न्यादयोऽमी सर्वे स्वविषये शुद्धिहेतवस्तथा कालोऽपि दशरात्रादिकः—शास्त्रगम्यत्वाच्छुद्धिहेतुत्वस्य । अग्निस्तावच्छुद्धिहेतुः; यथाऽभ्यधायि "पुनः पाकान्महीमयम्" इति । कर्म च शुद्धिनिमित्तं; यथा वक्ष्यति—" अश्वमेधावभृथस्नानात्" इति । तथा मृदपि शुद्धिकारणम् । यथा कथितं—" सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये" इति । वायुरपि शुद्धिहेतुः; यथोदीरितं—"मारुतेनैव शुध्यन्ति" इति । मनोऽपि" वाचः शुद्धिसाधनम् ; यथाम्नायि—"मनसा वा इषिता वाग्वदति" इत्यादि । ज्ञानं चाऽऽध्यात्मिकं बुद्धिशुद्धौ निदानम् ; यथाऽभिधास्यति—" क्षेत्रज्ञस्येश्वरज्ञानात्" इति । तपश्च कृच्छ्रादि ; यथा वदिष्यति—"प्राजापत्यं चरेत्कृच्छ्रं[11] समा[12] वा गुरुतल्पगः।" इत्यादि । तथा जलमपि शरीरादेः ; यथा जल्पिष्यति—" वर्ष्मणो जलम्"[13] इति । पश्चा-

---

१.—१४. ३०. । २. ख. अशुचिनापुन० । ३. हांश्चग्रामान्स० । ४.—आ० १८९ । ५. ख. थैवात्रप्रक० । ६.—आ० १८७. । ७.—प्रा०, २४४. । ८.—आ० १८९. । ९.—आ० । १९७. । १०.—प्रा० ३४. । ११. ख. त्कृच्छ्रं समोवागु० । क. कृच्छ्रं समागुरु० । १२.—प्रा० २६० । १३.—प्रा० ३३. ।

त्तापो पिशुद्धिजनकः ; यथा गदितं—"ख्यापनेनानुतापेन" इति । निराहारोऽपि शुद्ध्युपादानम् ; यथा व्याहरिष्यति—"त्रिरात्रोपोषितो जप्त्वा" इत्यादिः ॥ ३१ ॥

किं च—

अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासो वै द्विजन्मनाम् ॥३२॥

तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् ।
जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ ३३ ॥

भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ ३४ ॥

अकार्यकारिणां निषिद्धसेविनां दानमेव मुख्यं शुद्धिकारणम् । यथा[1] व्याख्यास्यति—"पात्रे धनं वा पर्याप्तं दत्त्वा" इति । नद्याः निदाघादौ अल्पतोयायाऽमेध्योपहततीरायाः[2] कूलङ्कषवर्षाम्बुप्रवाहवेगः[3] शुद्धिकृत् । शोधनीयद्रव्यस्य मृच्च तोयं च शुद्धिकृत् ; यथेह भणितम्,—"अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ।" इति[4] । संन्यासः प्रव्रज्या द्विजन्मनां मानसाऽपचारे[5] शुद्धिकृत् । तपो वेदाभ्यासो वेदविदां शुद्धिकारणम् । कृच्छ्रादि तु सर्वसाधारणं, न वेदविदामेव । क्षान्तिरुपशमो विदुषां वेदार्थविदाम् । वर्ष्मणः शरीरस्य जलम् । प्रच्छन्नपापानामविख्यातदोषाणामघमर्षणादिसूक्तजपः[6] शुद्धिसाधनम् । मनः सदसत्संकल्पात्मकं तस्यासत्संकल्पादशुद्धस्य[7] सत्यं साधुसंकल्पः शोधकम् । भूतशब्देन तद्विकारभूतो देहेन्द्रियसंघो[8] लक्ष्यते । तत्र स्थूलोऽहं कृशोऽहं काणोऽहं बधिरोहमित्येवं तदभिमानित्वेव योऽयमात्मा वर्तते—स भूतात्मा, तस्य तपोविद्ये शुद्धिनिमित्ते । तपःशब्देनानेकजन्मस्वेकस्मिन्नपि वा[9] जन्मनि जाग्रत्स्वप्नसुषुप्त्यवस्था-

१—प्रा०—। २. ख ग वल्पतोयता अ० । ३. ख. वाहः वगेः । ४. आ० १९१. । ५. ख. मानसोपचा० । ६. ख. जपः शुद्धिकारणं शुद्धिसा० । ७. ख. ङ्कल्पत्वदाशुद्ध० । ८. ख. द्रियसम्बन्धोल० । ९. क. कस्मिन्नपि जन्मनि० ।

वात्मनो योऽयमन्वयः शरीरादेश्च व्यतिरेकः सोऽभिधीयते;—यथा--"तपसा ब्रह्म विजिज्ञासस्व"[1] इति पञ्चकोशव्यतिरेकप्रतिपादनपरे वाक्ये विद्याशब्देन च "औपनिषदम्" "अस्थूलमनण्वह्रस्वम्"[2] "असङ्गो हि"[3] "अयमात्मा"[4] इत्यादित्वपदार्थनिरूपणविषयवाक्यजन्यं ज्ञानमुच्यते । एताभ्यामस्य शुद्धिः । शरीरादिव्यतिरेकबुद्धेः संशयविपर्ययरूपत्वेनाशुद्धायाः प्रमाणरूपं ज्ञानं विशोधनम् । क्षेत्रस्य तपोविद्याविशुद्धस्य त्वम्पदार्थभूतस्य "तत्त्वमसि"[5] इत्यादिवाक्यजन्यात्साक्षात्काररूपादीश्वरज्ञानात् परमात्मशुद्धिर्मुक्तिलक्षणा यथोक्ताः[6] शुद्धयः परमपुरुषार्थास्तदद्युक्ततराकालशुद्धिरपीत्येवं प्रशंसार्थं भूतात्मादिशुद्ध्यभिधानम्[7] ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ इत्याशौचप्रकरणम् ॥

——(:-o-:)——

---

१.—तै० उ० ३. २. १. । २ बृ० उ० ३. ८. ८. । ३. बृ०. उ० ३. ९. २६. । ४. बृ० उ० २. ५. १४. । ५. छा० उ०. ६. ८. ७. । ६. ख. यथा ताः शु० । ७. ख. भूतात्मादि । शुद्ध्यभि० ।

# अथाऽऽपद्धर्मप्रकरणम् २

" आपद्यपि च कष्टायां सद्यः शौचं विधीयते ।" इत्यापदि मुख्याशौचकल्पानुष्ठाना-
सभवेन सद्यः शौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसंगादापदि "प्रतिग्रहोऽधिको विप्रे
याजनाध्यापने तथा।" इत्याद्युक्तयाजनादिमुख्यवृत्त्यसंभवेन वृत्त्यन्तरमाह—

**क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः ।**
**निस्तीर्य तामथाऽऽत्मानं पावयित्वा न्यसेत्पथि ॥ ३५ ॥**

द्विजो विप्रो बहुकुटुम्बतया स्ववृत्त्या जीवितुमसमर्थः क्षत्रसंबन्धिना कर्मणा श-
स्त्रग्रहणादिनाऽऽपदि जीवेत् तेनापि जीवितुमशक्नुवन् वैश्यसंबन्धिना कर्मणा वाणिज्या-
दिना जीवेत्, न तु शूद्रवृत्त्या। तथा च मनुः "उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भ-
वेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥" इति। तथा आपद्यपि न हीनवर्णेन
ब्राह्मी वृत्तिराश्रयणीया, किं तु ब्राह्मणेन क्षात्री क्षत्रियेण वैश्यसंबन्धिनी वैश्येन च
शौद्रीत्येवं स्वानन्तरहीनवृत्तिरेव—" अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमा-
तिष्ठेरन्, न तु कदाचिज्ज्यायसीम्" इति वसिष्ठस्मरणात् । ज्यायसी च ब्राह्मी
वृत्तिः । तथा च स्मृत्यन्तरं—" उत्कृष्टं वापकृष्टं वा तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते॥" इति शूद्रस्य उत्कृष्टं ब्राह्मं कर्म न
विद्यते । तथा ब्राह्मणस्यापकृष्टं शौद्रं कर्म, मध्यमे क्षत्रवैश्यकर्मणी पुनरापद्गतसर्व-
वर्णसाधरणे शूद्रश्चापद्गतो वैश्यवृत्त्या "शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् । "
इति प्रागुक्तत्वात् । मनुना चात्र विशेषो दर्शितः—" यैः कर्मभिः प्रचरितैः
शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्माणि शिल्पानि विविधानि च ॥" इति
अनेनैव न्यायेनानुलोमोत्पन्नानामपि स्वानन्तरा वृत्तिरूहनीया । एवं स्वानन्तरहीन-
वर्णवृत्त्या आपदं निस्तीर्य प्रायश्चित्ताचरणेनाऽऽत्मानं पावयित्वा पथि न्यसेत् ।

१. म्रा० १९ । २. ख. कल्पानामनु० । ३. आ० ११८. । ४.—१०. ८२. ।
५. ख. धारणेहिते इति । ६. आ० १२९. । ७.—१०. ११०. ।

स्ववृत्तावात्मानं स्थापयेदित्यर्थः। यद्वाऽयमर्थः—"गर्हितवृत्त्यार्जितं धनं पथि न्यसेत्" उत्सृजेदिति । तथा च मनुः—" जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तं तु त्यागेन तपसैव तु ॥" इति ॥ ३५ ॥

वैश्यवृत्त्या जीवतो ब्राह्मणस्य यदपणनीयं तदाह—

फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनरसक्षारान्दधि क्षीरं घृतं जलम् ॥ ३६ ॥
शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः ।
मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः ॥ ३७ ॥
कौशेयनीललवणमांसैकशफसीसकान् ।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ ३८ ॥
वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन ।

नो विक्रीणीतेति प्रत्येकमभिसंबध्यते । फलानि कदलीफलादीनि–बदरेङ्गुद-व्यतिरिक्तानि ; यथाऽऽह नारदः—"स्वयं शीर्णानि पर्णानि फलायां बदरेङ्गुदे। रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत् ॥" इति। उपलं माणिक्याद्यश्ममात्रं, क्षौममतसी-सूत्रमयं वस्त्रं,—क्षौमग्रहणं तान्तवादेरुपलक्षणम् ; यथाऽऽह मनुः—"सर्वं च तान्तवं रक्तं शाणाक्षौमाविकानि च । अपि चेत्स्युररक्तानि फलमूले तथौषधीः॥" इति । सोमो लताविशेषः, मनुष्यपदेनाविशेषात् स्त्री पुन्नपुंसकानां ग्रहणम् । अपूपं मण्डकादिभक्ष्यमात्रं, वीरुधो वेत्रामृतादिलताः, तिला प्रसिद्धाः, ओदनग्रहणं भोज्यमात्रोपलक्षणं, रसा गुडेक्षुरसशर्करादयः । तथा च मनुः—"क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ।" इति क्षीरा यवक्षारादयः, दधिक्षीरयोर्ग्रहणं मस्तु-

१.—१०. १११. । २. क. यत्पणनीयं० । ३. क लाक्षाथबर्हि० । ४.—१८. ८७.। ५. क्षीरं क्षौमं दधि० । ६. क. मधुगुडौ कुशा० । ११.—१०. ८८. ।

पिण्डकिलाटकूर्चिकादीनां तद्विकाराणामुपलक्षणं—"क्षीरं सविकारम्" इति गौतमस्मरणात् । घृतग्रहणं तैलादिस्नेहमात्रोपलक्षणं, जलं प्रसिद्धं, शस्त्रं खड्गादि, आसवग्रहणं मद्यमात्रोपलक्षणम्, मधूच्छिष्टं सिक्थकं, मधु क्षौद्रं, लाक्षा जतु, बर्हिषः कुशाः, मृत् प्रसिद्धा, चर्माजिनं, पुष्पं प्रसिद्धम्, अजलोमकृतः कम्बलः कुतपः, केशाश्चमर्यादिसम्बद्धाः, तक्रमुदश्वित्, विषं शृङ्ग्यादि, क्षितिर्भूमिः—"नित्यं भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैके" इति सुमन्तुस्मरणात्। कौशेयं कोशप्रभवं वसनं, नीलं नीलीरसं, लवणग्रहणेनैव बिडसौवर्चलसैन्धवसामुद्ररौमककृत्रिमाण्यविशेषेण गृह्यन्ते, मांसं प्रसिद्धम्, एकशफा हयादयः, सीसग्रहणं लोहमात्रोपलक्षणं, शाकं सर्वमविशेषात्, ओषधयः फलपाकान्ताः—"आर्द्रौषधयः" इति विशेषोपादानात्—शुष्केषु न दोषः, पिण्याकः प्रसिद्धः, पशव आरण्याः—"आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ।" इति मनुस्मरणात्, गन्धाश्चन्दनागुरुप्रभृतयः, सर्वानेतान्वैश्यवृत्त्या जीवन् ब्राह्मणः कदाचिदपि न विक्रीणीत, क्षत्रियादेस्तु न दोषः । अत एव नारदेन—"वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि ।" इति ब्राह्मणग्रहणं कृतम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

प्रतिप्रसवमाह—

## धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ ३९ ॥

यद्यावश्यकाः पाकयज्ञादिधर्माः स्वसाधनव्रीह्यादिधान्याभावेन न निष्पद्यन्ते तर्हि धान्येन तिला विक्रयं नेयाः । तत्समाः द्रोणपरिमितेनेत्येवं तेन धान्येन समाः । तथा च मनुः—"काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलान् शुद्धान्धर्मार्थमचिरस्थितान् ॥" इति धर्मग्रहणमावश्यकभेषजाद्युपलक्षणम् । अत एव नारदः—"अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च । यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः ॥" इति यद्यन्यथा विक्रीणीते तर्हि दोषः—"भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः । कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति ॥" इति मनुस्मरणात् । सजातीयैः पुन-

१.—७. ११. । २. क. सित्तकां मधु० । ३. केशाच्चमर्या० । ४. ख. सामुद्रसौमकक्कृ० । ५. क आरण्याः पशवः आरण्यांश्च० । ६.—१०, ८९. । ७. क. तथा मनुः । ८.—१०. ९०. । ९. क. णीते तदा दो० । १०.—१०. ९१.।

विनिमयो भवत्येव। मनुः[1]—"रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः॥"[2] इति। कृतान्नं सिद्धान्नं, तच्च कृतान्नेन परिवर्तनीयमिति यावत्। "कृतान्नं चाकृतान्नेन"[3] इति पाठे सिद्धमन्नमकृतान्नेन तण्डुलादिना परिवर्तनीयमिति यावत्॥ ३९॥

पूर्वोक्तनिषेधातिक्रमे दोषमाह—

**लाक्षालवणमांसानि पतनीयानि विक्रये।**
**पयो दधि च मद्यं च हीनवर्णकराणि तु॥ ४०॥**

लाक्षालवणमांसानि विक्रीयमाणानि सद्यः पतनीयानि द्विजातिकर्महानिकराणि। पयःप्रभृतीनि तु हीनवर्णकराणि शूद्रतुल्यत्वापादकानि। एतद्व्यतिरिक्तापण्यविक्रये वैश्यतुल्यता; यथाऽऽह मनुः—"सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥ इतरेषामपण्यानां विक्रयादिह कामतः। ब्राह्मणः सप्तरात्रेण वैश्यभावं निगच्छति"[4]॥ ४०॥

किं च—

**आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः।**
**न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः॥ ४१॥**

यस्त्वधनः अवसन्नकुटुम्बतया आपद्गतोऽपि क्षत्रवृत्तिं वैश्यवृत्तिं वा न प्रविविक्षति स यतस्ततो[5] हीनतरहीनतमेभ्यः प्रतिगृह्णंस्तदन्नं भुञ्जानोऽपि वा नैवैनसा पापेन लिप्यते; यतस्तस्यामापदवस्थायामसत्प्रतिग्रहादावधिकारित्वेन ज्वलनार्कसमः—यथा ज्वलनोऽर्कश्च[6] हीनसङ्करेऽपि न दुष्यति तथाऽयमापद्गतोऽपि न दुष्यतीत्येतावता तत्साम्यम्। एवं च वदता आपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवति। तथा च मनुः—"वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्माश्रयाद्विप्रः सद्यः पतति जातितः॥"[7] इति॥ ४१॥

---

१. क. ग. मनुरितिपदं नास्ति। २.—१०. ९४.। ३. क. कृतान्नं वा कृता०। ४.—१०. ९२। ९३.। ५. ख. स्ततो हीनतरस्ततो हीनतर०। ६. ख. नोऽर्कश्च सस्कारेऽपि न दु। ७.—१०. ९७.।

किं च—

**कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।**

**सेवा[1]नूपं नृपो भैक्ष्य[2]मापत्तौ जीवनानि तु ॥ ४२ ॥**

आपत्तौ जीवनानीति विशेषणात् कृष्यादीनां मध्ये अनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते ; यथाऽऽपदि वैश्यवृत्तिः स्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते ; एवं शिल्पादी[3]न्यभ्यनुज्ञायन्ते । शिल्पं सूपकरणादि, भृतिः प्रेष्यत्वं, विद्या भृतकाध्यापकत्वाद्या, कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः, तत्स्वयंकृतमभ्यनुज्ञायते । शकटं भाटकेन धान्यादिवहनद्वारेण जीवनहेतुः, गिरिस्तद्गततृणेन्धनद्वारेण जीवनं, सेवा परचित्तानुवर्तनम्, अनूपं प्रचुरतृणवृक्षजलप्रायः प्रदेशः, [4]तथा नृपयाचनं भैक्ष्यं, स्नातकस्यापि एतान्यापत्तौ जीवनानि । तथा च मनुः "विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः । गिरिर्भैक्ष्यं कुसीदं च दश जीवनहेत[5]वः ॥" ॥ ४२ ॥

यदा कृष्यादीनामपि जीवनहेतूनामसंभवस्तदा कथं जीवनमित्यत आह—

**बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।**

**प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥ ४३ ॥**

धान्याभावेन त्रिरात्रं बुभुक्षितोऽनश्नन् स्थित्वा अब्राह्मणाच्छूद्रात्तदभावे वैश्यात् तदभावे वैश्यात् तदभावे क्षत्रियाद्वा हीनकर्मण एकाहपर्याप्तं [6]धान्यं हरेत् ; यथाऽऽह मनुः—"तथैव सप्तमे [7]भुंक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥" [8]इति । प्रतिग्रहोत्तरकालं च यदपहृतं तद्धर्मतो यथावृत्तमाख्येयं—यदि [9]नैष्ठिकेन स्वामिना त्वयेदं किं [10]ममाऽपहृतमित्यभियुज्यते ; यथाऽऽह मनुः—"खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते । आख्यातव्यन्तु तत्तस्मै पृच्छते यदि पृच्छति ॥" [11]इति ॥ ४३

---

१. क. सेवारूपं नृपा० । २. क. भैक्षमापत्तौ० । ३. ख. दन्यिस्याभ्यनु० । ४. ग. नृपो नृपयाचन० । ५.—१०. ११६. । ६. ख. धान्यमाहरेत् । ७, ख. भुक्ते भक्तानिषड० । ८.—११. १६. । ९. क. यदि नास्तिकेन स्वामि० । १०. ग. येदं किं नामापह० । ११.—११. १७. ।

इदमपरमापत्प्रसङ्गाद्राज्ञो विधीयते[1]—

तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः।
ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत्॥ ४४॥

योऽशनायोपरितोऽवसीदति[2] तस्य वृत्तमाचारं, कुलमाभिजात्यं, शीलमात्मगुणं, श्रुतं शास्त्रश्रवणम्[3], अध्ययनं वेदाध्ययनं, तपः कृच्छ्रादि च, परीक्ष्य राजा धर्मादनपेतां वृत्तिं प्रकल्पयेत्। अन्यथा तस्य दोषः। तथा[4] च मनुः—"यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा। तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधिपीडितम्[5]॥" इति[6]॥ ४४॥

॥ इत्यापद्धर्मप्रकरणम्॥

——(:-०-:)——

१. क. मपरं प्रसङ्गा०। २. ख. शनयापरीतो०। क. योनशनामापरीत्यादिः प्रकल्पयेदित्यन्तो ग्रन्थो नास्ति। ३. ग. श्रवणं वेदाध्ययनं च परीक्ष्य०। ४. ग. यथा च मनु०। ५. ग. व्याधिपीडनमि०। ६.—७. १३४.।

# अथ वानप्रस्थधर्मप्रकरणम् ३.

चतुर्णामाश्रमिणां मध्ये ब्रह्मचारिगृहस्थयोर्धर्माः प्रतिपादिताः, साम्प्रतमवसर-[1]प्राप्तान्वानप्रस्थधर्मान्प्रतिपिपादयिषुराह—

**सुतविन्यस्तपत्नीकस्[2]तया वाऽनुगतो वनम् ।**
**वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥ ४५ ॥**

वने प्रकर्षेण नियमेन[3] तिष्ठति चरतीति वनप्रस्थः। वनप्रस्थ एव वानप्रस्थः, संज्ञायां दैर्घ्यम्; भाविनीं वृत्तिमाश्रित्य वनं प्रतिष्ठासुरिति यावत्। असौ सुतविन्यस्तपत्नीकः 'त्वयेयं भरणीया' इत्येवं सुते विन्यस्ता निःक्षिता पत्नी येन स तथोक्तः। यदि सा पतिपरिचर्याभिलाषेण स्वयमपि वनं जिगमिषति तदा तयाऽनुगतो वा सहितः। तथा ब्रह्मचारी उर्ध्वरेताः साग्निर्वैतानाग्निसहितः तथा सोपासनो गृह्याग्निसहितश्च वनं व्रजेत्। सुतविन्यस्तपत्नीक इति वदता कृतगार्हस्थ्यो वानप्रस्थे[4]ऽधिक्रियत इति दर्शितम्। एतच्चाश्रमसमुच्चयपक्षमङ्गीकृत्योक्तम्। इतरथा "अविप्लुतब्रह्मचर्यो यमिच्छेत्तमावसेद्"[5] इत्यकृतगार्हस्थ्योऽपि वनवासेऽधिक्रियत एव। अयं च वनप्रवेशो जराजर्जरकलेबरस्य, जातपौत्रस्य वा; यथाऽऽह मनुः—"गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव वाऽपत्यं तदाऽरण्यं समाश्रयेत्॥" इति[6]। अयं च पुत्रेषु पत्नीनिःक्षेपो विद्यमानभार्यस्य—मृतभार्यस्याप्यापस्तम्बादिभिः वनवासस्मरणात्। अतो यत् "दाहयित्वाऽग्निहोत्रेण" इति पुनराधानविधानं—तदपरिपक्वकषायविषयम्। साग्निः सोपासन इत्यत्रापि यदाऽर्धाधानं कृतं तदा श्रौताग्निभिर्गृह्येण[7] च सहितो वनं व्रजेत्। सर्वाधाने तु श्रौतैरेव केवलम्। यदि कथञ्चिज्ज्येष्ठभ्रातुरनाहिताग्नित्वादिना श्रौताग्नयोऽनाहितास्तर्हि केवलं सोपासनो व्रजेदित्येवं विवेचनीयम्। अग्निनयनं च तन्निवर्त्याग्निहोत्रादिकर्मसिद्ध्यर्थम्।

---

१. क. सम्प्रत्यवसर०। २. कस्तयावाऽनु०। ३. ख. नियमेन च तिष्ठ०। ४. ख. वानप्रस्थो वनवासेऽधिकि०। ५.—६. २.। ६. आ० ८०.। ७. श्रौताग्निर्गृह्येणच।

अत एव मनुः—"वैतानिकं च जुहुयादग्निहोत्रं यथाविधि । दार्शमस्कन्दयन्पर्व पौर्णमासं च शक्तितः ॥" इति ॥ ननु च पुत्रनिःक्षिप्तपत्नीकस्य तद्विरहिणः कथमग्निहोत्रादिकर्मानुष्ठानं घटते—"पत्न्या सह यष्टव्यम्" इति सहाधिकारानियमात् । सत्यमेवम् । किं त्वत्र पत्नीनिःक्षेपविधिबलादेव तन्नैरपेक्ष्येणाधिकारः कल्प्यते ; यथा हि रजस्वलायां—"यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत" इत्यवरोधविधिबलात्तन्निरपेक्षता । यद्वा "वनं प्रतिष्ठमानमेव पतिं पत्न्यनुमन्यते" इति न विरोधः । न च यथा ब्रह्मचारिणो, विधुरस्य वा वनं प्रस्थितस्याग्निहोत्रादिपरिलोपः तथा निःक्षिप्तपत्नीकस्याप्यग्निहोत्राद्यभाव इति शङ्कनीयम्— अपाक्षिकत्वेन श्रवणात् । न च ब्रह्मचारिविधुरयोरप्यग्निसाध्यकर्मसु अनधिकारः—*पञ्चममासादूर्ध्वमाहितश्रावणिकाग्नेस्तदधिकारदर्शनात् । वानप्रस्थो जटिलश्चीराजिनवासा न फालकृष्टमधितिष्ठेत्, अकृष्टं मूलफलं संचिन्वीत, ऊर्ध्वरेताः क्षमाशयो, दद्यादेव, न प्रतिगृह्णीयादूर्ध्वं पञ्चभ्यो मासेभ्यः श्रावणिकेनाग्निमाधायाऽऽहिताग्निर्वृक्षमूलको दद्यादेवपितृमनुष्येभ्यः स गच्छेत्स्वर्गमानन्त्यम्" इति वासिष्ठस्मरणात् । चीरं वस्त्रखण्डो वल्कलं वा । न फालकृष्टमधितिष्ठेत्कृष्टक्षेत्रस्योपरि न निवसेत् । श्रावणिकेन वैदिकेन मार्गेण न लौकिकेनेत्यर्थः ॥ ४५ ॥

"साग्निः सोपासनो व्रजेत्" इत्येतदग्निसाध्यश्रौतस्मार्तकर्मानुष्ठानार्थमित्युक्तं, तत्र गुणविधिमाह—

**अफालकृष्टेनाग्नींश्च पितॄन्देवातिथीनपि ।**
**भृत्यांश्च तर्पयेत् श्मश्रुजटालोमभृदात्मवान् ॥ ४६ ॥**

फालग्रहणं कर्षणसाधनोपलक्षणम्, अकृष्टक्षेत्रोद्भवेन नीवारवेणुश्यामाकादिना अग्नींस्तर्पयेत् अग्निसाध्यानि कर्माण्यनुतिष्ठेत्—चशब्दाद्भिक्षादानमपि तेनैव कुर्यात् । तथा पितॄन् देवातिथीन्; अपि शब्दाद्भूतान्यपि तेनैव तर्पयेत् ; तथा भृत्यान्—चशब्दादाश्रमप्राप्तानपि । तथा च मनुः—"यद्भक्ष्यः

* "श्रावणके वैखानसशास्त्रम्" अप ।

१.—६. ९. । २. ग. यस्यव्रात्यह० । ३. ग. पत्न्यनालम्भिकास्यातामपरुध्य० । ४. ख. मवरुध्ययजे० । ५. ग. त्यपरोधविधि० । ६. क. स्याग्निहोत्रा० । ७. क. श्रावणकाग्नि०, श्रावणिकेनाग्नि० ; श्रावणकेनवैदिक० । ८. क. वृक्षमूलिकोद० । ९. वासिष्ठे नवमोऽध्यायः । १०. क. श्रावणकाग्ने०, श्रावणकेनाग्नि० ; श्रावणकेनवैदिक० । ११. ख. यद्भक्ष्यस्था० । ग. यद्भक्ष्यः स्या० ।

स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥" इति ॥ एवं पञ्चमहायज्ञान्कृत्वा स्वयमपि तच्छेषमेव भुञ्जीत—" देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः । शेषमात्मनि युञ्जीत लवणं च स्वयंकृतम् ॥" इति मनुस्मरणात् । स्वयंकृतमूषरलवणम् । एवं भोजनार्थे यागाद्यर्थे च मुन्यन्ननियमाद् ग्राम्याहारपरित्यागोऽर्थसिद्धः । अत एव मनुः—" संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ।" इति ॥ ननु च दर्शपूर्णमासादेर्व्रीह्यादिग्राम्यद्रव्यसाध्यत्वात्कथं तत्परित्यागः? न च वचनीयम् " अफालकृष्टेनाग्नींश्च " इति विशेषवचनसामर्थ्याद्व्रीह्यादिबाध इति—विशेषविषयिण्यापि स्मृत्या श्रुतिबाधस्यान्याय्यत्वात् , अफालकृष्टविधेश्च स्मार्ताग्निसाध्यकर्मविषयत्वेनाप्युपपत्तेः । सत्यमेवम् । किं त्वत्र व्रीह्यादेरप्यफालकृष्टत्वसंभवान्न विरोधः । अत एवोक्तं मनुना—" वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथग् ॥ " इति ॥ नीवारादीनामुत्पन्नानां स्वतो मेध्यत्वे सिद्धेऽपि पुनर्मेध्यग्रहणं यज्ञार्हव्रीह्यादिप्राप्त्यर्थं कृतं—मेधो यज्ञस्तदर्हं मेध्यमिति । तथा श्मश्रूणि मुखजानि रोमाणि, जटारूपांश्च शिरोरुहान्कक्षादीनि च रोमाणि बिभृयात् । रोमग्रहणं नखानामप्युपलक्षणम् । तथा च मनुः—"जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखांस्तथा ।" इति । तथाऽऽत्मवानात्मोपासनाभिरतः स्यात् ॥ ४६ ॥

पूर्वोक्तद्रव्यसंचयनियममाह —

**अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।**
**अर्थस्य संचयं कुर्यात्कृतमाश्वयुजे त्यजेत् ॥ ४७ ॥**

एकस्याह्नः संबन्धिभोजनयजनादिदृष्टादृष्टकर्मणः पर्याप्तस्यार्थस्य संचयं कुर्यात् मासस्य वा, षण्णां मासानां वा, संवत्सरस्य वा, संबन्धिकर्मपर्याप्तं संचयं कुर्यात्, नाधिकम् । यद्येवंक्रियमाणमपि कथंचिदतिरिच्यते तर्हि तदतिरिक्तश्चमाश्वयुजे मासि त्यजेत् ॥ ४७ ॥

---

१.—६. ७ । २. ग. मात्मनिभुञ्जीत० । ३ —६ १२. । ४. ख. लवणमेवाभोज० । ५.—६. ३. । ६.—वासि० ९. ३. । ७.—६. ११ । ८. ख. रादीनां मुन्यन्नानांस्वयमुत्पन्ना० । ९. —६. ६. ।

किं च—

**दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।**
**स्वाध्यायवान्दानशीलः सर्वसत्वहिते रतः ॥ ४८ ॥**

दान्तो दर्परहितः, त्रिषु सवनेषु प्रातर्मध्यन्दिनापराह्णेषु स्नानशीलः, तथा प्रतिग्रहे पराङ्मुखः,–च शब्दाद्याजनादिनिवृत्तश्च,–स्वाध्यायवान् वेदाभ्यासरतः, तथा फलमूलभिक्षादिदानशीलः, सर्वप्राणिहिताचरणनिरतश्च भवेत् ॥ ४८ ॥

कि च—

**दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः ।**
**श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः ॥ ४९ ॥**

दन्ता एवोलूखलं निस्तुषीकरणसाधनं दन्तोलूखलं तद्यस्यास्ति स दन्तोलूखलिकः; कालेनैव पक्वं कालपक्वं नीवारवेणुश्यामाकादि बदरेङ्गुदादिफलं च तदशनशीलः कालपक्वाशी; वाशब्दो "अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा।" इति मनूक्ताग्निपक्वाशित्वाभिप्रायः । अश्मकुट्टको वा भवेत् अश्मना कुट्टनमवहननं यस्य स तथोक्तः । तथा श्रौतं स्मार्तं च कर्म दृष्टार्थाश्च भोजनाभ्यञ्जनादिक्रियाः लकुचमधूकादिमेध्यतरुफलोद्भवैः स्नेहद्रव्यैः कुर्यान्न तु घृतादिकैः। तथा च मनुः— "मेध्यवृक्षोद्भवानद्यात्स्नेहांश्च फलसंभवान् ।" इति ॥ ४९ ॥

पुरुषार्थतया विहितभोजननिवृत्त्यर्थमाह—

**चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा ।**
**पक्षे गते वाऽप्यश्नीयान्मासे वाऽहनि वा गते ॥ ५० ॥**

चन्द्रायणैर्वक्ष्यमाणलक्षणैः कालं नयेत् कृच्छ्रैर्वा प्रजापत्यादिभिः कालं वर्तयेत्। यद्वा पक्षे पञ्चदशादिनात्मकेऽतीते अश्नीयात्। मासे वाऽहनि गते वा नक्तमश्नीयात् । अपिशब्दाच्चतुर्थकालिकत्वादिनाऽपि; यथाऽऽह मनुः—"नक्तं वाऽन्नं समश्नीयाद्दिवा वाऽऽहृत्य शक्तितः । चतुर्थकालिको वा स्याद्यद्वाऽप्यष्टमकालिकः ॥" इति । एतेषां च कालनियमानां स्वशक्त्यपेक्षया विकल्पः ॥ ५० ॥

---

१. क. प्रतिग्रहपराङ्मु० । २,—६. १७. । ३.—६. १३. । ४.—६. १९. ।

किं च—

**स्वप्याद्भूमौ शुची रात्रौ दिवा संप्रपदैर्नयेत् ।**
**स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥ ५१ ॥**

आहारविहारावसरवर्जं रात्रौ शुचिः प्रयतः स्वप्यात्, नोपविशेन्नापि तिष्ठेत्—दिवास्वप्नस्य पुरुषमात्रार्थतया प्रतिषिद्धत्वान्न तन्निवृत्तिपरम् । तथा भूमावेव स्वप्यात्, तच्च भूमावेव न शय्यान्तरितायां, मञ्चकादौ वा । दिनं तु संप्रपदैरटनैर्नयेत्, स्थानासनरूपैर्वा विहारैः संचारैः कञ्चित्कालं स्थानं कञ्चिचोपवेशनमित्येवं वा दिनं नयेत्, योगाभ्यासेन वा । तथा च मनुः—"विविधाश्चौपनिषदीरात्म संसिद्धये श्रुतीः।" इति । आत्मनः संसिद्धये ब्रह्मत्वप्राप्तये । तथाशब्दात्क्षितिपरिलोडनाद्वा नयेत—"भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।" इति मनुस्मरणात् । प्रपदैः पादाग्रैः ॥ ५१ ॥

किं च—

**ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिले शयः ।**
**आर्द्रवासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत् ॥ ५२ ॥**

त्र्यृतुः संवत्सरः—ग्रीष्मो वर्षा हेमन्त इति दर्शनात् । ग्रीष्मे चैत्रादिमासचतुष्टये चतसृषु दिक्षु चत्वार उपरिष्टादादित्य इत्येवं पञ्चानामग्नीनां मध्ये तिष्ठेत् । तथा वर्षासु श्रावणादिमासचतुष्टये स्थण्डिलेशयः; वर्षधारादिनिवारणविरहिणि भूतले निवसेत् । हेमन्ते मार्गशीर्षादिमासचतुष्टये क्लिन्नं वासो वसीत । एवंविधतपश्चरणे असमर्थः स्वशक्त्यनुरूपं वा तपश्चरेत् । यथा शरीरशोषस्तथा यतेत— "तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः ।" इति मनुस्मरणात ॥ ५२ ॥

किं च—

**यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।**
**अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥**

---

१. ख. श्चौपनिषदोरात्म० । २.—६. १९. । ३. क. परिलोटनाद्वा० । ४.—६. २२. । ५. त्रिऋतुः संव० । ६. क. धारामिनिवार० । ७.—६. १४. ।

यः कश्चित्कण्टकादिभिर्विविधमङ्गानि तुदति व्यथयति तस्मै न क्रुध्येत्, यश्चन्दनादिभिरुपलिम्पति सुखयति तस्य[1] न परितुष्येत् तयोरुभयोरपि समः स्यादुदासीनो भवेत् ॥ ५३ ॥

अग्निपरिचर्याक्षमं प्रत्याह—

**अग्नीन्वाऽऽप्यात्मसात्कृत्वा वृक्षावासो[2] मिताशनः ।**
**वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत्[3] ॥ ५४ ॥**

अग्नीनात्मनि समारोप्य वृक्षावासो वृक्ष एव आवासः कुटी यस्य स तथोक्तः मिताशनः स्वल्पाहारः,—अपिशब्दात्फलमूलाशनश्च भवेत्; यथाऽऽह मनुः —"अग्नीन्स्वात्मनि वैतानान्समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥" इति । मुनिर्मौनव्रतयुक्तः[6], फलमूलासंभवे च यावत्प्राणधारणं भवति तावन्मात्रं भैक्ष्यं[7] वानप्रस्थगृहेष्वाचरेत् ॥ ५४ ॥

यदा तु तदसंभवो व्याध्यभिभवो वा तदा किं कार्यमित्यत आह—

**ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।**

ग्रामाद्वा भैक्ष्यमाहृत्य वाग्यतो मौनी भूत्वा अष्टौ ग्रासान्भुञ्जीत । ग्राम्यभैक्ष्यविधानान्मुन्यन्ननियमोऽप्यर्थलुप्तः । यदा पुनरष्टभिर्ग्रासैः प्राणधारणं न संभवति तदा "अष्टौ ग्रासा मुनेर्भैक्ष्यं वानप्रस्थस्य षोडश ।" इति स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ ५४ ॥

सकलानुष्ठानासमर्थं प्रत्याह—

**वायुभक्षः प्रागुदीचीं गच्छेद्वाऽऽवर्ष्मसंक्षयात् ॥ ५५ ॥**

अथवा वायुरेव भक्षो यस्यासौ वायुभक्षः प्रागुदीचीमैशानीं दिशं गच्छेत् आवर्ष्मसंक्षयात्,–वर्ष्म वपुस्तस्य निपातपर्यन्तमकुटिलगतिर्गच्छेत्; यथाऽऽह मनुः —"अपराजितां वास्थाय गच्छेद्दिशमजिह्मगः ॥" इति । महाप्रस्थानेऽप्यशक्तो भृगुपतनादिकं वा कुर्यात्—"वानप्रस्थो वीराध्वानं, ज्वलनाम्बुप्रवेशनं, भृगुपतनं,

---

१. क. यतितरमैतुनपारि॰ । ख. तस्यतुनपारि॰ । २. वासोऽमिता॰। ३. ख. भैक्षमाचरेत्। ४. ख. अग्नीनात्मनि॰ । ५.—६. २५. । ६. ग मुनिर्मौनीव्रत॰ । ७. ख. न्मात्रैभक्षं वा॰ । नियमोर्थलुप्तः । ९.—६. ३१ ।

वाऽनुतिष्ठत्" इति स्मरणात्। स्नानाचमनादिधर्मा ब्रह्मचारिप्रकरणाद्यभिहिताश्चाविरोधिनोऽस्यापि भवन्ति—"उत्तरेषां चैतदविरोधे" इति गौतमस्मरणात्। एवं प्रागुदितैन्दवादिदीक्षामहाप्रस्थानपर्यन्तं तनुत्यागान्तमनुतिष्ठन्ब्रह्मलोके पूज्यतां प्राप्नोति; यथाऽऽह मनुः—"आसां महर्षिचर्याणाम् त्यक्त्वान्यतमया तनुम्। वीतशोकभयो विप्रो ब्रह्मलोके महीयते॥" [1]इति। ब्रह्मलोकः स्थानविशेषो न तु नित्यं ब्रह्म—तत्र लोकशब्दस्याप्रयोगात्[2], तुरीयाश्रममन्तरेण मुक्त्यनङ्गीकाराच्च। न च "योगाभ्यासेन[3] वा पुनः" [4]इति ब्रह्मोपासनविध्यनुपपत्त्या तद्भावापत्तिः परिशङ्कनीया—सालोक्यादिप्राप्त्यर्थत्वेनापि तदुपपत्तेः। अत एव श्रुतौ "त्रयो धर्मस्कन्धाः" इत्युपक्रम्य "यज्ञोऽध्ययनं दानमिति प्रथमः, तप एवेति द्वितीयः ब्रह्मचार्याचार्यकुलवासी तृतीयः अत्यन्तमाचार्यकुलं एवमात्मानमवसादयन्" इति गार्हस्थ्यवानप्रस्थ्यनैष्ठिकत्वस्वरूपमभिधाय "सर्वे एते पुण्यलोका भवन्ति" इति त्रयाणामाश्रमिणां पुण्यलोकप्राप्तिमभिधाय "ब्रह्मसंस्थोऽमृतत्वमेति" इति पारिशेष्यात् परिव्राजकस्यैव ब्रह्मसंस्थस्य मुक्तिलक्षणामृतत्वप्राप्तिरभिहिता। यदपि "श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते।" इति गृहस्थस्यापि मोक्षप्रतिपादनं तद्भवान्तरानुभूतपारिव्रज्यस्येत्यवगन्तव्यम्॥ ५५॥

॥ इति वानप्रस्थ[5]धर्मप्रकरणम्॥



१.—६. ३२.। २. ख. योगात्। तच्चतुरीया०। ३. योगाभ्यासेनवातथेत्यवयाज्ञवल्क्यपाठः। पुनरिति पाठः। ४. प्रा० ५३.। ५. क. प्रस्थप्रक०।

# अथ यतिधर्मप्रकरणम् ४.

——:-o-:——

वैखानसकर्माननुक्रम्य क्रमप्राप्तान्परिव्राजकधर्मान्साम्प्रतं प्रस्तौति—

वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि ॥ ५६ ॥
अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ ५७ ॥

यावता कालेन तीव्रतपःशोषितवपुषो विषयकषायपरिपाको भवति, पुनश्च मदोद्भवाशङ्का नोद्भाव्यते, तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्यात् । वनगृहशब्दाभ्यां तत्संबन्ध्याश्रमो लक्ष्यते, मोक्षशब्देन न मोक्षैकफलकश्चतुर्थाश्रमः । [1]अथवा गृहाद्गार्हस्थ्यादनन्तरं मोक्षे मनः कुर्यात् । अनेन च पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षः पाक्षिक इति द्योतयति । तथा च विकल्पो जाबालश्रुतौ[2] श्रूयते—"ब्रह्मचर्यं परिसमाप्य गृहीभवेत्, गृहीभूत्वा वनी भवेत्" वनी भूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्, गृहाद्वा वनाद्वा" इति । तथा [3]गार्हस्थ्येतराश्रमबाधश्च गौतमेन दर्शितः — "एकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य" [4]इति एषां च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः । अतो यत्कैश्चित्पण्डितम्मन्यैरुक्तं "स्मार्तत्वान्नैष्ठिकत्वादीनां गार्हस्थ्येन श्रौतेन बाधः गार्हस्थ्यानधिकृतान्धक्लीबादिविषयता वा" इति तत्स्वाध्यायाध्ययनवैधुर्यनिबन्धनमित्युपेक्षणीयम् । किं च यथा विष्णुक्रमणाज्यावेक्षणाद्यक्षमतया पङ्ग्वादीनां श्रौतेष्वनधिकारः तथा स्मार्तेष्वप्युदकुम्भाहरणभिक्षाचर्यादिष्[5]वक्षमत्वात्कथं पङ्ग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः । अस्मिंश्चाश्रमे ब्राह्मणस्यैवाधिकारः । मनुः—" आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्[6] ।"

१. क. अथवा गार्हस्थ्या० । २. जाबालोप० ४. । ३. ख. गार्हस्थ्योत्तराश्र० । ४.—३. ३६. । ५. क. चर्याक्षमत्वा० । ६.—६. २५. ।

तथा—"एषवोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ।" ईत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधिकारप्रतिपादनात् । "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकारमाहुः । यदा च वनाद्गृहाद्वा प्रव्रजति तदा सार्ववेदसदक्षिणां—सार्ववेदसी सर्वधनसंबन्धिनी दक्षिणा यस्याः सा तथोक्ता तां—प्रजापतिदेवताकामिष्टिं कृत्वा तदन्ते तान्वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन समारोप्य—चशब्दात् "उदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्वपेत् द्वादश वा" इति बौधायनाद्युक्तं पुरश्चरणादिकं च कृत्वा---तथाऽधीतवेदो जपपरायणो जातपुत्रो दीनान्धकृपणार्थिभ्यो यथाशक्त्यन्नदश्च भूत्वाऽनाहिताग्निज्येष्ठत्वादिना प्रतिबन्धाभावे कृताधानो नित्यनैमित्तिकान् यज्ञान्कृत्वा मोक्षे मनः कुर्यात्, चतुर्थाश्रमं प्रविशेन्नान्यथा । अनेनापाकृतर्णत्रयस्य प्रव्रज्यायामनधिकारं दर्शयति ; यथाऽऽह मनुः— "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥" इति ॥ यदा तु ब्रह्मचर्यात्प्रव्रजति तदा न प्रजोत्पादनादिनियमः—अकृतदारपरिग्रहस्य तत्रानाधिकारात् रागप्रयुक्तत्वाच्च विवाहस्य । न च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयम्—विद्याधनार्जननियमवदन्यप्रयुक्तदारसंभवे तस्यानाक्षेपकत्वात् ॥ ननु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति । मैवम्; न हि जातमात्राऽकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेदिति तस्यार्थः । अतश्चोपनीतस्य वेदाध्ययनमेवावश्यकं कृतदाराग्निपरिग्रहस्य प्रजोत्पादनमपीति निरवद्यम् ॥ ५६ ॥ ५७ ॥

एवमधिकारिणं निरूप्य तद्धर्मानाह—

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**
**एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ५८ ॥**

---

१.—६. ९७. । २. क. दनात् । गृहाद्वा प्रव्रजति० । ३. क. सर्ववेदसम्ब० । ४. ख. कृपणार्पितार्थो यथाश० । ग. कृपणार्थिसार्थो यथाश०। ५.—६. ३५.। ६. क. तस्याः नाक्षेप०। ७. ख. ऋणवाजायते० ।

सर्वभूतेभ्यः प्रियाप्रियकारिभ्यो हित उदासीनो न पुनर्हिताचरणः "हिंसानुग्रहयोरनारम्भी"[1] इति गौतमस्मरणात्, शान्तो बाह्यन्तःकरणोपरतः, त्रयो दण्डा अस्य सन्तीति त्रिदण्डी। ते च दण्डा वैणवा ग्राह्याः—प्रजापत्येष्ट्यनन्तरं त्रीन्वैणवान्दण्डान्मूर्धप्रमाणान्दाक्षिणेन पाणिना धारयेत्सव्येन सोदकं कमण्डलुम्" इति स्मृत्यन्तरदर्शनात्। एकं वा दण्डं धारयेत्—"एकदण्डी[2] त्रिदण्डी वा" इति बौधायनस्मरणात्, "चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः। एकदण्डी त्रिदण्डी वा सर्वसंगविवर्जितः॥" इति चतुर्विंशतिमते दर्शनाच्च। तथा शिखाधारणमपि वैकल्पिकं—"मुण्डः शिखी वा"[3] इति गौतमस्मरणात्, "मुण्डोऽममोऽक्रोधोऽपरिग्रहः"[4][5] इति वसिष्ठस्मरणाच्च[6][7]। यज्ञोपवीतधारणमपि वैकल्पिकमेव—सशिखान्केशान्निकृत्य "विसृज्य यज्ञोपवीतम्" इति काठकश्रुतिदर्शनात्, "कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः। केशान् यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः॥" इति बाष्कलस्मरणाच्च, "अथ यज्ञोपवीतमप्सु जुहोति भूः स्वाहेति, अथ दण्डमादत्ते सखे मा गोपाय" इति परिशिष्टदर्शनाच्च। यद्यशक्तिस्तदा कन्थाऽपि ग्राह्या—"काषायी मुण्डस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकन्थामात्रः"[9] इति देवलस्मरणात्। शौचाद्यर्थं कमण्डलुसहितश्च भवेत्। एकारामः प्रव्रजितान्तरेणासहायः संन्यासिनीभिः स्त्रीभिश्च—"स्त्रीणां चैके" इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणात्। तथा च दक्षः—"एकोभिक्षुर्यथोक्तश्च द्वावेव मिथुनं स्मृतम्। त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते॥ राजवार्तादि तेषां तु भिक्षावार्ता परस्परम्। अतिपैशुन्य[10]मात्सर्यं सन्निकर्षान्न संशयः इति॥" परिव्रज्य परिपूर्वो व्रजतिस्त्यागे वर्तते अतश्चाहं ममाभिमानं तत्कृतं च लौकिकं कर्मनिचयं वैदिकं च नित्यकाम्यात्मकं संत्यजेत्। तदुक्तं मनुना—"सुखाभ्युदायिकं[11] चैव नैःश्रेयसिकमेव च। प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्॥ इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते। निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते॥ यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः। आत्मज्ञाने शमे[12] च स्याद्वेदाभ्यासे च यत्नवान्॥"[13] इति॥ अत्र वेदाभ्यासः प्रणवाभ्यासः;—तत्र य-

१.—३. २४, ५.। २. ग. एकदण्डीवा' इति बोधा०। ३.—३. १०. ४०.। ४.—३. २२.। ५. ग. मुण्डोमनोऽपरि०। ६.—१०. ६.। ७. ख. वसिष्ठस्मरणात्। यज्ञो०। ८. ग. शाखिः कृत्यविसृ०। ख. न्निकृन्त्यविसृ०। ९.—१.। १०. ग. ख. अपिपैशुन्य०। क. मात्सर्यं सन्नि०। ११ क. कर्माभ्युदयि०। १२. क. ज्ञानेसमेचस्या०। १३.—१२.८८,८९,९२.।

त्नवान् । भिक्षाप्रयोजनार्थं[1] ग्राममाश्रयेत् प्रविशेत् न पुनः सुखनिवासार्थम् । वर्षाकाले तु न दोषः—"ऊर्ध्वं वार्षिकाभ्यां नैकस्थानवासि" इति शङ्खस्मरणात् । अशक्तौ पुनर्मासचतुष्टयपर्यन्तमपि स्थातव्यं "न चिरमेकत्र वसेदन्यत्र वर्षाकालात्"—"श्रावणादयश्चत्वारो मासा वर्षाकालः" इति देवलस्मरणात् । "एकरात्रं वसेद्ग्रामे नगरे रात्रपञ्चकम्[2] । वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत् ॥" इति काण्वस्मरणात् ॥ ५८ ॥

कथं भिक्षाटनं कार्यमित्यत आह—

**अप्रमत्तश्चरेद्भैक्षं[3] सायाह्नेऽनभिलक्षितः ।**
**रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥**

अप्रमत्तो वाक्चक्षुरादिचापल्य[4]रहितो भैक्षं चरेत् । वसिष्ठेनात्र विशेषो दर्शितः—"सप्तागाराण्यसंकल्पितानि चरेद्भैक्षम्[5]" इति । सायाह्ने अह्नः पञ्चमे भागे । तथा च मनुः—"विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेत् ॥" इति । तथा । "एककालं चरेद्भिक्षां प्रसज्येन्न तु विस्तरे । भैक्षप्रसक्तो हि यतिर्विषयेष्वतिसज्जति॥[6]" इति । अनभिलक्षित. ज्योतिर्विज्ञानोपदेशादिना अचिह्नितः[7]—"न चोत्पात[8]निमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥[9]" इति तेनोक्तत्वात्[10] । यत्पुनर्वसिष्ठवचनं—"ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत सायंप्रातर्मांसवर्जम्[11]" इति "तदशक्तविषयम् । भिक्षुकैर्भिक्षणशीलैः पाषण्डयादिभिर्वर्जिते ग्रामे । मनुना चात्र[12] विशेष उक्तः—"न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः[13] । आकीर्णं भिक्षुकैरन्यैरगारमुपसंप्रजेत्॥" इति[14]॥ यावता प्राणयात्रा वर्तते तावन्मात्रं भैक्षं चरेत् । तथा च संवर्तः—"अष्टौ, भिक्षाः समादाय[15] स मुनिः सप्त पञ्च वा । अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः ॥" इति । अलोलुपो मिष्टान्न[16]व्यञ्जनादिष्वप्रसक्तः ॥ ५९ ॥

१. ख. प्रयोजनार्थे ग्राम० । २. ख. रात्रिपञ्चकम् । ३. क. रेद्भैक्ष्यं साया० । ४. क. ग. चापलरहि० । ५.—१०. ७. । ६ —६. ५६, ५५. । ७. ख. ह्नितः । मनुः नचोत्पा० । ८. क. नवोत्पात० । ९ —६. ५०. । १०. ख. क्तत्वादिति । यत्पुन० । ११. ख. मनुतात्रविशे० । १२ —१०. २४. । १३. ख. वासुभिः । आकी ० । १४. —६. ५१. । १५ ख. दाय मुनिः ससचपञ्च० । १६. क. अलोलुपोमृष्टान्न० ।

भिक्षाचरणार्थं पात्राण्याह—

**यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।**
**सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥ ६० ॥**

मृदादिप्रकृतिकानि यतीनां पात्राणि भवेयुः, तेषां सलिलं गोवालावघर्षणं च शुद्धिसाधनम् । इयं च शुद्धिर्भिक्षाचरणादिप्रयोगाङ्गभूता नामेध्याद्युपहति[2] विषया । तदुपघाते द्रव्यशुद्धिप्रकरणोक्ता द्रष्टव्या । अत एव मनुना—"अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च । तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥" इति । चमसदृष्टान्तोपादानेन प्रयोगिकी शुद्धिर्दर्शिता । पात्रान्तराभावे भोजनमपि तत्रैव कार्यं—"तद्भैक्षं गृहीत्वैकान्ते तेन पात्रेणान्येन वा तूष्णीं मात्रया भुञ्जीत" इति देवलस्मरणात् ॥ ६० ॥

एवंभूतस्य यतेरात्मोपासनाङ्गं नियमविशेषमाह—

**सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।**
**भयं हित्वा च भूतानाममृती भवति द्विजः ॥ ६१ ॥**

चक्षुरादीन्द्रियसमूहं रूपादिविषयेभ्यः सम्यङ्निरुद्ध्यं विनिवर्त्य रागद्वेषौ प्रियाप्रियविषयौ प्रहाय त्यक्त्वा चशब्दादीनमपि—तथा भूतानामपकारकरणेन भयं भयमकुर्वन् शुद्धान्तःकरणः सन्नद्वैतसाक्षात्कारेणामृती भवति मुक्तो भवति ॥ ६१ ॥

किं च—

**कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।**
**ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ॥**

---

१. ख. चरणार्थं पात्रमाह० । ग रणार्थं यतिपात्रा० । २ ख चरणप्रयो । ३. ख. द्युपहतविं० । ४—६. ५३ । ५ श. तद्भैक्ष्यं गृही० । ६. ख. यमाविषयमाह० । ७. ख. मपकारेण भय० । ग. पकाराऽकरणे० ।

विषयाभिलाषद्वेषजनितदोषकलुषितस्याशयस्यान्तःकरणस्य शुद्धिः कल्मषक्षयः प्राणायामैः कर्तव्या[1]—तस्याः शुद्धेरात्माद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् । एवं[2] च सति विषयासक्तितज्जनितदोषात्मकप्रतिबन्धक्षये सत्यात्मध्यानधारणादौ स्वतन्त्रो भवति । भिक्षुकेन[3] त्वेषा शुद्धिर्विशेषतोऽनुष्ठेया—तस्य मोक्षप्रधानत्वात्[4], मोक्षस्य च शुद्धान्तःकरणतामन्तरेण दुर्लभत्वात् ; यथाऽऽह मनुः—"दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥" इति[5] ॥ ६२ ॥

इन्द्रियनिरोधोपायतया संसारस्वरूपनिरूपणमाह—

**अवेक्ष्या[6] गर्भवासाश्च कर्मजा गतयस्तथा ।**

**आधयो व्याधयः क्लेशा जरा रूपविपर्ययः[7] ॥ ६३ ॥**

**भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः[8] ।**

वैराग्यसिद्ध्यर्थं[9] मूत्रपुरीषादिपूर्णनानाविधगर्भवासा अवेक्षणीयाः पर्यालोचनीयाः—चशब्दाज्जननोपरमावपि तथा निषिद्धाचरणादिक्रियाजन्या महारौरवादिनिरयपतनरूपा गतयः। तथाऽऽधयो मनःपीडाः, व्याधयश्च ज्वरातिसाराद्याः शारीराः, क्लेशाः अविद्यास्मितरागद्वेषाभिनिवेशाः पञ्च, जरावलीपलिता[10]द्यभिभवः रूपविपर्ययः, खञ्जकुब्जत्वादिना प्राक्तनस्य रूपस्यान्यथाभावः, तथा श्वसूकरखरोरगा[11]द्यनेकजातिषु भव उत्पत्तिः, तथा इष्टस्याप्राप्तिः अनिष्टस्याप्तिरित्या[12]दिबहुतरक्लेशावहं संसारस्वरूपं पर्यालोच्य तत्परिहारार्थमात्मज्ञानोपायभूतेन्द्रियजये प्रयतेत ॥ ६३ ॥ ६३- ॥

एवमवेक्ष्यानन्तरं किं कार्यमित्यत आह—

**ध्यानयोगेन संपश्येत्सूक्ष्म आत्माऽऽत्मनि स्थितः ॥६४॥**

योगश्चित्तवृत्तिनिरोधः[13], आत्मैकाग्रता ध्यानं, तस्या एव बाह्यविषयत्वोपरमः,

---

१. ख. कर्तव्यः । तस्याः । २. ख. ग एवं च सति० । ३. ख. भवति । तस्माद्भिक्षु० । ४. ख. मोक्षप्रसाधन० । ५.—६. ७१. । ६. ख. आवेक्ष्या० । ७. ग. जरारूपविपर्ययाः । ८. क. प्रियः प्रियविपर्य० । ९. ख. सिध्यर्थं । १०. ख. जरावालितपलिता० । ११. क. खरोष्ट्राद्यने० । १२. ख. निष्टस्यप्राप्तिरि० । १३. योगसू० १.—२. ।

ध्यानयोगेन निदिध्यासनापरपर्यायेण सूक्ष्मः[1] शरीरप्राणादिव्यतिरिक्तः क्षेत्रज्ञः आत्मनि ब्रह्मण्यवस्थितः इत्येवं तत्त्वम्पदार्थयोरभेदं सम्यक् पश्येत् अपरोक्षी कुर्यात् । अत एव श्रुतौ "आत्मा वा अरे द्रष्टव्यः[2]" इति[3] साक्षात्काररूपं दर्शनमनूद्य तत्साधनत्वेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणमनननिदिध्यासनानि विहितानि ॥ ६४ ॥

किं च—

**नाऽऽश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।**
**अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत् ॥ ६५ ॥**

प्राक्तनश्लोकोक्तात्मोपासनाख्ये धर्मे नाऽऽश्रमो न[4] दण्डकमण्डल्वादिधारणं कारणं यस्मादसौ क्रियमाणो भवेदेव नातिदुष्करः । तस्माद्यदात्मनोऽपथ्यमुद्वेगकरं परुषभाषणादि तत्परेषां न समाचरेत् । अनेन ज्ञानोत्पत्तिहेतुभूतान्तःकरणशुद्ध्यापादनत्वेनान्तरङ्गत्वात् रागद्वेषप्रहाणस्य प्रधानत्वेन प्रशंसार्थमाश्रमनिराकरणं, न पुनस्तत्परित्यागाय—तस्यापि विहितत्वात् । तदुक्तं मनुना—"दूषितोऽपि चरे[5]द्धर्मं यत्र तत्राऽऽश्रमे वसन् । समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्॥"इति[6]॥६५॥

किं च—

**सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।**
**संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥ ६६ ॥**

सत्यं यथार्थप्रियवचनम्, अस्तेयं परद्रव्यानपहारः, अक्रोधोऽपकारिण्यपि क्रोधस्यानुत्पादनं, ह्रीर्लज्जा, शौचमाहारादिशुद्धिः, धीर्हिताहितविवेकः, धृतिरिष्टवियोगेऽनिष्टप्राप्तौ प्रचलितचित्तस्य यथापूर्वमवस्थापनं, दमो मदत्यागः, संयतेन्द्रियता अप्रतिषिद्धेष्वपि[7] विषयेषु अनतिप्रसंगः, विद्या आत्मज्ञानम्, एतैः[8] सत्यादिभिरनुष्ठितैः सर्वो धर्मोऽनुष्ठितो भवति । अनेन दण्डकमण्डल्वादिधारणबाह्यलक्षणात्सत्यादीनामात्मगुणानामन्तरङ्गतां द्योतयति ॥ ६६ ॥

---

ख. सूक्ष्मशरीर० । २. क. आत्मावाद्रष्ट० । ३. बृ० उ० ५. ४. ५. । ४. ख. नाश्रमो दण्डक० । ५. क. 'भूषितोऽपिचरे० । ६.—६, ६६. । ७. ख. द्धेष्वपि विषयेष्वनतिसङ्गः । ८. बृ० उ० ४. ५. ६. ।

ननु ध्यानयोगेनाऽऽत्मनि स्थितमात्मानं पश्येदित्ययुक्तं जीवपरमात्मनोर्भेदाभावादित्यत आह—

**निःसरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।**
**सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ ६७ ॥**

यद्यपि जीवपरमात्मनोः पारमार्थिको भेदो नास्ति, तथाऽप्यात्मनः सकाशादविद्योपाधिभेदाभिन्नतया जीवात्मानः प्रभवन्ति हि यस्मात्, तस्माद्युज्यत एव जीवपरमात्मनोर्भेदव्यपदेशः; यथा हि तप्ताल्लोहपिण्डादयोगोलकाद्विस्फुलिङ्गकास्तेजोवयवा निःसरन्ति, निःसृताश्च स्फुलिङ्गव्यपदेशं लभन्ते तद्वत् । अत उपपन्न आत्माऽऽत्मनि स्थितो द्रष्टव्य इति । यद्वाऽयमर्थः—ननु सुषुप्तिसमये, प्रलये च, सकलक्षेत्रज्ञानां ब्रह्मणि प्रलीनत्वात् कस्यायमात्मौपासनाविधिरित्यत आह—निःसरन्तीत्यादि । यद्यपि सूक्ष्मरूपेण प्रलयवेलायां प्रलीनाः, तथाऽप्यात्मनः सकाशादविद्योपाधिभेदभिन्नतया जीवात्मानः प्रभवन्ति, पुनः कर्मवशात्स्थूलशरीराभिमानिनो जायन्ते । तस्मान्नोपासनाविधिविरोधः । तैजसस्य पृथग्भावसाम्याल्लोहपिण्डदृष्टान्तः ॥ ६७ ॥

ननु चानुपात्तवपुषां क्षेत्रज्ञानां निष्परिस्पन्दतया कथं तन्निबन्धनो जरायुजाण्डजादिचतुर्विधदेहपरिग्रह इत्यत आह—

**तत्राऽऽत्मा हि स्वयं किञ्चित्कर्म किञ्चित्स्वभावतः ।**
**करोति किञ्चिदभ्यासाद्धर्माधर्मोभयात्मकम् ॥ ६८ ॥**

यद्यपि तस्यामवस्थायां परिस्पन्दात्मकक्रियाभावः, तथाऽपि धर्माधर्माध्यवसायात्मकं कर्म मानसं भवत्येव[1] । तस्य च विशिष्टशरीरग्रहणहेतुत्वमस्त्येव—"वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।" इति[2] मनुस्मरणात् । एवं गृहीतवपुः स्वयमेवान्वयव्यतिरेकनिरपेक्षः स्तन्यपानादिके कृते तृप्तिर्भवत्यकृते न भवतीत्येवंरूपौ यौअवन्वव्ययतिरोकौ तत्र निरपेक्षः[3] प्राग्भवीयानुभवभावितभावनानुभावाद्भूतकार्यावबोधः[4] किञ्चित्स्तन्यपानादिकं करोति, किंचित्स्वभावतो यदृच्छया प्रयोजनाभिसंन्धिनिरपेक्षः[5] पिपीलिकादिभक्षणं करोति, किञ्चिद्भवान्तराभ्यासवशाद्धर्माधर्मोभयरूपं करोति।

---

१. ग. मानसं संभव० । २.—१२. ९. । ३. ख. तत्रनिरपेक्षाप्राभ० । ४. ख. नुभा० वाद्भूतका० । ५. ख निरपेक्षपिपी० ।

तथा च स्मृत्यन्तरं—"प्रतिजन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तदेवाभ्यसते पुनः॥" इति। एवं जीवानां कर्मवैचित्र्यात्तत्कृतं जरायुजादिदेहवैचित्र्यं युज्यत एव॥ ६८॥

नन्वेवं सति ब्रह्मण एव कथञ्चिज्जीवव्यपदेश्यत्वात्तस्य च नित्यत्वादिधर्मत्वात्कथं विष्णुमित्रो जात इति व्यवहार इत्याशङ्क्याऽऽह—

**निमित्तमक्षरः कर्ता बोद्धा ब्रह्म गुणी वशी।**
**अजः शरीरग्रहणात्स जात इति कीर्त्यते॥ ६९॥**

स एवात्मा सकलजगत्प्रपञ्चाविर्भावेऽविद्यासमावेशवशात्समवाय्यसमवायि निमित्तमित्येवं स्वयमेव त्रिविधमपि कारणं, न पुनः कार्यकोटिनिविष्टः यस्मादक्षरोऽविनश्वरः। ननु सत्वादिगुणविकारस्य सुखदुःखमोहात्मकस्य कार्यभूते जगत्प्रपञ्चे दर्शनात्तद्गुणवत्याः प्रकृतेरेव जगत्कर्तृतोचिता न पुनर्निर्गुणस्य ब्रह्मणः। मैवं मंस्थाः। आत्मैव कर्ता यस्मादसौ जीवोपभोग्यसुखदुःखहेतुभूतादृष्टादेर्बोद्धा, न ह्यचेतनायाः प्रकृतेर्नामरूपव्याकृतविचित्रभोक्तृवर्गभोगानुकूलभोग्यभोगायतनादियोगिजगत्प्रपञ्चरचना घटते। तस्मादात्मैव कर्ता तथा स एव ब्रह्म बृंहको विस्तारकः। न चासौ निर्गुणः यस्तस्य त्रिगुणाशक्तिरविद्या प्रकृतिप्रधानाद्यपरपर्याया विद्यते। अतः स्वतो निर्गुणत्वेऽपि शक्तिमुखेन सत्वादिगुणयोगी कथ्यते न चैतावता प्रकृतेः कारणता यस्मादात्मैव वशी स्वतन्त्रो न प्रकृतिर्नाम स्वतन्त्रं तत्त्वान्तरं—तादृग्विधत्वे प्रमाणाभावात्। न च वचनीयं शक्तिरूपाऽपि सैव कर्तृभूतेति—यतः शक्तिमत्कारकं न शक्तिः। तस्मादात्मैव जगतस्त्रिविधमपि कारणम्। तथा अज उत्पत्तिरहितः। अतस्तस्य यद्यपि साक्षाज्जननं नोपपद्यते, तथाऽपि शरीरग्रहणमात्रेण जात इत्युच्यते—अवस्थान्तरयोगितयोत्पत्तेः; गृहस्थो जात इतिवत्॥ ६९॥

शरीरग्रहणप्रकारमाह—

**सर्गादौ स यथाऽऽकाशं वायुं ज्योतिर्जलं महीम्।**

१. ख. कर्मवैचित्र्यतत्कृ०। २. क. स्सजात इ०। ३. ग. हेतुपुण्यापुण्यादेर्बोद्धा०। ४. क. तृवर्णभोगा०। ५. ग. त्प्रपञ्चनाघट०। ६. ख त्रिगुणशक्तिरवि०।

**सृजत्येकोत्तरगुणांस्तथाऽऽधत्ते भवन्नपि ॥ ७० ॥**

सृष्टिसमये स परमात्मा यथाऽऽकाशादीन् शब्दैकगुणं गगनं,शब्दस्पर्शगुणः पवनः, शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपरसवदुदकं शब्दस्पर्शरूपरसगन्धगुणा जगतीत्येवमेकोत्तरगुणान् सृजति । तथाऽऽत्मा जीवभावमापन्नो भवन्नुत्पद्यमानोऽपि स्वशरीरस्यारम्भकत्वेनापि तानुपादत्ते गृह्णाति ॥ ७० ॥

कथं शरीरारम्भकत्वं पृथिव्यादीनामित्यत आह—

**आहुत्याऽऽप्यायते सूर्यः सूर्याद्वृष्टिरथौषधिः[1] ।**
**तदन्नं रसरूपेण[2] शुक्रत्वमधिगच्छति ॥ ७१ ॥**

यजमानैः प्रक्षिप्तयाऽऽहुत्या पुरोडाशादिरसेनाऽऽप्यायते सूर्यः । सूर्याच्च कालवशेन परिपक्वाज्यादिहवीरसाद्वृष्टिर्भवति, ततो व्रीह्याद्यौषधिरूपमन्नं, तच्चान्नं सेवितं सत् रसरुधिरादिक्रमेण शुक्रशोणितभावमापद्यते ॥ ७१ ॥

ततः किमित्यत आह—

**स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ।**
**पञ्च धातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः ॥ ७२ ॥**

ऋतुवेलायां स्त्रीपुंसयो[3]र्योगे शुक्रं च शोणितं च शुक्रशोणितं तस्मिन्परस्परसंयुक्ते विशुद्धे "वातपित्तश्लेष्मदुष्टग्रन्थिपूयक्षीणमूत्रपुरीषगन्धरेतांस्यबीजानि" इति स्मृत्यन्तरोक्तदोषरहिते स्थित्वा पञ्च धातून् पृथिव्यादिपञ्चमहाभूतानि शरीरारम्भकतया स्वयं षष्ठश्चिद्धातुरात्मा प्रभुः शरीरारम्भकरणेऽदृष्टकर्मयोगितया समर्थो युगपदादत्ते भोगायतनत्वने स्वीकरोति । तथा च शारीरिके[4]—"स्त्रीपुंसयोः संयोगे योनौ रजसाऽभिसंसृष्टं शुक्रं तत्क्षणमेव सहभूतात्मना गुणैश्च सत्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये[5] तिष्ठति" इति ॥ ७२ ॥

किं च—

**इन्द्रियाणि मनः प्राणोज्ञानमायुः सुखं धृतिः ।**

---

१. क. द्वृष्टिरवौषधि० । २. क. पेणभुक्तत्व० । ३. क. सयोः संयोगे० । ४. क, शारीरकं—स्त्री० । ५. क. प्रेर्यमाणगर्भा० ।

धारणा प्रेरणं दुःखमिच्छाऽहङ्कार एव च ॥ ७३ ॥
प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ।
तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ॥ ७४ ॥

इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि वक्ष्यमाणानि, मनश्चोभयसाधारणं, प्राणोऽपानो व्यान उदानः समान इत्येवं पञ्चवृत्तिभेदभिन्नः शारीरो वायुः प्राणः, ज्ञानमवगमः, आयुः कालविशेषावच्छिन्नं जीवनं, सुखं निर्वृतिः, धृतिश्चित्तस्थैर्यं, धारणा प्रज्ञा मेधा च, प्रेरणं ज्ञानकर्मेन्द्रियाणामाधिष्ठातृत्वं, दुःखमुद्वेगः, इच्छा स्पृहा, अहङ्कारोऽहङ्कृतिः, प्रयत्नः उद्यमः, आकृतिराकारः, वर्णो गौरिमादिः, स्वरः षड्जगान्धारादिः, द्वेषो वैरं, भवः पुत्रपश्वादिविभवः, अभवस्तद्विपर्ययः तस्यानादेरात्मनो नित्यस्यादिमिच्छतः शरीरं जिघृक्षमाणस्य सर्वमेतदिन्द्रियादिकमात्मजानितं प्राग्भवीयकर्मबीजजन्यमित्यर्थः ॥ ७३ ॥ ७४ ॥

संयुक्तशुक्रशोणितस्य कार्यरूपपरिणतौ[1] क्रममाह—

प्रथमे मासि संक्लेदभूतो धातुविमूर्छितः ।
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ॥ ७५ ॥

असौ चेतनः षष्ठो धातुः धातुविमूर्छितः धातुषु पृथिव्यादिषु विमूर्छितो लोलीभूतः क्षीरनीरवदेकीभूत इति यावत् । प्रथमे गर्भमासे संक्लेदभूतो द्रवरूपतां प्राप्त एवावतिष्ठते, न कठिनतया परिणमते । द्वितीये तु मास्यर्बुदमीषत्कठिनमांसपिण्डरूपं भवति । अयमभिप्रायः—कौष्ठ्यपवनजठरदहनाभ्यां प्रतिदिनमीषदीषे-[2]च्छोष्यमाणं शुक्रसंपर्कसम्पादितद्रवीभूतं[3] भूतजातं विशद्भिर्दिनैः काठिन्यमापद्यत[4] इति । तथा च सुश्रुते—" द्वितीये शीतोष्णानिलैरभिपच्यमानो भूतसंघातो घनो जायते इति । तृतीये तु मास्यङ्गैरिन्द्रियैश्च संयुक्तो भवति ॥ ७५ ॥

किं च—

आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम् ।

१. ख. कार्यरूप० । २. क. मीषच्छोष्ठगराणां शुक्तं सम्पर्कापादित द्रवीभाव० । ३. ख. शुक्तसम्पर्कात् द्रवीभू० । ४. ख. काढिण्यमाप० ।

वायोश्च स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च ॥ ७६ ॥
पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशिताम् ।
रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम् ॥ ७७ ॥
भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च ।
आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः ॥ ७८ ॥

आत्मा गृह्णातीति सर्वत्र संबध्यते । गगनाल्लघिमानं लङ्घनक्रियोपयोगितां[1]; सौक्ष्म्यं सूक्ष्मेक्षित्वं; शब्दं विषयं श्रोत्रं श्रवणेन्द्रियं; बलं दार्ढ्यम्,—आदिग्रहणात्सुषिरत्वं विविक्ततां च—"आकाशाच्छब्दं श्रोत्रं विविक्ततां सर्वच्छिद्रसमूहांश्च" इति गर्भोपनिषद्दर्शनात् । पवनात्स्पर्शेन्द्रियं; चेष्टां गमनागमनादिकां व्यूहनमङ्गानां विविधं प्रसारणं रौक्ष्यं कर्कशत्वं—चशब्दात्स्पर्शं च। पित्तात्तेजसो दर्शनं चक्षुरिन्द्रियं; पक्तिं भुक्तस्यान्नस्य पचनं; औष्ण्यमुष्णस्पर्शत्वमङ्गानां; रूपं श्यामिकादि ; प्रकाशितां भ्राजिष्णुतां तथा संतापामर्षादि च–" शौर्यामर्षतैक्ष्ण्यपक्त्यौष्ण्यभ्राजिष्णुतासंतापवर्णरूपेन्द्रियाणि तैजसानि" इति गर्भोपनिषद्दर्शनात् । एवं रसादुदकाद्रसनेन्द्रियं; शैत्यमङ्गानां; स्निग्धतां मृदुत्वसहितं; क्लेदमार्द्रताम् । तथा भूमेर्गन्धं घ्राणेन्द्रियं, गरिमाणं, मूर्तिं च । सर्वमेतत्परमार्थतो जन्मरहितोऽप्यात्मा तृतीये मासि गृह्णाति । ततश्चतुर्थे मासि स्पदन्ते चलति । तथा च[2] शारीरके—"तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति" इति ॥ ७६ ॥ ७७ ॥ ७८ ॥

किं च—

दौहृद[3]स्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः ॥ ७९ ॥

गर्भस्यैकं हृदयं, गर्भिण्याश्चापरमित्येवं द्विहृदया तस्याः स्त्रिया यदभिलषितं तद्दोहदं तस्याप्रदानेन गर्भो विरूपतां मरणरूपं वा दोषं प्राप्नोति । तस्मात्तद्दोषपरिहारार्थं च गर्भिण्याः स्त्रियाः यत्प्रियमभिलषितं तत्संपादनीयम् । तथा च

१. ख. पयोगिनम् । २. ख. तथा शारीरके० । ३. ख. द्वौहृद० । द्वौहद० । क. दौहृद० ।
४. क षितं तद्दौहदं प्रियमभिलषितं तत्संपाद० ।

सुश्रुते—"द्विहृदयां नारीं दौर्हृदिनीमाचक्षते, तदभिलषितं दद्यात्, वीर्यवन्तं चिरायुषं पुत्रं जनयति" इति। तथा च व्यायामादिकमपि गर्भग्रहणप्रभृति तया परिहरणीयं—"ततःप्रभृति व्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेत्" इति तत्रैवाभिधानात्। गर्भग्रहणं च श्रमादिभिर्लिङ्गैरवगन्तव्यम्। "सद्योगृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेः" इत्यादि तत्रैवोक्तम्॥ ७९॥

किं च—

**स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः।**
**षष्ठे बलस्य वर्णस्य नखरोम्णां च संभवः॥ ८०॥**

तृतीये मासि प्रादुर्भूतस्यांगसङ्घस्य चतुर्थे मासि स्थैर्यं स्थेमा भवति, पञ्चमे लोहितस्योद्भव उत्पत्तिः, तथा षष्ठे बलस्य वर्णस्य कररुहरोम्णां च संभवः॥ ८०॥

किं च—

**मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुतः।**
**सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि॥ ८१॥**

असौ पूर्वोक्तो गर्भः सप्तमे मासि मनसा चेतनया च युक्तो नाडीभिर्वाहिनीभिः स्नायुभिरस्थिबन्धनैः शिराभिर्वातपित्तश्लेष्मवाहिनीभिश्च सयुतः, तथाऽष्टमे मासि त्वचा मांसेन स्मृत्या च युक्तो भवति॥ ८१॥

किं च—

**पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति।**
**अष्टमे मास्यतोगर्भोजातः प्राणैर्वियुज्यते॥ ८२॥**

तस्याष्टममासिकस्य गर्भस्यौजः कश्चन गुणविशेषो धात्रीं गर्भं च प्रति पुनःपुनरतितरां चञ्चलतया शीघ्रं गच्छति, अतोऽष्टमे मासि जातो गर्भः प्राणै-

---

१. ख. दौहृदि०। ग. दौहृदिनी०। २. ग. ख तथा च व्याया०। ३. ख. सक्थिसीदनं। ४. क. नखरोमाच०। ५ क स्थेमासंभवति। ६. क. बलवर्णकररुहरोम्णां संभ०। ७. ख. मनसाचेतसाचेत नया०। ८. क. वाहिनीभिरित्यन्तमेवैतच्छूले:कव्याख्यानाग्रे०।

र्वियुज्येत । अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति । ओजःस्वरूपं च स्मृत्यन्तरे दर्शितं—"हृदि तिष्ठति यच्छुद्धमीषदुष्णं सपीतकम् । ओजः शरीर संख्यातं तन्नाशान्नाशमृच्छति ॥" इति ॥ ८२ ॥

किं च—

**नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः ।**
**निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ ८३ ॥**

एवं करचरणचक्षुरादिपरिपूर्णाङ्गेन्द्रियो नवमे, दशमे वाऽपि, मासे—अपिशब्दात्प्राक्सप्तमेऽष्टमे वा अत्यायासादिदोषवशात्,—प्रबलसूतिहेतुप्रभञ्जनप्रेरितः स्नाय्वस्थिचर्मादिनिर्मितवपुर्यन्त्रस्य छिद्रेण सुसूक्ष्मसुषिरेण[1] सज्वरो दुःसहदुःखाभिभूयमानो निःसार्यते धनुर्यन्त्रेण सुधन्वप्रेरितबाण[2] इवातिवेगेन निर्गमसमनन्तरं च बाह्यपवनस्पृष्टो नष्टप्राचीनस्मृतिर्भवति—"जातः स वायुना स्पृष्टो न स्मरति पूर्वं जन्म मरणं कर्म च शुभाशुभाम्" इति निरुक्तस्याष्टादशेऽभिधानात् ॥ ८३ ॥

कार्यस्वस्वरूपं विवृण्वन्नाह—

**तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च ।**
**षडङ्गानि तथाऽस्थ्नां च सहषष्ट्या शतत्रयम् ॥ ८४ ॥**

तस्याऽऽत्मनो यानि जरायुजाण्डजशरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन । तथा हि। अन्नरसो जाठराग्निना पच्यमानो रक्ततां प्रतिपद्यते, रक्तं च स्वकोशस्थेनाग्निना पच्यमानं मांसत्वं, मांसं च स्वकोशानलपरिपक्वं मेदस्त्वं, मेदोऽपि स्वकोशवह्निना पक्वमस्थिताम्, अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वं[3], मज्जाऽपि स्वकोशपावकपरिपच्यमानश्चरमधातुतया परिणमते, चरमधातोस्तु परिणतिर्नास्तीति स एवाऽऽत्मनः प्रथमः कोश इत्येवं षट्कोशाग्नियोगित्वात् षट्प्रकारत्वं शरीराणाम् । अन्नरसरूपस्य तु प्रथमधातोरनियतत्वान्न तेन प्रकारान्तरत्वम् । तानि च शरीराणि षट् त्वचो धारयन्ति । रक्तमांसमेदोस्थिमज्जाशुक्राख्याः षट् धातव एव रम्भास्त-

१. ख. द्रेणसूक्ष्म० । २. ख. रितोबाण० । ३. क. मज्जत्वं० ।

म्भत्वगिव बाह्याभ्यन्तररूपेण स्थिताः त्वगिवाऽऽच्छादकत्वात्त्वचस्ताः षट् त्वचो धारयन्ति। तदिदमायुर्वेदप्रसिद्धम् । तथाऽङ्गानि च षडेव—करयुग्मं चरणयुगलमुत्त-माङ्गं गात्रमिति । अस्थ्नां तु षष्टिसहितं शतत्रयमुपरितनषट्श्लोक्या वक्ष्यमाणमव-गन्तव्यम् ॥ ८४ ॥

किं च—

**स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः ।**
**पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ॥ ८५ ॥**

स्थालानि दन्तमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत् तैः सह द्वात्रिंशद्दन्ताश्चतुःषष्टि-र्भवन्ति । नखाः कररुहा[1] विंशतिः हस्तपादस्थानि । शलाकाकाराण्यस्थीनि मणिबन्ध-स्योपरिवर्तीनि अङ्गुलिमूलस्थानि विंशतिरेव । तेषां नखानां शलाकास्थ्नां च स्थानचतुष्टयं द्वौ चरणौ करौ चेत्येवमस्थ्नां चतुरुत्तरं शतम् ॥ ८५ ॥

किं च—

**षष्ट्यङ्गुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च चतुष्टयम् ।**
**चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ॥ ८६ ॥**

विंशतिरङ्गुलयः,तासाम् एकैकस्यास्त्रीणित्रीणीत्येवमङ्गुलिसंबद्धान्यस्थीनि[2] ष-ष्टिर्भवन्ति। पादयोः पश्चिमौ भागौ पार्ष्णी; तयोरस्थिनीद्वे । एकैकस्मिन्पादे गुल्फौ द्वै, इत्येवं चतुर्षु गुल्फेषु चत्वार्यस्थीनि। बाह्वोररत्निप्रमाणानि चत्वार्यस्थीनि। जङ्घयो-स्तावदेव चत्वार्येव। इत्येवं चतुःसप्ततिः ॥ ८६ ॥

किं च—

**द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ।**
**अक्षतालूषके[3] श्रोणीफलके च विनिर्दिशेत् ॥ ८७ ॥**

जङ्घोरुसन्धिर्जानु[4]; कपोलो गल्लः; ऊरुः सक्थि, तत्फलकं; अंसो भुजशिरः; अक्षः कर्णनेत्रयोर्मध्ये शंखादधोभागः; तालूषकं काकुदं; श्रोणी

१. ख. करचरणरुहा० । २. ख. ङ्गुलिसम्बन्धीन्य० । क. ङ्गुलिबद्धान्य० । ३. ख. तालूषकश्रो । ४. ख. न्धिर्जानुः कपो० ।

ककुद्मती, तत्फलकं ;—तेषामेकैकत्वास्थिनी द्वेद्वे विनिर्दिशेदित्येवं चतुर्दशास्थीनि भवन्ति ॥ ८७ ॥

किं च—

**भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।**
**ग्रीवा पञ्चदशास्थिः[3] स्याज्जत्र्वेकैकं तथा हनुः ॥ ८८ ॥**

गुह्यास्थ्येकं, पृष्ठे पश्चिमभागे पञ्चचत्वारिंशदस्थीनि भवन्ति, ग्रीवा कंधरा—सा-पञ्चदशास्थी स्यात् भवेत्, वक्षोंऽसयोः सन्धिर्जत्रुः प्रतिजत्र्वस्थि एकैकं, हनुश्चिबुकं तत्राप्येकमस्थि, इत्येवं चतुःषष्टिः ॥ ८८ ॥

किं च—

**तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका ।**
**पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ॥ ८९ ॥**

तस्य हनोर्मूलेऽस्थिनी द्वे। ललाटं भालम्, अक्षि चक्षुः, गण्डः कपोलाक्षयो-र्मध्यप्रदेशः,—तेषां समाहारो ललाटाक्षिगण्डं; तत्र प्रत्येकमास्थियुगलम्। नासा घनसंज्ञ-कास्थिमती । पार्श्वकाः कक्षाधःप्रदेशसंबद्धान्यस्थीनि[4], तदाधारभूतानि स्थालकानि; तैः स्थालकैः अर्बुदैश्चास्थिविशेषैः सह पार्श्वका द्विसप्ततिः; पूर्वोक्तैश्च नवभिः सार्धमेकाशीतिर्भवति ॥ ८९ ॥

किं च—

**द्वौ शङ्खकौ कपलानि चत्वारि शिरसस्तथा ।**
**उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥ ९० ॥**

भ्रूकर्णयोर्मध्यप्रदेशावस्थिविशेषौ शङ्खकौ; शिरसः संबन्धीनि चत्वारि कपा-लानि; उरो वक्षः, स्तत्सप्तदशास्थिकम्, इत्येवं त्रयोविंशतिः; पूर्वोक्तैश्च सह षष्ट्याधिकं शतत्रयमित्येवं पुरुषस्यास्थिसंग्रहः कथितः ॥ ९० ॥

१. क. ककुद्मिनी० । २. ख कत्रास्थीनि द्वेद्वे० । ३. दशास्थीनिजत्र्वेकं चेति अपरार्क-पुस्तके आनन्दाश्रममुद्रिते पाठः । ४. ख. सम्बन्धीन्यस्थी० ।

सविषयाणि ज्ञानेन्द्रियाण्याह—

**गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ।**
**नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च॥९१॥**

एते गन्धादयो विषयाः पुरुषस्य बन्धनहेतवः—विषयशब्दस्य "षिञ् बन्धने" इत्यस्य धातोर्व्युत्पन्नत्वात् । एतैश्च गन्धादिभिर्बोध्यत्वेन व्यवस्थितैः स्वस्वगोचरसंवित्साधनतयाऽनुमेयानि घ्राणादीनि पञ्चेन्द्रियाणि भवन्ति ॥९१ ॥

कर्मेन्द्रियाणि दर्शयितुमाह—

**हस्तौ पायुरुपस्थं च जिह्वा पादौ च पञ्च वै ।**
**कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ॥ ९२ ॥**

हस्तौ प्रसिद्धौ, पायुर्गुदम्, उपस्थं रतिसंपाद्यसुखसाधनं, जिह्वा, पादौ च, —एतानि हस्तादीनि पञ्च कर्मेन्द्रियाणि आदाननिर्हारानन्दव्याहारविहारादिकर्मसाधनानि- जानीयात् । मनोऽन्तःकरणं युगपत् ज्ञानानुत्पत्तिगम्यं,—तच्च बुद्धिकर्मेन्द्रियसहकारितयोभयात्मकम् ॥ ९२ ॥

प्राणायतनानि दर्शयितुमाह—

**नाभिरोजो गुदं शुक्रं शोणितं शङ्खको तथा ।**
**मूर्धांसकण्ठहृदयं[2] प्राणस्यायतनानि तु[3] ॥ ९३ ॥**

नाभिप्रभृतीनि दश प्राणस्य स्थानानि । समाननाम्नः पवनस्य सकलाङ्गसंचारित्वेऽपि[4] नाभ्यादिस्थानविशेषवाचोयुक्तिः प्राचुर्याभिप्राया ॥ ९३ ॥

प्राणायतनानि प्रपञ्चयितुमाह—

**वपा वसाऽवहननं नाभिः क्लोमा यकृत्प्लिहा।**
**क्षुद्रान्त्रं वृक्काकौ बस्तिः पुरीषाधानमेव च ॥ ९४ ॥**

**आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च ।**
**उदरं च गुदौ कोष्ठ्यौ विस्तारोऽयमुदाहृतः ॥ ९५ ॥**

१. ख. णादिपञ्चे० । २. क. मूर्धासकण्ठ० । ३. ख यतनानि च० । ४. ख. ग. ञ्चारित्वे० ।

वपा प्रसिद्धा; वसा मांसस्नेहः; नाभिः प्रसिद्धा; अवहननं फुप्फुसः, प्लीहा आयुर्वेदप्रसिद्धौ,–तौ च मांसपिण्डाकारौ[2] सव्यकुक्षिगतौ; यकृत्कालिका, क्लोमा मांसपिण्डः,—तौ च दक्षिणकुक्षिगतौ[3] क्षुद्रान्त्रं हृत्स्थान्त्रं, वृक्ककौ हृदयसमीपस्थौ मांसपिण्डौ; बस्तिर्मूत्राशयः; पुरीषाधानं पुरीषाशयः; आमाशयोऽपक्वान्नस्थानं, हृदयं हृत्पुण्डरीकं; स्थूलान्त्रगुदोदराणि प्रसिद्धानि; बाह्याद्गुदवलयादन्तर्गुदवलये द्वे, तौ च गुदौ कोष्ठयो,—नाभेरधः प्रदेशे भत्रौ । अयं च प्राणायतनस्य विस्तार उक्तः, पूर्वश्लोके तु संक्षेपः । अत एव पूर्वश्लोकोक्तानां केषांचिदिह पाठः ॥ ९४ ॥ ९५ ॥

पुनः प्राणायतनप्रपञ्चार्थमाह—

**कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ ।**
**कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥ ९६ ॥**
**वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंघातजौ स्तनौ ।**
**उपजिह्वा स्फिजौ बाहू जङ्घोरुषु च पिण्डिका ॥ ९७ ॥**
**तालूदरं बस्तिशीर्षं चिबुके गलशुण्डिके ।**
**अवटश्चैवमेतानि स्थानान्यत्र शरीरके ॥ ९८ ॥**
**अक्षिवर्णचतुष्कं च पद्धस्तहृदयानि च ।**
**नव च्छिद्राणि तान्येव प्राणस्यायतनानि तु ॥ ॥ ९९ ॥**

कनीनिके अक्षितारे, अक्षिकूटे अक्षिनासिकयोः सन्धी,[5] शष्कुली कर्णशष्कुली, कर्णपत्रकौ कर्णपाल्यौ, कर्णौ प्रसिद्धौ, दन्तवेष्टौ दन्तपाल्यौ, ओष्ठौ प्रसिद्धौ, ककुन्दरे जघनकूपकौ, वङ्क्षणौ जघनोरुसंधी, वृक्कौ पूर्वोक्तौ, स्तनौ च श्लेष्मसंघातजौ,[6]

१. ख. प्रसिद्धा तौ च० । २. ख. कारौ स्तः सव्य० । ३. ख. पिण्डस्तौ क्षुद्रान्त्रं० । ४. ख. कोष्ठयौ कोष्ठयौ नाभे० । ५. ख. तारे अक्षिनासिकयोः सन्धी अक्षिकूटे शष्कु० । ६. ख. सङ्घातौ उप० ।

उपजिह्वा घण्टिका, स्फिजौ कटिप्रोथौ, बाहू प्रसिद्धौ, जङ्घोरुषु च पिण्डिका जङ्घयोरूर्वोश्च पिण्डिका मांशलप्रदेशः, गलपिण्डिके हनुमूलगलयोः सन्धी, शीर्षं शिरः, अवटः शरीरे यः कश्चन निम्नोदेशः कण्ठमूलकक्षादिः,—अवटुरिति पाठे कृकाटिका—तथाऽक्ष्णोः कनीनिकयोः प्रत्येकं श्वेतं पार्श्वद्वयमिति वर्णचतुष्टयं यद्वा अक्षिपुटचतुष्टयं, शेषं प्रसिद्धम्। एवमेतानि कुत्सिते शरीरे स्थानानि। तथाऽक्षियुगलं कर्णयुग्मं नासाविवरद्वयमास्यं पायुरुपस्थमित्येतानि नव च्छिद्राणि च प्राणस्यायतनान्येव ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

किं च—

**शिराः शतानि सप्तैव नव स्नायुशतानि च।**
**धमनीनां शते द्वे तु पञ्च पेशीशतानि च॥ १०० ॥**

शिरा नाभिसंबद्धाश्चत्वारिंशत्संख्या वातपित्तश्लेष्मवाहिन्यः सकलकलेबरव्यापिन्यो नानाशाखाः सत्यः सप्तशतसंख्या भवन्ति। तथाऽङ्गप्रत्यङ्गसंधिबन्धनाः स्नायवो नव शतानि। धमन्यो नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्याः प्राणादिवायुवाहिन्यः शाखाभेदेन द्विशतं भवन्ति। पेश्यः पुनः मांसलाकारा ऊरुपिण्डिकाद्यङ्गप्रत्यङ्गसन्धिन्यः पञ्चशतानि भवन्ति॥ १०० ॥

पुनश्चाऽऽसामेव शिरादीनां शाखाप्राचुर्येण संख्यान्तरमाह—

**एकोनत्रिंशल्लक्षाणि तथा नव शतानि च।**
**षट् पञ्चाशच्च जानीत शिराधमनिसंज्ञिताः॥ १०१ ॥**

शिराधमन्यो मिलिताः शाखोपशाखाभेदेन एकोनत्रिंशल्लक्षाणि, तथा नव शतानि च षट्पञ्चाशच्च भवन्तीत्येवं हे सामश्रवः प्रभृतयो मुनयो जानीत॥ १०१॥

किं च—

**त्रयो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम्।**
**सप्तोत्तरं मर्म शतं द्वे च संधिशते तथा॥ १०२ ॥**

१. क. प्रोथौजङ्घयोरूर्वो॰। २. ख. मूलागलयोः। ३ ख पस्थमेतानि पूर्वोक्तानि नवच्छिद्रा॰। ४. ख. शाखिन्यः सत्यः। क. नानाशाखाः सन्त्यः सप्त॰। ५. क. पुनश्चामेव॰ (?)। ६. क. भेदेननवविंशतिलक्षा॰। ७. ख. तथा च नवश॰।

शरीरिणां श्मश्रूणि केशाश्च मिलिताः सन्तस्त्रयो लक्षा विज्ञेयाः। मर्माणि मरणकाराणि च स्थानानि तेषां सप्तोत्तरं शतं विज्ञेयम्। अस्थ्नां तु द्वे सन्धिशते, स्नायुशिरादिसन्धयः पुनरनन्ताः ॥ १०२ ॥

सकलशरीरसुषिरादिसंख्यामाह—

रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च।
सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह ॥ १०३ ॥

वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः।
[1]यद्यप्येकोऽनुवे[2]त्त्येषां भावनां चैव संस्थितिम् ॥ १०४ ॥

पूर्वोदितशिराकेशादिसहितानां रोम्णां परमाणवः सूक्ष्मसूक्ष्मतररूपा भागाः, स्वेदस्रवणसुषिरैः सह चतुःपञ्चाशत्कोट्यः—तथा सप्तोत्तरषाष्टिलक्षाः—सार्धाः पञ्चाशत्सहस्रसहिताः वायवीयैर्विभक्ताः पवनपरमाणुभिः पृथक्कृता विगण्यन्ते। एतच्च शास्त्रदृष्ट्याऽभिहितं—चक्षुरादिकरणपथगोचरत्वाभावादस्यार्थस्य। इमै[3]मतिगहनमर्थं शिरादिभावसंस्थानुरूपं हे मुनयो भवतां मध्ये यः कश्चिदनुवेत्ति सोऽपि महान् अग्र्यो बुद्धिमताम्। अतो यत्नतो बुद्धिमता बोद्धव्या भावसंस्थितिः॥१०३॥१०४॥

शारीररसादिपरिमाणमाह—

रसस्य नव विज्ञेया जलस्याञ्जलयो दश।
सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः ॥ १०५ ॥

षट् श्लेष्मा पञ्च पित्तं तु[4] चत्वारो मूत्रमेव च।
वसा त्रयो द्वौ तु मेदो मज्जैकोर्ध्वं तु मस्तके ॥ १०६ ॥

श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु।
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ॥ १०७ ॥

---

१. क. यद्यप्येकोऽनुवेत्त्येषां भावानां चैव संस्थितिमिति नास्ति। २. ग. नुवेदेषां भावा०। ३. ख. द्वयमर्थमतिग०। ४. ख. पित्तं च च०।

सम्यक् परिणताहारसारो रसः, तस्य परिमाणं नवाञ्जलयः; पार्थिवपरमाणुसंश्लेषनिमित्तस्य जलस्याञ्जलयो दश विज्ञेयाः; पुरीषस्य वर्चस्कस्य सप्तैव; रक्तस्य जाठरानलपरिपाकापादितलौहित्यस्यान्नरसस्याष्टावञ्जलयः प्रकीर्तिताः ; श्लेष्मणः कफस्य षडञ्जलयः; पित्तस्य तेजसः पंच; मूत्रस्योच्चारणरय चत्वारः ; वसाया मांसस्नेहस्य त्रयः; मेदसो मांसरसस्य द्वावञ्जली; मज्जा त्वस्थिगतसुषिरगतः, तस्यैकोऽञ्जलिः; मस्तके पुनरर्धाञ्जलिः; श्लेष्मौजसः श्लेष्मसारस्य तथा; रेतसश्चरमधातोस्तावदेवार्धाञ्जलिरेव । एतच्च समधातुपुरुषाभिप्रायेणोक्तं, विषमधातोस्तु न नियमः—
"वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च । दोषधातुमलानां च परिमाणं न विद्यते ॥" इत्यायुर्वेदस्मरणात् । इतीदृशमस्थिस्नाय्वाद्यारब्धमेतदशुचिनिधानं वर्ष्मास्थिरमिति यस्य बुद्धिरसौ कृती पण्डितो मोक्षाय समर्थो भवति—वैराग्यनित्यविवेकयोर्मोक्षोपायत्वात्, अस्थिमूत्रपुरीषादिप्राचुर्यज्ञानस्य वैराग्यहेतुत्वात् । अत एव व्यासः—"सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः प्रापानि कुर्वते ॥ यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥" इति । यस्यादीदृशकुत्सितशरीरस्यात्यन्तिकविनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम् ॥ १०५ ॥ १०६ ॥ १०७ ॥

उपासनीयाऽऽत्मस्वरूपमाह—

**द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ।**
**हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ॥१०८॥**

**मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।**
**स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥ १०९ ॥**

हृदयप्रदेशादभिनिःसृताः कदम्बकुसुमकेसरवत्सर्वतोनिर्गता हिताहितकरत्वेन हिताहितसंज्ञा द्वासप्ततिसहस्राणि नाड्यो भवन्ति । अपरास्तिस्रो नाड्यः, तासामिडापिङ्गलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विपर्यस्ते नासाविवरसंबद्धे प्राणापानायतने सुषुम्नाख्या पुनस्तृतीया । दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्गता । तासां नाडीनां मध्ये मण्डलं चन्द्रप्रभं, तस्मिन्नात्मा निर्वातस्थदीप इवाचलः प्रकाशमान

आस्ते स एवंभूतो ज्ञातव्यः । तत्साक्षात्करणादिह संसारे न पुनः संसरति, अमृतत्वं प्राप्नोति ॥ १०८ ॥ १०९ ॥

किं च—

**ज्ञेयं चाऽऽरण्यकमहं यदादित्यादवाप्तवान् ।**
**योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥ ११० ॥**

चित्तवृत्तेर्विषयान्तरतिरस्कारेणाऽऽत्मनि स्थैर्यं योगः, तत्प्राप्त्यर्थं बृहदारण्यकाख्यमादित्याद्यन्मया प्राप्तं, तच्च ज्ञातव्यम् । तथा यन्मयोक्तं योगशास्त्रं तदपि ज्ञातव्यम् ॥ ११० ॥

कथं पुनरसावात्मा ध्यातव्य इत्यत आह—

**अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।**
**ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥१११ ॥**

आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृतीन्द्रियाणि प्रत्याहृत्य आत्मैकविषयाणि कृत्वा आत्मा ध्येयः योऽसौ प्रभुर्निर्वातस्थप्रदीपवद्देदीप्यमानो निष्प्रकम्पो हृदि तिष्ठति। एतदेव तस्य ध्येयत्वम् । यच्चित्तवृत्तेर्बहिर्विषयावभासतिरस्कारेणाऽऽत्मप्रवणता नाम शरावसंपुटनिरुद्धप्रभाप्रतानप्रसरस्येव प्रदीपस्यैकनिष्ठत्वम् ॥ १११ ॥

यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्यमित्याह—

**यथाविधानेन पठन्सामगायमविच्युतम् ।**
**सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति ॥ ११२ ॥**

स्वाध्यायावगतमार्गानतिक्रमेण सामगायं सामगानं—साम्नो गानात्मकत्वेऽपि गायमिति विशेषणं प्रगीतमन्त्रव्युदासार्थम्—अविच्युतमस्खलितं सावधानः सामाध्वन्यनुस्यूनात्मैकाग्रचित्तवृत्तिः पठंस्तदभ्यासवशात् तत्र निष्णातः शब्दाकारशून्योपासनेन परं ब्रह्माधिगच्छति । तदुक्तं—"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।" इति ॥ ११२ ॥

१. क. यतस्तत्साक्षा० । २. क. प्रदीपैकनि० । ३. ख. पवद्दीप्यमानो० । ४. क. नरस्तथाभ्यासा० । ५. ब्रह्मादिग०

यस्य पुनर्वैदिक्यां गीतौ चित्तं नाभिरमते तेन लौकिकगीतानुस्मृतात्मोपासनं कार्यमित्याह—

**अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।**
**औवेणकं सरोबिन्दुमुत्तरं गीतकानि च ॥ ११३ ॥**

**ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ।**
**गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥ ११४ ॥**

अपरान्तकोल्लोप्यमद्रकप्रकर्यौवैणकानि सरोबिन्दुसहितं चोत्तरमित्येतानि प्रकरणाख्यानि सप्त गीतकानि—चशब्दादासारितवर्धमानकादिमहागीतकानि गृह्यन्ते—ऋग्गाथाद्याश्चतस्रो गीतिका, इत्येतदपरान्तकादिगीतजातमध्यारोपितात्मभावं मोक्षसाधनत्वान्मोक्षसंज्ञितं मन्तव्यं—तदभ्यासस्यैकाग्रतापादनद्वारेणाऽऽत्मैकतापत्तिकारणत्वात् ॥ ११३ ॥ ११४ ॥

किं च—

**वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।**
**तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ ११५ ॥**

भरतादिमुनिप्रतिपादितवीणावादनतत्त्ववेदी;—श्रूयते इति श्रुतिः द्वाविंशतिविधा सप्तस्वरेषु । तथा हि । षड्जमध्यमपञ्चमाः प्रत्येकं चतुःश्रुतयः, ऋषभधैवतौ प्रत्येकं त्रिश्रुती, गान्धारनिषादौ प्रत्येकं द्विश्रुती, इति । जातयस्तु षड्जादयः सप्त शुद्धाः, संकरजातयस्त्वेकादशेत्येवमष्टादशविधाः—तासु विशारदः प्रवीणः ; ताल इति गीतपरिमाणं कथ्यते, तत्स्वरूपज्ञश्च तदनुविद्धब्रह्मोपासनतया तालादिभङ्गभयाच्चित्तवृत्तेरात्मैकाग्रतायाः सुकरत्वादल्पायासेनैव मुक्तिपथं नियच्छति प्राप्नोति ॥ ११५ ॥

चित्तविक्षेपाद्यन्तरायहतस्य गीतज्ञस्य फलान्तरमाह—

**गीतज्ञो यदि योगेन नाऽऽप्नोति परमं पदम् ।**

१. ख द्रकं मक० । २. ख द्रकमक० । ३. ख. सत्यगीतानि० । ४. ख. महागीतानि० । ५. ख. स्यैकाग्रचतापा० । ६. ख. पारिमाणं कल्प्यते० । ७. क. रायहृतस्य० । ख. रायहतस्य फलान्तर० ।

**रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ ११६ ॥**

गीतज्ञो यदि कथञ्चिद्योगेन परमं पदं न प्राप्नोति तर्हि रुद्रस्य सचिवो भूत्वा तेनैव सह मोदते क्रीडति ॥ ११६ ॥

पूर्वोक्तमुपसंहरति—

**अनादिरात्मा कथितस्तस्यादिस्तु शरीरकम् ।**

**आत्मनस्तु[1] जगत्सर्वं जगतश्चाऽऽत्मसंभवः ॥११७॥**

प्रागुक्तरीत्या अनादिरात्मा क्षेत्रज्ञस्तस्य च शरीरग्रहणमेवाऽऽदिरुद्भवः कथितः—"अजः शरीरग्रहणात्" इत्यत्र[2] परमात्मनश्च सकाशात्पृथिव्यादिसकलभुवनोद्भवः तदुद्भूताच्च[3] पृथिव्यादिभूतसंघाताज्जीवानां स्थूलशरीरतया सम्भवश्च कथितः—"सर्गादौ स यथाकाशम्" इत्यादिना[4] ॥ ११७ ॥

एतदेव प्रश्नपूर्वकं विवृणोति—

**कथमेतद्विमुह्यामः सदेवासुरमानवम् ।**

**जगदुद्भूतमात्मा च कथं तस्मिन्वदस्व नः ॥ ११८ ॥**

यदेतत्सकलसुरासुरमनुजादिसहितं जगदात्मनः[5] सकाशात्कथमुत्पन्नम्, आत्मा च तस्मिन् जगति कथं तिर्यङ्नरसरीसृपादिशरीरभाग्भवतीत्येतस्मिन्नर्थे विमुह्यामः । अतो मोहापनुत्त्यर्थमस्माकं विस्तरशो वदस्व ॥ ११८ ॥

एवं मुनिभिः पृष्टः प्रत्युत्तरमाह—

**मोहजालमपास्येह पुरुषो दृश्यते हि यः ।**

**सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः ॥ ११९ ॥**

**स आत्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः ।**

**विराजः सोऽन्नरूपेण यज्ञत्वमुपगच्छति ॥ १२० ॥**

१. क आत्मनश्च जग० । २. प्रा० ६९. । ३. ख. तस्माद्दुद्भूता० । ४. प्रा० ७०. ।
५. क नानरूम० ।

इह जगति यदिदं स्थूलकलेवरादावनात्मनि आत्माभिमानरूपं मोहजालं तदपास्य तद्व्यतिरिक्तो यः पुरुषोऽनेककरचरणलोचनः सूर्यवर्चाः अनन्तरश्मिः सहस्रकः बहुशिराः दृश्यते—एतच्च तत्तद्गोचरशक्त्याधारतयोच्यते तस्य साक्षात्कारादिसंबन्धाभावात्—स एवाऽऽत्मा यज्ञः प्रजापतिश्च, यतोऽसौ विश्वरूपः सर्वात्मकः। वैश्वरूप्यमेव कथमिति चेत्, यस्मादसौ विराजः पुरोडाशाद्यन्नरूपेण यज्ञत्वमुपगच्छति, यज्ञाच्च वृष्ट्यादिद्वारेण प्रजासृष्टिरित्येवं वैश्वरूप्यम् ॥ ११९ ॥ १२० ॥

एतदेव प्रपञ्चयति--

यो द्रव्यदेवतात्यागसंभूतो रस उत्तमः।
देवान्संतर्प्य स रसो यजमानं फलेन च ॥ १२१ ॥
संयोज्य वायुना सोमं नीयते रश्मिभिस्ततः।
ऋग्यजुःसामविहितं सारं धामोपनीयते ॥ १२२ ॥
स्वमण्डलादसौ सूर्यः सृजत्यमृतमुत्तमम्।
यज्जन्म सर्वभूतानामशनानशनात्मनाम् ॥ १२३ ॥
तस्मादन्नात्पुनर्यज्ञः पुनरन्नं पुनः क्रतुः।
एवमेतदनाद्यन्तं चक्रं संपरिवर्तते ॥ १२४ ॥

द्रव्यस्य चरुपुरोडाशादेर्देवतोद्देशेन त्यागाद्यो रसः—अदृष्टरूपम् आत्मनः परिणत्यन्तरमुत्तमः सकलजगज्जन्मबीजतयोत्कृष्टतमः संभूतः—स देवान्संप्रदानकारकभूतान्सम्यक्प्रीणयित्वा यजमानं चाभिलषितफलेन संयोज्य पवनेन प्रेर्यमाणश्चन्द्रमण्डलं प्रति नीयते, ततः शशिमण्डलाद्रश्मिभिर्भानुमण्डलं—"सैषा त्रय्येव विद्या तपति" इत्यभेदाभिधानात्—ऋग्यजुःसाममयं प्रत्युपनीयते, ततः स्वमण्डलादसौ सूर्योऽमृतरसं वृष्टिरूपमुत्तमं यत्सकलभूतानामशनानशनात्मनां चराचराणां जननिमित्तं तत्सृजति, तस्माद्वृष्टिसंपादितौषधिमयात्प्रजोत्पत्तिहेतो-

रन्नात्पुनर्यज्ञः, यज्ञाच्च पूर्वाभिहितभङ्ग्या पुनरन्नम्, अन्नाच्च पुनः क्रतु-रित्येवमेतदखिलं संसारचक्रं प्रवाहरूपेणोत्पत्तिविनाशविरहितं सम्यक्परिवर्तत इत्य-नेन क्रमेणाऽऽत्मनः सकाशादखिलजगदुत्पत्तिः, तत्र चाऽऽत्मनः स्वकर्मानुरूपविग्रह-परिग्रहः ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥

ननु यद्यात्मनः संसरणमनाद्यन्तं तर्हि अनिर्मुक्तिप्रसंग इत्यत आह—

**अनादिरात्मा संभूतिर्विद्यते नान्तरात्मनः ।**
**समवायी तु पुरुषो मोहेच्छाद्वेषकर्मजः ॥ १२५ ॥**

यद्यप्यात्मनोऽनादित्वात्संभूतिर्न विद्यतेऽन्तरात्मनः शरीरव्यापिनः, तथाऽपि पुरुषः शरीरेण समवायी भवति, भोगायतने सुखदुःखात्मकं भोग्यजातमुपभुङ्क्ते, इत्येवम्भूतेन संबन्धेन संबन्धी भवत्येव । स च समवायः मोहेच्छाद्वेषजनितकर्म-निर्मेयो न तु निसर्गजातः ; तस्य कार्यत्वेन विनाशोपपत्तेर्न निर्मुक्तिः ॥ १२५ ॥

आत्मनो जगज्जन्मेत्युक्तं; तत्प्रपञ्चयितुमाह—

**सहस्रात्मा मया यो व आदिदेव उदाहृतः ।**
**मुखबाहूरुपज्जाः स्युस्तस्य वर्णा यथाक्रमम् ॥ १२६ ॥**

**पृथिवी पादतस्तस्य शिरसो द्यौरजायत ।**
**नस्तः प्राणा दिशः श्रोत्रात्स्पर्शाद्वायुर्मुखाच्छिखी॥१२७॥**

**मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः ।**
**जघनादन्तरिक्षं च जगच्च सचराचरम् ॥ १२८ ॥**

योऽसौ सकलजीवात्मकतया प्रपञ्चात्मकतया च सहस्रात्मा बहुरूपस्तथा सकलजगद्धेतुतया आदिदेवो मया युष्माकमुदाहृतः , तस्य वदनभुजसक्थिचरण-जाता यथाक्रममग्रजन्मादयश्चत्वारो वर्णाः, तथा तस्य पादाद्भूमिः, मस्तकात्सुरसद्म, घ्राणात्प्राणाः, कर्णात्ककुभः, स्पर्शात्पवनो, वदनाद्धुतवहः, मनसः शशाङ्कः, नेत्रा-

द्गानुः, जघनाद्गगनं जङ्गमाजङ्गमात्मकं जगच्च ॥ १२६ ॥ १२७ ॥ १२८ ॥

अत्र चोदयन्ति—

**यद्येवं स कथं ब्रह्मन्पापयोनिषु जायते ।**
**ईश्वरः स कथं भावैरनिष्टैः संप्रयुज्यते ॥ १२९ ॥**

हे ब्रह्मन् योगीश्वर यद्यात्मैव जीवादिभावं भजते तर्हि कथमसौ पापयोनिषु मृगपक्ष्यादिषु जायते ? अथ मोहरागद्वेषादिदोषदुष्टत्वात्तत्र जन्मेत्युच्यते ? तच्च न—यस्मादीश्वरः स्वतन्त्रः कथमनिष्टैर्मोहरागादिभावैः संयुज्यते॥ १२९ ॥

किं च—

**करणेनान्वितस्यापि पूर्वज्ञानं[2] कथञ्चन ।**
**वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम् ॥ १३० ॥**

तथेदमप्यत्र दूषणम्। मनःप्रभृतिज्ञानोपायैः सहितस्यापि तस्याऽऽत्मनः पूर्वज्ञानं जन्मान्तरानुभूतविषयं कस्मान्नोत्पद्यते, तथा सर्वप्राणिगतां वेदनां सुखादिरूपां[3] स्वयं सर्वगोऽपि[4] सर्वदेहगतोऽपि कस्मान्न वेत्ति, तस्मादात्मैवेश्वरो[5] जीवादिभावं भजत इत्ययुक्तम्[6] ॥ १३० ॥

तत्र पूर्वचोद्यस्योत्तरमाह—

**अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः ।**
**दोषैः प्रयाति जीवोऽयं भवं[7] योनिशतेषु च ॥ १३१ ॥**

यद्यपीश्वरः स्वरूपेण सत्यज्ञानानन्दलक्षणः, तथाऽप्यविद्यासमावेशवशान्मोहरागादिभावैरभिभूयमानो नानाहीनयोनिजननसाधनं मानसादित्रिविधं कर्मनिचयमाचरति । तेन चान्त्यादिहीनयोनितामापद्यते । अन्त्याश्चण्डालादयः, पक्षिणः काकादयः, स्थावरा वृक्षादयः—तेषां भावोऽन्त्यपक्षिस्थावरता तां यथाक्रमेण मनोवाक्कायारब्धकर्मदोषैः जन्मसहस्रेष्वयं जीवः प्राप्नोति ॥ १३१ ॥

---

१. क. द्गगननं जङ्गमा० । २. ख. पूर्वं ज्ञानं० । ३. ग सुखदुःखादि० । ४. सर्वव्यापी० । ५. क. दात्मैवेश्वरजीवादि० । ६ ख. इत्युक्तम् । ७. ख. भवयोनि० ।

किं च—

अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम् ।
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ १३२ ॥

शरीरिणां जीवानां शरीरेषु भावा अभिप्रायविशेषाः सत्त्वाद्युद्रेकतारतम्याद्यथानन्तस्तथा तत्कार्याण्यपि रूपाणि कुब्जवामनत्वादीनि देहिनां सर्वयोनिषु भवन्ति ॥ १३२ ॥

ननु यदि कर्मजन्यानि कुब्जत्वादीनि तर्हि कर्मानन्तरमेव तैर्भवितव्यमित्याशङ्क्याऽऽह—

विपाकः कर्मणां प्रेत्य केषांचिदिह[1] जायते ।
इह वाऽमुत्र वैकेषां भावस्तत्र प्रयोजनम् ॥१३३॥

केषांचिज्ज्योतिष्टोमादिकर्मणां विपाकः फलं प्रेत्य देहान्तरे भवति, केषांचित्कारीर्यादिकर्मणां वृष्ट्यादि फलमिहैव भवति, केषांचिच्चित्रादीनां फलं पश्चाहिकमिह देहान्तरे वेत्यनियतं, न ह्यनन्तरमेव कर्मफलेन भवितव्यमिति शास्त्रार्थः । अत्र च कर्मणां शुभाशुभफलजनकत्वे सत्त्वादिभाव एव प्रयोजकभूतः तदायत्तत्वात्फलतारतम्यस्य ॥ १३३ ॥

मनोवाक्कायकर्मजैरन्त्यादियोनीः[2] प्राप्नोतीत्युक्तं; तत्प्रपञ्चयितुमाह—

परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥ १३४ ॥

परधनानि कथमपहरेयमिति आभिमुख्येन ध्यायन्, तथाऽनिष्टानि ब्रह्महत्यादीनि हिंसात्मकानि करिष्यामीति चिन्तयन्, वितथे असत्यभूते वस्तुनि अभिनिवेशः पुनःपुनः संकल्पः तद्वांश्च[3], चण्डालाद्यन्त्ययोनिषु जायते ॥ १३४ ॥

किं च—

पुरुषोऽनृतवादी च पिशुनः परुषस्तथा ।

१. क. तेषां चिदिह० । २. क न्त्यादियोनितां प्राप्नो० । ३. क. तद्वांश्चण्डा० ।

**अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥ १३५ ॥**

यस्त्वनृतवदनशीलः पुरुषः पिशुनः कर्णेजपः पुरुषः परोद्वेगकरभाषी अनिबद्धप्रलापी प्रकृतासङ्गतार्थवादी च बुद्धिपूर्वाबुद्धिपूर्वावृत्त्यादितारतम्याद्धीनोत्कृष्टेषु मृगपाक्षिषु जायते ॥ १३५ ॥

किं च—

**अदत्तादाननिरतः परदारोपसेवकः ।**

**हिंसकश्चाविधानेन स्थावरेष्वभिजायते ॥ १३६ ॥**

अदत्तादाननिरतः[1] परधनापहारप्रसक्तः, परदारप्रसक्तश्चा, अविहितमार्गेण प्राणिनां घातकश्च, दोषगुरुलघुभावतारतम्यात्तरुलताप्रतानादिस्थावरेषु जायते[2] १३६ ॥

सत्त्वादिगुणपरिपाकमाह—

**आत्मज्ञः शौचवान्दान्तस्तपस्वी विजितेन्द्रियः ।**

**धर्मकृद्वेदविद्यावित्सात्त्विको देवयोनिताम् ॥ १३७ ॥**

आत्मज्ञो विद्याधनाभिजनाद्यभिमानरहितः, शौचवान् बाह्याभ्यन्तरशौचयुक्तः, दान्त उपशमान्वितः, तपस्वी कृच्छ्रादितपोयुक्तः, तथेन्द्रियार्थेष्वप्रसक्तः, नित्यनैमित्तिकधर्मानुष्ठाननिरतः, वेदार्थवेदी च यः स सात्विकः । स च सत्त्वोद्रेकतारतम्यवशादुत्कृष्टोत्कृष्टतरसुरयोनितां प्राप्नोति ॥ ११७ ॥

किं च —

**असत्कार्यरतोऽधीरो आरम्भी विषयी च यः ।**

**स राजसो मनुष्येषु मृतो जन्माधिगच्छति[3] ॥ १३८ ॥**

असत्कार्येषु तूर्यवादित्रनृत्यादिष्वभिरतो यः, तथा अधीरो[4] व्यग्रचित्तः, आरम्भी[5] सदाकार्याकुलो विषयेष्वतिप्रसक्तश्च, स रजोगुणयुक्तः । तद्गुणतारतम्याद्धीनोत्कृष्टमनुष्यजातिषु मरणान्तरमुत्पत्तिं प्राप्नोति ॥ १३८ ॥

---

१. क. अदत्तादाननिरतः अदत्तपरध० । २. क वरेषु च जाय० । ३. क. जन्मादिगच्छ० । ४. अधीर इति नास्ति । ५. क. आरम्भीति पदं नास्ति ।

तथा—

**निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।**
**प्रमादवान्भिन्नवृत्तो भवेत्तिर्यक्षु तामसः ॥ १३९ ॥**

यः पुनर्निद्राशीलः, प्राणिपीडाकरो, लोभयुक्तश्च, तथा नास्तिको धर्मादेर्निन्दकः, याचनशीलः, प्रमादवान् कार्याकार्यविवेकशून्यः विरुद्धाचारश्च—असौ तमोगुणयुक्तः तत्तारतम्याद्धीनहीनतरपश्वादियोनिषु जायते ॥ १३९ ॥

पूर्वोक्तमुपसंहरति—

**रजसा तमसा चैवं समाविष्टो भ्रमन्निह ।**
**भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥ १४० ॥**

य[1] एवमविद्याविद्धोऽयमात्मा रजस्तमोभ्यां सम्यगाविष्ट इह संसारे पर्यटन् नानाविधदुःखप्रदैर्भावैरभिभूतः पुनःपुनः संसारं देहग्रहणं प्राप्नोतीति ईश्वरः स कथं भावैरनिष्टैः संप्रयुज्यत इत्यस्य चोद्यस्यानवकाशः ॥ १४० ॥

यदपि "करणैरन्वितस्यापि" इति द्वितीयं चोद्यं तस्योत्तरमाह—

**मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ।**
**तथाऽविपक्वकरण आत्मा[2] ज्ञानस्य न क्षमः ॥ १४१ ॥**

यद्यप्यात्माऽन्तःकरणादिज्ञानसाधनसंपन्नः, तथाऽपि जन्मान्तरानुभूतार्थावबोधे न समर्थः अविपक्वकरणो रागादिमलाक्रान्तचित्तो यस्मात् ; यथा दर्पणो मलच्छन्नो रूपज्ञानोत्पादनसमर्थो न भवति ॥ १४१ ॥

ननु प्राग्भवीयज्ञानस्यापि आत्मप्रकाशत्वात् तस्य च स्वतः सिद्धत्वान्नानुपलम्भो युक्त इत्याशङ्क्याऽऽह—

**कट्वेर्वारौ यथाऽपक्वे मधुरः सन् रसोऽपि न ।**
**प्राप्यते ह्यात्मनि तथा नापक्वकरणे ज्ञता ॥ १४२ ॥**

१. ख. य एवमित्यत्र य इति नास्ति । २. ख. आत्मज्ञान॰ ।

अपक्वे कटुर्वारै तिक्तकर्कटिकायां विद्यमानोऽपि मधुरो रसः यथा नोपलभ्यते तथाऽऽत्मन्यपक्वकरणे विद्यमानाऽपि ज्ञता ज्ञातृता प्रागभवीयवस्तुगोचरा न प्राप्यते ॥ १४२ ॥

"वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम्" इति यदुक्तं तत्रोत्तरमाह—

**सर्वाश्रयां निजे देहे देही विन्दति वेदनाम् ।**
**योगी मुक्तश्च सर्वासां यो न चाऽऽप्नोति वेदनाम्॥१४३॥**

यः पुनर्देही देहभिमानयुक्तः स सर्वाश्रयामाध्यात्मिकादिबहुरूपां वेदनां स्वकर्मोपार्जिते एव देहे प्राप्नोति न देहान्तरगतां भोगायतनारम्भादृष्टवैलक्षण्यादेव। यस्तु योगी मुक्तो मुक्ताहङ्कारादिः सकलक्षेत्रज्ञगतानां सुखदुःखादिसंविदां वेदिता भवति—परिपक्वकरणत्वात् ॥ १४३ ॥

नन्वेकस्मिन्नात्मनि सुरनरादिदेहेषु भेदप्रत्ययो न घटत इत्याशङ्क्याऽऽह—

**आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।**
**तथाऽऽत्मैको ह्यनेकश्च जलाधारेष्विवांशुमान् ॥ १४४ ॥**

यथैकमेव गगनं कूपकुम्भाद्युपाधिभेदभिन्नं नानेवानुभूयते, यथा वा भानुरेकोऽपि भिन्नेषु जलभाजनेषु करकमणिकमल्लिकादिषु नानेवानुभूयते,—तथैकोऽप्यात्मा अन्तःकरणोपाधिभेदेन नाना प्रतीयते। द्वितीयदृष्टान्तोपादानमात्मभेदस्यापारमार्थिकत्वद्योतनार्थम् ॥ १४४ ॥

"पञ्चधातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः" इत्याद्युक्तमर्थमुपसंहृत्याऽऽह—

**ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः ।**
**इमे लोका एष चाऽऽत्मा तस्माच्च सचराचरम् ॥ १४५ ॥**

ब्रह्म आत्मा, खं गगनम्, अनिलो वायुः, तेजोऽग्निः, जलं प्रसिद्धं,

---

१. ख. गोचरता० । २. प्रा०. १३०.। ३. ख. योगमाप्नो० । "सर्वासां ज्ञातानाप्नोति" इत्यपरार्के आनन्दाश्रममुद्रिते पाठः । ४. ख. क्षेत्रगतानां । ५. प्रा० ७२. ।

भूश्चेत्येते वातादिधातव एव शरीरं व्याप्य धारयन्तीति धातवोऽभिधीयन्ते । तत्र खादयः पञ्च धातवः लोक्यन्ते दृश्यन्ते इति लोकाः, जडा इति यावत् । एष चिद्धातुरात्मा । एतस्माज्जडाजडसमुदायात्स्थावरजङ्गमात्मकं जगदुत्पद्यते ॥१४५॥

कथमसावात्मा जगत्सृजतीत्याह—

मृद्दण्डचक्रसंयोगात्कुम्भकारो यथा घटम् ।
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १४६ ॥
हेममात्रमुपादाय रूपं[3] वा हेमकारकः ।
निजलालासमायोगात्कोशं वा कोशकारकः ॥ १४७ ॥
कारणान्येवमादाय तासुतास्विह योनिषु ।
सृजत्यात्मानमात्मा च संभूय करणानि च ॥ १४८ ॥

यथा हि कुलालो मृच्चक्रचीवरादिकं करणजातमुपादाय करकशरावादिकं नानाविधं कार्यजातं रचयति, यथा वा वर्धकिस्तृणमृत्काष्ठैः परस्परसापेक्षैः एकं गृहाख्यं कार्यं करोति, यथा वा हेमकारः केवलं हेमोपादाय हेमानुगतमेव कटकमुकुटकुण्डलादि कार्यमुत्पादयति, यथा वा कोशकारकः कीटविशेषो निजलालयाऽऽरब्धमात्मबन्धनं कोशाख्यमारभते, तथाऽऽत्माऽपि पृथिव्यादीनि साधनानि परस्परसापेक्षाणि तथा करणान्यपि श्रोत्रादीन्युपादाय अस्मिन्संसारे तासुतासु सुरादियोनिषु स्वयमेवाऽऽत्मानं निजकर्मबन्धबद्धं[4] शरीरितया[5] सृजति॥ १४६ ॥ १४७ ॥ १४८ ॥

किं पुनर्वैषयिकज्ञानेन्द्रियव्यतिरिक्तात्मसद्भावे प्रमाणमित्याशङ्क्याऽऽह—

महाभूतानि सत्यानि यथाऽऽत्माऽपि[6] तथैव हि ।
कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति ॥ १४९ ॥

१. क. भूश्चोपेतं दावाग्निधातव इव शरी० । २. ख. धातवः शरीरं व्याप्य० । ३. क. रूप्यं वा० । ४. ख. निजबद्धं श० । ५. क. शरीरतया० । ६. क. यथाऽऽत्मा हि तथै० ।

वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम्।

यथा हि पृथिव्यादिमहाभूतानि सत्यानि—प्रमाणगम्यत्वात्—तथाऽऽत्माऽपि सत्यः। अन्यथा यदि बुद्धीन्द्रियव्यतिरिक्तो ज्ञाता ध्रुवो न स्यात्तर्हि एकेन चक्षुरिन्द्रियेण दृष्टं वस्तु अन्येन स्पर्शनेन्द्रियेण को विजानाति 'यमहमद्राक्षं तमहं स्पृशामि' इति ? तथा कस्यचित्पुरुषस्य वाचं पूर्वं श्रुत्वा पुनः श्रूयमाणां वाचं तस्य वागियमिति कः प्रत्यभिजानाति ? तस्मात् ज्ञानेन्द्रियातिरिक्तो ज्ञाता ध्रुव इति सिद्धम् ॥ १४९ ॥ १४९ ॥

किं च—

अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः ॥ १५० ॥

जातिरूपवयोवृत्तविद्यादिभिरहङ्कृतः।

शब्दादिविषयोद्योगं कर्मणा मनसा गिरा ॥ १५१ ॥

यद्यात्मा ध्रुवो न स्यात् तर्ह्यनुभूतार्थगोचरा स्मृतिः पूर्वानुभवभावतसंस्कारोद्बोधानिबन्धना कस्य भवते्, न ह्यन्येन दृष्टे वस्तुनि अन्यस्य स्मृतिरुपपद्यते ; तथा कः स्वप्नज्ञानस्य कारकः, न हीन्द्रियाणामुपरतव्यापाराणां तत्कारकत्वम् ; तथाऽहमेवाभिजनत्वादिसंपन्न इत्येवंविधानुसंधानप्रत्ययः कस्य भवति स्थिरात्मव्यतिरिक्तस्य; तथा शब्दस्पर्शादिविषयोपभोगासिद्ध्यर्थमुद्योगं मनावाक्कायैः कः कुर्यात् ; —तस्मादपि बुद्धीन्द्रियव्यतिरिक्त आत्मा स्थितः ॥ १५० ॥ १५० ॥

उपासनाविशेषविध्यर्थं संसारस्वरूपं विवृण्वन्नाह—

स संदिग्धमतिः कर्मफलमस्ति न वेति वा।

विप्लुतः सिद्धमात्मानमसिद्धोऽपि हि मन्यते ॥ १५२ ॥

योऽसौ पूर्वोक्त आत्मा विप्लुतोऽहङ्कारदूषितः स सकलकर्मसु फलमस्ति न वेति संदिग्धमतिर्भवति तथाऽसिद्धोऽप्यकृतार्थोऽपि सिद्धमेव कृतार्थमात्मानं मन्यते ॥ १५२ ॥

१. ख. विधोऽनुसन्धा०।

किं च—

मम दाराः सुतामात्या अहमेषामिति स्थितिः।
हिताहितेषु भावेषु विपरीतमतिः सदा ॥ १५३ ॥

तस्य विप्लुतमतेः 'मम पुत्रकलत्रप्रेष्यादयोऽहमेषाम्' इत्यतीव ममताकुलास्थितिर्भवति तथा हिताहितकरे कार्यप्रकरे स विप्लुतमतिर्विपरीतमतिः सदा भवेत् ॥ १५३ ॥

किं च—

ज्ञेयज्ञे प्रकृतौ चैव विकारे[1] चाऽविशेषवान्।
अनाशकानलापातजलप्रपतनो[2]द्यमः ॥ १५४ ॥
एवंवृत्तोऽविनीतात्मा वितथाभिनिवेशवान्।
कर्मणा द्वेषमोहाभ्यामिच्छया चैव बध्यते ॥ १५५ ॥

ज्ञेयं जानातीति ज्ञेयज्ञः, तस्मिन्नात्मनि प्रकृतौ चाऽऽत्मनो गुणसाम्यावस्थायां विकारे चाहङ्कारादावविशेषवान् विवेकानभिज्ञो भवति, तथाऽनशनहुताशनाम्बुप्रवेश[3]विषाशनादिषु विप्लववशात्कृतप्रयत्नो भवेत्। एवं नानाप्रकाराकार्यप्रवृत्तोऽविनीतात्माऽसं[4]यतात्मा असत्कार्याभिनिवेशयुक्तः सन् तत्कृतकर्मजातेन रागद्वेषाभ्यां मोहेन च बध्यते ॥ १५४ ॥ १५५ ॥

शरीरग्रहणद्वारेण कथं पुनस्तस्य विस्र[5]म्भो भवतीत्यत आह—

आचार्योपासनं वेदशास्त्रार्थेषु विवेकिता।
तत्कर्मणामनुष्ठानं संगः सद्भिर्गिरः शुभाः ॥ १५६ ॥
स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम्।
त्यागः परिग्रहाणां च जीर्णकाषायधारणम् ॥ १५७ ॥

१. ख. वारे वाऽविशे०। २. ख. तनोद्यमी०। ३. ख. विशेषाशनादि०। ४. ख. यतस्मा अस०। ५. क. विसंसो भव०।

विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनम् ।
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥ १५८ ॥

नीरजस्तमसा सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धः सत्त्वयोग्यमृती भवेत् ॥ १५९ ॥

विद्यार्थमाचार्यसेवा, वेदान्तार्थेषु पातञ्जलादियोगशास्त्रार्थेषु च विवेकित्वं तत्प्रतिपादितध्याना[1]दिकर्मणामनुष्ठानं, सत्पुरुषसंगः, प्रियहितवचनत्वं, ललनालोकनालम्भयोः परित्यागः, सर्वभूतेष्वात्मवद्दर्शनं समत्वदर्शनं, परिग्रहाणां च पुत्रक्षेत्रकलत्रादीनां त्यागः, जीर्णकाषायधारणं, तथा शब्दस्पर्शादिविषयेषु श्रोत्रादीन्द्रियाणां प्रवृत्तिनिरोधः, स्तन्द्रानिद्रानुकारिणी आलस्यमनुत्साहः—तयोर्विशेषेण त्यागः, शरीरकस्य परिसंख्यानमस्थिराशुचित्वादिदोषानुसंधानं, तथा सकलगमनादिषु सूक्ष्मप्राणिवधादिदोषपरामर्शः, तथा रजस्तमोविधुरता, प्राणायामादिभिर्भावशुद्धिः, निःस्पृहता विषयेष्वनभिलाषः, शमो बाह्यान्तःकरणसंयमः,—एतैराचार्योपासनादिभिरुपायैः सम्यक् शुद्धः केवलसत्त्वयुक्तो ब्रह्मोपासनेनामृती भवेत् मुक्तो भवति ॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥

कथममृतत्वप्राप्तिरित्यत आह—

तत्त्वस्मृतेरुपस्थानात्सत्त्वयोगात्परिक्षयात् ।
कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्तते ॥ १६० ॥

आत्माख्यतत्त्वस्मृतेरात्मनि निश्चलतयोपस्थानात् सत्त्वशुद्धियोगात्केवलसत्त्वगुणयोगात्कर्मबीजानां परिक्षयात् सत्पुरुषाणां च संबन्धात् आत्मयोगः प्रवर्तते ॥ १६० ॥

किं च—

शरीरसंक्षये यस्य मनः सत्त्वस्थमीश्वरम् ।
अविप्लुतमते[2] सम्यक् [3]स जातिस्मरतामियात् ॥ १६१॥

१. ख. ध्यानकर्म० । २. ख. प्लुतमतिः स० । ३. ख. सम्यग्जातिसंस्मर० ।

यस्य पुनर्योगिनोऽविप्लुतमतेः शरीरसंक्षयसमये मनः सत्त्वयुक्तं सम्यगेकाग्रतयेश्वरं प्रति व्याप्रियते स यद्युपासनाप्रयोगाप्रवीणतयाऽऽत्मानं नाधिगच्छति, तर्हि विशिष्टसंस्कारपाटववशेन जात्यन्तरानुभूतक्रिमिकीटादिनानागर्भवासादिसमुद्भूतदुःखस्मरत्वं प्राप्नुयात्। तत्स्मरणेन च जातोद्वेगस्तद्विच्छेदकारिणि मोक्षे प्रवर्तते॥१६१॥

यस्त्वपटुसंस्कारतया पूर्वां जातिं न स्मरति तस्य का गतिरित्यत्राऽऽह—

**यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम्।**
**नानारूपाणि कुर्वाणस्तथाऽऽत्मा कर्मजास्तनूः॥ १६२॥**

भरतो नटः स यथा रामरावणादिनानारूपाणि कुर्वाणः सितासितपीतादिभिर्वर्णैरात्मनस्तनुं वर्णयति रचयति तथैवाऽऽत्मा तत्तत्कर्मफलोपभोगार्थं कुब्जवामनादिनानारूपाणि कर्मनिमित्तानि कलेबराण्यादत्ते॥ १६२॥

किं च—

**कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च।**
**गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मनः॥ १६३॥**

न केवलं कर्मैव कुब्जवामनत्वादिनिमित्तं किंतु कालकर्मणी स्वकारणैस्वपितृबीजदोषश्चेति सर्वमेतत्सहकारिकारणम्। एतेन दृष्टादृष्टस्वरूपेण कारणकलापेन गर्भस्याङ्गहीनत्वादिविकारो जन्मन आरभ्यानियतकालो दृष्टः॥ १६३॥

ननु प्राकृतिकप्रलयावसरे महदाद्यखिलविकारविनाशे कर्मणो नाशात्कथं तन्निबन्धनः पथमपिण्डपरिग्रह इत्यशङ्क्याऽऽह—

**अहङ्कारेण मनसा गत्या कर्मफलेन च।**
**शरीरेण च नाऽऽत्माऽयं मुक्तपूर्वः कथंचन॥ १६४॥**

मनोहङ्कारौ प्रसिद्धौ, गतिः संसरणहेतुभूतो दोषराशिः, कर्मफलं धर्मा-

१. ख. तोद्वेगतस्तीद्व०। २. ख. यत्स्वयं दुःसंस्का०। ३. ख गतिरित्याह०। ४. ख. जन्मतः०। ५. ग. स्वकरणपितृबीज०। ख. र्मणीस्वपितृकारणबीजण० क. स्वकरस्वपितृबीज०।

धर्मरूपं शरीरं लिङ्गात्मकम्,—एतैरहङ्कारादिभिरयमात्मा कदाचिदपि न मुच्यते यावन्मोक्षः ॥ १६४ ॥

ननु पतिनियतकर्मणां जीवानां प्रतिनियतकालमेवोपरतिर्युक्ता[1] न पुनः संग्रामादौ युगपदकाले पाणसंक्षय इत्याशङ्क्याऽऽह—

वर्त्याधारस्नेहयोगाद्[2]यथा दीपस्य संस्थितिः ।
विक्रियाऽपि च दृष्टैवमकाले प्राणसंक्षयः ॥ १६५ ॥

यथा हि खलु तैलक्लिन्नानेकवार्तिवर्तिनीनां नानाज्वालानां युगपत्संस्थितिः तासां च स्थितीनां यदुत्तर[3]दाधूयमानपवनाहतिरूपविपत्तिहेतूपनिपातयौगपद्याद्युगपदुपरातिर्यथा भवति तथैव रथिसारथिवाजिकुञ्जरादिजीवानां युद्धाद्युपरतिहेतुयौगपद्यादकालेऽपि प्राणपरिक्षयो नानुपपन्नः । एतदुक्तं भवति— प्रतिनियतकालविपत्तिहेतुभूतादृष्टस्य तद्विरुद्धकार्याकरदृष्टहेतूपनिपातेन प्रतिबन्ध इति ॥ १६५ ॥

मोक्षमार्गमाह—

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।
सितासिताः कर्बु[4]नीलाः कपिला पीत[5]लोहिताः ॥ १६६ ॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्य[6]मण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ १६७ ॥

योऽसौ हृदि प्रदीपवत् स्थितो जीवःतस्यानन्ता रश्मयो नाडयः सुखदुःखहेतुभूता "द्वासप्ततिसहस्राणि" इत्यादिनोक्ताः सितासितकर्बुरादिरूपाः सर्वतः स्थिताः, तेषामेको रश्मि[7]रूर्ध्वंव्यवस्थितः योऽसौ मार्तण्डमण्डलं निर्भिद्य हिरण्यगर्भनिलयं चातिक्रम्य वर्तते, तेन जीवः परां गतिमपुनरावत्तिलक्षणां प्राप्नोति ॥ १६६ ॥ १६७ ॥

१. ग. युक्ताऽपुनः संग्रा० । २. ख. वर्त्याधारः स्नेह० । ३. ख. तीनां तदुत्तरं दोधू० । क. तीनां यदुत्तरं दोधू० । ४. ख. कर्बुरूपाः० । ५. ख. कपिलानीललो हि० । ६. प्रा० १०८. । ७. ख. रूर्ध्वं व्यवस्थ० ।

स्वर्गमार्गमाह—

यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।
तेन देवशरीराणि सधामानि प्रपद्यते ॥ १६८ ॥

यदस्याऽऽत्मनो मुक्तिमार्गभूताद्रश्मेरन्यद्रश्मिशतमूर्ध्वाकारमेव व्यवस्थितं—तेन सुरशरीराणि तैजसानि सुखैकभोगाधिकरणानि सधामानि कनकरजतरत्नरचितामरपुरसाहितानि प्रपद्यते ॥ १६८ ॥

संसरणमार्गमाह—

येऽनेकरूपाश्चाधस्ताद्रश्मयोऽस्यं मृदुप्रभाः ।
इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥ १६९ ॥

ये पुनस्तस्याधस्ताद्रश्मयो मृदुप्रभाः तैरिह फलोपभोगार्थं संसारे संसरति अवशः स्वकृतकर्मपरतन्त्रः ॥ १६९ ॥

भूतचैतन्यवादिपक्षं परिजिहीर्षुराह—

वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च ।
आर्त्या गत्या तथाऽगत्या सत्येन ह्यनृतेन च ॥१७०॥
श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः ।
निमित्तशाकुनज्ञानग्रहसंयोगजैः फलैः ॥ १७१ ॥
तारानक्षत्रसंचारैर्जागरैः स्वप्नजैरपि ।
आकाशपवनज्योतिर्जलभूतिमिरैस्तथा ॥ १७२ ॥
मन्वन्तरैर्युगप्राप्त्या मन्त्रैषधिफलैरपि ।
वित्तात्मानं वेद्यमानं कारणं जगतस्तथा ॥ १७३ ॥

१. ख. येनैकरूपा० । ग० येनेकरूपाधस्ता० । २. ख. रश्मयश्च मृदु० । ३. ग. येन पुन० ।

वेदैः "स एष" "नेति नेति" इति "आत्मा" इति "अस्थूलमनण्वह्रस्वमपाणिपादम्" इत्यादिभिः, शास्त्रैश्च मीमांसान्वीक्षिक्यादिभिः, विज्ञानैश्च 'ममेदं शरीरम्' इत्यादिदेहव्यतिरिक्तात्मानुभवैः, तथा जन्ममरणाभ्यां जन्मान्तरानुष्ठितधर्माधर्मनियताभ्यां देहातिरिक्तात्मानुमानम्। आर्त्या जन्मान्तरगतकर्मानुष्ठातृनियतया, तथा गमनागमनाभ्यां ज्ञानेच्छाप्रयत्नाधारानियताभ्यामपि, भौतिकदेहातिरिक्तात्मानुमानम्। न हि देहस्य चैतन्यादि संभवति; यतः कारणगुणप्रक्रमेण[1] कार्यद्रव्ये वैशेषिकगुणारम्भो दृष्टः। न च तत्कारणभूतपार्थिवपरमाण्वादिषु चैतन्यादिसमवायः संभवति—तदारब्धस्तम्भकुम्भादिभौतिकेष्वनुपलम्भात्। न च[2] मन्दशक्तिवदुदकादिद्रव्यान्तरसंयोगज इति वाच्यम्—शक्तेः साधारणगुणत्वात्। अतो भौतिकदेहातिरिक्तै[3]श्चैतन्यादिसमवाय्यङ्गीकर्तव्यः। सत्यानृते प्रसिद्धे, श्रेयो हितप्राप्तिः, सुखदुःखे आमुष्मिके, तथा शुभकर्मानुष्ठानमशुभकर्मपरित्यागः,—एतैश्च ज्ञाननियतैः देहातिरिक्तात्मानुमानम्। निमित्तं भूकम्पादि, शाकुनं ज्ञानं पिङ्गलादिपतत्रिचेष्टालिङ्गकं ज्ञानं, ग्रहाः सूर्यादयः तत्संयोगजैः फलैः, तारा अश्विन्यादिव्यतिरिक्तानि ज्योतींषि, नक्षत्राण्याश्वयुक्प्रभृतीनि,—एतेषां संचारैः शुभाशुभफलद्योतनैः, जागरैर्जागरावस्थाजन्यैश्च सच्छिद्रादित्यादिदर्शनैः, तथा स्वप्नजैः खरवाराहयुक्तरथारोहणादिज्ञानैः, तथा आकाशाद्यैश्च जीवोपभोगार्थतया सृष्टैः, तथा मन्वन्तरप्राप्त्या युगान्तरप्राप्त्या, देहेऽनुपपद्यमानतया तथा मन्त्रौषधिफलैः प्रेक्षापूर्वकैः क्षुद्रकर्माद्यैः साक्षात्परम्परया वा देहेऽनुपपद्यमानैर्वेद्यमानं हे मुनयो वित्त जानीत ॥ १७० ॥ १७१ ॥ १७२ ॥ १७३ ॥

किं च—

**अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः।**
**इन्द्रियान्तरसंचार इच्छा धारणजीविते ॥ १७४ ॥**

**स्वर्गः स्वप्नश्च भावानां प्रेरणं मनसो गतिः।**
**निमेषश्चेतना यत्न[4] आदानं पाञ्चभौतिकम् ॥ १७५ ॥**

१. ख. गुणप्रोक्तक्रमे०। २. ख. न चमदश०। ३. ख. रित्तचैतन्या०। ४. ग तनायत्त आदा०।

यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः ।
तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः ॥ १७६ ॥

अहङ्कृतिरहङ्कारः, स्मृतिः प्राग्भवीयानुभवभावितसंस्कारोद्बोधनिबन्धना स्तन्यपानादिगोचरा, सुखमैहिकं, धृतिर्धैर्यम्, इन्द्रियान्तरेण[1] दृष्टेऽर्थे इन्द्रियान्तरस्य संचारो 'यमहमद्राक्षं तमहं स्पृशामि' इत्येवमनुसन्धानरूप इन्द्रियान्तरसंचारः–अत्रेच्छाप्रयत्नचैतन्यानां स्वरूपेण लिङ्गत्वं, पूर्वश्लोके तु गमनसत्यवचनादिहेतुतयाऽऽर्थिकं लिङ्गत्वमित्यपौनरुक्त्यम्—धारणं शरीरस्य, जीवितं प्राणधारणम्, स्वर्गोऽनियतदेहान्तरोपभोग्यः सुखविशेषः, स्वप्नः प्रसिद्धः—पूर्वश्लोके तु स्वप्नस्य शुभफलद्योतनतया[2] लिङ्गत्वम्, अत्र स्वरूपेणेत्यपौनरुक्त्यम्[3] — भावानामिन्द्रियादीनां प्रेरणं, मनसो गतिश्चेतनाधिष्ठानव्याप्ता, निमेषः प्रसिद्धः, तथा पञ्चभूतानामुपादानम्। यस्मादेतानि लिङ्गानि भूतेष्वनुपपन्नानि साक्षात्परम्परया वा परमात्मनो द्योतकानि दृश्यन्ते तस्मादस्ति देहातिरिक्त आत्मा सर्वग ईश्वर इति सिद्धम्[4] ॥ १७४ ॥ १७५ ॥ १७६ ॥

क्षेत्रज्ञस्वरूपमाह[5]—

बुद्धीन्द्रियाणि सार्थानि मनःकर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥ १७७ ॥
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते ।
ईश्वरः सर्वभूतस्थः सन्नसन्सदसच्च यः ॥ १७८ ॥

बुद्धीन्द्रियाणि श्रोत्रादीनि सार्थानि शब्दादिविषयसहितानि, मनः, कर्मेन्द्रियाणि वागादीनि, तथाऽहङ्कारो, बुद्धिश्च निश्चयात्मिका, पृथिव्यादीनि पञ्च भूतानि, अव्यक्तं प्रकृतिरित्येतत् क्षेत्रमस्य योऽसावीश्वरः सर्वगतः अत एव सद्रूपः प्रमाणान्तराग्राह्यत्वात्, असन् अस्पष्टप्रतीतिकत्वात्, सदसद्रूपोऽसावात्मा क्षेत्रज्ञ इति निगद्यते ॥ १७७ ॥ १७८ ॥

---

१. ख. न्तरेण हि दृष्टे० । २. ख. द्योतनायालिङ्ग० । ३. ख. रुक्तयन् । तथा भावान
४. ख. इति प्रसिद्धम् । ५ ग. क. क्षेत्रस्वरूप० ।

बुद्ध्यादेरुत्पत्तिमाह—

बुद्धेरुत्पत्तिरव्यक्ता ततोऽहङ्कारसंभवः।
तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि च ॥ १७९ ॥

सत्त्वादिगुणसाम्यमव्यक्तं; ततस्त्रिप्रकारायाः सत्त्वरजस्तमोमय्या बुद्धेरुत्पत्तिः। तस्याश्च वैकारिकस्तैजसो भूतादिरिति त्रिविधोऽहङ्कार उत्पद्यते। तत्र तामसाद्भूतादिसंज्ञकादहङ्कारात्तन्मात्राणि, आदिग्रहणाद्गगनादीनि,—तानि चैकोत्तरगुणान्युत्पद्यन्ते—चशब्दाद्वैकारिकतैजसाभ्यां बुद्धिकर्मेन्द्रियाणामुत्पत्तिः ॥ १७९ ॥

गुणस्वरूपमाह—

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः।
यो यस्मान्निःसृतश्चैषां स तस्मिन्नेव लीयते ॥ १८० ॥

तेषां गगनादिपञ्चभूतानाम् एकोत्तरवृद्ध्या पञ्च शब्दादयो गुणा वेदितव्याः। एषां च बुद्ध्यादिविकाराणां मध्ये यो यस्मात्प्रकृत्यादेरुत्पन्नः स तस्मिन्नेव सूक्ष्मरूपेण प्रलयसमये प्रलीयते ॥ १८० ॥

प्रकरणार्थमुपसंहरन्नाह—

यथाऽऽत्मानं सृजत्यात्मा तथा वः कथितो मया।
विपाकात्त्रिप्रकाराणां कर्मणामीश्वरोऽपि सन् ॥ १८१ ॥

सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्तिताः।
रजस्तमोभ्यामाविष्टश्चक्रवद्भ्राम्यते ह्यसौ १८२ ॥

अनादिरादिमांश्चैव स एव पुरुषः परः।
लिङ्गेन्द्रियग्राह्यरूपः सविकार उदाहृतः ॥ १८३ ॥

मानसादित्रिप्रकारकर्मणां विपाकादीश्वरोऽपि सन्नात्मा यथाऽऽत्मानं सृजति

१. ख. स्मान्निसृत०। २. ग. प्रलयसमीपे प्रमीयते।

तथा युष्माकं कास्थितः । सत्त्वादयश्च गुणास्तस्यैवाविद्याविष्टस्य कीर्तिताः । तथा स एव रजस्तमोभ्यामाविष्टश्चक्रवदिह संसारे भ्राम्यतीत्यपि कथितम् । स एवानादिः परमपुरुषः शरीरग्रहणेनाऽऽदिमान् कुब्जवामनात्वादिविकारसहितः यथा स्थूलाकारतया परिणतो लिङ्गैरिन्द्रियैश्च ग्राह्यरूप उदाहृतः ॥१८१॥१८२॥१८३॥

स्वर्गिमार्गमाह—

**पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम् ।**
**तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति ॥ १८४ ॥**

अजवीथी अमरमार्गः अगस्त्यस्य तस्य च यदन्तरमसौ पितृयानः, तेनाग्निहोत्रिणः स्वर्गकामाः स्वर्गं प्राप्नुवन्ति ॥ १८४ ॥

किं च—

**ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ।**
**तेऽपि तेनैव मार्गेण सत्यव्रतपरायणाः ॥ १८५ ॥**

ये च दानादिस्मार्तकर्मपराः सम्यग्दम्भरहिताः तथाऽष्टाभिरात्मगुणैः—"दया क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा" इति गौतमादिप्रतिपादितैर्युक्ताः, तथा ये च सत्यवचननिरताः तेऽपि तेनैव पितृयानेन सुरसदनमाप्नुवन्ति ॥ १८५ ॥

ननु नैमित्तिकादि प्रतिसंचरेऽखिलाध्यापकप्रलयाद्विदितवेदास्तस्योपरितना जनाः कथमग्निहोत्रादिकं कर्म करिष्यन्ति, कथन्तरां चाकृतकर्माणः स्वर्गमार्गमधिरोक्ष्यन्तीत्यत आह—

**तत्राष्टाशीतिसाहस्रमुनयो गृहमेधिनः ।**
**पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥ १८६ ॥**

तत्र पितृयानेऽष्टाशीतिसहस्रसंख्या मुनयो गृहस्थाश्रमिणः पुनरावृत्तिधर्माणः

१. ख. रतस्यै वाऽविशिष्टस्य० । २. ख. वामनादि विकार० । ३. ख. ग्राह्यस्वरूप० । ग. ग्राह्यरूपदाहृ० । ४.—८. २३. ।

सर्गादौ वेदस्योपदेशकतया धर्मतरुप्रादुर्भावे बीजभूताः सन्तोऽग्निहोत्रादिधर्मप्रवर्तकाः। अतो न प्रागुदितदोषसमासङ्गः ॥ १८६ ॥

किं च—

**सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः ।**
**तावन्त एव मुनयः सर्वारम्भविवर्जिताः ॥ १८७ ॥**
**तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया ।**
**तत्र गत्वाऽवतिष्ठन्ते यावदाभूतसम्प्लवम् ॥ १८८ ॥**

सप्तर्षयः प्रसिद्धाः, नागवीथी ऐरावतपथः; तदन्तराले तावन्त एव अष्टाशीतिसहस्रसंख्या मुनयः सर्वारम्भविवर्जिताः केवलज्ञाननिष्ठाः तपोब्रह्मचर्ययुक्ताः तथा सङ्गत्यागिनो देवलोकं समाश्रिताः आभूतसम्प्लवं प्राकृतप्रलयपर्यन्तमवतिष्ठन्ते । तत्र च स्थिताः सृष्ट्यादावाध्यात्मिकधर्माणां प्रवर्तकाः ॥१८७॥ १८८॥

कथंभूतास्ते मुनय इत्यत आह—

**यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।**
**श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्॥१८९॥**

यतो द्विविधादपि मुनिसमूहाच्चत्वारो वेदाः पुराणाङ्गविद्योपनिषदश्च नित्यभूता एवाध्येतृपरम्परायाताः प्रवृत्ताः, तथा श्लोका इतिहासात्मकाः, सूत्राणि च शब्दानुशासनमीमांसागोचराणि, भाष्याणि च सूत्रव्याख्यारूपाणि, यदन्यदायुर्विद्यादिकं वाङ्मयं तदपि यत्सकाशात्प्रवृत्तं तथाविधास्ते मुनयो धर्मप्रवर्तकाः । एवं सति वेदस्य नानित्यतादोषप्रसङ्गः ॥ १८९ ॥

ततः किमित्यत आह—

**वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।**
**श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥ १९० ॥**

१. ख. रावतपन्थाः तद० । २. क. ग. वेदस्यापिनानित्य० । ३. क. ग किमित्याह० ।

वेदस्य नित्यत्वे सति तत्प्रामाण्यबलाद्वेदानुवचनादयः सत्वशुद्ध्यापादनद्वारेणाऽऽत्मज्ञानस्य हेतव इत्युपपन्नं भवति ॥ १९० ॥

किं च—

स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥१९१॥
य एनमेवं विन्दन्ति ये वा[1]ऽरण्यकमाश्रिताः ।
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥ १९२ ॥

यस्मान्नित्यतयाऽऽत्मप्रमाणभूतो वेदस्तस्मादसावुक्तमार्गेण सकलाश्रमिभिर्नानाप्रकारं जिज्ञासितव्यः । तमेव प्रकारं दर्शयति—द्विजातिभिर्द्रष्टव्यः अपरोक्षीकर्तव्यः। तत्रोपायं दर्शयति—"श्रोतव्यो मन्तव्यः" इति। प्रथमतो वेदान्तश्रवणेन निर्णेतव्यः, तदनन्तरं मन्तव्यः, युक्तिभिर्विचारयितव्यः, ततोऽसौ ध्यानेनापरोक्षी भवति। ये द्विजातयोऽतिशयश्रद्धायुक्ताः सन्तो निर्जनप्रदेशमाश्रिताः एवमुक्तेन मार्गेण एनमात्मानं सत्यं परमार्थभूतमुपासते ते आत्मानं विन्दन्ति लभन्ते प्राप्नुवन्ति ॥ १९३ ॥ ६९२ ॥

प्राप्तिमार्गं देवयानमाह—

क्रमात्ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम् ।
अयनं देवलोकं च सवितारं सवैद्युतम् ॥ १९३ ॥
ततस्तान्पुरुषोऽभ्येत्य मा[2]नसो ब्रह्मलौकिकान् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥ १९४ ॥

ते विदितात्मानः क्रमादग्न्याद्यभिमानिदेवतास्थानेषु मुक्तिमार्गभूतेषु विश्रम्य[3] तैः प्रस्थापिताः परमपदं प्राप्नुवन्ति । अर्चिर्वह्निः, अहर्दिनं, शुक्लपक्षः, तथोत्त-

१. ख. ये चारण्य० । २. "मानवोब्रह्म" इत्यपरार्के पुस्तके आनन्दाश्रममुद्रिते पाठो दृश्यते । ३. ख. विश्राम्यतैः० ।

रायणं, सुरसद्म, सविता सूर्यः, वैद्युतं च तेजः,—तान् एवं क्रमादर्चिरादिस्था-नगतान्मानसः पुरुषो ब्रह्मलोकभाजः करोति । तेषामिह संसारे पुनरावृत्तिर्न विद्यते, किं तु प्राकृत प्रतिसञ्चरावसरे त्यक्तलिङ्गशरीराः परमात्मन्येकी भवन्ति॥१९३॥१९४॥

पूर्वोक्तपितृयानमाह—

यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥ १९५ ॥

पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ।
क्रमात्ते संभवन्तीह पुनरेव व्रजन्ति च ॥ १९६ ॥

एतद्यो न विजानाति मार्गद्वितयमात्मवान् ।
दन्दशूकः पतङ्गो वा भवेत्कीटोऽथवा कृमिः ॥ १९७॥

ये पुनर्विहितैर्यज्ञदानतपोभिः स्वर्गफलभोक्तारस्ते क्रमाद्धूमादिचन्द्रपर्यन्त-पदार्थाभिमानिनीर्देवताः प्राप्य पुनरेव वायुवृष्टिजलभूमीः प्राप्य व्रीह्याद्यन्नरूपेण शुक्रत्वमवाप्य संसारिणो योनिं व्रजन्ति । एतन्मार्गद्वयमप्रमत्तो यो न विजानाति मार्गद्वयोपायभूतधर्मानुष्ठानं न करोति असौ दन्दशूको भुजङ्गः पतङ्गः शलभः कृमिः कीटो वा भवेत् ॥ ९५ ॥ ९६ ॥ १९७ ॥

उपासनाप्रकारमाह—

ऊरुस्थोत्तानचरणः सव्ये न्यस्योत्तरं करम् ।
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥ १९८ ॥

निमीलिताक्षः सत्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥ १९९ ॥

संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वाऽपि प्राणायाममुपक्रमेत ॥ २०० ॥

ततो ध्येयः स्थितो योऽसौ हृदये दीपवत्प्रभुः ।
धारयेत्तत्र चाऽऽत्मानं धारणां धारयन्बुधः ॥ २०१ ॥

ऊरुस्थावुत्तानौ चरणौ यस्य स तथोक्तः बद्धपद्मासनः, तथोत्ताने सव्यकरे दक्षिणमुत्तानं न्यस्य मुखं किञ्चिदुन्नाम्योरसा च विष्टभ्य स्तभ्ययित्वा तथा निमीलिताक्षः, सत्त्ववस्थः कामक्रोधादिरहितो, दन्तैर्दन्तानसंस्पर्शयन्[1], तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः, तथा संवृतास्यः पिहिताननः, सुनिश्चलो निष्प्रकम्पः, तथा सम्यगिन्द्रियसमूहं विषयेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तविक्षेपो न भवति॰ तथोपविष्टः सन्, द्विगुणं त्रिगुणं वा प्राणायामाभ्यासमुपक्रमेत्; ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवदप्रकम्पः[2] प्रभुः स्थितोऽसौ ध्यातव्यः, तत्र च हृदि आत्मानं मनोगोचरतया धारयेत्[3] । तथा धारणा[4] च धारयेत् । धारणास्वरूपं च जान्वग्रभ्रमणेन — च्छोटिकादानकालो मात्रा ताभिः–पञ्चदशमात्राभिरधमः प्राणायामः, त्रिंशद्भिर्मध्यमः, पञ्चचत्वारिंशद्भिरुत्तमः इति । प्राणायामत्रयात्मिकैका धारणा; तास्तिस्रो योगशब्दवाच्याः, ताश्च धारयेत् । यथोक्तमन्यत्र—"संभ्रम्य च्छोटिकां दद्यात्कराग्रं जानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः ॥ मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव च" ॥ १९८ ॥ १९९ ॥ २०० ॥ २०१ ॥

धारणात्मकयोगाभ्यास[5]प्रयोजनमाह—

अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥ २०२ ॥
अर्थानां छन्दतः सृष्टिर्योग[6]सिद्धेर्हि लक्षणम् ।
सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते ॥ २०३ ॥

१. ख तानसंपृशन्० । २. ग. कम्पस्तथा सम्यक् स्थितोऽसौ० । ३. ख. चरतया धारयेत् धारणामवधा० । ४. ख धारणामवधार० । ५. ख. ग. भ्याये प्रयोजन० । ६. ख. योगसिद्धिर्हिल० । 'सिद्धेस्तुलक्ष' इति अपरार्कपुस्तके आनन्दाश्रममुद्रिते पाठः । क. योगसिद्धिश्चलक्षण० ।

अणिमाप्राप्त्या, परैरदृश्यत्वमन्तर्धानं, स्मृतिरतीन्द्रियेष्वर्थेषु मन्वादेरिव स्मरणं कान्तिः कमनीयता, दृष्टिरतीतानागतेष्वप्यर्थेषु, तथा श्रोत्रज्ञता अतिदवीयसि देशेऽभिव्यज्यमानतया श्रोत्रपथमनासेदुषामपि शब्दानां ज्ञातृता, निजशरीरत्यागेन परशरीरप्रवेशनं, स्ववाञ्छावशेनार्थानां करणनिरपेक्षतया सृष्टिः,—इत्येतद्योगस्य सिद्धेर्लक्षणं लिङ्गम्। न चैतावदेव प्रयोजनं, किं तु सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते ब्रह्मत्वप्राप्तये च प्रभवति ॥ २०२ ॥ २०३ ॥

यज्ञदानाद्यसंभवे सत्वशुद्ध्युपायान्तरमाह—

**अथवाऽप्यभ्यसन्वेदं न्यस्तकर्मा वने वसन्।**
**अयाचिताशी मितभुक्परां सिद्धिमवाप्नुयात् ॥ २०४ ॥**

अथवा त्यक्तकाम्यः अनिषिद्धकर्मा अन्यतमं वेदमभ्यस्यन् एकान्तशीलोऽयाचितमिताशनापादितसत्त्वशुद्धिरात्मोपासनेन परां मुक्तिलक्षणां सिद्धिं प्राप्नोति ॥ २०४ ॥

किं च—

**न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।**
**श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥२०५॥**

सत्प्रतिग्रहादिन्यायेनोपार्जितधनः अतिथिपूजातत्परः नित्यनैमित्तिकश्राद्धानुष्ठाननिरतः[1] सत्यवदनशीलः सन्नात्मतत्त्वध्याननिरतो गृहस्थोऽपि[2] यस्मान्मुक्तिमवाप्नोति तस्मान्न केवलमैहिकपारिव्रज्यपरिग्रह एव मुक्तिसाधनम् ॥ २०५ ॥

॥ इत्यध्यात्मप्रकरणम् ॥

१. ख. नुष्ठाननिरतः गृहस्थोऽपि०। २. क. स्थोऽपि हि सन् यस्मान्मु०।

# अथ प्रायश्चित्तप्रकरणम् ५

## (१) कर्मविपाकः

"वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः।" इत्यत्र प्रतिपाद्यतया प्रतिज्ञात-षड्विधधर्ममध्ये पञ्चप्रकारं धर्ममभिधायाधुनावशिष्टं नैमित्तिकं धर्मजातं प्रायश्चित्तपदाभिलप्यं प्रारिप्सुः प्रथमतस्तत्प्ररोचनार्थमधिकारिविशेष-प्रदर्शनार्थं चार्थवादरूपं कर्मविपाकं तावदाह—

**महापातकजान्घोरान्नरकान्प्राप्य दारुणान् ।**

**कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह ॥ २०६ ॥**

ब्रह्महत्यादिपञ्चकस्य महापातकसंज्ञा "ब्रह्महा मद्यपः" इत्यत्र वक्ष्यते, तद्योगिनो महापातकिनः ते महापातकजनितांस्तामिस्रादिनरकान्स्वजनितदुष्कृतानुरूपान् घोरानतितीव्रवेदनापादकत्वेनातिभयङ्करान्दारुणान्दुःखैकभोगनिलयान् प्राप्य कर्म-क्षयात् कर्मजन्यनरकदुःखोपभोगक्षयादनन्तरं कर्मशेषात्पुनरिह संसारे दुःखबहुल-श्वसृगालादितिर्यग्योनिषु प्रकर्षेण भूयोभूयो जायन्ते । महापातकिग्रहणमितरेषामप्युप-पातक्यादीनामुपलक्षणम्—तेषां च तिर्यगादियोनिप्राप्तेर्वक्ष्यमाणत्वात् ॥ २०६ ॥

महापातकानां संसारप्राप्तिमुक्त्वा तद्विशेषमाह—

**मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ।**

**खरपुल्कसवेनानां सुरापो नात्र संशयः ॥ २०७ ॥**

**कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।**

**तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥ १०८ ॥**

मृगा हरिणादयः, श्वसूकरोष्ट्राः प्रसिद्धाः, तेषां योनिं ब्रह्महा स्वकर्मशेषेण प्राप्नोति । खरो रासभः, पुल्कसः प्रतिलोमनिषादेन शूद्रयां जातः, वैदेहकेनाम्बष्ठयां जातो वेनः, तेषां योनीः सुरापः प्राप्नोति । कृमयः सजातीयसंभोगनिरपेक्षा मांस-विष्ठागोमयादिजन्याः, ततः किंचित्स्थूलतराः पक्षास्थिरहिताः सजातीयसम्भोगरहि-

१. आ० १. । २. प्रा० २२७ । ख. स्थिरहिताः पिपीलि० ।

ताः पिपीलिकादयः कीटाः, पतङ्गः शलभः, तेषां योनिं ब्राह्मणस्वर्णहारी प्राप्नुयात् । तृणं काशादि, गुल्मलते प्रागुक्ते ; तज्जातीयतां क्रमेण गुरुतल्पगः प्राप्नोति । एतच्चाकामकृतविषयम् , कामकारकृते त्वन्यास्वपि दुःखबहुलयोनिषु संसरन्ति ; यथाऽऽह मनुः—"श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥ कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम् । हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः ॥ लूताहि सरटानां च तिरश्चां चाम्बुचारिणाम् । हिंस्राणां च पिशाचानां स्तेनो विप्रस्सहश्रशः ॥" लूतोर्णनाभः, सरटः कृकलासः । "तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि । क्रूरकर्मकृतां चैव शतशो गुरुतल्पगः॥" इति ॥ २०७ ॥ २०८ ॥

किं च[3]—

**ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ।**
**हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥ २०९ ॥**
**यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते ।**

एवं रौरवादिनरकेषु श्वसूकरखरादियोनिषु च दारुणं दुःखमनुभूयानन्तरं दुरितशेषेण जननसमय एव क्षयरोगादिलक्षणयुक्ताः प्रचुरेषु मानवशरीरेषु संसरन्ति । तत्र ब्रह्महा क्षयरोगी राजयक्ष्मी भवेत् । निषिद्धसुरापी स्वभावतः कृष्णदशनः । ब्राह्मणहेम्नो हर्ता कुत्सितनखित्वम् । गुरुदारगामदिश्चर्मत्वं कुष्ठिताम् । एतेषां ब्रह्महादीनां मध्ये येन पतितेन यः पुरुषः संवसति स तल्लिङ्गोऽभिजायते ॥ २०९ ॥

किं च—

**अन्नहर्तामयावी स्यान्मूको वागपहारकः ॥ २१० ॥**
**धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।**
**तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः २११ ॥**

१. ख. गोवाजिमृग० । २.—१२ ५५. –८ । ३. ख एवं च तिर्यक्त्वादुत्तीर्णानां मानुष्यत्वे लक्षणानि भवन्तीत्याह । ग. किंचेतिनास्ति । ४. क. सूकरादियोनि० । ५. क. प्रवरेषु । ६. ख. रन्ति । ब्रह्महाक्ष० । ७. ख. रापानी स्वभा० । ८ ख. हेम्नां हर्ता० । ९. क. कुत्सितनखत्वं० ।

अन्नस्यापहर्ता आमयावी अजीर्णान्नः; वागपहारकोऽननुज्ञाताध्यायी पुस्तकापहारि च मूको वागिन्द्रियविकलो भवेत्; धान्यमिश्रोऽतिरिक्ताङ्गः षडङ्गुल्यादिः, पिशुनो विद्यमानपरदोषप्रख्यापनशीलः पूतिनासिकः दुर्गन्धनासिकः तैलस्य हर्ता तैलपायी कीटविशेषो भवति। सूचकोऽसद्दोषसंकीर्तनो दुर्गन्धिवदनो जायते। एतच्च तिर्यक्प्राप्त्युत्तरकाल मानुषशरीरप्राप्तौ द्रष्टव्यम्—"यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः॥" इति मनुस्मरणात् ॥ २०९ ॥ २१० ॥ २११ ॥

किं च—

**परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च।**
**अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥ २१२ ॥**

यः परदारानपहरति, ब्रह्मस्वं च सुवर्णव्यतिरिक्तमपहरति, असावरण्ये निर्जले देशे ब्रह्मराक्षसोभूतविशेषो जायते ॥ २१२ ॥

किं च—

**हीनजातौ प्रजायेत पररत्नापहारकः।**
**पत्रशाकं शिखी हृत्वा गन्धाञ्छुच्छुन्दरी शुभान्॥२१३॥**

हीनजातौ हैमकाराख्यायां पक्षिजातौ पररत्नापहारको जायते। तथा च मनुः—"मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः। विविधानि च रत्नानि जायते हेमकर्तृषु॥" इति। पत्रात्मकं शाकं हृत्वा मयूरः, शुभान् गन्धानपहृत्य छुच्छुन्दरी राजदुहिताख्या मूषिका जायते ॥ २१३ ॥

किं च—

**मूषको धान्यहारी स्याद्यानमुष्ट्रः कपिः फलम्।**
**जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥ २१४ ॥**

१. क. शीलो दुर्गन्धिनासि० । २.—१२. ६८. । ३. ख. रत्नाद्यपहार० । ४.—१२. ६१, । ५. क. चुछन्दरिः, छुंछुंदरीराज० ।

**मधुदंशः पलं गृध्रो गां गोधाग्निं बकस्तथा ।**
**श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः ॥ २१५ ॥**

धान्यहारी आखुः ; यानं हृत्वोष्ट्रः ; फलं वानरः ; जलं प्लवः शकट-[1]विलाख्यः पक्षी ; पयः क्षीरं काको ध्वाङ्क्षः ; गृहोपस्करं मुसलादि हृत्वा गृहकारी वरटाख्यः ; कीटविशेषः । मधु हृत्वा दंशाख्यः कीटः ; पलं मांसं, तत् हृत्वा गृध्राख्यः पक्षी ; गां हृत्वा गोधाख्यः प्राणिविशेषः ; अग्निं हृत्वा बकाख्यः[3] पक्षी ; वस्त्रं हृत्वा श्वित्री ; इक्ष्वादिरसं हृत्वा सारमेयः ; लवणहारी चीर्याख्यः उच्चैःस्वरः कीटः ॥ २१४ ॥ २१५ ॥

एवं प्रदर्शनार्थं किञ्चिदुक्त्वा प्रतिद्रव्यं पृ[4]ष्टाकोटेन वक्तुमशक्तेरेकोपाधिना कर्मविपाकं दर्शयितुमाह—

**प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि ।**
**द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ २१६ ॥**

द्रव्यस्यापह्रियमाणस्य यादृशाः प्रकाराः तादृशा एव प्राणिजातयः स्तेयकर्मण्यपहर्तारो भवन्ति ; यथाकांस्यहारी हंस इति । अथवा यत्फलसाधनं द्रव्यमपहरति तत्साधनविकलः ; यथा पङ्गुतामश्वहारक इति । शङ्खेन क्वचिद्विशेषो दर्शितः— "ब्रह्महा कुष्ठी, तैजसापहारी मण्डली, देवब्राह्मणाक्रोशकः खलतिः, गरदाग्निदावुन्मत्तौ, गुरुं प्रतिहन्ताऽपस्मारी, गोघ्नश्चान्धः, धर्मपत्नीं मुक्त्वाऽन्यत्र प्रवृत्तः शब्दवेधी प्राणिविशेषः, कुण्डाशी भगभक्षो, देवब्राह्मणस्वापहारी[5] पाण्डुरोगी, न्यासापहारी च काणः, स्त्रीपण्योपजीवी षण्डः, कौमारदारत्यागी दुर्भगः, मृष्टैकाशी वातगुल्मी, अभक्ष्यभक्षको गण्डमाली, ब्राह्मणीगामी निर्बीजी, क्रूरकर्मा वामनः, वस्त्रापहारी पतङ्गः, शय्यापहारी क्षपणकः, शङ्खशुक्त्यपहारी कपाली, दीपापहारी कौशिकः, मित्रध्रुक् क्षयी, मातापित्रोराक्रोशः खण्डकारः" इति । गौतमोऽपि कंचिद्विशेषमाह

१. क. शकटं बिला० । ग. शकटविलाख्यः० । २. ख. चटकाख्यः कीट० । ३. ख. हृत्वा बलाकाख्यः० । ४. ग. पृष्टाकोटन्यायेन वक्तु० । ५. ख. देवब्रह्मस्वहरः । ६. ख. उच्छिन्नज० । ग. च्छून जङ्घचर० ।

—" अनृतवागुल्बलः मुहुर्मुहुः संलग्नवाक्, जलोदरो दारत्यागी, कूटसाक्षी श्लीपदी उच्छूनजङ्घाचरणः, विवाहविघ्नकर्ता छिन्नोष्ठः, अवगूरणे छिन्नहस्तः, मातृघ्नोऽन्धः, स्नुषागामी वातवृषणः, चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्री, कन्यादूषकः षण्डः, ईर्ष्यालुर्मशकः, पित्रा विवदमानोऽपस्मारी, न्यासापहारो अनपत्यः, रत्नापहारी अत्यन्तदरिद्रः, विद्याविक्रयी पुरुषमृगः, वेदविक्रयी द्वीपी, बहुयाजको जलप्लवः, अयाज्ययाजको वराहः, अनिमन्त्रितभोजी वायसः, मृष्टैकभोजी वानरः, यतस्ततोऽश्नन्मार्जारः, कक्षवनदहनात्खद्योतः, दारकाचार्यो मुखविगन्धिः, पर्युषितभोजी कृमिः, अदत्तादायी बलीवर्दः, मत्सरी भ्रमरः, अग्न्युत्सादी मण्डलकुष्ठी, शूद्राचार्यः श्वपाकः, गोहर्ता सर्पः, स्नेहापहारी क्षयी, अन्नापहारी अजीर्णी, ज्ञानापहारी मूकः, चण्डालीपुल्कसीगमने अजगरः, प्रव्रजितागमने मरुपिशाचः, शूद्रीगमने दीर्घकीटः, सवर्णाभिगामी दरिद्रः, जलहारी मत्स्यः, क्षीरहारी बलाकः, वार्धुषिकोऽङ्गहीनः, अविक्रेयविक्रयी गृध्रः, राजमहिषीगामी नपुंसकः, राजाक्रोशको गर्दभः, गोगामी मण्डूकः, अनध्यायाध्ययने सृगालः, परद्रव्यापहारी परप्रेष्यः, मत्स्यवधे गर्भवासी, इत्येतेऽनूर्ध्वगमनाः" इति । स्त्रियोऽप्येतेषु निमित्तेषु पूर्वोक्तास्वेव जातिषु स्त्रीत्वमनुभवन्ति; यथाऽऽह मनुः —" स्त्रियोऽप्येतेन कल्पेन कृत्वा दोषमवाप्नयुः । एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥" इति । एतच्च क्षयित्वादिलक्षणकथनं प्रायश्चित्तोन्मुखीभूतब्रह्महाद्युद्वेगजननार्थं, न पुनः क्षयित्वादिलक्षणयुक्तानां द्वादशवार्षिकादिव्रतप्राप्त्यर्थं, संसर्गनिवृत्त्यर्थं च । तथा हि । पापक्षयार्थं प्रायश्चित्तम् । न च प्रारब्धफलपापापूर्वविनाशे किञ्चन प्रयोजनमस्ति—न हि कार्मुकनिर्मुक्तो बाणो लक्ष्यवेधे वेद्धृहस्तव्यापारस्य वा सत्तां पुनरपेक्षते, न च तदारब्धफलनाशोऽर्थो पूर्वनाशोऽन्वेषणीयः— न हि निमित्तकारणभूतचक्रचीवरादिविनाशेन तदारब्धकरकादिविनाशः, न च नैसर्गिक कौनख्यादिकं प्रयत्नेनापनेतुं शक्यते । किं च नरकतिर्यग्योन्यादिजन्यदुःखपरम्परामनुभूय तस्य हि कौनख्यादिको विकारश्चरमं फलम् । तेन चोत्पन्नमात्रेण

---

१. उच्छिन्नज० । २ ख. अवगुरणी० । क. अवगोरणछि० । २. ख. षण्ढः० । ३. ख. कल्पेनहत्वा० । ४.—१२. ६९. । ५. ख. निवृत्त्यर्थं वा । ६. ख. नुभूयतस्य० ।

स्वकारणापूर्वनाशो जन्यते—मन्थनजनिताशुशुक्षणिनेवारणिक्षयः। तस्मान्न पापं-विनाशार्थं व्रतचर्या. नापि संव्यवहारार्थम्। न हि शिष्टाः कुनख्यादिभिः सह संबन्धं परिहरन्ति: प्राचीनक्षयात्पापनाशेन संव्यवहार्थत्वस्यापि सिद्धेर्नार्थो व्रतचर्यया। यत्तु वसिष्ठेनोक्तं—"कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरेद्" इति तत्क्षामवत्यादिवन्नैमित्तिकमात्रं, न पुनः पापक्षयार्थं संव्यवहार्यसिद्ध्यर्थं वेति मन्तव्यम् ॥ ५१६ ॥

किं च—

**यथाकर्म फलं प्राप्य तिर्यक्त्वं कालपर्ययात्।**
**जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ २१७ ॥**

यथाकर्म स्वदुष्कृतानतिक्रमेण तदनुरूपं नरकादि फलं तिर्यक्त्वं च प्राप्य कालक्रमेण क्षीणे कर्मणि दुष्टलक्षणा दरिद्राश्च पुरुषेषु निकृष्टा जायन्ते ॥ २१७ ॥

किं च—

**ततो निष्कल्मषीभूताः कुले महति भोगिनः।**
**जायन्ते विद्ययोपेता धनधान्यसमन्विताः ॥ २१८ ॥**

ततो दुर्लक्षणमनुष्यजन्मानन्तरं निष्कल्मषीभूता नरकाद्युपभोगद्वारेण क्षीण-पापाः प्राग्भवीयसुकृतशेषेण महाकुले भोगसंपन्ना जायन्ते ॥ २१८ ॥

——(:o:)——

## (२) महापातकादिनिमित्तपरिगणनम्

एवं प्रायश्चित्तेषु प्ररोचतार्थं कर्मविपाकमभिधायाधुना तेष्वेवाधिकारिणं निरूपयितुमाह—

**विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।**
**अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१९ ॥**

**तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये।**
**एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २२० ॥**

१. क. पापादिनाशार्थं व्रत०। २. ख. व्रतपरिचर्या०। ३. ख. हारार्थत्वस्या० ४.—३०६.। ५. ख. स्वकृतदुष्कृता०।

विहितमिति यदावश्यकं संध्योपासनाग्निहोत्रादिकं नित्यम्, अशुचिस्पर्शादौ नैमित्तिकत्वेन चोदितं स्नानादिकं च तदुभयमुच्यते।[1] तस्याकरणात् निन्दितस्य निषिद्धस्य सुरापानादेः करणात् इन्द्रियाणामनिग्रहाच्च नरः पतनमृच्छति प्राप्नोति, प्रत्यवायी भवतीति यावत्। ननु "इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः।" इती[2]न्द्रियप्रसक्तेरपि निषिद्धत्वान्निन्दितग्रहणेनैव गतार्थत्वात्किमर्थम् "अनिग्रहाच्चेन्द्रियाणाम्" इति पृथगुपादानम्? अत्रोच्यते। इन्द्रियप्रसक्तिनिषेधस्य[3] नैकान्ततः प्रतिषेधरूपता स्नातकव्रतमध्येऽस्य पाठात्तत्र च "व्रतानीमानि धारयेत्" इ[4]ति व्रतशब्दाधिकारान्नञ्श्रवणाच्चेन्द्रियप्रसक्तिप्रतिषेधकः संकल्पो विधीयते। स चोभयरूप इति पृथगुपादानम्॥ ननु विहिताकरणात् प्रत्यवैतीति कुतोऽवासितम्? न तावदग्निहोत्रादिचोदना पुरुषप्रवर्तनात्मि[5]कानुष्ठानस्य प्रत्यवायहेतुतामाक्षिपति। विषयानुष्ठानस्य पुरुषार्थत्वावगतिमात्रपर्यवसायिनी हि सा[6]। तावन्मात्रेण प्रवृत्त्युपपत्तेर्न पुनरकरणस्य प्रत्यवायहेतुत्वमपि वक्ति—क्षीणशक्तित्वादनुपपत्तेः। किं च यद्यप्यनुपपत्त्युपशमेऽपि प्रवृत्तिसिद्ध्यर्थमर्थान्तरं कल्प्यते—तर्हि निषिध्यमानक्रिया[7]जन्यप्रत्यवायपरिहारार्थतयै[8]व तद्वर्जनस्य पुरुषार्थत्वसिद्धावपि फलान्तरं कल्प्येत। न चैतत्कस्यचिदपि संमतम्। ननु यथा निषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैव पुरुषार्थत्वं तथा विहितेष्वर्थवा[9]दावगताकरणजन्यप्रत्यवायपरिहारार्थता कस्मान्न स्यात्? मैवम्। न हि सर्वत्राग्निहोत्रादिषु तादृग्विधार्थवादाः सन्ति। न च "विहितस्याननुष्ठानान्नरः पतनमृच्छति।" इतीयं स्मृतिरेव वाक्यशेषस्थानीयेति चतुरश्र[10]म्। न हि वाक्यान्तरप्रमिते[11] कार्ये वाक्यान्तरेणार्थवादः संभवति। भवतु वा कथञ्चिदेकवाक्यतयाऽर्थवादः, तथाऽपि नाभावरूपं[12] विहिताकरणं कार्यान्तरं जनयितुं क्षमते। ननु "ज्वरे चैवातिसारे च लङ्घनं परमौषधम्" इत्यायुर्वेदवचनाद्भोजनाभावरूपं लङ्घनं ज्वरशान्तिं जनयतीति यथाऽवगम्यते तथाऽत्रापि भवतु। मैवम्। यतो नात्रापि लङ्घनाज्ज्वरशान्तिः; किं तर्हि? ज्वरनाशप्रतिबन्धकभोजनाभावे सति जठरानलपरिपाक[13]जनिताद्धातुसाम्यादिति मन्तव्यम्। तस्मात् "वि-

१. ख. यमुच्यते। यस्याकर०। २. मनुः ४. १६.। ३. ख. निषिद्धस्य०। ४.—४. १३.। ५. ख. प्रवर्तनात्मकाननु०। ६. ख. यिनीहिंसा०। ७. ख. मानप्रत्यव०। ८. ख हारार्थ तय्यैव०। ९. ख. तेष्वप्यर्थ०। १०. ख. चतुरस्रम्०। ११. ख. न्तरप्रमाते०। १२. ख. नाभावरूपावि-हिता०। १३. ख. परिपाकजनताद्धातु०।

हितस्याननुष्ठानान्नरः पतनमृच्छति।" इति कथमस्याः स्मृतेर्गतिरिति वाच्यम् । उच्यते । अग्निहोत्रादिविषयाधिकारासिद्धिरूपप्रत्यवायाभिप्रायेणेति न दोषः । ननु —"वान्ताश्युल्कामुखः प्रेतो विप्रो भवति विच्युत । अमेध्यकुणपाशी तु क्षत्रियः कटपूतनः ॥ मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् । चैलाशकस्तु भवति शूद्रो धर्मात्स्वकाच्च्युतः॥" इत्येतानि विहिताकरणप्रत्यवायपराणि मनुवचनानि कथ घटन्ते ? उच्यते । यथा वान्तमश्नत उल्कया वा दह्यमानमुखस्य दुःखं, तथाऽस्यापि विहितमकुर्वतः पुरुषस्य पुरुषार्थासिद्धेरित्यकरणनिन्दनमनुष्ठानप्ररोचनार्थमित्यविरोधः । यद्वा प्राग्भवीयनिषिद्धाचरणाक्षिप्तविहितानुष्ठानविरोधिरागालस्यादिजन्यं वान्ताश्युल्कामुखप्रेतत्वादिरूपमिति न क्वचिदभावस्य कारणतेति मन्तव्यम् । ननु पुंश्चलीवानरखरदष्टमिथ्याभिशस्तादौ विहिताकरणादिनिमित्तानामन्यतमस्यापि अभावात्कथं प्रत्यवायिता, कथं च तदभावे प्रायश्चित्तविधानम् ? उच्यते । अस्मादेव पापक्षयार्थं प्रायश्चित्तविधानाज्जन्मान्तराचरितनिषिद्धसेवादिजन्यं पापापूर्वं समाक्षिप्तमिथ्याभिशापादिकं तन्निमित्तप्रायश्चित्तापनोद्यमनेनानुष्ठितामिति कल्प्यते—पुरुषप्रयत्ननिरपेक्षेणं[3] कार्यरूपपापोत्पत्त्यनुपपत्तेः। न च पुंश्चल्यादिगतप्रयत्नेन पुरुषान्तरे पापोत्पत्तिः कर्तृसमवायित्वनियमाद्धर्माधर्मयोः। तस्माद्युक्तैव प्रायश्चित्ते निमित्तत्रयपरिगणना। तथा च मनुः—"अकुर्बन् विहितं कर्म निन्दितं च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥"[4] इति। नरग्रहणं प्रतिलोमजातानामपि प्रायश्चित्ताधिकारप्राप्त्यर्थम् । तेषामप्यहिंसादिसाधारणधर्मव्यतिक्रमसंभवात्; यस्मादेवं निषिद्धाचरणादिना प्रत्यवैति तस्मात्तेन कृतनिषिद्धसेवादिना पुरुषेण प्रायश्चित्तं कर्तव्यमिहलोके परत्र च विशुद्ध्यर्थम् ॥

प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः । एवं प्रायश्चित्ते कृते अस्यान्तरात्मा शुद्धतया प्रसीदति, लोकश्चायं संव्यवहर्तुं प्रसीदति। एवं च वदतैतद्दर्शितम्—नैमित्तिकोऽयं प्रायश्चित्ताधिकारः, तत्रार्थवादगतदुरितक्षयोऽपि जातेष्टिन्यायेन साध्यतया स्वीक्रियते । न च दुरितपरिजिहासुनाऽनुष्ठीयत

१. ख. विप्रो धर्मात्स्वकाच्च्युतः०। २. मनुः १२ ७१,७२ । ३. ख निरपेक्ष्येण०। ४.—११. ४४ । ५. ख. तत्र चार्थवा० ।

इत्येतावता कामाधिकाराशङ्का कार्या; यस्मात् मनुः—"चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैन सः॥" इत्यकरणे दोषश्रवणेनावश्यकत्वागमाः॥ २१९॥ २२०॥

प्रायश्चित्ताकरणे दोषमाह—

प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः।

अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान्॥ २२१॥

पापेषु शास्त्रार्थव्यतिक्रमजनितेषु प्रसक्ताः पुरुषाः अपश्चात्तापिनो मया दुष्कृतं कृतमित्येवमुद्वेगरहिताः प्रायश्चित्तमकुर्वाणाः दुःसहान्नरकान्प्राप्नुवन्ति॥२२१॥

नरकस्वरूपं विवृण्वन्नाह—

तामिस्रं लोहशङ्कुं च महानिरयशाल्मली।

रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम्॥ २२२॥

संघातं लोहितोदं च सविषं संप्रपातनम्।

महानरककाकोलं संजीवनमहापथम्॥ २२३॥

अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च।

असिपत्रवनं चैव तापनं चैकविंशकम्॥ २२४॥

महापातकजैर्घोरैरुपपातकजैस्तथा।

अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः॥२२५॥

तामिस्रप्रभृतींस्तापनपर्यन्तानेकविंशतिनरकानन्वर्थसंज्ञाद्योतितावान्तरभेदान्महापातकोपपातकजनितभयङ्करदुरितैरन्विता अनाचरितप्रायश्चित्ताः पुरुषाधमाः प्राप्नुवन्ति॥ २२२॥ २२३॥ २२४ २२५॥

१.—११. ५३. । २. ख. वगमात्० ।

उपात्तदुरितनिरासार्थं प्रायश्चित्तमित्युक्त, तत्र विशेषमाह—

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्यस्तु वचनादिह जायते ॥ २२६ ॥

प्रायश्चित्तैर्वक्ष्यमाणैरज्ञानाद्यदेनः पाप कृतं तदपैति गच्छति ; न कामतः कृतम् ; किं तु तत्र प्रायश्चित्तविधायकवचनबलादिह लोके व्यवहार्यो जायते । अत्र च "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतम्" इत्युपक्रमात्तत्प्रतियोगितया "ज्ञानतः" इति वक्तव्ये यत् "कामतः" उत्युक्तं तज्ज्ञानकामयोस्तुल्यत्वप्रदर्शनार्थम् । तथा हि "विहितं यदकामानां कामात्तद्द्विगुणं भवेत् ।" तथा अबुद्धिपूर्वक्रियायामर्धं प्रायश्चित्तम् । तथा "म्लेच्छेनाधिगताः शूद्रा त्वज्ञानात्तु कथञ्चन । कृच्छ्रत्रयं प्रकुर्वीत ज्ञानत्तु द्विगुणं भवेत् ॥" इत्यादिभिर्वचनैर्ज्ञानकामयोस्तुल्यप्रायश्चित्तदर्शनात् तुल्य फलैतव । किं च स्वतन्त्रप्रवृत्तिर्विषयज्ञानकामनाभ्यां नियता—तयोरन्यतरापायेऽपि तस्या असंभवात् । अतः "कामतः" इत्युक्ते ज्ञानं, "ज्ञानतः" इत्युक्तेऽपि कामः प्राप्नोत्यविनाभावात् । न च चौरादिभिर्बलात्प्रवर्त्यमानस्य सत्यपि विषयज्ञाने कामनाभावान्नाविनाभाव इति वाच्यम् । यतोऽत्र विद्यमानस्यापि ज्ञानस्य प्रवृत्तिहेतुत्वाभावेनासत्समत्वम् । यत्तु शुष्केऽपि पिपतिषोर्भ्रान्त्या कर्दमपतनं तत्रापि वास्तवज्ञानाभावात्तद्विषयकामनायाश्चाभाव एव । एवमज्ञानकामनयोरप्यव्यभिचार एव । ननु "प्रायश्चित्तैरपैत्येनः" इति न युक्तं —फलविनाश्यत्वात्कर्मणः । मैवम् । यथा पापोत्पत्तिः शास्त्रगम्या तथा तत्परिक्षयोऽपीति नात्र प्रमाणान्तरं क्रमते । अत एव गौतमेन पूर्वोत्तरपक्षभंङ्ग्याऽयमर्थो दर्शितः—"तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते न कुर्यादित्याहुर्न हि कर्म क्षीयते" इति । कुर्यादित्यपरे पुनःसोमेनेष्ट्वा पुनःसवनमायान्तीति विज्ञायते । व्रात्यैःस्तोमेनेष्ट्वा ब्रह्मचर्यं चरेदुपनयनत इति सर्वं पाप्मानं तरति भ्रणहत्यां योऽश्वमेधेन यजते" इति । पुनः सवनमायन्तीति । सवनसंपाद्यज्योतिष्टोमादिद्विजातिकर्माणि योग्यो भवतीत्यर्थः । न चेदमर्थवादमात्रम्—अधिकारिविशेषणाकाङ्क्षायां रात्रिसत्रन्यायेनार्थवादिकफलस्यैव कल्पनाया न्याय्यत्वात् । अतो युक्तं "प्रायश्चित्तैरपैत्येनः" इति ॥ ननु

१. ख. रितनाशार्थं । २. ग. द्यपूर्ववचनै० । ३. ख. इत्युक्ते ज्ञानाज्ञानत इत्यक० । ४. ख. मायान्तीति विज्ञा० । ५. ग. व्रात्यस्तोमे० । ६. ख. सवमायान्तीति० ।

कामकृते प्रायश्चित्ताभावात्कथं व्यवहार्यत्वं, तदभावश्च "अनाभिसंधिकृतेऽपरतो प्रायश्चित्तम्" इति वसिष्ठवचनात्। "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥" इति मनुवचनाच्चावगम्यते॥नैतत्॥ "यः कामतो महापापं नरः कुर्यात्कथञ्चन। न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते॥" इति तथा "विहितं यदकामानां कामात्तद्विगुणं भवेत्॥" इति च कामकृतेऽपि प्रायश्चित्तदर्शनात्॥ यत्तु वसिष्ठवचनं "तस्याप्यकामकृतेऽपराधे प्रायश्चित्तं शुद्धिकरम्" इत्यभिप्रायो न पुनः कामकृते प्रायश्चित्ताभाव इति। यत्तु मनुवचनम् "इयं विशुद्धिरुदिता" इत्यादि तदपीयमिति सर्वनामपरामृष्टद्वादशवार्षिकव्रतचर्याया एव। "कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते।" इत्यनेन प्रतिषेधो न पुनः प्रायश्चित्तमात्रस्य—मरणान्तिकादेः प्रायश्चित्तस्य दर्शितत्वात्॥ ननु यदि कामकृतेऽपि प्रायश्चित्तमस्ति—तर्हि पपाक्षयोऽपि कस्मान्न स्यादविशेषात्, इति पापक्षयोऽपि नास्ति तर्हि व्यवहार्यताऽपि कथं भवति? उच्यते। उभयत्र प्रायश्चित्ताविशेषेऽपि फलविशेषः शास्त्रतोऽवगम्यते, अज्ञानकृते तु सर्वत्र पापक्षयः। यत्र तु "ब्रह्महा सुरापो गुरुतल्पगो मातृपितृयोनिसंबद्धसम्बन्धागमस्तेननास्तिकानिन्दितकर्माभ्यासिपतितात्यागिपतितत्यागिनः पतिताः; पातकसंयोजकाश्च" इति गौतमोक्तमहापातकादौ व्यवहार्यत्वं निषिद्धम्, तस्मिन्पतनीये कर्मणि कामतः कृते व्यवहार्यत्वमात्रं न पापक्षय इति। न च पापक्षयाभावे व्यवहार्यत्वमनुपपन्नम्। द्वे हि पापस्य शक्ती नरकोत्पादिका व्यवहारनिरोधिका चेति। तत्रेतरशक्त्यविनाशेऽपि व्यवहारनिरोधिकायाः शक्तेर्विनाशो नानुपपन्नः। तस्मात्पापानपगमेऽपि व्यवहार्यत्वं नानुपपन्नम्। यत्तु मनुवचनं "अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः। कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥" इति, तदपि कामकृतेऽपि प्रायश्चित्तप्राप्त्यर्थम्। न पुनः पापक्षयप्रतिपादनपरम्। अपतनीये पुनः कामकृतेऽपि प्रायश्चित्तेन पापक्षयो भवत्येव। "अकामतः कृतं पापं वेदाभ्यासेन शुध्यति। कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः॥" इति मनुस्मरणात्। पतनीयेऽपि कर्मणि कामकृते मरणान्तिकप्राय-

१—२०. १.। २.—११. ८९.। ३. ख. कामकृतेऽपि प्रायश्चि०। ४. क. मरणान्तिकादेः प्रायश्चित्तमस्ति तर्हि०। ५. ख. उभयप्राय०। ६. ख. अज्ञानकृते तु सर्वत्र०! ७ क. ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बद्धागस्तेन०। ख योनिसम्बद्धाङ्गस्तेन ना०। ८.—२०, १, २.। ९. ख. धिकाचेति। तत्रे०। १०,—११. ४५.। ११,—११. ४६.

श्चित्तेषु कल्मषक्षयो भवत्येव—फलान्तराभावात् । "नास्यान्यस्मिंल्लोके प्रत्यापत्ति-र्विद्यते, कल्मषं तु निर्हण्यते॥" इत्यापस्तम्बस्मरणात् ॥ २२६ ॥

निषिद्धाचरणादिकं प्रायश्चित्ते निमित्तमित्युक्तं तत्प्रपञ्चयितुमाह—

**ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः ।**
**एते महापातकिनो यश्च तैः सह संवसेत् ॥ २२७ ॥**

हन्तिरयं प्राणवियोगकरे[2] व्यापारे रूढः, यद्व्यापारसमनन्तरं कालान्तरे वा कारणान्तरनिरपेक्षः प्राणवियोगो भवति— स ब्राह्मणं हतवानिति ब्रह्महा । मद्यपो निषिद्धसुरायाः पाता[3] । स्तेनो ब्राह्मणस्य सुवर्णहर्ता "ब्राह्मणसुवर्णापहरणं महापातकम्" इत्यापस्तम्बस्मरणात् । गुरुतल्पगो गुरुभार्यागामी । तल्पशब्देन शयनवाचिना साहचर्याद्भार्या लक्ष्यते । एते ब्रह्महादयो महापातकिनः । पातयन्तीति[4] पतकानि ब्रह्महत्यादीनि, महच्छब्देन तेषां गुरुत्वं ख्याप्यते,—तद्योगिनो महापातकिन इति । लाघवार्थं संज्ञाकरणम् । यश्च तैर्ब्रह्महादिभिः प्रत्येकं सह संवसति "एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः॥" इति वक्ष्यमाणन्यायेन[5] सोऽपि महापातकी । तथाशब्दः प्रकारवचनः — अनुग्राहकप्रयोजकादि-कर्तृसंग्रहार्थः। अनुग्राहकश्च—यः पलायमानममित्रम् उपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन्[6] हन्तुर्द्रढिमानमुपजनयन्नुपकरोति स उच्यते । अत एव मनुना ग्राहकस्य हिंसाफलसंबन्धो दर्शितः—"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम्। यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः॥" इति। तथा प्रयोजकादीनामप्यापस्तम्बेन फलसंबन्ध उक्तः—"प्रयोजिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो[7] यो भूय आरभते तस्मिन्फलविशेषः" इति । तत्राप्रवृत्तस्य प्रवर्तकः प्रयोजकः । स च त्रिप्रकारः—आज्ञापयिताऽभ्यर्थयमान उपदेष्टेति । तत्राज्ञापयिता नाम स्वयमुच्चः सन्नीचं भृत्यादिकं यः प्रेषयति 'मदीयममित्रं जहि' इति स उच्यते। अभ्यर्थयमानस्तु यः स्वयमसमर्थः सन् प्रार्थनादिना 'मच्छत्रुं व्यापादय' इत्युच्चं प्रवर्त-

१.-- १. २४. २५, २६. । २. ख. करणे व्यापारे० । ३. ख. सुरायाः पायी। स्तेनो०। ४. क. तकिनः । पातकानि ब्रह्मह० । ५. प्रा० २६:. । ६. ख. परिरक्ष्य-हन्तु० । ७. ख. भागिनेयो भूय० ।

यति सोऽभिधीयते । अनयोश्च स्वार्थसिद्ध्यर्थमेव प्रयोक्तृत्वम् । उपदेष्टा पुनः 'त्वं शत्रुमित्थं व्यापदाय' इति मर्मोद्धाटनाद्यपदेशपुरःसरं प्रेरयन्कथ्यते। तत्र च प्रयोज्यगतमेव फलमिति तेषां भेदः । अनुमन्ता तु प्रवृत्तस्य प्रवर्तकः । स द्विप्रकारः— कश्चित्स्वार्थसिद्ध्यर्थमनुजानाति, कश्चित्परार्थमिति ॥ नन्वनुमननस्य कथं हिंसाहेतुत्वम्–न तावत्प्राणवियोगोत्पादनेन तस्य साक्षात्कर्तृव्यापारजन्यत्वान्नापि प्रयोजकस्येव साक्षात्कर्तृप्रवृत्त्युत्पादनद्वारेण प्रवर्तस्य प्रवर्तकत्वात् । न च साधु त्वयाऽध्यवसितमितिप्रवृत्तमेवानुमन्यत इति शङ्कनीयम्–तादृशस्यानुमननस्य हिंसां प्रत्यहेतुत्वाद्यर्थहेतुत्वाच्च । उच्यते । यत्र हि राजादिपारतन्त्र्यात्स्वयं मनसा प्रवृत्तोऽपि प्रवृत्तिविच्छेदभयादागामिदण्डभयाद्वा शिथिलप्रयत्नो राजाद्यनुमतिमपेक्षते तत्रानुमतिर्हन्तुः प्रवृत्तिमुपोद्बलयन्ती हिंसाफलं प्रति हेतुतां प्रतिपद्यते । तथा योऽपि भर्त्सनताडनधनापहारादिना परान्कोपयति सोऽपि मरणहेतुभूतमन्यूत्पादनद्वारेण हिंसाहेतुर्भवत्येव। अत एव विष्णुनोक्तम्— "आक्रुष्टस्ताडितो वाऽपि धनैर्वाऽपि वियोजितः । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥" इति । तथा "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च । यमुद्दिश्यत्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥" इति । न च कृतेष्वप्याक्रोशनादिषु कस्यचिन्मन्यूत्पत्त्यदर्शनादकारणेति शङ्कनीयम् — पुरुषस्वभाववैचित्र्यात् । ये अल्पतरेणापि निमित्तेन जातमन्यवो भवन्ति तेष्वव्यभिचार इति नाकारणता । एतेषां चानुग्राहकप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगतगुरुलाघवापेक्षया च फलं गुरुलाघवात् प्रायश्चित्तगुरुलाघवं बोद्धव्यम् — "यो भूय आरभते तस्मिन्फलविशेषः" इति वचनात् । तथा ह्यनुग्राहकस्य तावत्स्वयमेव हिंसायां प्रवृत्तेन स्वतन्त्रकर्तृत्वे सत्यपि साक्षात्प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेन साक्षात्कर्तृवद्भूयो हिंसारम्भकत्वाभावादल्पफलत्वमल्पप्रायश्चित्तत्वं च । प्रयोजकस्य तु स्वतन्त्रकर्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्ततोऽल्पफलत्वम् । प्रयोजकानां मध्ये परार्थप्रवृत्तत्वेनोपदेष्टरल्पफलत्वम् ॥ ननु प्रयोजकहस्तस्थानीयत्वात्प्रयोज्यस्य न फलसंबन्धो युक्तः ।

१. ग. न्तातु वनस्य प्रव० । २. ख प्रवृत्तस्य० । क. पवर्तस्य० । ३. ख. तादृशमनन० । ४. ख. द्बलयतीति हिंसा० । ५. ख. तथाऽन्योऽपि० । ६. ग. द्वारे न हिंसा० । ७ ख. र्भवत्यत एव० । ८. ख. धनैर्वाविप्रयो० । ९. ख. फलं गुरुला० । १०. ख. यश्चित्तत्वं च । ११. ख. पयोजकस्य० ।

यदि परप्रयुक्त्या प्रवर्तमानस्यापि फलसंबन्धः तर्हि स्थपतितडागेखनितृप्रभृतीनामपि मूल्येन प्रवर्तमानानां स्वर्गादिफलप्रसङ्गः। उच्यते। "शास्त्रफलं प्रयोक्तरि" इति न्यायेनाधिनादिकारिकर्तृगतफलजनका देवकुलतडागनिर्माणादयः। न च स्थपतितडागकर्त्रादयो देवकुलतडागकरणादिष्वधिकारिणः—स्वर्गकामित्वात्। अत्र पुनः परप्रयुक्तया प्रवर्तमानानामप्यहिंसायामधिकारित्वाद्भवत्येव तद्व्यतिक्रमनिबन्धनो दोषः। अनुमन्तुस्तु प्रयोजकादप्यल्पफलत्वं प्रयोजकव्यापाराद्बहिरङ्गत्वाल्लघुत्वाच्चानुमननस्य। निमित्तकर्तुः पुनराक्रोशकादेः प्रवृत्तिहेतुभूतमन्युजनकत्वेन व्यवहितत्वान्मरणानुसंधानं विना प्रवृत्तत्वाच्चानुमन्तुः सकाशादप्यल्पफलत्वम्॥ ननु यदि व्यवहितस्यापि कारणत्वं तर्हि मातापित्रोरपिहन्तृपुरुषोत्पादनद्वारेण हननकर्तृत्वप्रसङ्गः। उच्यते। न हि पूर्वभावित्वमात्रेण कारणत्वं—कारणकारणतयाऽपि तथाभावित्वोपपत्तेः। यत्खलु स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगि भवति तद्धि कारणम्। यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति रथन्थरसामतैव क्रतोरैन्द्रवायवाग्रतायां कारणं न हि तत्र सोमयागः स्वरूपेण कारणं व्यभिचारात् न च पित्रोस्तादृग्विधकारणलक्षणयोगित्वमिति नातिप्रसङ्गः। अनेनैव न्यायेन धर्माभिसंधिना निर्मितकूपवाप्यादौ प्रमादपतितब्राह्मणादिमरणे खानयितुर्दोषाभावः। न हि 'कूपोऽनेन खानितोऽतोऽहमात्मानं व्यापादयामि' इत्येवं कूपखनननिमित्तव्यापादनं; यथाक्रोशादौ। अतः कूपकर्तुरपि कारणत्वमेव, न पुनर्हिंसाहेतुत्वमिति मातापितृतुल्यतैव। तथा क्वचित्सत्यपि हिंसानिमित्तयोगित्वे परोपकारार्थप्रवृत्तौ वचनाद्दोषाभावः, यथाऽऽह संवर्तः—"बन्धने गोश्चिकित्सार्थे गूढगर्भविमोचने। यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं न विद्यते॥ औषधं स्नेहमाहारं ददद्गोब्राह्मणादिषु। दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते॥ दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। प्राणसंत्राण सिद्ध्यर्थं प्रायश्चित्तं न विद्यते॥" इति एतच्चादाननिदाननिपुणभिषग्विषयम्। इतरस्य

१. ख स्यापि सम्बन्ध०। २. ख. तडागेखनितृ०। ३ ख. देवकूपतडा०। ४. ख. दप्यफलत्वम्०। ५. ख. ग. कारणत्वं कारणतयापि०। ६. क. ग्रतायां कारणं०। ७ क. कारणयोगित्वं। ८. ग. ख. मीत्येवं।

तु "भिषङ्मिथ्या चरन्दाप्य:" इत्यत्र दोषो दर्शितः । यत्तु मन्युनिमित्ताक्रोशनादि कर्मकुर्वतोऽपि नामगृहीत्वोन्मादादिनाऽऽत्मानं व्यापादयति तत्रापि न दोषः—"अकारणं तु यः कश्चिद्द्विजः प्राणान्परित्यजेत् । तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्तयेत्॥"इति स्मरणात्। तथा यत्राप्याक्रोशकादिजनितमन्युनाऽऽत्मानं खड्गादिना प्रहृत्य मरणादर्वागाक्रोशनादिकर्ता धनदानादिना संतोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राक्रोशकस्यापराध इति तत्रापि वचनान्न दोषः; यथाऽऽह विष्णुः—"उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः । तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते ॥" इति । एतेषां च प्रयोजकादीनां दोषगुरुलघुभावपर्यालोचनया प्रायश्चित्तविशेषं वक्ष्यामः ॥ २२७ ॥

ब्रह्महत्यासमा याह—

**गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।**
**ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ २२८ ॥**

गुरूणामाधिक्येनाधिक्षेपः अनृताभिशंसनम्—"गुरोरनृताभिशंसनमिति महापातकसमानि" इति गौतमस्मरणात् । एतच्च लोकाविदितदोषाभिशंसनविषयं—"दोषं बुद्ध्वा न पूर्वं परेषां समाख्याता स्यात्संव्यवहारे चैनं परिहरेत्" इत्यापस्तम्बस्मरणात् । नास्तिक्याभिनिवेशेन वेदकुत्सनम् । सुहृन्मित्रं, तस्याब्राह्मणस्यापि वधः । अधीतस्य वेदस्यासच्छास्त्रविनोदेनालस्यादिना वा नाशनं विस्मरणम् । एतानि प्रत्येकं ब्रह्महत्यासमानि । यत्पुनः "स्वाध्यायाग्निसुतत्यागः" इत्यधीतत्यागस्योपपातकमध्ये परिगणनं तत्कथञ्चित्कुटुम्बभरणाकुलतयाऽसच्छास्त्रश्रवणव्यग्रतया वा विस्मरणे द्रष्टव्यम् ॥ २२८ ॥

सुरापानसमान्याह—

**निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।**
**रजस्वला मुखास्वादः सुरापानसमानि तु ॥ २२९ ॥**

---

१. व्य० १४२। २. क. क्रोशादिकर्मकुर्व० । ३. ख. यथा यत्राप्या०। ४.—२१. १०। ५. क. ग. स्यात्सव्यव०। ६ —१. २१. २० । ७. प्रा० २३९.।

निषिद्धं लशुनादिकं तस्य मतिपूर्वं भक्षणम् । अत एव मनुः—"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेन्नरः ॥" इति । अमतिपूर्वे तु प्रायश्चित्तान्तरम्—"अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यदि चान्द्रायणं वाऽपि शेषेषूपवसेदहः ॥" इति तेनैवोक्तत्वात् । जैह्मयं कौटिल्यम्—अन्याभिसंधानेनान्यवादित्वमन्यकर्तृत्वं च । अत्र च जैह्मयमिति यद्यपि सामान्येनोक्तं, तथाऽपि प्रायश्चित्तस्य गुरुत्वान्निमित्तस्यापि गुरुविषयं जैह्मयमिति गौरवं गम्यते । अस्ति च नैमित्तिकपर्यालोचनया निमित्तस्य विशेषावगतिः ; यथा "यस्योभावग्नी अनुगतौ स्यातामभिनिम्लोचेद्वा पुनराधेयं तत्र प्रायश्चित्तिः" इति अत्रोभावित्यस्य निमित्तविशेषणत्वेन हविरुभयत्ववदविवक्षितत्वेऽप्यग्निद्वयनिष्पादकपुनराधेयरूपनैमित्तिकविधिबलादग्निद्वयानुगतिरेव निमित्तमिति कल्प्यते ; तथाऽत्रापीति युक्तं निमित्तगौरवकल्पनम् । तथा समुत्कर्षनिमित्तं राजकुलादावचतुर्वेद एव चतुर्वेदोऽहमित्यनृतभाषणम् । रजस्वलायां वक्त्रासवसेवनम् एतानि सुरापानसमानि ॥ २२९ ॥

सुवर्णस्तेयसमान्याह—

**अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।**
**निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितम् ॥ २३० ॥**

अश्वादिनां ब्राह्मणसंबन्धिनां, निक्षेपस्य च सुवर्णव्यतिरिक्तस्यापहरणमेतत्सर्वं सुवर्णस्तेयसमं वेदितव्यम् ॥ २३० ॥

गुरुतल्पसमान्याह—

**सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।**
**सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ २३१ ॥**

सखा मित्रं, तस्य भार्या ; कुमार्युत्तमजातीया कन्यका, तासु,—"सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः । दूषणे तु करच्छेद उत्तमायां

१.—५. १९. । २.—५. २०. । ३. ख. विग्रयम् । जैह्मय० । ४. ख. राधेयरूपे नैमि० । ५. ख. लाया अकामवशेनवक्त्रास० ।

वधस्तथा ॥" इति तत्रैव दण्डविशेषप्रतिपादनात्प्रायश्चित्तगुरुत्वं युक्तम् । स्वयोनिर्भगिनी, अन्त्यजा चाण्डाली, सगोत्रा समानगोत्रा, सुतस्त्री स्नुषा,—एतासां गमनं प्रत्येकं गुरुतल्पसमम् । एतच्च रेतःसेकादूर्ध्वं वेदितव्यम्; अर्वाङ्निवृत्तौ तु न गुरुतल्पसमत्वं, किं त्वल्पमेव प्रायश्चित्तं—"रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥" इति मानवे रेतःसेक इति विशेषणोपादानात् । सगोत्राग्रहणेनैव सिद्धे पुनः सुतस्त्रीग्रहणं प्रायश्चित्तगौरवप्रतिपादनार्थम् । ब्रह्महत्यादिसमत्ववचनं गुर्वधिक्षेपादेस्तत्तन्निमित्तप्रायश्चित्तोपदेशार्थम् । ननु वेदनिन्दादौ दोषस्य लघुत्वाद्गुरुतरं ब्रह्महत्यादिप्रायश्चित्तं न युज्यते । नैवम् । गुरुप्रायश्चित्तोपदेशबलादेव दोषगुरुत्वावगतेः । न च ब्रह्महत्यादिप्रायश्चित्तातिदेशार्थमेवेदं वचनं भवति, किं तु दोषगौरवमात्रप्रतिपादनपरमित्याशङ्कनीयम् । यतस्तावन्मात्रप्रतिपादनपरत्वे ब्रह्महत्यासममिदं गुरुतल्पसममित्यादिभेदेन समत्वाभिधानं नोपपद्यते । तच्च प्रायश्चित्तं समशब्देनोपदिश्यमानं ब्रह्महत्यादिप्रायश्चित्तेभ्यः किञ्चिन्न्यूनमेवोपदिश्यते—लोके राजसमो मन्त्रीत्यादिवाक्येषु समशब्दस्य किञ्चिद्धीने प्रयोगदर्शनात्, महतः पातकस्येतरस्य च तुल्यत्वस्यायुक्तत्वाच्च । एवं च सति याज्ञवल्क्येन ब्रह्महत्यासमत्वेनोक्तानामपि ब्रह्मोज्झत्ववेदनिन्दासुहृद्वधानां मनुना यत्सुरापानसाम्यं—"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाज्ययोर्जग्धिः सुरापानसमानि षट् ॥" इत्युक्तं तत्प्रायश्चित्तविकल्पार्थम् । एवमन्येष्वपि वचनेषु विरोधः परिहर्तव्यः । यत्तु वसिष्ठेन "गुरोरलीकनिर्बन्धे कृच्छ्रं द्वादशरात्रं चरित्वा सचैलः स्नातो गुरुप्रसादात् पूतो भवति" इति लघुप्रायश्चित्तमुक्तं तदमतिपूर्वे सकृदनुष्ठाने च वेदितव्यम् ॥ २३१ ॥

गुरुतल्पातिदेशमाह—

**पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।**
**मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ २३२ ॥**

---

१. व्य०२८८. । २. ख. गुरुतल्पेन समत्व०। ३.—११. ५८. । ४. ख. देस्तन्निमि०।
५. ख. गुरुत्वमवगम्यते । न च० । ६.—११. ५६. । ७. ख. त्रकं चारि० ।

आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
लिङ्गं छित्वा वधस्तत्र सकामायाः स्त्रिया अपि॥ २३३ ॥

पितृष्वस्रादयः प्रसिद्धाः, ताः गच्छन् गुरुतल्पगः ; तस्य लिङ्गं छित्वा राज्ञा वधः कर्तव्यो दण्डार्थं, प्रायश्चित्तं च तदेव । चशब्दाद्राज्ञीप्रव्रजितादीनां ग्रहणम् ; यथाऽऽह नारदः—"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताऽऽचार्यभार्या च सगोत्रा-शरणगता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गच्छन्गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते॥"इति। राज्ञी राज्यस्य कर्तुर्भार्या न क्षत्रियस्यैव—तद्गमने प्रायश्चित्तान्तरोपदेशात् । धात्री मातृव्यतिरिक्ता स्तन्यदानादिना पोषयित्री । साध्वी व्रताचारिणी । वर्णोत्तमा ब्राह्मणी। अत्र च मातृग्रहणं दृष्टान्तार्थम् । अयं च लिङ्गच्छेदवधात्मको दण्डो ब्राह्मणव्यतिरिक्तस्य—"न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।" इति तस्य वधनिषेधात्, वधस्यैव प्रायश्चित्तरूपत्वात् । अस्य च विषयं गुरुतल्पप्रायश्चित्तप्रकरणे प्रपञ्चयिष्यामः । अत्र स्नुषाभगिन्योः पूर्वश्लोकेन गुरुतल्पसमीकृतयोः पुनर्ग्रहणं प्रायश्चित्तविकल्पार्थम् । यदा पुनरेताः स्त्रियः सकामाः सत्य एतानेव पुरुषान्वशीकृत्योपभुञ्जते तदा तासामपि पुरुषवद्वध एव दण्डः, प्रायश्चित्तं च । एतानि गुर्वधिक्षेपादितनयागमनपर्यन्तानि महापातकातिदेशविषयाणि सद्यः-पतनहेतुत्वात् पातकान्युच्यन्ते ; यथाऽऽह यमः—"मातृष्वसा मातृसखी दुहिता च पितृष्वसा । मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः एतेन्नरः॥" इति । गौतमेन पुनरन्येषामपि पातकत्वमुक्तं— "मातृपितृयोनिसंबद्धाङ्गस्तेननास्तिकानिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः, पातकसंयोजकाश्च" इति । तेषां च महापातकोपपातकमध्यपाठान्महापातकान्न्यूनत्वमुपपातकाच्च गुरुत्वमवगम्यते । तदुक्तं—" महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्॥" इति। तथा चाङ्गिराः—"पातकेषु सहस्रं स्यान्महत्सु द्विगुणं तथा । उपपापे तुरीयं स्यान्नरकं वर्षसंख्यया ॥" इति ॥ २३२ ॥ २३३ ॥

१.—१२. ७३, ४, ५. । २.—२१. १२. ।

एवं महापातकानि तत्समानि च पातकानि परिगणय्योपपातकानि परिगणयितुमाह—

गोवधो व्रात्यता स्तेयमृणानां चानपाक्रिया ।
अनाहिताग्नितापण्यविक्रयः परिवेदनम् ॥ २३४ ॥

भृतादध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥ २३५ ॥

स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ २३६ ॥

धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ।
पितृमातृसुतत्यागस्तडागारामविक्रयः ॥ २३७ ॥

कन्यासंदूषणं चैव परिविन्दकयाजनम्[1] ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ २३८ ॥

आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बांधवत्याग एव च ॥ २३९ ॥

इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥ २४० ॥

शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ।
तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥ २४१ ॥

असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।

१. क. रिवेदकया० ।

भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥ २४२ ॥

गोवधो गोपिण्डव्यापादनम् । कालेऽनुपनीतत्वं व्रात्यता । ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम् । गृहीतस्य सुवर्णादेरप्रदानमृणानामपाकरणं, तथा देवर्षिपितॄणां संबन्ध्यर्णस्यानपाकरणं च । सत्यधिकारेऽनाहिताग्नित्वम् । ननु ज्योतिष्टोमादिकामश्रुतयः स्वाङ्गभूताग्निनिष्पत्त्यर्थमाधानं प्रयुञ्जत इति मीमांसकप्रसिद्धिः, अतश्च यस्याग्निभिः प्रयोजनं तस्य तदुपायभूताधाने प्रवृत्तिर्व्रीह्याद्यर्थिन इव धनार्जने, यस्य पुनराग्निभिः प्रयोजनं नास्ति तस्याप्रवृत्तिरिति कथमानाहिताग्निता दोषः? उच्यते। अस्मादेवाऽऽधानस्यावश्यकत्ववचनान्नित्यश्रुतयोऽपि साधिकारत्वाविशेषादाधानस्य प्रयोजिका इति स्मृतिकाराणामभिप्रायो लक्ष्यत इत्यदोषः । तथा अपण्यस्य लवणादेर्विक्रयः । सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः परिवेदनम् ॥ २३४ ॥

पणपूर्वाध्यापकादध्ययनग्रहणं पणपूर्वाध्यापनम् । परदारसेवनं गुरुदारतत्समव्यतिरेकेण । पारिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम् । वार्धुष्यं प्रतिषिद्धवृद्ध्युपजीवनम् । लवणस्योत्पादनम् ॥ २३५ ॥

स्त्रिया वधः—आत्रेयी सगर्भा ऋतुमती, अत्रिगोत्रपरिणीता वा ब्राह्मण्या अप्यात्रेयीव्यतिरेकेण । शूद्रवधः । अदीक्षितविट्क्षत्रियवधः । निन्दितार्थोपजीवनमराजस्थापितार्थोपजीवनम् । नास्तिक्यं नास्ति परलोक इत्याद्यभिनिवेशः । व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसङ्गः । सुतानामपत्यानां विक्रयः ॥ २३६ ॥

धान्यं व्रीह्यादि, कुप्यमसारद्रव्यं, त्रपुसीसादि, पशवो गवादयः,—तेषामपहरणम् । "गोवधो व्रात्यता स्तेयम्" इत्यनेन स्तेयग्रहणेनैव सिद्धे पुनर्धान्यकुप्यादिस्तेयग्रहणं नित्यार्थम् । अतो धान्यादिव्यतिरिक्तद्रव्यस्तेये नावश्यमेतदेव प्रायश्चित्तम्, अपि तु ततो न्यूनमपि भवत्येव । एतेन बान्धवत्यागग्रहणेनैव सिद्धे पुनः पित्रादित्यागग्रहणं व्याख्यातम् । अयाज्यानां

१. ख. कारित्वावि० । २. क. ध्युपजीवित्वम् । ३. क. विट्क्षत्रवध० । ४. क. व्रात्यतास्तेय ग्रहणेनैवसिद्धे० । ५. क. पुत्रादित्याग० ।

जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम् । पितृमातृसुतानामपतितानां त्यागो गृहान्निष्कासनम् । तडागारामस्य चोद्यानोपवनादेर्विक्रयः ॥ २३७ ॥

कन्यायाः दूषणमङ्गुल्यादिना योनिविदारणं न तु भोगः—तस्य "सखिभार्याकुमारीषु" इति गुरुतल्पसमत्वस्योक्तत्वात्। परिविन्दकयाजनम्। तस्य च कन्याप्रदानम् । काटिल्यं गुरोरन्यत्र गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वमुक्तम् । पुनर्व्रतलोपग्रहणं शिष्टाप्रतिषिद्धेष्वपि हरिचरणकमलप्रेक्षणात् प्राक् ताम्बूलादिकं न भक्षयामीत्येवं रूपेषु प्राप्त्यर्थं, न तु स्नातकव्रतप्राप्त्यर्थं—"स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्।" इति मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् ॥ २३८ ॥

तथाऽऽत्मार्थं च पाकलक्षणक्रियारम्भः—"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।" इति तस्यैव प्रतिषिद्धत्वात् । क्रियामात्रविषयत्वे तु प्रतिषेधकल्पनया गौरवं स्यात् । मद्यपायाः स्त्रियाः जायाया अपि निषेवणमुपभोगः । स्वाध्यायत्यागो व्याख्यातः । अग्नीनां च श्रौतस्मार्तानां त्यागः । सुतत्यागः संस्काराद्यकरणम् । बान्धवानां पितृव्यमातुलादीनां त्यागः सति विभवे अपरिरक्षणम् ॥ २३९ ॥

पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो न त्वाहवनीयपरिरक्षणार्थमपि । स्त्रियां हिंसया औषधेन च वर्तनं जीवनं स्त्रीहिंसौषधजीवनम्—तत्र स्त्रीजीवनं नाम भार्यां पण्यभावेन प्रयोज्य तल्लब्धोपजीवनं वा, हिंसया जीवनं प्राणिवधेन जीवनम्, औषधजीवनं वशीकरणादिना । हिंस्रयन्त्रस्य तिलेक्षुपीडाकरस्य प्रवर्तनम् । व्यसनानि मृगयादीन्यष्टादश । आत्मविक्रयो द्रव्यग्रहणेन परदास्यकरणम् ॥ २४० ॥

शूद्रसेवनम् । हीनेषु मैत्रीकरणम् । अनूढसवर्णदारस्य केवलहीनवर्णदारोपयमनं, साधारणस्त्रीसंभोगश्च । अगृहीताश्रमित्वम् । परपाकरतित्वम् ॥ २४१ ॥

---

१. प्रा० २३९. । २. ख. ग्रहणमशिष्टाप्र० । ३.—११. २०३. । ४.—३. ११८. । ५. क. प्रतिषेधेकल्प० । ६. क. स्त्रियः हिंसया० । ७. क. वशीकरणेन० । ८. क. परदासीकरण० । ९ ख. श्रमित्वं सत्यधिकारे ।

असच्छास्त्रस्य चार्वाकादिग्रन्थस्याधिगमः । सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारित्वम् । भार्याया विक्रयः—चशब्दान्मन्वाद्युक्ताभिचारामतिपूर्वलशुनादिभक्षणादेर्ग्रहणम्—एषां गोवधादीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या । मनुना पुनरन्यान्यपि निमित्तानि जातिभ्रंशकरसङ्करीकरणापात्रीकरणमलिनीकरणसंज्ञानि परिगणितानि—"ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः । जैह्मयं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥ खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥" इति । अतोऽन्यन्निमित्तजातं प्रकीर्णकं कथ्यते । बृहद्विष्णुना च समस्तानि प्रायश्चित्तनिमित्तान्युत्तरोत्तरलघीयांसि पृथक्संज्ञाभेदाभिन्नानि दर्शितानि— "ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णापहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च । मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि । यागस्थक्षत्रियवधो वैश्यस्य च रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य चा घातनं ब्रह्महत्यासमानि । कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ । ब्राह्मणभूमिहरणं सुवर्णस्तेयसमम् । पितृव्यमातामहमातुलनृपपत्न्यभिगमनं गुरुदारगमनसमम् । पितृष्वसृमातृष्वसृगमनं श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च स्वसुः सख्याः सगोत्राया उत्तमवर्णाया रजस्वलायाः शरणगतायाः प्रव्रजिताया निःक्षिप्तायाश्च—गमनमित्येतान्यनुपातकानि । अनृतवचनं समुत्कर्षे राजगामि च पैशुन्यं गुरोश्चालीकनिर्बन्धो वेदनिन्दा अधीतस्य त्यागोऽग्निपितृमातृसुतदाराणां च अभोज्यान्नभक्षणं परस्वापहरणं परदाराभिगमनमयाज्यानां च याजनं व्रात्यता भृतकाध्यापनं भृतादध्ययनादानं सर्वाकरेष्वधिकारो महायन्त्रप्रवर्तनं द्रुमगुल्मवल्लीलतौषधीनां हिंसया जीवनमभिचारमूलकर्मसु च प्रवृत्तिरात्मार्थक्रियारम्भः अनाहिताग्निता देवर्षिपितृणामृणस्यानपाक्रिया असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवण-

---

१. क. चपुंसिमैथुन्यं जाति० । २. क. मसम्यस्य च० । ३.—११. ६७, ८, ९, ७०. । ४. ख. त्तरोत्तरं लघी० । ५ ख. णस्य भूमि० । ६. ख. दारानुगम० । ७. ख. भृतकाध्यय० । ८. . च्छास्त्राभि गम० ।

मित्युपपातकानि । ब्राह्मणस्य रुजःकरणमघ्रेयमद्ययोर्घ्रीतिर्जैह्मयं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकराणि । ग्राम्यारण्यपशूनां हिंसनं सङ्करीकरणम् । निन्दितेभ्यो धनादानं, वाणिज्यं, कुसीदजीवनम्, असभ्यभाषणं, शूद्रसेवनमित्यपात्रीकरणानि । पक्षिणां जलचराणां जलजानां च घातनं, कृमिकीटघातनं, मद्यानुगतभोजनमिति मलावहानि।" यदनुक्तं तत्प्रकीर्णकम् " इति । कात्यायनेन तु महापातकसमानां विष्णुनाऽनुपातकत्वेनोक्तानां पातकसंज्ञा दर्शिता— "महापापं चातिपापं तथा पातकमेव च । प्रासङ्गिकं चोपपापमित्येवं पञ्चको गणः॥" इति । ननूपपातकादीनां कथं पातकत्वं—पतनहेतुत्वाभावात् । यदि तेषामपि पतनहेतुत्वं तर्हि "मातृपितृयोनिसंबन्धाङ्गः" इत्यादिपरिगणनमनर्थकम् । अथैवमुच्येत—यद्यपि महापातकतत्समेष्विव सद्यः पातित्यहेतुत्वं नास्ति, तथाऽप्यभ्यासापेक्षया पातित्यहेतुत्वमविरुद्धं—"निन्दितकर्माभ्यासी" इति गौतमवचनादिति । मैवम् । अभ्यासस्यानिरूप्यमाणत्वात् द्विः शतकृत्वो वेति तत्राविशेषेऽङ्गीक्रियमाणे योऽपि द्विर्दिवा स्वपिति, यः शतकृत्वो वा गोवधं करोति, तयोरविशेषेण पातित्यं स्यात् । अत्रोच्यते । यत्रार्थवादे प्रत्यवायविशेषः श्रूयते, प्रायश्चितबहुत्वं वा, तस्मिन्निन्दितकर्माणि यावत्यभ्यस्यमाने महापातकतुल्यत्वं भवति—तावानभ्यासः पातित्यहेतुः । दिवास्वप्नादौ तु सहस्रकृत्वोऽप्यभ्यस्यमाने न महापातकतुल्यत्वं भवतीति न तत्र पातित्यम् । अतो युक्तमुपपातकादेरभ्यासापेक्षया पतनहेतुत्वम् ॥ २४२ ॥

एवं व्यवहारार्थं संज्ञाभेदसहितं प्रायश्चित्तपरिगणनं कृत्वा नैमित्तिकानि प्रदर्शयितुमाह—

**शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।**
**ब्रह्महा द्वादशाब्दानि मितभुक्शुद्धिमाप्नुयात् ॥ २४३ ॥**

शिरसः कपालमस्यास्तीति शिरःकपाली, तथा ध्वजवान्— "कृत्वा शवशिरोध्वजम्" इति मनुस्मरणात् । अन्यच्छिरःकपालं दण्डाग्रसमारोपितं ध्वजशब्दवाच्यं गृह्णीयात् । तच्च कपालं स्वव्यापादितब्राह्मणशिरःसंबन्धि ग्राह्यं— "ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसंचरेत्" इति ।

१. ख. मसत्यभाष०। २. क. चराणां च घात०। ३. क. मुच्यते यद्यपि०। ४.—२१. १.। ५.—११. ७२.।

शातातपस्मरणात् । तदलाभेऽन्यस्य ब्राह्मणस्यैव ग्राह्यम् । एतदुभयं पाणिनैव ग्राह्यं—"खट्वाङ्गकपालपाणिः" इति गौतमस्मरणात् । खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मको ध्वजो गृह्यते, न पुनः खट्वैकदेशः । तेन "महोक्षः खट्वाङ्गं परशुः" इत्यादिव्यवहारेषु तत्रैव प्रसिद्धेः । एतच्च कपालधारणं चिह्नार्थं न पुनर्भोजनार्थं भिक्षार्थं वा—"मृन्मयकपालपाणिर्भिक्षायै ग्रामं प्रविशेत्" इति गौतमस्मरणात् । तथा वनवासिना तेन भवितव्यं—"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।" इति मनुस्मरणात्, ग्रामसमीपादौ वा—"कृतवापनो वा निवसेद्ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा सर्वभूतहिते रतः ॥" इति तेनैवोक्तत्वात् । कृतवापनो वेति विकल्पाभिधानाज्जटी वेति लक्ष्यते । अत एव संवर्तः—"ब्रह्महा द्वादशाब्दानि वालवासा जटी ध्वजी ।" इति । तथा भिक्षाशनशीलश्च भवेत् । भिक्षा च लोहितकेन मृन्मयखण्डशरावेण ग्राह्या—"लोहितकेन खण्डशरावेण ग्रामं भिक्षायै प्रविशेत्" इत्यापस्तम्बस्मरणात् । सप्तागाराण्येवान्नमिष्टं लभ्यते न वा इत्येवमसंकल्पितानि भिक्षार्थं प्रविशेत् "सप्तागाराण्यसंकल्पितानि चरेद्भैक्षम्" इति वसिष्ठस्मरणात् । तथैककाल एव सा ग्राह्या—"एककालाहारः" इति तेनैवोक्तत्वात् । एतच्च भैक्षं ब्राह्मणादिवर्णेष्वेव कार्यं—"चातुर्वर्ण्यं चरेद्भैक्षं खट्वाङ्गी संयतात्मवान् ।" इति संवर्तस्मरणात् । तथा 'ब्रह्महाऽस्मि' इति स्वकर्म ख्यापयन् द्वारि स्थितो भिक्षां याचेत—"वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः ।" इति पराशरस्मरणात् । अयं च भैक्षाशित्वनियमो वन्येन जीवनाशक्तौ द्रष्टव्यः—"भिक्षायै प्रविशेद्ग्रामं वन्यैर्यदि न जीवति" इति संवर्तस्मरणात् । तथा ब्रह्मचर्यादियुक्तेन च तेन भवितव्यं "खट्वाङ्गकपालपाणिर्द्वादशवत्सरान् ब्रह्मचारी भिक्षायै ग्रामं प्रविशेत्कर्माचक्षाणो, यथोपक्रामेत्संदर्शनादार्यस्य" "उत्थितस्तु दिवातिष्ठेदुपविष्टस्तथा निशि । एतद्वीरासनं नाम सर्वपापप्रणाशनम्"

१ क. न्यस्यैव ब्राह्मणस्यग्राह्यम् । २.—२२. ४. । ३. पुष्पदन्तस्तोत्रे । ४. क. तत्रैवासिद्धेः । ५—२२. ४. (?) । ६. ख. तथा च वन० । ७. ख. द्वादशसमाः कुटिं कृ० । ८.—११. ७२. । ९.—११. ७८. । १०.—१२४. १४. । ११.—१०. ७. । १२. ख. तथासायङ्काला एव० । १३ ख तच्चभैक्षं० । १४. ख. चातुर्वर्ण्येचरेद्भै० । १५. ख. भिक्षांचरेत् । वेश्म । १६. ख. वन्यैर्जीव० । १७. ख. खट्वाङ्गपाण० । १८. ग. पथोपक्रमेत्सन्द । पक्रामेत्संसन्दर्श० । १९ क. ख. दार्यस्यस्थानापना० ।

"स्थानासनाभ्यां विहरेत्सवनेषूदकोपस्पर्शी[1]शुद्धयेत्[2]" इति गौतमस्मरणात् । ब्रह्मचारिग्रहणं च वर्जयेन्मधुमांसं गन्धमाल्यदिवास्वप्नाञ्जनोपानच्छत्रकामक्रोधलोभमोहहर्षनृत्यगीतपरिवादनभयानीति ब्रह्मचारिप्रकरणोक्ताविरुद्धधर्मप्राप्त्यर्थम् । अत एव शङ्खः—"स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलुः । भिक्षाचर्याग्निकार्यं च कूश्माण्डीभिः सदा जपः॥" इति । तस्य भवेदिति शेषः। अत्र "सवनेषूदकस्पर्शी" इति स्नानविधानात् तदङ्गभूतमन्त्रादिप्राप्तिरप्यत्रगम्यते । "शुचिना कर्म कर्तव्यम्" इत्यस्य सर्वकर्मसाधारणत्वाद्व्र[3]तचर्याङ्गभूतशौचसंपत्त्यर्थं स्नानवत्संध्योपासनमपि कार्यं—तस्यापि शौचापादनद्वारेण सर्वकर्मशेषत्वात् । तथा च दक्षः—"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेत् ॥" इति । न च "द्विजातिकर्मभ्यो हानिः पतनम्" इति वचनात् संध्योपासनायाश्च द्विजातिकर्मत्वादप्राप्तिरिति शङ्कनीयं ; यस्मात्पतितस्यैव व्रतचर्योपदेशात्तदङ्गतयैव संध्योपासनादिप्राप्तिः अतो द्विजातीनामध्ययनमिज्या दानं, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा इत्यादीनामेव द्विजातिकर्मणां व्रतचर्यान[4]ङ्गभूतानां हानिर्न सर्वेषाम्—तावन्मात्रबाधेन हानिवचनस्य चरितार्थत्वात् । इयं च मनुयाज्ञवल्क्यगौतमादिप्रतिपादिता द्वादशवर्षव्रतचर्या एकैव न पुनर्भिन्ना—परस्परसापेक्षत्वादविरोधाच्च । तथाहि । "भिक्षाशी कर्म वेदयन्" इत्युक्ते किं भिक्षापात्रम् ? केषां वा गृहेषु ? कतिषु वा ? इत्यकाङ्क्षा जायेतैव । तत्र "लोहितकेन खण्डशरावेण" इत्याप[5]स्तम्बादिवचनैः परिपूरणमविरुद्धम् । अतः सर्वैरेककल्पोपदेशात्[6]कैश्चिदुक्तं—'मनुगौतमाद्युक्तेतिकर्तव्यतायाः परस्परसापेक्षत्वेऽपि विकल्प' इति—तदनिरूप्यैवोक्तमिति मन्तव्यम् । एवं द्वादशवर्षाणि व्रतचर्यामावर्त्य ब्रह्महा शुद्धिमाप्नुयात् । इयं[7] च अकामकृतब्रह्मवधविषया[8]—"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥[9]" इति मनुस्मरणात् ॥ अत्रेदं चिन्तनीयं—किं तत्र द्वित्र[10]ब्राह्मणवधे प्रायश्चित्तस्य तन्त्रत्वमुतावृत्तिरिति । केचिन्मन्यन्ते—"ब्रह्महा द्वादशाब्दानि" इत्यत्र ब्राह्मशब्दस्यैकस्मिन् द्वयोर्बहुषु साधार-

१. क. स्पर्शाच्छुद्धयेदि०। २१. ६.। २. ख. रणस्मरणत्वा०। ३ क. सर्वकर्म अङ्गत्वापूत्वात्०। ४. ख. चर्याङ्गभूता० । ५.—१. २४. १४. । ६. क. पदेशात्कैश्चिद्‌० । ७. क. इदं च० । ८. क. विषयम्० । ९.—११. ८९. । १०. क. द्विजब्राह्मण० ।

णत्वादेकस्मिन्ब्राह्मणवधे यत्प्रायश्चित्तं तदेव द्वितीये तृतीयेऽपि। तत्रैकब्राह्मणवधनिमित्तैक-प्रायश्चित्तानुष्ठाने सतीदं कृतमिदं नेति न शक्यते वक्तुम्।देशकालकर्तॄणां प्रयोगानुबन्ध-भूतानामभेदेनागृह्यमाणविशेषत्वात्तन्त्रानुष्ठानेनैव पापक्षयलक्षणकार्यनिष्पत्तिर्युक्ता।यथा तन्त्रानुष्ठितैः प्रयाजादिभिराग्नेयादिषु तन्त्रेणैवानेकोपकारलक्षणकार्याणां निष्पत्तिः। न चैवं वाच्यं—द्वित्रब्राह्मणवधे पापस्य गुरुत्वात्; "एनसि गुरूणि गुरूणि लघूनि लघूनि" इति गौतमवचनादावृत्तमेव प्रायश्चित्तानुष्ठानं युक्तं—विलक्षणकार्ययोस्तन्त्रेण निष्प-त्त्यनुपपत्तेरिति। यतो नेदं वचनमावृत्तिविधायकं, किं तूपदिष्टानां गुरुलघुकल्पानां व्यवस्थाप्रतिपादनपरम्। न च द्वितीयब्राह्मणवधे पापस्य गुरुत्वं—प्रमाणाभावात्। यच्च मनुदेवलाभ्यामुक्तं—"विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं चरेत्। तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः॥"इति तदपि "प्रतिनिमित्तं नैमित्तिकमावर्तते" इति न्यायेन द्वित्रब्राह्मणवधगोचरनैमित्तिकशास्त्रावृत्त्यनुवादेन चतुर्थे तदभावविधिपरं न पुनर्द्वितीयब्रह्मवधे प्रायश्चित्तानुष्ठानद्वैगुण्यविधिपरमपि—वाक्यभेदप्रसङ्गात्। तस्मात् द्वित्रिब्राह्मणवधेऽपि सकृदेव द्वादशवार्षिकाद्यनुष्ठानं युक्तम्। यथा "अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादिगृहदाहादिनिमित्तेषु चोदितानां क्षामवत्यादी-नां युगपदनेकेष्वपि गृहदाहादिनिमित्तेषु सकृदेवानुष्ठानम्। अत्रोच्यते। न हि वचनविरोधे न्यायः प्रभवति। वचनं च "विधेः प्राथमिकात्" इत्यादिकं द्वित्रि-ब्राह्मणवधे प्रायश्चित्तानुष्ठानावृत्तिविधिपरम्। एवं सति न्यायलभ्यतन्त्रानुष्ठानबाधे-नाऽऽवृत्तिविशेषकरं स्यात्। इतरथा शास्त्रतः प्राप्त्यनुवादकत्वेनानर्थकं स्यात्, न च वाक्यभेदः—चतुर्थादिब्रह्मवधपर्युदासेनेतरत्रावृत्तप्रायश्चित्तविधानेनैकार्थत्वात्। किं च "चतुर्थे नास्ति निष्कृतिः" इति। लिङ्गदर्शनाद्धन्यमानब्राह्मणसङ्ख्योत्कर्षे दोषगौरवं गम्यते। तथा देवलादिवचनाच्च—"यस्त्यादनभिसंधाय पापं कर्म सकृत्कृतम्। तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः॥"इति। न च विलक्षणयोर्गुरुलघुदोषयोः क्षयस्तन्त्रेण निष्पद्यते। अत एवं विधेषु दोषगुरुत्वेन कार्यवैलक्षण्यादपि प्रतिनिमित्तं नैमित्ति-कस्याऽऽवृत्तिर्युक्ता,क्षामवत्यादिषु पुनः कार्यस्यावैलक्षण्याद्युक्तस्तन्त्रभाव इत्यलं प्रपञ्चेन॥

१. क. यत्प्रायश्चित्त०। २. क. शेषत्वात्तत्रानुष्ठा०। ३.— १९. १९.। ४. क. प्रायश्चित्रानं यु०। ५. ख. द्विगुणं भवेत्। तृ०। ६. अयं श्लोको मनुस्मृतौ न दृश्यते। ७. क. परमितिवाक्य०।

यच्चेदं "चतुर्थे नास्ति निष्कृतिः" इति तदपि महापातकविषयं–पापस्यातिगुरुत्वेन प्रायश्चित्ताभावप्रतिपादनपरत्वात्। अतः शूद्रान्नसेवनादौ बहुशोऽप्यभ्यस्ते तदनुगुणप्रायश्चित्तावृत्तिः कल्पनीया न पुनः प्रायश्चित्ताभावः। अत एवोक्तं मनुना—"पूर्णे चानश्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्" इति। इदं च द्वादशवार्षिकं व्रतं साक्षाद्धन्तुरेव—"ब्रह्महा" इति तस्यैवाभिधानात्। अनुग्राहकप्रयोजकादेस्तु तत्र दोषानुसारेण प्रायश्चित्ततारतम्यं कल्पनीयम्। तत्रानुग्राहको यत्प्रायश्चित्तभाजं पुरुषमनुगृह्णाति स तत्प्रायश्चित्तं पादोनं कुर्यात्; अतस्तस्य द्वादशवार्षिके पादोनं नववार्षिकं, प्रयोजकस्त्वर्धोनं षड्वार्षिकं कुर्यात्, अनुमन्ता पुनः सार्धपादं सार्धचतुर्वार्षिकं, निमित्ती त्वेकपादं त्रिवार्षिकम्। अत एव सुमन्तुः—"तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि। निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात्॥ त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम्। गच्छेद्वाऽपि विशुद्ध्यर्थं तत्पापस्येति निश्चितम्॥ अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि। क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः॥ वत्सरात्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये॥" इति॥ यदा पुनर्निमित्त्यत्यन्तगुणवानात्मघाती वात्यन्तनिर्गुणः तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात्–"केशश्मश्रुनखादीनां कृत्वा तु वपनं वने। ब्रह्मचर्यं चरन्विप्रो वर्षेणैकेन शुद्ध्यति" इति तेनैवोक्तत्वात्। अनयैव दिशानुग्राहकप्रयोजकादीनां येऽनुग्राहकप्रयोजकादयस्तेषामपि प्रायश्चित्तं कल्प्यम्। अस्यां च कल्पनायां "प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो भूय आरभते तस्मिन्फलविशेषः" इत्यापस्तम्बीयं वचनं मूलम्। तथा प्रोत्साहकादीनामपि दण्डप्रायश्चित्ते कल्प्ये। तथाऽऽह पैठीनसिः—"हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः। प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः॥ आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम्। उपेक्षकः शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः॥ अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत्। यथाशक्त्यनरूपं च दण्डं चैषां प्रकल्पयेत्॥" इति॥ तथा बालवृद्धादीनां साक्षात्कर्तृत्वेऽप्यर्धमेव—"अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च॥" इत्याङ्गिरःस्मरणात्॥

१.—११. १४०। २. ख. साहसात्क्रोधा०। ३. ख. गुणवदुपरि आत्मघा। ४.—२. २९. १.। ५. ख. कल्प्ये तथा०।

तथा "अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा । अर्धमेव भवेत्पुंसां तुरीयं तत्र योषिताम् ॥" इति ॥ तथानुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तं— "स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः ॥" इति विष्णुस्मरणात् । अतश्च यच्छङ्खेन "ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सुहृज्जनः ॥ इति प्रतिपाद्योक्तं— "अतो बालतरस्यास्य नापराधो न पातकम् । राजदण्डो न तस्यास्ति प्रयाश्चित्तं न विद्यते ॥" इति, तदपि संपूर्णप्रायश्चित्ताभावप्रतिपादनपरं, न पुनः सर्वात्मना तदभावप्रतिपादनपरम्—आश्रमविशेषानिरपेक्षेण श्रूयमाणेषु "ब्राह्मणो न हन्तव्यः" "तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" इत्येवमादिष्वनपेक्षितवयोविशेषस्यैवाधिकारात् । अतश्चतदीयमपि प्रायश्चित्तं पित्रादिभिरेवाचरणीयं—"पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विदध्यात्" इति तस्यैव पुत्रहिताचरणेधिकृतत्वात् । यत्र पुनः कस्मिंश्चिद्ब्रह्मवधे प्रयोजकभावमापन्नस्यान्यस्मिन्साक्षात्कर्तृत्वे गुरुलघुप्रायश्चित्तसन्निपातः तत्र द्वादशवार्षिकादिगुरुप्रायश्चित्तान्तःपातिनः प्रयोजकसंबन्धिलघुप्रायश्चित्तस्य प्रसङ्गात्कार्यसिद्धिः । न चैवं सत्यविशेषाल्लघुकल्पेन महतोऽपि सिद्धिः स्यादित्याशङ्कनीयम् । अत्र ह्यन्तःपातितयाऽनुष्ठाने विशेषानवगमात्प्रसङ्गात्कार्यसिद्धिरुच्यते । न च लघ्वन्तःपाती महाकल्प इति कुतः प्रसङ्गाशङ्का । न च चैत्रवधजनितकल्मषक्षयार्थमनुष्ठितेन कथं विष्णुमित्रवधोत्पाद्यपापनिवृत्तिरिति वाच्यम् । चैत्राद्युद्देशस्यातन्त्रत्वात् । अतो यथा काम्यनियोगनिष्पत्त्यर्थं स्वर्गार्थं वाऽनुष्ठितैराग्नेयादिभिर्नित्यनियोगनिष्पत्तिस्तद्वल्लघुप्रायश्चित्तस्यापि कार्यसिद्धिः ॥ यत्पुनर्मध्यमाङ्गिरोवचनं—"गवां सहस्रं विधिवत्पात्रेभ्यः प्रतिपादयेत् । ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च" इति तत्सवनस्थगुणवद्ब्राह्मणविषयम् । "एतच्च द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्" इत्येतद्वाक्यविहितद्विगुणद्वादशवार्षिकव्रतचर्याशक्तस्य वेदितव्यम्—प्रायश्चित्तस्यातिगुरुत्वात्, न त्वनावृत्ताद्वादशवार्षिकाविषयम् । तत्र हि द्वादशदिनान्येकैकं प्राजापत्यमिति गणनायां प्राजापत्यानां षष्ट्यधिकशतत्रयं भवति । यद्यपि प्राजापत्यस्यान्ते त्र्यहमुपवासोऽधिकः तथाऽप्यत्र वनवासजटाधारणवन्याहारत्वादिरूपतपोविशेषयुक्तत्वादुपवा-

१. ख. वाऽधिकतस्तदीय० । ३. ख. शेषानपगमा० । ४. ख. सिद्धिरवगम्यते । न च० । ५. ख. नुष्ठेयेनवि० ।

साभावेऽप्येकैकस्य[1] द्वादशाहस्य प्राजापत्यतुल्यत्वम् । ततश्च "प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्विचक्षणः । गवामभावे दातव्यं तन्मूल्यं वा न संशयः॥" इत्यनेन न्यायेन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं शतत्रयं भवति, न पुनः सहस्रम् अतो यथोक्त एव विषयो युक्तः । यदपि शङ्खवचनं— "विप्रं[2] प्रमाप्य द्वादशसंवत्सरान्षट् त्रीन्सार्धसंवत्सरं च व्रतान्यादिशेत्, तेषामन्ते गोसहस्रं तदर्धं[3] तस्यार्धं तदर्धं च दद्यात्सर्वेषां वर्णानामानपूर्व्येण" इति द्वादशवार्षिकगोसहस्रयोः समुच्चयपरं तदाचार्यादिहननविषयं द्रष्टव्यं—तस्यातिगुरुत्वात् । तथा च दक्षः—"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । आचार्ये शतसाहस्रं श्रोत्रिये[4] दत्तमक्षयम्॥" इति प्रतिपाद्योक्तवान्[5], "समं द्विगुणसाहस्रमानन्त्यं च यथाक्रमम् । दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि ॥" इति । तथाऽऽपस्तम्बेन द्वादशवार्षिकमुक्त्वोक्तमस्मिन्नेव विषये—"गुरुं हत्वा श्रोत्रियं वा एतदेवव्रतमोत्तमादुच्छ्वासाच्चरेत्" इति[6] । तत्र यावज्जीवमावर्त्यमाने व्रते यदा त्रैगुण्यं चातुर्गुण्यं वा संभाव्यते तदा तत्रासमर्थस्य[7] बुद्धधनस्यायं दानतपसोः समुच्चयो द्रष्टव्यः । द्वादशवार्षिकव्यतिरिक्तानां तु सुमन्तुपराशराद्युक्तानां प्रायश्चित्तानामुत्तरत्र व्यवस्थां वक्ष्यामः । ननु च द्वादशवार्षिकादिकल्पानां व्यवस्था कुतोऽवसिता। न[8] तावद्द्वादशवार्षिकादिविधायकवाक्यैरिति युक्तं—तत्राप्रतीतेः । न च वाच्यं प्रमाणावगतगुरुलघुकल्पानां बाधो वा प्रसाङ्क्षीदिति[9] व्यवस्था कल्प्यत इति—विकल्पसमुच्चयाङ्गाङ्गिभावानामन्यतमाश्रयणेनापि बाधस्य सुपरिहरत्वम् ॥ अत्रोच्यते ॥ न तावद्द्वादशवार्षिकसेतुदर्शनादीनां विषमकल्पानां विकल्पोऽवकल्प्यते[10]—विकल्पाश्रयणे गुरुकल्पानामनुष्ठानासंभवेनानर्थक्यप्रसंगात् । न च षोडशिग्रहणाग्रहणवद्विषमयोरपि विकल्पोपपत्तिरिति वाच्यम् । यतस्तत्रापि सति संभवे ग्रहणमेवेति युक्तं कल्पयितुम् । यद्वा षोडशिग्रहणाग्रहणवद्विषमयोरपि विकल्पोपपत्तिरिति वाच्यम् । यतस्तत्रापि सति संभवे ग्रहणमेवेति युक्तं कल्पयितुम् । यद्वा षोडशिग्रहणानुगृहीतेनातिरात्रेण क्षिप्रं स्वर्गा-

१. क प्येकस्यद्वाद० । २. ख. शङ्खवचनं—पूर्ववदमतिपूर्वं चतुर्षु वर्णेषु विप्रप्रमा० । ग. वचनं प्रमा० । ३. ख. तस्यार्धं च दद्या० । ग० तदर्धं तस्यार्धं च दद्या । ख. तदर्धं तस्यार्धं तदर्धं दद्या० । ४. क. सोदर्येदत्त० । ५. ख. चत्वात् । समं द्वि. । ६.—१ २४. २४.। ७. ख. दा तत्र समर्थ० । ८. ख. वसिता । तावद्वा० । ९. माप्रसाक्षी० । १०. क. विकल्पोवकल्पते०। ११. क. ङ्गाङ्गीभाव०

दिसिद्धिरतिशयितस्य वा स्वर्गस्येति कल्पनीयम्—इतरथा ग्रहणविधेरानर्थक्यप्रसङ्गात्। नापि समुच्चयः—उपदेशातिदेशप्राप्तिमन्तरेण समुच्चयो न संभवति—उपदेशावगतनैरपेक्ष्यस्य बाधप्रसङ्गात् । न चाङ्गाङ्गिभावः[1]—श्रुत्यादिविनियोजकानामभावात् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि विनियोजकानि । अतः परस्परोपमर्दपरिहारार्थं विषयव्यवस्थाकल्पनैवोचिता। सा च जातिशक्तिगुणाद्यपेक्षया कल्पनीया—"जातिशक्तिगुणापेक्षं सुकृद्बुद्धिकृतं तथा । अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् ॥" इति स्मरणात् ॥ २४३ ॥

पूर्वोक्तस्य ब्रह्महत्याप्रायश्चित्तस्य[2] नैमित्तिकं समाप्त्यवधिमाह—

**ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा[3] ।**
**तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४४ ॥**

यैश्चौरव्याघ्रादिभिर्व्यापाद्यमानस्य[4] ब्राह्मणस्यैकस्याप्यात्मप्राणानन्तरे कृत्वा प्राणत्राणं करोति, गवां वा द्वादशकस्यासावपरिपूर्णेऽपि द्वादशवार्षिके शुद्ध्येत्[5] । यद्यपि प्राणत्राणे प्रवृत्तास्तदकृत्वैव म्रियते तथाऽपि शुद्ध्यत्येव । अत एव मनुना "ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च ॥" इति[6] । ब्राह्मणरक्षणं तदर्थमरणं च, पृथगुपात्तम् । तथा परकीयाश्वमेधावभृथाख्यकर्माङ्गभूतस्नानसमये स्वयमपि स्नात्वा ब्रह्महत्यायाः शुद्धिं माप्नुयात् । स्नानं च स्वकल्मषं विख्याप्य कुर्यात् । तथा च मनुः "शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे । स्वमेनोऽवभृथे स्नात्वा हयमेधे विमुच्यते ॥" इति[7] । भूमिदेवा ब्राह्मणा ऋत्विजस्तेषां राज्ञा यजमानेन नरदेवेन समवाये स्वीयमेनः शिष्ट्वा विख्याप्याश्वमेधावभृथे स्नात्वा शुद्ध्येत् यदि तैरनुज्ञातो भवति—"अश्वमेधावभृथं गत्वा तत्रानुज्ञातः स्नातः सद्यः पूतो भवति" इति शङ्खस्मरणात् ॥ अश्वमेधावभृथग्रहणमग्निष्टुन्मध्यानां पञ्चदशरावात्रादिक्रत्वन्तराणामग्निष्टुत्समाप्तिकानां च[8] सर्वमेधादीनामुपलक्षणम्—अश्वमेधावभृथे वाऽन्ययज्ञेऽप्यग्निष्टुदन्तश्च" इति[9] गौतम-

१. क. ङ्गाङ्गीभाव०। २. ख. ब्रह्महत्यादिप्रायश्चि०। ३. ख. क स्थ च। तथाऽश्व०। ४ ग. यच्चौरव्या०। ५.—११. ७९.। ६. क. ग. विशुध्यत इति०। ७.—११. ८२.। ८. ख. कानां च सर्वमे०। ९.—२२. ९. १०.।

स्मरणात्। अयं च प्रक्रान्तद्वादशवार्षिकस्य कथञ्चित् ब्राह्मणप्राणत्राणादिकं कुर्वते व्रतसमाप्त्यवधिरुच्यते। यथा सारस्वते सत्रे प्लाक्षं प्रस्रवणं प्राप्योत्थानमृषभैकशतानां वा गवां सहस्रमभावे सर्वस्वदानं गृहपतिर्मरणे चेति, न पुनः स्वतन्त्रं प्रायश्चित्तान्तरम्। तथा च शङ्खः—"द्वादशे वर्षे शुद्धिं प्राप्नोत्यन्तरा वा ब्राह्मणं मोचयित्वा गवां वा द्वादशानां परित्राणात्सद्य एवाश्वमेधावभृथस्नानाद्वा पूतो भवति" इति। अत एव मनुना—"कृतवापनो वा निवसेत्" इति द्वादशवार्षिकस्य गुणविधिं प्रक्रम्य—"ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत्। मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च" इत्यादिना मध्ये ब्राह्मणत्राणादिकमभिधाय—"एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः। समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति" इति द्वादशवार्षिकमेवोपसंहृतम्॥ ननु ब्रह्महत्यायाः शुद्धिमाप्नुयादिति ब्राह्मणत्राणादीनां द्वादशवार्षिकेण सहैकफलत्वावगमात्स्वातन्त्र्यमेव युक्तं, न पुनरङ्गत्वम्। किं च प्रधानविरोधित्वादपि नाङ्गत्वम्। प्रधानानुग्राहकं ह्यङ्गं भवति। न च प्रारब्धद्वादशवार्षिकस्येदं विधानम्। येन तत्कार्ये विधानं गम्यते। यथा "सत्रायावगूर्य विश्वजिता यजेत्" इति सत्रप्रयोगप्रवृत्तस्य तत्परिसमापनाक्षमस्य विश्वजिद्विधानमतोऽपि स्वातन्त्र्यं युक्तम्—यथाग्निप्रवेशलक्ष्यभावादीनाम्। न च तेषामपि द्वादशवार्षिकोपक्रमोपसंहारमध्यपठितत्वेन तदङ्गत्वमिति शङ्कनीयम्। यतः सत्यपि मध्यपाठे निर्ज्ञातप्रयोजनत्वेन प्रयोजनाकाङ्क्षाविरहान्न परस्परमङ्गाङ्गित्वं युक्तम्। यथा सामिधेनीप्रकरणमध्यवर्तिनां निवित्पदानामग्निसमिन्धनप्रकाशनत्वेन सामिधेनीभिः सहैककार्याणां न सामिधेन्यङ्गत्वम्। न चैकान्ततोऽग्निप्रवेशादीनां द्वादशवार्षिकमध्ये पाठः—वसिष्ठगौतमादिभिरेषां द्वादशवार्षिकप्रक्रमात्प्रागेव पठितत्वात्। इदमेव स्वातन्त्र्यं प्रकटयितुं मनुना—"लक्ष्यं शस्त्रभृतां वा स्यात्" "प्रास्येदात्मानमग्नौ* वा" इति प्रतिवाक्यं

---

* 'लक्ष्यं शस्त्रभृतां वास्याद्विदुषामिच्छयात्मनः। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्छिराः' इति।

१. ख. प्रस्रवणं प्राणोत्थान०। २. ख. सहस्रस्याभावे०। क. सहस्रभागे सर्वस्व०। ३. ख. सर्वस्वजान्यां गृह०। ग. स्वयाज्यान्यां गृह०। ४. क गृहपतिमरणेवेति०। ५. ख. भवति। अत०। ६.—११. ७८। ७.—११. ७९.। ८.—११. ८१.। ९.—११, ७३.।

वाशब्दः पठितः । तथा प्रतिप्रायश्चित्तमेवोपसंहृतम्—मनुना "अतोऽन्यतममास्थाय विधिं विप्रः समाहितः । ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया" इति । अतोऽग्निप्रवेशादीनां स्वातन्त्र्यमेव युक्तम् । अतश्च ब्राह्मणत्राणादेरप्येकफलत्वान्नाङ्गत्वमिति ॥ उच्यते ॥ परिहृतमेतत् "अन्तरा ब्राह्मणं मोचयित्वा' इत्यादिना शङ्खवचनेनाङ्गत्वावगमात् । अङ्गस्यैव सतः प्रधानद्वारेण फलसंबन्धः । न च प्रधानविरोधः । यतो ब्राह्मणत्राणावधिकस्यैव व्रतानुष्ठानस्य फलसाधनत्वं विधीयते इति न विरोधः ॥ २४४ ॥

किं च—

**दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।**
**दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः ॥ २४५ ॥**

दीर्घेण बहुकालव्यापिना तीव्रेण दुःसहेनामयेन कुष्ठादिव्याधिना ग्रस्तं पीडितं ब्राह्मणं गां वा तथाविधां गामपि दृष्ट्वा निरातङ्कं नीरुजं कृत्वा ब्रह्महा शुचिर्भवति । ननु "ब्राह्मणस्य परित्राणात्" इत्यत्र यदुक्तं ब्राह्मणरक्षणं—तदेव किमर्थं पुनरुच्यते "ब्राह्मणं गामथापिवा" इति ॥ सत्यमेवम् ॥ किंतु आत्मप्राणपरित्यागेनाधस्तनवाक्ये ब्राह्मणरक्षणमुक्तम्, अधुना पुनरौषधदानादिनेति विशेषः । अमुनैवाभिप्रायेणोक्तं मनुना—"विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते ।' इति ॥ २४५ ॥

किं च—

**आनीय विप्रसर्वस्वं हृतं घातित एव वा ।**
**तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ॥ २४६ ॥**

विप्रस्यापहृतसर्वस्वतयावसीदतः संबन्धि द्रव्यं भूहिरण्यादिकं चौरैर्हृतं साकल्येनानीय रक्षणं यः करोति स विशुद्ध्यति । आनयने प्रवृत्तः स्वयं चौरैर्घातितो वा यदिवा तन्निमित्तं ब्राह्मणसर्वस्वानयनार्थं तत्र युध्यमानः शस्त्रै

---

१.—११. ८६. । २. ख विधांपथिदृष्ट्वा० । ३ —प्रा० २४४. । ४. ख. मित्तेया प्राणा० । ५—११. ८०. ।

क्षतो मृतकल्पो जीवन्नपि विशुध्यति । शस्त्रैरिति बहुवचनं क्षतबहुत्वप्राप्त्यर्थम् । अत एव मनुना—"[1]त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा" इति [2]त्र्यवरग्रहणं कृतम् । एतस्य श्लोकद्वयोक्तकल्पपञ्चकस्य ब्राह्मणरक्षणरूपत्वेन "अन्तरा वा ब्राह्मणं मोचयित्वा" इत्यनेन शङ्खवचनेन क्रोडीकृतत्वाद् द्वादशवार्षिकसमाप्त्यवधित्वेन विनियोगान्न स्वातन्त्र्यम् ॥ २४६ ॥

प्रायश्चित्तान्तरमाह—

**लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै [4]तनुम् ।**
**मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २४७ ॥**

"लोमभ्यः स्वाहा" इत्येवमादिभिर्मन्त्रैर्लोमप्रभृतिमज्जान्तां तनुं जुहुयात् । इतिशब्दः करणत्वनिर्देशार्थः । एवंशब्दः प्रकारसूचनार्थः । हिशब्दः स्मृत्यन्तरप्रसिद्धत्वगादीनां प्रभृतिशब्देनाक्षिप्यमाणानां द्योतनार्थः । ततश्च [5]लोमादीनि होमद्रव्याणि चतुर्थ्या निर्दिश्यन्ते। स्वाहाकारं पठित्वा तैर्मन्त्रैर्जुहुयात्। ते च हूयमानद्रव्याणां लोमत्वग्लोहितमांसमेदःस्नाय्वस्थिमज्जानामष्टसंख्यत्वादष्टौ मन्त्रा भवन्ति । तथा च वसिष्ठः—"[6]ब्रह्महाग्निमुपसमाधाय जुहुयाल्लोमानि, मृत्योर्जुहोमि लोमभिर्मृत्युं वाशय" इति प्रथमाम् "त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वाशय" इति द्वितीयाम् "लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वाशय" इति तृतीयाम् "मांसानि मृत्योर्जुहोमिमांसैर्मृत्युं वाशय" इति चतुर्थीम् [४] "मेदो मृत्योर्जुहोमि मेदसा मृत्युं वाशय" इति पञ्चमीम् (५) "स्नायुनिमृत्योर्जुहोमि स्नायुभिर्मृत्युं वाशय" इति षष्ठीम् (६) "अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वाशय" इति सप्तमीम् । (७) मज्जां मृत्योर्जुहोमि मज्जाभिर्मृत्युं वाशय "इत्यष्ठमीम्" (८) अत्र च "लोमप्रभृतितनुं जुहुयात्" इति लोमादीनां होमद्रव्यत्वावगमात् 'लोमभ्यः स्वाहा" इति सत्यपि चतुर्थीनिर्देशे लोमादीनां न देवतात्वं कल्प्यते—द्रव्यप्रकाशनेनैव मन्त्राणां होमसाधनत्वोपपत्तेः । किं तु "लोमभिर्मृत्युंवाशय" इत्यादिवासिष्ठमन्त्रपर्यालोचनया मृत्योरेव हविः संबन्धावगमात् देवतात्वं कल्प्यते । अतश्च लोमादीनि

---

१. ख. 'त्रिवारं प्रति० । २.—११. ८०. । ३. ख. त्रिवारग्रह० । ४. क. वैतनूम् । ५. ख. ततो लोमादी० । ६. ख. 'भ्रूणहा' इति पाठान्तरम् ।

सामर्थ्यात्स्वधितिनावदाय मृत्यूद्देशेनाष्टौ होमान्कृत्वान्ते तनुं प्रक्षिपेत् । अतो यत्कैश्चिदुक्तमनादिष्टद्रव्यत्वादाज्यहविष्का होमा इति—तदनिरूप्यैवोक्तमित्युपेक्षणीयम् । जुहुयादित्यनेनाग्नौ सिद्धे "भ्रूणहाग्निमुपसमाधाय" इति पुनरग्निग्रहणं लौकिकाग्निप्राप्त्यर्थम् । युक्तं चैतत् । पतिताग्नीनां प्रतिपत्तिविधानात्—"आहिताग्निस्तु यो विप्रो महापातकभाग्भवेत् । प्रायश्चित्तैर्न शुद्ध्येत तदग्नीनां तु का गतिः॥ वैतानंप्रक्षिपेत्तोये सालाग्निं शमयेद्बुध" इत्युशनःस्मरणात् , तथा 'महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि । पुत्रादिः पालयेदग्नीन् युक्तश्चादोषसंक्षयात् ॥ प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम् ॥ " इति कात्यायनस्मरणात् । तनुप्रक्षेपश्चोत्थायोत्थाय त्रिरधोमुखेन कर्तव्यः । यथाऽऽह मनुः—"प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा" इति । गौतमेनाप्यत्र विशेषो दर्शितः—"प्रायश्चित्तम् । अग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य" इति। अवच्छातस्य अनशनकर्शितकलेवरस्येत्यर्थः । तथा च काठकश्रुतिः—"अनशनेन कर्शितोऽग्निमारोहेत् " इति । इदं च मरणान्तिकंप्रायश्चित्तं कामकारविषयम । यथाह मध्यमाङ्गिराः—"प्राणान्तिकं च यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः । तत्कामकारविषयं विज्ञेयं नात्र संशयः" तथा "यः कामतो महापापं नरः कुर्यात्कथञ्चन । न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपातनादृते ॥ " इति । एतच्च प्रायश्चित्तं स्वतन्त्रमेव, न ब्राह्मणत्राणादिवत् द्वादशवार्षिकांतर्भूतमित्युक्तं प्राक् ॥ २४७ ॥

किं च—

**संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ।**
**मृतकल्पः प्रहारार्तो जीवन्नपि विशुध्यति ॥ २४८ ॥**

अथवा संग्रामे युद्धभूमावुभयदलप्रेरितशरसंपातस्थाने लक्ष्यभूतो मृतः शुद्धिमवाप्नुयात् । गाढमर्मजनितप्रहार[3]तीव्रवेदनो मृतकल्पो मूर्च्छितो जीवन्नपि विशुद्ध्यति । लक्ष्यभावश्च प्रायश्चित्त्यहमित्येवं विदुषां धनुर्विद्याविदां संग्रामे स्वेच्छया कर्तव्यो, न तु राज्ञा बलात्कारयितव्यः । यथाऽऽह मनुः—"लक्ष्यं शस्त्रभृतां

---

१.—११. ७३. । २.—२२. १. २. । ३. ख. गाढमर्मप्रहारजनिततीव्रवे० । ४. क. प्रायश्चित्ती अयमिति० ।

वा स्याद्विदुषामिच्छयात्मनः' इति । इदं च मरणान्तिकत्वात् साक्षात्कर्तुः क्षत्रियस्य कामकारविषयम् ॥ अपिशब्दादश्वमेधादिनापि शुद्ध्यति । यथाऽऽह मनुः—"यजेत वाश्वमेधेन स्वर्जिता गोसवेन च । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥" इति ॥ अश्वमेधानुष्ठानं सार्वभौमक्षत्रियस्यैव—"यजेत वाश्वमेधेन क्षत्रियस्तु महीपतिः" इति पराशरस्मरणात्, "नासार्वभौमो यजेत" इत्यसार्वभौमस्य प्रतिषेधदर्शनाच्च । इदं चाश्वमेधानुष्ठानं सार्वभौमस्य कामकारकृते मरणान्तिकस्थाने द्रष्टव्यं—'महापातककर्तारश्चत्वारो मतिपूर्वकम् । अग्निं प्रविश्य शुद्ध्यन्ति स्थित्वा वा महति क्रतौ' इति यमेन मरणफलाग्निप्रवेशतुल्यतया महाक्रतोरश्वमेधस्य निर्दिष्टत्वात् । स्वर्जितादयश्च त्रैवर्णिकस्याहिताग्नेरिष्टिप्रथमयज्ञस्य द्वादशवार्षिकेण सह विकल्पन्ते । न च स्वर्जिताद्यर्थमाधानं प्रथमयज्ञानुष्ठानं वा कार्यम्, पतितस्य द्विजातिकर्मस्वनधिकारात् । न च संध्योपासनवदविरोध इति युक्तम्—आधानादेरुत्तरक्रतुशेषत्वाभावात् । ते च दक्षिणान्यूनाधिक्याश्रयणेन द्वादशवार्षिकषड्वार्षिकत्रैवार्षिकादिषु साक्षाद्धन्त्रादिषु व्यवस्थापनीयाः ॥ २४८ ॥

किं च—

**अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् ।**
**शुद्ध्येत वा मिताशीत्वा प्रतिस्रोतःसरस्वतीम् ॥ २४९॥**

अरण्ये निर्जनप्रदेशे नियतो नियताहारो—"जपेद्वा नियताहारः" इति मनुस्मरणात्—त्रिवारं मन्त्रब्राह्मणात्मकं वेदं जपित्वा शुद्ध्यति, संहिताग्रहणं पदक्रमव्युदासार्थम् । यद्वा मिताशनो भूत्वा प्लाक्षात्प्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः स्रोतः स्रोतः प्रति सरस्वतीमित्वा गत्वा विशुद्ध्यति । अशनं च हविष्येण कार्यम्—"हविष्यभुग्वानुचरेत्प्रतिस्रोतः सरस्वतीम्" इति मनुस्मरणात् । अयं च वेदजपो विदुषो हन्तुर्निर्धनस्यात्यन्तगुणवतो निर्गुणव्यापादने प्रमादकृते द्रष्टव्यः । सरस्वतीगमनं तु तादृश एव विषये विद्याविरहिणो द्रष्टव्यं—निमित्तिनश्च—"तिरस्कृतो यदा विप्रो निर्गुणो म्रियते यदि" इति सुमन्तुवचनस्य

१.—११. १७. । २.—११. ७४. । ३. ख. द्वादशवार्षिकाद्यर्हेषु साक्षाद्धन्त्रा० । ४. क. त्रिष्कृत्वोवेदहि० । ५.—११. ७७. । ६.—११. ७७. ।

दर्शितत्वात्॥ यत्पुनर्मनुवचनं—"जपित्वान्यतमं वेदं योजनानां शतं व्रजेत्" इति—तदपि "अरण्ये नियतो जप्त्वा" एतस्यैव विषयेऽशक्तस्य द्रष्टव्यम् ॥ २४९ ॥

किं च—

**पात्रे धनं वा पर्याप्तं दत्वा शुद्धिमवाप्नुयात् ।**
**आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी तथा ॥ २५० ॥**

"न विद्यया केवलया" इत्याद्युक्तलक्षणे पात्रे गोभूहिरण्यादिकं जीवनपर्याप्तं धनं दत्त्वा शुद्धिमवाप्नुयात् । तद्धनं यः प्रतिगृह्णाति तस्य वैश्वानरदेवत्येष्टिः शुद्ध्यर्थं कर्तव्या । एतच्चाहिताग्निविषयम् । अनाहिताग्नेस्तु तद्देवत्यश्चरुर्भवति—"य एवाहिताग्नेर्धर्मः स एवौपासनिकस्य" इति गृह्यकारवचनात् । वाशब्दात्सर्वस्वं, सपरिच्छेदं वा—गृहं दद्यात् । यथाह मनुः—"सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदम्" इति । इदं च पात्रे धनदानं निर्गुणस्य धनवतो हन्तुर्निर्गुणव्यापादने द्रष्टव्यम् । तत्रैव विषये अविद्यमानान्वयस्य सर्वस्वदानं, सान्वयस्य तु सोपस्करगृहदानमिति व्यवस्था। यदपि पराशरेणोक्तं—"चातुर्विद्योपपन्नेतु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत् । वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः । अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥ गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च । एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम् । ब्रह्महा विप्रमुच्येत स्नात्वा तस्मिन्महोदधौ ॥ ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम् । दत्त्वा वस्त्रं पवित्राणि पूतात्मा प्रविशेद्गृहम् ॥ गवां चाऽपि शतं दद्याच्चातुर्विद्याय दक्षिणाम् । एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः" इति—तदपि "पात्रे धनं वा पर्याप्तम्" इत्यनेन समानविषयम् ॥ यच्च सुमन्तुवचनं—"ब्रह्महा संवत्सरं कृच्छ्रं चरेदधःशायी त्रिषवणी कर्मावेदको भैक्षाहारो दिव्यनदीपुलिनसंगमाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्यात्स्थानवीरासनी संवत्सरे पूर्णे हि-

१.—११. ७५. । २. ख. क्तस्यवद्रष्ट० । ३. आ० २००. । ४. ख. पर्याप्तं समर्थं धनं दत्त्वा० । ५. क. च्छदं० । ६.—११. ७६. । ७. क. यत्तुसुमन्तु० ।

रण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो ददन्पूतो भवति" इति—तदपि हन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने द्रष्टव्यम् ॥ यत्पुनर्वासिष्ठवचनं—"द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्" इति—तन्मनसाध्यवसितब्रह्महत्यस्य स्वत एवोपरतजिघांसस्य वेदितव्यम् ॥ यत्पुनः "षण्डं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । चान्द्रायणं च कुर्वीत पराकद्वयमेव च ॥" इति षट्त्रिंशन्मतवचनं—तदप्रत्यानेयपुंस्त्वस्य सप्रत्ययवधे द्रष्टव्यम् ॥ अत्रैव विषये अप्रत्ययवधे बृहस्पतिराह—'अरुणायाः सरस्वत्याः संगमे लोकविश्रुते । शुध्येत्त्रिषवणस्नायी त्रिरात्रोपोषितो द्विज' इति । एवमन्यान्यपि स्मृतिवचनान्यान्विष्य विषमाणां व्यवस्था विज्ञेया, समानां तु विकल्पः । एतानि च द्वादशवार्षिकादिधनदानपर्यन्तानि ब्राह्मणस्यैव, क्षत्रियादेस्तु द्विगुणादिकम् । यथाहाङ्गिराः—"पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥" इति एवं च ब्राह्मणानां येन हन्तृहन्यमानगतगुणविशेषेण यः प्रायश्चित्तविशेषो व्यवस्थितः स एव तद्गुणविशिष्टे क्षत्रियादौ हन्तरि द्विगुणस्त्रिगुणो वेदितव्यः । अनयैव दिशा क्षत्रियवैश्यादावपि हीनेनोत्कृष्टवधे दोषगौरवात्प्रायश्चित्तस्यापि द्वैगुण्यादि कल्पनीयम् । दोषगौरवं च दण्डगौरवादवगम्यते । यथोक्तं—"प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः । वर्णानामानुलोम्येन तस्मादर्धार्धहानित' इति ॥ यत्तु चतुर्विंशतिमतवचनं—"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः । पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत् ॥ शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मसु ॥" इति—तत्प्रतिलोमानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । तथा मूर्धावसिक्तादीनामप्यनुलोमोत्पन्नानां दण्डवत्प्रायश्चित्तमूहनीयम् । दर्शितः दण्डतारतम्यं—"दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः" इति । ततश्च मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणादतिरिक्तं क्षत्रियात् न्यूनमध्यर्धं द्वादशवार्षिकं भवति । अनयैव दिशा प्रतिलोमोत्पन्नानामपि प्रायश्चित्तगौरवमूहनीयम्, तथा आश्रमिणामप्यङ्गिरसा विशेषो दर्शितः—"गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि । शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शनात् ॥" इति । शौचवदिति "एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम्" इति

---

१. ख. यणं नाकुर्वी । २. ख. म्ये च तस्मा ।

वचनाद्यथा ब्रह्मचार्यादीनां शौचं द्विगुणादिक्रमेण वर्धते —तथा शोधनं प्रायश्चित्तमपि भवतीत्यर्थः ॥ ब्रह्मचारिणस्तु प्रायश्चित्तद्वैगुण्यं षोडशवर्षादूर्ध्वमेव—अर्वाक्तु पुनः "बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति" इति षोडशवर्षादर्वाचीनस्यार्धप्रायश्चित्ताभिधानात् । न च द्वादशवार्षिके चतुर्गुणे क्रियमाणे मध्ये विपत्तिशङ्कया समाप्त्यनुपपत्तेः प्रवृत्तिरेव नोपपद्यते इति शङ्कनीयं—यतः प्रक्रान्तप्रायश्चित्तस्य मध्ये विपन्नस्यापि पापक्षयो भवत्येव; यथाऽऽह हारीतः—"प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते । पूतस्तदहरेवासाविह लोके परत्र च ॥" इति । व्यासोऽप्याह—"धर्मार्थं यतमानस्तु न चेच्छक्नोति मानवः । प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः" इति ॥ २५० ॥

अधुना निमित्तान्तरेषु ब्रह्महत्याप्रायश्चित्तस्यातिदेशमाह—

**यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम् ।**

**गर्भहा च यथावर्णं तथात्रेयीनिसूदकः ॥ २५१ ॥**

दीक्षणीयाद्युदवसानीयापर्यन्ते सोमयागप्रयोगे वर्तमानौ क्षत्रियवैश्यौ यो व्यापादयति—असौ ब्रह्महणि पुरुषे यद्व्रतमुपदिष्टं द्वादशवार्षिकादि—तच्चरेत् । यद्यपि यागशब्दः सामान्यवचनः । तथाप्यत्र सोमयागमभिधत्ते—"सवनगतौ च राजन्यवैश्यौ" इति वसिष्ठेन सवनत्रयसंपाद्यस्य सोमयागस्यैव निर्दिष्टत्वात् । अत्र च गुरुलघुभूतानां द्वादशवार्षिकादिब्रह्महत्याव्रतानां जातिशक्तिगुणाद्यपेक्षया प्राग्वद्व्यवस्था वेदितव्या । एवं गर्भवधादिष्वपि । मरणान्तिकं तु नातिदिश्यते—व्रतग्रहणात् । अतः कामतो यागस्थक्षत्रियादिवधे व्रतस्यैव द्वैगुण्यम् । तच्च व्रतं संपूर्णमेव कर्तव्यं...."पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वा" इति प्रक्रम्यापस्तम्बेन द्वादशवार्षिकाभिधानात् । गर्भं च विप्रासु संभूतं हत्वा यथावर्णं यद्वर्णपुरुषवधे, यत्प्रायश्चित्तमुक्तं; तद्वर्णगर्भवधतच्चरेत् । एतच्चानुपजातस्त्रीपुन्नपुंसकव्यञ्जनगर्भविषयं—

१. क. अर्वाकपुन० । २. ख. मत्रवैनास्तिः । ३. निषूदक० । ४.—ध०. १. २४. ६. ५. ध० १. २४. २०. ।

"हत्वा गर्भमविज्ञातम्" इति मानवे विशेषदर्शनात्। अत्र च यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव तद्वधनिमित्तव्रतप्राप्तिः। तथापि स्त्रीत्वस्यापि संभवात् "स्त्रीशूद्रविट्क्षत्रवध" इत्युपपातकत्वेन तत्प्रायश्चित्तप्राप्तिरपिस्यात् अतः स्त्रीपुन्नपुंसकत्वेनाविज्ञातेऽपि ब्राह्मणगर्भत्वमात्रप्रयुक्तं ब्रह्मणहत्याव्रतं कुर्यादित्यर्थवदतिदेशवचनम्। उपजाते स्त्रीपुंसादिविशेषव्यञ्जने यथायथमेव प्रायश्चित्तम्। यश्चात्रेय्या निसूदको व्यापादकः—सोऽपि तथा व्रतं चरेत्। हन्यमानात्रेयीवर्णानुरूपं व्रतं चरेदित्यर्थः। आत्रेयीशब्देन ऋतुमत्युच्यते—"रजस्वलामृतुस्नातामात्रेयीमाहुः अत्र ह्येतदपत्यं भवति" इति वसिष्ठस्मरणात्, "अत्रिगोत्रजा च—अत्रिगोत्रां वा नारीम्" इति विष्णुस्मरणात्। एतदुक्तं भवति। ब्राह्मणगर्भवधे ब्राह्मण्यात्रेयीवधे च ब्रह्महत्याव्रतम्। अत्र क्षत्रियगर्भवधे क्षत्रियात्रेयीवधे च क्षत्रहत्याव्रतम्। एवमन्यत्रापीति। चशब्दात्साक्ष्ये अनृतवचनादिष्वपि। यथाऽऽह मनुः—"उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा। अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्" इति। यत्र व्यवहारे असत्यवचनेन वर्णिनां वधप्राप्तिः—तद्विषयमेतत्—प्रायश्चित्तस्यातिगुरुत्वात्। प्रतिरम्भः क्रोधावेशः। निक्षेपश्च ब्राह्मणसंबन्धी। स्त्री चात्राहिताग्निभार्या पतिव्रतात्वादिगुणयुक्तोच्यते, सवनस्था च: यथाऽऽहाङ्गिराः—"आहिताग्नेर्द्विजाग्रयस्य हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च" इति—सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्" इति पराशरस्मरणाच्च॥ एवं च सवनस्थाग्निहोत्रिण्यात्रेयीवधे ब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य "स्त्रीशूद्रविट्क्षत्रवध" इत्युपपातकमध्यपाठादुपपातकत्वमेव॥ ननु ब्राह्मणो न हन्तव्य इत्यत्र निषेधेऽनुपादेयगतत्वेन लिङ्गवचनयोरविवक्षितत्वाद्ब्राह्मणजातेश्च स्त्रीपुंसयोरविशेषात्तदतिक्रमनिमित्तप्रायाश्चित्तविधेः "ब्रह्महा द्वादशाब्दानि" इत्यस्योभयत्र प्राप्तत्वात् किमर्थं "तथात्रेयीनिसूदक" इत्यतिदेशवचनम्॥ उच्यते॥ सत्यपिब्राह्मणत्वे अनात्रेय्या वधस्य महापातकप्रायश्चित्त निराकरणार्थम् अतस्तस्यपि पातकमध्यपाठादुपपातकप्रायश्चित्तमेव। आतिदेशिकेषु च प्रायश्चित्तस्यैवातिदेशो न पातित्यस्य अतः पतितत्यागादि कार्यमत्र न भवति॥ २५१॥

---

१.—११. ८७. । २.—पृ०. २३६. । ३. ख. निषूदको० । ४.—२०.—। ५.—५०.—९.। ६. ख. तथाह । ७.— ११. ८८. । ८ ख नेनप्राणिना० । ९. स्त्रीचाहिता० । १०. क. ग्रयस्य तथा पत्नीं । ११. पृ० । २६३. । १२. पृ० २४३. । १३. ख. निपूदक० ।

किं च—

**चरेद्व्रतमहत्वा पि घातार्थं चेत्समागतः ।**
**द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५२ ॥**

यथावर्णमित्यनुवर्तते । ब्राह्मणादिहनने कृतनिश्चयस्तद्व्यापादनार्थं[1] समागत्य शस्त्रादिप्रहारे कृते कतश्चित्प्रति प्रतिबन्धवशादसौ न मृतः—तदा अहत्वापि यथावर्णं ब्रह्महत्यादि व्रतं चरेत् । तथा च गौतमः—"सृष्टश्चेद्ब्राह्मणवधे अहत्वापि" इति[3] ॥ ननु हनने तदभावे चैकप्रायश्चित्तता न युक्ता ॥ सत्यम् ॥ अत एवौपदेशिकेभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवन्ति । एतच्च प्रपञ्चितं प्राक् । किं च यस्तु सवनसंपाद्यसोमयागमनुतिष्ठन्तं ब्राह्मणं व्यापादयति—तस्मिन्द्वादशवार्षिकादि व्रतं द्विगुणं समादिशेत् । तेषां च व्रतानां गुरुलघुभूतानां जातिशक्तिगुणाद्यपेक्षया सत्यपि सवनस्थत्वस्याविशेषे पूर्ववदेव व्यवस्थावगन्तव्या । ब्रह्महत्यासमानानां[4] तु गुर्वधिक्षेपादीनामातिदेशिकेभ्योऽपि न्यूनत्वादर्धोनं द्वादशवार्षिकादिप्रायश्चित्तमित्युक्तम् ॥ २५२ ॥

॥ इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् ॥

अथ क्रमप्राप्तं सुरापानप्रायश्चित्तं प्रक्रमते—

**सुराम्बुघृतगोमूत्रपयसामाग्निसन्निभम् ।**
**सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ २५३ ॥**

सुरादीनां मध्येऽन्यतममग्निसन्निभं क्वाथापादिताग्निस्पर्शदाहशक्तिकं कृत्वा पीत्वा सुरापो मरणाच्छुद्धिं प्राप्नोति । गोमूत्रसाहचर्याद्गव्ये एव घृतपयसी ग्राह्ये । घृतपयःसाहचर्याच्च स्त्रैणमेव गोमूत्रम् । एतच्चार्द्रवाससा कार्यं—'सुराप आर्द्रवासा अग्निवर्णां सुरां पिबेत्' इति पैठीनसिस्मरणात्, तथा "लौहेन पात्रेण सुरापोऽग्निवर्णां सुरामायसेन पात्रेण ताम्रेण वा पिबेत्" इति प्रचेतःस्मरणात् एतच्च सकृत्पानमात्रे—"सुरापानं सकृत्कृत्वाप्यग्निवर्णां सुरां पिबेत्" इत्यङ्गिरःस्मरणात् ॥ यत्तु वसिष्ठवचनम्—"अभ्यासे तु सुरायाश्च त्वग्निवर्णां (सुरां) पिबेद्द्विज" इति —तत्सुराव्यतिरिक्तमद्यपानाविषयम् । एतच्च कामकारविषयं—"सुरापाने कामकृते

---

१. ख. नार्थं सम्यगागं । २. ख. न्चित्प्रतिघातादि प्रबन्धव० । ३.—२२. ११. । ४. ख. सामानांतु । क. ग. समानानां गुर्वे ।

ज्वलन्तीं तां विनिः क्षिपेत् ॥ मुखे तया विनिर्दग्धे मृतः शुद्धिमवाप्नुयात्" इति बृहस्पतिस्मरणात् । यत्तु—"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्" इति मनुना मोहग्रहणं कृतं—तच्छास्त्रार्थापरिज्ञानाभिप्रायेण ॥ अत्रेदं चिन्तनीयं—किं सुराशब्दो मद्यमात्रे रूढ उत तिसृष्वेव गौडीमाध्वीपैष्टीष्वाहोस्वित्पैष्ट्यामेवेति॥ तत्र केचिन्मद्यमात्रे रूढ इति वर्णयन्ति । "अभ्यासे तु सुरायाः" इति वासिष्ठे पैष्ट्यादित्रयव्यतिरिक्तेऽपि मद्यपात्रे सुराशब्दप्रयोगदर्शनात् । न चासौ गौणः प्रयोग इति शङ्कनीयं—मदजननशक्तिमत्त्वोपाधिकतया सर्वत्र मुख्यत्वोपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वादिति—तदयुक्तं—"पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम् ॥ समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम् ॥" इति पुलस्त्येन मद्यविशेषत्वेन सुराया निर्दिष्टत्वात् । अतश्च मद्यमात्रे सुराशब्दप्रयोगो गौणः ॥ अन्ये पुनः पैष्ट्यादिषु तिसृषु सुराशब्दस्य रूढिं मन्यन्ते । तथा हि । यद्यप्यनेकत्र सुराशब्दप्रयोगो दृश्यते । तथापि कुत्रानादित्वमिति संदेहे—"गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा" इति मनुवचनाद्गुडमधुपिष्टविकारेष्वनादित्वानिधीरणात्तत्रैव मुख्यत्वं युक्तम् । न चानेकत्र शक्तिकल्पनादोषः—मदशक्तेरुपाधित्वाश्रयणेन तस्य सुपरिहरत्वात् । न च तालादिरसेष्वप्युपाधेर्विद्यमानत्वादतिप्रसङ्गः—पङ्कजादिशब्दवद्योगरूढत्वाश्रयणात् । अतश्च "यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः" इति तिसृणां सुराणां समानदोषत्वप्रतिपादनपरं—न पुनरनयोर्गौडीमाध्व्योः पैष्टीसुरासमत्वप्रतिपादनपरम् । द्विजोत्तमग्रहणं द्विजात्युपलक्षणम् ॥ एतदप्ययुक्तं—"द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्" इति पुलस्त्यवचने गौडीमाध्वीभ्यामपि सुरामद्यस्यातिरेकदर्शनात्, तथा—"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते" इत्यन्नविकारस्यैव सुरात्वनिर्देशादन्नशब्दस्य च "अन्नेन व्यञ्जनम्" इत्यादिषु व्रीह्यादिविकार एव प्रयोगदर्शनात्—गुडमधुनोश्च रसरूपत्वात्, तथा सौत्रामणीग्रहेषु चान्नविकार एव सुराशब्दस्य श्रुतत्वात्,—पैष्ट्येव सुरा मुख्योच्यते, इतरयोस्तु सुराशब्दो गौणः ॥ यत्तूक्तं—"गौडी माध्वी" इति मनुवचनात्तिसृष्वप्यौत्पत्तिकत्वनिर्धारणेति—तदप्ययुक्तं—यतो नेदं शब्दानु-

१.—११. ९०. । २.२०—२२. । ३. ११. ९४. । ४.—११. ९३. ।

शासनवच्छब्दार्थसंबन्धानादित्वप्रतिपादनपरं, किं तु कार्यप्रतिपादनपरम् । अतो गुरुप्रायश्चित्तनिमित्ततया गौडीमाध्व्योर्गौणः सुराशब्दप्रयोगः । एवं च नानेकशक्तिकल्पनादोषो नाप्युपाध्याश्रयणं कृतम् । न चात्र द्विजोत्तमग्रहणस्योपलक्षणत्वम् । अतश्च—"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥" इति पैष्ट्या एव वर्णत्रयसंबन्धित्वेन निषेधः, गौड्यादीनां तु मद्यानां ब्राह्मणसंबन्धित्वेनैव निषेधो, न क्षत्रियवैश्ययोः—"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥" इति मानवे ब्राह्मणेनेति विशेषोपादानात् । बृहद्विष्णुनापि ब्राह्मणस्यैव मद्यप्रतिषेधो दर्शितः—"माधूकमैक्षवं सैरं तालं खार्जूरपानसम् । मधूत्थं चैव मध्वीकं मैरेयं नालिकेरजम् । अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु" इति ॥ बृहद्याज्ञवल्क्येनापि क्षत्रियवैश्ययोर्दोषाभावो दर्शितः—"कामादपि हि राजन्यो वैश्यो वापि कथंचन । मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते ॥" व्यासेनापि तयोर्माध्वीपानमनुज्ञातम्—"उभौ मध्वासवक्षीबौ उभौ चन्दनचर्चितौ । एकपर्यङ्करथिनौ दृष्टौ मे केशवार्जुनौ ॥" इति । एवं ब्राह्मणसंबन्धित्वेन मद्यमात्रनिषेधे सत्यपि—"गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥" इति गौडीमाध्व्योः पृथङ्निषेधवचनं दोषगुरुत्वेन सुरासमत्वप्रतिपादनपरम् । अयं च सुरानिषेधोऽनुपनीतस्यानूढायाश्च कन्याया भवत्येव—"तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" इति जातिमात्रावच्छेदेन निषेधात् । अतश्च—"सुरां पीत्वा द्विजो मोहात् ॥" इति प्रायश्चित्तविधिवाक्ये मनुना यत् द्विजग्रहणं कृतं—तद्वर्णत्रयोपलक्षणार्थं—"निमित्तभूतनिषेधसापेक्षत्वान्नैमित्तिकविधेर्निषेधे च वर्णमात्रस्यावच्छेदकत्वात् । यथा "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति" इति निमित्तवाक्ये हविर्मात्राभ्युदयस्य निमित्तत्वावगतौ तत्सापेक्षनैमित्तिकवाक्ये श्रूयमाणमपि "त्रेधा तण्डुलान्विभजेत्" इति तण्डुलग्रहणं तण्डुलादिरूपहविर्मात्रोपलक्षणम् । इयांस्तु विशेष — "पादो

---

१.—११. ९३. । २.—११. ९५. । ३.—११. ९४. । ४.—११. ९३. । ५.—११. ९०. । ६. क. तण्डुलाज्यरूपहविं । ख. तण्डुलादिस्वरूप० ।

बालेषु दातव्यः सर्वपापेष्वय विधिः " इति वचनात् । कामकारेऽपि न मरणान्तिकं, किं तु पादमेव द्विगुणीकृत्य षड्वार्षिकं देयं—" विहितं यदकामानां कामात्तद्द्विगुणं चरेत् " इत्याङ्गिरः स्मरणात् । एवं वृद्धातुरादिष्वपि योज्यम् । तथा—"तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥" इति मद्यस्यापि जातिमात्रावच्छेदेन निषिद्धत्वादनुपनीतेनोपि न पेयम्॥ ननु कथमनुपनीतस्य दोषः—"प्रागुपनयनात्कामचारकामवादकामभक्षा" इति गौतमवचनात्, तथा " मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन । दोषस्त्वा पञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोः ॥" इति कुमारवचनाच्च दोषाभावावगतेः ॥ उच्यते ॥ सुरामद्ययोर्निषेधवाक्ये जातिमात्रस्यावच्छेदकत्वश्रवणादप्रतिहतैव निषेधप्रवृत्तिः। अत एव स्मृत्यन्तरे निषेधवचनं—" सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः॥" इति अतः " पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति । सर्वपापेषु सुरापानादिष्विति वचनात्पाद एव सुरापाने प्रायश्चित्तम् । तथा जातूकर्ण्येन मद्यपानेऽपि प्रायश्चित्तमुक्तम्—" अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि । तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पिता ॥" इति । अतो गौतमवचनं सुरादिव्यतिरिक्तशुक्तपर्युषितादिविषयं, कुमारवचनं तु स्वल्पदोषख्यापनपरम्। अत एव प्रागुपनयनात्कृतदोषस्योपनयनमेव प्रायश्चित्तमित्युक्तं मनुना—"गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यत" इति। अयमत्रार्थः—त्रैवर्णिकानामुत्पत्तिप्रभृतिपैष्टीप्रतिषेधः, ब्राह्मणस्य मद्यमात्रनिषेधोऽप्युत्पत्तिप्रभृत्येव, राजन्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः, शूद्रस्य न सुराप्रतिषेधो नापि मद्यमात्रप्रतिषेधः ॥ २५३ ॥

प्रायश्चित्तान्तरमाह —

**वालवासा जटी वाऽपि ब्रह्महत्याव्रतं चरेत्।**
**पिण्याकं वा कणान्वापि भक्षयेत्त्रिसमा निशि ॥ २५४ ॥**

गोछागादिलोमनिर्मितवस्त्रप्रावृतो[6] वालवासाः । वालवासोग्रहणं चीरवल्कल-

१.—११. ९५. । २. क. दनुपनीतेन नपेय० । ३. २. १. । ४.—१. २७. । ५. ख. ब्राह्मणस्यतुमद्य० । ६. क. प्रावृतः बालवासोग्रहणं ।

योरुपलक्षणार्थं—"सुरापगुरुतल्पगौ चीरवल्कलवाससौ ब्रह्महत्याव्रतं चरेयाताम्" इति प्रचेतः स्मरणात् । जटिग्रहणं मुण्डत्वनिराकरणार्थम् । "ब्रह्महत्याव्रतं चरेत्" इत्यनेनैव सिद्धे यद्वालवसनादिग्रहणं—तदन्यत्र संभवे स्वयंधारितशिरःकपाला-दिनिवृत्त्यर्थम्[1] । इदमकामतो जलबुद्ध्या यः सुरां पिबति तद्विषयम्—"इयं[2] विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ॥" इत्यकामोपाधित्वेन विहितस्यैव द्वादशवार्षि-कस्यातिदेशात्[3] अत्र च सुरापानस्य महापातकत्वात्सत्यप्यातिदेशिकत्वे संपूर्णमेव द्वादशवार्षिकं कुर्यात्, न पादोनम् । अत एव वृद्धहारीतः—"द्वादशभिर्वर्षैर्म-हापातकिनः पूयन्ते" इति । अथवा पिण्याकं पिण्डितं त्रिसमाः वर्षत्रयपर्यन्तं रात्रौ भक्षयेत् । कणास्तण्डुलाणवस्तान्वा पूर्ववद्भक्षयेत् । एतच्च सकृदेव कार्यं— "कणान्वाभक्षयेदब्दं पिण्याकं वा सकृन्निशि ॥" इति[4] मनुस्मरणात् । अस्य च पिण्याकादिभक्षणस्य भोजनकार्ये विहितत्वादशनान्तरपरित्यागः । एतच्चोदकबुद्ध्या सुरापाने छर्दनोत्तरकाले[5] वेदितव्यम्---"एतदेव व्रतं कुर्या-न्मद्यपचछर्दने कृते । पञ्चगव्यं तु तस्योक्तं प्रत्यहं कायशोधनम्" इति व्यासवचनात् । न च सुरासंसृष्टे[6] ईषदुपलभ्यमानतद्गन्धरसोदकपानविषयमिदमिति सुन्दरं—"संसर्गेऽपि सुरात्वस्यानपायात्; यथाऽऽज्यत्वस्य पृषदाज्ये । अत एव "आज्यपा इति निगमाः कार्याः न पृषदाज्यपा" इत्येवमुक्तं न्यायविद्भिः॥ यत्पुन-रापस्तम्बवचनं—"स्तेयं कृत्वा सुरां पीत्वा गुरुदारान्गत्वा ब्रह्महत्यां च कृत्वा चतुर्थं कालं मितभोजनोऽभ्युपेयात्सवनानुकल्पं स्थानासनाभ्यां विहरन्त्रिभिर्वर्षैः पापं व्यपनुदति" इति[7] ॥ यत्त्वङ्गिरोवचनं—"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः" इति—तदुभयमपि "पिण्याकं वा कणान्वा" इत्यनेनैकविषयम् ॥ यदपि यमेन प्रायश्चित्तद्वयमुक्तं—"बृहस्पतिसवनेनेष्ट्वा सुरापो ब्राह्मणः पुनः समत्वं-ब्राह्मणैर्गच्छेदित्येषा वैदिको श्रुतिः॥ भूमिप्रदानं यः कुर्यात्सुरां पीत्वा द्विजोत्तमः । पुनर्न च पिबेत्तां तु संस्कृतः स विशुध्यति" इति—तदुभयं पूर्वेण सहैक-विषयम् ॥ यद्वा अतिरिक्तदक्षिणाकल्पाश्रयणाद्द्वादशवार्षिकेण सह विकल्पते[8] । अत्रापि बालवृद्धादीनां सार्धैकवर्षीयअनुपनीतानां तु नवमासिकमित्येवं कल्पना[9]

१. क. तदनन्यत्रसंभविस्वयंमारितशिरः कपाला । ग. तदन्यत्रसंभवेश्रूयमाणससम्बन्धि-स्वयंमारितशिरः २.—११. ८९. । ३. ख. वार्षिकातिदे । ४.—११.—११. ९२. । ५ क. कालं वेदिं०। ६. ग. सृष्टे यदुपलं । ७. १. २५.। ८. क. विकल्पते०। ९. क. नित्येवकल्पना०।

कार्या । यत्तु मनुवचनं—"कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्त्यर्थं वालवासा जटा ध्वजी ॥" इति तत्ताल्लुमात्रसंयोगे सुराया अबुद्धिपूर्वे द्रष्टव्यम् ॥ ननु च द्रवद्रव्यस्याभ्यवहरणं पानमित्युच्यते, अभ्यवहरणं च कण्ठादधोनयनं न ताल्वादिसंयोगमात्रम्, अतः कथं तत्र पानानिमित्त प्रायश्चित्तम् ॥ उच्यते ॥ येन ताल्वादिसंयोगेन विना पानक्रिया न निवर्तते—सोऽपि पानक्रियाप्रतिषेधेन प्रतिषिद्धः । अतो यद्यपि मुख्यपानाभावान्न महापन्तकत्वम् । तथाऽपि तत्प्रतिषेधेन तदङ्गभूताव्यभिचारिताल्वादिसंयोगस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वाद्भवत्येव प्रायश्चित्तं—"चरेद्व्रतमहत्वापि घातार्थं चेत्समागत" इति यथा हननप्रतिषेधेन तदङ्गभूताध्यवसायादेरपि प्रतिषिद्धत्वात्प्रायश्चित्तविधानम् ॥ यत्तु बौधायनीयं " त्रैमासिकम्—" अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनम्" इति यच्च याम्य—"सुरां पीत्वा द्विजं हत्वा रुक्मं हृत्वा द्विजन्मनः। संयोगं पतितैर्गत्वा द्विजश्चान्द्रायणं चरेत् ॥" इति, यदपि वार्हस्पत्यं —" गौडीमाध्व्यौ सुरां पैष्टीं पीत्वा विप्रः समाचरेत् । तत्कृच्छ्रं पराकं च चान्द्रायणमनुक्रमात् " इति,—तत्त्रितयमप्यनन्यौषधसाध्यव्याध्युपशमार्थे पाने वेदितव्यं—प्रायश्चित्तस्याल्पत्वात् । यदा तु सुरासंसृष्टशुष्करसमेवान्नं भक्षयति —तदा पुनरुपनयनम् । यथाह मनुः—"अज्ञानात्प्राश्य विण्मूत्रं, सुरासंसृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातय" इति ॥ यदा च शुष्कसुराभाण्डस्थोदकं पिबति—तदा शातातपोक्तं कुर्यात्—"सुराभाण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रोपवासश्च ॥" इति यत्तु बौधायनीयं—"सुरापानस्य यो भाण्डेष्वपः पर्युषिताः पिबेत् । शङ्खपुष्पीविपक्वं तु क्षीर सर्पिः पिबेत्त्र्यहम्" इति—तत्पर्युषितत्वादधिकम् । अकामतोऽभ्यासे पुनर्मनेनाक्त—"अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा । पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीश्रृतं पयः" इति ॥ यत्तु विष्णूक्तम्—"अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीश्रृतं पयः पिबेत्" इति--तन्मतिपूर्वकपाने । ज्ञानतोऽभ्यासे तु बृहद्यम आह—"सुराभाण्डे स्थितं तोयं यदि कश्चित्पिबेद्द्विजः । स द्वादशाहं क्षीरेण पिबेद्ब्राह्मीं सुवर्चलाम्' इति ॥ सुरापस्य मुखगन्धघ्राणे तु मानवं "ब्राह्मणस्तु सुरापस्य

१. २२. १८. । २.—११. १५० । ३. २. १. २१. । ४ —११. १४७. । ५.—५२. २३. ।

गन्धमाघ्राय सोमपाः । प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति'' इति— तत्सोमयाजिन एवामतिपूर्वे, मतिपूर्वे तु द्विगुणम्, अपीतसोमस्य तु कल्प्यम् । साक्षात्सुरागन्धघ्राणस्य तु *''घ्रातिरघ्रेयमद्ययोः'' इति जातिभ्रंशकरत्वात्— ''जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया'' इति मनूक्तं द्रष्टव्यम् ॥ २५४ ॥

एवं मुख्यसुरापाने प्रायश्चित्तमुक्त्वा मद्यपाने प्रायश्चित्तमाह—

**अज्ञानात्तु[3] सुरां पीत्वा रेतो विण्मूत्रमेव च ।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५ ॥**

यः पुनरज्ञानादुदकबुद्ध्या सुरां मद्यं ब्राह्मणः पिबति, ये च ब्राह्मणादयो रेतोविण्मूत्राणि प्राश्नन्ति—ते त्रयोऽपि द्विजातयो वर्णास्तप्तकृच्छ्रपूर्वकं पुनरुपनयनं प्रायश्चित्तमर्हन्ति । अत्र मद्यपाने योऽयं पुनः संस्कारः—स ब्राह्मणस्यैव—क्षत्रियविशोस्तदभ्यनुज्ञानस्य दर्शितत्वात् । सुराशब्दश्चात्र मद्यपरः—प्रायश्चित्तस्यातिलघुत्वात्, अज्ञानतो मुख्यसुरापाने द्वादशवार्षिकस्य विहितत्वाच्च । अत एव गौतमेनात्र मद्यशब्दः प्रयुक्तः—''अमत्या मद्यपाने पयो-घृतमुदकं वा[4]युं प्रतित्र्यहं तप्तानि पिबेत्, स [5]तप्तकृच्छ्रः, ततो[6]ऽस्य संस्कारो, मूत्रपुरीषकुणपरेतसां प्राशने च'' इति । यदप्यस्मिन्नेव विषये मनुनोक्तम्—''अज्ञानाद्वारुणीं पीत्वा संस्कारेण विशुद्ध्यति'' इ[7]ति—तदपि तप्तकृच्छ्रपूर्वकमेव—गौतमवाक्यानुरोधात् । पुनः संस्कारश्च पुनरुपनयनम् । तच्चाश्वलायनाद्युक्तक्रमेण कर्तव्यम् । यथोक्तम्—''अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं [8]चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमह इति सावित्रीम'' इति मतिपूर्वमद्यपाने वसिष्ठोक्तं द्रष्टव्यं—''मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने

* 'ब्राह्मणस्यरुजः कृत्वाघ्रातिरघ्रेयमद्ययोः । जैह्मंपुंसिचमैथुन्य जातिभ्रंशकरंस्मृतम्' इति (मनुरित्यपरार्कव्या० २८९. श्लो०)।

१.—११. १४७. । २.—११. १२४ । ३. 'अज्ञानाद्वारुणीं पीत्वा' इत्यपरार्कव्याख्यायां पाठः । ४ —२३. २. । ५. अपरार्के 'वायुः प्रति०' । ६. अपरार्के 'सकृच्छ्रः ततः' इति पाठः । ७.—११. ६. १४ । ८. अपरार्के 'जननं वातिरुक्त ।

कृच्छ्रातिकृच्छ्रौ घृतप्राशनं पुनः संस्कारश्च" इति, चान्द्रायणं वा शङ्खोक्तम्—"असुरामद्यपायी चान्द्रायणं चरेत्" इति। मुखपामात्रप्रवेशे तु मद्यस्याऽऽपस्तम्बीयं षड्रात्रम्—"अभक्ष्याणामपेयानामलेह्यानां च भक्षणे। रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत्॥ पद्मोदुम्बरबिल्वानां पलाशस्य कुशस्य च। एतेषामुदकं पीत्वा षड्रात्रेण विशुद्ध्यति" इति। एतच्च तालादिमद्यविषयम्। गौडीमाध्व्योः पुनरज्ञानतः पाने—"असुरायाः सुरायाश्चाज्ञानतः" इति वासिष्ठोक्तः कृच्छ्रातिकृच्छ्रसहितः पुनः संस्कारो घृतप्राशश्च द्रष्टव्यः। तयोर्मतिपूर्वपाने तु "पिण्याकं वा कणान्वा" इति त्रैवार्षिकम्। कामतस्तु तत्पानाभ्यासे—"अभ्यासे तु सुराया अग्निवर्णां सुरां पिबेन्मरणात्पूतो भवति॥" इति वासिष्ठं मरणान्तिकं द्रष्टव्यम्। नात्र सुराशब्दः पैष्टयभिप्रायः—तस्याः सकृत्पानेऽपि मरणान्तिकस्य दर्शितत्वात्। मद्यवासित-शुष्कभाण्डस्थोदकस्याज्ञानतः पाने बृहद्यमेनोक्तं—"मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः। कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्तयेत्॥" इति अज्ञानतोऽभ्यासे तु वासिष्ठेनोक्तं—"मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः। पद्मोदुम्बर-बिल्वानां पलाशस्य कुशस्य च॥एतेषामुदकं पीत्वा त्रिरात्रेण विशुद्ध्यति" इति॥ज्ञानतः पाने तु विष्णूक्तं—"मद्यभाण्डस्थितं तोयं पीत्वा पञ्चरात्रं शङ्खपुष्पीश्रृतं पयः पिबेत्॥" इति। ज्ञानतोऽभ्यासे तु शङ्खेनोक्तं—"मद्यभाण्डस्थितं तोयं पीत्वा सप्तरात्रं गोमूत्रं यावकं पिबेत्" इति। अत्यन्ताभ्यासे तु हारीतोक्तं—"मद्य-भाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः। द्वादशाहं तु पयसा पिबेद्ब्राह्मीं सुवर्चलाम्" इति। एषु च वाक्येषु द्विजग्रहणं ब्राह्मणाभिप्रायं—"क्षत्रियवैश्ययोरप्रतिषेधात्॥" इति दर्शितं प्राक्। इदं च गौडीमाध्वीभाण्डस्थजलपानविषयं गुरुत्वात्प्रायश्चि-त्तस्य; तालादिमद्यभाण्डोदकपाने तु कल्प्यम्॥ २५५॥

द्विजातिभार्यां प्रत्याह—

**पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्।**
**इहैव सा शुनी गृध्री सूकरी चोपजायते॥ २५६॥**

या द्विजातिभार्या सुरां पिबति सा कृतपुण्याऽपि सती पतिलोकं न याति, किंत्विहैव लोके श्वगृध्रसूकरलक्षितां तिर्यग्योनिं क्रमेण प्राप्नोति। ब्राह्मणीग्रहणं

१. आ०...।

चात्र "तिस्रो वर्णानुपूर्व्येण" इति न्यायेय यस्य द्विजातेर्यावंत्या भार्यास्तासा-मुपलक्षणम् । अत एव मनुः—"पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् । पतितार्धशरीरस्य निष्कृतिर्न विधीयते॥"इति। धर्मार्थकामेषु सहाधिकाराद्दम्पत्योरेक-शरीरत्वमेव । अतो यस्य द्विजातेर्भार्या[1] सुरां पिबति तस्य भार्यारूपमर्धं शरिरं पतति, पतितस्य च भार्यारूपस्यार्धशरीरस्य निष्कृतिर्न विधीयते । तस्माद्द्विजातिभार्यया ब्राह्मण्याद्यया सुरा न पेया । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति निषेधविधौ लिङ्गस्याविवक्षितत्वेन वर्णत्रयभार्याणामपि प्रतिषेधे[2] सिद्धे पुनर्वचनं द्विजातिभार्यायाः शूद्राया अपि सुराप्रतिषेधप्राप्त्यर्थम् । अतो द्विजातिभार्याभिः सुरापाने प्रायश्चित्तस्यार्धं कार्यम् । शूद्रभार्यायास्तु शूद्रायाः शूद्रवदेव न प्रतिषेधः । सुरापानसमेषु तु निषिद्धभक्षणादिषु सुरापानप्रायश्चित्तार्धमित्युक्तं प्राक् ॥ २५६ ॥

॥ इति सुरापानप्रायश्चित्तम ॥

---

क्रमप्राप्तं सुवर्णस्तेयप्रायश्चित्तमाह—

**ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत् ।**
**स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः ॥ २६७ ॥**

ब्राह्मस्वामिकं सुवर्णं योऽपहरत्यसौ 'सुवर्णस्तेयं मया कृतम्' इत्येवं स्वकर्म ख्यापयन् राज्ञे मुसलं समर्पयेत्—मुसलसमर्पणस्य दृष्टार्थत्वात् । तेन मुसलेन राजा तं हन्यात्, तेन राज्ञा हतो मुक्तो वा शुद्धो भवति । अपहरणशब्देन च समक्षं परोक्षं वा बलाच्चौर्येन वा क्रयादिस्वत्वहेतुं विना ग्रहणमुच्यते । मुसलं समर्पयेदिति यद्यपि सामान्येनोक्तं, तथाऽपि तस्य हननार्थत्वात् तत्समर्थस्यायोमयादे-र्ग्रहणम् । अत एव मनुनोक्तं—"स्कन्धेनाऽऽदाय मुसलं लकुटं वाऽपि खादिरम् । असिं चोभयतस्तीक्ष्णमायसं दण्डमेववा[3]॥" इति[4] । शङ्खेनाप्यत्र विशेष उक्तः— "सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा आयसं मुसलमादाय राजानमुपातिष्ठेत्" 'इदं मया पापं कृतमनेन मुसलेन[5] मां घातयस्व' इति स राज्ञा शिष्टः सम्पूतो भव-

---

१ क. भार्ययासुरान० । २. क. षेधेपुनर्व० । ३. क. मेवचेति० । ४.—८. ३१५. । ५. क. लेतघात० ।

ति" इति । हननं चावृत्तिविधानाभावात्सकृदेव कार्यम् । अत एव मनुनोक्तं—"ततो मुसलमादाय सकृद्धन्यात्तु तं स्वयम् ।" इति[1] । एवं सकृत्ताडनेन राज्ञा हतो[2] मृतः शुद्ध्येत् मुक्तो वा मरणाज्जीवन्नपि शुद्ध्येदिति यावत् । तथा च संवर्तेनोक्तं—"ततो मुसलमादाय सकृद्धन्यात्तु तं स्वयम् । यदि जीवति स स्तेनस्ततः स्तेयाद्वि मुच्यते[3] ॥" इति ; यथोक्तं ब्रह्मवधे—"मृतकल्पः प्रहारार्तो जीवन्नपि विशुद्ध्यति ।" इति । नन्वताडित एव राज्ञा मुक्तः स्तेनः शुद्ध्येदित्ययमर्थः कस्मान्नेष्यते ? उच्यते । "अघ्नन्नेनस्वी राजा" इति गौतमीये ताडनमकुर्वतो राज्ञो दोषाभिधानात् भवतु राज्ञो दोषः, तथाऽप्यतिक्रान्तनिषेधेन राज्ञा स्नेहादिना मुक्तः स्तेनः कथं न शुध्येदिति चेत् उच्यते । एवं च सत्यकारणिका शुद्धिरापतेत् । अथोच्यते—मोक्षोत्तरकालं द्वादशवार्षिकाद्यनुष्ठानेन शुद्ध्यङ्गीकरणान्नाकारणिकेति । तदप्यसुन्दरम्—"मुक्तः शुचिः" इति मोक्षस्यैव शुद्धिहेतुत्वाभिधानात् । अतः प्राच्येव व्याख्या ज्यायसी[4] । इदं च मरणान्तिकं सार्ववर्णिकस्यापहर्तुर्न तु ब्राह्मणस्यैव—"ब्राह्मणस्वर्णहारी[5]" इति नैमित्तिकवाक्ये विशेषानुपादानात्, क्षत्रियादीनां च महापातकित्वाविशेषात्प्रायश्चित्तान्तरस्यानाम्नानाच्च ॥ यत्पुनर्मानवे[6]—"सुवर्णस्तेयकृद्विप्र" इति विप्रग्रहणं तन्नरमात्रोपलक्षणं[7]—"प्रायश्चित्तीयते नरः" इति तस्यैव प्रकृतत्वात्[8], "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः" इति निमित्तवाक्ये विशेषानुपादानाच्च[9] । तत्सापेक्षनैमित्तिकवाक्ये "सुवर्णस्तेयकृद्विप्रः" इत्यत्र श्रूयमाणमप्युपलक्षणमेव[10] युक्तम्, यथाऽभ्युदितेष्ट्यां "यस्य हविः" इति वा तण्डुलग्रहणं हविर्मात्रस्य । इदं च राज्ञा हननं ब्राह्मणव्यतिरिक्तस्य—"न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्[11] ।" इति मानवे ब्राह्मणवधस्य निषिद्धत्वात् । यदि कथंचिदतिक्रान्तनिषेधेन राज्ञा हन्यते तथाऽपि शुद्धो भवति—"वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा ।" इति ब्राह्मणस्यापि वधेन शुद्ध्यभिधानात्[12] । न च "तपसैव वा" इत्येवकारेण वधनिषेधः—तस्य केवलतपसाऽपि शुध्यभिधानपरत्वात् । यदि वधनिषेधपरः[13]—तर्हि "तपसैव वा" इति विकल्पाभिधान-

१.—११. १००. । २. क. ङनेनहतो० । ३. ग. याद्विशुध्यत इति० । ४ ग. जायसी । मुक्तो वा मरणाज्जीवन्नपि विशुद्ध्येदिति यावत् । इदं च० । ५. ग. ब्राह्मणः स्वर्णहा० । ६. क. मानवे न वेन सुवर्ण० । ७. क. लक्षणार्थम् । ८.—११. ९९. । ९.—११. ५४. । १०. क. यमाणप्यनुप । ११.—८. ३८०. । १२.—११. १००. । १३. ग. वधोतिषिद्धस्तर्हि० ।

मनुपपन्नम् । न च दण्डाभिप्रायं विकल्पाभिधानं—तस्यानिर्दिष्टत्वात् । किं च "एकार्थास्तु विकल्पेरन्" इति न्यायेनैकार्थानामेव विकल्पो व्रीहियवयोरिव । न च दण्डतपसोरेकार्थत्वं[1]—दण्डस्य दमनार्थत्वात्तपसश्च पापक्षयहेतुत्वात् । न च "वधेन शुध्यति स्तेनः" इति सामान्यविषयेण वधेन "ब्राह्मणस्तपसैव वा" इति विशिष्टविषयस्य तपसो विकल्पोपपत्तिः । न हि भवति "ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय च" इति विकल्पः । तस्माद्द्वयोरपि सामान्यविषयत्वमेव । यद्वा क्षत्रियस्यापि न निषेधः—मनुना "सुवर्णस्तेयकृद्विप्रः" इत्यभिधाय—"गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।"[2] इति सर्वनाम्ना प्रकृतब्राह्मणपरामर्शेनैव हननविधानात्; "न जातु ब्राह्मणं हन्यात्" इत्यस्य प्रायश्चित्तव्यतिरिक्तदण्डरूपहननविषयत्वेनाप्युपपत्तेः । एतच्च मरणान्तिकं मतिपूर्वसुवर्णस्तेयविषयं—"मरणान्तिकं हि यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः । तत्तु कामकृते पापे विज्ञेयं नात्र संशयः॥" इति मध्यमाङ्गिरःस्मरणात् । अत्र च सुवर्णशब्दः परिमाणविशिष्टहेमद्रव्यवचनो न जातिमात्रवचनः—"जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् । तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ गौरस्तु ते त्रयः षट्[3] ते यवो मध्यस्तु ते त्रयः । कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥" इति षोडशमाषपरिमिते हेमनि सुवर्णशब्दस्य परिभाषितत्वात् । अतो ब्राह्मणसुवर्णापहरणं महापातकमित्यादिप्रयोगेषु कृतपरिमाणस्यैव सुवर्णस्य ग्रहणं युक्तं—परिमाणकरणस्य दृष्टार्थत्वात् । न ह्यदृष्टार्थपरिमाणस्मरणं, नापि लोकव्यवहारार्थम्—अतत्परत्वात्स्मृतिकारप्रवृत्तेः । अत एवोक्तं न्यायविद्भिः—"कार्यकाले संज्ञापरिभाषयोरुपस्थानम्" इति । तथा नामापि गुणफलोपबन्धेनार्थवदित्युक्तं[4] "पञ्चदशान्याज्यानि" इत्यत्र । न च दण्डमात्रोपयोगिपरिमाणस्मरणमिति युक्तं—तावन्मात्रार्थत्वे प्रमाणाभावात् । अतोऽविशेषात्सर्वशेषत्वमेव युक्तम् । किंच दण्डस्य दमनार्थत्वाद्दमनस्य च परिमाणविशेषमन्तरेणापि सिद्धेर्नातीव परिमाणस्मरणमुपयुज्यते ; शब्दैकसमधिगम्ये तु महापातकित्वादावेकान्ततः स्मरणमुपयुज्यते । अतः षोडशमाषात्मकसुवर्णपरिमितहेमहरण[5] एव

१. क. रेकार्थता । दण्ड० । २.—११. १००. । ३. ग. षड्भिर्यवो० ४. ग. युक्तम् । पञ्चदशान्याज्यानीत्यत्रतु न च० । ५. क. हेमहरणं तु क्षत्रियादि हेमह० ।

महापातकित्वं, तन्निमित्तं मरणान्तिकादिप्राश्चित्तविधानं च। द्वित्रादिमाषात्मकहेमहरणं तु क्षत्रियादिहेमहरणवदुपपातकमेवेति युक्तम्। किंच सुवर्णान्न्यूनपरिमाणहेमहरणे प्रायश्चित्तान्तरोपदेशात्तत्परिमाणस्यैव[1] हेम्नो हरणे मरणान्तिकादिप्रायश्चित्तमिति युक्तम्। तथा चोक्तं षट्त्रिंशमन्ते—"वालाग्रमात्रेऽपहृते प्राणायामं समाचरेत्। लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः॥ राजसर्षपमात्रे तु[2] प्राणायामचतुष्टयम्। गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये॥ गौरसर्षपमात्रे च[3] सावित्रीं वै दिनं जपेत्। यवमात्रे सुवर्णस्य प्रायश्चित्तं द्विनद्वयम्॥ सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः[4]। कुर्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये॥ अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः[5]। गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुद्ध्यति॥ सुवर्णस्यापहरणे वत्सरं यावकी भवेत्। ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्[6]॥" इदं च वत्सरं यावकाशनं किञ्चिन्न्यून-सुवर्णापहारविषयं—सुवर्णापहारेमन्वादिमहास्मृतिषु द्वादशवार्षिकविधानात्। "बलाद्ये कामकारेण गृह्णन्ति स्वं नराधमाः। तेषां तु बलहर्तॄणां प्राणान्तिकमिहोच्यते॥ सुवर्णपरिमाणादर्वागपीत्यभिप्रेतम्। इदं च स्तेयप्रायश्चित्तमपहृतधनं तत्स्वामिने दत्त्वैव कार्यं—"स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः। स्वामिनेऽपहृतं देयं हर्त्रा त्वेकादशाधिकम्॥" इति स्मरणात्, तथा "चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्म-शुद्धये।"[7] इति मनुस्मरणाच्च। दण्डप्रकरणेऽप्युक्तं—"शेषेष्वेकादशगुणं दाप्य-स्तस्य च तद्धनम्।" इति। यदा त्वशक्त्या राजा हन्तुमसमर्थस्तदा वासिष्ठोक्तं द्रष्टव्यं—"स्तेनः प्रकीर्णकेशो राजानमभियाचेत् ततस्तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनाऽऽत्मानं प्रमापयेत् मरणात्पूतो भवतीति विज्ञायते" इति। औदुम्बरं ताम्र-मयम्। यदपि द्वितीयं प्रायश्चित्तं तेनोक्तं—"निष्कालको गोघृताक्तो गोमया-ग्निना पादप्रभृत्यात्मानं प्रमापयेन्मरणात्पूतो भवतीति विज्ञायते" इति, तदपि गुरुश्रोत्रिययागस्थादिविप्रद्रव्यापहारविषयं, क्षत्रियाद्यपहर्तृविषयं वा। तत्र निष्कालक इति निर्गतकेशश्मश्रुलोमाभिधीयते, तथाऽश्वमेधाद्यनुष्ठानेन वा। तथा प्रचेतसा मरणा न्तिकमभिधायोक्तं—"इष्ट्वा वाऽश्वमेधेन गोसवेन वा विशुद्ध्येत्" इति। एतच्च विट्क्षत्रियाद्यपहर्तृविषयम्॥ २५७॥

१. ग. रिमाणस्यहेम्नोहर०। २. क. मात्रे च प्राणाया०। ३. क. मात्रे तु सावि०। ४. क. त्तमः। कृच्छ्रं सान्तपनं कुर्यात्तविशुद्ध्यो अप०। ५. क. द्विजाधमः। गोमू०। ६. क. ब्रह्महाव्रत०। ७.—११. १६४.।

प्रायश्चित्तान्तरमाह—

अनिवेद्य नृपे शुध्येत्सुरापव्रतमाचरन् ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥ २५८ ॥

स्वीयं स्तेयं राजन्यनिवेद्य सुरापव्रतं द्वादशवार्षिकमाचरन् शुध्येत्। शवशिरोध्वज तत्कपालधारणनिराकरणार्थं सुरापव्रतमित्युक्तम् । एतच्चाकामकारविषयं— "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजाम्।" इत्यकामतो विहितस्यैव द्वादशवार्षिकस्यातिदेशात् । नन्वकामतोऽपहार एव न संभवतीति कथं तद्विषयत्वम्? उच्यते । यदा वस्त्रप्रान्तग्रथितं सुवर्णादिकमज्ञानादपहरति रजतादिद्रव्यान्तरबुद्ध्या वा हृत्वाऽनन्तरमेवान्यस्मै दत्तं नाशितं वा न पुनः स्वामिने प्रत्यर्पितं— तदा सम्भवत्येवाकामतोऽपहारः । यस्तु ताम्रादिकस्य रसवेधाद्यापादितसुवर्णरूपस्यापहारो न तत्रेदं प्रायश्चितं—मुख्यजातिसमवायाभावात् । न च मुख्यसादृश्यमात्रेण गौणे मुख्यधर्मा भवन्ति । यद्यपीदृशमेवासुवर्णं सुवर्णभ्रान्त्याऽपहरति, तथाऽपि नेदं प्रायाश्चित्तम—असुवर्णापहारित्वादेव । न च "सृष्टश्चेद्ब्राह्मणवधे अहत्वाऽपि" इतिवदत्रापि दोष इति वाच्यम् । असुवर्णे प्रवृत्तत्वादेव न "ब्राह्मणसृष्टश्चेत्" इत्यस्य विषयः । यच्चेदं मनसा पापं ध्यात्वा प्रणवपूर्वकं व्याहृतीर्मनसा जपेत्, व्याहृत्य प्राणायामं त्रिराचरेत्, प्रवृत्तौ कृच्छ्रं द्वादशरात्रं चरेत् इति तदपि सम्यगर्थप्रवृत्तिविषयम् । अतो नेदृशमज्ञानतः स्वर्णापहारः प्रायश्चित्तस्य निमित्तं, किं तु रजतादिबुद्ध्या पूर्वोक्त एव स्वर्णापहारः । अस्मिन्नेव विषये यदाऽपहर्ताऽत्यन्तमहाधनः तदाऽऽत्मतुलितं सवर्णं दद्यात् । अथ तावद्धनं नास्ति तपश्चर्यायां चाशक्तः तदा विप्रतुष्टिकृद्विप्रस्य यावज्जीवं कुटुम्बभरणपर्याप्ततया तुष्टिकरं धनं दद्यात् । यदा तु निर्गुणस्वामिकं द्रव्यमपहरति तदा "एतदेव व्रतं स्तेनः पादन्यूनं समाचरेत् ।" इति व्यासेनोक्तं नववार्षिकं द्रष्टव्यम् । यदा पुनरीदृशमेव क्षुत्क्षामकुटुम्बपरिरक्षणार्थमपहरति तदा अत्रिप्रतिपादितषडार्षिकं स्वार्जिदादिं वा क्रतुं कुर्यात्तीर्थयात्र।

---

* इदं गौतमवचनमिति २५२ याज्ञ० मिताक्षरायाम् ।

१.—११।८९. २. ग. नद्यब्राह्म० । ३. क. रीदृक्षमेव० ।

त्रै[1] — " षडब्दं वाऽऽचरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः। तीर्थानि वा भ्रमन्विद्वांस्ततः स्तेयाद्विमुच्यते ॥" इति। यदा त्वपहारसमनन्तरमेव 'महाकष्टं मया कृतम्' इति जातानुतापः प्रत्यर्पयति, त्यजति वा तदाऽऽपस्तम्बीयं "चतुर्थकालमितांशनेन त्रिवर्षमवस्थानम्" आङ्गिरसं वा[2] वज्राख्यं त्रैवार्षिकं द्रष्टव्यम्। ननु प्रत्यर्पणे त्यागे वाऽपहारधात्वर्थस्य निष्पन्नत्वात्कथं प्रायश्चित्तात्पत्वम्, अथानिष्पन्नस्तदा प्रायश्चित्ताभाव एव स्यान्न तु प्रायश्चित्ताल्पत्वम्। मैवम्। अपहारस्योपभोगादिफलपर्यन्तत्वादुपभोगात्प्राङ्निवृत्तौ च पुष्कलस्यापहारार्थस्याभावाद्युक्तमेव प्रायश्चित्ताल्पत्वं पीतवान्ते इवापेये[3] द्रव्ये। नन्वेवं सति चौरहस्ताद्बलादाकृष्य ग्रहणेऽपि तस्योपभोगलक्षणफलाभावात्प्रायश्चित्ताल्पत्व प्रसङ्गः। मैवम्—तस्य त्यागे स्वतः प्रवृत्त्यभावात्, फलपर्यन्तेऽपहारे स्वतः प्रवृत्तत्वाच्च। यस्तु रजतताम्रादिसंसृष्टसुवर्णापहारो न तत्रेदं लघुप्रायश्चित्तं; यतः संसर्गेऽपि सुवर्णत्वं नापैति आज्यत्वमिव पृषदाज्ये। अतस्तत्र द्वादशवार्षिकमेवेति युक्तम्। अथ सुवर्णसदृशं द्रव्यान्तरमेवेति लघुप्रायश्चित्तमुच्यते तर्हि[4] न तरां त्रैवार्षिकादिलघुप्रायश्चित्तादिविषयता—असुवर्णत्वादेवं; किं तूपपातकप्रायश्चित्तमेव। यदप्यपरमापस्तम्बोक्तं—"स्तेयं कृत्वा सुरां पीत्वा कृच्छ्रं संवत्सरं चरेत्।" इति तत्सुवर्णपरिमाणादर्वाङ्माषाच्चाधिकपरिमाणद्रव्यविषयम्। यच्चोक्तं सुमन्तुना—"सुवर्णस्तेयी मासं सावित्र्याष्टसहस्रमाज्याहुतीर्जुहुयात्[5] प्रत्यहं त्रिरात्रमुपवासं तप्तकृच्छ्रेण च पूतो भवति" इति तत्पूर्वोक्तमाषपरिमाणसुवर्णापहारप्रायश्चित्तेन सह विकल्पते। यदप्यपरं तेनैवोक्तं "सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति" इति तन्मनसाऽपहारे प्रवृत्तस्य स्वत एवोपरतापजिहीर्षस्य वेदितव्यम्। अत्रापि बालवृद्धादिष्वर्धमेव प्रायश्चित्तं वेदितव्यम्। यानि च "अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।" इत्यादिना सुवर्णस्तेयसमत्वेन प्रतिपादितानि तेष्वर्धमेव कार्यम्। यत्पुनश्चतुर्विंशतिमतवचनं—"रूप्यं हृत्वा द्विजो लोभाच्चरेच्चान्द्रायणव्रतम्।

१. ग. यात्रां च। षड०। २. क. रसंवाचमाख्यं त्रैवा०। छ. रसंवावमाख्यं। ३. इवापद्रव्यं। नन्वे०।। ४. ग. मुच्यते नतर्हि तत्र त्रैवा०। ५. क. हुयात् तत्पूर्वोक्तमाष०। ६. क. द्विजोमोहाच्चरे०।

गद्याणदशकादूर्ध्वर्वमाशताद्द्विगुणं चरेत् ॥ आसहस्राच्च[1] त्रिगुणमूर्ध्वं हेमविधिः स्मृतः । सर्वेषां धातुलोहानां पराकन्तु समाचरेत् ॥ धान्यानां हरणे कृच्छ्रं तिलानामैन्दव स्मृतम् । रत्नानां हरणे विप्रश्चरेच्चान्द्रायणव्रतम् ॥" इति तदपि गद्याणसहस्राधिकरजतहरणे सुवर्णस्तेयसमप्रायश्चित्तप्रतिपादनार्थं, न पुनस्तन्निवृत्त्यर्थम् । यदपि रत्नापहारे चान्द्रायणमुक्तं तदपि गद्याणसहस्राद्धीनमूल्यरत्नापहारे द्रष्टव्यम् । ऊर्ध्वं पुनः सुवर्णस्तेयसमम् ॥ २५८ ॥

॥ इति[2] सुवर्णस्तेयप्रायश्चित्तप्रकरणम् ॥

---

उद्देशक्रमप्राप्तं गुरुतल्पगप्रायश्चित्तमाह[3]—

**तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् ।**
**गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां[4] वोत्सृजेत्तनुम् ॥ २५९ ॥**

"[5]समा वा गुरुतल्पगः" इति वक्ष्यमाणश्लोकगतं गुरुतल्पगपदमत्र संबध्यते । तप्तऽयःशयने यथा मरणक्षमं भवति तथा[6] तप्ते अग्निवर्णे कृते कार्ष्णायसे शयने अयोमय्या स्त्रीप्रतिकृत्या तप्तया सह गुरुतल्पगः स्वप्यात् । एवं सुप्त्वा तनुं देहम् उत्सृजेत् । म्रियेतेति यावत् । शयनं च 'गुर्वङ्गनागमनं मया कृतम्' इत्येवं स्वकर्म विख्याप्य कुर्यात्—"गुरुतल्पोऽभिभाष्यैनः[7]" इति मनुस्मरणात्[8] । तथा स्त्रियमालिङ्ग्य कार्यम्—"गुरुतल्पगो मृन्मयीवायसीं वा[9] स्त्रियः प्रतिकृतिमग्निवर्णां कृत्वा[10] तामालिङ्ग्य पूतो भवति" इति वृद्धहारीतस्मरणात् । तथा मण्डितलोमकेशेन घृताभ्यक्तेन च कर्तव्यं—"निष्कालको घृताभ्यक्तस्तप्तां[11] तां सूर्मीं मृन्मयीं वा परिष्वज्य मरणात्पूतो भवतीति विज्ञायते" इति वसिष्ठस्मरणात् । न च—"गुरुतल्पोऽभिभाष्यैनस्तप्ते स्वप्यादयोमये । सूर्मीं ज्वलन्तीं वा श्लिष्टो[12] मृत्युना स विशुध्यति ॥" इति मनुवाक्यानुरोधेन तप्तलोहशयन तप्तलोहयोषिदालिंनं च निरपेक्षप्रायश्चि-

१. ग. हस्रात्तु त्रिगु० । २. क. इति सुवर्णस्तेयप्रायश्चित्तप्रकरणमिति नास्ति । ३. ग. तल्पगमगप्रायश्चि० । ४. ग. नीत्यांचोत्सृ० । ५—प्रा० २६०. । ६. क. तथा सन्त०. ७. ग. गुरुतल्प्याभिभा० । ८.—११. १०३. । ९. क. मायसीं च स्त्रि० । १० ख. कृत्वाकार्ष्णायसशयनेऽयोमय्यास्त्रीप्रतिकृत्याकृत्वातमालि० । ११. क. स्तप्तांसूर्मींपरिष्वं । १२.—११. १०३. । १३. ख. वाश्लिष्यमृत्क० ।

राद्वयमित्याशङ्कनीयम् । "आदस्यां ये. विना स्वपेत्" कुत्रेत्याकाङ्क्षायां "तप्तेऽयः शयने" इति परस्परसापेक्षतयैकान्वयावगमादेककल्पत्वमेव युक्तम् । अथवा वृषणौ सलिङ्गौ स्वयमुत्कृत्य छित्वाऽञ्जलिना गृहीत्वा नैर्ऋत्यां दक्षिणप्रतीच्यां दिशि देहपातान्तमकुटिलगतिर्गत्वा तनुमुत्सृजेत्; यथाऽऽह मनुः—"स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥" इति । गमनं च पृष्ठतोऽनीक्षमाणेन कर्तव्यं—"क्षुरेण शिश्नवृषणावुत्कृत्यानवेक्षमाणो व्रजेत्" इति शङ्खलिखितस्मरणात् । एवं गच्छन् यत्र कुड्यादिना प्रतिबध्यते तत्रैव मरणान्तं तिष्ठेत्—"सवृषणं शिश्नमुत्कृत्याञ्जलावाधाय दक्षिणाभिमुखो गच्छेद्यत्रैव प्रतिहतस्तत्रैव तिष्ठेदाप्रलयात्" इति वसिष्ठस्मरणात् । दण्डोऽप्यत्रायमेव; यथाऽऽह नारदः—"आसामन्यतमां गच्छन्गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते ॥" एवं दण्डार्थमपि लिङ्गाद्युत्कर्तनं पापक्षयार्थमपि भवति । इदमेव मरणान्तिकदण्डमभिप्रेत्योक्तं मनुना—"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥" इति । धनदण्डे पुनः प्रायश्चित्तं भवत्येव—"प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् । नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥" इति तेनैवोक्तत्वात् । अनयोश्च मरणान्तिकयोरन्यतरानुष्ठानेन गुरुतल्पगः शुद्ध्येत् । गुरुशब्दश्चात्र मुख्यया वृत्त्या पितरि वर्तते—"निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥" इति मनुना गुरुत्वप्रतिपादनपरे वाक्ये निषेकादिकर्तुर्जनकस्यैव गुरुत्वाभिधानात् । योगीश्वरेण च निषेकादिकर्माभिप्रायेणोक्तं—"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।" इति । ननु गुरुशब्दस्यान्यत्रापि प्रयोगो दृश्यते—"उपनीयगुरुः शिष्यम्" इत्यादिनाऽऽचार्ये । मनुः—"स्वल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्यात्" इत्युपाध्याये। व्यासेनाप्यन्यत्र प्रयोगो दर्शितः—"गुरवो मातृपितृपत्याचार्यविद्यादातृज्येष्ठभ्रातर ऋत्विजो भयत्राताऽन्नदाता च" इति । न चानेकार्थकल्पनादोषः—"गुरुशब्दस्य प्रवृत्तिनिमित्त

१.—११. १०४. । २.—२०. १३.। ३. १२. ७५. । ४.—११. ३९८.। ५.—९ २४०. । ६.—२. १४२. । ७.—आ० ३४. । ८.—आ० ३४. । ९. २. १४०. ।

भूतायाः पूजार्हतायाः सर्वत्रानुस्यूतेः । दर्शितं च तस्याः प्रवृत्तिनिमित्तत्वं योगीश्वरेण—"एते मान्या यथा पूर्वमेभ्यो माता गरीयसी।" इति "मान्या" इत्युपक्रम्य "गरीयसी" इत्युपसंहारं कुर्वता—न च "उपाध्यायान्दशाचार्य आचार्याणां शतं पिता।" इत्युपाध्यायादधिकाचार्यात्पितुरतिशयितत्ववचनात्स एव मुख्य इति वाच्यम् ॥ आचार्येऽप्यतिशयितत्वस्याविशिष्टत्वात्—"उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदापिता" इति । गौतमेनाप्युक्तम्—"आचार्यः श्रेष्ठो गुरूणाम्" इति । किं च यद्यतिशयितत्वमात्रेण मुख्यत्वमुच्यते—तर्हि "सहस्रम्" इति वचनान्मातुरेव गुरुत्वं स्यात् । तस्मात्सर्वे गुरवः तत्पत्नीगमनं गुर्वङ्गनागमनमिति युक्तम् ॥ उच्यते ॥ "निषेकादीनि" इति मनुवचनं निषेकादिकर्तुर्जनकस्य गुरुत्वप्रतिपादनपरम्—अनन्यपरत्वात् ॥ यत्पुनर्व्यासगौतमवचनं तत्परिचर्यापूजादिविधिशेषतया स्तुत्यर्थत्वेनान्यपरम् ॥ अतो गुरुत्वप्रतिपादनपरात् "निषेकादीनि" इति मनुवचनात्पितुरेव मुख्यं गुरुत्वमिति स्थितम् । अत एव वसिष्ठेन "आचार्यपुत्रशिष्यभार्यासु चैवम्" इत्याचार्यदारेष्वतिदेशिकं गुरुतल्पप्रायश्चित्तमुक्तम् । तथा जातूकर्ण्यादिभिरप्युक्तम्—"आचार्यादेस्तु भार्यासु गुरुतल्पव्रतं चरेत्" इत्यादि । आचार्यादेर्मुख्ये गुरुत्वे गुरूपदेशत एव व्रतप्राप्तेरतिदेशोऽनर्थक एव स्यात् । किं च संवर्तेन स्पष्टमेव पितृदारग्रहणं कृतं—"पितृदारान्समारुह्य मातृवर्जं नराधम" इति । षट्त्रिंशन्मतेऽपि — पितृभार्यां तु विज्ञाय सवर्णां योऽधिगच्छति" इति । अतोऽपि निषेकादिकर्ता पितैव मुख्यो गुरुः । तच्च गुरुत्वं वर्णचतुष्टयेऽप्यविशिष्टं — निषेकादिकर्तृत्वाविशेषात् । अतः "स विप्रो गुरुरुच्यते" इति विप्रग्रहणमुपलक्षणम् । अतः पितृपत्नीगमनमेव महापातकम् । गमनं च चरमधातुविसर्गपर्यन्तं कथ्यते । अतस्ततोऽर्वाङ्निवृत्तौ न महापातकित्वम् । तत्र चेदं "तप्तेऽयःशयने सार्धमायस्या" इत्याद्युक्तं मरणान्तिकं प्रायश्चित्तद्वयम् । तच्च जनन्यामकामकृते, तत्सपत्न्यां तु सवर्णायामुत्तमवर्णायां कामकृते द्रष्टव्यं—'पितृभार्यां तु विज्ञाय सवर्णां योऽधि

---

१.—आ० ३५. । २.—मनु. २. १४५. । ३. मनु. । २. १४६. । ४.—२. ५०. ५. २.—१४२. ६. २०. १५. । ७. क. पातकित्वम् । ८. ख. वर्णायामकामकृ० ।

गच्छति। जननी वाप्यविज्ञाय नावृतः शुद्धिमाप्नुयात्" इति षट्त्रिंशन्मतेऽभिधानात् ॥ जनन्यां तु कामकृते वासिष्ठं—'निष्कालको घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमवदाहयेत्' इति द्रष्टव्यम्। अकामतोऽभ्यासेऽप्येतदेव ॥ ननु च "मातुः सपत्नीं भगिनीमाचार्यतनयां तथा। आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग" इत्यतिदेशाभिधानान्मातृसपत्नीगमनेऽप्यौपदेशिकं प्रायश्चित्तमयुक्तम् ॥ उच्यते ॥ "पितृभार्यां सवर्णाम्" इत्यस्मादेव सवर्णग्रहणाद्धीनवर्णसपत्नीविषयमिदमातिदेशिकमिति न विरोधः ॥ इदं च मुख्यस्यैव पुत्रस्य ॥ इतरेषां पुनः पुत्रकार्यकरत्वमेव, न पुत्रत्वम्। यथाऽऽह मनुः—"क्षेत्रजातीन्सुतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण" इति। तत्रोभयेच्छातः प्रवृत्तौ "तप्तेऽयःशयन इति प्रथमं प्रायश्चित्तं, स्वेन प्रोत्साहने तु 'गृहीत्वोत्कृत्य वृषणौ' इति द्वितीयं—अनुबन्धातिशयेन प्रायश्चित्तगुरुत्वस्येष्टत्वात्। तया प्रोत्साहितस्य तु मानवं तप्तलोहशयनज्वलत्सूर्म्यालिङ्गनयोरन्यतरं द्रष्टव्यम् ॥ यत्तु शङ्खेन द्वादशवार्षिकमुक्तम्—"अधःशायी जटाधारी पर्णमूलफलाशनः। एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥ रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः। व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे" इति—तत्समवर्णोत्तमवर्णपितृदारगमने अकामकृते द्रष्टव्यम्। तत्रैव कामतः सेकादर्वाङ्निवृत्तौ षड्वार्षिकम्, अकामतस्तु त्रिवार्षिकम्। जनन्यां तु कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ द्वादशवार्षिकमकामतस्तु षड्वार्षिकमिति कल्प्यम् ॥ यस्तु संवर्तेन "गुरुदारान्समारुह्य मातृवर्जं नराधम" इत्यादिना समारोहणमात्रे तप्तकृच्छ्रः उक्तः—स हीनवर्णगुरुदारेषु रेतःसेकादर्वाग्द्रष्टव्यः ॥ २५९ ॥

प्रायश्चित्तान्तरमाहः—

**प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः।**
**चान्द्रायणं वा त्रीन्मासानभ्यसेद्वेदसंहिताम् ॥ २६० ॥**

अथवा प्राजापत्यं कृच्छ्रं वक्ष्यमाणलक्षणं समाः वर्षत्रयं चरेत्। एतच्च

१. ख. घृताभ्यक्तोगो०। २.—२०. २४.। ३. प्रा० २३२.। ४. ख. यथोचितान्। ५.—९. १८०.। ६. ख. तस्योत्कृत्वा०। ७. ख. समश्नीतवै०। ८. ख. कृतेवाद्रष्टव्य०। ९. ख. कामतः प्रवृत्तस्यरेतः सेकात्प्राङ्नि०। १०. ख. -मतस्तुत्रैवा०। ११ क. यत्तुसंव०। १२. ख. तेन पितृदारा०।

ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्यागमने मतिपूर्वे द्रष्टव्यम् ॥ यदा तु गुरुपत्नीं सवर्णां व्यभिचारिणीमबुद्धिपूर्वं गच्छति—तदा वेदजपसहितं चान्द्रायणत्रयं कुर्यात्, तत्रैव कामतः प्रवृत्तावौशनसं—'गुरुतल्पाभिगामी संवत्सरं ब्रह्महव्रतं षण्मासान्वा तप्तकृच्छ्रं चरेत्' इति । क्षत्रियागमने तु मतिपूर्वे याज्ञवल्कीयं—"मातुः सपत्नीं भगिनीमाचार्यतनयां तथा" इति गुरुतल्पव्रतातिदेशान्नववार्षिकम् । इदं चातिदेशिक सवर्णगुरुभार्यागमनविषय न भवति । तत्र कामतोऽभ्यासे च मरणान्तिकस्याकामतश्च द्वादशवार्षिकस्य विहितत्वात् । अतः क्षत्रियादिविषयमेवेति युक्तम् । तत्रैव कामतोऽभ्यासे मरणान्तिकं—"मत्यागत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः । अण्डाभ्यां रहितं लिङ्गमुत्कृत्य स मृतः शुचिः' इति कण्वस्मरणात् । अत्रैव विषये प्रायश्चित्तं यदा न चिकीर्षति—तदा "छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा' इति याज्ञवल्कीयो वधदण्डः प्रायश्चित्तस्थाने द्रष्टव्यः ॥ वैश्यायां तु गुरुभार्यायां कामतो गमने षड्वार्षिकम् । अत एव स्मृत्यन्तरं—"ब्राह्मणीपुत्रस्य क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकमेवमन्यवर्णासु इति । अयमर्थः---ब्राह्मणीपुत्रस्य क्षत्रियायां मातुः सपत्न्यां गमने पादन्यूनं द्वादशवार्षिकं—नववार्षिकमिति यावत् । तस्यैव तथाभूतायां वैश्यायां षड्वार्षिकं—शूद्रायां तु त्रिवार्षिकं प्रायश्चित्तमिति । एवं क्षत्त्रियापुत्रस्य वैश्यायां मातरि नववार्षिकं, शूद्रायां तु षड्वार्षिकम् । एवमेव वैश्यापुत्रस्यापीति वैश्यायां तु कामतोऽभ्यासे मरणान्तिकमेव—"गुरोर्भार्यां तु यो वैश्यां गत्वा गच्छेत्पुनःपुनः । लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत्तु किल्बिषात्" इति लौकाक्षिस्मरणात् । शूद्रायां तु कामतोऽभ्यासे द्वादशवार्षिकं—"पुनः शूद्रां गुरोर्गत्वा बुद्ध्या विप्रः समाहितः । ब्रह्मचर्यमदुष्टात्मा संचरेद्द्वादशाब्दिकम्' इत्युपमन्युस्मरणात् । क्षत्रियायां तु गुरुभार्यायामबुद्धिपूर्वगमने यमोक्तं त्रिवार्षिकमष्टमकालाशनं द्रष्टव्यं—"कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदा व्रती । स्थानासनाभ्यां विहरेस्त्रिरह्नोऽभ्युपयन्नृपः ॥ अधःशायी त्रिभिर्वर्षैस्तदपोहेत पावकम्" इति ॥ अत्रैवाभ्यासे जातूकर्ण्योक्तं—

१. प्रा २३२ । २. ख. कामतोमरणा०। ३. ख. मताद्वादेश० । ४....... । ५. क. शाद्वदवार्षिकमिति वावत् । ६. ख. यान्तुत्रैवार्षि० । ७. ख. वैश्यां भत्यागच्छे० । ८. ख. ध्येत्सकिल्बि०। क. मोक्तं त्रैवार्षिकमष्ट० । ग. मोक्तमष्टकालाश० ।

"गुरोः क्षत्रसुतां भार्यां पुनर्गत्वा त्वकामतः। अण्डमात्रं समुत्कृत्य शुध्येज्जीवन्मृतोऽपि वा' इति॥ वैश्यायां त्वकामतो गमने "प्राजापत्यं चरेत्कृच्छ्रम्' इत्येतदेव याज्ञवल्कीयम् तथा च वृद्धमनुः—"गमने गुरुभार्यायाः पितृभार्यागमे तथा। अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत्' इति। तत्रैवाभ्यासे हारीतोक्तं मरणान्तिकं ब्रह्मचर्यम्—"अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः। षडङ्गं ब्रह्मचर्यं च स चरेद्यावदायुषम्' इति। गुरुभार्यायां शूद्रायां त्वमतिपूर्वं मानवं—"खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने। प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहित" इति॥ अथवा "गुरुदाराभिगामी संवत्सरं कण्टकिनीं शाखां परिष्वज्याधःशायी त्रिषवणो भैक्षाहारः पूतो भवति' इति सुमन्तूक्तं कुर्यात्। तत्रैवाभ्यासे मानवं—"चान्द्रायणं वा त्रीन्मासानभ्यसेन्नियतेन्द्रिय" इति क्षत्रियायां कामतः प्रवृत्तस्य रेतःसेकादर्वाङ्निवृत्तौ व्याघ्रोक्तं—"कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम्। चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः" इति॥ अत्रेयं व्यवस्था—तया प्रोत्साहितस्य त्रैमासिकं प्राजापत्यचरणम्। उभयेच्छातः प्रवृत्तस्यातिकृच्छ्रचरणं तावदेव। स्वेन प्रोत्साहितायां पुनः कृच्छ्रातिकृच्छ्रानुष्ठानं च तावदेवेति॥ तत्रैव कामतः प्रवृत्तस्य रेतःसेकात्पूर्वं कण्वोक्तं द्रष्टव्यं—"चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च सकृद्गत्वा गुरोर्भार्यामज्ञानात्क्षात्रियां द्विज" इति। तया प्रोत्साहितस्यातिकृच्छ्रः, उभयेच्छातः प्रवृत्तस्य तप्तकृच्छ्रः, स्वेन प्रोत्साहितायां तु चान्द्रायणम्॥ वैश्यायां कामतः प्रवृत्तस्य रेतः सेकात्पूर्वं निवृत्तौ कण्वोक्तं—"तप्तकृच्छ्रं पराकं च तथा सान्तपनं गुरोः। भार्यां वैश्यां सकृद्गत्वा बुद्ध्या मासं चरेत् द्विजः" इति अत्रोभयोरिच्छातः प्रवृत्तौ तप्तकृच्छ्रः, स्वेन प्रोत्साहितायां पराकः, तया प्रोत्साहितस्य सान्तपनम्॥ अत्रैवाकामतः प्रवृत्तस्य प्रजापतिराह—"पञ्चरात्रं तु नाश्नीयात्सप्ताष्टौ वा तथैव च। वैश्यां भार्यां गुरोर्गत्वा सकृदज्ञानतो द्विज" इति। तया प्रोत्साहितस्य तु पञ्चरात्रम्, उभयेच्छातः प्रवृत्तौ सप्तरात्रं, स्वेन प्रोत्साहितायामष्टरात्रम्॥ शूद्रायां तु कामतः प्रवृत्तस्य रेतःसेकात्पूर्वं निवृत्तौ

१.—....। २.११.१०५। ३. ख. सानभ्यस्यनिय०। ४.—११.१०६.। ५. क. रिच्छत। प्रवृत्तस्य प्रजापति।

जाबालिराह—"अतिकृच्छ्रं तप्तकृच्छ्रं पराकं च तथैव च । गुरोः शूद्रां सकृद्गत्वा बुद्ध्वा विप्रः समाचरेत्" इति । तया प्रोत्साहितस्यातिकृच्छ्रः, उभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः, स्वेन प्रोत्साहितायां पराकः, तत्रैवाकामतः प्रवृत्तस्य दैर्घतमसं—"प्राजापत्यम् सान्तपनं सप्तरात्रोपवासकम् । गुरोः शूद्रां सकृद्गत्वा चरेद्विप्रः समाहितः॥" इति तया प्रोत्साहितस्य प्राजापत्यं, उभयोरिच्छातः प्रवृत्तौ सान्तपनं, स्वेन प्रोत्साहितायां सप्तरात्रोपवास इति ॥ अनयैव दिशाऽन्येषामपि स्मृतिवचसां विषयव्यवस्थोहनीया । पुरुषवच्च स्त्रीणामप्यत्र महापातकित्वमविशिष्टम् । तथा हि कात्यायनः—"एष दोषश्च शुद्धिश्च पतितानामुदाहृता । स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः॥" इति । अतस्तस्या अपि कामतः प्रवृत्तौ मरणान्तिकमविशिष्टम् । अत एव पुरुषस्य मरणान्तिकमुक्त्वा स्त्रिया अपि योगीश्वरेण मरणान्तिकं दर्शितं—"छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ।" इति । अकामतस्तु मनुनोक्तम्—"एतदेव व्रतं कार्यं योषित्सु पतितास्वपि ।" इति द्वादशवार्षिकमेवार्धकल्पनया कार्यम् । यानि पुनर्गुरुतल्पसमानि "सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥" इति प्रतिपादितानि, यानि चातिदेशविषयभूतानि "पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।" इति प्रतिपादितानि, तेष्वेकरात्रादूर्ध्वमकामतोऽभ्यस्तेषु यथाक्रमेण षडार्षिकं नववार्षिकं च प्रायश्चित्तं विज्ञेयम्; अस्मिन्नेव विषये कामतोऽत्यन्ताभ्यासे मरणान्तिकम् । तथा च बृहद्यमः—"रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च । सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥" इति । अन्त्यजाश्चात्र "चाण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः॥" इति मध्यमाङ्गिरोदर्शिता द्रष्टव्याः, न तु "रजकश्चर्मकारश्च" इत्यादिप्रतिपादिताः—तेषु लघुप्रायश्चित्तस्योक्तत्वात् ॥ तथा—"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।

---

१. ख. पराकं वातथै० । २.—प्रा० २३३.॥ ३ —१. ११८. ।:४. ख. तानितथैकरा० । ५. ख. दूर्ध्वं कामतोभ्य० । ६. क. स्वनीष्वन्त्यजासुच० । ७. ख अन्त्याश्चातचा० । छ. अन्त्याचाण्डा० । ८. ख. वैदोहिकस्त० । ९. ख. दर्शिता ज्ञातव्याः । १०. छ. चाण्डालान्यास्त्रियो० ।

पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति॥" इति चाण्डालादिसाम्यं प्रतिपादयता मनुनाऽपि कामतोऽत्यन्ताभ्यासे मरणान्तिकं दर्शितम्। तथा ह्यज्ञानतश्चाण्डालीगमनाभ्यासे पतत्यतः पतितप्रायश्चित्तं द्वादशवार्षिकं कुर्यात्। कामतोऽत्यन्ताभ्यासे चाण्डालैः साम्यं गच्छत्यतो द्वादशवार्षिकाभ्यधिकं मरणान्तिकं कुर्यात्। एतच्च बहुकालाभ्यासविषयम्। एकरात्राभ्यासे तु वर्षत्रयम्; यथाऽऽह मनुः—"यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः। तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥" इति। अत्र वृषलीशब्देन चाण्डाल्यभिधीयते—"चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका। ऊढा या च सगोत्रा स्याद्वृषल्यः पञ्च कीर्तिताः॥" इति स्मृत्यन्तरे चण्डाल्यां वृषलीशब्दप्रयोगदर्शनात्। बन्धकी स्वैरिणी। कथं पुनरत्राभ्यासावगमः? उच्यते। "यत्करोत्येकरात्रेण" इत्यन्तसंयोगापवर्गवाचिन्यास्तृतीयाया दर्शनादेकरात्रेण चात्यन्तसंयोगो गमनाभ्यासं विनाऽनुपपन्न इति गमनाभ्यासोऽवगम्यते। अत एवैकरात्राद्बहुकालाभ्यासविषयं प्रागुक्तं द्वादशवर्षादिगुरुतल्पव्रतातिदेशिकं च। यदा पुनर्ज्ञानतोऽज्ञानतो वा चाण्डालाद्याः सकृद्गच्छन्ति तदा "चाण्डालपुल्कसानां तु भुक्त्वा गत्वा च योषितम्। कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम्॥" इति यमाद्युक्तसंवत्सरं कृच्छ्रानुष्ठानं चान्द्रायणद्वयं यथाक्रमेण द्रष्टव्यम्। "स्वयोनिष्वन्त्यजासु च" इत्येकवाक्यसमभिव्याहाराद्भगिन्यादिष्वपीयमेव व्यवस्था वेदितव्या। मरणान्तिकं चात्राग्निप्रवेशनं—"जनन्यां च भगिन्यां च स्वसुतायां तथैव च। स्नुषायां गमनं चैव विज्ञेयमतिपातकम्॥ अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम्।" इति कात्यायनस्मरणात्। जनन्यां सकृद्गमने भगिन्यादिषु चासकृद्गमने अग्निप्रवेश इति द्रष्टव्यं— महापातकस्य जननीगमनस्य तदतिदेशविषयभूतातिपातकस्य भगिन्यादिगमनस्य तुल्यत्वायोगात्। यत्तु बृहद्यमेनोक्तं—"चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम्। मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम्॥ मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम्। शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं

१—मनुः ११. १७५. । २.—११. १७८. । ३. ख. न्धकीवैश्यारज० । ४. क. ऊढाचयासगो० । ५. ख. स्मृत्यन्तरे वृषलीश० । ६. छ. णेत्यन्तसंयोगोऽनुपपन्न० । ७. ख. गमनस्याभ्यास० । ८. क. द्गच्छति तदा० । ९. ख. जितां स्वगो० ।

चरेत् ॥" इति, यच्चाङ्गिरोवचनम्—"पतितान्त्यास्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। मासोपवासं कुर्वीत चान्द्रायणमथापि वा॥" इति तदुभयमपि गुरुतल्पातिदेशविषयेषु कामतः प्रवृत्तस्य रेतःसेकादर्वाङ्निवृत्तौ द्रष्टव्यम् । यदपि संवर्तवचनं—"भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् । एता गत्वा स्त्रिया मोहात्तप्तकृच्छ्रं समाचरेत्॥" इति तदनन्तरोक्त एव विषये अकामतः प्रवृत्तस्य रेतःसेकादर्वाङ्निवृत्तौ द्रष्टव्यम् । यदा पुनरेता एव अत्यन्तव्यभिचारिणीर्गच्छति तदाऽपीदमेव प्रायश्चित्तयुगलं चान्द्रायणतप्तकृच्छ्रात्मकं क्रमेण कामतोऽकामतश्च प्रवृत्तौ द्रष्टव्यम् । साधारणस्त्रीषु तु गुरुणोपभुक्तास्वपि गमने गुरुतल्पदोषो नास्ति—"जात्युक्तं पारदार्यं च कन्यादूषणमेव च । साधारणस्त्रियो नास्ति गुरुतल्पत्वमेव च॥" इति व्याघ्रस्मरणात् । एवमन्यान्यपि स्मृतिवचनान्युच्चावचप्रायश्चित्तप्रतिपत्तिपराण्यन्विष्य विषयव्यवस्थोहनीया । ग्रन्थगौरवभयान्न लिख्यन्ते॥२६०॥

इति गुरुतल्पप्रायश्चित्तप्रकरणम् ॥

---

एवं ब्रह्महादिमहापातकिप्रायश्चित्तमभिधायावसरप्राप्तं तत्संसर्गिप्रायश्चित्तमाह—

**एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ।**

एभिः पूर्वोक्तैर्ब्रह्महादिभिरेकं संवत्सरं योऽत्यन्त संवसति सहाऽऽचरति सोऽपि तत्समः । यो येन सहाऽऽचरति सोऽपि तदीयमेवं प्रायश्चित्तं कुर्यादिति तदीयप्रायश्चित्तातिदेशार्थं तत्समग्रहणं, न पुनः पातकत्वातिदेशार्थं—तस्य "यश्च तैः सह संवसेत्" इत्युपदेशत एव सिद्धत्वात् । अत्र च सत्यप्यतिदेशत्वे कृत्स्नमेव द्वादशवार्षिकं कार्यं—साक्षान्महापातकित्वात्संसर्गिणः । अपि शब्दान्न केवलं महापातकिसंयोगी तत्समः, किं त्वतिपातकिपातक्युपपातक्यादीनां मध्ये यो येन सह संसर्गं करोति सोऽपि तत्सम इति तदीयमेव प्रायश्चित्तं कुर्यादिति दर्शयति । अत एव मनुना सकलं प्रायश्चित्तजातमभिधायाध्यायान्तेऽभिहितं—"यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥" इति । विष्णुनाऽपि सामान्येनोपपातक्याद्येनास्विमात्रसंसर्गे तत्प्रायश्चित्तभाक्त्वं दर्शितं—"पापात्मना येन सह यः संसृज्येत

१. ख. यच्चाङ्गि० । २. ख. तल्पत्वदोषो० । ३. क. सहावसतिसोमित० । ख. चरतिसतदीय० । ४. प्रा० २२३. । ५. ख. भिधायाभिहि० । क. भिधायान्तेभिहि० । ६.—११. १८१. ।

स तस्यैव व्रतं कुर्यात् इति । अत एव मनुना सामान्येनैनस्विमात्रप्रतिषेधः कृतः —"एनस्विभिरनिर्णिक्तैर्नार्थं कंचित्समाचरेत्" इति । तथा "न संसर्गं भजेत्साद्भिः प्रायश्चित्तेऽकृते सति।" इति । एतच्च द्वादशवार्षिकादिपतितप्रायश्चित्तं बुद्धिपूर्वसंसर्गविषयं—"पतितेन सहोषित्वा जानन्संवत्सरं नरः । मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्॥" इति देवलस्मरणात्। अज्ञानतः संसर्गे पुनर्वसिष्ठोक्तं—"पतितसंप्रयोगे तु ब्राह्मेण यौनेन वा स्रौवेणवा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेत् उदीचीं दिशं गत्वाऽनश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते।" इति । तथा "ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः। एते महापातकिनो यश्च तैः सह संवसेत्॥" इति । तैरिति सर्वनामपरामृष्टप्रकृतब्रह्महादिचतुष्टयसंसर्गिण एव महापातकित्ववचनात्तत्संसर्गिणो न महापातकित्वम् । ननु महापातकिसंसर्ग एव महापातकित्वे हेतुर्न ब्रह्महादिविशेषसंसर्गः—तस्य व्यभिचारात् ; अतोऽत्र ब्रह्महादिसंसर्गिसंसर्गिणोऽपि[1] महापातकिसंसर्गो विद्यत इति तस्यापि महापातकित्वं स्यान्न च प्रतिषेधः । उच्यते । स्यादेवं यदि प्रमाणान्तरगम्यं महापातकित्वं स्यात्—शब्दैकसमधिगम्ये तु तस्मिन्नैवं भवितुमर्हतीति तैरिति प्रकृतविशेषपरामर्शिना सर्वनाम्ना ब्रह्महादिविशेषसंसर्गस्यैव महापातकित्वहेतुत्वस्यावगमितत्वात् । एवं च सति प्रतिषेधाभावोऽप्यहेतुः —प्राप्त्यभावादेव । अतः संसर्गिसंसर्गिणां द्विजातिकर्मभ्यो हानिर्न भवति, प्रायश्चित्तं तु भवत्येव। न च संसर्गिसंसर्गिणः पातित्याभावे कथं प्रायश्चित्तमिति वाच्यम्—"एनस्विभिरनिर्णिक्तैर्नार्थं कञ्चित्समाचरेत्॥" इति सामान्येनैनस्विमात्रप्रतिषेधेन महापातकिसंसर्गिसंसर्गस्यापि प्रतिषिद्धत्वात्पातित्याभावेऽपि युक्तमेव प्रायश्चित्तम् । तच्च पादहीनं—यो येन संवसेद्वर्षं सोऽपि तत्समतामियात् । पादहीनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः॥" इति व्यासोक्तं द्रष्टव्यम् । अतः साक्षाद्ब्रह्महादिसंसर्गिण एव तदीयप्रायश्चित्ताधिकारो न संसर्गिसंसर्गिण इति सिद्धम् । अत्र च ब्रह्महादिषु यद्यपि कामतो मरणान्तिकमुपदिष्टम् , तथाऽपि संसर्गिणस्तन्नातिदिश्यते—"स तस्यैव व्रतं कुर्यात्" इति व्रतस्यैवातिदेशात् , मरणस्य च

१.—११. १८९. । २. क. स्रोवेणवेतिनास्ति । ३.—१९. ४५. ६. । ४. ख. वसेदिति सर्वमनवद्यम । ५. क. तत्संसर्गिसंसर्गिणो०। ६. ख म्येतुतस्मान्नैवं० ।

व्रतशब्दवाच्यत्वाभावात्। अतोऽत्र कामकृतेऽपि संसर्गे द्वादशवार्षिकम्; अकामतस्तु तदर्धम् । संसर्गश्च स्वानिबन्धनकर्मभेदादनेकधा भिद्यते ; यथाऽऽह बृहस्पतिः—"एकशय्यासनं पङ्क्तिर्भाण्डं पङ्क्त्यन्नमिश्रणम् । याजनाध्यापने योनिस्तथा च सहभोजनम् ॥ नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह ।" इति । देवलोऽपि—"संलापस्पर्शनिः श्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम्॥" इति । एकशय्यासनमेकखट्वासनम् ; एकपङ्क्तिभोजनमेकभाण्डपचनम् ; अन्नेन मिश्रणं संसर्गस्तदीयान्नभोजनमिति यावत् ; याजनं पतितस्य स्वस्य वा तेन; अध्यापनं तस्य स्वस्य वा तेन; यौनं तस्मै कन्यादानं तत्सकाशाद्वा कन्यायाः प्रतिग्रहः; सहभोजनमेकामत्रभोजनम् ; संलापः संभाषणं; स्पर्शो गात्रसंमर्दः; निःश्वासः पतितमुखवायुसंपर्कः; सहयानमेकतुरगाद्यारोहणम् ,—एषां मध्ये केन कर्मणा कियता कालेन पातित्यमित्यपेक्षायां बृहद्विष्णुनोक्तं—"संवत्सरेण पतति पतितेन सहाचरन्नेकयानभोजनासनशयनैः, योनस्रौवमुख्यैस्तु संबन्धैः सद्य एव" इति । अत्रैकभोजनमेकपङ्क्तिभोजनम् । एकामत्रभोजने तु सद्यः पातित्यं—"याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥" इति देवलस्मरणात् । स्रौवशब्देन याजनमभिधीयते ; मुख्यशब्देन मुखभवत्वेनाध्यापनम् ; यौनस्रौवमुख्यैरिति सत्यपि द्वन्द्वनिर्देशे प्रत्येकमेव तेषां सद्यः पतनहेतुत्वम्—"यः पतितैः सह यौनमुख्यस्रौवाणां संबन्धानामन्यतमं संबन्धं कुर्यात्तस्याप्येतदेव प्रायश्चित्तम् ॥" इति सुमन्तुस्मरणात्। एकयानादिचतुष्टयस्य तु समुदितस्यैव पतनहेतुत्वम्—"एकयानभोजनासनशयनैः" इति इतरेतरयुक्तानां निर्देशात् । प्रत्येकानुष्ठानस्य पतनहेतुत्वाभावेऽपि दोषहेतुत्वमस्त्येव — "आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् । संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि ॥" इति पराशरवचनेन निरपेक्षाणामपि पापहेतुत्वावगमात्। संलापस्पर्शनिःश्वासानां तु यानादिचतुष्टयेनाऽऽनुषङ्गिकतया समुच्चितानामेव पतनहेतुत्वं—न पृथग्भूतानामल्पत्वात् । पापहेतुत्वं पुनरस्त्येव—"संलापस्पर्शनिः श्वास" इति देवलवचनस्य दर्शितत्वात् । अतः संलापादिरहिते सहयानादिचतुष्टये कृते पञ्चमभागोनं द्वादशवार्षिकं प्रायश्चित्तं कुर्यात् ,

१. ख. यथाऽऽहवृद्धबृह० । २. क याजनोध्ययनेयोनि० । ३. क. यानाशनासनात् ।

तत्सहिते तु पूर्णम् । एवं च सति—"एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः।" इति योगीश्वरवचनमपि सहयानादिचतुष्टयपरमेव युक्तम् । यतः संलापादीनां पृथक्पातित्यहेतुत्वं नास्ति । अत एव मनुना— "संवत्सरेण पतति पतितेन सहाऽऽचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥"[1] इति यानादिचतुष्टयस्यैव संवत्सरेण पातित्यहेतुत्वमुक्तम् । अत्रासनग्रहणं शयनस्याप्युपलक्षणम्[2] । अत्र च "संवत्सरेण पतति पतितेन सहाऽऽचरन् । यानाशनासनादित्[3]" इति व्यवहितेन संबन्धः—प्राग्दर्शितविष्णुवचनानुरोधात् । तथा "संवत्सरेण पतति पतितेन सहाऽऽचरन् । भोजनासनशय्यादि कुर्वाणः सार्वकालिकम् ॥" इति देवलवचनाच्च[4] । न चानन्वयदोषः — यानाशनादिहेतोराचरन्नाचारं कुर्वन्निति[5] भेदविवक्षया संबन्धोपपत्तेः ; यथा एतया पुनराधेयसंमितयेष्टेति । यद्वा आचरन्निति शत्रा हेत्वर्थस्य गमितत्वात् यानासनादिति द्वितीयार्थे पञ्चमी । याजनाध्यापनाद्यौनान्न तु संवत्सरेण पतति, किं तु सद्य एव—प्राचीनवचननिचयानुरोधादेव । अतो यौनादिचतुष्टयेन सद्यः पतति, यानादिचतुष्टयेन तु संवत्सरं निरन्तराभ्यासेनेति युक्तम्।"वत्सरं सोऽपि तत्समः" इति अत्यन्तसंयोगवाचिन्या द्वितीयाया दर्शनादन्तरित दिवसगणना कार्या: यथा षष्ट्यधिकशतत्रयदिवसव्यापित्वं संसर्गस्य भवति ; ततो न्यूने तु न पतितप्रायश्चित्तं, किं त्वन्यदेव; यथाऽऽह पराशरः—"संसर्गमाचरन्विप्रः पतितादिष्वकामतः । पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ मासार्धं मासमेकं वा मासत्रयमथापि वा । अब्दार्धमेकमब्दं वा भवेदूर्ध्वं तु तत्समः ॥ त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् । चरेत्सान्तपनं कृच्छ्रं तृतीये पक्ष एव तु ॥ चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे ततः । षष्ठे चान्द्रायणं कुर्यात्सप्तमे त्वैन्दवद्वयम् ॥ अष्टमे च तथा पक्षे षण्मासान्कृच्छ्रमाचरेत् ॥" इति ॥ कामतः ससर्गे पुनर्विशेषः स्मृत्यन्तरेऽभिहितः[6]—"पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम्। पराकस्त्वर्धमासे स्या न्मासे चान्द्रायणं चरेत् ॥ मासत्रये प्रकुर्वीत कृच्छ्रं चान्द्रायणोत्तरम् । षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत् ॥ संसर्गे त्वाब्दिके कुर्यादब्दं चान्द्रायणं नरः[7]॥"

१.—११. १८०. । २. क. शयनस्योपलक्ष० । ३. क. शनादितिव्य० । ४. छ. इति वचनात् । ५. छ. कुर्वन्निति शताहेत्व० । ६. ख. हितः सुमन्तुः । पञ्चाहे० । ७. ख. नरः इति । अत्र० ।

अत्र चाऽऽब्दिके संसर्गे इति किंचिन्न्यून इति द्रष्टव्यं—पूर्णे तु वत्सरे मन्वादिभिर्द्वादशवार्षिकस्मरणात् । यत्तु बार्हस्पत्यं वचनं—"षाण्मासिके तु संसर्गे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्धमाचरेत् ॥" इति याजनाध्यापनायौनैकपात्रभोजनानां षण्मासात्पातित्यवचनम् एतदकामतोऽत्यन्तापदि पञ्चमहायज्ञादिप्राये याजनेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्ते च योनिसंबन्धे द्रष्टव्यं—प्रकृष्टयाजनादिभिः सद्यःपातित्यस्योक्तत्वात् । एतद्दिगवलम्बनेनैव दुहितृभगिनी स्नुषागाम्यतिपातकिसंसर्गिणां कामतो नववार्षिकम्, अकामतः सार्धचतुर्वार्षिकं कल्पनीयं, सखिपितृव्यदारादिगामिपातकिसंसर्गिणां कामतःषड्वार्षिकम्, अकामतस्त्रैवार्षिकम्, अथोपपातक्यादिसंसर्गिणामपि कामतस्तदीयमेव त्रैमासिकम्, अकामतोऽर्धमित्यूहनीयम् । पुरुषवत्स्त्रीणामपि महापातक्यादिसंसर्गात्पातित्यमविशिष्टम् ; यथाऽऽह शौनकः—"पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येवं ब्राह्मणी हीनवर्णसेवायामधिकं पतति" इति । अतस्तासामपि महापातकिप्रभृतीनां मध्ये ये सह संसर्गस्तदीयमेव प्रायश्चित्तमर्धं क्लृप्त्या योजनीयम् । एवं बालवृद्धातुराणामपि कामतोऽर्धम्, अकामतः पादः। तथाऽनुपनीतस्यापि बालस्य कामतः पादः अकामतस्तदर्धमित्येषा दिक् ॥

पतितसंसर्गप्रतिषेधेन प्रतिषिद्धस्य यौनसंबन्धस्य क्वचित्प्रतिप्रसवमाह—

**कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम् ॥ २६१ ॥**

एषां पतितानां कन्यां पतितावस्थायामुत्पन्नां सोपवासां कृततत्संसर्गकालोचितप्रायश्चित्तामकिञ्चनामगृहीतवस्त्रालङ्कारादिपितृधनामुद्वहेत् । कन्यां समुद्वहेदिति वदन्स्वयमेव कन्यां त्यक्तपतितसंसर्गामुद्वहेन्न पुनः पतितहस्तात्प्रतिगृह्णीयादिति दर्शयति । एवं च सति पतितयौनसंसर्गप्रतिषेधविरोधोऽपि परिहृतो भवति । अयं चार्थो बृहद्धारीतेन स्पष्टीकृतः—"पतितस्य तु कुमारीं विवस्त्रामहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाऽऽच्छादितां 'नाहमेतेषां न ममैते' इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत्" इति। तथा एषां कन्यां समुद्वहेदिति वचनात्स्त्रीव्यति

---

१. क. दारादिपातकि० । २. ख. र्षिकम् । अथो० । ३. क. तान्येवात्राह्मणी० । ४. क. मर्धं कृत्यायोज० ।

रिक्तदीयापत्यस्य संसर्गानर्हतां दर्शयति । अत एव वसिष्ठः—"पतितेनो पन्नः पतितो भवति अन्यत्र स्त्रियाः सा हि परगामिनी, तामरिक्थामुपेयात्" इति ॥ २६१ ॥

॥ इति संसर्गप्रायश्चित्तप्रकरणम् ॥

---

निषिद्धसंसर्गप्रायश्चित्तप्रसङ्गान्निषिद्धसंसर्गोत्पन्नप्रतिलोमवधे प्रायश्चित्तमाह—

## चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु ।

अवकृष्टाः सूतमागधादयः प्रतिलोमोत्पन्नाः, तेषां प्रत्येकं हनने चान्द्रायणम्। तथा च शङ्खः—"सर्वेषामवकृष्टानां वधे प्रत्येकं चान्द्रायणम्" इति । यद्वाऽङ्गिरसोक्तं —"सर्वान्त्यजानां गमने भोजने संप्रमापणे । पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम् ॥" इति पराकं कुर्यात् । तत्र कामतः सूतादिवधे चान्द्रायणम्, अकामतस्तु सूतवधे पराकः; वैदेहकवधे पादोनः; चाण्डालवधे द्विपादः; मागधवधे पादोनः पराकः; क्षत्तरि द्विपादः; आयोगवे च पादद्वयम् । अनयैव दिशा चान्द्रायणस्यापि तारतम्यं कल्प्यम् । यत्तु ब्रह्मगर्भवचनं — "प्रतिलोमप्रसूतानां स्त्रीणांमासावधिः स्मृतः । अन्तरप्रभवानाञ्च सूतादीनां चतुर्द्विषड् ॥" इति — तदावृत्तिविषयम् । तत्र सूतवधे षण्मासाः, वैदेहकवधे चत्वारः, चाण्डालवधे द्वाविति योग्यतयाऽन्वयः । तथा मागधवधे चत्वारः, क्षत्तरि द्वैमासिकं, आयोगवे च द्वैमासिकामिति व्यवस्था ॥

नैमित्तिकव्रताना जपादिसाध्यत्वात्क्रियाविरहिणां च शूद्रादीनां तदनुपपत्तेराज्यावेक्षणादिसाध्येष्विवान्धानामनधिकारमाशङ्क्याऽऽह—

## शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति ॥ २६२ ॥

यद्यपि शूद्रो जपाद्यधिकारहीनः, तथाऽप्यनेन द्वादशवार्षिकादिकालसंपाद्येन व्रतेन शुध्यति । शूद्रग्रहणं स्त्रीणां प्रतिलोमजानां चोपलक्षणम् । यद्यपि तस्य गायत्र्यादिजपासंभवः, तथाऽपि नमस्कारमन्त्रजपो भवति । अत एव स्मृत्य-

१. ख. मुद्रहेदिति० । २. ख. संसर्गप्रसङ्गा० । क. संसर्गिप्राय० ।

न्तरेऽभिहितम्—"उच्छिष्टं चास्य भोजनमनुज्ञातोऽस्य नमस्कारो मन्त्रः ॥" इति । यद्वा वचनबलाज्जपादिर्वर्जितमेव व्रतं कुर्यात्—"तस्माच्छूद्रं समासाद्य सदा धर्मपथेस्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवार्जितम् ॥" इत्यङ्गिरःस्मरणात् । तथाऽपरमपि तेनैवोक्तं—"शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः । दानैर्वाऽप्युपवासैर्वा द्विजशुश्रूषया तथा ॥" इति । यत्तु मानवं—"न चास्योपादिशेद्धर्मं न चास्य व्रतमादिशेत् ।" इति शूद्रस्य व्रतोपदेशनिषेधपरं वचनं तदनुपसन्नशूद्राभिप्रायम् । यदपि स्मृत्यन्तरवचनं—"कृच्छ्राण्येतानि कार्याणि सदा वर्णत्रयेण तु । कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयते ॥" इति—तत्काम्यकृच्छ्राभिप्राय ; अतः स्त्रीशूद्रयोः प्रतिलोमजानां च त्रैवर्णिकवत् व्रताधिकार इति सिद्धम् । यत्तु गौतमवचनं—"प्रतिलोमा धर्महीनाः" इति तदुपनयनादिविशिष्टधर्माभिप्रायम् ॥ २६२ ॥

॥ इति महापातकप्रायश्चित्तप्रकरणम् ॥

---

महापातकादिपञ्चकमध्ये महापातकातिपातकानुपपातकप्रायश्चित्तान्युक्त्वाऽधुनोपपातकप्रायश्चित्तानि व्याचक्षाणः पाठक्रमप्राप्तं गोवधप्रायश्चित्तं तावदाह—

**पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ।**
**गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यति ॥ २६३ ॥**

**कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वाऽपि समाहितः ।**
**दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः ॥ २६४ ॥**

गां हन्तीति गोघ्नः—मूलविभुजादित्वात्कप्रत्ययः; असौ मासं समाहित; आसीत । । किं कुर्वन् ? पञ्चगव्यं पिबन्—पञ्च च तानि गव्यानि गोमूत्रगोमयक्षीरदाधिघृतानि यथाविधि मिश्रितानि पिबन्—आहारान्तरपरित्यागेन भोजनकार्ये तस्य विधानात् । तथा गोष्ठेशयः—प्राप्तशयनानुवादेन

---

१. ख. पादिरहितये० । २.—४. ८०. । ३.—४. २५. । ४. ख. इति पञ्चमहापा० । ५. ख. सीतसंयमः । छ. संयुतः । गोष्ठे० । ५. ख. कुर्वन्यच्चतानि० ।

गोष्ठविधानाद्दिवा च स्वापप्रतिषेधाद्रात्रौ गोशालायां शयानः । गा अनुगच्छति तदस्य व्रतमिति गोऽनुगामी—व्रते णिनिः। अतश्च यासां गोष्ठे शेते सन्निधानात्ता एव गाः प्रातर्वनं प्रतिचरन्तीरनुगच्छेत् । अनुगच्छेदिति वचनाद्यदा ता गच्छन्ति तदैव स्वयमनुगच्छेत्, यदानुतिष्ठन्त्यासते वा तदा पश्चाद्गमनस्याशक्यकरणत्वात्स्वयमपि तिष्ठेदासीत वेति गम्यते। अनुगमनविधानादेव ताभिः सायं गोष्ठं व्रजन्तीभिः सह गोष्ठप्रवेशोऽप्यर्थसिद्धः । एवं कुर्वन्मासान्ते गोप्रदानेन एकां गां दत्त्वा तावता शास्त्रार्थस्य संपत्तेर्गोहत्यायाः शुध्यतीत्येकं व्रतम् । मासं गोष्ठेशयो गोनुगामीति चानुवर्तते ; पञ्चगव्याहारस्य तु निवृत्तिः:—कृच्छ्रविधानादेव । अतश्च मासं निरन्तरं कृच्छ्रं समाहितश्चरेदित्यपरम् । अत एव जाबालेन मासं प्राजापत्यस्य पृथक् प्रायश्चित्तत्वमुक्तं—"प्राजापत्यं चरेन्मासं गोहन्ता चेदकामतः। गोहितो गोनुगामी स्याद्गोप्रदानेन शुद्ध्यति ॥" इति । अतिकृच्छ्रं वा तथैव समाचरेदित्यन्यत् । कृच्छ्रातिकृच्छ्रयोर्लक्षणमुत्तरत्र वक्ष्यते । अथवा त्रिरात्रमुपवासं कृत्वा वृषभ एकादशो यासां गवां ता दद्यादिति व्रतचतुष्टयम् तत्राकामकृते जातिमात्रब्राह्मणस्वामिकगोमात्रवधे वृषभैकादशगोदानसहितास्त्रिरात्रोपवासो द्रष्टव्यः—विशिष्टस्वामिकाया विशिष्टगुणवत्याश्च वधे गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात् । क्षत्रियसंबन्धिन्यास्तु तादृग्विधे व्यापादने मासं पञ्चगव्याशित्वं प्रथमं प्रायश्चित्तम् । अत्र मासं पञ्चगव्याशनस्यातिस्वल्पत्वात्तन्मासोपवासतुल्यत्वम् । ततश्च षड्भिः षड्भिरुपवासैरेकैकप्राजापत्यकल्पनया पञ्चकृच्छ्राणां प्रत्याम्नायेन पञ्च धेनवो मासान्ते च दीयमाना गौरेकेति षट् धेनवा भवन्तीति वृषभैकादशगोदानसहितात्त्रिरात्रव्रताल्लघीयस्त्वम् । कथं पुनर्ब्राह्मणगवीनां गुरुत्वं—"देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तमम् ।" इति नारदेन तद्द्रव्यस्योत्तमत्वाभिधानात् "गोषु ब्राह्मणसंस्थासु" इति दण्डभूयस्त्वदर्शनाच्च । वैश्यसंबन्धिन्यास्तु तादृग्विधे व्यापादने मासमतिकृच्छ्रं कुर्यात् । अतिकृच्छ्रं त्वाद्ये त्रिरात्रत्रये पाणिपूरान्नभोजनमुक्तम् अन्त्ये त्रिरात्रेऽनशनम् । अतोऽतिकृच्छ्रधर्मेण मासव्रते क्रियमाणे षड्रात्रमुपवासो भवति । चतु-

१. ख. विधानेन दिवा० । २. ख. र्वनं विचरं । ३. ख. मात्रवधे उपवासंकृत्वाबृष० । ४. छ. गुरुप्रायश्चित्तम् । क्षत्रि० ।

विंशत्यहे च पाणिपूरान्नभोजनम् । ततश्च कृच्छ्रप्रत्याम्नायकल्पनया किञ्चिन्न्यूनं धेनुपञ्चकं भवतीति पूर्वस्माद्भूतद्वयाल्लघिष्ठत्वेन वैश्यस्वामिकगोवधविषयता युक्ता । तादृश एव विषये शूद्रस्वामिकगोहत्यायां मासं प्राजापत्यव्रतं द्वितीयं तत्र च सार्धप्राजापत्यद्वयात्मकेन प्रत्याम्नायेन किञ्चिदधिकं धेनुद्वयं भवतीति पूर्वेभ्यो लघुतमत्वाच्छूद्रविषयतोचिता । अथ चैतत्प्रायश्चित्तचतुष्टयं साक्षात्कर्त्रनुग्राहकप्रयोजकानुमन्तृषु गुरुलघुभावतारतम्यापेक्षया पूर्वोक्त एव विषये योजनीयम् । यत्तु-वैष्णवं व्रतत्रयं —"गोघ्नस्य पञ्चगव्येन मासमेकं पलत्रयम् । प्रत्यहं स्यात्पराको वा चान्द्रायणमथापि वा॥" इति, यच्च काश्यपीये—"गां हत्वा तच्चर्मणा प्रावृतो मासं गोष्ठेशयस्त्रिषवणस्नायी नित्यं पञ्चगव्याहारः" इति, यच्च शातातपीयं—"मासं पञ्चगव्याहारः" इति तत्पञ्चकमपि याज्ञवल्कीयपञ्चगव्याहारसमानविषयम् । यच्च शङ्खप्रचेतोभ्यामुक्तं—"गोघ्नः पञ्चगव्यहारः पञ्चविंशतिरात्रमुपवसेत्साशिखं वपनं कृत्वा गोचर्मणा प्रावृतो गाश्चानुगच्छन् गोष्ठेशयो गां च दद्यादिति एतच्च याज्ञवल्कीय[2]वासातिकृच्छ्रव्रतसमानविषयं, "दद्यात्त्रिरात्रं चोपोष्य" इत्येतद्विषयं वाऽत्यन्तगुणिनो हन्तुर्वेदितव्यम् । अत्रैव विषये पंचगव्याशस्य तु द्वितीयं काश्यपीयं मासं पंचगव्येनेति प्रतिपाद्य "षष्ठे काले पयोभक्षो वा गच्छन्तीष्वनुगच्छेत्तासु सुखोपविष्टासु चोपविशेन्नातिप्लुवं गच्छेन्नातिविषमेणावतारयेन्नाल्पोदके पाययेदन्ते ब्राह्मणान्भोजयित्वा तिलधेनुं दद्यादिति द्रष्टव्यम् । अत्राप्यशक्तस्य "गोघ्नो मासं यवागुं प्रसृतितण्डुलशृतां भुञ्जानो गोभ्यः प्रियं कुर्वन् शुध्यति" इति पैठिनसिनोक्तं वेदितव्यम् । यत्तु सौमन्तं—"गोघ्नस्य गोप्रादानं गोष्ठेशयनं द्वादशरात्रं पंचग[3]व्याशनं गवानुगमनं च" इति, यच्च संवर्तेनोक्तम्—"सक्तुयावकभैक्षाशी पयो दधि घृतं [4]शकृत् । एतानि क्रमशोऽश्नीयान्मासार्धं [5]सु समाहितः ॥ ब्राह्मणान्भोजयित्वा तु गां दद्यादात्मशुद्धये॥" इति, यच्च बार्हस्पत्य—"द्वादशरात्रं पंचगव्याहारः" इति तत्त्रितयमपि याज्ञवल्कीयमासप्राजाप[त्ये]न समानविषयं, मृतकल्पगोहत्याविषयं [6]वा, विषमप्रदेशत्रासनजनितव्याधितो मरणात्रिषयं वा वेदित-

१. क. त्यहेव्रतेपाणि० । २. क ल्कीयापशीतिकृच्छ्र० । ३ ख. गव्यप्राशनं । ४. ख. घृतं सकृत् । एता० । ५. ख. सार्धं ससमाहितः । ६. छ. हत्याविषयं वावेदितव्यम्० ।

व्यम् । तदिदं सर्वप्रागुक्तमकामविषयम् । यदा पुनरीदृग्विधामविशिष्टविप्रस्वामि-कामविशिष्टां गां कामतः प्रमापयति तदा मनुना मासं यवागूपानं, मासद्वयं हविष्येण चतुर्थकालभोजनं, मासत्रयं वृषभैकादशगोदानयुक्तं शाकादिना वर्तन-मिति व्रतत्रितयमाम्नातम्; यथाऽऽह—"उपपातकसंयुक्तो गोघ्नो मासं यवा-न्पिबेत् । कृतवापो वसेद्गोष्ठे चर्मणाऽऽर्द्रेण संवृतः ॥ चतुर्थकालमश्नीयादक्षार-लवणं मितम् । गोमूत्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रजःपिबेत् । शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥ तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् । आसीनासु तथाऽऽसीत[1] नियतो वीत-मत्सरः ॥ आतुरामभिषिक्तां[2] वा चौरव्याघ्रादिभिर्भयैः । पतितां पङ्कलग्नां वा सर्वोपायैर्विमोक्षयेत्[3] ॥ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् । न कुर्वीताऽऽत्मनस्त्राणं गोरकृत्वा तु शक्तितः॥ आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽ-थवा खले । भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ॥ अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति । स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ ऋषभैकादशा गाश्च दद्यात्सुचरितव्रतः । अविद्यमाने[4] सर्वस्वं वेदविद्भ्यो निवे-दयेत् ॥" इति[5] । एतत्त्रितयं याज्ञवल्कीयमासप्राजापत्यमासपञ्चगव्याशनवृषभैका-दशगोदानयुक्तत्रिरात्रोपवासरूपव्रतत्रितयविषय यथाक्रमेण द्रष्टव्यम् । यत्त्वङ्गि-रसा मानवतिकर्तव्यतायुक्तं त्रैमासिकमभिधायाधिकमभिहितम्—"अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् । गोमतीं वा जपेद्विद्यामोङ्कारं वेदमेव च ॥ व्रतवद्धारयेद्दण्डं समन्त्रां चैव मेखलाम् ॥" इति तन्मानवविषयम् । एवं[6] पुष्टितारुण्यादिकिञ्चिद्गुणातिशययोगिन्यां द्रष्टव्यम्—"अतिबालामतिकृशामति-वृद्धां च रोगिणीम् । हत्वा पूर्वविधानेन चरेदर्धव्रतं द्विजः ॥" इति पुष्टि-तारुण्यादिरहितायां गव्यर्धप्रायश्चित्तदर्शनात् । यदा तु याज्ञवल्कीयमासातिकृच्छ्र-व्रतनिमित्तभूतां गामविशिष्टस्वामिकां जातिमात्रयोगिनीं कामतो व्यापादयति तदा

१. ख. तथाऽऽसीनो नियतो० । २. ख. मभिशस्तां वा चौर० । ३. ख. मोचयेत् । ४. क. अविद्यमाने० । ५.—११. १०८—११६ । ६. क. विषयमेवपुष्टि० । ग विषयम् एवं पु० ।

"विहितं यदकामानां कामात्तद्द्विगुणं चरेत्।" इति न्यायेन पूर्वोक्तमेवाकाम-विहितं मासातिकृच्छ्रव्रतं द्विगुणं कुर्यात् । यत्तु हारीतेन—"गोघ्नस्तच्चर्मोर्ध्ववालं परिधाय" इत्यादिना मानवीमितिकर्तव्यतामभिधायोक्तं—"वृषभैकादशाश्च गा दत्त्वा त्रयोदशे मासे पूतो भवति" इति तत्सवनस्थश्रोत्रियगोवधे अकामकृते द्रष्टव्यम् । यत्तु वसिष्ठेन—"गां चेद्धान्यात्तस्याश्चर्मणाऽऽर्द्रेण परिवेष्टितः षण्मासान् कृच्छ्रतप्तकृच्छ्रावातिष्ठेदृषभवेहतौ दद्यात्" इति षाण्मासिकं कृच्छ्रतप्तकृच्छ्रानुष्ठानमुक्तं, यदपि देवलेन—"गोघ्नः षण्मासांस्तच्चर्मपरिवृतो[1] गोग्रासाहारो गोव्रजनिवासी गोभिरेव सह चरन् प्रमुच्यते" इति—तद्द्वयमपि हारीतीयेन समानविषयम् । तत्रैव कामकारकृते कात्यायनीयं त्रैवार्षिकं—"गोघ्नस्तच्चर्मसंवीतो वसेद्गोष्ठेऽथवा पुनः । गाश्चानुगच्छेत्सततं मौनी चीरासनादिभिः ॥ वर्षशीतातपक्लेशवाह्निपङ्कभयार्दिताः । मोक्षयेत्सर्वयत्नेन[2] पूयते वत्सरैस्त्रिभिः ॥" इति द्रष्टव्यम् । यच्च शाङ्खं त्रैवार्षिकं—"पादं तु शूद्रहत्यायामुदक्यागमने तथा । गोवधे च तथा कुर्यात्परस्त्रीगमने तथा ॥" इति तदपि कात्ययनीयव्रतसमानविषयम् । यत्तु यमेनाङ्गिरसीमितिकर्तव्यतामभिधाय—"गोसहस्रं शतं वाऽपि दद्यात्सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥" इति गोसहस्रयुक्तं गोशतयुक्तं च द्वैमासिकं व्रतद्वयमभिहितं तत्र यदा सवनस्थश्रोत्रियसंबन्धिनीं दुर्गतबहुकुटुम्बब्राह्मणसंबन्धिनीं कपिलां कर्माङ्गभूतां गर्भिणीं बहुक्षीरतरुणिमादिगुणशालिनीं निर्गुणो धनवान्सप्रतिज्ञं खड्गादिना व्यापादयति तदा गोसहस्रयुक्तं द्वैमासिकं कुर्यात्—"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम् । खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेत् ॥" इति विशिष्टायां गवि बार्हस्पत्ये प्रायश्चित्तविशेषदर्शनात् । अत एव प्रचेतसा—"स्त्रीगर्भिणीबालवृद्धवधेषु भ्रूणहा भवति" इति ईदृग्विधमेव गोवधमभिसंधाय ब्रह्महत्याव्रतमतिदिष्टम् । द्वितीयं तु याम्यं गोशतदानयुक्तं द्वैमासिकं व्रतं कात्यायनीयव्रतविषये धनवतो द्रष्टव्यम् । यत्तु गौतमेन — वृषभैकैशतगोदानसमुच्चितं[3] ब्रह्मचर्यं वैश्यवधेऽभिधाय गोवधेऽतिदिष्टं—"गां च हत्वा वैश्यवत्" इति[4]

---

1. ख. वृतो गोव्रज० । 2. ख. सप्रयत्नं 3. ख. भैकगोशतदान° । 4.--२२. १८. ।

एतच्च त्रैवार्षिकव्रतप्रत्याम्नायभूतनवतिधेनुभिः सार्धं वृषभैकशता गावो नवन्यूनं द्विशतं भवतीति गोसहस्रयुक्तद्वैमासिकव्रतान्न्यूनत्वात्पूर्वोक्त एव विषयेऽकामतो वधे, यद्वा तत्रैव विषये गर्भरहितायाः कामतो वधे द्रष्टव्यम् । तादृग्विधाया एव गर्भरहितायास्त्वकामतो हननेऽपि कात्यायनीयमेव त्रिवार्षिकं कल्प्यम् । येत्तु यमेनोक्तं—"काष्ठलोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि । प्रायश्चित्तं कथं तत्र शस्त्रेशस्त्रे विधीयते ॥ काष्टे सान्तपनं कुर्यात्प्राजापत्यं तु लोष्टके । तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । त्रिंशद्गा वृषभं चैकं दद्यात्तेभ्यश्च दक्षिणाम् ॥" इति तत्पूर्वोक्तगोसहस्रशतादिदानत्रैवार्षिकादिव्रतविषयेष्वेव काष्ठादिसाधनविशेषजनितवधनिमित्तसान्तपनादिपूर्वकत्वप्रतिपादनपरं, न तु निरपेक्षं लघुत्वाद्व्रतस्य । तथा वयोविशेषादपि प्रायश्चित्तविशेष उक्तः—"अतिवृद्धामतिकृशामति बालां च रोगिणीम् । हत्वा पूर्वविधानेन चरेदर्धव्रतं द्विजः ॥ ब्राह्मणान्भोजयेच्छक्त्या दद्याद्धेमतिलांस्तथा ॥" इति नीरोगादिवधे यद्विहितं तस्यार्धम् । बृहत्प्रचेतसाऽप्यत्र विशेष उक्तः—"एकवर्षे हते वत्से कृच्छ्रपादो विधीयते । अबुद्धिपूर्वो पुंसः स्याद्द्विपादस्तु द्विहायने त्रिहायने त्रिपादः स्यात्प्राजापत्यमतः परम् ॥" इति ॥ तथागर्भिण्या वधे यदा गर्भोऽपि निहतो भवति तदा "प्रतिनिमित्तं नैमित्तिकमावर्तन" इति न्यायेनाविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेष उक्तः—"पाद उत्पन्नमात्रे तु द्वौ पादौ दृढतां गते । पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ अङ्गप्रत्यङ्गसंपूर्णे गर्भे चेतःसमन्विते । द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृतिः ॥" इति । बहुकर्तृके तु हनने संवर्तापस्तम्बौ विशेषमाहतुः—"एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित् । पादंपादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक् ॥" इति । यादृग्विधगोहत्यायां यद्व्रतमुपदिष्टं तत्पादं प्रत्येकं कुर्युः—वचनात् । एका चेदित्युपलक्षणम् । अतो बहुभिर्द्वयोर्बहूनां च व्यापादने प्रतिपुरुषं पादद्वयं पादोनं वा कल्पनीयम् । एतच्चाकामतो वधे

१. ख. पूर्वोक्तविषय एव कामतो० । २. ख क्षणमित्यतो० । ३. यम् । तच्च० ।

द्रष्टव्यं— दैवादिति विशेषणोपादानात् । कामकारे तु बहूनामपि प्रत्येकं कृत्स्नदोषसंबन्धात्कृत्स्नव्रतसंबन्धो युक्तः—सत्रिणामिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्, "एकं व्रतं बहूनां तु यथोक्ताद्द्विगुणो दमः ।" इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्च । यदा त्वेकेनैव रोधनादिव्यापारेण बहवो गावो व्यापादितास्तत्र संवर्तापस्तम्बौ विशेषमाहतुः—"व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि वा । भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत् ॥" इति । बहुष्वपि व्यापन्नेषु न प्रतिनिमित्तं नैमित्तिकानुष्ठानं, नापि तन्त्रेण, किंतु वचनबलाद्द्विगुणमेव । तथा भिषगपि विरुद्धौषधदानेनैकस्या अप्यकामतो व्यापादने द्विगुणं गोव्रतं कुर्यात् । भिषग्व्यतिरिक्तस्य केवलमुपकारार्थं प्रवृत्तस्य त्वकामतः प्रतिकूलौषधदाने व्यास आह—"औषधं लवणं चैव पुण्यार्थमपि भोजनम् । अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ॥ अतिरिक्ते विपत्तिश्चेत्कृच्छ्रपादो विधीयते ॥" इति । यत्त्वापस्तम्बेनोक्तम्—"पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत्सर्वं निपातने ॥" इति—तद्व्यवहितव्यापारिणो निमित्तकर्तुर्विज्ञेयं, न साक्षात्कर्तुः । साक्षात्कर्तृनिमित्तिनोश्च भेदस्तेनैव दर्शितः—"पाषाणैर्लकुटैर्वाऽपि शस्त्रेणान्येन वा बलात् । निपातयन्ति ये गास्तु कृत्स्नं कुर्युर्व्रतं हि ते ॥ तथैव बाहुजङ्घोरुपार्श्वग्रीवादिमोटनैः ॥" इति । एतदुक्तं भवति—पाषाणखड्गादिभिर्ग्रीवामोटनादिना वा ये गां निपातयन्ति—ते साक्षाद्धन्तारस्तेष्वेव कृत्स्नं प्रायश्चित्तम्; ये तु व्यवहितरोधबन्धादिव्यापारयोगिनस्ते निमित्तिनस्तेषां न कृत्स्नव्रतसंबन्धः, किं तु तदवयवैरेव पादद्विपादादिभिरिति । तत्र च रोधादीनां व्यवहितव्यापारत्वाविशेषेऽपि वचनात्क्वचित्पादः, क्वचिद्द्विपादः, पादोनं क्वचिदिति युक्तम् । अत्राऽऽह पराशरः—"गवां बन्धनयोक्त्रैस्तु भवेन्मृत्युरकामतः । अकामकृतपापस्य प्राजापत्यं विनिर्दिशेत् ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम् ॥" इति ॥ अयं च प्राजापत्यो यदि रोधादिकं कृत्वा तज्जन्यप्रमादपरिजिहीर्षया प्रत्य-

---

१. ख. नैवबन्धनादि। २ ख. न्धने तथा। भिषं । ३ ख. ग्रावीाङ्घ्रिमोट० । ४. ख. येङ्गानिपात० । ५. रोधादिनाव्य ।

वेक्षमाण[1] आस्ते तदा द्रष्टव्यः—"अकामकृतपापस्य" इति विशेषणोपादानात् । यदा तु न प्रमादसंरक्षणं[2] करोति तदा "पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत्सर्वं निपातने ॥" इत्याङ्गिरोदृष्टं[3] त्रैमासिकपादकिंचिदधिकविंशत्यहर्गोवधव्रतं कुर्यात् । आपस्तम्बेनापि विशेष उक्तः—"अतिदाहा[4]तिवाहकाभ्यां नासिकाच्छेदने तथा । नदीपर्वतसंरोधे मृते पादोनमाचरेत् ॥" इति । लक्षणमात्रो[5]पयोगिनि तु दाहे न दोषः—"अन्यत्राङ्कनलाभ्यां वाहने मोचनेऽपि[6] वा । साय सङ्गोपनार्थे च न दुष्येद्रोधबन्धने ॥" इति पराशरस्मरणात् । अङ्कनं स्थिरचिह्नकरणम्; लक्षणं साम्प्रतोपलक्षणम् । वाहने शास्त्रोक्तमार्गेण रक्षणार्थमपि नालिकेला[7]दिभिर्बन्धने भवत्येव दोषः—"न नालिकेलेण[8] न शाणवालैर्न चापि मौञ्जेन न बन्धशृङ्खलैः[9] । एतैस्तु गावो न निबन्धनीया बध्वा तु तिष्ठेत्परशुं गृहीत्वा ॥ कुशैः काशैश्च बन्धीयात्स्थाने दोषविवर्जिते ॥" इति व्यासस्मरणात् । तथाऽन्योऽपि विशेषस्तेनैवोक्तः—"घण्टाभरणदोषेण विपत्तिर्यत्र गोर्भवेत् । गोकृच्छ्रार्धं[10] भवेत्तत्र भूषणार्थं हि तत्स्मृतम् ॥ अतिदोहा[11]तिदमने संघाते चैव योजने । बध्वा शृङ्खलपाशैश्च मृते पादोनमाचरेत्[12] ॥" पालनाकरणादिनोपेक्षायां क्वचित्प्रायश्चित्तविशेषस्तेनैवोक्तः—"जलौघपल्वले मग्ना मेघविद्युद्धतापि वा । श्वभ्रे वा पतिताकस्माच्छ्वापदेनापि भक्षिता ॥ प्राजापत्यं चरेत्कृच्छ्रं गोस्वामी व्रतमुत्तमम् । शीतवाताहता वा स्यादुद्बन्धनमृताऽपि[13] वा ॥ शून्यागार उपेक्षायां प्राजापत्यं विनिर्दिशेत् ।" इति ॥ इदं तु कार्यान्तरविरहेऽप्युपेक्षायां वेदितव्यम् । कार्यान्तरव्यग्रतयोपेक्षायां त्वर्धं—"पल्वलौघमृगव्याघ्रश्वापदादिनिपातने । श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्धमाचरेत् । अपाल-

१. क. छ. वेक्ष्यमाण० । २. ख मादसंसरणं क० । ३. ख. त्याङ्गिरसोक्तं त्रैमासिकपादं किञ्चिदधिकं वा विंशत्य० । ग. त्रैमासिकंपादं किञ्चि० । ४. क. अतिदोहातिवा० । ५. लक्षमात्रो० । ६. ख. चने तथा । साय० । ७ ख. नालिकेरादि० । ८. ग. नालिकेरेण० । ९. ग. नवघृशृ० । नबध्नंशृ० । १० ग कृच्छ्रार्द्धं तु भवे० । ११. क. आदि आदिदाहादि० । १२. ख. चरेदिति । पाल । १३. न्धनहतापि० ।

त्वात्तु कृच्छ्रः स्याच्छून्यागार उपप्लवे ॥" इति विष्णुस्मरणात् । तथा सत्यपि व्यापादने क्वचिदुपकारार्थप्रवृत्तौ ; वचनाद्दोषाभावः। यथाऽऽह संवर्तः—" यन्त्रणे गोचिकित्सार्थे गूढगर्भविमोक्षणे । यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते ॥" इति । यन्त्राणं व्याध्यादिनिर्यातनार्थं संदंशाङ्कुशादिप्रवेशनम् । तथा " औषधं स्नेहमाहारं दद्द्गोब्राह्मणे द्विजः । दीयमाने विपत्तिश्चेन्न स पापेन लिप्यते, तथा—" दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् । द्विजानां गोहितार्थं च प्रायश्चित्तं न विद्यते ॥" अत्र पराशरोऽप्याह—" ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने । अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते ॥" इति ॥ "तथा कूपखाते च धर्मार्थे गृहदाहे च या मृता । ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते ॥" इति ॥ इदं तु बन्धनरहितस्यैव पशोः कथञ्चिद्गृहादिदाहेन मर्तविषयम् । इतरत्रस्त्वापस्तम्बेनोक्तं—" कान्तारेष्वथ दुर्गेषु गृहदाहे खलेषु च । यदि तत्र विपत्तिः स्यात्पाद एको विधीयते ॥" इति । तथाऽस्थ्यादिभङ्गे मरणाभावेऽपि क्वचित्प्रायश्चित्तमुक्तम्—" अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा । पाटनं दन्तशृङ्गाणां मासार्धं तु यवान्पिबेद् ॥" इति यत्त्वाङ्गिरसं —" शृङ्गभङ्गेऽस्थिभङ्गे वा चर्मनिर्मोचनेऽपि वा । दशरात्रं पिबेद्व्रजं स्वथाऽपि यदि गौर्भवेत् ॥" इति वज्रशब्दवाच्यं क्षीरादिवर्तनमुक्तं तदशक्तविषयम् । इदं च प्रायश्चित्तं गोस्वामिने व्यापन्नगोसदृशीं गां दत्त्वैव कार्यम् । यथाऽऽह पराशरः—प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् । तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीद्यमः॥ " इति ॥ मनुरपि—" यो यस्य हिंस्याद्द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा । स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥" इति ॥ एतच्च पूर्वोक्तप्रायश्चित्तजातं ब्राह्मणस्यैव हन्तुर्वेदितव्यम् । क्षत्रियादेस्तु हन्तुर्बृहद्विष्णुना विशेषोऽभिहितः—" विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् । वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु

---

१. कृच्छ्रंस्या० । २. (?) । ३ ख. मूढगर्भ०। ४. ख. ग. विमोचने०। ५. ख. लिप्यते। ग्रामघातेशरौघेण वेश्मभङ्गान्निपातने दाहच्छे० । ६. ख. षाह—अतिवृष्टि० । ७ ख. विद्यते । कूपं ८. ख. दृहादिदाहदानेन० । ९. ख. इतरथापस्त० । १०. ख. शृङ्गदनास्थिभ० । ११.—८. २८८. ।

शस्यते ॥" इति ॥ यत्त्वङ्गिरोवचनं—"पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥" इति तत्प्रातिलोम्येन वाग्दण्डपारुष्यादिविषयम् । तथा स्त्रीवृद्धबालादीनां त्वर्धम्, अनुपनीतस्य बालस्य पाद; इति च प्रागुक्तमनुसधेयम् ॥ स्त्रीणां पराशरेण विशेषोऽभिहितः—"वपनं नैव नारीणां नानुव्रज्या जपादिकम् । न गोष्ठे शयनं तासां न वसीरन् गवाजिनम् ॥ सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् । सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम् ॥" इति । पुरुषेषु च विशेषः संवर्तेन दर्शितः—"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च । त्रिपादे तु शिखावर्जं सशिखं तु निपातने ॥" इति । पादप्रायश्चित्तार्हस्य कण्ठादधस्तनाङ्गरोम्णामेव वपनम्; अर्धप्रायश्चित्तार्हस्य तु श्मश्रुणामपि; पादोनप्रायश्चित्तार्हस्य पुनः शिरोगतानामपि शिखावर्जितानां; पादचतुष्टयार्हस्य तु सशिखस्य सकलकेशजातस्येति । एवमेतद्दिगवलम्बनेनान्येषामपि स्मृतिवचसां विषयो निरूपणीयः ॥ २६३ ॥ २६४ ॥

॥ इति गोवधप्रायश्चित्तप्रकरणम् ॥

---

## ४. उपपातकप्रकरणम ॥

अधुनान्येषामुपपातकानां प्रायश्चित्तमाह—

**उतपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।**
**पयसा वाऽपि मासेन पराकेणाथवा पुनः ॥ २६५ ॥**

एवमुक्तेन गोवधव्रतेन मासं पञ्चगव्याशनादिनाऽन्येषां व्रात्यतादीनामुपपातकानां शुद्धिर्भवेत्, चान्द्रायणेन वा वक्ष्यमाणलक्षणेन[1], मासं पयोव्रतेन वा, पराकेण वा, शुद्धिर्भवेत् । अत्रातिदेशसामर्थ्याद्गोचर्मवसनगोपरिचर्यादिभिर्गोवधासाधारणैः कतिपयैर्न्यूनत्वमवगम्यते । एतच्च व्रतचतुष्टयमकामकारे

---

१. क. वा लक्ष्यमां ।

शक्त्यपेक्षया विकल्पितं द्रष्टव्यं; कामकारे तु—"एतदेव व्रतं कर्युरुपपातकिनो द्विजाः। अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा॥" इति मनूक्तं त्रैमासिकं द्रष्टव्यम्। अत एव वचनादयं प्रायश्चित्तातिदेशः सर्वेषामुपपातकगणपठितानामुक्तप्रायश्चित्तानामनुक्तप्रायश्चित्तानां चावकीर्णिवर्जितानामविशेषेण वेदितव्यः। अवकीर्णितस्तु प्रतिपदोक्तमेव। नन्वनुक्तप्रायश्चित्तविषयतयैवातिदेशस्य युक्ता—इतरथा प्रतिपदोक्तप्रायश्चित्तबाधसापेक्षत्वप्रसंगात्। मैवम्; तथा सत्युक्तनिष्कृतीनामुपपातकगणपाठोऽनर्थकः स्यात्। यदि परमुपपातकमध्ये सामान्यतः पठितस्यान्यत्र विशेषतः प्रायश्चित्तमुच्यते, यथा—"अयाज्यानां च याजनं" "त्रीन्कृच्छ्रानाचरेत् व्रात्ययाजकोऽभिचरन्नपि।" इति स एव विषयः केवलं परिहीयेत, न पुनर्विशेषतः पठितस्यान्यत्रापि विशेषत एव यत्र प्रायश्चित्तमुच्यते सोऽपि, यथा—"इन्धनार्थं द्रुमच्छेदः," "वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम्।" इति। अतो व्रात्यतादिषु अस्मिन् शास्त्रे शास्त्रान्तरे वा दृष्टैः प्रायश्चित्तैः सहो "उपपातकशुद्धिः स्यादेवम्" इत्यादिना प्रतिपादितव्रतचतुष्टयस्य समविषमताकल्पनेन विकल्पो विषयविभागो वाऽश्रयणीयः। तानि स्मृत्यन्तरदृष्टप्रायश्चित्तानिपाठक्रमेण व्रात्यतादिषु योजयिष्यामः। तत्र व्रात्यतायां मनुनेदमुक्तं—"येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥" इति। यच्च यमेनोक्तं—"सावित्रीपतिता यस्य दशवर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः॥ एकविंशतिरात्रं च पिबेत्प्रसृतियावकम्। हविषा भोजयेच्चैव ब्राह्मणान्सप्त पञ्च च॥ ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्।" इति तदुभयमपि याज्ञवल्कीयमासपयोव्रतविषयम्। यत्तु वसिष्ठेनोक्तं—"पतितसावित्रीक उद्दालकव्रतं चरेत् द्वौ मासौ यावकेन वर्तयेन्मासं पयसा पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथं गच्छेद्व्रात्यस्तोमेन वा यजेत" इति, अत्रेयं व्यवस्था—पर्यायेनेत्राद्यभावेन तत्कालातिक्रमस्तस्य

---

१ छ. क्षयकिल्पत०। २.—११. ११७.। ३. ख. देशतागुक्ता०। क. देशस्यायुक्ता०। ४. ख व्रात्यादिपु०। ५.—११. १११.। ६. ख. पंचच।

याज्ञवल्कीयव्रतानामन्यतमं शक्त्यपेक्षया भवति, अनापद्यतिक्रमे तु मानवं त्रैमासिकम् । तत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वेति, येषां तु पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तं—"यस्य पितापितामहावनुपनीतौ स्यातां तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्यं यस्य प्रपितामहादेर्नानुस्मर्यते उपनयनं तस्य द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यम्" इति । तथा स्तेयेऽप्युपपातकसाधारणप्राप्तव्रतचतुष्टयापवादकं प्रायश्चित्तं मनुनोक्तं — "धान्यान्नधनचौर्याणि कृत्वा कामाद्विजोत्तमः । सजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥" इति । द्विजोत्तमस्य सजातीयो ब्राह्मण एवातो विप्रपरिग्रहे ब्राह्मणस्य हर्तुरिदं, क्षत्रियादेस्त्वल्पं कल्प्यम्—अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य; द्विगुणोत्तराणीतरेषां प्रतिवर्णं; विदुषोऽतिक्रमे दण्डभूयस्त्वं" इति क्षत्रियादेरपहर्तुर्दण्डाल्पत्वस्य दर्शनात्, तथा"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् ।" इति पादपादहान्या प्रायश्चित्तदर्शनात्। तथा क्षत्रियादिपरिग्रहेणापि दण्डानुसारेण प्रायश्चित्ताल्पत्वं कल्प्यम् । अतः क्षत्रियपरिग्रहे चौर्ये षाण्मासिकं, वैश्यपरिग्रहे त्रैमासिकं गोवधव्रतं, शूद्रपरिग्रहे चान्द्रायणं कल्प्यम् । एवमुत्तरत्राप्यूहनीयम् । इदं च दशकुम्भधान्यापहारविषयम् ; अधिके तु "धान्यंदशभ्यः कुम्भेभ्यो हरतोऽभ्यधिके वधः।" इति वधदर्शनात् । कुम्भश्च पञ्चसहस्रपलपरिमाणः । धान्यसाहचर्यादन्नधने चैतावद्धान्यपरिमिते वेदितव्ये । अन्नशब्देन तण्डुलादिकमभिधीयते, धनशब्देन च ताम्ररजतादिकम् । इदं च प्रायश्चित्तं कामकारविषयम्, अकामतस्तु त्रैमासिकं गोवधव्रतम् । तथा "मनुष्याणां च हरणे स्त्रीणां क्षेत्रगृहस्य च । कूपवापीजलानां च शुद्धिश्चान्द्रायणेन तु॥" इति सार्धशतद्वयपणलभ्यजलापहार इदं चान्द्रायणं प्राप्तमपि इतरगोवधव्रतनिवृत्त्यर्थं विधीयते—तावन्मूल्यजलापहारे "पानीयस्य तृणस्य च । तन्मूल्याद्विगुणो दण्डः" इति पञ्चशतदण्डविधानात्—तावत्परिमाणदण्डचान्द्रायणयोर्गोवधादौ सहचरितत्वात्, तथा कृच्छ्रातिकृच्छ्रैन्दवयोः "पणपञ्चशतं तथा" इति चान्द्रायणविषये पञ्चशतपणदण्डविधानाच्च । एतच्च क्षत्रियादिद्रव्यापहारे द्रष्टव्यं ; ब्राह्मणसंबन्धि-

१. ख. नानुस्मर्यते तस्योपनयन तस्य० । २. ध. १. १. ३२, ५; १. २. ५. ६. ३. ख. कृच्छ्राब्देन विशु०। ४.—११. १६२.। ५. ख. कल्प्यम् । अथाष्टाप० । ६.—१३. १५, ६, ७. । ७ ख. हरतोदम उत्तमः । पलसहस्रादधिके० । ८ मनु० ११. १६३. । ९. ख. पञ्चशतं । तथेति चान्द्रायणविषये पञ्चशतदण्ड० ।

द्रव्यापहारे तु—"निःक्षेपस्यापहरणे नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥"[1] इति द्रष्टव्यम् । तथा—"द्रव्याणामल्पसाराणां स्तेयंकृत्वा-न्यवेश्मतः[2] । चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥" इत्यनेनाल्पप्रयोजनत्रपुसी-सादिद्रव्यापहारविशेषणस्तेयसामान्योपपातकप्रायश्चित्तापवादः । इदं च चान्द्रायण-निमित्तभूतार्धतृतीयशतमूल्यस्य पञ्चदशांशार्धत्रपुसीसाद्यपहारे प्रायश्चित्तम् — चान्द्रायणपञ्चदशांशत्वात्तस्य । तथा द्रव्यविशेषेणाप्युपपातकसामान्यप्राप्तव्रतापवादः —"[3]भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ॥" इति । एकवारभोजनपर्याप्तभक्ष्यभोज्यापहार इदम् । द्वित्रिवारभो-जनपर्याप्तापहारे त्रिरात्रम्; यथाऽऽह पैठीनसिः—"भक्ष्यभोज्यान्नस्योदरपूरणमात्र-हरणे त्रिरात्रमेकरात्रं वा पञ्चगव्याहारता" इति । यानादीनामप्येतत्साहचर्यादेताव-न्मूल्यानामेवापहरणे एतावत्प्रायश्चित्तम्[4] । सर्वत्राह्रियमाणद्रव्यन्यूनाधिकभावेन[5] प्राय-श्चित्तस्यापि गुरुलघुभावः[6] कल्पनीयः । तथा "[7]तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च । चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥" इति । एषां च तृणादीनां भक्ष्यादित्रिगुणत्रिरात्रप्रायश्चित्तस्य दर्शनात् तत्त्रिगुणमूल्यार्घाणामेतत्प्राय-श्चित्तम् । तथा—"[8]मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च । अयस्कांस्यो-पलानां च द्वादशाहं कदन्नता ॥" इत्यत्रापि भक्ष्यादिद्वादशगुणप्रायश्चित्तदर्शनात्[9] तन्मूल्यद्वादशगुणमूल्यमणिमुक्ताद्यपहारे[10] प्रायश्चित्तमिदं[11] द्रष्टव्यम् । तथा—"कार्पा-सकीटजोर्णानां द्विखुरैकखुरस्य च । पक्षिगन्धौषधीनां च रज्ज्वाश्चैवं त्र्यहं पयः ॥" इत्यत्रापि[12] भक्ष्यादित्रिगुणप्रायश्चित्तदर्शनात्तत्त्रिगुणमूल्यानामपहार एवैतत्प्रायश्चित्तं ज्ञेयम् । ह्रियमाणद्रव्यन्यूनाधिकभावेन प्रायश्चित्ताल्पत्वमहत्त्वं कल्प्यमेव । इदं च स्तेयप्रायश्चित्तमपहृतद्रव्यदानोत्तरकालमेव द्रष्टव्यम् । यथाऽऽह विष्णुः—"दत्त्वैवापहृतं द्रव्यं स्वामिने व्रतमाचरेत्" इति[13] । ऋणापाकरणं च

---

१. मनु० ११. ५७. । २. मनु० ११ १६४. । ३. मनु० ११. १६५. । ४. ख. रणे एतत्प्राय० । ५. ख. सर्वत्रापिह्रिय० । ६. ख. स्यापिलघुगुरुभा० । ७ मनु० ११ १६६. । ८. मनु० ११. १६७. । ९. ख. भक्ष्यादिवत् द्वादश० । क. भक्ष्यादित्रिगुण० । १०. छ. तन्मूल्यमणिमु० । ११. ख. पहारे एतत्प्रायश्चित्तं द्रष्टव्य० । १२. मनु० ११. १६८. । १३.— ।

"पुत्रपौत्रैर्ऋणं देयम्" इति विहितं तस्यानपाकरणे तथा वैदिकस्य च "जायमानो वै ब्राह्मणः" इत्येतद्वाक्येनर्णसंस्तुतयज्ञाद्यकरणे च "उपपातकशुद्धिः स्यादेवम्" इत्यादिनोपपातकसामान्यविहितं व्रतचतुष्टयं शक्त्यपेक्षया योज्यम्। प्रायश्चित्तान्तरमप्यत्र मनुनोक्तम्—"इष्टिं वैश्वानरीं चैव निर्वपेदब्दपर्यये। क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवः॥" इति। अब्दपर्यये संवत्सरान्ते। तथाऽधिकृतस्यानाहिताग्नित्वेऽप्येतदेव व्रतचतुष्टयसंवत्सरादूर्ध्वमापदि शक्त्यपेक्षया योज्यम्, अनापदि तु मानवं त्रैमासिकम्। अर्वाक्पुनर्वत्सरात् कार्ष्णाजिनिर्विशेषमाह—"काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः। तदकुर्वंस्त्रिरात्रेण मासिमासि विशुद्ध्यति॥ अनाहिताग्नौ पित्रादौ यक्ष्यमाणः सुतो यदि। स हि व्रात्येन पशुना यजेत्तन्निष्क्रयाय तु॥" इति। एकाग्नेरपि विशेषस्तेनैवोक्तः—"कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम्। चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा॥" इति। तथा अपण्यायां विक्रये च स्मृत्यन्तरे प्रायश्चित्तविशेषः उक्तः; यथाऽऽह हारीतः—"गुडतिलपुष्पमूलफलपक्वान्नविक्रये सोमायनं सौम्यकृच्छ्रः; लाक्षालवणमधुमांसतैलक्षीरदधितक्रघृतगन्धचर्मवाससामन्यतमविक्रये चान्द्रायणम्; तथा ऊर्णाकेशकेशरीभूधेनुवेश्माश्मशस्त्रविक्रये च भक्ष्यमांसस्नाय्वस्थिशृङ्गनखशुक्तिविक्रये तप्तकृच्छ्रः, हिङ्गुगुग्गुलुहरितालमनःशिलाञ्जनगैरिकक्षारलवणमणिमुक्ताप्रवालवैणववेणुमृन्मयेषु च, आरामतडागोदपानपुष्करिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रं जपन् संवत्सरेण पूतो भवति, हीनमानोन्मानसंकरसंकीर्णविक्रये च" इति। एवमन्यैरपि शङ्खविष्ण्वाद्युक्तवचनैर्यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रानापदि मानवमुपपातकसाधारणतः प्राप्तं त्रैमासिकम्, आपदि तु याज्ञवल्कीयं व्रतचतुष्टयं शक्त्यपेक्षया योज्यम्॥ तथा परिवेत्तरि च वसिष्ठेन प्रायश्चित्तविशेष उक्तः—"परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तां चैवोपयच्छेत्" इति। परिविविदानः परिवेत्ता उच्यते, तत्स्वरूपं च प्राग्व्याख्यातम्। असौ कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै ज्येष्ठाय तां

१. व्य० ५०. । २ प्रा० २६५. । ३. ख. कृत्यानांप० । क. कृत्यानां प०। ४ —११. २७. । ५. क. धिकृतस्याहिताग्ने० । ६. ख. क्रयेसोमपानं सौम्यः कृच्छ्रः । ७. क. योज्यम् । 'इत्यपण्यविक्रय तथा परिवेत्तरि० । ८.—२०. ८. ।

स्वोढां दत्त्वा ब्रह्मचर्याहृतभैक्षवद्गुरुपरिभवपरिहारार्थं निवेद्य पुनरुद्वहेत् । कामित्यपेक्षायामुक्तं तामेवोपयच्छेतेति । तामेव स्वोढां ज्येष्ठाय निवेदितां तेन चानुज्ञातामुद्वहेत् । यत्तु हारीतेनोक्तं—"ज्येष्ठेऽनिविष्टे कनीयान्निविशमानः परिवेत्ता भवति परिवित्तिर्ज्येष्ठः परिवेदनी कन्या परिदायी दाता परियष्टा याजकस्ते सर्वे पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण पावयेयुः" इति, यदपि शङ्खेनोक्तं—"परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयाताम्" इति तदुभयमपि कामकारेण कन्यापित्राद्यननुज्ञातोद्वाहविषयं—प्रायश्चित्तस्य गुरुत्वात् । यदा पुनः कामतः कन्यां पित्रादिदत्तामेव परिणयति तदा मानवं त्रैमासिकं, पूर्वोक्तौ कृच्छ्रातिकृच्छ्रौ याज्ञवल्कीयं च व्रतचतुष्टयमज्ञानविषयम् । यमेनाप्यत्र विशेष उक्तः—"कृच्छ्रौ द्वयोः पारिवेद्ये कन्यायाः कृच्छ्र एवं च । अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् ॥" इति एतच्च पर्याहितग्न्यादीनामपि समानम्—एकयोगनिर्देशात्; यथाऽऽह गौतमः—"परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यम्" इति । अत एव वसिष्ठेनाग्रेदिधिषूपत्यादाविदमेव प्रायश्चित्तमुक्तम्—"अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेत ; दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत" इति ॥ अग्रेदिधिष्वादेर्लक्षणं स्मृत्यन्तरेऽभिहितं—"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । या साग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥" इति । तत्राग्रेदिधिषूपतिः प्राजापत्यं कृत्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत्। दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढाज्येष्ठां कनीयस्याः पूर्वविवोढ्रे दत्त्वाऽन्यामुद्वहेत् । इति परिवेदनम् । तथा भृतकाध्यापकभृतकाध्यापितयोश्च "पयसा ब्रह्मसुवर्चलां पिबेत्" इत्यधिकृत्य विष्णुनोक्तं—"भृतकाध्यापनं कृत्वा भृतकाध्यापितस्तथा । अनुयोगप्रदानेन त्रीन्पक्षान्नियतः पिबेत्॥" इति । उत्कर्षहेतोरधीयानस्य 'नाशितं त्वया' इत्येवं पर्यनुयोगोऽनुयागप्रदानम् । अत एव स्मृत्यन्तरे—"दत्तानुयोगानध्येतुः पतितान्मनुरब्रवीत्" इत्युक्तम् । अत्रापि पूर्वोक्तव्रतैः सहास्य शक्त्यपेक्षया विकल्पः । तथा पारदार्येऽप्युपपातकसामान्यप्राप्तमानवत्रैमासिकस्य याज्ञवल्की-

---

१. छ. कनीयावशमानः कामतः कन्यां । २. क. परिदापदाता० । ३. क. कृच्छ्र एववा । अति० । ४. क. पर्या हितादीना० । ५. क. पर्याधातग्रेदिधिषूपतिः कृच्छ्र०। ६.—१५. १८.। ७.—२०. ९, १०.।

यव्रतचतुष्टयस्यापि गुरुदारदावपवाद उक्तः। तथाऽन्यत्रापि गौतमादिभिः पारदार्यविशेषेणापवाद उक्तः ; यथाऽऽह गौतमः—"द्वेपारदार्येत्रीणि श्रोत्रियस्य" इति । तथा वार्षिकं प्राकृतं ब्रह्मचर्यं प्रस्तुत्य तेनैवेदमभिहितम्—"उपपातकेषु चैवम्" इति॥ तत्रेयं व्यवस्था । ऋतुकाले कामतो जातिमात्रब्रह्मणीगमने वार्षिकं प्राकृतं ब्रह्मचर्यं, तस्मिन्नेव काले कर्मसाधनत्वादिगुणशालिन्या ब्राह्मण्या गमने द्वे वर्षे प्राकृतं ब्रह्मचर्यं, तादृश्या एव श्रोत्रियभार्याया गमने त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यम् । यद्वा श्रोत्रियपत्न्यां गुणवत्यां ब्राह्मण्यां त्रैवार्षिकम् । तादृग्विधायामेव क्षत्रियायां द्वैवार्षिकम् । तादृश्यायां वैश्यायां वार्षिकमिति व्यवस्था । एतत्समानदृष्टया शूद्रायां षाण्मासिकं प्राकृतं ब्रह्मचर्यं कल्पनीयम् । अत एव शङ्खेन—"वैश्यायामवकीर्णः संवत्सरं ब्रह्मचर्यं त्रिषवणं चानुतिष्ठेत्, क्षत्रियायां द्वे वर्षे, त्रीणि ब्राह्मण्यां वैश्यावच्च शूद्रायां ब्राह्मणपरिणीतायाम्" इति वर्णक्रमेण ह्रासो दर्शितः । एवं क्षत्रियस्यापि क्षत्रियादिषु स्त्रीषु क्रमेण द्विवार्षिकवार्षिकषाण्मासिकानि पूर्वोक्त एव विषये योजनीयानि ॥ वैश्यस्य च वैश्याशूद्रयोर्वार्षिकषाण्मासिके । शूद्रस्य शूद्रयां परभार्यायां षाण्मासिकमेव । यत्त्वापस्तम्बीयं—"सवर्गायामनन्यपूर्वायां सकृत्संनिपाते पादः, पतत्येवमभ्यासे पादः, पादश्चतुर्थे सर्वम्" इति तद्गौतमीयत्रिवार्षिकेण समानविषयम् । अन्यपूर्विकायां चतुरभ्यासे-द्वादशवार्षिकप्रायश्चित्तविधानादेकस्यामेव गमनाभ्यासे नेदं प्रायश्चित्तं, किं तु प्रतिगमनं पादपादन्यूनं कल्प्यम् । एतत्सर्वं कामकारविषयम् । अकामतः पुनरेतदेवार्धक्लृप्त्या पूर्वोक्तविषये योजनीयम् । अनृतकालेतु जातिमात्रब्राह्मण्यां कामतोगमने मानवम् त्रैमासिकम् । जातिमात्रक्षत्रियादिस्त्रीषु पुनरस्मिन्नेव विषये तदीयान्येव द्वैमासिकचान्द्रायणमासिकानि योजनीनानि । क्षत्रियादीनां क्षत्रियादिस्त्रीषु द्वैमासिकादीन्येव । अकामतः पुनरेतासु क्षत्रियादित्रैवर्णिकानां याज्ञवल्कीयमृषभैकादशगोदानं मासंपञ्चगव्याशनं मासं प्राजापत्याचरणं च क्रमेण द्रष्टव्यम् । शूद्रागमने तु कामतो विहितं मासव्रतमेवार्धक्लृप्त्या योजनीयम् । अत एव संवर्तः—"शूद्रां तु ब्राह्मणो गत्वा मासं मासार्धमेव वा । गोमूत्रयावकाहार-

---

१. ख. द्वेपरदारेत्रीणि० । २ (?) । ३. छ. त्रिषवणं ४ — । ५. क. छ. त्रिषयम् । अनन्यपूर्विका० । ख. अनन्यपूर्विकायातुचतु० । ६. ख. क. गमन पादन्यू० । ७. ख. रेतासु, त्रैवार्षिकाणां याज्ञव० । क. रेतासु त्रवार्णिकानां० । ८. ख. गोदान मासै प्राजा० ।

स्तिष्ठेत्तत्पापमोक्षत" इति । अकामतोऽर्धमासिकमित्यभिप्रेतम् । "ब्राह्मणप्रेक्षापूर्वकं ब्राह्मणदारानभिगच्छेन्निवृत्तधर्मकर्मणः कृच्छ्रोऽनिवृत्तधर्मकर्मणोऽति कृच्छ्रः" इति —तद्ब्राह्मणभार्यायां शूद्रायां द्रष्टव्य,द्विजातिस्त्रीषु च विप्रोढासु द्वित्रिर्व्यभिचारितासु अबुद्धिपूर्वगमने वा । तथा च संवर्तः—"विप्रामस्वजनां गत्वा प्राजापत्यं समाचरेत् ॥" इति । कामतस्तु "राज्ञीं प्रव्रजितां धात्रीं साध्वीं वर्णोत्तमामपि । कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामभिगम्य च ॥" इति यमोक्तं कृच्छ्रद्वयं द्रष्टव्यम् । चतुराभ्यासे तु "व्यभिचारस्य स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नान उदकुम्भं दद्याद्ब्राह्मणाय[2], वैश्यायां च चतुर्थकालाहारो ब्राह्मणान्भोजयेत्[3] क्षत्रियायां त्रिरात्रोपोषितो यवाढकं दद्यात्, ब्राह्मण्यां त्रिरात्रोपोषितो घृतपात्रं दद्यात्" इति शङ्खोक्तं वेदितव्यम् । चतुराभ्यासविषयत्वं चास्य "चतुर्थे स्वैरिणी प्रोक्ता पञ्चमो बन्धकी मता ।" स्मृत्यन्तरादवगम्यते । अत्रैव विषये षट्त्रिंशन्मतेऽप्युक्तं— "ब्राह्मणीं बन्धकीं गत्वा किञ्चिद्दद्याद्द्विजातये । राजन्यां चेद्धनुर्दद्याद्वैश्यां गत्वा तु चैलकम् ॥ शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये । विसोपोषितो वा स्याद्दद्याद्विप्राय भोजनम्[4] ॥" इति ॥ इदं प्रायश्चित्तजातं गर्भानुत्पत्तिविषमम् । तदुत्पत्तौ तु यद्विशेषेण यत्प्रायश्चित्तमुक्तं तदेव तत्र द्विगुणं कुर्यात्—"गमने तु व्रतं यत्स्याद्गर्भे तद्द्विगुणं चरेत् ।" इत्युशनःस्मरणात् । शूद्रयां गर्भमादधतश्चतुर्विंशतिमते विशेष उक्तः—"वृषल्यामभिजातस्तु त्रीणि वर्षाणि चतुर्थकालसमये नक्तं भुञ्जीत" इति ॥ यत्तु मनुवचनम्—"शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते[5] ॥" इति तत्पापगौरवख्या-

१. ख. गच्छेत्तन्निवृ० । २. छ. कुम्भं दद्यात्, ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यादिति शङ्खेनोक्त० । ३. ख. भोजयेत्, यवसभार चगोभ्योदद्यात्, क्षत्रियायां त्रिरात्रोपोषितोघृतपात्रं दद्यात्, ब्राह्मण्यां षड्रात्रोपोषितोगादद्यात् गोष्ववकीर्णः प्राजापत्यं चरेत्, अनूढायामवकीर्णः पलालभारं सीसमाषकं चदद्यादिति शङ्खो० । ४. क. प्रायभोजनमिति । इदं च प्रायश्चित्तजात० : ख. भोजनमिति जनुलोमव्यवाये गर्भेद्विगुणं यदि सा अतिदूषिता न प्रतिलोमगा न भवति—तथैव। अन्यजातिगमने द्वैगुण्यं प्रतिलोमदूषितासु अन्त्यावसायिस्त्रीषु च चाण्डालीगर्भे यथा गुरुतल्पशतं तथा किञ्चिन्न्यूनं तारतम्यं कल्प्यम् । चाण्डालीगमने वार्षिकम् । गर्भे गुरुतल्पत्वं तथैव ज्ञेयम् । इदं च प्रायश्चित्तप्रात० । ५.—३. १७. ।

पनपरम्।प्रातिलोम्यव्यवाये तु सर्वत्र पुरुषस्य वध एव—"प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम्।" इति वचनात्। यत्तु वृद्धप्रचेतोवचनं—"शूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः। पूर्णमेतद्व्रतं देयं माता यस्माद्धि तस्य सा॥ पादहान्यान्यवर्णासु गच्छतः सार्ववर्णिकम्॥" इति द्वादशवार्षिकातिदेशकं तत्स्वभार्याभ्रान्त्या गच्छतो वेदितव्यं—मोहादिति विशेषणोपादानात्। यत्तु संवर्तवचनं—"कथञ्चिद्ब्राह्मणीं गच्छत्क्षत्रियो वैश्य एव वा। कृच्छ्रं सान्तपनं वा स्यात्प्रायश्चित्तं विशुद्धये॥ शूद्रस्तु ब्राह्मणीं गच्छेत्कथञ्चित्काममोहितः। गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति॥" इति तदत्यन्तव्यभिचरित ब्राह्मणीविषयम्। अन्त्यजागमनेऽपि प्रायश्चित्तं बृहत्संवर्तनोक्तं—"रजकव्याधशैलूषवेणुचर्मोपजीविनीः। एतास्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम्॥" इति। इदं ब्राह्मणस्य कामतः सकृद्गमनविषयं, क्षत्रियादीनां तु पादपादहीनं कल्प्यम्। अत्रैवापस्तम्बेनोक्तं—"म्लेच्छी नटी चर्मकारीरजकी बुरुडी तथा। एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम्॥" इति। अन्त्यजाश्च तेनैव दर्शिताः—"रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्तमेदभिल्लाश्च सप्तैते[1] अन्त्यजाः स्मृताः॥" इति। ये तु चाण्डालादयोऽन्त्यावसायिनस्तत्स्त्रीगमने गुरुतरं प्रायश्चित्तं गुरुतल्पप्रकरणे दर्शितम्। एतासां चान्त्यजस्त्रीणां मध्ये यदेकस्यां व्यवाये प्रायश्चित्तमभिहितं—तत्सर्वासु भवति—सर्वासां सदृशत्वात्। यथाहोशना—"बहूनामेकधर्माणामेकस्यापि यदुच्यते। सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः॥" इति। अकामतस्तु गमने "चण्डालमेदश्वपचकपालव्रतचारिणाम्। अकामतः स्त्रियो गत्वा पराकव्रतमाचरेत्॥" इत्यापस्तम्बोक्तं द्रष्टव्यम्। यच्च संवर्तवचनं—"रजकव्याधशैलूषवेणुचर्मोपजीविनाम्। स्त्रियो विप्रो यदा गच्छेत्कृच्छ्रं चान्द्रायणं चरेत्" इति—तदप्यकामविषयम्। यत्तु शातातपेनोक्तं "कैवर्तीं रजकीं चैव वेणुचर्मोपजीविनीम्। प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यति॥" इति—तद्रेतःसेकात्प्राङ्निवृत्तिविषयम्। यत्तूशनसोक्तं—"कापालिकान्नभोक्तॄणां तन्नारीगामिनां[2] तथा। ज्ञानात्कृच्छ्राब्दमुदिष्टमज्ञानादैन्दवद्वयम्[3]" इति—तदभ्यासविषयम। यदा तु चाण्डाल्यादिषु गच्छतो गर्भो भवति तदा "चाण्डाल्यां

१. क. सप्तैतेत्वन्त्य०। २. छ. नारीभिगिमां तथा०। ३. ख. दैन्दवंस्मृतमिति०।

गर्भमारोप्य गुरुतल्पव्रतं चरेत् इत्युशनसोक्तं द्वादशवार्षिकं द्रष्टव्यम् । यत्तु "अन्त्यजायां प्रसूतस्य निष्कृतिर्न विधीयते । निर्वासनं कृताङ्कस्य तस्य कार्यमसंशयम् ॥" इत्यापस्तम्बवचनं तत्कामकारविषयम् । स्त्रीणामपि सवर्णा नुलोमव्यवाये यत्पुरुषस्योक्तं त्रैवार्षिकादि तदेव भवति —"यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्।" इति मनुस्मरणात् ॥ प्रातिलोम्येन व्यवाये एव पर स्त्रीपुंसयोः प्रायश्चित्तभेदः; यथाऽऽह वसिष्ठः—"शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायत इति "वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वाराजन्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायत" तथा "राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वाराजन्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते" इति । एवं वैश्यो राजन्यां शूद्रश्च राजन्यावैश्ययोरिति पूता भवतीति वचनाद्राजवीथीपरिव्राजनमेव दण्डरूपं प्रायश्चित्तान्तरनिरपेक्षं शुद्धिसाधनमिति दर्शयति ॥

ब्राह्मण्याः प्रतिलोम्येन द्विजातिव्यवाये प्रायश्चित्तान्तरमप्युक्तम् संवर्तेन— "ब्राह्मण्यकामा गच्छेच्चेत्क्षत्रियं वैश्यमेव वा । गोमूत्रयावकैर्मासात्तदर्धाच्च विशुध्यति॥" इति कामतस्तु तद्द्विगुणं कर्तव्यम्—"कामात्तद्द्विगुणं भवेत्" इति वचनात् । षट्त्रिंशन्मतेऽपि "ब्राह्मणीक्षत्रियवैश्यसेवायामतिकृच्छ्रं, कृच्छ्रातिकृच्छ्रौ चरेत्, क्षत्रिययोषितां ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रार्धं प्राजापत्यमतिकृच्छ्रम् वैश्ययोषितां ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रपादं कृच्छ्रपादं कृच्छ्रार्धं प्राजापत्यम् । शूद्रायाः शूद्रसेवने प्राजापत्यं, ब्राह्मणराजन्यवैश्यसेवायां त्वहोरात्रं त्रिरात्रं कृच्छ्रार्धमिति । शूद्रसेवायां तु विशेषो वृहत्प्रचेतसोक्तः—"विप्रा शूद्रेण सपृक्ता न चेत्तस्मात्प्रसूयते। प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥" एतदनिच्छन्त्यां स्वपतिभ्रान्त्या

१. ख. वाये तदेव भवति० । २.—११. १०६. । ३. ख. एव परस्त्रीपु० । ४. क. छ. भवतीति विज्ञायते । तथा राजन्य० । ख. वैश्यश्चेद्ब्राह्मणीमित्यादिर्भवतीत्यन्तो ग्रन्थो धिको दृश्यतेत्र। ५—२१. २. । ६—२१. ३. । ख. भवतीति । राजन्य० । ७. ख. छ. तस्तुद्विगुणं । ८ ख. क्षत्रिय । योषिद्ब्राह्म० । ९. ख. वैश्ययोयिषद्ब्राह्मण० । १०. क. छ. ब्राह्मणं राजन्य० ।

वा वेदितव्यम् । " चान्द्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसेवने । कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसंगमे ॥ क्षत्रिया शूद्रसंपर्के कृच्छ्रं चान्द्रायणद्वयम् । चान्द्रायणं सकृच्छ्रं तु चरेद्वैश्येन संगता ॥ शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् । आनुलोम्ये प्रकुर्वीत कृच्छ्रं पादावरोपितम् ॥" इति । प्रजातायास्तु चतुर्विंशतिमते विशेष उक्तः—" विप्रगर्भे पराकः स्यात्क्षत्रियस्य तथैन्दवम् । ऐन्दवं च पराकश्च वैश्यस्याकामकारतः ॥ शूद्रगर्भे भवेत्त्यागश्चाण्डालो जायते यतः । गर्भस्रावे धातुदोषैश्चरेच्चान्द्रायणत्रयम् ॥" इति । " अकामकारतः " इति विशेषणोपादानाद् कामकारे पुनः पराकादिकं द्विगुणं कुर्यात् । यदा त्वनिःसृतगर्भैव दशमासं स्थित्वा प्रजायते तदा प्रायश्चित्ताभावः—" ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः । अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः॥" इति वसिष्ठस्मरणात्॥ यदा त्वाहितगर्भैव पश्चाच्छूद्रादिभिर्व्यभिचरति तदा गर्भपातशङ्कया प्रसवोत्तरकालमेव प्रायश्चित्तं कुर्यात्—"अन्तर्वत्नी तु या नारी समेताऽऽक्रम्य कामिना। प्रायश्चित्तं न कुर्यात्सा यावद्गर्भो न निःसृतः ॥ जाते गर्भे व्रतं पश्चात्कुर्यान्मासं तु यावकम् । न गर्भदोषस्तत्रास्ति संस्कार्यः स यथाविधि ॥" इति स्मृत्यन्तरदर्शनात् ॥ यदा त्वौद्धत्यात्प्रायश्चित्तं न कुर्वन्ति तदा नार्याः कर्णादिकर्तनमिति द्रष्टव्यम् ॥ अन्त्यजगमनेऽपि स्त्रीणां स्मृत्यन्तरे प्रायश्चित्तं दर्शितं— "रजकव्याधशैलूषवेणुचर्मोपजीविनः । ब्राह्मण्येतान्यदा गच्छेदकामादैन्दवद्वयम् ॥" इति । तथा चाण्डालाद्यन्त्यावसायिगमनेऽपि—" चाण्डालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा । ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम् ॥" इति । " अकामतः" इति वचनात्कामतो द्विगुणं कल्प्यम्, तथा "चाण्डालेन तु संपर्कं यदि गच्छेत्कथञ्चन । सशिखं वपनं कुर्याद्भुञ्जीयाद्यावकौदनम् ॥ त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् । आत्मना संमिते कूपे गोमयोदककर्दमे ॥ तत्र स्थित्वा निराहारा सा त्रिरात्रं ततः क्षिपेत् । शङ्खपुष्पीलतामूलं पत्रं वा कुसुमं फलम् ॥ क्षीरे सुवर्णसंमिश्रं क्वाथयित्वा ततः पिबेत् । एकभक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत् ॥ बहिस्तावच्च निवसेद्यावच्चरति तद्व्रतम् । प्रायश्चित्ते ततश्चीर्णे कुर्या-

१. क. वैश्यसङ्गमे । कृच्छ्र० । २ क. स्तत्रास्ति० । ३. ख. अन्त्यजादिगमने० । ४. क. ग. देन्दवद्वयमिति । ५. ख. चाण्डाल्याद्यन्तजागम० ।

द्ब्राह्मणभोजनम् ॥ गोद्वयं दक्षिणां दद्याच्छुद्ध्यै स्वायंभुवोऽब्रवीत् ॥" इति । एतदप्यकामविषयमेव—"यदि गच्छेत्कथञ्चन" इति वचनात् । ऋष्यशृङ्गेणाप्यन्त्यव्यवाये प्रायश्चित्तान्तरमुक्तं—"संपृक्ता स्यादथान्त्यैर्या सा कृच्छ्राब्दं समाचरेत् ।" इति। कामतः सकृद्गमने इदम् । यदा त्वाहितगर्भाया एव पश्चाच्चाण्डालादिव्यवायस्तदा तेनैव विशेष उक्तः—"अन्तर्वत्नी तु युवतिः संपृक्ता चान्त्ययोनिना । प्रायश्चित्तं न सा कुर्याद्यावद्गर्भो न निःसृतः ॥ न प्रचारं गृहे कुर्यान्न चाङ्गेषु प्रसाधनम् । न शयीत समं भर्त्रा न वा भुञ्जीत बान्धवैः ॥ प्रायश्चित्तं गते गर्भे विधिकृच्छ्राब्दिकं चरेत् । हिरण्यमथ वा धेनुं दद्याद्विप्राय दक्षिणाम् ॥" इति ॥ यदा तु कामतोऽत्यन्तसंपर्कं करोति तदा "अन्त्यजेन तु संपर्के भोजने मैथुने कृते । प्रविशेत्संप्रदीप्तेऽग्नौ मृत्युना सा विशुद्ध्यति ॥" इत्युशनसोक्तं द्रष्टव्यम् । यदा तूक्तं प्रायश्चित्तं न करोति तदा पुल्लिङ्गेनाङ्कनीया, बध्या वा भवेत्—"हीनवर्णोपभुक्ता या साऽङ्क्या बध्याऽथवा भवेत् ।" इति पराशरस्मरणात् । तथा परिवित्तिप्रायश्चित्तानामपि परिवेत्तृप्रायश्चित्तवद्व्यवस्था विज्ञेया ; इयांस्तु विशेषः—परिवेत्तुर्यस्मिन्विषये कृच्छ्रातिकृच्छ्रौ तत्र परिवित्तेः प्राजापत्यमिति—"परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा पुनर्निविशेत् तां चैवोपयच्छेत्" इति वसिष्ठस्मरणात् ॥ वार्धुष्यलवणक्रययोस्तु मनुयोगीश्वरोक्तसामान्योपपातकप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया योज्यानि ॥ २६५ ॥

लवणक्रयानन्तरं "स्त्रीशूद्रविट्क्षत्रवधः" इत्युपपातकमध्ये पठितं; तत्र प्रायश्चित्तान्तरमप्याह—

**ऋषभैकसहस्रा गा दद्यात्क्षत्रवधे पुमान् ।**
**ब्रह्महत्याव्रतं वाऽपि वत्सरत्रितयं चरेत् ॥ २६६॥**
**वैश्यहाऽब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।**
**षण्मासाच्छूद्रहाऽप्येतद्धेनूर्दद्याद्दशाथवा ॥ २६७ ॥**

एकमधिकं यस्मिन्सहस्रे तदेकसहस्रं 'तस्य पूरण' एकसहस्रः, ऋषभ

१, ख. प्यन्त्यजव्यवा । २. प्रा० २३६ ।

एकसहस्रो यासां गवां ताः ऋषभैकसहस्राः—क्षत्रवधे दद्यात् । अथवा बृहत्प्रायश्चित्तं ब्रह्महत्याव्रतं वर्षत्रयं कुर्यात् । वैश्यघाती पुनरेतद्ब्रह्महत्याव्रतमेकवर्षं चरेत्, गवामृषभैकशतं वा दद्यात् । शूद्रघाती तु ब्रह्महत्याव्रतं षण्मासं चरेत्, यद्वा दशधेनूरचिरप्रसूताः सवत्सा दद्यात् । इदमकामतो जातिमात्रक्षत्त्रा[1]दिवधविषयम्—"अकामतस्तु राजन्यं विनिपात्य"[2] इति प्रक्रम्यैतेषामेव प्रायश्चित्तानां मानवेऽभिधानात् दानतपसोश्च शक्त्यपेक्षया व्यवस्था । ईषद्वृत्तस्थयोस्तु विट्शूद्रयोः—"तुरीयो ब्रह्महत्यायाः क्षत्त्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश ॥"[3] इति मनूक्तं द्रष्टव्यम् । वृत्तस्थे क्षत्त्रिये तु सार्धचतुर्वार्षिकं कल्प्यम् । वृत्तशब्देन चाऽऽत्मगुणा[4]दिकमुच्यते—"गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः । प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥" इति मनुस्मरणात् । यत्तु बृहद्धारीतवचनं[5]—"ब्राह्मणः क्षत्त्रियं हत्वा षड्वर्षाणि व्रतं चरेत् । वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः ॥ शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गाः ॥" इति तत्कामकारविषयम् । श्रोत्रियक्षत्त्रादिवधे तु—"तुरीयोनं क्षत्त्रियस्य वधे ब्रह्महणि व्रतम् । अर्धं वैश्यवधे कुर्यात्तुरीयं वृषलस्य तु ॥" इति वृद्धहारीतोक्तं द्रष्टव्यम् । यत्तु वसिष्ठवचनं—"ब्राह्मणो राजन्यं हत्वाऽष्टौ वर्षाणि व्रतं चरेत्, षड् वैश्यं, त्रीणि शूद्रम् ॥"[6] इति तदपि हारीतीयेन समानविषयम् । क्षत्त्रिये त्वीषद्गुणन्यून इत्येतावान् विशेषः । यदा तु श्रोत्रियो वृत्तस्थश्च भवति तदा "पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वा"[7] इत्यापस्तम्बोक्तं द्वादशवार्षिकं द्रष्टव्यम् । प्रारब्धयागे त्वश्रोत्रिये पुनर्यागस्थे क्षत्त्रियादौ व्यापादिते "यागस्थक्षत्त्रविड्घाती चरेद्ब्रह्महणि व्रतम् ॥" इति द्रष्टव्यम् । श्रोत्रिये पुनर्यागस्थे क्षत्त्रियादौ "ब्राह्मणस्य राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यमृषभैकसहस्राश्च गा दद्यात्, वैश्यवधे त्रिवार्षिकमृषभैकशताश्च गा दद्यात्, शूद्रवधे सांवत्सरिकमृषभैकादशाश्च गा दद्यात्" इति गौतमोक्तो दानतपसोः समुच्चयो द्रष्टव्यः । एतच्चामतिपूर्वविषयं—"पूर्ववदमतिपूर्वे चतुर्षु वर्णेषु प्रमाप्य द्वादश षट् त्रीन् संवत्सरं च व्र-

१. ख क्षत्त्रियादि० । २—११. १२७. । ३.—११. १२६. । ४. ख. न चात्र गुणादि० । ५. ख. ग. यत्तु वृद्धहारी० । ६.—ध० १. २४. ६. । ७—२२. १४, ५, ६.

तान्यादिशेत् तेषामन्ते गोसहस्रं ततोऽर्धं तस्यार्धमर्धं च दद्यात् सर्वेषामानुपूर्व्येण" इति स्मरणात् । इदं च द्वादशवार्षिकं गौतमीयविषयमेव, किञ्चिन्न्यूनगुणे क्षत्रिये गुणाधिकयोर्वैश्यशूद्रयोश्च द्रष्टव्यम् । "स्त्रीशूद्रविट्क्षत्रवधः" इत्युपपातकमध्ये विशेषत एव पठितत्वेनोत्सर्गापवादन्यायगोचरत्वादुपपातकसामान्यप्राप्तान्यपि प्रायश्चित्तान्यत्र योजनीयानि । तत्र दुर्वृत्तक्षत्रियादौ कामतो व्यापादिते मानवं त्रैमासिकं[1] द्वैमासिकं चान्द्रायणं च वर्णक्रमेण योज्यम्; अकामतस्तु योगीश्वरोक्तं त्रिरात्रोपवाससहितमृषभैकादशगोदानं मासं पञ्चगव्याशनं मासिकं च पयोव्रतं यथाक्रमेण योज्यम् । एतच्च प्रागुक्तं व्रतजातं ब्राह्मणकर्तृके क्षत्रियादिवधे द्रष्टव्यम्—"अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । तथा ब्राह्मणराजन्यवधे षड्वार्षिकं तथा ॥ ब्राह्मणः क्षत्रियं हत्वा" इत्यादिषु[2] मनुगौतमहारीतवसिष्ठवाक्येषु[3] ब्राह्मणग्रहणात् । क्षत्रियादिकर्तृके तु क्षत्रियादिवधे पादन्यूनं द्रष्टव्यं—"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् । वैश्येऽर्धमेकपादस्तु शूद्रजातिषु शस्यते ॥" इति[4] वृद्धविष्णुस्मरणात् । यत्तु "पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥" इत्यङ्गिरोवचनं तत्प्रातिलोम्येन वाग्दण्डपारुष्यविषयमित्युक्तं गोवधप्रकरणे । मूर्धावसिक्तादीनां वधे एतत्प्रायश्चित्तजातं न भवति—तेषां क्षत्रियादित्वाभावात् । अतो दण्डानुसारेणैव तद्वधे पूर्वोक्तव्रतकदम्बस्य वृद्धिह्रासौ कल्पनीयौ । दण्डस्य च वृद्धिह्रासौ दर्शितौ—"दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरे।" इत्यत्र[5] ॥ २६६ ॥

स्त्रीवधे प्रायश्चित्तमाह—

**दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।**
**दृतिं धनुर्बस्तमविं क्रमाद्दद्याद्विशुद्धये ॥ २६८ ॥**

ब्राह्मणादिभार्या दुर्वृत्ताः स्वैरिणीः प्रमाप्य क्रमेण दृतिं जलाधारचर्मकोशं, धनुः कार्मुकं, बस्तं छागम्, अविं मेषं च, विशुद्धये दद्यात् । इदं च प्रातिलोम्ये-

---

१. ख. त्रैमासिकं त्रैवार्षिकं द्वैमासिकं च० । २.—११. १२७. । ३. ख. हारीत वाक्येषु० । ४. ख. इति वृद्धविष्णु० । ५. ख. इत्यत्र ॥ २६६ ॥ २६७ ॥ इति क्षत्रियादिवधप्रायश्चित्तप्रकरणम् ॥ स्त्रीवध० ।

नान्त्यजातिप्रसूतानां ब्राह्मण्यादीनामकामतो वधविषयं; कामतस्तु ब्रह्मगर्भ आह —"प्रतिलोमप्रसूतानां स्त्रीणां मासावधिः स्मृतः। अन्तरप्रभावानां च सूतादीनां चतुर्द्विषड्॥" इति। ब्राह्मण्यादिवधे षण्मासाः क्षत्रियायाश्चत्वारो वैश्याया द्वाविव्येवं यथार्हतयान्वयः। यदा तु वैश्यकर्मणा जीवन्तीं व्यापादयति तदा किञ्चिद्देयं —"वैशिकेन किञ्चित्" इति गौतमस्मरणात्। वैशिकेन वैश्यकर्मणा जीवन्त्यां व्यापादितायां किञ्चिदेव देयं तच्चं जलं—"कोशं कूपेऽथ विप्रे वा ब्राह्मण्याः प्रतिपादयेत्। वधे धनुः क्षत्रियाया बस्तो वैश्यावधे स्मृतः। शूद्रायामाविकं वैश्यां हत्वा दद्याज्जल नरः॥" इत्यङ्गिरःस्मरणात्। यदा पुनः क्षत्रियादिभिः प्रातिलोम्येन व्यभिचारिता ब्राह्मण्याद्या व्यापाद्यन्ते तदा गोवधप्रायश्चित्तानि यथा योज्यानि॥ २६८॥

ईषद्व्यभिचरितब्राह्मण्यादिवधे विशेषमाह—

## अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।

यदा त्वप्रकर्षेण दुष्टामीषद्व्यभिचारिणीं ब्राह्मण्यादिकां व्यापादयति तदा शूद्रहत्याव्रतं षाण्मासिकं कुर्यात्, यद्वा दशधेनूर्दद्यात्। इदं च षाण्मासिकमकामतो ब्राह्मण्या व्यापादने, क्षत्रियावधे च कामकृते द्रष्टव्यम्। कामतो वैश्यावधे दशधेनूर्दद्यात्। कामतः शूद्रावधे तु उपपातकसाधारणप्राप्तं मासं पञ्चगव्याशनम्। यदा कामतो ब्राह्मणीं व्यापादयति। तदा द्वादशमासकम्। क्षत्रियादीनां त्वकामतो व्यापादने त्रैमासिकं सार्धमास सार्धद्वाविंशत्यहैः; यथाऽऽह प्रचेताः—"अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान्वा इति, क्षत्रियां हत्वा षण्मासान्मासत्रयं वेति वैश्यां हत्वा मासत्रयं सार्धमासं वेति शूद्रां हत्वा सार्धमासं सार्धद्वाविंशत्यहानि वा" इति। यत्तु हारीतेन "षड्वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्यं त्रीणि वैश्ये, सार्धं शूद्रे" इति प्रतिपाद्योक्तं "क्षत्रियवत् ब्राह्मणीषु वैश्यवत् क्षत्रियायां शूद्रवद्वैश्यायां शूद्रां हत्वा नवमासान्" इत्युक्तं तदपि कर्मसाधनत्वादिगुणयोगिनीनां कामतो व्यापादने द्रष्टव्यम्, अकामतस्तदर्धं कल्प्यम्। आत्रेय्यां तु प्रागुक्तम्॥

१.—२२. २७. |२. ख. दिवधेतुकाम०। क. दिवधे इव काम०। ३. ख. त्यहानि। यथा छ. त्यहाः। यथा०। ४. ख. मतस्तु सर्वत्रार्धं कल्प०। ५. ख. इति स्त्रीवधप्रायश्चित्तप्रकरणम्॥ हिं सा०।

## ५. प्रकीर्णकप्रकरणम् ।

हिंसाप्रायश्चित्तप्रसंगात्प्रकीर्णकपदाभिधेयानुपपातकप्राणिवधेऽपि प्रायश्चित्तमाह—

**अस्थिमतां सहस्रं तु तथाऽनास्थिमतामनः ॥२६९ ॥**

अस्थिमतां प्राणिनां कृकलासप्रभृतीनामनुक्तनिष्कृतीनां सहस्रं हत्वा, अनस्थिमतां च यूकामत्कुणदंशमशकप्रभृतीनाम् अनः शकटं तत्परिपूर्णमात्रं हत्वा शूद्रहत्याव्रतं षाण्मासिकं प्राकृतं ब्रह्मचर्यं चरेत्, दशधेनूर्वा दद्यात् । सहस्रमिति परिमाणनियमात्ततोऽधिकवधे त्वतिरिक्तं कल्प्यम् । अर्वाक्पुनः प्रत्येकं वधे तु "क्विञ्चित्सास्थिवधे देयं प्राणायामस्त्वनास्थिके" इति वक्ष्यति, "तथाऽनस्थिमतामनः" इति,–एतच्च यूकादि क्षोदिष्ठजन्तुविषयम् । स्थविष्ठानस्थिघुणादिजन्तुवधे तु "कृमिकीटवयो हत्या" इत्यादिना "मलिनीकरणीयेषु ततः स्याद्यावकस्त्र्यहम् ।" इति मनूक्तं द्रष्टव्यम् ॥ २६९ ॥

किं च—

**मार्जारगोधानकुलमण्डूकांश्च पतत्त्रिणः ।**
**हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ २७० ॥**

मार्जारादयः प्रसिद्धाः, पतत्त्रिणश्चाषकाकोलूकाः, तान् हत्वा त्रिरात्रं पयः पिबेत् पादकृच्छ्रं वा चरेत् । वाशब्दाद्योजनगमनादिकं वा कुर्यात्; यथाऽऽह मनुः—"पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत् । उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत् ॥" इति । इदं च प्रत्येकवधविषयम् । समुदितवधे तु—"मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च । श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥" इति मनूक्तं षाण्मासिकं द्रष्टव्यम् । यत्पुनर्वसिष्ठेनोक्तं —"श्वमार्जारनकुलमण्डूकसर्पदहरमूषिकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत्, किञ्चिद्दद्यात्" इति—तत्कामतोऽभ्यासविषयं वेदितव्यम् । दहरेऽल्पमूषकः, छुच्छुन्दरिर्वा ॥ २७० ॥

किं च—

**गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।**

---

१.—प्रा० २७५. । २. ख. एतच्चक्षोदिष्ठ० । छ. एतच्चकोटिजन्तु० । ३.—११. ७०. ४. ख. अपः स्पृशेत्स० । ५.—११. १३२. । ६.—११. १३१. । ७.—२१. २४.

**खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायनः ॥ २७१ ॥**

दन्तिनि व्यापादिते पञ्च नीलवृषा देयाः। शुके पक्षिणि द्विवर्षो वत्सः, रासभच्छागैडकेषु व्यापादितेषु प्रत्येकमेको वृषः, क्रौञ्चे पक्षिणि त्रिहायनो वत्सः,–देय इति सर्वत्रानुषङ्गः। मनुनाऽप्यत्र विशेष उक्तः—"वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम्। अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥", इति ॥ २७१ ॥

किं च—

**हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः।**
**भासं च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम् ॥ २७२ ॥**

क्रव्यमपक्वं मांसमत्तीति क्रव्यात् व्याघ्रसृगालादिर्मृगविशेषः— वानरसाहचर्यात्। तथा हंसश्येनसमभिव्याहारात्कङ्कगृध्रादिः पक्षिविशेषश्च गृह्यते। जलशब्देन जलचरा बकादयो गृह्यन्ते, स्थलशब्देन स्थलचरा बलाकादयः। शिखण्डी मयूरः; भासः पक्षिविशेषः, शेषाः प्रसिद्धाः। एषां प्रत्येकं वधे गामेकां दद्यात्। अक्रव्यादस्तु हरिणादिमृगान्, खञ्जरीटादिपक्षिविशेषान्वा हत्वा वत्सतरीं दद्यात्। तथा च मनुः—"हत्वा हंसं बलाकां च बकं बर्हिणमेव च। वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ क्रव्यादस्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम्। अक्रव्यादो वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥" इति ॥ २७२ ॥

किं च--

**उरगेष्वयसो दण्डः पण्डके त्रपु सीसकम्।**
**कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽशुकम् ॥ २७३ ॥**

सरीसृपेषु व्यापादितेषु अयोमयो दण्डस्तीक्ष्णप्रान्तो देयः। पण्डके नपुंसके व्यापादिते त्रपु सीसकं च माषपरिमितं दद्यात्, पलालभारं वा—"पण्डके

१. क. नीलवर्णवृषा०। २—११. १३६.। ३ ख. चराबकाद०। ४. ख खञ्चरादिप०। ५.—११. १३७, १३७।

हत्वा पलालभारं त्रपु सीसकं वा दद्यात्'' इति स्मृत्यन्तरदर्शनात् । यद्यपि ''पण्डको लिङ्गहीनः स्यात्संस्कारार्हश्च नैव सः'' इति देवलवचनेन सामान्येनैव स्त्रीपुँल्लिङ्गरहितो निर्दिष्टः, तथाऽपि न गोब्राह्मणरूपस्येह विवक्षा—गोब्राह्मणवधनिषेधस्य जात्यवच्छेदेन प्रवृत्तेः । लिङ्गविरहिणि च पण्डे जातिसमवायाविशेषात्तन्निमित्तमेव लघुप्रायश्चित्तमुक्तम् । तस्मान्मृगपक्षिण एव विवक्षिताः, मृगपक्षिसमभिव्याहाराच्च । कोले सूकरे व्यापादिते घृतकुम्भो देयः । उष्ट्रे गुञ्जा देया । वाजिनि विनिपातितेऽशुकं वस्त्रं देयम् । तथा च मनुः—''अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः । पलालभारकं षण्ढे सैसकं चैव माषकम् ॥'' इति ॥ २७३ ॥

किं चाऽऽह—

**तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ।**
**दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये ॥ २७४ ॥**

तित्तिरौ पतत्रिणि व्यापादिते तिलद्रोणं दद्यात् । द्रोणशब्दश्च परिमाणविशेषवचनः—''अष्टमुष्टि भवेत्किञ्चित्किञ्चिदष्टौ तु पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥'' इति स्मरणात् । पूर्वोक्तानां गजादीनां व्यापादने निर्धनत्वेन नीलवृषपञ्चकादिदानं कर्तुमशक्नुवन् प्रत्येकं कृच्छ्रं चरेद्विशुद्ध्यर्थम् । कृच्छ्रशब्दश्चात्र लक्षणया क्लेशसाध्ये तपोमात्रे द्रष्टव्यः । तपांसि गौतमेन दर्शितानि—''संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालः, एतान्येवानादेशे विकल्पेन क्रियेन्, एनासि गुरुणि गुरूणि लघूनि लघूनि'' इति । यदि कृच्छ्रशब्देन मुख्योऽर्थो गृह्यते तर्हि गजे शुके वा विशेषेण प्राजापत्य एव स्यात् । न च तद्युक्तम् । तपोमात्रपरत्वे तु दानगुरुलघुभावाकलनया तपसोऽपि गुरुलघुभावो युज्यते ; ततश्च गजे द्विमासिकं यावकाशनं शुके तूपवास इति । एवमन्यत्रापि दानानुसारेण प्रायश्चित्तं कल्प्यम् ॥ २७४ ॥

१.—११. १३३. । २.—१९. १७, ८, ९.। ३. ख. क. गुरुलघुभावाकल्पन०।

किं चाऽऽह—

## फलपुष्पान्नरसजसत्त्वघाते घृताशनम् ।

उदुम्बरादौ[1] फले मधूकादौ च कुसुमे चिरस्थितभक्तासक्ताद्यन्ने[2] च रसे च गुडादौ यानि सत्त्वानि प्राणिनो जायन्ते तेषां घाते घृतप्राशनं शुद्धिसाधनम् । इदं च घृतप्राशनं भोजनकार्ये एव विधीयते—प्रायश्चित्तानां तपोरूपत्वात् । दर्शितं च तपोरूपत्वमाङ्गिरसे प्रायश्चित्तपदनिर्वचनव्याजेन—"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते ॥" इति ॥

प्रतिप्राणिप्रायश्चित्तस्यानन्त्यात् पृष्टाकोटेनापि वक्तुमशक्यत्वात्सामान्येन प्रायश्चित्तमाह—

## किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके ॥ २७५ ॥

अस्थिमतां कृकलासादिप्राणिनां न्यूनसहस्रसंख्यानां प्रत्येकं वधे किञ्चित्स्वल्पं धान्यहिण्यादि देयम्, अनस्थिके त्वेकः प्राणायामः । तत्र किञ्चिदिति यदा हिरण्यं दीयते तदा पणमात्रम्—"अस्थिमतां वधे पणो देयः" इति सुमन्तुस्मरणात् । यदा तु धान्यं देयं तदाऽष्टमुष्टि देयं—"अष्टमुष्टि भवेत्किञ्चित्" इति स्मरणात् । एतच्चानुक्तनिष्कृतिप्राणिवधाविषयम् । यत्र तु प्रायश्चित्तविशेषः श्रूयते तत्र स एव भवति; यथाऽऽह पराशरः—"हंससारसचक्राह्वक्रौञ्चकुक्कुटघातकः । मयूरमेषौ हत्वा च एकभक्तेन शुद्ध्यति ॥ मद्गुं च टिट्टिभं चैव शुकं पारावतं तथा । आडिकां च बकं हत्वा शुद्ध्येद्वै नक्तभोजनात् ॥ चाषकाककपोतानां सारीतित्तिरघातकः[3] । अन्तर्जल उभे सन्ध्ये प्राणायामेत शुद्ध्यति ॥ गृध्रश्येनविहङ्गानामुलूकस्य च घातकः[4] । अपक्वाशी दिनं तिष्ठेत्त्रीन् कालौ मारुताशनः ॥ हत्वा मूषिकमार्जारसर्पाजगरडुण्डुभान्[5] । प्रत्येकं भोजयेद्विप्रान् लोहदण्डश्च दक्षिणा ॥ सेधाकच्छपगोधानां शशशल्यकघातकः । वृन्ताकफलगुञ्जाशी अहोरात्रेण शुध्यति ॥ मृगरोहिवराहाणामविकाबस्तघातने । वृकजम्बूकऋक्षाणां तरक्षूणां च घातकः ॥ तिलप्रस्थं त्वसौ दद्याद्वायुभक्षो दिनत्रयम् । गजमेषतुर-

१. ख. औदुम्बरा० । २. ख. ग. भक्तसत्क्वाद्यन्ने० । ३. ग. तित्तिरिघात० । ४. छ. उलूकस्य च घातकः । वृन्ताकफलगुण्डाशी० । ५. क. ण्डुभान् । कृसरंभोजयेद्वि० ।

ङ्गोष्ट्रगवयानां निपातने ॥ प्रायश्चित्तमहोरात्रं त्रिसन्ध्यं चावगाहनम् । खरवानरसिंहानां चित्रकव्याघ्रघातकः ॥ शुद्धिमेति त्रिरात्रेण ब्राह्मणानां च भोजनैः ॥" इति ॥ एवमन्येषामपि स्मृतिवचसां देशकालाद्यपेक्षया विषयव्यवस्था कल्पनीया[1] ॥ २७५ ॥

---

"इन्धनार्थं द्रुमच्छेदः" इत्युपपातकोद्देशे पठितहिंसाप्रसङ्गलोमेन तद्व्युत्क्रमपठितमप्यपकृष्य तत्र प्रायश्चित्तमाह—

**वृक्षगुल्मलतीवारुच्छेदने जप्यमृक्छतम् ।**

**स्यादौषधिवृथाच्छेदे क्षीराशी गोऽनुगो दिनम् ॥ २७६ ॥**

फलदानाम् आम्रपनसादीनां च वृक्षाणां, गुल्मादीनां च यज्ञाद्यदृष्टार्थं विना छेदने ऋचां गायत्र्यादीनां शतं जप्तव्यम् । ओषधीनां तु ग्राम्यारण्यानां वृथैव छेदने दिनं कृत्स्नमहर्गवां परिचर्यामनुगम्यान्ते क्षीरं पिबेत् आहारान्तरपरित्यागेन । पञ्चयज्ञार्थं तु न दोषः । एतच्च फलादिद्वारेणोपयोगिषु द्रष्टव्यं— "फलदानां तु वृक्षाणां छेदने जप्यमृक्छतम् । गुल्मवल्लीलतानां तु पुष्पितानां च वीरुधाम् ॥" इति मनुस्मरणात् । दृष्टार्थत्वेऽपि कर्षणाङ्गभूतहलाद्यर्थत्वे न दोषः । फलपुष्पोपगान् पादपान्न हिंस्यात्कर्षणकरणार्थं चोपहन्यात्" इति वसिष्ठस्मरणात् । यत्र तु स्थानविशेषाद्दण्डाधिक्यं तत्र प्रायश्चित्ताधिक्यमपि कल्पनीयम् । तदुक्तं—"चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये । जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥" इति । अयं च ऋक्छतजपो द्विजातिविषयो न पुनः शूद्रादिविषयः— तेषां जपेऽनधिकारात् । अतस्तेषां दण्डानुसारेण द्विरात्रादिकं कल्पनीयम्, उपपातकमध्ये विशेषतः पाठस्यानर्थक्यपरिहारार्थमुपपातकसाधारणप्रायश्चित्तमप्यत्र भवति । एतच्च गुरुत्वादभ्यासविषयं कल्प्यम् ॥ २७६ ॥

पुंश्चलीवानरादिवधप्रायश्चित्तप्रसङ्गात्तद्दंशनिमित्तं प्रायश्चित्तमाह—

**पुंश्चलीवानरखैरर्दष्टश्चोष्ट्रादिवायसैः ।**

१. ख. कल्पनीया । इति हिंसाप्रायश्चित्तप्रकरणम् । इन्धनार्थं० । २. प्रा० २४०. । ३. क. छेदनेजाप्यम् कृछ० । ४. क. नीया ॥ प्रत्येकमिन्धनार्थ० । ५.—११. १४२. । ६. ख. प्योपभोगान्याद० । ६.—

प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति ॥ २७७ ॥

पुंश्चल्यादयः प्रसिद्धाः । एतैर्दष्टः पुमान्[1] जले प्राणायामं कृत्वा घृतं प्राश्य विशुद्ध्यति । आदिग्रहणात्सृगालादीनां ग्रहणम्; यथाऽऽह मनुः—"श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च । नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति॥"[2] अयं च घृतप्राशो भोजनप्रत्याम्नायो द्रष्टव्यः—प्रायश्चित्तानां तपोरूपत्वेन शरीरसंतापनार्थत्वात् । एतदशक्तविषयम् । "श्वसृगालमृगमहिषाजाविकखरकरभनकुलमार्जारमूषिकाप्लवबककाकपुरुषदष्टानामापोहिष्ठेत्यादिभिः स्नानं प्राणायामत्रयं च" इति यत्सुमन्तुवचनं तन्नाभेरधःप्रदेश ईषद्दष्टविषयम् । यत्त्वङ्गिरोवचनं—"ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पिबेत्पयः । गृहस्थश्चेद्द्विरात्रं तु एकाहं योऽग्निहोत्रवान् ॥ नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् । स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणम् ॥" इति तत्सम्यग्दष्टविषयम् । क्षत्रियवैश्ययोस्तु पादपादन्यूनं कल्पनीयं; शूद्रस्य तु "शूद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः । गां वा दद्याद्वृषं चैकं ब्राह्मणाय विशुद्धये ॥" इति बृहदङ्गिरसोक्तं द्रष्टव्यम् । यत्तु वसिष्ठवचनं— ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् । प्राणायमशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥" इति तदुत्तमाङ्गदंशविषयम् । स्त्रीणां तु "ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेन वा । उदितं ग्रहणक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥" इति पराशरोक्तं द्रष्टव्यम् । कृच्छ्रादिव्रतस्थायाः पुनस्तेनैव विशेषो दर्शितः—"त्रिरात्रमेवोपवसेच्छुना दष्टा तु सव्रता । सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत् ॥" इति । रजस्वलायामपि विशेषः पुलस्त्येन दर्शितः— "रजस्वला यदा दष्टा शुना जम्बूकरासभैः । पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥ ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा । चतुर्गुणं स्मृतं मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेत्॥" इति । अन्यत्रारजस्वलावस्थायाम् । यस्तु श्वादिभिर्घ्राणादिनोपहन्यते तस्य शातातपेन विशेष उक्तः— "शुना घ्रातावलीढस्य नखैर्विलिखितस्य च । अद्भिः प्रक्षालनं शौचमग्निना चोपकूलनम्[3] ॥" इति । उपकूलनं तापनम् । यदा तु श्वादिदंशशस्त्रघातादिजनितव्रणे कृमय उत्पद्यन्ते तदा मनुना विशेष उक्तः—"ब्राह्मणस्य व्रणद्वारे पूयशोणित-

१. ख. पुमानन्तर्जले० । २.—११. १९९. । ३. क. पचूलनं । ४.—२३. ३१. ।

संभवे । कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥ गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानयाचरेत् । त्रिरात्रं पञ्चगव्याशी त्वधो नाभ्या विशुद्ध्यति । नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः । षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे ॥" इति तत्र श्वादिदंशव्रणे तद्दंशप्रायश्चित्तानन्तरमिदं कर्तव्यं । शस्त्रादिजनितव्रणे त्वेतदेव, त्र्यहं पंचगव्याशनादिकमिति विशेषः । क्षत्रियादिषु तु प्रतिवर्णं पादपादह्रासः कल्पनीयः ॥ २७७ ॥

शारीरत्वग्धातुविच्छेदकदंशप्रायश्चित्तप्रसङ्गाच्छारीरचरमधातुविच्छेदकस्कन्दने प्रायश्चित्तमाह—

**यन्मेद्यरेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।**
**स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत् ॥ २७८ ॥**

यदि कथञ्चित्स्त्रीसंभोगमन्तरेणापि हठाच्चरमधातुर्विसृष्टस्तदा तत्स्कन्नं रेतो "यन्मेद्यरेतः पृथिवीं" "पुनर्मामैत्विन्द्रियम्" इत्याभ्यां मन्त्राभ्यामभिमन्त्रयेत् । तेन चाभिमन्त्रितेन रेतसा स्तनयोर्भ्रुवोश्च मध्यमुपकनिष्ठिकया स्पृशेत् । अन्ये तु स्कन्नस्य रेतसोऽशुचित्वेन स्पर्शकर्मण्ययोग्यत्वात्तेनेत्यनामिकासाहचर्यात्स्वबुद्धिस्थाङ्गुष्ठपरत्वेन व्याचक्षते 'तेनाङ्गुष्ठेनानामिकया च' इति अङ्गुष्ठपदग्रहणे वृत्तभङ्गप्रसङ्गात्तेनेति निर्दिष्टमिति । तदसत्—अङ्गुष्ठस्याबुद्धिस्थत्वात् । न च शब्दसंनिहितपरित्यागेनार्थाद्बुद्धिस्थस्यान्वयो युक्तः । तदुक्तं—"गम्यमानस्य चार्थस्य नैवदृष्टं विशेषणम् । शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीति वत् ॥" इति । न च रेतसोऽशुचित्वेन स्पर्शायोग्यत्वं; "विधानादेव प्रायश्चित्तार्थरूपस्पर्शे योग्यत्वमवगम्यते प्रायश्चित्तरूपपान इव सुरायाः । इदं च प्रायश्चित्तं गृहस्थस्यैवाकामतः स्कन्नविषयं — ब्रह्मचारिणः स्वप्ने जागरणावस्थायां च गुरुप्रायश्चित्तस्य[2] वक्ष्यमाणत्वात् । यत्तु यमवचनं—"गृहस्थः कामतः कुर्याद्रेतसः स्कन्दनं भुवि । सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह ॥" इति तत्कामकारविषयम् ॥ २७८ ॥

किं च—

**मयितेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ।**

१. ख. तु त्र्यह पञ्चगव्याशनमिति स्मृतम्० । २. ख. तत्स्पदर्शनात् । यत्तुमनुवच० ।

## सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपि च ॥ २७९ ॥

स्वप्रतिबिम्बमम्बुगतं चेत् दृष्टं तदा "मयितेज इन्द्रियम्" इतीमं मन्त्रं जपेत् । अशुचिद्रव्यदर्शने पुनः सावित्रीं सवितृदेवत्यां "तत्सवितुः" इत्यादिकामृचं जपेत् । तथा वाक्पाणिपादादिचापल्यकरणे तामेव जपेत्, अनृतवचने च । एतत्कामकारे द्रष्टव्यम् । अकामकृते तु "सुप्त्वा भुक्त्वा च क्षुत्वा च निष्ठीव्योक्त्वानृतानि च।पीत्वाऽऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्॥" इति मनूक्तमाचमनं द्रष्टव्यम् । यत्तु संवर्तवचनं—"क्षुते निष्ठीवने चैव दन्तश्लिष्टे तथाऽनृते । पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥" इति तदल्पप्रयोजने जलाभावे वा द्रष्टव्यम् । स्त्रीशूद्रविट्क्षत्रवधानन्तरं "निन्दितार्थोपजीवनं" पठितं; तत्र च मनुयोगीश्वरप्रोक्तान्युपपातकप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया वेदितव्यानि । नास्तिक्येऽपि तानि प्रायश्चित्तानि तथैव प्रयोज्यानि । नास्तिक्यशब्देन च वेदादिनिन्दनं[1], तेन जीवनमुच्यते तत्रोभयत्रापि वसिष्ठेन प्रायश्चित्तान्तरमप्युक्तं—"नास्तिकः कृच्छ्रं द्वादरात्रं चरित्वा विरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रम्" इति । एतच्च सकृत्करणविषयम् । उपपातकप्रायश्चित्तान्यभ्यासविषयाणि । यच्च शङ्खेनोक्तं—"नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी इत्येते पञ्च संवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः" इति यच्च हारीतेन—"नास्तिको नास्तिकवृत्तिः" इति प्रक्रम्य "पञ्चतापोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुरिति[2] गीष्मवर्षाहेमन्तेषु" इति—तदुभयमप्यत्यन्ताभिनिवेशेन बहुकालाभ्यासविषयम् ॥ २७९ ॥

नास्तिक्यानन्तरं "व्रतलोपश्च" इत्युक्तं; तत्रावकीर्णस्याप्रसिद्धत्वात्तल्लक्षणकथनपूर्वकं प्रायश्चित्तमाह—

## अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
## गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति ॥ २८० ॥

ब्रह्मचार्युपकुर्वाणको नैष्ठिकश्च, असौ योषितं गत्वाऽवकीर्णी भवति । चरमधातोर्विसर्गोऽवकीर्णं,तद्यस्यास्तीति सोऽवकीर्णी; स निर्ऋतिदैवत्येन गर्दभपशुना

१. ख. वेदनिन्दनं० । २. ख. तिष्ठेयुरिति ग्रीष्म० । ३.—२१. २९. ।

यागं कृत्वा विशुद्ध्यति। गर्दभस्य पशुत्वे सिद्धेऽपि पुनः पशुग्रहणम् "अथ पशुकल्पः" इत्याश्वलायनादिगृह्योक्तपशुधर्मप्राप्त्यर्थम्। एतच्चारण्ये चतुष्पथे लौकिकाग्नौ कार्यं—"ब्रह्मचारी चेत्स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत" इति वसिष्ठस्मरणात्। तथा रात्रावेकाक्षिविकलेन यष्टव्यम्। तथा च मनुः—"अवकीर्णी तु काणेन रासभेन चतुष्पथे। पाकयज्ञविधानेन यजेत निर्ऋतिं निशि॥" इति। पशोरभावे चरुणा यष्टव्यं—"निर्ऋतिं वा चरुं निर्वपेत्। तस्य जुहुयात्—कामाय स्वाहा, कामकामाय स्वाहा, निर्ऋत्यै स्वाहा, रक्षोदेवताभ्यः स्वाहा॥" इति वसिष्ठस्मरणात्। एतच्चाशक्तविषयं शक्तस्य पुनः "गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत्। तस्याजिनमूर्ध्वबालं परिधाय लोहितपात्रः सप्तगृहान् भैक्षं चरेत्। कर्माचक्षाणः संवत्सरेण शुद्ध्यति" इति गौतमोक्तो वार्षिकतपःसमुच्चितः पशुयागश्चरुर्वा द्रष्टव्यः। तथा त्रिषवणस्नानमेककालभोजनं च द्रष्टव्यम्—"एतस्मिन्नेनसि प्राप्ते वासित्वा गर्दभाजिनम्। सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन्॥ तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम्। उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति॥" इति मनुस्मरणात्॥ इदं च वार्षिकमश्रोत्रियब्राह्मणपत्न्यां, वैश्यायां श्रोत्रियपत्न्यां च द्रष्टव्यम्। यदा तु गुणवत्योर्ब्राह्मणीक्षत्रिययोः श्रोत्रियभार्ययोरवकिरति तदा त्रिवार्षिकं द्विवार्षिकं च क्रमेण योज्यम्; यथाऽऽहतुः शङ्खलिखितौ—"गुप्तायां वैश्यायमवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत्, क्षत्रियायां तु द्वे वर्षे, ब्राह्मण्यां त्रीणि वर्षाणि" इति। यत्त्वङ्गिरोवचनम्—"अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत्। चीरवासास्तु षण्मासांस्तथा मुच्येत किल्बिषात्॥" इति तदकामतो मानवाब्दिकविषयमीषद्व्यभिचारिणीविषयं वा॥ अत्यन्तव्यभिचारितासु पुनः "स्वैरिण्यां वृषल्यामवकीर्णः सचैलं स्नात उदकुम्भं दद्याद्ब्राह्मणाय वैश्यायां चतुर्थकालाहारो ब्राह्मणान्भोजयेत् यवसभारं च गोभ्यो, दद्यात् क्षत्रियायां त्रिरात्रमुपोषितो गां च दद्यात्, गोष्ववकीर्णः प्राजापत्यं चरेत्, षण्ढायामवकीर्णः पलालभारं सीसमाषकं च दद्यात्" इति शङ्खलिखितोदितं वेदितव्यम्। एतच्चावकीर्णिप्रायश्चित्तं त्रैवर्णिकस्यापि

---

१.—१. ११. १. । २.—२३, १. । ३.—२३, २, ३. । ४. २३. १७, ८, ९. ।
५.—११. १२२, ३. । ६. ख. क्रमेण द्रष्टव्यम्।

ब्रह्मचारिणः समानम्—"अवकीर्णी द्विजो राजा वैश्यश्चापि क्षरणे तु । इष्टाभिक्षाशिनो नित्यं शुद्ध्यन्त्यब्दात्समाहिताः" इति शाण्डिल्यस्मरणात् । यदा स्त्रीसंभोगमन्तरेण कामतश्चरमधातुं विसृजति दिवा च स्वप्ने वा विसृजति तदा नैर्ऋतयागमात्र द्रष्टव्यम्—"एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने च" इति वसिष्ठेन यागमात्रस्यातिदिष्टत्वात् । व्रतान्तरेषु कृच्छ्रचान्द्रायणादिष्वातिदिष्टब्रह्मचर्येषु स्कन्दने सत्येतदेव यागमात्रं— "व्रतान्तरेषु चैवम्" इति तेनैवातिदिष्टत्वात् । स्वप्नस्कन्दने तु मनूक्तं द्रष्टव्यम्— "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥" इति ॥ वानप्रस्थादीनां चेदमेव ब्रह्मचर्यखण्डने अवकीर्णिव्रतं कृच्छ्रत्रयाधिकं भवति—"वानप्रस्थो यतिश्चैव स्कन्दने सति कामतः । पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् ॥" इति शाण्डिल्यस्मरणात् । यदा गार्हस्थ्यपरिग्रहेण सन्यासात्प्रच्युतोभवति तदा संवर्तोक्तं द्रष्टव्यं---"सन्न्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं व्रजेद्यदि । स कुर्यात्कृच्छ्रमश्रान्तः षण्मासात्प्रत्यनन्तरम् ॥" इति । प्रत्यापत्तिर्गार्हस्थ्यपरिग्रहः । अत एव वसिष्ठः —"यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥" इति । तथा च पराशरः—"यः प्रत्यवसितो विप्रो प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥ स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च । जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥" तत्र ब्राह्मणस्य षाण्मासिकः कृच्छ्रः[1], पुनः सन्न्यासससंस्कारश्च, क्षत्रियस्य चान्द्रायणत्रयं, वैश्यस्य कृच्छ्रत्रयमिति व्यवस्था। अथवा ब्राह्मणस्यैव शक्तिसकृदभ्यासाद्यपेक्षया व्यवस्थितं प्रायश्चित्तत्रयं द्रष्टव्यम् । तथा मरणसन्न्यासिनामपि यमेन प्रायश्चित्तमुक्तं—"जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः । विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥ नैवं[2] ते प्रत्यवसिताः सर्वलोकबहिष्कृताः । चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥" इति । इदं च चान्द्रायणतप्तकृच्छ्रद्वयात्मकं प्रायश्चित्तद्वयं शक्त्याद्यपेक्षया व्यवस्थितं विज्ञेयम् । यदा तु "शस्त्रघातहताश्च" इति पाठः तदाऽऽत्मत्यागाद्यशास्त्रीयमरणनि-

१ क. छ. 'पुनः सन्न्यासससंस्कारश्च' इति नास्ति । २ —२३. ४. ।

मित्तस्तत्पुत्रादेशो द्रष्टव्यः ॥ यत्पुनर्वसिष्ठेनोक्तं—"जीवन्नात्मत्यागी कृच्छ्रं द्वादश रात्रं चरेत् त्रिरात्रं चोभवसेत्" इति तदप्यध्यवसिनाशास्त्रीयमरणस्यैव कथञ्चिज्जीवनशक्त्यपेक्षया द्रष्टव्यम्। अभवाऽध्यवसायमात्रे त्रिरात्रं, शस्त्रादिक्षतस्य द्वादशरात्रमिति व्यवस्था । इदं चावकीर्णिप्रायश्चित्तं गुरुदारतत्समव्यतिरिक्तागम्यागमनविषयं---तत्र गुरुतरप्रायश्चित्तस्य दर्शितत्वात् । न च लघुनाऽवकीर्णिव्रतेन द्वादशवार्षिकापनोद्यमहापातकदोषनिर्हरणमुचितम् । न च ब्रह्मचारित्वोपाधिकं लघुप्रायश्चित्तविधानमिति युक्तम्—आश्रमान्तराणां द्वैगुण्यादवृद्धिर्ब्रह्महत्याप्रकरणेदर्शितत्वात् । न चात्रगम्यागमनप्रायश्चित्तं पृथक्कर्तव्यम् —ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमननान्तरीयकत्वात् अतोऽन्यत्रापि यस्मिन्निमित्ते यन्निमित्तान्तरं समं न्यूनं वाऽवश्यम्भावि नतत्पृथक् नैमित्तिकं प्रयुङ्क्ते ; यथा — "अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥" इत्यत्र शोणितोत्पादने निमित्तेऽवगूरणनिपातलक्षणं निमित्तद्वयमवश्यम्भावि नैमित्तिकं कृच्छ्रमतिकृच्छ्रं च न प्रयुङ्क्ते । एवमन्यत्राप्यूहनीयम् । यत्र पुनर्निमित्तानामन्तर्भावनियमो नास्ति तत्र पुनर्नैमित्तिकानि पृथक्प्रयुज्यन्ते । निमित्तानि यथा—"यदा पर्वाणि परभार्यां रजस्वलां तैलाभ्यक्तो दिवा जले गच्छति" इति । ननु ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनान्तरीयकत्वं नास्त्येव—पुत्रिकागमनेऽगम्यागमनदोषाभावात् । तथा हि । न तावत्पुत्रिका कन्या—क्षतयोनित्वात् । नापि परभार्या—प्रदानाभावात्, नापि वेश्या—अतद्वृत्तित्वात्, नापि विधवा—भर्तृमरणाभावात् । अतः पुत्रिकायाः क्वाप्यनन्तर्भावादप्रतिषिद्धेति तत्रैव विप्लुतस्य केवलमवकीर्णिव्रतम्, अन्यत्र विप्लुतस्य तु निमित्तान्तरसन्निपातादवकीर्णिव्रतं नैमित्तिकान्तरमपि प्रयोक्तव्यमिति । तदसत् । पुत्रिकाया अपि परभार्यास्वन्तर्भावात्, प्रदानाभावेऽपि विवाहसंस्कारेण संस्कृतत्वात्, गान्धर्वादिविवाहपरिणी-

---

१. क. चावकीर्ण प्राय० । २. ख. दशवर्षिकाद्यपनो० । ३ ख. दोषनिर्हण मुचि० । ४. छ. गमनेनान्तरीयक० । ५ ख. भाविनस्तत्र पृथ० । ६.—११. २०८. ७. छ. श्यम्भाविल्यानैमित्तिकं कृच्छ्र नैवप्रयुङ्क्ते० । ख. वश्यम्भाविनस्तत्रनैमित्ति० । ८. ख. प्रयुङ्क्ते। अत एव मन्य० । ९.ख गमनान्तरीय० । १०. क. प्रदानाभावात् । नापि विधवा० । ११. ख. अन्य विप्लु० । १२.—२३. १९.।

तावत्। न च "यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥" इति प्रतिषेधात्सगोत्रास्विव भार्यात्वं नोत्पद्यते इति वाच्यम्। दृष्टार्थत्वात्प्रतिषेधस्य व्यङ्गाङ्ग्यादिप्रतिषेधवत्। दृष्टार्थत्वं च "पुत्रिका-धर्मशङ्कया" इति हेतूपादानात्। न च पुत्रार्थमेव परिणयनम्, अपि तु धर्मा-र्थमपि। अतश्चोत्पादितपुत्रस्य मृतभार्यस्य धर्मार्थे पुत्रिकापरिणयने को विरोधः। प्रपञ्चितं चैतत्पुरस्तादित्यलमतिप्रसङ्गेन। तस्माद्ब्रह्मचारिणो योषिति ब्रह्म-चर्यस्खलनस्यागम्यागमननान्तरीयकत्वान्न पृथङ्नैमित्तिकं प्रयोक्तव्यमिति सुष्ठू-क्तम्॥ २८०॥

ब्रह्मचारिप्रायश्चित्तप्रसङ्गादन्यैदप्युपपातकप्रायश्चित्तमाह—

**भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः।**
**कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम्॥ २८१॥**
**उपस्थानं ततः कुर्यात्समासिञ्चन्त्वनेन तु।**

यस्त्वनातुर एव ब्रह्मचारी निरन्तरं सप्तरात्रं भैक्षमग्निकार्यं वा त्यजति असौ 'कामावकीर्णोऽस्मि कामकामाय स्वाहा' 'कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा' इत्येताभ्यां मन्त्राभ्यामाहुतीर्हुत्वा "समासिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः। समायमाग्निः सिञ्चन्तां यशसा ब्रह्मवर्चसेन॥" इत्यनेन मन्त्रेणाग्निमुपतिष्ठेत्। एतच्च गुरुपरिचर्यादिगुरुतरकार्यव्यग्रतया अकरणे द्रष्टव्यम्। यदा त्वव्यग्र एवोभे भैक्षाग्निकार्ये त्यजति तदा "अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥" इति मानवं द्रष्टव्यम्। यज्ञोपवीतविनाशे तु हारीतेन प्रायश्चित्तमुक्तं—"मनोव्रतपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयादसद्भैक्षभोजनेऽभ्युदितेऽभिनिर्मुक्ते वान्ते दिवा स्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य हयादीनारुह्य पूज्यातिक्रमे चैताभिरेव जुहुयादग्निसमिन्धने स्था-वरसरीसृपादीनां वधे 'यद्देवादेवहेडनम्" इति कूष्माण्डीभिराज्यं जुहुयात्;

१. ख. व्यङ्ग्याङ्ग्यादि। २. ख. दप्यनुपातक०। क. दप्यनुपपातक०। ३.—२. १८७.।

मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेद् " इति। मनोव्रतपतीभिरिति— "मनोज्योतिः" इत्यादिमनोलिङ्गाभिः "त्वमग्नेव्रतपाअसी" इत्यादिव्रतालिङ्गाभिरित्यर्थः। यथार्थं प्रतीयादिति—उपनयनोक्तमार्गेण समन्त्रकं गृह्णीयादित्यर्थः। यज्ञोपवीतं विना भोजदानिकरणे तु — "ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा। गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति ॥" इति मरीच्युक्तं द्रष्टव्यम् ॥ २८१ ॥

किं च--

**मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥**
**प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति।**

ब्रह्मचारिणा अमत्या मधुमांसभक्षणे कृच्छ्रः कार्यः, तदनन्तरमवाशिष्टानि व्रतानि समापयेत्। एतच्च शिष्टभोजनार्हशशादिमांसभक्षणविषयं— "ब्रह्मचारी चेन्मांसमश्नीयाच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेत्" इति। वासिष्ठस्मरणात्। द्वादशरात्रग्रहणं तु मतिपूर्वाभ्यासापेक्षयाऽतिकृच्छ्रपराकादेरपि प्राप्त्यर्थम्। यदा तु मांसैकाशनोद्यव्याध्यभिभूतस्तदा मांसं गुरोरुच्छिष्टं कृत्वा भक्षणीयं— "स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयात्" इति तेनैवोक्तत्वात्। सर्वग्रहणं मांसलशुनाद्यभक्ष्यमात्रसंग्रहार्थम्। तद्भक्षणेन चापगतव्याधिरादित्यमुपतिष्ठेत। तथा च बौधायनः—"येनेच्छेत्तु चिकित्सितुं स यदाऽगदो भवति तदोत्थायाऽऽदित्यमुपतिष्ठेत "हंसः शुचिषद्" इति। मधुनोऽप्यज्ञानत प्राशनोपपत्तौ न दोषः— "अकामोपनतं मधु वाजसनेयके न दुष्यति" इति वसिष्ठस्मरणात्। अन्यसूतकान्नादिभक्षणप्रायश्चित्तं त्वभक्ष्यप्रायश्चित्तप्रकरणे वक्ष्यामः। आज्ञाप्रतिघातादिना गुरोः प्रतिकूलमाचरन् पादप्रणिपातादिना गुरुं प्रसाद्य विशुद्ध्यति ॥ २८२ ॥

ब्रह्मचारिप्रायश्चित्तप्रसङ्गाद्गुरोरपि प्रायश्चित्तमाह—

**कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि ॥ २८३ ॥**

यस्तु गुरुश्चौरोरगव्याघ्रादिभयाकुलप्रदेशे सान्द्रतरान्धकाराकुलितनिशीथावसरे

१.—२३. ११.। २. ख. सचेद्व्याधितः काम०। छ. सचेद्याधीतकामं०। ३.—२३. ९.। ४.—२. १. २६, ७। ५—२३ १४.।

कार्यार्थे शिष्यं प्रेरयति स च तथा प्रेरितो दैवान्मृतस्तदा स गुरुः कृच्छ्राणां प्राजापत्यादीनां त्रयं कुर्यात्। न पुनस्त्रयः प्राजापत्याः ; तथा सति पृथक्त्वनिवेशिनी संख्यानुऽपपन्ना स्यात् । न च "एकादश प्रयाजान्यजति" इतिवदावृत्त्यपेक्षा संख्येति चतुरस्रं स्वरूपपृथक्त्वे संभवति—आवृत्त्यपेक्षाया अन्याय्यत्वात् । यदि-यमुत्पन्नगता संख्या स्यात्तदा स्यादपि कथञ्चिदावृत्त्यपेक्षा, किं तूत्पत्तिगतेयम् । अतः "तिस्र आज्याहुतीर्जुहोति" इतिवत्स्वरूपपृथक्त्वापेक्षयैव त्रित्वसं-ख्याघटना युक्ता ॥ २८३ ॥

सकलहिंसाप्रायश्चित्तापवादमाह—

## क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।

आयुर्वेदोपदेशानुसारेणौषधपथ्यान्नप्रदानादिभिश्चिकित्सादिना क्रियमाण उप-कारो यस्य ब्राह्मणादेस्तस्मिन् कथञ्चिन्मृतेऽपि पातकं नैव भवति । विप्रग्रहणं प्राणिमात्रोपलक्षणार्थम् । अत एव "यन्त्रणे गोश्चिकित्सार्थे गूढगर्भविमो-चने । यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते॥" इत्यादि संवर्ताद्यैरुक्तम्। एतच्च प्रपञ्चितं प्राक् ॥

मिथ्याभिशंसिनां प्रायश्चित्तविवक्षया तदुपयोग्यर्थवादं तावदाह—

## मिथ्याभिशंसिनो दोषो द्विः समो भूतवादिनः ॥ २८४॥

## मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ।

यस्तु परोत्कर्षेर्ष्याजनितरोषकलुषितान्तःकरणो जनसमक्षं मिथ्यैवाभिशापं ब्रह्महत्यादिकमनेन कृतमित्यारोपयति तस्य तदेव द्विगुणं भवति । यस्तु विद्यमा-नमेवदोषमलोकाविदितं जनसमक्षं प्रकाशयति तस्यापि तत्पातकिसमदोषभाक्त्वम् । तथा चाऽऽपस्तम्बः—"दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याता स्यात् परिहरेच्चैनं धर्मेषु" इति न केवलं मिथ्याभिशंसी द्विगुणदोषभाक्, अपि तु

१. ख. स च गुरुणा प्रेरिता० । २ क. पृथक्त्वानिवेशि० । ३. स्तस्मिन्दैवात्कथ० । ४. ख. समदोषभावक्त्वम् । ५. क. समाख्याने स्यात्परिह० । छ. समाख्याने समदोषः स्यात् परिह० । ६.—१. २१. २० ।

" मिथ्याभिशस्तस्य यदन्यद्दुरितजातं तदपि समादत्ते " इति वक्ष्यमाणप्रायश्चित्तेऽर्थवादः, न पुनः पापद्वैगुण्यादिप्रतिपादनमत्र विवक्षितं—" निमित्तस्यलघुत्वाल्लघुप्रायश्चित्तस्योपदेक्ष्यमाणत्वात्, कृतनाशाकृताभ्यागमप्रसङ्गाच्च ॥ २८४ ॥

तत्र प्रायश्चित्तमाह—

**महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ।**
**अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ २८५ ॥**

यस्तु महापापेन ब्रह्महत्यादिना गोवधाद्युपपापेन वा मृषैव परमभिशंसति स मासं यावज्जलाशनो जपशीलो जितेन्द्रियश्च भवेत् । जपश्च शुद्धवतीनां कार्यः —" ब्राह्मणमनृतेनाभिशस्य पतनीयेनोपपातकेन वा मासमब्भक्षः शुद्धवतीरावर्तयेत्; अश्वमेधावभृथं वा गच्छेत् "[1] इति वसिष्ठस्मरणात् । महापापोपपापग्रहणमन्येषामप्यतिपातकादीनामुपलक्षणम् । एतच्च ब्राह्मणस्यैव ब्राह्मणेनाभिशंसने कृते द्रष्टव्यम् । यदा तु ब्राह्मणः क्षत्त्रियादेरभिशंसनं करोति, क्षत्त्रियादिर्वा ब्राह्मणस्य तदा " प्रतिलोमापवादेषु द्विगुणत्रिगुणो दमः । वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥ " इति दण्डानुसारेण प्रायश्चित्तस्य वृद्धिह्रासौ कल्पनीयौ । भूताभिशंसिनस्तु पूर्वोक्तार्थवादानुसारेण दण्डानुसारेण च तदर्धं कल्पनीयम् ॥ तथाऽतिपातकाभिशंसिन एतदेव व्रतं पादोनम्, पातकाभिशंसिनस्त्वर्धम्, उपपातकाभिशंसिनस्तु पादः—" तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ॥" इत्युपपातकभूतक्षत्त्रियादिवधे महापातकप्रायश्चित्ततुरीयांशस्य दर्शनात् । एवं प्रकीर्णाभिशंसिनोऽपि[2] ततो न्यूनं कल्पनीयं—"शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत् ।" इति स्मरणात् । यत्तु शङ्खलिखिताभ्यां " नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी चेत्येते षड्वर्षाणि ब्राह्मणगृहेषु भैक्षं चरेयुः संवत्सरं धौतभैक्षमश्नीयुः षण्मासान्वा गा अनुगच्छेयुः" इति गुरुप्रायश्चित्तमुक्तं तदभ्यासतारतम्यापेक्षया योजनीयम् २८५ ॥

अभिशंसिप्रायश्चित्तप्रसङ्गादभिशस्तप्रायश्चित्तमाह—

**अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ।**

१.—२४. ३९, ४०. २—११. १२६. । २. ख. नोपि उपपातकात् न्यूने० ।

निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा ॥ २८६ ॥

यः पुनर्मिथ्याभिशस्तः स कृच्छ्रं प्राजापत्यं चरेत्, अग्निदैवत्येन वा पुरोडाशेन यजेत, वायुदेवत्येन वा[1] पशुना । एषां च पक्षाणां शक्तिसंभवापेक्षया व्यवस्था । यत्तु वासिष्ठेन मासमब्भक्षणमुक्तम् " एतेनैवाभिशस्तो व्याख्यात " इति[2] इति तदभिशस्तस्यैव किञ्चित्कालमकृतप्रायश्चित्तस्य सतो द्रष्टव्यं—" संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः।"इति दण्डातिरेकदर्शनात् ॥ यत्तु पैठीनसिनोक्तं— " अनृतेनाभिशस्यमानः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासम् " इति तदपि वासिष्ठेन समानविषयम् । यत्तु बौधायनोक्तं—" पातकाभिशंसिने कृच्छ्रः, तदर्धमभिशस्तस्य " इति[3]—तदुपपातकादिविषयम्, अशक्तविषयं वा । एवमन्येषामप्युच्चावचप्रायश्चित्तानामभिशस्ताविषयाणां कालशक्त्याद्यपेक्षया व्यवस्थाज्ञेया ; यथाऽऽह मनुः—" षष्ठान्नकालता मासं संहिताज एव वा । *होमश्च शाकलो नित्यमपाङ्क्तानां विशोधनम् ॥" इति । अपाङ्क्तानां मध्ये अभिशस्तादयः पठिताः । यद्यप्यत्राभिशस्तस्य निषिद्धाचरणं नोपलभ्यते, तथाऽपि मिथ्याभिशस्तत्वलिङ्गानुमितप्राग्भवीयनिषिद्धाचरणापूर्वनिबन्धनमिदं प्रायश्चित्तं कृमिदष्टानामिवेति न विरोधः ॥ २८६ ॥

किं च—

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत् ।

यस्तु नियोगं विना भ्रातुर्ज्येष्ठस्य वा भार्यां गच्छति स चान्द्रायणं चरेत् । एतच्च सकृदमतिपूर्वविषयं द्रष्टव्यम् । यत्तु शङ्खवचनं—" परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयातां ज्येष्ठभार्यामनियुक्तो गच्छंस्तदेव कनिष्ठभार्यां च इति तत्कामकारविषयम् ॥

* ' देवकृतस्यैनसोवजनमसि ' इत्यादिकं शाकलशाखासूक्तं तेनहोम इत्यर्थ इति केचिदत्राटिप्पण्यामूचुः । तन्न । शाकलहोमस्य ततो भिन्नत्वात् । तथाहि ॥

१. ख. वायुदेवत्येन वा पुरोडाशेन यजेत । वायुदैवत्येनवापशुना० । २.—२४. ३७. । ३.—२. १. ६०, १.

किं च[1]—

त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति ॥ २८७॥

यः पुनरुदक्यां रजस्वलां स्वभार्यामपि गच्छति स त्रिरात्रमुपोष्यान्ते घृतं प्राश्य विशुद्ध्यति। इदमकामतः सकृद्गमनविषयम्। तत्रैवाभ्यासे "रजस्वलागमने सप्तरात्रम्" इति शातातपेनोक्तं द्रष्टव्य, कामतः सकृद्गमनेऽप्येतदेव। यत्तु बृहत्संवर्तेनोक्तं—"रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा। तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनम्॥" इति तत्कामतोऽभ्यासविषयम्। यत्पुनः शङ्खेन त्रिवार्षिकमुक्तं—"पादस्तु शूद्रहत्यायामुदक्यागमने तथा।" इति तत्कामतोऽत्यन्तानवच्छिन्नाभ्यासविषयम्। रजस्वलायास्तु रजस्वलादिस्पर्शे प्रायश्चित्तं स्मृत्यन्तरोक्तं द्रष्टव्यम्। तथा च बृहद्वसिष्ठः—"स्पृष्टे रजस्वलेऽन्योऽन्यं[2] सगोत्रे त्वेकभर्तृके। कामतो[3]ऽकामतो वाऽपि सद्यः स्नानेन शुद्ध्यतः॥" इति। असपत्न्योस्तु सवर्णयोरकामतः स्नानमात्रम्—"उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया। तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम्॥" इति मार्कण्डेयस्मरणात्। यत्तु कश्यपवचनं—"रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि। एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥" इति तत्कामकारविषयम्। असवर्णास्पर्शे तु बृहद्वसिष्ठेन विशेषो दर्शितः—"स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपि च। कृच्छ्रेण शुध्यते पूर्वा शूद्रा[4] दानेन शुद्ध्यति॥" दानेनेति पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशदानेन शुद्ध्यति। "स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपि च। पादहीनं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा। कृच्छ्रार्धाच्छुध्यते पूर्वा तूत्तरा च तदर्धतः॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि च। उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा। स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजाऽपि च। त्रिरात्राच्छुध्यते पूर्वो त्वहोरात्रेण[5] चोत्तरा॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्री[6] तथैव च। त्रिरात्राच्छुध्यते पूर्वा तूत्तरा च दिनद्वयात्॥ वर्णानां कामतः स्पर्शे शुद्धिरेषा पुरातनी॥" इति। अकामतस्तु बृहद्विष्णु-

१. ख. किं चाह—त्रिरा०। २. ख. न्योन्यं सवर्णेत्वे०। ३ ख. कामादकाम०
४. ख. छ. पूर्वाशूद्रीदाने०। ५. ख. रात्रेण चोरा०। ६. ख. वैश्याशूद्रीतथै०।

नोक्तं स्नानमात्रं—" रजस्वलां हीनवर्णां रजस्वला स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा शुद्धा स्यात् ; सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुद्धयति " इति चाण्डालादिस्पर्शे तु बृहद्वसिष्ठेन विशेषः उक्तः—" पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला । तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव तु । अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥ शूद्रयोच्छिष्टया स्पृष्टा शुना चेद् द्व्यहमाचरेत् ।" इति। "तान्यहानि व्यतिक्रम्य" अनाशकेन नीत्वेति यावत् । एतत्कामतः स्पर्शविषयम् ; अकामतस्तु "रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्ववायसैः । तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्धयति ॥" इति बौधायनोक्तं द्रष्टव्यम्। यत्पुनस्तेनैवोक्तं—" रजस्वला तु संस्पृष्टा ग्रामकुक्कुटसूकरैः । श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम् ॥" इति तदशक्तिविषयम् । यदा तु भुञ्जानायाः श्वादिस्पर्शो भवति तदा स्मृत्यन्तरे विशेष उक्तः —" रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि । गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति । अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वाऽपि भोजनम् ॥' इति । यदा तूच्छिष्टयोः परस्परस्पर्शनं भवति तदा " उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषिता ॥ " इत्यत्रिणोक्तं द्रष्टव्यम् । यदा तूच्छिष्टान् द्विजान् रजस्वला स्पृशति तदा "द्विजान्कथञ्चिदुच्छिष्टान् रजस्था यदि संस्पृशेत् । अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् ॥" इति मार्कण्डेयोक्तं द्रष्टव्यम् । एवमवकीर्णिप्रायश्चित्तप्रसङ्गात्कानिचिदनुपातकप्रायश्चित्तान्यपि व्याख्याय प्रकृतमनुसरामः । तत्रावकीर्णानन्तरं "सुतानां चैव विक्रयः" इत्युक्तम् तत्र मनुयोगीश्वरोक्तानि त्रैमासिकादीनि कामाकामजातिशक्त्याद्यपेक्षया पूर्ववद्व्यवस्थापनीयानि । यत्तु शङ्खवचनं—"देवगृहप्रतिश्रयोद्यानारामसभाप्रपातडागपुण्यसेतुसुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेत् " इति, यच्च पराशरेणोक्तं–"विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेत्।" इति तदुभयमप्यापद्यकामतो द्रष्टव्यम् । कामतस्तु " नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् । द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः ॥" इति चतुर्विंशतिमतोक्तं द्रष्टव्यम् । यत्तु पैठीनसिनोक्तम्—" आरामतडागोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारः संवत्सरेण पूतो भवति इति तदेकपुत्र-

१. ख च्छिष्टयास्पृष्टा° । २. क. दनुपपातक° । ३ पा० २६६.।

विषयम्। तदनन्तरं "धान्यकुप्यपशुस्तेयम्" इत्युक्तम्; तत्प्रायश्चित्तानि च स्तेयप्रकरणे प्रपञ्चितानि ॥ २८७ ॥ २८८ ॥

अनन्तरम् "अयाज्यानां च याजनम्" इत्युक्तं तत्र प्रायश्चित्तमाह—

**त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि।**

**वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८९ ॥**

यस्तु सावित्रीपतितानां याजनं करोति स प्राजापत्यप्रभृतींस्त्रीन्कृच्छ्रानाचरेत्। तेषां च गुरुलघुभूतानां कृच्छ्राणां त्रित्वं निमित्तगुरुलघुभावेन कल्पनीयम्। तथा अभिचरन्नपि" इदमेव प्रायश्चित्तं कुर्यात्; एतच्चाग्निदाद्याततायिव्यतिरेकेण षट्स्वभिचरन्न पतति—वसिष्ठस्मरणात्। अपिशब्दो हीनयाजकान्त्येष्टियाजकयोः संग्रहार्थः। अत एवोक्तं मनुना—"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥" इति। परेषामन्त्यकर्मेत्यत्यन्ताभ्यासविषयं, शूद्रान्त्यकर्मविषयं वा—प्रायश्चित्तस्य गुरुत्वात्। अहीनो द्विरात्रादिर्द्वादशाहपर्यन्तोऽहर्गणयागः। यत्तु शातातपेनोक्तं—"पतितसावित्रीकान्नोपनयेत् नाध्यापयेत् यतानुपनेदध्यापयेद्याजयेद्वा स उद्दालकव्रतं चरेत् इति तत्कामकारविषयम्। उद्दालकव्रतं च प्राग्दार्शितम् एतच्च कृच्छ्रत्रयं साधारणोपपातकप्रायश्चित्तस्यापवादकम्। अत उपपातकसाधारणप्रायश्चित्तं शूद्राद्ययाज्ययाजने व्यवतिष्ठते। तत्र कामतस्त्रैमासिकम्, अकामतस्तु योगीश्वरोक्तं मासव्रतादि। यत्तु प्रचेतसा शूद्रयाजकादीन् पठित्वोक्तम्—"एते पञ्चतपोभ्रावकाशजलशयनान्यनुतिष्ठेयुः क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासंगोमूत्रयावकवश्नीयुः" इति। तत्कामतोऽभ्यासविषयम् यत्तु यमेनोक्तं—"पुरोधाः शूद्रवर्णस्य ब्राह्मणो यः प्रवर्तते। स्नेहादर्थप्रसङ्गाद्वा तस्य कृच्छ्रो विशोधनम् ॥" इति तदशक्तविषयम्। यच्च पैठीनासिनोक्तं—"शूद्रयाजकः सर्वद्रव्यपरित्यागात्पूतो भवति प्राणायामसहस्रेषु दशकृत्वोभ्यस्तेषु" इति—"तदप्यकामतोऽभ्यासविषयम्। यत्तु गौतमेनोक्त—निषिद्धमन्त्रप्रयोगे सहस्रवागुपतिष्ठेत्" इति निषिद्धानां पतितादीनां याजनाध्याप-

१. पा० । २३७. । २. ख. व्यतिरेकेषट्स्वभिच० । क. केणषसट्कभिचरन्नपत० । छ. व्यतिरेकेणषटस्वनभिचरन्पत० । ३.—११. १९७. । ४. क. सहस्रवाकाश्चेति० । छ. सहस्रं वाकश्चिदिति० । ५.—२२. ३३.० ।

नात्मके मन्त्रप्रयोगे बहुशोऽभ्यस्ते प्राकृतं ब्रह्मचर्यमुपदिष्टं तत्कामतोऽभ्यासविषयम् । "यः स्ववेदं विप्लावयति, यश्च रक्षणे क्षमोऽपि तस्करव्यतिरिक्तं शरणागतमुपेक्षते सोऽपि संवत्सरं यवोदनं भुञ्जानः शुद्ध्यति । तत्र विप्लवो नाम पर्वचाण्डालश्रोत्रावकाशाद्यनध्यायेष्वध्ययनम्, उत्कर्षहेतोरधीयानस्य 'किं पठसि नाशितं त्वया' इत्येवं पर्यनुयोगदानं वा विप्लावनमुच्यते । अत एवोक्तं स्मृत्यन्तरे—"दत्तानुयोगानध्येतुः पतितान्मनुरब्रवीत्॥" इति । यत्तु वसिष्ठेनोक्तं—"पतितचाण्डालशवश्रावणे त्रिरात्रं वाग्यता अनश्नन्त आसीरन्; सहस्रपरमं वा तदभ्यस्यन्तः पूता भवन्तीति विज्ञायते इति एतेनैव गर्हिताध्यापकयाजका व्याख्याताः, दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते" इति तदबुद्धिपूर्वविषयम् । यत्तु षट्त्रिंशन्मतेऽभिहितं—"चाण्डालश्रोत्रावकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनम्" इति तदबुद्धिपूर्वविषयम् । यदा सर्पाद्यन्तरागमनमात्रं भवति न पुनस्तत्राधीते तदाऽपि प्रायश्चित्तं यमेनोक्तं—"सर्पस्य नकुलस्याथ अजमार्जारयोस्तथा । मूषकस्य तथोष्ट्रस्य मण्डूकस्य च योषितः॥ पुरुषस्यैडकस्यापि शुनोऽश्वस्य खरस्य च। अन्तरागमने सद्यः प्रायश्चित्तमिदं शृणु॥ त्रिरात्रमुपवासश्च त्रिरन्हश्चाभिषेचनम् । ग्रामान्तरं वा गन्तव्यम् जानुभ्यां नात्र संशयः॥' इति । पितृमातृसुतत्यागतडागारामविक्रयेषु मनुयोगीश्वरोक्तोपपातकसाधारणप्रायश्चित्तानि पूर्ववज्जातिशक्तिगुणाद्यपेक्षया योज्यानि । तत्र पितृमात्रादित्यागस्य "अकारणे परित्यक्ता माता-पित्रोर्गुरोस्तथा।" इत्यपाङ्क्तमध्यपाठात्तान्निमित्तमपि प्रायश्चित्तं भवति : यथाऽऽह मनुः — "षष्ठान्नकालता मासं संहिताजप एव वा । होमाश्च शाकला नित्यमपाङ्क्तानां विशोधनम्।" इति । अपाङ्क्ताश्च श्राद्धकाण्डे "ये स्तेनपतितक्लीबाः" इत्यादिवाक्यैर्दर्शिताः । तडागारामविक्रयेषु च कतिचिद्विशेषप्रायश्चित्तानि सविषयाणि सुतविक्रयप्रायश्चित्तकथनावसरे कथितानि । अनन्तरं "कन्यासंदूषणम्" इत्युक्तम् । तत्र च त्रैमासिचान्द्रायणानि वर्णानां सवर्णाविषये योज्यानि । आनुलोम्ये पुनर्मासिकपयोऽशनं प्राजापत्यं वा—"सकामा-

---

१.—२३. ३४, ५. । २.—२३. ३६. । ३.—११. २००. । ४. ख. न्याया दू० ।
५. ख. त्रैमासिकद्वैमासिकचान्द्रायणादीनि वर्णा० ।

वनुलोमासु न दोषस्त्वन्यथा दमः ॥" इति दण्डाल्पत्वदर्शनात् । यत्तु शङ्खेनोक्तं —"कन्यादोषी सोमविक्रयी च कृच्छ्रमब्दं व्रतं चरेयातां इति, यच्च हारीतवचनं —" कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते पञ्च तपोभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुः ॥" इति तदुभयभयमपि क्षत्रियवैश्ययोः प्रातिलोम्येन दूषणे योज्यं ; शूद्रस्य तु वध एव—" दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥" इति वधदर्शनात् । परिविन्दकस्य याजनकन्याप्रदानयोः कौटिल्ये शिष्टाप्रतिषिद्धव्रतलोपे आत्मार्थपाकक्रियारम्भे मद्यपस्त्रीनिषेवणे च साधारणोपपातकप्रायश्चित्तं प्राग्वद्व्यवस्थापनीयम् । आद्ययोस्तु विशेषप्रायश्चित्तानि परिवेदनायाज्ययाजनप्रायश्चित्तकथनंप्रस्तावे दर्शितानि । अनन्तरं "स्वाध्यायत्यागः" इत्युक्तम् । तत्र व्यसनासक्त्यां त्यागे " अधीतस्य च नाशनम्" इति ब्रह्महत्यासमप्रायश्चित्तमुक्तम् । शास्त्रश्रवणाद्याकुलतया त्यागे तु त्रैमासिकाद्युपपातकप्रायश्चित्तानि जातिशक्त्यपेक्षया व्यवस्थापनीयानि । यत्तु वसिष्ठेनोक्तं—" ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात्" इति तदत्यन्तापद्विषयम् । अग्नित्यागेऽपि तेनैव विशेषो दर्शितः—" योऽग्नीनपविध्येत्स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधेयं कारयेत्" इति । द्वादशरात्रग्रहणमुत्सन्नकालापेक्षया प्राजापत्यादिगुरुलघुकृच्छ्राणां प्राप्त्यर्थम् । तत्र मासद्वये प्राजापत्यं, मासचतुष्टयेऽतिकृच्छ्रः, षण्मासोच्छिन्ने पराकः, षन्मासादूर्ध्वं योगीश्वरोक्तान्युपपातकसामान्यप्रायश्चित्तानि कालाद्यपेक्षया योज्यानि, संवत्सरादूर्ध्वं तु मानवं त्रैमासिकं द्वैमासिकमिति व्यवस्था । एतच्च नास्तिक्येन त्यागविषयम् । तथा च व्याघ्रः—" योऽग्निं त्यजति नास्तिक्यात्प्राज्ञा-

१.—ख. मब्भक्षं चरे० । २. ख. व्यवहारीमित्रध्रुक० । ३. व्य० २८८. । ४. ख. याजनं कन्या० । ५. ख. याज्यायाजन० । ६. प्रा० २३९. । ७. ख. सक्तत्यागे० । ८. ख. क्षयायोज्यानि । यत्तु० । ९. छ. मानवं त्रैमासिके इति० ।

पत्यं चरेद्विजः" इति । यदा तु प्रमादात्त्यजति—तदा भारद्वाजगृह्ये विशेष उक्तः—"प्राणायामशतमात्रिरात्रादुपवासः स्यादाविंशतिरात्रात्, अत ऊर्ध्व-माषष्टिरात्रात्तिस्रो रात्रीरुपवसेदत ऊर्ध्वमासंवत्सरात् प्राजापत्यं चरेत्, अत ऊर्ध्वं कालबहुत्वे दोषगुरुत्वम्" इति । यदा त्वालस्यादिना त्यजति तदापि तेनैव विशेष उक्तः— "द्वादशाहातिक्रमे त्र्यहमुपवासो, मासातिक्रमे द्वादशाहमुपवासः, संवत्सरातिक्रमे मासोपवासः, पयोभक्षणं वा" इति । संवत्सरादूर्ध्वं तु वृद्धहारीतेन विशेष उक्तः—"संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात्, द्विवर्षोत्सन्ने चान्द्रायणं सोमायनं[1] च कुर्यात्, द्विवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात्" इति । सोमायनं च कृच्छ्रकाण्डे वक्ष्यते । शङ्खेनापि विशेष उक्तः—"अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेद्गां च दद्यात्" इति । सुतत्यागे बन्धुत्यागे च त्रैमासिकं गोवधव्रतं कामतः, अकामतस्तु योगीश्वरोक्तं व्रतचतुष्टयं शक्त्याद्यपेक्षया योज्यम् । द्रुमच्छेदे प्रायश्चित्तं प्रागुक्तम् । स्त्रीप्राणिवधवशीकरणादिभिर्जीवने तिलेक्षुयन्त्रप्रवर्तने च तान्येव प्रायश्चित्तानि तथैव योज्यानि । व्यसनेषु च द्यूतमृगयादिषु तान्येव व्रतानि तथैव योज्यानि । यत्तु बौधायनेन—"अताशुचिकराणि द्यूतमभिचारोऽनाहिताग्नेरुञ्छवृत्तिः समावृत्तस्य भैक्षचर्या तस्य च गुरुकुले वास ऊर्ध्वं चतुर्भ्यो मासेभ्यो यश्च तमध्यापयति नक्षत्रनिर्देशनं चेति द्वादशमासान्द्वादशार्धमासान्द्वादशाहान्द्वादशषडहान्द्वादशत्र्यहांश्च त्र्यहमेकाहमित्यशुचिकरनिर्देश ।" इति द्यूते वार्षिकव्रतमुक्तं तदभ्यासविषयम् । यत्तु प्रचेतसोक्तम्—"अनृतवाक तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदोऽश्वरथगजारोहणवृत्ती रङ्गोपजीवी श्वागणिकः शूद्रोपाध्मायो वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्तिः ब्रह्मजीवी चिकित्सको देवलकः पुरोहितः कितवो मद्यपः कूटकारकोऽपत्यविकयी मनुष्यपशुविक्रेता चेति तानुद्धरेत्समेत्य न्यायतो ब्राह्मणव्यस्थया सर्वद्रव्यत्यागे चतुर्थकालाहाराः संवत्सरं त्रिषवणमुपस्पृशेयुस्तस्यान्ते देवपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्या" इति तदपि बौधायनीयेन समानविषयम् । श्वागणिको यः श्वगणेन जीवति । भाण्डिको बन्दिव्यतिरिक्तो राज्ञां

१. ख. सोमपानं च° ।

तूर्यादिस्वनैः प्रबोधयिता—वन्दिनः पृथगुपादानात् । स्ववृत्तिः सेवकः । ब्रह्मजीवी द्विजैकार्येषु मूल्येन परिचारकः । मनूक्तान्यप्यपाङ्क्तेयप्रायश्चित्तानि "षष्ठान्नकालता मासम्" इत्यादीनि जात्याद्यपेक्षया योज्यानि—तदुक्तापङ्क्तयमध्येऽपि कितवादिव्यसनिनां पठितत्वात् । आत्मकविक्रये शूद्रसेवायां च सामान्यप्रायश्चित्तानि प्राग्वदेव योज्यानि । यत्तु बौधायनेनोक्तं—"समुद्रयानं ब्राह्मणस्य न्यासापहरणं सर्वापण्यैर्व्यवहरणं भूम्यनृतं शूद्रसेवा यश्च शूद्रायामभिजायते तदपत्यं च भवति तेषां तु निर्देशश्चतुर्थकाले मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एतैस्त्रिभिर्वर्षैस्तदपघ्नन्ति पापम्" इति—तद्बहुकालसेवाविषयम् । हीनजातिभिः सख्ये तु उपपातकसामान्यप्रायश्चित्तान्येव । यत्तु प्रचेतसोक्तं—"मित्रभेदकरणादहोरात्रमनश्नन् हुत्वा पयः पिबेत्" इति तदहीनसख्यभेदनविषयम् । हीनयोनिनिषेवणेऽप्युपपातकसामान्यप्रायश्चित्तानि योज्यानि । यत्तु शातातपेनोक्तं—"ब्राह्मणोराजकन्यापूर्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्तां तु चोपयच्छेत्; वैश्यापूर्वी तत्पकृच्छ्रं शूद्रापूर्वी तु कृच्छ्रातिकृच्छ्रं; राजन्यश्चेद्वैश्यापूर्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्तां चोपयच्छेत्; शूद्रा पूर्वी त्वतिकृच्छ्रं; वैश्यश्चेच्छूद्रापूर्वी त्वतिकृच्छ्रं द्वादशरात्रं चरित्वा तां चोपयच्छेत" इति तत्र निवेशात्तां चोपयच्छेदिति कृच्छ्रानुष्ठानोत्तरकालं सवर्णापरिणयनादूर्ध्वं तां च राजन्यादिकामुपयच्छेदित्यर्थः । इदं चाज्ञानविषयं, ज्ञानतस्तूपपातकसामान्यप्रायश्चित्तं व्यवस्थितमेव द्रष्टव्यम् । साधारणस्त्रीसंभोगे च "हीनयोनिनिषेवणम्" इत्युक्तं; तत्रापि "पशुवेश्याभिगमने प्राजापत्यं विधीयत इति संवर्तोक्तमकामतो द्रष्टव्यं; कामतस्तु यमेनोक्तं द्रष्टव्यं—"वेश्यागमनजं पापं व्यपोहन्ति द्विजातयः । पीत्वा सकृत्सकृत्तप्तं सप्तरात्रं कुशोदकम् ॥" इति । उपपातकसामान्यप्रायश्चित्तानि च कामाकामतोऽभ्यासापेक्षया योज्यानि तत्र मत्याभ्यासे तु "प्रतिनिमित्तं नैमित्तिकमावर्तत" इति न्यायात् प्रतिनिमित्तं नैमित्तिकावृत्तौ प्रसक्तायां लौगाक्षिणा विशेष उक्तः—"अभ्यासेऽहर्गुणा

---

१.—ख. जीवी ब्राह्मणकार्ये० । २. —११. २००. । ३ क. भूम्यनत्यं शूद्र० । ३. क. यते तदापत्यं च० । ४. ख. एतैस्त्रिभिर्व० । ४. ख. श्यापूर्वी कृच्छ्रातिकृच्छ्रं० ।

वृद्धिर्मासादर्वाक् विधीयते। ततो मासगुणा वृद्धिर्यावत्संवत्सरं भवेत्॥ ततः संवत्सरगुणा यावत्पापं समाचरेत् ॥" इति इदं मतिपूर्वविषयम्। अमतिपूर्वावृत्तौ तु चतुर्विंशतिमते विशेष उक्तः—"सकृत्कृते तु यत्प्रोक्तं त्रिगुणं तत्त्रिभिर्दिनैः। मासात्पञ्चगुणं प्रोक्तं षण्मासाद्दशधा भवेत्॥ संवत्सरात्पञ्चदशं त्र्यब्दाद्विंशगुणं भवेत्। ततोऽप्येयं प्रकल्प्यं स्याच्छातातपवचो यथा॥" इति ॥ यत्पुनः "विधेः प्राथमिकादस्मात् द्वितीये द्विगुणं चरेत्।" इति प्रतिनिमित्तमावृत्तिविधायकं तन्महापातकविषयमित्युक्तं प्राक्। यत्तु यमेन साधारणस्त्रीगमनमधिकृत्य गुरुतल्पव्रतमतिदिष्टं—"गुरुतल्पव्रतं केचित्केचिच्चान्द्रायणव्रतम्। गोघ्नस्येच्छन्ति केचिच्च केचिदेवावकीर्णिनः॥" इति "एतच्च जन्मप्रभृतिसानुबन्धानवच्छिन्नाभ्यासविषयम्। अनन्तरं "तथैवानाश्रमे वासः" इत्युक्तम्। तत्र हारीतेन विशेष उक्तः—"अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रममुपेयात्, द्वितीयेऽतिकृच्छ्रं, तृतीये कृच्छ्रातिकृच्छ्रमत ऊर्ध्वं चन्द्रायणम्" इति एतदसंभवविषयम्, संभवे तु सामान्येनोपपातकप्रायश्चित्तानि कामाकामतो व्यवस्थापनीयानि। परपाकरुचित्वासच्छास्त्राधिगमनाकराधिकारभार्याविक्रयेषु च मनुयोगीश्वरप्रतिपादितोपपातकसामान्यप्रायश्चित्ता जातिशक्तिगुणाद्यपेक्षया व्यवस्थापनीयानि ॥ २८९ ॥

"भार्याया विक्रयश्चैषाम्" इत्यत्र चशब्दो मन्वाद्युक्तासत्प्रतिग्रहनिन्दितान्नादीनामुपलक्षणार्थमित्युक्तम्; तत्रासत्प्रतिग्रहे प्रायश्चित्तविशेषमाह—

**गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतः।**
**गायत्रीजाप्यनिरतः शुध्यतेऽसत्प्रतिग्रहात् ॥ २९० ॥**

यस्त्वसत्प्रतिग्रहं निषिद्धप्रतिग्रहं करोति स ब्रह्मचर्ययुक्तो गोष्ठे वसन् गायत्रीजपशीलो मासं पयोव्रतेन शुद्ध्यतीति। प्रतिग्रहस्य चासत्त्वं दातुर्जातिकर्मनिबन्धनम्। यथा चाण्डालादेः पतितादेश्च तथा देशकालनिबन्धनं च यथा कुरुक्षेत्रोपरागादौ तथा प्रतिग्राह्यद्रव्यनिबन्धनं च, यथा—सुरामेषीमृतशय्योभयतोमुख्यादेः। यदा तु पतितादेर्मेष्यादिकं प्रतिगृह्णाति तदैतद्गुरुप्राय-

१. प्रा० २४१।

श्चित्तं द्रष्टव्यं—व्यतिक्रमद्वयदर्शनेन निमित्तस्य गुरुत्वात् । तत्र जपे मनुना संख्याविशेष उक्तः—"जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः । मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥" इति । प्रत्यहं त्रिसहस्रजपो द्रष्टव्यः—मासमिति द्वितीयया त्रिसहस्रसंख्याकस्य जपस्य पतिदिवसव्यापित्वावगमात् । यदा तु न्यायवर्तिब्राह्मणादेः सकाशान्निषिद्धं मेषादिकं गृह्णाति पतितादेर्वा भूम्यादिकमानिषिद्धं तदा षट्त्रिंशन्मतोक्तं द्रष्टव्यं — पवित्रेष्ट्या विशुद्ध्यन्ति सर्वे घोराः प्रतिग्रहाः । ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ॥ देव्या लक्षजपेनैव शुद्ध्यन्ते दुष्प्रतिग्रहात् ॥" इति । यत्तु बृहद्धारीतवचनं—"राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् । षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते । तर्पयित्वा द्विजान्कामैः सततं नियतव्रतैः" इति तत्पूर्वोक्तविषयेऽभ्यासे द्रष्टव्यम् । अथवा पतितादेः कुरुक्षेत्रोपरागादौ कृष्णाजिनादिप्रतिग्रहविषयम् । तथा पतिग्राह्यद्रव्याल्पतया प्रायश्चित्ताल्पत्वम्; यथाऽऽह हारीतः—"मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्" इति । तथा षट्त्रिंशन्मतेऽपि—"भिक्षामात्रं गृहीत्वा तु पुण्यं मन्त्रमुदीरयेत् । प्रतिग्रहेषु सर्वेषु षष्ठमंशं प्रकल्पयेत् ॥" इति इदं च प्रायश्चित्तजातं द्रव्यत्यागोत्तरकालं द्रष्टव्यं—"यद्गर्हितेनाऽऽर्जयन्ति ब्राह्मणाः कर्मणा धनम् । तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च ॥" इति मनुस्मरणात् ॥ एवमन्यान्यपि स्मृतिवाक्यानि द्रव्यसाराल्पत्वमहत्त्वाभ्यां विषयेषु व्यवस्थापनीयानि ॥

इत्युपपातकप्रायश्चित्तप्रकरणम् ॥

---

जात्याश्रयादिदोषेण निन्द्यान्नादेश्च शब्दतः ।
योगीन्द्रोक्तव्रतव्रातं साम्प्रतं तु प्रतन्यते ॥

तत्र जातिदुष्टपलाण्ड्वादिक्षणे कामतः सकृत्कृते "पलाण्डुं विड्वराहं च" इत्यादिना चान्द्रायणमुक्तम् । कामतोऽभ्यासे तु "निषिद्धभक्षणे जैह्मयम्"

---

१.—११. १९४. । २. ख. मासे विशुध्यति। ३.—११. १९३ । ४. ख. निषिद्धभक्षणेजै० । क. निष्क्रिद्धलक्षणै० ।

इत्यादिनोक्तं सुरापानसमप्रायश्चित्तम् । अकामतः सकृद्भक्षणे सान्तपनं, तत्रैवाभ्यासे यतिचान्द्रायणम्—"अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यतिचान्द्रायणं वाऽपि शेषेषूपवसेदहः॥" इति मनुस्मरणात्[1] । यत्तु बृहद्यमेनोक्तं—"खट्वार्ताककुम्भीकव्रश्चनप्रभवाणि च । भूतृणं शिग्रकं चैव खुखुण्डं[2] कवकानि च ॥ एतेषां भक्षणं कृत्वा प्राजापत्यं चरेत् द्विजः ।" इति तत्कामतोऽभ्यासविषयं—"यस्त्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं क्षिपेत्" इति योगीश्वरेण कामतः सकृद्भक्षणे त्र्यहस्योक्तत्वात् । खट्वाख्यः पक्षी ; कुसुम्भमित्यन्ते ; कवकं राजसर्षपाख्यं शाकम् ; खुखुण्डं तद्विशेषो गोबलीवर्दन्यायेन निर्दिष्टः । यत्तु यमेनोक्तं—"तण्डुलीयककुम्भीकव्रश्चनप्रभवांस्तथा । नालिकां नालिकेरीं[3] च श्लेष्मातकफलानि च ॥ भूतृणं शिग्रकं चैव खट्वाख्यं कवकं तथा । एतेषां भक्षणं कृत्वा प्राजापत्यं व्रतं चरेत् ॥" इति—तदपि मतिपूर्वाभ्यासविषयम् । नालिका नालिकेरी शाकविशेषौ, खटख्यश्च । अकामतः सकृद्भक्षणे तु "शेषेषूपवसेदहः' इति मनूक्तं द्रष्टव्यम् । तत्रैवाभ्यासे त्वावृत्तिः कल्प्या, अत्यन्ताभ्यासे तु संसर्गदुष्टं यच्चान्नं क्रियादुष्टमकामतः भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् " इति प्रचेतोभिहितं द्रष्टव्यम् । नील्यास्त्वकामतः सकृद्भक्षणे चान्द्रायणं—"भक्षयेद्यदि नीलीं तु प्रमादाद्ब्राह्मणः क्वचित् । चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः॥" इत्यापस्तम्बस्मरणात् । कामतोऽभ्यासे चाऽऽवृत्तिः कल्प्या । यदपि षैट्त्रिंशन्मतेऽभिहितं—"शणपुष्पं शाल्मलं च करनिर्मथितं दधि । बहिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशम्॥ " इति तदप्यकामविषयम् । यत्तु सुमन्तुनोक्तं—"लशुनपलाण्डुगृञ्जनकत्रकभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संपातान्नयेत् " इति—तद्बलात्कारेणानिच्छतो भक्षणविषयं, तदेकसाध्यव्याध्युपशमार्थे वा भक्षणे द्रष्टव्यम् । अत एवानन्तरं तेनैवोक्तम् "एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिनि भवन्ति , यानि चैवम्प्रकाराणि तेष्वपि न दोष इति । संपातान्नयदुदकबिन्दून्प्रक्षिपेत् ॥" अथ जातिदुष्टसन्धियादिक्षीरपाने

---

१.—५. २० । २. छ. कुकण्डं कव° । ३. क. नालिकां माल्लिके त्रीव० ।

प्रायश्चित्तम् तत्र चाकामतः सकृत्पाने—"अनिर्दशाया गोः क्षीरमौष्ट्रमेकशफं तथा । आविकं[1] संधिनीक्षीरं विवत्सायाश्च गोः पयः ॥ आरण्यानां च सर्वेषां मृगाणां महिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥ दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् ॥" इत्युक्त्वा "[2]शेषेषूपवसेदहः ।" इति मनूक्त उपवासो द्रष्टव्यः । कामतस्तु योगीश्वरोक्तस्त्रिरात्रोपवासो द्रष्टव्यः । यत्तु पैठीनसिनोक्तम्—"अविखरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रः पुनरुपनयनं च । अनिर्दशाहगोमहिषीक्षीरप्राशने षड्रात्रमभोजनम् । सर्वासां द्विस्तनीनां क्षीरपानेऽप्यजावर्ज्यमेतदेव" इति । यच्च शङ्खेन—"क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः ॥" इति यावकव्रतमुक्तं तदुभयमपि कामतोऽभ्यासविषयम् । यत्तु शङ्खेन— "संधिन्यमेध्यभक्षयोः क्षीरप्राशने पक्षव्रतमुक्तं–"संधिन्यमेध्यभक्षयोर्भुक्त्वा पक्ष व्रतं चरेत् ॥" इति तदप्यभ्यासविषयं—सकृत्पाने "गोजामहिषीवर्ज्जं सर्वाणि पयांसि प्राश्योपवसेत्, अनिर्दशाहं तान्यपि संधिनीयमसूस्यन्दिनीविवत्साक्षीरं चामेध्यभुजश्च॥" इति विष्णुना पवासस्योक्तत्वात् । तथा वर्णनिबन्धनश्च प्रतिषेधः—क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः । यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ।" इति । एवमादौ च यत्रप्रतिपदोक्तं प्रायश्चित्तं न दृश्यते तत्र "शेषेषूपवसेदहः" इति साधारणप्रायाश्चित्तं मनूक्तं साधारणं प्रायश्चित्तम् । द्रष्टव्यं, कामतस्तु "चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च । मत्स्यांच कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥" इति योगीश्वरोक्तं द्रष्टव्यम् । कामतोऽभ्यासे तु जग्ध्वा मांसमभक्ष्यं तु सप्तरात्रं यवान् पिबेत्" । इति मनूक्तं द्रष्टव्यं । इदं विट्सूकरादिमांसव्यातिरिक्तविषयं — "[3]क्रव्याद्विट्सूकरोष्ट्राणां कुक्कुटानां च भक्षणे । नरकाकखराश्वानां तप्तकृच्छ्रं विशोधनम् ॥" इति मनुना जातिविशेषेण प्रायश्चित्तविशेषस्योक्तत्वात् । एतन्मूत्रपुरीषप्राशनेऽप्येतदेव — "वराहैकशफानां तु काककुक्कुटयोस्तथा । क्रव्यादानां च सर्वेषामभक्ष्या ये च कीर्तिताः ॥ मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव च । श्वगोमायुकपीनां च तप्तकृच्छ्रं विधीयते ॥ उपोष्य वा द्वादशाहं कूश्माण्डैर्जुहुयाद्घृतम् ॥" इति

---

१. क. अविकं सन्धि० । २.—५. ८, ९, १० । ३.—११. १५६. ।

बृहद्यमस्मरणात् । तत्र कामतस्तप्तकृच्छ्रः अभ्यासे तु कूश्माण्डसहितः पराक इति व्यवस्था । तथा प्रचेतसाप्युक्तं—"श्वसृगालकाककुक्कुटपार्षतवानरचित्रकचाषक्रव्यादखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसभक्षणे तप्तकृच्छ्रमादिशेदेषां मूत्रपुरीषभक्षणे त्वतिकृच्छ्रम्" इति । इदं च कामकारविषयम् ॥ यत्त्वौशनसो वचनं—"नरमांसं श्वमांसं वा गोमांसं चाश्वमेव च । भुक्त्वा पञ्चनखानां च महासान्तपनं चरेत्" इति—तदकामविषयम् ॥ यत्त्वङ्गिरोवचनं—"बलाकाभासगृध्राखुखरवानरसूकरान् । दृष्ट्वा चैषाममेध्यानि स्पृष्ट्वाचम्य विशुद्ध्यति ॥ इच्छयैषाममेध्यानि भक्षयित्वा द्विजातयः । कुर्युः सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया" इति—तद्भक्षितोद्गारितविषयम् । सान्तपनशब्देन चात्र महासान्तपनमुच्यते—अकामतः प्राजापत्यविधानात् ॥ यत्पुनराङ्गिरोवचनं—"नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च । एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥" इति, यच्च बृहद्यमेनोक्तं—"शुष्कमांसाशने विप्रो व्रतं चान्द्रायणं चरेत् ॥" इति—तदुभयमपि कामतोऽभ्यासविषयम् ॥ यत्पुनः शङ्खेनोक्तं—"भुक्त्वा चोभयतोदन्तांस्तथा चैकशफानपि । औष्ट्रं[2] गव्यं तथा जग्ध्वा षण्मासान्व्रतमाचरेत् ॥" इति—तत्कामतोऽत्यन्ताभ्यासविषयम् ॥ यत्तु स्मृत्यन्तरोक्तं—"जग्ध्वा मांसं नराणां च विड्वराहं खरं तथा । गवाश्वकुञ्जरोष्ट्राणां सर्वं पाञ्चनखं तथा । क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात्संवत्सरव्रतम् ॥" इति—तदत्यन्तानुच्छिन्नाभ्यासविषयम् । अत्र प्रकरणे मूत्रपुरीषग्रहणं वसाशुक्रासृङ्मज्जानामुपलक्षणं, कर्णविट्प्रभृतिमलषट्केऽर्धं कल्पनीयम् । केशादिषु पुनः षट्त्रिंशन्मते[3] विशेष उक्तः—"अजाविमहिषमृगाणां आममांसभक्षणे केशनखरुधिरप्राशने बुद्धिपूर्वे त्रिरात्रमज्ञानादुपवासः" इति ॥ यत्तु प्रचेतसोक्तं[4]—"नखकेशमृल्लोष्टभक्षणेऽहोरात्रमभोजनाच्छुद्धिः" इति—तदप्यकामतः सकृत्प्राशनविषयम् ॥ यत्तु स्मृत्यन्तरवचनं—"केशकीटनखं प्राश्य मत्स्यकण्टकमेव च । हेमतप्तं घृतं पीत्वा तत्क्षणादेव शुद्ध्यति ॥" इति—तन्मुखमात्रप्रवेश-

१. क. काककुटपार्षत० । छ. कुक्कुरपार्षद० । २. क. औष्ट्रमांसं तथा भुक्त्वा षण्मा० । ३. क. षड्विंशन्मते० । ४. छ. प्रचेतसोक्तं—नाशाश्च पाकचण्डालपरिग्रहेषु पीत्वा० ।

विषयम् ॥ यदा तु भाजनस्थमन्नं केशादिदूषितं भवति—तदा ‘ अन्ने भोजनकाले तु मक्षिकाकेशदूषिते । अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत् ॥ ” इति प्रचेतसाभिहितं वेदितव्यम् । प्रासङ्गिकोऽयं श्लोकः ॥ सूक्ष्मतरकृमिकीटास्थिभक्षणे पुनर्हारीतेन विशेष उक्तः— “ कृमिकीटपिपीलिकाजलौकः पतङ्गास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण विशुध्यति ॥” इति । जलौको मत्स्यादिः । एवं च पशुपतत्रिजलचरनर[1]मांसादिप्राशने संक्षेपतः प्रायश्चित्तानि प्रदर्शितानि, ग्रन्थगौरव-भयात्प्रति[2]व्यक्तिर्न लिख्यते ॥ अथाशुचिसंस्पृष्टभक्षणे प्रायश्चित्तम् । तत्र तावदु-च्छिष्टाभक्ष्यभक्षणे वक्ष्यते । तत्र मनुः—“ बिडालकाकाखूच्छिष्टं जग्ध्वा श्वन-कुलस्य च । केशकीटावपन्नं च पिबेद्ब्राह्मीं सुवर्चलाम् ” [3]इति कालविशेषानु-पादानादेकरात्रम् । इदं चाकामतो द्रष्टव्यम् । यत्तु विष्णुनोक्तं—“ पक्षिश्वापद-जग्धस्य रसस्यान्नस्य भूयसः । संस्काररहितस्यापि भोजने कृच्छ्रपादकम् ॥ ” इति—तत्कामकारविषयम् । संस्कारश्च ‘ देवद्रोण्याम् ’ इत्यादिना द्रव्यशुद्धि-प्रकरणोक्तो द्रष्टव्यः । यत्तु शातातपेनोक्तं—“ श्वकाकाद्यवलीढशूद्रोच्छि[4]ष्टभोजने त्वतिकृच्छ्रम् ॥ ” इति—तदकामतोऽभ्यासविषयम् ॥ यत्तु शङ्खेन—“ शुनामु-च्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत् । काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत् ” इति यावकव्रतमुक्तं—तत्कामतोऽभ्यासविषयम् ॥ ब्राह्मणाद्युच्छिष्टभोजने तु बृहद्विष्णुनोक्तं—“ ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेद् । वैश्यो-च्छिष्टाशने पञ्चरात्रं राजन्योच्छिष्टाशने त्रिरात्रं ब्राह्मणोच्छिष्टाशने त्वेकाहम् ” इति—तत्कामकाराविषयम् ॥ यत्तु यमवचनं—“ भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुध्यति । भूभुजा सह भुक्त्वान्नं तप्तकृच्छ्रेण शुध्यति ॥ वैश्येन सह भुक्त्वान्नमतिकृच्छ्रेण शुध्यति । शूद्रेण सह भुक्त्वान्नं चान्द्रायणमथाचरेत् ” इति—तत्कामतोऽभ्यासविषयम् ॥ यत्पुनः शङ्खवचनं—“ ब्राह्मणोच्छिष्टा-शने महाव्याहृतिभिरभिमन्त्र्याऽऽपः पिबेत्, क्षत्रियोच्छिष्टाशने ब्राह्मीरसावपक्वेन त्र्यहं क्षीरेण वर्तयेत्, वैश्योच्छि[5]ष्टाशने त्रिरात्रोपोषितो ब्राह्मीं सुवर्चलां पिबेत्, शूद्रोच्छिष्टभोजने षड्रात्रमभोजनम् ” इति—तदकामविषयम् । तत्राभ्यासे द्वैगु-

१. ख. जलचरमांसा० । २ क. त्प्रतिव्यक्तिनलिख्य० । ३.—११. १५१. । ४. क. च्छिष्टंभक्षाभोज० । ५. क. च्छिष्टभोजनेत्रिरा० ।

ण्यादिकं कल्प्यम् । एतच्च पित्रादिव्यतिरेकेण—"पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यम्" इत्यापस्तम्बस्मरणात्॥ यत्तु बृहद्व्यासवचनं—"माता वा भगिनी वापि भार्या वान्याश्च योषितः। न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्" इति—तत्सहभोजनविषयम्। उच्छिष्टमात्रभोजने तु "शूद्रोच्छिष्टभोजने सप्तरात्रमभोजनं स्त्रीणां च" इत्यापस्तम्बोक्तं द्रष्टव्यम्॥ यत्त्वङ्गिरोवचनं—"ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन। तत्र दोषं न मन्यन्ते सर्व एव मनीषिण" इति—तद्विवाहविषयमापद्विषयं वा। अन्त्योच्छिष्टभोजनेतु—"अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः। चान्द्रं कृच्छ्रं तदर्धं च ब्रह्मक्षत्रविशां विधिः' इत्यापस्तम्बोक्तं दृष्टव्यम्। अत्र चान्द्रं चान्द्रायणं॥ अन्त्यावसाय्युच्छिष्टभोजने तु "चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे। चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत्॥ षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः' इत्याङ्गिरोभिहितं सान्तपनम्। अत्र महासान्तपनं द्रष्टव्यम्। आपदि तु "आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि। मनस्तापेन शुध्येत्तु द्रुपदानां शतं जपेत्" इति पराशरोक्तं वेदितव्यम्॥ यत्तु बृहच्छातातपेनोक्तं—"पीतशेषं तु यत्किञ्चिद्भाजने मुखनिःसृतम्। अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत्' इति—तदभ्यासविषयं ज्ञेयम्। निमित्तस्यातिलघुत्वात्। "पीतोच्छिष्टंतु पानीयं पीत्वा तु ब्राह्मणः क्वचित्। त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः" इति। एतद्बुद्धिपूर्वविषयम्, अकामतस्त्वर्धं कल्प्यमिति। दीपोच्छिष्टे तु—"दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत्। अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुद्ध्यति" इति षट्त्रिंशन्मतोक्तं विज्ञेयम्॥ अथाशुचिद्रव्यसंस्पृष्टभक्षणे प्रायश्चित्तम्। तत्राह संवर्तः—"केशकीटावपन्नं तु नीलीलाक्षोपघातितम्। स्नाय्वस्थिचर्मसंस्पृष्टं भुक्त्वा तूपवसेदहः" इति, तथाह शातातपः—"केशकीटावपन्नं च रुधिरमांसाश्पृस्यस्पृष्टभ्रूणघ्नावेक्षितपतत्र्यवलीढश्वसूकरगवाघ्रातशुक्तपर्युषितवृथापक्वदेवान्नहविषां भोजने उपवासः पञ्चगव्याशनं च" इति, एतच्चोभ-

१. ४. ११. । २. १. २६. ४. ५. क. स्त्रीणां चरेदिति० । ३. क. तदत्रदोषं मन्यन्ते०। ४. क. वेदितव्यम्। दीपो०। क. शरोक्तं वेदितव्यम्। दीपोच्छिष्टेतु' इत्यारभ्य 'षट्त्रिंशन्मतोक्तं विज्ञेयम्' इत्यस्याग्रे 'यत्तु बृहच्छतातपेनोक्तम्' इत्यारभ्य 'कल्प्यम्' इत्यन्तपठ्यते। ५. ख. तोक्तं द्रष्टव्यम्०। ५. क शातातपेनाप्युक्तं केश०।

यमपि अकामविषयं, कामतस्तु " मृद्वारिकुसुमादींश्च फलकन्देक्षुमूलकान् । विण्मूत्रदूषितान्प्राश्य कृच्छ्रपादं समाचरेत् ॥ सन्निकृष्टेऽर्धमेवस्यात्कृच्छ्रः स्याच्छुचिशोधनम् " इति विष्णूक्तं वेदितव्यम् । अल्पसंसर्गेपादो, महासंसर्गेऽर्धकृच्छ्र इति व्यवस्था । यत्तु व्यासेनोक्तं—" संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः । भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेदिति—एतच्चे असंसृष्टामेध्यातिरसोपलब्धौ वेदितव्यम् ॥ रजस्वलादिस्पर्शे तु शङ्खोक्तम्—"अमेध्यपतितचाण्डालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनाखिसंस्पृष्टानि भुक्त्वा कृच्छ्रं चरेत् ' इति । कुणिर्हस्तविकलः । एतत्कामकारविषयम्, अकामतोऽर्धम् । ' भुक्त्वास्पृश्यैस्तथाशौचिकेशकीटैश्च दूषितम् । कुशोदुम्बरबिल्वाद्यैः पनसाऽम्बुजपल्लकैः । शङ्खपुष्पीसुवर्चादिक्वाथं पीत्वा विशुद्ध्यति" इति यद्विष्णुनोक्तं—तदशक्तविषयं रजकादिस्पृष्टविषयं वा । शूद्राद्युपहते तु हारीतोक्तंविज्ञेयं—" शूद्रेणोपहतं भोज्यं कीटैर्वाऽमेध्यसेविभिः । भुञ्जानेषु तु वा यत्र शूद्र उपस्पृशेत् अनर्हत्वात्स पङ्क्तौ तु भुञ्जानेषु वा यत्रोत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सित्वा वा यत्रान्नं दद्युस्तत्र प्रायाश्चित्तमहोरात्रम् " इति । उच्छिष्टपङ्क्तिभोजनेऽप्येतदेव—" यस्तु भुङ्क्ते द्विजः पङ्क्त्यामुच्छिष्टायां कदाचन । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति " इति क्रतुस्मरणात् ॥ वामकरानिर्मुक्तपात्रभोजने तु " समुत्थितस्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने । एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेत् " इति षट्त्रिंशन्मतोक्तं द्रष्टव्यम् ॥ तथा पराशरेणाप्यत्रोक्तम्—" एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ मोहाद्भुञ्जीत यस्तत्र पक्त्यामुच्छिष्टभोजनः । प्रायाश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा " इति । शवादिसंपृक्तकूपाद्युदकपाने तु विष्णुराह — " मृतपञ्चनखात्कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेत्, द्व्यहं राजन्यः, एकाहं वैश्यः, शूद्रो नक्तं, सर्वे चान्ते पञ्चगव्यं पिबेयुः" इति । अत्यन्तोपहताद्वेति मूत्रपुरीषादिभिर्वेत्यभिप्रेतम् । यदा तु तत्रैव शवमुच्छूनतयोद्भिन्नं भवति—तदा हारीतो विशेषमाह— " क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत् । शुध्यै चान्द्रायणं

---

१. क. च्छुचिभोज० । २. ख. एतच्चामेध्य० । ३. ख. निर्मुक्तान्नभाजन० । ४. ख. तोक्तं वेदितव्य० । ५. ख. त्यभिहितम० ।

कुर्यात्तप्तकृच्छ्रमथापि वा ॥ यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः । जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यति" इति । इदं चान्द्रायणं कामतो मानुषशवोपहतकूपजलपानविषयम्, अकामतस्तु षड्रात्रं —"क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते । पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतम्" इति देवलस्मरणात् ॥ यदा चण्डालकूपादिगतं जलं पिबति—तदापस्तम्बोक्तं द्रष्टव्यं— "चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् । प्रायश्चित्त कथं तत्र वर्णेवर्णे विनिर्दिशेत् ॥ चरेत्सान्तपनं विप्रः, प्राजापत्यं च भूमिपः । तदर्धं तु चरेद्वैश्यः, शूद्रे पादं विनिर्दिशेत्" इति । इदं च कामकारविषयम्, अकामतस्तु "चाण्डालकूपभाण्डस्थमज्ञानादुदकं पिबेत् । स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति" इति देवलोक्तं द्रष्टव्यम् ॥ चाण्डालादिसंबद्धाल्पजलाशयेष्वपि कूपवच्छुद्धिः—"जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत्कथिता शुद्धिर्महत्सु तु न दूषणम्" इति विष्णुस्मरणात् ॥ पुष्करिण्यादिषु पुनः—"म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा । जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥ तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा । अकामान्नक्तभुञ्जी स्यादहोरात्रं तु कामतः" इत्यापस्तम्बोक्तं द्रष्टव्यम् ॥ रजकादिभाण्डस्थतोये तु "भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् । ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः । शूद्रस्य चोपवासेन तथा दानेन शक्तितः" इति पराशरोक्तं वेदितव्यम् । कामतस्तु द्विगुणम्—"अन्त्यजैः खानिताः कूपास्तडागो वाप्य एव वा । एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यति" इति आपस्तम्बोक्तमभ्यासविषयं वेदितव्यम् ॥ यत्त्वापस्तम्बेन चाण्डालकूपादिजलपाने पञ्चगव्यमात्रमुक्तम् । 'प्रपास्वरण्ये घटके च सौरे द्रोण्यां जलं कोशविनिर्गतं च । श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुध्येत्' इति—तदशक्तविषयम् । "प्रपां गतो विनातोयं शरीरं यो निषिञ्चति । एकाहक्षपणं कृत्वा सचैलं स्नानमाचरेत् ॥ सुराघटप्रपातोये पीत्वा

१. ख. यदिजायतो पयः । २. ३. ४. & ५. एतच्च आपस्थम्भ नाभलभ्यत क. 'इदं च कामकारविषयम्' इति नास्ति । ६. ख. स्वरण्यघटकेस्रोरद्रोण्या० । ७. क. शक्तविषयम् । अथभावदुष्ट० ।

नाव्यं जलं तथा । अहोरात्रोषितो भूत्वा पञ्चगव्यं द्विजः पिबेत् ॥" अथ भावदुष्टभक्षणे प्रायश्चित्तं—" भावदुष्टं—यद्वर्णत आकारतो वा विसदृशतया जुगुप्सितशारीरमलादिवासनां जनयति तदुच्यते, अरिप्रयुक्तगरलादिशङ्कां वा । तत्र पराशरः—" वाग्दुष्टं भावदुष्टं च भोजने भावदूषिते । भुक्त्वान्नं ब्राह्मणः पश्चात्त्रिरात्रेण विशुध्यति " इति । एतत्कामकारविषयम् । यत्तु गौतमेन " भावदुष्टं केवलं " इत्यादि प्राक्पञ्चनखेभ्यःपठित्वा प्रायश्चित्तानुक्तं "प्राक् पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च " इति—तदकामविषयम् ॥ शङ्कायां तु " शङ्कास्थाने समुत्पन्ने अभोज्याभक्ष्यसंज्ञिते । आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु । अक्षारलवणां रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम् । त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥ पलाशबिल्वपत्राणि कुशान्पद्ममुदुम्बरम् । अपः पिबेत्क्वाथयित्वा त्रिरात्रेण विशुध्यति " इति वसिष्ठोक्तं द्रष्टव्यम् । मनुनाप्यभोजनशङ्कायामुक्तं —"संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः । अज्ञात भुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषत ॥" इति । अथ कालदुष्टभक्षणे प्रायश्चित्तं—कालदुष्टं च पर्युषिताऽनिर्दशगोक्षीरादि—तत्र चाऽकामतः " शेषेषूपवसेदहः " इति मनूक्तं वेदितव्यं, कामतस्तु "केवलानि च शुक्तानि तथा पर्युषितं च यत् । ऋजीषपक्वं भुक्त्वा तु त्रिरात्रं तु व्रती भवेत् ' इति शङ्खोक्तं वेदितव्यम् । केवलान्यस्नेहाक्तानि । अनिर्दशगोक्षीरादिषु प्रायश्चित्त प्राक् प्रदर्शितम् । नवोदकपाने तु पञ्चगव्यप्राशनम् । शृङ्गास्थिदन्तजैः पात्रैः शङ्खशुक्तिकपर्दकैः । पीत्वा नवोदकं चैव पञ्चगव्येन शुद्ध्यति ' इति वृद्धयाज्ञवल्क्यस्मरणात् ॥ कामतस्तूपवासः कर्तव्यः—" काले नवोदकं शुद्धं न पिबेच्च त्र्यहं हि तत् । अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशम् " इति स्मृत्यन्तरदर्शनात् । ग्रहणकाले भोजने तु चान्द्रायणं— ' नवश्राद्धं ग्रामयाजकान्नं संग्रहभोजनम् । नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रयणं चरेत् " इति शातातपस्मरणात् ॥ यदा तु संग्रहादन्यत्र निषिद्धकाले भुङ्क्ते—

---

१. ख. शङ्कांवा० । २. ख. ष्टं च भाजने भाव० । ३. ख. केवलमित्या० । छ. भावदुष्टकेवलेत्यादि० । ४. ख. पठितत्वात्प्राय० । ५.—५. १. । ६.—५. २०. ७. ख. ऋतीशपक्व०, क. ऋचीसपक्व० । ८. क. मृगास्थिद० । ९. ख. इति बृहद्याज्ञ० ।

तदा मार्कण्डेयः—"चन्द्रस्य यदि वा भानोर्यस्मिन्नहानि भार्गव। ग्रहणं तु भवेत्तस्मिन्न पूर्वं भोजनक्रिया॥ नाचरेत्संग्रहं चैव तथैवास्तमुपागते। यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु" तथा 'ग्रहणं तु भवेदिन्दोः प्रथमादाधियामतः। भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः, तथा "अपराह्णे न मध्याह्ने सायाह्ने न तु सङ्गवे। भुञ्जीत स वै चस्यान्न पूर्वं भोजनक्रिया' इति॥ यच्च मनुनोक्तं—"नाश्नीयात्संधिवेलायाम्।" नातिप्रगे नातिसायम्। इत्येवमादि, यच्च बृहच्छातातपेनोक्तं—"धाना दधि च सक्तूंश्च श्रीकामो वर्जयेन्निशि। भोजनं तिलसंबद्धस्नानं चैव विचक्षण' इत्येवमादिष्वनादिष्टप्रायश्चित्तेषु "प्राणायामशतं कार्यं सर्वपापापनुत्तये। उपपातकजातानामनादिष्टस्य चैवहि' इति योगीश्वरोक्तं प्राणायामशतं द्रष्टव्यम्, अकामतस्तु 'शेषेषूपवसेदहः' इति मनूक्तोपवासो द्रष्टव्यः॥

अथ गुणदुष्टशुक्तादिभक्षणे प्रायश्चित्तम्। तत्र च मनुः—"शुक्तानि च कषायांश्च पीत्वामेध्यान्यपि द्विजः। तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यध" इति। अत्राकामतः 'शेषेषूपवसेदहः' इत्युपवासो द्रष्टव्यः, कामतस्तु 'केवलानि च शुक्तानि तथा पर्युषितं च यत्। ऋजीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेत्' इति शङ्खोक्तं विज्ञेयम्। एतच्चामलकादिफलयुक्तकाञ्जिकादिव्यतिरेकेण द्रष्टव्यं—"कुण्डिका सफला येषु गृहेषु स्थापिता भवेत्। तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचन' इति स्मरणात्॥ उद्धृतस्नेहादिषु तु उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चाऽऽत्तवीर्याणि नाश्नीयात्' इत्युक्त्वा 'प्राक्पञ्चनखेभ्यश्छर्दने घृतप्राशनं च' इति गौतमोक्त द्रष्टव्यम्। विलयनं घृतादिमलम्। अहुताद्यन्नभोजने तु लिखित आह—"तस्य चाग्नौ न क्रियते यस्य चान्नं न दीयते। न तद्भोज्यं द्विजातीनां भुक्त्वा चोपवसेदहः॥ पृथाकृसरसंयावपायसापूपशष्कुलीः। आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरे

---

१. ख. भुङ्क्ते यथाहमा०, छ. यदातुग्रहादन्यत्रनिषिद्धाभुक्ते, यथाहमाक० । २ क. मध्याह्ने मध्याह्नेनतुसङ्ग० । ३. ४. ५५ । ४. क. यच्च शातातपे० । ५. क. तिलसम्बन्धिस्नान०। ख. सम्बद्धं स्नानं० । ६. प्रा० ३०६. । ७.—५. २०. । ८ ११. १५३. । ९. ख. ऋचीषपक्व० । १०. ख शङ्खस्मरणात् । ११. ख. चाग्नौ नक्षिपते यस्य० ।

रेत्" इति अनाहिताग्नेस्तु "शेषेषूपवसेदहः" इत्युपवासो द्रष्टव्यः ॥ भिन्न-भाजनादिषु भोजने संवर्तेनोक्तं—"शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥" इति । तथा स्मृत्यन्तरेप्युक्तं—"वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकपत्रयोः । कोविदारकरञ्जेषु[1] भुक्त्वा चान्द्रायणं चरेत्" इति तथा "पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् । वानप्रस्थो यतिश्चैव लभते चान्द्रिकं फलम् ॥" इति ॥ अथ हस्तदानादिक्रियादुष्टा[2]न्नभोजने प्रायश्चित्तम्--तत्र पराशरः—"माक्षिकं पाणितं* शाकं गोरसं लवण घृतम् । हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम्' इति । कामतस्तु—"हस्तदत्तभोजने अब्राह्मणसमीपभोजने,[3] दुष्टपङ्क्तिभोजने, पङ्क्त्यग्रतो भोजनेऽभ्यक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्नभोजने शूद्रैः सह स्वप्ने त्रिरात्रमभोजनम" इति हारीतोक्तं विज्ञेयम् । पर्यायान्नदातर्दुष्टे[4] तु—'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् । द्वयमेतदभोज्यं स्याद्भुक्त्वा तूपवसेदहः' इति वृद्धयाज्ञवल्क्योक्तमवगन्तव्यम । शूद्रहस्तभोजनेतु—'शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत् क्वचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" इति क्रतूक्तं विज्ञेयम् । धमनदुष्टेऽपि "आसनारूढपादो वा वस्त्रार्धप्रावृतोऽपि वा । मुखेन धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेत्" इति तेनैवोक्तम् । पित्राद्युद्देशेन त्यक्तान्नभोजने तु "भुङ्क्ते चेत्पार्वणश्राद्धे[5] प्राणायामान्षडाचरेत् । उपवासस्त्रिमासादिवत्सरान्त प्रकीर्तितः ॥ प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने । असरूपे स्मृतं नक्तं व्रतं पारणके तथा ॥ द्विगुणं क्षत्रियस्यैतात्त्रिगुणं वैश्यभोजने । साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥ अतिथौ तिष्ठति द्वारि ह्यपः प्राश्नन्ति ये द्विजाः । रुधिरं तद्भवेद्वारि भुक्त्वा चान्द्रायणं चरेत्" इति भारद्वाजोक्तमवगन्तव्यम् । हारीतेनाप्युक्तं[6]—"एकादशाहे भुक्त्वान्न भुक्त्वा संचयने तथा । उपोष्य विधिवत्स्नात्वा कूश्मा-

* फाणितम् इक्षुरसविकारः काकम्बीतिलोके ॥

१. ख दारकदम्बेषु० । २. ख. दुष्टाभोज्य भक्षणे प्राय० । छ क्रियादुष्टस्यभोजने प्रा० । ३. छ. समीपभोजने शूद्रैः सह० । ४. छ. पर्यायदानदष्टेतु० । क, पर्यायान्नदुष्टं च० । ५. क. वेणश्राद्धं प्राणा० । ६. ख. यच्चहारीतो० ।

ण्डैर्जुहुयाद्घृतम्" इति,विष्णुनाप्युक्तं—"प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके। त्रैपाक्षिके तदर्धं तु पञ्चगव्यं द्विमासिके" इतीदं चाऽऽपद्विषयम्, अनापदि तु—"चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके। एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते' इति हारीतोक्तं द्रष्टव्यम्। "प्राजापत्यं तु मिश्रके" इत्येतदाद्यं, मासिकाविषयं द्रष्टव्यं, द्वितीयादिषु तु "प्राजापत्यं नवश्राद्धे पादोनं चाद्य-मासिके। त्रैपाक्षिके तदर्धं स्यात्पादो द्वैमासिके तथा॥ पादोनकृच्छ्रं निर्दिष्टं षण्मासे च तथाब्दिके। त्रिरात्रं चान्यमासेषु प्रत्यहं चेदहः स्मृतम्" इति षट्त्रिंशन्मतोक्तं द्रष्टव्यम्॥ क्षत्रियादिश्राद्धभोजने त्वनापदि तत्रैव विशेष उक्तः—"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः। त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम्॥ क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्। वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु[3] मनीषिभिः॥ शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम्। सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवस्मृतम्॥ मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम्॥' यत्तु शङ्खवचनं—"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः। पक्षत्रयेऽतिकृच्छ्रः स्यात्षण्मासे कृच्छ्र एव तु॥ आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके। अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा' इति—तत्सर्पा-दिहतविषयं, 'ये स्तेनाः पतिताः क्लीबा' इत्याद्यपाङ्क्तेयविषयं वा—"चाण्डालादु-दकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥ पतनानाशकैश्चैव विषोद्बन्धनकैस्तथा। भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विज' इति, तथा 'अपाङ्क्तेयान्यदुद्दिश्य श्राद्धमेकादशेऽहनि। ब्राह्मणस्तत्र भुक्त्वान्नं शिशुचान्द्रायणं चरेत्' इति, 'आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति। संकल्पिते तथा भुक्त्वा त्रिरात्रं[2] क्षपणं भवेत्' इति भरद्वाजेन गुरुप्रायश्चित्ता-भिधानात्॥ ब्रह्मचारिणस्तु[4] बृहद्यमो विशेषमाह—"मासिकादिषु योऽश्नीयादसमाप्त-व्रतो द्विजः। त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते। प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति' इति। इदमज्ञानविषयम्। कामतोऽपि स एवाह—"मधु

१. ख. प्राजापत्यं विधीय०। २. द्विरात्रमिति पाठान्तरम्। ३. ख. क्षत्रियास्तुमनी-षिभिः०। क. क्षत्रियात्तुमनीषिणः शूद्र०। ४. ख. ब्रह्मचारिषु बृह०। क. ब्रह्मचारिणां तु बृह०।

मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव वा। प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत्" इति। आमश्राद्धे तु सर्वत्रार्धम्—"आमश्राद्धे तदर्धं तु प्रायश्चित्तं तु सर्वदा" इति षट्त्रिंशन्मतेऽभिधानात् ॥ यत्तूशनसोक्तं—"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः। ततः संध्यामुपासीत शुद्ध्येत्तु तदनन्तरम्" इति—तदनुक्तप्रायश्चित्तश्राद्धविषयम् संस्काराङ्गभूतश्राद्धभोजने तु व्यासेन विशेष उक्तः—'निवृत्तचूडाहोमे तु प्राङ्नामकरणात्तथा। चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥ अतोऽन्येषु तु भुक्त्वान्नं संस्कारेषु द्विजोत्तमः। नियोगादुपवासेन शुद्ध्यते निन्द्यभोजन" इति। सीमन्तोन्नयनादिषु पुनर्धौम्यो विशेषमाह—"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा। जातश्राद्धे नवश्राद्धे द्विजश्चान्द्रायणं चरेत्" इति। अत्र ब्रह्मौदनाख्यं कर्माऽऽधानाङ्गभूतं—सोमसाहचर्यात् ॥ अथ परिग्रहाभोज्यभोजने प्रायश्चित्तम्। यत्स्वरूपतोऽनिषिद्धमपि विशिष्टपुरुषस्वामिकतयाऽभोज्यं भण्यते—तत्परिग्रहाशुचि। तत्र योगीश्वरेण "अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि" इत्यारभ्य सार्धपञ्चभिः श्लोकैरभोज्यान्नाः प्रतिपादिताः। मनुनापि त एव किञ्चिदधिकाः प्रतिपादिताः—"नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा। स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥ मत्तक्रुद्धातुराणां तु न भुञ्जीत कदाचन। गणान्नं गाणिकान्नं च विदुषां च जुगुप्सितम् ॥ स्तेनगायकयोश्चान्नं तक्ष्णो वार्धुषिकस्य च। दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च। चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ॥ उग्रान्नं सूतिकान्नं च पर्यायान्नमनिर्दशम्। अनर्चितं वृथामांसमवीरायाश्च योषितः ॥ द्विषदन्नमवैर्यन्नं पतितान्नमवक्षुतम्। पिशुनानृतिनोश्चैव क्रतुविक्रयिकस्य च ॥ शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च। कर्मारस्य निषादस्य रङ्गावतरणस्य च। सुवर्णकर्तुर्वेणस्य सोमविक्रयिणस्तथा ॥ श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य

---

१. ख. प्राजापत्यं तु सर्व०। २. ख. कर्मयज्ञाङ्गभूतं०। ३. म. ४. २०५.—२१७. ४. ग. छ. क्लीबेनव श्राद्धेतं भुञ्जी०। ५. छ. गायनयोश्चा०। ६. ग. निगडेनच०। ७. ख. ग. दन्नं न गर्यन्न ०। ८. ग. तान्नमवेक्षितम्। छ. तान्नमधः स्मृतः०। ९. ख. नोश्चैव क्रतुविक्रयिणस्तथा। शल्ढ०। क्रेतुविक्रायकस्य च। शेलू०। १० छ. कर्तुर्वेनस्य० ११. ख. णस्य शस्त्रविक०।

च । रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥ मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः । अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च " इति । अत्र च पदार्था अभक्ष्यकाण्डे[1] व्याख्याताः । अत्र प्रायश्चित्तमाह[2]—" भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत्कृच्छ्रं रेतो विण्मूत्रमेव च " इति । पैठीनसिनाप्यकामतस्त्रिरात्रमेवोक्तं—" कुनखी श्यावदन्तः पित्रा विवदमानः स्त्रीजितः कुष्ठी पिशुनः सोमविक्रयी वाणिजको ग्रामयाजकोऽभिशस्तो वृषल्यामभिजातः परिवेत्तिः परिविन्दानो दिधिषूपतिः पुनर्भूपुत्रश्चौरः काण्डपृष्ठः सेवकश्चेत्यभोज्यान्ना अपाङ्क्तेया अश्राद्धार्हाः एषां भुक्त्वा[3] चाऽविज्ञानात्त्रिरात्रम् " इति ॥ शङ्खेन त्वेतानेव किञ्चिदाधिकान्पठित्वा चान्द्रायणमुक्तं—तदभ्यासविषयम् ॥ गौतमेन पुनः " उच्छिष्टपुंश्चल्यभिशस्ता " इत्यादिना अभोज्यान्पठित्वा " प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च " इति प्रायश्चित्तमुक्तं—तदापद्विषयम् ॥ यस्तु बलात्कारेण भोज्यते[4] तस्यापस्तम्बेन विशेष उक्तः—" बलाद्दासीकृता ये तु म्लेच्छचाण्डालदस्युभिः । अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥ उच्छिष्टमार्जनं चैव तथा तस्यैव[5] भोजनम् ॥ खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ॥ तत्स्त्रीणां च तथा संगस्ताभिश्च सह भोजनम् । मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् । चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥ संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् । मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति ॥ ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः । संवत्सरैस्त्रिभिश्चैव तद्भावं[6] स निगच्छति " इति ॥ आशौचिपरिगृहीतान्नभोजने तु छागलेय[7] आह—" अज्ञानाद्भुञ्जते[8] विप्राः सूतके मृतकेऽपि वा ॥ प्राणायामशतं कृत्वा शुद्ध्यन्ते शूद्रसूतके ॥ वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश । एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनः । ततः[9] शुद्धिर्भवत्येषां पञ्चगव्यं पिबेत्तत " इति । ब्राह्म-

---

१. ख ग. क्ष्यकाण्डे श्राद्धकाण्डे च वाख्या० । २. म. ४ २२२. ३. ख. भुक्त्वा दत्त्वा वाऽविज्ञा० । ४ ख. त्कारेण भुज्यते० । ५. ख. तथोच्छिष्टस्यभोज० । ६. छ. तद्भावं चनिगच्छ० । ७. ख जनेतुछागल आह० । ८. ख. नाद्भोजनेवि० । ९ ग. ततः शुचिर्भवेद्विप्रः पञ्चगव्यं पिबेन्नर' इति० । छ. पिबेदिति । ब्राह्म० ।

णादिक्रमेणैकाहत्र्यहादयो योज्याः, इदमकामकारविषयं, कामतस्तु मार्कण्डेय आह—"भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः ॥ भुक्त्वा तु क्षत्रियाशौचे तथा कृच्छ्रो विधीयते ॥ वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत् । शूद्रस्यैव तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत्" इति ॥ यत्तु शङ्खेनोक्तं—"शूद्रस्य सूतके भुक्त्वा षण्मासान्व्रतमाचरेत् । वैश्यस्य तु तथा भुक्त्वा त्रीन् मासान्व्रतमाचरेत् ॥ क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् । ब्राह्मणस्य तथाशौचे भुक्त्वा मासव्रती भवेत्" इति । इदमभ्यासविषयम् । एतच्च प्रायश्चित्तमाशौचानन्तरं, वेदितव्यं—"ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचं, व्यपगमे तु प्रायश्चित्तं कुर्यात्" इति विष्णुस्मरणात् ॥ अपुत्राद्यन्नभोजने तु लिखित आह—"भुक्त्वा वार्धुषिकस्यान्नमव्रतस्यासुतस्य च । शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनं, तथा "परपाकनिवृत्तस्य परपाकरतस्य च । अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत्" इति—एतच्चाभ्यासविषयम् ॥ परपाकनिवृत्तादेर्लक्षणं तेनैवोक्तं—"गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् । परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥ पञ्चयज्ञान्स्वयं कृत्वा परान्नमुपजीवति । सततं प्रातरुत्थाय परपाकरतस्तु सः ॥ गृहस्थधर्मवृत्तो या ददातिपरिवर्जितः । ऋषिभिर्धर्मतत्वज्ञैरपचः संप्रकीर्तित" इति ॥ यत्तु ब्रह्मचार्याद्यन्नभोजने वृद्धयाज्ञवल्क्य आह—"यतिश्च ब्रह्मणचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्" इति, यच्च पार्वणश्राद्धाद्यकर्तुरन्नभोजने भरद्वाज आह—'पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः॥ भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत्" इति—तदुभयमप्यभ्यासविषयम् ॥ पूर्वपरिगणितातिरिक्ता ये निषिद्धाचरणशीलास्तदन्नभोजने तु—"निराचारस्य विप्रस्य निषिद्धाचरणस्य च । अन्नं भुक्त्वा द्विजः कुर्यादिनमेकमभोजनम्" इति षट्त्रिंशन्मतोक्तं वेदितव्यम् । अत्रैव संवत्सराभ्यासे षट्त्रिंशन्मत एवोक्तम्—"उपपातकयुक्तस्य अब्दमेकं निरन्तरम् । अन्नं भुक्त्वा द्विजः कुर्यात्पराकं तु

---

१. द्विजश्चान्द्रायण चरेदिति पाठान्तरम् । २. ख. शौचे तप्तकृ० । छ. भुक्त्वाद्विजश्चान्द्रायणं चरेत' इति । ३. ख. पञ्चयज्ञांस्तुयः कृत्वा परान्नादुप० । ४. छ. मुक्तः स्याद० ।

विशोधनम्" इति । इदं चाभक्ष्यभक्षणप्रायश्चित्तकाण्डगतविशेषोदितव्रतकदम्बकं द्विजाग्र्यस्यैव क्षत्रियादीनां तु पादपादहान्या भवति—"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् । वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु शस्यते" इति विष्णुस्मरणात् ॥

इत्यभक्ष्यभक्षणप्रायश्चित्तप्रकरणम् ॥

---

निमित्तपरिगणनवेलायामुपपातकानन्तरं जातिभ्रंशकरादीनि परिगणितानि तत्र प्रायश्चित्तान्युच्यन्ते । तत्र मनुः—"जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ संकरापात्रकृत्यासु मासः शोधनमैन्दवः । मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम्" इति । अन्यतममिति सर्वत्र संबध्यते । यमेनाप्यत्र विशेष उक्तः—"संकरीकरणं कृत्वा मासमश्नाति यावकम् । कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥ अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति ॥ शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा । मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्" इति । बृहस्पतिनापि जातिभ्रंशकरे विशेष उक्तः—"ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् । निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत्" इति । एतेषां च जातिभ्रंशकरादिप्रायश्चित्तानां मन्वाद्युक्तानां जातिशक्त्याद्यपेक्षया विषयो विभजनीयः । एवं योगीन्द्रहृद्गतमभक्ष्यभक्षणादिप्रायश्चित्तम् संक्षेपतो दर्शितम् ॥ अधुना प्रकृतमनुसरामः ॥ २९० ॥

महापातकमतिपातकमनुपातकमुपपातकं प्रकीर्णकमिति पञ्चविधं पापजातमुक्तम् । तत्र चतुर्विधंप्रायश्चित्तमभिधाय क्रमप्राप्तं प्रकीर्णकप्रायश्चित्तमाह—

**प्राणायामीजले स्नात्वा खरयानोष्ट्रयानगः ।**

**नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥२९१॥**

खरयुक्तं यानं खरयानम्, उष्ट्रयुक्तं यानमुष्ट्रयानं रथगन्त्र्यादि तेनाध्वगमनं

१. छ. पपातकाद्यनन्तरं० । २. छ. सङ्करापात्र० । ३. छ. कृत्वातप्तकृच्छ्रेण० । ४. ख. नेनवा । मलि० । ५. ख. प्रकीर्णकप्राप० । ६. छ. णायामाञ्जलेस्ना० ।

कृत्वा दिगम्बरः स्नात्वाभ्यवहृत्य दिवा वासरे च निजाङ्गनासंभोगं कृत्वा च तडागतरङ्गिण्यादाववगाह्य कृतप्राणायामः शुध्यति । इदं च कामकारविषयम्- "उष्ट्रयानं समारुह्य खरयानं तु कामतः । सवासा[1] जलमाप्लुत्य प्राणायामेन शुद्ध्यति' इति मनुस्मरणात्[2],[3] अकामतः स्नानमात्रं कल्प्यम् । साक्षात्खरारोहणे तु द्विगुणावृत्तिः कल्पनीया—तस्य गुरुत्वात् ॥ २९१ ॥

किं च—

**गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः ।**

**बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्[4] ॥ २९२ ॥**

गुरुं जनकादिकं त्वङ्कृत्य त्वमेवमात्थ त्वयैवं कृतमित्येकवचनान्तयुष्मच्छब्दोच्चारणेन निर्भर्त्स्य विप्रं वा ज्यायांसं समं कनीयांसं वा सक्रोधं हुं तूष्णीमास्व हुं तूष्णीमास्व हुं मा बहुवादीरित्येवमाक्षिप्य जल्पवितण्डाभ्यां जयफलाभ्यां विप्रं निर्जित्य कण्ठे वाससा मृदुस्पर्शेनापि बद्ध्वा क्षिप्रं पादप्रणिपातादिना प्रसाद्य क्रोधं त्याजयित्वा दिनमुपवसेत् । अनश्नंस्तं[5] वासरं वसेत् ॥ यत्तु यमेनोक्तं— "वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया । त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्" इति—तदभ्यासविषयम् ॥ २९२ ॥

किं च—[6]

**विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।**

**कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते[7] ॥२९३॥**

विप्रजिघांसया दण्डाद्युद्यमे कृच्छ्रः शुद्धिहेतुः, निपातने(ताडने)अतिकृच्छ्रः, असृक्पाते रुधिरस्रावणे पुनः कृच्छ्रातिकृच्छ्रः,अभ्यन्तरशोणितेऽपि कृच्छ्रः शुद्धिहेतुः॥ बृहस्पतिनाप्यत्र विशेषो दर्शितः–'काष्ठादिना ताडयित्वा त्वक्भेदे कृच्छ्रमाचरेत्। अस्थिभेदेऽतिकृच्छ्रः स्यात्पराकस्त्वङ्गकर्तने' इति ॥ पादप्रहारे तु यम आह--'पादेन ब्रा-

1. ख. स्नात्वा तु विप्रो दिग्वासाः पाणा० । २. ११. २०२. । ३. छ. रणात् । किं च गुरु० । ४. ख. वाससाक्षिप्रं पसा० । ५. ख. नश्नन्कृत्स्नवासरं नयेत्० । ६. किं चाह० विप्र० । ७. ख. कृच्छ्रोऽल्पतरशोणिते ।

ह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया । दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्" इति ॥ मनुना त्वन्यानि प्रकीर्णकप्रायश्चित्तानि दर्शितानि—"विनाद्भिरप्सु वाप्यार्तः शारीरं संनिषेव्य तु । सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति" इति । विनाद्भिरित्यसंनिहितास्वपीत्यर्थः । शारीरं मूत्रपुरीषादि । इदमकामविषयं, कामतस्तु "आपद्गतो विना तोयं शारीरं यो निषेवते । एकाहं क्षपणं कृत्वा सचेलः स्नानमाचरेत् इति यमोक्तं वेदितव्यम् ॥ यत्तु सुमन्तुनोक्तं—"अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रम्" इति—तदनार्तविषयमभ्यासविषयं वा ॥ नित्यश्रौतादिकर्मलोपे तु मनुराह—"वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" इति । श्रौतेषु दर्शपौर्णमासादिकर्मसु स्मार्तेषु च नित्यहोमादिषु प्रतिपदोक्तेष्ट्यादिप्रायश्चित्तैरुपवासस्य समुच्चयः ॥ स्नातकव्रतानि "न जीर्णमलवद्वासा भवेच्च विभवे सति" इत्येवमादीनि प्रागुक्तानि । स्नातकव्रतमधिकृत्य क्रतुनाप्युक्तम्—"एतेषामाचाराणामेकैकस्य व्यतिक्रमे गायत्र्यष्टशतं जप्यं कृत्वा पूतो भवति" इति ॥ पञ्चमहायज्ञाकरणे तु बृहस्पतिराह—"अनिर्वर्त्य महायज्ञान्यो भुङ्क्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति ॥ आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि । ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्धमाचरेत्" इति ॥ द्वितीयादिभार्योपरमे तु देवल आह—"मृतां द्वितीयां यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत्" इति ॥ स्वभार्याभिशंसने तु यम आह—"स्वभार्यां तु यदा क्रोधादगम्येति नरो वदेत् । प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ॥ षड्रात्रं तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेत्" इति ॥ अस्नातभोजनादौ हारीत आह—"वहन्कमण्डलुं रिक्तमस्नातोऽश्नंश्च भोजनम् । अहोरात्रेण शुद्धिः स्याद्दिनजाप्येन चैव हि" इति ॥ एकपङ्क्त्युपविष्टानां स्नेहादिना वैषम्येण दानादौ यम आह—"न पङ्क्त्यां विषमं दद्यान्न याचेत न दापयेत् प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः ॥ नदीसंक्रमहन्तुश्च कन्याविघ्नकरस्य च । समे विषमकर्तुश्च निष्कृतिर्नोपपद्यते ॥ त्रयाणां-

---

१. म. १२. १०२. ख. सचैलोजलमाविशेदिति० । २. ख. न्तुवचनं मप्स्व० । ३. नदापयेत् । याचकोदायकोदातानैवस्वर्गस्यगामिनः । प्रा.जा० । ४. ख. निष्कृतिर्नविधीयते । त्रया०

मपि चैतेषां प्रत्यापत्तिं तु मार्गताम् । भैक्षलब्धेन चान्नेन द्विजश्चान्द्रायणं चरेत्' इति । संक्रम उदकावतरणमार्गः । समे विषमकर्ता पूजादौ ॥ इन्द्रधनुर्दर्शनादावृष्यश्‍ृङ्ग आह—इन्द्रचापं पलाशाग्निं यद्यन्यस्य प्रदर्शयेत् । प्रायश्चित्तमहोरात्रं धेनुर्दण्डश्च दक्षिणा" इति । पतितादिसंभाषणे तु गौतम आह-"न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन सह वा संभाषेत तल्पान्नधनलाभवधे पृथग्वर्षाणि" इति । भार्यान्नधनानां लाभस्य वधे विघ्नकरणे प्रत्येकं संवत्सरं प्राकृतं ब्रह्मचर्यम् ॥ तथा "ब्रह्मसूत्रं विना विण्मूत्रोत्सर्गादौ स्मृत्यन्तरे प्रायश्चित्तमुक्तं—विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः । प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा । तत्र ऊर्ध्वोच्छिष्टे उपवासः, अधोच्छिष्टस्योदकपानादिषु गायत्रीजप इति व्यवस्था । अकामतस्तु –"पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः । प्राणायामात्रिकं षट्कं नक्तं च त्रितयं क्रमात्' इति स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ भुक्त्वा शौचाचमनमकृत्वोत्थाने तु 'यद्युत्तिष्ठत्यनाचान्तो भुक्त्वा वाऽनशनात्ततः । सद्यः स्नानं प्रकुर्वीत सोऽन्यथा पतितो भवेत् इति स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ "दण्डयं चौराद्युत्सर्गादौ वासिष्ठ आह— "दण्डयोत्सर्गे राजैकरात्रमुपवासेनत्रिरात्रं पुरोहितः कृच्छ्रमदण्डयदण्डने पुरोहितस्त्रिरात्रं राजा कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयाताम्' इति। उद्धरेयातं दन्तान्नखांश्चेत्यभिप्रेतम् । स्तेनपतितादिपङ्क्तिभोजने तु मार्कण्डेय आह —"अपाङ्क्तेयस्य यः कश्चित्पङ्क्तौ भुङ्क्ते द्विजोत्तमः । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति' इति ॥ नीलीविषयेत्वापस्तम्ब आह—'नीली रक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्धयति ॥ रोमकूपैर्यदा गच्छेद्रसो नील्यास्तु कर्हिचित् । त्रिषु वर्णेषु सामान्यं तप्तकृच्छ्रं विशोधनम् ॥ पालनं विक्रयश्चैव तद्वृत्त्या तूपजीवनम् । पातकी च भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति॥

१. ख. प्रत्यापत्तिस्तुमार्ग० । प्राजापत्यं तुमार्गणम् । भैक्ष० । २. छ. च्छिष्टमभक्षोदकपानेषु गा० । ग. च्छिष्टोत्नैदकपानेषु गा० । ३. ग. चान्तो भुक्तवानासनात्ततः० । ४. ख. ग. द्रष्टव्यम् । चोराद्य० । ५. ख. ग. छ. दण्डोत्सर्गे० । ६. छ. रात्रं चरित्वोद्धरे० । ७. ख. यातां कुत्सितानोदन्तानां नखानां चोद्धरणं कुर्यातामित्यर्थः । स्तेन० ।

नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरतः । शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत् ॥ स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति' इति । भृगुगाप्युक्तं—“स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति । नृपस्य वृद्धौ वैश्यस्य पर्ववर्जं विधारणम्' इति ॥ तथा वस्त्रविशेषकृतश्च प्रातिप्रसवः—“कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति” इति स्मरणात् ॥ अक्षतरुनिर्मितखट्वाद्यारोहणे शङ्ख आह—“अध्यस्य शयनं यानमासनं पादुके तथा। द्विजः पलाशवृक्षस्य त्रिरात्रं तु व्रतीभवेत् ॥ क्षत्रियस्तु रणे पृष्ठं दत्वा प्राणपरायणः । संवत्सरं व्रतं कुर्याच्छित्वा वृक्षं फलप्रदम् ॥ द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरेत् ॥ होमकाले तथा दोहे स्वाध्याये दारसंग्रहे । अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत्' इति । दोहे सान्नाय्याद्यङ्गभूते । एतच्चाभ्यासविषयम् । सच्छिद्रादित्याद्यरिष्टदर्शनादौ शङ्ख आह—“दुःस्वप्नारिष्टदर्शनादौ घृतं सुवर्णं च दद्यात्” इति ॥ क्वचिद्देशविशेषगमनेऽपि देवल आह—“सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति” इति । एतच्च तीर्थयात्राव्यतिरेकेण द्रष्टव्यम् ॥ स्वपुरीषदर्शनादौ यम आह — “प्रत्यादित्यन्नमेहेत नपश्येदात्मनः शकृत् । दृष्ट्वा सूर्यं निरीक्षेत ब्राह्मणं गामथापिवा' इति अथशङ्खः—“पादप्रतापनं कृत्वा कृत्वा वह्निमधस्तथा । कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेत्” इति ॥ क्षत्रियाद्युपसंग्रहणे हारीत आह—“क्षत्रियाभिवादनेऽहोरात्रमुपवसेत्, वैश्याभिवादने द्विरात्रं शूद्रस्याभिवादने त्रिरात्रमुपवास इति ॥ तथा “शय्यारूढपादुकोपानदारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजादिरताभिवादने त्रिरात्रमुपवासः स्याद् अन्यत्रनिमन्त्रितेऽप्यन्यत्र भोजनेऽपित्रिरात्रम्” इति । समित्पुष्पादिहस्तस्याभिवादनेऽप्येतदेव—“समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकम् । जपं होमं च कुर्वाणं नाभिवादेत वै द्विजम्” इत्यापस्तम्बीये जपादिभिः समभिव्याहारात् ॥ अभि-

---

१. ख. रणात् तरुनिर्मित०। २. ख. ग. कलिङ्गान्ध्रान् गत्वा० । ३. ख. क्षेतगामग्निं ब्राह्मणं तथेति० । ४. ख. दिति । शङ्खोप्याह—पाद० । ग. दिति । शङ्खः—पात० । ५. ख. य्यारूढपादुकानहारोपि० । ६. ख. पूजानिरता० । ७. ख. ग. न्त्रितेनान्यप० ।

वादकस्यापीदमेव प्रायश्चित्तं—"नोदकुम्भहस्तोऽभिवादयेत् न भैक्षं चरन्न पुष्पाज्यादिहस्ते । नाशुचिर्न जपन्न देवपितृकार्यं कुर्वन्न शयान" इति तस्यापि शङ्खेन प्रतिषेधात् ॥ एवमन्यान्यपि वचांसि स्मृत्यन्तरतोऽन्वेष्याणि ग्रन्थगौरवभयादत्र न लिख्यन्ते ॥ २९३ ॥

॥ इति प्रकीर्णकप्रायश्चित्तप्रकरणम् ॥

---

निमित्तानामानन्त्यात्प्रतिव्यक्तिप्रायश्चित्तस्य[1] वक्तुमशक्यत्वात्सामान्यत उपदिष्टानुपदिष्टविषये प्रायश्चित्तविशेषज्ञानार्थमिदमाह—

**देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।**
**प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥ २९४ ॥**

यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं वा तद्देशादिकमवेक्ष्य यथा कर्तुः प्राणविपत्तिर्न भवति तथा विषयविशेषे कल्पनीयं—इतरथा प्रधाननिवृत्तिप्रसङ्गात्;[2] तथा वक्ष्यति—'वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्यदृग्' इति—तत्र यदि हिमवद्गिरिनिकटवर्तिनामुदकवास उपदिश्यते अतिशीताकुलिते वा शिशिरादिकाले—तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोदकवासः कल्पनीयः । तथा वयोविशेषादपि—यदि नवतिवार्षिकादेरपूर्णद्वादशवार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते—तदा प्राणा विपद्येरन्निति, ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यं अत एव स्मृत्यन्तरे 'क्वचिदर्धं क्वचित्पाद' इति वृद्धादिषु प्रायश्चित्तस्यह्रासोऽभिहितः। तच्च प्राक्प्रपञ्चितम्। तथा धनदानतपश्चरणादि-शक्त्यपेक्षया च, न हि निर्धनस्य 'पात्रे धनं वा पर्याप्तम्' इत्याद्युपपद्यते तथोद्रिक्तपित्तादेर्वा पराकादिकं, नापि स्त्रीशूद्रादेर्जापादिकम्, अत एव गजादीनामशक्नुवन् "दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये" इत्युक्तम् । तथा प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च" इति तपस्यशक्तस्य स्मृत्यन्तरे प्राक् प्रायश्चित्तस्यह्रासोऽभिहितः ।[3] तथा पापं च महापातकादिरूपेण प्रत्ययाप्रत्ययसकृदभ्यासस्वरूपेण[4] वाऽवेक्ष्य यत्नतः सकलधर्म-

---

१. ख. श्चित्तानिमित्तस्यव० । २. ख. सङ्गात् । तथा० । ३. ख. हितः । पाप च हापातकादिरूपेण० । ४. ख. भ्यासादिरूपे० ।

शास्त्रपर्यालोचनया प्रायश्चित्तं कल्पनीयम् । तत्राऽकामतो यद्विहितं तदेव कामकृते द्विगुणं, कामतोऽभ्यासे चतुर्गुणम् इत्येवं स्मृत्यन्तरानुसारेण कल्पनीयम् । तथा "महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् । अब्भक्षो मासमासीत" इत्युक्तं तत्र महापापोपपापयोस्तुल्यप्रायश्चित्तस्यायुक्तत्वात्पापापेक्षयोपपातके मासिकव्रतस्य ह्रासः कल्पनीयः[1] । यत्र च हसितजृम्भितास्फोटनानि नाकस्मात्कुर्यात्तथा 'नोदन्वतोऽम्भासि स्नायान्न च श्मश्रादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम्' इत्यादौ प्रायश्चित्तं नोपदिष्टं—तत्रापि देशाद्यपेक्षया प्रायश्चित्तं कल्प्यम् ॥ ननु किञ्चिदपि निमित्तजातमनुक्तनिष्कृतिकमुपलभ्यते—"प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्यचैव हि' इत्यनुक्तनिष्कृतिष्वपि प्रायश्चित्तस्य वक्ष्यमाणत्वात् ॥ गौतमेनापि 'एतान्येवानादेशे विकल्पेन क्रियेरन्' इत्येकाहादयः प्रतिपादिताः ॥ उच्यते ॥ सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशः, तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः, न च हसितादिषु, सर्वत्र प्राणायामशतं युक्तं—"निमित्तस्यो[2]ऽति लघुत्वात् । अतः पापापेक्षया ह्रासः कल्पनीयः, प्रायश्चित्तान्तरं वा । ननु कथं पापस्य लघुत्वं येन प्रायश्चित्तस्य ह्रासकल्पना स्यात् न[3] च प्रायश्चित्ताल्पत्वादिति वाच्यम् । उक्तनिष्कृतित्वादेव ॥ सत्यम् ॥ किं तु अर्थवादसंकीर्तनाद्बुद्धिपूर्वाद्यपेक्षया[4] च सुबोध एव दोषस्य गुरुलघुभावः, तथा दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावः । यथा ब्राह्मणावगोरणादौ सजातीयविषये प्राजापत्यादिकमुक्तम् । तत्र यदा प्रतिलोमाऽऽनुलोम्येन प्रातिलोम्येन वाऽवगोरणादि क्रियते, यदा वा मूर्धावसिक्तादिभिस्तदा दण्डस्य तारतम्यदर्शनादेव[5] दोषाल्पत्वमहत्त्वावगमात्प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः । दर्शितश्च दण्डस्य गुरुलघुभावः प्रतिलोमापवादेषु[6] "द्विगुणास्त्रिगुणो दमः" इत्यादिना ॥ २९४ ॥

१. ख. नीयः । तत्र° । २. त्तस्यलघु० । ३. ख. स्यात् । तत प्रायश्चित्ताल्पत्वंवाच्यम् । अनुक्त० । ४. ख. पूर्वाद्युद्धिपूर्वानुबन्धाद्यपेक्ष० । ५. ख. नादोषा । छ. नादोषा । ६. ख प्रतिलोम्याप ।

## ७. पतितत्यागविधिः ॥

एवं महापातकादिभिः पतितस्य प्रायश्चित्तमुक्तं; यस्त्वौद्धत्यादेतन्न चिकीर्षति तस्य किं कार्यमित्यत आह—

**दासीकुम्भं बहिर्ग्रामान्निनयेरन्स्वबान्धवाः ।**
**पतितस्य बहिःकुर्युः सर्वकार्येषु चैव तम् ॥ २९५ ॥**

जीवत एव पतितस्य ये ज्ञातयो बान्धवा[१]: पितृमातृपक्षास्ते सर्वे संनिपत्य दासी प्रेष्या तया सपिण्डादिप्रेषितया आनीतमपां पूर्णं कुम्भं घटं ग्रामाद्बहिर्निनयेयुः। एतच्चतुर्थ्यादिरिक्ता[३]तिथिष्वह्नः पञ्चमे भागे गुर्वादिसंनिधौ कार्यम् । "पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः । निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥" इति[४] मनुस्मरणात् अथवा दास्येव सपिण्डादिप्रयुक्ता निनयेत् ; यथाऽऽह मनुः—"दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा । अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह" ॥ " इति[५] । प्रेतवदिति दक्षिणामुखापसव्ययोः प्राप्त्यर्थम् । एतच्च निनयनं उदकपिण्डदानादिप्रेतक्रियोत्तरकालं द्रष्टव्यम्—"तस्य विद्यागुरुयोनिसंबन्धाश्च[६] सन्निपात्य[७] सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः; पात्रं चास्य विपर्यस्ययुः; दासः कर्मकरो वाऽवकरात् पात्रमानीय दासी घटान् पूरयित्वा दक्षिणाभिमुखः पदा विपर्यस्येदिदम् ; अमुमनुदकं करोमीति नामग्राहं तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखाः ; विद्यागुरवो योनिसंबन्धाश्च वीक्षेरन् ; अप उपस्पृश्य ग्रामं प्रविशेयुः" इति[८] गौतमस्मरणात् । अयं च त्यागो यदा बन्धुभिः प्रेर्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः—"तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येत्" इति शङ्खस्मरणात् । ततस्तं लब्धोदकं पतितं सर्वकार्येषु संभाषणसहासनादिषु बहिः कुर्युर्वर्जयेयुः । तथा च

---

१. ग. त्यादिना । २. छ. ग. छ. वा मातृ । ३. ग. छ. रिक्ता । ४.—११ १८२. । ५.—११. १८३. । ६. संबद्धाश्च । ७. ग. निपात्य । ८.—१९. २, ३, ४, ५, ६, ७. ।

मनुः—" निवर्तेरंस्ततस्तस्मात्संभाषणसहासने। दायाद्यस्य प्रदानं च यात्रामेव च लौकिकीम्॥" इति। हि स्नेहादिना संभाषणं करोति तदा प्रायश्चित्त कार्यम्; अत ऊर्ध्वं तेन संभाष्य तिष्ठेदेकरात्रं जपेत्सावित्रीमज्ञानपूर्वं ज्ञानपूर्वं चेत्त्रिरात्रमिति॥ २९५॥

यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः प्रायश्चित्तं कुर्यात् तदा किं कार्यमित्यत आह—

**चरितव्रत आयाते निनयेरन्नवं धटम्।**
**जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः॥ २९६॥**

कृतप्रायश्चित्ते बन्धुसमीपं पुनरायाते तत्सपिण्डाद्यास्तेन सहिता नवं अनुपहतं घटं उदकपूर्णं निनयेयुः। एतच्च निनयनं पुण्यहृदादिस्नानोत्तरं द्रष्टव्यम्—" प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम्। तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये॥" इति मनुस्मरणात्। गौतमेन तु विशेष उक्तः---" यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् हृदात्पूरयित्वा स्रवन्तीभ्यो वा, तत एनमप उपस्पर्शयेयुः; अथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेत् "शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तामिह गृह्णामि इति; एतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयात्; हिरण्यं दद्याद्गां च आचार्याय; यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्धयेत्; एतदेव शान्त्युदकं सर्वेषूपपातकेषु" इति। तत एनं कृतप्रायश्चित्तं ते नैव कुत्सयेयुः; तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः॥ २९६॥

पूर्वोक्तस्य पतितपरित्यागादिविधेरतिदेशमाह—

**पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः।**
**वासो गृहान्तिके देयम् अन्नं वासः सरक्षणम्॥२९७॥**

---

१—११. १८४.। २. ख. त च कृतं। छ. तंकृतं। ३.—११. १८६.। ५.—
१९. १०, १, २, ३, ४, ५, ७.।

य एव पुरुषाणां परित्यागे पिण्डोदकदानविधिः कृतप्रायश्चित्तानां च परिग्रहविधिः स एव पतितानां स्त्रीणामपि वेदितव्यः । इयांस्तु विशेषः—पतिताभ्योऽपि ताभ्यः कृतोदकादिकर्मभ्यो वासस्तृणपर्णमयं कुटीरगृहकं प्रधानगृहसमीपे देयम् । तथा प्राणधारणमात्रमन्नं मलिनं च वस्त्रं पुनः पुरुषान्तरोपभोगनिवारणसहितं सातिरस्कारं देयम् ॥ २९७ ॥

ननु काः पतितास्ता यासामयम् परित्यागविधिरित्यत्राऽऽह—

**नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।**
**विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥ २९८**

हीनवर्णगमनं, गर्भपातनम्, अब्राह्मण्या अपि भर्तुः अब्राह्मणस्यापि हिंसनम्—इत्येतानि स्त्रीणामसाधारणानि पतननिमित्तानि । अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकानुपपातकान्यभ्यस्तानि चोपपातकानि तान्यपि स्त्रीणां ध्रुवं निश्चितं पतनकारणानि भवन्ति । अत एव शौनकः—"पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव; ब्राह्मणी हीनवर्णसेवायामधिकं पतति" इति यत्तु वसिष्ठेनोक्तम्—"त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः । भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनम् ॥" इति । भ्रूणहत्याग्रहणं कृतं तत् दृष्टान्तार्थं न पुनरितरेषां महापातकादीनां पतनहेतुत्वनिरासार्थम् । यदपि तेनैव—"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ; पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥" इति चतसृणामेव परित्याग इत्युक्तं तस्यापि तासां प्रायश्चित्तमचिकीर्षन्तीनां मध्ये चतसृणामेव शिष्यगादीनां चैलान्नगृहवासादिजीवनहेतुत्वाद्युच्छेदेन त्यागं कुर्यात्, नान्यासामित्यभिप्रायः । अतश्चान्यासां पतितानां प्रायश्चित्तमकुर्वतीनामपि "वासो गृहान्तिके देय" इत्यादिकं कर्तव्यमित्यवगम्यते ॥ २९८ ॥

जुगुप्सेरन्न चाऽप्येनं संविशेयुश्च सर्वशः ।" "इत्यस्यापवादमाह—

**शरणागतबालस्त्रीहिंसकान्सवसेन्न तु ।**

---

१. ख, नां प । २. ख. ताभ्यः स्त्रीभ्यः कृ । ३ त देयम् । ४. ग. छ. पतिता या सां । ५. ख कादीनि । ६.—२८७ । ७ ग. छ. तेन—च० । ८.—२१. १०. । ९. ग. कुर्वन्तीनां । १०. पृ० १९६. पु. १३८१. ।

**चीर्णव्रतानपि सदा[1] कृतघ्नसहितानिमान् ॥२९९॥**

शरणागतादिव्यापादनकारिणः कृतघ्नसहितान्प्रायश्चित्तेन क्षीणदोषानपि न संव्यवहरेदिति वाचनिकोऽयं प्रतिषेधः । किमिदं वचनं न कुर्यान्न हि वचनस्यातिभारोऽस्ति अतश्च यद्यपि व्यभिचारिणीस्त्रीवधेऽल्पीयएव प्रायश्चित्तं तथापि वाचनिकोऽयं संव्यवहारप्रतिषेधः ॥ २९९ ॥

एव पसंगेन स्त्रीषु विशेषमभिधाय पूकृत एव चरितव्रतविधौ विशेषमाह—

**घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्**
**सदद्यात्[2]प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥ ३०० ॥**

घटेऽपवर्जिते हृदादुद्धृत्य पूर्णकुम्भे[3]ऽवनिनीतेऽसौ चरितव्रतः सपिण्डादिमध्यस्थो गोभ्यो यवसं दद्यात्[4] । ताभिः प्रथमं सत्कृतस्य पूजितस्य पश्चाज्ज्ञातिभिः ज्ञात्यादिभिः[5] सत्क्रिया कार्या[6] । गोभिश्च तस्य सत्कारस्तद्दत्तयवसभक्षणमेव । यदि गावस्तद्दत्तं यवसं न गृह्णीयुस्तर्हिपुनः प्रायश्चित्तमनुतिष्ठेत् यथाऽऽह • हारीतः—
"स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः प्रतिगृह्णीयुरथैनं प्रवर्तयेयुः" इति ।
इतरथा नेत्यभिप्रेतम् ॥ ३०० ॥

महापातकादिपञ्चविधेऽपि दोषगणे[7] प्रातिस्विक व्रतसंदोहमभिधायाधुना[8] सकलव्रतसाधारणधर्ममाह[9]—

**विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।**

यद्दोषो[10] यावत्कर्तृसंपाद्यस्ततोऽन्यैर्विख्यातो विज्ञातो[11] दोषो यस्यासौ पर्षदुपदिष्टं व्रत कुर्यात । यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथाऽपि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्यात् । तदुपगमने चाङ्गिरसा विशेष उक्तः ।
"कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्धयेत्पापं यावन्नाख्याति पर्षदि ॥ सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । पर्षदानुमतस्तत्त्वं सर्वं विख्यापयेन्नरः ॥ व्रतमादाय भूयोऽपि तथा स्नात्वा व्रतं चरेत् ॥" इति ॥ विख्या·

---

१. ख. छ. सतः । २. ख. प्रद । ३. ख. पूर्णेकु । ४. ग छ. दद्यात् । ५. ख. छ. तिभि; स । ६. ग. कर्तव्या । ७. ग. दूषणे । ८. ख. कव्र । ९. ख. रणं धा १०. ग. यो दो । ११. ख. छ. ज्ञातो ।

पनं च दक्षिणादानानन्तरं कार्यम् । यथाऽऽह पराशरः । "पापं विख्यापयेत्पापो दत्वा धेनुं तथा वृषम्" इति । एतच्चोपपातकविषयम् । महापातकादिष्वधिकं कल्प्यम् । यत्तूक्तम्—"तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणि । विख्याप्य पापं वक्तृभ्यःकिञ्चिद्दत्वा व्रतं चरेत् ॥" इति तत्प्रकीर्णकविषयम् । पर्षत्स्वरूपं च मनुना दर्शितम्—"त्रैविद्योहैतुकस्तर्की नैरुक्तोधर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा ॥" हैतुको मीमांसार्थादितत्वज्ञ; । तर्की न्यायशास्त्रकुशलः । तथाऽन्यदपि पर्षद्द्वयं तेनैव दर्शितम् । "ऋग्वेदविद्यजुर्विच्चसामवेदविदेव च । अपरा पर्षत् विज्ञेया धर्मसंशयनिर्णये" इति । तथा "एकोऽपि वेदविद्धर्मं यं व्यवस्येत्समाहितः । स ज्ञेयः परमो धर्मो नाज्ञानामुदितोऽयुतैः ॥" इति । आसां च पर्षदां संभवापेक्षया व्यवस्था महापातकाद्यपेक्षया वा, यत्तु स्मृत्यन्तरेऽभिहितम्—"पातकेषु शतं पर्षत्सहस्रं महदादिषु । उपपापेषु पञ्चाशत्स्वल्पं स्वल्पे तथा भवेत् ॥" इति तदपि महापातकादिदोषानुसारेण पर्षदो गुरुलघुभावप्रतिपादनपरं न पुनः संख्यानियमार्थम्—मन्वादिमहास्मृतिविरोधप्रसङ्गात् ॥ तथा देवलेन चात्र विशेषो दर्शितः—"स्वयं तु ब्राह्मणाब्रूयुरल्पदोषेषु निष्कृतिम् । राजा च ब्राह्मणाश्चैव महत्सु च परीक्षिताम् ॥" इति ॥ तथा च पर्षदा अवश्यं व्रतमुपदेष्टव्यम् । "आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः ॥" इत्याङ्गिरःस्मरणात् । तथा च पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम्—"अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदं व्रजेत् ॥" इति वसिष्ठस्मरणात् ॥ क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः—"न्यायतो ब्राह्मणः क्षिप्र क्षत्रियादेः कृतैनसः । अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥" इति । तत्र च यागाद्यनुष्ठानशीलानां जपादिकं वाच्यम् । इतरेषां तु तपःकर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः । जपहोमादिकं तेभ्यो विशेषेण प्रदीयते ॥ ये नामधारका विप्रा मूर्खा धनविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥" इति प्रकाशप्रायश्चित्तप्रकरणम् ॥

१. ख. चेति नास्ति । २. ग. रे । ३. ख. पर्षद्वय । ४.—१२. १११. । ५. ग. जुर्वेदी । ६.—१२. ११२. । ७.—१२. ११३. । ८. श. स्वल्पं । ९. ख. चेति नास्ति । १० ग. इदं नास्ती ।

अथ रहस्यप्रायश्चित्तम् ।

व्याख्यायख्यातदुरितशातनीं व्रतसंततिम् ।
रहःकृताघसंदोहहारिणीं व्याहरन्मुनिः ॥

तत्र प्रथमं सकलरहस्यव्रतसाधारणं धर्ममाह—

**अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०१ ॥**

कर्तृव्यतिरिक्तैरनभिख्यातो दोषो यस्यासौ रहस्यमप्रकाशं प्रायश्चित्तमनुतिष्ठेत् । अतः स्त्रीसंभोगादौ तस्या अपि कारकत्वात् तदितरैरविज्ञातदोषस्य रहस्यव्रतमिति मन्तव्यम् । तत्र यदि कर्ता स्वयं धर्मशास्त्रकुशलस्तदा परास्मिन्नविभाव्य स्वनिमित्तोचितं प्रायश्चित्तमनुतिष्ठेत् । यस्तु स्वयमनभिज्ञोऽसौ केनचिद्रहोब्रह्महत्यादिकं कृतं तत्र किं रहस्यप्रायश्चित्तमित्यन्यव्याजेनावगम्य रहोव्रतमनुतिष्ठेत् । अत एव स्त्रीशूद्रयोरप्यमुनैवमार्गेण रहस्यव्रतज्ञानसिद्धेरधिकारसिद्धिः । न च वाच्यं रहस्यव्रतानां जपादिप्रधानत्वादाविद्ययोश्च स्त्रीशूद्रयोस्तदनुपपत्तेरनधिकार इति ; यतोऽनैकान्ततो रहस्यव्रतानां जपातिप्रधानत्वम्, दानादेरप्युपदेशात् गौतमोक्तप्राणायामादेरपि संभवाच्च ! इतरेषामपि मन्त्रदैवतर्षिच्छन्दःपरिज्ञानमात्रमेवाधिकारोपयोगि नत्वन्यस्यैव विषयम् । न हि तडागनिर्माणादौ ज्योतिष्टोमादिविषयिणी विप्रतिपत्तिरुपयुज्यते । देवतादिपरिज्ञानं त्ववश्यमपेक्षणीयम्—"अविदित्वाऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वाऽपि पापीयाञ्जायते तु स" इति व्यासस्मरणात् । अत्राप्याहारविशेषानुक्तौ पयःप्रभृतयः कालविशेषानुक्तौ संवत्सरादयः देशविशेषानुक्तौ शिलोच्चयादयो गौतमाद्यभिहिताः प्रकाशप्रायश्चित्तवदन्वेषणीयाः ॥ ३०१ ॥

एवं सकलरहस्यव्रतसाधारणधर्ममभिधाय प्रकाशप्रायश्चित्तवत्ब्रह्महत्यादिक्रमेणैवरहस्यप्रायश्चित्तान्याह—

**त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।**
**अन्तर्जले विशुध्येत दत्त्वा[३] गां च पयस्विनीम् ॥ ३०२ ॥**

त्रिरात्रमुपोषितोऽन्तर्जलेऽघमर्षणेन[४] महर्षिणा दृष्टं सूक्तम् "अघमर्षणं ऋतं

१. ख. अत । २. ग अनेन । ३. ग. गां दत्त्वा । ४. ग. छ णार्षिणा ।

च सत्यं च " इति तृचमानुष्टुभं भाववृत्तदेवताकं जप्त्वा त्रिरात्रान्ते पयस्विनीं गां दत्वा ब्रह्महा विशुध्यति । जपश्चान्तर्जले निमग्नेन त्रिरावर्तनीयः; यथाऽऽह सुमन्तुः —"देवाद्विजगुरुहन्ताप्सु निमग्नोऽघमर्षणंसूक्तं त्रिरावर्तयेत् । मातरं भगिनीं गत्वा मातृष्वसारं पितृस्वसारं स्नुषां सखीं वाऽन्यद्वाऽगम्यागमनं कृत्वाऽघमर्षणमेवान्तर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवति " इति । एतच्च कामकारावषयम् । यत्तु मनुनोक्तम् —"सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः " इति तदप्यस्मिन्नेव विषये गोदानाशक्तस्य वेदितव्यम् । यत्त गौतमेन षट्त्रिंशद्रात्रव्रतमुक्त्वोक्तम् —"तद्व्रत एव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत्" इति तदकामतो सकृद्वधविषयम् । यत्तु बौधायनेनोक्तम्—"ग्रामात्प्राचीं चोदीचीं दिशमुपनिष्क्रम्य स्नातः शुचिः शुचिवासाः उदकान्ते स्थण्डिलमुपलिप्य सकृत्क्लिन्नवासाः सकृत्पूतेन पाणिनादित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत । प्रातः शतं मध्याह्ने शतमपराह्णे शतं परिमितं चोदितेषु नक्षत्रेषु प्रसृतियावकं प्राश्नीयात् । ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते द्वादशरात्रान्महापातकेभ्यो ब्रह्महत्यासुरापानसुवर्णस्तेयानि वर्जयित्वा एकविंशतिरात्रेण तान्यपि तरति " इति । तत्कामकारविषयम् । अकामतः श्रोत्रियाचार्यसवनस्थवधविषयं वा । यत्तु मनुनोक्तम्—" अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् । मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥" इति तत्कामतः श्रोत्रियादिवधविषयमितरत्र कामतोऽभ्यासविषयं वा । यत्तु बृहद्विष्णुनोक्तम्—" ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याऽघमर्षणेनाष्टसहस्रमाज्याहुतीर्जुहुयात्तत एतस्मात्पूतो भवतीति " इति तन्निर्गुणवधविषयमनुग्राहकविषयं वा । यत्तु यमेनोक्तम्—" त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वा[illegible]र्णणम् ॥" तद्गुणवतो हन्तुर्निर्गुणवधविषयं प्रयोजकानुमन्तृविषयं वा यत्तु हारीतेनोक्तम्—" महापातकातिपातकोपपातकानामेकतममेव संनिपाते वाऽघमर्षणमेव त्रिर्जपेदिति तन्निमित्तकर्तृविषयम् । एवमन्यान्यपि स्मृतिवाक्यानि अन्विष्य एवमेव विषयेषु विभजनीयानि ग्रन्थगौरवभयान्न लिख्यन्ते । एतदेवव्रतजातं यागस्थ-

१. ख. मातृष्वसारं स्नु० । २.—११ २४८. । ३ —२४. १० । ४. ख. तो वध । ५. ग. मपरिमितं । ६.—३. ६. ४..... । ७.—११. २५८. । ८. ग. च ।

योषित्क्षत्रविट्स्वात्रेय्यामाहिताग्निपत्न्यां गर्भिण्यामविज्ञाते च गर्भे व्यपादिते तुरीयांशन्यूनमनुष्ठेयम् ॥ ३०२ ॥

प्रायश्चित्तान्तरमाह—

लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाऽभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०३ ॥

अथवाऽहोरात्रमुपोषितो रात्रावुदके वासं कृत्वा प्रातर्जलादुत्तीर्य 'लोमभ्यः स्वाहा' इत्याद्यैरष्टभिमन्त्रैरेकैकेन[1] पञ्चपञ्चाहुतय इत्येवं चत्वारिंशद्घृताहुतीर्जुहुयात् । इदं च पूर्वोक्तसमानविषयम्—उदवासस्य क्लेशबाहुल्यात् ॥ ३०३ ॥

क्रमप्राप्तं सुरापानप्रायश्चित्तमाह—

त्रिरात्रोपोषितो हुत्वा कूश्माण्डीभिर्घृतं शुचिः ।

सुरापश्चत्वारिंशद्घृताहुतीरित्यनुवर्तते । त्रिरात्रमुपोषितः कूश्माण्डीभिः 'यद्देवादेवहेडनम्' इत्याद्याभिः कूश्माण्डदृष्टाभिरनुष्टुब्भिः मन्त्रलिङ्गदेवताभिर्ऋग्भिश्चत्वारिंशद्घृताहुतीर्हुत्वा शुचिर्भवेत् । तथा बौधायनेनाप्युक्तम्—"अथ कूश्माण्डीभिर्जुहुयाद्योऽपूत एवात्मानं मन्येत; यदर्वाचीनमेनो[2] भ्रूणहत्यायास्तस्मान्मुच्यते; अयोनौ वा रेतः सिक्त्वान्यत्र स्वप्नात्" इति[3] । यत्तु मनुना—"मासं जप्त्वाऽप इत्येतद्वासिष्ठं च तृचं प्रति । माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति ॥" इति[4] मासं प्रत्यहं षोडशकृत्वोः 'अपनः शोशुचदघं'[5] 'प्रतिस्तोमेभिरुषसं वासिष्ठम्'[6] 'महित्रीणामवोस्तु'[7] 'एतोन्विन्द्रंस्तवाम'[8] इत्येतेषामन्यतमस्य जप उक्तः, स त्रिरात्रोपवासकूश्माण्डहोमाशक्तस्य वेदितव्यः । एतच्चाकामतः पैष्ट्या सकृत्पाने गौडीमाध्व्योस्तु पानावृत्तौ च वेदितव्यम् । यच्च मनुना "मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । स गुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम् ॥" इति[9] । संवत्सरं प्रत्यहं देवकृतस्यैनस इत्यादिभिरष्टभिर्मन्त्रैर्होमो 'नम इदुग्रं नमआविवास'[10] इत्यस्यां वा ऋचो जप उक्तः स कामकारविषयः । यत्तु "महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुद्ध्यति" इति तदभ्यासविषयम्, समुच्चितमहापातकविषयं वा ॥

---

१. ख. रेकेन । छ प्रातर्जलाहुतीर्जिहुयात् । २ ख. यावदर्वा० । ३.—३. ७ १, ३, २. । ४.—११. २६२. । ५. ऋ० १. ७. ५ । ६. ऋ० ५. ५. २७. १. । ७. ऋ० ८. ८ ४३. १. । ८. ऋ० ६. २. १८. १९. । ऋ० ६. ५. ३७. ४. । ९.—११. २५६. । १० ऋ० ४. ८ १२. ८. ।

सुवर्णस्तेयप्रायश्चित्तमाह—

**ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०४ ॥**

ब्राह्मणः स्वर्णहारी पुनस्त्रिरात्रोपोषितः जलमध्यस्थो "नमस्ते रुद्र मन्यव" इति शतरुद्रियजपयुक्तः शुद्ध्यति शातातपेनात्र विशेष उक्तः—"मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्माच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥" इति । जपश्चैकादशकृत्वः कार्यः—"एकादशगुणान्वाऽपि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥" इत्यात्रिस्मरणात् । यत्तु मनुना "सकृज्जप्त्वास्य वामीयं शिवसंकल्पमेव च । सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः" ॥ इति द्विपञ्चाशदृक्संख्याकस्याऽस्यवामस्यपलितस्यहोतुरिति सूक्तस्य तथा यज्जाग्रतोदूरमुदैतुदैवमिति शिवसंकल्पदृष्टस्य षडृचस्य वा सकृज्जप उक्तः सोऽत्यन्तानिर्गुणस्वामिकस्वर्णहरणे गुणवतोऽपहर्तुर्द्रष्टव्यः । सुवर्णन्यूनपरिमाणविषयोऽनुग्राहकप्रयोजकविषयो वा । आवृत्तौ तु महापातकसंयुक्तोऽनुगच्छेदित्यादिनोक्तं द्रष्टव्यम् ॥ ३०४ ॥

क्रमप्राप्त[3] गुरुतल्पगप्रायश्चित्तमाह—

**सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।**
**गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ ३०५ ॥**

गुरुतल्पगस्तु 'सहस्रशीर्षा' इति षोडशर्चसूक्तं नारायणदृष्टं पुरुषदैवत्यमानुष्टुभं त्रिष्टुबन्तं जपन्तस्मात्पापान्मुच्यते । सहस्रशीर्षाजापीति ताच्छील्यप्रत्ययादावृत्तिर्गम्यते । अत एव यमेनोक्तम्—पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ।" इति ।" आवृत्तौ च संख्यापेक्षायामधस्तनश्लोकगता चत्वारिंशत्संख्याऽनुमीयते । अत्रापि प्राक्तनश्लोकगतं "त्रिरात्रोपोषितः" इति संबध्यते । अत एव बृहद्विष्णुः —"त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येत्" इति एभिश्च सुरासुवर्णस्तेनगुरुतल्पगैस्त्रिभिः पृथक्पृथगस्य त्रिरात्रव्रतस्यान्ते बहुक्षीरा गौर्देया । इदमकामविषयम् । यत्तु मनुना "हविष्पान्तीयमभ्यस्य न तमंह इतीति च । जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः" । इति । हविष्पान्तमजरंस्वर्विदं' 'नत-

---

१. ख. धयतीति । २. ग. द्वाप० । ३. ख. गुरुतल्पगप्रायश्चित्तमाह । ४. ऋ० ८. ४. । ५. ग. सुमन्तुना । ६.—११. २५१. । ७ ऋ० ८ ४, १०. १. ।

मंहोनंदुरितं 'इति वा इतिमे मनः' 'सहस्रशीर्षा' इत्येषामन्यतमस्य मासं प्रत्यहं षोडशकृत्वो जप उक्तः । सोऽप्यकामविषय एव । कामतस्तु "मन्त्रैः शाकल होमीयैः" इति मनूक्तं द्रष्टव्यम् । यत्तु षट्त्रिंशन्मतेऽभिहितम्—"महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना । उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ महापातकसंयुक्तो लक्षहोमेन शुद्ध्यतीति ॥" तदावृत्तिविषयम् । यत्तु यमेनोक्तम्—"जपेद्वाऽप्यस्यवामीयं पावमानीरथापि वा । कुन्तापं वालखिल्यांश्च निवित्प्रैषान्वृषाकपिम् ॥ होतॄन्रुद्रान् सकृज्जप्त्वा मुच्यते सर्वपातकैः ॥" इति तद्व्यभिचारिणीगमनविषयम् । यानि पुनः गुरुतल्पातिदेशविषयाणि तत्समानि वाऽतिपातकोपपातकपदाभिधेयानि तेषु तुरीयांशन्यूनमर्धोनं च क्रमेण वेदितव्यम् । पातकातिपातकोपपातकमहापातकानामेकतमे "संनिपाते वा अघमर्षणमेव त्रिर्जपेत्" इति हारीतोक्तं वा द्रष्टव्यम् । महापातकसंसर्गिणश्च "स तस्यैव व्रतं कुर्यात् ॥" इति वचनाद्येन सह संसर्गस्तदीयमेव प्रायश्चित्तम् । न च वाच्यमत्राध्यापनादिसंसर्गस्यानेककर्तृकसंपाद्यत्वाद्रहस्यत्वानुपपत्तिरिति । यतः सत्यप्यनेककर्तृकत्वे परदारगमनवत् कर्तृव्यतिरिक्ततृतीयाद्यपरिज्ञानमात्रेणैव रहस्यत्वम् । अतो भवत्येव रहस्यप्रायश्चित्तम् । एवमतिपातकादिसंसर्गिणोऽपि तदीयमेव प्रायश्चित्तं वेदितव्यम् ॥ ३०५ ॥ इति महापातकरहस्यप्रायश्चित्तप्रकरणम् ॥

क्रमप्राप्तं गोवधादिषट्पञ्चाशदुपपातकप्रायश्चित्तमाह—

**प्राणायामशतं कार्यं सर्वपापोपनुत्तये ।**
**उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०६ ॥**

गोवधादिषट्पञ्चाशदुपपातकजातानामनादिष्टरहस्यव्रतानां च जातिभ्रंशकरादीनामपनुत्तये प्राणायामानां शतं कार्यम् । तथा सर्वेषां महापातकादीनां प्रकीर्णकानामप्यपनुत्तये प्राणायामाः कार्याः । तत्र च महापातकेषु

---

१. ऋ० ६. ३. ७. । २. ऋ० ८. ६. २६. १. । ३. ख. षोडशषोडशऋचां चत्वारिंशत्संख्याकजप । ४. —११. २५६. । ५. ग. कातीयं । ६. ग. उमपातकानामेक । ७. ग. द्रष्टव्यम् ८. ग. इति देशकालद्यन्वेषणपातितत्याग ग्रहणविधिपूर्वकमहा० ।९. ग. कूमप्रासमुपपातकपूायश्चित्तमाह । १०. ख. दीनां सर्वेषामप । ११. ख. कान्तानां ।

चतुःशतम्, अतिपातकेषु त्रिशतम्, अनुपातकेषु द्विशतामिति संख्याविवृद्धिः कल्पनीया। प्रकाशप्रायश्चित्तेषु महापातकप्रायश्चित्ततुरीयांशस्योपपातकेषु विधानदर्शनात् प्रकीर्णकेषु[1] च ह्रासः कल्प्यः। अत एवोक्तं यमेन—"दशप्रणवसंयुक्तैः प्राणायामैश्चतुः शतैः। मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः॥" इति। बौधायनेनाप्यत्र विशेष उक्तः—"अपिवाक्चक्षुःश्रोत्रत्वक्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति। शूद्रस्त्रीगमनान्नभोजनेषु पृथक्पृथक् सप्ताहं सप्त सप्त[2] प्राणायामान्धारयेत्। अभक्ष्याभोज्यामेध्यप्राशनेषु तथा[3] चापण्यविक्रयेषु मधुमांसघृततैललाक्षालवण-रसान्नवर्जितेषु यच्चान्यद[4]प्येवं युक्तं स्याद्द्वादशाहं[5] द्वादशद्वादशं प्राणायामान्धारयेत्। अथ पातकोपपातकवर्जे[6] यच्चान्यदप्येवं युक्तं स्यादर्धमासं द्वादश द्वादश प्राणायामान्धारयेत्। पातक[7]पतनीयवर्जे यच्चान्यद[8]प्येवं युक्तं स्यान्मासं[9] द्वादशद्वादश प्राणायामान् धारयेत्। अंजे[10] पातकवर्जे यच्चाप्यन्यदप्येवं युक्तं द्वादशार्धमासान् द्वादशद्वादश प्राणायामान् धारयेत्, अथ पातकेषु संवत्सरं द्वादशद्वादश प्राणायामान् धारयेत्" इति[11]। तत्र वाक्चक्षुरित्यादिप्राणायामत्रयं प्रकीर्णाभिप्रायम्[12]। शूद्रस्त्रीगमनान्नभो-जन इत्यादिनोक्ता एकोनपञ्चाशत्प्राणायामा उपपातकविशेषाभिप्रायाः[13]। तथा "अभ-क्ष्याभोज्य" इत्यादिनोक्ताश्चतुश्चत्वारिंशदधिकशतप्राणायामा अप्युपपातकविशेषा-भिप्राया एव। अत "पातकोपपातकवर्जे" इत्यादिनोक्ताः साशीतिशतप्राणायामा जातिभ्रंशकराद्यभिप्रायाः। अथ "पातकवर्जम्" इत्यादिनोक्ताः षष्ट्यधि-कशतत्रयप्राणायामाः गोवधाद्युपपातकाभिप्रायाः। अथ "पातकवर्ज्यम्" इत्यादिनोक्ताः षष्ट्यधिकैकशतसहितद्विसहस्रसंख्याकाः प्राणायामाः अतिपातकानुपपातकाभिप्रायाः। अथ "पातकेषु" इत्यादिनोक्ता विंशत्यधिकशतत्रययुक्ताश्चतुःसहस्रप्राणायामा महापातकविषयाः। इदं चाभक्ष्यभोज्येत्यादिनोक्तं प्रायश्चित्तपञ्चकमत्यन्ताभ्यासवि-षयम्,—समुच्चितविषयं वा। यत्तुमनुना—"एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनो-दनम्। अवेत्यृचं जपेदब्दं यत्किञ्चेदमितीति" इत्यब्दं[14] यावत्प्रत्यहमर्थान्तराविरुद्धेषु

---

१. ग. चेतिनास्ति। २. ख. हं सप्त प्रा०। ३. ख. तथा वाऽप। ४. ख. च्चाप्यन्य। ५. ग. द्वादशा ६. ख. वर्ज्ये। ७. ख. उपपातक। ८. ख. यच्चाप्यन्यदेवं। ९. ख. मासं द्वादशार्धमासान्। १०. ख. अन्यपा०। ११. ध०. ४. १. ५.—११। १२. ख. पकीर्णकाभि। १३. ग. प्रायेण। १४.—११. २५८.

कालेषु "अवतेहेळोवरुण" इत्यस्या ऋचो 'यत्किंचेदम्' इत्यस्या इति वा 'इति मेमनः' इत्यस्याश्च जप उक्तः सोऽप्यभ्यासविषयः ॥ ६०६ ॥

उपपातकसामान्यप्राप्तस्य पाणायामशतस्यापवादमाह—

**ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।**
**कृत्वा तु रेतोविण्मूत्रप्राशनं तु द्विजोत्तमः ॥ ३०७ ॥**

द्विजो रेतोविण्मूत्रप्राशनं कृत्वा सोमलतारसमोङ्कारेणाभिमन्त्रितं शुद्धिसाधनं पिबेत् । एतच्चाकामकारविषयम् । कामतस्तु सुमन्तूक्तम्—"रेतोविण्मूत्रप्राशनं कृत्वा लशुनपलाण्डुगृञ्जनकुम्भिकादीनामन्येषां वाऽभक्ष्यभक्षणं कृत्वा हंसग्रामकुक्कुट श्वसृगालादिमांसभक्षणं कृत्वा ततः कण्ठमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा' 'महाव्याहृतिभिरुरोगमुदकं पीत्वा तदेतस्मात्पूतो भवति" इति । मनुनाऽपि सप्तविधाभक्ष्यभक्षणे प्रायश्चित्तान्तरमुक्तम् — "प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् । जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात् ॥" इति । अप्रतिग्राह्यं विषशस्त्रसुरादिपतितादिद्रव्यं च । यदात्वप्सु रेतोविण्मूत्रादिशारीरं मलं विसृजति तदाऽपि तेनैवोक्तम्—"अप्रशस्तं तु कृत्वाऽप्सु मासमासीत भैक्षभुक् ।" इति ॥ ३०७ ॥

अज्ञानकृते प्रकीर्णके मानसे चोपपातके प्रायश्चित्तमाह—

**निशायां वा दिवा वाऽपि यदज्ञानकृतं भवेत् ।**
**त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यति ॥ ३०८ ॥**

रजन्यां वासरे वा यत्प्रमादादि कृतं प्रकीर्णकं मानसं वाचिकं चोपपातकं तत्सर्वं प्रातर्मध्याह्नादिकालत्रयविहितनित्यसंध्योपासनया प्रणश्यति । तथा च यमः—"यदह्नात्कुरुते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां संध्यां प्राणायामैर्निहन्ति तत् ॥" इति । शातातपेनाप्युक्तम्—"अनृतं मद्यगं च दिवा मैथुनमेव च । पुनाति वृषलान्नं च संध्या वहिरुपासिता ॥" इति ॥ ३०८ ॥

---

१. ऋ० १.—२. १५. ४. । २. ऋ. ५. ६. ११. ५. । ३. ग. रेतो० । ४. ख. त्वा अध म० । ५.—११. २५३. । ६.—११. २५५. । ७ ख. छ. मादकृ० ।

सकलमहापातकादिसाधारणान्पावनमन्त्रानाह—

**शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः।**
**सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०९ ॥**

शुक्रियंनाम आरण्यकविशेषः; 'विश्वानिदेव: सवितः' इत्यादिवाजसनेयके[1] पठ्यते। आरण्यकं च यजुः 'ऋचं वाचं प्रपद्ये मनोयजुः प्रपद्ये' इत्यादि तत्रैव पठ्यते तयोर्जपः सकलमहापातकादिहरः। तथा गायत्र्याश्च महापातकेषु लक्षमतिपातको[2]पपातकयोर्दशसहस्रम्, उपपातकेषु सहस्रं प्रकीर्णकेषु शतमित्येवं विशेषतो जपः सर्वपापहरः। तथा च गायत्रीमधिकृत्य श्लोकैः शङ्खेनोक्तः[3]—"शतं जप्ता तु सा[4]देवी महापातकनाशिनी। सहस्रं[5] जप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥ दशसाहस्रजाप्येन सर्वकिल्बिषनाशिनी। लक्षं जप्ता तु सा देवी महापातकनाशिनी सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः। सुरापश्च विशुध्यन्ति लक्षं जप्त्वा न संशयः ॥" इति यत्तु चतुर्विंशतिमते उक्तम्[6]—"गायत्र्यास्तु जपेत्कोटिं ब्रह्महत्यां व्यपोहति। लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः। गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पग ॥" इति तद्गुरुत्वात्प्रकाशविषयम्। तथा रुद्रैकादशिनी एकादशानां रुद्रानुवाकानां समाहारो रुद्रैकादाशिनी; सा च विशेषतो जप्ता सर्वपापहरा—"एकादशगुणान्वाऽपि रुद्रानावर्त्य धर्मवित्। महद्भ्यः स तु पापेभ्यो मुच्यते नात्र सशयः ॥" इति महापातकेष्वेकादशगुणावृत्तिदर्शनात्[7]। अतिपातकादिषु[8] चतुर्थांशह्रासो योजनीयः। चशब्दोऽघमर्षणादिसमुच्चयार्थः; यथाऽऽह वसिष्ठः—"सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम्। येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः॥ अघमर्षणं देवकृतं[9], शुद्धवस्तरत्समाः। कूस्माण्ड्यः पावमान्यश्च दुर्गासावित्रिरेव च ॥ अभिषङ्गाः पदस्तोमाः मासानि व्यात्हतीस्तथा ॥ भारदण्डानि[10] च सामानि गायत्रं रैवतं तथा ॥ पुरुष व्रतं च भासं च तथा देवव्रतानि[11] च। अब्लिङ्गं बार्हस्पत्यं च वाक्सूक्तं

---

१ ऋ. ४. ४. २५. ५. । २. ग. अतिपातकानपपातक। ३. ग. श्लोकैः शङ्खेनोक्तं। ४. ख, ग. सावित्री। ५. ख. स्रज०। ६. ख. तेनोक्तं। ७. ख. षु चतुर्थं च तुर्थां। ८. ग. ह्रासकल्पनाश०। ९. ख. कृतं। १०. ख. भारदण्डानि। ११ ग. वेदव्र।

मध्वृचस्तथा ॥ शतरुद्रियाथर्वशिरास्त्रिसुपर्णं महाव्रतम् । गोसूक्तं चाश्वसूक्तं च इन्द्रशुद्धे च सामनी ॥ त्रीण्याज्यदोहानि रथन्तरं च अग्नेर्व्रतं वामदेव्यं बृहच्च । एतानि गीतानि पुनन्ति जन्तूञ्जातिस्मरत्वं लभते यदीच्छेत् ॥" इति ॥ ३०९ ॥

किं च—

**यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।**
**तत्र तत्र तिलैर्होमो गायत्र्या वाचनं द्विजः ॥ ३१० ॥**

यत्र यत्र ब्रह्मवधादौ तज्जनितदोषजातेनाऽऽत्मानं संकीर्णमभिभूतं द्विजो मन्यते तत्र तत्र गायत्र्या तिलैर्होमः कार्यः । तत्र महापातकेषु गायत्र्या लक्षहोमः कार्यः—"गायत्र्या लक्षहोमे तु मुच्यते सर्वपातकैः॥" इति यमस्मरणात् । अतिपातकादिषु पादपादह्रासः कल्पनीयः । तथा तिलैर्वाचनं दानं कार्यम् । तथा रहस्याधिकारे वसिष्ठः—"वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्तपञ्च वा । क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥" इति । तथा अनियतकालेऽपि दानं तेनैवोक्तम्—"कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥" इति । तथा व्यासेनोक्तम्—"तिलधेनुं च यो दद्यात्संयतात्मा द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥" इति । एवमादिदानजातं रहस्यकाण्डोक्तमविदुषां द्विजातीनां स्त्रीशूद्रयोश्च वेदितव्यम् । यत्तु यमेनोक्तम्—"तिलान्ददाति यः प्रातस्तिलान्स्पृशति खादति । तिलैः स्नाति तिलाञ्जुह्वन्सर्वं तरति दुष्कृतम्" तथा "द्वेचाष्टम्यौ तु मासस्य चतुर्दश्यां तथैव च । अमावास्या पूर्णमासी सप्तमी द्वादशीद्वयम् ॥ संवत्सरमभुञ्जानः संततं विजितेन्द्रियः मुच्यते पातकैः सर्वैः स्वर्गलोकं च गच्छति," इति यच्चात्रिणोक्तम्—"क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोः संपूजयेद्धरिम् ॥ ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति ॥" इत्येवमादि तत्सर्वं विद्याविरहिणां कामाकामसकृदभ्यासविशेषतया व्यवस्थापनीयम् ॥ ३१० ॥

१.—२८. १०—५. । २. ख. च । ३.—ख. पञ्च सप्त च । छ. सप्त. पञ्च च । ४.—२८. १८, ९. । ५. ख. तथेति नास्ति । ६.—वसि० २८. २२. । ७. ख. व्यासेनाप्युक्तं । ८. तुं तथाद० । ९. ख. तिलस्नायी । १०. ख. इत्यादि ।

किं च[1]—

**वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियापरम् ।**
**न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३११ ॥**

"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥" इति उक्तक्रमेण वेदाभ्यासनिरतं तितिक्षायुक्तं पञ्चमहायज्ञानुष्ठाननिरतं महापातकजान्यपि पापानि न स्पृशन्ति, किमुत प्रकीर्णकजानि वाङ्मनसजन्योपपातकानि वेत्यत्र तात्पर्यमपिशब्दाल्लक्ष्यते । एतच्चाकामकारविषयम् । अत एव वसिष्ठेन — "यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥"[2] इति प्रकीर्णकाद्यभिप्रायेणाभिधायाभिहितम् — "न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्चदह्यते कर्म नेतरत् ॥"[3] ॥ ३११ ॥

किं च—

**वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाऽऽप्सु सूर्यदृक् ।**
**जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ॥ ३१२ ॥**

सोपवासो वासरमुपविशन् काषित्वा सलिले वसन्निशां नीत्वाऽऽदित्योदयानन्तर सावित्र्याः सहस्रं जप्त्वा ब्रह्मवधव्यतिरिक्तसकलमहापातकादिपापजातान्मुच्यते । अतश्चोपपातकादिष्वभ्यासेऽनेकदोषसमुच्चये वा वेदितव्यम् — विषमविषयसमीकरणस्यान्याय्यत्वात् । अत एव वृद्धवसिष्ठेन—महापातकोपपातकयोः कालविशेषेण व्रतविशेष उक्तः[4]; यथाऽऽह "यवानां प्रसृतिमञ्जलिं वा श्रप्यमाणं वृतं चाभिमन्त्रयेत्—यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतः" इत्यनेन,—"घृतं यवा मधुयवाः पवित्रममृतं यवाः । सर्वं पुनन्तु मे पापं वाङ्मनः कायसंभवम् ॥" इत्यनेन वा । "अग्निकार्यं न कुर्वीत तेन भूतबलिं तथा । नाग्रं न भिक्षां नातिथ्यं न चोच्छिष्टं परित्यजेत् ॥" 'ये दोषा मनोजाता मनोयुजः सुदक्षा दक्षपितरः ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा' इत्यात्मनि जुहुयात्; त्रिरात्रं मेधाभिवृद्धये पापक्षयाय त्रिरात्रं सप्तरात्रं

---

१. ख. किं चाऽऽह । २.—२७, १. । ३.—२७, ४ । ४. ग विशेषः ।

ब्रह्महत्यादिषु द्वादशरात्रं पतितोत्पन्नश्च" इत्येतद्दिगवलम्बनेनान्यान्यपि स्मृतिवचनानि विवेचनीयानि ॥ ३१२ ॥

॥ इति रहस्यप्रायश्चित्तप्रकरणम् ॥

## ८ व्रतग्रहणम्

विनियुक्तव्रतव्रातरूपभेदे बुभुत्सिते । कद्दिशमिति संक्षेपाल्लक्षणं वक्ष्यतेऽधुना
तत्र तावत्सकलप्रकाशरहस्यव्रताङ्गभूतान्धर्मानाह—

**ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।**
**अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ ३१३ ॥**

**स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ॥**
**नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ ३१४ ॥**

ब्रह्मचर्यं सकलेन्द्रियसंयमः; अकल्कता अकुटिलता, उपस्थनिग्रहो लिङ्गनिग्रहः गोवलीवर्दन्यायेन निर्दिष्टः; शेषं प्रसिद्धम् । यत्पुनर्मनुनोक्तम्[1]—"अहिंसा सत्यमक्रोधमार्जवं च समाचरेत् ।" इति तदप्येतेषामुपलक्षणं, न परिगणनाय । अत्र च दयाक्षान्त्यादीनां पुरुषार्थतया प्राप्तानामपि पुनर्विधानं प्रायश्चित्ताङ्गत्वार्थम् । क्वचिद्विशेषोऽप्यस्ति — यथा विवाहादिष्वभ्यनुज्ञातस्याप्यनृतवचनस्य निवृत्त्यर्थं सत्यत्वविधानम् । पुत्रशिष्यादिकमपि न ताडनीयमित्येवमर्थमहिंसाविधानमित्येवमादि ॥ ३१३ ॥ ३१४ ॥

तत्र सान्तपनाख्यं व्रतं तावदाह—

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।**
**जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं परम् ॥ ३१५ ॥**

पूर्वेद्युराहारान्तरपरित्यागेन गोमूत्रादीनि पञ्चगव्यानि[2] पञ्चद्रव्याणि कुशोदकसहितानि संयुज्य पीत्वा अपरेद्युरुपवसेदिति द्वैरात्रिकः[3] सान्तपनः कृच्छ्रः । सांतपनं[4] चोत्तरश्लोके पृथग्विधानादवगम्यते । कृच्छ्र इति चान्वर्थसंज्ञेयम्—तपोरूपत्वेन क्लेशा-

---

१.—११. २२२. । २. ख. नि पञ्च ग० । ३. ख. रातः । ४. ख. सयोजनं च ।

साध्यत्वात्। गोमूत्रादीनां परिमाणं वक्ष्यते। यदा पुनः पूर्वेद्युरुपोष्यापरेद्युः समन्त्रकं संयुज्य समन्त्रकमेव पञ्चगव्यं पीयते तदा ब्रह्मकूर्च इत्याख्यायते; यथाऽऽह पराशरः "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम्॥ गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम्। पयः काञ्चनवर्णाया नीलायाश्च तथा दधि॥ घृतं चकृष्णवर्णायाः सर्वं कापिलमेव वा। अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः॥ गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश। क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः॥ गोमूत्रवद्‌घृतस्याष्टौ तदर्धं तु कुशोदकम्। गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि॥ तेजोसिशुक्रमित्याज्यं देवस्यत्वा कुशोदकम्। पञ्चगव्यमृचा पूतं होमयेदग्निसंनिधौ॥ सप्तपत्राश्च ये दर्भा अच्छिन्नाग्राः शुकत्विषः। एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि॥ 'इरावती' 'इदंविष्णुः' 'मानस्तोके' च शाश्वतीः। एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः॥ प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च। प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु॥ मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत्। स्वर्णपात्रेण रौप्येण ब्राह्मतीर्थेन वा पुनः॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे। ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम्॥" इति॥ यदा त्वेतदेव पञ्चगव्यं मिश्रितं त्रिरात्रमभ्यस्यते तदा यतिसान्तपनसंज्ञां लभते—"एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम्॥" इति शङ्खस्मरणात्॥ जाबालेन तु सप्ताहसाध्यं सान्तपनमुक्तम्—"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशादेकम्। एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम्॥ कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनम्॥" इति॥ एषां च गुरुलघुकृच्छ्राणां शक्त्याद्यपेक्षया व्यवस्था विज्ञेया। एवमुत्तरत्रापि व्यवस्था बोद्धव्या॥ ३१५॥

महासान्तपनाख्यं कृच्छ्रमाह—

**पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः।**

१. ख. प्रत्येकं। २. ग. छ. च। ३. ग. मूत्रमा। ४. ग. छ. स्यष्टाः। ५. ख. शुचित्वि। ६. ऋ० ५. ६. २४. ३.। ७. ऋ० १. २. ७. २.। ८. ऋ० १. ८. ६. ३.। ९ ख. शवती। १०. ख. छ. ताम्रेण।

**सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ३१६ ॥**

सप्ताहेनापवर्जितो महासान्तपनाख्यः कृच्छ्रो विज्ञेयः । कथमित्यपेक्षायामुक्तं "पृथग्भूतैः षड्भिर्गोमूत्रादिभिरेकैकेनैकैकमहरतिवाहयेत्, सप्तमं चोपवासेन" इति । यमेन तु पञ्चदशाहसंपाद्यो महासान्तपनोऽभिहितः—"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्। त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः॥ महासान्तपनं ह्येतत्सर्वपापप्रणाशनम् ॥" इति एवं जाबालेन त्वेकविंशतिरात्रनिर्वर्त्यो महासान्तपन उक्तः—"षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् । त्र्यहं चोपवसेदन्त्यं महासान्तपनं विदुः ॥" इति ॥ यदा तु षण्णां सान्तपनद्रव्याणामेकैकस्य द्व्यहमुपयोगस्तदा अतिसान्तपनम्; यथाऽऽह यमः "एतान्येव तथा पेयान्येकैकं तु द्व्यहं द्व्यहम् । अतिसान्तपनं नाम श्वपाकमपि शोधयेत् ॥" इति । श्वपाकमपि शोधयेदित्यर्थवादः ॥ ३१६ ॥

पर्णकृच्छ्राख्यं व्रतमाह—

**पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।**
**प्रत्येकं प्रत्यहंपीतैः पर्णकृच्छ्र उदाहृतः ॥ ३१७ ॥**

पलाशोदुम्बरारविन्दश्रीवृक्षपर्णानामेकैकेन क्वाथितमुदकं प्रत्यहं पिबेत्,— कुशोदकं चैकस्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः । यदा तु पर्णादीनामेकीकृतानां क्वाथस्त्रिरात्रान्ते पीयते तदा पर्णकूर्चः; यथाऽऽह यमः—"एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः । क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते" इति । यदा तु बिल्वादिफलानि प्रत्येकं क्वथितानि मासं पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते; यथाऽऽह मार्कण्डेयः—"फलैर्मासेन क्वथितः फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ॥ मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् ॥ पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते । मूलकृच्छ्रः स्मृतो मूलस्तोयकृच्छ्रो जलेन तु इति ॥ ३१७ ॥

---

१. ग. मनुः । २. ख. यादे० । ३. ख छ. क्वथितं । ४. ग. एकैकस्मिन्न । ५. ख. रात्रेपी । ६. ख. लभन्ते । ७. ग. इति । इति पर्णकृच्छ्रमेकादशम् ।

तप्तकृच्छ्रमाह—

**तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।**
**एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१८ ॥**

दुग्धसर्पिरुदकानां तप्तानामेकैकं प्रतिदिवसं प्राश्यापरेद्युरुपवसेत् । एष दिवसचतुष्टयसंपाद्यो महातप्तकृच्छ्रः । एभिरेव समस्तैः सोपवासैर्द्विरात्रसंपाद्यः सान्तपनवत्तप्तकृच्छ्रः । मनुना तु द्वादशरात्रनिर्वर्त्योऽभिहितः—"तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥" इति । क्षीरादिपरिमाणं तु पराशरेणोक्तं द्रष्टव्यम्—"अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् । पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम् ।" इति । त्रिरात्रस्य पूरणे उष्णोदकबाष्पं पिबेदित्यर्थः। यदा तु शीतं क्षीरादि पीयेत तदा शीतकृच्छ्रः—"त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम्॥" इति यमस्मरणात् ॥ ३१८ ॥

पादकृच्छ्रमाह—

**एकभक्तेन नक्तेन तथैवायाचितेन च ।**
**उपवासेनचैवायं पादकृच्छ्रः प्रकीर्तितः ॥ ३१९ ॥**

एकभक्तेन सकृद्भोजनेन दिवैव । नक्तेनेति पृथगुपादानात् । अतश्च दिवैवैकवारमेव भोजनेनैवेकमहोरात्रमतिवाहयेदिति । तत्र दिवेति रात्रिव्युदासः। एकवारमिति द्विवारादिव्युदासः, भोजनेनेत्यभोजनव्युदासः । एतच्च कृच्छ्रादीनां व्रतरूपत्वात् पुरुषार्थभोजनपर्युदासेन कृच्छ्राङ्गभूतं भोजनं विधीयते । तथा चापस्तम्बः—"त्र्यहमनक्ताश्यदिवाशीततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचन" इति । अत्र चानक्ताशीत्यनेन व्रते विहितेणिनिप्रत्ययेन नक्तपर्युदासेन दिवाभोजननियमं दर्शयति । गौतमेनापीदमेव स्पष्टीकृतम्—"हविष्यान् प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्" इति । एवं नक्तभोजनविधावपि । न विद्यते याचितं यस्मिन्भोजने तदयाचितमिति । तेन कालविशेषानुपादानाद्दिवा रात्रौ वा सकृदित्येव । तपो-

१.—११. २१४. । २. ख. स्य मारुतस्य पू० । ३. ख. ध० १. २० । ४. ख. व्रतविहितेन । ५.—२६. २. । ६. छ. तेनेत्यारभ्य न केवलमितिपर्यन्तं नास्ति । ७. ग. दिवारात्रोपवासकृदित्येव

रूपत्वात् कृच्छ्राणां द्वितीयभोजने तदनुपपत्तेः अयाचितमिति न केवलं परकीया-न्ययाचनप्रतिषेधः;अपितु स्वकीयमपि परिचारकभार्यादिभ्यो न याचितव्यम्। प्रेषणा-ध्येषणयोः साधारणत्वात् याञ्चायाः । अतः स्वगृहेऽपि भृत्यभार्यादयोऽनाज्ञप्ता एव यदि भोजनमुपहरन्ति तर्हि भोक्तव्यं, नान्यथा । अमुनैवाभिप्रायेणोक्तं गौतमेन—"अथापरं त्र्यह न कंचन याचेत" इति । अत्र च ग्राससंख्यानियमः पराशरेण दर्शितः—"सायं तु द्वादशग्रासाः प्रातः पञ्चदश स्मृताः । चतुर्विंशतिरायाच्याः परंनिरशनं स्मृतमिति॥"आपस्तम्बेन त्वन्यथोक्तम्—"सायं द्वात्रिंशतिर्ग्रासाः प्रातः षाडे शतिः स्मृताः । चतुर्विंशतिरायाच्याः परं निरशनात्त्रयः ॥ कुक्कुटाण्डप्रमाणस्तु यथा चास्यं विशेत्सुखम् ।" इति ॥ अनयोश्च कल्पयोः शक्त्यपेक्षो विकल्पः । आपस्तम्बेन तु प्राजापत्यप्रायश्चित्तं चतुर्धा विभज्य चतुरः पादकृच्छ्रा-न्कृत्वा वर्णानुरूपेण व्यवस्था दर्शिता—"त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् । सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥ प्रातः पादं चरेच्छूद्रः सायं वैश्येतु दापयेत् । अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम् ॥" इति ॥ यदात्वयाचितोपवासात्मकत्र्यहद्वयानुष्ठानं तदाऽर्धकृच्छ्रः । सायंव्यतिरिक्तापरत्र्यहत्रया-नुष्ठानम् पादोनमिति विज्ञेयम्—"सायं प्रातर्विनाऽर्धं स्यात्पादोनं नक्तवर्जितम् ।" इति तेनैवोक्तत्वात् ॥ अर्धकृच्छ्रस्य प्रकारान्तरमपि तेनैव दर्शितम्—"सायं प्रात स्तथैकैकं दिनद्वयमयाचितम् । दिनद्वयं च नाश्नीयात्कृच्छ्रार्धं तद्विधीयते ॥" इति ॥ २१९ ॥

प्राजापत्यं कृच्छ्रमाह—

## यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ।

अयमेव पादकृच्छ्रः । यथाकथञ्चिद्दण्डकलितवदावृत्त्या स्वस्थानविवृद्ध्या वा तत्राप्यानुलोम्येन प्रातिलोम्येन वा तथा वक्ष्यमाणजपादियुक्तं तद्रहितं वा-त्रिरभ्यस्तः प्राजापत्योऽभिधीयते । तत्र दण्डकलितवदावृत्तिपक्षो वसिष्ठेन प्रदर्शितः—"अहः प्रातरहर्नक्तमहरेकमयाचितम् । अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥

---

१.—२६.४ । २. ख. पेक्षया वि । ३. छ. कल्प्यः । ४ ग. कृता । ५.—ख वैश्यस्य ।

अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः । बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाचह ॥" इति ॥ आनुलोम्येन स्वस्थानविवृद्धिपक्षस्तु मनुना दर्शितः—"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । परं त्र्यहं च नाश्नीयात्प्राजापत्यं चरेद्द्विज इति ॥ प्रातिलोम्यावृत्तिस्तु वसिष्ठेन दर्शिता—"प्रातिलोम्यं चरेद्विप्रः कृच्छ्रं चान्द्रायणोत्तरम् ॥" इति । जपादिरहितपक्षस्तु स्त्रीशूद्रादिविषयेऽङ्गिरसा दर्शितः—"तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमादि वर्जितम् ॥" इति । जपादियुक्तपक्षस्तु पारिशेष्याद्योग्यतया च त्रैवर्णिकविषयः । स च गौतमादिभिर्दर्शितः—"अथाऽतः कृच्छ्रान्व्याख्यास्यामो हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्, अथापरं त्र्यहंनक्तं भुञ्जीत, अथापरं त्र्यहं न कंचन याचेत, अथापरं त्र्यहमुपवसंस्तिष्ठेदहनि रात्रावासीत, क्षिप्रकामः सत्यं वदेत्, अनार्यैः सह न भाषेत, रौरवयौधाजपे नित्यं प्रयुञ्जीत, अनुसवनमुदकोपस्पर्शनमापोहिष्ठेतितिसृभिः पवित्रवतीभिमार्जयीत हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः।अथोदकतर्पणं—नमोहमाय मोहमाय मंहमाय धन्वने तापसाय पुनर्वसवे नमो मौञ्ज्याय औम्यार्य वसुविन्दाय सर्वविन्दाय नमः । पाराय सुपाराय महापाराय पारहाय परपाराय पारयिष्णवे नमः । रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये हराय शर्वायेशानाय उग्राय वज्रिणे घृणिने कपर्दिने नमः । सूर्यायादित्याय नमः । नीलग्रीवाय शितिकण्ठाय नमः कृष्णाय पिङ्गलाय नमः । ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशाय ऊर्ध्वरेतसे नमः सत्याय पावकाय पावकवर्णायैकवर्णाय कामाय कामरूपिणे नमः । दीप्ताय दीप्तरूपिणे नमः । तीक्ष्णाय तीक्ष्णरूपिणे नमः । सौम्याय पुरुषाय महापुरुषाय मध्यमपुरुषाय उत्तमपुरुषाय ब्रह्मचारिणे नमः। चन्द्रललाटाय कृत्तिवाससे नमः" इति—'एतदेवादित्योपस्थानमेता एवाज्याहुतयः, द्वादशरात्रस्यान्ते चरुं श्रपयित्वा एताभ्यो देवताभ्यो जुहुयात्—अग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृते इति अन्ते ब्राह्मणभोजनम्' इति। तत्र तिष्ठेदहनि रात्रावासीत क्षिप्रकाम

---

१.—२२. ४३. ।२.—११. २११. । ३.—२०. १३. । ४. छ. षेतेरौरयोधाजपेन्नि० । ५ छ० नमेमायमोहमाप्रधून्वनेताप० । क० मोहमाय मय धूमन्वनेतापसा० ६. ख, महापारायपरपारा० ७. ख. दिंनेनमः । नीलग्री०

इत्यस्यार्थः । यस्तु महतोऽप्येनसः क्षिप्रमेकेनैव कृच्छ्रेण क्षिप्रं शुध्येयमित्येवं कामयते असावहनि कर्माविरुद्धेषु कालेषु तिष्ठेद्रात्रावासीत । एवं रौरवयोधाज्यसामजपो नमोहमायेत्यादिभिस्तर्पणमादित्योपस्थानादिकं चरुश्रपणादिकं च योगीश्वराद्यनुक्तं क्षिप्रकामः कुर्वीत । अतश्च योगीश्वराद्युक्तप्राजापत्यद्वयस्थाने गौतमीयमनेकेतिकर्तव्यतासहितं द्रष्टव्यम् । एवमन्यान्यपि स्मृत्यन्तरोक्तानि विशेषेणान्वेषणीयानि ॥

अतिकृच्छ्रमाह—

**अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ॥ ३२० ॥**

एतद्धर्मक एव एकभक्तादिप्राजापत्यधर्मयुक्तोऽतिकृच्छ्रः स्यात् । इयांस्तु विशेषः । आद्ये त्र्यहत्रये पाणिपूरणमात्रमन्नं भुञ्जीत न पुनर्द्वाविंशत्यादिग्रासान् ॥ अत्र च प्राप्तभोजनानुवादेन पाणिपूरान्नविधानादन्त्यत्र्यहेऽतिदेशप्राप्त उपवासोऽप्रतिपक्ष एव ॥ अत्रापि पादशो व्यवस्था पूर्ववदेव द्रष्टव्या ॥ यत्तु मनुनोक्तम्—"एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् । त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विज" इति—तत्पाणिपूरान्नपरिमितादल्पत्वाच्छक्तविषयम्[2] ॥ ३२० ॥

कृच्छ्रातिकृच्छ्रमाह—

**कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।**

एकविंशतिरात्रं पयसा वर्तनं कृच्छ्रातिकृच्छ्राख्यं व्रतं विज्ञेयम् । गौतमेन तु 'द्वादशरात्रमुदकेन वर्तनं कृच्छ्रातिकृच्छ्रम्" इत्युक्तम् । 'अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्र' इति । अतश्चभक्तयपेक्षया तयोर्व्यवस्था ॥

पराकमाह—

**द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ३२१ ॥**

ऋज्वर्थोऽयमर्धश्लोकः ॥ ३२१ ॥

सौम्यकृच्छ्रमाह—

**पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।**
**एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२२ ॥**

---

१ ख. क्षिप्रं मुच्येयमि० । २. ख. परिमितत्वादल्प० ।

पिण्याकोनिःसृततैलस्तिलः ओदननिःस्रावोदश्विदुदकसक्तूनां पञ्चाना मेकैकं प्रतिदिवसमुपभुज्य षष्ठेऽह्नि उपवसेदेष सौम्याख्यः कृच्छ्रोऽभिधीयते । द्रव्यपरिमाणं तु प्राणयात्रामात्रनिबन्धनमधिगन्तव्यम् । जाबालेन तु चतुरहव्यापी सौम्यकृच्छ्र उक्तः—'पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम् । वासो वै दक्षिणां दद्यात्सौम्योऽयं कृच्छ्र उच्यते' इति ॥ ३२२ ॥

तुलापुरुषाख्यंकृच्छ्रमाह—

**एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।**
**तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३२३ ॥**

एषां पिण्याकादीनां पञ्चानां क्रमेणैकैकस्य त्रिरात्राभ्यासेन पञ्चदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रो वेदितव्यः । अत्र च पञ्चदशाहिकत्वविधानादुपवासस्य निवृत्तिः ॥ यमेन त्वेकविंशतिरात्रिकस्तुलापुरुष उक्तः—"आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् । त्र्यहंत्र्यहं प्रयुञ्जानो वायुभक्षी त्र्यहद्वयम् ॥ एकविंशतिरात्रस्तु तुलापुरुष उच्यत" इति । अत्र हारीताद्युक्तेतिकर्तव्यता ग्रन्थगौरवभयान्न लिख्यते ॥ ३२३ ॥

चान्द्रायणमाह—

**तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।**
**एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥ ३२४ ॥**

चान्द्रायणाख्यं व्रतं कुर्वन् मयूराण्डपरिमितान् पिण्डान् शुक्ले आपूर्यमाणपक्षे तिथिवृद्ध्या चरेत् भक्षयेत् । यथा प्रतिपत्प्रभृतिषु तिथिषु चन्द्रकलानामेकैकशो वृद्धिरर्धमासेन तद्वत्पिण्डानपि प्रतिपद्येकं द्वितीयायां द्वावित्येवमेकैकशो वर्धयन् भक्षयेद्यावत्पौर्णमासी, ततः पञ्चदश्यां पञ्चदशग्रासान्भुक्त्वा ततः कृष्णपक्षे चतुर्दश प्रतिपदि द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान् ह्रासयन् अश्नीयात् यावच्चतुर्दशी, ततश्चतुर्दश्या मेकंग्रासं ग्रसित्वा इन्दुक्षये अर्थादुपवसेत् । तथा वसिष्ठः—'एकैक वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत

---

१. पिण्ड्यादनानिः स्रावौदश्विदुद० । क श्रोकौदन० । ख. पिण्याक्तोदनविश्रावोदकं । २. ख, मुपयुज्यष० । ३. क पिण्डानामपि० । ४. ख. पद्येकोद्विती० ।

एष चान्द्रायणो विधिः" इति। चन्द्रस्यायनमिवायनं चरणं यस्मिन्कर्मणि ह्रास-वृद्धिभ्यां[1] तच्चान्द्रायणम्। संज्ञायां दीर्घः। इदं च यववत् प्रान्तयोरणीयः मध्ये स्थवीय इति यवमध्यमिति कथ्यते। एतदेव व्रतं यदा कृष्णपक्षप्रतिपदि प्रक्रम्य पूर्वोक्तक्रमेणानुष्ठीयते—तदा पिपीलिकावन्मध्ये ह्रसिष्ठं भवतीति पिपीलिकामध्य-[2]मिति कथ्यते। तथाहि। पूर्वोक्तक्रमेण कृष्णपक्षप्रतिपदि चतुर्दश ग्रासान् भुक्त्वा एकैकग्रासापचयेन चतुर्दशीं यावद्भुञ्जीत, ततश्चतुर्दश्यामेकं ग्रासं ग्रसित्वामावास्या-यामुपोष्य शुक्लप्रतिपदि एकमेव ग्रासं प्राश्नीयात्। तत एकोपचयभोजनेन पक्ष-शेषे निर्वर्त्यमाने पौर्णमास्यां पञ्चदश ग्रासाः[3] संपद्यन्त इति युक्तैव पिपीलिकाम-ध्यता। तथा च वसिष्ठः—"मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश। ग्रासापचयभोजी सन्पक्षशेषं समापयेत्॥ तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम्। ग्रासोपचयभोजी सन्पक्षशेषं समापयेत्" इति॥ यदा त्वेकस्मि-न्पक्षे तिथिवृद्धिह्रासवशात् षोडश दिनानि भवन्ति चतुर्दश वा—तदा ग्रासाना-मपि वृद्धिह्रासौ वेदितव्यौ—"तिथिवृद्ध्या पिण्डांश्चरेत्" इति नियमात्। गौत-मेनात्र[4] विशेषो दर्शितः—'अथातश्चान्द्रायणं-तस्योक्तो विधिः कृच्छ्रे वपनं च व्रतं चरेत् श्वोभूतां पौर्णमासीमुपवसेत्, आप्यायस्व संतेपयांसि नवोनव इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं च चन्द्रमसः यद्देवादेवहे-डनमिति चतसृभिराज्यं जुहुयाद्देवकृतस्येति चान्ते समिद्भिः ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं यशः श्रीऊर्क् इन्द्रः[5] ओजः तेजः पुरुषः धर्मः शिव इत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्वानेतैरेव ग्रासान्भुञ्जीत, तद्ग्रासप्रमाणमास्याविकारेण,[6] चरुभैक्षसक्तुकणयावक-शाकपयोदधिघृतमूलफलोदकानि हवींषि उत्तरोत्तरप्रशस्तानि, पौर्णमास्यां प-ञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात्, अमावास्यायामुपो-ष्यैकैकोपचयेन पूर्वपक्षं विपरीतमेकेषामेषं[7] चान्द्रायणो मास' इति। अत्र[8] 'ग्रासप्रमाणमास्याविकारेण' इति यदुक्तं — तद्बालाभिप्रायं — तेष[9]

---

१. ख. वृद्धिग्रासाभ्यां०। २. ख. पिपीलिकमध्या०। ३. क. ग्रासाः प्रतिपद्यन्त०। ४. क. नाप्यत्रविशे०। ५. ख श्रीऊर्क् इट् ओजः। क श्रीऊ इ इ इ ऊर्जः। तेजः ६. क. मास्या-धिकारेण०। ७. क. केषामेक चान्द्रायणेमास इति० ८. क. अग्रग्रासप्रमाण०। ९. क. मास्या-धिकारे०।

शिख्यण्डपरिमितपञ्चदशग्रासभोजनाशक्तेः । क्षीरादिद्रवहविष्षु[1] शिख्यण्डपरिमितत्वं पर्णपुटकादिना संपादनीयम् । तथा कुक्कुटाण्डार्द्रामलकादीनि तु ग्रासपरिमाणानि स्मृत्यन्तरोक्तानि शक्तिविषयाणि—शिख्यण्डपरिमाणाल्लघुत्वात्तेषाम् ॥ यत्पुनरत्र[3] 'श्वोभूतां पौर्णमासीमुपवसेदि[2]' इति चतुर्दश्यामुपवासमभिधाय पौर्णमास्यां पञ्चदश ग्रासान्भुक्त्वेत्यादिना द्वात्रिंशदहरात्मकत्वं चान्द्रायणस्योक्तं—तत्पक्षान्तरप्रदर्शनार्थं न सार्वत्रिकं—योगीश्वरादि[4]वचनानुरोधेन त्रिंशदहरात्मकस्य दर्शितत्वात् ॥ यद्येतत्सार्वत्रिकं स्यात्तदा नैरन्तर्येण संवत्सरे चान्द्रायणानुष्ठानानुपपत्तिः स्यात्, चन्द्रगत्यनुवर्तनानुपपत्तिश्च ॥ ३२४ ॥

चान्द्रायणान्तरमाह—

**यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।**
**मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२५ ॥**

पिण्डानां चत्वारिंशदधिकं शतद्वयं मासेन भुञ्जीत । यथाकथञ्चित्प्रतिदिनं मध्याह्नेऽष्टौ ग्रासान् अथवा नक्तन्दिनयोश्चतुरश्चतुरो वा अथवैकस्मिंश्चतुरोऽपरस्मिन्द्वादश तथैकरात्रमुपोष्यापरस्मिन्षोडश वेत्यादिप्रकाराणामन्यतमेन शक्त्याद्यपेक्षया भुञ्जीतेत्येतत्पूर्वोक्तचान्द्रायणद्वयादपरं चान्द्रायणम् । अतस्तयोर्नायं ग्राससंख्यानियम, किं तु पञ्चविंशत्यधिकशतद्वयसंख्यैव । मनुना चैते प्रकारा दर्शिताः 'अष्टावष्टौ समश्नीयात्पिण्डान्मध्यान्दिने स्थिते । नियतात्मा हविष्यस्य यतिचान्द्रायणं चर[5] ॥ चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः । चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरन् ॥ यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम्' इति तथा चत्वारिंशच्छतद्वयन्यूनसंख्याग्राससंपाद्यस्यापि संग्रहार्थमपरग्रहणम् । यथाह यमः[6]—'त्रींस्त्रीन्पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्' इति । एषु च यतिचान्द्रायणप्रभृतिषु न चन्द्रगत्यनुसरणमपेक्षितम् । अतस्त्रिंशद्दिनात्मक-

१. क. लवहविषां । शिख्य० । २. ख. वसेदित्य च चतु० । ३ क. यत्पुनरत्रश्वोभू० । ४. ख. गीश्वरवच० । ५. ख. चरेत् । चतु० । ६. क. यथाहमनुः—'त्री० ।

सावनमासेन मासेन नैरन्तर्येण चान्द्रायणानुष्ठाने यदि कथञ्चित्तिथिवृद्धिह्रासवशात् पञ्चम्यादिष्वारम्भो भवति—तथापि न दोषः ॥ यदपि सोमायनाख्यम् मासव्रतं मार्कण्डेयेनोक्तं—'गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्टयात् । स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥ स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । एतत्सोमायनं नाम व्रतं कल्मषनाशनम्" इति—तदपि चान्द्रायणधर्मकमेव—हारीतेन "अथातश्चान्द्रायणमनुक्रमिष्यामः' इत्यादिना सेतिकर्तव्यताकं चान्द्रायणमभिधाय 'एवमेव सोमायनम्' इत्यतिदेशाभिधानात् । यत्पुनस्तेन कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्यन्तं सोमायनमुक्तम् । चतुर्थीप्रभृति चतुःस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन त्रिरात्र मेकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृति पुनश्चतुःस्तनान्तेन 'या ते सोम चतुर्थी तनूस्तया नः पाहि तस्यै नमः स्वाहा, या ते सोम पञ्चमी षष्ठी,' इत्येवं यागार्थास्तिथिहोमा एकमाप्त्वा एनोभ्यः पूतश्चन्द्रमसः समानतां सलोकतां सायुज्यं च गच्छति' इति चतुर्विंशतिदिनात्मकं सोमायनमुक्तं तदशक्तविषयम् ॥ ३२५ ॥

अथ कृच्छ्रचान्द्रायणसाधारणीमितिकर्तव्यतामाह—

**कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।**
**पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत् ॥ ३२६ ॥**

कृच्छ्रं प्राजापत्यादिकं चान्द्रायणं वा त्रिषवणस्नानयुक्तः कुर्यात् । एतच्च तप्तकृच्छ्रव्यतिरेकेण — तत्र 'सकृत्स्नायी समाहितः' इति मनुना विशेषाभिधानात् ॥ यत्पुनः शङ्खेन कृच्छ्रेषु त्रिषवणस्नानमभिहितं—'त्रिरह्नि त्रिर्निशायां तु सवासा जलमाविशेद्' इति—तदशक्तविषयम् । यत्पुनर्वैशम्पायनेन द्वैकालिकं स्नानमुक्तं—'स्नानं द्विकालमेव स्यात्त्रिकालं वा द्विजन्मन' इति—तत्त्रिषवणस्नानाशक्तस्य वेदितव्यम् ॥ यत्पुनर्गार्ग्येणोक्तं—'एकवासाश्चरेद्भैक्ष्यं स्नात्वा वासो न

१. ख. त्मकसाधारणेन मासेन० । २. क. व्रतंकिल्बिषनाश० । ३. ख' म इति स्मृत्यन्तरे सप्ताह चेत्येतद्गोस्तनमखिलमथत्रो' स्तनान्द्वौ तथैकं कुर्यात्त्रीश्चोपवासान्यदि भवति तदामासिसोमायनं तत् तदपि० । ४ ख. मनुक्रमिष्य इत्यादिना० । ५ ख. तस्यैनमः स्वाहा० । ६. ख. यागार्थाः । ७. ख. एवं स्तुत्वा एनो० । क. मास्त्वेबोम्यः । ८. ख. रेद्भैक्षंस्ना० ।

पीडयेद् इति तदपि शक्तस्यैव—'एकवासा[1] आर्द्रवासा वा लब्धाशी: स्थण्डिलेशय' इत्येकवस्त्रताया अपि शङ्खेन पाक्षिकत्वेनाभिधानात् ॥ स्नाने च हारितेन विशेषो[2]दर्शितः—' त्र्यवरं शुद्धवतीभिः स्नात्वाघमर्षणमन्तर्जले जपित्वा धौतमहतं वासः परिधाय साम्ना सौम्येनादित्यमुपतिष्ठेत ' इति । स्नानानन्तरं च पवित्राणि जपेत्—पवित्राणि च अघमर्षणं देवकृतः शुद्धवत्यस्तरत्समा इत्यादीनि वसिष्ठादिप्रतिपादितानामन्यतमान्यर्था[3]विरुद्धेषु काले[4]षु जपेत् सावित्रीं वा—' सावित्रीं वा जपेन्नित्यं पवित्राणि च शक्तित ' इति मनुस्मरणात् ॥ यत्तु गौतमेनोक्तं—रौरवै[5]योधा जपेन्नित्यं प्रभुञ्[6]जीत इति—तदपि पवित्रत्वादेवोक्तं न पुनर्नियमाय—तथा सति श्रुत्यन्तरमूलत्वकल्पनाप्रसङ्गात् । अतोऽनधीतसामवेदेन गायत्र्यादिकमेव जप्तव्यम् ॥ यदपि नमो हमाय' इत्यादि पठित्वा ' एता एवाज्यहुतय ' इत्युक्तं—तदपि न नैयमिकं, किंतु महाव्याहृतिभिर्होमः' कर्तव्यः[7] ' स्वयमन्वहम् ' इति मनुना महाव्याहृतिभिर्होमविधानात् ॥ तथा षट्त्रिंशन्मतेऽप्युक्तं—' जपहोमादि यत्किञ्चित्कृच्छ्रोक्त संभवेन्न चेत् । सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन च ' इति । आदिग्रहणादुदकतर्पणादित्योपस्थनादेर्ग्रहणम् । अत एव वैशम्पायनः—' स्नात्वोपतिष्ठेदादित्यं सौरीभिस्तु कृताञ्जलिः' इति ॥ एवमन्येष्वपि विरोधिपदार्थेषु विकल्प आश्रयणीयः, अविरोधिषु समुच्चयः—शाखान्तराधिकरणन्यायेन सर्वस्मृतिप्रत्ययत्वात्कर्मणः[8] । जपसंख्यायां विशेषस्तेनैव दर्शितः—" ऋषभं विरजं[9] चैव तथा चैवाघमर्षणम् । गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरम् ॥ शतमष्टशतं वापि सहस्रमथवा परम् । उपांशु मनसा वापि तर्पयेत्पितृदेवताः ॥ मनुष्यांश्चैव भूतानि प्रणम्य शिरसा तत ' इति ॥ ' तथा पिण्डांश्च प्रत्येकं गायत्र्या चाभिमन्त्रयेत् । तथा यमेनापि विशेष उक्तः—" अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् । प्राश्याचम्य पुनः कुर्यादन्यस्याप्यभिमन्त्रणम् " इति । अतश्च " ॐ भूर्भुवः स्वः' इत्यादिभिर्गौतमोक्तैरभिमन्त्रणमन्त्रैः सहास्य

---

१. क. वासार्धवासा० । २. ख. शेषउक्तः त्र्यव० । ३. छ. न्याथाविरू० । ४. ञ. कालेषु अन्तर्जलेषु जपेत्सावित्री वाजपेन्नित्य० । ५. छ. रौरवजौ वाजपे० । ६ ख. प्रयुञ्जीते० । ७. ख. होमस्तिलैः कार्यो द्विजन्मनेति० । ८. क त्वात्कर्मणाम् । जप० । ९ क. विरजां चैव० ।

विकल्पः । यत्पुनः "आप्यायस्व संतेपयांसि" इत्यादिभिः पिण्डकरणात्पूर्वं हविषोऽभिमन्त्रणमुक्तं—तद्भिन्नकार्यत्वात्समुच्चीयते ॥ एतानि कृच्छ्रादिव्रतानि यदा प्रायश्चित्तार्थमनुष्ठीयन्ते—तदा केशादिवपनपूर्वकं परिगृहीतव्यानि—"वापनं व्रतं चरेत्" इति गौतमस्मरणात् ॥ अभ्युदयार्थे तु नैव वपनम् ॥ वसिष्ठेनाप्यत्र विशेष उक्तः—"कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् । कुक्षिरोमशिखा-वर्जम्" इति । कृच्छ्राणां व्रतरूपाणि वपनादीन्यंगानि वक्ष्यन्त इति शेषः ॥ पर्षदुपदिष्टव्रतग्रहणं च व्रतानुष्ठानदिवसात्पूर्वेद्युः सायाह्ने कार्यम् । यथाह विष्णुः—"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् । ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षितम् । दिनान्ते नखरोमादीन्प्रवाप्य स्नानमाचरेत् । भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ॥ मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये । दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ॥ व्रतंनिशामुखे ग्राह्यं बहिस्तारकदर्शने । आचम्यातः परं मौनी ध्यायन्दुष्कृतमात्मनः ॥ मनः संतापनं तीव्रमुद्वहेच्छोकमन्तत" इति । बहिरिति ग्रामान्निर्ष्क्रम्य । स्त्रियाप्येवमेव व्रतपरिग्रहः कार्यः, *केशश्मश्रुलोमनखवपनं तु नास्ति—"चान्द्रायणादिष्वेतदेव स्त्रियाः केशवपनवर्जम्" इति बौधायनस्मरणात् ॥ वपनानिच्छोस्तु हारीतेन विशेष उक्तः—"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । केशानां रक्षणं कृत्वा प्रायश्चित्तं समाचरेत् ॥ केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् । द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्" इति ॥ एतच्च महापातकादिदोषविशेषाभिप्रायेण द्रष्टव्यं "विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् । व्रते महापातकिनो गोहन्तुश्चावकीर्णिन" इति स्मरणात् ॥ जाबालेनाप्यत्र विशेष उक्तः—"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । आज्येनैव च शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥ श्राद्धं कुर्याद्व्रतान्ते तु गोहिरण्यादि दक्षिणा" इति ॥ यमेनाप्यत्र विशेषोऽभिहितः—"पश्चात्तापो निवृत्तिश्च

---

* "स्त्रियाः श्मश्रुणोऽभावात्कथमिदम् ॥

---

१. ख. विकल्प उक्तः । यत्पु० । २. ख यथाहवसिष्ठः—सर्वं० । ३. क. प्रायश्चित्तं न्विकीर्षि० । ख. चिकीर्षिते । दिना० । ४ ख० ग्रामाद्बहिर्निष्क्रम्य० । ५. केशानां वपनेकृ० । ६. ख. इति मनुस्मर० । ७. ख. अग्नेनैवहिशाला० ।

स्नानं चाङ्गतयोदितम् । नैमित्तिकानां सर्वेषां तथा चैवानुकीर्तनम्" इति तथा "गात्राभ्यङ्गशिरोभ्यङ्गताम्बूलमनुलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत्" इत्येवमादिकर्तव्यताजातं स्मृत्यन्तरादन्वेष्टव्यम् ॥ एवमनेन विधिना व्रतं गृहीत्वावश्यं परिसमापनीयम् । अन्यथा तु प्रत्यवायः—"पूर्वं व्रतं गृहीत्वा तु नाचरेत्कामतो हि यः । जीवन्भवति चाण्डालो मृतः श्वा चैव जायत" इति छागलेयस्मरणात्—इत्यलं प्रपञ्चेन ॥ ३२६ ॥

इत्थमुक्तविनियोगस्य चान्द्रायणादेः स्वरूपमभिधाय लब्धप्रसङ्गः कार्यान्तरेऽपि विनियोगमाह—

**अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।**
**धर्मार्थं यश्चरेदेतच्चान्द्रस्यैति सलोकताम् ॥ ३२७ ॥**

आदिश्यत इत्यादिष्टं प्रायश्चित्तं, न विद्यते आदिष्टं येषु पापेषु तेषु चान्द्रायणेन शुद्धिः। चशब्दात्प्राजापत्यादीभिः कृच्छ्रैरैन्दवसहितैस्तन्निरपेक्षैर्वा शुद्धिः । तथा च षट्त्रिंशन्मतेऽभिहितं—"यानि कानि च पापानि गुरोर्गुरुतराणि च । कृच्छ्रातिकृच्छ्रचान्द्रैस्तु[1] शोध्यन्ते मनुरब्रवीत्" इति त्रयाणां समुच्चयः प्रतिपादितः । उशनसा तु द्वयोः समुच्चय उक्तः---"दुरितानां दुरिष्टानां पापानां महतामपि । कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनम्" इति । दुरितमुपपातकम् । दुरिष्टं पातकम् । गौतमेन तु 'कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तम्' इति विसमासकरणेनैन्दवनिरपेक्षता कृच्छ्रातिकृच्छ्रयोः सूचिता, चान्द्रायणस्य च तान्नैरपेक्षता[2] । इति शब्देन च त्रयाणां समुच्चयः । केवलप्राजापत्यस्य तु नैरपेक्ष्यं[3] चतुर्विंशतिमतेऽभिहितम्—'लघुदोषेत्वनादिष्टे प्राजापत्यं समाचरेत्' इति गौतमेनापि प्राजापत्यादेर्नैरपेक्ष्यमुक्तं—'प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति, द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यते, तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते' इति महापातकादपीत्यभिप्रेतम् । मनुनाप्युक्तं—"पराको नाम कृच्छ्रोऽयं सर्वपापापनोदन" इति, हारीतेनाप्युक्तं—"चान्द्रायणं यावकश्च तुला-

---

१. ख. कृच्छ्र चान्द्रेये। शोध्य० । २. ख णस्यनिरपे० । ३. ख. नेरपेक्षं चतु० ।

पुरुष एव वा । गवां चैवानुगमनं सर्वपापप्रणाशनम्' तथा "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत्" तथा व्रतकृच्छ्रमधिकृत्यापि तेनैवोक्तं "एष कृच्छ्रो द्विरभ्यस्तः पातकेभ्यः प्रमोचयेत् । त्रिरभ्यस्तो यथान्यायं शूद्रहत्यां व्यपोहति" इति, उशनसोक्तं "यत्रोक्तं यत्र वा नोक्तं महापातकनाशनम्।प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र संशय" इति,—एतानि प्राजापत्यादीनि अनादिष्टेषूपपातकादिषु सकृदभ्यासाद्यपेक्षया व्यस्तानि समस्तानि वा योजनीयानि, तथा आदिष्टव्रतेष्वपि महापातकादिषु अभ्यासापेक्षया योजनीयानि । अत एव यमेनोक्तं,—"यत्रोक्तम्" इत्यादि । गौतमेनाप्युक्तं, निष्कृतीनां संग्रहार्थं सर्वप्रायश्चित्तग्रहणं कृतम् । तथा यदपि तेनैवोक्तं—"द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यत" इत्युक्त्वा "तृतीयं चरित्वा सर्वस्मादेनसो मुच्यत" इति—तदपि महापातकाभिप्रायम् । न च महापातकमनुक्तनिष्कृतिकं संभवति । तस्मादुक्तनिष्कृतिकेष्वपि प्राजापत्यादयो योजनीयाः ॥ तत्र द्वादशवार्षिकव्रते द्वादशद्वादश दिनानि एकैकं प्राजापत्यं च परिकल्प्य गण्यमानप्राजापत्यानां षष्ट्यधिकं शतत्रयं द्वादशवार्षिके वैकल्पिकमनुष्ठेयं भवति, तदशक्तौ 'च' तावत्य एव धेनवो दातव्याः, तदसंभवे निष्काणां षष्ट्यधिकं शतत्रयं दातव्यम् । तथा च स्मृत्यन्तरं—"प्राजापत्यक्रियाऽशक्तौ धनुं दद्याद्विजोत्तमः । धेनोरभावे दातव्यं मूल्यं तुल्यमसंशयम् ।" मूल्यार्धमपि निष्कं वा तदर्धं पादं वा शक्त्यपेक्षया दातव्यं—"गवामभावे निष्कं स्यात्तदर्धं पाद एव वा" इति स्मरणात् ॥ मूल्यदानस्याप्यशक्तौ तावन्तो वोदवासाः कार्याः ॥ तत्राप्यशक्तौ गायत्रीजपः षट्त्रिंशल्लक्षसंख्याकः कार्यः—"कृच्छ्रोऽयुतं तु गायत्र्या उदवासास्तथैव च । धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्" इति पराशरस्मरणात् ॥ यत्तु चतुर्विंशतिमतेऽभिहितं—"गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या

---

१. ख. षएवच० । २. ख. धिकृत्यतेनै० । क. कृच्छ्रमप्याधिकृ० । ३. क. नोक्तमिह० । छ. नोक्तं मिह० । ४. ख. भ्यासापेक्षया० । ५. ख. भिप्रायंनक्षुद्रपातकाभिप्रायम् । नच० । क. हापातकाभिप्रायमुक्तम् । नच०। ६. ख. दद्याद्विचक्षणः । धेनो० । ७. ख. तदर्धं वाश०। ८. क. छ. पाद एवचेति० ।

लक्षसप्ततिः । गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पग" इति तद्द्वादश-वार्षिकतुल्यविधानतयोक्तं, न पुनरशक्तविषयमिति न विरोधः ॥ एवमन्येऽपि 'कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् । तिलहोमसहस्रं तु वेदपारायणं तथा' इत्यादयः प्रत्याम्नायाश्चतुर्विंशतिमन्वादिशास्त्राभिहिताः षष्ठ्यधिकत्रिशतगुणिता महापातकेषु बोद्धव्याः । अतिपातकेषु सप्तत्यधिकशतद्वयं प्राजापत्यानां कर्तव्यं, तावन्तो[1] धेन्वादयः प्रत्याम्नायाः। पातकेषु साशीतिशतं प्राजापत्यानां। प्रत्याम्नाया श्च[2] धेन्वादयस्तावन्त एव[3]। तथा चतुर्विंशतिमतेऽभिहितं—"जन्मप्रभृति पापानि बहूनि विविधानि च । कृत्वार्वाग् ब्रह्महत्यायाः षडब्दं[4] कृच्छ्रमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीतिं धनिना शतम् । तथाष्टादशलक्षाणि गायत्र्या वा तपेद्बुध" इति । इदमेव द्वादशवार्षिके व्रते द्वा[5]दशद्वादशदिनैरेकैकप्राजापत्यकल्पनायां लिङ्गम् । एवमुपपातकेषु त्रैवार्षिकप्रायश्चित्तविषयभूतेषु नवतिप्राजापत्यास्तावन्तो वा[6] प्रत्याम्नायाः । त्रैमासिकविषये पुनः सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेनूदवासादयस्तावन्त एव । मासिकव्रतविषये तु सार्धं प्राजापत्यद्वयं तावानेव वा प्रत्याम्नायः । चान्द्रायणाविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयं, तदशक्तस्य प्रत्याम्नायस्तावानेव ॥ 'यत्पुनश्चतुर्विंशतिमतेऽभिहितम्—'अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा' इति तदपि धनिनः पिपीलिकामध्यादिचान्द्रायणप्रत्याम्नायविषयम् । मासातिकृच्छ्रविषयभूतेषु पुनरुपपातकेषु सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेन्वादयस्तावन्त एव—'प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । पराकतप्तकृच्छ्रातिकृच्छ्रे[7] तिस्रस्तु गास्तथा' इति चतुर्विंशतिमतेऽभिधानात् । एतच्च 'एकैकं ग्रासमश्नीयात्' इत्यामलकपरिमितैकैकग्रासपक्षे वेदितव्यं, पाणिपूरान्नभोजनपक्षे पुनर्धेनुद्वयमेव—प्राजापत्यस्य षडुपवासतुल्यत्वात्, तद्द्विगुणत्वाच्चातिकृच्छ्रस्य । यद्यपि नवसु दिनेषु पाणिपूरान्नभोजनं तथापि नैरन्तर्येण द्वादशदिवसानुष्ठाने क्लेशातिशयात्षडहोपवाससमानप्राजापत्यद्वयतुल्यत्वमेव ॥ प्राजापत्यस्य च षडुपवासतुल्यत्वं युक्तमेव ॥

१. ख. तावन्तोवाधे० । २ ख. म्नायाधेन्वा० ३. ख. एववा । तथा० । ४. ख. अब्दं व्रतमादि० ।५. क. व्रते द्वादशदिनैरेकै० ६. ख. तावन्तः प्रत्या० । ७. पराकतप्ता-तिकृच्छ्रे तिस्रास्तिस्रस्तु गास्त ।

तथाहि ॥ 'प्रथमे ऽयहे सायन्तनभोजनत्रयनिवृत्तावेकोपवाससंपत्तिः, द्वितीये ऽयहे प्रातःकालभोजनत्रयवर्जने परस्य, तथा अयाचितऽयहेऽपि सायन्तनभोजनत्रयवर्जनेऽन्यस्येत्येवं नवभिर्दिनैरुपवासत्रयं, ततश्चान्तऽयहे चोपवासत्रयामिति युक्तं षडुपवासतुल्यत्वम् , ऋषभैकादशगोदानसहितत्रिरात्रोपवासात्मकगोवधव्रते तु सार्धैकादशप्राजापत्यास्तावत्संख्याकाश्चोदवासादयः प्रत्याम्नायाः, मासं पयोव्रते तु सार्धप्राजापत्यद्वयम् ॥ पराकात्मके तूपपातकव्रते प्राजापत्यत्रयं पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् , सान्तपनस्य चाध्यर्धमशक्तौ व्रतमाचरेत्' इति षट्त्रिंशन्मतेऽभिधानात् । चान्द्रायणपराककृच्छ्रातिकृच्छ्रास्तु प्राजापत्यत्रयात्मकाः द्वादशवार्षिकव्रतस्थाने विंशत्युत्तरशतसंख्या अनुष्ठेयाः, तत्प्रत्याम्नायास्तु धेन्वादयस्त्रिगुणाः ॥ अतिपातकेषु नवतिसंख्याश्चान्द्रायणादयः ॥ तत्समेषु पुनः पातकपदाभिधेयेषु षष्टिसंख्याः ॥ उपपातकेषु त्रैवार्षिकविषयेषु विंशत्संख्याः ॥ त्रैमासिके तु गोवधव्रतस्थाने गोमूत्रस्थानादीनां कर्तव्यताबाहुल्याच्चान्द्रायणादित्रयम् ॥ मासिकव्रते तु योगीश्वरोक्ते एकमेव चान्द्रायणादिकम् । धेनूदवासादिप्रत्याम्नायस्तु सर्वत्र त्रिगुण एव ॥ प्रकीर्णकेषु पुनः प्रतिपदोक्तप्रायश्चित्तानुसारेण प्राजापत्यं पादादिक्लृप्त्या योजनीयम्। आवृत्तौ पुनश्चान्द्रायणादिकामिति ॥ एतद्दिगवलम्बनेनान्यत्रापि कल्पना कार्या ॥ यत्पुनर्बृहस्पतिनोक्तं—"जन्मप्रभृति यत्किञ्चित्पातकं चोपपातकम् । तावदावर्तयेत्कृच्छ्रं यावत्षष्टिगुणं भवेत्" इति—तत् "द्वे परदारे त्रीणिश्रोत्रियस्य" इति गौतमोक्तद्विवार्षिकसमानविषयं तथा त्रैमासिकादिविषयभूतोपपातकावृत्तिविषयं पातकपदाभिधेयचाण्डालादिस्त्रीगमनेद्विरभ्यासविषयं—तत्र "ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्" इति सकृद्बुद्धिपूर्वगमने कृच्छ्राब्दविधानात्, तदभ्यासे द्विवर्षतुल्यषष्टिकृच्छ्रविधानं युक्तमेव। यत्तु सुमन्तुनोक्तं—"यदप्यसकृदभ्यस्तं बुद्धिपूर्वमघं महत् । तच्छुद्धयत्यब्दकृच्छ्रेण महतः पातकादृत" इति—तदप्युपपातकाद्यावृत्तिविषयं, तथा "अज्ञानादैन्दवद्वयम्" इति यमोक्तैन्दवद्वयविषयभूतपातकावृत्तिविषय वा ॥ यस्तु तपस्यसमर्थो धान्यसमृद्धश्च स कृच्छ्रादिव्रतानि

---

१. ख. त्रयनिवृत्तिपर० । २. ख. वर्जनेऽपरस्येत्ये० । ३. ख. त्रयम् । ततश्चांत्य० । ४. ख. ष्मकाद्वादश० । ५. ख. चान्द्रायणम् । ६. ख. छ. परदारे इति गौत० । ७. ख. छ. वर्षयं वा । पात० । ८. ख. छ. विषयं वा तत्र० ।

द्विजाग्र्यभोजनदानेन संपादयेत् ॥ तथा हि स्मृत्यन्तरं—"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये चत्वारिंशच्च तप्ते त्रिगुणितगुणिता विंशतिः स्यात्पराके। कृच्छ्रे सान्तापनाख्ये भवति षडधिका विंशतिः सैव हीना द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान्" इति—अहरहरिति सर्वत्र संबन्धनीयं। तृतीयः कृच्छ्रातिकृच्छ्रः अत्र प्राजापत्यदिवसकल्पनया विद्वद्विप्राणां षष्टिभोजनं[1] भवति। यत्तु चतुर्विंशतिमतेऽभिहितं—"विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैवच। अन्या[2] वा पावनी काचित्समान्याहुर्मनीषिण" इति प्राजापत्यस्थाने द्वादशानां विप्राणां भोजनमुक्तं—तन्निर्धनविषयम् ॥ यच्चान्द्रायणस्यापि तत्रैव प्रत्याम्नायमुक्तं "चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव[3] च। मित्रविन्दापशुश्चैव कृच्छ्रं मासत्रयंतथा॥ नित्यनैमित्तिकानां च काम्यानां चैव कर्मणाम्। इष्टीनां पशुबन्धानामभावे चरवः स्मृताः" इति—तदपि चान्द्रायणाशक्तस्य। यत्तु "कृच्छ्रं मासत्रयं तथा" इति कृच्छ्राष्टकं प्रत्याम्नातं—तदपि जरठमूर्खविषयं[4]—"चान्द्रायणं त्रिभिः कृच्छ्रैः' इति दर्शितत्वादित्यलं प्रपञ्चेन, प्रकृतमनुसरामः ॥ यस्त्वभ्युदयकामो धर्मार्थकाम्य-नियोगानिष्पत्त्यर्थमेतच्चान्द्रायणमनुतिष्ठति न पुनः प्रायश्चित्तार्थमसौ चन्द्रसालो-क्यं स्वर्गविशेषं प्राप्नोति ॥ एतच्च संवत्सरावृत्त्यभिप्रायेण—"एकमाप्त्वा विपापो विपाप्मा सर्वमेनोनिहन्ति, द्वितीयमाप्त्वा दशपूर्वान् दशापरानात्मानं चैकविंशं पङ्क्तिं च पुनाति, संवत्सरं चरित्वा चन्द्रमसः सलोकतामाप्नोति[5]" इति गौतमस्मरणात् ॥ ३२७ ॥

किं च[6]—

**कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात्।**
**यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ॥ ३२८ ॥**

यस्त्वभ्युदयकामः प्राजापत्यादिकृच्छ्राननुतिष्ठति स महतीं राज्यादिलक्षणां श्रियंविभूतिमनुभवति[7]। यथा गुरुक्रतूनां राजसूयादीनां कर्ता तत्फलं स्वाराज्यादि-लक्षणं महत्फलं लभते तथायमपि सुसमाहितः सकलाङ्गकलापमविकलमनुतिष्ठन्निति

---

१. ख. प्राणां षष्टिभोज० । २. अन्यद्वा पावनं किंचित्समामाहुर्मनी ३. क. पातृकेष्टिस्तथैव । ४. क. दपि जठरमूर्खवि । ५. क. लोकतां व्रजति' इति० । ६. क. किंचाह—कृच्छ्र० । ७. क. श्रियमनुभव० ।

फलमहिमप्रकाशनार्थं क्रतुदृष्टान्तकीर्तनम्। सुसमाहित इत्यनेनाविकलशास्त्रानुष्ठानं वदन्काम्यकर्मतयाङ्गवैकल्ये फलासिद्धिं द्योतयति, अतो नात्र प्रायश्चित्तेष्वेव यावत्संभवाङ्गानुष्ठानमङ्गीकरणीयमिति दूरोत्सारितं प्रत्याम्नायोपादनम्। कृच्छ्राद्यनुष्ठानावृत्तौ तु "अधिकारिणः फलावृत्तिः कर्मण्यारम्भभाव्यत्वात्" इति न्यायलभ्या स्थितैवेति नेदमविवाक्षितम् ॥ ३२८ ॥

प्रागुदिताखिलार्थोपसंहारव्याजेन धर्मशास्त्रधारणादिविधीन् सार्थवादान् प्रार्थनावरदानरूपेण[1] प्रतिपादयितुमाह—

**श्रुत्वैतानृषयो धर्मान्याज्ञवल्क्येन भाषितान् ।**
**इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२९ ॥**

अत्र हि वर्णाश्रमादिव्यावृत्ता धर्माः षट्प्रकाराः प्रतिपादिताः, तानखिलान् योगीश्वरभाषितान् ऋषयः प्रहर्षोत्फुल्ललोचनास्तं महिमगुणशालिनमचिन्तनीयशक्तिविभवमिदमभिधास्यमानमूचिवांसः ॥ ३२९ ॥

**य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।**
**इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३३० ॥**
**विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनानि च[2] ।**
**आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३३१ ॥**
**श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति ।**
**पितॄणां तस्य तृप्तिः स्यादक्षय्या नात्र संशयः ॥ ३३२ ॥**
**ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।**
**वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३३ ॥**

इत्थमृज्वर्थैः श्लोकैः सामश्रवःप्रभृतयोऽनेकधा प्रार्थयन्ते स्म ॥ ३३० ॥ ३३१ ॥ ३३२ ॥ ३३३ ॥

अपरामपि प्रार्थनामाह—

**य इदं श्रावयेद्विद्वान्द्विजान्पर्वसुपर्वसु ।**

---

१. ख. र्थनावदान०। २. ख. धनं तथा। आयु०।

**अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥३३४॥**

यस्त्विदं धर्मशास्त्रं प्रतिपर्वं द्विजान् श्रावयेत् तस्याश्वमेधफलं भवेदिति श्रावणविध्यर्थवादः । तदेतदस्मत्प्रार्थितमर्थं सर्वमत्रभवाननुमन्यताम् ॥ ३३४ ॥

वरदानमाह —

**श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।**
**एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥३३५॥**

एतदृषिभिर्भाषितं श्रुत्वा योगीश्वरोऽपि स्वनिर्मितधर्मशास्त्रधारणादिफलप्रार्थनोन्मीलितमुखपङ्कजः स्वयम्भुवे ब्रह्मणे नमस्कृत्य प्रणम्य भवत्प्रार्थितं सकलमित्थं भवत्वित्येवं किल भगवान्बभाषे ॥ ३३५ ॥

इति श्रीभारद्वाजपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाविज्ञानेश्वरभट्टारकस्यकृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ प्रायश्चित्तप्रपञ्चाध्यायस्तृतीयः समाप्तिमगमत् ॥

अथात्राध्यायानुक्रमणिका कथ्यते


१ तत्राद्यं सूतकधर्मप्रकरणम्
२ आपद्वृत्तिप्रकरणम् ।
३ वानप्रस्थप्रकरणम् ।
४ यतिधर्मप्रकरणम् ।
५ तत्रादौ कर्मविपाकः ।
६ महापातकादिनिमित्तपरिगणनम् ।
७ महापातकप्रायश्चित्तान्यातिदेशिकसाहितानि ।
८ महापातकप्रायश्चित्तानि ।
९ उपपातकप्रायश्चित्तानि ।
१० प्रकीर्णकप्रायश्चित्तप्रकरणम् ।
११ पतितत्यागविधिः ।
१२ व्रतग्रहणम् ।
१३ रहस्यप्रायश्चित्ताधिकारः ।
१४ कृच्छ्रादिलक्षणम् ।


इति प्रकरणानि ॥

---

१. ख. सर्वत्र भवा० । २. ख. योगीन्द्रोपि० । ३ क क्षरायांटिकायांयाज्ञ० । ४. ख. प्रायश्चित्ताध्याय० । ५ ख. णिकालिख्यते० । ६. ख. ग. आपद्धर्मप्र० । ७. क, प्रस्थ प्रकरणम् ३. यतिधर्म प्रकरणम् ४. ततः प्रायश्चित्तपकरणम् , तत्रा० । ८ ख. प्रस्थप्रकरणम् , अध्यात्मप्रकरणम्, ततः प्रायश्चित्तप्रकरणम् , तत्रादौ० । ९. ग० परिगणनम् ५. ब्रह्महत्यासुरापानस्वर्णस्तेय गुरुतल्पगतत्संसर्गाख्यमहापातक० । १०. ग. सहित गण्यसंहितानि ८. । ११. ख. ग. व्रतग्रहणविधिः । १२. ग. कृच्छ्रादिलक्षणानि । एवं चतुर्दशप्रकरणानि ।

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः । धर्मशास्त्रस्य कृत्स्नस्य[1]विज्ञानेश्वरयोगिनः ॥ १ ॥ इति याज्ञवल्कीयमुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः ॥ प्रमितक्षरापि· विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ २ ॥ गम्भीराभिः प्रसन्नाभिर्वा[2]ग्भिर्ना[3]म्ना मिताक्षरा । अनल्पार्थाभिरल्पाभिः कियद्भिर्विहिता मया ॥३॥ वि[4]ज्ञाननाथरचिता प्र[5]सन्ना या मिताक्षरा । सेयंद्वादशसाहस्री संख्याता ग्रन्थसंख्यया[6] ॥ ४ ॥ नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः । विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपमः [7]आकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥५॥ स्रष्टा वाचां मधुरवपुषां[8] विद्वदाश्चर्यसीम्नां दातार्थानामनिशयजुषामर्थिसार्थार्थिना[9] याः । ध्यातामूर्तेर्मु रविजयिनो जीवतादार्कचन्द्रंजेताऽरीणां तनुसहभुवां तं[10]ज्ञविज्ञाननाथः ॥ ६ ॥ आसेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजादा च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात् ॥ आ च प्राचीस[11]मुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः ॥ ७ ॥

---

१. ख ग शास्त्रस्य विवृतिर्विज्ञा० । २. ख. वाग्भिर्न्यस्तामिता० । ३. ख. ग. भिर्विप्रति० । ४. ख पुस्तके विज्ञाननाथति श्लोको नास्ति । ग. पुस्तके अयं श्लोको ग्रन्थान्तिमत्वेन दृश्यते । ५. ग. रचिताविवृतायामि० । ६. संख्यया ७ इति श्री याज्ञवल्क्यमहामुनिप्रोक्तं धर्मशास्त्रं सटिप्पणसंपूर्णम् ॥ ७. ग. भजते किं वातदन्योपमा० ख. पमश्चाकल्प० । ८. ख. मधुलवमुचांविह । ९. ग. मर्थिनामर्थितायाः । ज्ञातामूर्ते० । १०. ख. ज्ञविज्ञानना । ११. ख प्राचः समुद्रा० ।

PRINTED AT THE BRAHMAVADIN PRESS, MADRAS.

श्रीः ॥

# याज्ञवल्क्यस्मृतेर्मिताक्षरायाश्च शुद्धाशुद्धपत्रिका.

| Page. | Line. | अशुद्धम्. | शुद्धम्. | Page. | Line. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|---|---|---|---|
| 3 | 5 | श्रवप्र | श्रवःप्र | 36 | 10 | तेच्छिात्त | ताच्छ्रोत्ति |
| 5 | 10 | ध्यात्वा | ध्यात्वा | ,, | 17 | प्रविशान्तः | प्रविशन्तः |
| 6 | 3 | शिक्षयोत् | शिक्षयेत् | 38 | 3 | श्रोत्रियो | श्रोत्रियो |
| 7 | 8 | बोधाय | बौधाय | ,, | 4 | चानुकल्पांवा<br>क्तव्यइत्यात | चानुकल्पोवक्त<br>व्य इत्यत |
| 8 | 10 | ल्पाज्ञा | ल्पाज्ञा | ,, | 16 | वर्णान | वर्णानु |
| 12 | 7 | सम्वध्यत्वे | सम्बध्यते | 39 | 6 | इत्युपरक्र | इत्युपक्र |
| 13 | 3 | बाह्म | ब्राह्म | 40 | 5 | आदायर्ष | आदायार्ष |
| 14 | 15 | शौचतिषे | शौचनिषे | 42 | 10 | तिंस्थपर | तिंस्थः पर |
| ,, | 19 | स्पृष्टेदशे | स्पृष्टे देशे | 44 | 2 | अपहरन | अपहरन् |
| 16 | 8 | स्त्राच | स्त्री च | 45 | 3 | डण्ड्यः | दण्ड्यः |
| ,, | 11 | र्मांजनं | मार्जनं | ,, | 4 | षैर्दीर्धरो | षैर्दीर्घरो |
| ,, | 13 | इत्यमवो | इत्येवमा | 46 | 13 | ःयाद्व | इयाद्व |
| 20 | 4 | व्यस्ता | व्यस्ता | ,, | ,, | श्रुतोवव | श्रुतावेव |
| ,, | 11 | मश्रीया | मश्रीया | 48 | 10 | रमणा | स्मरणा |
| ,, | 13 | ,, | ,, | 49 | 2 | या ॥ | च या ॥ |
| ,, | 14 | श्चैय | श्चैव | 51 | 7 | पौत्रकेः | पौत्रकैः |
| 22 | 9 | वेदस्मस्मै | वेदमस्मै | 52 | 10 | तस्तश्च | तस्तश्च |
| 23 | 9 | ग्रहाणा | ग्रहणा | 54 | 7 | णीमहा | णीमहै |
| 24 | 2 | मथाक्र | यथाक्र | ,, | 13 | स्त्रयन्त | स्त्र्यन्त |
| ,, | 8 | कालस्म | कालस्य | ,, | 16 | निमम्म | नियम |
| 25 | 2 | इत्युक्त | इत्युक्त | ,, | 17 | प्राप्तो | प्राप्तौ |
| ,, | 11 | स्चाध्या | स्वाध्या | 55 | 12 | श्वादिंभ्यो | श्वादिभ्यो |
| ,, | 17 | चार्यन्नि | चार्यसान्नि | ,, | 15 | नन्नरं | नन्तरं |
| ,, | 6 | आभ्यान्त | आभ्यन्त | ,, | 21 | निच्छाश्वा | निच्छोश्वा |
| ,, | 7 | पिण्डाध्कृ | पिण्डान्कृ | ,, | 27 | अताप्त | अप्राप्त |
| 32 | 7 | मित्तरे | मितरे | 56 | 3 | नुवेदि | नुवदि |
| ,, | 12 | म्बचयाच्च | म्बवचनाच्च | ,, | 22 | अतृतो | अनृता |
| ,, | 16 | क्त्याङ्गी | क्त्यङ्गी | ,, | 6 | स्ती | स्त्री |
| 33 | 3 | गृह्यो | गृह्यो | 62 | 8 | भार्तारं | भर्तारं |
| ,, | 5 | आरोगि | अरोगि | 64 | 2 | ब्राह्मणश्च चत-<br>स्त्रो | ब्राह्मणस्य चत<br>स्रो |
| 35 | 2 | सापिन्ड्य | सापिण्ड्य | | | | |
| ,, | 13 | पश्चमीं | पञ्चमीं | ,, | 8 | बध्मते | बध्यते |

| Page. | Line. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 69 | 7 | पश्चमी | पञ्चमी |
| 70 | 13 | माहिष्योग्रयो | माहिष्योग्रयो |
| 72 | 6 | निर्वल्य | निर्वर्त्य |
| 74 | 9 | पश्न | पक्ष |
| 76 | 10 | नोत्पत्तीप्र | नोत्पत्तिप्र |
| 78 | 13 | सबन्धि | सम्बन्धि |
| 83 | 10 | पूजानी | पूजनी |
| 88 | 9 | पाक्सोमं | प्राक्सोमं |
| ,, | 12 | भिदाये | भिधाये |
| 90 | 7 | न्यादिक्र | न्यादिकं |
| 95 | 10 | दायक्षायणी | दाक्षायणी |
| 96 | 2 | पौदा | पादौ |
| 97 | 9 | नाश्रीया | नाश्नीया |
| ,, | 13 | पश्यते् | पश्येत् |
| ,, | ,, | वचनाम् | वचनात् |
| 99 | 5 | बघ्यते | बध्यते |
| ,, | 15 | ध्वजी | ध्वजी |
| 100 | 5 | इत्यघ्याया | इत्यध्याया |
| 102 | 3 | माराष्य | मारण्य |
| 103 | 12 | शद्वेषु | शब्देषु |
| ,, | 11 | यानोता | यानेता |
| ,, | 19 | लङ्घये | लङ्घये |
| ,, | 22 | हणम | हणम् |
| 105 | 10 | तिष्ठेत | तिष्ठेत् |
| 106 | 3 | मनक्तं | मनूक्तं |
| ,, | 6 | डुःखं | दुःखं |
| 109 | 7 | निगाडा | निगडा |
| ,, | 14 | ध्यमरी | ध्यश्मरी |
| 111 | 15 | ग्राहि | ग्राही |
| ,, | 16 | यश्व | यश्च |
| ,, | 17 | कारः | कारश्च |
| 112 | 2 | धायोदा | धायेदा |
| ,, | 7 | दिव्वति | दिव्यति |
| ,, | 9 | मनाम्लं | मनम्लं |
| ,, | 17 | ब्रह्मणो | ब्राह्मणो |
| ,, | 19 | मनुात्प्राक् | मनात्प्राक् |
| 113 | 15 | सा स | सापि स |
| ,, | 5 | स्मराणा | स्मरणा |
| 115 | 6 | अश्वाद | अश्वाद |
| 116 | 3 | भयवर | भयपर |

| Page. | Line. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 116 | 10 | येत | येत् |
| ,, | 12 | येत्'।। | येत्' इति ॥ |
| 117 | 2 | षद | षड् |
| ,, | 4 | छत्राकं | छत्राकं |
| ,, | 6 | पूर्वाम्मासे | पूर्वाभ्यासे |
| ,, | 14 | खङ्गो | खड्गो |
| ,, | 16 | ष्ट्रांच | ष्ट्रांश्च |
| 119 | 11 | वसते् | वसेत् |
| 122 | 2 | स्रुवै | स्रुवौ |
| ,, | 15 | भवां | भुवां |
| 124 | 6 | डदक | उदक |
| 125 | 8 | रजाभ्र | राजभ्र |
| 126 | 14 | दह्मन्ते | दह्मन्ते |
| ,, | 22 | बिशु | विशु |
| 127 | 6 | फ्लावो | प्लावो |
| ,, | 8 | र्व्यस्तर्वा | र्व्यस्तैर्वा |
| 129 | 8 | दैवला | देवला |
| 130 | 5 | त्वं "चैषां दे | त्वं चैषां "दे |
| ,, | 6 | श्रयुता | श्रयता |
| 143 | 7 | स्पृष्ठा | स्पृष्ट्वा |
| ,, | 8 | पुनश्व | पुनश्च |
| 145 | 11 | अन्य | अनन्य |
| 149 | 7 | मश्राति | मश्नाति |
| ,, | 12 | प्राप्त्यार्थम् | प्राप्त्यर्थम् |
| 150 | 7 | शोर्को | शोको |
| ,, | 9 | तैर्बाह्म | तैब्राह्मि |
| 151 | 9 | समानूदैवे | दैवे |
| 152 | 3 | ब्राह्मणौ | ब्राह्मणौ |
| ,, | 9 | ब्राह्मण | ब्राह्मण |
| ,, | 18 | ,, | ,, |
| ,, | 17 | क्षित्वा | क्षिप्त्वा |
| 155 | 20 | नाग्ना हु | नाग्नौ हु |
| 157 | 3 | यश्चान्य | यच्चान्य |
| 158 | 4 | दक्रोध | दक्रोध |
| 159 | 13 | ब्राह्मण | ब्राह्मण |
| 160 | 13 | पुत्रैपात्र | पुत्रपौत्र |
| 162 | 2 | गृहिता: | गृहीता: |
| ,, | 21 | प्रतिग्रही | प्रतिग्रहं |
| 164 | 5 | मताम | माताम |
| ,, | 8 | कोदिष्ट | कोद्दिष्ट |

| Page. | Line. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 164 | 10 | वैश्वदव | वैश्वदेव |
| ,, | 12 | यज्ञोपविति | यज्ञोपवीत |
| ,, | 19 | प्रशिद्धौ | प्रसिद्धौ |
| 165 | 2 | अपाराह्णे | अपराह्णे |
| ,, | 4 | हस्यते | दृश्यते |
| ,, | 6 | श्राद्धं | श्राद्धं |
| 166 | 7 | निर्दिशे | निर्दिशे |
| ,, | 9 | वर्ततै | वर्तते |
| 175 | 7 | ऋष्ण | कृष्ण |
| 178 | 10 | हतशाता | हताशता |
| 180 | 8 | विघ्नेश्वर | विघ्नेश्वरः |
| ,, | 9 | रद्धि | राद्धि |
| 185 | 14 | दन्तिः | दन्ती |
| 186 | 8 | पैष्ठी | पष्ठी |
| 187 | 1 | कति | पति |
| 191 | 13 | कुशाश्व | कुशाश्व |
| 194 | 7 | द्विषद्वद्धियु | द्विषद्वयद्धिप्रयु |
| 205 | 3 | स्वाध्या | स्वाध्या |
| ,, | 18 | द्दष्ट्वा | दृष्ट्वा |
| 257 | 2 | लेकखा | लेखका |
| ,, | 14 | सस्मक् | सम्यक् |
| 210 | 7 | घात | यात |
| 211 | 5 | इयुक्त | इत्युक्त |
| 213 | 10 | दैम | दैव |
| 222 | 10 | उतर | उत्तर |
| 226 | 5 | तरत | तस्त |
| 229 | 5 | यत्नेय | यत्नेन |
| 232 | 3 | ब्रह्म | ब्राह्म |
| 239 | 2 | स्वभि | कर्मस्वभि |
| 246 | 9 | असेघ | आसेध |
| 253 | 2 | रष्ठा | राष्ट्रा |
| ,, | 3 | पुराग्रा | पुरग्रा |
| 255 | 3 | प्रत्रे | पत्ते |
| 258 | 13 | प्राडि | प्राङ्गि |
| 264 | 6 | शोक्रि | शेत् क्रि |
| 267 | 6 | नोऽअग्र | नोऽग्र |
| 280 | 7 | पातकभियो | पातकाभियो |
| ,, | 9 | दाप | दाप |
| 281 | 3 | सृक्किणि | सृक्किणी |

| Page | Line. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| 282 | 2 | सृक्किर्ण | सृक्किणे |
| 285 | 7 | मह्यं | मह्यं |
| 286 | 2 | इायु | इत्यु |
| 287 | 9 | वदी | वादी |
| 289 | 5 | त्वाद्वि | त्वाद्वि |
| 290 | 5 | लिखत | लिखित |
| 295 | 8 | हारता | हारतः |
| 298 | 6 | ब्राह्म | ब्रह्म |
| ,, | 4 | स्याद्वा | स्याद्वा |
| 314 | 3 | त्वे प्र | त्वेऽप्र |
| 315 | 5 | वातु | वातु |
| 319 | 5 | मानु | मनु |
| ,, | 6 | व्यववहा | व्यवहार |
| 324 | 2 | भुक्त | भुक्तः |
| 333 | 4 | स्यमदुरं | स्यमुदरं |
| 334 | 4 | ब्रह्मण | ब्राह्मण |
| 349 | 6 | गमेऽपि | गमोऽपि |
| 352 | 5 | विश | विंश |
| 356 | 2 | निर्णात | निर्णीत |
| 362 | 2 | चिवद्वयवहा | चिद्वयवहा |
| 370 | 10 | ब्राह्मणक्षत्रि | ब्राह्मणव्यतिरिक्तनाविद्वद्ब्राह्मण क्षत्रि |
| 374 | 5 | चारै | चोरै |
| 375 | 1 | ऋृणा | ऋणा |
| 393 | 5 | ब्राह्य | ब्राह्म |
| 397 | 2 | कैट्ट | कुट्ट |
| 402 | 4 | स्त्रिया | स्त्रिया |
| 403 | 7 | सक्षि | साक्षि |
| 416 | 3 | कथाभा | क्थभा |
| 430 | 4 | यद्यय | यद्ययं |
| 235 | 3 | दानप्र | दाने प्र |
| 442 | 4 | रसश्वा | रसश्वा |
| 444 | 6 | उपने | अपने |
| 455 | 11 | मोक्षाणा | मोमणा |
| 469 | 5 | प्राडिवा | प्राङ्गि |
| 472 | 4 | बुधैः | बुधै |
| 478 | 6 | हाणा | हषा |
| 493 | 4 | किया | क्रिया |
| 495 | 4 | कियो | क्रियो |

| Page. | Line. | अशुद्धम् . | शुद्धम् . | Page. | Line. | अशुद्धम् . | शुद्धम् . |
|---|---|---|---|---|---|---|---|
| 498 | 11 | सक्षिषु | साक्षिषु | 643 | 6 | भगो | भागो |
| 501 | 4 | दिगुणं | द्विगुणं | 648 | 3 | स्वन्त्रः | स्वतन्त्रः |
| 502 | 3 | नादोशते | नाद्वेशते | 650 | 5 | वार्णा | वर्णा |
| 506 | 2 | हाराविं | हारो वि | 690 | 4 | प्योरस | प्यौरस |
| ,, | 3 | शारीर | शारीर | 700 | 4 | भाजाना | भाजना |
| ,, | 4 | थवै च | थैव च | 727 | 2 | लभते | लभेत |
| ,, | 4 | बाहिः | बहिः | 729 | . | भ्रातणां | भ्रातृणा |
| ,, | 8 | चिन्तयत् | चिन्तयत् | 778 | 4 | श्रि ता | श्चिद् भ्राता |
| 508 | 6 | चारन् | चरन् | 790 | 5 | गृही | गृह्णी |
| 509 | 6 | भ्युनुज्ञा | भ्यनुज्ञा | 830 | 3 | त् | यावत् |
| 511 | 2 | साक्षिाणा | साक्षिणा | ,, | 4 | सष्टी | सृष्टी |
| 520 | 5 | यद्यक्ता | यद्व्यक्ता | 831 | 3 | सष्टो | सृष्टो |
| 523 | 7 | दप्युक्तमे | दव्ययुक्तमे | 870 | 3 | निमिमित्तं | निमित्तं |
| 535 | 3 | क्रियेति | क्रिया | 877 | 7 | सामान्ता | सामन्ता |
| 543 | 8 | वक्ष्येत | वक्ष्यते | 888 | 5 | न्तभृ | न्तप्रभृ |
| 544 | 5 | र्षात् इति | र्षाज्जाति | 890 | 6 | वाहषु | वाहेषु |
| 554 | 10 | स्पत्यश्छे | स्पत्यच्छे | 891 | 10 | प्राथनाया | प्रार्थनया |
| 558 | 9 | श्वर्तुर्भि | श्वतुर्भि | 894 | 5 | सामान्ता | सामन्त |
| 562 | 10 | विनृदि | विमृदि | 900 | 4 | वर्निनि | वर्तिनि |
| 573 | 8 | रं | क्रूरं | 906 | 10 | व्यरिक्त | व्यतिरिक्त |
| ,, | 12 | ङ्गुं | ङ्गुं | 907 | 3 | ग्राम | ग्रामे |
| 586 | 6 | दव्या | द्रव्या | 908 | 3 | ावक्री | विक्री |
| 587 | 5 | त्र | रात्र | 909 | 5 | तरे | तरेण |
| 598 | 3 | क्षस | क्षास | 913 | 8 | वें स्वा | वेस्वा |
| 600 | 6 | मङ्गो | मङ्गी | 920 | 8 | ङ्गप्र | ङ्गेप्र |
| 602 | 6 | स्वस्वस्य | स्वस्विस्य | 927 | 2 | पणावधि | पंप्रविधि |
| 607 | 3 | स्य प्र | रस्य प्र | 928 | 4 | वितुक्रर्न | विक्रेतुर्न |
| ,, | 5 | भगा | भागा | 945 | 2 | था रा | था च रा |
| 608 | 2 | स्वत्य | स्वत्व | ,, | 7 | राष्टा | राष्ट्रा |
| ,, | 2 | चोदा | चोद्य | 959 | 6 | भते | भृते |
| ,, | 5 | प्रासद्ध | प्रसिद्ध | 960 | 7 | वेदना | वेतना |
| ,, | 7 | जन्माना | जन्मना | 964 | 2 | यर्द्दव्य | यद्द्रव्य |
| 613 | 8 | मनैम | न्मनैव | 969 | 6 | लपा | लुपा |
| ,, | 8 | होपातां | होपात्ता | 972 | 2 | पाणा | पणा |
| 619 | 3 | स्वा | त्वा | 980 | 6 | कश्य | कृश्य |
| 621 | 7 | रूध्दे | रूर्ध्वे | 981 | 4 | ह्नणना | ह्नणेना |
| 629 | 6 | यर्न्यैत्र | यन्मैत्र | 984 | 5 | त्वाह्वा | त्वद्वा |
| ,, | 9 | न्यवि | न्यावि | ,, | 7 | कलं | कालं |
| 638 | 4 | णावि | णवि | 989 | 8 | मान्य | मन्य |

| Page. | Line. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 990 | 2 | द्युस्तु | घ्रस्तु |
| 991 | 7 | हनने | हमने |
| 1000 | 6 | माहस | साहस |
| 1003 | 6 | दरड | दण्ड |
| 1006 | 5 | षटप | षट्प |
| 1008 | 8 | नेषु पुनर्वृक्षेषु पूर्वोक्ता | नेषु पूर्वोक्ता |
| 1018 | 5 | खसृ | स्वसृ |
| 1020 | 6 | सये | सयेत् |
| 1021 | 3 | प्रात | प्रति |
| 1023 | 2 | मानातां | मानीता |
| ,, | 7 | कुटै | कटै |
| 1034 | 2 | सपाप्या | समाप्या |
| ,, | 6 | गणिमं | गणितं |
| 1038 | 3 | कीत्वा | क्रीत्वा |
| 1039 | 3 | घतेन | घातेन |
| ,, | 5 | केत्रा | क्रेत्रा |
| 1041 | 4 | वद्धिं | वृद्धि |
| 1042 | 5 | गतम्यते | गम्यते |
| 1049 | 2 | तरः | तरिः |
| 1051 | 3 | र्थ्यविं | र्थ्याव |
| 1053 | 9 | नीयां | तीयां |
| 1071 | 3 | योत् | येत् |
| 1075 | 2 | मोषा | मेषा |
| 1080 | 2 | के | र्के |
| ,, | 7 | स्थागस् | स्थानम् |
| 1087 | 6 | स्नृत | स्मृत |
| 1102 | 6 | येऽका | योऽका |
| 1109 | 3 | इनि | इति |
| 1111 | 4 | स्याभि | स्यभि |
| 1139 | 7 | दनि | दहि |
| ,, | 22 | पुर | पर |
| ,, | 21 | मग्नौ | मग्नौ |
| 1141 | 14 | स्वस्त्रीय | स्वस्तीय |
| 1142 | 24 | यष | येषां |
| 1143 | 9 | गात | गौत |
| 1144 | 22 | भिषयक्रिक्रय | भिषकूक्रिय |
| 1145 | 21 | भू | भु |
| ,, | 26 | ववस्व | वैवस्व |
| 1146 | 20 | शद्व | शाद्व |

| Page. | Line. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1147 | 23 | प्रायण | प्रयाण |
| 1148 | 18 | स्नान | स्नान |
| 1149 | 3 | स्मिन्द | स्मिन् |
| ,, | 5 | कवल | केवल |
| ,, | 13 | वती | व्रती |
| ,, | 19 | भवति । अत | अत |
| 1153 | 17 | स्माध्या | स्वाध्या |
| 1154 | 4 | त्वरान्तरा | त्वन्तरा |
| ,, | 18 | नाऽऽहशौ | ना शौ |
| 1155 | 7 | शावामा | शावमा |
| ,, | 13 | मद्य | मधु |
| 1156 | 4 | प्रायण | प्रयाण |
| ,, | 5 | त्रादो | त्रादौ |
| ,, | 17 | भ्रव | भ्रव |
| 1157 | 13 | ने वा | नें मरणे वा |
| 1158 | 19 | लीके | लोंके |
| ,, | 21 | नानप | नानुप |
| 1159 | 2 | जावौ | जातौ . |
| ,, | 13 | अन्तः | अतः |
| 1160 | 2 | खः | रमः |
| ,, | 4 | वचन | वचनम् |
| ,, | 8 | शाचं | शौचं |
| ,, | 21 | प्रभ | प्रभृ |
| 1162 | 16 | ताना | तानां |
| 1163 | 3 | गोऽग्र | गोग्रि |
| ,, | 9 | वञ्छि | वञ्छि |
| 1165 | 9 | वप्नु | वाप्नु |
| ,, | 15 | क्षति | त्रि |
| ,, | 21 | व्यावस्था | व्यवस्था |
| 1166 | 2 | मृला | मला |
| ,, | 9 | मीत | तीत |
| ,, | 15 | मणर | मकर |
| 1171 | 15 | ष्टग्नि | ष्ठाग्नि |
| 1172 | 6 | साध | सार्ध |
| 1174 | 20 | शमाना | शमना |
| 1176 | 7 | स्पृष्टा | स्पृष्ठा |
| ,, | 12 | रष्टापृा | स्पृष्ठा |
| ,, | 17 | लाप | लप |
| 1179 | 4 | स्वानि | खानि |
| ,, | 10 | रपृ | स्पृ |

| Page. | Line. | अशुद्धम् · | शुद्धम् · |
|---|---|---|---|
| 179 | 12 | स्पृष्टा | स्पृष्ट्वा |
| ,, | 19 | तस्पृ | तत्स्पृ |
| 182 | 2 | वात्म | स्वात्म |
| ,, | 8 | शुद्धयः | शुद्धय· |
| ,, | 9 | धानम् | धानात् |
| 183 | 21 | णेणा | णेना |
| 184 | 3 | पेत्ये | पैत्ये |
| ,, | 19 | तिलाप्र | तिलाःप्र |
| .85 | 3 | यस्म | मस्म |
| ,, | 4 | मधु | मधु |
| 86 | 6 | निषेधा | निषिद्धा |
| 87 | 7 | न्यवृ | श्यवृ |
| 89 | 3 | तिपिपा | तिपा |
| ,, | 10 | उर्ध्व | ऊर्ध्व |
| ,, | 12 | मुच्यय | मुच्चय |
| 90 | 10 | येर | योर |
| 91 | 13 | रदी | रादी |
| ,, | 13 | सिद्धे | सिद्धे |
| ,, | 16 | भूयया | भूया |
| ,, | 24 | क्तश्चमा | क्तमा |
| 92 | 3 | स्त्रीयानिवृ | स्त्रायी नि |
| ,, | 6 | शाध्दा | शब्दा |
| .. | 21 | चन्द्रा | चान्द्रा |
|  | 21 | प्रजा | प्राजा |
|  | 22 | श्री | श्री |
|  | 9 | हाराः | हारः |
| 5 | 3 | स्मणा | स्मरणा |
| , | 7 | शब्दास्या | शब्दस्या |
| 6 | 9 | न मो | च मो |
| , | 21 | मात्राऽक्त | मात्रोऽक्त |
| 8 | 3 | बाह्मन्त | बाह्मान्त |
|  | 7 | कद्दण्डी | कदण्डी |
|  | 14 | मा | मां |
| 9 | 10 | गीमे | ग्रीमे |
| 0 | 15 | ह्रिरुध्यं | ङ् निरुध्य |
| 1 | 10 | गर्म | गेर्भ |
|  | 18 | स्यति | स्याति |
| 2 | 17 | ह्री शो | ह्रीः शौ |
|  | 22 | द्वेष्वपि वि | द्वेष्ववि |
| 7 | 4 | स्नेह | स्नेह |

| Page. | Line | अशुद्धम् · | शुद्धम् · |
|---|---|---|---|
| 1207 | 17 | स्पदन्ते | स्पन्दते |
| 1210 | 12 | रध्नां | स्थ्ना |
| ,, | 18 | द्वै | द्वौ |
| 1211 | 19 | कपला | कपाला |
| ,, | 22 | वक्षः स्त | वक्षस्त |
| 1215 | 3 | कारा | करा |
| ,, | 14 | मध्वे | मध्ये |
| 1216 | 14 | भयेत् | भवेत् |
| ,, | 15 | यस्या | यस्मा |
| 1220 | 13 | सारं | सौरं |
| 1224 | 2 | षू | षु |
| ,, | 8 | श्रा | श्र |
| 1226 | 8 | देहभि | देहाभि |
| 1227 | 7 | काष्ठर्ग्र | काष्ठैर्ग्र |
| 1228 | 16 | मनावा | मनोवा |
| 1231 | 19 | पथ | प्रथ |
| 1232 | 5 | पाण | प्राण |
| ,, | 9 | दाधू | दोधू |
| ,, | 22 | रावत्ति | रावृत्ति |
| 1233 | 21 | मन्त्रैष | मन्त्रौष |
| 1234 | 19 | जानीन | जानीत |
| 1235 | 2 | दृश्य | दृश्य |
| ,, | 15 | क्षत्रे | क्षेत्र |
| 1239 | 8 | उपा | उपा |
| 1240 | 12 | द्रुमा | द्रुमा |
| ,, | 15 | द्रुमो | द्रुयो |
| ,, | 10 | सुखं | मुखं |
| ,, | 22 | भ्ये | ये |
| 1241 | 6 | सत्त्ववस्थ | सत्त्वस्थ |
| ,, | 8 | सम्प्य | सम्प |
| 1243 | 15 | पातकाना | पातकिनां |
| 1244 | 2 | क्रीटा | कीटा |
| 1245 | 4 | च्यादि | त्यादि |
| ,, | 13 | हेशे | देशे |
| 1246 | 11 | गोघ्र | गोघ्न |
| 1247 | 9 | भम | भ्रम |
| ,, | 17 | प्रयु | प्नुयु |
| ,, | 25 | द्विको | दिको |
| 1248 | 2 | ज्ञनि | जनि |
| ,, | 4 | न्तिः | न्ति । |

